अथ श्रीमद्भागवतं श्रीधरीयटीकया नाभेशाश्रित पं. वंशीधरशर्मकृततद्भावार्थदीपिकाप्रकाशटीकया चोपेतम् ॥

महाराजनाभाधीशश्री १०८ श्रीहीरासिंहजीत्यस्य साहाय्येनेदं मुद्रितम् ।

शिष्य-दुर्गादत्त.



पुत्र-पं० श्रीलक्ष्मी नारायणजी.

राजमान्य श्री १०८ श्री पंडित श्रीवंशीधरजी महाराज,
भावार्थदीपिकाप्रकाशटीकाकर्ता ।

# प्रस्तावना।

अथ खलु भूयानानन्दो बोभवीति मदीये मनसि सकलविद्वज्जनोपासनापरकतिपयशुभसमाचारसंवेदनायेति समुत्सहे किंचिद्वक्तुम्।

विदितमेव भवेद्भव्यजनानाम्, यच्छ्रीमद्भागवतं नाम श्रीव्यासमहामुनिप्रणीतं महापुराणमैहिकामुष्मिकचतुर्विधपुरुषार्थसाधनैकधुरीणमाबालमापण्डितं समस्तवैदिकधर्मावलम्बिभिः परमपवित्रतया समाद्रियमाणं वेदार्थरहस्यसिद्धांतशुद्धांतायमानं शश्वद्भक्तजनैः पापठ्यमानं शोश्रूयमाणं च वरीवर्ति सकलमहापुराणमूर्धन्यभागे। यत्र किल नरीनृतीति श्रीव्यासमहर्षिवर्यस्य विविधपदविन्यासपेशला सरस्वती। यत्पठनपाठनश्रवणसमर्चनादिभिस्तरीतर्ति सेतुशीताचलमध्यवर्ती भक्तजनः। यत्सत्तया दरीधर्ति धर्मो धरित्रीम्। यच्च संजरीहर्ति तापम्। चरीकर्ति च सकलसत्कामनासिद्धिमिति समंततः प्रसिद्धमेव।

तत्र चैतच्छ्रीमद्भागवतं नाम महापुराणं यथास्वरूपं यादृग्विधं वेत्यत्र प्रायो बहूनां व्यामोह आपतति। यद्वचेतन्महापुराणं वाऽन्यत्किंचिदिति। अत्रार्थे यथामति बहून्ग्रंथान्समालोच्य बहुलविद्वज्जनकृततद्विषयकविचारपुरःसरस्वाभिमताभिप्रायदिग्दर्शनमुखेन परामर्शः प्रस्तूयते–

तत्रादौ पंडितवरश्रीवंशीधरमतमनूद्यते। तच्चेत्थम्–न हि भागवतं श्रीव्यासदेवेन रचितं किं तु पूर्वं सदेवाविष्कृतमन्यथा तस्य "इदं भागवतं नाम पुराणं ब्रह्मसम्मितम्" इति वाक्येन ब्रह्मरूपत्वाद्ब्रह्मणोप्यनित्यता स्यात् 'पिबत भागवतं रसमालयम्' इत्यग्रे वक्ष्यमाणत्वादप्यस्यानागताख्यानेनैव प्रवृत्तेः। पुराणांतरे प्रशंसाश्रवणादपि नित्यत्वमेवास्य सिध्यति। तथाच गरुडपुराणे–" अर्थोयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः। गायत्रीभाष्यभूतोसौ वेदार्थपरिबृंहितः॥ ग्रंथोष्टादशसाहस्रो द्वादशस्कंधसम्मितः। पठनात्पाठनाद्ध्यानात्स्पर्शनादर्चनाद्द्वशेः। सर्वपापहरः कृष्णरूपी चैव न संशयः॥" इति। ब्रह्मवैवर्तेपि–'पुराणेषु भागवतम्' इति विभूतिषु श्रीभागवतस्य गणितत्वादपि ब्रह्मरूपतास्य सिद्धेत्यतो नित्यमेवेदं पुराणम्॥ अथाग्रेऽस्य वैभवं वक्ष्यामः–

अत्र श्रीमद्भागवते त्रयाणां कर्मोपासनाज्ञानकाण्डानां यथावत्प्रतिपादनाद्वेदरूपत्वमेव साक्षादिति हि निश्चितम्॥ तत्र कर्मकांडमाह॥ स च विधिनिषेधात्मकः। तत्र संक्षिप्य विधिभेदास्त्वित्थमवधेयाः–अप्राप्तं फलवंतं चार्थं यः स्वसामर्थ्येन प्रकाशयति स विधिरुत्पत्त्यादिधर्मैर्युक्तः। स चोत्पत्तिविधिः, विनियोगविधिः, प्रयोगविधिः, अधिकारविधिश्चेति चतुर्द्धा भवति। तत्र कर्मस्वरूपमात्रबोधको विधिः प्रथमः, यथाऽग्निहोत्रं जुहोतीति। अंगसंबंधबोधको विधिर्विनियोगविधिः, यथा दध्ना जुहोतीति। स हि तृतीयाप्रतिपन्नांगभावस्य दध्नो होमसंबंधं विधत्ते 'दध्ना होमं भावयेत' इति। दध्यादीनामंगत्वं नाम परोद्देश्यप्रवृत्तकृतिव्याप्यत्वं पारार्थ्यम्, तच्चानेन विधिना ज्ञाप्यते। प्रयोग आशुभाव

बोधको विधिः प्रयोगविधिः । स चांगवाक्यैक्यतामापन्नः प्रधानविधिरेव सांगं प्रधानमनुष्ठापयन्विलंबे मानाभावादविलंबापरपर्यायं प्रयोग आशुभावं विधत्ते । न च विलम्बवदविलम्बेपि मानाभावः; विलम्बेंगप्रधानविध्येकवाक्यतावगततत्साहित्यानुपपत्तेः । न हि विलम्बेन कृतयोः पदार्थयोः सहकृतमिति साहित्यं व्यवहरंति । स चाविलम्बो नियते क्रम आश्रियमाणे भवति । अन्यथा किमेतदनंतरमेतत्कर्तव्यमेतदनन्तरं वेति प्रयोगविक्षेपापत्तेः । अतः प्रयोगविधिरेव स्वविधेयप्रयोग आशुभावसिद्ध्यर्थं नियतं क्रममपि पदार्थविशेषणतया विधत्ते । तत्र क्रमो नाम विततिविशेषः, पौर्वापर्यरूपो वा । फलस्वाम्यबोधको विधिरधिकारविधिः । फलस्वाम्यं च कर्मजन्यफलभोक्तृत्वम् । स च "यजेत स्वर्गकामः" इत्येवंरूपः । अनेन हि स्वर्गमुद्दिश्य यागं विदधता स्वर्गकामस्य यागजन्यफलभोक्तृत्वं बोध्यते । तच्च स्वाम्यं तस्यैव योऽधिकारविशेषणविशिष्टः । अधिकारविशेषणं च तदेव यत्पुरुषविशेषणत्वेन श्रुतम् । अत एव—"राजा राजसूयेन स्वाराज्यकामो यजेत" इत्यनेन स्वाराज्यमुद्दिश्य राजसूयं विदधतापि न स्वाराज्यकाममात्रस्य तत्फलभोक्तृत्वं बोध्यते, किन्तु राज्ञः सतस्तत्कामस्य । किंचित्तु पुरुषविशेषणत्वेनाश्रुतमप्यधिकारविशेषणं भवति, यथाध्ययनविधिसिद्धा विद्या । अग्निसाध्येषु च कर्मस्वाधानसिद्धाऽग्निमत्ता । एवं सामर्थ्यस्याप्यधिकारिविशेषणत्वम् । 'आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी' इति न्यायात, 'अर्थी समर्थो विद्वान्यजेत' इत्यसमर्थं प्रति विध्यप्रवृत्तेश्च । एवमर्थितादेरपि बोध्यमिति दिक् । तत्सिद्धफलस्वाम्यबोधको विधिरधिकारविधिरिति तदेवं निरूपितो विधिभेदश्चतुर्द्धेति ॥ चतुर्धाप्ययम्पुनः प्रकारांतरेण त्रिविधः । स च—"विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् १।२।१९।" । उदक्त्वं चापूर्वत्वात् ३।४।१३।" । "विधिस्तु धारणेऽपूर्वत्वात् ३।४।१५।" । "नियमार्था वा पुनः श्रुतिः ४।२।२४।" । "परिसंख्या १।२।४२।" इत्येवमादिषु भगवतो जैमिनेः सूत्रेष्वभिहितः ॥ भट्टपादैश्चान्योन्यासंकीर्णतया सलक्षणो विशिष्टमुपपादितः—"विधिरत्यंतमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥" इति । अस्यार्थः—यस्य यदर्थत्वं मानांतरेणाप्राप्तं तस्य तदर्थत्वेन यो विधिः सोपूर्वविधिः, यथा "यजेत स्वर्गकामः". "व्रीहीन्प्रोक्षति" इत्यादिनाऽत्र यागस्य स्वर्गार्थताया व्रीहीणां प्रोक्षणस्य च संस्कारकर्मणो विधिं विना न कथमपि प्राप्तिरस्त्यतोऽयमपूर्वविधिः । पक्षप्राप्तस्याप्राप्तांशपरिपूरणफलो विधिर्नियमविधिः, यथा 'व्रीहीनवहंति' इति । अत्र विद्वयभावेपि पुरोडाशप्रकृतिद्रव्याणां तंडुलनिष्पत्त्याक्षेपादेवाहननाप्राप्तांशसम्भवात्तदंशपरिपूरणफलः । उभयत्रैकस्योभयोर्वैकत्र युगपत्प्राप्तावन्यतरनिवृत्तिफलो विधिः परिसंख्याविधिः, यथा चयने अश्वगर्दभरशनयोर्ग्रहणे युगपदनुष्ठेये सामर्थ्यविशेषात्प्राप्तस्य "इमामगृभ्णन् रशनामृतस्य" इति मंत्रस्य "अश्वाभिधानीमादत्ते" इति गर्दभरशनाग्रहणव्यावृत्तिमात्रफलको विधिः । एवम् " पंच पंचनखा भक्ष्याः " इत्यपि परिसंख्याविधिः । इदं हि न भक्षणपरं, तस्य रागतः प्राप्तत्वात् । किन्तु पंचेतरपंचनखभक्षणनिवृत्तिपरमिति । न च नियमपरिसंख्ययोः फलतो न विशेषः, यतो नियमस्य विधेयावघातनिष्ठत्वात्सन्निहितमप्राप्तांशपूरणमेव फलम् , नखविदलनादिनिवृत्तिस्त्वार्थिकीति विधिपक्षे वक्तव्यं बह्वस्ति तदन्यत्रानुसंधेयम् । विधेर्यथा विधेयार्थपरिच्छेदकत्वेनार्थवत्त्वं तथानर्थहेतुकर्मणः सकाशात्पुरुषस्य

निवृत्तिकरणत्वेन निषेधस्यापि पुरुषार्थानुबंधित्वं बोध्यम् । तथाहि—विधयो यथा प्रवर्तनामभिदधतः स्वनिर्वर्तकत्वनिर्वाहार्थं विधेयस्य यागादेः श्रेयःसाधनत्वमाक्षिपंतः पुरुषं तत्र प्रवर्तयंति, एवम् "न कलंजं भक्षयेत्" इत्यादयो निषेधा अपि निवर्तनामभिदधतः स्वनिर्वर्तकत्वनिर्वाहार्थं निषेधस्य कलंजभक्षणादेरनर्थहेतुत्वमाक्षिपंतः पुरुषं ततो निवर्तयंतीति । किंच—निषेधस्य क्रतुवैगुण्यप्रतिपादकत्वेन हेयतया यागार्थतापि सिद्धा । अर्थवादवाक्यं हि स्वार्थप्रतिपादने प्रयोजनाभावाद्विधेयनिषिध्यमानयोः प्राशस्त्य निंदितत्वे लक्षणया प्रतिपादयति । तल्लक्षणं तु—प्राशस्त्यानिंदान्यतरपरं वाक्यमर्थवादः । स द्विधा—विधिशेषो निषेधशेषश्चेति । तत्र "वायव्यं श्वेतमालभेत भूतिकामः" इत्यादिविधिशेषस्य "वायुर्वै क्षेपिष्ठा देवता" इत्यादेर्विधेयार्थप्राशस्त्यबोधकतयार्थवत्त्वम् । "बर्हिषि रजतं न देयम्" इत्यादिनिषेधशेषस्य "सोरोदीयदरोदीत्तद्रुद्रस्य रुद्रत्वम्" इत्यादेर्निषेध्यनिंदितत्वबोधकतयार्थवत्त्वम् । न च प्राशस्त्यादिबोधस्य निष्प्रयोजनत्वेन नार्थवादस्यार्थवत्त्वमिति वाच्यम्, आलस्यादिनाऽप्रवर्तमानस्य पुंसः प्रवृत्त्यादिजनकत्वेन तद्बोधस्योपयोगात् । स पुनस्त्रेधा । तदुक्तम्—"विरोधे गुणवादः स्यादनुवादोऽवधारिते । भूतार्थवादतद्धानादर्थवादस्त्रिधा मतः ॥" इति । प्रमाणांतरविरोधे सत्यर्थवादो गुणवादः । यथा—"आदित्यो यूपः" इति यूपे आदित्याभेदस्य प्रत्यक्षबाधितत्वादादित्यवदुज्ज्वलत्वरूपगुणोऽनेन लक्षणया प्रतिपाद्यते । प्रमाणांतरावगतार्थबोधकोऽनुवादः, यथा "अग्निर्हिमस्य भेषजम्" इत्यादि । हिमविरोधित्वस्याग्नौ प्रत्यक्षावगतत्वात् । प्रमाणांतरविरोधतत्प्राप्तिरहितार्थबोधको भूतार्थवादः, यथा—"इन्द्रो वृत्राय वज्रमुदयच्छत" इत्यादि । न ह्यत्र प्रमाणांतरविरोधतत्प्राप्ती स्तः । एवं सर्वः कर्मकाण्डो विधिनिषेधांतर्गत एव । अत्रैव धर्मशास्त्रमपि गतार्थं तत्प्रतिपादकमिति बहुवक्तव्यत्वादत्रोपरम्यते ॥ उपासनाकाण्डमाह ॥ उपासनास्वरूपन्तु—वस्तुस्वरूपानपेक्षं पुरुषेच्छामात्रतंत्रं मानसं प्रवाहरूपमुपासनम्, यथा—"यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्" इत्यादिरूपम् । उपासना हि परमेशस्य कार्या । तत्र च परमेशोऽनेकधा यथामति दार्शनिकैः स्वीकृतस्तस्य चोपासना कर्तुमशक्याऽतः सर्वाविरुद्ध एवोपास्यः । स चौपनिषदाभिमतः । कथं तदुपगमे सर्वाविरोध इति चेदत्र पातंजलमतमाह—क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः, सोपि जीववदसंगश्चिद्रूपश्च परश्च जीवेभ्यस्तन्नियंतृत्वात "प्रधानक्षेत्रज्ञपतिर्गुणेशः" इति श्रुतेः । ननु नियंतृत्वं नाम कारयितृत्वं तच्चासंगस्यानुपपन्नम्, यः कारयति स करोत्येवेति न्यायेन कर्तृत्वस्य दुर्वारत्वात् । दृश्यते हि योधयितृषु नृपेषु दानादिकर्तृत्वं स्वयं योद्धृत्वं च । लोहचुंबकन्यायेनासंगस्यापि प्रेरकत्वोपपत्तेः । न च तन्निष्प्रमाणम् "भीषास्माद्वातः पवते" इत्यादिश्रुतिसिद्धत्वात् । बंधमोक्षादिव्यवस्था पृथिव्यवस्थित्यनुपपत्तिसिद्धत्वाच्च । जीवानामपि स्वतः क्लेशादिराहित्येपि बुद्ध्या सह विवेकाग्रहेण क्लेशादिसत्त्वांगीकारात् । ईशस्तु सदा तैरसंसृष्ट इति विशेषः । एतेन सेश्वरसांख्यवादोपि व्याख्यातः, एतत्तुल्ययोगक्षेमत्वात् ॥ तार्किकास्त्वसंगस्य नियंतृत्वमसहमाना नित्यबुद्धीच्छाकृतिमान्पुरुषविशेष ईश्वरः । पुंविशेषत्वमप्यस्य नित्यबुद्ध्यादिगुणकत्वादेव नान्यथा, नित्यज्ञानादिमत्त्वात् । अनित्यज्ञानादिमज्जीवेभ्यस्तद्वैलक्षण्यमपि सिद्ध्यति । क्षित्यादि सकर्तृकं कार्यत्वा

दित्यनुमानं तत्र मानम् । स च लाघवादेकः सर्वत्र कार्योपलब्धेर्विभुश्च । ज्ञानादेर्निष्कर्षवदुत्कर्षोऽप्यंगीकार्यो बाधकाभावादिति न्यायेन भ्वाद्युपादानसर्वसूक्ष्मदर्शित्वात्सर्वज्ञश्च सत्यकामः सत्यसंकल्पः । ‘ यः सर्वज्ञः सर्ववित् ’ इत्यागमोपि तत्र मानमित्याहुः ॥ यद्यप्यकामकर्माद्यभावाज्जन्यं सुखमीश्वरे न सम्भवति, तथापि नित्यसुखांगीकारे बाधकाभावात् “ आनंदं ब्रह्मणो विद्वान् ” इत्यादिश्रुतेश्च नित्यसुखाश्रयत्वमपीशस्यान्यत्सर्वं समानमिति तदेकदेशिनः ॥ नित्यज्ञानादिमत्त्वे सदा सर्गप्रसंगान्नित्यजिहीर्षावत्त्वे सदा प्रलयापत्तेश्च नैतन्मतं साधु । अतो लिंगदेहसमष्ट्युपहितो हिरण्यगर्भ ईशः । न च देहयोगे जीवत्वं शंक्यम्, तत्समनियताविद्याद्यभावेन तस्यासंभवात् । कथं तर्हि शरीरपरिग्रहः । लीलयैवेति गृहाण । न च तदीश्वरत्वे मानाभावः, उद्गीथब्राह्मणस्य तत्र मानत्वादिति हैरण्यगर्भाः ॥ स्थूलदेहं विना सूक्ष्मस्यानुपलब्धेः स्थूलसमष्ट्युपहितो विराडेवेशः । स च सर्वतो मस्तकादिमान् “ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ” इत्यादिश्रुतेः, “ सर्वतः पाणिपादं तत् ” इत्यादिस्मृतेश्च । सदेहत्वेपि जीवत्वाभावादिकं पूर्ववदिति वैराजाः ॥ विधिमुपासीनास्तु—बहुपाणिपादत्वं नेशत्वप्रयोजकमन्यथा कृमिविशेषस्य सहस्रपदादेरपीशत्वप्रसंगात् । तस्माच्छ्रुतिस्मृत्यादिसर्ववाङ्मयशरीरया सरस्वत्या सदोपासितः सत्यलोकाधिपो ब्रह्मैवेशः । “यतो वा” इत्यादिसामान्यवाक्यान्यपि “ आग्नेयं चतुर्द्धा करोति” इति विशेषवाक्येन पुरोडाशचतुर्द्धाकरणवाक्यवत् “प्रजापतिः प्रजा असृजत्” इत्यादिविशेषवाक्यात्तत्परतयैव नेयानि । स च रुद्रस्य ललाटादाविष्कर्त्ता हरेरप्यसुरवधार्थमवतारेषु नियोजकः । कचित्तयोः स्तुत्यादौ प्रवृत्तिस्तु लोकसंग्रहाय । सा च विधेः स्वीयैव तयोः स्वांशत्वादित्याहुः ॥ श्रीविष्णुनाभ्युद्भूतपद्मोत्पन्नो हि विधिः, स चैतत्क तिष्ठतीति विचारितवान् “सोऽपश्यत्पुष्करपर्णे तिष्ठन्सोऽमन्यत अस्ति चैतद्यस्मिन्निदमधितिष्ठति” इति श्रुतेः । ततो यदस्याधिष्ठानं तन्मे मूलमिति तन्निश्चयार्थं चिरं भ्रमन्नपि नापश्यत् । पश्चात्समाधावपश्यत्तदाज्ञप्तश्चिरं तप्त्वा प्रजासृष्टौ समर्थो बभूव, तत एव वेदानवाप्य सार्वज्ञ्यमापेति सर्वमग्रे वक्ष्यति । अतो विष्णुरेवेशः । स च स्वकृतमर्यादावनाय स्वेच्छयाऽवतरति ‘यदा यदा हि धर्मस्य’ इत्यादिस्मृतेः । महोपनिषद्यपि—“एको ह वै नारायण आसीन्न ब्रह्मा नेशानः” इत्यादिना । “पुनरेव नारायणः सोन्यत्कामो मनसाध्यायत तस्य ललाटात्त्र्यक्षः शूलपाणिः । पुरुषोऽजायत” इत्यादिना च ब्रह्मरुद्रयोस्तत्स्रष्टृत्वोपवर्णनं दृश्यते, तस्माद्विष्णुरेवेश इति वैष्णवाः ॥ शैवास्तु—“ब्रह्माद्याः स्थावरांताश्च देवदेवस्य शूलिनः । पशवः परिकीर्त्यंते संसारवशवर्तिनः ॥ तेषां पतित्वाद्देवेशः शिवः पशुपतिः स्मृतः । मलमायादिभिः पाशैः स बध्नाति पशून्पतिः । स एव मोचकस्तेषां भक्त्या सम्यगुपासितः ॥ ” इत्यादिशिवधर्मे । अथर्वशिरसि—“यो वै रुद्रः स भगवान्भूर्भुवः स्वर्यश्च ब्रह्मा यश्च विष्णुः ” इत्यादिना तस्य सर्वात्मत्वं दर्शितम् । “शिव एको ध्येयः शिवंकरोन्यत्सर्वं परित्यज्य” इति श्रुतेरित्याहुः ॥ गाणपत्यास्तु—तुरीयः परमशिवः श्रीगणेश एव स एव वैष्णवैर्महाविष्णुरित्युच्यते । तथाच श्रुतिः—“ नमस्ते गणपतये त्वमेव प्रत्यक्षं ब्रह्मासि ” इत्यादिका । अत्र विशेष्यसंबद्धत्वादन्ययोगव्यवच्छेदेनैवकारेण पार्थ

एव धनुर्धर इत्यत्रैवकारेण पार्थादन्यत्र धनुर्द्धरस्येव गणपतेरन्यत्र साक्षाद्ब्रह्मत्वस्य योगो व्यवच्छिद्यते । सूर्याद्याराधनफलारोग्यादिमोक्षांतकथनानंतरम् 'सर्वमिच्छेद्गणाधिपात्' इति स्मृतेरन्याराधने प्रयोजनाभावात् " अनधीते महाभाष्ये व्यर्था स्यात्पदमञ्जरी । अधीतेपि महाभाष्ये व्यर्था स्यात्पदमञ्जरी ॥ " इति न्यायात्कृतेऽकृतेप्यन्यदेवाराधने गणेशार्चा सर्वार्थदेति भावः । न चैतावताऽन्यदेवार्चननिषेधः शंक्यः, प्रयाजादिषु कृतेषु ज्योतिष्टोमादीनामप्यननुष्ठानापत्तेः, इतरोपासनाविधायकशास्त्राप्रामाण्यापत्तेश्च । सर्वमिच्छेदिति वाक्यं तु परंपरया गणेशार्चनस्य सर्वत्रोपयोगपरं, न त्वितरनिषेधपरम्, तद्विधिविरोधादित्याहुः ॥ भैरवमुपासीनास्तु—शिवशंकरशंभ्वादिनामा त्रिनेत्रेंदुशेखरादिलिंगो विधेरपि शास्ता हरेरपि वरदः श्रीकालभैरव एव वेदांतप्रतिपाद्यो मुमुक्षुभिराराध्यः । एतत्सर्वं कूर्मपुराणे काशीखंडे च स्फुटम् । स एव मल्लारिनाम्ना विख्यातः । तदुक्तम्—"ध्यायेन्मल्लारिदेवं कनकगिरिनिभं म्हालसाभूषितांकं श्वेताश्वं खड्गहस्तं विबुधबुधजनैः सेव्यमानं कृतार्थैः । युक्तांघ्रिं दैत्यमूर्ध्नि डमरुविलसितं नैशचूर्णाभिरामं नित्यं भक्तेषु तुष्टं श्वगणपरिवृतं नित्यमोंकारगम्यम् ॥ " इत्यत्र नित्यपदेन प्रागभावाप्रतियोगित्वविशिष्टध्वंसाप्रतियोगित्वार्थकेन तस्य न कुतश्चिदुत्पत्तिर्न वा कुत्र च लय इति प्रतिपादनात्सर्वकारणत्वं सूचितमित्याहुः ॥ श्रीकार्त्तिकेयोपासकास्तु- सर्वगतत्वाद्भक्तानां सविलासाज्ञानशोषणाच्च स्कंदपदाभिधेयः सर्वबुद्धिरूपा गुहा विद्यते आधारत्वेनास्येति व्युत्पत्त्यार्शआद्यजंतगुहपदाभिधेयश्च सर्वांतरात्मा सद्भजनीयानंतकल्याणगुणो ब्रह्मादिविभूतिस्तन्नियंता परमशिवः "सनत्कुमारो भगवान्भोगमोक्षप्रदायकः" इति स्कान्दोक्तेर्मोक्षप्रदाता सुब्रह्मण्य इतीत्याहुः ॥ सौरास्तु—" ब्रह्मेंद्रनारायणरुद्रवंदितः स नः सदा यच्छतु मंगलं रविः " इति भविष्यवाक्यात् "एष ब्रह्मा शिवश्चैव रुद्रश्चैव" इति ब्रह्मादिविभूतिकः सूर्य एवोपास्यः, "सूर्य आत्मा जगतस्तस्थुषश्च" इति, "सूर्याद्वै खल्विमानि भूतानि जायंते " इति च श्रुतेरित्याहुः ॥ केचित्तु—मार्कंडेयपुराणांतर्गतसप्तशतीप्रतिपाद्या महालक्ष्मीः सर्वोत्तमा, ब्रह्मादयो भारत्यादयश्च तद्विभूतयः । सैव सर्गादिहेतुर्बंधमोक्षादिहेतुश्चेति " तया विसृज्यते विश्वं जगदेतच्चराचरम् । सैषा प्रसन्ना वरदा नृणां भवति मुक्तये ॥ संसारबंधहेतुश्च सैव सर्वेश्वरेश्वरी । सृष्टिस्थितिविनाशानां हेतुभूते सनातनि ॥ विष्णुः शरीरग्रहणमहमीशान एव च । कारितास्ते " इत्यादिवचनात् । तत्रैव 'हंसयुक्तविमानस्थे' इत्यादिना ' वृत्रप्राणहरे चैंद्रि ' इत्यंतेन सप्तमातॄणां तद्विभूतित्वं दर्शितम् । एतेषां ब्रह्मादीनां तदंशत्वात्तदभिन्नत्वेन्योन्यमप्यभेदः, 'तदभिन्नाभिन्नस्य तदभिन्नत्वम्' इति न्यायादित्याहुः ॥ केचित्तु—स्वस्वप्रीतिगोचरान् यक्षराक्षसभूतप्रेतपिशाचादीन्नृपनापितपुत्रन्यायेनायमेव सर्वोत्तमोऽयमेव सर्वोत्तम इति मन्यंते । तेभ्यश्च स्वयं तत्तत्स्वाभिलषितार्थतृष्णाग्रस्तेभ्योपि " स्वांगुष्ठमपि चुंबंतमिक्षुदंडमयाचत " इति न्यायेन स्वाभिलषितान्याचंते ॥ अन्ये च—वटाश्वत्थचैत्यार्कवंशादीनि स्वस्वकुलदैवतानि मत्वा स्थावरयोनिप्राप्त्यातिदुःखितेभ्यः 'महिषीप्रसवोन्मुख्ये महिषो मदनातुरः' इति न्यायेनेष्टं याचंते । अंधचटकन्यायेनाकस्माल्लब्धं चार्थं तद्दत्तं मन्यंते ॥ अघटनघटनापटीयस्या माययोपहितं जगतामभिन्ननि

मित्तोपादानं परं ब्रह्म परमेश्वरः तस्यांशैरिवांशैरीश्वरकोटिभिर्ब्रह्मादिभिर्जीवकोटिभिश्च सूत्रविराडादिभिर्जगद्व्याप्तमित्यौपनिषदाः ॥ क्वचिच्छिवविष्णवादीनां परस्परमुपा
स्योपासकभावो भारतादिषु श्रुतः । स च लीलामात्र एवान्योन्यमतभेदबोधतात्पर्यकः। न हि बहव ईश्वराः सम्भवन्ति। सत्त्वे च सुन्दोपसुन्दन्यायेन स्वयमेव बाधिताः सर्वे स्यु
रत एक एव परमेशः। स च—ब्रह्माद्यनन्तदेवार्थनयाविष्कृतलीलाविग्रहो माथुरमंडले श्रीनन्दराजवेश्मनि शेषावतारबलदेवसहितो रोमकूपाधिष्ठितानेकब्रह्माण्डः श्रीकृष्ण एव,
स एव श्रुतिषु परब्रह्मपदेनोक्तः । तथाहि—"कृषिर्भूवाचकश्शब्दो नश्च निर्वृतिवाचकः । तयोरैक्यं परब्रह्म कृष्ण इत्यभिधीयते ॥"इति,"मुनयो ह वै ब्राह्मणमूचुः—कः परमो
देवः, कुतो मृत्युर्बिभेति, कस्य विज्ञानेनाखिलं विज्ञातं भवति, केनेदं विश्वं संसरतीति।तदुहोवाच—ब्राह्मणो वै परमं दैवतं, गोविंदान्मृत्युर्बिभेति " इत्यादिपूर्वतापनीयोक्तेश्च
"कृष्णमेनमवेहि त्वं स्वात्मानमखिलात्मनाम् । जगद्धिताय सोप्यत्र देहीवाभाति मायया ॥"इति वक्ष्यति च । किञ्च—"सर्वेषामेव वस्तूनां भावार्थो भवति स्थितः । तस्या
पि भगवान्कृष्णः किमतद्वस्तु रूप्यताम्॥"इत्यप्यग्रे श्रीदशमे प्रकटीभविष्यति । श्रीगीतायामपि—" अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते" इति स्वयमेवाह । किंच—"अह
मात्मा गुडाकेश सर्वभूताशयस्थितः । अहमादिश्च मध्यं च भूतानामंत एव च॥"इत्यपि । "यस्मात्क्षरमतीतोहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषो
त्तमः ॥" इति । किंच—"अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा । मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ॥ मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव । " इति ।"सर्वस्य
चाहं हृदि सन्निविष्टो मत्तः" इत्यादिबहूनि तस्य परमेशत्वे मानानि संति॥ यत्तु विष्णुपुराणे—"एवं संस्तूयमानस्तु भगवान्परमेश्वरः । उज्जहारात्मनः केशौ सितकृष्णौ महा
मुने ॥ उवाच च सुरानेतौ मत्केशौ वसुधातले । अवतीर्य भुवो भारं क्लेशहानिं करिष्यतः ॥" इत्युक्तम्, तस्यायं भावः—"सुराः समस्ताः सुरनाथ कार्यमेभिर्मया यच्च तदीश
सर्वम् । आज्ञापयाज्ञाः परिपालयंतः सदैव तिष्ठाम ह्यपास्तदोषाः ॥"इति सुरैरुक्तो भगवान् मम दुष्करं चेत्तदा साहाय्यं कार्यं स्यान्न त्वेवमस्ति, भूभारहरणादौ कर्त्रंतरापे
क्षया महत्यपि कार्य्ये मत्केशयोरपि शक्तत्वादिति । न तु केशमात्रावतार इति भ्रमितव्यम्।"ततः क्षयमशेषास्ते दैतेया धरणीतले । प्रयास्यंति न संदेहो मद्दृक्पातविचूर्णिताः॥
कृष्णाष्टम्यामहं भाद्र उत्पत्स्यामि न संशयः।" इत्यादिषु तत्रैव स्वावतारत्वोक्तेर्विरोधात्। 'कृष्णस्तु भगवान्स्वयम्'इति वक्ष्यमाणविरोधाच्च । अजरामरस्येशस्यार्द्धपलितत्वासम्भ
वादेककेश ईशेच्छया रामस्य श्वेतरूपज्ञापनार्थम् । तदेव श्वेतोऽभूदिति गम्यते । 'जयंति कृष्णस्य दशावताराः ' इति मुकुटेनापि श्रीकृष्णस्यावतारित्वमन्येषां नृसिंहादीनाम
वतारत्वं ध्वनितम् । यत्तु—श्रीदशमे 'कृष्णावतारोत्सवसंभ्रमोस्पृशत्'इति श्रीकृष्णेप्यवतारप्रयोगः, स चाविर्भावपरो बोध्यः । किंच—विष्णुनामान्युक्त्वा 'वसुदेवोऽस्य जनकः'
इत्यनेनामरसिंहेनापि श्रीकृष्णस्यैव विष्णुपदवाच्यब्रह्मत्वं ध्वनितमिति । एतेनैव भारतवाक्यमप्येतत्तुल्यं व्याख्यातम् । ब्रह्मादौ मत्स्यादौ चांशत्वोक्तिरौपचारिकी बोध्या ।
तच्चांशत्वं ब्रह्मादिष्वाविष्कृतोत्पत्त्यादिहेतुत्रयाल्पोपपत्त्यायेकैकशक्तित्वमेव, न तु स्वांशित्वेनाभिमतानंतशक्तिमायीशापेक्षया । वस्तुतोऽल्पशक्तित्वं संख्यातशक्तित्वेनानीशत्वा

पत्त्या तदनंतशक्तिबोधकानंतवाक्यानामप्रामाण्यापत्तेः । तस्मात्रिगुणमायोपहित एक एवेशः । किं बहुना वाग्जालेन । श्रीकृष्णोपासनैव मोक्षहेतुः । तदुक्तं श्रीमुखेनैव "अनन्यचेताः सततं यो मां स्मरति नित्यशः । तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवंति महात्मानः संसिद्धिं परमां गताः ॥ आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन । मामुपेत्य तु कौंतेय पुनर्जन्म न विद्यते ॥" इति श्रीगीतोपनिषदाचार्येणार्जुनं प्रतीति । श्रीकृष्णोपासने रतिस्तु पूर्वकृतसुकृतानामेव नान्येषाम् । तदपि तत्रैव--"अवजानंति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानंतो मम भूतमहेश्वरम् ॥ मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः । राक्षसीमासुरीं चैव प्रकृतिं मोहनीं श्रिताः ॥ महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः । भजंत्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥" इति । किंच— "न मां दुष्कृतिनो मूढाः प्रपद्यंते नराधमाः । माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥ चतुर्विधा भजंते मां जनाः सुकृतिनोऽर्जुन । आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते । प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतः ॥ आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् । बहूनां जन्मनामंते ज्ञानवान्मां प्रपद्यते ॥ वासुदेवः सर्वमिति स महात्मा सुदुर्लभः । कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यंतेऽन्यदेवताः ॥ तंतं नियममास्थाय प्रकृत्या नियताः स्वया । योयो यांयां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति । तस्यतस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान्मयैव विहितान्हितान् ॥ अंतवत्तु फलं तेषां तद्भवत्यल्पचेतसाम् । देवान्देवयजो यांति मद्भक्ता यांति मामपि ॥" इति बहुश उक्तं श्रीभगवता । वक्ष्यत्यपि—" दुरापा ह्यल्पतपसः सेवा वैकुंठवर्त्मसु । यत्रोपगीयते विष्णुर्देवदेवो जनार्दनः ॥ " इति । किंच—" तपंतु तापैः प्रपतंतु पर्वतादटंतु तीर्थानि पठंतु चागमान् । यजंतु यागैर्विवदंतु वादैर्हरिं विना नैव सृतिं तरंति ॥ " इति श्रीधराचार्येणाप्युक्तम् । " दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यंते मायामेतां तरंति ते ॥ " इत्यपि श्रीमुखेनैवोक्तम् । किंच " मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ " इत्युपांतमंत्रे श्रीगीतासु हरिणा प्रतिश्रुतम् । किंच—श्रीदशमे ब्रह्मा श्रीकृष्णं प्रति वक्ष्यति—" श्रेयःस्रुतिं भक्तिमुदस्य ते विभो क्लिश्यंति ये केवलबोधलब्धये । तेषामसौ क्लेशल एव शिष्यते नान्ययथा स्थूलतुषावघातिनाम् ॥ " इति । किं बहुना, श्रीकृष्णभक्तिरेव कल्याणहेतुरित्यलमतिप्रसंगेन । किंच—' भक्तिः सिद्धेर्गरीयसी ' इति कपिलोक्तेः, " मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम् " इति पञ्चमोक्तेश्च मुक्तेर्भक्तिरधिकाऽत एव भक्तैः सा मुक्तिर्नाद्रियते—"नेच्छंति ते मया दत्तं कैवल्यमपुनर्भवम् " इति भगवदुक्तेः । मुक्तौ तु तद्रूपता जायते भक्तेस्तु श्रीहरिः स्वायत्तीभवतीति रहस्यम् । न हि वशीकृतनृपनरस्येव स्वयं नृपस्य तत्सुखमिति भावः ॥ अथ ज्ञानकाण्डमाह ॥

व्यावहारिक—प्रातिभासिक—पारमार्थिकभेदाज्ज्ञानं त्रिधा । घटपटादिव्यवहारोपयोगि घटोयम्पटोयमित्यादिरूपमाद्यम् । स्वप्नादिविषयं द्वितीयम् । मोक्षोपयोगि पारमार्थिकम् ।

तच्च जीवब्रह्मणोरभेदरूपमस्ति। तदधिकारि तु साधनचतुष्टयसम्पन्नः प्रमाता। साधनानि तु—नित्यानित्यवस्तुविवेकः, इहामुत्रार्थफलभोगविरागः, शमादिषट्कसम्पत्तिः, मुमुक्षुत्वं च। नित्यानित्यवस्तुविवेकस्तावद्ब्रह्मैव नित्यं वस्तु ततोऽन्यदखिलमनित्यमिति विवेचनम्। नित्यत्वं नाम कालानवच्छिन्नत्वम्, तद्विपरीतत्वमनित्यत्वम्। ऐहिकानां स्रक्चंदनवनितादिविषयभोगानां कर्मजन्यतया नित्यत्ववदामुष्मिकाणामप्यमृतादिविषयभोगानामनित्यतया तेभ्यो नितरां विरतिरिहामुत्रार्थफलभोगविराग इति। शमादयः शमदमोपरतितितिक्षासमाधानश्रद्धाख्या इति। शमः—श्रवणादिव्यतिरिक्तविषयेभ्यो मनसो निग्रहः। दमो बाह्येन्द्रियाणां तद्व्यतिरिक्तविषयेभ्यो निवर्तनम्। निवर्तितानां च सर्वेषां तद्व्यतिरिक्तविषयेभ्य उपरमणमुपरतिः। अथवा—विहितानां कर्मणां विधिना त्यागः। तितिक्षा शीतोष्णादिद्वंद्वसहिष्णुता। निगृहीतस्य मनसः श्रवणादौ तदनुगुणविषये च समाधिः समाधानम्। गुरुवेदांतवाक्येषु विश्वासः श्रद्धेति। मुमुक्षुत्वं मोक्षेच्छा। मोक्षो नाम विद्यानिरस्ताविद्यातत्कार्यब्रह्मात्मनावस्थानम्। तद्विषयेच्छा मोक्षेच्छा, तद्वत्त्वं मुमुक्षुत्वमिति। अथायमधिकारी जन्ममरणादिभवाग्नितप्तः समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं गुरुमुपसरति, स निजदयालुतयाऽध्यारोपापवादाभ्यामुपदिशति। अध्यारोपो नाम वस्तुन्यवस्त्वारोपः। वस्तु सच्चिदानंदं ब्रह्म, तद्भिन्नमज्ञानादिसकलजडमवस्तु। अज्ञानं नाम सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधिभावरूपं यत्किंचिदिति। इदमज्ञानं समष्टिव्यष्टिरूपेणैकमनेकमिति च व्यवह्रियते। व्यष्टिर्विशेषः। समष्टिः सामान्यम्। यथा वृक्षाणां समष्ट्यभिप्रायेण वनमित्येकत्वव्यपदेशः, यथा जलानां समष्ट्यभिप्रायेण जलाशय इति व्यपदेशः, तथा नानात्वेन प्रतीयमानानां जीवगताज्ञानानां समष्ट्यभिप्रायेण तदेकत्वव्यपदेशः, "अजामेकां लोहितशुक्लकृष्णां बह्वीम्" इत्यादिश्रुतेः। इयं समष्टिरुत्कृष्टोपाधितया शुद्धसत्त्वप्रधाना। एतदुपहितं चैतन्यं सर्वज्ञत्वादिगुणाश्रयं सदव्यक्तमंतर्यामीश्वर इत्यादिशब्दैर्व्यपदिश्यते, सर्वज्ञानावभासकत्वात्। अज्ञानस्येयं समष्टिरखिलकारणत्वात्कारणशरीरमानंदप्रचुरत्वात्कोशवदाच्छादकत्वाच्च। आनन्दमयः कोशः सर्वोपरमत्वात्सुषुप्तिरत एव स्थूलसूक्ष्मप्रपंचलयस्थानमिति चोच्यते। यथा वनस्य व्यष्ट्यभिप्रायेण वृक्षा इत्यनेकत्वव्यपदेशः, यथा वा जलाशयस्य व्यष्ट्यभिप्रायेण जलानीति तदनेकत्वव्यपदेशः, तथा ज्ञानस्य व्यष्ट्यभिप्रायेण तदनेकत्वव्यपदेशः, "इंद्रो मायाभिः पुरुरूप ईयते" इत्यादिश्रुतेः। इयं व्यष्टिर्निकृष्टोपाधितया मलिनसत्त्वप्रधाना। एतदुपहितं चैतन्यमल्पज्ञत्वादिगुणात्मकं प्राज्ञ इत्युच्यते, एकाज्ञानावभासकत्वादिति। अस्यापीयमहंकारादिकारणत्वात्कारणशरीरमानन्दप्रचुरत्वादानन्दमयः कोशः सुषुप्तिः सर्वोपरमस्थानत्वात्स्थूलसूक्ष्मशरीरलयस्थानमिति चोच्यते। तदानीमेतावीश्वरप्राज्ञौ चैतन्यप्रदीप्ताभिरतिसूक्ष्माभिरज्ञानवृत्तिभिरानंदमनुभवतः। अनयोर्व्यष्टिसमष्ट्योर्वनवृक्षयोरिव जलाशयजलयोरिवाभेदः। एतदुपहितयोरीश्वरप्राज्ञयोरपि वनवृक्षावच्छिन्नाकाशयोरिव जलाशयजलगतप्रतिबिंबाकाशयोरिवाभेदः। वनवृक्षतदवच्छिन्नाकाशयोर्जलाशयजलगतप्रतिबिंबाकाशयोर्वाधारानुपहिताकाशवदनयोरज्ञानतदुपहितचैतन्ययोराधारभूतं यदनुपहितं चैतन्यं तत्तुरीयमित्युच्यते। इदमेव तुरीयं शुद्धचैतन्यम

ज्ञानादितदुपहितचैतन्याभ्यामविविक्तं सन्महावाक्यस्य वाच्यं विविक्तं सल्लक्ष्यमिति चोच्यते। अस्य ज्ञानस्यावरणविक्षेपनामकं शक्तिद्वयमस्ति। यथाल्पोपि मेघोऽनेकयोजनमायतं सूर्यमंडलं द्रष्टृनेत्रपथपिधायकतयाऽऽवृणोति, तथावरणशक्तिः परिच्छिन्नाप्यपरिच्छिन्नमात्मानमवलोकयितृबुद्धिपथपिधायकतयावृणोति । आवरणशक्त्यवच्छिन्नात्मनः कर्तृत्व भोक्तृत्वादिसंसारभावना भवति, यथा स्वाज्ञानावृतरज्जौ सर्पत्वभावना। विक्षेपशक्तिस्तु यथा रज्ज्वज्ञानं स्वावृतरज्जौ स्वशक्त्या सर्पादिकमुद्भावयति, एवमज्ञानमपि स्वावृतात्मनि विक्षेपशक्त्याकाशादिप्रपंचमुद्भावयति । शक्तिद्वयवदज्ञानोपहितं चैतन्यं स्वप्रधानतया निमित्तं स्वोपाधिप्रधानतयोपादानं च भवति। यथा लूता तंतुकार्यं प्रति स्वप्रधानतया निमित्तं स्वशरीरप्रधानतयोपादानश्च। "यथोर्णनाभिः सृजते गृह्णीते च यथा पृथिव्यामोषधयः संभवंति। तथा सतः पुरुषात्केशलोमानि तथाक्षरात्संभवति विश्वम्" इति श्रुतेः तमःप्रधान विक्षेपशक्तिमदज्ञानोपहितचैतन्यादाकाशमाकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी चोत्पद्यते । आकाशादिषु जाड्याधिक्यात्तमःप्राधान्यं तत्कारणस्येति । तदानीं तेष्वाकाशादिषु कारणगुणप्रक्रमेण सत्त्वरजस्तमांस्युत्पद्यन्ते। एतान्येव सूक्ष्मभूतानि तन्मात्राण्यपंचीकृतानि चेत्युच्यंते। एतेभ्यः पंचीकृतेभ्यः सूक्ष्मशरीराणि स्थूलभूतानि चोत्पद्यंते। सूक्ष्मशरीराणि सप्तदशावयवकानि लिंगशरीराणि । ते चावयवाः—ज्ञानेन्द्रियपंचकं, बुद्धिमनसी, कर्मेंद्रियपञ्चकं, प्राणादिपञ्चवायवः, ज्ञानेंद्रियाणि, श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि । एतानि पुनराकाशादीनां सात्त्विकांशेभ्यो व्यस्तेभ्यः पृथक्पृथक् क्रमेणोत्पद्यंते। बुद्धिर्नाम निश्चयात्मिकांतःकरणवृत्तिः । मनो नाम संकल्पविकल्पात्मिकांतःकरणवृत्तिरिति । अनयोरेव चित्ताहंकारयोरंतर्भावः । एते पुनराकाशादिसात्त्विकांशेभ्य उत्पद्येते । एषां प्रकाशात्मकत्वात्सात्त्विकांशकार्यत्वम् । इयं बुद्धिर्ज्ञानेंद्रियैः सहिता विज्ञानमयः कोशः। अयमेव कर्तृत्वाद्यभिमानित्वेनेहलोकपरलोकगामी व्यावहारिको जीव इत्युच्यते। मनस्तु कर्मेंद्रियैः सहितं मनोमयः कोशोस्ति। कर्मेंद्रियाणि वाक्पाणिपादपायूपस्थानि। एतानि पुनराकाशादीनां रजोंशेभ्यो व्यस्तेभ्यः पृथक्पृथक् क्रमेणोत्पद्यंते । वायवस्तु प्राणापानव्यानोदानसमानाः। प्राणो नासाग्रवर्ती प्राग्गामी। अपानस्त्वधोगामी पाय्वादिवर्त्ती। व्यानोऽखिलशरीरसंचारी। उदानः कण्ठव्याप्यूर्ध्वगामी । समानोऽशितपीतादिसमीकरणकरः ॥ केचित्तु—नागकूर्मकृकलदेवदत्तधनंजयाख्या अन्येपि पञ्च वायवः संतीत्याहुः । "कूर्म उन्मीलनकरो नाग उद्गिरणप्रदः। कृकलः क्षुत्करो जृंभाकरः स्याद्देवदत्तकः॥ धनंजयः पोषकरो यो मृतं न जहात्यपि ॥" इति । इदं प्राणादिपंचकं कर्मेंद्रियैः सहितं सत्प्राणमयः कोशः । प्राणादेः क्रियात्मकत्वेन रजोंशकार्यत्वम्। एतेषु कोशेषु विज्ञानमयः कर्तृरूपः, मनोमयः करणरूपः, प्राणमयः कार्यरूपः। एतत्कोशत्रयं मिलितं सत्सूक्ष्मशरीरमित्युच्यते। अत्राप्यखिलसूक्ष्मशरीरमेकबुद्धिविषयतया वनवज्जलाशयवद्वा समष्टिः । अनेकबुद्धिविषयतया वृक्षवज्जलवद्वा व्यष्टिरिति च भवति। एतत्समष्ट्युपहितं चैतन्यं सूत्रात्मा हिरण्यगर्भः प्राण इति चोच्यते, सर्वत्रानुस्यूतत्वात, ज्ञानक्रियाशक्तिमदपंचीकृतपंचमहाभूताभिमानित्वाच्च, तदुपहितत्वाच्च। अस्यैषा समष्टिः, स्थूलप्रपंचापेक्षया सूक्ष्मत्वात। सूक्ष्मशरीरं विज्ञानमयादिकोशत्रयं जाग्रद्वासनामयत्वात्स्वप्नोऽत एव स्थूलप्रपञ्चलयस्थानमिति चोच्यते । एतद्व्य

ष्ट्युपहितं चैतन्यं तेजसो भवति, तेजोमयोंतःकरणोपहितत्वात् । अस्यापीयं व्यष्टिः स्थूलशरीरापेक्षया सूक्ष्मत्वात्सूक्ष्मशरीरं विज्ञानमयादिकोशत्रयं जाग्रद्वासनामयत्वात्स्वप्नः स्थूलशरीरलयस्थानमिति चोच्यते । तदानीं सूत्रतैजसौ मनोवृत्तिभिः सूक्ष्मविषयाननुभवतः । अत्रापि समष्टिव्यष्ट्योस्तदुपहितयोः सूत्रात्मतैजसयोश्च वनवृक्षवत्तदवच्छिन्नाकाशवद्वा जलाशयजलवत्तद्गतप्रतिबिंबाकाशवच्चाभेद एव । एवं सूक्ष्मशरीरोत्पत्तिरिति । स्थूलभूतानि पञ्चीकृतानि । पञ्चीकरणं त्वाकाशादिषु पंचस्वेकैकं द्विधा समं विभज्य तेषु दशसु प्राथमिकान्पंचभागान् प्रत्येकं चतुर्धा समं विभज्य तेषां चतुर्णां स्वस्वद्वितीयभागपरित्यागेन भागांतरेषु संयोजनमिति । केचित्त्रिवृत्करणमप्याहुः । तदानीमाकाशे शब्दोऽभिव्यज्यते । वायौ शब्दस्पर्शौ । अग्नौ शब्दस्पर्शरूपाणि । अप्सु शब्दस्पर्शरूपरसाः । पृथिव्यां शब्दस्पर्शरूपरसगंधा इति । एतेभ्यः पंचीकृतभूतेभ्यो भूर्भुवः स्वर्महोजनस्तपस्सत्यमित्येतन्नामकानामुपर्युपरि विद्यमानानामतलवितलसुतलतलातलरसातलमहातलपातालनामकानामधोधो विद्यमानानां लोकानां ब्रह्मांडस्य तदंतर्गतानां चतुर्विधस्थूलशरीराणामन्नपानादीनां चोत्पत्तिर्भवति । शरीराणि जरायुजांडजस्वेदजोद्भिज्जाख्यानि । जरायुजानि मनुष्यपश्वादीनि । अंडजानि पक्षिपन्नगादीनि । स्वेदजानि यूकामशकादीनि । उद्भिज्जानि तृणवृक्षादीनि । अत्रापि चतुर्विधस्थूलशरीरमेकानेकबुद्धिविषयतया वनवज्जलाशयवत्समष्टिर्वृक्षवद्वनवद्व्यष्टिश्च भवति । एतत्समष्ट्युपहितं चैतन्यं वैश्वानरो विराडिति चोच्यते । सर्वनराभिमानित्वाद्विविधं राजमानत्वाद्वा । अस्यैषा समष्टिः स्थूलशरीरमन्नविकारत्वादन्नमयः कोशः । स्थूलभोगायतनत्वाज्जाग्रदिति चोच्यते । एतद्व्यष्ट्युपहितं चैतन्यं विश्व इत्युच्यते, सूक्ष्मशरीरमपरित्यज्य स्थूलशरीरादिप्रविष्टत्वात् । अस्याप्येषा स्थूलशरीरमन्नविकारत्वादन्नमयः कोशः स्थूलभोगायतनत्वाच्च जाग्रदित्युच्यते । तदानीमेतौ विश्ववैश्वानरौ दिग्वातार्कप्रचेतोभिः क्रमान्नियंत्रितेन श्रोत्रादींद्रियपञ्चकेन क्रमाच्छब्दस्पर्शरूपरसगन्धानिंद्रोपेन्द्रयमप्रजापतिभिः क्रमान्नियंत्रितेन वागादींद्रियपंचकेन क्रमाद्वचनादानगमनविसर्गानन्दांश्च चन्द्रचतुर्मुखशंकराच्युतैः क्रमान्नियंत्रितेन मनोबुद्ध्यहंकारचित्ताख्येनांतरिंद्रियचतुष्केण क्रमात्संकल्पविकल्पनिश्चयाहंकार्यचैत्त्यांश्च सर्वानेतान् स्थूलविषयाननुभवतः । अत्राप्यनयोः स्थूलसमष्टिव्यष्ट्योस्तदुपहितयोर्विश्ववैश्वानरयोश्च वनवृक्षवत्तदवच्छिन्नाकाशवच्च जलजलाशयवत्तद्गतप्रतिबिंबाकाशवच्च वा पूर्ववदभेद एव । एवं पंचीकृतस्थूलभूतेभ्यः स्थूलप्रपंचोत्पत्तिरिति । एषा स्थूलसूक्ष्मकारणशरीरप्रपंचानामपि समष्टिरेको महाप्रपंचः । यथावांतरवनानां समष्टिरेकं महद्वनं, यथा चावांतरजलाशयानां समष्टिरेको महाञ्जलाशयः, एतदुपहितं विश्ववैश्वानरादीश्वरपर्यंतं चैतन्यमवांतरवनावच्छिन्नाकाशवदवांतरजलाशयतद्गतप्रतिबिंबाकाशवच्चैकमेव । आभ्यां महाप्रपंचतदुपहितचैतन्याभ्यां तप्तायःपिंडवदविविक्तं सदनुपहितचैतन्यम् "सर्वं खल्विदं ब्रह्म" इति वाक्यस्य वाच्यं सल्लक्ष्यमिति । एवं वस्तुन्यवस्त्वारोपोऽध्यारोपः सामान्येन प्रदर्शितः । इदानीं प्रत्यगात्मनि विशेतस्तमाह ॥ अतिप्राकृतस्तु–" आत्मा वै पुत्रनामासि " इति श्रुतेः स्वस्मिन्निव स्वपुत्रेऽपि प्रियत्वदर्शनात्पुत्रे पुष्टे नष्टे चाहमेव पुष्टो नष्टश्चेत्यनुभवाच्च पुत्र आत्मेत्याह ॥ चार्वाकस्तु–"स वा एष पुरुषोन्नरसमयः" इत्यादिश्रुतेः प्रदीप्तगृहात्स्वपुत्रं परित्यज्यापि स्वस्य निर्गम

दर्शनात्स्थूलोऽहं कृशोहमित्यनुभवाच्च स्थूलशरीरमात्मेत्याह ॥ अपरश्चार्वाकस्तु—"ते ह प्राणाः प्रजापतिमेत्य ब्रूयुः" इत्यादिश्रुतेरिंद्रियाणामभावे शरीरचलनाभावात्काणोऽहं बधिरोहमित्याद्यनुभवाच्चेंद्रिण्यात्मेति वदति ॥ अपरश्चार्वाकः—"अन्योंतर आत्मा प्राणमयः" इत्यादिश्रुतेः प्राणाभावे इंद्रियादिचलनायोगादहमशनायावानहं पिपासावानित्याद्यनुभवाच्च प्राण आत्मेत्याह ॥ अन्यश्चार्वाकस्तु—"अन्योंतर आत्मा मनोमयः" इतिश्रुतेर्मनसि सुप्ते प्राणादेरभावादहं संकल्पविकल्पवानित्याद्यनुभवाच्च मन आत्मेत्याह ॥ बौद्धस्तु—'अन्योंतर आत्मा विज्ञानमयः' इत्यादिश्रुतेः कर्तुरभावे करणस्य शक्तेरभावादहं कर्ताहं भोक्तेत्यनुभवाच्च बुद्धिरात्मेत्याह॥प्रभाकरतार्किकौ तु—"अन्योंतर आत्मा आनंदमयः" इतिश्रुतेर्बुद्ध्यादीनामज्ञाने लयदर्शनादहमज्ञोऽहं ज्ञानीत्यनुभवाच्चाज्ञानमात्मेति वदतः ॥ भट्टिस्तु—"प्रज्ञानघन एवानंदमयः" इतिश्रुतेः सुषुप्तौ प्रकाशाप्रकाशसद्भावान्मामहं न जानामीत्यनुभवाच्च ज्ञानोपहितचैतन्यमात्मेति वदति॥ अपरो बौद्धः—"असदेवेदमग्र आसीत्" इतिश्रुतेः सुषुप्तौ सर्वाभावादहं सुषुप्तौ नासमित्युत्थितस्य स्वभावपरामर्शविषयानुभवाच्च शून्यमात्मेति वदति ॥ एतेषां पुत्रादीनां शून्यपर्यंतानामनात्मत्वमुच्यते । एतैरिति प्राकृतादिवादिभिरुक्तेषु श्रुतियुक्त्यनुभवाभासेषु पूर्वपूर्वोक्तश्रुतियुक्त्यनुभवाभासानामुत्तरोत्तरश्रुतियुक्त्यनुभवाभासैर्बाधदर्शनात्पुत्रादीनामनात्मत्वं स्पष्टमेव । किंच—"प्रत्यगस्थूलोऽचक्षुरप्राणोऽमना अकर्त्ता चैतन्यं चिन्मात्रं सत्" इत्यादिप्रबलश्रुतिविरोधात्। अस्य पुत्रादिशून्यपर्यंतस्य जडस्य चैतन्यभास्यत्वेन घटादिवदनित्यत्वादहं ब्रह्मेति विद्वदनुभवप्राबल्याच्च तत्तच्छ्रुतियुक्त्यनुभवाभासानां बाधितत्वात्पुत्रादिशून्यपर्यंतमखिलमनात्मैव । अतस्तत्तद्भासकं नित्यशुद्धबुद्धमुक्तसत्यस्वभावप्रत्यक्चैतन्यमेवात्मतत्त्वमिति विद्वदनुभव एवमध्यारोप इति ॥ अथापवादमाह ॥ अपवादो नाम अतात्त्विकोऽन्यथाभावो विवृतिः, यथा रज्जुविवर्तस्य सर्पस्य रज्जुमात्रत्ववद्वस्तुविवर्तस्यावस्तुनोऽज्ञानादिप्रपंचस्य वस्तुमात्रत्वमिति । कार्यस्य कारणमात्रावशेषणं कारणस्वरूपव्यतिरेकेण कार्यस्यासत्तावधारणं वापवाद इति यावत । तथाहि—एतद्भोगायतनं चतुर्विधं सकलशरीरजातं भोग्यरूपान्नादिकमेतदाश्रयभूरादिचतुर्दशभुवनान्येतदाश्रयभूतं ब्रह्माण्डं चैतत्सर्वमेतेषां कारणभूतं पंचीकृतभूतमात्रं भवति । एतानि शब्दादिविषयसहितानि पंचीकृतभूतानि सूक्ष्मशरीरजातं चैतत्सर्वमेतेषां कारणरूपापंचीकृतभूतमात्रं भवति । एतानि सत्त्वादिगुणसहितान्यपंचीकृतान्युत्पत्तिव्युत्क्रमेणैवैतत्कारणभूतज्ञानोपहितचैतन्यमात्रं भवति । एतदपि तत्सर्वमज्ञानमज्ञानोपहितं चैतन्यं चेश्वरादिकमेतदाधारभूतानुपहितचैतन्यतुरीयब्रह्ममात्रं भवति । आभ्यामध्यारोपापवादाभ्यां तत्त्वं पदार्थशोधनमपि सिद्धं भवति । तथाहि—अज्ञानादिसमष्टिरेतदुपहितं सर्वज्ञत्वादिविशिष्टं चैतन्यमेतदनुपहितचैतन्यं चैतत्त्रयं तप्तायःपिण्डवदेकत्वेनावभासमानं तत्पदवाच्यार्थो भवति । एतदुपाध्युपहिताधारभूतमनुपहितचैतन्यं तत्पदलक्ष्यार्थो भवति । अज्ञानादिव्यष्टिरेतदुपहिताल्पज्ञत्वादिविशिष्टचैतन्यमेतदनुपहितं चैतन्यं चैतत्त्रयं तप्तायःपिण्डवदेकत्वेनावभासमानं त्वंपदवाच्यार्थो भवति । एतदुपाध्युपहिताधारभूतमनुपहितं प्रत्यगानंदं तुरीयं चैतन्यं त्वंपदलक्ष्यार्थो भवति ॥ अथ महावाक्यार्थः ॥ इदं तत्त्वमसीति वाक्यं संबंधत्रयेणाखण्डार्थबोधकं भवति । संसर्गानवगाहियथार्थज्ञानजनकत्वम

खण्डत्वम् । तदुक्तम्—"सामानाधिकरण्यं च विशेषणविशेष्यतः। लक्ष्यलक्षणसंबंधः पदार्थप्रत्यगात्मनाम्" इति । भिन्नप्रवृत्तिनिमित्तयोः शब्दयोरेकस्मिन्नर्थे प्रवृत्तिः सामानाधिकरण्यम् । यथा सोऽयं देवदत्त इति वाक्ये तत्कालविशिष्टदेवदत्तवाचकसशब्दस्यैतत्कालविशिष्टदेवदत्तवाचकायंशब्दस्य चैकस्मिन्पिण्डे तात्पर्यसंबंधः, तथा तत्त्वमसीति वाक्ये परोक्षत्वादिविशिष्टचैतन्यवाचकतत्पदस्यापरोक्षत्वादिविशिष्टचैतन्यवाचकत्वंपदस्य चैकस्मिंश्चैतन्ये तात्पर्यसंबंधः । विशेषणविशेष्यभावसंबंधस्तु यथा तत्रैव वाक्ये सशब्दार्थतत्कालविशिष्टदेवदत्तस्यायंशब्दार्थैतत्कालविशिष्टदेवदत्तस्य चान्योन्यभेदव्यावर्त्तकतया विशेषणविशेष्यभावः, तथा तत्त्वमसीति वाक्येपि तत्पदार्थपरोक्षत्वादिविशिष्टचैतन्यस्य त्वंपदार्थापरोक्षत्वादिविशिष्टचैतन्यस्य चान्योन्यभेदव्यावर्तकतया विशेषणविशेष्यभावः । व्यावर्त्तकं विशेषणं, व्यावर्त्यं विशेष्यम् । तथा च—सोऽयं देवदत्त इति वाक्य एवायंशब्दवाच्यो योऽसावेतत्कालैतद्देशसंबंधविशिष्टो देवदत्तपिंडः, अयं स इति तच्छब्दवाच्यात्तत्कालतद्देशसंबंधविशिष्टाद्देवदत्तपिंडाद्भिन्नो नेति यदा प्रतीयते, तदा तच्छब्दार्थस्यायंशब्दवाच्यार्थनिष्ठभेदव्यावर्त्तकतया विशेषणत्वम् । अयंशब्दार्थस्य व्यावर्त्यत्वाद्विशेष्यत्वम् । यदा च स इति तच्छब्दवाच्यस्तत्कालतद्देशविशिष्टो देवदत्तपिण्डः सोयमितीदंशब्दवाच्यादेतत्कालैतद्देशसंबंधविशिष्टाद्देवदत्तपिडान्न भिद्यत इति यदा प्रतीयते, तदायंशब्दवाच्यस्य तच्छब्दार्थनिष्ठभेदव्यावर्त्तकतया विशेषणत्वम् । तच्छब्दार्थस्य व्यावर्त्यत्वाद्विशेष्यत्वम् । अयमेव स एवायमित्यन्योन्यभेदव्यावर्त्तकतया सोऽयंशब्दार्थयोः परस्परं विशेषणविशेष्यभाव इत्यर्थः । लक्ष्यलक्षणभावसंबंधस्तु यथा तत्रैव वाक्ये सशब्दायंशब्दयोस्तदर्थयोर्वा परस्परविरुद्धतत्कालैतत्कालविशिष्टत्वपरित्यागेनाविरुद्धदेवदत्तेन सह लक्ष्यलक्षणभावः । तथात्रापि तत्त्वंपदयोस्तदर्थयोर्वा विरुद्धपरोक्षत्वादिविशिष्टत्वापरोक्षत्वादिविशिष्टत्वपरित्यागेनाविरुद्धचैतन्येन सह लक्ष्यलक्षणभावः । इयमेव जहदजहल्लक्षणा परपर्याया एकांशपरित्यागेनैकांशस्य ग्रहणाद्भागत्यागलक्षणेत्युच्यते । असाधारणधर्मप्रतिपादकं वाक्यं लक्षणम् । तत्प्रतिपाद्यमविशिष्टवस्तु लक्ष्यमिति विवेकः । एवमन्येषामपि महावाक्यानामर्थो ग्रंथांतरादवसेयः । एतेनाभेदज्ञानमेव ज्ञानकांडप्रयोजनमिति सिद्धम् । तज्ज्ञानं मोक्षहेतुः । इह च श्रुतिस्मृत्यादिरूपाणि बहूनि मानानि संति । ननु जगज्जीवादेर्ब्रह्मणो भेदोऽस्ति, न वा । आद्ये, ब्रह्मणोऽसत्त्वाज्जाड्यदुःखरूपत्वं बलादायातम् । द्वितीये, कथमैक्यमिति । किञ्च—अभेदे मानमस्ति, न वा । आद्ये, घटरूपस्य चाक्षुषत्वे घटस्येव जगज्जीवब्रह्मनिष्ठाभेदस्य प्रमाणविषयत्वे जीवब्रह्मणोरपि प्रमाणविषयत्वावश्यंभावेन जाड्यं तदवस्थमेव । प्रमाणेनाभेदाविषयीकरणे प्रमाणसत्त्वांगीकरणमेव नास्ति चेच्छशश्रृंगवदसत्त्वापात इति चेन्न, यदि मानेनैव वस्तुसिद्धिरिति ते मतं, तर्हि माने मानमस्ति, न वा । आद्ये, ततो भिन्नमभिन्नं वा । द्वितीये, मानं विषयीकरोति, न वा । आद्ये, त्वात्माश्रयः स्वसिद्धौ स्वस्यापेक्षणमात्माश्रयः । द्वितीये, तद्दूरीकरणस्य कैमर्थ्यम् । ततो भिन्नमिति पक्षश्चेत्—तत्रापि मानसत्वात्सत्त्वविकल्पे पूर्ववदात्माश्रयोऽनवस्था च । इतरेतरसाधकत्वे त्वन्योन्याश्रयः । किञ्च—मानस्य मानविषयत्वे प्रमेयत्वापत्त्या मानत्वमेव व्यालुप्येत । माने मानं नास्तीति पक्षे

मानरहितस्य शशश्रृंगतुल्यतायास्त्वयैवाभ्युपगतत्वान्मानस्यैव शून्यता । किंच—सति प्रमेये प्रमाणं प्रवर्तते, असति वा । आद्ये, न प्रमाणप्रयोजनं पश्यामः, तत्प्रवृत्तेः प्रागेव प्रमेयस्य स्वतः सिद्धत्वात् । अंत्येपि, न प्रमाणप्रयोजनं; न हि प्रमाणमसत्सत्कर्त्तुमलम्, अन्यथा बंध्यातनुजमपि प्रकटयेत् । किंच—प्रमाणं स्वयं प्रमेयं भवति, न वा । आद्ये, तस्य घटादिसदृक्षतया न प्रमाकरणत्वम् । द्वितीये तु, सप्तमरसवदवाच्यतैव, अभिधेयत्वप्रमेयत्वयोः साहचर्यनियमात् । तस्माज्जड एव प्रमाणापेक्षा, न स्वयंप्रकाशे तन्निष्ठे धर्मे वा प्रमाणमवश्यमपेक्षणीयम् । वस्तुतस्तु श्रुतिरूपं प्रमाणं तत्रास्त्येव । ननु श्रुतिः सच्चिदानंदं विषयीकरोति, न वा । अंत्ये, किं तदंगीकारेण । आद्ये, प्रमेयत्वेन जडत्वं, तत्सहचरितत्वेनाभिधेयत्वेन वाग्विषयत्वम्, "यतो वाचो निवर्तंते" इतिश्रुतिबाधश्च स्यादिति चेन्न, श्रुतिरपि यथाकथंचिदविषयतयैव लक्षणावृत्त्या ज्ञापयति, नाऽभिधावृत्त्या । तथाप्रवृत्तौ श्रुतेरेवाप्रमाणता स्यादिति न कोऽपि दोषः । तदुक्तं पुष्पदन्तेन—"अतीतः पंथानं तव च महिमा वाङ्मनसयोरतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि" इति । ननु न प्रमाणमुत्पादकं ब्रूमः किंतु साधकमिति चेच्चिरंजीव, अस्मदिष्टस्यैव त्वया कथनात् । साधकमपि प्रमाणं स्वतःसिद्धिहीनं जडं साधयतु, न तु स्वयंप्रकाशं परमात्मानम्, तस्य स्वतःसिद्धत्वात् । "तमेव भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुत्या सर्वस्य सिद्धेस्तदधीनत्वनिरूपणात्।कथं तर्हि लक्षणयापि श्रुतिविषयत्वमिति चेदज्ञानावृतस्यैव, अनावृते तु न श्रुतिरपि प्रवर्तत इति रहस्यम्।ननु पारमार्थिकभेद एवास्थीयतां,किमनया क्लिष्टकल्पनया । अन्यथा सेव्यसेवकभावो जीवानां परस्परं भेदे गुरुशिष्यबद्धमुक्तसुखदुःखजन्मव्यवस्था च न स्यात् । तथा सति द्वयोरपि जाड्यापत्त्यानात्मत्वानित्यत्वादिदोषप्रसंगात् । तथाहि—जीवो जडो, ब्रह्मभिन्नत्वात, घटादिवत् । ब्रह्मभिन्नत्वजडत्वयोर्व्याप्तेः संप्रतिपन्नत्वात् । एवं ब्रह्मापि जडं, जीवभिन्नत्वात्पाषाणादिवत् । तथा च जडत्वपरिच्छिन्नत्वानात्मत्वानित्यत्वादयो दोषा न निवारयितुं शक्याः । न च परमाण्वाकाशादौ व्यभिचार इति वाच्यम्, परमाणूनामप्रामाणिकत्वेनानभ्युपगमादाकाशादेश्चास्मन्मते जन्यत्वेनानित्यत्वान्न क्वापि व्यभिचारः । तथात्वे च कस्य ज्ञानेनाविद्यातत्कार्यबाधः, को वा श्रवणाद्यनुष्ठाता स्यात् । तथाहि—जडस्य "ब्रह्मणोऽभिज्ञानमानंदं ब्रह्म" इतिश्रुत्युक्तज्ञानरूपत्वाभावेन व्यापकज्ञानविषयत्वानुपपत्तेः । अज्ञानविषयत्वेनाज्ञातस्यैव च ज्ञानविषयत्वनियमाज्ज्ञानगोचरतापि न । तथा जीवस्यापि जडत्वादज्ञानाश्रयावच्छिन्नचैतन्यता न संभवति, जडे स्वत एवाप्रकाशे तत्र ज्ञानकृत्यभावात् । न च जडमेवाज्ञानमाश्रयतु विषयि करोतु वा घटादिषु दृष्टत्वादिति वाच्यम्, घटादिनिष्ठाज्ञानस्य

२

घटाद्यवच्छिन्नचैतन्यविषयत्वांगीकारेण तत्रापि घटादिविषयत्वानुपपत्तेर्न क्वचिज्जडाश्रयत्वमज्ञानस्य संभवति । एतदभिप्रायेणोक्तं सर्वज्ञसूक्तै–" आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला । पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नैव गोचरः॥" इति । तथा च जडयोर्जीवब्रह्मणोरज्ञानाश्रयत्वविषयत्वाभावे कस्य ज्ञानेन मोक्षः, कस्य वा साधनानुष्ठायित्वम् । किंच–जातेऽपि तत्त्वज्ञाने द्वयोरपि जडतया बाधावश्यंभावेन शून्यवादप्रसंगः । ततो न जीवब्रह्मणोर्वास्तवो भेदः, नापि जीवानां परस्परं भेदः, पूर्ववज्जाड्यापत्त्या दोषस्य तादवस्थ्यात् । न च व्यवहारसंकरः, कुंभाद्यनुगतरविशशिनभसां प्रातीतिकभेदवदाविद्यकांतःकरणभेदवशाज्जीवानामपि तादृशभेदाभ्युपगमात् । तेन व्यवहारे सिद्धे किं परमार्थभेदाभ्युपगमेन । न च पारमार्थिकभेदं विना व्यवहारसिद्धिरिति वाच्यम्, स्वप्नादौ तं विनापि निखिलव्यवहारदर्शनात् । प्रत्युत भेदे वस्तुत्वे " एकमेवाद्वितीयं ब्रह्म " " अजो ह्येकः " "क्षेत्रज्ञं चापि मां विद्धि" इत्याद्यभेदपरश्रुतिस्मृतिवाक्यानामप्रामाण्यमनिर्मोक्षप्रसंगस्तदर्थं श्रवणाद्यनुष्ठानवैयर्थ्यं च स्यादतोऽभेद एव न्याय्यो न भेद इति । तथा च सर्वाभिन्नात्मज्ञानं श्रवणादिभिः स्यात् । श्रवणादीनां श्रुतिविहितत्वात्तद्विधायिकां श्रुतिमाह–" आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यः "इति । अत्र " अग्निहोत्रं जुहोति, यवागूः पचति " इतिवत्पाठक्रमादर्थक्रमो बलीयानिति ध्येयोऽन्यथा द्रष्टव्यपदस्यांते पाठः स्यादिति । श्रवणं नाम न्यायैर्निर्णीततात्पर्यकश्रुत्यादिभिरात्मनिर्णयः । ततोऽप्युक्तवादिदुस्तर्कजालैरसंभावनाविपरीतभावनोत्पत्तेस्तन्निवारकन्यायानुसन्धानं मननम्। ततश्च व्यासंगत्यागेन देहातिरिक्तात्माकारमनोनुसंधानं निदिध्यासनम्।ततो यथाभूतदेहाद्यतिरिक्तात्मसाक्षात्कारस्तत्त्वज्ञानात्मको जायते, यः समूलं मिथ्याज्ञानमुन्मूलयति । विशेषदर्शनजन्यलौकिकसाक्षात्कारत्वेन भ्रमनिवर्तकत्वदर्शनात्।श्रुतिरप्येवमाह–"तरति शोकमात्मवित्"इति।मिथ्याज्ञाननाशः शोकतरणं, तद्धेतुरात्मदर्शनं, तद्धेतवः श्रवणादीनीति विवेकः।नन्वात्मसाक्षात्कारस्यैव मिथ्याज्ञाननाशकत्वेन्यपदार्थनिरूपणं व्यर्थमिति चेन्न, तत्तत्त्वज्ञानमंतरेण तद्भिन्नत्वेनात्मज्ञानासम्भवात्परंपरोपयोगेन सार्थक्यात् । तज्ज्ञात्मज्ञानं भगवत्प्रसादेनैव न तद्विनेति।अतः सोपि ज्ञेय उपास्यश्चेति पूर्वमुपपादितमेतद्बहुशः।अत्रैवान्येषां सांख्याद्यभिमतज्ञानानामंतर्भावो यथा कथंचिद्बोध्यः।'सर्वे पदा हस्तिपदे निमग्नाः'इति न्यायेनेति संक्षेपतो निरूपितः कांडत्रयविभागः।एवं कांडत्रयात्मकवेदोपबृंहकतया श्रीमद्भागवतमपि वेदतुल्यमेवादरणीयताकोटिनिविष्टमिति निष्कण्टको घण्टापथः।

अथेदानीं श्रीमद्भागवतस्यान्यकृतत्वशंका निराक्रियते । ननु भागवतं न व्यासदेवकृतं किंतु बोपदेवादिभिः कृतं स्यादिति प्रायः पुष्कलाः शंका भवंति । तदेतदत्र समा

धानकदंबकमवधेयम्—बोपदेवेन भागवतं यदि कृतं तर्हि व्यासनाम समाप्तौ किमिति लिखितं,ग्रंथकर्तुर्नाम्नि यदि संदेहस्तर्हि महाभाष्यादिग्रंथेष्वपि संदेहो दुर्वारः। किंच—बोपदेवात्प्रागुत्पन्नैश्चित्सुखाचार्यैर्भागवते टीका कृता, विजयध्वजेनापि भागवते टीका कृता, तत्रादा अष्टौ टीका अवलोक्य इत्युक्तम्, 'हनुमट्टीकां शंकराचार्यटीकां दृष्ट्वा' इति वर्णितं, तत्कथं संगच्छेत।शंकराचार्याणां सप्तशतसंवत्सराणां व्यतीतौ बोपदेवस्य तु पंचशती व्यतीतेति रामाश्रमेण लिखितम्।अन्यच्च भट्टोजिदीक्षितैर्बहुप्रकारैर्भागवतं स्तुतम्। शिवतत्त्वविवेकादौ संमतित्वेन च गृहीतम्।मधुसूदनसरस्वतीभिः भक्तिरसायनग्रंथे भागवतं व्याख्यातम्। विद्यारण्यगुरुभिरपि सूतसंहितादिटीकादौ भागवतं संमतित्वेन गृहीतम्। शंकराचार्यैर्गोविंदाष्टके 'मृत्सामत्सि' इत्याद्युक्तं, तच्च भागवतादन्यत्र नास्ति। एवमेकनाथप्रभृतिभिः प्राकृतग्रंथकारैरपि स्वीकृतम्। एतदधिकः को वा पंडितो यो भागवतं निन्देत्। किंच—भागवतं वाममार्गिणो निंदंति, ते निन्दन्तु नाम, तेषामपि भागवते निंदितत्वात्। चोराश्चंद्रमिव, उपपतयो मुख्यपतिमिव, पाखंडिनो वेदमिव, चैद्यः कृष्णमिव, रजको राममिव, गतश्रीर्गणकमिव, गतायुश्चिकित्सकमिव, उभयवर्जितो ब्राह्मणमिव, तादृशाः सर्वपुरुषार्थभ्रष्टा निन्दंतु भागवतं, न नः किंचिच्छिद्यते। किंच—महाभागवतमेव सर्वपुराणप्रसिद्धमिति दामोदरशास्त्रिभिरपि निर्णीतम्। तद्यथा—"अष्टादशपुराणानां कर्ता सत्यवतीसुतः" इति। अष्टादशपुराणानि तु—'ब्राह्मं पाद्मं वैष्णवं च' इत्यादिवाक्येषु भागवतं नाम पुराणमेकमेव गणितम्। लोके तु श्रीमद्भागवतदेवीभागवताख्यौ द्वौ ग्रंथौ प्रसिद्धौ। तत्र कतरो व्यासकृताष्टादशपुराणांतर्गत इति जिज्ञासायां श्रीमद्भागवताख्य एव तथेति पुराणवाक्यैर्निर्णीयते। तथाहि स्कांदे—"परीक्षिच्छुकसंवादो योसौ व्यासेन वर्णितः। ग्रंथोऽष्टादशसाहस्रः सोसौ भागवताभिधः॥" इति। नारदीये—"मरीचे श्रृणु वक्ष्यामि वेदव्यासेन यत्कृतम्। श्रीमद्भागवतं नाम पुराणं वेदसंमितम्॥"। पाद्मे तु—"चकार संहितामेतां श्रीमद्भागवतीं पराम्" इति।"स्कंधा द्वादश एवात्र कृष्णेन मुनिना कृताः" इति देवीभागवतोक्त्या देवीभागवतमपि व्यासकृतमिति न वाच्यम्, द्वयोर्व्यासकृतत्वे व्यासकृतपुराणानामष्टादशत्वचतुर्लक्षश्लोकत्वयोर्हानिप्रसंगात्। न चैवं देवीभागवतवचनाप्रामाण्यप्रसंगः, तस्य शिष्यद्वारा व्यासकृतत्वमित्यर्थांतरपरताया एवागत्या स्वीकार्यत्वात्। भारतोत्तरमसंतुष्टो व्यासो भागवतं चकारेत्यादिश्रीमद्भागवतवचनेनाविरुद्धत्वायार्थांतरपरत्वमुपनेतुमुचितत्वात। किंच—पाद्मे श्रीमद्भागवतमाहात्म्ये श्रीमद्भागवतकथाश्रवणाय समागतानां परिगणनप्रसंगे—"वेदान्तानि च वेदाश्च मंत्रास्तंत्राणि संहिताः। दशसप्तपुराणानि सहस्राणि तदाऽऽययुः॥" इत्युक्तम्। तत्र व्यासकृतपुराणानामष्टादशत्वादष्टादशेति वक्तव्ये सप्तदशत्वोक्तिः श्रोतव्यस्य श्रीमद्भागवतस्याष्टादशत्वं गमयति, तस्याष्टादशांतर्गतत्वे देवीभागवतस्याष्टादशांतर्गतत्वे वाऽष्टादशानां श्रोतृत्वसंभवेन

श्रोतुमागतानां पुराणानामष्टादशत्वानुगतेर्निर्बीजत्वप्रसंगात् । एवं पाद्मे—"दश सप्त पुराणानि कृत्वा सत्यवतीसुतः । नाप्तवान्मनसस्तोषं भारतेनापि भामिनि ॥ चकार संहितामेतां श्रीमद्भागवतीं पराम् ।" इति सप्तदशत्वोक्तिरपि श्रीमद्भागवतस्यैव 'एतां संहिताम्' इति निर्दिष्टस्याष्टादशत्वं गमयति । देवीभागवतस्याष्टादशत्वे 'अष्टादश पुराणानि' इत्युक्तेर्निर्बीजत्वप्रसंगात् । किंच—नारदीये ब्राह्मादीन्यष्टादशपुराणानि प्रदर्श्य क्रमेण तेषामनुक्रमण्यो दर्शिताः । तत्र—"विरिंचे शृणु वक्ष्यामि वेदव्यासेन यत्कृतम् । श्रीमद्भागवतं नाम पुराणं वेदसंमितम् ॥ तदाष्टादशसाहस्रं कीर्तितं पापनाशनम् । सुरपादपरूपोयं स्कंधैर्द्वादशभिर्युतः ॥ भगवानेव विप्रेंद्र विश्वरूपी समाहितः । तत्र तु प्रथमे स्कंधे सूतर्षीणां समागमे । व्यासस्य चरितं पुण्यं पांडवानां तथैव च॥"इत्यादिना द्वादशानां स्कंधानामनुक्रमणी प्रोक्ता।सा च श्रीमद्भागवत एवोपलभ्यमाना तस्यैवाष्टादशांतर्गतत्वं गमयति, न तु देवीभागवतस्य, तत्र तस्याऽनुपलंभात् । एवं दामोदरशास्त्रिभिः श्रीमद्भागवतमष्टादशमहापुराणांतर्गतमिति निर्णीतम्। अर्थात्—देवीभागवतमुपपुराणमिति च॥ अस्माकं त्वेवं भाति—श्रीमद्भागवतं देवीभागवतमित्युभयमपि महापुराणांतर्गतं,सर्गविसर्गादिदशलक्षणलक्षितत्वात,शुकप्रोक्तत्वादिबहुलक्षणसमन्वयाच्च।तर्ह्यष्टादशमहापुराणानीत्युक्तं, तद्व्याकुप्येतेति तु न वाच्यम्, कल्पभेदेन तद्व्यवस्थाकरणस्यौचित्यात् । तथाहि—स्कांदे नागरखंडे-त्रिंशत्कल्पा उक्ताः । मात्स्येपि-श्वेतकल्पादिपितृकल्पांतास्त्रिंशत्कल्पा उक्ताः । तत्राग्नेयकल्पे लिंगपुराणमुक्तम्, मानवकल्पे वाराहपुराणमुक्तम्, तत्पुरुषकल्पे स्कांदमुक्तम्, लक्ष्मीकल्पे कौर्ममुक्तम्, अघोरकल्पे भविष्यम्, वाराहे वैष्णवम्, भविष्ये भागवतमित्यादि । प्रभासखंडेपि—"पुरातनस्य कल्पस्य पुराणेषु विदुर्बुधाः । इतिहासपुराणानि भिद्यंते कालगौरवात् ॥ स्कांदं तथा च ब्रह्मांडं पुराणं लैंगमेव च । वाराहकल्पे विप्रेंद्रास्तेषां भेदः प्रवर्तते ॥ अष्टादशप्रकारेण ब्रह्मांडं विश्वभावनम् । अष्टादशपुराणानि तेन जातानि भूतले ॥ लिंगमेकादशविधमभिन्नं द्वापरे शुभम् । स्कांदं तु सप्तधा भिन्नं वेदव्यासेन धीमता ॥ " इति । अस्तु वा यथाकथंचिद्व्यवस्था, श्रीमद्भागवतं तु महापुराणं व्यासकृतमिति तु सिद्धमेव । पद्मपुराणे तल्लक्षणमुक्तम्—"ग्रंथोऽष्टादशसाहस्रो द्वादशस्कंधसंयुतः । परीक्षिच्छुकसंवादः श्रीमद्भागवताभिधः ॥ पुराणेषु च सर्वेषु श्रीमद्भागवतं परम् । यत्र प्रतिपदं विष्णुर्गीयते बहुधर्षिभिः ॥ इति संकल्य मनसा श्रीमद्भागवतं परम् । जन्माद्यस्य यतश्चेति धीमद्यंतमुपावदत्॥ " इति । ननु "यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः " इति मात्स्योक्तं लक्षणन्तु भागवते नास्तीति चेन्न, गायत्रीपदेन गायत्र्यर्थस्य ग्राह्यत्वात्, "गायत्रीभाष्यरूपोयं द्वादशस्कंधसंयुतः । ग्रंथोऽष्टादशसाहस्रः श्रीमद्भागवताभिधः ॥ " इति गौरीतंत्रोक्तेः । गायत्र्यर्थश्च विष्णुध्यानं, तच्च प्रथमश्लोक एवास्ति । ननु पद्मपुराणे—' द्वात्रिंशत्त्रिशतं च यस्य विलसच्छाखाः ' इति भागवतस्य द्वात्रिंशदधिकशतत्रयसंख्या अध्यायाः प्रतीयंते ।

श्रीधरैस्तु त्र्यधिका व्याख्याताः, केचिदघासुरकथात्मकाध्यायत्रयं प्रक्षिप्तमिति मन्यंते, अतो विरोध इति चेन्न, "ग्रंथोऽष्टादशसाहस्रः श्रीमद्भागवताभिधः । पंचत्रिंशोत्तराध्यायस्त्रिशतीयुक्त ईश्वरि ॥ " इति गौरीतंत्रवचनप्रामाण्यात । द्वात्रिंशत्त्रिशतमित्यादेर्व्याख्यानं पूर्वोक्तं ग्राह्यम् । शंकांतराणि तु तत्रतत्र व्याख्यातानीत्युपरम्यते ।

ननु भागवतं यदि व्यासकृतं तर्हि शारीरकविरुद्धाः पदार्थाः कथं भागवते प्रतिपादिताः । शारीरके हि—"तेषां चानुपलब्धेः" इत्यादिसूत्रैः कापिलाः पदार्थाः खंडिताः । भागवते तु महत्तत्त्वमहंकारश्च त्रिविधो राजसानींद्रियाणि इत्यादिकं प्रतिपादितमतो विरोध इति तु न वाच्यम्,प्रधानांशाविरोधात्।शारीरे ब्रह्मैव जगत्कारणमुक्तम्।तदेव भागवतेपि—'जन्माद्यस्य यतः' इत्युभयत्रापि समानम्। शारीरक आकाशादिक्रमेण सृष्टिक्रमो वर्णितो महत्तत्त्वादिकं नोक्तं,भागवते तूक्तं तथापि न विरोधः, सृष्ट्यादिकस्याऽर्थवादत्वे न तत्रादराभावात।तत्र श्रुत्याद्यविरुद्धार्थस्य ग्राह्यत्वोक्तेः। वेदांतसांख्यं भागवते गृहीतं न कापिलं,वेदांतसांख्यं तु मन्वादिभिरपि गृहीतं तच्च प्रथमप्रकरणे दर्शितमतो न विरोधः ।

ननु कथं तर्हि भागवतस्य ज्योतिःशास्त्रस्य च विरोधः—भागवते लक्षयोजनपरिमिता जंबूद्वीपभूमिर्वर्णिता, ज्योतिःशास्त्रे तु पंचसहस्रयोजनपरिमितैवाखिलेति चेदस्य समाधानं गोलदर्पणे विस्तरेण दत्तं, तदनुरोधेन सारतः किंचिदुच्यते—पृथिव्या आकारद्वयमस्ति । एको महापरिमाणको विशेषाकारः, द्वितीयो ज्योतिःशास्त्रोक्त स्वल्पपरिमाणको गोलाकार एव । एवमेव परीक्षिता पृष्टं पंचमे शुकेनाप्युत्तरं दत्तम्—" भूगोलकविशेषं नामरूपमानलक्षणतो व्याख्यास्यामः " इति । भूगोलकपदेन ज्योतिःशास्त्रोक्तो गोलाकारो मार्त्तिकोंडः, विशेषपदेन मंडलाकारः पुराणोक्तो हिरण्मयोंडः । उक्तं च योगिनिर्याणे द्वितीयस्कन्धे—' ततो विशेषं प्रतिपद्य निर्भयः ' इति । पंचमेप्युक्तम्—" कांचनी ततोन्याऽऽदर्शतलोपमा " इत्यादि । तृतीयेप्युक्तम्—" एतदंडं विशेषाख्यं क्रमवृद्धैर्दशोत्तरैः " इत्यादि । " यस्येदं क्षितिमंडलं भगवतोनंतमूर्तेः सहस्रशिरस एकस्मिन्नेव शीर्षणि ध्रियमाणं सिद्धार्थ इव लक्ष्यते " इति । सिद्धार्थदृष्टांतेन गोलाकारत्वं प्रतीयते । " प्रेक्षयित्वा भुवो गोलं यावद्यद्दै स्वसंस्थया " इति कर्दमविहारेऽप्युक्तम् । दशमेऽष्टमाध्यायेऽपि—" सा तत्र ददृशे विश्वं जगत्स्थास्नु च खं दिशः । साद्रिद्वीपाब्धिभूगोलम् " इत्यादिप्रामाण्यात्पृथिवीद्वयमंगीकार्यम् । ननु स्वल्पा पृथिवीयम्, महती कुत्रास्ति परेति चेदुच्यते—महती तु नक्षत्रकक्षाया ऊर्ध्वं प्रतिबिंबरूपा । तन्मानं तु पंचमे—" लक्षोत्तरसार्धनवकोटियोजनं परिमंडलं भूवलयस्य " इति । स्थूलदृष्ट्या भकक्षोर्ध्वभाग एवायाति । अथ कथं प्रतिबिंबवत् । कथमेतदाकारा सा । तद्यथा—समंतात् पंचसहस्रयोजनात्मकस्य समंता योजनांतरितोऽनलगोलस्तेन दूरकांतवत्स्वल्पाया अप्यस्या नक्षत्रकक्षाया उपरि या कांचनी भूमिर्निर्मलाख्या, तत्तेजोऽव्यवधानकारी तत्र महाप्रतिबिंबः समंताद्यथा दूरकांते

एकत्र महतोल्पत्वं दृश्यते, परत्राल्पस्य महत्त्वम्, एवं बाह्यांगानां चंद्रादीनामल्पत्वम्, अंतर्गतस्य भूगोलस्य महत्त्वम् । नन्वनलगोले किं प्रमाणम्, उच्यते–सवासनं प्रमाणं भूपृष्ठतः खगकक्षापर्यंतमष्टौ पवना आवहादयः संति, उभयोर्योगे जलगोलः । तदुक्तं **पुलिशसिद्धांते**–" भूवातोद्वहयोर्योगे जलगोलोस्ति काचवत् । दृश्यंते येन संलग्ना भिन्नाः सूर्यादिरश्मयः ॥" इति । **सूर्यसिद्धांतेपि**–" अत्यासन्नतया तेन ग्रीष्मे तीव्राः करा रवेः "इति । अत्यासन्नत्वदूरत्वं चानलगोलप्रतिबिंबतारकेण विना न संभवति । श्रीशुकैस्तु पुराणानुगैर्महाप्रमाणमेव व्याख्यातं, स्वल्पप्रमाणं तु सूचितमेव ॥ इति भूगोलविरोधपरिहारः ।

अथ खगोलस्य विरोधपरिहारः–" एतेन दिवो मानं तद्विद उपदिशंति " । अस्यार्थः–एतेन भूगोलकेंद्रेण दिवो मंडलानां ग्रहनक्षत्रादिकक्षाणामौच्चयपरिध्यादीनामिति । " यथा द्विदलयोर्निष्पावादीनामंतरेणांतरिक्षमुपसाधितम् " । अस्यार्थः–भूगोलद्युमंडलयोः संधितः अंतरिक्षमंतरेण मानं विना। अंतरिक्षं तु मानशून्यमित्यर्थः । यथा द्विदलयोर्निष्पावादीनां मानं नास्ति तद्वत्।"यन्मध्यगतं भगवांस्तपतां पतिः" इति।अस्यार्थः–यस्यांतारिक्षस्य मध्यमिव मध्यं जलगोलः,यथांतरिक्षस्य मध्याभावस्तथा गोलरूपत्वाज्जलगोलस्यापि, तत्र गतः प्रतिबिंबरूपेण संस्थित इत्यर्थः । बिंबस्वरूपेण तु भूकेंद्रात्सपादलक्षयोजनेष्वस्ति । "एवं नव कोटय एकपंचाशल्लक्षाणि मानसोत्तरपरिवर्तनस्योपदिशंति " इति । अस्यार्थः–मानसश्चंद्रस्तदपेक्षया उत्तरः परः शनिस्तन्मंडलस्य मानं ज्यौतिषोक्तकरणार्थं शन्यंशयुतं जातं द्वादशकोटिमितमष्टषष्टिलक्षमिति । "सूर्यांडगोलयोर्मध्ये कोटयः स्युः पंचविंशतिः" । अस्यार्थः–सूर्यस्य बिंबितार्कस्यांडगोलो हिरण्मयोंडपरिधिस्तयोर्मध्येंतः पंचविंशतिकोटयः स्युरिति । " अंडमध्यगतः सूर्यो द्यावाभूम्योर्यदंतरम्"इति।अस्यार्थः–द्यावाभूम्योर्नक्षत्रकक्षाभूम्योर्यदंतरं तदेवांडस्य हिरण्मयांडस्य तत्रांतः सूर्यो जलगोलप्रतिबिंबितार्को भवतीति ज्ञेयम्।एवमादिसमाधानमुक्तं गोलदर्पणे।तत्तद्रीत्या ज्ञेयम्।अनेन यथार्थसार्थसमर्थनेन निःसंशयं श्रीमद्भागवतमाप्तवाक्यत्वात्सर्वथा प्रमाणमेवाप्रतिहतं सकलशास्त्रसिद्धान्तसाद्गुण्यादिति हि निर्विवादमिति ।

तदेतच्छ्रीमद्भागवतमहापुराणस्य वैष्णवतोषिणी–पदरत्नावली–सारार्थदर्शिनी–सुबोधिनी–बालप्रबोधिन्यादयो बहवष्टीका विविधसिद्धान्तानुकूलार्थावबोधनसमर्थाः सुप्रसिद्धाः सन्त्येव।तन्मध्ये खलु श्रीमन्नृसिंहभगवत्पदसरोजामन्दमकरन्दमिलिन्दायमानमानसतया परमपुरुषार्थसाधनसंपन्नानां श्रीमत्परमहंसपरिव्राजकाचार्याणां श्री।श्रीधराचार्यस्वामिनां व्यासोक्तिभावार्थप्रदर्शनैकधुरीणा भावार्थदीपिकाख्यव्याख्यैव सर्वोत्तमाऽद्वैतसिद्धातानुकूला जागर्तितमां सर्वविद्वज्जनमनोमंदिर इति न कस्यापि कोविदस्याऽविदितचरम् ॥

# धन्यवादः ।

सन्तु चाविश्रान्तमनेकशो धन्यवादाः श्रीमद्भगवते तस्मै श्रीवेङ्कटेश्वराय, यस्य च परमानुकम्पाकटाक्षतोऽस्मदीयसूचीपत्रसूचितेषु नानाविषयकनानाग्रन्थेषु मुद्रितेष्वपि परमोत्कण्ठतया चिराय मुद्रयितुमुपक्रान्तानां १०००० स्त्रात्मक[१]ब्राह्ममहापुराण,–५५००० स्त्रात्मक[२]पाद्ममहापुराण,–२३००० स्त्रात्मक[३]वैष्णवमहापुराण,–२४००० स्त्रात्मक[४]शैवमहापुराण,–( २४००० स्त्रात्मकवायवीयमहापुराण,– ) १८००० स्त्रात्मक[५]श्रीमद्भागवतमहापुराण,–२५००० स्त्रात्मक[६]नारदीयमहापुराण,–९००० स्त्रात्मक[७]मार्कंडेयमहापुराण,– १५४०० स्त्रात्मका[८]ग्नेयमहापुराण,--१४५०० स्त्रात्मक[९]भविष्यमहापुराण,--१८००० स्त्रात्मक[१०]ब्रह्मवैवर्त्तमहापुराण,--११००० स्त्रात्मक[११]लैंगमहापुराण,--२४००० स्त्रात्मक[१२]वाराहमहापुराण,--८११०० स्त्रात्मक[१३]स्कान्दमहापुराण,–१०००० स्त्रात्मक[१४]वामनमहापुराण,–१७००० स्त्रात्मक[१५]कौर्ममहापुराण,–१४००० स्त्रात्मक[१६]मात्स्यमहापुराण,–१९००० स्त्रात्मक[१७]गारुडमहापुराण,–१२००० स्त्रात्मक[१८]ब्रह्माण्डमहापुराणानामष्टादशानामपि मुद्रणपरिपूर्त्यां सम्प्रति महानेवानन्दः समजनीति ।

---

श्रीमद्भगवतः परमानुग्रहस्मर्त्ता--श्रीकृष्णदासात्मज-क्षेमराजः " श्रीवेंकटेश्वर " स्टीम्-मुद्रणालयाध्यक्षः, मुम्बई–स्थः, ।

# धन्यवादाः ।

सन्तु किलानेकधा साभिवादं धन्यवादाः परमात्मपरब्रह्मणे श्रीमन्नारायणाय, येन च दयार्द्रचेतसा संसारार्णवनिमग्नानां, कामक्रोधाद्यतिक्रूरमकरादिभिर्भूयोभूयोभक्ष्यमाणान्तःकरणाङ्गानां, मोहादिबृहत्तरतरङ्गपरिचालनपरिक्लिश्यमानमानवानामुपकारकृते स्वाज्ञारूपाश्चत्वारो वेदाः प्रादुर्भावयामासिरे, यत एव च पुराणादीनामप्याविर्भाव इति ।

ततश्च--परश्शताः सन्तु धन्यवादा महर्षिप्रवराय परमदयोदयाय श्रीमद्वेदव्यासाय,येन च महात्मना कालकलोपनतबुद्धिह्रासालस्यादिभिर्वेदार्थज्ञानतद्बोधितकर्मानुष्ठानासमर्थशक्तीनामल्पीयःप्रयासेर्भवाब्धेरुत्तितीर्षूणामुपकृतये भगवदवतारादिसच्चरितसद्धर्मप्रपूरितानि मित्रवदुपदेशप्रचुरसत्कथागुम्फितान्यष्टादशमहापुराणानि भारतादीतिहासा अन्येऽपि बहवो ग्रन्था प्राणायिषतेति ।

अथ च--सन्त्वनन्तानन्ता धन्यवादाः श्रीकरुणावरुणालयाय परमपुरुषार्थसाधनसम्पन्नाय श्रीमत्परमहंसपरिव्राजकाचार्यश्रीधरस्वामिने, येन च सकलविद्वज्जनोपकारकश्रीमद्भागवतमहापुराणगूढार्थप्रकटनायाद्वैतसिद्धान्तानुकूला परमोत्तमा विज्ञजनमानसाह्लादकारिणी भावार्थदीपिकानाम्नी टीका व्यधायीति ।

अथ च--सन्त्वविश्रान्तमनेकशो धन्यवादा वेदशास्त्रपरिशीलनशालिशेमुषीकाय, परोपकारप्रचुरनिखिलव्यापाराय, श्रीमद्भगवल्लीलाचरितस्मरणापसारिताखिलसंसारप्रपञ्चाय पण्डितप्रवरश्रीवंशीधरशर्ममहाशयाय, येन च खलु 'श्रीमद्भागवताद्यपद्यव्याख्याशतक'--'श्रीमद्भागवतलीलाकल्पद्रुम'--न्यायसिद्धान्तमुक्तावलीटीका--'दीप्तिमाला'--'मातृकाविलास '--श्रीमद्भागवतसप्ताहकथावाचनोपयोगितट्टीका--'गोलार्थदीपिका'--'शीघ्रबोधटीका'--'चतुर्युगीयनृपचरिता ' द्यनेकग्रन्थनिर्माणेन विद्वज्जनतातीवोपकृता । सम्प्रत्यप्येतद्ग्रन्थनिर्मित्या तथोपाकारि सा, यथैतद्ग्रहणेनैव श्रीमद्भागवतगूढार्थनिश्चयाय नान्यटीकाग्रन्थापेक्षावशिष्यत इति ।

अथ च--सन्तु परस्सहस्रास्ससम्मदं धन्यवादास्तस्मै गोब्राह्मणपरिपालनपरायणाय, सौशील्यौदार्याद्यनेकसद्गुणार्जितयशोधवलीकृतदिङ्मण्डलाय श्रीमन्नृपतिकुलतिलकश्रीहीरासिंहबहादुरमहोदयाय, येन च विश्वजनीनकर्मानुष्ठानप्रसक्तचेतसा ह्येतद्ग्रन्थकर्तृमहात्मने द्रव्यादिप्रदानादिविविधसत्कारकरणैतद्ग्रन्थप्रकाशनप्रोत्साहनोत्तमाश्रयप्रदानादिभिर्महत्तरा कीर्तिरुपलब्धेति किमनल्पजल्पेनेति शम् ।

---

श्रीमतामनन्तानन्तोपकारस्मर्ता--श्रीकृष्णदासात्मज--क्षेमराजः, "श्रीवेंकटेश्वर" स्टीम्--मुद्रणालयाध्यक्षः--मुम्बई--स्थः ।

तत्र च सम्प्रति श्रीमत्खरडपत्तनवास्तव्याः, श्रीमद्गौडवंशाऽमलकमलोद्घाटनैकोष्णमयूख—पाण्डित्यसदाचारसौशील्याद्यनेकगुणगणागारायितात्मानः, उपनतोपनयनानेहः प्रभृतिब्रह्मचर्य्याधिष्ठानपुरस्सराप्तवेदवेदाङ्गन्यायवेदान्तसाहित्याद्यनेकविषयापारपाथोधिपारदृश्वत्वाः, भवान्तरीयसत्कर्मजनितातिदुरूहागम्यविषयासीमप्रसृमरशेमुषीविलासाः, श्रीमन्नन्दनन्दनपादारविन्दामन्दमकरन्दमानससरोवरविहारिमानसमरालाः, श्रीमदाखण्डलाद्यखिलाशापाललोकपालगन्धर्वकिन्नरचारणाद्यनल्पदेवावलिसाञ्जलिजेगीयमान—परमभक्तशिरोमणिभव्यभगवद्गुणगानप्रसक्तमानसाऽमरर्षिश्रीनारदोपवीणित—स्वाविर्भूतानुपमज्ञानविज्ञानसन्तानश्रीमद्ब्रह्मर्षिप्रवरवाल्मीक्याद्युपश्लोकित—श्रीमन्महर्षिप्रवरवेदव्यासानेकलक्षप्रमाणग्रन्थगीताऽप्राप्तपार—श्रीमत्परमात्मस्वरूपपरमपावनश्रीकृष्णचन्द्राऽनेकावतारचरितव्यूहगानैकतानमानसाः, अस्मन्मुद्रणालयमुद्रयिष्यमाण—नित्यकर्मप्रकाशिका ( स्वल्पाह्निकबोधिनी ) नामकस्वरचितग्रन्थानुबोध्यमानयथाशास्त्रविध्यनुष्ठीयमानाह्निककृत्यततयः, परमकारुण्योत्साहानालस्यपुरस्सरव्याकरणन्यायवेदान्तसाहित्यज्योतिषपुराणाद्यधीत्यन्तेवासिव्रजाध्यापनपटीयोव्यापाराः, श्रीमद्भागवताद्यपद्यव्याख्याशतक—श्रीमद्भागवतलीलाकल्पद्रुम—श्रीमद्भागवतसप्ताहवाचनपरमोपयोगिगोलार्थदीपिकानामकतट्टीका—न्यायसिद्धान्तमुक्तावलीदीप्तिमालानामकटीका—शीघ्रबोधटीका—चतुर्युगीयनृपचरिताद्यनेकग्रन्थनिर्माणाविर्भाविताऽतनुपरोपकाराकूपाराः, करालकलिकालकवलायमाननिगमागमबोधितकर्म्मानुष्ठानहरिस्मरणसद्विचारप्रचारादिदुस्समयवेगाऽविगणनपुरस्सरसंरक्षितवाडवधर्म्मकर्म्माङ्कुराः, श्रीमच्छ्रीवंशीधरशर्मापाह्वपण्डितप्रवराः, श्रीमदखिलमहीमण्डलाऽऽखण्डलानाम्, समनुष्ठितनिगमागमबोधितबाहुजोरुकर्त्तव्यस्मर्त्तव्यसच्चरित्राणाम्, अनवरताऽऽराधितेन्दिरानाथपादपाथोजाप्तपुरुषार्थचतुष्टयप्रष्ठतमानाम्, परमनिरपेक्षयजनयाजनादिस्वधर्मपरिपालनपरिवृढमहेच्छाच्छयशोविभूषितविद्वद्वृन्दसम्प्रदानकसततप्रचारितदानवारिधाराधरीकृताऽनुभावितयाचनव्रीडार्थिजनार्थवितरणशालिस्वभावामरपादपविततकीतिततीनाम्, द्वितीयरसावतारायमाणाऽद्वितीय—रसापालनाभिवर्द्धितप्रबलबलाऽबलायमानारिबह, लवाहिनीकानाम्, परमोच्चसच्चरितराजन्यवर्याणामन्वये गृहीतजनुषाम्, स्वपूर्वजाधिष्ठितसरण्यनुसरणप्रसक्तमानसानाम्, स्वप्रबलदानपञ्चाननविदारितदरिद्रदारिद्र्यदन्तावलानाम्, आङ्ग्लसार्वभौमाप्तविशेषसम्मानपदवीमहितमहामहसाम्, 'श्री—हिज़ हाइनेस फरज़न्द अरजुमन्द अक़ीदत पैवन्द दौलते इंगलिसिया बरारवंशसरमौर राजयराजगान सर हीरासिंह मालवेन्द्र बहादुर जी. सी. एस. आई. जी. सी. आई. ई.' एवंरूपवर्णावलिबोध्यमानसोपाध्यभिधानभूपालानां शुभाश्रयेण नाभापत्तनमलंकुर्वाणाः ( पूर्वोक्तपण्डिताः ) परमकारुणिकतया श्रीमद्भागवतनिगूढार्थं बुभुत्सूनामुपकारकृते माथुरब्राह्मणैरन्यैरपि बहुकृत्वःकृतप्रार्थनाः श्रीश्रीधराचार्यस्वामिव्याख्यानाभिप्रायप्रकाशनद्वारा श्रीमद्भागवतं व्याचिख्यासवः श्रीमद्भागवतस्य श्रीमच्छ्रीधरस्वामिविरचितभावार्थदीपिकानामटीकायास्तद्भावार्थप्रकाशनेनान्वर्थनाम्नीं भावार्थदीपिकाप्रकाशाख्यां टीकां निरमासिषुः ।

सा चेयम्—श्रीधरस्वाम्यभिप्रायप्रकाशनव्रतगृहीतदीक्षापि ‘ क्वचिच्च श्रीधरत्यक्तपदानामपि वर्णनम् ’ इत्युपक्रमोक्तरीत्या श्रीधरस्वामित्यक्तपदानामप्यभिप्रायप्रकटने बद्धादरा, सर्वोत्तमापूर्वार्थाविष्करणगरीयसी, अथ च—श्रीजीवगोस्वामिकृत—वैष्णवतोषिणी—बृहत्क्रमसन्दर्भ—क्रमसन्दर्भ,—विजयध्वजतीर्थकृत—पदरत्नावली,—विश्वनाथचक्रवर्तिकृत—सारार्थदर्शिनी,—वल्लभाचार्यकृत—सुबोधिनी,—वीरराघवाचार्यकृत—भागवतचन्द्रचन्द्रिका,—सुदर्शनसूरिकृत-शुकपक्षी,—शुकदेवकृत—सिद्धान्तप्रदीप,-राधारमणदासगोस्वामिकृत—दीपिकादीपिनी, —श्रीसनातनगोस्वामिकृत—बृहद्वैष्णवतोषिणी,—बालप्रबोधिनी—प्रेममञ्जरी—गणदीपिका--विशुद्धरसदीपिकाद्यनेकटीकाग्रन्थार्णोधिमन्थनोत्थितसारसन्दब्धाङ्गशोशुभा, बह्वाचार्योऽनवरतहरिगुणगणस्मरणपरमपवित्रान्तःकरणोहितश्रीमद्भागवतसारार्थनिबद्धप्रत्ययघनतया स्वगौरवेण ह्येकैकाचार्योहितश्रीमहर्षिव्यासगूढार्थसार्थारब्धाङ्गा अन्यास्सर्वा अपि टीका उपहसन्तीव विराजमाना—

अथ च—श्रीधरगुणगणप्रकाशनैकप्रवीणा, अवाहिन्यपि त्रिचतुःस्कन्धवाहिनी, अकृष्णिताऽभिधानाऽपि ह्यघासुरवधानुबद्धप्रबलप्रवृद्धव्यापारावतारा, अतरणिरपि तरुणतरश्रीमद्भागवतार्थसार्थसमुद्रोत्तरणसाधनैकधुरीणा, अदूत्यपि श्रीकृष्णगोपिकात्मनायिकानायकसंघटनान्योन्याभिप्रायप्रबोधनैकसम्बध्यमानानुसन्धाना, अद्वादशात्मापि भवाभावकभव्यभगवद्भावानुभावकभागवतार्थानुसन्धानानुषक्तभागवतजनमानसकुशेशयोद्घाटनपटीयोऽद्वितीयद्वाशात्मा निखिलविद्वज्जनानन्दानुभावनायोज्जृम्भतेतराम् ।

अस्यां च—यथाप्रयोजनमृग्यजुःसामाथर्वचतुर्वेदाः, वाजसनेयसंहिता,—सामवेदीय—तलवकार,—यजुर्वेदीय—कठा,—ऽथर्ववेदीय—प्रश्न—मुण्डक—माण्डूक्य,—यजुर्वेदीय—तैत्तिरीय,—ऋग्वेदीयैतरेय,—सामवेदीय—च्छान्दोग्य,—कृष्णयजुर्वेदीय—श्वेताश्वतर,—कैवल्य—जाबाल—गर्भ—नारायण—बृहज्जाबाल—गोपालतापन्याद्युपनिषदः, सांख्य—योग—वेदान्त—मीमांसा—न्याय—वैशेषिकात्मषड्दर्शनानि, शिक्षा—कल्प—व्याकरण—निरुक्त—ज्योतिषच्छन्दो—रूपवेदाङ्गानि, अत्रि—विष्णु—हारीतौ—शनसा—ऽऽङ्गिरस—यमा—ऽऽपस्तम्ब—संवर्त्त—कात्यायन—बृहस्पति—पाराशर—व्यास—शंख—लिखित—दक्ष—गौतम—शातातप—वसिष्ठादिस्मृतयः, ब्राह्म—पाद्म--मात्स्य--वामन--नारदीय—शैवा—ऽऽग्नेय—वायवीय—मार्कण्डेय—ब्रह्मवैवर्त—ब्रह्माण्ड—वाराह—भविष्य—लैङ्ग—कौर्म—स्कान्दादिपुराणानि, भारतादीतिहासाः, वाल्मीक्यादिप्रणीतरामायण—कालिदासादिप्रणीतकाव्यादयः, अमरकोश—विश्व—शाश्वत—हैम—यादव—मेदिनी—द्विरूपादयः कोशाः, अन्येपि बहवो ग्रन्थाः प्रमाणत्वेन गृहीताः सन्ति ।

अथ च-प्रायः सर्वत्रैव श्रीधरस्वाम्यभिप्रायमनुवर्ण्य विश्वनाथाद्यनेकटीकाकर्तॄणामप्याशयमभिगृह्य ग्रन्थकर्त्रा स्वाशयः प्रदर्शितो वर्तते । श्रीमद्भागवते च यत्रयत्र

स्थले विद्वांसः सन्दिहते, तत्रतत्रानेकप्रमाणप्रदर्शनेनार्थविशदीकरणेन च तथा शंकोद्धारः कृतो यथा च तदवलोकनेन निश्शंकमानसा विद्वांसः परमोपकृतिं मन्यमाना निःशंकं धन्यवादमन्तरा नैवान्यादृशवागवसरं मन्येरन् ।

दशमस्कन्धे च—कंसप्रेरितानां पूतना—तृणावर्त—शकटादीनां येषांयेषां वधो व्यधायि धृतार्भकलीलेन परमात्मना श्रीकृष्णेन; तत्तद्विषये तत्तदर्थप्रतिपादिकाः श्रुतयोऽपि प्रमाणत्वेनात्रोपन्यस्ता इति परमो विशेषः । चतुर्दशाध्याये, अष्टाविंशाध्यायमारभ्य षष्टितमाध्यायपर्यन्तं च प्रतिपद्यं श्रीधरस्वाम्यभिप्रायमनुवर्ण्यैव ॥ ❀ ॥ चिह्नोत्तरं जीवगोस्वामिकृत—वैष्णवतोषिणी,—विजयध्वजतीर्थकृत—पदरत्नावली,—जीवगोस्वामिकृत—क्रमसन्दर्भाद्यभिप्रायमभिगृह्य नन्दनन्दनपादारविन्दानुग्रहलब्धविचारचातुर्या ब्रह्मस्तुति—युगलगीत—रासोपक्रमा—ऽन्तर्धान—रासमण्डलरचनादिप्रकरणे महर्षिप्रवरश्रीव्यासविरचितपदानामाशयाविष्करणपुरःसरं तेषां सहेतुकानुपूर्वीकत्वप्रदर्शनेन तादृशं व्याख्यानमकारि, यदवलोकनेन "अब्धिर्लंघित एव वानरभटैः किन्त्वस्य गम्भीरतामापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः" इति मुरारिकवेरुक्तिर्झटित्येव मनस्यारूढा भवति । अनुसृतलोकविडम्बनस्य भगवतस्साग्रजस्य श्रीसान्दीपनिगुरुभ्यो विद्याभ्यासस्य वर्णनप्रसङ्गे 'अहोरात्रैश्चतुःषष्ट्या संयत्तौ तावतीः कलाः' इत्यत्र श्रीधरस्वामिना शैवतन्त्रोक्ता याश्चतुष्षष्टिः कलाः प्रदर्शितास्तासामुदाहरणादिप्रदर्शनपुरस्सरं तद्भेदादयोऽपि परमहृदयङ्गमाः प्रदर्शिताः ।

सप्ताऽशीतितमवेदस्तुत्यध्याये तु—पञ्चप्रकारकं तादृशं व्याख्यानमस्ति, यदवलोचनत एव परमाऽगम्यविषयावगाहनसारार्थसञ्चयनपरिश्रमोऽतिचकितचेतसाऽनुमीयते विद्वद्भिः । श्रीमन्नीलकण्ठाचार्यप्रणीतव्याख्यानमप्यत्र पूर्णरूपेण विन्यस्तम् । तथाऽष्टाशीतितमाध्यायमारभ्य दशमस्कन्धसमाप्तिपर्यन्तमपूर्वतरव्याख्यानं द्विधा विन्यस्तम् । अथ चैकादशस्कन्धे--सर्वत्रैव श्रीधरोक्तिं व्याख्यायैव ॥ ❀ ॥ चिह्नोत्तरं वेदान्तप्रचुरव्यासाशयप्रदर्शनार्थं विश्वनाथाद्यनुसारि व्याख्यानमन्तर्वाणिहृदयङ्गमं कीदृगिति नाभिधातुं शक्यते, किन्तु स्वयमेव विद्वांसो ज्ञास्यन्तीति । प्रतिस्कन्धान्ते च--तत्तत्स्कन्धश्रवणमाहात्म्यमपि विन्यस्तमस्तीत्यलमगण्यगुणगणार्णवाया अशक्यकथनास्मदीयाऽपटीयोरसनायास्तन्महिमवर्णनप्रवृत्तिचाञ्चल्येन ।

अथ च--निखिलसद्धर्म्माऽऽचारप्रचारप्रचुरप्रसक्तचेतोभिः, आनन्दितशास्त्राध्ययनाध्यापनहरिस्मरणादिप्रवृत्तवाडवकदम्बैः, श्रीमन्नृपतिकुलतिलकश्रीहीरासिंहबहादुरपदविभूषिताभिधानमहाशयैर्द्रव्यादिप्रदानपुरःसरं सत्कृत्य बहुधैतद्ग्रन्थप्रकाशनाय प्रोत्साह्यमाना अन्यैरपि बहुभिर्माथुरब्राह्मणादिभिरभ्यर्थमानाः पूर्वोक्तपण्डितप्रवरश्रीवंशीधरशर्माभिधानमहात्मान इमां श्रीमद्भागवतभावार्थदीपिकाप्रकाशनाम्नीं टीकां सर्वप्रकारकाधिकारसहितां मुद्रणाय मह्यं प्रायच्छन् ।

सा चेयम्–मिर्जापुर–मण्डलान्तर्गत–कोंढ–संस्थाननिवासि–त्रिपाठ्युपनामक–पण्डितमहेशदत्तशर्मात्मज–छोटूपतिशर्मशास्त्रिद्वारा संशोध्य विषयभेदप्रदर्शकनानाविधचिह्नप्रदान–टीकाकारान्तराङ्गीकृतपाठस्वरूपबोधार्थटिप्पण्यादिप्रदानादिभिर्बहुधा संस्कार्य च प्रकाशाभिलाषिभावार्थदीपिकया समयोजि ।

तदिदं–पं॰ वंशीधरशर्मविरचित–भावार्थदीपिकाप्रकाशसहित–श्रीस्वामिश्रीधराचार्यप्रणीत–भावार्थदीपिकोपेतं श्रीमद्भागवतमहापुराणं सटीकपद्मपुराणोक्तमाहात्म्येन, कौशिकसंहितोक्तमाहात्म्येन, पं॰ वंशीधरशर्मविरचित–सप्ताहादिकथाश्रवणपद्धत्या च समलङ्कृत्य मया मुम्बय्यां स्वकीये "श्रीवेङ्कटेश्वर"–स्टीम्मुद्रणालये परमोत्तमशीशकाक्षरैः स्वच्छमसृणपुष्टपत्रेषु सम्मुद्रय स्वकार्यालयमुद्रिताऽष्टादशमहापुराणचूडामणिरिव प्रकाश्यते ।

तदधुना शास्त्रविचारचारुचरिता हरिस्मरणानुषक्तमानसाः श्रीमद्भागवतपठनपाठनकथावाचनपरायणचेतसो विद्वांसः, श्रीमद्भागवतकथाश्रवणपुस्तकप्रदानागण्यपुण्योपलब्धिसंबद्धमनसो भूपाल–भूपालकल्पश्रेष्ठिप्रभृतयः, तत्तद्देशवासिनिखिलजनपुस्तकप्रापणसत्कर्मप्रवृत्तव्यापारा व्यापारिणश्च परमामूल्यस्याप्यस्याल्पमूल्येन लाभाय समयमनपेक्षमाणा आत्मानं माञ्च शीघ्रं कृतार्थयन्त्विति भृशमभ्यर्थयते--

---

श्रीकृष्णदासात्मज–क्षेमराजः "श्रीवेङ्कटेश्वर" स्टीम्–मुद्रणालयाध्यक्षः, मुंबई–स्थः ।

ॐ स्वस्ति श्रीगणेशाय नमः ॥ शौनक उवाच ॥ सप्ताहे तु महान्विद्वन्नायासो वर्णितोऽधुना ॥ अल्पायासां कथां ब्रूहि श्रीमद्भागवतीं पुनः ॥१॥ सूत उवाच ॥ नमस्कृत्य प्रवक्ष्यामि गुरुं वैयासकिं मुनिम् ॥ मध्यमायासिकीं गाथां श्रीनारायणवर्णिताम् ॥ २ ॥ यं प्रव्रजंतमनुपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहाव ॥ पुत्रेति तन्मयतया तरवोऽभिनेदुस्तं सर्वभूतहृदयं मुनिमानतोस्मि ॥३॥ शौनक उवाच ॥ संसारेऽस्मिन्प्रजातानां नृणां त्वं वदतां वर ॥ अज्ञानतिमिरांधानां ज्ञानचक्षुःप्रदायकः ॥ ४ ॥ ऐहिकामुष्मिकसुखं येन स्यात्तद्वदस्व मे ॥ केऽस्मिन्वृथा जन्मभाजः साफल्यं जनुषः कथम् ॥ ५ ॥ सूत उवाच ॥ यैर्न श्रुतं भागवतं पुराणं नाराधितो यैः पुरुषः पुराणः ॥ हुतं मुखेनैव धराऽमराणां तेषां वृथा जन्म गतं नराणाम् ॥६॥ शृण्वंति ये भागवतं पुराणं तथार्चयंते पुरुषं पुराणम् ॥ सदैव विप्रान्नप्रदा नरा ये तेषां जनुः स्यात्सफलं समग्रम् ॥ ७ ॥ ऐहिकामुष्मिकसुखं श्रीमद्भागवतश्रुतेः ॥ सात्त्विक्याश्च भवेद्विप्रा भक्तिश्रद्धापुरस्सरम् ॥८॥ शौनक उवाच ॥ श्रीमद्भागवतं कीदृक् कथं कस्माद्बभूव ह ॥ किंप्रमाणं किंचरितं सात्त्विकं श्रवणं कथम् ॥ एतद्ब्रूहि दयासिंधो सूत सौम्य सुनिश्चितम् ॥९॥ सूत उवाच ॥ उदधेः संप्लवे पूर्वं यदा शेते जनार्दनः ॥ तदा तन्नाभिकमलादात्मभूः संबभूव ह ॥१०॥ स एकः शोकमापेदे कथं स्रक्ष्याम्यहं प्रजाः ॥ तदा भगवता तस्मै नियोगस्तपसे कृतः ॥ ११ ॥ ततापस बहुसमास्तेन तुष्टो हरिर्ददौ ॥ श्रीमद्भागवतं तस्मै वेदश्लोकात्मकं शुभम् ॥ १२ ॥ तद्विचारात्स चावाप सर्गसामर्थ्यमात्मनि ॥ ब्रह्मा कश्चिन्नारदाय स्वसुताय महात्मने ॥ १३ ॥ तद्वृद्धये जगादाथ स च व्यासाय संददौ ॥ विखिन्नचेतसे तीरे सरस्वत्या द्विजोत्तम ॥ १४ ॥ व्यासः पुत्राय प्रोवाच विस्तार्य्य श्रीशुकाय वै ॥ निवृत्तिनिरतो राज्ञे स जगाद परीक्षिते ॥ १५ ॥ श्रीमद्भागवतं लोके इत्थमाविर्बभूव ह ॥ लक्षणं शृणु विप्रर्षे पुरा भगवतोदितम् ॥ १६ ॥ गरुडाय स्ववाहाय पृच्छते प्रणताय च ॥ गायत्रीभाष्यभूतोऽसौ वेदार्थपरिबृंहितः ॥ १७ ॥ अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः ॥ पुराणानां सामरूपः साक्षाद्भगवतोदितः ॥ ग्रंथोऽष्टादशसाहस्रः श्रीमद्भागवताभिधः ॥ १८ ॥ सद्बीजः प्रणवांकुरो रविमितस्कंधैर्युतः कल्प

वृट् पंचत्रित्रिमिताः खखाभ्रवसुभूः शाखाः प्रशाखास्तथा ॥ शून्याकाशखषड्गिरीषुसमिताः पत्राणि यस्य स्फुटं स श्रीभागवताह्व इष्टफलदो भक्त्यु त्थितो राजते ॥ १९ ॥ स्कंधेषु सर्वेषु गतां ब्रुवेऽहमध्यायसंख्यां शृणुत द्विजेंद्राः ॥ एकोनविंशा दश रामरामास्तथैकत्रिंशद्रसनेत्रसंख्याः ॥ २० ॥ नंदेंदुसंख्याः शरचंद्रसंमिताश्चेतुर्द्वयं चाग्निमिके तथैव ॥ खनंदसंख्या विधुवह्निसंख्या अध्यायसंख्याः क्रमतस्त्रिरूपाः ॥ २१ ॥ एतस्य श्रवणं प्रोक्तं चतुर्द्धा मुनिसत्तमैः ॥ सात्त्विकं राजसं चैव तामसं निर्गुणं तथा ॥ २२ ॥ सताहं राजसं प्रोक्तं तामसं सालसं तु यत् ॥ सात्त्विकं त्वेकविंशाहं तथैवाष्टादशाहकम् ॥ २३ ॥ तथा पंचदशाहं चानियतं निर्गुणं स्मृतम् ॥ राजसे त्वर्थसंकोचस्तामसे स्मृतिविभ्रमः ॥ २४ ॥ सात्त्विकं सुखबोधाय निर्गुणं सर्वतो वरम् ॥ सात्त्विकश्रवणेनैव बहवो लेभिरे सुखम् ॥ २५ ॥ इत्युक्तवंतं सूतं तु प्रोवाच मुनिसत्तमः ॥ केके सुखं परं प्रापुः सात्त्विकश्रुतितो वद ॥ ॥ २६ ॥ सूत उवाच ॥ कदाचिन्नारदो योगी पर्वतं गंधमादनम् ॥ द्विजवेदरवैर्घुष्टं बहुनिर्झरशोभितम् ॥ २७ ॥ गंगाप्रपातनिनदं सुरासुरसमर्चितम् ॥ जगाम मुनिशार्दूलो द्रष्टुं नारायणं मुनिम् ॥ २८ ॥ तत्र गत्वा ददर्शाथ नरं नारायणं तथा ॥ नमस्कृत्य विवेशाग्रे विनीतः प्रियदर्शनः ॥ २९ ॥ तं दृष्ट्वा भगवान्प्राह कथनोत्सुकमानसम् ॥ ब्रूहि नारद वृत्तांतं लोकानां खलु सर्वतः ॥ ३० ॥ किंवृत्तयः किमाचाराः किंधर्मा मानवा भुवि ॥ यथा दृष्टं तथा ब्रूहि कथमागमनं तव ॥ ३१ ॥ नारद उवाच ॥ लोका विधर्मनिरताः शुष्कवैराः सुदुर्मदाः ॥ शिश्नोदरपरा जाताः सर्वे वर्णाः सुरोत्तम ॥ ३२ ॥ चौर्यानृतवृथाहिंसावृत्तयो धर्मदूषकाः ॥ मांसाशिनो मद्यरता वेदहीना द्विजातयः ॥ ३३ ॥ कलहेन वै यापयंति पर्वोत्सवदिनं वृथा ॥ स्त्रैणाश्च निंदकाः संति सर्वधर्मबहिष्कृताः ॥ ३४ ॥ दृष्ट्वा तान्मलिनान्सर्वांश्चिंतैषा मे समागता ॥ कथमेषामयत्नेन भवेदुभयतः सुखम् ॥ ३५ ॥ तत्प्रष्टुमागतो देव तवांति सुखदायक ॥ तद्ब्रूहि सुगमोपायं सर्वपापविनाशनम् ॥ सुसाध्यं मानवैर्देव धर्मवृद्धिर्यतोऽनिशम् ॥ ३६ ॥ इति श्रीकौशिकसंहितायां भागवतमहात्म्ये प्रथमोऽध्यायः ॥ १ ॥ ॥ नारायण उवाच ॥ शृणु नारद यत्नेन वदामि हितकारकम् ॥ सर्वेषामेव वर्णानामाश्रमाणां विशेषतः ॥ १ ॥ आसीत्पूर्वयुगे वैश्यो नेपालनगरे सुधीः ॥ वृत्तिहीनो बन्धुहीनः सस्त्रीकः सुतवर्जितः ॥ २ ॥ यमुद्यमं संकुरुते स मुधा जायतेऽखिलः ॥

---

१–३३५ अध्यायाः। २–१८००० श्लोकाः। ३–५७६००० अक्षराणि। ४–१९ अध्यायाः, प्रथमस्कन्धे। ५–१० अ०, द्वि० स्कन्धे। ६–३३ अ०, तृ० स्कं०। ७–३१ अ०, ४ स्कं०। ८–२६ अ०, ५ स्कं०। ९–१९ अ०, ६ स्कं०। १०–१५ अ०, ७ स्कं०। ११–२४ अ०, ८ स्कं०। १२–२४ अ०, ९ स्कं०। १३–९० अ०, १० स्कं०। १४–३१ अ०, ११ स्कं०। १५–१३ अ०, १२ स्कं०।

तत्पत्नी हरिता देवी पेषणाद्यं चकार ह ॥ ३ ॥ तल्लब्धेनैव चान्नेन वृत्तिं चक्रतुरात्मनः ॥ दंपती स्नेहरहितौ गर्हमाणौ स्वमुद्भवम् ॥ ४ ॥ व्याधि
भिर्विविधैश्चोभौ पीडचमानौ स्वकर्मतः ॥ आस्तां नगरमध्ये तु कदाचिन्निर्गतः सुधीः ॥ ५ ॥ विहाय हरितां भार्यां जगाम विषमं वनम् ॥ विचरन्स
वने वैश्यो ददर्श सर उत्तमम् ॥ ६ ॥ तत्समीपे बहुविधानाश्रमान्मुनिसेवितान् ॥ तन्मध्ये सर्वतः श्रेष्ठं कुटचां सांख्यायनं मुनिम् ॥ ७ ॥ ब्रह्म
तेजःसमायुक्तं बहुशिष्योपशोभितम् ॥ साक्षात्पद्मासनमिव दृष्टवान्पूर्वपुण्यतः ॥ ८ ॥ तं प्रणम्य तत्समीपे विवेश च तदाज्ञया ॥ स पृष्टस्तेन कस्त्वं
भो हेतुश्चागमनेऽत्र कः ॥ ९ ॥ सर्वं ब्रूहि यथातत्त्वं का जातिस्तव सुव्रत ॥ इत्युक्तो मुनिना वैश्यः स्वाभिप्रायं जगाद ह ॥ १० ॥ भगवन्किं न
विदितं तपोज्ञानसमाधिना ॥ वैश्योऽहं शृणु भो ब्रह्मन् विज्ञप्तिं मे कृपानिधे ॥ ११ ॥ धनसंततिहीनोऽहं बहुरोगप्रपीडितः ॥ तप्तोऽस्मि बहुधा विप्र
मर्तुमागमनं मम ॥ १२ ॥ न जीवने सुखं पश्याम्यत्र सर्वविगर्हितः ॥ किं मया संचितं पूर्वं येनैषा मे दरिद्रता ॥ १३ ॥ भगवन्कृपया ब्रूहि
दीनं शरणमागतम् ॥ यत्फलं दीनदयया न तत्क्रतुभिराप्यते ॥ १४ ॥ इत्यावेदितहार्दाय सांख्यायन उवाच ह ॥ शृण वैश्य पुरावृत्तं स्वकीयं
दुःखहेतुकम् ॥ १५ ॥ शूद्रजातिसमुद्भूतो वेदाभ्यासं पुराऽकरोः ॥ विप्रायित्वा त्वमात्मानं काश्यां नाम्ना समूलकः ॥१६॥ अभ्यस्य बहुशास्त्राणि भिक्षु
वेषं चकार ह ॥ शिष्यांश्चकार बहुशो विप्रान्नानाविधान् द्विज ॥ १७ ॥ उच्छिष्टं भक्षयामास सर्वाञ्शिष्यान्मदोद्धतः ॥ उच्छिष्टमार्जनं चापि पाद
संवाहनं तथा ॥ १८ ॥ विप्रैस्त्वं कारयामास[1] शिष्यीभूतैर्हठाद्बहु ॥ कदाचिद्दैवतो मृत्युरागतो विट्पतेस्तव ॥ १९ ॥ गतोभूर्धर्मराजस्य पुरं दुःखेन
पीडितः ॥ सशिष्यस्त्वं ततो वैश्य बहुधा दुःखमापिथ ॥ २० ॥ उच्छिष्टं प्राशयेद्विप्रं मोहात्स्नेहाद्धठाच्च यः ॥ सर्वाग्रभोजिनं मूढो लालाभक्षं
प्रयाति सः ॥ २१ ॥ शारीरिकमलान्भुंक्ते यावदाभूतसंप्लवम् ॥ यो हीनश्चोत्तमं वर्णं शिष्यत्वे विनियोजयेत् ॥ २२ ॥ स शूकरमुखं याति ताडचमानो
यमानुगैः ॥ बहुवर्षसहस्राणि भुक्त्वा नरकयातनाः ॥ २३ ॥ शौकरीं गार्दभीं योनिं बहुशोवाप वैश्यज ॥ चांडालजातौ बहुधा जातस्त्वं निजकर्मणा ॥
॥ २४ ॥ केनचित्पुण्यशेषेण जातो वैश्यगृहे सुधीः ॥ धनधान्यसुतैर्हीनो व्याधिभिः कृतवेश्मभूः[2] ॥ २५ ॥ अधुना कुरु भो वैश्य निष्कृतिं
पूर्वकर्मणः ॥ तेन त्वं चैहिकान्भोगान्भुक्त्वांते प्राप्स्यसे सुखम् ॥ २६ ॥ इत्युक्तोऽवनतो वैश्य उवाच मुनिसत्तमम् ॥ यथाहमाप्नुयां विप्र सुखं तव
प्रसादतः ॥ प्रायश्चित्तमतो ब्रूहि कर्तुं शक्यं च यन्मया ॥ २७ ॥ ऋषिरुवाच ॥ प्रायश्चित्तं न पश्यामि ज्ञात्वा वृजिनकारिणः ॥ ब्राह्मणो जन्मना श्रेया

१ बहुत्वमार्षम्, कारयामासियेत्यर्थः । २ विसर्गलोप आर्षः, व्याधिभिर्वेश्मभूर्वासस्थानं कृतः । कृता वेश्मभूर्यस्मिन्निति वा बोध्यम् ।

न्सर्वेषां प्राणिनामिह ॥ २८ ॥ आत्मोद्धारकताशक्तिः परोद्धारकता तथा ॥ शक्ती द्वे ईशरचिते स्वोद्धारा सर्वसंस्थिता ॥ २९ ॥ परोद्धारा न सर्वत्र वैश्य हे ब्राह्मणं विना ॥ विप्रे द्वे एव वर्तेते तस्माद्विप्रो गुरुर्भवेत् ॥ ३० ॥ अतः सर्वं कृतं विप्रैर्जपहोमार्चनादिकम् ॥ लभते सर्वलोकोऽयं नान्यजातिकृतं क्वचित् ॥ ३१ ॥ अलाभे विदुषो विप्रजातिमात्रपरिग्रहः ॥ अतो विप्रः सर्वपूज्यः सर्वदा सुखहेतवे ॥ ३२ ॥ नाविप्रो विप्रपूज्यत्वं प्राप्नोति वैश्य कर्हिचित् ॥ इदं त्वया ज्ञातमेव शास्त्रे वेदे तथैव च ॥ ३३ ॥ किंचेदमपि जानासि न विप्रः शूद्रपूजकः ॥ विप्रस्यैव प्रव्रज्यास्ति नान्यवर्णस्य कर्हिचित् ॥ ३४ ॥ आचार्यत्वं ब्राह्मणस्य स्थापितं पद्मयोनिना ॥ नान्यवर्णस्य जायेत तपआदिभिरत्र तत् ॥ ३५ ॥ न हि जातिपरावृत्तिंश्चिह्नमात्रपरिग्रहात् ॥ न नापितो ब्राह्मणतां याति सूत्रादिसंग्रहात् ॥ ३६ ॥ कलौ ब्राह्मणता वीर्यात्तपश्चर्यादिना न हि ॥ शुद्धं त्वशुद्धतामेत्य शोधनाच्छुद्ध्यते पुनः ॥ ३७ ॥ यच्च स्वभावतोऽशुद्धं तन्न शुध्यति शोधनात् ॥ यथा भस्मादिसंसर्गादशुद्धं तैजसं शुचि ॥ ३८ ॥ गूथं न शुद्धिमाप्नोति गंगांभःप्लावनादपि ॥ न दंभसदृशं पापं न पुण्यं सत्यसंमितम् ॥ ३९ ॥ अतस्त्वया महत्पापं कृतं दंभधृतेः पुरा ॥ ते शिष्या निखिला जग्मुरज्ञानाद्गुरुधारणात् ॥ ४० ॥ नरकान्क्रमशो वैश्य कुंभीपाकमुखान्बहून् ॥ एकमेव प्रपश्यामि तव पापविशोधनम् ॥ ४१ ॥ एकविंशदिनैर्वैश्य श्रीभागवतसेवनम् ॥ तत्कुरुष्व समाजेन तीर्थे वाथ वने गृहे ॥ साधूनां विनतो भूत्वा ततः प्राप्स्यसि चेप्सितम् ॥ ४२ ॥ वैश्य उवाच ॥ भगवन्मे दरिद्रस्य वक्ता कोपि न जायते ॥ परोपकृतये यूयं ब्रह्मणा निर्मिता द्विजाः ॥ ४३ ॥ पिबंति नद्यः स्वयमेव नांभः खादंति न स्वादुफलानि वृक्षाः ॥ अंभोधरो वर्षति नात्महेतोः परोपकाराय सतां विभूतयः ॥ ४४ ॥ इति श्रुत्वा दयायुक्तो बभूव मुनिसत्तमः ॥ उवाच खलु गंगायास्तीर्थे कुब्जाम्रकेऽधुना ॥ ४५ ॥ गाथां प्रवर्तयिष्यामो मुनिवृंदं समाह्वये ॥ इत्युक्त्वा प्रेषयामास ह्यानेतुं मुनिपुंगवान् ॥ ४६ ॥ शिष्यान्सर्वान्समाहूयाऽऽनेया व ऋषिसत्तमाः ॥ श्रीमद्भागवतस्यैवैकविंशतिदिनैर्मुदा ॥ ४७ ॥ सात्त्विकं सेवनं विप्रा गंगातीरे भविष्यति ॥ तत्कथामृतपानाय गच्छध्वं मुनिपुंगवाः ॥ ४८ ॥ ततो मुनीन्समादाय शिष्या आपेतुराश्रमम् ॥ ततो जगाम मुनिभिर्मुनिः सांख्यायनो वरम् ॥ ४९ ॥ कुब्जाम्रकं महाक्षेत्रं तत्र गाथास्थलं महत् ॥ कारयामास विप्रेंद्र श्रोतॄन्सर्वान्यथोचितम् ॥ ५० ॥ निवेश्य कथयामास श्रीमद्भागवतं परम् ॥ द्वादशस्कंधसंयुक्तमष्टादशसहस्रकम् ॥ ५१ ॥ तं वैश्यं संमुखीकृत्य स्थिरचित्तो द्विजाज्ञया ॥ रूपाक्षिदिवसैरेव मुनिमंडलमध्यगः ॥ ५२ ॥ कथासमाप्तावपतत्पुष्पवृष्टिर्दिवश्च्युता ॥ ततो जयजयाराव ऋषिवृंदैः समीरितः ॥ ५३ ॥ स च वैश्यो बभाराशु परमां श्रियमानतः ॥ ऋषिभिः प्रेषितः प्रागाद्गृहमात्मन एव तत् ॥ ५४ ॥ स्ववृत्तं कथयामास भार्यायै पूरितो मुदा ॥ सापि गर्भं दधाराशु मुदिता प्रियसंश्र

यात् ॥ ५५ ॥ संपातेन गृहं तस्य पपात निखिलं ततः ॥ स शुशोच ततो वैश्यो मृदश्चालनतत्परः॥ ५६ ॥ कुड्यमूलावपातार्थं चखान श्रमताडितः ॥ ततो दीनारनिचयैः संभृतान्बहुसंख्यकान् ॥ ५७ ॥ निपानवाप विप्रेंद्र तान्निशाम्य मुमोद ह ॥ तेन द्रव्येण बहुधा रचयामास मंदिरम् ॥ ५८ ॥ कुसीद ग्रहणार्थं स ददौ बह्वीर्हिरण्यजाः ॥ इष्टापूर्तादिकं धर्मं स चकार द्विजाज्ञया ॥ ५९ ॥ एकसमांतराले तु पुत्रं प्राप सुशोभनम् ॥ देशांतरे गीतकीर्तिर्जातो भागवतश्रवात् ॥ ६० ॥ सर्वरोगविनिर्मुक्तश्चिरजीवित्वमाप सः ॥ देहांते वैष्णवं धाम सुरासुरनमस्कृतम् ॥ जगाम स विमानेनानीतेन वैष्णवैर्मुदा ॥ ६१ ॥ इति श्रीकौशिकसंहितायां भागवतमाहात्म्य एकविंशतिदिनकथाश्रवणफलनिरूपणं नाम द्वितीयोऽध्यायः ॥ २ ॥ ॥ शौनक उवाच ॥ परमामृत पानेन तृप्तिर्जायेत मे न वै ॥ अतोष्टादशगं यागं ब्रूहि मे वदतां वर ॥ १ ॥ सूत उवाच ॥ क्षत्रियो मध्यदेशेऽभूद्राजसिंहोपनामकः ॥ मातापित्रोर्मृतिं प्राप बाल्य एव स आत्मनः ॥ २ ॥ दयया पालितो बालोयमिति पार्श्ववर्तिभिः ॥ यौवने कुष्ठरोगेण पीडितो निर्गतो गृहात् ॥ ३ ॥ अष्टादशविधेनैव रोगी देशांतरं गतः ॥ विंध्याद्रिनिकटेऽरण्यं ददर्श बहुपादपैः ॥ ४ ॥ मत्तषट्पदसंगीतैर्मत्तकोकिलनिस्वनैः ॥ मृगैर्वराहैः श्वाविद्भिर्गवयैः सैरिभैरिभैः ॥ ५ ॥ जुष्टं तस्मिन्बहुविधानाश्रमान्यत्र संवृतान् ॥ तत्रैव याचनावृत्तिमाश्रित्योवास बाहुजः ॥ ६ ॥ भारद्वाजाश्रमं यातः कदाचिद्दैवनोदितः ॥ तं गलद्वपुषं दृष्ट्वा पप्रच्छ कृपया मुनिः ॥ ७ ॥ कोऽसि कुतः समायातः कथमागमनं त्विह ॥ इत्युक्तः स जगादेदं क्षत्रियोऽस्मि द्विजोत्तम ॥ ८ ॥ बंधुहीनो रुजा ग्रस्तो विचरामि यतस्ततः ॥ न मां संभाषते कश्चित्सर्वो वक्तीति गम्यताम् ॥ ९ ॥ न जाने किं कृतं पूर्वं येनेयमागता दशा ॥ मे मृत्युर्न समायाति धिग्घृगार्तस्य जीवनम् ॥ १० ॥ ईदृशो न हि मे रोगो जनगोष्ठ्यां यथा विशे ॥ ब्राह्मणा भूमिदेवाः स्थ जानीथ निखिलं कृतम् ॥ ११ ॥ तपसा शास्त्रदृष्ट्या वा ब्राह्मणा जगदीश्वराः ॥ इयं ब्राह्मणनौर्विप्र विपरीता भवार्णवे ॥ १२ ॥ तरंत्यधोगता यस्या मज्जंत्युपरिवर्तिनः ॥ सर्वे देवाश्च पितरो ब्राह्मणैर्दर्शिता भुवि ॥ १३ ॥ न ब्राह्मणस्य समतां कश्चिदायाति मानवः ॥ ब्राह्मणार्थं स्वयं विष्णुरवतारान्बिभर्ति वै ॥ १४ ॥ जिष्णुर्वर्षति विप्रार्थं विप्रार्थं तपते रविः ॥ विप्रावमंतॄन्त्रविजो बहुधा दंडताडनैः ॥ १५ ॥ नियच्छतीह सर्वेषां विप्र एव गुरुर्मतः ॥ विप्रः पूज्योस्त्यनाचारो न च शूद्रो जितेन्द्रियः ॥ १६ ॥ दुष्टापि गौर्यथा दोह्या न गंगास्नायिनी खरी ॥ सर्वतीर्थपरिस्नातः सर्वदेवकृतार्चनः ॥ पूताचारप्रवृत्तोपि नाविप्रो विप्रतां लभेत् ॥ १७ ॥ विप्रा शितमिहाश्नंति देवताः पितरस्तथा॥अतः सर्वाग्रभोक्तारो विप्रा एव न चेतरे॥१८॥स्वमेव ब्राह्मणो भुंक्ते स्वं वस्ते स्वं ददाति च॥तस्यैवानुग्रहेणान्ये भुंजते

१ आत्मनेपदमार्षम् ।

क्षत्रियादयः॥१९॥विप्रदत्तेषु लोकेषु गताः पूर्वे नरोत्तमाः॥अतो मामुद्धर मुने दुस्तराद्रोगवारिधेः॥२०॥ श्रुत्वार्तवचनं विप्रः प्रणिदध्यौ ततोऽब्रवीत्॥त्वं बभूविथभो रोगिन् विप्र एवाथ नीवृति ॥ मद्राह्वये कुसंगेषु संसक्तं मानसं च ते ॥ २१ ॥ पाखंडानुगतो भूत्वा वेदनिंदां चकार ह ॥ सेतिहासपुराणानां तथाऽभूः कुत्सने रतः ॥ २२ ॥ पाखंडिकल्पितैस्तर्कैर्न स्वर्गोस्ति न देवताः ॥ विप्रैर्विरचिता ग्रंथाः स्वीयपूजादिहेतवे ॥ २३ ॥ तैः सर्वे वंचिता लोका मूढा इत्येवमादिभिः ॥ मनुष्यवाचा रचितान्मम्नौ ग्रंथांश्च नित्यशः ॥ २४ ॥ तेन दोषप्रभावेण जातकुष्टो गलद्वपुः ॥ वेदो निःश्वसितं विष्णोर्निश्वासं प्राण उच्यते ॥ २५ ॥ स्मृतयश्च पुराणानि सेतिहासानि तद्वपुः ॥ वेदनिंदासमं पापं न भूतं न भविष्यति ॥ न तेन संगतिं कुर्यान्न संभाषेत तेन ना ॥२६॥ पुराणेष्वर्थवादत्वं ये वदंति नराधमाः ॥ याम्यपाशान्निवृत्तिस्तु तेषां नैव कदाचन ॥ २७ ॥ ज्ञातं मया त्वया भुक्ता यातना यमकारिताः ॥ काकाद्यनेकनिंद्यास्ते देहा आसंस्ततः परम् ॥ २८ ॥ इदं त्व लब्धवान्देहं कुष्टैरष्टादशान्वितैः ॥ मनसा कर्मणा वाचा पापं नैव समाचरेत् ॥ २९ ॥ पापाचरणवेलायां न जानाति मदाकुलः ॥ भोगकाले ततो वक्ति धिङ्माम्पापप्रकारिणम् ॥ ३० ॥ अतस्त्वमष्टादशभिर्दिवसैः स्थिरमानसः ॥ शृणु भागवतं शास्त्रं वैयासकिसमीरितम् ॥ ३१ ॥ विपापो भविता तेन तथोल्लाघो भविष्यति ॥ श्रुत्वा मुनिवचः प्राह को मे वक्ता भविष्यति ॥ ३२ ॥ दूरं गच्छेति मनुजाः सर्वे मां प्रवदंति हि ॥ अतस्त्वमेव दयया शास्त्रं भागवतं मुने ॥ श्रावयस्व दिनैरष्टदिक्संख्यासंयुतैर्द्विज ॥ ३३ ॥ दानेन पाणिर्न तु कंकणेन श्रोत्रं श्रुतेनैव न कुंडलेन ॥ विभाति कायः करुणापराणां परोपकारेण न चंदनेन ॥ ३४ ॥ तच्छ्रुत्वा श्रोत्रियान्विप्रानानाय्य श्रवणाय सः ॥ तं पापं दूरतः स्थाप्य[1] कथां भागवतीं जगौ ॥ ३५ ॥ बभूव दिव्यदेहोऽसौ क्षत्रियोऽष्टादशे दिने ॥ अहो शास्त्रमहो शास्त्रमहो गुरुरहो गुरुः ॥ ३६ ॥ येनेदृशः पापतमो मोचिंतेति[2] शशंस ह ॥ कथाश्रवांतेऽरूपा वाग्बभूव शृण्वतां सताम् ॥ ३७ ॥ यः श्रोष्यते भागवतीमष्टादशादिनैः कथाम् ॥ स ब्रह्म यास्यति प्रेत्य भुक्त्वा भोगांस्तथैहिकान् ॥ ३८ ॥ इति श्रुत्वा प्रमुदिता ये च तत्र समागताः ॥ श्लाघयंतो गतास्सर्वे क्षत्रियोपि द्विजाज्ञया ॥ ३९ ॥ स्वग्राममगमद्रात्रौ सुष्वाप बहिरेव सः ॥ तस्यां रात्रौ पुराधीशो मृतिमापानपत्यकः ॥ ४० ॥ तन्मंत्रिणां विमर्शोऽभून्नृपः कोऽत्र भविष्यति ॥ यः प्रातः प्रथमं द्वारमायाति स नृपो भवेत् ॥ ४१ ॥ इत्थं जाते च समये स प्रातो मंत्रिभिस्तदा ॥ राज्यासने निवेशासौ प्रजा धर्मेण पालयन् ॥ ४२ ॥ स स्वदेशे भागवतीं कारयामास वै कथाम् ॥ अंते प्राप परं धाम श्रीमद्भागवतं स्मरन् ॥ ४३ ॥ इति श्रीकौशिकसंहितायां भागवतमाहात्म्येऽष्टादशदिनश्रवणफलवर्णनं

१ आर्षो ल्यप् । २ सन्धिरार्षः ।

नाम तृतीयोऽध्यायः ॥३॥ ॥ शौनक उवाच ॥ सूतसूत कथां ब्रूहि श्रीमद्भागवतीं पुनः ॥ पंचभिर्दिवसैः केन श्रुता दशयुतैर्वद ॥१॥ सूत उवाच ॥ पुरा
बभूव नृपतिः कान्यकुब्जे द्विजोत्तमः ॥ नीतिमार्गपरित्यागी बहुधा कामचारिभिः ॥ २ ॥ अमात्यैः संयुतो राज्यं शशास बहुवार्षिकम् ॥ बभूवुस्तस्य
राजानो वैरिणोऽन्ये मुने पुरा ॥ ३ ॥ तैस्तस्य चाभूत्प्रधनं तुमुलं लोमहर्षणम् ॥ पराजितो गतोऽरण्यं द्विजोत्तमनराधिपः ॥ ४ ॥
सभार्यो दुःखितोऽरण्ये क्षुधया पीडितो भृशम् ॥ सुतां राज्ञीं परित्यज्य गतो राजा यशोवतीम् ॥ ५ ॥ वनांतरं विवेशासौ सिंहव्याघ्रद्विपैर्युतम् ॥
प्रातः प्रबुद्धा सा राज्ञी न पश्यंती प्रियं ततः ॥ ६ ॥ आरण्यकैर्निषादाद्यैर्लब्धा विपिनमध्यगा ॥ निषादा जगृहू राज्ञीमानिन्युश्च निजं गृहम् ॥ ७ ॥
तत्र सा चानयत्कालं विधुरा दुःखजीविता ॥ अहो विधातः किमिदं यत्कदापि न चिंतितम् ॥ ८ ॥ कथं मे जीवनं चात्र निर्दयेषु प्रियं विना ॥ कथं
स्यात्पतिसंयोगो दुर्लभः प्रतिभाति मे ॥ ९ ॥ इत्थं विचारमापन्ना स्मरंती पौर्विकं कृतम् ॥ न्यवसद्भिल्लगेहेषु राजपत्न्यवशा बलात् ॥ १० ॥ राजापि
त्रिदिनं गच्छन्न लेभेऽन्नजलं वने ॥ ततो रम्यनदीतीरे ददर्श सनकं मुनिम् ॥ ११ ॥ शिष्यवृंदपरीवारं चतुर्मुखमिव स्थितम् ॥ प्रश्रयावनतो राजा दंड
वत्प्रणनाम ह ॥ १२ ॥ पप्रच्छ मुनिशार्दूलः सनकः को भवानिति ॥ निवेदयामास तदा नृपोऽहं राज्यविच्युतः ॥ १३ ॥ व्यसनासक्तचित्तत्वात्परैर्निर्वा
सितः पुरात् ॥ भार्या मे क्व गता विप्र न जाने सा मृता वने ॥ १४ ॥ क्षुत्पिपासार्दितोऽरण्ये विचरामि स्वकर्मणा ॥ दिनत्रयं चाद्य जातं निरन्नस्य
मुने मम ॥ १५ ॥ वद त्वं कृपया साधो किं मया संचितं पुरा ॥ भूतं भाविष्यमृषयो वर्तमानं विदुर्गुरो ॥१६॥ दैवाधीनं जगत्सर्वं मंत्राधीनाश्च देवताः॥
विप्राधीना मंत्रगणा देवदेवास्ततो द्विजाः ॥ १७ ॥ मृदुलं किमु वस्तु हे मुने नवनीतादपि सज्जनस्य हृत् ॥ तदिदं द्रवते स्वतापनात्परतापाद्द्रवते सतां
मनः ॥ १८ ॥ इत्युक्तः सनको विप्र उवाच ज्ञाततत्कृतः ॥ १९ ॥ ऋषिरुवाच ॥ आसीद्राजा धर्मनिधिर्विराजनगरे पुरा ॥ सर्वदेवगणानां स मंदि
राणि व्यधापयत् ॥ २० ॥ तद्वृत्तिं कारयामास क्षेत्रग्रामापणैर्दृढाम् ॥ त्वमपि न्यवसस्तत्र ब्राह्मणः पूर्वजन्मनि ॥ २१ ॥ विद्वान्मंत्रगणं सर्वं स्वाध्या
याध्ययने रतः ॥ नृपेण धर्मनिधिना दत्तं तुभ्यमशेषतः ॥ माठापत्यत्वमित्युक्त्वा देवद्रव्यं द्विजोत्तमः ॥ २२ ॥ दीनानाथामयार्तेभ्यो ब्राह्मणेभ्यो विशे
षतः ॥ विभजस्व यथान्यायं नैव भेदो यथा भवेत् ॥ २३ ॥ देवद्रव्यं प्रमादेन यो नाशयति मानवः ॥ स याति नरकं घोरं यावदाभूतसंप्लवम् ॥ २४ ॥
यो नरो देवताद्रव्ये सत्त्वमारोपयेद्धठात् ॥ स चौर एव विज्ञेयो दंड्यः स्याच्चौरवद्भृशम् ॥ २५ ॥ इत्थं प्रबोध्य स नृपस्त्वां देवगृहमानयत् ॥ त्वया
प्रमादमासाद्य स्वं वपुः परिपोषितम् ॥ २६ ॥ न दत्तं विप्रमुख्येभ्यो नातिथिभ्यश्च धर्मतः ॥ व्यसनैर्नाशयामास देवद्रव्यं भुजोद्भव ॥ २७ ॥

कदाचिदपि देवस्य विधिनाऽकृतार्चनम् ॥ आयुषोंते यमः प्राह त्वामेनं नयत द्रुतम् ॥ २८ ॥ कुंभीपाके तथा लालाभक्षे शोणितकर्दमे ॥
वैतरण्यां बहु चिरं देवद्रव्यविरोधिनम् ॥ २९ ॥ ब्राह्मण्यहारिणं पापं दूताः संतांडयतां[1] तथा ॥ तदंते विड्भुजां देहं प्रापयध्वं सहस्रशः ॥ ३० ॥ ऋषिरुवाच ॥ त्वयेत्थं बहुशो भुक्ता नरकस्थेन यातनाः ॥ श्वशृगालखरोष्ट्राणां वराहाणां तथैव च ॥ ३१ ॥ जन्मानि प्राप्य क्षत्रत्वं नृपतित्वं च बाहुज ॥ प्राप्तं यदधुना तत्तु रोगार्तद्विजसेवनात् ॥३२॥ ततः पूर्वतरे देहे कृतादेव न संशयः ॥ त्वया प्रणाशितमहो ब्राह्मण्यं देवदुर्लभम् ॥ विप्रत्वं बहुपुण्येन साम्राज्यं त्वल्पपुण्यतः ॥ ३३ ॥ नृप उवाच ॥ कथं ब्राह्मणता नष्टा भवेन्मे वद सुव्रत ॥ शास्त्रेषु श्रूयते लोके ब्राह्मणेभ्यो न चोत्तमः ॥ ३४ ॥ कोऽपि देही कथं तिष्ठेद्ब्राह्मणो मुनिसत्तमः ॥ इत्युक्तः कथयामास शृणु बाहुजसत्तम ॥३५॥ वेदानभ्यसनाद्द्रोहात्परेषां गुरुनिंदया ॥ मद्यमांसाशनैश्चापि शूद्रसेवनतस्तथा ॥ ३६ ॥ वाणिज्येन कुसीदेन धूमपानेन वा तथा ॥ तप्तमुद्राधारणेन यवनीमैथुनेन च ॥ ३७ ॥ अद्विजातपठनेनैव परपाकस्य भोजनात् ॥ पाखंडमार्गोपादानान्निंदनाद्विप्रशास्त्रयोः ॥ ३८ ॥ रेतःसेकाद्बुदायां च पतितानां च संगमात् ॥ मातापित्रोः कुलं त्यक्त्वा चास्थ्नां तीर्थेषु यापनात् ॥ ३९ ॥ ब्राह्मण्यं नाशमायाति सीरकर्षणतस्तथा ॥ ऊर्द्ध्ववस्त्रादधोवस्त्रात्पातितेभ्यः परिग्रहात् ॥४०॥ ब्रह्मविष्ण्वीशदेवेषु भेदबुद्धेः प्रकल्पनात् ॥ शूद्राध्यापनतस्तर्कोच्छास्त्रीयेषु च वस्तुषु ॥ ४१ ॥ संध्याकर्मपरित्यागाच्छूद्रान्नभुजितस्तथा ॥ मष्याजीवनतश्चैव खड्गवृत्तेः परिग्रहात् ॥४२॥ देवलत्वेन च तथा याचकत्वेन वा तथा ॥ ग्रामयाचनवृत्तेश्च धावकत्वपरिग्रहात् ॥४३॥ चिकित्सागणिताभ्यां वा जीवनाद्वा वृथा हठात् ॥ मनुष्यवाङ्निर्मितस्य ग्रंथस्याध्ययनश्रुतेः ॥ ४४ ॥ प्रतिग्रहमुपादाय न जपेद्वेदमातरम् ॥ स चेहैव ब्राह्मणत्वं विहाय शूद्रतामियात् ॥ ४५ ॥ संस्काराणां परित्यागादसंतोषान्मृषोक्तितः ॥ अयाज्ययाजनाच्चैव वेदविक्रयणात्तथा ॥४६॥ पौरोहित्यान्नृपान्नाच्च तथा घोरप्रतिग्रहात् ॥ ब्राह्मण्यं नश्यति यथा साधुभावः कुसंगमात् ॥ ४७ ॥ शमी दमी तितिक्षुश्च गायत्रीजपतत्परः ॥ब्राह्मणो देवपूज्यः स्यान्मनुष्याणां च का कथा॥४८॥नृप उवाच ॥ कथं मे स्यात्सुखमिह कृपया वद सांप्रतम् ॥ सतां साप्तपदी मैत्री भवत्येव द्विजोत्तम ॥४९॥ ऋषिरुवाच ॥ शृणु भागवतं यत्तो भूत्वा पक्षेण बाहुज ॥ श्रद्धया परया राजंस्ततस्ते दुःखसंक्षयः ॥५०॥ भवेदेव न संदेहः प्रायश्चित्तं न तत्परम् ॥ कृत्वा समाजं विदुषां शृणु सर्वार्थसिद्धिदम् ॥ ५१ ॥ इति श्रुत्वा नृपः प्राह कथमेतद्भविष्यति ॥ न चास्ति मे धनं किंचित्तथा मे नहि साधकः ॥ त्वमेव कल्पो मे देव तारणे दुःखवारिधेः ॥ ५२ ॥ श्रीनारायण उवाच[2] ॥ स चापि कृपया विप्रः कृत्वा संघं सतां तदा ॥

१ संताडयध्वमित्यर्थः । २ नारदं प्रत्युक्तिः ।

दिनैश्च पंचदशभिः प्राह भागवतं मुदा ॥ ५३ ॥ श्रुत्वा भागवतं राजा प्राप दत्तं महाबलम् ॥ हरिणा देवदेवेन गतो विप्रनियोगतः ॥ ५४ ॥ भिल्लान्सं ताड्य संप्राप निजां भार्यां यशोवतीम् ॥ यैर्गृहीतं पुरं तस्य तेषां स्वप्नो ह्यभून्निशि ॥ ५५ ॥ इतः प्रातः पलायध्वमायातीह द्विपोत्तमः ॥ वरविक्रमसंयुक्तः सर्वान् वो मारयिष्यति ॥ परमेश्वरानुगृहीतं तं न जेष्यथ संहताः ॥ ५६ ॥ रमाकांतप्रसादेन निर्बलो बलवत्तमः ॥ भवेदेव न संदेहो रावणावरजो यथा ॥ ५७ ॥ तस्यामेव निशि स्वप्ने तात निःसरणं पुरात् ॥ निजाच्छत्रुगणानां शुश्राव श्रीविष्णुनोदितम् ॥ ५८ ॥ द्विपोत्तम नृपश्रेष्ठ गच्छ तात निजं पुरम् ॥ अहं तव प्रसन्नोस्मि श्रीमद्भागवतश्रवात् ॥ ५९ ॥ गतास्ते शत्रवः सर्वे भुक्ष्व राज्यं यथाविधि ॥ प्रातरुत्थाय ते सर्वे द्विपोत्तमविरोधिनः ॥ ॥ ६० ॥ स्वंस्वं स्थानमुपाजग्मुर्भीताः स्वप्नप्रदर्शनात् ॥ द्विपोत्तमं चाभिययुः श्रुत्वा मंत्रिपुरोहिताः ॥ ६१ ॥ सर्वे भृत्यगणाः पौरा आनयामासुरानताः ॥ राज्ये तं स्थापयामासुः सपत्नीकं समागतम् ॥ ६२ ॥ स्ववृत्तं कथयामास श्रीमद्भागवतोद्भवम् ॥ श्रुत्वा विसिस्मियुः सर्वे वृत्तं नृपमुखोद्गतम् ॥ ॥ ६३ ॥ ग्रामेग्रामे महाराजः श्रीमद्भागवतीं कथाम् ॥ कारयामास सततं श्रीकृष्णप्रीतिकारिणीम् ॥६४॥ यावज्जीवं स शुश्राव स्थिरचित्तो द्विजोत्तमः ॥ श्रीमद्भागवतं राजा सर्वमंत्रिगणावृतः ॥ देहांते वैष्णवं धाम प्राप भागवतस्मृतेः॥६५॥इति श्रीकौशिकसंहितायां श्रीमद्भागवतमाहात्म्ये चतुर्थोऽध्यायः॥४॥

नारद उवाच ॥ नारायण महेशान कथितं परमाद्भुतम् ॥ श्रीभागवतमाहात्म्यं श्रीमता पुरुषोत्तम ॥ १ ॥ कथं भागवतं लोके प्रवृत्तं तद्वदस्व मे ॥ २ ॥ नारायण उवाच ॥ शृणु नारद यत्नेन यत्पृष्टं तत्त्वयाऽनघ ॥ रहस्यं ते प्रवक्ष्यामि तव भक्त्या सुयंत्रितः ॥ ३ ॥ पार्वत्यै कथयामास पुरा काश्मीरमंडले ॥ महेशोऽमरगाथां याममृतत्वप्रदायिनीम् ॥ ४ ॥ तामेव ते प्रकर्षेण सुरर्षे कथयाम्यहम् ॥ श्रद्धाऽमृतकथायां मे श्रीकृष्णोक्तिप्रमाणतः ॥ ॥ ५ ॥ श्रीमद्भागवतं शास्त्रममराख्या कथा स्मृता ॥ रुद्रस्कंधोनविंशे चाध्याये कृष्णेन भाषितम् ॥ उद्धवाय स्वसुहृदे नात्र कार्या विचारणा ॥ ६ ॥ एकदा गिरिजा शंभुं स्तुत्वा बहुविधं मुने ॥ उवाचावनता चैवं देवदेव जगत्पते ॥ ७ ॥ त्वद्वियुक्ता यथा न स्यामात्मप्राप्तिश्च मे यथा ॥ तथा कथय देवेश कृपया भक्तवत्सल ॥ ८ ॥ इति श्रुत्वा महादेवः प्राह पत्नीमिदं वचः ॥ गुप्तो न शृणुयात्कश्चिद्बहिर्गत्वा विलोक्यताम् ॥ ९॥ इत्युक्ता बहिरागत्य किंचित्तत्र न पश्यति ॥ स्थावरं जगमं वापि कीराण्डं गलितं विना ॥ उवाचावनतागत्य बहिः किंचिन्न विद्यते ॥ १० ॥ ततोऽमरकथां शंभुः श्रीमद्भागवताभिधाम् ॥ महेशान्यै विधायादौ समयं च जगाद ह ॥ ११ ॥ क्षणेक्षणे त्वमीशानि ओमित्युच्चारणं यदि ॥ करिष्यसि तदा वक्ष्ये कथाममृतरूपिणीम् ॥ १२ ॥ तथेति स्वीकृतं देव्या शंभूक्तं वचनं तदा ॥ प्रथमस्कंधतः शंभुः कथयामास पूरितः ॥ १३ ॥

प्रेम्णा शैलसुतायै स्ववल्लभायै परां कथाम् ॥ दशमस्कंधपर्य्यंतमोमोंशब्दं जगाद ह ॥ १४ ॥ एकादशारम्भकाले निद्रयोपद्रुता सती ॥ सुष्वाप च तदा कीरस्तं ध्वनिं च तथाऽकरोत् ॥ १५ ॥ श्रीभागवतपीयूषसंयोगाज्जीवितस्तदा ॥ द्वादशांते प्रबुद्धा सा पुनः प्रोवाच शंकरम् ॥ १६ ॥ किमुवाचोद्धवं कृष्णो भगवन्न मया श्रुतम् ॥ निद्रायोगात्पुनर्ब्रूहि कृपां कृत्वा ममोपरि ॥ १७ ॥ कोऽत्रोंकारप्रवक्तास्ति न कोपि प्राह पार्वती ॥ उत्थाय च महादेवोऽपश्यत्परमसुंदरम् ॥ १८ ॥ शुकशावं तदा क्रुद्धः प्राह शैलसुतां हरः ॥ कथं त्वया न दृष्टोऽयं शुकशावो वदाऽशुभे ॥ १९ ॥ भगवन् गलितं चाण्डं जीवहीनमिहास्ति वै ॥ पूर्वं दृष्टं मया ज्ञातं मृतस्तु काष्ठलोष्टवत् ॥२०॥ श्रीभागवतपीयूषसेकाज्जीवमवाप्तवान् ॥ अधुना देवदेवेश मा क्रोधं कुरु शंकर ॥ २१ ॥ शुकं ग्रहीतुं भगवान् दुद्राव बहुवेगतः ॥ उड्डीय च शुकोधावद्गतो व्यासाश्रमं ततः॥ ॥ २२ ॥ द्वैपायनस्य च मुखे जृंभमाणस्य वेगतः ॥ शुको विवेश संभीतो द्रावितः शंकरेण हि ॥ २३ ॥ आगत्य धूर्जटिः प्राह क्व गतस्तीक्ष्णनासिकः ॥ इहैव दृश्यतां देव मुनिः प्राह शिवं तदा ॥ २४ ॥ अदृष्ट्वा पुनरावृत्तो हरः स्वाश्रममेव हि ॥ २५ ॥ कदाचिन्मथतो वीर्यमरण्यामपतन्मुनेः ॥ बालस्तदैव संजातो ह्यभूत्षोडशवार्षिकः ॥ २६ ॥ तदैवोत्थाय विपिनं जगामैकल एव सः ॥ उच्चार्य्य पुत्रपुत्रेति व्यासोऽप्यनुजगाम तम् ॥ २७ ॥ निवर्तस्वेहि पुत्र त्वं कुरु मे सुमनोरथम् ॥ गृहमावस मे तात भुक्त्वा भोगान्यथेप्सितम् ॥ २८ ॥ ततस्त्याज्यं गेहयोगं प्रवदंति मनीषिणः ॥ स निशम्य पितुर्वाक्यं वृक्षसंघे निलीय च ॥ २९ ॥ उवाच पितरं तात शृणु कश्चिन्नराधिपः ॥ वेश्यासक्तमना वेश्यागेहमायाति प्रत्यहम् ॥ ३० ॥ मया विना कश्चिदन्यो न सेव्यः पुरुषोऽपरः ॥ पुरुषांतरं सेवसे चेत्तदा सत्यं मारिष्यासि ॥ ३१ ॥ तं चापि मारयिष्यामि यश्च त्वां रमयिष्यति ॥ एवमुक्त्वा समायाति स राजा निजमंदिरम् ॥ ३२ ॥ केनापि श्रेष्ठिपुत्रेण सा वेश्या ह्यतिसुंदरी ॥ दत्त्वा बहुधनं तस्यै प्रार्थिता रतिकर्मणि ॥ ३३ ॥ लोभासक्तमना वेश्या रेमे वैश्यसुतेन सा ॥ रतिकाले नृपः प्राप्तो द्वारमुद्घाट्यतां शुभे ॥ ३४ ॥ त्रस्ता सा प्राह तं वैश्यं किं कुर्वे भयमागतम् ॥ त्वां मां चैष नृपोऽवश्यं मारयिष्यति सांप्रतम् ॥ ३५ ॥ मलोत्सर्गगृहं हित्वाऽधुना गुप्तिगृहं न हि ॥ अधोमुखं चास्य रंध्रे रज्ज्वा बद्ध्वा निपातये ॥ ३६ ॥ प्रयास्यति यदा राजोद्धरिष्येऽहं ततः परम् ॥ स च मृत्युभयात्तत्रोरीचकार तथाकृतम् ॥ ३७ ॥ यावन्निशं नृपो रेमे जगामोषसि वेश्मनि ॥ स च वैश्यसुतो रात्रिं यापयामास दुःखितः ॥ ३८ ॥ अधोमुखो मलासक्तशिराः प्रोत्फुल्ललोचनः ॥ तयोद्धृतो निजगृहमागत्योवाच पापिनम् ॥ ३९ ॥ धिग्मां विगर्हितं सद्भिर्न कुर्वे पुनरीदृशम् ॥ वेश्यया दूतिकास्येन समाहूतः पुनःपुनः ॥४०॥ धनिपुत्रो यथा वेश्यागेहं नैव प्रयाति सः ॥ त्वया रमिष्ये निर्मूल्यमेहि त्वं मे गृहं पुनः ॥४१॥

गर्भवासे तथा दुःखं दशमासं यथा निशि ॥ एकस्यामेव ददृशे वेश्यागेहे विशां पतिः ॥ ४२ ॥ अतो गृहं नैव यास्ये गर्भवासफलप्रदम् ॥ इति श्रुत्वा मुनिः कृष्णो विरहाकुलमानसः ॥ ४३ ॥ कथं निवर्तये पुत्रं विरक्तं सुंदराकृतिम् ॥ ततो योगबलेनैव दृष्ट्वा भागवतस्मृतिम् ॥ ४४ ॥ पुत्रस्य पूर्व संस्करान् व्यासः श्लोकान्पपाठ ह ॥ श्रीमद्भागवतस्यैव दशमस्कंधसंभवान् ॥ ४५ ॥ श्रुत्वा पूर्वं श्रुताञ्श्लोकाँस्त्यक्तकीरवपुर्मतिः ॥ हरेर्गुणाक्षिप्तमतिर्बादरायणनंदनः ॥ ४६ ॥ तमेवानुजगामाथ हर्षितः कृष्णलीलया ॥ आगत्य श्रीभागवतमध्यैष्ट पितुरात्मनः ॥ ४७ ॥ छायाशुकं विनिर्माय पित्रे दत्त्वा ततोऽभ्यगात् ॥ अनग्निश्चानिकेतश्च पूर्वनाम्ना चकार ह ॥ ४८ ॥ शुकाख्येन मुने लोके स्मरन्भागवतं मुदा ॥ यदा शमीकतनयः शापं शृंगी ददौ रुषा ॥ ४९ ॥ राज्ञे परीक्षिते विप्रस्तदायाद्योगिनां वरः ॥ गंगातीरोपविष्टाय त्यक्तराज्याय सत्तमः ॥ ५० ॥ वक्तुं भागवतं शास्त्रं सद्यश्चित्तप्रसादकम् ॥ यच्छ्त्वा कृष्णसायुज्यमभिमन्युसुतो नृपः ॥ ऋषीणां पश्यतामेव लेभे व्याससुतान्मुनेः ॥ ५१ ॥ सूत उवाच ॥ अहं तत्र निविष्टश्च श्रुतवान्मुनिसत्तमात् ॥ श्रीमद्भागवतं विप्राः सर्वेष्टफलदायकम् ॥ तत्प्रभृत्येव लोकेस्मिन्नाविर्भूतं न संशयः ॥ ५२ ॥ भाशब्दः कीर्तिवचनो गशब्दो ज्ञानवाचकः ॥ सर्वेष्टवचनो वश्च तो विस्तारस्य वाचकः ॥ ५३ ॥ कीर्तेर्ज्ञानस्य सर्वेष्टस्य च विस्तारणादिदम् ॥ अस्य भागवतं नाम श्रीव्यासेनेति कीर्तितम् ॥ ५४ ॥ धर्मार्थकाममोक्षांश्च वक्ति वर्णचतुष्टयी ॥ ते प्राप्यंते यतोऽनेन तस्माद्भागवतं स्मृतम् ॥ ५५ ॥ कृष्णस्य वाङ्मयी मूर्तिः श्रीमद्भागवतं मुने ॥ उपदिश्योद्धवं कृष्णः प्रविष्टोऽस्मिन्न संशयः ॥ ५६ ॥ पादादिजानुपर्यंतं प्रथमस्कन्ध ईरितः ॥ तदूर्द्ध्वं कटिपर्यंतं द्वितीयस्कन्ध उच्यते ॥ ५७ ॥ तृतीयो नाभिरित्युक्तश्चतुर्थ उदरं मतम् ॥ पञ्चमो हृदयं प्रोक्तं षष्ठः कण्ठं सबाहुकम् ॥ ॥ ५८ ॥ सर्वलक्षणसंयुक्तं सप्तमो मुखमुच्यते ॥ अष्टमश्चक्षुषी विष्णोः कपोलौ भृकुटिः परः ॥ ५९ ॥ दशमो ब्रह्मरंध्रं च मन एकादशः स्मृतः ॥ आत्मा तु द्वादशस्कंधः श्रीकृष्णस्य प्रकीर्तितः ॥६०॥ जीवन्मुक्तौ न संदेहो जायते श्रुतिमात्रतः ॥ तस्मादेषा सदा श्राव्या श्रीमद्भागवती कथा ॥६१॥ इति श्रीकौशिकसंहितायां भागवतमाहात्म्ये पंचमोऽध्यायः ॥ ५ ॥ शौनक उवाच ॥ सूतसूत महाप्राज्ञ वह्निकुंडसमुद्भव ॥ श्रीमद्भागवतश्रावविधिं ब्रूहि दयानिधे ॥ १ ॥ सूत उवाच ॥ भारते लब्धजनुषां नृणां भागवतश्रवे ॥ विधिं वक्ष्याम्यहं विप्रा येन स्यात्सुखसंततिः ॥ २ ॥ राजसं सात्त्विकं चापि तामसं निर्गुणं तथा ॥ सेवनं चास्य कर्तव्यं जनिसाफल्यहेतवे ॥ ३ ॥ परीक्षिच्छुकसंवादो योसौ व्यासेन वर्णितः ॥ ग्रंथोऽष्टादशसाहस्रो द्वादशस्कंधसंमतः ॥ ४ ॥ हयग्रीवब्रह्मविद्यायुक्तो ब्रह्मप्रबोधकः ॥ उपक्रमावसाने स्तो गायत्र्या यस्य सत्तम ॥ ५ ॥ संसारतापहरणः सोऽयं भागवताभिधः ॥

पृष्ट्वा मुहूर्तं दैवज्ञाद्यदा श्रद्धा प्रजायते ॥ ६ ॥ कार्तिकादिषु मासेषु तदा श्राव्या समाहितैः ॥ मलमासं च शुक्रास्तं तथास्तं गुरुचंद्रयोः ॥ ७ ॥ गुर्वादि
त्यं क्षयतिथिं सर्वथा परिवर्जयेत् ॥ विरक्ता वैष्णवास्तत्र तथा ये कीर्तनोत्सुकाः ॥ ८ ॥ पत्रादिना समानेयास्तथान्ये श्रवणोत्सुकाः ॥ स्थलं तु विस्तृ
तं कार्यं गाथार्थं रुचिरं नृभिः ॥ ९ ॥ नांदीश्राद्धं विधायादौ मंडपं कारयेच्छुभम् ॥ कदलीखंडरचितं सवितानं महामते ॥१०॥ स्थापनीयाश्चतुर्दिक्षु
कुंभाः श्रीफलसंयुताः ॥ गणेशग्रहमातृश्चाचार्यान्पौराणिकांस्तथा ॥११॥ प्रत्यहं पूजयेद्वक्ता श्रोता चापि यथाविधि ॥ शालग्रामशिलावश्यमानेया तत्र
संसदि ॥ १२ ॥ पलसौवर्णरचितं विष्णुं कुंभोपरि न्यसेत् ॥ पंच सप्त त्रयो विप्रा जपेयुर्वेदमातरम् ॥ १३ ॥ गायत्रीं वा गणेशस्याथवा द्वादशार्णिकम् ॥
कथाविघ्नविघातार्थं यद्वा मृत्युंजयं जपेत् ॥ १४ ॥ उपक्रमेऽवसाने च कुर्यान्नीराजनं मुदा ॥ महोत्सवः प्रकर्तव्यो यथोद्वाहादिकर्मणि ॥१५॥ निष्कत्रय
सुवर्णेन प्रत्येकस्कंधपूजनम् ॥ महापूजा समाप्तौ स्याद्वित्तशाठ्यं न कारयेत् ॥ १६ ॥ अरुणोदय उत्थाय शौचं स्नानादिकं
चरेत् ॥ वक्ता चात्र प्रकर्तव्यो विप्रः शास्त्रविशारदः ॥ १७ ॥ रागद्वेषविनिर्मुक्तः सवागपरिपूरितः ॥ दृष्टांतकुशलो धीरो न पाखंडी
न हैतुकः ॥ १८ ॥ अवैष्णवमुखाद्गाथा न श्रोतव्या कदाचन ॥ शुकशास्त्रं विशेषेण न श्रोतव्यमवैष्णवात् ॥ १९ ॥ वैष्णवोऽत्र स विज्ञेयो यो विष्णो
र्मुखमिष्यते ॥ ब्राह्मणोऽस्य मुखमितिश्रुतेर्ब्राह्मण एव सः ॥ २० ॥ विप्रेतरमुखाच्छास्त्रं श्रुतं हि नरकप्रदम् ॥ शूद्रस्तु सर्वथा त्याज्यः
शास्त्रालापे नरोत्तमैः ॥ २१ ॥ श्वचर्मणि यथा गव्यमपेयं स्याद्द्विजातिभिः ॥ तथा शूद्रमुखाद्वाक्यं न श्रोतव्यं कदाचन ॥ २२ ॥ कपिला
क्षीरपानेन ब्राह्मणीगमनेन वा ॥ शालग्रामशिलास्पर्शाद्वेदस्योच्चारणात्तथा ॥ व्यासासनोपवेशाच्च शूद्रश्चांडालतां व्रजेत् ॥ २३ ॥ ये शूद्रमुखतः शास्त्रं
शृण्वंति हि नराधमाः ॥ तेषां कर्णे त्रपु सिक्त्वा वक्तुर्जिह्वां प्रकर्तयेत् ॥२४॥ विज्ञो राजा स्वराज्यस्य तथा वंशस्य चात्मनः ॥ समृद्ध्येऽन्यथा याति
नरकान्भृशदारुणान् ॥२५॥ विप्रस्यैवाधिकारोस्ति धर्ममात्रोपदेशने ॥ व्यासासनसमावेशे नान्यवर्णस्य भार्गव ॥२६॥ विप्रो विप्रेतरगुरुरविप्रो जायते
ध्रुवम् ॥ न स विप्रेषु पूजार्हस्तस्माद्विप्रं गुरुं चरेत् ॥ २७ ॥ गोत्रप्रवरत्यागेऽपि विप्रत्वं नश्यति ध्रुवम् ॥ विप्रेतरगुरोर्जातिः क्षत्रादेरपि नश्यति ॥२८॥
मज्जंश्च सर्वतीर्थेषु तथार्चन्सर्वदेवताः ॥ हृषीकाणि निगृह्णंश्च नाविप्रः पूज्यतां व्रजेत् ॥ २९ ॥ अतो विप्रं हि वक्तारं कुर्याच्छास्त्रस्य बुद्धिमान् ॥ द्विजा
न्यो मंत्रयागी चाम्लेच्छः परिणयी सदा ॥३०॥ द्विजभक्तो भवेच्छूद्रस्तदन्यश्चांत्यजादिकः ॥ गणकं भिषजं चैव तथा वार्द्धुषिकं द्विजम् ॥ ३१ ॥ राज
मुद्राङ्कितं देवमुद्राचिह्नितविग्रहम् ॥ मातृतः पितृतश्चाथाऽशुद्धं देवलकं तथा ॥ ३२ ॥ राजभृत्यं च पतितं तथा कटुकभाषिणम् ॥ तथोर्द्ध्वपुंड्ररहितं

वक्तारं न प्रकल्पयेत् ॥ अद्विजाधीतशास्त्रं च परपाकरतं तथा ॥ ३३ ॥ वरणे व्यासपूजायां श्राद्धे राज्यासने तथा ॥ ऊर्द्ध्वपुंड्रं प्रकुर्वीत न कुर्याद्वै त्रिपुंड्रकम् ॥ ३४ ॥ आज्ञामादाय विप्रेभ्यो वृद्धेभ्योऽन्येभ्य एव च ॥ उपविश्यासने विद्वान्पाठोच्चारणमारभेत् ॥ पाठं शनैःशनैः कुर्याच्छ्रोतृहर्षविवर्द्धनम् ॥ ॥ ३५ ॥ गीती शीघ्री शिरःकंपी तथा लिखितपाठकः ॥ अनर्थज्ञोऽल्पकंठश्च षडेते पाठकाऽधमाः ॥३६॥ माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः ॥ धैर्यं लयसमर्थश्च षडेते पाठकोत्तमाः॥३७॥पाठं कुर्वन्न विरमेद्यावदध्यायपूरणम् ॥ विरामे च तदध्यायं पुनरादित आरभेत्॥३८॥स्कंधस्याद्यंतश्लोकौ हि द्विरावृत्त्या सदा पठेत् ॥३९॥ शौनक उवाच ॥ कस्मिन्दिने कियान्कार्यः पाठस्य नियमं वद ॥ सप्ताहादिषु सर्वेषु कल्पेषु बुद्धिसत्तम ॥४०॥ सूत उवाच ॥ सप्ताहे पाठनियमं शृणु शौनक संयतः ॥ मनुकर्दमसंवादपर्यंतं प्रथमेऽहनि ॥ ४१ ॥ ऋषभाख्यानपर्यंतं द्वितीये दिवसे वदेत् ॥ तृतीये दिवसे कुर्यात्सप्तमस्कंधपूरणम् ॥ ४२ ॥ कृष्णाविर्भावपर्यंतं चतुर्थेहनि वाचयेत् ॥ रुक्मिण्युद्वाहपर्यंतं पंचमेह्नि वदेत्सुधीः ॥४३॥ श्रीहंसाख्यानपर्यंतं षष्ठेऽह्नि वाचयेद्ध्रुवम् ॥ सप्तमे दिवसे कुर्याच्छ्रीभागवतपूरणम् ॥ ४४ ॥ पूजनं विविधैर्द्रव्यैः कुर्याद्वक्तुर्यथोदितम् ॥ यात्रायां शुकदेवस्य समाप्तौ शास्त्रपूजनम् ॥ ४५ ॥ मासश्रवणपक्षे तु नित्यमध्यायधूर्जटिम् (११) ॥ पञ्चाध्यायीं पठेद्विद्वान्समाप्तिदिवसेंतिमाम् ॥ ४६ ॥ एकविंशाहकल्पे तु नित्यं षोडशषोडश ॥ अध्यायान्संपठेद्धीमानंतिमे पञ्चरूपकान्(१५)॥४७॥ अष्टादशाहयज्ञे तु सहस्रश्लोकवाचनम्॥दिवसेदिवसे कुर्यादिति शास्ति स्वयं बुधः ॥ ४८ ॥ नंदेन्दू त्वष्टचन्द्रौ गिरिशशचलनौ शास्त्रभूर्नन्दचन्द्रौ रुद्राश्चाग्रे नखाश्च श्रुतिनयनमिताः शैलभूः शून्यनेत्रे ॥ भूनेत्रे बाणचन्द्रौ श्रुतिदिशिस मिताः कांडभूर्भूधरक्ष्मे दृक्पादौ गोब्जसंख्याः सहजचरणकाः सर्गसंख्याद्यघस्रात्॥४९॥ पाठे श्लोकसहस्रस्य संख्यैषु जायते द्विज॥अध्यायेष्वन्वहं पक्षे ह्यष्टादशदिनात्मके ॥ ५० ॥ यद्वा दिकृति थिबाणाश्वभूदिनेऽध्यायविंशतिम् ॥ अष्टादशान्दिनेऽन्यत्र चैकविंशान्वदेत्परे ॥ ५१ ॥ पक्षश्रवणपक्षे हि द्वाविंशाध्यायपाठनम् ॥ नित्यमेव प्रकुर्वीत सप्तमे सप्तविंशतिः ॥ ५२ ॥ यद्वा सर्वेषु कल्पेषु यथा वक्तुः सुखं भवेत् ॥ तथैव वाचनं मन्ये प्रशस्तं श्रोतु

१ शुद्धमशुद्धं वा यथालिखितमेव विचाराराहित्येनाज्ञात्वा पठतीति तात्पर्यम्, न तु स्वहस्तलिखितमिति; 'स्वहस्तलिखितं स्तोत्रम्' इत्यत्र स्तोत्रशब्दस्यैवोपादानात् । २ लयनं लयो योजना 'ली—श्लेषणे' अतोऽच्।तत्र समर्थः।पदयोजनादावित्यर्थः । ३ श्रीव्यासः । ४–१९–अध्यायाः, प्रथमदिवसे । ५–१८ अ०, २ दि० । ६–१७ अ०, ३ दि० । ७–१६ अ०, ४ दि० । ८–१९ अ०, ५ दि० । ९–११ अ०, ६ दि० । १०–२० अ०, ७ दि० । ११–२२ अ०, ८ दि० । १२–१७ अ०, ९ दि० । १३–२० अ०, १० दि० । १४–२१ अ०, ११ दि० । १५–१५ अ०, १२ दि० । १६–२४ अ०, १३ दि० । १७–१५ अ०, १४ दि० । १८–१७ अ०, १५ दि० । १९–२२ अ०, १६ दि० । २०–१९ अ०, १७ दि० । २१–२३ अ०, १८ दि० । २२–"सर्गः स्वभावनिर्मोक्षनिश्चयाऽध्यायसृष्टिषु" इत्यमरः ।

रेव वा ॥ ५३ ॥ नित्यश्रवे मुहूर्तं तु श्रवणं सुखदायकम् ॥ विषादश्चेन्न जायेत शोभनं श्रवणं हि तत् ॥ ५४ ॥ अभक्ष्यभक्षणं त्याज्यमसंभाष्येण भाषणम् ॥ अस्पृश्यस्पर्शनं चैव ब्रह्मचर्यपरो भवेत् ॥ ५५ ॥ क्रोधं लोभं च निंदां च क्रीडामक्षादिभिः सह ॥ श्रोता चैव तथा वक्ता संत्यजेत्स्थिरमानसः ॥ ५६ ॥ ततस्तु श्रवणारंभे पुस्तकार्चनमारभेत् ॥ पुष्पैर्धूपैश्च नैवेद्यैस्तथा नीराजनादिभिः ॥ ५७ ॥ ततः श्रीफलमादाय नमस्कारं समाचरेत् ॥ श्रीमद्भागवताख्य त्वं प्रत्यक्षः कृष्ण एव हि ॥ ५८ ॥ स्वीकृतोऽसि मया नाथ मुक्त्यर्थं भवसागरे ॥ मनोरथो मदीयोऽयं पूरणीयस्त्वया प्रभो ॥ ५९ ॥ गृहीत्वा पुष्पमालादि वक्तारं पूजयेत्ततः ॥ सर्वज्ञ सर्वधर्मज्ञ शुकरूप नमोऽस्तु ते ॥ ६० ॥ एतत्कथाप्रकाशेन मदज्ञानं विनाशय ॥ श्रद्धान्वितः सर्वं कृत्यं विहाय श्रवणं चरेत् ॥ ६१ ॥ श्रद्धां विना कर्मफलं न जायेत कदाचन ॥ विना वह्निं यथापाकस्ततः श्रद्धान्वितो भवेत् ॥ ६२ ॥ अश्रद्धया कृतं पुण्यं निष्फलं स्यान्न संशयः ॥ प्रसादतुलसीमाला दीयंतां श्रवणार्थिनाम् ॥ ६३ ॥ कथांते हवनं कार्यं गायत्र्या त्वयुतं बुधैः ॥ न्यूनत्वपरिहारार्थं पठेन्नामसहस्रकम् ॥ ६४ ॥ तेन स्यात्सफलं सर्वं नात्र कार्या विचारणा ॥ ब्राह्मणान्भोजयेद्भक्त्या परमान्नेन शक्तितः ॥६५॥ शक्तोऽस्य दानं कुर्वीत महादानविधानतः ॥ सहस्रहेमनिष्केण तदर्द्धार्द्धेन वा पुनः ॥ ६६ ॥ चतुर्विंशतिनिष्कैर्वाथ वा द्वादशभिः पलैः ॥ यद्वा पलत्रयेणापि कृत्वा सिंहासनं वरम् ॥ ६७ ॥ तन्मध्ये स्थापयेच्छास्त्रं रौप्यपट्टिकमध्यगम् ॥ क्षौमांबरसमाच्छन्नमर्चितं चंदनादिभिः ॥ ६८ ॥ संपूज्य विप्रं विधिवद्वेदवेदांगपारगम् ॥ तद्व्याख्यानरतं शांतं विष्णुभक्तिपरायणम ॥ ६९ ॥ स्थालीपाकविधानेन होमं कुर्वीत यत्नतः ॥ दद्याद्भागवतं तस्मै पूजयित्वा कुटुंबिने ॥ ७० ॥ गोदानफलमाप्नोति श्रोता प्रत्यक्षरं नरः ॥ अध्यायेनाश्वमेधस्य स्कंधेनानंतयागजम् ॥ ७१ ॥ समग्रश्रवणेनैव जीवन्मुक्तो भवेन्नरः ॥ श्रवणे यत्फलं प्रोक्तं दाने तद्द्विगुणं भवेत् ॥ ७२ ॥ लिखित्वा लेखयित्वा वा दद्याद्भागवतं नरः ॥ प्रोष्ठपद्यां पौर्णमास्यां कार्तिक्यादिषु वा पुनः ॥ ७३ ॥ दाता फलमवाप्नोति सर्वपौराणदानजम् ॥ ग्रहीता लभते मोक्षं पाठादिनिरतो यदि ॥ ७४ ॥ सर्वान्कामानवाप्नोति दाता भागवतस्य च ॥ पुस्तकं वृत्तिहेतुत्वाद्देयं विप्राय मानवैः ॥ ७५ ॥ विप्रस्य वृत्तिकरणात्कोटिगोदानजं फलम् ॥ विप्रस्य वृत्तिहननात्पापं गोकोटिघातजम् ॥ ७६ ॥ कृष्णरूपमिदं शास्त्रं संशयो न हि विद्यते ॥ अत आदरतः सेव्यं श्रीमद्भागवतं नरैः ॥ ७७ ॥ वक्तारं तोषयेद्भक्त्या वस्त्राभरणधेनुभिः ॥ हैमै रौप्यैस्तथा यानै रत्नैः शय्यागृहादिभिः ॥ ७८ ॥ फलं वक्तरि तुष्टे स्यात्तथा प्रीतिर्हरेर्द्विजे ॥ प्रीते हरौ किमप्राप्यं जगतामीश्वरे परे ॥ ७९ ॥ [१]वक्तारं च पुराणादेर्देया वृत्तिस्तु कौलिकी[२] ॥

१ चतुर्थ्यर्थे द्वितीया । पुराणादेर्वाचकायेत्यर्थः । २ कुलपर्यैता ।

वक्तुर्जीवितपर्यंताऽथ वा वात्सरिकी बुधैः ॥ ८० ॥ गाथाकालमिताऽवश्यं वस्त्रान्नावासरूपिणी ॥ पूर्वाभावे परा कार्या श्रवणं तां विना मुधा ॥ ८१ ॥ पारायणे जपे तीर्थे निजान्नं फलदं मतम् ॥ असामर्थ्येऽपि संभूय वस्त्रान्नादि दिशेत्सुधीः ॥ ८२ ॥ पेयं पूयं मलं भक्ष्यं भूषाऽस्थि कृत्ति चांबरम् ॥ तस्यानर्प्येह यो वक्रे पुराणादेर्निजांतिके ॥ ८३ ॥ सदा भुंक्ते नरो विप्र वक्ता विष्णुर्यतः स्वयम् ॥ मुख्यो गुरुर्बोधयिता धर्माणां सर्वतो ह्ययम् ॥८४॥ दुर्वाक्यं न वदेत्क्वापि व्यासं विष्णुस्वरूपिणम् ॥ शयानाः परिशृण्वंतो भवंत्यजगराननाः ॥ ८५ ॥ असंप्रणम्य शृण्वंतो वृक्षत्वं यांति मानवाः ॥ शास्त्रवक्तरि चायाते उत्थातव्यं पुरःस्थितैः ॥ ८६ ॥ वक्त्रा समं न चैवोच्चं श्रोतॄणामासनं वरम् ॥ समासनात्पुण्यहानिरुच्चाच्च निरयं व्रजेत् ॥ ८७ ॥ श्रोतव्यं मौनमाश्रित्य नरैर्नियतमानसैः ॥ वाग्वादकरणाद्गाथा नीरसा जायतेतराम् ॥ ८८ ॥ कथारसविघातेन पशुयोनिमवाप्नुयात् ॥ कथायां संप्रवृत्तायामितिहासपुराणयोः ॥ ८९ ॥ योऽन्यः किंचिदपिब्रूते विना वक्तारमत्र हि ॥ स वाग्वाद इति प्रोक्तः कथारसविघातकः ॥ ९० ॥ वाग्वादात्स्यात्कथाभंगो ब्रह्महत्यासमो हि सः ॥ पृच्छेत्कथान्ते संदेहं न कथायां कदाचन ॥ ९१ ॥ श्रोता जनः कथाभंगभयान्मौनं समाश्रयेत् ॥ पाद्मे पुराणे संप्रोक्तं शंकरेण स्वयं द्विजाः ॥ ९२ ॥ वाग्देवता भवेत्क्रुद्धा कथाया भंगमात्रतः ॥ तेन जन्मांतरे मूकः पुनर्मूढस्त्रिजन्मसु ॥ ९३ ॥ वायसो वा भवेदन्यो वक्तुर्वक्ता ततो वदेत् ॥ श्रोतुर्दानमनंत्याय वक्तुर्नैव प्रतिग्रहः ॥ ९४ ॥ श्लोकैकश्रवणे यस्य रत्नकोटिर्न निष्क्रिया ॥ सर्वस्य तस्य यो वक्ता प्रतिग्राही कथं हि सः ॥ ९५ ॥ आर्षं शास्त्रं सदा श्राव्यं यदि वेदानुगं भवेत् ॥ अनार्षं[1] तु बुधैर्नैव श्राव्यं वेदानुगं यदि ॥ ९६ ॥ आर्षं यदृषिभिः प्रोक्तमनार्षं स्यात्ततोऽन्यथा ॥ कलौ तदेव शंसंति ऋषिभिर्भाषितं तु यत् ॥ येषां वेदे कथाः प्रोक्तास्ते विप्रा ऋषयः स्मृताः ॥ ९७ ॥ श्रीव्यासऋषिसंप्रोक्तं द्वादशादित्यसन्निभम् ॥ श्रीमद्भागवतं लोके तमो हंति स्वसेविनाम् ॥ ९८ ॥ नित्यं भागवतं यस्तु पुराणं पठते नरः ॥ प्रत्यक्षरं भवेत्तस्य कपिलादानजं फलम् ॥९९॥ यः पठेत्प्रयतो नित्यं श्लोकं श्लोकार्द्धमेव वा ॥ शृणोति वा नरो भक्त्या गोसहस्रफलं लभेत् ॥ १०० ॥ येऽर्चयंति गृहे नित्यं शास्त्रं भागवतं कलौ ॥ स्वर्गे प्रयांति पितरस्तेषां नैवात्र संशयः ॥ १०१ ॥ न यस्य तिष्ठते शास्त्रं गृहे भागवतं कलौ ॥ स कथं वैष्णवो ज्ञेय इत्थं प्राह स्वयं शिवः ॥ संध्यावंदनवन्नित्यं श्रोतव्यं वैष्णवैरिदम् ॥ १०२ ॥ संध्याहीनो यथा विप्रो ह्यनर्हस्सर्वकर्मसु ॥ वैष्णवोऽपि तथानर्हः श्रीमद्भागवतं विना ॥ १०३ ॥ विना दानैर्विना यागैर्विना विद्यार्चनादिभिः ॥ श्रीमद्भागवतात्सर्वं वांछितं लभते नरः ॥ १०४ ॥ कलौ नास्ति कलौ नास्ति श्रीमद्भागवतं विना ॥ श्रेयसां निगमः

१ क्लीबत्वमार्षम् ।

श्रेष्ठो विद्यते जगतीतले ॥ १०५ ॥ सर्वान्धर्मान्परित्यज्य श्रीमद्भागवतं नरैः ॥ सेवनीयं प्रयत्नेन न धर्मोस्ति ततः परः ॥ १०६ ॥ स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ॥ सर्वदानानि दत्तानि सुराः सर्वे समर्चिताः ॥ १०७ ॥ श्रुतानि सर्वशास्त्राणि येन भागवतं श्रुतम् ॥ ग्रहपीडा महामारी या पीडा प्रेतसंभवा ॥ १०८ ॥ महारोगभवा पीडा राजशत्रुभवा तथा ॥ श्रीमद्भागवतश्रावान्नश्यत्येव न संशयः ॥ १०९ ॥ ब्राह्मणो ब्रह्मवर्चस्वी क्षत्रियो विजयी भवेत् ॥ वैश्यो निधीशतां याति शूद्रः शुध्यति पातकात् ॥ ११० ॥ अध्येतव्यं ब्राह्मणेन वैश्येन क्षत्रियेण च ॥ श्रोतव्यमेव शूद्राणां नाध्येतव्यं कदाचन ॥ १११ ॥ श्रौतं स्मार्तं च वै धर्मं प्रोक्तमस्मिन् द्विजोत्तम ॥ तस्माच्छूद्रैर्विना विप्रं न श्रोतव्यं कदाचन ॥ ११२ ॥ द्विजान्योऽमंत्रयागी चाम्लेच्छः परिणयी सदा ॥ द्विजभक्तो भवेच्छूद्रस्तदन्यश्चांत्यजादिकः ॥ ११३ ॥ श्रीमद्भागवतेनैव यस्य कालो नु गच्छति ॥ जीवन्मुक्तः स विज्ञेयो देहांते कृष्णरूपधृक् ॥ ११४ ॥ दाता श्रोता च वक्ता चाऽध्येता ध्यापयिता च यः ॥ गोलोकलीलां निर्विश्य ब्रह्मसायुज्यमाप्नुयात् ॥ ११५ ॥ तिरश्चामपि दृश्यंते मानुषाणां न केवलम् ॥ भोगा भागवतप्राप्तिर्मानुषेभ्यो न चान्यतः ॥ ११६ ॥ श्रीमद्भागवतप्राप्तिर्महतां संगतो भवेत् ॥ महांतो वैष्णवा एव यतो विष्णुपरायणाः ॥ ११७ ॥ महत्त्वे कारणं वक्ष्ये संवादं गुरुशक्रयोः ॥ सर्वस्मिन्निह को ज्यायान्गुरो पृथ्वीति चेच्छृणु ॥ ११८ ॥ पृथ्वी शेषधृता स शंभुमुकुटे कैलासवासोऽप्यसौ कैलासोऽपि दशाननेन तुलितो बद्धोऽप्यसौ वालिना ॥ वाली राघवविष्णुना युधि जितो विष्णुः सतां मानसे तस्माद्विष्णुपरायणाद्गुरुतरो नान्योऽस्ति लोकत्रये ॥ ११९ ॥ विधेयः सर्वदा संगो वैष्णवेष्वेव नारद ॥ श्रीभागवतप्राप्त्यर्थं सततं बुद्धिमत्तरैः ॥ १२० ॥ श्रीमद्भागवताद्भक्तिर्भक्तेर्ज्ञानं प्रजायते ॥ ज्ञानान्मोक्षमवाप्नोति नेति वेदांतडिंडिमः ॥ १२१ ॥ संगः सर्वात्मना त्याज्यश्चेत्त्यक्तुं शक्यते न हि ॥ सत्स्वेव स विधातव्यः संतस्संगस्य भेषजम् ॥१२२॥ आयुषः क्षण एकोऽपि सर्वरत्नैर्न लभ्यते ॥ तद्वृथा नीयते मर्त्यैः श्रीमद्भागवतं विना ॥१२३॥ शक्तस्तच्छृणुयादेकः संभूय चेतरे जनाः ॥ यथाकथंचिच्छ्रवणं कर्तव्यं भुवि मानवैः ॥ १२४ ॥ चतुर्वर्गप्रदं शास्त्रं श्रीमद्भागवतं कलौ ॥ शुश्रूषयापि लभते श्रीभागवतसेविनाम् ॥ यद्यद्वांछति लोकेऽस्मिंस्तत्तदेव न संशयः ॥ १२५ ॥ चतुःश्लोकी चतुर्वेदबीजभूता चतुर्मुखात् ॥ वेदास्त एवाजायंत विष्णुनोक्ताः पुरा हृदि ॥ १२६ ॥ विधातुरिति संचिन्त्य सदा ध्येयं द्विजातिभिः ॥ श्रीमद्भागवतं शास्त्रं विहायान्यद्भ्रमावहम् ॥ १२७ ॥ ब्रह्मवर्चस्विताऽवाप्त्यै गायत्री जप्यते यथा ॥ तथेदमपि जप्तव्यं तद्रूपत्वाद्विजोत्तमैः ॥ १२८ ॥ नारद उवाच ॥ धन्योऽस्मि भगवन् विष्णो श्रावितं सुखकारणम् ॥ सर्वेषां मानवानां च सुखसाध्यं त्वया यतः ॥ १२९ ॥ नारायण उवाच ॥ कृष्णप्रियं सकलकलमषनाशनं च ज्ञानायनं परमहंसमुनिप्रियं च ॥ श्रुत्वा प्रयाति सुरवृंदनुतो

मनुष्यो वैकुण्ठधाम शुकशास्त्रसुशीलनेन ॥ १३० ॥ नातः परं कृतिजबंधविनाशकारि शास्त्रं यतो हरिरपि स्वयमेव चित्ते ॥ ध्यातुः प्रविश्य स्थिरतामुपयाति शीघ्रं तेनेदमेव सततं परिशीलनीयम् ॥ १३१ ॥ पुनः प्रोवाच भगवाञ्शृणु नारद सुव्रत ॥ यत्र भागवती गाथा सा भूमिस्तीर्थरूपिणी ॥ १३२॥ गंगा सरस्वती रेवा यमुना च विपाशिका ॥ शतद्रुः कृष्णवेणी च कौशिकी च दृषद्वती ॥ १३३ ॥ चंद्रभागा वितस्ताद्या या नद्यस्सिंधुसंगताः ॥ नदाः सर्वे कुरुक्षेत्रं प्रयागः पुलहाश्रमः ॥ १३४ ॥ सर्वे कुलाचलाः पुण्याः काशी द्वारवती तथा ॥ मायाऽयोध्याऽवंतिका च कांची मधुपुरी तथा ॥ १३५ ॥ पुष्करं भार्गवक्षेत्रं सीतारामाश्रमास्तथा ॥ पंपासरो बिंदुसरस्तथा वृंदावनं वनम्॥१३६॥एतान्यन्यानि तीर्थानि संति तत्र न संशयः॥यत्र नित्यं भागवतं पुराणं वाच्यते मुने ॥ तत्र नित्यं प्रयातॄणामेतत्तीर्थफलं भवेत् ॥ १३७ ॥ पूजानिश्छिद्रताऽवाप्त्यै विष्णोर्भागवतं मुने ॥ पुराणं वाचयेन्नित्यं तेन प्रीतो जनार्दनः ॥ १३८ ॥ द्वात्रिंशदपराधांश्च क्षमते नात्र संशयः ॥ श्रीकृष्णपूजापूर्तिस्तु विना भागवतं न हि ॥ १३९ ॥ विनापि श्रीहरेः पूजां श्रीभागवतपाठतः ॥ सांगपूजाफलं नित्यं जायते नात्र संशयः ॥ १४० ॥ व्यासासनोपविष्टस्तु विप्रो व्यासो न संशयः ॥ गुरुविप्रनृपैश्चापि वृद्धैः पितृपितामहैः ॥ पूजनीयः प्रयत्नेन तथा धर्मो न हीयते ॥ १४१ ॥ नो नमेन्नाऽशिवं चोयांन्नाभ्युत्थानं तदासनात् ॥ कुर्वीत च महाप्राज्ञ सर्वपूज्यस्तदा भवेत् ॥ १४२ ॥ शरीरयात्रा कर्तव्या हविष्यान्नेन नारद ॥ श्रोतृभिश्च तथा वक्त्रा वारमेकं दिनेदिने ॥१४३॥ नित्यं भागवतश्रावो ब्रह्मयज्ञः प्रकीर्तितः ॥ सर्वेषामेव यज्ञानां ब्रह्मयज्ञो मतोऽधिकः ॥ १४४ ॥ अस्थिराणि शरीराणि धनमायुस्तथाऽस्थिरम् ॥ इति संचिंत्य सततं कर्तव्यो धर्मसंचयः ॥ १४५ ॥ स्वर्गादिफलदा धर्माः सर्वे प्रोक्ताः पुराऽनघ ॥ स्वसर्वेष्टप्रदो धर्मः श्रीमद्भागवतश्रुतिः ॥ १४६ ॥ कथाश्रावात्परो धर्मो न भूतो न भविष्यति ॥ १४७॥ इति श्रीकौशिकसंहितायां श्रीभागवतमहात्म्ये षष्ठोऽध्यायः ॥ ६ ॥ समाप्तोऽयं ग्रन्थः ॥

१ कृतेः कर्मणो जात इत्यर्थः । २ आर्षोऽयं प्रयोगः । दुर्वचो नोदयान्न वदेच्छुभं तु वदेवेत्यर्थः । अत्र 'नाऽशिवं ब्रूयात्' इति पाठः शोभनः ।



इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासात्मजेन क्षेमराजेन स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणालयेऽङ्कयित्वा प्रकाशितम् । संवत् १९६५, शके १८३०

# श्रीमद्भागवतकथासूचीपत्रम् ।

## चतुर्थः स्कन्धः ।

| अध्यायाः । | विषयाः । |
|---|---|
| १८ | महीवचनाद्वत्सपात्रादिकल्पनया सर्वैर्महीदोहनम् |
| १९ | तस्याश्वमेधे हयापहरणादिंद्रवधोद्यतस्य पृथोर्ब्रह्मणा निवारणम् |
| २० | तद्यज्ञोद्भूतस्य विष्णोर्वरप्रदानमुभयप्रीतिसंबंधश्च |
| २१ | स्वप्रजाभ्यः पृथुना भगवद्धर्मशासनं कृतम् |
| २२ | भगवदाज्ञया गतेन सनत्कुमारेण पृथवे ज्ञानोपदेशः कृतः |
| २३ | ध्यानयोगेन त्यक्तदेहस्य सभार्यस्य पृथोर्विमानेन वैकुंठप्राप्तिः |
| २४ | पृथोः प्रपौत्रात्प्राचीनबर्हिषो दशप्रचेतसां जन्म रुद्रगीतं च |
| २५ | तपस्यत्सु प्रचेतस्सु तत्पित्रे नारदोध्यात्मपारोक्ष्यमुपादिशत् |
| २६ | पुरंजनाय देशस्य जीवस्य समृद्धित्यागात् संसृतिरुदीर्यते |
| २७ | प्रियापुत्रापदेशेंद्रियासक्त्या जीवस्य स्वरूपप्रच्युत्या कालक्रमेण जरारोगाद्यागमः |
| २८ | स्त्रीसंगात् स्त्रीत्वं प्राप्तस्य पुरंजनस्य परमात्मज्ञानोपदेशान्मुक्तिः |
| २९ | परोक्षार्थव्याख्यानेन स्त्रीसंगाद्भवे ईशसंगान्मुक्तिरितीरितम् |
| ३० | ईशाल्लब्धवराः प्राचीनबर्हिषो वार्क्षीं कन्यां परिणीय राज्यमकुर्वन् |
| ३१ | स्वसुते दक्षे राज्यधुरं न्यस्य वनं गतानां प्रचेतसां नारदोपदेशान्मुक्तिः |

## पंचमः स्कंधः ।

| अध्यायाः । | विषयाः । |
|---|---|
| १ | प्रियव्रतस्य विरक्तत्वेपि ब्रह्मणो मनोधारणार्थं राज्यकर्तृत्वं तदनु नारदोपदेशात्परमपदप्राप्तिः |
| २ | आग्नीध्रस्य स्त्रैणं गंधर्वलोकावाप्तिश्च तस्मान्नाभे राज्ञ उत्पत्तिः |
| ३ | पुत्रार्थं यजतो नाभेर्यज्ञे भगवताविर्भूय तत्प्रार्थनयात्मसदृशपुत्रदाने ऋषभावतारः |
| ४ | इंद्रेण वृष्टिप्रतिबंधे स्वयोगमाययर्षभस्य वर्षणादिचरितं तद्राज्ये प्रजानां परमनिर्वृतिश्चाख्याता |
| ५ | भरतादीनामुपदेश आत्मनश्च पारमहंस्यधर्माचरणम् |
| ६ | देहाभिमानत्यागान्निराभिमानत्वेन भुवं चरतस्तस्याग्निप्रवेशः |
| ७ | भरतेन यज्ञेश्वरस्य भगवतः स्तुतिः पश्चात्तस्य प्रव्रजनं तपश्च कथितम् |
| ८ | विष्णुं भजतस्तस्यैणसंगादेणत्वं वर्णितम् |
| ९ | तस्य तृतीयविप्रजन्मनि जडत्वेन गृहीतस्य चौरैर्बलिप्रदानाद्भद्रकाल्या मोक्षः |
| १० | रहूगणेनाक्षिप्तस्यापि तथैव शिबिकावहनं तद्वाक्यं च कथितम् |
| ११ | सिंधुसौवीरपतिना पृष्टः स योगी तस्मै ज्ञानमाचष्ट |
| १२ | तत्संशयापाकरणेनाज्ञाननिवृत्त्या तज्ज्ञानप्राप्तिश्च |
| १३ | अविरक्ताय ज्ञानं व्यर्थमिति प्रदर्शनार्थं भवाटव्युपदेशः |
| १४ | भवाटवीरूपकस्य वास्तवार्थकथनम् |
| १५ | भरतवंशस्य सुमत्यंतस्य वर्णनं समाप्तिश्च |
| १६ | मेरोः सर्वतो विस्तरस्य वर्णनं योजनप्रमाणादि |
| १७ | तस्माच्चतुर्दिक्षु गंगावतरणमिलावृते रुद्रेण संकर्षणस्तुतिः |
| १८ | मेरोः पूर्वदिक्क्रमतः खंडत्रयवर्णनम् |
| १९ | किंपुरुषभरतखंडवर्णनं भरतखंडश्रैष्ठ्यं च दर्शितम् |
| २० | प्लक्षादिषड्द्वीपवर्णनं षण्णां सागराणामंते लोकालोकमर्यादाविस्तारः कथितः |
| २१ | कालचक्रेण भ्रमतो रवेरन्वहं गतिमानं तद्रथवर्णनं च |
| २२ | सोमशुक्रादिग्रहाणामूर्ध्वस्थितिमानं तद्गतिश्च |
| २३ | ध्रुवपदादारभ्य ज्योतिश्चक्ररूपेण भगवतो विराड्देहकल्पनम् |
| २४ | सूर्याधस्ताद्राहोरारभ्य पातालादीनां भूविवराणां मानं लक्षणतः |
| २५ | शेषसंस्थितिस्तन्मुखज्वालादिभ्यः प्रलयप्रवर्तनम् |
| २६ | पापिनां यथायथं या नारक्यो गतयस्तासां कथनम |

## षष्ठः स्कंधः ।

| अध्यायाः । | विषयाः । |
|---|---|
| १ | भगवन्नाममाहात्म्यनिरूपणार्थमजामिलकथायां विष्णुयमदूतसंवादः |
| २ | विष्णुदूतैर्नाममाहात्म्यं यांम्यांश्श्रावयित्वा सोऽजामिलो विष्णुलोकं नीतः |
| ३ | यमेनापि वैष्णवोत्कर्षवर्णनैः स्वदूताः सांत्विताः |

## सप्तमः स्कंधः ।



## अष्टमः स्कन्धः ।

अध्यायाः । विषयाः ।

## दशमः स्कन्धः ।

अध्यायाः । विषयाः ।

## एकादशः स्कन्धः ।



## द्वादशः स्कंधः ।

 **इति भा० सूची समाप्ता ॥**

श्रीगणेशाय नमः ॥ अथ श्रीमद्भागवतकथाश्रवणपद्धतिः प्रारभ्यते ॥ धर्मार्थकाममोक्षाणां सुगमोपायं जिज्ञासुरुद्धवः कदाचिद्बृहस्पतिम्पप्रच्छ—गुरो ! मन्दमत्यल्पायुषां नृणां कलौ चतुर्वर्गफलदं ह्यनायाससाध्यं किं ? तत्कृपया वदेति । तदेत्थमुद्धवेन प्रार्थितो बृहस्पतिः श्रीमद्भागवतश्रवणादि तदुत्तरत्वेनोक्तवान् । उक्तञ्च—" धर्मार्थकाम मोक्षेषु यद्यदिच्छेत्तु मानवः । तत्तत्सर्वमवाप्नोति श्रीभागवतसेवनात् ॥ " इति । किञ्च—" श्लोकं वा श्लोकमर्द्धं वा नित्यं भागवतोद्भवम् ॥ यः शृणोति पठेद्वापि सोऽश्वमेध फलं लभेत ॥ " इति, " वक्तुः कीर्तिः श्रियो लाभस्तथा श्रोतृगणस्य च । श्रीमद्भागवतेनेह फलं किंकिं न जायते ॥ " इति, " विद्याप्रकाशो विप्राणां राज्ञां शत्रुजयो विशाम् । धनं स्वास्थ्यञ्च शूद्राणां श्रीमद्भागवताद्भवेत् ॥ योषितामपरेषाञ्च सर्ववाञ्छितपूरणम् । " इति, " ऋते कृष्णप्रकाशन्तु स्वात्मबोधो न जायते । तत्प्रकाशस्तु जीवानां श्रीमद्भागवताद्भवेत् ॥ " इति क्रमेण श्लोकैरेतैश्चतुर्वर्गफलदत्वं सूचितमस्येति स्कांदादौ श्रूयते । सेवनमप्यस्य—"राजसं सात्त्विकं वापि तामसं निर्गुणन्तथा । चतुर्विधन्तु विज्ञेयं श्रीभागवतसेवनम् ॥ " इति तत्रैवोक्तम् । " सप्ताहं राजसं प्रोक्तं शोभित्वाद्बहुपूजनैः । मासर्तुना वा विंशाहैरेकाढ्यैः सात्त्विकं शुभम् ॥ समस्तानन्दहेतुत्वादथ तामसमुच्यते । वर्षेण तामसं प्रोक्तमालस्यात्स्मृतिरोधकृत् ॥ निर्गुणं तु यथेच्छं स्यात्कलौ सप्ताहकं वरम् ॥ " इत्युक्तेरवश्यं तच्छ्रवणादि कार्य्यम् । श्रवणञ्च धनसाध्यम् । सत्येकस्मिन्नसमर्थे बहुभिर्मिलित्वा कार्य्यम् " बहूनामपि श्रोतॄणां प्रेत्य तुल्यं फलं भवेत् " इत्युक्तेः । श्रवणारम्भस्तु सुमुहूर्ते कार्य्यः । तन्मुहूर्तं तु—" धर्मक्रियामुहूर्ते च श्रोतृवक्त्रोर्विधोर्बले । विद्यारम्भमुहूर्ते वा गाथारंभः प्रकीर्तितः ॥ "इति मुहूर्तविवेकोक्तेर्ज्ञेयम् । आद्यं तु—"धर्मक्रिया मित्रमृगांत्यचित्राश्रुतित्रये स्वात्यदितौ कराश्वे । पुष्ये च सौम्येषु दिनेषु शस्तेत्याहुर्मुहूर्त्तागमकोविदेन्द्राः ॥ " इति मञ्जर्य्याम् । द्वितीयन्तु—" मृगात्कराच्छ्रुतेस्त्रयेऽश्विमूलपूर्विकात्रये गुरुद्वयेऽर्कजीववित्सितेऽह्नि षट्शर त्रिके । शिवार्कदिग्द्विके तिथौ ध्रुवांत्यमित्रभे परैः शुभैरधीतिरुत्तमा त्रिकोणकेन्द्रगैः स्मृता ॥ " इति मुहूर्तचिंतामणौ । एतदुक्तमुहूर्तदिवसे । यद्वा—" हस्तादिपञ्चके पुष्ये रेवतीद्वितये मृगे । श्रुतित्रये शुभारम्भो धर्मशास्त्रपुराणयोः ॥ " इति गणपत्युक्तमुहूर्ते गुर्वादित्यमलिम्लुचाब्जेज्यभार्गवास्तविष्टयादिदोषरहितेऽवनिजागरणयुते यथोदितकालकृतचराभ्युदयिके वक्तृश्रोतृविधुवलाढ्ये पापेक्षणयुतिविधुरे शुभयुतदृष्टे शीर्षोदयादिलग्ने च धनायस्थशुभे पूर्वकृतसंवित्स्वहितैषिजनैः संभूय गीतवाद्यादिमहोत्सवपूर्वकं छत्रचामरोपशोभितं कौशेयाद्यम्बराच्छादितं शिबिकादिषु स्थापितं स्वशिरसि वा; श्रीकृष्णाराधनतत्परसौशील्यगाम्भीर्य्यानसूयादिगुणाढ्यपरानिंदादिदोषरहित सुकुलीनज्ञातवासाचारपित्रादिसर्वशास्त्रकुशलदृष्टांतप्रदर्शनपूर्वकश्रोतृबोधनदक्षयथाविधिनिजकुटुम्बपालनपरविप्रोत्तमवक्तृसहितं श्रीमद्भगवद्रूपं श्रीभागवतपुस्तकं नद्युपकण्ठोपवनदेवागारनिजागारादिरूपे गाथास्थले सुधाधवलद्रव्योपलिप्तभित्तिके नीलीरागरहितवस्त्रोल्लोचाच्छादितोपरिभूमिके गोमयगौरमृत्सोपलिप्ताधस्थले निःसारितानुपयोगिपदार्थेऽनीलवस्त्रतृणोर्णापरिष्कृतभूमिके पश्चिमदक्षिणदिक्कृतयजमानषोडशहस्तमितमण्डपान्तर्गतकदलीस्तंभहरिद्वर्णत्वक्सारनिर्मितमंगलसूत्रग्रथिताम्रपत्रतोरणपताकाखार्जू

रवस्त्रचंद्रोदयाच्छादितमनोज्ञयथोक्तवेदीयुते गाथापीठादन्यस्मिञ्शिंशपावरुणादिशुभदारुनिर्मितेऽश्वत्थपालाशाऽनिर्मिते पीठे समानीय स्थापयेत् । ततः शुक्लां
बरधरः कृतनित्यक्रियाभ्युदयिको यजमानो ब्रह्मादिसहितगणेशनवग्रहषोडशमातृसप्तचिरजीविकलशार्चनपूर्वकनरनारायणगुरुवायुसरस्वतीशेषकुमारसांख्यायनपराशरबृहस्प
तिमैत्रेयोद्धवानर्चयेत् । नारदं च पृथक्पीठे सुवस्त्राच्छादितेऽर्चयेत् । ततः पीठं पुस्तकं वक्तारं च यथालब्धोपचारैरर्चयेत् । गाथानिर्विघ्नताप्तये गणेशस्तवादिजपगायत्रीद्वाद
शाक्षरजपकरणार्थं सप्त पञ्च त्रीनेकं वा यथाशक्ति ब्राह्मणान्वृणुयात् । स्थंडिले यथोक्तरूपान् ग्रहादीन् स्थापयेत्।पैत्तलादिनिर्मितस्थालादौ शुभाक्षतपुंजरूपान्वा स्थापयेत् ।
ततः संकल्पार्थं कुशत्रयजलादिताम्रादिपात्रेण हस्तेन वाऽऽदाय ॐतत्सदद्य श्रीमहाभगवतो विष्णोराज्ञया प्रवर्तमानस्य ब्रह्मणो द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे जंबूद्वीपे भारतखंडे
आर्यावर्ते विष्णुप्रजापतिक्षेत्रे वैवस्वतमनुभोग्यैकसप्ततियुगचतुष्टय्यंतर्गताष्टाविंशतितमकलिप्रथमचरणे बौद्धावतारेऽमुकवत्सरायनर्तावमुकराशिस्थितरवावमुकमास्यमुकपक्षेऽमु
कवासरनक्षत्रमुहूर्तकरणादियुतावमुकतिथावमुकगोत्रोऽमुकप्रवरोऽमुकशर्माहमतीतानेकजन्मसञ्चिताखिलदुष्कृतनिवृत्तिपुरस्सरैहिकाध्यात्मादित्रिविधतापकायिकादित्रिविधपापाप-
नोदार्थं दशाश्वमेधयज्ञजन्यपुण्यसम्यगिष्टराजसूययज्ञसहस्रपुण्यसमपुण्यचंद्रसूर्य्यग्रहणकालिकबहुब्राह्मणसंप्रदानकसर्वसस्यपूर्णसर्वरत्नोपशोभितमहीदानपुण्यप्राप्तये एतत्पुस्तकाव
स्थिताक्षरसंख्यवर्षसहस्रावच्छिन्नस्वर्गाधिकरणकवासतदुत्तरैतत्पुस्तकावस्थिताक्षरपंक्तिसमसंख्यकुलजनरकोद्धरणपूर्वकस्वर्गमनतदुत्तरैतत्पुस्तकपत्रसमसंख्ययुगसहस्रावच्छिन्नकु-
लसहितात्मीयस्वर्गाधिकरणकवासतदुत्तरैतत्पुस्तकावस्थिताध्यायसमसंख्यकल्पवैकुण्ठैश्वर्यानुभवपुरस्सरैतत्पुस्तकस्कंधसमकल्पकोटिगोलोकवासकामोऽमुकगोत्रामुकप्रवरामुकशर्म
ब्राह्मणवदनारविंदाच्छ्रीकृष्णवाङ्मयमूर्तीभूतं श्रीमद्भागवतमष्टादशपुराणप्रकृतिभूतं श्रीगोविंदप्रीत्याविर्भावकामोऽनेकश्रोतृश्रावणपूर्वकं यथासंभवदिनाद्यैः श्रोष्यामि, इति।संतती
च्छया श्रवणे तु—अतीतानंतजन्मसंपादितदुष्कृतपरिपाकवशप्राप्तजन्मांगक्रूरग्रहसूचितपत्नीवंध्यात्वकाकवंध्यात्वमृतवत्सात्वस्रवद्गर्भत्वादिरूपसंततिप्रतिबंधकदोषनिवृत्तिकाम इति
पाठयम् । पूर्वजसंबंध्यादिसद्गतीच्छया तु—स्वीयानंतदुष्कृतपरिपाकवशाप्तनानाविधदुःखक्षेत्रयोनीनां पितृणामन्यस्य वा कस्यचित्प्रेतत्वनिवृत्तिपूर्वकस्वर्गादिलोकप्राप्तिकाम इति
वाच्यम् । रोगनिवृत्त्यर्थं तु—प्राग्जन्मकृतब्रह्महत्यादिपातकोपलब्धराजयक्ष्मादिरोगनिवृत्त्यर्थमिति पठेत्।ग्रहाद्यरिष्टत्वे तु—जन्मपत्राद्यनुरोधेन वर्षमासदिनविचारवशेन दशावि
दशोपदशासु विषमस्थानस्थग्रहजन्यदुष्टफलदूरीकरणपूर्वकशुभस्थानस्थग्रहजन्यसत्फलावाप्तिकाम इति पठेत् । राजा तु—राज्याश्वगोशालादिसमृद्धिपुरस्सरमुद्गगोधूमव्रीहियवच
णकाद्यन्नस्वर्णरूप्यमणिमुक्तादिरत्नाढ्यकोशसमृद्धिपूर्वकषड्गुणसप्तप्रकृतित्रिशक्तिसंयुतात्मनः कल्याणार्थं शत्रुजयलब्धातीवयशोधाराप्रजापालनाद्यनेकगुणावाप्त्यर्थं चेति
पठेत् । ततः“—ॐ स्वस्ति नऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः॥स्वस्ति नस्ताक्ष्योंऽ अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥ १॥पयः पृथिव्यां पयऽ ओषधीषु पयो
दिव्यन्तरिक्षे पयोधाः ॥ पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ २ ॥ विष्णो रराटमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि ॥ वैष्णवमसि विष्णवे त्वा ॥३॥

अग्निर्देवता वातो देवता सूर्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवतादित्या देवता मरुतो देवता विश्वेदेवा देवता बृहस्पतिर्देवतेन्द्रो देवता वरुणो देवता ॥ ॥ ४ ॥ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः ॥ वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥ ५ ॥ विश्वानि देव सवितर्दुरितानि परासुव ॥ यद्भद्रन्तन्नऽआसुव ॥ ६ ॥ इमा रुद्राय तवसे कप र्दिने क्षयद्वीराय प्रभरामहे मतीः ॥ यथाशमसद्द्विपदे चतुष्पदे विश्वम्पुष्टं ग्रामे अस्मिन्ननातुरम् ॥ ७ ॥ एतन्ते देव सवितर्यज्ञम्प्राहुर्बृहस्पतये ब्रह्मणे ॥ तेन यज्ञमव तेन यज्ञपतिं तेन मामव ॥ ८ ॥ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञꣳ समिमन्दधातु ॥ विश्वेदेवास इह मादयन्तामो३म्प्रतिष्ठ ॥ ९ ॥ एष वै प्रतिष्ठा नाम यज्ञो यत्रैतेन यज्ञेन यजंते सर्वमेव प्रतिष्ठितम्भवति ॥ १० ॥ ॐ गणानां त्वा गणपतिꣳ हवामहे प्रियाणान्त्वा प्रियपतिꣳ हवामहे निधीनान्त्वा निधिपति ꣳ हवामहे वसो मम ॥ आहमजानि गर्भधमात्वमजासि गर्भधम् ॥ ११ ॥ नमो गणेभ्यो गणपतिभ्यश्च वो नमोनमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमोनमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमोनमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमोनमः ॥ १२ ॥ "। इति स्वस्तिवाचनं कृत्वा तत ॐ भूर्भुवः स्वः भो गणपते इहागच्छ इह तिष्ठ मम पूजां गृहाणेत्यावाह्य ॐ पाद्यार्घ्याचमनीयस्नानपुनराचमनीयानि समर्पयामि ॐ श्रीगणपतये नमः । इदमनुलेपनम्, इमानक्षतान्, इमानि पुष्पाणि, इदं दूर्वांकुरम्, इदं कौसुं भसूत्रं वस्त्रार्थे, भूषणार्थे दक्षिणाद्रव्यञ्च समर्पयामि ॐ श्रीगणपतये नमः । ततः प्रार्थयेत्—"ॐ लम्बोदरं परमसुंदरमेकदन्तं रक्ताम्बरं त्रिनयनं परमं पवित्रम् । उद्यद्दिवा करकरोज्ज्वलकायकान्तं विघ्नेश्वरं सकलविघ्नहरन्नमामि ॥ त्वां देव विघ्नदलनेति च सुंदरेति भक्तप्रियेति सुखदेति फलप्रदेति । विद्याप्रदेत्यघहरेति च ये स्तुवन्ति तेभ्यो गणेश वरदो भव नित्यमेव॥"इति । तत ॐ भूर्भुवः स्वः भो ब्रह्मविष्णुशिवसहितसूर्यादिनवग्रहा इहागच्छतेहतिष्ठत मम पूजां गृह्णीत । पाद्यादीनि पूर्ववत् । ॐ ब्रह्मणे नमः । ॐ विष्णवे नमः । ॐ शिवाय नमः । ॐ सूर्य्याय नमः । ॐ चंद्रमसे नमः । ॐ भौमाय नमः । ॐ बुधाय० । ॐ बृहस्पतये० । ॐ भार्गवाय० । ॐ शनैश्चराय० । ॐ राहवे० । ॐ केतवे नमः, इति सर्वान्संपूज्य प्रार्थयेत्—" ॐ ब्रह्मा मुरारिस्त्रिपुरांतकारी भानुः शशी भूमिसुतो बुधश्च । गुरुश्च शुक्रः शनिराहुकेतवः सर्वे ग्रहाः शांति करा भवंतु ॥"। ततः—भो गौर्यादिषोडशमातर इहागच्छत मम पूजां गृह्णीतेत्यावाह्य पाद्यादिभिरर्चयेत् । ॐ गौर्य्यै नमः । ॐ पद्मायै नमः । ॐ शच्यै नमः । ॐ मेधायै नमः । ॐ सावित्र्यै नमः । ॐ विजयायै नमः । ॐ जयायै० । ॐ देवसेनायै० । ॐ स्वधायै० । ॐ स्वाहायै० । ॐ मातृभ्यो नमः । ॐ लोकमातृभ्यो नमः । ॐ ऋष्टयै० । ॐ पुष्टयै० । ओमात्मकुलदेवतायै नमः । ततः—"गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥ ऋष्टिः पुष्टिस्तथा तुष्टिस्तथात्मकुलदेवता । इत्येता मातरः सर्वा वृद्धिं कुर्वन्तु मे सदा ॥" इति प्रार्थयेत् । ततो भो अश्वत्थामादिसप्तचिरजीविन इहागत्य मम पूजां गृह्णीतेत्या

वाह्यार्चयेत् । ॐ अश्वस्थाम्ने नमः । ॐ बलये० । ॐ व्यासाय० । ॐ हनुमते नमः । ॐ विभीषणाय० । ॐ मार्कण्डेयाय० । ॐ परशुरामाय० ॥ " ॐ—अश्वत्थामा बलिर्व्यासो हनूमाँश्च विभीषणः । मार्कण्डेयः पर्शुरामः सप्तैते चिरजीविनः॥यजमानगृहे नित्यं सुखदाः सिद्धिदाः सदा ।" इति प्रार्थयेत ॥ अथ कलशस्थापनार्थे भूमिप्रार्थना—"ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्रीं पृथिवीं यच्छ पृथिवीं माहिंठंसीः"। ततो भूस्पर्शः—"ॐ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतान्नो भरीमभिः ॥" । ततोऽष्टदलं कुंकुमाद्यैः कृत्वा—"ॐ धान्यमसि धिनुहि देवान्प्राणायत्वोदानायत्वा व्यानायत्वा दीर्घामनुप्रसितिमायुषेधां देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्वच्छिद्रेण पाणिना । चक्षुषे त्वामहीनां पयोसि" इति धान्यादिस्थापनम्।ततः—"आजिघ्र कलशं मह्या त्वा विशांत्विंदवः।पुनरूर्जानिवर्तस्व सा नः सहस्त्रं धुक्ष्वोरुधारापयस्वती पुनर्माविशताद्रयिः" इति कलशं धान्योपरि स्थापयेत् । ततः "ॐ—वरुणस्योत्तंभनमसि वरुणस्य स्कंभसर्जनीस्थो वरुणस्य ऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद"इति शुद्धोदकेन कलशं पूरयेत्।ततः—"ॐ स्थिरो भववीड्वंग आशुर्भव वाज्यर्वन्पृथुर्भव सुखदस्त्वमग्नेः पुरीषमाहण"इति कलशं दृढीकुर्यात्। ततः पूर्वे—"ओमग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्।होतारं रत्नधातमम्॥"इति मंत्रेणर्ग्वेदमावाह्यार्चयेत्।ततो दक्षिणे यजुर्वेदम्—"—ॐइषेत्वोर्ज्जेत्वा वायवस्थदेवो वः सविता प्रार्थयतु श्रेष्ठतमाय कर्मणे आप्यायध्वमघ्न्या इंद्राय भागं प्रजापतिरनमीवा अयक्ष्मामावस्तेन ईशतमाघशंठं सो ध्रुवा अस्मिन गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि "। पश्चिमे सामवेदम्—"ॐमग्न आयाहि वीतये गृणानो हव्यदातये । निहोता सदसि बर्हिषि" । उत्तरेऽथर्वणम्—" ॐ शन्नो देवीरभीष्टय आपो भवंतु पीतये । शंय्योरभिस्रवंतु नः" इति । पञ्चकलशपक्षे तु पृथक्पृथक्, कलशैकपक्षे त्वेकस्मिन्नेव चतुर्दिक्षु वेदानर्चयेत् । ततश्चूताश्वत्थन्यग्रोधोदुंबरप्लक्षाणां पल्लवान् " ॐ अश्वत्थेवो निषदनं पर्णे वो वसतिः कृत्तागोभाज इत्किलासथ यत्सनवथ पुरुषम्" इति मंत्रेण क्षिपेत्। ततः—"ॐ काण्डात्काण्डात्प्ररोहंती परुषः परुषस्परि।एवानो दूर्वे प्रतनु सहस्रेण शतेन च॥" इति दूर्वाम् । ततः—"पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ॥" इति कुशम् । ततः—"ॐ याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्ता नो मुञ्चत्वंठंहसः ॥" इति पूगफलम् । ततः—"ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । सदाधारपृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥" इति स्वर्णम्।ततः--"ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत्।दधद्रत्नानि दाशुषे॥" इति पंचरत्नम्।तच्च--"कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् । पञ्चरत्नमिदं प्रोक्तमभावे हेम निक्षिपेत्॥"। ततः—ॐ या ओषधीः पूर्वजाता देवेभ्यस्त्रियुगं पुरामनैनु बभ्रूणामहंठं शतं धामानि सप्त च॥"इति सर्वौषधीः।ताश्च—"कुष्टं मांसी हरिद्रे द्वे मुरा शैलेयचंदनम् । वचा चंपकमुस्ताश्च सर्वौषध्यो दश स्मृताः॥सर्वाभावे हरिद्रां च कलशे निक्षिपेत्सुधीः।" इति । ततः—"गंधद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥"इति गंधम् । ततः—"ॐ अक्षन्नमीमदंतह्यवप्रिया अधूषत। अस्तोषत स्वभानवो विप्रानविष्टयामती । योजात्विंद्रते

हरिः॥"इत्यक्षतान्। ततः—"श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्।इष्णन्निषाणामुम्म इषाण सर्वलोकम्म इषाण।"इति पुष्पाणि। ततः—"ॐ धूरसि धूर्वधूर्वंतं धूर्वन्तं योस्मान्धूर्वति तं धूर्व यं वयं धूर्वामः। देवानामसि वह्नितम ॰ सस्नितमं पप्रितमं जुष्टतमं देवहूतमम्॥" इति धूपम्।ततः—ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा सूर्य्यो वर्चो ज्योतिर्वर्चः स्वाहा ज्योतिः सूर्य्यः सूर्य्यो ज्योतिः स्वाहा।"इति दीपम्। ततस्तीर्थोदकम्—"ॐ पंच नद्यः सरस्वतीमपियंति सस्रोतसः।सरस्वती तु पंचधासो देशे भवत्सरित्॥"।ततो नदीसंगमोदकम्—"ॐउपह्वरे गिरीणा ॰ संगमे च नदीनां धियाविप्रोऽजायत"। ततः समुद्रोदकम्—"समुद्राय त्वा वाताय स्वाहा सरिदाय त्वा वाताय स्वाहा अनाधृष्याय त्वा वाताय स्वाहा प्रतिधृष्याय त्वा वाताय स्वाहा अवस्यवे त्वा वाताय स्वाहा शिमिदाय त्वा वाताय स्वाहा"। ततः सप्तमृदः—"ॐ स्योना पृथिवि नो भवान्नृक्षरानिवेशिनि।यच्छानः शर्म सप्रथाः"।ताश्च—"अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद् ध्रदात्। राजद्वाराद्गोकुलाच्च मृदमानीय निक्षिपेत॥"।ततो वस्त्रेणाच्छादनम्—"ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम्। देवस्त्वा सविता पुनातु वसोः पवित्रेणशतधातरेण सुप्वा कामधुक्ष्व॥"।ततः—ॐ पूर्णादर्विपरापत सुपूर्णा पुनरापत।वस्नेहविक्रीणावहाइषमूर्ज्जं ॰ शतक्रतो॥"इति मंत्रेण तण्डुलपूरितपात्रं कलशोपरि न्यसेत्। "कुंभोपरि न्यसेत्पात्रं कांस्यमृद्वेणुताम्रजम्।पूर्णं शुभ्रैस्तण्डुलैश्च ततः श्रीफलमाधरेत्॥"इत्युक्तेः। ततः—"श्रीश्च ते" इति मंत्रेण श्रीफलं स्थापयेत्।ततोक्षतैः—"मनोजूतिः"इत्यारभ्य"प्रतिष्ठितं भवतु"इत्यन्तमंत्रेण प्रतिष्ठां कुर्यात्। ततः कलशे तीर्थावाहनम्—"सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः।आयान्तु यजमानस्य दुरितक्षयकारकाः॥गायत्री चैव सावित्री शांतिः पुष्टिकरी तथा। पृथिव्यां यानि तीर्थानि कलशे संतु तानि वै॥"।ततो गंधाद्यैः कलशं संपूज्य प्रार्थयेत—"देवदानवसंवादे मथ्यमाने जलार्णवे। उत्पन्नोसि तदा कुंभ विधृतो विष्णुना स्वयम्॥त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः। त्वयि तिष्ठंति भूतानि त्वयि प्राणाः प्रतिष्ठिताः॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वञ्च प्रजापतिः। आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः॥ त्वयि तिष्ठंति सर्वेऽपि यतः कामफलप्रदाः। त्वत्प्रसादादिमं यज्ञं कर्त्तुमीहे जलोद्भव। सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा॥ ब्राह्मणैर्निर्मितस्त्वं हि मंत्रैरेवामृतोद्भवैः। प्रार्थयामि च कुम्भ त्वां वाञ्छितार्थं ददस्व मे॥ पुरा हि सृष्टश्च पितामहेन महोत्सवानां प्रथमो वरिष्ठः। दूर्वाग्रसाश्वत्थसुपल्लवैर्युक्करोतु शांतिं कलशः सवासाः॥" इति। ततः कलशे—"गणानां त्वा" इति मंत्रेण गणेशम्, "तत्त्वायामि"इति मंत्रेण वरुणं चावाह्यार्चयेत षोडशोपचारैः। "ॐ तत्त्वायामि ब्रह्मणा वंदमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणोहबोध्युरुशर्ठंसमान आयुः प्रमोषीः॥"। षोडशोपचाराश्च—पाद्यार्घाचमनीयस्नानगंधाक्षतपुष्पधूपदीपनैवेद्यतांबूलवस्त्रोपवीतदक्षिणाप्रदक्षिणापुष्पांजलयः। ततः कलशोपरि पञ्चपलमितां तन्न्यूनां वा सौवर्णीं लक्ष्मीनारायणप्रतिमां सुवर्णपट्टोपरि कुंकुमादिलिखितस्वरूपां संस्थाप्य पुरुषसूक्तेन 'विष्णोरराट' इति मंत्रेण च षोडशोपचारैरर्चयेत। "ब्रह्मसत्रं करिष्यामि तवानुग्रहतो विभो। तन्निर्विघ्नं भवेद्देव रमानाथ क्षमस्व मे॥" इति प्रार्थयेत्।

“सौवर्णी देवप्रतिमा पलपंचकृतोत्तमा।तदर्द्धा मध्यमा ज्ञेया कनिष्ठा तु तदर्द्धतः॥स्वर्णस्वर्णमिता वापि कर्तव्या वा स्वशक्तितः। दशमाषैः पलं ज्ञेयं सुवर्णं त्वथ षोडशैः॥” इति संहितोक्तेः।ततो नरनारायणावावाह्यार्चयेत् ‘नरनारायणाभ्यान्नमः’ इति मंत्रेण । ततः “यो मायया विरचितं निजमात्मनीदं खे रूपभेदमिव तत्प्रतिचक्षणाय। एतेन धर्मसदने ऋषिमूर्तिनाय प्रादुश्चकार पुरुषाय नमः परस्मै ॥ सोऽयं स्थितिव्यतिकरोपशमाय सृष्टान्सत्त्वेन नः सुरगणाननुमेयतत्त्वः । दृश्याददभ्रकरुणेन विलोकनेन यच्छ्रीनिकेतममलं क्षिपतारविंदम्॥”इति प्रार्थयेत्।ततो वक्तृश्रोतृजनसर्वविकारापनुत्यर्थं वायुमावाह्यार्चयेत्‘ॐ वायवे सर्वकल्याणकर्त्रे नमः’ इति मंत्रेण। ततः“अंतः प्रविश्य भूतानि यो बिभर्त्यात्मकेतुभिः । अंतर्यामीश्वरः साक्षात्पातु नो यद्वशे स्फुटम्॥” इति प्रार्थयेत् । ततो गुरुमर्चयित्वा प्रार्थयेत । “ब्रह्मस्थानसरोजमध्यविलसच्छीतांशुपीठस्थितं स्फूर्ज्जत्सूर्यरुचिं वराभयकरं कर्पूरकुंदोज्ज्वलम् । श्वेतस्रग्वसनानुलेपनयुतं विद्युत्प्रभाकांतया संश्लिष्टार्द्धतनुं प्रसन्नवदनं वदे गुरुं सादरम् ॥ ” ततः । सरस्वतीं श्वेतपुष्पाद्यैरर्चयित्वा “ ॐ—या कुन्देन्दुतुषारहारधवला या श्वेतवस्त्रावृता या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना । या ब्रह्माच्युतशंकरप्रभृतिभिर्देवैः सदा वन्दिता सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥” इति प्रार्थयेत् । ततः शेषं सनत्कुमारं सांख्यायनं पराशरं बृहस्पतिं मैत्रेयमुद्धवं षट् पौराणिकांश्च त्र्य्यारुणिकादीनभ्यर्च्य प्रार्थयेत्—“शेषः सनत्कुमारश्च सांख्यायनपराशरौ।बृहस्पतिश्च मैत्रेय उद्धवश्चात्र कर्मणि॥प्रत्यूहवृंदं सततं हरंतां पूजिता मया ।”इति।“त्र्य्यारुणिः कश्यपश्च रामशिष्योऽकृतव्रणः । वैशंपायनहारीतौ षड् वै पौराणिका इमे॥सुखदाः संतु मे नित्यमनया पूजयार्चिताः।” इति । ततो व्यासमावाह्यार्चयेत्। “नमस्तस्मै भगवते व्यासायामिततेजसे । पपुर्ज्ञानमयं सौम्या यन्मुखांबुरुहासवम् ॥ ” इति प्रार्थयेत् । ततः सप्ताहयज्ञोपदेष्टारं सूर्यं संस्थाप्याऽसप्तदिनपर्य्यन्तमर्चयेत् । “ लोकेश त्वं जगच्चक्षुः सत्कर्म तव भाषितम् । करोमि तच्च निर्विघ्नं पूर्णमस्तु त्वदर्चनात् ॥ ” इति संप्रार्थ्य नारदपीठं पुस्तकपीठं च युगपदेव पूजयेत् । पीठौ प्रक्षाल्याष्टदलं कमलं तदुपरि चंदनादिना कृत्वा—ओमाधारशक्तये नमः । ॐ मूलप्रकृतये नमः । ॐ क्षीरसमुद्राय नमः । ॐ श्वेतद्वीपाय०। ॐ कल्पवृक्षाय० । ॐ रत्नमंडपाय० । ॐ रत्नसिंहासनाय० । चतुर्दिक्षु च—धर्माय० । ज्ञानाय० । वैराग्याय० ऐश्वर्याय०।मध्ये—अनंताय०।महापद्माय०।आनंदमयकंदाय० संविन्नालाय।प्रकृतिमयपत्रेभ्यः०।विकृतिमयकेसरेभ्यः०।पंचाशद्वर्णबीजभूषितायै०।ॐ कर्णिकायै०।ॐ अं अर्कमंडलाय०। ॐ सं सोममंडलाय०। मं वह्निमंडलाय०। सं प्रबोधात्मने सत्त्वाय०। रं रजसे०। तं तमसे नमः। ततः क्रमेण विमलायै० । उत्कर्षिण्यै०। ज्ञानायै०। क्रियायै०। योगाय०। प्रह्व्यै० । सत्यायै० । ईशानायै० । मध्येऽनुग्रहायै० । ॐ नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय पद्मपीठात्मने नमः। ततः सुवस्त्रवेष्टितं श्रीमद्भागवतपुस्तकमादाय“ॐ—ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासा पर्वता इमे । ध्रुवं विश्वमिदं जगद् ध्रुवो राजा विशामसि ॥” इति पीठोपरि स्थापयेद्यजमानः।“मनोजूतिः” इति मंत्रेणावाहनीस्थापिनीसंनिधापिनीसंरोधिनीसंमुखप्रार्थनाचक्रगरुडधेन्वाख्या नव मुद्राः संप्रदर्श्य पुरुषसूक्तेन षोडशोपचारैः, श्रीकृष्णमंत्रेण ‘ नमोऽस्त्वनंताय—’ इत्यनेन वा पुस्तकं पूज

येत् । ततो नारदं श्वेतवस्त्राच्छादितपीठोपरि संपूजयेत् । ‘ ॐ सुरर्षिवरनारदाय नमः ’ इति मंत्रेणाभ्यर्च्य प्रार्थयेत्–“ नमस्तुभ्यं भगवते ज्ञानवैराग्यशालिने । नारदाय सर्व लोकपूजिताय सुरर्षये ॥ ” इति । ततो यजमानः पुष्पचन्दनतांबूलवस्त्रदक्षिणापूगफलडोरकान्यादाय–ॐ अद्यामुकगोत्रममुकप्रवरममुकशर्माणं ब्राह्मणमेभिर्वरणद्रव्यैः सर्वेष्टदश्रीमद्भागवतवक्तृत्वेन त्वामहं वृणे । वृतोऽस्मीति वक्ता वदेत् । पुनस्तथैव तान्यादाय--अमुकगोत्रानमुकप्रवरानमुकशर्मणो यथासंख्याकान् ब्राह्मणानेभिर्वरणद्रव्यैर्गाथा विघ्नापनोदार्थं गणेशगायत्रीवासुदेवमंत्रजपकर्तृत्वेन वो विभज्य वृणे । वृताः स्म इति जपितारो ब्रूयुः । ततः प्रथमं वक्तृकरे वरणद्रव्यमध्यतो डोरकमादाय बध्नीयात् । वक्ता च “ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् ॥ दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥ ” इति पठेत् । एवं पृथक्पृथग्जपकर्तृकरेषु रक्षां बद्ध्वाः “ पूर्वे नारायणः पातु वारिजाक्षश्च दक्षिणे । पश्चिमे पातु गोविंद उत्तरे मधुसूदनः ॥ ऐशान्यां वामनः पातु चाग्नेय्यां च जनार्दनः । नैर्ऋत्यां पद्मनाभश्च वायव्यां माधवस्तथा ॥ ऊर्ध्वं गोवर्द्धनधरो ह्यधस्ताच्च त्रिविक्रमः । रक्षाहीनं तु यत्स्थानं तत्सर्वं रक्षतां हरिः ॥ ” इति पीताक्षतान्विकिरेत् । ततो यजमानकरे “ येन बद्धो बली राजा दानवेन्द्रो महाबलः । तेन त्वां प्रतिबध्नामि रक्षे मा चल मा चल ॥ ” इति रक्षां बद्ध्वा “ आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः । तिलकं ते प्रयच्छंतु धर्मकामार्थ सिद्धये ॥ ” इति मंत्रेण तिलकं कुर्यात् । ततो वक्ता द्विजवृद्धाज्ञया विप्रान्नत्वा गुरुपदं ध्यात्वा ‘ ॐ व्यासासनाय नमः ’ इति मंत्रेण गंधाद्यर्चितासनोपरि उपविश्य गणेशनारदादीन्मनसा गंधाद्यैर्वार्चयेत् । ततो गंधपुष्पतुलसीदलदक्षिणाद्यैः पुनः पुस्तकमभ्यर्च्य ‘ नमः पुराणपुरुषोत्तमाय ’ इति मंत्रेण । वक्तारं गंधपुष्पाद्यैः “ जयतु पराशरसूनुः सत्यवतीहृदयनंदनो व्यासः । यस्यास्यकमलगलितं वाङ्मयममृतं जगत्पिबति ॥ ” इति मंत्रेणाभ्यर्च्य “ शुकरूप प्रबोधज्ञ सर्वशास्त्रविशारद । एतत्कथाप्रकाशेन मदज्ञानं विनाशय ॥ संसारसागरे मग्ने दीनं मां करुणानिधे । कर्मग्राहगृहीतांगं मामुद्धर भवार्णवात् ॥ ” इति संप्रार्थ्य “ श्रीमद्भागवताख्यं त्वं प्रत्यक्षः कृष्ण एव हि । स्वीकृतोऽसि मया नाथ मुक्त्यर्थं भवसागरे ॥ मनोरथो मदीयोयं सर्वथा सफलस्त्वया । निर्विघ्नेनैव कर्तव्यो दासोहं तव केशव ॥ ” इति मंत्राभ्यां श्रीफलं समर्पयेत् । ततो वृद्धेभ्यो गृहीताज्ञो नरनारायणादीन्संस्मृत्य पूर्वाभिमुख उदङ्मुखो वा “ श्रूयतां देवदेवेश नारायण जगत्पते । त्वदीयेनाभिधानेन कथयिष्ये शुभां कथाम् ॥ ” इति श्लोकञ्च पठित्वा वक्ता शनैःशनैर्गाथां कथयेत् । श्रोतारश्चैकवारं हविष्यान्नभुजः पतितदुर्जनाद्यालापसंगतिमकुर्वाणाः स्वीकृतब्रह्मचर्या अधःशायिनः कथैकचित्ता वक्त्रभिमुखं यत्यादयो यथाधिकारमूर्द्धाधोभावेन पूर्वोपकल्पितसत्यादिलोकाख्यसप्तपंक्त्युपविष्टा अन्योन्यमभाषमाणाः शृणुयुः । सत्यादिकल्पना चेत्कथम्–वक्तुः संमुखं पंक्तिसप्तकं कार्यम् । तत्र प्रथमपंक्तिः सत्यलोकाख्या तस्यां संन्यासिन उपविशेयुः, द्वितीया तपोलोकाख्या तस्यां वानप्रस्थाः, तृतीया जनलोकाख्या तस्यां ब्रह्मचारिणः, चतुर्थी महर्लोकाख्या तस्यां ब्राह्मणाः, पञ्चमी स्वर्लोकाख्या तस्यां क्षत्रियाः, षष्ठी भुवर्लोका

ख्या तस्यां वैश्याः, सप्तमी भूर्लोकाख्या तस्यां शूद्राश्चोपविश्य शृणुयुः । स्त्रियश्च वामपार्श्वे उपविश्य शृणुयुः । अन्ये च ये गाथायां प्रवर्तमानायामागतास्ते दक्षिणपार्श्वे स्थित्वा शृणुयुः । साधवो विरक्ताः संबंधिनो मित्रादयश्च पत्रिकाप्रेषणपूर्वकमाह्वेयाः । समागतानाञ्च तेषां यथाधिकारं सेवा कार्या । या च माहात्म्ये—"ऊर्द्ध्वं सप्तैव लोकाश्च कल्पनीयाः प्रयत्नतः " इत्युक्तिस्तामाश्रित्य केचिन्नालिकेरैरुद्ध्वाधोभागेन लोकसप्तकं कौसुंभसूत्ररचनया कुर्वंति तद्वरं न प्रतीयते, वक्तृत उच्चासने श्रोतुर्दोषश्रुतेः " समासनात्पुण्यहानिरुच्चाच्च निरयं व्रजेत् " इति पाद्मात । किञ्च—अर्जुनाय गीतामुपदिशतः श्रीकृष्णादुच्चासनं ध्वजमधिष्ठितवता हनुमतापि श्रुता, श्रवणान्ते ध्वजादुत्तीर्य हनुमानप्यर्जुन इव श्रीकृष्णं प्रणनामोवाच च—भगवन्नर्जुनवदहमपि भवच्छिष्योऽस्मि, मयाप्युपरिस्थेन श्रीमन्मुखाद्गीता श्रुतेति । तदाकर्ण्य हनुमते श्रीकृष्णो महदनुचितं कृतवानसीत्युवाच, न ह्ययं श्रोतृणां धर्मो यद्वक्तुरुच्चासने स्थित्वा श्रवणमित्यतस्त्वं पिशाचो भवेति तं श्रीकृष्णः शशाप । शापान्तस्तु पुनः प्रसादितश्रीकृष्णोक्त्या गीताभाष्यकृतेर्जातः, भाष्यश्च तत्पिशाचभाष्यनाम्ना प्रसिद्धमिति तत्रैव श्रूयते । किंच—प्रतिस्कंधसमाप्तौ गंधपुष्पनैवेद्यदक्षिणादिभिः पुस्तकमर्चयेत् । द्वादशघृतवर्तिभिर्नीराजनम् । " ॐ आरात्रिपार्थिव ७ं रजः पितुरप्रापधामभिर्दिवः सदा ७ं सिबृहतीव्यतिष्ठति अत्त्येषंविस्तृतं मम ":इति मंत्रेण कुर्यात् । शुकागमनप्रयाणश्रीकृष्णाविर्भावसमये त्ववश्यं कुर्यात् । किञ्च—समाप्तिसमये देववस्त्रभूषामुद्रिकायास्तु श्रीशुकगमनसमय एव समर्पयेत्; तत्रैव समाप्तत्वाच्छास्त्रस्य, ' कुर्यात्समाप्तिं शुकसंप्रयाणे ' इति संहितोक्तेः । स्कंधांते तु पुष्पाद्यैः पुनरर्चयेत् ; वक्तारं पुस्तकञ्च । यद्वा—सर्वं स्कंधांत एवं कुर्यात् । देयसमर्पणमंत्रस्तु—" त्वदीयं वस्तु गोविंद तुभ्यमेव समर्पितम् । गृहाण संमुखो भूत्वा प्रसीद परमेश्वर ॥" इति ॥ किञ्च—वक्तारं निकषा तत्तुल्यः कश्चिद्विद्वाञ्श्रोतृजनसंदेहापनोदनार्थमुपविशेत्, स चापि तथोत्तरं दद्याद्यथा गाथायां कोलाहलो न भवेत् । सूर्योदयादारभ्य सार्द्धयामत्रयं मध्याह्ने मुहूर्तविरामपूर्वकं गाथां कुर्यात् । गाथामासाश्च—"चैत्रं पौषं च संत्यज्य शेषाः सप्ताहकर्मणि । शुभा मासा रुचिर्यद्वा यत्र मासे प्रजायते ॥" इति संहितोक्तेः । पाद्मे मासोल्लेखस्तु कामनापरः—" एते मासाः कथारंभे श्रोतॄणां मोक्षसूचकाः " इत्युपलक्षणीभूतमोक्षशब्देन कामश्रुतेः । " निष्कामस्तु सदा कुर्याच्छुभं कर्माखिलं नरः " इति स्मृतेश्च । किंच—प्रातरारम्भकाले कथोत्थाने च नीराजनं प्रत्यहं कुर्यात्, " कथारंभे कथोत्थाने नित्यं नीराजनं चरेत् " इति संहितोक्तेः । सायमुत्थानावसरे विविधमंगलगायनं जयध्वनिञ्च कृत्वा प्रसादतुलसीपत्रादिकमादाय स्थानांतरे तत्रैव वा तिष्ठेयुः श्रोतारः । कथाविश्रमस्त्वन्वहं यथोक्तस्थले एव कार्यः । तदुक्तं संहितायाम्—" मनुकर्दमसंवादपर्य्यंतं प्रथमेऽहनि । भारताख्यानपर्य्यंतं द्वितीयेऽहनि वाचयेत् ॥ तृतीये दिवसे कुर्यात्सप्तमस्कंधपूरणम् । कृष्णाविर्भावपर्य्यंतं चतुर्थे दिवसे वदेत ॥ रुक्मिण्युद्वाहपर्य्यंतं पचमेऽहनि शस्यते । श्रीहंसाख्यानपर्य्यंतं षष्ठेऽह्नि प्रवदेत्सुधीः ॥ सप्तमे तु दिने कुर्यात्पूर्तिम्भागवतस्य वै । एवं निर्विघ्नतासिद्धिर्विपर्यय इतोऽन्यथा ॥ " इति । केचित्तु—" द्वैपायनं नमस्कृत्य शुकदेवं च भक्तितः । हिरण्याक्षवधं यावत्प्रथमेऽह्नि प्रकीर्त

येत् ॥ चरितं भरतस्याथ द्वीतीयेथ तृतीयके । समुद्रमथनं यावद्यत्र कूर्मः स्वयं हरिः ॥ चतुर्थे दशमे कृष्णजन्म यावत्प्रकीर्तयेत् । पंचमेऽह्निपठेद्विद्वान्रुक्मिण्या हरणावधि ॥ षष्ठे चोद्धवसंवादं सप्तमेऽह्नि समापयेत् ॥ अध्यायं पूर्य विरमेन्न तु मध्ये कदाचन । कृते विरामे मध्ये तु पठेच्च पुनरादितः॥ स्कंधस्यायंतपद्यं हि द्विस्त्रिरुच्चारयेत्ततः ” इति । सर्वसमाप्तौ विरक्तश्रोतॄन् गीतां श्रावयेत् । गृहस्थानां तु गृहे प्रतिश्लोकं दशमस्य जुहुयात्—पायसेन त्रिमधुरैर्वा तिलाद्यैर्वा । यद्वा—अष्टादशशताहुतीर्गायत्र्या जुहुयात्, तद्रूपत्वाद्भागवतस्य । होमाऽसंभवे हवनीयद्रव्यं तन्मूल्यं वा ब्राह्मणाय दद्यात् । सर्वच्छिद्रापनोदनार्थं विष्णुसहस्रनामस्तोत्रमंते जपेत् । “ मंत्रतस्तंत्रतश्छिद्रं देशकालार्हवस्तुतः । सर्वं करोति निश्छिद्रं नामसंकीर्तनं तव ॥ ” इत्यष्टमे शुक्रोक्तेः । आभ्युदयिकं त्वेकविंशतिदिनपूर्वं कुर्यात् , “ एकविंशत्यहर्यज्ञे विवाहे दश वासराः । त्रिषट् चौलोपनयने नान्दीश्राद्धं विधीयते ॥ ”. इति स्मृतिसारात् । किंच—“ पूर्वमभ्युदयश्राद्धेऽकृते मंगलकर्मणि । तत्कालमेव तत्कार्यं सर्वं संकल्परूपतः ॥ ”,“ आमेन च तथा हेम्ना दद्यादामं चतुर्गुणम् । अथ वा हेम तन्मूल्यं पुनः कर्म समारभेत् ॥ ” इत्यादिस्मृतिसारादावुक्तेः । ‘ सप्ताहयज्ञेन पुनंति सर्वे ’ इत्यादौ यज्ञत्वेनोल्लेखाद्देवगृहप्रतिष्ठादयोऽपि यागा एव । चौलोपनयनमिति सर्वसंस्कारोपलक्षणम् । किंच-ॐ तत्सदद्येति देशकालादीनुच्चार्य्यामुकगोत्रोऽमुकप्रवरोऽमुकशर्माहं पूर्वाकृताभ्युदयिकजन्यदोषनिवृत्तिपुरस्सरं कृताभ्युदयिकसमफलावाप्तये इदं यथोद्दिष्टनानादेवताकनानाद्रव्ययुतमामान्नं सदक्षिणं तन्मूल्यमर्कदेवताकं हेम वान्यदमुकगोत्रायामुकशर्मणे एकस्मै बहुभ्यो वा विभज्य दातुमहमुत्सृजे, इति संकल्प्य श्राद्धं कुर्यात् । हविष्यान्नं तु हेमाद्रौ—“हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः । माषकोद्रवगौरादीन्सर्वाभावे विवर्जयेत् ॥” आग्नेये तु—व्रीहिषष्टिकमुद्गाश्च कलापाः सलिलं पयः । श्यामाकाश्चैव नीवारा गोधूमाद्या व्रते हिताः ॥ कूष्मांडालाबुवार्ताकपालक्यज्योत्स्निकास्त्यजेत् ।” इत्युक्तम् । धराशयनं तु—“प्रद्योतनात्पंचनगाङ्कसूर्यनवेन्दुषड्विंशति यानि भानि । शेते मही नैव गृहं विधेयं तडागवापीखननं न शस्तम् ॥” इति रत्नावल्यामुक्तम् । एतत्सर्वं प्रायः सप्ताहविषयमेव, तद्व्यतिरिक्तकथायां तु न वेदीकलशस्थापनहविष्यसेवनाद्याग्रहोऽस्ति । अन्यदा तु “मुहूर्तं द्विमुहूर्तं वा श्राव्या गाथाऽविषादिभिः” इति पुराणांतरात् । ‘विषादश्चेतसो भंगः’ इत्यमरः । शूद्रैस्तु ब्राह्मणं मुख्यं श्रोतारं प्रकल्प्य श्रोतव्यम् , “ श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः” इति स्कांदादित्यास्तां विस्तरः ॥ अथ समाप्त्यनन्तरं होमप्रकारः । स्नात्वाऽऽचम्य विष्णुं स्मृत्वा “अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा । यः स्मरेत्पुण्डरीकाक्षं सबाह्याभ्यंतरः शुचिः ॥” इति कुशोदकेनात्मानं होमसाधनद्रव्यं च सिक्त्वा—ॐ तत्सदद्य कारितसर्वेष्टदश्रीभागवतगाथासांगतावाप्तये कर्तव्यदशमस्कन्धीयप्रतिश्लोकहोमांगत्वेन कर्त्तव्याष्टादशशतसंख्याकगायत्रीहोमांगत्वेन वा निर्विघ्नार्थं गणेशादीन्यथोपलब्धोपचारैरर्चयिष्ये । ततः स्वस्तिवाचनं कृत्वा गणेशषोडशमातृब्रह्मादियुतनवग्रहोंकारवासुकिरक्षाकलशसप्तचिरजीविसप्तर्षियोगिनीनक्षत्रादीनर्चयेत् । तत ओमद्यामुकगोत्रोऽमुकशर्माहं यथासंभवपायसादिचरुणा श्रीकृष्णप्रीतये होमं

करिष्ये । ततो वरणसंभृतिमादाय ओमद्य कर्तव्यैतद्दशमस्कन्धीयप्रतिश्लोकहोमकर्मणि गायत्र्यादिहोमकर्मणि वा होमांगपाठायर्थमेभिर्वरणद्रव्यैरमुकगोत्रममुकशर्माणं ब्राह्मणं त्वामहं वृणे । वृतोऽस्मीति प्रतिवचनम् । एवमन्यानपि होतॄन् वृणुयात् । ततः कुशकण्डिका । तत्र हस्तमात्रपरिमितचतुरस्रभूमिं कुशैः परिसमुह्य तान्कुशानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य स्रुवमूलेन प्रागग्रप्रादेशमात्रमुत्तरोतरं त्रिरुल्लिख्य उल्लेखनक्रमेणानामिकांगुष्ठाभ्यां मृदमुद्धृत्य जलेनाभ्युक्ष्य नवीनकांस्यपात्रेणाग्निकोणतोऽग्निमानीय प्रत्यङ्मुखं निदध्यात् । तत्राग्निं पूजयेत् । पुनस्तद्रक्षार्थं किंचिन्नियुज्य वरणसंभृतिमादाय--ॐ तत्सदद्य कर्त्तव्यगाथांगगायत्र्यादिहोमकर्मणि कृताकृतावेक्षणरूप ब्रह्मकर्मकर्तुं(कुशकल्प्यमानं)ब्रह्माणमेभिर्वरणद्रव्यैर्ब्रह्मत्वेन त्वामहं वृणे । वृतोऽस्मीति ब्राह्मणो वदेत् । ततोऽग्नेर्दक्षिणतः शुद्धमासनं दत्त्वा तदुपरि प्रागग्रान्कुशानास्तीर्य्याग्निप्रदक्षिणं कारयित्वाऽस्मिन्कर्मणि त्वं मे ब्रह्मा भवेत्यभिधाय कल्पितासने उपवेशयेत् । ततः प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्याग्रेरुत्तरतः कुशोपरि निदध्यात् । ततः परिस्तरणम्—बर्हिषश्चतुर्थभागमादायाग्नेयादीशानांतम् , ब्रह्मणोऽग्निपर्यंतम्, नैर्ऋत्याद्वायव्यांतम्, अग्नितः प्रणीतापर्य्यंतम् । ततोऽग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं वेणीरूपकुशत्रयम्, पवित्रकरणार्थं साग्रमनंतर्गर्भकुशपत्रद्वयम्, प्रोक्षणीपात्रम्, आज्यस्थाली, संमार्जनकुशाः, उपयमनार्थं वेणीरूपकुशत्रयम्, समिधस्तिस्रः, स्रुवः, आज्यम्, षट्पंचाशदुत्तरमुष्टिशतद्वयावच्छिन्नामतण्डुलपूर्णपात्रम्, पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीयानि । अन्यदपि तदुपयुक्तमानेयं पायसत्रिमधुरादि । ततः पवित्रच्छेदनकुशैः पवित्रे छित्त्वा ते च ब्रह्मग्रंथियुते कृत्वा सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधायानामिकांगुष्ठाभ्यां गृहीतपवित्राभ्यां तज्जलं किंचित्रिरुत्क्षिप्य प्रणीतोदकेन प्रोक्षणीं त्रिरभिषिच्य प्रोक्षणीजलेनासादितवस्तुसेचनं कृत्वाऽग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रं निदध्यात् । आज्यस्थाल्यामाज्यं निरूप्याधिश्रयणम् । ततः कुशं प्रज्वाल्याज्यस्योपारि प्रदक्षिणं भ्रामयित्वा वह्नौ तं प्रक्षिप्य स्रुवं प्रतप्य संमार्जनकुशानामग्रैरंतरतो मूलैर्बाह्यतः स्रुवं संमृज्य प्रणीतोदकेनाभ्युक्ष्य पुनस्त्रिः प्रतप्य पूजितं तं स्वदक्षिणतो निदध्यात् । तत आज्यमग्नेः प्रदक्षिणं कारयित्वाऽवतार्य्याग्रे धृत्वा त्रिः प्रोक्षणीवदुत्पूयाऽवेक्ष्य सत्यपद्रव्ये तन्निरस्य पुनः प्रोक्षणीवदुत्पूय तत उत्थायोपयमनकुशान्वामहस्ते कृत्वा प्रजापतिं मनसा ध्यात्वा तूष्णीं घृताक्तास्तिस्रः समिधोऽग्नौ प्रक्षिपेत् । उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निं पर्युक्ष्य पवित्रे प्रणीतापात्रे निधाय पातितदक्षिणजानुः कुशेन ब्रह्मणान्वारब्धः समिद्धतमेऽग्नौ स्रुवेणाज्याहुतीर्जुहुयात् । आहुतिशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः । ॐ प्रजापतये स्वाहा । इदम्प्रजापतये इति मनसा। ओमिंद्राय स्वाहा । इदमिंद्राय इत्याघारौ । ओमग्नये स्वाहा। इदमग्नये । ॐ सोमाय स्वाहा । इदं सोमाय इत्याज्यभागौ। ॐ भूः स्वा० इदं भूः । ॐ भुवः स्वा० इदं भुवः । ॐ स्वः स्वा० इदं स्वः । एता महाव्याहृतयः । ॐ तन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः यजिष्ठो वह्नितमः शोशुचानो विश्वाद्वेषा ꣳसि प्रमुमुग्ध्यस्मत्स्वाहा ” इदमग्नीवरुणाभ्याम् । “ ॐ सत्वन्नो अग्नेवमोभवोतीनेदिष्ठो अस्या उषसो व्युष्टौ । अवयक्ष्वनो वरुण ꣳ

रराणोवीहिमृडीक ठं सुहवो न एधि स्वाहा ” इदमग्नीवरुणाभ्याम् । “ ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्चसत्यमित्वमयाअसि । अयानोयज्ञंवहास्ययानोधेहिभेषज ७ं स्वाहा ” इदमग्नये । “ ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महांतः । तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुंचंतु मरुतः स्वर्काः स्वाहा ” इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यः । “ ॐ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यम ७ं श्रथाय । अथावयमादित्यव्रते तवानागसोऽदितयेस्यामस्वाहा ” इदं वरुणाय । एताः सर्वप्रायश्चित्तसंज्ञिकाः । ॐ प्रजापतये स्वाहा इदं प्रजापतये इति प्राजापत्यम् । ततो दशमस्कंधीयप्रतिश्लोकहोमं गायत्र्यादिहोमं वा कृत्वा ओमग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते इति स्विष्टकृत । ततः संस्रवप्राशनमाचमनं च । तत ओमद्यैतद्गायत्र्यादिहोमकर्मणि कृताकृतावे क्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं सतंडुलपूगीफलदक्षिणप्रजापतिदैवतं यथानामगोत्राय ब्रह्मणे दक्षिणां दातुमहमुत्सृजे इति ब्रह्मणे दक्षिणां दद्यात् । ततः स्वस्तीति प्रतिवचनम् ! ततो ब्रह्मग्रंथिविमोकः । ततः “ ॐ सुमित्रियान आप ओषधयः संतु ” इति पवित्राभ्यां शिरः संमृज्य “ ॐ दुर्मित्रि यास्तस्मै संतु योस्मान्द्वेष्टि यश्च वयं द्विष्मः ” इति प्रणीतामैशान्यां न्युब्जीकुर्यात । ततः स्तरणक्रमेण बर्हिरुत्थाप्य घृतेनाभिघार्य्य हस्तेनैव जुहुयात । ॐ दे वागातुविदो गातुं वित्वागातुमिति मनसस्पत इमं देवयज्ञ ठं स्वाहा वातेधाः स्वाहा इति मंत्रेण बर्हिर्होमः । ततः पूर्वादिदिक्षु क्रमेण ओमिंद्रायेतीन्द्रं संपूज्य भो इंद्र इमं सदीपं दधिमाषबलिं गृहाण सकुटुम्बं मां रक्ष मंगलाभ्युदयं कुरु आयुःकर्ता क्षेमकर्ता भवेतींद्राय बलिं दत्त्वाऽग्नये यमाय निर्ऋतये वरुणाय वायवे कुबेरायेशानाय च पूर्वो क्तरीत्या बलिं दद्यात । पूर्वेशानयोर्मध्ये ब्रह्मणे पश्चिमनैर्ऋतयोर्मध्येऽनंताय च बलिं दत्त्वा द्वारदेशे तत्रैव वा क्षेत्रपालबलिं दद्यात । ततो नारिकेलं घृतेनापूर्य कौशेयमंगलसू त्रपुष्पमालाभिरावेष्टय गंधादिनाभ्यर्च्य “ॐ मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम् । कविठं साम्राज्यमतिथिं जनानामासन्नापात्रं जनयंतु देवाः स्वाहा ”॥ इदमग्नये । पुनर्घृतधारां स्रुवेण दद्यात । “ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारं देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्त्वा कामधुक्ष” इति मंत्रेण । ततः स्रुवेण भस्मानीय दक्षिणानामिकया ‘त्र्यायुषं जमदग्नेः’ इति ललाटे । ‘कश्यपस्य त्र्यायुषम्’ इति ग्रीवायाम् । ‘यद्देवेषु त्र्यायुषम्’ इति दक्षिणबाहुमूले । ‘तन्नो अस्तु त्र्यायुषम्’ इति हृदि । आचार्यो यजमानश्च कुर्यात् । ततः “नौमीड्य तेऽभ्रवपुषे तडिदंबराय गुंजावतंसपरिपिच्छलसन्मुखाय । वन्यस्रजे कवलवेत्रविषाणवेणुलक्ष्म श्रिये मृदुपदे पशुपांगजाय ॥ १ ॥ श्रीकृष्ण कृष्णसख वृष्ण्यृषभावनिध्रुग्राजन्यवंशदहनानपवर्गवीर्य । गोविंद गोद्विजसुरार्तिहरावतार योगेश्वराखिलगुरो भगवन्नमस्ते ॥ २ ॥ त्वं क्रतुस्त्वं हविस्त्वं हुताशः स्वयं त्वं हि मंत्रः समिद्दर्भपात्राणि च । त्वं सदस्यर्त्विजो दंपती देवता अग्निहोत्रं स्वधा सोम आज्यं पशुः ॥ ३ ॥ त्वं पुरा गां रसाया महासू करो दंष्ट्रया पद्मिनीं वारेणेंद्रो यथा ॥ स्तूयमानो नदँल्लीलया योगिभिर्व्युज्जहर्थ त्रयीगात्रयज्ञक्रतुः ॥ ४ ॥ स प्रसीद त्वमस्माकमाकांक्षतां दर्शनं ते परिभ्रष्टसत्कर्मणाम् ॥

कीर्त्यमाने नृभिर्नाम्नि यज्ञेश ते यज्ञविघ्नाः क्षय यांति तस्मै नमः॥५॥ इति पञ्चश्लोकान्पठन्नमस्कुर्यात् । तत अद्येत्याद्युक्त्वा सर्वेष्टदश्रीमद्भागवतगाथासांगतार्थकारितयथामितगणेशगायत्रीगायत्रीवासुदेवमंत्रजपदक्षिणात्वेनेमाश्चंद्रदेवताका यथासंख्याकरजतमुद्रिका यथानामगोत्रेभ्यो ब्राह्मणेभ्यो विभज्य दातुमहमुत्सृजे। ततः स्वस्तीति प्रतिवचनम् । ततो होमसांगतार्थमिदं कांस्यपात्रं तंडुलाद्यन्नोपरि वर्त्तमानं छायोपहितपञ्चरत्नाढ्यघृतपूर्णं विष्णुप्रजापतिदैवतं सर्वारिष्टनिवृत्तिपूर्वकमखिलाभीष्टावाप्तयेऽमुकगोत्रायामुकशर्मणे ब्राह्मणाय दातुमहमुत्सृजे इति । ततस्तद्दानप्रतिष्ठां दत्त्वा प्रार्थयेत–"कांस्यं ब्रह्ममयं प्रोक्तमाज्यं तेजो दिवौकसाम् । पञ्चरत्नं हरेत्पापं ततः शांतिं प्रयच्छ मे ॥१॥ दिव्यांतरिक्षभौमाद्यैर्यन्मे किल्बिषमागतम् । तच्छायापात्रदानेन विनाशमुपगच्छतु ॥ २ ॥" इति । ततो होमदशांशतर्पणतद्दशांशमार्जनतद्दशांशब्राह्मणभोजनादि कार्यम् । तर्पणन्तु–राधाकृष्णौ तर्पयामीति ॐ राधाकृष्णौ नमोऽभिषिंचामीति । ततः सर्वकर्मसांगतावाप्तये यथासंभवं पायसाद्यन्नेन द्वादश अधिकान्वा ब्राह्मणानहं भोजयिष्य इति संकल्प्य वह्निं विसर्जयेत् । "गच्छगच्छ सुरश्रेष्ठ स्वस्थानं परमेश्वर । यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन॥"इति मंत्रेण । ततः-"यान्तु देवगणाः सर्वे पूजामादाय मामिकाम् । यजमानहितार्थाय पुनरागमनाय च ॥ इत्यक्षतैर्देवान्विसर्जयेत् । ततः कलशजलेन सकुटुंबं यजमानम् "आपोहिष्ठा" इत्यादिमंत्रैरभिषिंचेत । पौराणिकैर्वा--" सुरास्त्वामभिषिंचन्तु ब्रह्मविष्णुमहेश्वराः । वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते । नारदाद्या ऋषिगणा ये चान्ये च तपोधनाः । भवन्तु यजमानस्य ह्याशीर्वादपरायणाः ॥ आखंडलोऽग्निर्भगवान्यमो वै निर्ऋतिस्तथा।वरुणः पवनश्चैव धनाध्यक्षः शिवस्तथा॥ब्रह्मा चैव तथाऽनन्तो दिक्पालाः पान्तु वः सदा।कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ॥ बुद्धिर्लज्जा वपुः शांतिः कांतिस्तुष्टिश्च मातरः । एतास्त्वामभिषिंचन्तु देवपत्न्यस्समागताः ॥ आदित्यसोमौ भौमश्च बुधजीवसितार्कजाः । ग्रहास्त्वामभिषिंचन्तु राहुकेत च पूजिताः ॥ आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः । पितरश्च प्रयच्छन्तु मंगलानि दिनेदिने ॥ द्रुमा नागास्तथा दैत्या अस्त्रशस्त्राप्सरोगणाः । सरितः सागराः शैलास्तीर्थानि जलदा नदाः ॥ एते त्वामभिषिंचन्तु धर्मकामार्थसिद्धये । " इति । ततः "आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः । तिलकं ते प्रयच्छन्तु कामधर्मार्थसिद्धये ॥ " इति मंत्रेण यजमानमस्तके तिलकं कुंकुमाद्यैः कृत्वा "येऽक्षताः क्षतहन्तारो हन्तारोऽखिलवैरिणाम् । तांस्ते मूर्ध्नि प्रयच्छामि तेन ते शं सदा भवेत ॥" इत्यक्षतांस्तिलकमध्ये विदध्यात् । ततोऽद्येत्याद्युक्त्वा कृतैतत्कर्मणः सांगतासिद्धये इमां हिरण्यमयीमग्निदेवतां तन्मूल्योपकल्पितामन्यां रजतादिरूपां वा दक्षिणाममुकगोत्रायामुकशर्मण आचार्याय तुभ्यमहं संप्रददे । ततः स्वस्तीति प्रतिवचनम् । ततः"यज्ञच्छिद्रं तपश्छिद्रं यच्छिद्रं यजने मम । अच्छिद्रं स्यात्तु तत्सर्वं भास्करस्य प्रसादतः॥" इति मंत्रं 'तद्विष्णोः' इति मंत्रं च पठेत् । "ॐ तद्विष्णोः परमं पदं सदा पश्यंति सूरयः । दिवीव चक्षुराततम्" इति कर्मच्छिद्रापनोदनार्थं पठेत । ततो मंडपादीनि तदुपकरणानि च सर्वमेव पूजोपकरणादिकं । वत्के दद्यात् " तत आशिषमादाय गमेत्तं यज्ञपूर्त्तये । तस्मिंतुष्टे यज्ञपूर्तिर्जायते नात्र संशयः ॥" इति संहितोक्तेः ।

ततः कलशोपरि वर्त्तमानं श्रीफलमादाय "यद्गाथाश्रवणेन पांडवकुलोद्भूतः परीक्षिन्नृपो लेभे दिव्यगतिं तथा च विदुरो धुंध्वादिकारी द्विजः । स्थाविर्यश्च निरस्य भक्तित नयौ प्राप्तौ पुनर्यौवनं तच्छ्रीभागवतं ददातु सततं सर्वाश्च ते सम्पदः ॥" इति पठित्वा यजमानाय दद्यात् । स च स्वपत्न्यै दद्यात् । सा च पवित्रस्थले तत्स्थापयेत् । दीनानाथानपि संतोषयेद्यथाशक्ति भूयसीदक्षिणयेति ॥ " व्यरचि शुकमुनींद्रप्रोक्तपारीक्षितस्य खरडनगरवासे विप्रवंशीधरेण । नगदिनसुकथायाः पद्धतिः सुज्ञमोदा गुरुजनकृपयैव स्कांदशास्त्रानुरोधात्॥" ॥ इति श्रीमद्भागवतश्रवणपद्धतिः ॥ ॥ अथास्य सामग्री प्रथमदिनस्य—वारुणादिपीठ एको १ महान् । द्वौ २ पीठावल्यौ । कौसुंभसूत्रग्रंथयः दश १० । कदलीस्तंभचतुष्टयम् ४ । यष्टिकाचतुष्टयम् ४ । खार्जूरवस्त्रं पञ्च ५ गजमितम् । वालुका पंचमणमिता । आम्रपत्राणि । अक्षता अर्द्धसेटकमिताः । द्विगुणं कुंकुमम् ताम्रचतुष्क ४ मितम् । श्वेतचंदनम् । नव ९ ताम्रमितं । प्रसादार्थं गुडादि । ताम्रमुद्राश्चत्वारिंश ४० न्मिताः । सरावदशकम् १० । मुद्रिका रजतस्य पञ्च ५ । महदुपधानकमेकम्, चत्वारि चाल्पानि ५ । गाथापीठार्थं खार्जूरवस्त्रतूलिकाः । पुस्तकपीठार्थं श्वेतवस्त्रं गजमितं पादाधिकम् १ । नारदपीठार्थं वस्त्रं श्वेतं तदर्द्धम् । नारिकेलषट्कम् ६ । त्रयोदश वा, द्वे वा । श्रीफलानि । कलशपञ्चकं ताम्रमयं मृन्मयं वा ५ । तदाच्छादनपात्राणि मृन्मयानि ५ । ताम्रजानि कांस्यमयानि वेणुजानि वा तण्डुलपूरितानि । तण्डुलानां दशसेटकानि १० । कौशेयवस्त्रं गजमितम् १ । सर्वौषध्यस्तदभावे हरिद्राग्रन्थयः । दूर्वाः । कुशाः । अश्वत्थाम्रप्लक्षकदंबोदुंबरपत्राणि । पंचरत्नम् । सुवर्णम् । स्वर्णमूर्तिः, पलपंचमिता । तदर्द्धा, षोडशमाषमिता वा । सप्त मृदः । पूगफलानि विंशतिमितानि । पुष्पाणि । धूपः । दीपः । तूलं दीपार्थम् । कर्पूरं नीराजनार्थम् । नीराजनपात्रम् । घंटा । शंखार्घपात्रम्, वाद्यानि च ॥ समाप्तिदिनसामग्री च—मुद्रिकाः सुवर्णमय्यो राजत्यो वा । पुस्तकवस्त्रम् । वक्तुर्वस्त्रभूषादि । प्रसादः, पुष्पमालाश्च ॥ होमसामग्री तु—पायसाभावे अष्टसेटकपरिमिता स्तिलाः । यवाः षट्सेटकमिताः । घृतं सेटकचतुष्कमितम् । छायापात्रार्थं होमार्थं च पृथगपि घृतं सपादसेटकमितम् । तण्डुलाः सेटकद्वयमिताः । खण्डः सेटकद्वयमितः । पंचखाद्याश्च सेटकद्वयमिताः । तदभावे खण्डघृतमधुरूपत्रिमधुराः । तदभावे केवलं घृतम् । पालाशसमिधो मणद्वयमिताः । वालुका मणद्वयमिताः । प्रणीतापात्रम् । प्रोक्षणीपात्रम् । आज्यस्थाली । चरुस्थाली । पूर्णपात्रं च । सर्वाणि पात्राणि तैजसानि मृन्मयानि वा । सरावदशकम् । पूर्णपात्रार्थं तंडुलाः सार्द्धमणमिताः, पुरुषाहारमिता वा । मुद्राश्चत्वारिंशत् ४० । माषवटिका एकादश दधियुताः । दीपाः ११ । कुशपुष्पधूपदीपाः । पूगफलानि पंच ५ । नारिकेलम् १ । कौशेयवस्त्रम् । तूलम् । पुष्पमाला । कुंकुमम् । चन्दनम् । श्वेतवस्त्रम् । विप्रभोजनं दक्षिणाश्च ॥ इति सप्ताहसामग्री ॥ इति श्रीपंडितवंशीधरशर्मकृता श्रीमद्भागवतसप्ताहादिकथाश्रवणपद्धतिः सम्पूर्णा ॥

१ श्रीमद्भागवतस्येत्याशयः ।

इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासात्मज—क्षेमराज—श्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्—मुद्रणालये मुद्रयित्वा प्रकाशितम् । संवत् १९६५, शाके १८३०

श्रीगणेशाय नमः ॥ गोविंदं प्रणमामि गीष्पतिसमं वित्तं भुवि प्राग्जयं स्वाभीष्टप्रदमंघ्रियुग्ममनिशं शाकंभरीयं मुदा ॥ यद्देवाः खलु पूजयंति सततं कायाऽक्रसंशांतये श्रीमद्भागवताख्यकल्पकुरुहो माहात्म्यटीकाकृते ॥ १ ॥ सर्वज्ञस्य कथं ज्ञेयोऽभिप्रायोऽल्पज्ञतः स्फुटम् ॥ तथापि प्रेमवशतो व्याख्यां कुर्मो यथामति ॥ २ ॥ व्याख्यातं बहुधा पूर्वैर्ऋषिभिः सागरोपमैः ॥ राधाकृष्णप्रसादेन व्याख्यामः पल्वलोपमाः ॥ ३ ॥ पाद्मयमाहात्म्यटीकर्जू राधाकृष्णवरेण हि ॥ श्रीराधाकृष्णप्रीत्यर्थं यथामति वितन्यते ॥ ४ ॥ श्रीभागवतमाहात्म्यं पाद्मोक्तं वर्वृतीति हि ॥ प्रसिद्धं षड्भिरध्यायैस्तद्व्याख्यानं समारभे ॥ ५ ॥ ग्रंथांतरं हि ग्रंथस्य टीकेति मुनयो जगुः ॥ तन्न:विज्ञायते सर्वैर्मच्छ्रमः सफलस्ततः ॥ ६ ॥ अथैतच्छास्त्रादौ पूर्वापरसंगतिमलभमानः शांडिल्यगोत्रो गौडधुरंधरो हरिद्वंशावतंसो:शेखावाट्यंतर्गतविजयपुरनिवासी व्राजलालीरामप्रतापशर्मा बालबोधाय श्रीमद्भागवतमाहात्म्यस्य ऋजुनाम्नीं टीकां चिकीर्षुराचार्यैरुपन्यस्तां सूतोक्तिं नमस्कारात्मकमंगलनिरूपिणीं व्याख्याति ॥ यमिति—तमानतोस्मि तस्य शरणं गतोस्मि । कथंभूतं तम्—यं द्वैपायनः द्विर्गता आपो यस्मिंस्तत् द्वीपं, तदयनं स्थानं यस्य स तथा वेदव्यासो विरहकातरः पुत्रस्यात्मनश्च विरहात्कातरो विकल उद्विग्नचित्तः—हे पुत्र इति प्लुतेनाजुहावाहूतवान् । कथं तद्विरहो जात इति संशयमपनुदन् विशेषयति—प्रव्रजंतमिति । संन्यस्य प्रयांतम्, प्रपूर्वकस्य व्रजधातोः

**श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीगुरुभ्यो नमः ॥ यं प्रव्रजन्तमनुपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहाव ॥ पुत्रेति तन्मयतया तरवोऽभिनेदुस्तं सर्वभूतहृदयं मुनिमानतोऽस्मि ॥ १ ॥**

संन्यासोर्थः ‘ मातापित्रो रुदतोः प्रव्रजति पुत्रः ’ इत्यादौ तथा दर्शनात । वैराग्यमंतरा कथं प्रव्रजनम् “ यदहरेव विरज्येत तदहरेव प्रव्रजेत ” इति श्रुतिगर्जनात् । तत्राह—अनुपेतं सर्वत्र लोकोपभोग्यवस्तुषु क्षयिष्णुत्वेन बंधनहेतुतया चासत्त्या दोषदर्शनेन संजाततीव्रवैराग्यात् संगरहितम्, एतेन वैराग्यं सूचितम् । सदसद्विवेचनद्वारा कीदृक् संन्यासी भवति, किं तेन करणीयमित्यपेक्षायां निष्क्रियत्वात्तस्य कृत्यं नास्तीति दर्शयति—अपेतकृत्यमिति । अपेतं त्यक्तं कृत्यं कर्त्तव्यमात्रं येन स तथा तम्, मुनिं मननशीलमिति तन्मयतया शुकरूपया वाण्या तरवो वृक्षा अभिनेदुः उत्तरं ददुः । किं तदित्यपेक्षायामाह—अयमिति । अयं त्वदभिमतः पुत्ररूपोर्थः पुत्रपदार्थो वा । सर्वभूतहृत् ब्रह्मभावनया तथाभूतः । यद्वा—सर्वाणि भूतानि हरत्यात्मसात्करोतीति तथा सर्वरूपः ‘ स सर्वनामा स च सर्वरूपः ’ इत्युक्तेः । हरतिरत्र स्वीकारार्थः । यद्वा—सर्वेषां भूतानां हृत्, अंतरात्मेत्यर्थः । यद्वा—ॐ तत्सदिति निर्देशात् तद् ब्रह्म स्वरूपमस्येति तन्मयो ब्रह्मरूपः शुकस्तस्य भावस्तत्ता तया ब्रह्मभावनयाऽयं सर्वभूतहृदित्युत्तरं वृक्षा ददुः । इदमत्राकूतम्—सृष्टिर्हि द्विविधा—स्थावरा जंगमा चेति । यथा स्थावरा वयम्—अयं मे पुत्रोहमस्य माता पितेति मोहशून्यास्तथा भवद्भिरपि भवितव्यमिति भावः ।

किञ्च--पुराणांगत्वादस्य तदीयमनुबंधचतुष्टयमत्राप्युन्नेयम् । तथाहि--" सर्ववेदेतिहासानां सारं सारं समुद्धृतम् " इति वचनात्, " इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत् " इत्युक्तेश्च जन्यजनकभावो बोध्यबोधकभावोङ्गाङ्गिभावो वा संबंधः । परया भक्त्या ब्रह्मात्मैकत्वं विषयः । निःशेषानर्थनिवृत्त्या कैवल्याख्यं प्रयोजनम् । तज्जिज्ञासुरधि कारीत्यलं विस्तरेण ॥ १ ॥ " कः प्रष्टा कोत्र वक्ता च संवादः कुत्र चैतयोः । एतद्वक्तुं कथाख्यानं रचयत्यादरान्मुनिः ॥ " इति भूमिकां निर्माय सूतशौनकसं वादं प्रकटयति--नैमिष इति । नैमिषे क्षेत्रे आसीनमासनोपर्यधिष्ठितं सूतं जात्या, महामतिं महती मतिर्मनीषा यस्य स तथा तम्, अगाधबुद्धिमित्यर्थः । अभिवाद्य प्रणम्य कथास्वमृतमतिमधुरं तदेव रसस्तस्यास्वादोऽवलेहनं तस्मिन् कुशलो निपुणः स तथा । कथैवामृतरसमिति वा । शौनकः शुनकस्यापत्यमब्रवीत् पृष्टवान् । एतेन सूतस्य वक्तृत्वं शौनकस्य च प्रष्टृत्वं सूचितं भवति ॥ २ ॥ शौनक उवाचेति न पुनरुक्तिदोषः, किन्तु पुराणशैलीयमिति विष्णुसहस्रनामभाष्यविवरणे आनंदगिरिणापि निरूपितमस्ति । प्रश्नमाह--अज्ञानेति । हे सूत अज्ञानमेव ध्वांतं गाढांधकारस्तस्य विध्वंसो नाशस्तदर्थं सूर्याणां कोटिरिति कोटिसूर्या तया समा तुल्या प्रभा दीप्तिर्यस्य स तथा तत्संबुद्धि रिति सांप्रदायिकाः । नव्यास्तु-कोटिश्च सूर्याश्चेति कोटिसूर्यास्तैः समा समाना प्रभा कांतिर्यस्य स तथा तत्संबोधनमिति व्याचख्युः । व्याख्यानद्वयमप्यसाधु असंभवदोषात् ।

**नैमिषे सूतमासीनमभिवाद्य महामतिम् ॥ कथामृतरसास्वादकुशलः शौनकोऽब्रवीत् ॥ २ ॥ शौनक उवाच ॥ अज्ञानध्वांतविध्वंसकोटिसूर्यसमप्रभ ॥ सूताऽऽख्याहि कथासारं मम कर्णरसायनम् ॥ ३ ॥ भक्तिज्ञानविरागाप्तविवेको वर्धते कथम् ॥ मायामोहनिरासश्च वैष्णवैः क्रियते कथम् ॥ ४ ॥**

"संतापनं कोटिधनुर्धराणाम् " इत्यादौ संख्यावाचककोटिशब्दस्य पूर्वं पाठः । " प्राक् पूजितो ब्राह्मणकोटिगण्यः " इत्यत्राग्रगण्य इत्यर्थादुत्तरपदे कोटिशब्दोऽग्रभागवा चीति वेदार्णवे सनत्कुमारोक्तिस्ततः प्रमाद एवायमिति । 'सूर्यकोटिसमप्रभ' इति पाठः साधुः । "आदित्यो वै यूपः" इतिवदर्थवादमात्रमेतदिति केचित् । गुरवस्तु--सूर्यस्य सूर्यकांत मणेः कोटिरग्रभाग इति कोटिसूर्यस्तेन समा सदृशी प्रभा दीप्तिर्यस्य स तथा तत्संबोधनमित्याहुः । कथासारं त्वमाख्याहि कथय । " कथा बहुविधा लोके तासु सारो निगद्यताम् " इत्युक्तेः । मम कर्णयो रसायनं प्रियम् । ' यन्नः ' इति पाठे नोऽस्माकं श्रोतृबाहुल्याभिप्रायेण बहुवचननिर्देशः । यद्यपि ' नृत्ये गीतं रसायनम् ' इति कामशास्त्रे, तथापि तस्य प्रमादहेतुत्वेनानर्थसूचकत्वान्नात्रोपयोगः । ऋषीणां नोऽस्माकं कर्णरसायनमिति विशेषणबलेन तन्निरासाच्च ॥ ३ ॥ किञ्च--पूर्वोत्तरविभागाभ्यां प्रश्नद्वयं पुनः करोति--भक्तीति । " भक्तिज्ञानविरागाणां प्रवाहो वर्द्धते कथम् " इति पाठे तु सुगमोर्थः । यथाश्रुतपाठे तु भक्तिज्ञानविरागाणाम् आप्तो यथार्थो विवेक इत्यर्थे स्वारस्यम् । " का भक्तिर्वास्तवी ज्ञानं वास्तवं किं विरागकम् " इति फलितार्थात् । कथं वर्द्धते, जायत इत्यर्थः । " भक्तिज्ञानविरागाणां बलं च वर्द्धते कथ

मू" इति पाठो गुरुसंप्रदायतः साधुरिति द्वितीयः प्रश्नः । वैष्णवैः " विष्णवर्पिताखिलाचारास्ते हि वै वैष्णवाः स्मृताः " इत्युक्तलक्षणैः मायया माहाऽविवेकः तस्य निरासो निवृत्तिः कथं क्रियते । मायासु मोह इति केचित् । इति तृतीयः प्रश्नः ॥ ४ ॥ किञ्च–इहेति–इह भरतखंडे, युगव्यवहारस्यात्रैव परिचारादिति हनमदुक्ति भीमसेनं प्रति वनपर्वणि । घोरे भयंकरे कलौ कलियुगे प्राप्ते सति । ' प्रायः ' इति पाठे इहास्मिन् घोरे कलौ कलियुगे जीवो देही प्रायो बाहुल्येनासुरतामसुरभावं गतोऽस्ति। असुरभावेन च बहुतरपापकरणान्नानाक्लेशाः संभवंतीत्यतः क्लेशैर्दुःखैराक्रांतस्य व्याप्तस्य तस्यैव जीवात्मनः शोधने परायणं साधनं किमिति चतुर्थः प्रश्नः ॥ ५ ॥ पुनर प्याह–श्रेयसामिति । श्रेयसां कल्याणानां मध्ये परं यत् श्रेयो भवेत निर्धारणात् परत्वलाभः । पावनानां पवित्रं कुर्वतां शुद्धिहेतूनां मध्ये परमं पावनं भवेत, यच्च कृष्णस्य प्रातिकरं भवेत, तत्साधनं शश्वत नैरंतर्येणाधुनेदानीं त्वं वदेति सप्तमः प्रश्नः ॥ ६ ॥ " नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः " इति वचनात् तूष्णींभूते स्वसरलता प्रदर्शनपूर्वकं गुरुभावमाविष्कुर्वंस्तदुत्तरसामर्थ्यं सूचयति–चिंतामणिरिति । " यस्य कांतिलवस्पृष्टं कांस्यं ताम्रमयस्त्रपु । पाषाणादिकमन्यद्वा सर्वं भवति कांचनम् । चिंता

इह घोरे कलौ प्राप्ते जीवश्चासुरतां गतः ॥ क्लेशाक्रान्तस्य तस्यैव शोधने किं परायणम् ॥ ५ ॥ श्रेयसां यद्भवेच्छ्रेयः पावनानां च पावनम् ॥ कृष्णप्रातिकरं शश्वत्साधनं तद्वदाधुना ॥ ६ ॥ चिंतामणिर्लोकसुखं सुरेन्द्रः स्वर्गसंपदम् ॥ प्रयच्छति गुरुः प्रीतो वैकुण्ठं योगिदुर्लभम् ॥ ७ ॥ सूत उवाच ॥ प्रीतिः शौनक चित्ते ते यतो वच्मि विचार्य च ॥ सर्वसिद्धान्तनिष्पन्नं संसारभयनाशनम् ॥ ८ ॥ भक्त्योघवर्धनं यच्च कृष्णसंतोष हेतुकम् ॥ तदहं तेऽभिधास्यामि सावधानतया शृणु ॥ ९ ॥

मणिः स विज्ञेयो मुनिभिः सिद्धिसाधनः ॥ " इति ब्रह्मोत्तरखंडे चिंतामणिप्रभाव उक्तः । भाषायाम् ' पारस ' इति । लोकस्य जनस्य सुखं लोके वा सुखं संपदादि प्रयच्छति ददाति । प्रपूर्वस्य दाण्धातोर्दानार्थत्वात् । सुराणामिंद्रः सुरेंद्रः प्रीतः स्वर्गसंपदं ददाति । गुरुः प्रीतः सन् ज्ञानोपदेशात् योगिभिरपि दुर्लभं दुष्प्रापं वैकुंठं निश्चलं सनातनं स्थानं ददाति । " आभूतसंप्लवं स्थानममृतं तं सनातनम् " इत्युक्तेः ॥ ७ ॥ अथ साधुभावनया पृष्टः सूत एकेनैव वस्तुना सर्वप्रश्नोत्तरं दातुं प्रति जानीते–प्रीतिरिति सार्धैस्त्रिभिः । हे शौनक ते तव चित्ते प्रीतिरस्त्यतोऽस्माद्धेतोर्विचार्य विचारं कृत्वा वच्मि अहं ब्रवीमि । च एवार्थे । सर्वेषु शास्त्रेषु ये सिद्धांताः, सर्वे च ते सिद्धांताश्चेति तथेत्येके।तेभ्यो निष्पन्नमुत्पन्नम् अर्थात परमसिद्धांतमिति प्रथमप्रश्नोत्तरम्।तत्र हेतुः–संसारभयनाशनमिति । संसारे जगति यद्भयं शत्रुराजग्रहापदा दिभिस्तस्य नाशनमिति सगुणोपासकाः । निर्गुणोपासकास्तु–संसरति जीवोऽनेनेति संसारो मूलाज्ञानं तस्य नाशनमित्याहुरिति तृतीयप्रश्नोत्तरम्॥८॥ किञ्च–भक्तेरोघः पूरः

प्रवाह इति यावत् । तस्य वर्द्धनं वृद्धिकरम्, उपलक्षणमेतज्ज्ञानवैराग्ययोरपि । एतेन द्वितीयप्रश्नाय दत्तोंजलिः । यच्च कृष्णस्य संतोषः संतुष्टिः संप्रीतिस्तस्य हेतुकं हेतुः-इति कृष्णप्राप्तिकरणसाधनोत्तरम् । चकारात् परं श्रेयः परं पावनमपीदमेवेति ध्वनितम् । तत् ते तुभ्यमहमभिधास्यामि कथयिष्यामि । सावधानतया समाहितमनसा त्वं शृणु ॥ ९ ॥ किं तदित्यपेक्षायामाह—कालेति । श्रीमद्भागवतं शास्त्रं भवति कलौ अंत्ययुगे नान्यदित्यर्थः । कृतादित्रिके ज्ञानवैराग्ययोः प्राबल्यात् । केनोक्तमिदं तत्राह—कीरेण शुकेन भाषितं कथितम् । किमर्थमित्यत आह—कालेति । काल एव व्यालः सर्पस्तस्य मुखे ग्रासो जगतो निगरणम् 'कालो जगद्भक्षकः' इत्युक्तेः । तस्मात्त्रास उद्वेगस्तस्य निर्णाशो निश्चयेन नाशः क्षयस्तस्य हेतवे तदर्थम् ॥ १० ॥ एतदेवोत्तमं सर्वत इत्याह—एतस्मादिति । एतस्माच्छ्रीमद्भागवताच्छास्त्रा दपरमन्यत् किंचित् किमपि न विद्यते नास्ति, इदमेवेत्यर्थतः सिद्धम् । मनःशुद्धया इति—मनसः शुद्ध्यै शोधनाय । पूर्वपुण्यमंतरैतत्प्राप्तिर्नास्तीत्याह—जन्मांतर इति । यदा जन्मांतरे पुण्यं भवेत् । 'कृतम्' इति पाठः साधुः । तदा भागवतं लभेत प्राप्नुयात् ॥ ११ ॥ उक्तार्थदृढीकरणायोत्तरप्रकरणारंभ इति भणति—परीक्षित इति ।

कालव्यालमुखग्रासत्रासनिर्णाशहेतवे ॥ श्रीमद्भागवतं शास्त्रं कलौ कीरेण भाषितम् ॥१०॥ एतस्मादपरं किंचिन्मनःशुद्ध्यै न विद्यते ॥ जन्मान्तरे भवेत्पुण्यं तदा भागवतं लभेत् ॥ ११ ॥ परीक्षिते कथां वक्तुं सभायां संस्थिते शुके ॥ सुधाकुम्भं गृहीत्वैव देवास्तत्र समागमन् ॥ १२ ॥ शुकं नत्वावदन्सर्वे स्वकार्यकुशलाः सुराः ॥ कथासुधां प्रयच्छस्व गृहीत्वैव सुधामिमाम् ॥ १३ ॥ एवं विनिमये जाते सुधा राज्ञा प्रपीयताम् ॥ प्रपा स्यामो वयं सर्वे श्रीमद्भागवतामृतम् ॥ १४ ॥

सभायां गंगातीरे ऋषीणां मुनीनां समाजे शुके संस्थिते उच्चासनोपरिनिविष्टे सति । किमर्थम्-परीक्षिते परीक्षिदर्थं कथां वक्तुम् । सुधाया अमृतस्य कुंभं कलशं गृहीत्वा तत्र स्थाने देवाः समागमन् समायाता अभूवन् ॥ १२ ॥ 'लाभार्थं व्यवह्रियते' इति नीत्या स्वाभिप्रायं कथयंतीत्याह—शुकमिति । शुकं शुकदेवं नामैकदेशे नाम मात्रस्य ग्रहणात्, नत्वा नमस्कृत्य स्वकार्ये कुशला निपुणाः सर्वे समस्ताः सुरा देवा अवदन् अब्रुवन् । किमवदन्नित्यत आह—कथासुधामिति । सुधाममृतम्, इमां कलशे स्थितां गृहीत्वात्मसात्कृत्वा । एवकारेण निश्चयार्थेन कूटव्यवहारनिषेधः सूच्यते । कथासुधां कथैवामृतं प्रयच्छस्व देहि, अस्मभ्यमिति शेषः ॥ १३ ॥ सुधया किं भविष्यतीत्यत आह—एवमिति । राज्ञा द्विजकोपप्रयुक्ततक्षकमृत्युभीतेन परीक्षिता सुधाऽमृतं प्रपीयताम् । एतेन विषनिवृत्त्या जीवनलाभः सूचितः । श्रीमद्भागवतामृतं सर्वे वयं प्रपास्याम इति । एवममुना प्रकारेण स्ववस्तुदानेन परवस्त्वादानं विनिमयः । 'विनियमे' इति पाठो भ्रांत्या लेखकप्रमादाद्वोध्यस्तदर्थस्य भिन्नत्वात् । तस्मि

ज्ञाते सिद्धे सति ॥ १४ ॥ "धूर्त्ता इमे छलयितुमामायातास्तु कैतवात् । साधुवेषं समाश्रित्य बालवित्तहरा इव ॥ न मुज्ञः स्वधनं दत्ते निवर्त्स्यन्ति हतोद्यमाः ।" इति वचनान्महदंतरं विनिमये वस्तुनोर्बुद्ध्वाऽवहसतीत्याह—क्वेति । काचः क्व मणिः क्व, लोके द्वौ क्वशब्दौ महदंतरं सूचयतः । एतयोर्बह्वंतरं यथा लोके भवति तथैव सुधा क्व कथा क्वेति । सुधापायिनां देवानां पुण्यक्षये मर्त्यलोकागमनजन्ममरणादि भवति, हरिकथामृतपायिनां तु मोक्षानंदप्राप्त्या तदभाव इति महदंतरं विचार्य ब्रह्मरातः ब्रह्मणा दत्तः शुको देवान्प्रतारिणो जहास । तदा तस्मिन्समये । हेति स्फुटम् ॥ १५ ॥ किमुपहासेनेति देवानां धाष्टर्यं वीक्ष्य स्वार्थभ्रंशमाह—। न केवलहास्य मात्रं प्रत्युत कार्यभ्रंशोपि जात इत्याह—अभक्तानिति । अभक्तान् तांश्च देवान् भक्तिहीनान् सुधापानाऽप्सरःसंभोगादिनोन्मत्तत्वेन हरेर्विस्मृतित्वात्, विज्ञाय ज्ञात्वा स शुकः कथामृतं देवेभ्यो न ददौ । अत इति ज्ञायते—श्रीमद्भागवती वार्त्ता देवानामपि दुर्लभा दुष्प्रापा, किमु मर्त्यानामिति कैमुतिकन्यायसिद्धम् ॥ १६ ॥ न त्वेतावन्मा

क्व सुधा क्व कथा लोके क्व काचः क्व मणिर्महान् ॥ ब्रह्मरातो विचार्येति तदा देवाञ्जहास ह ॥ १५ ॥ अभक्तांस्तांश्च विज्ञाय न ददौ स कथामृतम् ॥
श्रीमद्भागवती वार्ता सुराणामपि दुर्लभा ॥ १६ ॥ राज्ञो मोक्षं तथा वीक्ष्य पुरा धातापि विस्मितः ॥ सत्यलोके तुलां बद्ध्वाऽतोलयत्साधनान्यदः ॥
॥ १७ ॥ लघून्यन्यानि जातानि गौरवेण इदं महत् ॥ तदा ऋषिगणाः सर्वे विस्मयं परमं ययुः ॥ १८ ॥ मेनिरे भगवद्रूपं शास्त्रं भागवतं क्षितौ ॥
पठनाच्छ्रवणात्सद्यो वैकुण्ठफलदायकम् ॥ १९ ॥

त्रेऽलम्बुद्धिः करणीया परमपदप्राप्तिहेतुरपीयमित्याह—राज्ञ इति । "विद्युच्चौराग्निशस्त्राहिगजसिंहादिभिर्हतः । विषादिभिर्हेतुभूतैर्मृतो न लभते गतिम् ॥ " इतिस्मृतेः । सर्पदंशेन मृतस्य परीक्षितो गतिरेव दुर्लभा किमुतेंद्रादिपदं कुतस्तरां ब्रह्मलोकः कुतस्तमां वैकुंठप्राप्तिर्मुक्तिश्च । अपीत्यत्यंतासंभावनायाम् । राज्ञो मोक्षं तथा श्रीमद्भाग वतश्रवणेन वीक्ष्य दृष्ट्वा धाता ब्रह्मा विस्मितः कथमिदं वैपरीत्यं जातमिति व्यग्रोऽभूत् । ततः किं कृतवानित्यत आह—सत्यलोक इति । अजो ब्रह्मा सत्यलोके तुलां धटं बद्ध्वा साधनानि मोक्षोपयोगीनि षट् शास्त्राणि सांगान्येकत्र भागे न्यस्य श्रीमद्भागवतं चान्यत्र अतोलयत् ॥ १७ ॥ कथमयं विभागो ज्ञात इत्यत आह—लघूनीति । अन्यानि सर्वाणि लघूनि न्यूनानि जातानि, गौरवेण हेतुनेदं भागवतं महज्जातं तेन महापुराणमिदमिति प्रसिद्धम् । तदा तस्मिन् काले सर्वे ऋषिगणाः परमं विस्मयं ययुः प्रापुः ॥ १८ ॥ ततः किं, तत्राह—मेनिर इति । भागवतं शास्त्रं क्षितौ पृथिव्यां भगवतो विष्णो रूपं मूर्तिं मेनिरे । तदुक्तं पुराणांतरे । तथाहि—" पादौ तु प्रथम

स्कंधो द्वितीयो जानुनी स्मृतः ॥ तृतीयः सक्थिनी ज्ञेयश्चतुर्थः कटिरुच्यते ॥ १ ॥ नाभिं तु पंचमं विद्याद्धृदयं षष्ठ ईरितः ॥ सप्तमस्तु उरः प्रोक्तमष्टमः कंठ उच्यते ॥ २ ॥ स्कंधौ तु नवमः स्कंधो दशमो मुखमीरितम् ॥ कर्णाक्षिनासिकायुक्तं सर्वार्थपरिपूरितम् ॥ ३ ॥ एकादशस्तूत्तमांगं द्वादशो ब्रह्मरंध्रकम् ॥ एवं भागवतं शास्त्रं विष्णुमूर्तिः प्रकीर्त्तितम् ॥ ४ ॥ " इति । पाद्मे तु किंचिद्वैलक्षण्येनोक्तमिति तत्फलमाह—पठनादिति । पठनाच्छ्रवणाच्च सद्यस्तत्काले वैकुंठफलदायकं भवति ॥ १९ ॥ तत्रापि विशेषमाह—सप्ताहेति । सप्ताहे सप्तदिने श्रवणेन सर्वथा सर्वप्रकारेणापि वा मुक्तिदायकं दयापरैः कृपालुभिः सनकाद्यैर्ब्रह्मपुत्रैर्नारदाय प्रोक्तं, भाग० इति शेषः ॥ ॥ २० ॥ ततः पूर्वं नारदेनेदं पुराणं न श्रुतमिति चेन्नेत्याह—यद्यपीति । ब्रह्मणः पितुः संबंधाद्यद्यपि एतत् पुराणं सुरर्षिणा नारदेन श्रुतं तथापि सप्ताहे सप्तदिने श्रवणस्य विधिर्विधानं तस्य तस्मै नारदाय कुमारैः सनकाद्यैर्भाषितः कथितः ॥ २१ ॥ उक्तसंबंधं दुर्घटं मत्वा शौनकः पृच्छति—शौनक उवाचेति । कथमुक्तः संबंधो

सप्ताहश्रवणेनैव सर्वथा मुक्तिदायकम् ॥ सनकाद्यैः पुरा प्रोक्तं नारदाय दयापरैः ॥ २० ॥ यद्यपि ब्रह्मसंबन्धाच्छ्रुतमेतत्सुरर्षिणा ॥ सप्ताहश्रवण विधिः कुमारैस्तस्य भाषितः ॥ २१ ॥ शौनक उवाच ॥ लोकविग्रहयुक्तस्य नारदस्यास्थिरस्य च ॥ विधिश्रवे कुतः प्रीतिः संयोगः कुत्र तैः सह ॥ २२ ॥ सूत उवाच ॥ अत्र ते कीर्तयिष्यामि भक्तिपुष्टं कथानकम् ॥ शुकेन मम यत्प्रोक्तं रहः शिष्यं विचार्य च ॥ २३ ॥ एकदा तु विशालायां चत्वारो ऋषयोऽमलाः ॥ सत्संगार्थं समायाता ददृशुस्तत्र नारदम् ॥ २४ ॥

दुर्घट इति जिज्ञासायामाह—लोकेति । लोकानां जनानां विग्रहो विरोधस्तस्मिन् युक्तो दैवेन नियुक्तस्तस्याऽत एवाऽस्थिरस्य एकत्र स्थातुमशक्तस्य नित्यं भ्रममाणस्य नारदस्य विधिश्रवे विधिः विधितः श्रवः श्रवणम् तस्मिन् । ( अकारांतः श्रवशब्दोत्र छांदस इत्येके ) । प्रीतिः प्रेम कुतः कस्माद्धेतोर्जाता । कुत्र स्थाने तैः कुमारैः सह संयोगः, जात इति शेषः ॥ २२ ॥ तत्संवादमवतारयितुं सत उवाचेति सूतोक्तिः । तथाहि—अत्रेति । अत्रास्मिन्संवादे शुकेन मम मह्यं यत् प्रोक्तं रहः एकांते शिष्यं शुश्रूषां करोतीति शिष्योयमिति विचार्य विचारं कृत्वाऽऽलोच्य वा । तत्ते तुभ्यं कीर्त्तयिष्यामि कथयिष्यामि । किं तत्तत्राह—कथानकम् आख्यानम् । कीदृशम्—भक्ति पुष्टं भक्तेः पुष्टं, पोषणहेतुरिति पुष्टं तत् ॥ २३ ॥ एतदेव विशदीकरोतीत्याह—एकदेति । एकदा एकस्मिन् काले विशालायां पुर्याम् । सामीप्यार्थे सप्तमीयम् । तेन विशालासमीपे बदर्याश्रमे इत्यर्थो बोध्योऽन्यथा पुर्य्यां जनसमुदायकोलाहलत्वेन सत्संगो दुर्घटः । वेदसंमितत्वादस्य पुराणस्य फलातिशयार्थमेतत्पाठस्य साधुत्वमिति संदर्भः ।

अमलाः शुद्धाः, वीतरागत्वात् । सत्संगार्थं समायातास्तत्रैवाश्रमे नारदं ददृशुः । तु शब्दोऽजितेंद्रियदुर्जनव्यावृत्त्यर्थः ॥ २४ ॥ औदासीन्येन शंकिताः पप्रच्छुः । कुमारा ऊचुरिति स्पष्टार्थः । किमित्यपेक्षायामाह—कथमिति द्वाभ्याम् । हे ब्रह्मन् कथं केन प्रकारेण भवान् दीनमुखो मलिनास्यः, अस्तीति शेषः । क्रियान्तराऽभावे प्रथमपुरुषपरावस्तिभवती अध्याह्रियेते, न हि क्रियाविनिर्मुक्तं वाक्यमस्तीति शिष्टोक्तेः । कुतः कस्मात्कारणात् । चिंतातुरः चिंतयाऽऽतुरो दुःखी । कुतः स्थानात्तवाऽऽगमनम्, जातमिति शेषः । त्वरितं शीघ्रं कुत्र स्थाने त्वया गम्यते ॥ २५ ॥ इदानीमिति पूर्वान्वयि पदम् । किञ्च—शून्यचित्तः शून्यं कर्त्तव्यहीनं चित्तं यस्य स तथा । तत्र दृष्टांतः—गतवित्तो गतं वित्तं धनं यस्य स तथा । 'धनहीनः श्वसन्मृतः' इत्युक्तेः । जनः पुंविशेषो यथा शून्यचित्तस्तद्वदिदं पूर्वोक्तं मुखम्लान्यादि मुक्तसंगस्य मुक्तस्त्यक्तः संगो गृहजनधनादीनां येन स तथा तस्य तव नोचितं न योग्यमस्ति । कारणमनुचितस्योत्पत्तौ हेतुं वद ब्रूहि ॥ २६ ॥ इति पृष्ट उत्तरं ददातीत्यार्थिकसंगत्या लभ्यते ।

**कुमारा ऊचुः[1] ॥ कथं ब्रह्मन्दीनमुखः कुतश्चिंतापरो भवान् ॥ त्वरितं गम्यते कुत्र कुतश्चागमनं तव ॥ २५ ॥ इदानीं शून्यचित्तोऽसि गतवित्तो यथा जनः ॥ तवेदं मुक्तसंगस्य नोचितं वद कारणम् ॥ २६ ॥ नारद उवाच ॥ अहं तु पृथिवीं यातो ज्ञात्वा सर्वोत्तमामिति ॥ पुष्करं च प्रयागं च काशीं गोदावरीं तथा ॥ २७ ॥ हरिक्षेत्रं कुरुक्षेत्रं श्रीरंगं सेतुबन्धनम् ॥ एवमादिषु तीर्थेषु भ्रममाण इतस्ततः ॥२८॥ नापश्यं कुत्रचिच्छर्म मनःसंतोषकारकम् ॥ कलिनाऽधर्ममित्रेण धरेयं बाधिताऽधुना ॥ २९ ॥ सत्यं नास्ति तपः शौचं दया दानं न विद्यते ॥ उदरंभरिणो जीवा वराकाः कूटभाषिणः ॥ ३० ॥**

एवमुत्तरत्रापीदं यथायथं योज्यम् । तेन नारद उवाचेत्युपन्यस्तं भगवता व्यासेन । स्ववृत्तांतमुपोद्घातत्वेन नारदो वर्णयति—अहमित्यारभ्य " तपश्चरामि चात्रेति तदर्थं कृतनिश्चयः" इत्यन्तग्रंथेन ॥२७॥ किमित्यत आह—एवमिति।इत्यादिषु तीर्थेषु। इतस्ततो यत्रतत्र भ्रममाणो भ्रमन् ॥ २८ ॥ मनःसंतोषकारकं मनसः संतोषः संतुष्टिस्तस्य कारकं कर्तृ शर्म सुखं कुत्रचित्क्वापि नापश्यमहं न दृष्टवान् । तत्र कारणमाह—कलिनेति । अधर्ममित्रेण अधर्मः पापं मित्रं यस्य स तथा तेन कलिना कलियुगेन इयं धरा कर्मभूर्बाधिता धर्मकार्याद्युच्छेदेन हिंसिता ॥ २९ ॥ तत्प्रकारं दर्शयति—सत्यमित्यादिभिः षड्भिः । सत्यं नास्ति । तप आदिषु इयमेव क्रिया । तेन तपो नास्ति, शौचं

[1] "कुमारा ऊचुरित्यत्र व्यवस्था प्रोच्यते बुधैः ।एकदा भाषणं युक्तं सर्वेषां नेति संशयात् ॥ एकैकस्य द्विरुक्तिर्हि क्रमेण परिकल्प्यते ।समूहवचनस्यायं गूढोऽभिप्राय ईरितः॥" इति गुरुसंप्रदायात् कुमारा ऊचुरिति । अन्यथा वेदस्तुत्यारंभे 'अपि चक्रुः प्रवचनमेकं शुश्रूषवो परे' इतिवद्वचनमुपलभ्येत ।

नास्तीत्यर्थः । दानं न विद्यते । जीवाः प्राणिनः उदरंभरिण उदरं भर्त्तुं शीलं येषां ते तथा, उदरभरणतत्परा इत्यर्थः । वराका अतितुच्छा अत एव कूटभाषिणो मिथ्यावादिनः ॥ ३० ॥ मंदा बुद्धिहीना मूर्खाः । सुमंदमतयः सुमंदा शतकृत्वः पाठनेऽपि श्लोकपादावधारणाऽसमर्था मतिर्येषां ते तथा, पाठकानुकूल्येप्यालस्यादिना तत्समीपे वासाभावात् कुवासनया तदुक्तानवधारणाच्च । मंदभाग्या राजाद्याश्रयत्वेपि निर्द्धना वृथोद्यमत्वात्, कृतोद्यमस्य वैफल्याच्च । उपद्रुताः जातेपि गुर्वादिसंबंधे विघ्नरोगादिग्रस्ताः । हि निश्चयेन । संतः सज्जनाः पाखंडनिरताः वेदबाह्यकर्मरक्ताः । विरक्ताः संन्यासिनः सपरिग्रहाः स्त्रीधनादिसंग्रहकारिणः ॥ ३१ ॥ गेहे गृहे तरुणीप्रभुता स्त्रीप्राधान्यम् । श्यालको भार्याभ्राता बुद्धिदायको मंत्री । लोभात् कन्याया विक्रयः धनेन सुताविक्रयणं, दानमित्यर्थः । दंपतीनां स्त्रीपुरुषाणां कल्कनं कलहः । च एवार्थे, पुनरर्थे वा ॥ ३२ ॥ आश्रमा ब्रह्मचार्यादिस्थानानि यवनैर्म्लेच्छै रुद्धा व्याप्ताः । अत्र भरतखंडे देवतायतनानि देवतानां श्रीरामकृष्णादीनामायतनानि स्थानानि मंदिराणि भूरिशो बहुशो दुष्टैर्धर्मनाशकैर्विवर्णैर्नीचैर्नष्टानि स्पर्शस्नानादिभिर्मूर्तीनां, भ्रष्टानि--कृतानीति शेषः ॥ ३३ ॥ न योगी योगसाधकः न नास्ति । सर्वत्रास्ति

मन्दाः सुमन्दमतयो मन्दभाग्या ह्युपद्रुताः ॥ पाखण्डनिरताः सन्तो विरक्ताः सपरिग्रहाः ॥ ३१ ॥ तरुणीप्रभुता गेहे श्यालको बुद्धिदायकः ॥ कन्या या विक्रयो लोभाद्दंपतीनां च कल्कनम् ॥ ३२ ॥ आश्रमा यवनै रुद्धास्तीर्थानि सरितस्तथा ॥ देवतायतनान्यत्र दुष्टैर्नष्टानि भूरिशः ॥ ३३ ॥ न योगी नैव सिद्धो वा न ज्ञानी सत्क्रियो नरः ॥ कलिदावानलेनाद्य साधनं भस्मतां गतम् ॥ ३४ ॥ अट्टशूला जनपदाः शिवशूला द्विजातयः ॥ कामिन्यः केशशूलिन्यः संभवंति कलाविह ॥ ३५ ॥ एवं पश्यन्कलेर्दोषान्पर्यटन्नवनीमहम् ॥ यामुनं तटमापन्नो यत्र लीला हरेरभूत् ॥ ३६ ॥ तत्राश्चर्यं मया दृष्टं श्रूयतां तन्मुनीश्वराः ॥ एका तु तरुणी तत्र निषण्णा खिन्नमानसा ॥ ३७ ॥

क्रियान्वयः कर्त्तव्यः । सिद्धो रसायनपुत्रादिदाता न । ज्ञानी वेदोपनिषज्ज्ञानवान् न । सत्क्रियः सती श्रेष्ठा भक्तिप्रीतिसंपन्ना क्रिया पूजादिरूपा यस्य स तथा एवंभूतो नरो न । तत्र हेतुमाह—कलीति । कलिदावानलेन कलिः कलियुगः स एव दावानलोऽग्निस्तेनाद्य इदानीं साधनं भस्मतां गतं भस्मीभूतम् । एतेनेदानीं लोके योग्यादयः सर्वे दंभिनो लोकवंचका एवेति फलितोर्थः ॥ ३४ ॥ जनपदा देशा अट्टशूला अन्नविक्रयिणः । द्विजातयो ब्राह्मणाः शिवशूला वेदविक्रयिणः । कामिन्यः स्त्रियः केशशूलिन्यो भगविक्रयिण्यः । इह लोके कलौ कलियुगे संभवंति । तदुक्तम्—"अट्टमन्नमिति प्रोक्तं शिवो वेदः प्रकीर्तितः । केशो भग इति ज्ञेयः शूलो विक्रय उच्यते ॥" इति ॥ ३५ ॥ ततः परं किं जातमित्यत आह—एवमिति । एवममुना प्रकारेण कलेर्दोषान् पश्यन्नीक्षमाण इमां महीं भूमिं पर्यटन् परिभ्रमन्सन् अहं नारदः यामुनं यमुनाया इदं तथा तटं तीरम् आपन्नोस्मि । यत्र यमुनातीरे हरेः श्रीकृष्णस्य लीला गोपीभिः सह रासमंडले क्रीडाकौतुकमभूत् ॥ ३६ ॥ तत्र कौतूहलं दृष्टमित्याह--तत्रेति त्रिभिः ।

तत्र तस्मिन् स्थाने आश्चर्यमद्भुतं मया दृष्टं, हे मुनीश्वराः तत् श्रूयताम्, भवद्भिरितिकर्तृशेषः । तथाहि--एका तरुणी युवतिस्तत्र तटे निषण्णा निविष्टा खिन्नमानसा खिन्नमुद्विग्नं मानसं मनो यस्याः सा तथा । तुना वैलक्षण्यार्थेनान्यासां तत्सहचरीणां स्वास्थ्यं सूच्यते ॥ ३७ ॥ पार्श्वे तस्या वामभागे द्वौ वृद्धौ जराग्रस्तौ पतितौ निःश्वसंतौ निश्वासं मुंचंतौ अचेतनौ जडप्रायौ चेष्टारहितत्वात् । चात्सा स्त्री चकारस्योक्तसमुच्चयार्थत्वात्, तयोर्वृद्धयोः पुरोऽग्रे रुदती रोदनं कुर्वती शुश्रूषंती सेवामाचरंती प्रबोधंती उद्बोधनं कुर्वती ॥ ३८ ॥ निजं वपुः रक्षितारम् । शीले तृन् । दशदिक्षु सर्वासु दिशासु निरीक्षंती निरीक्षमाणा । अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्याऽनित्यत्वात् । शतस्त्रीभिरत्र शतशब्दोऽनंतवाची, तेनासंख्यातनारीभिः सेव्यमानोपास्यमाना मुहुर्मुहुर्वारंवारं बोध्यमाना धैर्यं कुरु सर्वं शुभं भविष्यति हरिकृपयेत्याश्वास्यमाना ॥ ३९ ॥ ततस्तत्समीपं गतवानित्याह—दृष्ट्वेति । ऐकामित्यादिविशेष्यविशेषणवाचकानि पदानि, दृष्ट्वेतिपदसांनिध्यादिति संदर्भः । तामित्यध्याहार इति ; केचित् । तथा च—तद्दृष्ट्वा

द्वौ वृद्धौ पतितौ पार्श्वे निःश्वसन्तावचेतनौ ॥ शुश्रूषन्ती प्रबोधन्ती रुदन्ती च तयोः पुरः ॥ ३८ ॥ दशदिक्षु निरीक्षन्ती रक्षितारं निजं वपुः ॥ वीज्यमाना शतस्त्रीभिर्बोध्यमाना मुहुर्मुहुः ॥ ३९ ॥ दृष्ट्वा दूराद्गतः सोऽहं कौतुकेन तदन्तिकम् ॥ मां दृष्ट्वा चोत्थिता बाला विह्वला चाब्रवीद्वचः ॥ ४० ॥ बालोवाच ॥ भो भो साधो क्षणं तिष्ठ मच्चिन्तामपि नाशय ॥ दर्शनं तव लोकस्य सर्वथाऽघहरं परम् ॥ ४१ ॥ बहुधा तव वाक्येन दुःखशान्तिर्भविष्यति ॥ यदा भाग्यं भवेद्भूरि भवतो दर्शनं तदा ॥ ४२ ॥ नारद उवाच ॥ काऽसि त्वं काविमौ चेमा नार्यः काः पद्मलोचनाः ॥ वद देवि सविस्तारं स्वस्य दुःखस्य कारणम् ॥ ४३ ॥ बालोवाच ॥ अहं भक्तिरिति ख्याता इमौ मे तनयौ मतौ ॥ ज्ञानवैराग्यनामानौ कालयोगेन जर्जरौ ॥४४॥

दूरात् वीक्ष्य सोऽहं प्रसिद्धो नारदः कौतुकेन कुतूहलेन तदंतिकं तन्निकटं गतः । मां दृष्ट्वा । चोप्यर्थे, मामपि वीक्ष्य बालां षोडशवार्षिकी स्त्री विह्वला व्याकुला सत्यं तस्तापात्, चान्माम्, उक्तपरामर्शार्थत्वात्, वचो वचनमब्रवीदवदत् ॥ ४० ॥ बालोवाचेति स्पष्टम् । स्वसुखार्थं प्रार्थयति—भोभो साधो इति । हे साधो क्षणं क्षणमात्रं तिष्ठ त्वं स्थितिं कुरु, मच्चिंतां मम शोकं संतापमपि निश्चयेन नाशय दूरीकुरु । तव साधोर्दर्शनं सर्वथा सर्वप्रकारेण लोकस्य जनस्याघहरं पापनाशनमत एव परमुत्कृष्टम् ॥ ४१ ॥ असकृन्मां बोधयेत्याह—बहुधेति । बहुधा बहुभिः प्रकारैः तव वाक्येन दुःखशांतिर्दुःखनाशो भविष्यति । यदा भूरि भाग्यं महद्भाग्यं स्यात्तदा भवतो दर्शनं भवेत् ॥ ४२ ॥ काऽसि त्वमिति प्रश्नचतुष्टयं करोति नारदः—त्वं काऽसि । इमौ च कौ । पुनः पद्मलोचनाः कमलनेत्रा इमा नार्यः काः । हे देवि सविस्तारं विस्तारेण सहितं स्वस्य दुःखस्य कारणं त्वं वद ॥ ४३ ॥ बालाऽऽह—अहमिति । अहं भक्तिरिति ख्याता नामतः प्रसिद्धा माता चानयोरिति प्रथमप्रश्नोत्तरम् । कथमिदं ज्ञातम् ।

---

१ न लोकेति षष्ठीनिषेधः । २ एकेत्यादिपदेषु ( ३७ ) द्वितीयान्तपाठाभिप्रायेणदोमिति भाति । ३ बालापीत्यर्थोयाऽप्यर्थकचकारस्यात्रैवान्वयः शोभनः ।

अग्रिमपदसांनिध्यात् । तथाहि—इमौ पार्श्वस्थौ पुरुषौ मे मम तनयौ पुत्रौ मतौ । ज्ञानवैराग्यनामानौ ज्ञानं च वैराग्यं चेति तथा ते नामनी ययोस्तौ । तथा कालयोगेन कालस्य संवत्सरादिरूपेण परिभ्रममाणस्य संयोगेन जर्जरौ जीर्णाविति द्वितीयप्रश्नोत्तरम् ॥ ४४ ॥ इमा नार्यो गंगाद्याः सरितो नद्यः संतीति तृतीयप्रश्नोत्तरम् । एता सामागमनं कथमत्र संभूतं तत्राह—मत्सेवार्थं समागताः । स्पष्टोर्थः । एतेन यमुनायाः प्राचीनत्वं गंगादिभिर्निरुक्तं, सुसेव्यत्वेन ताभिर्महत्त्वं चेति । तथा च सुरैर्देवैरपि सेविताया मे मम श्रेयः कल्याणं सुखं च नास्ति ॥ ४५ ॥ चतुर्थप्रश्नोत्तरमाह—इदानीमित्यष्टभिः । हे तपोधन सचिंतः चिंतया सहितो मद्वृत्तांते दत्तचित्त इत्यर्थः । इदानीमधुना मद्वार्त्तां त्वं शृणु । मे मम वार्त्ता वितता विख्याताऽस्ति तां वार्त्तां श्रुत्वा सुखमावह कुरु ॥ ४६ ॥ द्रविडे देशेऽहमुत्पन्ना जातास्मि । द्रविडो मे जन्मभूमिरिति भावार्थः । कर्णाटके देशे वृद्धिं गता प्राप्ता । महाराष्ट्रे देशे क्वचित्क्वचित्कापिकापि स्थाने । गुर्जरे देशे जीर्णतां गता ॥ ४७ ॥ तत्कारणमाह—तत्रेति । तत्र तस्मिन्देशे पाखं

गंगाद्याः सरितश्चेमा मत्सेवार्थं समागताः ॥ तथापि न च मे श्रेयः सेवितायाः सुरैरपि ॥ ४५ ॥ इदानीं शृणु मद्वार्तां सचिन्तस्त्वं तपोधन ॥ वार्ता मे वितताप्यस्ति तां श्रुत्वा सुखमावह ॥ ४६ ॥ उत्पन्ना द्रविडे साऽहं वृद्धिं कर्णाटके गता ॥ क्वचित्क्वचिन्महाराष्ट्रे गुर्जरे जीर्णतां गता ॥ ४७ ॥ तत्र घोरकलेर्योगात्पाखण्डैः खंडितांगका ॥ दुर्बलाऽहं चिरं जाता पुत्राभ्यां सह मदन्ताम् ॥ ४८ ॥ वृंदावनं पुनः प्राप्य नवीनेव सुरूपिणी ॥ जाताहं युवती सम्यक्प्रेष्ठरूपा तु सांप्रतम् ॥ ४९ ॥ इमौ तु शयितावत्र सुतौ मे क्लिश्यतः श्रमात् ॥ इदं स्थानं परित्यज्य विदेशं गम्यते मया ॥ ५० ॥ जरठत्वं समायातौ तेन दुःखेन दुःखिता ॥ साहं तु तरुणी कस्मात्सुतौ वृद्धाविमौ कुतः ॥ ५१ ॥

डैर्धर्मविरुद्धैर्दंभाचरितैः खंडितांगका खंडितानि त्रोटितानि अंगानि प्रेमगीतनृत्यहरिदर्शनतुलस्यारोपणादीनि यस्याः सा तथा । कुत इत्यत आह—कलेर्योगादिति, स्पष्टम् । दुर्बला बलहीना चिरं बहुकालं पुत्राभ्यां ज्ञानवैराग्याभ्यां सह मंदतां परिचयाभावाल्लघुतां याता प्राप्ताऽस्मि ॥ ४८ ॥ पुनर्मम तारुण्यं जातमित्याह—वृंदावनमिति । वृंदावनं प्राप्य पुनरहं नवीना नूतना युवतिः स्त्रीव सुरूपिणी सुष्ठुरूपवती, सम्यक्प्रेष्ठरूपा प्रकर्षेणेष्टमीप्सितं रूपं यस्याः सा तथा सांप्रतं जातास्मि । त्वाश्चर्यें ॥ ४९ ॥ तदाह—इमाविति । अत्रास्मिन्वृंदावने इमौ अंगुलिनिर्दिष्टौ सुतौ मत्पुत्रौ शयितौ सुप्तौ श्रमात् खेदात् क्लिश्यतः दुःख्यतः । अन्यत्र गंतुकामाऽहमित्याह—इदमिति । इदं स्थानं वृंदावनं परित्यज्य त्यक्त्वा विदेशं मया गम्यते, सुखार्थमिति शेषः ॥ ५० ॥ किञ्च—जरठत्वं वृद्धत्वं समायातौ सुतौ मत्पुत्रौ, तेन दुःखेन जरठत्वरूपेण दुःखेन दुःखिता । सा वृद्धाऽहं तु अपि तरुणी युवतिः कस्माद्धेतोः, इमौ वृद्धौ कुतः कस्मात्कारणात् ॥ ५१ ॥

अतिचित्रमाह—त्रयाणामिति । त्रयाणां भक्तिज्ञानविरागाणामस्माकं सहचारित्वात् अपृथक्त्वात् वैपरीत्यं वैषम्यं कुतो हेतोः स्थितम्, उत्पन्नं जातमित्यर्थः । तदाह—माता जरठा वृद्धा घटते संभवति, तनयौ पुत्रौ तरुणौ युवानाविति घटते ॥ ५२ ॥ अतो वैपरीत्याद्धेतोः विस्मयाविष्टमानसा विस्मयेन वैपरीत्येनाविष्टं व्याप्तं मानसं मनो यस्याः सा तथा आत्मानं शोचामि । हे धीमन् हे योगनिधे अत्रैतद्वैषम्योद्भूतौ किं कारणं भवेदिति त्वं वद ब्रूहि ॥ ५३ ॥ कारुण्येन स्वसाधुता माविष्कुर्वन्नारदो वक्ति—ज्ञानेनेति । हे अनघे ते तव दुर्बलत्वजरठत्ववैपरीत्यदुःखाद्येतत्सर्वं ज्ञानेनात्मनि मनसि पश्यामि चिंतयामि, त्वया विषादः शोकेन संतापो न कार्यः न कर्त्तव्यः, हरिः पापदुःखादिहर्त्ता स्वनामसाफल्यार्थं ते तव शं सुखं विधास्यति करिष्यति ‘ विपूर्वो धा करोत्यर्थे ’ इत्युक्तत्वात् ॥ ५४ ॥ सूतः शौनकं प्रत्याह—क्षणेति । क्षणमात्रेण तज्ज्ञात्वा मुनीश्वरो नारदो वाक्यमूचे । नारद उवाचेति पौराणिकी शैली, एवमन्यत्राप्यूहनीयम् । हे बाले अवहिता सावधाना त्वं शृणु—अयं

त्रयाणां सहचारित्वाद्वैपरीत्यं कुतः स्थितम् ॥ घटते जरठा माता तरुणौ तनयाविति ॥ ५२ ॥ अतः शोचामि चात्मानं विस्मयाविष्टमानसा ॥ वद योगनिधे धीमन्कारणं चात्र किं भवेत् ॥ ५३ ॥ नारद उवाच ॥ ज्ञानेनात्मनि पश्यामि सर्वमेतत्तवानघे ॥ न विषादस्त्वया कार्यो हरिः शं ते करिष्यति ॥ ५४ ॥ सूत उवाच ॥ क्षणमात्रेण तज्ज्ञात्वा वाक्यमूचे मुनीश्वरः ॥ नारद उवाच ॥ शृणुष्वावहिता बाले युगोऽयं दारुणः कलिः ॥ ॥ ५५ ॥ तेन लुप्तः सदाचारो योगमार्गस्तपांसि च ॥ जना अघासुरायन्ते शाठ्यदुष्कर्मकारिणः ॥ ५६ ॥ इह सन्तो विषीदन्ति प्रहृष्यन्ति ह्यसाधवः ॥ धत्ते धैर्यं तु यो धीमान्स धीरः पण्डितोऽथवा ॥ ५७ ॥ अस्पृश्यानवलोक्येयं शेषभारकरी धरा ॥ वर्षेवर्षे क्रमाज्जाता मंगलं नापि दृश्यते ॥ ॥ ५८ ॥ न त्वामपि सुतैः साकं कोऽपि पश्यति सांप्रतम् ॥ उपेक्षिताऽनुरागान्धैर्जर्जरत्वेन संस्थिता ॥ ५९ ॥

युगो दारुणः भयंकरः । अयं युगो दारुणः क इत्यतस्तन्नाम निर्वक्ति-कलिरिति ॥ ५५ ॥ तत्प्रभावं वर्णयति—तेनेति । तेन कलियुगेन सदाचारः सद्धर्मो लुप्तो नष्टः, योगमार्गो लुप्त उच्छिन्नः, तपांसि च लुप्तानि, जनाः पुरुषा अद्य सांप्रतं असुरायंते असुरा इवाचरंति । तत्र हेतुः—शाठ्यदुष्कर्मकारिणः शाठ्यं शठभावश्च दुष्कर्म च शाठ्यदुष्कर्मणी ते कर्तुं शीलमेषां ते तथा ॥ ५६ ॥ इह कलियुगे संतः साधवो विषीदंति विषादं प्राप्नुवंति, असाधवो दुर्जना दुष्टाः प्रहृष्यंति तुष्यंति । हि युक्तेर्थे । तु विरलत्वं सूचयति । धैर्यं यः पुमान् धत्ते धारयति स धीरोऽथवा पंडितोस्ति । ‘कृती’ इति पाठेपि स एव कुशल इति नार्थभेदः ॥ ५७ ॥ धरा भूमिः शेषभारकरी अनंतस्य भारवर्द्धिनी वर्षेवर्षे प्रतिवर्षं क्रमाज्जाता, मंगलमपि न दृश्यते, इयमस्पृश्या स्प्रष्टुमयोग्या, अनवलोक्या च, न दर्शनार्हेत्यर्थः ॥ ५८ ॥ किंच—सुतैः साकं पुत्रा

भ्यां सह, बहुवचनं छंदोनुरोधतः "अपि माषं मषं कुर्याच्छंदोभंगं गिरं त्यजेत्" इत्युक्तेः। त्वामपि सांप्रतं कोपि न पश्यति क्वचिदपि नेक्षते। अपिशब्दाभ्यां कर्तृकर्मणोः मदंता निरूपिता भवति, न तु स्वरूपहानिः। वस्तुतस्तु 'सुताभ्यां सह नापि त्वाम्' इति पाठः। अनुरागांधैर्विषयासक्तैर्जनैरुपेक्षिता त्यक्ताऽतो जर्जरत्वेन संस्थिता वृद्धतया संस्थिताः ॥ ५९ ॥ पुनराविर्भावकारणमाह—वृंदावनस्येति। वृंदावनसंयोगात् पुनर्भूयः नवा नवीना तरुणी युवतिस्त्वमसि तेन हेतुना वृंदावनं धन्यं श्लाघ्यं भवति। तदुक्तम्—"स्वर्गपदाद्गुरु सत्यं सत्यादपि गुरुतरं तु वैकुंठम्। वैकुंठादपि गुरुतरमवनौ धन्यं वृंदावनं मन्ये॥" इति। यत्र वृंदावने भक्तिर्नृत्यति। एतेन भक्तेरेव प्राधान्यम् त्रोक्तम् ॥६०॥ त्वत्पुत्रयोर्जर्जरत्वहेतुमाह—अत्रेति। अत्र वृंदावनेऽपि इमौ ज्ञानवैराग्यौ जरां न मुंचतः न त्यजतः। तत्र हेतुः-ग्राहकाभावात् अपेक्षितुरनुपलंभात्। किंचि ल्लवमात्रमात्मसुखेनानयोः प्रसुतिर्मन्यते विद्यते, धातूनामनेकार्थत्वात्। इह वृंदावने ॥ ६१ ॥ स्वदुःखकारणं श्रुत्वा श्रीभक्तिरुवाचेत्यनेन भक्तिस्तर्कयति—कथमिति।

वृन्दावनस्य संयोगात्पुनस्त्वं तरुणी नवा॥ धन्यं वृन्दावनं तेन भक्तिर्नृत्यति यत्र च ॥ ६० ॥ अत्रेमौ ग्राहकाभावान्न जरामपि मुञ्चतः ॥ किंचिदात्मसुखेनेह प्रसुतिर्मन्यतेऽनयोः॥ ६१ ॥ श्रीभक्तिरुवाच ॥ कथं परीक्षिता राज्ञा स्थापितो ह्यशुचिः कलिः ॥ प्रवृत्ते तु कलौ सर्वसारः कुत्र गतो महान्॥ ६२ ॥ करुणापरेण हरिणाप्यधर्मः कथमीक्ष्यते॥ इमं मे संशयं छिन्धि त्वद्वाचा सुखितास्म्यहम्॥ ६३ ॥ नारद उवाच॥ यदि पृष्टस्त्वया बाले प्रेमतः श्रवणं कुरु॥ सर्वं वक्ष्यामि ते भद्रे कश्मलं ते गमिष्यति ॥ ६४॥ यदा मुकुन्दो भगवान्क्ष्मां त्यक्त्वा स्वपदं गतः ॥ तद्दिनात्कलिरायातः सर्वसाधनबाधकः॥ ६५ ॥

परीक्षिता राज्ञाऽशुचिः मलिनः कलिः कथं स्थापितः, मलिनत्वेन हंतुं योग्यस्य रक्षणे को हेतुरिति फलितोऽर्थ इति प्रथमः प्रश्नः। तु तर्कांतरे। प्रवृत्ते कलौ कलौ प्रवृत्ते सति महान्पूज्यः सर्वसारः सर्वेषां वस्तूनां सारः फल ( कुत्रेत्याधारस्योत्तरत्रादर्शनान्महच्छब्दार्थस्याप्यनुपलंभाच्च 'कथमहो गतः' इति वक्तुं युक्त इति संदर्भः। पंचम्यर्थे वार्षः पाठ इति केचित्। तेन कुतो गतो भवतीत्यर्थः) कुत्र गतोभूदिति द्वितीयः प्रश्नः ॥ ६२ ॥ किंच—करुणापरेण दयापरायणेन हरिणाऽधर्मः पापी कलिः पापं वा कथमीक्ष्यते दृश्यत इति तृतीयः प्रश्नः। इमं प्रश्नत्रयरूपं मे मम संशयं संदेहं त्वं छिंधि। त्वद्वाचा तव वाण्याहं सुखितास्मि ॥ ६३ ॥ नारदोक्तिः-यदि प्रेमतः प्रेम्णा त्वयाऽहं पृष्टस्तर्हि श्रवणं कुरु तस्मिन् कृते तव कश्मलं मनोग्लानिः गमिष्यति नंक्ष्यति। हे बाले ते तुभ्यं सर्वं वक्ष्यामि निरूपयिष्यामि। हे भद्रे मंगलरूपिणि ॥ ६४ ॥ सविस्तरं सर्वप्रश्नोत्तरं वर्णयति—यदेति द्वादशभिः। यदा यस्मिन्काले मुकुंदो भगवान् धरां पृथ्वीं त्यक्त्वा

स्वपदं स्वस्थानं परं पदमिति यावत । गंतुं यातुमुद्यत उद्योगं कृतवान्, तदा तस्मिन्काले तद्दिनात्कलिरायातः आयातोऽभूत । कीदृशः कलिरित्यत आह–सर्वसाधनबाधक इति । सर्वेषां साधनानां मोक्षोपायानां बाधको नाशकः ॥ ६५ ॥ राज्ञा परीक्षिता दिग्विजये दिशां विजये दृष्टोऽवलोकितः । कीदृगित्यत आह–दीनेति । दीनवदनाथ वत् । शरणं गतः प्राप्तः । ततः किं कृतवानित्यत आह–नेति । अयं कलिर्मया न मारणीयो न हंतव्यः । कुतस्तत्राह–सारंगेति । सारं भुनक्तीति तथा सारग्राही सारंगो भ्रमर इव । एतेन वध्यस्याप्यवध्यतायां हेतुरुक्तो भवति ॥ ६६ ॥ तथाहि–स्थापने कारणमुच्यते–यदिति । यत्फलं तपसा नास्ति, योगेन नास्ति, समाधिना नास्ति, देहली दीपकन्यायेन नास्तीत्यस्योभयत्र संबंधः । तत्फलं कलौ सम्यक् हरिकीर्त्तनात् भक्तिश्रद्धादिना हर्युच्चारणाज्जनो लभत इति ॥ ६७ ॥ एक आकारो गुणो यस्मिन्स तथा तम् "कलेर्दोषनिधे राजन्नस्ति ह्येको महान्गुणः" इति प्रथमस्कंधे सूतोक्तेः । 'आकारस्तु गुणे मूर्त्तौ' इति कामकल्पतरौ श्रृंगारप्रस्तावे । यद्वा–" एको विष्णुर्महद्भूतम् "

दृष्टो दिग्विजये राज्ञा दीनवच्छरणं गतः ॥ न मया मारणीयोऽयं सारङ्ग इव सारभुक् ॥ ६६ ॥ यत्फलं नास्ति तपसा न योगेन समाधिना ॥ तत्फलं लभते सम्यक्कलौ केशवकीर्तनात् ॥ ६७ ॥ एकाकारं कलिं दृष्ट्वा सारवत्सारनीरसम् ॥ विष्णुरातः स्थापितवान्कलिजानां सुखाय च ॥ ६८ ॥ कुकर्माचरणात्सारः सर्वतो निर्गतोऽधुना ॥ पदार्थाः संस्थिता भूमौ बीजहीनास्तुषा यथा ॥ ६९ ॥ विप्रैर्भागवती वार्ता गेहेगेहे जनेजने ॥ कारिता कणलोभेन कथासारस्ततो गतः ॥ ७० ॥

इतिवचनादेकस्य विष्णोर्व्यापकस्याकारः स्वकीर्त्तनकारिणां फलप्रदानरूपो यस्य स तथा तं कलिं दृष्ट्वा कलिजानां कलियुगोत्पन्नानां नराणां सुखाय सुखार्थं विष्णुरातः परीक्षित् सारवत्स्थापितवानिति प्रथमप्रश्नोत्तरमुक्तम् । केषां क इव–सारमिच्छतां कामयमानानां सारवत् सार इव । 'सारवत्सारनीरसम्' इत्येकपदपाठे सारवत्सु यः सार स्तस्य नीरसो विफलत्वं यस्मादिति स तथा तम् । साराणां नीरसो विरसत्वं यस्मात्स तथा तमिति कलिविशेषणं वा, 'धर्मसांकर्यं तीर्थवैषम्यम्' इतिवत् समासोऽत्र बोध्यः ॥ ६८ ॥ द्वितीयप्रश्नोत्तरमाह–कुकर्मेति । कुकर्माचरणात् कुत्सितकर्मणामाचरणात्सर्वतः सर्वेषाम् षष्ठ्यर्थे तसिल् प्रत्यय इति मंदाः; पूर्वापरवाक्यानामसंगतेः । तेन सर्वतः सर्वेभ्य इति पंचम्यर्थे तसिल्विधानं साधु । 'कथासारस्ततो गतः ( ७० ) इत्याद्युत्तरवाक्येषु तथोपलंभात् । सारोऽधुनेदानीं निर्गतः निःसृतोस्ति । ततः किं, तत्राह-पदार्थाः कथादयः भूमौ भुवि । औपश्लेषिकाधारे सप्तमीयम् । बीजहीनाः कणहीनाः तुषाः स्थूलधान्यावरणा यथा तथा संस्थिताः संतीत्यर्थः ॥ ६९ ॥ एतदेव स्पष्टयति

विप्रैरित्यादिसप्तभिः । विप्रैर्ब्राह्मणैः कणलोभेन गेहेगेहे जनेजने भागवती वार्त्ता कारिता ततस्तस्माद्धेतोः कथासारो गतः ॥ ७० ॥ रौरवात् नरकात् आगता जनाः अत्युग्राणि पापबाहुल्यानि भूरीणि कर्माणि येषां ते तथा । नरकागतानां चिह्नमेतत् । तेपि त एव तीर्थेषु तिष्ठंति वर्त्तंते ततस्तीर्थसारो गतोस्ति ॥ ७१ ॥ कामश्च क्रोधश्च महालोभश्च तृष्णा च ताः कामक्रोधमहालोभतृष्णाः, अत्र तृष्णापदसामर्थ्यान्महालोभ इतिपदस्थाने महामोद इति पाठ ऊहनीयः । ताभिर्व्याकुलं विक्षिप्तं चित्तं येषां ते तथा तेपि त एव तपसि तिष्ठंति ततः तपःसारो गतः ॥ ७२ ॥ मनसोऽजयात् अनिरोधात्, च पुनर्लोभात्, दंभात् लोकानुरंजनार्थं कर्मकरणात्, पाखंडस्य संश्रयाद्धारणात्, शास्त्राणामनभ्यसनात् अभ्यासः पुनःपुनः पठनपाठनरूपः तस्याभावात् । एव निश्चये । ध्यानयोगफलं गतम् ॥ ७३ ॥ पंडिताः कलत्रेण

अत्युग्रभूरिकर्माणो नास्तिका रौरवा जनाः ॥ तेपि तिष्ठन्ति तीर्थेषु तीर्थसारस्ततो गतः ॥ ७१ ॥ कामक्रोधमहालोभतृष्णाव्याकुलचेतसः ॥ तेऽपि तिष्ठन्ति तपसि तपःसारस्ततो गतः ॥ ७२ ॥ मनसश्चाजयाल्लोभाद्दम्भात्पाखण्डसंश्रयात् ॥ शास्त्रानभ्यसनाच्चैव ध्यानयोगफलं गतम् ॥ ७३ ॥ पण्डितास्तु कलत्रेण रमन्ते महिषा इव ॥ पुत्रस्योत्पादने दक्षा अदक्षा मुक्तिसाधने ॥ ७४ ॥ न हि वैष्णवता कुत्र संप्रदायपुरःसरा ॥ एवं प्रलयतां प्राप्तो वस्तुसारः स्थलेस्थले ॥ ७५ ॥ अयं तु युगधर्मो हि वर्तते कस्य दूषणम् ॥ अतस्तु पुण्डरीकाक्षः सहते निकटे स्थितः ॥ ७६ ॥ सूत उवाच ॥ इति तद्वचनं श्रुत्वा विस्मयं परमं गता ॥ भक्तिरूचे वचो भूयः श्रूयतां तच्च शौनक ॥ ७७ ॥

स्त्रिया सह रमंते क्रीडंति । के इव महिषा इव वाहद्विषंत इव । एतेन पशुसाम्यनिदर्शनेन पर्वसु दिवापि स्त्रीसंगो ध्वनितः । तु वैलक्षण्ये--द्विपदचतुष्पदशृंगपुच्छसत्त्वासत्त्वरूपेवर्त्तंते । एतदेव स्पष्टयति--पुत्रस्योत्पादने दक्षाः निपुणाः कृतप्रयत्नाः, मुक्तिसाधने शमदमादौ अदक्षाः ॥ ७४ ॥ कुत्र क्वापि स्थाने संप्रदायपुरःसरा संप्रदायपूर्विका वैष्णवता न हि । एवममुना प्रकारेण वस्तुसारः स्थलेस्थले प्रलयं गतः ॥ ७५ ॥ तृतीयप्रश्नोत्तरमाह-अयमिति । अयं युगधर्मो वर्त्तते । हि युक्तम् । दूषणं कस्य, न कस्याप्यस्तीति काकुः तुशब्दार्थः । अतो हेतोर्निकटे स्थितः । तु अप्यर्थे । पुंडरीकाक्षो हरिः सहते तत्कृतमपराधं क्षमते ॥ ७६ ॥ शौनकं प्रति सूतोक्तिः--इतीति । इत्येवं तस्य नारदस्य वचनं श्रुत्वा विस्मयेनाविष्टं व्याप्तं मानसं मनो यस्याः सा तथा भक्तिर्भूयः पुनःपुनर्वचनमूचे उवाच । तच्च वचनं हे शौनक त्वं शृणु ॥ ७७ ॥

हे सुरर्षे नारद त्वं धन्योसि साधुत्वात् । मद्भाग्येन समागतोसि सम्यक् आयातोसि । किमागमनेनेत्यत आह–लोके साधूनां दर्शनं सर्वसिद्धिकरं भवति । अत एव परं श्रेष्ठं कामनापूरकं वा ॥ ७८ ॥ तथाहि--जयतीति । यस्य ते तव केवलं पक्षपातरहितमेकं वचनरचनं रामनामोच्चारणमहिमात्मकम् आकलय्य विचार्य कायाधवः कयाधोरपत्यमिति स तथा प्रह्लादो जगति मायां ममेयं माता पितायमित्येवंरूपां मोहमयीं जयति जितवान् 'त्यजति' इति पाठे मायां संसारबीजभूतामविद्यां जहातीत्यर्थः । परां भक्तिमंतरेण तज्जयस्य दुर्घटत्वात् । किंच--यत् यस्य कृपातः कृपयाऽयं नेत्रवृत्तिगोचरो ध्रुव उत्तानपादपुत्रो ध्रुवपदं निश्चलस्थानं वैकुंठद्वारं यातः प्राप्तोस्ति । सकलकुशलपात्रं सकलानां सर्वेषां कुशलानां मंगलकर्मणां पात्रं भाजनम् आधारत्वात् 'योग्यभाजनयोः पात्रम्' इत्यमरोक्तेः । ब्रह्मणः पुत्रं नारदं नतास्मि प्रणमामि ॥ ७९ ॥ इति श्रीशेखावाट्यंतर्गतविजयपुरनिवासिव्राजलालिपंडितरामप्रतापविरचितायां श्रीमद्भागवतमाहात्म्यटीकायामृजुनाम्न्यां प्रथमोऽध्यायः ॥ १ ॥ आश्वास्य

॥ श्रीभक्तिरुवाच ॥ सुरर्षे त्वं च धन्योऽसि मद्भाग्येन समागतः ॥ साधूनां दर्शनं लोके सर्वसिद्धिकरं परम् ॥ ७८ ॥ जयति जयति मायां यस्य कायाधवस्ते वचनरचनमेकं केवलं चाकलय्य ॥ ध्रुवपदमपि यातो यत्कृपातो ध्रुवोऽयं सकलकुशलपात्रं ब्रह्मपुत्रं नताऽस्मि ॥ ७९ ॥ इति श्रीपद्मपुराण उत्तरखण्डे श्रीमद्भागवतमाहात्म्ये भक्तिनारदसंगमो नाम प्रथमोऽध्यायः ॥ १ ॥ नारद उवाच ॥ वृथा खेदयसे बाले अहो चिन्तातुरा कथम् ॥ श्रीकृष्णचरणाम्भोजं स्मर दुःखं गमिष्यति ॥ १ ॥ द्रौपदी च परित्राता येन कौरवकश्मलात् ॥ पालिता गोपसुन्दर्यः स कृष्णः क्वापि नो गतः ॥ २ ॥

भक्तिं तत्सून्वोर्बोधनाय कृतोद्यमः ॥ श्रुत्वाकाशगिरोक्तं सत्कर्म प्रष्टुं गतो मुनिः ॥ १ ॥ "न विषादस्त्वया कार्यो हरिः शं ते विधास्यति" इत्युपदेशकरणात् पूर्वाध्याये नास्य संगतिं योजयन्नारदो वदति–वृथेति । हे बाले त्वं वृथा खेदयसे मुधा खेदं करोषि । कथं केन प्रकारेण चिंतातुरासि । अहो आश्चर्यम् । श्रीकृष्णस्य चरणांभोजं पादपद्मं त्वं स्मर चिंतय । ततः दुःखं गमिष्यति प्रयास्यति ॥ १ ॥ ननु तच्चरणकमलस्मरणेन दुःखहानिः पूर्वं कस्य जातेत्यपेक्षायामाह–द्रौपदीति । येन श्रीकृष्णेन कौरवकश्मलात्कौरवाणां दुर्योधनदुःशासनसौबलादीनां कश्मलं सभायां केशाकर्षणचीरहरणादिदुःखप्रदानं तस्मात् । यद्वा–कौरवैर्यत्कश्मलं दुःखं तस्मादिति । द्रौपदी द्रुपदस्य सुता परित्राता रक्षिता । चात् ग्राहपाशाद्गजो रक्षितः । गोपसुंदर्यः गोपानां नार्यः, शंखचूडादिवधात् पालिताः । स कृष्णः क्वापि कुत्रापि नो गतो न प्रयातः व्यापकत्वात्तस्य

१ भूतार्थे लट् । २ स्मरणात् ।

गमनागमने यद्यपि न स्तस्तथापि भक्त्युद्रेकेणाविर्भावतिरोभावावुन्नेयाविति विवेकः ॥ २ ॥ प्रेयस्या दुःखहरणं तूचितं तद्वश्यत्वात्तस्येत्याह—त्वमिति । हे भक्ते तस्य कृष्णस्य प्राणतोऽधिका प्रिया त्वमसि । तुशब्दः पूर्वतो वैलक्षण्यद्योतकः । सततं निरंतरम् । तदेवाह त्वयेति—त्वयाऽऽहूतः कृताऽऽह्वानो भगवान् षड्गुणपरिपूर्णो हरिर्नीच गृहेषु नीचानां धर्मव्याधशबरीविदुरादीनां गेहेषु याति गच्छति । हि युक्तमेतत् । अपिशब्दस्तु प्राणत इत्यनेनान्वेति ॥ ३ ॥ अथ युगानुसारेण स्थितिमाह—सत्यादीति । सत्यमादिर्यस्य तत् सत्यादि, तच्च त्रियुगं चेति सत्यादित्रियुगं तस्मिन् कृतत्रेताद्वापरयुगे बोधवैराग्यौ ज्ञानवैराग्यौ मुक्तिसाधकौ मुक्तेः सिद्धिकरौ । कलौ कलियुगे तु केवलं भक्तिरेव ब्रह्मसायुज्यकारिणी, ब्रह्मणः सायुज्यं संयोगं कर्तुं शीलं यस्याः सा तथा भवति ॥ ४ ॥ ततो निश्चयपूर्वकं कृत्यमाह—इतीति द्वाभ्याम् । इत्येवं निश्चित्य निश्चयं कृत्वा त्वां ससर्ज सृष्टवान् । चिद्रूपः प्रशस्तचित्सर्वज्ञत्वादीश्वरः। कीदृशीं त्वां—सरूपाम् अत्मना समानरूपाम्।चिद्रूपिणीमिति विशिष्टाद्वैतवादिनस्तदविचार चारु, दुःखाद्यनुपलंभात् । ततः सरूपां मूर्त्तिमिति गुरवः । तथात्वे विक्रियादिसंभवात् । हेति स्फुटम् सुंदरीं । कमनीयां कृष्णस्यात्मनः वल्लभां प्रियाम् "विदुषां परिपाटीयं

त्वं तु भक्ते प्रिया तस्य सततं प्राणतोऽधिका ॥ त्वयाहूतस्तु भगवान्याति नीचगृहेष्वपि ॥ ३ ॥ सत्यादित्रियुगे बोधवैराग्यौ मुक्तिसाधकौ ॥ कलौ तु केवलं भक्तिर्ब्रह्मसायुज्यकारिणी ॥ ४ ॥ इति निश्चित्य चिद्रूपः सरूपां त्वां ससर्ज ह ॥ परमानन्दचिन्मूर्तिः सुन्दरीं कृष्णवल्लभाम् ॥५॥ बद्ध्वाञ्जलिं त्वया पृष्टं किं करोमीति चैकदा ॥ त्वां तदाज्ञापयत्कृष्णो मद्भक्तान्पोषयेति च ॥ ६ ॥ अंगीकृतं त्वया तद्वै प्रसन्नोऽभूद्धरिस्तदा ॥ मुक्तिं दासीं ददौ तुभ्यं ज्ञानवैराग्यकाविमौ ॥ ७ ॥

संतमाह परं यथा " इति संतं विद्यमानमित्यर्थः । एतेन ' ये च कंसमनुव्रताः ' इति कंसं प्रति नारदोक्तिः, " अनंतदैवज्ञसुतः स रामो मुहूर्त्तचिंतामणिमातनोति " इत्यादि च संगच्छते । परमयोत्कृष्टशोभया आनंदश्चासौ चिन्मूर्त्तिश्चेति स तथेति केचित्।तन्मंदम्, परमशोभायाः सुषमेति नामतः 'सुषमा परमा शोभा' इत्यमरसिंहोक्तेः। वस्तुतस्तु—परमश्चासौ आनंदश्चेति परमानंदः, स चासौचिन्मूर्त्तिश्चेति समासो युक्तः, शुद्धबुद्धमुक्तस्वभाव इतिवत् ॥ ५ ॥ एकदा एकस्मिन्काले अंजलिं बद्ध्वा हस्तयोः संयोजनं कृत्वाऽहं किं करवाणीति त्वया यदा पृष्टं तदा त्वां कृष्ण आज्ञापयत् आज्ञां दत्तवान् । तदाह—मद्भक्तान् त्वं पोषय पुष्टान् कुर्विति । च एवार्थे ॥ ६ ॥ स्वाम्याज्ञास्वीकारे फलमाह—अंगीकृतमिति । तद्धरेः वचो यदा त्वयांगीकृतं करिष्यामीति स्वीकृतं तदा वै निश्चयेन हरिः प्रसन्नस्तुष्टोऽभूत् । तस्मिन्प्रसन्ने को लाभस्तत्राह—तुभ्यं मुक्तिं दासीं ददौ । इमौ पुरःस्थितौ ज्ञानवैराग्यकौ ज्ञानं च वैराग्यं च ज्ञानवैराग्यौ अल्पौ ज्ञानवैराग्यावित्यल्पार्थे कन्प्रत्यये तथा शिशुरूपावित्यर्थः । पुत्रत्वेन ददौ, एतेन वस्तुतस्त्वत्पुत्रौ

नेति सूचितम् ॥७॥ त्वदुक्तं संपादितमित्याह–पोषणमिति । वैकुंठे लोके पोषणं भक्तानां पुष्टित्वेन रूपेण चिन्मूर्त्या त्वं करोषि । च एवार्थे । भूमौ पृथिव्यां भक्तविपोषाय भक्तानां विशेषेण पोषणार्थं छायारूपं त्वया कृतमस्ति॥८॥ मुक्त्यादित्रिकेण तवागमनं जातमित्याह–मुक्तिमिति । मुक्तिं मोक्षं ज्ञानं तत्प्रदं, च पुनः विरक्तिं वैराग्यं तत्साधनं सह कृत्वा भुवि त्वमागतासि । कृतादिद्वापरस्यांतं सत्ययुगादिद्वापरस्यान्तमिति, नैरंतर्ये द्वितीया । द्वापरसमाप्तिमिति यावत् । महानंदेन पूर्णसुखेन संस्थिता ॥९॥ कलिना मुक्तिनाशो जात इत्याह–कलाविति । कलौ कलियुगे पाखंडामयपीडिता पाखंड एवामयो रोगस्तेन पीडिताऽऽक्रांता मुक्तिः क्षयं नाशं प्राप्ता । यद्वा–क्षयं वैकुंठस्थानं प्राप्ता । तदेव स्पष्टयति–त्वदाज्ञया तव प्रेरणया शीघ्रमेव सा वैकुंठं पुनर्गतास्ति॥१०॥किञ्च त्वया स्मृताऽऽहूता मुक्तिः अत्रैव भूतले आयाति, च पुनः यात्यपि गच्छत्येव, इमौ ज्ञान वैराग्यौ पुत्रीकृत्य धात्रीवदात्मपुत्राविति कृत्वा स्वस्यात्मनः पार्श्वे रक्षितौ त्वया संस्थापितौ ॥ ११ ॥ तयोर्वृद्धत्वे कारणमाह–उपेक्षात इति । किं ज्ञानवैराग्याभ्यामित्युपेक्षा

पोषणं स्वेन रूपेण वैकुण्ठे त्वं करोषि च ॥ भूमौ भक्तिविपोषाय च्छायारूपं त्वया कृतम् ॥ ८ ॥ मुक्तिं ज्ञानं विरक्तिं च सह कृत्वा गता भुवि ॥
कृतादिद्वापरस्यान्तं महानन्देन संस्थिता ॥ ९ ॥ कलौ मुक्तिः क्षयं प्राप्ता पाखण्डामयपीडिता ॥ त्वदाज्ञया गता शीघ्रं वैकुण्ठं पुनरेव सा ॥ १० ॥
स्मृता त्वयापि चात्रैव मुक्तिरायाति याति च ॥ पुत्रीकृत्य त्वयेमौ च पार्श्वे स्वस्यैव रक्षितौ ॥ ११ ॥ उपेक्षातः कलौ मन्दौ वृद्धौ जातौ सुतौ तव ॥
तथापि चिन्तां मुञ्च त्वमुपायं चिन्तयाम्यहम् ॥ १२ ॥ कलिना सदृशः कोपि युगो नास्ति वरानने ॥ तस्मिंस्त्वां स्थापयिष्यामि गेहेगेहे जनेजने ॥
॥ १३ ॥ अन्यधर्मांस्तिरस्कृत्य पुरस्कृत्य महोत्सवान् ॥ तदा नाहं हरेर्दासो लोके त्वां न प्रवर्तये ॥ १४ ॥ त्वदन्विताश्च ये जीवा भविष्यन्ति कला
विह ॥ पापिनोऽपि गमिष्यंति निर्भयाः कृष्णमन्दिरम् ॥ १५ ॥

तोऽनिच्छया मंदौ परिचाररहितौ अत एव वृद्धौ चतुर्थीमवस्थां गतौ तव सुतौ जातौ स्तः । कलौ कलियुगे,यद्यप्येवं तथापि त्वं चिंतां मुंच जहीहि,अहम् उपायं सुखोपायं चिंतयामि विचारयामि ॥ १२ ॥ चिंतितमाह–कलिनेति । हे वरानने सुंदरमुखि कलिना सदृशस्तुल्यः कोपि युगो नास्ति । तस्मिन्न उक्तयुगे त्वां गेहेगेहे प्रतिगेहं, जनेजने प्रतिजनं स्थापयिष्यामि प्रवर्तयिष्यामि॥१३॥किं कृत्वा–अन्यधर्मान्वर्णाश्रमादिविहितशौचस्नानसंध्याग्निहोत्रयज्ञदानादिधर्मान् तिरस्कृत्याऽवज्ञाय महोत्सवान् हरिमंदिरमार्जनलेपनालंकरणगीतनृत्यादीन् पुरस्कृत्य अग्रे विधायेति पूर्वान्वयि । प्रतिश्रुतकरणं प्रतिजानीते–तदेति सार्द्धैः सप्तभिः । यदा लोके त्वां न प्रवर्त्तये तदा हरेर्दासो नास्मीति ॥ १४ ॥ भक्तिप्रवर्त्तने फलमाह–इह लोके कलौ कलियुगे पापिनोऽपि असत्कर्मकारिणो जीवा जंतवः प्राणिन इति यावत् त्वदन्विता । त्वया भक्त्याऽन्विता युक्ता ये भविष्यंति ते

निर्भया भयरहिताः संतः कृष्णमंदिरं वैकुंठं परं पदं वा गमिष्यंति प्राप्स्यंति । च एवार्थे ॥ १५ ॥ येषां पुंसां चित्ते प्रेमरूपिणी आनंदाश्रुकला हृदयार्द्रता वाग्गद्गदरूपा भक्तिर्वसेत तिष्ठेत, ते पुमांसोऽमलमूर्त्तयः शुद्धदेहाः स्वप्नेपि स्वप्नावस्थायामपि कीनाशं यमम् ‘ कीनाशो मृत्युरर्कजः ’ इत्यमरोक्तेः । न पश्यंति नेक्षंते, किमुत सांप्रतमिति कैमुतिकन्यायसिद्धम् ॥ १६ ॥ किञ्च—भक्तियुक्तमनस्कानां भक्त्या युक्तं मनो येषां पुंसामिति तथा तेषां स्पर्शने धर्षणे प्रेतः स्थूलदेहरहितो दुर्गतिकः प्रभुः समर्थो न भवेत् । एवं पिशाचः प्रभुर्न, राक्षसः प्रभुर्न, असुरो वापि प्रभुर्न ॥ १७ ॥ हरिः पापहंता भगवान् तपोभिः पंचाग्निरूपैर्न साध्यते । च पुनः । वेदैर्ऋग्यजुःसामार्थर्वाख्यैर्न साध्यते, ज्ञानेनात्मानात्मविवेकादिसाधनजन्येन वेदांतप्रसिद्धेन न साध्यते, कर्मणापि श्रौतेन स्मार्तेन वापि न साध्यते । ननु सर्वसाधनानां निरासः कथं क्रियते, तत्राह—तत्र तपआदिसाधनानामकिंचित्करत्वे गोपिका गोप्यः । अत्रानुकंपायां कन्प्रत्ययः । प्रमाणमस्ति ॥१८॥ एतद्दुर्लभमित्याह—नृणामिति । नृणां नराणां जन्मनां सहस्रेण भक्तौ नृत्यगीतादिरूपायां प्रीतिः प्रेम जायते उत्पद्यते । एतदेव स्थूणानिखननन्यायेन द्रढयति—कलौ भक्तिःकलौ भक्तिरिति वीप्सयाऽन्येषां निरासः। तथाहि—भक्त्या कृष्णः पुरः

येषां चित्ते वसेद्भक्तिः सर्वदा प्रेमरूपिणी ॥ न ते पश्यन्ति कीनाशं स्वप्नेऽप्यमलमूर्तयः ॥ १६ ॥ न प्रेतो न पिशाचो वा राक्षसो वाऽसुरोऽपि वा ॥
भक्तियुक्तमनस्कानां स्पर्शने न प्रभुर्भवेत् ॥ १७ ॥ न तपोभिर्न वेदैश्च न ज्ञानेनापि कर्मणा ॥ हरिर्हि साध्यते भक्त्या प्रमाणं तत्र गोपिकाः ॥ १८ ॥
नृणां जन्मसहस्रेण भक्तौ प्रीतिर्हि जायते ॥ कलौ भक्तिः कलौ भक्तिर्भक्त्या कृष्णः पुरः स्थितः ॥ १९ ॥ भक्तिद्रोहकरा ये च ते सीदन्ति जगत्त्रये ॥
दुर्वासा दुःखमापन्नः पुरा भक्तिविनिन्दकः ॥ २० ॥ अलं व्रतैरलं तीर्थैरलं योगैरलं मखैः ॥ अलं ज्ञानकथालापैर्भक्तिरेकैव मुक्तिदा ॥ २१ ॥ सूत उवाच ॥ इति नारदनिर्णीतं स्वमाहात्म्यं निशम्य सा ॥ सर्वांगपुष्टिसंयुक्ता नारदं वाक्यमब्रवीत् ॥ २२ ॥

स्थितोऽग्रेचरोऽस्ति ॥ १९ ॥ विपक्षे दोषमाह—भक्तीति । ये च हिरण्यकशिप्वादयो जना भक्तिद्रोहकरा भक्त्यै द्रोहं कुर्वंतीति तथा ते जगत्त्रये त्रैलोक्ये सीदंति दुःख्यंति । तथाहि—पुरा पूर्वसमये भक्तस्यांबरीषस्य विनिंदकः पैशुन्यकृत् दुर्वासाः शंकरांशो मुनिर्दुःखमापन्नो दुःखं प्राप्तोऽभूत् । यद्वा—भक्तस्य प्रह्लादस्य विनिंदको हिरण्यकशिपुः दुःखमापन्नः । यद्वा—भक्तस्य विभीषणस्य विनिंदको रावणो दुःखमापन्नः । यद्वा—भक्तस्य विदुरस्य, भक्तानां पांडवानां वा विनिंदको दुर्योधनो दुःखमापन्नः ॥ २० ॥ अथ व्रतादीनां न साक्षान्मुक्तिसाधनत्वमित्याह—अलमिति । व्रतैः कृच्छ्रचांद्रायणादिभिरलं पर्याप्तम् । तीर्थैः पुष्करादिभिरलम् । योगैः आसनाद्यष्टांगसंपन्नैरलम् । मखैर अग्निहोत्राश्वमेधादिभिरलम् । ज्ञानकथालापैर्बहिर्मुखानाम् “ केवलमयमात्मा ब्रह्म, प्रज्ञानं ब्रह्म, अहं ब्रह्मास्मि, तत्त्वमसि ” इति ज्ञानकथानामालापैराभाषणैः ‘स्यादा भाषण मालापः’ इत्यमरोक्तेः, अलम् । एका भक्तिरेव मुक्तिदा । अन्ययोगव्यवच्छेदार्थ एवकारः ॥२१ ॥ अथ सूतोक्तिः शौनकं प्रति—इतीति । इत्येवंप्रकारेण नारदेन निर्णीतं

सिद्धांतितं स्वमाहात्म्यं मह्यते पूज्यते लोके इति महान्, अतति सातत्येन गच्छतीत्यात्मा, महांश्चासावात्मा च महात्मा, तस्य भावो माहात्म्यं स्वस्य माहात्म्यं स्वमाहात्म्यं निशम्य श्रुत्वा सा भक्तिः सर्वैरंगैः पुष्ट्या च संपन्ना संयुक्ता सती नारदं प्रति वाक्यं वचनमब्रवीत् ॥ २२ ॥ भक्तिरुवाचेति—नारदं श्लाघयंतीत्याह—अहो इति द्वाभ्याम् । अहो इत्याश्चर्यम् । हे नारद त्वं धन्योसि, मयि । विषये सप्तमीयम् । ते तव निश्चला चलनरहिता प्रीतिरस्ति । कदापि कस्मिंश्चित् कालेऽपि अहं त्वां न विमुंचामि, अतः सर्वदा सर्वस्मिन्काले ते चित्ते हृदये स्थास्याम्यहं स्थितिं करिष्यामि, वत्स्यामीत्यर्थः ॥ २३ ॥ हे साधो कृपालुना दयावता त्वया क्षणात् क्षण मात्रेण मद्बाधा मत्पीडा ध्वंसिता नाशिता । इदानीमेतद् त्वया कर्त्तव्यमित्याह—पुत्रयोरिति । पुत्रयोर्ज्ञानवैराग्ययोः चेतना ज्ञप्तिर्नास्ति ततोऽचेतनाद्धेतोः बोधय बोधय । एता विति कर्माध्याहरणीयम् । एतयोश्चैतन्यं कुरु कुर्विति तात्पर्यार्थः ॥ २४ ॥ सूतः कारुण्यान्नारदोद्योगं प्रपंचयति—तस्या इति पंचभिः। तस्या भक्त्या वचो वचनं समाकर्ण्य सम्यक् श्रुत्वा नारदो नारं ज्ञानं ददातीति तथा सः, अमरकोशटीकायां रामाश्रमेणाप्येवमेवोक्तत्वात् । कारुण्यं करुणाया भाव इति तथा तत् गतः प्राप्तः तयोर्ज्ञानवैराग्ययो

श्रीभक्तिरुवाच ॥ अहो नारद धन्योऽसि प्रीतिस्ते मयि निश्चला ॥ न कदाचिद्विमुञ्चामि चित्ते स्थास्यामि सर्वदा ॥ २३ ॥ कृपालुना त्वया साधो मद्बाधा ध्वंसिता क्षणात् ॥ पुत्रयोश्चेतना नास्ति ततो बोधय बोधय॥२४॥सूत उवाच ॥ तस्या वचः समाकर्ण्य कारुण्यं नारदो गतः ॥ तयोर्बोधनमारेभे कराग्रेण विमर्दयन् ॥ २५ ॥ मुखं संयोज्य कर्णान्ते शब्दमुच्चैः समुच्चरन् ॥ ज्ञान प्रबुध्यतां शीघ्रं रे वैराग्य प्रबुध्यताम् ॥ २६ ॥ वेदवेदान्तघोषैश्च गीतापाठैर्मुहुर्मुहुः ॥ बोध्यमानौ तदा तेन कथञ्चिच्चोत्थितौ बलात् ॥ २७ ॥ नेत्रैरनवलोकन्तौ जृम्भन्तौ सालसावुभौ ॥ बकवत्पलितौ प्रायः शुष्ककाष्ठसमांगकौ ॥ २८ ॥

र्बोधनं जागरणोपायमारेभे आरब्धवान् । किं कुर्वन् सन्—कराग्रेण करयोर्हस्तयोरग्रेण जात्यभिप्रायेणैकवचननिर्देशः, तेन नखैरित्यर्थो बोध्यः । विमर्दयन् विशेषेणांगपरिवर्तन माचरन् ॥ २५ ॥ कर्णांते कर्णस्य समीपे मुखमास्यं संयोज्य कृत्वा उच्चैः उदात्तस्वरेण शब्दं समुच्चरन् सम्यक्त्वेनोच्चारणं कुर्वन् । किं तत्- हे ज्ञान भवान्प्रबुद्ध्यतां जागृयात, रे वैराग्य भवान् प्रबुद्ध्यतामिति पूर्ववत् कर्त्तरि प्रत्ययोत्र। शीघ्रमाशु॥ २६ ॥कृतमुद्योगं विफलं दृष्ट्वा महाप्रयत्नमकरोदिति तं दर्शयति-वेदवेदांतघोषैः वेदाः प्रसिद्धाः वेदांता उपनिषदस्तेषां घोषैः शब्दैः पठनैर्वा, गीतापाठैः च पुनः भगवद्गीतायाः पठनैर्मुहुर्मुहुः भूयोभूयस्तेन नारदेन यदा बोध्यमानौ चेतनां कार्यमाणौ तदा कथंचित् अश क्तत्वेपि बलाद्धेतोः उत्थितौ अभूताम् ॥ २७ ॥ नेत्रैरक्षिभिरनवलोकंतौ अपश्यंतौ जृंभंतौ मुखोत्फालनं कुर्वंतौ । अत एवोभौ द्वौ सालसौ आलस्येन सहितौ । बकव त्पलितौ धवलकेशौ 'पलितं जरया शौक्ल्यम्' इत्यमरोक्तेः । तत्र दृष्टांतः बकवदिति स्पष्टम् । प्रायो बाहुल्येन शुष्ककाष्ठसमांगकौ शुष्के नीरसे काष्ठे ताभ्यां समानि

अंगानि ययोस्तौ तथा ॥ २८ ॥ क्षुत्क्षामौ क्षुधा क्षीणौ तौ ज्ञानवैराग्यौ पुनः भूयः आवां स्वपिव इति स्वापपरायणौ स्वापे तत्परौ दृष्ट्वा ऋषिर्नारदश्चिंतापरो जातः। मया किं विधेयमिति चिंतापरत्वम् ॥ २९ ॥ चिंताप्रकारमाह—अहो इति। अनयोर्निद्रा कथं याति अपगच्छति। अहो इत्याश्चर्ये। च पुनः वृद्धत्वं महत्तरम् अत्युत्कटं कथं याति इति हेतोः गोविंदं स्वेष्टदेवं चिंतयन्सन् चिंतां कुर्वन् सन्-हे भार्गव हे शौनक स्ववृत्तांतं स्मारयामास हरिं विज्ञापयांबभूव। गुरवस्तु—चौरादिकस्मृधातोः स्वार्थे णिच् प्रत्ययोत्रेत्याहुः। तेन गोविंदं सस्मारेत्यर्थः ॥ ३० ॥ तदा तस्मिन्समये व्योमवाणी आकाशवाक् अभूत्-हे ऋषे नारद मा खिद्यतां खेदो मा क्रियतामिति। ते तव उद्यमः पुरुषार्थः सफलो भविष्यति न संशयः संशयो नास्ति। तु एवार्थे ॥ ३१ ॥ उत्पन्नस्य विषादस्य कथं निवृत्तिः स्यादिति चिंतयंतं प्रत्याह—एतदर्थमिति। 'त्वंताथादि न पूर्वभाक्' इत्यमरोक्तेः त्वर्थमाह—हे सुरर्षे एतदर्थम् एतयोर्ज्ञानवैराग्ययोरर्थाय बोधनहेतवे सत्कर्म त्वं समाचर संकुरु। किं सत्कर्मेति ध्यायन्तं प्रत्याह—तत्कर्म

क्षुत्क्षामौ तौ निरीक्ष्यैव पुनः स्वापपरायणौ ॥ ऋषिश्चिन्तापरो जातः किं विधेयं मयेति च ॥ २९ ॥ अहो निद्रा कथं याति वृद्धत्वं च महत्तरम् ॥ चिन्तयन्निति गोविन्दं स्मारयामास भार्गव ॥ ३० ॥ व्योमवाणी तदैवाभून्मा ऋषे खिद्यतामिति ॥ उद्यमः सफलस्ते तु भविष्यति न संशयः ॥ ३१ ॥ एतदर्थं तु सत्कर्म सुरर्षे त्वं समाचर ॥ तत्ते कर्माभिधास्यन्ति साधवः साधुभूषणाः ॥ ३२ ॥ सत्कर्मणि कृते तस्मिन्सनिद्रा वृद्धताऽनयोः ॥ गमिष्यति क्षणाद्भक्तिः सर्वतः प्रसरिष्यति ॥३३॥ इत्याकाशवचः स्पष्टं तत्सर्वैरपि विश्रुतम् ॥ नारदो विस्मयं लेभे नेदं ज्ञातमिति ब्रुवन् ॥ ३४ ॥ नारद उवाच ॥ अनयाकाशवाण्यापि गोप्यत्वेन निरूपितम् ॥ किं वा तत्साधनं कार्यं येन कार्यं भवेत्तयोः ॥ ३५ ॥ क्व भविष्यंति संतस्ते कथं दास्यंति साधनम् ॥ मयात्र किं प्रकर्तव्यं यदुक्तं व्योमभाषया ॥ ३६ ॥

तुभ्यं साधुभूषणाः साध्वलंकाररूपाः। यद्वा—साधून् भूषयंति शोभयंतीति तथा ते साधवोऽभिधास्यंति कथयिष्यंति ॥ ३२ ॥ ततः किं, तत्राह—सत्कर्मणीति। तस्मिन् गगनगिरोक्ते सत्कर्मणि कृते सति अनयोर्ज्ञानवैराग्ययोः सनिद्रा निद्रया सहिता वृद्धता वृद्धभावस्तत्क्षणादेव गमिष्यति प्रयास्यति। भक्तिः प्रेमानंदरूपिणी सर्वतः चतुर्दिक्षु प्रसरिष्यति फलिष्यति ॥ ३३ ॥ असंभावयति—इतीति। इत्येवंप्रकारेण तदाऽऽकाशवचः आकाशोत्पन्नः शब्दः स्पष्ट यथा स्यात्तथा सर्वैर्जनैः श्रुतम्। इदं सत्कर्म मया न ज्ञातमिति ब्रुवन् वदन्सन् नारदो विस्मयं लेभे प्राप ॥ ३४ ॥ विस्मयमेवाह नारदः—अनयेति। नन्वाकाशवाण्या उत्पन्नविनाशित्वादनयेति कथनं दुर्घटं, तथापि तच्छब्दरूपायास्तस्या मूर्तेर्मद्बुद्धा संस्थितत्वादिदंतया निर्देशो युक्तः। अनयाकाशवाण्या गोप्यत्वेन निरूपितं, न तु स्पष्टत्वेनेत्यर्थः। किं वा तत्साधनं मया कार्यं कर्तव्यं, येन साधनेन तयोर्ज्ञानवैराग्ययोः कार्यं भवेत ॥ ३५ ॥ "तत्ते कर्माभिधास्यंति साधवः साधुभूषणाः ( ३२ )" इत्यप्यसंगतं प्रतिभातीत्याह—क्वेति।

ते पूर्वोक्ताः संतः साधवः क कुत्र स्थाने भविष्यंति तिष्ठंति । तत्समागमः कथं भविष्यतीति फलितोर्थः । जातेपि संगमे साधनप्राप्तिर्दुःसंभाव्येत्याह—कथं केन प्रकारेण साधनं दास्यंतीति स्वचित्तवैक्लव्यम् । व्योमभाषया वियद्वाचाऽत्र यदुक्तं तत्र मया किमभिधेयमिति ॥ ३६ ॥ सूतोक्तिः शौनकं प्रति—तत्रेति । तत्र यमुनातटे तावपि ज्ञानवैराग्यौ एवं संस्थाप्य स्थापयित्वा नारदो मुनिः निर्गतस्तत्स्थानात् प्रचलितोऽभूत् । तथाहि—तीर्थमिति । तीर्थंतीर्थं प्रतितीर्थं विनिष्क्रम्य संभ्रम्य मार्गे पथि मुनीश्वरान्—किं नाम सत्कर्मेति पृच्छन्सन् ॥ ३७ ॥ तत्प्रचयमाह—वृत्तांत इति । सत्कर्म किमिति वृत्तांतः सर्वैर्ऋष्यादिभिः श्रूयते, किंचित् किमपि तदेकदेशं निश्चित्य निश्चयं कृत्वा नोच्यते । समस्तार्थापरिज्ञानाभावेनोपहास्यभिया केचन ऋषयः [1]असाध्यमेतदिति प्रोचुः । अपरे दुर्ज्ञेयमिति प्रोचुः ॥ ३८ ॥ किंच—अन्ये निकृष्टास्तु तथा तेन प्रकारेण मूकीभूता वाग्व्यापाररहिता बभूवुः । कियंतस्तु कियंतो जना आगच्छंतं नारदं दृष्ट्वा दूरादेव पलायिताः, तन्मार्गमुत्सृज्य सव्यापसव्यभागे याताः । हाहाकारो महानासीत् महान्मह

सूत उवाच ॥ तत्र तावपि संस्थाप्य निर्गतो नारदो मुनिः ॥ तीर्थंतीर्थं विनिष्क्रम्य पृच्छन्मार्गे मुनीश्वरान् ॥ ३७ ॥ वृत्तांतः श्रूयते सर्वैः किंचिन्निश्चित्य नोच्यते ॥ असाध्यं केचन प्रोचुर्दुर्ज्ञेयमिति चापरे॥३८॥मूकीभूतास्तथान्ये तु कियन्तस्तु पलायिताः ॥ हाहाकारो महनासीत्त्रिलोकी विस्मयावहः॥३९॥ वेदवेदांतघोषैश्च गीतापाठैर्विबोधितम्॥भक्तिज्ञानविरागाणां नोदतिष्ठत्त्रिकं यदा॥४०॥उपायो नापरोऽस्तीति कर्णेकर्णेऽजपञ्जनाः॥ योगिना नारदेनापि स्वयं न ज्ञायते तु यत् ॥ ४१ ॥ तत्कथं शक्यते वक्तुमितरैरिह मानुषैः॥ एवं चर्षिगणैः पृष्टैर्निर्णीयोक्तं दुरासदम् ॥ ४२ ॥

त्तरो हाहाकारः कोलाहल आसीत् । स कीदृशोऽभूदिति तं विशिनष्टि—त्रिलोकीविस्मयावहः त्रयाणां लोकानां समाहारस्त्रिलोकी तस्या विस्मयावहः विस्मयकर्त्ता ॥३९॥ तमेव विशदयति—वेदेति । वेदवेदांतघोषैर्वेदवेदांतानां शब्दैः च पुनः गीतायाः पाठैश्च बोधितं सत् भक्तिज्ञानविरागाणां त्रिकं यदा नोदतिष्ठत् नोत्थितम् ॥ ४० ॥ अत्र कर्त्तव्यतामसंभावयति—उपाय इति । योगिना योगवता नारदेनापि स्वयं यत् न ज्ञायते न बुद्धयते तत्रापरोऽन्य उपायः कर्त्तव्यः विधिर्नास्ति इति कर्णेकर्णे जना अजपन् जल्पनमकुर्वन् ॥ ४१ ॥ अर्वाचीनैरेतदवाच्यमित्याह—तदिति । तत् नारदाज्ञातम् इतरैर्भक्तिहीनैरयोगिभिर्मानुषैः कथं केन प्रकारेण वक्तुं कथयितुं शक्यते, न कथमपीति काकुः । प्रश्नोत्तरं न लब्धमित्याह—एवमिति । एवममुना प्रकारेण पृष्टैर्ऋषीणां गणैः शाखाभेदभिन्नैर्निर्णीय निर्णयं कृत्वा दुरासदं दुष्प्रापमित्युक्तम् ॥ ४२ ॥



१ न साधनार्हम् ।

प्रश्नार्थगनुपलभमानो नारदश्चिंताव्यग्रोऽभूदित्याह—ततः प्रष्टव्यार्थानुपलब्धेर्हेतोश्चिंतातुरश्चिंतया आतुरः दुःखी स नारदः मदागमनं प्रतीक्षमाणां भक्तिं परावृत्य किमहं वक्ष्यामि। अकृतकृत्योऽहं तस्यै कथं मुखं प्रदर्शयिष्य इति लज्जार्थमथशब्दो मध्ये प्रक्षिप्तः। बदरीवनम् आगतःप्राप्तः। अत्र बदरीवने तदर्थं तस्यै, ताभ्यां वा, तेभ्यो वा, तपः शरीर शोषणम् अहं चरामि करिष्यामि इति कृतनिश्चयः कृतो निश्चयो येन स तथाऽभूत्॥ ४३॥ तत्र सनकादिदर्शनं जातमित्याह—तावदिति । तावत् तपःसाधनसंपत्तेः प्राक् सनकायान्मुनीश्वरान् पुरतोऽग्रभागे स नारदः ददर्श । कीदृशान्—कोटिसूर्यसमाभासान् ईश्वरावतारत्वात् बीजे वटप्ररोह इव एतत् संभाव्यते। अथानंतरमुवाच मुनीनां सत्तमः मुनिषु सत्तम इति वा ॥४४॥ "सर्वार्थसाधका यूयं कृपां कृत्वा ममोपरि । दीने कुरुत तत्सिद्धिं यदहं प्रष्टुमुद्यतः॥"इति तन्माहात्म्यं प्रकटयति—इदानीमिति षड्भिः। इदानीमधुना भूरिभाग्येन महाभाग्येन भवद्भिर्युष्माभिः सह संगमः समागमः स्थितो जातः । हे कुमाराः कुत्सितो मारः कामो येषां ते तथा निष्प्रियत्वात्, परिग्रहशून्यत्वाद्वा, जितेंद्रियत्वेन, समाधिनिष्ठत्वाद्वा, प्रथमावस्थाविशिष्टत्वाद्वा, तथोक्तिः । असह्यं ममेदं दुःखमतः शीघ्रं क्षिप्रं ममोपरि कृपां कृत्वा कुमारा इति कर्तृपदमत्र योज्यम् । वदतामित्यार्षः प्रयोगः,

तत्तश्चिंतातुरः सोऽथ बदरीवनमागतः ॥ तपश्चरामि चात्रेति तदर्थं कृतनिश्चयः ॥ ४३ ॥ तावद्ददर्श पुरतः सनकादीन्मुनीश्वरान् ॥ कोटिसूर्यसमाभासानुवाचमुनिसत्तमः ॥ ४४ ॥ नारद उवाच ॥ इदानीं भूरिभाग्येन भवद्भिः संगमः स्थितः ॥ कुमारा वदतां शीघ्रं कृपां कृत्वा ममोपरि ॥ ४५ ॥ भवंतो योगिनः सर्वे बुद्धिमंतो बहुश्रुताः ॥ पंचहायनसंयुक्ताः पूर्वेषामपि पूर्वजाः ॥४६॥ सदा वैकुंठनिलया हरिकीर्तनतत्पराः ॥ लीलामृतरसोन्मत्ताः कथामात्रैकजीवनाः ॥ ४७ ॥ हरिः शरणमेवं हि नित्यं येषां मुखे वचः ॥ अतः कालसमादिष्टा जरा युष्मान्न बाधते ॥ ४८ ॥

वदंत्वित्यर्थः गुरवस्तु 'गद्यताम्' इति पाठमाहुः । तत्र भवद्भिर्गद्यतामित्यन्वयः । भण्यतामित्यर्थः ॥४५॥ सर्वे चत्वारो भवंतः योगिनः प्रशस्तो योगोस्त्येषामिति । प्राशस्त्येर्थे । मत्वर्थीयः । ते तथा । बुद्धिमंतः मनीषिणः । बहुश्रुताः बहु भूरि श्रुतं येषां ते तथा । पंचहायनसंयुक्ताः पंच च तानि हायनानि वर्षाणि चेति पंचहायनानि तैः संयुक्ताः, पंचवर्षा इति यावत् । पूर्वेषामपि पूर्वजाः पूर्वं जाताः ॥ ४६ ॥ सदा सर्वस्मिन्काले वैकुंठनिलया वैकुंठं निलयः स्थानं येषां ते । तथा हरिकीर्त्तनतत्पराः हरेः कीर्त्तनं तस्मिन् तत्पराः परायणाः । लीला मत्स्यकच्छपनृसिंहवराहरामकृष्णादीनां चरित्राणि तान्येवामृतरसाः तैरुन्मत्ता विवशाः । कथामात्रैकजीवनाः—विशेष्यविशेषणवाचकपदानां सति विशेषणपदसमवधाने विशेष्यमात्रपरत्वम् । तेनात्र कथामात्रजीवना इत्यर्थो बोध्यः, 'स कीचकैर्मारुतपूर्णरंध्रैः' इति रघुवंशे कालिदासोक्तिवत्, "जगाम सत्रिनयनस्तीरं क्षीरपयोनिधेः" इति दशमे व्यासोक्तिवच्च, "अयुतयोजनसाहस्रीं शातकौंभीमात्मयोनिपुरीं वदंति" इतिवच्च, कथामात्रमेवैकं जीवनं येषां ते तथा । यद्वा—कथा एव कथामात्रं तदेकं प्रति जीवितुं शीलं येषां ते इति ताच्छील्यार्थे णिनिप्रत्यये जीविन इति पाठांतरं वा ॥ ४७ ॥ हरिर्हि एव

येषां शरणमस्ति, येषां मुखे हरिरिति वचो नित्यमस्ति । यद्वा–'हरिः शरणम्' एवं वचः येषां मुखे नित्यमस्ति । अतः अस्मात्कारणात् हरेः शरणगत्या संततकीर्त्तनाद्धेतोः कालसमादिष्टा कालेनाज्ञप्ता जरावस्था युष्मान् भवतो नो बाधते, विकारं न करोतीत्यर्थः ॥ ४८ ॥ हरेर्द्वारपालौ जयविजयनामानौ पुरा पूर्वं येषां भ्रूभंगमात्रेण भ्रुकुटिपरिवर्त्तनेन सद्यः तत्क्षणमेव भूमौ पृथिव्यां निपतितौ । येषां कृपातः कृपयैव परं वैकुठस्थानं गतौ त्रिभिर्जन्मभिः प्राप्तावित्येतदाख्यानं श्रीमद्भागवततृतीयस्कंधे स्पष्टमस्ति ॥ ४९ ॥ भाग्यस्य प्रारब्धस्य योगेन भवताम् इह लोके दर्शनं जातम् । अहो इति आश्चर्यम् । इह बदरीस्थाने । दीने अनाथे मयि दयापरैः कृपापरैर्भवद्भिरनुग्रहः कर्त्तव्यः ॥ ५० ॥ किमर्थमस्मान्स्तौषीत्यत आह–अशरीरेति द्वाभ्याम् । अशरीरगिरा खवाचा यदुक्तं सत्कर्मेति तत्साधनं किम् ? इत्युच्यताम् । तावत् प्रथमं कथं केन प्रकारेणानुष्ठेयम् अनुष्ठातुं योग्यम्, तदनुष्ठानं च किमिति फलितोर्थः । सविस्तरं यथा स्यात्तथा भवन्तः प्रब्रुवंतु प्रणिगदंतु ॥ ५१ ॥

येषां भ्रूभंगमात्रेण द्वारापालौ हरेः पुरा॥ भूमौ निपतितौ सद्यो यत्कृपातः परं गतौ॥४९॥अहो भाग्यस्य योगेन दर्शनं भवतामिह॥अनुग्रहस्तु कर्तव्यो मयि दीने दयापरैः ॥५०॥ अशरीरगिरोक्तं यत्तत्किं साधनमुच्यताम् ॥ अनुष्ठेयं कथं तावत्प्रब्रुवंतु सविस्तरम् ॥ ५१ ॥ भक्तिज्ञानविरागाणां सुखमुत्पद्यते कथम् ॥ स्थापनं सर्ववर्णेषु प्रेमपूर्वं प्रयत्नतः ॥ ५२ ॥ कुमारा ऊचुः ॥ मा चिन्तां कुरु देवर्षे हर्षं चित्ते समावह ॥ उपायः सुखसाध्योऽत्र वर्तते पूर्व एव हि ॥ ५३ ॥ अहो नारद धन्योसि विरक्तानां शिरोमणिः ॥ सदा श्रीकृष्णदासानामग्रणीर्योगभास्करः ॥ ५४ ॥ त्वयि चित्रं न मन्तव्यं भक्त्यर्थमनुवर्तिनि ॥ घटते कृष्णदासस्य भक्तेः स्थापनता सदा ॥ ५५ ॥ ऋषिभिर्बहवो लोके पन्थानः प्रकटीकृताः ॥ श्रमसाध्याश्च ते सर्वे प्रायः स्वर्गफलप्रदाः ॥ ५६ ॥

भक्तिज्ञानविरागाणां कथं केन प्रकारेण सुखमुत्पद्यते जायते । सर्ववर्णेषु ब्राह्मणादिषु प्रेमपूर्वं प्रयत्नतस्तेषां स्थापनं कथमुत्पद्यते भवेत् ॥ ५२ ॥ कुमारकर्तृकनारदाऽऽश्वासनमाह--मा चिंतामिति । हे देवर्षे हे नारद चिंतां मा कुरु, चित्ते मनसि हर्षं प्रमोदं समावह त्वमाप्नुहि । अत्र अस्मिन् विषये पूर्वोऽनादिरुपायः सुखेन साध्यो वर्त्तते । हि युक्तम् ॥५३॥ त्वमपि धन्योऽसीत्याह--अहो इति । हे नारद त्वं धन्योसि विरक्तानां मध्ये शिरोमणिः चूडामणिरसि । श्रीकृष्णदासानां सदाऽग्रणीर्मुख्यः, अग्रे चरत्वात् । योगभास्करः योगस्य भास्करः सूर्य इव प्रकाशकोऽसि ॥५४॥ किंच–भक्त्यर्थं भक्तेरर्थाय अनुवर्त्तिनि अनुवर्त्तनशीले त्वयि परदुःखेनात्मनो दुःखित्वमिति चित्रमाश्चर्यं न मंतव्यं न मननीयं, परोपकारित्वात्त्वया युक्तं कृतमित्याह–घटत इति । कृष्णदासस्य श्रीकृष्णभक्तस्य सदा सर्वस्मिन्नेव काले भक्तेः स्थापनता स्थापनत्वं घटते संपद्यते ॥ ५५ ॥ तथाहि–ऋषिभिर्विश्वामित्रादिमरीच्यादिभिर्वा लोके जगति बहवः पंथानो मार्गाः प्रकटीकृताः उत्पादिताः, ते सर्वे क्रियाया बाहुल्यात् श्रमसाध्याः खेदेन सिद्ध्यर्हाः,प्रायो

बाहुल्येन स्वर्गफलप्रदाः स्वर्गमेव फलं स्वर्गफलं तत् प्रकर्षेण ददतीति तथा ॥ ५६ ॥ पूर्वतो वैलक्षण्यमाह—वैकुंठेति । " यच्छब्देन तु तच्छब्दो बोद्धव्यः सततं बुधैः " इति याज्ञवल्क्यवचनेन यत्तच्छब्दयोः परस्परं नित्यसापेक्षत्वादत्र 'स' इति तच्छब्दस्य प्रयुज्यमानत्वाद्यच्छब्दाध्याहारः कर्त्तव्यः । तथा च—यः पंथा मार्गो वैकुण्ठसाधकः वैकुण्ठस्य सिद्धिहेतुः स तु गोप्यो वर्त्तते गुप्तोऽस्ति । तस्य गुप्तस्य उपदेष्टा उपदेशकर्त्ता पुरुषो हरिभक्तः प्रायो बाहुल्येन भाग्येन लभ्यते ॥ ५७ ॥ 'उपायः सुखसाध्योऽत्र' इति प्रतिज्ञातं वर्णयति—सत्कर्मेति । व्योमवाचा विष्णुपदवाण्या यत्सत्कर्म तव निर्दिष्टं कथितम् । पुरा पूर्वम् । तु पादपूर्त्तौ । तन्मया उच्यते । अद्य इदानीम् । स्थिरं चित्तं यस्य स तथा एकाग्रमनाः, प्रसन्नधीः प्रसन्ना दोषरहिता शुद्धा धीर्यस्य स तथा एवंभूतस्त्वं शृणुष्व श्रवणं कुरु ॥ ५८ ॥ ऋष्युक्तं मार्गबाहुल्यं दर्शयति—द्रव्येति । द्रव्ययज्ञा द्रव्यैश्चरुपुरोडाशादिभिः संपाद्या यज्ञा अग्निहोत्रादयः । तपोयज्ञाः कृच्छ्रातिकृच्छ्रपराकसांतपनचांद्रायणादिरूपाः । तथाऽपरे योगयज्ञाः योगः चित्तवृत्तिनिरोधः तेन साध्या यज्ञाः ध्यानसमाध्यादयः । स्वाध्यायः " स्वाध्यायोऽध्येतव्यः " इति वेदाभ्यासः, ज्ञानमात्मनिदर्शनम्, ताभ्यां संपाद्या यज्ञाः । तथेति चार्थः । ते

वैकुण्ठसाधकः पन्थाः स तु गोप्यो हि वर्तते ॥ तस्योपदेष्टा पुरुषः प्रायो भाग्येन लभ्यते ॥ ५७ ॥ सत्कर्म तव निर्दिष्टं व्योमवाचा तु यत्पुरा ॥
तदुच्यते शृणुष्वाद्य स्थिरचित्तः प्रसन्नधीः ॥ ५८ ॥ द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे ॥ स्वाध्यायज्ञानयज्ञाश्च ते तु कर्मविसूचकाः ॥५९॥
सत्कर्मसूचको नूनं ज्ञानयज्ञः स्मृतो बुधैः ॥ श्रीमद्भागवतालापः स तु गीतः शुकादिभिः ॥ ६० ॥ भक्तिज्ञानविरागाणां तद्घोषेण बलं महत् ॥
व्रजिष्यति द्वयोः कष्टं सुखं भक्तेर्भविष्यति ॥ ६१ ॥ प्रलयं हि गमिष्यंति श्रीमद्भागवतध्वनेः ॥ कलिदोषा इमे सर्वे सिंहशब्दाद्वृका इव ॥ ६२ ॥

सर्वे कर्मविसूचकाः कर्माणि विसूचयंतीति तथा ते संति ॥५९॥ इष्टार्थमाह—सदिति । सत्कर्मसूचकः सत्कर्मणः सूचक उद्बोधको ज्ञानयज्ञो नूनं निश्चयेन बुधैर्विवेकिभिः स्मृत उक्तः । स्पष्टार्थं तं विशिनष्टि—श्रीमदिति । को हि ज्ञानयज्ञ इति संशयनिरासार्थं तद्विशेषणं—श्रीमद्भागवतालाप इति । श्रीमद्भागवतस्य शास्त्रस्य आलापः कथनमिति मन्दमतीनां देवीभागवतभाषणादिशंकां निरस्यति--स तु गीतः शुकादिभिरित्यनेन । स तु स एव श्रीमद्भागवतालापः शुकादिभिर्गीतः । एतेन इदमेव भागवतं शास्त्रमिति सिद्धांतितम् । तत्र प्रमाणमव्यभिचारि "परीक्षिच्छुकसंवादं विद्धि भागवतं हि तत्" इति ॥ ६० ॥ तेन त्वन्मनोरथं सेत्स्यतीत्याह—भक्तीति । तद्घोषेण श्रीमद्भागवतशास्त्रशब्देन भक्तिज्ञानविरागाणां भुवि महत् बलं सामर्थ्यं भविष्यति । द्वयोर्ज्ञानवैराग्ययोः कष्टं व्रजिष्यति गमिष्यति । भक्तेः सुखं भविष्यति ॥ ६१ ॥ एतद्ध्वनेरग्रे कलेर्दोषा न तिष्ठंतीत्याह--प्रलयमिति । श्रीमद्भागवतध्वनेः श्रीमद्भागवतस्य ध्वनेर्नादात् सर्वे इमे कलिदोषाः प्रलयं नाशं गमिष्यंति । हि निश्चये । कस्मात्के इव—सिंहशब्दात् वृका इव ॥६२॥

तन्नाशे फलमाह—ज्ञानेति । प्रेमरसावहा प्रेमैव रसस्तम् आवहतीति तथा । ज्ञानवैराग्याभ्यां संयुक्ता भक्तिः ततस्तदनंतरं प्रतिगेहं प्रतिजनं क्रीडां करिष्यति । सर्वत्र प्रसरिष्यतीति भावार्थः ॥ ६३ ॥ तच्छ्रुत्वा संदिहानो नारदः स्वाभिप्रायं प्रकाशयन्नाह—वेदेति त्रिभिः । वेदानां वेदांतानां घोषैः शब्दैश्च पुनः गीतापाठैः प्रबोधितं भक्तिज्ञानविरागाणां यत् त्रिकं नोदतिष्ठत् नोत्थितमभूत् । तु पादपूरणे ॥ ६४ ॥ तत त्रिकं श्रीमद्भागवतालापात् श्रीमद्भागवतस्यालापात् भाषणात् बोधं ज्ञानं कथमेष्यति प्राप्स्यति । एतदेव स्पष्टयति—तदिति । तत्कथासु श्रीमद्भागवतगाथासु वेदार्थः वेदानामर्थः । तु एव । श्लोकेश्लोके प्रतिश्लोकं, पदेपदे प्रतिपदं भवति ॥ ६५ ॥ अमोघदर्शनाः न मोघं विफलं दर्शनं येषां ते तथा भवंतो हि एनं संशयं छिंदन्तु । शरणागतवत्सलाः शरणम् आगतस्तत्र वत्सलाः दयालवः, यत एवंभूता अतोत्र विलंबो न कर्त्तव्यः । भवद्भिरिति शेषः ॥ ६६ ॥ तदुत्तरदानार्थं कमारोक्तिः नारदं प्रति—श्रीमद्भागवतं शास्त्रं किं वेदबाह्यम्, उत—वेदांतर्गतम् । नाद्यः'

ज्ञानवैराग्यसंयुक्ता भक्तिः प्रेमरसावहा ॥ प्रतिगेहं प्रतिजनं ततः क्रीडां करिष्यति ॥६३॥ नारद उवाच ॥ वेदवेदान्तघोषैश्च गीतापाठैः प्रबोधितम् ॥
भक्तिज्ञानविरागाणां नोदतिष्ठत्त्रिकं तु यत् ॥ ६४ ॥ श्रीमद्भागवतालापात्तत्कथं बोधमेष्यति ॥ तत्कथासु तु वेदार्थः श्लोकेश्लोके पदेपदे ॥
॥ ६५ ॥ छिन्दन्तु संशयं ह्येनं भवंतोऽमोघदर्शनाः ॥ विलम्बो नात्र कर्तव्यः शरणागतवत्सलाः ॥६६॥ कुमारा ऊचुः ॥ वेदोपनिषदां साराज्जाता
भागवती कथा ॥ अत्युत्तमा ततो भाति पृथग्भूता फलोन्नतिः ॥ ६७ ॥ आमूलाग्रं रसस्तिष्ठन्नास्ते न स्वदते यथा ॥ संभूय स पृथग्भूतः
फले विश्वमनोहरः ॥ ६८ ॥ यथा दुग्धे स्थितं सर्पिर्न स्वादायोपकल्पते ॥ पृथग्भूतं हि तद्दिव्यं देवानां रसवर्धनम् ॥ ६९ ॥

अप्रमाणत्वात् । न द्वितीयः, वेदपाठैस्तदनुत्थानादिति नात्र संदेहावसर इत्याह—वेदेति । वेदोपनिषदां वेदाः प्रसिद्धाः, उपनिषदोपि दश एव मुख्या बृहदारण्यछंदोग्यादयस्तेषां सारात् भागवती कथा जातोत्पन्ना । ततः तस्मात्कारणात् पृथग्भूता भिन्नाकृतितः फलोन्नतिः फलेन उन्नतिरौन्नत्यं यस्याः सा, तथात्युत्तमा सर्वतः श्रेष्ठा भाति प्रकाशते ॥६७॥ फलमूलयोर्गुणतो भेदोस्तीति सूचयति—आमूलाग्रमिति त्रिभिः । आम्रादिवृक्षेषु सोमलतादिवल्लीषु च आमूलाग्रं मूलत आरभ्य अग्रभागपर्यंतं रसः तिष्ठन् वर्तमान आस्ते, यथा येन प्रकारेण न स्वदते नास्वाद्यते । स एव सर्वव्यापी रसः संभूय सारांशतः मिलित्वा पिंडाकारेण आम्रादिजे फले पृथग्भूतः पृथक्कृतः जातः (सन्) विश्वमनोहरः विश्वस्य सर्वस्य मनो हरतीति तथा भवति ॥ ६८ ॥ स्पष्टीकरणाय दृष्टांतः-दुग्धे स्थितं वर्त्तमानं सर्पिर्घृतं स्वादाय यथा नोपकल्पते न योग्यं भवति,

पृथग्भूतं दध्याकारेण परिणामं प्राप्तात् दुग्धात् मंथनविलोडनतो पृथक् संजातं तत् (घृतम्) देवानां रसं वर्द्धयतीति तथा भवति । हि लोकप्रसिद्धमेतत्॥ ६९ ॥ उक्तार्थदृढीकरणाय पुनर्दृष्टांतः—इक्षूणाम् आदिमध्यांतं सर्वांगं व्याप्य शर्करा यथा तिष्ठति, सा शर्करा पृथग्भूता इक्षुदंडान्निष्पीड्य पृथक्कृता सती मिष्टा भवति, तथा तेनैव प्रकारेण भागवती कथा वेदवेदान्तेभ्योऽप्युत्तमा भवतीत्यर्थः ॥ ७० ॥ उक्तार्थे हेतुमाह—इदमिति । इदं भागवतम्।नामेति पादपूर्त्तावव्ययम्। यद्वा-नामेति प्रसिद्धौ प्रसिद्धं भागवतमित्यर्थः पुराणम्—ब्रह्मसंमितम् ब्रह्मभिः चतुर्भिर्वेदैः संमितं तुल्यमस्ति । परं प्रयोजनमस्याह-भक्तीति । भक्तिज्ञानविरागाणां स्थापनाय स्थापनार्थं प्रकाशितं व्यासेन ॥ ७१ ॥ तवायमविवेको भ्रांत्या जात इति संस्मारयन् पूर्ववृत्तांतमाह- वेदांतेति त्रिभिः । वेदांतेषु वेदेषु च सुस्नाते निपुणे । गीताया इत्युपलक्षणम्, इतिहासपुराणानां सर्वशास्त्रमप्या गीताया अपि कर्त्तरि स्रष्टरि व्यासे परितापवति परितापो मानसं दुःखं तद्वति अज्ञानसागरे अविद्यासागरे मुह्यति सति मोहं प्राप्ते सति ॥ ७२ ॥ तदा तस्मिन्काले चतुःश्लोकसमन्वितं श्लोकचतुष्टयसंपन्नं मूलं श्रीमद्भागवतं त्वया पुरा पूर्वं व्यासाय प्रोक्तम् । तदीयश्रवणात् तदीयानां पदार्थानां श्रवणात् बादरायणो व्यासः सद्यस्तत्कालं

इक्षूणामादिमध्यान्तं शर्करा व्याप्य तिष्ठति ॥ पृथग्भूता च सा मिष्टा तथा भागवती कथा ॥ ७० ॥ इदं भागवतं नाम पुराणं ब्रह्मसंमितम् ॥ भक्तिज्ञानविरागाणां स्थापनाय प्रकाशितम् ॥ ७१ ॥ वेदान्तवेदसुस्नाते गीताया अपि कर्तरि ॥ परितापवति व्यासे मुह्यत्यज्ञानसागरे ॥ ७२ ॥ तदा त्वया पुरा प्रोक्तं चतुःश्लोकसमन्वितम् ॥तदीयश्रवणात्सद्यो निर्बाधो बादरायणः ॥ ७३ ॥ तत्र ते विस्मयः केन यतः प्रश्नकरो भवान् ॥ श्रीमद्भागवतश्रावे शोकदुःखविनाशनम् ॥ ७४ ॥ नारद उवाच ॥ यद्दर्शनं च विनिहन्त्यशुभानि सद्यः श्रेयस्तनोति भवदुःखदवार्दितानाम् ॥ निःशेषशेषमुखगीतकथैकपानाः प्रेमप्रकाशकृतये शरणं गतोऽस्मि ॥ ७५ ॥

निर्बाधः बाधारहितो जातः, मनःसंतुष्टः ॥ ७३ ॥ तत्र तस्मिन् श्रीमद्भागवते शास्त्रे केन हेतुना ते तव वेदवेदांतगीतापाठैर्भक्त्यादित्रिकं नोत्थितं तत् श्रीमद्भागवतालापात्कथं बोधमेष्यतीति विस्मयोऽस्ति, यतो हेतोः भवान् प्रश्नकरो भवति । निश्चितमेतस्य फलमाह—श्रीमदिति । श्रीमद्भागवतस्य श्रावे श्रवणे शोकदुःखयोर्विनाशनमिति ॥ ७४ ॥ तदुपदेशेन विस्मृतमणिलाभजातानंदो नारदो वक्ति-यदिति । भवदुःखदवार्दितानां भवे जन्मादिरूपे संसारे दुःखानि असंख्यातानि वसिष्ठसारादौ निदर्शितानि तान्येव दवोऽग्निस्तेनार्दितानां पीडितानां पुंसाम्, यद्दर्शनं येषां दर्शनं सद्यस्तत्क्षणे अशुभानि दुःखानि विनिहंति निःशेषतो नाशयति, च पुनः श्रेयो मंगलं तनोति विस्तारयति । हे निःशेषशेषमुखगीतकथैकपानाः निःशेषाणि समग्राणि सहस्रसंख्यापारिमितानि शेषस्य मुखानि तैः गीता याः कथाः तासामेकं पानं येषां त तथा । अहं शरणं गतोऽस्मि प्राप्तोऽस्मि । भवतामिति शेषः । किमर्थं, तत्राह-प्रेमप्रकाशकृतये प्रेम्णः प्रकाशकरणार्थम् ॥ ७५ ॥

सत्संगफलमाह—भाग्येति । बहुजन्मसमार्जितेन बहुषु जन्मसु समार्जितेन संपादितेन भाग्योदयेन यदा यस्मिन्काले पुरुषः सत्संगं लभते प्राप्नोति । एव निश्चये । तदा तस्मिन्काले विवेको ज्ञानमुदयते उत्पद्यते । किं कृत्वेत्यपेक्षायामाह—अज्ञानेति । अज्ञानमेव हेतुः कारणं तेन कृतो यो मोहः स एव महांधकारो गाढं तमस्तस्य नाशं विधाय कृत्वा । हि युक्तोऽयमर्थः ॥ ७६ ॥ ॥ इति श्रीशेखावाट्यंतर्गतविजयपुरनिवासिव्राजलालिपंडितरामप्रतापविरचितायां श्रीमद्भागवतमाहात्म्यटीकायामृजुनाम्न्यां द्वितीयोऽध्यायः ॥ २ ॥ श्रद्धाय सनकाद्युक्तं ज्ञानयज्ञविधानकम् ॥ संपृच्छय नारदश्चक्रे श्रवणं तन्मुखेन वै ॥ १ ॥ "सत्कर्मसूचको नूनं ज्ञानयज्ञः स्मृतो बुधैः" इति सनकादिवाक्यं श्रद्धाय तेनैवोत्तरग्रंथस्य संगतिं सूचयन् ब्रवीति नारदः—ज्ञानमिति । भक्तिज्ञानविरागाणां स्थापनार्थं प्रयत्नतः प्रकृष्टेन यत्नेन ज्ञानयज्ञमहं करिष्यामि । वेदांतविचारनिरासाय कर्म विशिनष्टि—शुकेति । शुकस्य शास्त्रं श्रीमद्भागवतं तस्य कथा तयोज्ज्वलं प्रकाशितम् ॥ १ ॥ तद्विधानं पृच्छति—कुत्रेति द्वाभ्याम् ।

भाग्योदयेन बहुजन्मसमार्जितेन सत्संगमेव लभते पुरुषो यदा वै ॥ अज्ञानहेतुकृतमोहमदान्धकारनाशं विधाय हि तदोदयते विवेकः ॥ ७६ ॥ इति श्रीपद्मपुराण उत्तरखण्डे श्रीभागवतमाहात्म्ये कुमारनारदसंवादो नाम द्वितीयोऽध्यायः ॥ २ ॥ नारद उवाच ॥ ज्ञानयज्ञं करिष्यामि शुकशास्त्रकथोज्ज्वलम् ॥ भक्तिज्ञानविरागाणां स्थापनार्थं प्रयत्नतः ॥ १ ॥ कुत्र कार्यो मया यज्ञः स्थलं तद्वाच्यतामिह ॥ महिमा शुकशास्त्रस्य वक्तव्यो वेदपारगैः ॥ २ ॥ कियद्भिर्दिवसैः श्राव्या श्रीमद्भागवती कथा ॥ को विधिस्तत्र कर्तव्यो ममेदं वदतामितः ॥ ३ ॥ कुमारा ऊचुः ॥ शृणु नारद वक्ष्यामो विनम्राय विवेकिने ॥ गंगाद्वारसमीपे तु तटमानन्दनामकम् ॥ ४ ॥ नानाऋषिगणैर्जुष्टं देवसिद्धनिषेवितम् ॥ नानातरुलताकीर्णं नवकोमलवालुकम् ॥ ५ ॥

यज्ञो ज्ञानयज्ञः कुत्र कस्मिन्स्थाने मया कार्यः कर्तव्यः, तत्स्थलं स्थानं भवद्भिर्वाच्यताम् । निवृत्तप्रेषणत्वादुच्यतामित्यर्थः । इह लोके । किञ्च—वेदस्य पारगैः पारं गतैः शुकशास्त्रस्य श्रीमद्भागवतस्य महिमा माहात्म्यं वक्तव्यः ॥ २ ॥ श्रीमद्भागवती कथा कियद्भिः किंप्रमाणैर्दिवसैर्दिनैः श्राव्या श्रोतुं योग्या । अत्र 'सेव्या' इति पाठो युक्तः, प्रक्रमोपसंहारयोरैक्यात । तत्र श्रवणे को विधिः किं विधानं कर्तव्यः, मम मह्यम् इतः एतस्मात्कारणात इदं वदताम् उच्यताम्, संप्रसारणाभाव आर्षः ॥ ३ ॥ कुमारा नारदं प्रति स्थलनिरूपणपूर्वकं ज्ञानयज्ञकरणं तत्फलं च निरूपयंति—शृण्वित्यादिषड्भिः । हे नारद पृष्टं स्थलादिकं त्वं शृणु, विनम्राय विशेषेण नम्रीभूताय विवेकिने विवेको विचारस्तद्वते तुभ्यं वयं वक्ष्यामः । तथाहि—गंगाद्वारस्य समीपे आनंदनामकं तटमस्ति ॥ ४ ॥ तद्विशेषणानि—नानाऋषि

गणैर्जुष्टं सेवितं देवैः सिद्धैश्च निषेवितं नाना बहुप्रकारास्तरवो वृक्षास्तेषां लताभिराकीर्णं व्याप्तं, नवा नूतना मृदुला वालुका यस्मिंस्तत्तथा ॥ ५ ॥ रम्यं रमणीयम् एकांतदेशस्थम् एकांतदेशे वर्त्तमानम् । हैमानि स्वर्णमयानि पद्मानि कमलानि तैः सुशोभितमतिसुंदरम् । तत्प्रभावमाह—यदिति । यस्य समीपे स्थितानां जीवानां चेतसि मनसि वैरं विरोधः न स्थितम्, न वर्त्तत इत्यर्थः ॥ ६ ॥ तत्र तस्मिन्स्थाने ज्ञानयज्ञस्त्वया कार्यः, अप्रयत्नतः प्रयत्नं विनैवेति तन्माहिमा । हि युक्तम् । तत्रोक्तस्थले अपूर्वा नवीना रसरूपा रसप्रधाना कथा भविष्यति प्रवर्त्तिष्यते ॥ ७ ॥ तत्रैव भक्तिरागमिष्यति । किं कृत्वा—तद्द्वयं तयोर्ज्ञानवैराग्ययोर्द्वयं पुरस्कृत्य अग्रे कृत्वा । कीदृशं तदित्यपेक्षायामाह—पुरःस्थमिति,--स्वाग्रे स्थितम् । निर्बलं बलरहितम् । जराजीर्णकलेवरं जरया जीर्णे उत्थानाद्यसमर्थे कलेवरे शरीरे यस्य तत्तथा ॥ ८ ॥ "श्रीरामचरितोच्चारे वायुसूनोः समागमः । महाभारतसंश्रावे ह्यश्वत्थामागमस्तथा ॥ विरामे निर्गमो वित्तः किंवदंतीति निश्चितम् । " तद्वदत्रापि भक्त्यादेरागमो मुनिभिः स्मृत

रम्यमेकांतदेशस्थं हैमपद्मसुशोभितम् ॥ यत्समीपस्थजीवानां वैरं चेतसि न स्थितम् ॥ ६ ॥ ज्ञानयज्ञस्त्वया तत्र कर्तव्यो ह्यप्रयत्नतः ॥ अपूर्वा रसरूपा च कथा तत्र भविष्याति ॥ ७ ॥ पुरःस्थं निर्बलं चैव जराजीर्णकलेवरम् ॥ तद्द्वयं च पुरस्कृत्य भक्तिस्तत्रागमिष्यति ॥ ८ ॥ यत्र भागवती वार्ता तत्र भक्त्यादिकं व्रजेत् ॥ कथाशब्दं समाकर्ण्य तत्त्रिकं तरुणायते ॥ ९ ॥ सूत उवाच ॥ एवमुक्त्वा कुमारास्ते नारदेन समं ततः ॥ गंगातटं समाजग्मुः कथापानाय सत्वराः ॥ १० ॥ यदा यातास्तटं ते तु तदा कोलाहलोऽप्यभूत् ॥ भूर्लोके देवलोके च ब्रह्मलोके तथैव च ॥ ११ ॥

इति लोकप्रसिद्धिं सूचयन्नाह—यत्रेति । यत्र स्थाने भागवती वार्त्ता भवेत्, तत्र स्थाने भक्त्यादिकं व्रजेदागच्छेत् । तत्त्रिकं भक्त्यादीनां त्रयं तरुणायते तरुण इवाचरति । किं कृत्वा—कथाशब्दं कथोच्चारं समाकर्ण्य संश्रुत्य ॥ ९ ॥ ततस्तेषामागमनमाह—एवमिति । एवं पूर्वोक्तप्रकारेणोक्तास्ते प्रसिद्धाः कुमाराः सनकादयः नारदेन समं सह ततो बदरीस्थानात् सत्वराः त्वरया सहिताः शीघ्रगामिनो गंगातटं समाजग्मुः स्वर्णद्यास्तटं समायाताः । किमर्थमित्यपेक्षायामाह—कथेति । कथापानाय लोकानां कथारसपानार्थम् । तादर्थ्ये चतुर्थी । अत्र वर्णद्वयलोपविधिः शिक्षायां शौनकोक्तः । तद्वाक्यम्—"यथा वर्णस्य वर्णयोर्लोपो बहूनां वा कदाचन" । विराटपर्वण्युत्तरं प्रति विराटोक्तिः—'अत्र मध्ये यथार्कस्य' इति तट्टीकायां सोदाहरणं नीलकंठेन निरूपितं द्रष्टव्यम् ॥ १० ॥ तद्वृत्तं सर्वत्र प्रविस्तृतमित्याह—यदेति । यदा

---

१ अथवा—" क्रियार्थोपपदस्य च कर्मणि स्थानिनः " इत्यप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थी । कथारसपानं कर्त्तुमित्यर्थः । २ वस्तुतस्तु कथापानायेत्यत्र पाधात्वर्थः संप्रेमश्रवणरूपः । तत्र रसशब्दानयनाय विशेषाऽऽयासो नावश्यक इति ।

यस्मिन्काले ते सनारदाः सनकादयस्तटम् । गंगाया इति शेषः । याताः प्राप्ताः, तदा तस्मिन्काले भूर्लोके पृथिव्याम् । च पुनः । देवलोके स्वर्गे । तथैव च तेनैव विधया ब्रह्मलोके सत्यलोके कोलाहलः कलकलध्वनिरप्येवाऽभूत् ॥ ११ ॥ तच्छ्रुत्वा श्रोतॄणामागमनं निरूपयति—श्रीभागवतेति त्रिभिः । प्रथममादौ रसलंपटाः रसास्वादिनो ये वैष्णवा जनाः ते सर्वे धावंतः शीघ्रतां कुर्वंतः तत्रानंदनामाख्ये तटे अपि निश्चयेनाययुराजग्मुः । किमर्थम्—श्रीभागवतस्य पीयूषस्यामृतरूपस्य पानाय पानार्थम् ॥ १२ ॥ तान्नामभिर्निर्दिशति—भृग्वाद्याश्चत्वारः प्रसिद्धाः।मेधातिथिः बलिवैश्वदेवकर्मांते आगते—अतिथौ मेधा विष्णुरूपा बुद्धिर्यस्य स तथा[1] । देवलः प्रसिद्धः, देवरातो याज्ञवल्क्यः । रामः परशुरामः । तथा तेनैव प्रकारेण गाधिसुतो विश्वामित्रः । शाकलो मुनिः । मृकंडपुत्रो मार्कंडेयः । अत्रिजो दत्तात्रेयः । पिप्पलादाः, बहुत्वं गोत्राभिप्रायेण ॥ १३ ॥ योगेश्वरो[2] वामदेवः । व्यासपराशरौ प्रसिद्धौ । छायाशुको व्यासमोहनिरासाय छायया रचितः । जाजलिर्जह्नुश्च मुख्यौ प्रधानौ येषां ते तथा । सर्वेऽप्येवामी पूर्वोक्ता मुनि

श्रीभागवतपीयूषपानाय रसलम्पटाः ॥ धावन्तोऽप्याययुः सर्वे प्रथमं ये च वैष्णवाः ॥ १२ ॥ भृगुर्वसिष्ठश्च्यवनश्च गौतमो मेधातिथिर्देवलदेवरातौ ॥ रामस्तथा गाधिसुतश्च शाकलो मृकण्डपुत्रोऽत्रिजपिप्पलादाः ॥ १३ ॥ योगेश्वरो व्यासपराशरौ चच्छायाशुको जाजलिजह्नुमुख्याः ॥ सर्वेप्यमी मुनिगणाः सहपुत्रशिष्याः स्वस्त्रीभिराययुरतिप्रणयेन युक्ताः ॥ १४ ॥ वेदान्तानि च वेदाश्च मन्त्रास्तन्त्राः समूर्तयः ॥ दश सप्त पुराणानि षट् शास्त्राणि तथाऽऽययुः ॥ १५ ॥ गंगाद्याः सरितस्तत्र पुष्करादिसरांसि च ॥ क्षेत्राणि च दिशः सर्वा दण्डकादिवनानि च ॥ १६ ॥

गणा मुनीनां गणाः समूहाः सहपुत्रशिष्याः पुत्रैः शिष्यैश्च सहिताः स्वस्त्रीभिः समं स्वनारीभिः सहातिप्रणयेनातिप्रेम्णा युक्ताः संतः आययुः । स्त्रीपुत्रशिष्याणामानयनम् " यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः " इति सत्संप्रदायमार्गोपदेशार्थमिति बोध्यम् ॥ १४ ॥ श्रीमद्भागवतस्य सर्वतः श्रैष्ठ्यं निरूपयति—वेदेति सार्द्धाभ्यां द्वाभ्याम् । तदा तस्मिन्नेव काले वेदांतानि दशोपनिषदः, वेदा ऋगाद्याः, च पुनः मंत्राः संजीवनादयः । तंत्रा ब्रह्मयामलोक्ताः रावणादिकृतडामरोक्ता वेति केचित् । गुरवस्तु नारदपंचरात्रोक्ता इत्याहुः । ननु जडानां तेषां कथमागमनं घटेतेत्यत्राह—समूर्त्तयः मूर्तिमंतः, तदधिष्ठातृदेवानां चेतनत्वात् । एवमग्रेपि । दश सप्त पुराणानि सप्तदशसंख्यानीत्यर्थः। षट् शास्त्राणि—गौतम—कणाद—कपिल—पतञ्जलि—व्यास—जैमिनि—प्रणीतानि तस्मिन्नेवावसरे आययुः आजग्मुः ॥ १५ ॥ गंगाद्याः गंगा आद्या प्रधाना यासां तास्तथा। अतद्गुणसंविज्ञानबहुव्रीहिणात्र यमुनाद्या बोध्याः, गंगायास्तत्रैव विद्यमानत्वात् । सरितो नद्यः । च पुनः । पुष्करादिसरांसि, क्षेत्राणि कुरुक्षेत्रादीनि, दिशः पूर्वाद्याः, सर्वा

१ " वाऽऽहिताग्न्यादिषु " इति मेधाशब्दस्य पूर्वनिपातः, दण्डपाण्यादिवत् । २ केचन योगीश्वराविति पठित्वा याज्ञवल्क्यजैगीषव्याविति व्याचक्षते ।

दशैव । चतस्रो वेति केचित् । दंडकादीनि वनानि । स्पष्टोऽर्थः ॥ १६ ॥ नगादयो मेर्वाद्या हिमालयाद्या वा तत्रोक्तस्थाने ययुः । देवाश्च गंधर्वाश्च किन्नराश्चेति ते तथा । गृहाद्यासक्तान् पामरान् भृगुरबोधयदित्याह—गुरुत्वादित्यर्द्धेन । तत्रोक्तस्थाने धनतृष्णया नायातान् अनागतान् भृगुरानयत् । किं कृत्वा—संबोध्य,—रे रे मंदाः किमर्थं नो व्रजथ अयं समागमो देवानामपि दुर्लभ इति विज्ञाप्य । ननु "प्रयोजनमनुद्दिश्य न मंदोऽपि प्रवर्त्तते" इति वचनाद्धिनार्थं भृगुपरिश्रमो व्यर्थ इति चेदुच्यते—गुरुत्वादिति प्रसिद्ध्या शिष्योपदेशो युक्त इत्यर्थः ॥ १७ ॥ ततः परं किं जातमित्यत आह—दीक्षिता इति । दीक्षा संजाता येषां ते तथा भूताः कुमाराः सनकादयः पूर्वैरागतैः सर्वैर्वंदिताः नमस्कृताः कृष्णतत्पराः कृष्णपरायणाः नारदेन दत्तमासनं निषेदुरधिष्ठिता बभूवुः । दीक्षितेति नारदविशेषणे आर्षोऽवर्णलोपः "विष्णुदीक्षाविहीनानां नाधिकारः कथाश्रवे" इत्युक्तेः ॥ १८ ॥ इदानीं श्रोतॄणामासनप्रकारमाह—वैष्णवा इति । वैष्णवा विष्णूपासकाः'

नगादयो ययुस्तत्र देवगन्धर्वकिन्नराः ॥ गुरुत्वात्तत्र नायातान्भृगुः संबोध्य चानयत् ॥ १७ ॥ दीक्षिता नारदेनाथ दत्तमासनमुत्तमम् ॥ कुमारा वन्दिताः सर्वैर्निषेदुः कृष्णतत्पराः ॥ १८ ॥ वैष्णवाश्च विरक्ताश्च न्यासिनो ब्रह्मचारिणः ॥ मुख्यभागे स्थितास्ते च तदग्रे नारदः स्थितः ॥ १९ ॥ एकभागे ऋषिगणास्तदन्यत्र दिवौकसः ॥ वेदोपनिषदोऽन्यत्र तीर्थान्यत्र स्त्रियोऽन्यतः ॥ २० ॥ जयशब्दो नमः शब्दः शंखशब्दस्तथैव च ॥ चूर्णलाजाप्रसूनानां निक्षेपः सुमहानभूत् ॥ २१ ॥ विमानानि समारुह्य कियंतो देवनायकाः ॥ कल्पवृक्षप्रसूनानां[1] सर्वांस्तत्र समाकिरन् ॥ २२ ॥

च पुनः विरक्ता वीतरागाः, च पुनः न्यासिनः संन्यासिनः, ब्रह्मचारिणोपि मुख्यभागे सर्वाग्रे स्थिता निषण्णाः । तदग्रे तेषामग्रे पुरो नारदः स्थितः, मुख्यश्रोतृत्वात्समागमसंपादकत्वाद्वा ॥ १९ ॥ अन्येषां स्थितिं पृथक्पृथगाहुः—एकभाग इति । ऋषीणां गणा एकभागे एकत्र, दिवौकसो देवाः तदन्यत्र ऋषिस्थानादन्यत्र, वेदोपनिषदोऽन्यत्र अन्यस्थाने, अन्यत्र भिन्नस्थाने तीर्थानि, तीर्थान्यन्यत्रेति वाच्ये वर्णलोप आर्षः, छन्दोऽनुरोधात् । स्त्रियः अन्यतः—सप्तम्यर्थे तसिल्प्रत्ययादन्यत्रेत्यर्थः । स्थिता बभूवुरिति शेषः ॥ २० ॥ ततो मंगलध्वनिरभूदित्याह—जयेति । पूर्वार्द्धं स्पष्टम् । चूर्णानि कुट्टितैलालवंगकर्पूरादिसुगंधिद्रव्याणि, लाजा भर्जितास्तण्डुलाः 'खील' इति भाषायाम् । 'लाजा भृष्टयवे स्त्रियाम्' इत्यमरोक्तेः । अत्र यवशब्दोऽक्षतपरः 'अक्षतास्तु यवाः प्रोक्ताः' इति वचनात् । प्रसूनानि पुष्पाणि, तेषां निक्षेपः पातनं सुमहान् भूयानभूत् ॥ २१ ॥ तत्राप्यौत्सुक्यमाह—विमानानीति । कियंतः कतिपयाः देवनायकाः देवप्रणेतारः विमानानि सप्तनवभूमिकानि स्थानानि विमानानी

---

[1] प्रसूनानीति द्वितीयान्तपाठे तु समागतान् सर्वान्प्रति कल्पवृक्षप्रसूनानि समाकिरन्नित्यन्वयः ।

त्युच्यंते तानि समारुह्य समारोहणं कृत्वा कल्पवृक्षप्रसूनानां कल्पवृक्षपुष्पैः । तृतीयार्थे षष्ठीयम् । "नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः" इतिवत् । तत्र स्थाने सर्वान् श्रोतुमागतान्समाकिरन् समाच्छादयन्, समावृण्वन्निति यावत् ॥ २२ ॥ सूतः शौनकं प्रति कथारंभमाह—एवमिति । एवमुक्तविधया तेषु श्रोतृषु एकचित्तेषु एकस्मिन्कथारसपाने चित्तं येषां ते तथा तेषु । यद्वा—एकम् एकाग्रं चित्तं येषां त इति वा, वर्णलोपोऽत्र छान्दसो विज्ञेयः । एवंभूतेषु सत्सु श्रीमद्भागवतस्य माहात्म्यं महिमानं स्पष्टं यथा स्यात्तथा माहात्मने पूज्याय नारदाय सनकाद्या ऊचिरे वर्णयांचक्रुः ॥ २३ ॥ कुमारोक्तिः नारदं प्रति । तत्प्रकारमाह—अथेति । अथेति मंगलं प्रारंभे । शुकशास्त्रतः इत्यत्र षष्ठ्यर्थे तसिल्प्रत्ययः तेन शुकशास्त्रस्येत्यर्थः । महिमा महिमानं ते तुभ्यं संप्रवक्ष्यामो वयं संवर्णयिष्यामः, यस्य श्रवणमात्रेण श्रवणादेव निष्कामाणां मुक्तिः; सकामानां साधनसंपत् करतले स्थिता, हस्तगता भवेदित्यर्थः । अपरे तु 'महित्वं शुकशास्त्रजम्' इति पाठमाहुः । गुरवस्तु—'अथ ते वर्ण्यतेऽस्माभिः' इति सम्प्र

सूत उवाच ॥ एवं तेष्वेकचित्तेषु श्रीमद्भागवतस्य च ॥ माहात्म्यमूचिरे स्पष्टं नारदाय महात्मने ॥२३॥ कुमारा ऊचुः ॥ अथ ते संप्रवक्ष्यामो महिमा शुकशास्त्रतः ॥ यस्य श्रवणमात्रेण मुक्तिः करतले स्थिता ॥ २४ ॥ सदा सेव्या सदा सेव्या श्रीमद्भागवती कथा ॥ यस्याः श्रवणमात्रेण हरिश्चित्तं समाश्रयेत् ॥ २५ ॥ ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसंमितः ॥ परीक्षिच्छुकसंवादः शृणु भागवतं च तत् ॥ २६ ॥ तावत्संसारचक्रेऽस्मिन्भ्रमतेऽज्ञानतः पुमान् ॥ यावत्कर्णगता नास्ति शुकशास्त्रकथा क्षणम् ॥ २७ ॥ किं श्रुतैर्बहुभिः शास्त्रैः पुराणैश्च भ्रमावहैः ॥ एकं भागवतं शास्त्रं मुक्तिदानेन गर्जति ॥ २८ ॥

दायानुसारेण वदंति; तदुक्तम् ॥ २४ ॥ कियद्भिर्दिवसैः श्राव्येति दिननियममपाकुर्वन्नाह—सदेति । श्रीमद्भागवती कथा सदा सेव्या सदा सेव्येति वीप्सया यावज्जीवं सेवनीयेत्यर्थः । एतेन दिनानां नियमो नास्तीति ध्वनितम् । तत्फलमाह—यस्याः कथायाः श्रवणमात्रेण हरिश्चित्तं समाश्रयेत् मनः संयायात् ॥ २५ ॥ किंप्रमाणं भागवतं, कतिविभागास्तस्य, कियंतोऽध्याया इत्यपेक्षायामाह—ग्रंथ इति । ग्रंथः शास्त्रम् अष्टादशसाहस्रः अष्टादशसहस्रश्लोकात्मकः द्वादश स्कंधास्तैः संमितः प्रमितः, परीक्षिच्छुकसंवादः परीक्षिते शुकस्य संकथनं यस्मिन्नित्यर्थो बोध्यः, द्वंद्वे दोषोत्पत्तेः । तत् भागवतं शास्त्रं त्वं शृणु ॥ २६ ॥ किं तच्छ्रवणेनेत्यत आह—तावदिति । अस्मिन्संसारचक्रेऽज्ञानतः पुमान् तावत् भ्रमते शुकशास्त्रस्य श्रीमद्भागवतस्य कथा क्षणं क्षणमात्रं कर्णगता श्रोत्रं प्राप्ता यावन्नास्तीति योजना ॥ २७ ॥ "विचित्रशास्त्रसंश्रुत्या जायते

१ परीक्षित्कर्तृककथनभ्रान्त्येत्यादिः । वस्तुतस्तु संवदतेः परस्परकथन एव शक्त्या प्रश्नविभागस्य परीक्षितोक्तत्वादपि द्वन्द्वेऽपि न दोष इति भाति ।

निश्चित्तं भ्रमः । सर्वशास्त्रफलाविक्यान्मुक्त्यै भागवतं वरम् ॥ ” इत्याह षड्भिः—किंश्रुतैरित्यादिभिः । श्रुतैर्बहुभिः शास्त्रैः किं, पुराणैः किं, न किमपि, यतो भ्रमावहैः भ्रमप्राप्तिकरैः । भागवतमेकं शास्त्रं श्रोतृभ्यो मुक्तिदानेन गर्जति शब्दं करोति ॥ २८ ॥ यद्गृहे यस्य गेहे श्रीमद्भागवतस्य कथा भवति, तद्गृहं तीर्थरूपम् । तीर्थसममिति मंदाः । प्रशस्तं तीर्थमिति गुरवः । वसतां तद्गृहे वसतां निवासकर्तॄणां पुंसां पापनाशनं पापानां नाशकर्तृ । हि युक्तोऽयमर्थः ॥ २९ ॥ अश्वमेधाख्यस्य यज्ञस्य सहस्राणि, च पुनः वाजपेयाख्यस्य यज्ञस्य शतानि, शुकशास्त्रकथायाः श्रीमद्भागवतगाथायाः षोडशीं कलां नृपसंख्यासंमितं विभागं नार्हंति, षोडशकलातुल्यतां न प्राप्नुवन्तीत्यर्थः ॥ ३० ॥ हे तपोधनाः हे शौनकादयः । नरैः पुंभिः श्रीमद्भागवतं न श्रूयते भागवतशास्त्रस्य श्रवणं न क्रियते यावत् तावदेवाऽस्मिन् शरीरे पापानि निवसंति तिष्ठंति ॥ ३१ ॥ च पुनः शुकशास्त्रकथायाः फलेन समतां तुल्यतां गंगा भागारथी न नयेत् न प्राप्नुयात् । एवं गयादयोपि समतां न प्राप्नुयु

कथा भागवतस्यापि नित्यं भवति यद्गृहे ॥ तद्गृहं तीर्थरूपं हि वसतां पापनाशनम् ॥२९॥ अश्वमेधसहस्राणि वाजपेयशतानि च ॥ शुकशास्त्रकथाया श्च कलां नार्हन्ति षोडशीम् ॥ ३० ॥ तावत्पापानि देहेऽस्मिन्निवसान्ति तपोधनाः ॥ यावन्न श्रूयते सम्यक्छ्रीमद्भागवतं नरैः ॥ ३१ ॥ न गंगा न गया काशी पुष्करं न प्रयागकम् ॥ शुकशास्त्रकथायाश्च फलेन समतां नयेत् ॥ ३२ ॥ श्लोकार्द्धं श्लोकपादं वा नित्यं भागवतोद्भवम् ॥ पठस्व स्वमुखेनैव यदिच्छसि परां गतिम् ॥ ३३ ॥ वेदादिर्वेदमाता च पौरुषं सूक्तमेव च ॥ त्रयी भागवतं चैव द्वादशाक्षरमेव च ॥ ३४ ॥ द्वादशात्मा प्रयागश्च कालः संवत्सरात्मकः ॥ ब्राह्मणाश्चाग्निहोत्रं च सुरभिर्द्वादशी तथा ॥ ३५ ॥

रिति भावार्थः । खंडान्वये तु गंगावदन्वयः ॥ ३२ ॥ भागवतोद्भवं भागवतादुत्पन्नमिति व्याख्यानेऽन्यस्य प्रतीतिर्जायतेऽतः भागवते उद्भव उत्पत्तिः, वर्तमानतेति यावत् । यस्येति सप्तमीतत्पुरुषो युक्तः । श्लोकार्द्धं श्लोकस्यार्द्धं पादद्वयम् । श्लोकस्य पादं चतुर्थांशं वा नित्यं प्रतिदिनं नियमेन स्वमुखेन स्वकीयास्येन पठस्व त्वं पठनं कुरु इति नारदं प्रत्युक्तिः । यदि परां गतिमिच्छसि वांछसि तदा, एतेनैतत्पठनमेव मुक्तिहेतुरिति सूचितम् ॥ ३३ ॥ किंचान्येषामपि तद्वन्माहात्म्यमिति सूचयति—वेदेति त्रिभिः। वेदादिरोंकारः, च पुनः वेदमाता गायत्री, पौरुषं सूक्तम् “सहस्रशीर्षा” इति षोडशमंत्ररूपम् । एवं चेति निश्चितम् । त्रयी वेदत्रयी ऋग्यजुःसामात्मिका, भागवतमिदम् । चैवे ति पूर्ववत्पादपूरणार्थं वा । द्वादशाक्षरम्—‘ॐ नमो भगवते वासुदेवाय’ इति मंत्रः ॥ ३४ ॥ द्वादशात्मा मासभेदेन द्वादशमूर्त्तिः श्रीसूर्यः, प्रयागस्तीर्थराजः, संवत्सरात्मकः कालः प्रसिद्धः, ब्राह्मणाः ब्रह्ममुखोद्भवा विप्राः । च पुनः । अग्निहोत्रम् “यावज्जीवमग्निहोत्रं जुहोति” इत्यभिहितम् । द्वितीयश्चकारः पादपूरणार्थः । सुरभिः कामधेनुः, द्वाद

शी तिथिः ॥ ३५ ॥ तुलसी प्रसिद्धा, च पुनः वसंतऋतुः, पुरुषोत्तमः श्रीनारायणः। एव चेत्युक्तवत्। एतेषामुक्तानां षोडशपदार्थानां प्राज्ञैः पंडितैः तत्त्वतः याथार्थ्येन पृथग्भावः भिन्नत्वं न इष्यते न वांछयते। मूढानां भेदव्यपदेश इति फलितोर्थः ॥ ३६ ॥ अर्थत एतद्वाचने फलमाह—यश्चेति । यश्च पुण्यात्मा महाभागो वाऽनिशमहोरात्रं प्रतिदिनं वा श्रीमद्भागवतं शास्त्रमर्थतो वाचयेत् तस्य जन्मकोटिकृतं जन्मनां कोटयस्तत्कृतं पापं नश्यते नष्टं भवति। अत्रार्थे संशयो नास्ति ॥ ३७ ॥ किंच—एतत्पठनस्य महत्पुण्यमित्याह—श्लोकेति। भागवतं भागवतांतर्गत। मंचाः क्रोशंतीतिवल्लक्षणया बोध्यम्। श्लोकार्द्धं श्लोकपादं वेति पूर्वं व्याख्यातमेव । यः सुकृती पठेत्, नित्यं सदा राजसूयाश्वमेधयोर्यज्ञयोः पुण्यं फलमवाप्नोति प्राप्नोति ॥ ३८ ॥ अन्येषामपि साम्यं निरूपयति—उक्तमिति । उक्तं कथितं भागवतं, नित्यं कृतं संपादितं हरिचिंतनं हरेर्ध्यानं, तुलसीपोषणं तुलस्याः पोषणं जलसेचनादिना पुष्टीकरणं, च पुनः एव निश्चितं धेनूनां सेवनं गवां सेवा तृणजलयवान्नादिभिस्तदुपकरणं, समम् ।

तुलसी च वसन्तश्च पुरुषोत्तम एव च ॥ एतेषां तत्त्वतः प्राज्ञैर्न पृथग्भाव इष्यते ॥ ३६ ॥ यश्च भागवतं शास्त्रं वाचयेदर्थतोऽनिशम् ॥ जन्मकोटिकृतं पापं नश्यते नात्र संशयः ॥ ३७ ॥ श्लोकार्द्धं श्लोकपादं वा पठेद्भागवतं च यः॥ नित्यं पुण्यमवाप्नोति राजसूयाश्वमेधयोः ॥ ३८ ॥ उक्तं भागवतं नित्यं कृतं च हरिचिन्तनम् ॥ तुलसीपोषणं चैव धेनूनां सेवनं समम् ॥ ३९ ॥ अन्तकाल तु येनैव श्रूयते शुकशास्त्रवाक् ॥ प्रीत्या तस्यैव वैकुण्ठं गोविन्दोऽपि प्रयच्छति ॥ ४० ॥ हेमसिंहयुतं चैतद्वैष्णवाय ददाति च ॥ कृष्णेन सह सायुज्यं स पुमाँल्लभते ध्रुवम् ॥ ४१ ॥ आजन्ममात्रमपि येन शठेन किंचिच्चित्तं विधाय शुकशास्त्रकथा न पीता ॥ चाण्डालवच्च खरवद्बत तेन नीतं मिथ्या स्वजन्म जननी जनिदुःखभाजा ॥ ४२ ॥

अर्थतस्तुल्यमेव ॥ ३९ ॥ मरणकालेप्येतन्मुक्तिप्रदमित्याह—अंतकाल इति । अंतकाले प्राणोत्क्रमणसमये येनैव पुण्यात्मना शुकशास्त्रवाक् श्रीमद्भागवतध्वनिः श्रूयते, तस्य तस्मै एव पुरुषाय गोविंदः श्रीहरिः प्रीत्या प्रेम्णा वैकुंठं लोकं प्रयच्छति प्रकर्षेण ददाति । अपि निश्चितम् ॥ ४० ॥ अथ श्रीमद्भागवतदानफलमाह—हेमेति । हेमसिंहयुतं हेम्नः सुवर्णस्य सिंहाः पट्टाभिषेकप्रकरणेऽभिहिता अष्टौ यस्मिंस्तद्धेमसिंहम् आसनं तेन युतम्। सिंहशब्दो लक्षणया सिंहासनपर इत्येके । नामैकदेशन्यायेन सिंहशब्दः सिंहासनपर इत्यपरे । एतच्छास्त्रं श्रीमद्भागवतं वैष्णवाय यः सुकृती धनी ददाति स पुमान् कृष्णेन सह सायुज्यं मुक्तिविशेषं लभते प्राप्नोति । पादपूर्त्तौ चकारः ॥ ४१ ॥ एतच्छ्रवणं विना धिग्जीवितमित्याह—आजन्मेति । येन शठेन आजन्ममात्रं जन्मत आरभ्यापि

किंचित् अल्पमपि यथा स्यात्तथा शुकशास्त्रकथा न पीता न श्रुता, कथारसो न पीत इति भावार्थः । किं कृत्वा—चित्तं विधाय मनो लगयित्वा । धातूनामने कार्थत्वाद्विपूर्वस्य धा--धातोः संलगनार्थता । तेन पुंसा स्वजन्माऽऽत्मोत्पत्तिः वृथा मिथ्या नीतम्, निष्फलं कृतमित्यर्थः । तत्र दृष्टांतद्वयम्—चांडालवत् चांडालेन तुल्यम् १ । खरवत् रासभतुल्यम् २ । बतेति खेदे । जननी माता निजदुःखभाजा निजस्य स्वस्य दुःखं गर्भपीडाप्रसूतिक्लेशपालनादिरूपं भजतीति तथा, कृतेति शेषः। मिथ्या पदमत्रान्वेतीति गुरवः ॥ ४२ ॥ तदेव द्रढयति—जीवन्निति । येन पुरुषेण किंचित्प्रकरणैकदेशमपि श्लोकैकदेशमपि शुककथावचनं न श्रुतं, स तु स एव पापकर्मा पापं कर्म यस्य स तथा जीवन् श्वसन् शवो मृतको निगदितः कथितः । स जीवन्नेव मृत इति भावार्थः । पशुसमं पशुभिस्तुल्यं भुवि पृथिव्यां, औपश्लेषिकाधारे सप्तमीयम् । भाररूपं तं नरं धिक् । एवमित्थं दिवि स्वर्गलोके देवसमाजमुख्या देवानां समाजः संगरूपस्तत्र मुख्या दिविषदा वदंतीति गुरवः । क्वापि 'देवसरोजमुख्याः' इति पाठो बालिशैः

जीवञ्छवो निगदितः स तु पापकर्मा येन श्रुतं शुककथावचनं न किञ्चित् ॥ धिक्तं नरं पशुसमं भुवि भाररूपमेवं वदन्ति दिवि देवसमाजमुख्याः ॥ ४३ ॥ दुर्लभैव कथा लोके श्रीमद्भागवतोद्भवा ॥ कोटिजन्मसमुत्थेन पुण्येनैव तु लभ्यते ॥ ४४ ॥ तेन योगनिधे धीमञ्छ्रोतव्या सा प्रयत्नतः ॥ दिनानां नियमो नास्ति सर्वदा श्रवणं मतम् ॥ ४५ ॥ सत्येन ब्रह्मचर्येण सर्वदा श्रवणं मतम् ॥ अशक्यत्वात्कलौ बोध्यो विशेषोऽत्र शुकाज्ञया ॥ ॥ ४६ ॥ मनोवृत्तिजयं चैव नियमाचरणं तथा ॥ दीक्षां कर्तुमशक्यत्वात्सप्ताहश्रवणं मतम् ॥ ४७ ॥

प्रमादतो धृतोऽर्थासंगतेरित्युन्नेयम् ॥ ४३ ॥ महापुण्येनैतत्प्राप्यत इत्याह—दुर्लभेति । श्रीमद्भागवतोद्भवा श्रीमद्भागवतादुत्पन्ना कथा लोके दुर्लभा दुष्प्रापैव कोटिजन्म समुत्थेन कोटिजन्मोद्भवेन पुण्येन लभ्यते प्राप्यते । एवकारोऽन्यसाधननिवृत्त्यर्थः ॥ ४४ ॥ यावज्जीवमेतच्छ्रवणं कर्त्तव्यमित्याह—तेनेति । तेन पूर्वोक्तेन हेतुना योगनिधे हे नारद हे धीमन् सा पूर्वोक्ता कथा प्रयत्नतः कष्टाद्युपायतः श्रोतव्या श्रोतुं योग्या । दिनानां नियमो नास्तीति स्पष्टम् । सर्वदा सर्वस्मिन्काले श्रवणं मतं संमतम् ॥ ॥ ४५ ॥ विधितः श्रवणं दुष्करमतो विशेषमाह—सत्येनेति चतुर्भिः । सत्येन यथार्थभाषणेन ब्रह्मचर्येण युवतिसंसर्गपरित्यागपूर्वकभूमिशयनेन सर्वदा सदा श्रवणं मतम् । अशक्यत्वात् उक्तसाधनानि कर्तुमसामर्थ्यात्कलौ कलियुगेऽत्र श्रवणे शुकाज्ञया शुकस्य नियोगेन विशेषः भेदो बोध्यो ज्ञेयः ॥ ४६ ॥ तद्यथा—मनोवृत्तिजयं मनसो

१ " भजो ण्विः " इति ण्विप्रत्ययान्ताद्भागुरिमते टाप् । क्वचित्तु 'जननीजनदुःखभाजा' इति पाठः । तत्र दुःखं भाजयतीति दुःखभाक्, जननी एव जनः जननीजनः, तस्य दुःखभाक् तेनेति 'तेन' इत्यस्य विशेषणम् ।

वृत्तिः चांचल्येन बहिरागमनरूपा तस्या जयो निरोधस्तम्, तथा तेनैव प्रकारेण नियमाचरणं नियमाः षष्ठाध्याये वक्ष्यमाणास्तेषामाचरणं संपादनम्, दीक्षां विष्णुदीक्षां कर्त्तुमाचरितुमशक्यत्वादप्रभुत्वात् सप्ताहश्रवणं सप्तदिनमध्ये श्रवणं मतम् आज्ञप्तम्, ज्ञप्तौ श्रुतिकर्मोऽन्वयः कर्त्तव्यः ॥ ४७ ॥ तावत्साकल्येन माघे माघमासे श्रद्धातः श्रद्धया प्रातःस्नानदानादिना नित्यं श्रवणे यत्फलं भवति। केचन—'श्रावणे' इति पाठमुरीकृत्य श्रावणे श्रावणमासि, माघे च नित्यं श्रद्धया देवपूजन—प्रातःस्नानादिना तावद्यत्फलं भवति, तत्फलमित्यादिपूर्ववदिति व्याचक्षते। तदेव हि फलं शुकदेवेन सप्ताहश्रवणे कृतमस्तीति भावः। गुरवस्तु—यथाश्रुतपाठमंगीकृत्यैवं व्याचख्युः—नित्यं प्रतिदिनं नित्यकथायाः श्रवणे श्रद्धातो यत्फलं भवति, माघे माघमासे श्रवणे श्रीमद्भागवतश्रुतौ यत्फलं भवति तत्फलमित्युत्तरार्द्धं पूर्ववदित्याहुः ॥४८॥ मनसोऽजयादनिरोधात्, रोगात् ज्वराद्युत्पत्तेः, च पुनः पुंसां नराणामायुषः क्षयात् नाशात्, कलेर्युगस्य दोषबहुत्वाद्दोषबाहुल्याच्चेति चतुर्भिर्हेतुभिः सप्ताहश्रवणं मतम् ॥ ४९ ॥ सर्वत एतत्फ

श्रद्धातः श्रवणे नित्यं माघे तावद्धि यत्फलम् ॥ तत्फलं शुकदेवेन सप्ताहश्रवणे कृतम् ॥ ४८ ॥ मनसश्चाजयाद्रोगात्पुंसां चैवायुषः क्षयात् ॥ कलेर्दोषबहुत्वाच्च सप्ताहश्रवणं मतम् ॥ ४९ ॥ यत्फलं नास्ति तपसा न योगेन समाधिना ॥ अनायासेन तत्सर्वं सप्ताहश्रवणे लभेत् ॥ ५० ॥ यज्ञाद्गर्जति सप्ताहः सप्ताहो गर्जति व्रतात् ॥ तपसो गर्जति प्रोच्चैस्तीर्थान्नित्यं हि गर्जति ॥ ५१ ॥ योगाद्गर्जति सप्ताहो ध्यानाज्ज्ञानाच्च गर्जति ॥ किं ब्रूमो गर्जनं तस्य रेरे गर्जति गर्जति ॥५२॥ शौनक उवाच ॥ साश्चर्यमेतत्कथितं कथानकं ज्ञानादिधर्मान्विगणय्य सांप्रतम् ॥ निःश्रेयसे भागवतं पुराणं जातं कुतो योगविदादिसूचकम् ॥ ५३ ॥

लाधिक्यमाह—यदिति त्रिभिः। तपसा यत्फलं नास्ति, योगेन यत्फलं नास्ति, समाधिना यत्फलं नास्ति, तत्सर्वमनायासेन खेदमंतरा सप्ताहश्रवणे लभेत् प्राप्नुयात् ॥ ॥ ५० ॥ सप्ताहः श्रीमद्भागवतपारायणारंभसमाप्तिरूपो यज्ञाद्राजसूयादेः गर्जति उत्कर्षं करोति, सप्ताहः व्रतात् एकादश्युपवासादेः गर्जति, तपसः पंचाग्नितापरूपात्स्वधर्माचरणाद्वा प्रोच्चैर्गर्जति अत्युत्कटं शब्दं करोति, तीर्थान्नित्यं गर्जति। हि एव ॥ ५१ ॥ सप्ताहः योगात् चित्तवृत्तिनिरोधात् गर्जति, ध्यानादीश्वरचिंतनात्मकात् गर्जति, च पुनः ज्ञानात् ब्रह्मज्ञानात् गर्जति। तस्य सप्ताहरूपस्य गर्जनं किं ब्रूमो वयं किं वर्णयामः, रे रे मूढा गर्जति गर्जति वीप्सयाऽस्मादधिकं किमप्यन्यन्नास्तीति ध्वनितम् ॥ ५२ ॥ आश्चर्यं श्रुत्वा शौनकः पृच्छति—साश्चर्यमिति। एतत्कथानकं सनत्कुमारनारदसंवादपूर्वकशुकशास्त्रमहित्वं साश्चर्यम् आश्चर्येण सहितमिति तथा तत्त्वया कथितमुक्तम्। सांप्रतमिदानीम्। किं कृत्वा—ज्ञानादिधर्मान् विगणय्य ज्ञानं शास्त्रीयम्, आदिना वैराग्यब्रह्मचर्यादिसंग्रहः,

धर्मांश्चतुर्वर्णधर्मान् विगणय्य तिरस्कृत्य । योगविदादिसूचकं योगो मनोनिग्रहरूपः, विज्ञानम् वेदनं विदिति व्युत्पत्तेः, आदिशब्देन वैराग्यादिसाधनानां संग्रहः, तेषां सूचकं निंदकं, निःश्रेयसे कल्याणार्थं, निश्चितं श्रेयो मोक्षाख्यमिति तदर्थं वा, भागवतं पुराणं कुतः कस्माद्धेतोः जातमुत्पन्नम् ॥ ५३ ॥ सूतः शौनकं प्रति सकारणं तद्वृत्त माह—यदेति । यदा धरां पृथिवीं त्यक्त्वा कृष्णो वासुदेवः स्वपदं स्वस्थानं वैकुंठाख्यं गंतुं यातुमुद्यतः कृतप्रयत्नोऽभूत् तदा एकादशम् एकादशस्कंधज्ञानं परिश्रुत्य सर्वतः श्रुत्वा उद्धवो वाक्यं वचनमब्रवीत् ॥५४॥ उद्धवः श्रीकृष्णं प्रति स्वसंदेहमाविष्करोति—त्वमिति पंचभिः । हे गोविंद त्वं तु त्वं हि यास्यसि स्वपदं गमिष्यसि । ननु कार्यार्थं कृतावतारस्य मम कथं गमनमित्यत आह—भक्तकार्यं भक्तानां कार्यं विधाय कृत्वा । मच्चित्ते मम मनसि महती बृहती चिंता जातेति शेषः । तां चिंता, श्रुत्वा । चस्योक्त समुच्चयार्थत्वान्ममेति लभ्यते । सुखं मम कल्याणमावह कुरु ॥ ५५ ॥ तथाहि—अयं घोरो दारुणः कलियुग आगत आयातः, पुनर्भूयः खला दुष्टाः पापिनो जना भविष्यंति, तत्संगेन तेषां खलानां संगेन संगत्या संतः साधवोपि यदा उग्रतां क्रूरतां गमिष्यंति प्राप्स्यंति । एव निश्चितम् ॥ ५६ ॥ तदा गोरूपा सूर्यजारूपा गोभूता

सूत उवाच ॥ यदा कृष्णो धरां त्यक्त्वा स्वपदं गन्तुमुद्यतः ॥ एकादशं परिश्रुत्याऽप्युद्धवो वाक्यमब्रवीत् ॥ ५४ ॥ उद्धव उवाच ॥ त्वं तु यास्यसि गोविन्द भक्तकार्यं विधाय च ॥ मच्चित्ते महती चिन्ता तां श्रुत्वा सुखमावह ॥ ५५ ॥ आगतोऽयं कलिर्घोरो भविष्यन्ति पुनः खलाः ॥ तत्संगेनैव सन्तोऽपि गमिष्यंत्युग्रतां यदा ॥ ५६ ॥ तदा भारवती भूमिर्गोरूपेयं कमाश्रयेत् ॥ अन्यो न दृश्यते त्राता त्वत्तः कमललोचन ॥ ५७ ॥ अतः सत्सु दयां कृत्वा भक्तवत्सल मा व्रज ॥ भक्तार्थं सगुणो जातो निराकारोऽपि चिन्मयः ॥५८॥ त्वद्वियोगेन ते भक्ताः कथं स्थास्यन्ति भूतले ॥ निर्गुणोपासने कष्टमतः किञ्चिद्विचारय ॥ ५९ ॥ इत्युद्धववचः श्रुत्वा प्रभासेऽचिन्तयद्धरिः ॥ भक्तावलम्बनार्थाय किं विधेयं मयेति च ॥ ६० ॥

इयं धरा भूमिः कमाश्रयेत् रक्षार्थं कं पालकं व्रजेत् । हे कमललोचन हे पद्मनेत्र त्वत्तो भवतोऽन्यो भिन्नो द्वितीयस्त्राता रक्षको न दृश्यते नावलोक्यते ॥ ५७ ॥ अतो हेतोः सत्सु महात्मसु । वैषयिकाऽऽधारे सप्तमीयम् । तेन साधूनां विषय इत्यर्थः । दयां कृपां कृत्वा हे भक्तवत्सल मा व्रज त्वं गमनं मा कुरु, न तत्करणमुचितम् । निराकार आकाररहितः चिन्मयश्चिद्रूपोपि भक्तार्थं सगुणो जातः गुणैः सहित इति तथा, लीलाशरीरी जात इत्यर्थः ॥ ५८ ॥ त्वद्वियोगेन तव विरहेण ते तव भक्ताः सेवका भूतले कथं स्थास्यंति, स्वामिनं विना सेवकानां स्थितेर्दुःखहेतुत्वात् । निर्गुणोपासने “ निष्कलं निष्क्रियं शांतम् ” इति, “ अव्रणमलोहितमच्छायम् ” इति, “ अस्थूलमनण्वदीर्घम् ” इति वेदांतप्रसिद्धं निर्गुणं ब्रह्म, तस्योपासने सेवायां कष्टं दुःखम्, आलंबनमंतरा मनसः स्थितेर्दुर्घटत्वात्, अतोस्मात्कारणात् किंचित् किमपि भक्तार्थं विचारय त्वं चिंतय ॥ ५९ ॥ श्रुत्वैतद्धरिरचिंतयदित्याह—इतीति । इत्येवम् उद्धववचः उद्धववाक्यं श्रुत्वा प्रभासे प्रभासाख्ये तीर्थे हरिरचिंतयत ध्यानमकरोत् ।

किं तदित्याह--भक्तावलंबनार्थाय भक्तानामाधारार्थं मया किं विधेयमिति ॥ ६० ॥ स्वज्योतिषः स्थापनं श्रीमद्भागवते कृतमित्याह--स्वकीयमिति । स्वकीयमात्मीयं यत्तेजः सर्वावभासकम् "यद्भासा भासते जगत" इति श्रुतेः । तत्तेजो भागवतशास्त्रेऽदधात धृतवान् । वा एव । तिरोधाय अंतर्धाय अयं श्रीकृष्णचंद्रः परमात्मा श्रीमद्भागवतार्णवं श्रीमद्भागवतमेवार्णवः समुद्रस्तं प्रविष्टः । गूढार्थत्वेन गांभीर्यत्वात्समुद्रसाम्यम् ॥ ६१ ॥ तन्मूर्त्तिरियमित्याह--तेनेति । तेन पूर्वोक्तेन हेतुना हरेः श्रीकृष्णस्य प्रत्यक्षा सांप्रतमियं वाङ्मयी मूर्त्तिर्वर्त्तते, सा किंफलेत्यत आह—सेवनाच्छ्रवणात्पाठाद्दर्शनादिति हेतुचतुष्टयं स्पष्टमतो न व्याख्यातम् । पापनाशिनी पापनाशकर्त्री ॥ ६२ ॥ तेन कारणेन सप्ताहश्रवणं सप्तदिनमध्ये श्रीमद्भागवतश्रवणं सर्वेभ्यः साधनेभ्योऽधिकं कृतं तदेवाह—साधनानि तिरस्कृत्य पराभूय कलौ कलियुगेऽयं सप्ताहयज्ञो धर्म ईरितः कथितः ॥ ६३ ॥ तदेव पुनर्द्रढयति—दुःखेति । दुःखं शरीरे व्याधिरूपं बद्धत्वेष्टवियोगजं वा, दारिद्र्यं धनाद्यभावः,

स्वकीयं यद्भवेत्तजस्तद्धे भागवतेऽदधात ॥ तिरोधाय प्रविष्टोऽयं श्रीमद्भागवतार्णवम् ॥ ६१ ॥ तेनेयं वाङ्मयी मूर्तिः प्रत्यक्षा वर्तते हरेः ॥ सेवनाच्छ्रवणात्पाठाद्दर्शनात्पापनाशिनी ॥ ६२ ॥ सप्ताहश्रवणं तेन सर्वेभ्योऽप्यधिकं कृतम् ॥ साधनानि तिरस्कृत्य कलौ धर्मोयमीरितः ॥ ६३ ॥ दुःखदारिद्र्यदौर्भाग्यपापप्रक्षालनाय च ॥ कामक्रोधजयार्थं हि कलौ धर्मोऽयमीरितः ॥ ६४ ॥ अन्यथा वैष्णवी माया देवैरपि सुदुस्त्यजा ॥ कथं त्याज्या भवेत्पुंभिः सप्ताहोऽतः प्रकीर्तितः ॥ ६५ ॥ सूत उवाच ॥ एवं नगाहश्रवणोरुधर्मे प्रकाश्यमाने ऋषिभिः सभायाम् ॥ आश्चर्यमेकं समभूत्तदानीं तदुच्यते संशृणु शौनक त्वम् ॥ ६६ ॥

दौर्भाग्यं कृतेप्युद्यमे फलाभावः, पापं कायवाङ्मनोभिः कृतं, तेषां प्रक्षालनाय दूरीकरणाय । च पुनः । कामक्रोधजयार्थम् कामः 'कामोभिलाषस्तर्षश्च' इत्यमरोक्त्याऽप्राप्तवस्तुरूपोत्र बोध्यः, क्रोध इष्टप्राप्तिविघातजः, तयोर्जयार्थम् । हि एव । 'कलौ धर्मोयमीरितः' इति तु प्राग्वत् ॥ ६४ ॥ एनमंतरा वैष्णवी माया न निवर्त्तत इत्याह—अन्यथेति । अन्यथा प्रकारांतरेण वैष्णवी विष्णोरियं माया देवैः इंद्रादिभिरपि सुदुस्त्यजा त्यक्तुमशक्या—पुंभिरभक्तैः कथं केन प्रकारेण त्याज्या त्यक्तुयोग्या भवेदिति "मामेव ये प्रपद्यंते मायामेतां तरंति ते" इतिभगवद्वचनात् । अतः अस्मात्कारणात्सप्ताहः प्रकीर्त्तितः कथितः ॥ ६५ ॥ अथ सप्ताहयज्ञोत्कर्षवर्णने आश्चर्यमुत्पन्नमित्याह—एवमिति । एवममुना प्रकारेण नगाहश्रवणोरुधर्मे सप्ताहदिनमध्ये श्रवणमेवोरुर्महान्धर्मस्तस्मिन् सभायां ऋषिभिः प्रकाश्यमाने सति एकमाश्चर्यं तदानीं तत्समये समभूत्सं

जातम्, हे शौनक तदेवाश्चर्यं मयोच्यते त्वं संशृणु सम्यक् श्रवणं कुरु ॥ ६६ ॥ ससुताया भक्तेस्तत्राविर्भावमाह–भक्तिरिति । "यत्र भागवती वार्त्ता तत्र भक्त्यादिकं व्रजेत्" इत्युक्त्या सप्ताहमहित्वसूचनारंभे भक्त्यादित्रिकस्यागमनं जातमिति प्रतीयते । तच्छ्रवणात् तयोर्वृद्धत्वनिरासपूर्विका चेतनताभूदित्यभिप्रायेणाह–तरुणौ युवानौ तौ प्रसिद्धौ ज्ञानवैराग्यौ सुतौ गृहीत्वा संगृह्य भक्तिः सहसाऽकस्मात् आविरासीत् प्रकटाऽभूत । हे श्रीकृष्ण, हे गोविंद, हे हरे, हे मुरारे, हे नाथ, इति नामानि मुहुर्वारंवारं वदंती उच्चारयंती ॥ ६७ ॥ सभ्यास्तां दृष्टवंत इत्याह–तामिति । आगतामायातां भागवतार्थभूषां भागवता भक्तास्तेषामर्थभूषां द्रव्यालंकाररूपाम्, सुचारुवेषामतिसुंदरवेषां तां सदस्याः सभापालका ददृशुः । किं कुर्वंतः–इयं कथमागता, मुनीनां मध्ये कथं प्रविष्टा, इत्येवं तर्कयंतः ॥ ६८ ॥ तदुत्तरमाह–ऊचुरित्यर्द्धेन । तदानीं तदा कुमारा वचनम् ऊचुः । किमूचुः–इयम् अधुना कथार्थतः कथार्थं निष्पतिताऽऽविर्भूता । भक्तिः सनत्कुमारमाहेत्याह–एवमिति । एवंगिर इत्थंभूता वाणीः श्रुत्वाऽऽकर्ण्य ससुता

भक्तिः सुतौ तौ तरुणौ गृहीत्वा प्रेमैपाकरू सहसाविरासीत् ॥ श्रीकृष्ण गोविन्द हरे मुरारे नाथेति नामानि मुहुर्वदन्ती ॥ ६७ ॥ तां चागतां भागवतार्थभूषां सुचारुवेषां ददृशुः सदस्याः ॥ कथं प्रविष्टा कथमागतेयं मध्ये मुनीनामिति तर्कयन्तः ॥ ६८ ॥ ऊचुः कुमारा वचनं तदानीं कथार्थतो निष्पतिताऽधुनेयम् ॥ एवंगिरः सा ससुता निशम्य सनत्कुमारं निजगाद नम्रा ॥ ६९ ॥ भक्तिरुवाच ॥ भवद्भिरद्यैव कृतास्मि पुष्टा कलिप्रनष्टाऽपि कथारसेन ॥ क्काहं तु तिष्ठाम्यधुना ब्रुवन्तु ब्राह्म्या इदं तां गिरमूचिरे ते ॥ ७० ॥ भक्तेषु गोविन्दसुरूपधर्त्रीं प्रेमैककर्त्रीं भवरोगहन्त्री ॥ सा त्वं च तिष्ठस्व सुधैर्यसंश्रया निरन्तरं वैष्णवमानसानि ॥ ७१ ॥ ततोऽपि दोषाः कलिजा इमे त्वां द्रष्टुं न शक्ताः प्रभवोऽपि लोके ॥ एवं तदाज्ञावसरेऽपि भक्तिस्तदा निषण्णा हरिदासचित्ते ॥ ७२ ॥

पुत्राभ्यां सहिता सा भक्तिः नम्रा कृतप्रणामा सती सनत्कुमारं निजगाद ववाद ॥ ६९ ॥ तद्वाक्यं यथा–भवद्भिरिति । युष्माभिरहमद्यैवेदानीमेव पुष्टाऽप्यायितास्मि । केनेत्यत आह–कथारसेनेति । कथंभूताहं--कलिप्रनष्टा कलियुगेन प्रनष्टा, अपिशब्दात् खंडितांगा । मह्यं स्थानं निर्दिश्यतामित्याह–अहं क्क कुत्र तिष्ठामि, अधुना अद्येदं, ब्रुवंतु भवंतो गदंतु । तुशब्देन पुत्रयोरपि स्थानपृच्छा बोध्या । ब्राह्म्या ब्रह्मपुत्रा दे तां भक्तिम् इमां वक्ष्यमाणां गिरं वाचमूचिरे जगदुः । ब्रूञो द्विकर्मत्वात् कर्मद्वयम् ॥ ७० ॥ तत्प्रभावानुवर्णनपूर्वकं स्थानं निर्दिशति–भक्तेष्विति । भक्तेषु हरिदासेषु गोविंदस्य सुरूपं धरतीति तथा, प्रेमैककर्त्री प्रेम्णः संपादनकर्त्री, भवरोगहंत्री भवः संसारो जन्ममरणरूपः स एव रोगः तं हंतीति तथा, सुधैर्यसंश्रया सुष्ठु शोभनो धर्मो हरितोषणरूपस्तं संश्रयतीति तथा, सा लोके प्रसिद्धा त्वं निरंतरम् अन्तरं यथा न भवति तथा वैष्णवमानसानि भक्तचित्तानि तिष्ठस्व निवस । आत्मनेपदमार्षम् ॥ ७१ ॥ तत्र स्थितौ फलमाह–तत इति । ततः तस्मात्कारणात्कलिजाः कलेर्जाताः पार्श्वं

डादय इमे दोषा लोके प्रभवोऽपि स्वप्रभावं प्रवर्त्तयितुं समर्था अपि त्वां द्रष्टुमवलोकयितुं न शक्ता न समर्थाः, भवेयुरिति शेषः । एवमित्थं तदाज्ञावसरे तेषां सनकादीनाम् आज्ञावसरे नियोजनसमये तदा तत्क्षणे हरिदासचित्ते स्थानविशेषे निषण्णा भक्तिः कृताश्रयाऽभूत् ॥ ७२ ॥ भक्तिवैभवमाह–सकलेति । सकलभुवनमध्ये सकलानि भुवनानि चतुर्दशसंख्यानि तेषां मध्ये निर्धनाः निःस्वा ये पुरुषास्तेपि धन्याः अहो भाग्यवन्तः । ते के इत्यपेक्षायामाह--येषां हृदि हृदये मनसि वा 'स्वांतं हृन्मानसं मनः' इत्यमरोक्तेः । श्रीहरेर्लक्ष्मीपतेश्चैका मुख्या भक्तिर्निवसति निवासं करोतीति । अतोऽस्माद्धेतोः हरिरपि नारायणोपि निजलोकं वैकुंठं सर्वथा सर्वप्रकारेण विहाय त्यक्त्वा भक्तिसूत्रोपनद्धः भक्तिरेव सूत्रं रशनारूपं तेनोपनद्धो बद्धः तेषां हृदि स्वांते प्रविशति प्रवेशं करोति॥ ७३ ॥ श्रीमद्भागवतोत्कर्षं वर्णयन्नध्यायं पूरयति--ब्रूम इति। भागवतमित्यभिधा नाम यस्येति तथा तस्य ब्रह्मात्मकस्य वेदरूपस्य अधिकं महिमानं वयं किं ब्रूमः वदामः । एवमित्थं भुवि भूमौ यत्संश्रयात् यस्य भागवतस्य संश्रयाच्छ्रवणात्

सकलभुवनमध्ये निर्धनास्तेऽपि धन्या निवसति हृदि येषां श्रीहरेर्भक्तिरेका ॥ हरिरपि निजलोकं सर्वथातो विहाय प्रविशति हृदि तेषां भक्तिसूत्रोपनद्धः ॥ ७३ ॥ ब्रूमोऽद्य ते किमधिकं महिमानमेवं ब्रह्मात्मकस्य भुवि भागवताभिधस्य ॥ यत्संश्रयान्निगदनाल्लभते सुवक्ता श्रोतापि कृष्णसमतामलमन्यधर्मैः ॥ ७४ ॥ इति श्रीपद्मपुराण उत्तरखण्डे श्रीभागवतमाहात्म्ये भक्तिकष्टनिवर्तनं नाम तृतीयोऽध्यायः ॥ ३ ॥ सूत उवाच ॥ अथ वैष्णवचित्तेषु दृष्ट्वा भक्तिमलौकिकीम् ॥ निजलोकं परित्यज्य भगवान्भक्तवत्सलः ॥ १ ॥

निगदनात् नितरां कथनात्सुवक्ता शोभनव्याख्याता श्रोताऽपि कृष्णसमतां लभते–इति प्रत्येकमन्वेतव्यम् । अन्यधर्मैः अलं पर्याप्तम् । अन्यधर्मैः प्रयोजनं नास्तीति भावार्थः । 'यत्संश्रयान्निगदिते' इति पाठे यस्य संश्रयात्संबंधात् यस्मिन् भागवते निगदिते सति वाच्यमाने इत्यर्थः ॥ ७४ ॥ इति श्रीशेखावाट्यंतर्गतविजयपुरनिवासिव्राजलालिपण्डितरामप्रतापविरचितायां श्रीमद्भागवतमाहात्म्यटीकायामृजुनाम्न्यां तृतीयोऽध्यायः ॥ ३ ॥ भक्तानां हृदये स्थानं भक्त्यै दत्तं महात्मभिः ॥ दृष्ट्वा तामेव तत्रस्थां स्वलोकाद्धरिराययौ ॥ १ ॥ सूतोक्तिः शौनकं प्रति । पूर्वाध्यायांते 'तदा निषण्णा हरिदासचित्ते' इति भक्तेः स्थानं निगदितं, तदादायैवोत्तराध्यायः प्रारभ्यत इति संगतिं सूचयंस्ततः किं वृत्तमित्यत आह–अथेति । आनंतर्यार्थोऽथशब्दः । वैष्णवचित्तेषु भक्तमनस्सु अलौकिकीं लोकेऽलभ्यां भक्तिं दृष्ट्वा निजलोकं वैकुण्ठं परित्यज्य त्यक्त्वा भगवान् षड्गुणैश्वर्ययुक्तः, अमलानि शुद्धानि पापाद्यैः कामक्रोधादिसंग्रहैरसंस्पृष्टानि स्वभक्तानां हृदयानि आविवेश, इति चतुर्थेनान्वयः । तं विशिनष्टि पंचदशभिर्विशेषणैः–

भक्तवत्सलः भक्तेषु कृपालुः ॥ १ ॥ वनमाली वनमाला च—"आपादलंबिनी माला वनमाला प्रकीर्त्तिता" इत्युक्तलक्षणा, तद्वान् । घनश्यामः घन इव नीलमेघ इव श्याम इति तथा "उपमानानि सामान्यवचनैः" इति समासः । पीतवासाः पीते वाससी यस्य स तथा । मनोहरः पश्यतां नरनारीणां मनांसि हरतीति तथा । कांचीकलापरुचिरः कांची क्षुद्रघंटिका तस्याः कलापः कटिवेष्टनरूपस्तेन रुचिरः सुंदरः । लसन्मुकुटकुंडलः लसत् मणिप्रवेकैः शोभमानं मुकुटं कुंडले च यस्य स तथा।उल्लसदिति पाठांतरे समस्तमेकं पदम् ॥ २ ॥ त्रिभंगललितः त्रयो भंगा उदरे रेखाविशेषास्तैर्ललितो मनोहरः । चारुः सुरूप इति पृथक् पदमित्येके । चारु शोभनः कौस्तुभो मणिस्तेन विराजितः प्रकाशित इत्येकं पदं वा । कोटिः ( संख्याविशेषः ) मन्मथा मनो मथ्नंतीति मन्मथा कामदेवास्तेषामिव लावण्यमतिसुंदरता रूपगुणविशेषो यस्य स तथा । हरिचंदनं श्रीखंडं तेन चर्चितः पूजितः ॥ ३ ॥ परमः प्रकृष्टः सर्वोत्तम आनंदः, चित् चैतन्यं च मूर्त्तिः शरीरं यस्य स तथा । मधुरः प्रियः । मुरलीधरः मुरली वाद्यविशेषः 'वंशी'

वनमाली घनश्यामः पीतवासा मनोहरः ॥ काञ्चीकलापरुचिरो लसन्मुकुटकुंडलः ॥ २ ॥ त्रिभङ्गललितश्चारुकौस्तुभेन विराजितः ॥ कोटिमन्मथलावण्यो हरिचन्दनचर्चितः ॥ ३ ॥ परमानन्दचिन्मूर्तिर्मधुरो मुरलीधरः ॥ आविवेश स्वभक्तानां हृदयान्यमलानि च ॥ ४ ॥ वैकुण्ठवासिनो ये च वैष्णवा उद्धवादयः ॥ तत्कथाश्रवणार्थं ते गूढरूपेण संस्थिताः ॥ ५ ॥ तदा जयजयारावो रसपुष्टिरलौकिकी ॥ चूर्णप्रसूनवृष्टिश्च मुहुः शंखरवोऽप्यभूत् ॥ ६ ॥ तत्सभासंस्थितानां च देहगेहात्मविस्मृतिः ॥ दृष्ट्वा च तन्मयावस्थां नारदो वाक्यमब्रवीत् ॥ ७ ॥ अलौकिकोऽयं महिमा मुनीश्वराः सप्ताहजन्योद्य विलोकितो मया ॥ मूढाः शठा ये पशुपक्षिणोऽत्र सर्वेऽपि निष्पापतमा भवन्ति ॥ ८ ॥

इति प्रसिद्धा तां धरतीति तथा ॥ ४ ॥ श्रवणलोभेन उद्धवाद्या आगता इत्याह—वैकुंठेति । वैकुंठवासिनः वैकुण्ठे वस्तुं शीलं येषां ते तथा उद्धवादयो ये वैष्णवाः, ते च तत्कथाश्रवणार्थं भागवतगाथाश्रुतये गूढरूपेण गुप्तरूपेण संस्थिताः तत्रोपविष्टाः ॥ ५ ॥ तदा परममंगलं जातमित्याह—तदेति । तदा तस्मिन्काले जयजयारावो जयजयशब्दः । अलौकिकी लोकेऽप्रसिद्धा रसपुष्टिः रसैः पोषणम् । चूर्णानि प्रसूनानि पूर्वं व्याख्यातानि तेषां वृष्टिर्वर्षणम् । च पुनः । मुहुः पुनःपुनः शंखरवः शंखध्वनिः अभूदिति क्रियापदं प्रतिपदमन्वेतव्यम् ॥ ६ ॥ अतिचित्रमप्याह—तदिति । तत्सभासंस्थितानाम् सा चासौ सभा चेति तत्सभा तस्यां संस्थितानां देवर्षिसंघानां देहगेहात्मविस्मृतिः देहगेहे प्रसिद्धे, आत्मा सोहमिति प्रतीतिविषयस्तेषां विस्मृतिर्विस्मरणमभूत् । चात्पूर्वोक्तैव क्रिया बोध्या । तन्मयावस्थां तद्रूपावस्थां दृष्ट्वा नारदो मुनिर्वाक्यमब्रवीत् ॥ ७ ॥ स्वानुभूतं वर्णयति-अलौकिक इति । हे मुनीश्वराः सनकादयः सप्ताहजन्यः सप्तभिरहोभिः साध्यो यज्ञविशेषः 'सप्ताह' इत्युच्यते तस्माज्जन्य उत्प

यमानोऽलौकिके हरिलोकं विनाऽन्यलोकेष्वसंभवरूपो महिमा प्रभावोऽय मया विलोकितो दृष्टः । तमाह—मूढा अविवेकिनः, शठा देहाद्यहंबुद्धयः, पशुपक्षिणः प्रसिद्धाः, ते सर्वेऽपि निष्पापतमा अतिशयेन पापरहिता भवंति । 'निष्पापतया विभांति' इति पाठांतरम् ॥८॥ एतत्कथातुल्यमन्यन्नास्तीत्याह—अत इति । अतो हेतोः नृलोके मर्त्यलोके । नन्विति निश्चये । चित्तस्य शोधाय मनसः शुद्ध्यै कलौ कलियुगे पवित्रं शुद्धिकरं नास्ति । तथैव तेन प्रकारेणैव । अघौघविध्वंसकरं पापौघविनाशनं नास्तीति । भुवि धरायां कथासमानं कथातुल्यमन्यन्नास्ति ॥९॥ केषांकेषां पापिनां शुद्धिर्भवतीति पृच्छन्नाह—केके इति । कथामयेन कथारूपेण सप्ताहयज्ञेन केके जना विशुद्ध्यंति शुद्धा भवंति इति भवंतो मह्यं ब्रुवंतु गदंतु। कृपालुभिर्दयालुभिः लोकहितं लोका जनास्तेषां हितं विचार्य कोप्यश्रुतपूर्वः नवीनमार्गो नूतनः पंथाः प्रकाशितः ॥ १० ॥ कुमारोक्तिः नारदं प्रति । शुद्धिहेतुसहितानि पापिनां नामान्याह—ये मानवा इति चतुर्भिः । सर्वदा सर्वस्मिन्काले पापकृतःतु एव । सदा दुराचाररता आजीवं दुष्टाचारपरायणाः,

अतो नृलोके ननु नास्ति किञ्चिच्चित्तस्य शोधाय कलौ पवित्रम् ॥ अघौघविध्वंसकरं तथैव कथासमानं भुवि नास्ति चान्यत् ॥ ९ ॥ केके विशुध्यन्ति वदन्तु मह्यं सप्ताहयज्ञेन कथामयेन ॥ कृपालुभिर्लोकहितं विचार्य प्रकाशितः कोपि नवीनमार्गः ॥ १० ॥ कुमारा ऊचुः ॥ ये मानवाः पापकृतस्तु सर्वदा सदा दुराचाररता विमार्गगाः ॥ क्रोधाग्निदग्धाः कुटिलाश्च कामिनः सप्ताहयज्ञेन कलौ पुनन्ति ते ॥ ११ ॥ सत्येन हीनाः पितृमातृदूषकास्तृष्णाकुलाश्चाश्रमधर्मवर्जिताः ॥ ये दाम्भिका मत्सरिणोऽपि हिंसकाः सप्ताहयज्ञेन कलौ पुनंति ते ॥ १२ ॥ पंचोग्रपापाश्छलछद्मकारिणः क्रूराः पिशाचा इव निर्दयाश्च ये ॥ ब्रह्मस्वपुष्टा व्यभिचारकारिणः सप्ताहयज्ञेन कलौ पुनन्ति ते ॥ १३ ॥

विमार्गगाः कुपथचारिणः, क्रोधाग्निदग्धाः कोपानलेन ज्वलिताः, कुटिलाः वक्राः । च पुनः । कामिनः परदाराभिलाषिणो ये मानवाः संति ते सर्वे सप्ताहयज्ञेन कलौ पुनंति शुद्ध्यंति॥ ११ ॥ किंच—सत्येन हीनाः मिथ्याभाषिणः, पितृमातृदूषकाः पित्रा सहिता माता पितृमाता तस्याः दूषका इति समासो न द्वंद्वः, द्वंद्वे "आनङ् ऋतो द्वन्द्वे" इति पूर्वपदस्याऽऽनङ् स्यात् । तृष्णाकुलाः—इदं मे स्यादिदं मे स्यादिति चिंताव्याप्ताः, च पुनः आश्रमधर्मवर्जिताः आश्रमा ब्रह्मचर्याद्यास्तेषां धर्माः स्मृतिप्रसिद्धास्तैर्वर्जिता रहिताः, दांभिका लोकानुरंजनार्थं विहितकर्मानुष्ठानं दंभस्तेन जीवंतीति तथा, मत्सरिणः परोत्कर्षाऽसहनं मत्सरः सोऽस्ति येषां ते तथा, हिंसकाः जीवघातका अपि ये ते सप्ताहयज्ञेन कलौ पुनंति पूता भवंति ॥ १२॥ पंचोग्रपापाः—"ब्रह्मघ्नश्चैव गोघ्नश्च स्वर्णस्तेयी च मद्यपः । तत्संसर्गी पंचमश्च ह्युग्रपापाः प्रकीर्त्तिताः॥' इति वचनात् । पंच उग्राणि—गोहत्या—ब्रह्महत्या—मद्यपान—सुवर्णचौर्य—तत्संसर्गरूपाणि पापानि येषां ते । छलछद्मकारिणः न्यूनाधिक्येन वस्तुप्रदर्शनं छलम्, अन्यथा प्रदर्शनमित्येके । छद्म

कपटं, ते कर्त्तुं शीलं येषां ते तथा । क्रूराः क्रूरस्वभावाः। पिशाचा राक्षसजातयः, तद्वन्निर्दयाः। तथा ब्रह्मस्वपुष्टाः ब्रह्मणो ब्राह्मणस्य स्वं धनं तेन पुष्टाः स्थूलाः । व्यभिचार कारिणः व्यभिचारोऽन्यस्त्रीसंसर्गरूपस्तं कर्त्तुं शीलं येषां ते । ये एवंभूताः ते सप्ताहयज्ञेन कलौ पुनंति शुद्धाः भवन्ति ॥१३॥ कायेन शरीरेण, वाचा वाण्या, मनसा संकल्प विकल्पात्मकेन पातकं हठेन आग्रहेण ये शठा मूर्खाः नित्यं प्रकुर्वंति, परस्वपुष्टाः परधनेनाप्यायिताः, मलिना मलं कुवासनात्मकं तदस्त्येषामिति ते तथा, दुराशयाः दुर्दुष्ट आशयोंतःकरणं येषां ते तथा,सप्ताहयज्ञेन कलौ पुनंति निष्पापा भवंतीत्यर्थः ॥ १४ ॥ उक्तार्थं द्रढयति–अत्रेति । अत्र सप्ताहयज्ञेन पापनिरासे ते तुभ्यं पुरातनं पुराभ वमितिहासम्–इति एवं, ह स्फुटम्, आस बभूवेति तथाभूतं कीर्त्तयिष्यामो वर्णयिष्यामः । व्यर्थं तदिति न शंकनीयम्, यस्येतिहासस्य श्रवणमात्रेण पापहानिः पापनाशः प्रजायते ॥१५॥ तत्स्थानं निर्दिशति–तुंगभद्रेति । तुगभद्रा नदी दक्षिणदेशे प्रसिद्धा तस्यास्तटे तटोपरि पूर्वं पुरा उत्तमं पत्तनं नगरमभूदासीत् । यत्र यस्मिन्नगरे वर्णाः ब्राह्म

कायेन वाचा मनसापि पातकं नित्यं प्रकुर्वन्ति शठा हठेन ये ॥ परस्वपुष्टा मलिना दुराशयाः सप्ताहयज्ञेन कलौ पुनन्ति ते ॥ १४ ॥ अत्र ते कीर्तयिष्याम इतिहासं पुरातनम् ॥ यस्य श्रवणमात्रेण पापहानिः प्रजायते ॥ १५ ॥ तुंगभद्रातटे पूर्वमभूत्पत्तनमुत्तमम् ॥ यत्र वर्णाः स्वधर्मेण सत्यसत्कर्मतत्पराः ॥ १६ ॥ आत्मदेवः पुरे तस्मिन्सर्ववेदविशारदः ॥ श्रौतस्मार्तेषु निष्णातो द्वितीय इव भास्करः ॥ १७ ॥ भिक्षुको वित्तवाँल्लोके तत्प्रिया धुन्धुली स्मृता ॥ स्ववाक्यस्थापिका नित्यं सुन्दरी सुकुलोद्भवा ॥ १८ ॥ लोकवार्तारता क्रूरा प्रायशो बहुजल्पिका ॥ शूरा च गृहकृत्येषु कृपणा कलहप्रिया ॥ १९ ॥

णाद्याः स्वधर्मेण सत्यसत्कर्मतत्पराः--सत्यं हितभाषणं, सत्कर्म शुभकर्म, तयोः तत्पराः परायणाः, आसन्निति शेषः ॥१६॥ तद्वासिविप्रं नामतो गुणतश्च निर्दिशति--आत्मदेव इति सपादेन । तस्मिन्नुत्तमे पुरे आत्मदेवोनाम्ना सर्ववेदविशारदः सर्वेषु वेदेषु विशारदो निपुणः, चतुर्वेदतत्त्वज्ञ इत्यर्थः । श्रौतस्मार्तेषु श्रुतिर्वेदः तत्प्रतिपाद्या धर्माः श्रौताः, स्मृतिर्धर्मशास्त्रं तन्निरूपिता धर्माः स्मार्त्ताः, ते च ते चेति तथा, तेषु निष्णातो निपुणः, द्वितीयोऽन्यो भास्कर इव सूर्य इव ॥१७॥ भिक्षुको भिक्षावृत्तिः। वित्तवान् धनी । लोके जगति । तद्भार्यां वर्णयति–तत्प्रियेति सत्रिपादेन । तत्प्रिया तस्य प्रिया भार्या धुंधुली नाम्ना स्मृता । धुंधुलीति वदति घर्घररावात्।तां विशिनष्टि–स्ववाक्यस्थापिकेति। नित्यम् आत्मवचनसिद्धिकर्त्री, सुंदरी प्रशस्तरूपा, सुकुलोद्भवा सुष्ठु शोभने कुले उद्भवो जनिर्यस्याः सा तथा ॥ १८ ॥ लोकवार्त्तारता लोकानां जनानां वार्त्ता–साधुर्दुष्टो पापो निन्द्योऽसावित्येवंरूपा तस्यां रता निरता, क्रूरा क्रूरस्वभावा, प्रायशो बाहुल्येन बहुजल्पिका बहुभाषिणी, गृहकृत्येषु गृहकार्येषु शूराऽनलसा । च पुनः कृपणा

आगतायातिथये किंचिदपि अन्नादिकं दातुमसमर्था, कलहप्रिया कलहो झकटनं प्रियो यस्याः सा तथा ॥ १९ ॥ तयोर्वृत्तांतमनुवदति–एवमिति त्रिभिः । एवमुक्तविधया प्रेम्णा प्रीत्या गृहे निवसतोः निवासं कुर्वतोः दंपत्योः जायापत्योः अनपत्ययोः न पतंति पित्रादयो नरके यस्मादित्यपत्यं पुत्रस्तद्रहितयोस्तयोर्द्वयोः अर्था धनादिपदार्थाः कामा अभिलाषाः गृहादिकं सुखाय नासन् नाभूवन् ॥ २० ॥ ताभ्यां स्त्रीपुंसाभ्यां पश्चात कियत्कालानन्तरं । संतानहेतवे पुत्रप्राप्त्यर्थं धर्माः समारब्धाः कृताः । कीदृशाः धर्मा इत्याह–दीनेभ्यो याचकेभ्यो गोभूहिरण्यवासांसि गौः सूर्यसुता, भूरिला, हिरण्यं सुवर्णं, वासांसि सूत्रोर्णानिर्मितानि तानि सदा यच्छतो दत्तः, ताविति कर्तृपदमध्याहार्यम् ॥२१॥ ताभ्यां जंपतीभ्यां धनार्द्धं स्वगृहे यावद्धनमासीत्तदर्द्धं धर्ममार्गेण नीतं क्षपितं व्ययीकृतमिति यावत् । तथापि च पुत्रो नाभूत, कन्यापि वा नाभूत । तत उद्यमवैफल्याद्धेतोः भृशमतिशयेन चिंतातुरौ चिंतया दुःखितौ, अभूतामिति शेषः ॥२२॥ किंच–एकदेति–एकदा एकस्मिन्काले स द्विज आत्मदेवाख्यो विप्रो दुःखात्पुत्रा

एवं निवसतोः प्रेम्णा दंपत्यो रममाणयोः ॥ अर्थाः कामास्तयोरासन्न सुखाय गृहादिकम् ॥ २० ॥ पश्चाद्धर्माः समारब्धास्ताभ्यां संतानहेतवे ॥ गोभूहिरण्यवासांसि दीनेभ्यो यच्छतः सदा ॥ २१ ॥ धनार्धं धर्ममार्गेण ताभ्यां नीतं तथापि च ॥ न पुत्रो नापि वा पुत्री ततश्चिन्तातुरौ भृशम् ॥ २२ ॥ एकदा स द्विजो दुःखाद्गृहं त्यक्त्वा वनं गतः ॥ मध्याह्ने तृषितो जातस्तडागं समुपेयिवान् ॥ २३ ॥ पीत्वा जलं विषण्णस्तु प्रजादुःखेन कर्शितः ॥ मुहूर्तादपि तत्रैव संन्यासी कश्चिदागतः ॥२४॥ दृष्ट्वा पीतजलं तं तु विप्रो यातस्तदन्तिकम् ॥ नत्वा च पादयोस्तस्य निःश्वसन्संस्थितः पुरः ॥२५॥ यतिरुवाच ॥ कथं रोदिषि विप्र त्वं का ते चिन्ता बलीयसी ॥ वद त्वं सत्वरं मह्यं स्वस्य दुःखस्य कारणम् ॥ २६ ॥ ब्राह्मण उवाच ॥ किं ब्रवीमि ऋषे दुःखं पूर्वपापेन संचितम् ॥ मदीयाः पूर्वजास्तोयं कवोष्णमुपभुञ्जते ॥ २७ ॥

भावरूपाद्दुःखाद्धेतोः गृहं त्यक्त्वा वनं गतः मध्याह्ने काले तृषितः पिपासितस्तडागम् मानुषखातो जलाश्रयः तडाग इत्युच्यते तं समुपेयिवान् प्राप्तवान् ॥ २३ ॥ 'पीत्वे' त्यारभ्य 'विप्रस्तु गृहमागतः' इत्यंतेन प्रकारेण सोपपत्तिकं तत्संवादमाह–जलं पीत्वा प्रजादुःखेन कर्शितः प्रजा पुत्ररूपस्तस्या दुःखमसंभवरूपं तेन कर्शितः कृशः विषण्णः स्थितोऽभूत् । तत्रैव वने मुहूर्त्ताद्घटिकाद्वयात्मकात् कश्चित् अनिर्द्धारितनामगोत्रः संन्यासी आगतः आगमत् ॥ २४ ॥ पीतजलं पीतं जलं येन स तथा तं संन्यासिनं दृष्ट्वाऽवलोक्य विप्रः तदंतिकं तस्य संन्यासिनः समीपं यातः प्राप्तः, तस्य पादयोश्चरणौ नत्वा 'कर्मादीनामपि संबंधमात्रविवक्षायां षष्ठ्येव' इति पादयोरिति कर्मणिषष्ठी । पुरस्तादग्रे निःश्वसन् निःश्वासं मुंचन् संस्थितः स्थितोऽभूत् ॥ २५ ॥ संन्यासी आत्मदेवं दुःखितं दृष्ट्वा पृच्छति–कथमिति । हे विप्र त्वं कथं केन कारणेन रोदिषि, ते तव बलीयसी बलिष्ठा का चिंता, स्वस्यात्मनः दुःखस्य कारणं हेतुं सत्वरं शीघ्रं मह्यं वद ब्रूहि ॥ २६ ॥ ब्राह्मणः संन्यासिनं प्रति सकारणं दुःखमाह–किमिति । हे ऋषे पूर्वपापेन

शाकनेनाघेन संचितं संपादितं दुःखं किं ब्रवीमि वक्तुमशक्यमित्यर्थः । तथाहि–मदीयाः पूर्वजाः पित्रादयः तोयं तर्पणादौ दत्तं जलं कवोष्णम् ईषदुष्णम् उपभुंजते पिबन्ति ॥ २७ ॥ मया दत्तमपि प्रीतितोऽग्राह्यमित्याह–मदत्तमिति । प्रीत्यापि प्रेमतोपि मद्दत्तं देवा द्विजातयो ब्राह्मणादयो नैव गृह्णंति नांगीकुर्वंति । किं कारणमित्यत आह–प्रजेति । प्रजादुःखेन पुत्राऽभावजदुःखेन शून्यः गतसत्त्व इव प्राणांस्त्यक्तुमिहागत इहाहमागतोऽस्मि ॥ २८ ॥ लोके पुत्रं विना सर्वं निष्फलमित्याह–धिगिति । प्रजाहीनं पुत्ररहितं जीवितं धिक्, षष्ठयर्थे द्वितीयेयम् । प्रजां विना गृहं गेहं धिक् । च पुनः अनपत्यस्य सुतहीनस्य धनं द्रव्यादिसंपत्तिं धिक् । संततिं विना संतानमंतरेण कुलं च धिक् ॥ २९ ॥ आत्मनो दौर्भाग्यं सूचयन्नाह–पाल्यत इति द्वाभ्याम् । या धेनुः प्रत्यब्दं प्रसूयमाना गौः मया पाल्यते तृणयवादिना पोष्यते सापि गौः सर्वथा सर्वप्रकारेण बंध्या पुत्राऽभाववती भवेत् भवति । यो वृक्ष आम्रादिः मयाऽऽरोपितः भवेत् स वृक्षो घृतदुग्धाभ्यां सिक्तोपि बंध्यत्वं फलाऽप्रदर्शनरूपम् आश्रयेत् लभेत ॥ ३० ॥

मद्दत्तं नैव गृह्णन्ति प्रीत्या देवा द्विजातयः ॥ प्रजादुःखेन शून्योऽहं प्राणांस्त्यक्तुमिहागतः ॥ २८ ॥ धिग्जीवितं प्रजाहीनं धिग्गृहं च प्रजां विना ॥ धिग्धनं चानपत्यस्य धिक्कुलं संततिं विना ॥ २९ ॥ पाल्यते या मया धेनुः सा बन्ध्या सर्वथा भवेत् ॥ यो मया रोपितो वृक्षः सोऽपि बन्ध्यत्वमाश्रयेत् ॥ ३० ॥ यत्फलं मद्गृहायातं शीघ्रं तच्च विशुष्यति ॥ निर्भाग्यस्यानपत्यस्य किमतो जीवितेन मे ॥ ३१ ॥ इत्युक्त्वा स रुरोदोच्चैस्तत्पार्श्वे दुःखपीडितः ॥ तदा तस्य यतेश्चित्ते करुणाऽभूद्गरीयसी ॥ ३२ ॥ तद्भालाक्षरमालां च वाचयामास योगवान् ॥ सर्वं ज्ञात्वा यतिः पश्चाद्द्विजमूचे सविस्तरम् ॥ ३३ ॥ यतिरुवाच ॥ मुञ्चाज्ञानं प्रजारूपं बलिष्ठा कर्मणो गतिः ॥ विवेकं तु समासाद्य त्यज संसारवासनाम् ॥ ३४ ॥

यत्फलम् आम्रपिचुमंदबीजपूरादिफलं मद्गृहायातं मम गृहं मद्गृहं तदायातम् आगतं भवति, तच्च शीघ्रं तत्क्षणमेव विशुष्यति । एतेन पूर्वं फलं सरसमित्यर्थतः सिद्धम् । अत अस्मात्कारणात् निर्भाग्यस्य भाग्यहीनस्य अनपत्यस्य अपुत्रस्य मे मम जीवितेन किं, न किमपि प्रयोजनम् ॥ ३१ ॥ तद्दुःखाक्रोशं वीक्ष्य तस्य करुणोत्पन्नेत्याह–इतीति । इत्येवमुक्त्वा गदित्वा स विप्रो दुःखपीडितः तत्पार्श्वे तस्य यतेः समीपे उच्चैः स्वरेण यदा रुरोद रोदनं चकार, तदा तस्य यतेः संन्यासिनश्चित्ते हृदि गरीयसी गुरुतरा करुणा दयाऽभूत्, जातेत्यर्थः ॥ ३२ ॥ योगबलेन तत्प्रारब्धं विलोक्याब्रवीदित्याह–तदिति । योगवान् योगी तद्भालाक्षरमालां तस्य विप्रस्य भाले ललाटपट्टे अक्षरमालां विधात्रा लिखितां वर्णमालां जन्मतो मरणावधिसूचिकां वाचयामास । सर्वं ज्ञात्वा पश्चात् सविस्तरं यथा स्यात् तथा विप्रम् ऊचे ॥ ३३ ॥ संन्यासी ब्राह्मणं वैराग्यं प्रदर्शयन्नाह–मुंचेति । प्रजारूपं पुत्ररूपम् अज्ञानमविद्यां मुंच त्वं त्यज । किमित्यत आह–कर्मणो गतिर्बलिष्ठा बलवत्तरा । एतेन संततिकरं त्वद्भाग्यं नास्तीति सूचितम् ।

किं मया कर्त्तव्यमित्यपेक्षायामाह–तु उक्तार्थतो वैलक्षण्ये वर्त्तते। विवेकं ज्ञानं समासाद्य संप्राप्य संसारवासनां पुत्रो मे भूयादितीच्छारूपां त्यज ॥ ३४ ॥ मद्भाग्ये किं विधिना पुत्रो न लिखितः, किं वा पापेन प्रतिबद्धः, ग्रहदोषैर्वेति संदेहं निराकरोति–शृण्विति। हे विप्र अद्य इदानीं ते तव प्रारब्धं मया विलोकितं दृष्टम्, तुशब्दो योगबलसूचकः। सप्तजन्मावधि सप्तजन्मपर्यंतं तव पुत्रो नैव च नैव च नास्ति नास्तीति वीप्सा पुत्रेच्छां मा कुरु इति सूचनार्था ॥ ३५ ॥ पुत्रात् सुखं स्यादिति मा निश्चिनुहीत्याह–संततेरिति। दैवमंतरा योगप्रभावात् दत्तायाः संततेः सगरो राजा यथा येन प्रकारेण दुःखमवाप प्राप, तथाङ्गोपि नृपतिः। अविसर्ग पाठे अंगेति संबोधनम्। यथा यथावदिति गुरवः। पुरा पूर्वम्। रे इति अवज्ञया संबोधयति। कुटुंबाशां मे संततिरविच्छिन्ना भूतले तिष्ठतु चिरायेतीच्छामद्य मुंच परिहर। संन्यासे वासनात्यागे सर्वथा सर्वप्रकारेण सुखमस्ति ॥ ३६ ॥ विप्रो भाषते–विवेकेनेति। विवेकेन ज्ञानेन मे मम किं भवेत् किं स्यात्, न किमपि। बला

शृणु विप्र मया तेऽद्य प्रारब्धं तु विलोकितम् ॥ सप्तजन्मावधि तव पुत्रो नैव च नैव च ॥ ३५ ॥ संततेः सगरो दुःखमवापांगः पुरा तथा ॥ रे मुञ्चाद्य कुटुम्बाशां संन्यासे सर्वथा सुखम् ॥ ३६ ॥ ब्राह्मण उवाच ॥ विवेकेन भवेत्किं मे पुत्रं देहि बलादपि ॥ नो चेत्त्यजाम्यहं प्राणांस्त्वदग्रे शोकमूर्छितः ॥ ३७ ॥ पुत्रादिसुखहीनोऽयं संन्यासः शुष्क एव हि ॥ गृहस्थः सरसो लोके पुत्रपौत्रसमन्वितः ॥ ३८ ॥ इति विप्राग्रहं दृष्ट्वा प्राब्रवीत्स तपोधनः ॥ चित्रकेतुर्गतः कष्टं विधिलेखविमार्जनात् ॥ ३९ ॥

दैवं निवर्त्यापि योगबलतः मे पुत्रं त्वं देहि। विपक्षे दोषं प्रदर्शयति–नो चेत् चेयदि नो ददासि तर्हि त्वदग्रे तव पुरतः शोकमूर्छितः शोकेन मूर्छितः कर्त्तव्याकर्त्तव्यविचारशून्योहं प्राणांस्त्यजामि मरिष्यामि। वर्त्तमानसामीप्ये भविष्यति लट् ॥ ३७ ॥ स्वाचिंतितमाह–पुत्रादीति। पुत्रः प्रसिद्धः, आदिना पौत्रादिसंग्रहः, तस्य सुखेनानंदेन हीनो रहितोऽयं संन्यासः शुष्को विरसः, एव हीति निश्चयार्थकनिपातद्वयेनोक्तोर्थो दृढीकृतः। पुत्रपौत्रसमन्वितः पुत्रपौत्रैर्युक्तो गृहस्थः गृही लोके जगति सरसः रसवान् ॥ ॥ ३८ ॥ सूतोक्तिरियम्। इतीति–इत्येवं विप्राग्रहं विप्रस्य आग्रहं हठं दृष्ट्वाऽवलोक्य स तपोधनो मुनिः प्राब्रवीत् प्रावदत्। मम प्रारब्धे न पुत्रस्तथापि योगबलेन संततिं देहीत्याग्रहवंतं प्रति विधिलेखनिवारणेन पुत्रदानेपि दुःखमेव प्रत्युत न सुखमित्याह–चित्रकेतुरिति। विधिलेखविमार्जनात् विधिर्विधाता तस्य लेखो लेखनं कर्मानुसारेण

वर्णावलिस्तस्य विमार्जनात् विलायनात् चित्रकेतुर्नृपः कष्टं गतः ॥३९॥ किंच—नेति । पुत्रात्सुखं त्वं न यास्यसि न प्राप्स्यसि। तत्र दृष्टांतः–दैवहतोद्यमः दैवेन "पूर्वजन्म जनितं पुराविदः कर्म दैवमिति संप्रचक्षते" इत्युक्तलक्षणेन हतो नष्ट उद्यमः पुरुषार्थो यस्य स यथा सुखं नैति । अतोस्माद्धेतोः त्वं हठेन युक्तोसि पुत्राग्रहवानसि । हि युक्तोयमर्थः । अर्थिनं पुत्रेच्छावंतं त्वां किं वदामि ॥ ४० ॥ स्वदर्शनफलं विख्यापयन् तस्मै एकं फलं प्रदत्तवानित्याह--तस्येति । तस्य विप्रस्य आग्रहं हठं समालोक्य दृष्ट्वा एकं फलम् (आम्रस्येति शेषः) स संन्यासी तस्मै विप्राय दत्तवान् । किमेतेन स्यादिति ध्यायन्तं प्रत्याह--इदमिति । इदं फलं पत्न्या स्त्रिया त्वं भक्षय खादय,ततः फलभक्षणाद्धेतोः पुत्रो भविष्यति उत्पत्स्यते ॥ ४१ ॥ नियमाचरणात् पुत्रोपि निर्मलो भविष्यतीत्याह—सत्यमिति । सत्यं यथार्थभाषणम् । शौचं शरीरशुद्धिः । दया परस्य दुःखासहिष्णुत्वम् । दानं दीनेभ्योऽन्नादेः । एकभक्तं सकृद्भोजनम् । वर्षावधि वर्षपर्यंतं स्त्रिया गृहिण्या कार्यं कर्त्तव्यम् । तेन हेतुनाऽतिनिर्मलोऽतिशुद्धः पुत्रः, स्यादिति शेषः ॥

न यास्यसि सुखं पुत्राद्यथा दैवहतोद्यमः ॥ अतो हठेन युक्तोऽसि ह्यर्थिनं किं वदाम्यहम् ॥ ४० ॥ तस्याग्रहं समालोक्य फलमेकं स दत्तवान् ॥ इदं भक्षय पत्न्या त्वं ततः पुत्रो भविष्यति ॥ ४१ ॥ सत्यं शौचं दया दानमेकभक्तं तु भोजनम् ॥ वर्षावधि स्त्रिया कार्यं तेन पुत्रोऽतिनिर्मलः ॥ ४२ ॥ एवमुक्त्वा ययौ योगी विप्रस्तु गृहमागतः ॥ पत्न्याः पाणौ फलं दत्त्वा स्वयं यातस्तु कुत्रचित् ॥ ४३ ॥ तरुणी कुटिला तस्य सख्यग्रे च रुरोद ह ॥ अहो चिन्ता ममोत्पन्ना फलं चाहं न भक्षये ॥ ४४ ॥

॥ ४२ ॥ एवमिति--एवमित्थम् उक्त्वा कथयित्वा योगी संन्यासी ययौ । विप्रो गृहमागतः, तुरविलंबार्थः । पत्न्याः भार्यायाः पाणौ हस्ते फलं दत्त्वा समर्प्य स्वयं कुत्रचित् क्वापि यातः, कार्यार्थं गतवानित्यर्थः ॥ ४३ ॥ दुर्ज्ञेयं स्त्रीचारितं प्रदर्शयंस्तज्जायाचेष्टानाह–तरुणीति सप्तभिः । तस्यात्मदेवस्य तरुणी युवतिः कुटिला कौटिल्ययुक्ता–जातिगुणरूपगृहैश्वर्यैरस्माकं तुल्या भवसि, पुत्रप्रदफलभक्षणेन न्यूनतां पूरयेति सखीभिरुच्यमानाया अपि हठेन तदभक्षणाग्रहवत्त्वं कुटिलत्वम् । सख्यग्रे सखीनां पुरतो रुरोद रोदनं चकार । ह इति खेदे । चोप्यर्थे । किमर्थं रोदिषीति पृष्टाह–अहो अकस्मादेव मम चिंता शरीराच्छोषणहेतुरुत्पन्नाऽऽविर्भूता । का चिंतेति श्रोतुकामाः सखीः फलं प्रदर्शयन्ती तद्भक्षणं निराकरोति--पुत्रार्थं पत्या दत्तं फलं न भक्षये नाद्म्यहम् ॥ ४४ ॥

कौटिल्यं सूचयंस्तत्र कारणमाह-फलभक्षेण खादनेन गर्भः स्यात्, गर्भेण उदरस्थमांसपिंडेन उदरवृद्धिता जठरवर्धनं, ततस्तदनंतरं स्वल्पभक्षणमल्पभोजनशक्तिः । तत इति पुनर्योज्यम् । ततोऽल्पभक्षणादशक्तिः शरीरशैथिल्यं, ततो देहशैथिल्यात् गृहकार्यं मार्जनलेपनादि कथं भवेत् केन प्रकारेण स्यात् ॥ ४५ ॥ दैवात् प्रारब्धतः धाटी चौरा द्यागमरूपा व्रजेत् ग्रामे प्राप्नुयात् तदा गर्भिणी स्त्री कथं पलायेत केन प्रकारेणापसरणं विदध्यात् । 'वाटीं-वाहाटीं' वेति वदंतो भ्रांताः । किंच-गर्भः शुकवत् व्यासपुत्रवत् निवसेत स्थिरो भवेत, तस्य षोडशवर्षपर्यंतं बहिरनिर्गमात् । तं गर्भं कुक्षेः सकाशात् कथमुत्सृजेत केन प्रकारेण परित्यजेत ॥ ४६ ॥ किंच-चेद्यदि गर्भस्तिर्यक् वक्रत्वमागतः प्राप्तो भवेत् तदा मे मरणं भवेत । प्रसूतौ जन्मसमये दारुणमसह्यरूपं दुःखं सुकुमारी कोमलाङ्गी बालाऽहं कथं केन प्रकारेण सहे ॥ ४७ ॥ किंच—मयि प्रसूतिकागारे मंदायां गर्भजदुःखेन कार्यासमर्थायां सत्यां सर्वस्वं ममाखिलं धनं तदा तस्मिन्नवसरे ननांदा भर्तुर्भगिनी संहरेत् । किंच—ननांद्रनाह्वाने धात्र्या कार्यसंपत्तौ सिद्धायामपि

फलभक्षेण गर्भः स्याद्गर्भेणोदरवृद्धिता ॥ स्वल्पभक्ष्यं ततोऽशक्तिर्गृहकार्यं कथं भवेत् ॥ ४५ ॥ दैवाद्धाटी व्रजेद्ग्रामे पलायेद्गर्भिणी कथम् ॥
शुकवन्निवसेद्गर्भस्तं कुक्षेः कथमुत्सृजेत् ॥ ४६ ॥ तिर्यक्चेदागतो गर्भस्तदा मे मरणं भवेत् ॥ प्रसूतौ दारुणं दुःखं सुकुमारी कथं सहे ॥ ४७ ॥
मन्दायां मयि सर्वस्वं ननान्दा संहरेत्तदा ॥ सत्यशौचादिनियमो दुराराध्यः स दृश्यते ॥ ४८ ॥ लालने पालने दुःखं प्रसूतायाश्च वर्तते ॥ बन्ध्या
वा विधवा नारी सुखिनी चेति मे मतिः ॥ ४९ ॥ एवं कुतर्कयोगेन तत्फलं नैव भक्षितम् ॥ पत्या पृष्टं फलं भुक्तं भुक्तं चेति तयेरितम् ॥ ५० ॥
एकदा भगिनी तस्यास्तद्गृहे स्वेच्छयाऽऽगता ॥ तदग्रे कथितं सर्वं चिन्तेयं महती हि मे ॥ ५१ ॥

सत्यशौचादिनियमः सत्यशौचादीनां पूर्वोक्तानां नियमः स प्रसिद्धो दुराराध्यः मया कर्तुमशक्यो दृश्यते ॥ ४८ ॥ किंच—प्रसूतायाः प्रसववेदनासहनेपि शिशोर्लालने दुःखं वर्त्तते । तर्हि किं तेऽभीष्टमिति पृष्टा स्वाभिप्रायं प्रकाशयति—बंध्याऽप्रसूता, विधवा पतिहीना नारी स्त्री सुखिनी सुखभागनीति मे मतिः मे बुद्धिः ॥ ४९ ॥ एवमित्थं कुतर्कयोगेन विपरीततर्कयोगतः तत्फलं धुंधुल्या नैव भक्षितं नात्तम् । पत्या पृष्टं फलं भुक्तं त्वयेति तया भुक्तं मयेति ईरितं कथितम् ॥ ५० ॥ सखीसंवादं समाप्येदानीं भगिन्योर्मिथो दुर्मंत्रं निरूपयति-एकदेति। एकदा एकस्मिन्काले तस्या धुंधुल्या भगिनी सहोदरा तद्गृहं तस्या भवनं स्वेच्छया विनैव कार्यं गताऽऽगता तदग्रे तस्याः कनिष्ठभगिन्या अग्रे सर्वं-पत्या पुत्रार्थं फलं मद्धस्ते दत्तं मया न भुक्तं पतिवंचनार्थं भुक्तमित्युक्तम्, इयं पतिवंचनरूपा फलाऽभक्षेण चिंता शरीरशोषणरूपा महती मे मम, वर्त्तत इति शेषः ॥ ५१ ॥

१ अत्र केचन फलशब्देनाम्रफलं, भक्षधातुप्रयोगेणोत्तमजातिकं तदिति च व्याचक्षते । तत्राऽम्रफलनिश्चायकवाक्याऽनुपलब्धेराम्रेतरभक्षणार्हाऽनेकफलसत्त्वाच्च नैतत्कल्पना युक्तियुक्तेति भाति ।

ततो दुर्बलाहमस्मीत्याह–दुर्बलेति । तेनोक्तेन दुःखेन हे अनुजे पश्चाज्जाते दुर्बलाऽल्पवीर्याऽस्मि हि यतोऽतः किं करवाणि । सा अनुजा ज्येष्ठां भगिनीमाश्वासयन्त्याह–मम गर्भोऽस्ति, प्रसूतितः सप्तममासे तं बालं दास्यामि, तुभ्यमिति शेषः। "आचतुर्थाद्भवेत्स्रावः पातः पंचमषष्ठयोः।अत ऊर्ध्वं प्रसूतिः स्याद्दशाहं सूतकी भवेत् ॥" इतिस्मृतेः प्रसूतिशब्दोऽत्र सप्तममासवाचक उन्नेयः, न तु जन्मसूचकोऽग्रिमवचनेनासंगतेः ॥५२॥ तावत्कालपर्यंतं कूटगर्भवती सुगुप्ता भवेत्याह । तावदिति–तावत्कालं सप्तमासिकबालकप्रदानपर्यंतम्, नैरंतर्ये द्वितीयेयम् । सगर्भा इव गर्भवती यथा तिष्ठति तथा गुप्ताऽलक्षिता गृहे स्वभवने सुखं यथा स्यात्तथा त्वं तिष्ठ स्थिरा भव । स्वपुत्रस्य परस्मै दानं दुर्घटं मन्वानां प्रत्याह–मत्पतेर्मम भर्त्रे वित्तं धनं त्वं यच्छ देहि,स धनलोभी ते तुभ्यं बालकं स्वपुत्रं दास्यति'द्रव्येण सर्वे वशाः'इत्युक्तेः॥५३॥क्व ते पुत्र इति लोकैः पृष्टाऽहं मृतं विज्ञापयामीति श्रुत्वा लोकोपि तथा वदिष्यतीत्याह–षाण्मासिक इति । षट् च ते मासाश्च षण्मासाः तत्र भवः षाण्मासिको बालो मृत इति लोको जनो वदिष्यति कथयि

दुर्बला तेन दुःखेन ह्यनुजे करवाणि किम् ॥ साऽब्रवीन्मम गर्भोऽस्ति तं दास्यामि प्रसूतितः ॥ ५२ ॥ तावत्कालं सगर्भैव गुप्ता तिष्ठ गृहे सुखम् ॥
वित्तं त्वं मत्पतेर्यच्छ स ते दास्यति बालकम् ॥ ५३ ॥ षाण्मासिको मृतो बाल इति लोको वदिष्यति ॥ तं बालं पोषयिष्यामि नित्यमागत्य ते गृहे ॥ ५४ ॥ फलमर्पय धेन्वै त्वं परीक्षार्थं तु सांप्रतम् ॥ तत्तदाचरितं सर्वं तथैव स्त्रीस्वभावतः ॥ ५५ ॥ अथ कालेन सा नारी प्रसूता[1] बालकं तदा ॥ आनीय जनको बालं रहस्ये धुन्धुलीं ददौ ॥५६॥ तया च कथितं भर्त्रे प्रसूतः सुखमर्भकः॥ लोकस्य सुखमुत्पन्नमात्मदेवप्रजोदयात्॥५७॥

ष्यति । कृतेप्येवं बालरक्षणं मातरमंतरा दुर्घटमिति चिंतयंतीं प्रत्याह–ते तव गृहे नित्यमागत्य तं बालम् अहं पोषयिष्यामि पुष्टं करिष्यामि ॥ ५४ ॥ फलभक्षेण पुत्रः स्यादिति सत्यं वा मृषा वेति निर्द्धारयितुं गवे तत्समर्पितमित्याह–फलमिति । फलमिदं धेन्वै गवे परीक्षार्थं परीक्षणाय सांप्रतमद्य त्वमर्पय, भक्षणार्थमिति शेषः । खादयेति भावार्थः । तदा तस्मिन्नेव काले स्त्रीस्वभावतः 'स्त्रीणां दोषाः स्वभावजाः' इतिवचनात् तथैव तत्सर्वमाचरितं कृतम्॥ ५५ ॥ सकुतर्कं दुश्चेष्टितं निरूप्य प्रकृतमनुसरति–अथेति । अथ दुर्मंत्रणानंतरं सा कनिष्ठा भगिनी बालकं प्रसूता अजीजनत् । कालेन यथोक्तसमयेन जनकस्तत्पिता बालं शिशुम् आनीय गृहीत्वा तदा सप्तमे मासि रहसि एकांते धुंधुलीं धुंधुल्यै ददौ ॥ ५६ ॥ पुनः स्त्रीचरितं दुर्ज्ञेयमित्याह–तयेति । तया धुंधुल्या भर्त्रे पत्ये अर्भको बालः प्रसूतो जातो ममेति कथितम् । दुःखाक्रोशो न श्रुतोऽस्माभिरथ च धात्र्यानयनमपि न कृतं कथमित्यत आह–सुखमिति । श्रुत्वैतत् सर्वस्यापि सुखमुत्पन्नमित्याह–लोकस्येति । आत्मदेवप्रजोदयात् आत्मदेवस्य ब्राह्मणस्य

१ प्रासूतेति पाठान्तरम् ।

प्रजा पुत्रस्तस्योदयात् जन्मतः लोकस्य सुखमुत्पन्नम् ॥ ५७ ॥ "पुत्रजन्मव्यतीपाते दत्तं भवति चाक्षयम्" इतिधर्मशास्त्रात् सोपि दानं चकारेत्याह—ददाविति । द्विजातिभ्यो ब्राह्मणादिभ्यः दानं ददौ । आत्मदेव इति कर्तृपदमत्रोन्नेयम् । किं कृत्वा—जातकर्म विधाय संपाद्य । च पादपूर्तौ । तद्द्वारे तस्यात्मदेवस्य द्वारे गीतवादित्रघोषः गीतानि च वादित्राणि चेति गीतवादित्राणि तेषां घोषो नादोभूत् । बहु मंगलं चाभूत् ॥ ५८ ॥ मम स्तनयोर्दुग्धं नास्तीति पतिं विज्ञापयति—भर्त्तुरिति । भर्त्तुः पत्युरग्रे पुरतः वाक्यं वचनमब्रवीत् । किमित्यपेक्षायामाह—मम कुचे स्तन्यं स्तने भवं स्तन्यं दुग्धं नास्तीति । कुचयोरिति वक्तव्ये कुचे इति पाठश्छंदोऽनुरोधेन । पयोर्थं धात्रीमानयिष्यामि इति वदंतं प्रत्याह—निर्दुग्धा निर्गतं दुग्धं यस्याः सा तथाभूताहम् अन्यस्तन्येन अन्यस्त्रीजनदुग्धेन बालकमल्पशिशुं कथं केन प्रकारेण पुष्णामि पालयामि ॥ ५९ ॥ तर्हि किं कर्त्तव्यमित्यत आह—मदिति । मत्स्वसा मम कनिष्ठभगिनी या वर्तते तस्याः प्रसूतायाः प्रसववत्या बालो मृतः, अभूदिति शेषः । तां मद्भगिनीम्

ददौ दानं द्विजातिभ्यो जातकर्म विधाय च ॥ गीतवादित्रघोषोभूत्तद्द्वारे मंगलं बहु ॥ ५८ ॥ भर्तुरग्रेऽब्रवीद्वाक्यं [1]स्तन्यं नास्ति कुचे मम ॥
अन्यस्तन्येन निर्दुग्धा कथं पुष्णामि बालकम् ॥ ५९ ॥ मत्स्वसायाः प्रसूताया मृतो बालस्तु वर्तते ॥ तामाकार्य गृहे रक्ष सा तेऽर्भं पोषयिष्यति ॥
॥ ६० ॥ पतिना तत्कृतं सर्वं पुत्ररक्षणहेतवे ॥ पुत्रस्य धुन्धुकारीति नाम मात्रा प्रतिष्ठितम् ॥ ६१ ॥ त्रिमासे निर्गते चाथ सा धेनुः सुषुवेऽर्भकम् ॥
सर्वांगसुन्दरं दिव्यं निर्मलं कनकप्रभम् ॥ ६२ ॥

आकार्य आनीय गृहे रक्ष स्थापय । 'आकार्यम्' इति पाठे कार्यपर्यंतं तां गृहे रक्षेति योजना । सा ते तव अर्भं बालं पोषयिष्यति ॥ ६० ॥ स्वामिना तथा कृतमित्याह—पतिनेति । पतिना पत्या तत्सर्वं कृतं संपादितम् । किमर्थं—पुत्ररक्षणहेतवे पुत्रस्य पालनार्थम् । "द्वादशेऽह्नि पिता नाम कुर्यात्" इतिविधिमुल्लंघ्य मात्रा पुत्रनाम व्यधायीत्याह—पुत्रस्य धुंधुकारीति नाम मात्रा प्रतिष्ठितं प्रतिष्ठापितम् ॥ ६१ ॥ तत्राश्चर्यमुत्पन्नमित्याह—त्रिमास इति । त्रिमासे इति पाठात् भगिनीसंकेतान्मासत्रये व्यतीते धेन्वै फलमर्पितमिति प्रतीयते । केचित्तु—विजातीयसंततिप्रभावतो गौर्द्वादशे मासे प्रसूतेत्याहुः । धुंधुकारीजन्मतः त्रिमासे निर्गते सति सा धेनुः अर्भकं बालं सुषुवे जनयामास । कीदृशम्—सर्वांगसुंदरं सर्वैरंगैर्मनोहरम् । दिव्यं वीर्यसंपर्काभावात्फलमहिम्ना वा । निर्मलं शुद्धम् । कनकप्रभं सुवर्णस्य प्रभा इव प्रभा यस्येति तम् ॥ ६२ ॥

१ यावद्बालस्य स्तनन्धयत्वं, यावद्वा तस्याः सदुग्धत्वमित्याशयः ।

तद्दृष्ट्वा हर्षितो विप्र इत्याह—दृष्ट्वेति । दृष्ट्वा गोप्रसूतं बालं निरीक्ष्य प्रसन्नस्तुष्टो विप्रः स्वयं संस्कारान् जातस्य जातकर्मादीनादधे चकार। सर्वे जना नागरिका दिदृक्षार्थं तद्दर्शनकाम्यया समागताः समाययुः । तत्र हेतुः—आश्चर्यं मत्वेति ॥ ६३ ॥ धन्योऽयं विप्र इति लोको वक्तीत्याह—भाग्योदय इति । आत्मदेवस्य विप्रस्याधुनेदानीं भाग्योदयो जातः । देवरूपी बालो धेन्वा प्रसूत इति कौतुकं यूयं पश्यत आलोकयत ॥ ६४ ॥ तद्धेतुर्न ज्ञातः कैश्चिदित्याह—नेति । तत् रहस्यं संन्यासियोग प्रभावदत्तफलभक्षणरूपं केनापि न ज्ञातम् । अज्ञाने हेतुः—विधियोगतः दैवबलात । गोकर्णं गोः कर्णाविव कर्णौ यस्य स तथेति तं सुतं पुत्रं दृष्ट्वा गोकर्ण नामाऽकरोत तस्य गोकर्ण इति नाम व्यदधादित्यर्थः । अत्रात्मदेवेति कर्तृपदमध्याहार्यम् । चौ प्रसिद्धिद्योतकौ ॥ ६५ ॥ कारणवैचित्र्यं कार्यविचित्रतायां कारणमित्याह—कियदिति । तावुभौ द्वौ तनयौ बालकौ कियत्कालेन तरुणौ जातौ युवानावभूताम् । तयोश्चेष्टाभेदमाह—गोकर्णः पंडितः सदसद्विवेकिनी बुद्धिः पंडा सा सं जाताऽस्येति तथा, ज्ञानी ज्ञान

दृष्ट्वा प्रसन्नो विप्रस्तु संस्कारान्स्वयमादधे ॥ मत्वाऽऽश्चर्यं जनाः सर्वे दिदृक्षार्थं समागताः ॥ ६३ ॥ भाग्योदयोऽधुना जात आत्मदेवस्य पश्यत ॥ धेन्वा बालः प्रसूतस्तु देवरूपीति कौतुकम् ॥ ६४ ॥ न ज्ञातं तद्रहस्यं तु केनापि विधियोगतः ॥ गोकर्णं च सुतं दृष्ट्वा गोकर्णं नाम चाकरोत् ॥ ६५ ॥ कियत्कालेन तौ जातौ तरुणौ तनयावुभौ ॥ गोकर्णः पण्डितो ज्ञानी धुन्धुकारी महाखलः ॥ ६६ ॥ स्नानशौचक्रियाहीनो दुर्भक्षी क्रोधसंयुतः ॥ दुष्परिग्रहकर्त्ता च शवहस्तेन भोजनः ॥ ६७ ॥

मस्यास्तीति तथा । धुंधुकारी महाखलोऽविदुष्टो महापापकरणात्॥ ६६ ॥ तद्दुष्टतां निरूपयति सार्द्धैस्त्रिभिः। स्नानेति—“स्नानं तु द्विविधं प्रोक्तं मंत्रमुसलभेदतः । इत्युक्तलक्षणं स्नानं। शौचं च द्विविधं स्मृतम्॥ बाह्याभ्यंतरभेदेन क्रिया नानाविधाः स्मृताः ।” इतिवचनान्निरुक्ताभिः स्नानशौचक्रियाभिर्हीनो रहितः । दुर्भक्षी अपरीक्षितान्नभोक्ता । क्रोधसंयुतः क्रोधयुक् दुराचारनिवारणार्थसदुपदेशात । दुष्प्रतिग्रहकर्त्ता च दुष्टा ये प्रतिग्रहाः ब्रह्मांडपुराणोक्तास्तेषां कर्त्ता । तथाहि—“तिलधेनुर्गजो वाजी प्रेतान्नमजिनं मणिः । सुरभिः सूयमाना च दुष्टाः सप्त प्रतिग्रहाः॥”। मणिः शालिग्रामः । गौरुभयतोमुखी । शवहस्तेन भोजनः शवस्य मृतस्य जंतोर्देहस्य हस्तेन साधनेन स्मशाने भुंक्ते इति स तथेति देशांतरीयव्यवहारः । वस्तुतस्तु शवं मृतं हंति वहंतीति शवहणस्तेनाः चौराः तैः सह भोजनं यस्येति स तथा । हंतिरत्र प्रापणार्थः । यद्वा—शववहनचौर्याभ्यां भोजनं यस्येति स तथेति केचित् । ‘सव्यहस्तेन भोजनः’ इति पाठोपि कुत्रचित् । “वामहस्तेन यद्भुक्तं मांसतुल्यं स्मृतं बुधैः” इतिस्मृतौ वामहस्तभोजननिषेधात ॥ ६७ ॥

चोरः परधनमोषकः । सर्वजनद्वेषी सर्वैरात्मीयैः परकीयैर्वा जनैः सह द्वेष्टुं शीलमस्येति स तथा । परवेश्मप्रदीपकः परेषां वेश्मानि तार्णगृहाणि वह्निना प्रदापयतीति तथा । लालनाय विलासार्थम् अर्भकान् बालकान्धृत्वा गृहीत्वा सद्यः तत्कालं कूपे न्यपातयत प्रक्षिप्तवान् ॥ ६८ ॥ हिंसको जीवघाती । शस्त्रधारी शस्त्राणां धारकः । दीनांधानां प्रपीडकः, दीनाः—"सर्ववस्तुविहीना ये ते दीनाः परिकीर्त्तिताः। क्षयार्थकात्तु दीङ्धातोर्निष्ठायां नत्वदर्शनात्॥" इत्युक्ताः, अंधा नेत्रहीनाः, तेषां दुःखदः । चांडालेषु अभिरतोऽनुरक्तः । नित्यं सदा पाशहस्तः पाशो हस्ते यस्य स तथा । श्वसंगतः श्वभिः कुक्कुरैः संगतः सहितः ॥ ६९ ॥ वेश्यानां प्रसंगतः संसर्गात् तेन धुंधुकारिणा पित्र्यं पितृसंबंधि वित्तं धनं नाशितम् । 'त्वंताथादि न पूर्वभाक्' इत्यमरोक्तेः । तु वैलक्षण्ये । तद्यथा—एकदा एकस्मिन् काले पितरौ माता च पिता चेति तथा तौ "पुमान् स्त्रिया" इत्येकशेषः । ताड्य ताडयित्वा । समासे ल्यब्विधानात् ताड्येति छांदसं रूपम् । पात्राणि स्थालीकमंडल्वादीनि स्वयमाहरत् हृत्वा अन्यत्रानयत्, वेश्यागृहं प्रापयदि

चोरः सर्वजनद्वेषी परवेश्मप्रदीपकः ॥ लालनायार्भकान्धृत्वा सद्यः कूपे न्यपातयत् ॥६८॥ हिंसकः शस्त्रधारी च दीनान्धानां प्रपीडकः ॥ चाण्डालाभिरतो नित्यं पाशहस्तश्च संगतः ॥ ६९ ॥ तेन वेश्याप्रसंगेन पित्र्यं वित्तं तु नाशितम् ॥ एकदा पितरौ ताड्य पात्राणि स्वयमाहरत् ॥ ७० ॥ तत्पिता कृपणः प्रोच्चैर्धनहीनो[1] रुरोद ह ॥ बन्ध्यत्वं तु समीचीनं कुपुत्रो दुःखदायकः ॥ ७१ ॥ क्व तिष्ठामि क्व गच्छामि को मे दुःखं व्यपोहयेत् ॥ प्राणांस्त्यजामि दुःखेन हा कष्टं मम संस्थितम् ॥ ७२ ॥

त्यर्थतः सिद्धम् ॥ ७० ॥ धननाशं कुमार्गेण दृष्ट्वा शोचति तत्पितेत्याह—तदिति । कृपणः कृच्छ्रात्तधनस्यान्यायतो व्ययमकारीति । तदुक्तम्—" धनस्य रक्षणार्थाय प्राणहानिं करोति यः । बुभुक्षितोपि नो भुंक्ते कृपणः स विधीयते ॥ " इति । तत्पिता तस्य धुंधुकारिणः पिता जनकः धनहीनः निर्धनः प्रोच्चैरुदात्तस्वरेण रुरोद विललाप । हेति स्पष्टम् । निःसत्त्वं मरणमेव । तथाहि—उद्योगपर्वणि श्रीकृष्णं प्रति युधिष्ठिरवचनम्—" लोभः प्रज्ञानमाहंति प्रज्ञा हंति हता ह्रियम् ॥ ह्रीर्हता बाधते धर्मं धर्मो हंति हतः श्रियम् ॥ १ ॥ श्रीर्हता पुरुषं हंति पुरुषस्याधनं वधः ॥ अधनाद्धिनिवर्तंते ज्ञातयः सुहृदो द्विजाः ॥ २ ॥ अपुष्पादफलाद्वृक्षाद्यथा कृष्ण पतत्रिणः ॥ " । तमेवाह सार्द्धेन । बंध्यत्वं तु समीचीनम् " अपुत्रत्वं वरं मन्ये कुपुत्राद्दुःखदायकात् " इति विवर्णरूपमत्रोन्नेयम् ॥ ७१ ॥ क्व कुत्र स्थाने अहं तिष्ठामि स्थितिं करोमि " दुःखेन सह संवासः सर्वथा दुःखकृन्मतः " इत्युक्तेः क्व कुत्र गच्छामि स्वगेहस्य त्यक्तुमशक्यत्वात् । मे मम दुःखं कुपुत्रधननाशाभ्यां



१ 'धनहानौ' इति पाठान्तरम् ।

जातं को व्यपोहयेत् को विनाशयेत्। दुःखेन हेतुना प्राणान् अहं त्यजामि। इत्याक्रोशे। कष्टं मम संस्थितं जातम् ॥ ७२ ॥ " तदानीं प्राप्य गोकर्णः पितरं पर्यबोधयत्। अवस्तुत्वं हि जगतो वैराग्येण निरूपयन् ॥ " इत्याह—तदानीमिति। तदानीं तर्हि समागत्य गृहमागत्य ज्ञानेन संयुतः ज्ञानी गोकर्णो जनकं पितरं बोधयामास ज्ञापयांचक्रे 'पिता पुत्रेण संबोध्यो न पाठ्य इति संमतेः'। गोप्रजातस्य तस्य कथं पितृत्वमस्येति न भ्रमितव्यम्, " अन्नदाता भयत्राता यश्च कन्यां प्रयच्छति। विद्याप्रदो मंत्रदश्च पंचैते पितरः स्मृताः ॥ " इति नीत्युक्तेः, " तावेव पितरौ तस्य यौ पुष्णीतः स्वपुत्रवत् " इति व्यासवचनाच्च तथा व्यवहारात्। वैराग्यं परिदर्शयन्। तथाहि—" यः पूर्वमपिबत्स्तन्यं निष्पीड्य च पयोधरान्। यस्मिञ्जातो भगे पूर्वं तस्मिन्नेव भगे रमेत् ॥ १ ॥ या माता सा पुनर्भार्या या भार्या जननी हि सा। यः पिता स पुनः पुत्रो यः पुत्रः स पुनः पिता ॥ २ ॥ एवं संसारचक्रेण कूपचक्रघटा इव " इत्यादि ॥ ७३ ॥ तत्प्रकारमाह—असार इति। संसारो मोहतः संसृतिरूपो विचारतो असारः। खलु निश्चये। दुःखरूपी दुःखाकरत्वात्। विमोहकः विशेषेण मोहकर्त्ता। कस्य सुतः पुत्रः, कस्य धनं, न कस्यापीत्यर्थः। स्नेहवान् अनुरक्त अनि

तदानीं तु समागत्य गोकर्णो ज्ञानसंयुतः ॥ बोधयामास जनकं वैराग्यं परिदर्शयन् ॥ ७३ ॥ असारः खलु संसारो दुःखरूपी विमोहकः ॥ सुतः कस्य धनं कस्य स्नेहवाञ्ज्वलतेऽनिशम् ॥ ७४ ॥ न चेन्द्रस्य सुखं किञ्चिन्न सुखं चक्रवर्तिनः ॥ सुखमस्ति विरक्तस्य मुनेरेकान्तजीविनः ॥ ७५ ॥ मुञ्चाज्ञानं प्रजारूपं मोहतो नरके गतिः ॥ निपतिष्यति देहोऽयं सर्वं त्यक्त्वा वनं व्रज ॥ ७६ ॥ तद्वाक्यं तु समाकर्ण्य गन्तुकामः पिताऽब्रवीत् ॥ किं कर्तव्यं वने तात तत्त्वं वद सविस्तरम् ॥ ७७ ॥ अन्धकूपे स्नेहपाशैर्बद्धः पंगुरहं शठः ॥ कर्मणा पतितो नूनं मामुद्धर दयानिधे ॥ ७८ ॥

शमहोरात्रं ज्वलते परितपति ॥ ७४ ॥ वस्तुतस्तु न कोपि सुखीत्याह—न चेति। इंद्रस्य स्वर्गपतेः किंचित् अल्पमपि सुखं न च नास्ति। चक्रवर्तिनः सार्वभौमस्य नृपस्य न सुखम्। ननु 'सुखं दुखं भवोऽभवः' इत्यादौ किमिति सुखनिरूपणं, तत्राह—सुखमिति। विरक्तस्य विरागिणो मुनेर्मननशीलस्य एकांतजीविनः एकांते निर्जनस्थाने कंदमूलफलैर्जीवितुं शीलं यस्य तस्य सुखमस्ति ॥ ७५ ॥ अथ कर्त्तव्यमाह—मुंचेति। प्रजारूपं पुत्ररूपमज्ञानं त्वं मुंच त्यज। तत्र हेतुः—मोहतो नरके गतिः गमनम्। अयं देहः पांचभौतिकः निपतिष्यति आरब्धकर्मसमाप्तौ मरिष्यति। अतः सर्वं गृहपुत्रधनादिकं त्यक्त्वा वनं व्रज गच्छ ॥ ७६ ॥ सुतोक्तं हितं मन्वानः पिताह—तद्वाक्यमिति। तस्य पुत्रस्य वाक्यं वचनं समाकर्ण्य संश्रुत्य वने गंतुकामो यातुकामः पिताऽऽत्मदेवोऽब्रवीत्—हे तात पुत्र मया किं कर्त्तव्यं, तत्तत्कार्यं सविस्तरं यथा स्यात्तथा त्वं वद ब्रूहि ॥ ७७ ॥ स्वयं विचार्य कुरुतां किं मत्कथनेनेत्यत आह—अंधकूपे तत्तुल्ये संसारकूपे कर्मणा पतितः स्नेहपाशैर्मोहरज्जुभिर्बद्धो यंत्रितः पंगुः

पादहीनः शठो मूर्खोऽहमस्मि । नूनं निश्चयेन । हे दयानिधे कृपासागर मामुद्धर बहिर्निःसारय ॥ ७८ ॥ गोकर्णः पितरं संसारादुद्दिधीर्षुस्तत्प्रकारमाह—देह इति द्वाभ्याम् । अस्थिमांसरुधिरे अस्थ्रा सह मांसरुधिरे यस्मिन्स तथेति केचित्, अस्थिमांसाभ्यां सह रुधिरं यस्मिन्नित्यपरे तन्मंदम्, अस्थि च मांसं च रुधिरं चेत्यस्थिमांसरुधिराणि तानि विद्यंते यस्मिन्नित्यस्थिमांसरुधिरः । अर्शआद्यच् । तस्मिन्निति सुगमोपायसत्त्वे क्लिष्टाऽप्रशस्तकल्पनाया अन्याय्यत्वात् । एतेन अस्थिमांसरुधिरात्मके इत्यर्थो लभ्यते । ईदृशे देहे शरीरे अभिमतिं ममायमात्मेत्यभिमानं त्वं त्यज परिहर । जायासुतादिषु स्त्रीपुत्रादिषु । आदिना धनगृहादिसंग्रहः । ममतां ममेयं स्त्री ममायं सुतो ममेदं गृहमित्यादिरूपं ममत्वं सदा सर्वस्मिन् काले विमुंच त्वं त्यज, तत्र ममेत्याग्रहं मा कुर्विति भावार्थः । इदं जगत् क्षणभंगनिष्ठं क्षणेन भङ्गे नाशे निष्ठा स्थितिर्यस्य तत् । 'क्षणभङ्गुरत्वम्' इति पाठेऽपि नार्थे विशेषः । अनिशम् अहोरात्रं पश्य त्वमवलोकय । वैराग्यभावरसिकः वैराग्ये भावो

गोकर्ण उवाच ॥ देहेऽस्थिमांसरुधिरेऽभिमतिं त्यज त्वं जायासुतादिषु सदा ममतां विमुञ्च ॥ पश्यानिशं जगदिदं क्षणभंगनिष्ठं वैराग्य[1]भावरसिको भव भक्तिनिष्ठः ॥ ७९ ॥ धर्मं भजस्व सततं त्यज लोकधर्मान्सेवस्व साधुपुरुषाञ्जहि कामतृष्णाम् ॥ अन्यस्य दोषगुणचिन्तनमाशु मुक्त्वा सेवा[2]कथारसमहो नितरां पिब त्वम् ॥ ८० ॥ एवं सुतोक्तिवशतोऽपि गृहं विहाय यातो वनं स्थिरमतिर्गतषष्टिवर्षः ॥ युक्तो हरेरनुदिनं परिचर्ययाऽसौ श्रीकृष्णमाप नियतं दशमस्य पाठात् ॥ ८१ ॥ इति श्रीपद्मपुराण उत्तरखण्डे श्रीमद्भागवतमाहात्म्ये विप्रमोक्षो नाम चतुर्थोऽध्यायः ॥ ४ ॥

भक्तिः तस्य रसिकः, वैराग्यप्रिय इत्यर्थः । भक्तिनिष्ठः भक्तौ निष्ठा स्थितिर्यस्य स तथा । 'योगनिष्ठः' इति पठांतरम् ॥ ७९ ॥ धर्मं स्वधर्मं सततं निरंतरं भजस्व सेवस्व । लोकधर्मान् काम्यधर्मान् त्वं त्यज । 'भूतहिंसाम्' इति पाठांतरं रम्यमिति गुरवः । साधुपुरुषान् सज्जनान् त्वं सेवस्व भजस्व । 'कामतृष्णाम्' इत्यपपाठः, 'कामोऽभिलाषस्तर्षश्च' इत्यमरोक्तेः कामतृष्णयोरेकार्थत्वात् । वस्तुतस्तु—'कामशत्रुम्' इति पाठो रम्यः, संप्रदायानुरोधात् । कामशत्रुं कामरूपं शत्रुं त्वं जहि । "जहि शत्रुं महाबाहो कामरूपं दुरासदम्" इति गीतायां श्रीकृष्णोक्तौः कामस्य महाशत्रुत्वप्रसिद्धेः । अन्यस्य परस्य दोषगुणचिंतनं दोषाश्च गुणाश्च दोषगुणास्तेषां चिंतनमाशु शीघ्रं मुक्त्वा त्यक्त्वा भगवत्सेवाकथयोः रसं त्वं नितरामतिशयेन पिब । अहो इत्यलभ्यलाभोक्तिस्तव महाभाग्यत्वसूचनार्था ॥ ८० ॥ स चोमिति प्रतिश्रुत्य तथाऽचरणान्मुक्तिमापेत्याह—एवं



१ 'रागरसिकः' इति पाठान्तरम् । २ अत्र 'विष्णोः कथारसम्' इति पाठान्तरं शोभनम् । केचित्तु 'शैवीकथारसम्' इति पठित्वा हरिहरयोरभेदान्वयेन पूर्वापरविरोधं समादधुः, तच्च न रम्यं, 'प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वरम्' इति न्यायात् ।

सुतोक्तिवशतः,—उक्तविधा या पुत्रस्योक्तिः कथनं तस्या वशतः अपि एव गृहं विहाय त्यक्त्वा स्थिरमतिः स्थिरा निश्चला मतिर्बुद्धिर्यस्य स तथा। गतषष्टिवर्षः गतानि षष्टिर्वर्षाणि यस्य स तथा वनं यातः प्राप्तः । असावात्मदेवः हरेः पापहंतुर्भगवतः परिचर्यया सेवया युक्तः संपन्नोऽनुदिनं प्रतिदिनं दशमस्य स्कंधस्य पाठात् श्रीकृष्णमाप प्राप । नियतमिति निश्चितम्, क्रियाविशेषणमित्येके ॥ ८१ ॥ इति श्रीशेखावाट्यंतर्गतविजयपुरनिवासिब्राजलालिपंडितरामप्रतापविरचितायां श्रीमद्भागवतमाहात्म्यटीकायामृजुनाम्न्यां चतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥ ॥ तातस्य तातवाक्येन गतिमुक्त्वात्मघाततः ॥ मातुर्मृतिः कुसंगेन प्रेतभावो निरूप्यते ॥ १ ॥ धुंधुकारिण आहोस्विद्गोकर्णाद्गतिरुच्यते ॥ श्रीमद्भागवतस्यात्र सप्ताहश्रवणे विधिः ॥ २ ॥ पूर्वाध्याये “ एकदा पितरौ ताड्य पात्राणि स्वयमाहरत् ( ७० ) ” इत्यत्रोभयोस्ताडनमुक्त्वा धननाशाद्रुदतः पितुर्गोकर्णोपदेशेन गतिरुक्ता । अत्र तु तत्संगतिनिरूपणाय तन्मातृवृत्तं निरूपयति सूतः—पितरीति द्वाभ्याम् । पितरि उपरते उपरामं गते सति तेन धुंधुकारिणा जननी धुंधुली भृशमत्यर्थं ताडिता पीडिता । वित्तं धनं क्व तिष्ठते कुत्र स्थापितमस्ति निधिरूपेण इति ब्रूहि वद, चेद्यदि नो वदसि तदा लत्तया हनिष्ये त्वां हनिष्यामि ॥

सूत उवाच ॥ पितर्युपरते तेन जननी ताडिता भृशम् ॥ क्व वित्तं तिष्ठते ब्रूहि हनिष्ये लत्तया न चेत् ॥ १ ॥ इति तद्वाक्यसंत्रासाज्जनन्या पुत्रदुःखतः ॥ कूपे पातः कृतो रात्रौ तेन सा निधनं गता ॥ २ ॥ गोकर्णस्तीर्थयात्रार्थं निर्गतो योगसंस्थितः ॥ न दुःखं न सुखं तस्य न वैरी नापि बान्धवः ॥ ३ ॥ धुन्धुकारी गृहेऽतिष्ठत्पञ्चपण्यवधूवृतः ॥ अत्युग्रकर्मकर्ता च तत्पोषणविमूढधीः ॥ ४ ॥

॥ १ ॥ इत्येवं तद्वाक्यसंत्रासात् तस्य धुंधुकारिणो वाक्यं तद्वाक्यं तस्मात्संत्रास उद्वेगस्तस्मात् पुत्रदुःखतः पुत्राद्दुःखं ताडनादिकं तस्मात् जनन्या मात्रा रात्रौ निशि कूपे पातः कृतः । तेन पातेन हेतुना सा माता निधनं गता मृतिं प्राप्ता । “ आत्मघातकरा ये च ते वै निरयगामिनः ” इतिस्मृतेर्धुंधुल्या नरकप्राप्तिर्जातेति ध्वनितम् ॥ ॥ २ ॥ “ खलेन सह संवासः साधोः शांताय नेष्यते ” इतिवचसा गोकर्णनिर्गममाह—गोकर्ण इति । “ योगस्थः कुरु कर्माणि संगं त्यक्त्वा धनंजय । सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ” इति गीतायां श्रीकृष्णोक्तेः योगे संस्थितो वर्त्तमानो युक्तो वा गोकर्णस्तीर्थयात्रार्थं निर्गतः निःसृतः ‘ तीर्थानामटनं पुण्यम् ’ इत्युक्तेः । तस्य गोकर्णस्य दुःखं नास्ति, सुखं नास्ति, वैरी शत्रुर्नास्ति, बांधवो भ्राता नास्ति ॥ ३ ॥ पुनः सिंहावलोकन्यायेन मंडूकप्लुत्या वा धुंधुकारिचेष्टितमाह—धुंधुकारीति । धुंधुकारी “परप्रियाधनं हर्तुं यतो धुंधु करोत्यसौ। धुंधुकारीति लोकेस्मिन्सर्वत्र ख्यातिमागतः॥ ” इत्युक्ताभिधावान्, पंचपण्यवधूवृतः पणितुम् आत्ममूल्येन पुंमात्रैः सह व्यवहर्तुं रंतुं वा योग्याः पण्याः, पण्याश्च ता वध्वश्च पण्यवध्वः, पंच च ताः पण्यवध्वश्चेति तथा तास्ताभिर्वृतः संयुतः । गृहे पितृनिर्मिते । अवसत् अतिष्ठत् । कथंभूतः—अत्युग्राणि

हिंसात्मकानि कर्माणि तेषां कर्त्ता । च पुनः तत्पोषणं तासां वेश्यानां पोषणं तेन विमूढा धीर्यस्य स तथा ॥ ४ ॥ " स्त्रीवशो जायते कामी न चोल्लंघति तद्वचः " इत्युक्तेस्तस्य तद्दीनतां दर्शयति—एकदेति । एकदा एकस्मिन् काले नर्मवेलावसरे ताः कुलटा वेश्या भूषणानि चूडामणिकुंडलहारादीनि अभिलिप्सव अभिलब्धुं प्राप्तुमिच्छंतीति तथाभूतास्ता अभवन् । तदर्थं तन्निमित्तं गेहात् निर्गतः निरगात् । तं विशिनष्टि—कामांधः कामेन पिहितनेत्रः मृत्युम् अस्मरन्नविचारयन्सन् । तदुक्तम्—'कामातुराणां न भयं न लज्जा' इति ॥ ५ ॥ "अहमाभिर्गृहस्थोस्मि ह्यकार्यकरणोद्यतः । अप्यकार्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत्॥" इत्युक्तेराह—यत इति । यतस्ततः यस्मात्तस्मात्स्थानात् वित्तं धनं संहृत्य आहृत्य पुनर्भूयो वेश्म स्वगृहं गत आयातः ताभ्यः पंचभ्यो वेश्याभ्यः कियंति सुवस्त्राणि पट्टांबराणि भूषाणि पूर्वोक्तानि चाऽयच्छत् अददात् ॥ ६ ॥ " धूर्त्तेन धनमानीतं चौर्येणात्र न संशयः । शतं चौरस्य समया एक एव हि स्वामिनः ॥" इति नीत्या तासां वितर्कोभूदित्याह—बह्विति सार्द्धद्वा

एकदा कुलटास्तास्तु भूषणान्यभिलिप्सवः ॥ तदर्थं निर्गतो गेहात्कामान्धो मृत्युमस्मरन् ॥ ५ ॥ यतस्ततश्च संहृत्य वित्तं वेश्म पुनर्गतः ॥ ताभ्योऽयच्छत्सुवस्त्राणि भूषणानि कियन्ति च ॥ ६ ॥ बहुवित्तचयं दृष्ट्वा रात्रौ नार्यो व्यचारयन् ॥ चौर्यं करोत्यसौ नित्यमतो राजा ग्रहीष्यति ॥ ७ ॥ वित्तं हृत्वा पुनश्चैनं मारयिष्यति निश्चितम् ॥ अतोऽर्थगुप्तये गूढमस्माभिः किं न हन्यते ॥ ८ ॥ निहत्यैनं गृहीत्वाऽर्थं यास्यामो यत्रकुत्रचित् ॥ इति ता निश्चयं कृत्वा सुप्तं संबध्य रश्मिभिः ॥९॥ पाशं कण्ठे निधायास्य तन्मृत्युमुपचक्रमुः ॥ त्वरितं न ममारासौ चिन्तायुक्तास्तदाऽभवन् ॥१०॥

भ्याम् । बहुं वित्तचयं धनसंचयं दृष्ट्वा रात्रौ नार्यो वेश्या व्यचारयन् । विचारं दर्शयति—असौ धुंधकारी नित्यं प्रतिदिनं चौर्यं करोति, अतश्चौर्यकरणाद्धेतोः राजा ग्रहीष्यति, धनमिति शेषः ॥ ७ ॥ वित्तं चौर्यार्जितं धनं हृत्वाऽऽकृष्य पुनर्भूयः एनं चौर्यकर्त्तारं निश्चितं ध्रुवं मारयिष्यति । अतो हेतोर्गूढमप्रकाशं यथा स्यात्तथाऽर्थगुप्तये धनरक्षणार्थम् अस्माभिः किं न हन्यते, किमिति न वध्यते ॥ ८ ॥ एनं धुंधुकारिणं निहत्य निश्चयेन हत्वाऽर्थं धनं गृहीत्वाऽऽदाय यत्र कुत्रचित् अलक्षिते देशे यास्यामो वयं गमिष्याम इत्येवं निश्चयं कृत्वा ता वेश्याः सुप्तं धुंधुकारिणं रश्मिभिः रज्जुभिः संबध्य बंधयित्वा ॥ ९ ॥ अस्य धुंधुकारिणः कंठे गले पाशं निधाय कृत्वा तन्मृत्युं तस्य मृत्युम् उपचक्रमुः कर्तुमुद्यता बभूवुः । असौ धुंधुकारी महापापित्वात् त्वरितं शीघ्रं न ममार । यदा न ममार तदा ताश्चिन्तायुक्ता अभवन् ॥ १० ॥

तन्मुखे तस्यास्ये तप्तांगारसमूहान् तप्तानामंगाराणां संघान् विचिक्षिपुः निक्षिप्तवत्यः । हि युक्तम् । सोऽपि अग्नेर्ज्वाला तया अतिदुःखं महाकष्टं तेन व्याकुलो व्यग्रचित्तो निधनं मृत्युं गतः प्राप्तः ॥ ११ ॥ तं देहं मृतशरीरं गर्त्ते भूविवरे मुमुचुः निचिक्षिपुः। प्रायो बाहुल्येन स्त्रियः साहसिकाः 'साहसो हठः' इति चरके । तेन प्रवर्त्तन्त इति "ओजस्सहोऽम्भसा वर्त्तते" इति ठक्कि ङीबभाव आर्षः । तदुक्तं गुणसंग्रहे-"कुर्वंति सहसा कार्यं निर्विचारं प्रकुर्वते । अतः साहसिका लोके नार्यः प्रख्यातिमागताः॥" इति। तद्रहस्यं तस्य निदानं केनापि न ज्ञातं न बुद्धम् । इदं स्त्रीचरितं तथैवाऽलक्षितमेव । च पादपूर्त्तौ ॥ १२ ॥ "पप्रच्छुर्हि हनूः पौरा अपश्यंतोऽनुरागिणम् । संसर्गी भवतीनां किं धुंधुकारी न दृश्यते॥" इत्यादिवचनाल्लोकैर्जनैर्धुंधुकारी क्व गत इति पृष्टास्ता वदन्ति स्म प्रोचुः । किं प्रोचुरित्याह—दूरमिति । नोऽस्माकं प्रियो वल्लभो वित्तलोभविकर्षितः वित्तस्य लोभो बहुवृद्धिरूपः तेन विकर्षित आकृष्टः दूरं देशांतरं यातो गतः । कदाऽऽगमिष्यति इत्यत आह—अस्मिन् वर्षे आगमिष्यति । एतेन मासनिर्णयोऽपाकृतः ॥

तप्तांगारसमूहांश्च तन्मुखे हि विचिक्षिपुः ॥ अग्निज्वालातिदुःखेन व्याकुलो निधनं गतः ॥ ११ ॥ तं देहं मुमुचुर्गर्ते प्रायः साहसिकाः स्त्रियः ॥ न ज्ञातं तद्रहस्यं तु केनापीदं तथैव च ॥ १२ ॥ लोकैः पृष्टा वदन्ति स्म दूरं यातः प्रियो हि नः ॥ आगामिष्यति वर्षेऽस्मिन्वित्तलोभविकर्षितः ॥ १३ ॥ स्त्रीणां नैव तु विश्वासं मृतानां कारयेद्बुधः ॥ विश्वासे यः स्थितो मूढः स दुःखैः परिभूयते ॥ १४ ॥ सुधामयं वचो यासां कामिनां रसवर्धनम् ॥ हृदयं क्षुरधाराभं प्रियः को नाम योषिताम् ॥ १५ ॥ संहृत्य वित्तं ता याताः कुलटा बहुभर्तृकाः ॥ धुन्धुकारी बभूवाऽथ महान्प्रेतः कुकर्मतः ॥१६॥

॥ १३ ॥ स्त्रीमात्रमविश्वसनीयमित्याह सूतः—स्त्रीणामिति । तु अप्यर्थे । मृतानामपि प्राणरहितानामपि स्त्रीणां युवतीनां विश्वासं बुधो विवेकी न कारयेन्न कुर्यात । तदुक्तं कृष्णखंडे-"न विश्वासो हि नारीषु सततं कुलटासु च । मोक्षमार्गार्गलास्वेव भ्रममायासुभूमिषु ॥ " इति । " अभ्रच्छाया तृणस्याग्निर्नीचसेवा स्थले जलम् । वेश्यासंगः कुमित्रं च षडेते बुद्बुदोपमाः॥" इत्युक्तेः । "कृते तु महती हानिः स्वयं वापि विनश्यति" इत्याह—यो मूढोऽविवेकी विश्वासे स्थितः स दुःखैः परिभूयते तिरस्क्रियते ॥ १४ ॥ तदेव विशदयति—सुधेति । यासां वचो वचनं सुधामयममृतरूपम् । रूपार्थे मयडत्र । तत्र हेतुः—कामिनां रसवर्द्धनं रसवृद्धिकरम् । हृदयमंतःकरणं क्षुरधाराभं क्षुरो नापितशस्त्रं तस्य धाराया आभेव आभा यस्येति तथा तत् । योषितां को नाम प्रियः न कोपि । नामेति पादपूर्त्तावव्ययं प्रसिद्धार्थे वा ॥ १५ ॥ प्रकृतमनु

१ 'हनुर्हट्टविलासिन्याम्' इति मेदिनी । २ प्रायोग्रहणात्कुलवत्यो नैतादृश्यो भवन्तीति सूचितम् ।

सृत्य वदति–संहृत्येति। ताः कुलटा बहुभर्तृकाः बहवो भर्त्तारो यासां ता वेश्या वित्तं धनं संहृत्य याताः देशांतरं गताः। "स्वर्गः सुकृतिनां स्थानं पापिनां दुर्गतिर्भवेत्" इत्याह–धुंधुकारीति द्वाभ्याम् । धुंधुकारी कुकर्मतः निंदितेन कर्मणा महान् प्रेतो बभूव । तदुक्तं गारुडे–" पांथानामागमं दृष्ट्वा भवेद्रौद्रवपुर्धरः । अस्फुटार्थां वदन् वाचं महाप्रेतः स उच्यते॥" इति । यद्वा–महान् पूज्य उत्कृष्टो वा ब्राह्मणत्वात् । अथेति प्रकरणांतरसूचनार्थः ॥ १६ ॥ कीदृशः–वात्यारूपधरः वातानां समूहो वात्या तद्रूपधारी नित्यं प्रतिदिनं दशदिशः दश च ता दिशश्चेति तथा ताः। अंतरं मध्यम्, उपस्थितत्वाद्दिशामिति लभ्यते। धावन् भ्राम्यन् 'दशदिशो भृशम्' इति पाठः साधुः। तत्र दशदिशो भशमत्यर्थं धावन्नित्यर्थः। शीतातपपरिक्लिष्टः शीतं हिममातपो घर्मः ताभ्यां परिक्लिष्टोऽतिदुःखितः, निराहारः निर्गत आहारो भोजनं यस्य सः। तथा पिपासितः पातुमिच्छा पिपासा सा संजातास्येति तथा, तृषित इत्यर्थः ॥ १७ ॥ हे दैव हा कष्टमिति मुहुर्वारंवारं वदन् जल्पन्सन् कत्र कस्मिन्नपि स्थाने शरणमाश्रयं न लेभे न प्राप। तीर्थयात्रायां तन्मरणं

वात्यारूपधरो नित्यं धावन्दशदिशोऽन्तरम् ॥ शीतातपपरिक्लिष्टो निराहारः पिपासितः ॥ १७ ॥ न लेभे शरणं कुत्र हा दैवेति मुहुर्वदन् ॥ कियत्कालेन गोकर्णो मृतं लोकादबुध्यत ॥ १८ ॥ अनाथं तं विदित्वैव गयाश्राद्धमचीकरत् ॥ यस्मिंस्तीर्थे तु संयाति तत्र श्राद्धमवर्तयत् ॥ १९ ॥ एवं भ्रमन्स गोकर्णः स्वपुरं समुपेयिवान् ॥ रात्रौ गृहाङ्गणे स्वप्तुमागतोऽलक्षितः परैः ॥ २० ॥

गोकर्णः श्रुतवानित्याह–कियदिति । गोकर्णः कियत्कालेन अनिर्धारिताहर्गणेन मृतं धुंधुकारिणं लोकात्स्वपुरवासिजनात् अबुध्यत ज्ञातवान् ॥ १८ ॥ "अनाथप्रेतसंस्कारे कोटियज्ञफलं विदुः" इतिस्मृतेर्बलात् तच्छ्राद्धमकरोदित्याह–अनाथमिति । अनाथं नास्ति नाथः स्वामी यस्य स तथा तं धुंधुकारिणं विदित्वा ज्ञात्वा एव निश्चयेन गयाश्राद्धं तस्य अचीकरत्, अकार्षीदित्यर्थः । स्वार्थे णिच् । अन्यतीर्थेष्वपि तच्छ्राद्धं कृतवानित्याह–यस्मिंस्तीर्थे गोकर्णः संयाति गतवान् । भूते लट् । तुशब्दो विधेः संततानुवृद्ध्यर्थः । तत्र श्राद्धमवर्त्तयत् अकरोत् । एतेन "गयाश्राद्धोत्तरं श्राद्धं न कर्त्तव्यं पुनःपुनः" इति वदंतः परास्ताः ॥ १९ ॥ "जन्मभूमिः परं तीर्थमित्या यांति हि साधवः" इति नीत्या स्वपुरागमनं तेन कृतमित्याह सूतः–एवमिति । एवमनेन प्रकारेण स गोकर्णः भ्रमन् भूमंडलमटन्सन् स्वपुरं स्वनगरं समुपेयिवान् समागतः । एतेन जन्मभूमेर्माहात्म्यं सूचितं भवति । तदुक्तं चाणक्ये–"जननी जन्मभूमिश्च जाह्नवी च जनार्दनः । जनकः पंचमश्चैव जकाराः पंच दुर्लभाः ॥" इति । रात्रौ गृहां

१ 'पाशादिभ्यो यः' इति यप्रत्ययः ।

गणे स्वप्तुं दिवापरिश्रमापनोदार्थं परैरन्यैर्जनैरलक्षितोऽज्ञातः सन्नागतः आयातोऽभूत् ॥ २० ॥ "भूतप्रेतपिशाचाद्या रात्रौ क्रीडंति नित्यशः" इतिवचनात्प्रेताविर्भावो जात इत्याह—तत्रेति। तत्र गृहांगणे सुप्तं स्वबांधवं गोकर्णं स धुंधुकारी विज्ञाय ज्ञात्वा निशीथेऽर्द्धरात्रे महारौद्रतरं महाभयंकरं वपुः शरीरं दर्शयामास॥ २१ ॥ततो नानाविधं प्रेतकौतुकं कृतवानित्याह—सकृदिति।सकृत् एकवारं मेषोऽभवत्।एवं सर्वत्र योज्यम्।हस्ती गजः। महिषः सैरिभः"लुलायो महिषो वाहद्विषत्कासरसैरिभाः"इत्यमरोक्तेः।इंद्रः स्वर्पतिः। अग्निः अंगाररूपः। पुनः पुरुषनः राकृतिरभूत्॥ २२ ॥तद्दृष्ट्वा दुर्गतिकोयमिति निश्चित्याह—वैपरीत्यमिति । इदं वैपरीत्यं विपरीतभावं दृष्ट्वाऽवलोक्य धैर्यसंयुतः स्थिरचित्तो गोकर्णः कोप्ययं दुर्गतिकः दुर्दुष्टा गतिर्यस्य स तथेति निश्चित्याथानंतरं तमब्रवीत्॥ २३ ॥'कस्त्वं पापेन केनेमां दशां प्राप्तो वदेति भोः'इति पृच्छति—कस्त्वमिति।रात्रौ निशि

तत्र सुप्तं स विज्ञाय धुन्धुकारी स्वबांधवम् ॥ निशीथे दर्शयामास महारौद्रतरं वपुः ॥ २१ ॥ सकृन्मेषः सकृद्धस्ती सकृच्च महिषोऽभवत् ॥ सकृदिन्द्रः सकृच्चाग्निः पुनश्च पुरुषोऽभवत् ॥ २२ ॥ वैपरीत्यमिदं दृष्ट्वा गोकर्णो धर्यसंयुतः ॥ अयं दुर्गतिकः कोऽपि निश्चित्याथ तमब्रवीत् ॥ २३ ॥ गोकर्ण उवाच ॥ कस्त्वमुग्रतरो रात्रौ कुतो यातो दशामिमाम् ॥ किं वा प्रेतः पिशाचो वा राक्षसोऽसीति शंस नः ॥ २४ ॥ सूत उवाच ॥ एवं पृष्टस्तदा तेन रुरोदोच्चैः पुनःपुनः ॥ अशक्तो वचनोच्चारे संज्ञामात्रं चकार ह ॥ २५ ॥ ततोऽञ्जलौ जलं कृत्वा गोकर्णस्तमुदैरयत् ॥ तत्सेकाद्गतपापोऽसौ प्रवक्तुमुपचक्रमे ॥ २६ ॥

उग्रतरः अतिशयेन उग्र इति तथा क्रूरतरस्त्वं कः कोसि। इमां वैपरीत्यरूपां दशामवस्थां कुतः कस्मात्पापकर्मणो यातः प्राप्तः। मूकीभूतं प्रत्याह—किंवा प्रेतः, किंवा पिशाचः, किंवा राक्षसोऽसीति त्वं नोऽस्मान् शंस कथय। "भूतः क्रियाविहीनः स्यात्प्रेतस्तु महतो ह्यघात्। पिशाचः सूतिकास्पर्शी राक्षसो जीवहिंसकः[1] ॥" इतिकर्मविपाकोक्तेः ॥ ॥ २४ ॥ ततः परं किमभूदित्याह—एवमिति द्वाभ्याम्। यदा यस्मिन्काले तेन गोकर्णेन एवमनेन प्रकारेण पृष्टस्तदा उच्चैरुदात्तस्वरेण पुनःपुनः मुहुर्मुहू रुरोद रोदनं चकार। प्रेत इति कर्तृपदम्। कीदृशः—वचनोच्चारे भाषणे अशक्तः असमर्थः। तदा संज्ञामात्रं ध्वनिं चकार "अज्ञातार्था तु या वाणी संज्ञामात्रं तदुच्यते" इति। हेति स्फुटम् ॥ ॥ २५ ॥ ततस्तदनंतरमंजलौ जलं कृत्वा तं प्रेतं गोकर्णः उदैरयत् प्रौक्षीत्। तत्सेकात् तस्य जलस्य सेकात् बिंदुस्पर्शाद्गतपापः गतं पापं यस्य स तथाऽसौ प्रवक्तुं प्रभाषि

१ 'बहुहिंसकः' इति पाठान्तरम्।

तुम् उपचक्रमे प्रारंभं कृतवान् ॥ २६ ॥ बंधुभावनया सहेतुकं स्वात्मवृत्तं प्रणिगदति—अहमिति चतुर्भिः । अहं त्वदीयस्तव भ्राता बंधुरस्मि । न च स्त्रीजातस्य तस्य गवोद्भवेन तेन सह कथं भ्रातृत्वव्यवहार इति शंक्यम्, भविष्यदुपकारेण तद्व्यवहारोपपत्तेः । तदुक्तं नीत्याम्—" स बंधुर्यो हिते युक्तः स पिता यश्च पोषकः । तन्मित्रं यत्र विश्वासः स देशो यत्र जीव्यते ॥ " इति । किंनामासीत्यत आह—नामतः धुंधुकार्यहमिति । एतेन ' कस्त्वमुग्रतरो रात्रौ ' ( २४ ) इत्युत्तरितम् । कथमीदृशी व्यवस्था तव संजातेत्यत्राह—स्वकीयेनैव दोषेण स्वेनैव पाप्मना ब्रह्मत्वं ब्राह्मणत्वं मया नाशितम् ॥ २७ ॥ महाज्ञाने महच्च तदज्ञानं चेति तथा तस्मिन् निबिडतमोरूपायामविद्यायां विवर्त्तिनः विवर्त्तितुं शीलमस्येति तथा तस्य मम कर्मणो संख्या नास्ति । जात्यभिप्रायेणैकवचनम्, तेन कर्मणामित्यर्थः । यो लोकानां जनानां हिंसको घातकः सोऽहं स्त्रीभिर्वेश्याभिर्दुःखेन ज्वलदंगाराणां मुखे प्रक्षेपणरूपकष्टेन मारितः ॥ २८ ॥ अतोऽस्माद्धेतोः प्रेतत्वं प्रेतभावमापन्नः प्राप्तो दुर्दशां दुःखरूपिणीं दशां वहामि

प्रेत उवाच ॥ अहं भ्राता त्वदीयोऽस्मि धुन्धुकारीति नामतः ॥ स्वकीयेनैव दोषेण ब्रह्मत्वं नाशितं मया ॥ २७ ॥ कर्मणो नास्ति संख्या मे महाऽज्ञाने विवर्तिनः ॥ लोकानां हिंसकः सोऽहं स्त्रीभिर्दुःखेन मारितः ॥ २८ ॥ अतः प्रेतत्वमापन्नो दुर्दशां च वहाम्यहम् ॥ वाताऽऽहारेण जीवामि दैवाधीनफलोदयात् ॥ २९ ॥ अहो बन्धो कृपासिंधो भ्रातर्मामाशु मोचय ॥ गोकर्णो वचनं श्रुत्वा तस्मै वाक्यमथाऽब्रवीत् ॥ ३० ॥ गोकर्ण उवाच ॥ त्वदर्थं तु गयापिण्डो मया दत्तो विधानतः ॥ तत्कथं नैव मुक्तोऽसि ममाश्चर्यमिदं महत् ॥ ३१ ॥ गयाश्राद्धान्न मुक्तिश्चेदुपायो नापरस्त्विह ॥ किं विधेयं मया प्रेत तत्त्वं वद सविस्तरम् ॥ ३२ ॥

प्राप्नोमि । च एवार्थे । दैवाधीनफलोदयात् दैवस्य भाग्यस्य अधीनं यत्फलं तस्य उदयात् अहं वाताहारेण वायुभक्षेण जीवामि प्राणान् धारयामि । एतेन ' कुतो यातो दशामिमाम् ' इत्युत्तरितम् ॥ २९ ॥ अहो इति संबोधनम् । हे बंधो हे कृपासिंधो हे भ्रातः आशु शीघ्रं मां त्वं मोचय प्रेतभावात् मुक्तं कुरु । एतेन प्रेतयोनौ दुःखस्यासह्यतोक्ता । प्रेतोक्तं वचनं श्रुत्वा गोकर्णः तस्मै प्रेताय वाक्यं वचनमब्रवीत् ॥ ३० ॥ " मृतानां मुक्तिदाने तु गयाश्राद्धं प्रगर्जति " इत्युक्त्या " यन्नाम्ना दीयते पिंडः स वै मुक्तिमवाप्नुयात् " इतिगयामाहात्म्यवचनाच्च कथमेतस्य मुक्तिर्न जातेत्याश्चर्यं मन्वानः पृच्छति—त्वदर्थमिति । त्वदर्थं त्वन्निमित्तं गयापिंडो गयायां पिंडो विधानतः शास्त्रोक्तविधितो मया दत्तः । तत्तस्मात्पिंडदानात् कथं त्वं न मुक्तोऽसि केन प्रकारेण मुक्तिं न प्राप्तोऽसि । एवेति निश्चये । इदं मम महदाश्चर्यम् । तुशब्दो दुर्गतिनिवारणार्थः ॥ ३१ ॥ तस्य वैफल्ये उपायांतरं नास्तीत्याह—गयाश्राद्धादिति । चेद्यदि गयाश्राद्धात् मुक्तिर्न मोक्षो न जातस्तर्हि

१ ' दैवाधीनफलोदयः ' इति पाठान्तरम् । तत्र दैवाधीनः प्राक्तनकर्मानुसारी शुभाऽशुभफलोदयो यस्य स तथेत्यर्थः ।

अपरोऽन्य उपाय इह लोके न विद्यत इति। मया किं विधेयं किं करणीयं तत् हे प्रेत सविस्तरं यथा स्यात्तथा त्वं वद कथय ॥ ३२ ॥ उपायांतरेण मुक्तिर्भावनीयेत्याह--गयेति । त्वया तु सकृत् गयाश्राद्धं कृतं मे मम मुक्तिः गयाश्राद्धशतेनापि न भविष्यति । तत्तस्मात्कारणात् सांप्रतमधुना अपरं द्वितीयमुपायं किंचित् त्वं विचारय चिंतय ॥ ३३ ॥ असाध्यं मत्वेत्याह--इतीति । इत्येवं तद्वाक्यं तस्य प्रेतस्य वचनमाकर्ण्य श्रुत्वा गोकर्णो विस्मयम् "अन्यथोद्भूतमाश्चर्यं नृणां विस्मयकारणम् । अतर्क्यमपरे प्राहुर्दुर्विज्ञेयमथापरे ॥" इत्यादिरूपं गतः प्राप्तः । चेद्यदि शतश्राद्धैर्न मुक्तिस्तर्हि तव मोचनं मोक्षणं प्रेतयोनेरसाध्यं न पुरुषार्थक्षमम् ॥ ३४ ॥ प्रेतमाज्ञापयन्नाह--इदानीमिति । हे प्रेत इदानीमधुना त्वं निर्भयो गतभयः निजस्थानं स्वनिवासं गच्छ याहि । त्वन्मुक्तिसाधकं तव मुक्त्युपायं किंचित् विचार्य अहमाचरिष्ये, विचारतः करिष्यामीति फलितोर्थः । धैर्येण स्थितोऽप्यहं बिभेमि अतस्त्वद्गमनान्निर्भयोऽहमाचरिष्य इति स्वस्य

प्रेत उवाच ॥ गयाश्राद्धशतेनापि मुक्तिर्मे न भविष्यति ॥ उपायमपरं किंचित्तद्विचारय सांप्रतम् ॥ ३३ ॥ इति तद्वाक्यमाकर्ण्य गोकर्णो विस्मयं गतः ॥ शतश्राद्धैर्न मुक्तिश्चेदसाध्यं मोचनं तव ॥ ३४ ॥ इदानीं तु निजस्थानमातिष्ठ प्रेत निर्भयः ॥ त्वन्मुक्तिसाधकं किञ्चिदाचरिष्ये विचार्य च ॥ ॥ ३५ ॥ धुंधुकारी निजस्थानं तेनादिष्टस्ततो गतः ॥ गोकर्णश्चिंतयामास तां रात्रिं न तदध्यगात् ॥ ३६ ॥ प्रातस्तमागतं दृष्ट्वा लोकाः प्रीत्या समागताः ॥ तत्सर्वं कथितं तेन यज्जातं च यथा निशि ॥ ३७ ॥ विद्वांसो योगनिष्ठाश्च ज्ञानिनो ब्रह्मवादिनः ॥ तन्मुक्तिं नैव पश्यन्ति पश्यन्तः शास्त्रसंचयान् ॥ ३८ ॥

विशेषणं वा ॥ ३५ ॥ "तथेति गतवान्प्रेतो गोकर्णश्चिंतयान्वितः । न निद्रां लब्धवान्रात्रौ चिंतयन्स उपायकम्" इत्याह सूतः--धुंधुकारीति । तेन गोकर्णेनादिष्ट आज्ञप्तो धुंधुकारी निजं स्थानं संवासं गतः प्राप्तः । ततस्तदनंतरं तां रात्रिं तद्रात्रावित्यर्थः । गोकर्णः कथमेतस्य मुक्तिः स्यादिति चिंतयामास दध्यौ । तन्मुक्तिहेतुकं नाध्यगात् न प्रापत ॥ ३६ ॥ "पिहितं प्रेतभयतो द्वारमुद्घाटितं कुतः । केनेदमिति चागत्य गोकर्णं ददृशुर्जनाः ॥" इत्याह--प्रातरिति । तं गोकर्णमागतमायातं दृष्ट्वा लोका जनाः प्रातः प्रभाते समागता मेलितुमायाताः । निशि रात्रौ यथा येन प्रकारेण यद्धस्तिमेषादिदर्शनं जातं तत्सर्वं तेन गोकर्णेन कथितम् । तदग्र इति शेषः ॥ ३७ ॥ इदं कर्त्तव्यमिति केऽपि न विजज्ञिर इत्याह--विद्वांस इति । विद्वांसः सामान्यज्ञानिनः, योगनिष्ठाः योगिनः, ज्ञानिनो विशेषज्ञानवंतोऽतिपंडिताः, ब्रह्मवादिनः वेदांतिनः, शास्त्रसंचयान्

१ "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीयाविधानाचिन्तननैरन्तर्य्यं सूचितम्।

शास्त्राणां समूहान् पश्यंतोऽवलोकयंतस्तन्मुक्तिं तस्य प्रेतस्य मोक्षं नैव पश्यंति न निरीक्षंते । "अपमृत्युहतानां वै कुर्यान्नारायणं बलिम्" इतिवचनस्य प्रसिद्धत्वात् किमिति तैर्न ज्ञातमिति न शंकनीयम्, सामान्यवाक्यस्यैतस्य गयाश्राद्धविधिना विशेषतो बाधात् ॥ ३८ ॥ तेषामैकमत्यमाह--तत इति । ततः तन्मुक्तिकारणाऽज्ञानानंतरं तन्मुक्तौ तस्य धुंधुकारिणः प्रेतस्य मोक्षे सूर्यवाक्यं सूर्यस्य वचनं परमुत्कृष्टं यदा सर्वैः स्थापितं स्वीकृतं तदा गोकर्णः तपःप्रभावात् योगबलतो वा सूर्यवेगस्य वै निश्चयेन स्तंभनं चक्रे । अन्यथाऽतिवेगशालिनो रवेः स्थित्यसंभवः ॥ ३९ ॥ स्वेप्सितं वरयन्नमस्करोति--तुभ्यमिति । हे जगत्साक्षिन् तुभ्यं नमः मे मह्यं मुक्तिहेतुकं मुक्तेः कारणं ब्रूहि कथय ॥ ४० ॥ सूर्यस्तत्कारणमुपादिशदित्याह--तदिति । तत्पूर्वोक्तं श्रुत्वा दूरतः दूरादेव सूर्यः स्फुटं स्पष्टम् इत्यभ्यभाषत । इति किं, तदाह--श्रीमद्भागवतात्

ततः सर्वैः सूर्यवाक्यं तन्मुक्तौ स्थापितं परम् ॥ गोकर्णः स्तम्भनं चक्रे सूर्यवेगस्य वै तदा ॥ ३९ ॥ तुभ्यं नमो जगत्साक्षिन्ब्रूहि मे मुक्तिहेतुकम् ॥ ॥ ४० ॥ तच्छ्रुत्वा दूरतः सूर्यः स्फुटमित्यभ्यभाषत ॥ श्रीमद्भावतान्मुक्तिः सप्ताहे वाचनं कुरु ॥ ४१ ॥ इति सूर्यवचः सर्वैर्धर्मरूपं तु विश्रुतम् ॥ सर्वेऽब्रुवन्प्रयत्नेन कर्तव्यं सुकरं त्विदम् ॥ ४२ ॥ गोकर्णो निश्चयं कृत्वा वाचनार्थं प्रवर्तितः ॥ तत्र संश्रवणार्थाय देशग्रामाज्जना ययुः ॥ ४३ ॥ पंग्वन्धवृद्धमन्दाश्च तेऽपि पापक्षयाय वै ॥ समाजस्तु महाञ्जातो देवविस्मयकारकः ॥ ४४ ॥

शास्त्रान्मुक्तिः स्यात् सप्ताहे सप्तदिनमध्ये वाचनं कुरु ॥ ४१ ॥ श्रुत्वेति सवितुर्वाक्यं तत्करणे संमतिं ददुरित्याह--इतीति । इत्येवं सूर्यवचः सूर्यस्य वचनं धर्मरूपं सर्वैर्विश्रुतं स्पष्टतया श्रुतम् । स्पष्टार्थे त्वव्ययम् । श्रुत्वैकमत्येनाहुः--सर्वेऽब्रुवन् सामान्यविशेषज्ञानवद्योगिवेदांतिनोऽवदन् प्रयत्नेन यत्नत इदं सूर्योक्तं सप्ताहे श्रीमद्भागवद्वाचनं सुकरं सुखेन करणीयं, संपाद्यमिति यावत् 'सुकरं सुंदरे सुखे' इतिभट्टोक्तेः ॥ ४२ ॥ ओमित्युक्त्वा गोकर्णस्तथा कृतवानित्याह--गोकर्ण इति । एतेन प्रेतस्य मुक्तिर्भाव्येति निश्चयं कृत्वा गोकर्णो वाचनार्थं श्रीमद्भागवतकथावाचनाय प्रवर्त्तितः उद्यतोभूदिति सतोक्तिः । तत्र स्थाने संश्रवणार्थाय सम्यक् श्रवणार्थं देशग्रामात् देशाद्ग्रामाच्च जनाः तत्तद्वासिनो नरा ययुराजग्मुः ॥ ४३ ॥ अन्येपि पापिनो जीवाः समागता इत्याह--पंग्वंधेति । पंगुश्चरणहीनः, अंधो नेत्ररहितः, वृद्धो जराग्रस्तः, मंदो मूर्खः, तेऽपि पापक्षयाय पापनाशार्थं

१ तत्रत्यैः सर्वैः प्रवार्त्तितः । २ अस्मिन्नर्थ ल्विडार्षः । निवृत्तप्रेषणत्वाण्णिजन्तादेव वा क्तो बोध्यः ।

समागता इति चस्यार्थः । वै निश्चये । समाजस्तु जनसमुदायस्तु देवविस्मयकारकः देवानां विस्मयं करोतीति तथा महान् अतिदीर्घः पूज्यो वा जातः ॥ ४४ ॥ किंच—यदेति । यदा यस्मिन्काले आसनं सर्वोत्कृष्टं व्यासपीठमास्थाय संस्थित्य गोकर्णः कथामकथयत्, तदा तस्मिन्नवसरे स प्रसिद्धो धुंधुकारी प्रेतोपि इतस्ततः यत्र तत्र स्थानम् आत्मनिवासार्थं स्थित्यर्हपदं पश्यन् निरीक्षमाण आयात आगतः ॥४५॥ 'किं स्थानं तेन संदृष्टं कुत्र वासमकल्पयत'इत्याह-सप्तेति । तत्र कथास्थाने सप्तग्रंथियुतं सप्तभिर्ग्रंथिभिर्युक्तम् उच्छ्रितमत्युच्चं कीचकं वेणुमपश्यत् ऐक्षत । एतेनारामे वाटिकायां वा नद्यास्तीरे वा कथारंभः कृत इति सूचितं भवति । तन्मूलच्छिद्रं तस्य कीचकस्य मूलच्छिद्रं मूलस्थविवरमाविश्य प्रविश्य श्रवणार्थं कथाश्रवणार्थमसौ प्रेतः स्थितः । हि निश्चये ॥४६॥ निश्चलासनं विना कथाश्रवणं न संभवत्यतो वंशप्रवेशः कृत इत्याह—वातरूपीति । वातरूपी वायुरूपः स्थितिं कर्त्तुम् अचलं निवासं संपादयितुमशक्तोऽसमर्थो वंशमाविशत् वेणुं प्रविष्टवान् । श्रोतारमंतरा कथावाचनं व्यर्थमतस्तत्पूर्वकं कथारं

यदैवासनमास्थाय गोकर्णोऽकथयत्कथाम् ॥ स प्रेतोऽपि तदाऽऽयातः स्थानं पश्यन्नितस्ततः ॥ ४५ ॥ सप्तग्रन्थियुतं तत्रापश्यत्कीचकमुच्छ्रितम् ॥
तन्मूलच्छिद्रमाविश्य श्रवणार्थं स्थितो ह्यसौ ॥ ४६ ॥ वातरूपी स्थितिं कर्तुमशक्तो वंशमाविशत् ॥ वैष्णवं ब्राह्मणं मुख्यं श्रोतारं परिकल्प्य सः ॥
॥ ४७ ॥ प्रथमस्कन्धतः स्पष्टमाख्यानं धेनुजोऽकरोत् ॥ दिनान्ते रक्षिता गाथा तदा चित्रं बभूव ह ॥ ४८ ॥

भमाह—वैष्णवमिति । वैष्णवं विष्णुभक्तं ब्राह्मणं जात्या विप्रं मुख्यं प्रधानं श्रोतारं श्रवणकारिणं परिकल्प्य संपाद्य ॥ ४७ ॥ प्रथमदिनकथावृत्तमाह—प्रथमेति । प्रथमस्कंधतः प्रथमस्कंधात् स्पष्टं सर्वज्ञानानुरूपम्, यद्वा—सर्वेषां बुद्ध्यारूढं यथा स्यात्तथा आख्यानं कथनं स प्रसिद्धो धेनुजो गोकर्णोऽकरोदित्यन्वयः। एतेन पाठस्तत्पूर्वकं कथारंभं प्रति जानीते ।"पूर्वं तु पठनं कार्यं व्याख्यानं तदनंतरम्।कथायाः परिपाटीति नियमः शिथिलीकृतः॥"सप्ताह इति सूचितं भवति।तदुक्तं विधानमंजर्याम्-"पाठस्तु प्रथमं कार्यो व्याख्यानं तदनंतरम्।इति नियमस्तु सप्ताहे व्याख्यानेन विखंडितः॥" अन्यथा-"परीक्षिते कथां वक्तुं सभायां संस्थिते शुके"इत्यत्र"संभायां संस्थिते कीरे पाठं वक्तुं परीक्षिते"इति किमिति नोक्तम्। एवमग्रेऽप्यूहनीयम्, 'सप्ताहे वाचनं कुरु'इत्यत्रापि 'सप्ताहे पाठनं कुरु'इति।पुनः—'श्रावांते सर्वेषाम्' इत्यत्र च 'पाठांते सर्वेषाम्' इति।'कथाभंगनिवृत्तये' इत्यत्र च 'पाठभंगनिवृत्तये' इति । सप्ताहश्रवणविधौ ब्राह्मणमित्युल्लेखात् ब्राह्मणं विना कथा न वाचनीया । श्रीमद्भागवतस्य सर्ववेदरूपस्य ब्राह्मणानुसरणेनैवान्येषां कथाश्रवणाधिकार

१ 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इतिकोशाद्वायुपूर्णच्छिद्रशब्दायमानवेणुविशेषस्यात्र ग्रहणम् । अत एव सच्छिद्रत्वात्प्रवेशोऽपि घटते ।

इत्युक्तं भवति, “श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः” इतिशिष्टोक्तेः । प्रत्यहं कथावसाने चित्रमभूदित्याह—दिनांत इतिसार्द्धद्वाभ्याम् । दिनांते सायंकाले गाथा रक्षिता निवृत्तिं गता । तत्प्रमाणमुक्तं पाद्मे—“नारद उवाच ॥ कत्यध्याया वाचनीयाः सप्ताहे प्रत्यहं पितः ॥ नारदेनेति पृष्टोऽसौ तदा ब्रह्माऽब्रवीदिदम् ॥ १ ॥ ब्रह्मोवाच ॥ प्रथमेह्नि वराहांतं द्वितीये भरतांतकम् ॥ तृतीये श्रीनृसिंहांतं चतुर्थे वंशवर्णनम् ॥ २ ॥ पंचमे गुरुलीलांतं षष्ठे लीलासमापनम् ॥ सप्तमे शुकपूजांतं सप्ताहक्रम ईरितः ॥ ३ ॥” । गुरुभिस्तु विशेष उक्तः । तथाहि—“द्वैपायनं नमस्कृत्य शुकदेवं च भक्तितः ॥ हिरण्याक्षवधं यावत्प्रथमेह्नि प्रकीर्त्तयेत् ॥ १ ॥ चरितं भरतस्यापि द्वितीयेऽर्थे तृतीयके ॥ समुद्रमथनं यावद्यत्र कूर्मः स्वयं हरिः ॥ २ ॥ चतुर्थे दिवसे चैव दशमे हरिजन्म च ॥ पंचमेह्नि पठेद्विद्वान् रुक्मिण्या हरणावधि ॥ ३ ॥ षष्ठे चोद्धवसंवादं सप्तमेऽह्नि समापयेत् ।” इति । तदा चित्रम् आश्चर्यं बभूव संजज्ञे । हेति स्फुटम् ॥४८॥ किं तदित्याह—सतां पश्यतां निरीक्षमाणानां सतां सशब्दं यथा स्यात्तथा वंशैकग्रंथि

वंशैकग्रन्थिभेदोऽभूत्सशब्दं पश्यतां सताम् ॥ द्वितीयेह्नि तथा सायं द्वितीयग्रन्थिभेदनम् ॥ ४९ ॥ तृतीयेऽह्नि तथा सायं तृतीयग्रन्थिभेदनम् ॥
एवं सप्तदिनैर्वंशसप्तग्रंथिविभेदनम् ॥ ५० ॥ प्रेतोपि[1] द्वादशस्कंधश्रवणात्प्रेततां जहौ ॥ दिव्यरूपधरो जातस्तुलसीदाममण्डितः ॥ ५१ ॥

भेदः वंशस्यैकग्रंथेर्भेदः । द्वितीयेह्नि द्वितीयदिवसे सायं सायंसंध्यायां तथा तेनैव प्रकारेण द्वितीयग्रंथिभेदनमभूदिति शेषः ॥ ४९ ॥ तृतीयेऽह्नि तृतीयघस्रे शेषं स्पष्टम् एवममुना प्रकारेण सप्तदिनैः सप्ताहोभिर्वंशस्य सप्तग्रंथीनां विभेदनम्, अभूदिति शेषः॥५०॥ इदानीमुद्योगसिद्धिमाह—प्रेत इति । प्रेतः धुंधुकार्यपि द्वादशस्कंधश्रवणात् द्वादशस्य स्कं धस्य श्रवणम् । यद्वा—द्वादश च ते स्कंधाश्चेति तथा तेषां श्रवणं तस्मात्प्रेततां प्रेतभावं जहौ तत्याज । अत्रायमभिसंधिः—गयाश्राद्धस्य वैयर्थ्ये किमद्य करणीयमिति गोकर्णपृष्टैः सर्वविद्वद्भिः शास्त्रावलोकने कृतेऽपि तदुपायाऽनिरीक्षणे “अंतरिक्षमृतानां तु वेदपारायणं चरेत्” इति बलवत्स्मृतिवचनं किं नो निवेदितमित्याक्षेपे—तद्विधेः केवलांतरिक्षमरणमात्रपरतया “कर्मणां नास्ति संख्या मे महाज्ञाने विवर्त्तिनः” इतिवचनादेतत्कृतानां बालहत्याद्यनंतमहापातकानां विद्यमानत्वान्न तेन कार्यसिद्धिरिति विचार्य “श्रीमद्भागवतान्मुक्तिः सप्ताहे वाचनं कुरु” इतिसूर्योक्तसमाधानस्य समीचीनत्वम् । वेदपारायणादपि श्रीमद्भागवतपारायणस्याधिक

---

१ ‘कृत्वाऽपि द्वादशस्कन्धश्रवणम्’ इति पाठान्तरम् ।

तायाः पूर्वमेवोक्तत्वात् । " वेदोपनिषदां साराज्जाता भागवती कथा " इत्यनेन कथासमाप्तावत्र प्रेतभावनिवृत्तेः, प्रक्रमोपसंहारयोरप्येकवाच्यत्वाच्च युक्तमुक्तमिति सुधीभिर्भावनीयम् । ततो दिव्यरूपावाप्तिर्जातेति सूचयंस्तद्वाक्यमाह—दिव्येतिसार्द्धेन । दिव्यरूपधरः दिवि भवा दिव्यास्तेषां रूपस्य धरो धारकः । यद्वा—दिव्यरूपस्य धरो धारको जातः । तुलसीदाममंडितः तुलस्या दामभिर्गुच्छैर्मंडितोऽलंकृतः ॥ ५१ ॥ पीतवासाः पीतं वासो यस्य स तथा । घनश्यामः घन इव श्यामः श्यामलः । मुकुटी मुकुटमस्यास्तीति तथा । कुंडलाभ्यामन्वितो युक्तः, शोभमान इत्यर्थः । भ्रातरं गोकर्णं सद्यस्तदानीं ननाम । नमनानंतरमित्यत्रब्रवीदुवाच च ॥ ५२ ॥ भ्रातृकृतमुपकारं स्मरञ्छ्रीमद्भागवतकथां श्लाघते—त्वयेति । हे बंधो कृपया करुणया प्रेतकश्मलात प्रेतदुःखात त्वयाहं मोचितः मुक्तिं गमितः । भागवती वार्ता श्रीमद्भागवतसंबंधिनी कथा धन्या प्रशस्या । तत्र हेतुः—प्रेतपीडाविनाशिनी प्रेतदुःखनाशकारिणी ॥ ५३ ॥ सप्ताहोपि परमपुण्य इत्याह—सप्ताह इति । सप्ताहः सप्त

पीतवासा घनश्यामो मुकुटी कुण्डलान्वितः ॥ ननाम भ्रातरं सद्यो गोकर्णमिति चाब्रवीत् ॥५२॥ त्वयाहं मोचितो बन्धो कृपया प्रेतकश्मलात् ॥ धन्या भागवती वार्ता प्रेतपीडाविनाशिनी ॥ ५३ ॥ सप्ताहोऽपि तथा धन्यः कृष्णलोकफलप्रदः ॥ कंपन्ते सर्वपापानि सप्ताहश्रवणे स्थिते ॥ ५४ ॥ अस्माकं प्रलयं सद्यः कथा चेयं करिष्यति ॥ आर्द्रं शुष्कं लघु स्थूलं वाङ्मनःकर्मभिः कृतम् ॥ श्रवणं विदहेत्पापं पावकः समिधो यथा ॥ ५५ ॥ अस्मिन्वै भारते वर्षे सूरिभिर्देवसंसदि ॥ अकथाश्राविणां पुंसां निष्फलं जन्म कीर्तितम् ॥ ५६ ॥ किं मोहतो रक्षितेन सुपुष्टेन बलीयसा ॥ अध्रुवेण शरीरेण शुकशास्त्रकथां विना ॥ ५७ ॥

दिनसाध्यो यज्ञविशेषोपि धन्यः । तत्र हेतुः—कृष्णलोकफलप्रदः कृष्णस्य लोको वैकुंठः स एव फलं सुखप्राप्तिहेतुत्वात् तत्प्रददातीति तथा । सप्ताहश्रवणे सप्तघस्रांतराले एतत्कथाश्रवणे स्थिते जाते सति, पुरुषे वा स्थिते प्रवृत्ते सति सर्वाणि पापानि कंपंते ॥ ५४ ॥ तदुक्तिमाह—अस्माकमित्यर्द्धेन । इयं च भागवतसंबंधिनी कथा अस्माकं प्रलयं नाशं सद्योऽद्य करिष्यति । किंच—आर्द्रं ज्ञानतः कृतं पापं, शुष्कम् अज्ञानतः कृतं, लघु स्वल्पकीटपतंगघातादि, स्थूलं चतुष्पदवधादि, वाङ्मनःकर्मभिः वाचा मनसा कर्मणा वा कृतं पापं कर्म । श्रवणं कर्तृ । विदहेत् भस्मीकुर्यात् । तत्र दृष्टांतः—पावकोऽग्निः समिधः काष्ठानि यथा दहति तथा ॥ ५५ ॥ कथाश्रवणादृते मानुषं जन्म वृथेत्याह—अस्मिन्निति द्वाभ्याम् । अस्मिन् भारते वर्षे भरतखंडे अकथाश्राविणां न कथां श्रोतुं शीलं येषां ते तथा तेषां पुंसां देवसंसदि ब्राह्मणसभायां सूरिभिः पंडितैः, देवानां संसदीति व्याख्याने सूरिभिर्बृहस्पत्यादिभिर्जन्म वृथा कीर्त्तितं कथितम् ॥ ५६ ॥ मोहतः स्नेहात् रक्षितेन पालितेन सुपुष्टेन स्थूलीकृतेन बलीयसाऽतिबलवता अध्रु

वेण विनाशिना शरीरेण देहेन शुकशास्त्रकथां श्रीमद्भागवतकथां विना किम्, न किमपि प्रयोजनमित्यर्थः ॥५७॥ एतदेव स्पष्टयति—अस्थीति चतुर्भिः। अस्थीनि अस्थ्नां वा स्तंभा यस्मिंस्तत्। स्नायुभिर्नसाजालैर्बद्धं दृढीकृतम्। मांसं च शोणितं च मांसशोणिते ताभ्यां लेपितं लिप्तम्। चर्मणाऽवनद्धमाच्छादितम्। दुष्टो गंधो यस्मिंस्तत्। मूत्रपुरीषयोः पात्रं विष्ठामूत्रयोः स्थानम् ॥ ५८ ॥ जरा च शोकश्च जराशोकौ, तयोर्विपाकः फलं तेनार्तं युक्तम्। रोगमंदिरं रोगस्य गृहम्। आतुरं दुःखितम्। दुष्पूरमपूरणम्। दुर्द्धरं दुःखेन धार्यम्। दुष्टं निंदितम्। सदोषं दोषैर्वातपित्तकफैः सहितम्। क्षणभंगुरं क्षणेन भंगुरं नाशवत ॥ ५९ ॥ कृमिविड्भस्मसंज्ञांतं कृमयश्च विट् च भस्म च कृमिविड्भस्मानि तान्येव संज्ञा सा अन्ते यस्य तत्तथा, इत्येवंभूतं शरीरं वर्णितमुक्तम्। अयं प्राणी अस्थिरेण चलस्वभावेन देहेन स्थिरं कर्म धर्मादिकार्यं कुतो न साधयेत् कस्माद्धेतोः नोपार्जयेत्। हि युक्तमेतत् ॥ ६० ॥ प्रातः प्रभातसमये अन्नमोदनादि भक्ष्यं

अस्थिस्तम्भं स्नायुबद्धं मांसशोणितलेपितम् ॥ चर्मावनद्धं दुर्गन्धं पात्रं मूत्रपुरीषयोः ॥ ५८ ॥ जराशोकविपाकार्तं रोगमन्दिरमातुरम् ॥ दुष्पूरं दुर्धरं दुष्टं सदोषं क्षणभंगुरम् ॥ ५९ ॥ कृमिविड्भस्मसंज्ञान्तं शरीरमिति वर्णितम् ॥ अस्थिरेण स्थिरं कर्म कुतोऽयं साधयेन्न हि ॥ ६० ॥ यत्प्रातः संस्कृतं चान्नं सायं तच्च विनश्यति ॥ तदीयरससंपुष्टे काये का नाम नित्यता ॥ ६१ ॥ सप्ताहश्रवणाल्लोके प्राप्यते निकटे हरिः ॥ अतो दोषनिवृत्त्यर्थमेतदेव हि साधनम् ॥ ६२ ॥ बुद्बुदा इव तोयेषु मशका इव जन्तुषु ॥ जायन्ते मरणायैव कथाश्रवणवर्जिताः ॥ ६३ ॥ जडस्य शुष्कवंशस्य यत्र ग्रन्थिविभेदनम् ॥ चित्रं किमु तदा चित्तग्रंथिभेदः कथाश्रवात् ॥ ६४ ॥

यत् संस्कृतं भुक्तं तच्च सायं संध्यासमये विनश्यति, तस्य भुक्तान्नस्याऽयं तदीयः, तदीयश्चासौ रसश्चेति तथा तेन संपुष्टे स्थूले काये शरीरे का नाम नित्यता, न कापि, विकारमात्रस्याऽनित्यत्वादिति भावः ॥ ६१ ॥ पारायणश्रवणं हरिप्राप्तिकरमित्याह—सप्ताहेति। सप्ताहश्रवणाद्धेतोः लोके जगति निकटे समीपमेव हरिः पापहंता विष्णुः प्राप्यते। अतोऽस्मात्कारणात् दोषनिवृत्त्यर्थं पापानां निराकरणाय एतत्पुराणश्रवणमेव साधनमस्ति। हि उपायांतरव्यावृत्त्यर्थः ॥ ६२ ॥ तद्धीनास्तुच्छा इत्याह—बुद्बुदा इति। कथाश्रवणवर्जिताः[1] कथा हरिसंबंधिनी न तु लौकिकी, तस्याः श्रवणं तेन वर्जिता रहिता जना मरणार्थमेव जायंते उत्पद्यंते, न तु मोक्षार्थम्। तत्र दृष्टांतद्वयम्—तोयेषु जलेषु बुद्बुदा फेना इव, जंतुषु प्राणिषु मशका दंशा इव, नरजन्मवैफल्यसूचनाय दृष्टांतद्वयमेतदिति चिंतनीयम् ॥ ६३ ॥ सांप्रतं तत्प्रभावं द्रढय



१ तेन कथाश्रवणेन हीनाः।

त्राह—जडस्येति । जडस्याऽचेतनस्य शुष्कस्य विरसस्य वंशस्य वेणोर्यत्र यस्यां कथायां ग्रंथिविभेदनं ग्रंथिविपाटनमभूत् । तदा कथाश्रवात् कथायाः श्रवणात् चित्तग्रंथिभेदः चित्ते मनसि ग्रंथयः वासनारूपास्तेषां भेदः भेदनं किमु चित्रं, न किमपि । यत्रेत्यस्य यदेत्यर्थ इत्याहुर्गुरवः ॥ ६४ ॥ मुक्तिसाधनमप्येतदित्याह—भिद्यत इति । सप्ताहश्रवणे सप्तदिनमध्ये कथाश्रवणे कृते सति अस्य श्रोतुर्हृदयग्रंथिर्भिद्यते भिन्नो भवति । सर्वसंशयाः असंभावनाविपरीतभावनारूपाः छिद्यंते छिन्ना भवंति । कर्माणि पूर्वसंचितानि क्रियमाणानि च क्षीयंते नश्यंति । नच प्रारब्धकर्मणस्तु भोगादेव क्षयः " नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि " इत्युक्तेरिति वाच्यम्, भगवत्कथामहिम्नोऽचिंत्यशक्तित्वात् ॥ ६५ ॥ किंच—संसारेति । संसार एव कर्दमः पंकस्तस्यालेप आलेपनं तस्य प्रक्षालनं मलनिराकरणेन शुद्धिकरणं[1] तस्मिन् पटीयसि अतिशयेन पटुनि कथातीर्थे कथैव तीर्थं कथातीर्थं तस्मिन् चित्ते स्थिते सति मुक्तिरेव मोक्ष एव स्मृता बुधैः पंडितैः कथिता ॥ ६६ ॥ तत्समये विमानं प्राप्तमित्याह—एवमिति । एवमित्थं तस्मिन्

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥ क्षीयन्ते चास्य कर्माणि सप्ताहश्रवणे कृते ॥ ६५ ॥ संसारकर्दमालेपप्रक्षालनपटीयसि ॥ कथातीर्थे स्थिते चित्ते मुक्तिरेव बुधैः स्मृता ॥ ६६ ॥ एवं ब्रुवति वै तस्मिन्विमानमगमत्तदा ॥ वैकुण्ठवासिभिर्युक्तं प्रस्फुरद्दीप्तिमंडलम् ॥ ६७ ॥ सर्वेषां पश्यतां भेजे विमानं धुन्धुलीसुतः ॥ विमाने वैष्णवान्वीक्ष्य गोकर्णो वाक्यमब्रवीत् ॥ ६८ ॥ गोकर्ण उवाच ॥ अत्रैव बहवः सन्ति श्रोतारो मम निर्मलाः ॥ आनीतानि विमानानि न तेषां युगपत्कुतः ॥ ६९ ॥ श्रवणं समभागेन सर्वेषामिह दृश्यते ॥ फलभेदः कुतो जातः प्रब्रुवन्तु हरिप्रियाः ॥ ७० ॥

दिव्यदेहधारिणि धुंधुकारिणि ब्रुवति वदति सति तदा तत्क्षणमेव विमानमगमत् । तद्विशिनष्टि—वैकुंठवासिभिर्विष्णुपार्षदैर्युक्तम्, प्रस्फुरत् अतिप्रकाशशालिदीप्तीनां मंडलं यस्मिंस्तत्तथा । यद्वा—प्रस्फुरंत्यश्च ता दीप्तयश्च प्रस्फुरद्दीप्तयस्तासामिति ॥ ६७ ॥ तदारूढं धुंधुकारिणं दृष्ट्वा गोकर्णः पृष्टवानित्याह—सर्वेषामिति । सर्वेषां जनानां पश्यतां सतां धुंधुलीसुतः धुंधुल्याः पुत्रो विमानं भेजे आरुरोह । विमाने विमानोपरि वैष्णवान् विष्णुसेवकान् वीक्ष्य दृष्ट्वा गोकर्णो वाक्यमब्रवीत् ॥ ६८ ॥ बहूनां श्रोतॄणामत्र विद्यमानत्वात्कथमेकं विमानमानीतम्, अन्येषाञ्च किमिति तदारोहणं न जातमित्यौत्सुक्येन पृच्छति—अत्रेति द्वाभ्याम् । अत्र स्थाने मम कथायाः श्रोतारो निर्मलाः शुद्धा बहवः संति । एव निश्चये । तेषामर्थे चतुर्थ्यर्थे षष्ठीयम् । युगपत एतत्समकालमेव विमानानि कुतः कस्मात्कारणान्नानीतानि ॥ ६९ ॥ इहात्र श्रवणं समभागेन तुल्यतया सर्वेषा

---

१ शुद्धिहेतुत्वात् ।

जनानां दृश्यते, अस्माभिरिति शेषः । फलभेदः फले भेदो वैषम्यं कुतः कस्माद्धेतोः जात उद्भूतः । हे हरिप्रियाः हे पार्षदाः प्रब्रुवंतु भवंतो वदंतु ॥ ७० ॥ 'कारणभेदात् कार्यभेदः' इति न्यायमाश्रित्योत्तरयंति—श्रवणस्येति सार्द्धैश्चतुर्भिः । श्रवणविभेदेन हेतुना फलभेदः फले फलस्य वा भेदोपि संस्थितो जातः । सर्वैः श्रवणं कृतं परन्तु तथा तेन प्रकारेण मननं विचारो न कृतम् । तुशब्दो भेदे ॥ ७१ ॥ हे मानद । ततस्तस्मात्कारणात् भजनात् गुरुरूपिभगवदनुग्रहपूर्वकभजनात् फलभेदो जातः 'भोजनात्' इति पाठांतरं साधु । तथाहि—सप्तरात्रं यावत् । नैरंतर्ये द्वितीया । उपोष्य उपवासं कृत्वैव प्रेतेन यथा श्रवणं कृतम् ॥ ७२ ॥ तथा तेन प्रेतेन स्थिरचित्ते निश्चल चित्ते सति । भृशमत्यर्थम् । मननादि कृतम् । आदिना निदिध्यासनसंग्रहः । तत्र हेतुः—अदृढं शिथिलं ज्ञानं हतम्, भवतीति क्रियान्वयः । एवमग्रेऽपि । श्रुतं शास्त्रा

हरिदासा ऊचुः ॥ श्रवणस्य विभेदेन फलभेदोपि संस्थितः ॥ श्रवणं तु कृतं सर्वैर्न तथा मननं कृतम् ॥ ७१ ॥ फलभेदस्ततो जातो भजनादपि मानद ॥ सप्तरात्रमुपोष्यैव प्रेतेन श्रवणं कृतम् ॥ ७२ ॥ मननादि तथा तेन स्थिरचित्ते कृतं भृशम् ॥ अदृढं च हतं ज्ञानं प्रमादेन हतं श्रुतम् ॥ ७३ ॥ संदिग्धो हि हतो मन्त्रो व्यग्रचित्तो हतो जपः ॥ अवैष्णवो हतो देशो हतं श्राद्धमपात्रकम् ॥ ७४॥ हतमश्रोत्रिये दानमनाचारहतं कुलम् ॥ विश्वासो गुरुवाक्येषु स्वस्मिन्दीनत्वभावना ॥ ७५ ॥

दीनां श्रवणं, शास्त्रमेव वा प्रमादेन हतम् ॥ ७३ ॥ संदिग्धः इत्थमनित्थं वेति संदेहास्पदीभूतः गुरुसंप्रदायरहितो वा मंत्रो हतः । व्यग्रचित्तः विविधम् अग्रं वृत्तिविशेषो यस्मिंस्तथाभूतमसावधानं चित्तं यस्मिन् स तथा जपो मंत्रादिर्हतः । नास्ति वैष्णवो विष्णुभक्तो यस्मिन् स तथा देशो हतः । नास्ति पात्रं धर्मशास्त्रोक्तलक्षणसंपन्नं ब्रह्म[1] यस्मिन् तत्तथा । श्राद्धं पार्वणादि हतम् ॥ ७४ ॥ अश्रोत्रिये वेदपाठरहिते ब्राह्मणे दानं हतम् । नास्ति आचारो यस्मिंस्तत् कुलं हतम्, 'आचारः प्रथमो धर्मः' इति वचनात्तद्विहीनस्याऽधर्महेतुत्वात् । श्रवणस्य साफल्यसाधनान्याह—विश्वास इति सार्द्धेन । गुरुवाक्येषु गृणाति हिताहितमिति गुरुः । यद्वा—"गुकारस्त्वंधकारः स्याद्रुकारस्तद्विनाशकृत् ॥ अंधकारविनाशित्वाद्गुरुरित्यभिधीयते ॥" इत्युक्तलक्षणो वा तस्य वाक्यानि वचनानि तेषु विश्वासः । अत एव निश्चलबुद्धिः । स्वस्मिन्नात्मनि दीन

१ ब्राह्मणः ।

त्वभावना दीनोहमिति धारणा, न तु कौटिल्याहंकारादिभिरौन्नत्यम् ॥ ७५ ॥ च पुनः, एव निश्चयेन, मनोदोषजयः मनसो दोषाः कामक्रोधादयस्तेषां जयः । कथायां निश्चला मतिः स्थिरा बुद्धिः । एवमादि साधनं चेद्यदि कृतं स्यात्तदा श्रवणे फलं भवेत् ॥ ७६ ॥ सर्वेषां मुक्तिर्मया संपादनीयेति चिंतयानं प्रत्याहुः—पुनरिति । पुनश्श्रवस्य भूयःकथाश्रवणस्यान्ते सर्वेषां श्रोतॄणां वैकुंठलोके ध्रुवं निश्चयेन वसतिर्वासः, भविष्यतीति शेषः । हे गोकर्ण गोविंदो भगवान् तव तुभ्यं स्वयमेव आत्मनैव गोलोकं दास्यति ॥ ७७ ॥ पार्षदा वैकुंठं ययुरित्याह—एवमिति । एवमित्थं ते सर्वे हरिकीर्त्तनाः हरिं कीर्त्तयंतीति तथा ते पार्षदा वैकुंठं ययुः विष्णुभवनं गताः । "पुनः श्रवांते सर्वेषां वैकुंठे वसतिर्ध्रुवम्" इति यथा विष्णुपार्षदैरुक्तं तथा श्रावणे मासि गोकर्णः पुनर्भूयः कथामूचे जगाद । तदुक्तम्—"आषाढे धेनुजः पूर्वमुवाच धुंधुकारिणे । श्रावणे सर्वमुक्त्यर्थमाश्विने तूद्धवाय च ॥ मैत्रेय आह सौम्ये च माघे भक्तजना दधुः ॥ ततःप्रभृति सर्वेषु मासेषु श्रवणं मतम् ॥ प्रत्यहं शृणुयाद्यो वै तस्य मुक्तिश्च निश्चयात् ॥ नात्र मासादिनियमः सर्वदा श्रवणं मतम् ॥" इति ॥ ७८ ॥ पुनश्श्रवणान्ते कृतार्था इत्याह—सप्तेति । सप्तरात्रवतीं सप्तानां रात्रीणां समाहारः सप्तरात्रं, तद्विद्यते यस्या

मनोदोषजयश्चैव कथायां निश्चला मतिः ॥ एवमादि कृतं चेत्स्यात्तदा वै श्रवणे फलम् ॥ ७६ ॥ पुनः श्रवान्ते सर्वेषां वैकुण्ठे वसतिर्ध्रुवम् ॥ गोकर्ण तव गोविंदो गोलोकं दास्यति स्वयम् ॥ ७७ ॥ एवमुक्त्वा ययुः सर्वे वैकुण्ठं हरिकीर्तनाः ॥ श्रावणे मासि गोकर्णः कथामूचे तथा पुनः ॥ ७८ ॥ सप्तरात्रवतीं भूयः श्रवणं तैः कृतं पुनः ॥ कथासमाप्तौ यज्जातं श्रूयतां तच्च नारद ॥ ७९ ॥ विमानैः सह भक्तैश्च हरिराविर्बभूव ह ॥ जय शब्दा नमःशब्दास्तत्रासन्बहवस्तदा ॥ ८० ॥ पाञ्चजन्यध्वनिं चक्रे हर्षात्तत्र स्वयं हरिः ॥ गोकर्णं तु समालिंग्याकरोत्स्वसदृशं हरिः ॥ ८१ ॥

मिति तथा तां कथामिति पूर्वान्वयि । भूयः पुनः तैः श्रोतृभिः श्रवणं कृतम् । 'सप्तरात्रं व्रतीभूय' इति पाठः साधुरिति गुरवः । तत्र सांप्रदायिकाः पूर्वश्लोके गोकर्णेन सहान्वयमाहुः । हे नारद कथासमाप्तौ कथावसाने, पूर्त्ताविति यावत् । यदाश्चर्यं जातं तत् श्रूयताम् । च प्रसिद्ध्यर्थः ॥ ७९ ॥ हरिराविर्भूय श्रोतॄणां वैकुंठानयनं कृतवानित्याह—विमानैरिति । विमानैः च पुनः भक्तैः सह यदा हरिराविर्बभूव प्रादुरास । हेति स्फुटम् । तदा जयशब्दा नमःशब्दा बहवोऽसंख्यातास्तत्रासन्नभवन् ॥ ८० ॥ हर्षेण शंखं वादयित्वा गोकर्णं चालिंग्य स्वसदृशं हरिरकरोदित्याह—पांचजन्येति । "समुद्रचारी यः पूर्वमासीत्पंचजनोऽसुरः । गुरोः सुतस्यानयने समुद्रवचनाद्धरिः । हत्वा तदुदरे बालमपश्यन्यममागमत् । तदंगप्रभवं शंखं नामतः पांचजन्यकम् । दध्मौ भीतो यमं प्राप्य गुरुपुत्रमथाददात् ॥ " इति पुराणांतरे प्रसिद्धम् । पांचजन्यः शंखस्तस्य ध्वनिं नादं तत्र कथास्थाने स्वयमात्मनैव हरिर्हर्षाच्चक्रे चकार । तुशब्द उक्तादधिकफलसूचनार्थः । गोकर्णं समा

लिंग्य मिलित्वा स्वसदृशं स्वेन समं हरिरकरोत् ॥ ८१ ॥ अन्यानपि स्वपार्षदांश्चक्रुरित्याह—श्रोतॄनिति। हरिर्विष्णुः तथा तेनैव प्रकारेण क्षणात् तत्क्षणमेव अन्यान् श्रोतॄन् घन इव मेघ इव श्यामान् श्यामलान्, पीतकौशेयवाससः पीतानि कौशेयानि पट्टनिर्मितानि वासांसि येषां ते तथा तान्, किरीटमस्ति येषां ते तथा तान्, कुंडलमस्ति येषां ते तथा तान् चक्रे चकार॥८२॥भक्तिपारवश्येनातिचित्रं कृतमित्याह—तदिति सार्द्धेन।आ समंततः श्वचांडालजातयः।'श्वचांडालश्वपचादयः'इति पाठे आदिशब्दोंतार्थो बोध्यः, स्तंभादयो गृहा इतिवत्, 'अधीतवान् द्वापरादौ'इति व्यासो क्विवच्च । जातिपर्यंता ये जीवाः तद्ग्रामे तस्मिन्ग्रामे स्थिता आसंस्ते सर्वेपि तदा तस्मिन्काले हरिणा विमाने स्थापिताः । केन हेतुनेत्यत आह—गोकर्णकृपया ॥ योगिनो यत्र योगबलेन गच्छंति तस्मिन् हरिलोके वैकुंठे ते सर्वे प्रेषिताः प्रस्थापिताः ॥८३॥ गोकर्णाय गोलोकं दत्तवानित्याह—गोकर्णेनेति । स गोपालः गां पालयतीति गोपालः, गां वेदलक्षणां वाणीं पालयतीति वा । कथाश्रवणतः कथाश्रवणात् प्रीतः प्रसन्नः गोकर्णेन सह गोपवल्लभं गोपागां

श्रोतॄनन्यान्घनश्यामान्पीतकौशेयवाससः॥ किरीटिनः कुण्डलिनस्तथा चक्रे हरिः क्षणात् ॥८२॥ तद्ग्रामे ये स्थिता जीवा आश्वचाण्डालजातयः॥ विमाने स्थापितास्तेऽपि गोकर्णकृपया तदा ॥ प्रेषिता हरिलोके ते यत्र गच्छन्ति योगिनः ॥८३॥ गोकर्णेन स गोपालो गोलोकं गोपवल्लभम् ॥ कथाश्रवणतः प्रीतो निर्ययौ भक्तवत्सलः ॥ ८४ ॥ अयोध्यावासिनः पूर्वं यथा रामेण संगताः ॥ तथा कृष्णेन ते नीता गोलोकं योगिदुर्लभम् ॥ ८५ ॥ यत्र सूर्यस्य सोमस्य सिद्धानां न गतिः कदा ॥ तं लोकं हि गतास्ते तु श्रीमद्भागवतश्रवात् ॥ ८६ ॥ ब्रूमोऽद्य ते किं फलवृन्दमुज्ज्वलं सप्ताहयज्ञेन कथासु संचितम् ॥ कर्णेन गोकर्णकथाक्षरं यैः पीतं च ते गर्भगता न भूयः ॥ ८७ ॥

प्रियं गोलोकं निर्ययौ निर्जगाम। यतो भक्तवत्सलः भक्तेषु वत्सलः कृपालुः । यद्वा—भक्तान् वत्सवत् पुत्रवत् लाति गृह्णाति स्वीकरोतीति तथा ॥ ८४ ॥ परोपकारकरणे श्रीकृष्णस्य श्रीरामचंद्रेण समतां सूचयति—अयोध्येति।अयोध्यावासिनः अयोध्याम् वस्तुं शीलं येषां ते तथा पूर्वं पुरा रामेण संगता रामेण सह वैकुंठं यथा प्राप्ताः तथा योगिदुर्लभं योगिभिर्दुष्प्रापं गोलोकं ते सर्वे कृष्णेन नीताः प्रापिताः॥८५॥श्रीमद्भागवतस्य श्रवणं मुक्तिदायकं यत्तदर्थं दृढीकुर्वन्नाह—यत्रेति। यत्र यस्मिँल्लोके सूर्यस्य रवेः,सोमस्य चंद्रस्य, सिद्धानां देवानां गतिः कदा कस्मिन्नपि काले न भवति।गतिशब्दोऽत्र पक्षांतरे प्रकाशवाची।तं लोकं परमधामाख्यं श्रीमद्भागवतश्रवात् श्रीमद्भागवतस्य श्रवणतस्ते सर्वे गताः प्राप्ताः । हि निश्चयेन । तुशब्दस्तत्र गतानां पुनरागमननिषेधार्थः । तदुक्तं गीतायां श्रीकृष्णेन " न तद्भासयते सूर्यो न शशांको न पावकः । यद्गत्वा न निवर्त्तंते तद्धाम परमं मम ॥" इति ॥८६॥ एतदधिकमन्यन्नास्तीति सनत्कुमारो नारदायाऽऽह—ब्रूम इति । उज्ज्वलमतिशुद्धं सप्ताहयज्ञेन सप्ताह एव यज्ञो यागस्तेन कथासु संचितं नानाख्या

नेषु एकीकृतं कथाभिः सुसंचितमिति वा । फलवृंदं फलसमूहं किमद्य ब्रूमो वयं वदामः । तदेवाह—कर्णेन श्रोत्रेण दक्षिणस्यैव कर्णस्यात्र प्राधान्यादेकत्वमिति गुरवः। जात्यभि प्रायेणेति केचित् । गोकर्णकथाक्षरं गोकर्णेन निरुक्ता कथा गोकर्णकथा तस्या अक्षरं पदमात्रं लक्षणयाऽक्षरशब्दस्य पदमात्रे शक्तिः "तत्कथायां तु वेदार्थः श्लोकेश्लोके पदेपदे"इत्युक्तेः । यैः पुंभिः पीत आदरेण श्रुतः, ते पुरुषाः भूयः पुनर्गर्भगता जन्मभाजो न भवन्ति, अर्थान्मुक्ता भवंति। एतेन 'ऋते ज्ञानान्न मुक्तिः' इति वेदान्तडिंडिमो भग्नः। ॥८७॥ एतदेव कैमुतिकन्यायेन द्रढयति—वातेति।सप्ताहगाथाश्रवणेन यां गतिं मोक्षाख्यां श्रोतारो यांति प्राप्नुवंति तां गतिं वातांबुपर्णाशनदेहशोषणैः वातो वायुश्चांबु च जलं पर्णानि शुष्कपत्राणि च वाताम्बुपत्राणि तेषामशनं भोजनं तेन देहस्य शोषणानि शुष्कीकरणानि तैः साधनैः, उग्रैरतिकष्टसाध्यैः तपोभिः, चिरकालेन बहुकालेन संचितैः संपादितैः योगैरष्टांगसंपन्नैश्च न संयांति न गच्छंति ॥८८॥ प्रकरणार्थमुपसंहरति—इतीति।इममधुनोक्तं पुण्यं पवित्रमितिहासं शांडिल्यो मुनीश्वरः मुनीनामीश्वरोपि ब्रह्मानंदपरिप्लुतः ब्रह्मण

वाताम्बुपर्णाशनदेहशोषणैस्तपोभिरुग्रैश्चिरकालसंचितैः ॥ योगैश्च संयांति न तां गतिं वै सप्ताहगाथाश्रवणेन यान्ति याम् ॥ ८८ ॥ इतिहासमिमं पुण्यं शाण्डिल्योऽपि मुनीश्वरः ॥ पठते चित्रकूटस्थो ब्रह्मानन्दपरिप्लुतः ॥८९॥ आख्यानमेतत्परमं पवित्रं श्रुतं सकृद्वै विदहेदघौघम् ॥ श्राद्धे प्रयुक्तं पितृतृप्तिमावहेन्नित्यं सुपाठादपुनर्भवं च ॥ ९० ॥ इति श्रीपद्मपुराणे श्रीभागवतमाहात्म्ये गोकर्णवर्णनं नाम पञ्चमोऽध्यायः ॥ ५ ॥

आनंदस्तस्मिन् परिप्लुतो निमग्नः, तेन व्याप्तो वा । अभेदार्थे षष्ठी, राहोः शिर इतिवत् । ब्रह्माऽऽनन्दयोरभेदे "आनंदं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" इति श्रुतिःप्रमाणम्।चित्रकूटस्थः चित्राणि कूटानि शिखराणि यस्य स तथा तत्र तिष्ठतीति तथा स नित्यं पठते॥८९॥फलमाह—आख्यानमिति।एतदाख्यानं परममुत्कृष्टम्,पवित्रं पूतं शुद्धिकरं वा,सकृदेकवारं श्रुतम् (कर्तृपदमेतत) अघौघं पापसमूहं विदहेत् भस्मीकुर्यात।श्राद्धे पार्वणादौ प्रयुक्तं पठितं पितृतृप्तिं पितॄणामानंदमावहेत् संपादयेत, कुर्यादित्यर्थः । नित्यं प्रतिदिनं सुपाठात शोभनपाठात् । एतेन ह्रस्वदीर्घव्यत्यासास्पष्टाक्षरोच्चारणेन न सम्यक् फलावाप्तिरिति सूचितम् । अपुनर्भवं नास्ति पुनर्भवो जन्म यस्मात् स तथा तं मोक्षञ्चावहेत् ॥ ९० ॥ इति श्रीशेखावाट्यंतर्गतविजयपुरनिवासिव्राजलालिपंडितरामप्रतापविरचितायां श्रीमद्भागवतमाहात्म्यटीकायामृजुनाम्न्यां पंचमोऽध्यायः ॥ ५ ॥

श्रीमद्भागवतश्रावाद्धुंधुकारी विमुक्तवान्। प्रेतयोनेः पुनः सर्वे वैकुंठपदमागताः ॥ १ ॥ पूर्वाध्याये श्रीमद्भागवतसप्ताहश्रवणफलमुक्तं, तत्र तत्प्रकारस्याविवक्षितत्वात्तद्विधानार्थमुत्तराध्याय आरभ्यते "संविधानात्फलं पूर्णं तद्धीने तु तदल्पता । अंगांगीभावसंबंधोऽनयोरध्याययोः स्फुटम् ॥" । तत्र सप्ताहश्रवणविधिं विवक्षुः "मंगलादीनि मंगलमध्यानि मंगलांतानि च शास्त्राणि प्रथंते" इत्यादिमहाभाष्योल्लेखादन्तिमाध्यायादौ मङ्गलमाचरति–अथेति । अथेति मंगले।सप्ताहश्रवणे विधिं विधानं ते तुभ्यं वयं संप्रवक्ष्यामः सम्यक् कथयिष्यामः । तत्रादौ कतिसाधकैर्विधिः साध्य इति निर्णीयते–वसुभिः अष्टभिः सहायैः प्रायो बाहुल्येन विधिः इतिकर्तव्यतासाध्यः स्मृत एव ॥ १ ॥ कदा प्रारंभः कार्य इति कालनिर्णयार्थं दैवज्ञाह्वानमाहुः–दैवज्ञमिति। दैवज्ञं ज्योतिर्विदं ब्राह्मणम्।तत्र तस्यैवाधिकारात्। समाहूय पाद्यार्घ्याचमनासनानि निवेद्य इति संशब्दार्थः,आदरपर्यायत्वात् । मुहूर्त्तं पृच्छ्य संपृच्छ्य, आर्षो ल्यबत्र समासाभावात् । विवाहे यादृशं चित्तं प्रमोदमानं तादृशं चित्तं कथायामपि परिकल्पयेत् विदध्यात्। 'वित्तम्'इति पाठे विवाहे यादृशं वित्तं वस्त्राभूषणगोशय्यादानादिरूपं संपाद्यते तादृशमत्रापि परिकल्पयेदित्यर्थः । ननु " गत्वा स्नानं प्रकर्त्तव्यं गत्वा पृच्छेच्छुभाशुभम् । समाहूय तु यः पृच्छेत्तदर्द्धफलदं

कुमारा ऊचुः ॥ अथ ते संप्रवक्ष्यामः सप्ताहश्रवणे विधिम् ॥ सहायैर्वसुभिश्चैव प्रायः साध्यो विधिः स्मृतः ॥ १ ॥ दैवज्ञं तु समाहूय मुहूर्तं पृच्छ्य यत्नतः ॥ विवाहे यादृशं चित्तं तादृशं परिकल्पयेत् ॥ २ ॥ नभस्य आश्विनोर्जौ च मार्गशीर्षः शुचिर्नभाः ॥ एते मासाः कथारम्भे श्रोतॄणां मोक्षसूचकाः ॥ ३ ॥

भवेत ॥" इति पाद्मोक्त्या समाहूय पृच्छायाः फलार्द्धप्रदत्वात्कथं सयाहूयेत्युक्तं, तत्र नृपाभिप्रायेणेति गुरवः । " वसिष्ठं तु समाहूय यौवराज्याभिषेचनम् । एकांते जनकोऽपृच्छत्" इतिरामायणोक्तेः । केचित्तु–विवाहयात्रादिमंगलं शुभम्, अशुभं कष्टरोगोत्पातादिकं च गत्वा पृच्छेदिति विधिः, एतत्कार्यस्य च परमार्थसाधकत्वादाह्वानं न दोषदमित्याहुः । अन्यत्रापि–"गत्वा नत्वा च दत्त्वा च परिपृच्छेत्सदक्षिणम् ॥ ब्राह्मणं मंगलं यश्च तस्य कार्यं सुसिद्धिदम् ॥ १ ॥ संतोष्य च वचो ग्राह्यं ब्राह्मणस्य तु सर्वथा ॥ असंतोष्य वचो गृह्णन् कार्यकर्त्ता विनश्यति ॥ २ ॥" । कीदृशं तन्मुहूर्त्तं, कुत्र लिखितमिति केपि न जानंति, ज्योतिःशास्त्रेऽदृष्टत्वात् । अतस्तन्मुहूर्त्तं स्वयमेव व्यासोवददिति । तथाहि–"भौमार्किवर्जिता वारा भानि ध्रुवमृदूनि च ॥ शुभयोगे तिथौ लग्ने कथारंभः प्रशस्यते ॥ १ ॥ नित्यायां च कथायां च पुराणानां मुनीश्वर ॥ द्वादशीं वर्जयेत्प्राज्ञः सूतसूतकसंभवात् ॥ सप्ताहे न निषेधोस्ति प्राहुरेवं पुराविदः ॥ २ ॥" इति पाद्मे ॥ २ ॥ मासानाह–नभस्य इति । नभस्यो भाद्र

१ ओंकारश्चाथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्मांगलिकावुभौ ॥" इतिमहदुक्तेः ।

पदः । आश्विनोर्जौ आश्विनकार्त्तिकौ 'बाहुलोर्जौ कार्त्तिकिकः' इत्यमरोक्तेः । मार्गशीर्षः प्रसिद्धः । शुचिराषाढः । नभाः श्रावणः ' नभः । खं श्रावणो नभाः ' इत्यमरोक्तेः । एते मासाः कथारंभे श्रोतॄणां जनानां मोक्षसूचकाः मोक्षं सूचयंतीति तथा ते, मोक्षदायका इत्यर्थः । चात् माघफाल्गुनवैशाखज्येष्ठानां ग्रहणम् । "सर्वे मासाः शुभाः प्रोक्ताः पौषचैत्रविवर्जिताः" इतिविशेषोक्तेः सप्ताह एव एतयोर्निषेधो नान्यत्र । " सर्वदा वाचयेद्गाथां पारायणमृते विधिम् " इतिवचनात् । तदुक्तमन्यत्रापि— "नभस्यः कार्त्तिको मार्गशीर्षो माघस्तथैव च ॥ श्रीमद्भागवतं श्राव्यं चातुर्मास्ये महत्फलम् ॥ १ ॥ तत्र कारणमाख्यास्ये श्रूयतां भवतोऽनघाः ॥ इमे मासाः कथायोग्याः श्रुतौ भागवतस्य च ॥ मोहयुक्तं तु ब्रह्माणं मासे नभस्यसंज्ञिते ॥ शुद्धपक्षे शुभे वारे ह्युवाच भगवान्हरिः ॥ ३ ॥ युक्तं श्लोकैश्चतुर्भिश्च सर्वथा मुक्तिदायकम् ॥ नवमीदिनमारभ्य पूर्णमासी यदा भवेत् ॥ ४ ॥ वैष्णवैः सह भो विप्राः श्रोतव्यं कामदं शुभम् ॥ श्रुत्वा हरिमुखं भोजाद्ब्रह्मा मोहाद्विमुक्तवान् ॥ ५ ॥ अतो मासे नभस्ये च श्रोतव्यं च नरैः सदा ॥ कार्त्तिके नारदो व्यासं कथामेतां जगाद ह ॥ ६ ॥ तस्मात्तु कार्त्तिके मासे सप्ताहश्रवणं मतम् ॥ श्रीशुकं पाठयामास मासे स मार्गशीर्षके ॥ ७ ॥ अतः सप्ताहश्रवणं मार्गशीर्षे शुभं मतम् ॥ एकदा तु मुनिर्धीरो गंगातीरमुपेयिवान् ॥ ८ ॥ विष्णुरातेन संपृष्टो महाभागवतो

मासानां विग्रहे यानि तानि त्याज्यानि सर्वथा ॥ सहायाश्चेतरे चात्र कर्तव्याः सोद्यमाश्च ये ॥ ४ ॥ देशेदेशे तथा सेयं वार्ता प्रेष्या प्रयत्नतः ॥ भविष्यति कथा चात्र आगन्तव्यं कुटुम्बिभिः ॥ ५ ॥ दूरेहरिकथाः केचिद्दूरेचाच्युतकीर्तनाः ॥ स्त्रियः शूद्रादयो ये च तेषां बोधो यतो भवेत् ॥ ६ ॥

मुनिः ॥ माघमासे सिते पक्षे नवमीगुरुवासरे ॥ ९ ॥ प्रारभत्प्रथमस्कंधाद्वैकुंठपदमाप सः ॥ माघमासोऽतिधन्योऽयं सप्ताहश्रवणे मतः ॥ १० ॥ " ॥ ३ ॥ किञ्च—मासानामिति । मासानां विग्रहे शरीरे त्रिंशद्दिनात्मके "समासे च विरोधे च वपुषि विग्रहः स्मृतः" इत्युक्तेः । यानि त्याज्यानि तानि वस्तूनि सप्ताहे सर्वथा सर्वप्रकारेण त्याज्यानि । यथा—"श्रावणे वर्जयेच्छाकं दधि भाद्रपदे तथा ॥ आश्विने तु त्यजेद्दुग्धं द्विदलं कार्त्तिके तथा ॥ १ ॥ मार्गशीर्षे त्यजेत्कंदं पौषे च गृंजनं तथा ॥ पलांडुमपि केप्याहू रक्तं मूलं च माघके ॥ २ ॥ जंबीरं फाल्गुने मासे चैत्रे चित्रान्नमेव च ॥ कूष्मांडनालिकां राधे ज्येष्ठे पानं च मादकम् ॥ ३ ॥ कुलित्थं तुरमाषाढे वर्जनीयं प्रयत्नतः ॥" इति । यद्वा—'मासानां विप्र हेयानि' इति पाठः । तत्र विप्रेति नारदं संबोधयति । शेषं स्पष्टम् । ये सोद्यमा उद्यमेन सहिता इति । ' जीवन्मृतकस्तु निरुद्यमोयम् ' इति निरुद्यमानां त्याज्यत्वात् । ते अत्र सप्ताहयज्ञे इतरे अन्येपि सहायाः कर्त्तव्याः ॥ ४ ॥ कथावृत्तांतपत्रमन्यदेशेष्वपि सुहृत्संबंधिबांधवान्प्रति प्रेषणीयमित्याह—देशेदेश इति । तथा तेन प्रकारेण देशेदेशे प्रतिदेशं सा प्रसिद्धा इयं वार्त्ता कथासंबंधिनी प्रेष्या प्रेषणीया दूतादिद्वारा प्रयत्नतः प्रकर्षेण यत्नात् । अत्र देशे कथा श्रीमद्भागवतगाथा भविष्यति भाविनी अतः कुटुंबिभिः गृहस्थैरागंतव्यम् ॥ ५ ॥ ननु येषां श्रवणेच्छा स्यात्ते स्वयमेवागमिष्यंतीत्यत आह—दूर इति । केचित् केचन दूरे दूरं

हरेः कथा येषां ते तथा । केचित् दूरे च अच्युतस्य कीर्त्तनं येषां ते तथा संति । ये च शूद्रादयो नीचजातयः, च पुनः स्त्रियः शौचाचारहीनाः 'स्त्रीशूद्राश्च सधर्माणः' इतिवचनात् । तेषां बोधो ज्ञानं यतः कथाश्रवणात् भवेत् अतो वार्त्ताप्रेषणं युक्तम् ॥ ६ ॥ वैष्णवान्प्रति पत्रं प्रेषणीयमित्याह—देशेदेश इति । देशेदेशे ये वैष्णवा विरक्ताः विषयाभिलाषरहिताः कीर्त्तनोत्सुकाः कीर्त्तनं हरिनामोच्चारणपूर्वकलीलावर्णनं तस्मिन्नुत्सुकाः तेषु । अप्यर्थे एवकारः । तेष्वपीत्यर्थः । पत्रं प्रेष्यं प्रेषणीयम् । तल्लेखनं तस्य पत्रस्य लेखनम् इति एवं वक्ष्यमाणप्रकारेण ईरितम् उक्तम् । च प्रसिद्धम् ॥ ७ ॥ तथाहि—सतामितिसार्द्धैस्त्रिभिः । सप्तरात्रं यावत् सतां सज्जनानां सुदुर्लभः अत्यलभ्यः समाजः समुदायो भविता भविष्यति । अत्र समाजे अपूर्वरसरूपा अद्भुतरसवर्त्तिनी कथा भविष्यति । एवेति निश्चये ॥ ८ ॥ श्रीभागवतमेव पीयूषममृतं तस्य पानाय पानार्थं रसलंपटाः रसलुब्धाः प्रेमतत्पराः प्रेमपरायणाः भवंतो यूयं शीघ्रमायात आगच्छत ॥ ९ ॥ कदाचित्कार्यविरोधेन चेद्यदि सप्तरात्रं नाऽवकाशस्तथापि दिनमात्रम् एकदिनार्थमागमनं

देशेदेशे विरक्ता ये वैष्णवाः कीर्तनोत्सुकाः ॥ तेष्वेव पत्रं प्रेष्यं च तल्लेखनमितीरितम् ॥ ७ ॥ सतां समाजो भविता सप्तरात्रं सुदुर्लभः ॥ अपूर्वरसरूपेव कथा चात्र भविष्यति ॥ ८ ॥ श्रीभागवतपीयूषपानाय रसलम्पटाः ॥ भवन्तश्च तथा शीघ्रमायात प्रेमतत्पराः ॥ ९ ॥ नावकाशः कदाचिच्चेद्दिनमात्रं तथापि तु ॥ सर्वथागमनं कार्यं क्षणोऽत्रैव सुदुर्लभः ॥ १० ॥ एवमाकरणं तेषां कर्तव्यं विनयेन च ॥ आगन्तुकानां सर्वेषां वासस्थानानि कल्पयेत् ॥ ११ ॥ तीर्थे वापि वने वापि गृहे वा श्रवणं मतम् ॥ विशाला वसुधा यत्र कर्तव्यं तत्कथास्थलम् ॥ १२ ॥ शोधनं मार्जनं भूमेर्लेपनं धातुमण्डनम् ॥ गृहोपस्करमुद्धृत्य गृहकोणे निवेशयेत् ॥ १३ ॥ अर्वाक्पञ्चाहतो यत्नादास्तरणानि प्रमेलयेत् ॥ कर्तव्यो मण्डपः प्रोच्चैः कदलीखण्डमण्डितः ॥ १४ ॥

सर्वथा सर्वप्रकारेण कार्यम् । अत्र सप्ताहरूपे सतां समाजे क्षण एव क्षणोऽपि सुदुर्लभोऽस्ति । तु अलभ्यलाभं सूचयति ॥ १० ॥ एवममुना प्रकारेण तेषामाकरणमाह्वानं कर्त्तव्यं करणीयम् । विनयेन नम्रतया । आगमनात्पूर्वमेव वासस्थानानि कल्पनीयानीत्याह—आगंतुकानामित्यर्द्धेन । आगंतुकानाम् आगमिष्यतां सर्वेषां वासस्थानानि वासार्थं स्थानानि कल्पयेत् रचयेत् ॥ ११ ॥ कथा कुत्र वाच्येति चेत्तत्राह—तीर्थ इति । तीर्थे वा पुष्करादौ, वने वापि वृंदावनादौ, गृहे वा श्रवणं मतम् इष्टम् । यत्र मंदिरादौ विशाला विस्तृता वसुधा भूमिरस्ति तत्र कथास्थलं कर्त्तव्यम् ॥ १२ ॥ तत्र स्थानशुद्धिमाह-शोधनमिति । भूमेर्वसुधायाः शोधनं पंचगव्यादिना शुद्धिः । मार्जनं मलाद्युत्सारणम् । गोमयादिना लेपनम् । धातुर्गैरिकादिस्तेन मंडनमलंकरणम् । गृहोपस्करं गृहस्य उपस्करम् उपकरणं खट्वापीठपेषणीपट्टादिकमुद्धृत्य पूर्वस्थानादुत्थाप्य गृहकोणे गृहस्य कोणे एकदेशे निवेशयेत्स्थापयेत् ॥ १३ ॥ अन्यदपि पूर्वमेव संपादनीयमित्याह—अर्वागिति । पंचाहतः पंचदिनार्वाक् पूर्वम् आस्तरणानि भूम्याच्छादनानि

कटादीनि प्रमेलयेत संपादयेत् । ततो मंडपः कार्य इत्याह—कर्त्तव्य इति सार्द्धेन । प्रोच्चैः प्रकर्षेणोच्चतरः कदलीखंडमंडितः कदल्याः खंडानि स्तंभशाखादीनि तैर्मंडितो भूषितो मंडपः कर्त्तव्यः ॥ १४ ॥ विष्वक् परितः फलपुष्पदलैः फलं बिंबादीनाम्, पुष्पं केतक्यादीनाम्, दलमाम्रबिल्वादीनाम्, तैः वितानेन मंडपस्य उपर्य्याच्छादनेन "पंचवर्णं वितानं स्यान्मंडपाच्छादनाय च" इत्युक्तेः । विराजितः शोभितः । चतुर्दिक्षु चतसृषु दिशासु ध्वजारोपः ध्वजानाम् आरोपः, कर्त्तव्य इति पूर्वेणान्वयः । बहुसंपद्विराजितः बह्वयश्च ताः संपदस्ताभिर्विराजितः विशेषेण प्रकाशितः ॥ १५ ॥ तत्र लोककल्पनं कार्यमित्याह—ऊर्ध्वमिति । ऊर्ध्वं मंडपोपरीति केचित् । तदसंगतं, तत्र स्थानां क्वाप्यदर्शनादश्रुतेश्च । वस्तुतः ऊर्ध्वं सप्त लोका भूरादयः सुविस्तरं यथा स्यात्तथा कल्पनीयाः प्रकल्प्याः । एवावधारणे । तेषु सप्तसु लोकेषु विरक्ता विरागिणो विप्रा ब्राह्मणाः प्रबोध्य—भो भगवन् अत्रेहीत्यभिमुखीकृत्य स्थापनीयाः ॥ १६ ॥ स्थापनमुत्तरोत्तरक्रमेणासनेष्वित्याह—पूर्वमिति । तेषां विरक्तानां श्रोतॄणाम् उत्तरोत्तरक्रमेण पूर्वमासनानि कर्त्तव्यानि तदा तस्मिन्काले पूर्वकाल इत्यर्थः । वक्तुः वाचकस्य दिव्यं सर्वतः श्रेष्ठमासनं सिंहासनं परिकल्पयेत् । अथ प्रसंगाद्वक्तुः श्रोतुश्च गुणनिरू

फलपुष्पदलैर्विष्वग्वितामेन विराजितः ॥ चतुर्दिक्षु ध्वजारोपो बहुसंपद्विराजितः ॥ १५ ॥ ऊर्ध्वं सप्तैव लोकाश्च कल्पनीयाः सुविस्तरम् ॥ तेषु विप्रा विरक्ताश्च स्थापनीयाः प्रबोध्य च ॥ १६ ॥ पूर्वं तेषामासनानि कर्तव्यानि यथोत्तरम् ॥ वक्तुश्चापि तदा दिव्यमासनं परिकल्पयेत् ॥ १७ ॥ उदङ्मुखो भवेद्वक्ता श्रोता वै प्राङ्मुखस्तदा ॥ प्राङ्मुखश्चेद्भवेद्वक्ता श्रोता चोदङ्मुखस्तदा ॥ १८ ॥ अथ वा पूर्वदिग्ज्ञेया पूज्यपूजकमध्यतः ॥ श्रोतॄणामागमे प्रोक्ता देशकालादिकोविदैः ॥ १९ ॥ विरक्तो वैष्णवो विप्रो वेदशास्त्राभिशुद्धिकृत् ॥ दृष्टान्तकुशलो धीरो वक्ता कार्योऽतिनिःस्पृहः ॥ २० ॥

पणम् । तथाहि—"वक्ता व्याससमासविस्त्रियकथः प्रस्ताववित्सत्यवाक् संदेहच्छिदशेषशास्त्रकुशलो नाख्यानविच्छेदकृत् । अव्यंगो जनरंजको जितसभो नाहंकृतो धार्मिकः संतोषीति चतुर्दशोत्तमगुणा वक्तुः प्रणीता इमे ॥ भक्तो वक्तुरगर्वितः श्रुतरुचिश्चांचल्यहीनः पटुः प्रश्नज्ञश्च बहुश्रुतोप्यनलसो निद्रोज्झिताक्षः सुधीः । दाता त्यक्तकथांतरः शुचिवपुर्दभोज्झितः सर्वथा श्रोतुः पुंस इमे चतुर्दश गुणाः सद्भिर्निरुक्ताः स्फुटाः ॥" इति । अन्यच्च—" गीती शीघ्री शिरःकंपी तथा लिखितपाठकः । अनर्थज्ञोऽल्पकंठश्च षडेते पाठकाधमाः ॥ माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः । धैर्यं लयसमर्थश्च षडेते पाठके गुणाः ॥ १७ ॥ वक्तुः श्रोतुश्च मुखनियममाह—उदङ्मुख इति । उदीच्याम् उत्तरदिशायां मुखं यस्य स तथा वक्ता वाचको यदा भवेत्, तदा श्रोता प्राङ्मुखः प्राच्यां पूर्वदिशायां मुखं यस्य स तथा स्यात् । च पुनः वक्ता प्राङ्मुखो यदा तदा श्रोता उदङ्मुखः ॥ १८ ॥ प्रकारांतरमाह—अथेति । पूज्यपूजकमध्यतः पूजितुं योग्यः पूज्यो मुख्यः, पूजयतीति पूजको गौणस्तयोर्मध्यतो मध्ये पूर्वदिक् ज्ञेया पूर्वदिशा बोध्या । सा कुत्र, कैः, केषां प्रोक्तेत्यत आह—देशकालादिकोविदैः देशकालादिनिपुणैः, आगमे शास्त्रे, श्रोतॄणां प्रोक्ता ॥ १९ ॥ वक्तृलक्षणमाह—विरक्त इति । विरक्तो

धनाद्यभिलाषशून्यः । वैष्णवो विष्णुभक्तः । वेदशास्त्रविशुद्धिकृत् वेदानां शास्त्राणां च विशुद्धिं करोतीति तथा अपशब्दनिरासेन । दृष्टांतकुशलः दृष्टांते निपुणः धीरः धैर्य वान्, अतिनिःस्पृहः सर्वथा संग्रहरहितः, विप्रो ब्राह्मणो वक्ता कार्यः कर्त्तव्यः, " वक्तारं ब्राह्मणं कुर्यान्नान्यवर्णजमादरात् " इतिपाद्मोक्तेः । " विस्पष्टमद्रुतं शांतं स्पष्टाक्ष रपदं तथा । कलस्वरसमायुक्तं रसभावसमन्वितम् ॥ ब्राह्मणादिषु सर्वेषु ग्रंथार्थं चार्पयेन्नृप । य एवं वाचयेद्राजन्स विप्रो व्यास उच्यते ॥" इत्यपि तत्रैव । यत्तु—"नक्षत्र जीविनं पापं भिषजं शुल्कजीविनम् । तादृक्पौराणिकादींश्च वाङ्मात्रेणापि नार्चयेत् ॥" इति वचनं, तदभक्तलुब्धविषयम् ॥ २० ॥ 'सदोषाः पंडितास्त्याज्याः श्रीभागवत वाचने' इत्याह—अनेकेति । न एके अनेके ते च ते धर्माश्च अनेकधर्मास्तैर्विभ्रांताः चलितबुद्धयः, स्त्रैणाः स्त्रीलंपटाः, पाखंडं वदितुं शीलं येषां ते तथा यदि पंडिताः विवेकिनस्तथापि ते शुकशास्त्रकथोच्चारे शुकस्य शास्त्रं श्रीमद्भागवतं तस्य कथोच्चारे कथावाचने त्याज्याः ॥ २१ ॥ वक्तुः पार्श्वे अन्योपि तादृशः स्थाप्य इत्याह—वक्तुर्वाचकस्य पार्श्वे सहायार्थं तथाविधः वक्तृसदृशोन्यो द्वितीयः स्थाप्यः स्थापनीयः । कीदृशस्तत्राह—पंडितो ज्ञानी, संशयच्छेत्ता शीघ्रतरवाचनेन लोकानां यः संदेहः तस्य छेत्ता छेदकः,

अनेकधर्मविभ्रान्ताः स्त्रैणाः पाखण्डवादिनः ॥ शुकशास्त्रकथोच्चारे त्याज्यास्ते यदि पण्डिताः ॥ २१ ॥ वक्तुः पार्श्वे सहायार्थमन्यः स्थाप्यस्तथा विधः ॥ पण्डितः संशयच्छेत्ता लोकबोधनतत्परः ॥ २२ ॥ वक्त्रा क्षौरं प्रकर्तव्यं दिनादर्वाग्व्रतातये ॥ अरुणोदयेऽसौ निर्वर्त्य शौचं स्नानं समाचरेत् ॥२३॥ नित्यं संक्षेपतः कृत्वा संध्याद्यं संप्रयत्नतः ॥ कथाविघ्नविघाताय गणनाथं प्रपूजयेत् ॥ २४ ॥ पितॄन्संतर्प्य शुद्ध्यर्थं प्रायश्चित्तं समाचरेत् ॥ मण्डलं च प्रकर्तव्यं तत्र स्थाप्यो हरिस्तथा ॥ २५ ॥

वक्तुरनवकाशात् । लोकानां बोधनं ज्ञानं तत्र तत्परः परायणः ॥ २२ ॥ वक्तृनियममाह—वक्त्रेति सार्धद्वाभ्याम् । दिनात्प्रारंभदिनात् अर्वाक् पूर्वं वक्त्रा वाचकेन क्षौरं क्षुरकर्म प्रकर्त्तव्यम् । किमर्थम्—व्रतातये व्रतस्य प्राप्त्यर्थम् । असौ वक्ता शौचं मूत्रपुरीषोत्सर्गपूर्वकदंतधावनं निर्वर्त्य कृत्वेति यावत् । अरुणोदयवेलायाम् ' सूरसूतो रुणोनूरुः' इत्यमरोक्तेः अरुणः सूर्यसारथिस्तस्य उदयः सूर्योदयाद्घटिकाद्वयात्पूर्वं तस्मिन् काले स्नानं समाचरेत् कुर्यात् ॥ २३ ॥ नित्यं कर्म संध्याद्यं संक्षेपतः संक्षेपात् कृत्वा संप्रयत्नतः सम्यक्प्रयत्नात् गणनाथं श्रीगणेशं प्रपूजयेत् । किमर्थम्—कथाविघ्नविघाताय कथायां विघ्नाः चंडवाताद्युपद्रवरूपास्तेषां विघाताय विनाशार्थम् ॥२४ ॥ पितॄन्संतर्प्य पितॄणां तर्पणं कृत्वा शुद्ध्यर्थं शरीरपावनाय प्रायश्चित्तं समाचरेत् । मंडलं च विधेयमित्याह—मंडलमिति । मंडपमध्ये मंडलं च सर्वतोभद्राख्यं प्रकर्त्तव्यम् । तथा तेन प्रकारेण तत्र मंडलमध्ये हरिः स्थाप्यः ॥ २५ ॥

वाचयितृकृत्यमाह—कृष्णमितिद्वाभ्याम् । कृष्णमुद्दिश्य लक्षीकृत्य मंत्रेण तस्यैव मंत्रेण पूजाविधिं क्रमात् चरेत् कुर्यात् । " सहस्रशीर्षा " इति षोडशर्ग्भिर्वा पूजनम् । तथा प्रदक्षिणानमस्कारानाचरेत् । पूजांते पूजाया अंते स्तुतिम् आचरेत् ॥ २६ ॥ स्तुतिमंत्रमाह—संसारसमुद्रे मग्नं ब्रुडितं, कर्मग्राहगृहीतांगं कर्माण्येव ग्राहास्तैः गृहीतान्यंगानि यस्य स तथा तं दीनं मां हे करुणानिधे त्वं भवार्णवात् संसाराब्धेः उद्धर पृथक् कुरु, ऊर्ध्वं नयेति वा, मोक्षं संपादयेति यावत् ॥ २७ ॥ ततः शास्त्रपूजा कार्येत्याह—श्रीमदिति । ततस्तदनंतरं श्रीमद्भागवतस्य शास्त्रस्यापि प्रयत्नतो विधिना विधानतः प्रीत्या भक्तिभावेन धूपेन दीपेन च संयुक्ता पूजा प्रकर्त्तव्या ॥ २८ ॥ ततः किं कर्त्तव्यमित्यत आह—तत इति । ततः पूजानंतरं श्रीफलं धृत्वा समर्प्य नमस्कारं समाचरेत् कुर्यात् । तदा तस्मिन्काले प्रसन्नचित्तेन हृष्टेन मनसा केवलं स्तुतिः कर्त्तव्या ॥ २९ ॥ तन्मंत्रमाह—श्रीमदिति द्वाभ्याम् । श्रीमद्भागवतम् आख्या नाम यस्य स तथा अयं ग्रंथः प्रत्यक्षः सांप्रतं मूर्त्तिमान् कृष्ण एव । हे नाथ मया भवसागरे संसारसमुद्रात्,

कृष्णमुद्दिश्य मन्त्रेण चरेत्पूजाविधिं क्रमात् ॥ प्रदक्षिणानमस्कारान्पूजान्ते स्तुतिमाचरेत् ॥ २६ ॥ संसारसागरे मग्नं दीनं त्वं[1] करुणानिधे ॥ कर्मग्राहगृहीताङ्गं मामुद्धर भवार्णवात् ॥ २७ ॥ श्रीमद्भागवतस्यापि ततः पूजा प्रयत्नतः ॥ कर्तव्या विधिना प्रीत्या धूपदीपसमन्विता ॥ २८ ॥ ततस्तु श्रीफलं धृत्वा नमस्कारं समाचरेत् ॥ स्तुतिः प्रसन्नचित्तेन कर्तव्या केवलं तदा ॥ २९ ॥ श्रीमद्भागवताख्योऽयं प्रत्यक्षः कृष्ण एव हि ॥ स्वीकृतोऽसि मया नाथ मुक्त्यर्थं भवसागरे॥३०॥मनोरथो मदीयोऽयं सफलः सर्वथा त्वया ॥ निर्विघ्नेनैव कर्तव्यो दासोऽहं तव केशव ॥३१॥ एवं दीनवचः प्रोक्त्वा वक्तारं चाथ पूजयेत्॥संभूष्य वस्त्रभूषाभिः पूजान्ते तं च संस्तुयात्॥३२॥शुकरूप प्रबोधज्ञ सर्वशास्त्रविशारद॥एतत्कथाप्रकाशेन मदज्ञानं विनाशय३३॥

पञ्चम्यर्थे षष्ठीयम् । मुक्त्यर्थं मुक्तये स्वीकृतोसि ॥ ३० ॥ हे केशव तवाहं दासोस्मि, अतोयं मदीयो मनोरथः त्वया सर्वथा, सर्वप्रकारेण निर्विघ्नेन सुखेनैव सफलः कर्त्तव्यः ॥ ३१ ॥ ततो वक्तृपूजनधनादिदानसंतुष्टिस्तवनं च कार्यमित्याह—एवमिति । एवमुक्तप्रकारेण दीनवचः दीनवत् वचः प्रोक्त्वा प्रोच्य । प्रोच्येत्यपहाय प्रोक्त्वेति पदन्यासो वैदिकत्वसूचनार्थः । तदुक्तम्—" पुराणं मानवो धर्मः सांगो वेदश्चिकित्सितम् । आज्ञासिद्धानि चत्वारि न हंतव्यानि हेतुभिः ॥ " इति । अथानंतरं वक्तारं पूजयेत् । वस्त्रभूषाभिः वस्त्रालंकारादिभिः संभूष्य अलंकृत्य पूजांते तं वक्तारं संस्तुयात् संस्तुवीत ॥ ३२ ॥ तन्मंत्रमाह—शुकेति । हे शुकरूप शुकमूर्त्ते, हे प्रबोधज्ञ प्रबोधनचतुर, हे सर्वशास्त्रविशारद सर्वशास्त्रनिपुण एतत्कथाप्रकाशेन एषा चासौ कथा च एतत्कथा तस्याः प्रकाशेन उद्दीपनेन मदज्ञानं मम अज्ञानं विनाशय । अन्यत्र

१ ' माम् ' इति पाठान्तरे द्विरुक्तिर्दुष्परिहरा ।

वक्ता हरिरेवेत्युक्तम् । तद्रूपेण स्तुतिवाक्यं सूतसंहितायाम् । तथाहि—" पुराणसंहितावक्ता हरिरित्यभिधीयते । यो वदेत्सततं भक्त्या पुराणानि द्विजोत्तमः । आत्मार्थं वा परार्थं वा स हरिर्नात्र संशयः ॥ पुराणश्रवणे भक्तिर्गंगास्नानसमा स्मृता । तद्वक्तरि च या भक्तिः सा प्रयागोपमा स्मृता ॥" इति ॥ ३३ ॥ वक्तुरग्रे नियमः कर्त्तव्य इत्याह—तदिति । पश्चात् तदनन्तरं तदग्रे तस्य वक्तुरग्रे पुरतः मुदा हर्षेण श्रेयसे कल्याणार्थं नियमः कर्त्तव्यः । स एव नियमः सप्तरात्रं यावत् यथाशक्त्या शक्त्यनुसारेण धारणीयः धार्यः । एव हीति गृहीतनियमस्य मध्येऽहेयतां सूचयतः ॥ ३४ ॥ ब्राह्मणवरणमपि कार्यमित्याह—वरणमिति । पंचविप्राणां वरणं कर्त्तव्यम् । किमर्थम्—कथाभंगनिवृत्तये कथाया भंगो रोगाद्युपद्रवजन्यो नाशस्तस्य निवृत्तये निरासाय । तैः किं कार्यं, तदाह-तैर्हरेर्जाप्यः कार्यः । कया—द्वादशाक्षरविद्यया द्वादशाक्षरमंत्रेण । तत्प्रकारो गुरुभिः प्रदर्शितः । यथा—"नमः पूर्वं प्रकर्त्तव्यं पश्चाद्भगवते ननु । ततः श्रीऋषिभिः प्रोक्तं कृष्णचंद्राय खल्वतः ॥ एष श्रीकृष्णदेवस्य द्वादशाक्षरसंज्ञकः । मंत्रो जप्यो मया प्रोक्तो विश्वस्योद्धरणे क्षमः ॥ द्वादशाक्षरमंत्रस्य ऋषिः प्रोक्तश्च नारदः । छंदोनुष्टुप् च विज्ञेयं कृष्णो वै देवता स्मृतः ॥ भगवानिति बीजं

**तदग्रे नियमः पश्चात्कर्तव्यः श्रेयसे मुदा ॥ सप्तरात्रं यथाशक्त्या[1] धारणीयः स एव हि ॥ ३४ ॥ वरणं पञ्चविप्राणां कथाभंगनिवृत्तये ॥ कर्तव्यं तैर्हरेर्जाप्यो द्वादशाक्षरविद्यया ॥ ३५ ॥ ब्राह्मणान्वैष्णवांश्चान्यांस्तथा कीर्तनकारिणः ॥ नत्वा संपूज्य दत्ताज्ञः स्वयमासनमाविशेत् ॥ ३६ ॥ लोकवित्तधनागारपुत्रचिन्तां व्युदस्य च ॥ कथाचित्तः शुद्धमतिः स लभेत्फलमुत्तमम् ॥ ३७ ॥**

च शक्तिश्च श्रीरुदाहृता । कीलकं चर्षिभिः प्रोक्तं चंद्रायेति न संशयः ॥ प्राणायामत्रयं कुर्यान्मंत्रेणानेन सर्वदा । अंगन्यासादिकं कुर्याद्ध्यायेच्छ्रीकृष्णमच्युतम् ॥ कृष्णं भास्वत्किरीटांगदवलयकलाकल्पहारोदरांघ्रिं शोणीभूतं स्ववक्षोमणिमकरमहाकुंडलामंडितास्यम् । हस्तोद्यच्छङ्खचक्रांबुजगदममलं पीतकौशेयवासं विद्युद्भासं समुद्यद्दिनकरसदृशं पद्मसंस्थं नमामि ॥ एवं ध्यात्वा च देवेशं जपेन्मंत्रमुदारधीः ।" इति जपविधिः ॥ ३५ ॥ पूजनपूर्वकमन्यानपि अनुज्ञाप्य श्रोतोपविशतीत्याह—ब्राह्मणानिति । ब्राह्मणान् प्रसिद्धान् वैष्णवान् विष्णुसेवकान्, तथा तेनैव प्रकारेण कीर्त्तनकारिणः हरिचरितगायकानन्यांश्च संपूज्य समर्च्य नत्वा प्रणम्य तैर्दत्ताज्ञः दत्ता आज्ञा यस्मै स तथा स्वयं श्रोता आसनमाविशेत् आसनोपरि तिष्ठेत् ॥ ३६॥ फलप्राप्तिहेतुमाह—लोकेति । लोकाः सुहृज्जनाः, वित्तं मणिसुवर्णादिकं, धनं पश्वादिरूपम्, अगारो गृहं, पुत्रो वंशकरस्तेषां चिंता चिंतनं तां व्युदस्य दूरीकृत्य, त्यक्त्वेति यावत् । कथाचित्तः कथायां चित्तं यस्य स तथा, शुद्धमतिः शुद्धा रागाद्यकलुषीकृता पवित्रा वा मतिर्बुद्धिर्यस्य स



१ यथाशक्तीति तु शोभनः पाठः ।

तथा एवंभूतो यःस्यात, यत्तदोर्नित्यसंबंधात् स श्रोता उत्तमं फलं लभेत्प्राप्नुयात् ॥ ३७॥ कालनियममाह—आसूर्येति। आशब्दस्ताराानिवृत्त्यर्थः। सूर्योदयं रवेराविर्भावमारभ्य सार्द्धम् अर्द्धेन सहितं त्रिप्रहरांतकं त्रयाणां प्रहराणामंतकमवसानपर्य्यंतं कथा सम्यक्प्रकारेण वाचनीया वाच्या। धीरकंठं यथा स्यात्तथा सुधीमता। एकपदे तु धीरः स्वरविशेषः कंठे यस्य स तथा, स चासौ सुधीमांश्च तथा तेनैवेति व्याख्यानम्। तदुक्तं वाचनिकायाम्—"उच्चस्वरो विघ्नकरः कथायां दुःखस्य हेतुः पुनरेव वक्तुः। नीचस्वरः श्रोत्रनुरंजने न स्वस्यैव वा मानधनापहारी ॥ धीरस्य पर्य्यायतया स्वरेण सांद्रेण प्रोक्ता च कथा सुखाय।" इति ॥ ३८ ॥ मध्याह्ने मुहूर्त्तं विश्रमणीयमित्याह—कथेति। मध्याह्ने दिनार्द्धे घटिकाद्वयं मुहूर्त्तं यावत्कथाविरामः कथोपरतिर्यदा कर्त्तव्यः तत्कथामनु सा चासौ कथा च तत्कथा तामनु तस्याः पश्चात् तदा तस्मिन्काले वैष्णवैर्भक्तैः कीर्त्तनं हरिलीलागायनं कार्यम् ॥ ३९ ॥ श्रोतॄणां भोजनादिनियममाह—मलेति। मलं विष्ठा 'पुरीषं च मलं विष्ठा' इत्यागमात्। मूत्रं पीतजलपरिणामजं, तयोर्जयार्थं वशीकरणाय

आसूर्योदयमारभ्य सार्धत्रिप्रहरान्तिकम् ॥ वाचनीया कथा सम्यग्धीरकण्ठं सुधीमता ॥ ३८ ॥ कथाविरामः कर्तव्यो मध्याह्ने घटिकाद्वयम् ॥ तत्कथामनु कार्यं वै कीर्तनं वैष्णवैस्तदा ॥ ३९ ॥ मलमूत्रजयार्थं हि लघ्वाहारः सुखावहः ॥ हविष्यान्नेन कर्तव्यो ह्येकवारं कथार्थिना ॥ ४० ॥ उपोष्य सप्तरात्रं वै शक्तिश्चेच्छृणुयात्तदा ॥ घृतपानं पयःपानं कृत्वा वै शृणुयात्सुखम् ॥ ४१ ॥ फलाहारेण वा श्राव्यमेकभुक्तेन वा पुनः ॥ सुखसाध्यं भवेद्यत्तु कर्तव्यं श्रवणाय तत् ॥ ४२ ॥ भोजनं तु वरं मन्ये कथाश्रवणकारकम् ॥ नोपवासो वरः प्रोक्तः कथाविघ्नकरो यदि ॥ ४३ ॥ सप्ताहव्रतिनां पुंसां नियमाञ्छृणु नारद ॥ विष्णुदीक्षाविहीनानां नाधिकारः कथाश्रवे ॥ ४४ ॥

लघ्वाहारोऽल्पं भोजनं सुखावहः सुखप्रापकः। कथाम् अर्थितुं प्रार्थयितुं शीलं यस्य स तथा तेन श्रोत्रा हविष्यान्नेन तंडुलश्यामाकादिना एकवारं यथा स्यात्तथा आहारः कर्त्तव्यः ॥ ४० ॥ शक्तिविशेषे भुक्तविशेषमाह—उपोष्येति। चेत् यदा शक्तिः स्यात्तदा सप्तरात्रमुपोष्य उपवासं कृत्वा शृणुयात, घृतस्य पानं कृत्वा, पयसो दुग्धस्य वा पानं कृत्वा सुखं यथा स्यात्तथा शृणुयात्। वै निश्चयेन ॥ ४१ ॥ किंच—फलाहारेण फलभक्षणेन श्राव्यं श्रोतुं योग्यं, पुनरेकभक्तेन सकृद्भोजनेन वा। यत्तु भोजनं सुखसाध्यं भवेत् तच्छ्रवणाय श्रवणार्थं कर्त्तव्यम् ॥ ४२ ॥ उपवासाद्वरा भुक्तिरित्याह—भोजनमिति। सूतोक्तिरियमिति केचित्। वस्तुतस्तु—सनकाद्यन्यतमोक्तिः, पूर्वोक्तव्यवस्थायां प्रवचन एकस्यैवाधिकारात्। यतः कथाश्रवणकारकं कथायाः श्रवणं कथाश्रवणं तस्य कारकं कारणमतो भोजनमेव वरं श्रेष्ठमहं मन्ये। यदि कथाविघ्नकरः कथायां विघ्नहेतुस्तदोपवासो वरः श्रेष्ठो न प्रोक्तः ॥ ४३ ॥ सप्ताहव्रतिनां नियमानाह—सप्ताहेति द्वाभ्याम्। हे नारद सप्ताहं व्रतमस्ति येषामिति सप्ताहव्रतिनस्तेषां पुंसां नियमान् शृणु। विष्णोर्या दीक्षा तया विहीना

राहेता विष्णुदीक्षाविहीनास्तेषां कथाश्रवे कथायाः श्रवणे नाधिकारः अधिकारो नास्ति ॥ ४४ ॥ कथाव्रती पुमान् ब्रह्मचर्यं स्त्रीसंसर्गायनाचरणम् अधःसुप्तिं भूमौ शय्यां च पुनः पत्रावल्यां भोजनम् । तत्रापि तुशब्दो विशेषं सूचयति ॥ ४५ ॥ वर्जनीयान्याह—द्विदलमिति सप्तभिः । द्विदलं चणकादि । तदुक्तम्—"माषमुद्गमसूराश्च चणकाश्च कुलित्थकाः । निष्पावा राजमाषाश्च आढक्यो द्विदलं स्मृतम् ॥ " । अन्यच्च—"नूतनान्यपि जीर्णानि सर्वाण्येतानि वर्जयेत्" इति स्कांदे । अन्यच्च—"शिलायां भिद्यमानस्य द्विदलं जायते यदि । तदेव द्विदलं धान्यं व्रतादौ च विवर्जयेत् ॥ " इति । मधु क्षौद्रं, तैलं तिलादीनाम्, गरिष्ठान्नं तैलगुडमिश्रितमन्नम्, भावदुष्टं मनसा दूषितम्, पर्युषितं पूर्वेद्युः पाचितं कथाव्रती नित्यं जह्यात् त्यजेत् ॥४६॥ वृंताकम् "वार्त्ताकी हिंगुली सिंही भंटाकी दुष्प्रधर्षिणी " इति कोशोक्तं (भांटा) इति प्रसिद्धम् । कलंजं लंबायमानफलविशेष इति केचित्—" विषलिप्तेन बाणेन यौ हतौ मृगपक्षिणौ । तौ कलंजाविति ख्यातौ तद्भक्षे चैंदवं व्रतम् ॥ " इति गुरवः । दग्धमन्नमग्निना ज्वलितमन्नम्, मसूरिका प्रसिद्धा । निष्पावः—"निष्पावः शूकशिंबिः स्याद्वलकः श्वेतशिंबिकः" इति भावप्रकाशोक्तः । भाषायाम् 'शाम्मचुला', तदादि । आमिषं मांसं चेति ।

ब्रह्मचर्यमधःसुप्तिः पत्रावल्यां च भोजनम् ॥ कथासमाप्तौ भुक्तिं च कुर्यान्नित्यं कथाव्रती ॥ ४५ ॥ द्विदलं मधु तैलं च गरिष्ठान्नं तथैव च ॥ भावदुष्टं पर्युषितं जह्यान्नित्यं कथाव्रती ॥ ४६ ॥ वृंताकं च कलंजं च दग्धमन्नं मसूरिका ॥ निष्पावाद्यामिषं चैव वर्जयेद्यः कथाव्रती ॥ ४७ ॥ पलांडुं लशुनं हिंगुं मूलकं गृंजनं तथा ॥ नालिकामूलकूष्मांडं नैवाद्याद्यः कथाव्रती ॥ ४८ ॥ द्विपाचितं सूतकान्नं भूमिजं लवणं तथा ॥ मत्स्यमांसमजादुग्धं पल्वलोदं च वर्जयेत् ॥ ४९ ॥

शेषं पूर्ववत ॥४७॥ 'पलांडुस्तु सुकंदकः' इत्यमरोक्तेः । लशुनम्—"लशुनस्तु रसोनः स्यादुग्रगंधो महौषधम्" इति भावप्रकाशे । हिंगु रामठम् । मूलकम्—"मूलकं द्विविधं प्रोक्तं तत्रैकं लघुमूलकम् । शालामर्कटकं विस्रं शालेयं मरुसंभवे ॥ चाणक्यमूलकं तीक्ष्णं तथा मूलकपोतिका । नैपालमलकं चान्यद्भवेत्कुंजरदंतवत् ॥" इति । तत्रैव—"मंगल्यश्च मसूरः स्यान्मंगल्या च मसूरिका" इति । गृंजनम्—"गाजरं गृंजनं प्रोक्तं तथा नारिंगवर्णकम्" इति । तथा नालिका—"नालिका कालशाकं च श्राद्धशाकं च कालकम्" इति । मूलं रक्तकंदविशेषः । कूष्मांडम्—"कूष्मांडः स्यात्पुष्पफलं पीतपुष्पबृहत्फलम्" तत्र समाहारैकत्वम्, तद्वर्जयेद् ॥ ४८ ॥ द्विवारं पाचितम् । यस्य सूतकं भवेत्तस्यान्नम् । तथा तेनैव प्रकारेण भूमिजं लवणम् । मत्स्यं मांसम् अजायाश्छाग्या दुग्धम् च पुनः पल्वलोऽल्पजलाशयस्तस्य उदकं वर्जयेत् । "तद्भक्षणे तु दोषः स्याद्ब्रह्महत्या न स्मरेद्धरिम् । पटोले तु न वृद्धिः स्याद्दलहानिश्च मूलके ॥ कलंकी जायते बिल्वे तिर्यग्योनिश्च निंबके । कांस्ये शरीरनाशः स्यान्नालिकायां तु

मूर्खता ॥ तुंबी गोमांसतुल्या स्याद्गोवधः स्यात्कलिंजके । शिंबिः पापकरा प्रोक्ता पूतिका ब्रह्मघातिका ॥ वृंताके सुतनाशः स्याच्चिररोगी तु मांसके ।" इति । अनुक्तानां चशब्देन ग्रहणात्तदनुक्तिर्न दोषायेति भावः ॥ ४९ ॥ काममभिलाषम् । क्रोधं रजोगुणेन मनःक्षोभम्, इष्टविघातजं वा । मदं गर्वम् । मानमहंकारम्, सर्वोत्तमत्वं वा । मत्सरं परोत्कर्षासहनम् । लोभं बहुधनापेक्षत्वम् । दंभं लोकानुरंजनाय कर्मानुष्ठानम् । तथा तेनैव प्रकारेण मोहं ममतारूपम् । च पुनः कथाव्रती द्वेषं विरोधं दूरयेत् त्यजेत् । एव चेति–स्पष्टमित्यर्थः ॥ ५० ॥ वेदवैष्णवविप्राणां वेदा ऋगाद्याः, वैष्णवा नारदाद्या भक्ताः, विप्रा ब्राह्मणास्तेषाम् । तथा गुरुगोव्रतिनां गुरुर्हितोपदेष्टा, गौः प्रसिद्धा, तयोर्व्रतमस्त्येषामिति तथा तेषाम् । स्त्रीराजमहतां स्त्री पतिव्रता नारी, राजा देशपतिः, महान् पूज्यः योगतपःप्रभावतोऽर्च्चनीयस्तेषां निंदां यः कथाव्रती स वर्जयेत् ॥ ५१ ॥ रजस्वलां रजोयुक्तां स्त्रीं त्यजेत्, तथा म्लेच्छपतितव्रातकैः म्लेच्छाः चांडालादयः, पतिता गोब्रह्मघ्नादयः, व्रातकाः संस्कारहीनास्तैः सह, द्विजद्विट् ब्राह्मण

कामं क्रोधं मदं मानं मत्सरं लोभमेव च ॥ दम्भं मोहं तथा द्वेषं दूरयेच्च कथाव्रती ॥ ५० ॥ वेदवैष्णवविप्राणां गुरुगोव्रतिनां तथा ॥ स्त्रीराजमहतां निन्दां वर्जयेद्यः कथाव्रती ॥ ५१ ॥ रजस्वलान्त्यजम्लेच्छपतितव्रातकैस्तथा ॥ द्विजद्विड्वेदबाह्यैश्च न वदेद्यः कथाव्रती ॥ ५२ ॥ सत्यं शौचं दयामौनमार्जवं विनयं तथा ॥ उदारमानसं तद्वदेवं कुर्यात्कथाव्रती ॥ ५३ ॥ दरिद्रश्च क्षयी रोगी निर्भाग्यः पापकर्मवान् ॥ अनपत्यो मोक्षकामः शृणुयाच्च कथामिमाम् ॥ ५४ ॥ अपुष्पा काकबन्ध्या च बन्ध्या या च मृतार्भका ॥ स्रवद्गर्भा च या नारी तया श्राव्या प्रयत्नतः ॥ ५५ ॥

द्वेषी, वेदबाह्या जैना लोकायतिका वा नास्तिकास्तैः सार्द्धमपि यः कथाव्रती स न वदेत् संभाषणं न कुर्यात् ॥ ५२ ॥ पुनर्नियमानाह–सत्यमिति । कथाव्रती सत्यं कुर्यात् धातोरनेकार्थत्वात् वदेत् । शौचं शुद्धिम् । दयां दीनेषु । मौनं मितभाषणम् । आर्जवम् ऋजोर्भावं सरलताम् । तथा विनयं नम्रताम् । तद्वत्तथैव उदारमानसं चित्तमुदारं कुर्यात् । एवमिति शुभगुणग्रहणं सूचयति ॥ ५३ ॥ यैरवश्यं कथा श्रोतव्या तान्निर्दिशति–दरिद्र इति । दरिद्रो मंदभाग्यः । च पुनः क्षयी क्षयरोगी । निर्भाग्यः भाग्यहीनः । पापकर्मवान् पापिष्ठः । अनपत्यः संतानहीनः । मोक्षकामः मोक्षार्थी च इमां कथां शृणुयात् ॥ ५४ ॥ याभिः स्त्रीभिः श्रोतव्या ता आह–अपुष्पेति । अपुष्पा अरजस्का । काकबंध्या सकृत्प्रसूता । च पुनः बंध्या सामान्यपुत्राभाववती । या च मृतार्भका मृताऽपत्या । च पुनः स्रवद्गर्भा गलितगर्भा या नारी स्त्री तया प्रयत्नतोऽतिय

त्नात् श्राव्या श्रोतुं योग्या । इयं कथेति शेषः ॥ ५५ ॥ विधानतः श्रावे फलं स्यादित्याह—एतेनेति । एतेनोक्तेन विधिना श्रावे श्रवणे कृते सति तच्छ्रवणमक्षय्यतरम् अनंतं भवेत् । इयं कथा दिव्या ईश्वरप्रणीतत्वादत्युत्तमा सर्वतीर्थयज्ञादेः श्रेष्ठा । तत्र हेतुः—कोटियज्ञफलप्रदा कोटियज्ञानां फलं प्रददातीति तथा ॥ ५६ ॥ उद्यापनमं तरा संपादितव्रतस्य फलमपूर्णमतस्तदुद्यापनं कर्त्तव्यमित्याह—एवमिति । एवममुना प्रकारेण व्रतविधिं व्रतस्य विधानमादौ कृत्वाऽथानंतरं पश्चादुद्यापनमाचरेत्कुर्यात् । किमिव—जन्माष्टमीव्रतमिव फलेप्सुभिः कर्त्तव्यम् ॥ ५७ ॥ गृहस्थविषयोऽयं विधिः, न तु विरक्तविषय इत्याह—अकिंचनेष्विति । न किंचन वस्तुमात्रं येषां तेऽकिंचनास्तेषु निष्परिग्रहेषु भक्तेषु हरिजनेषु उद्यापनस्याऽग्रहः प्रायो बाहुल्येन नास्ति । तत्र हेतुः—यतो वैष्णवा निष्कामास्ततस्ते श्रवणेनैव पूताः शुद्धाः ॥ ५८ ॥ समाप्तौ कर्त्तव्य माह—एवमिति । एवमित्थम् अस्मिन्नगाहयज्ञे सप्ताहयज्ञे समाप्ते पूर्णे सति तदा श्रोतृभिः पुस्तकस्य शास्त्रस्य वक्तुर्वाचकस्य च अतिप्रेम्णा पूजा कार्या । तदुक्तं पाद्मे—"समा

एतेन विधिना श्रावे तदक्षय्यतरं भवेत् ॥ अत्युत्तमा कथा दिव्या कोटियज्ञफलप्रदा ॥ ५६ ॥ एवं कृत्वा व्रतविधिमुद्यापनमथाचरेत् ॥ जन्माष्टमी व्रतमिव कर्तव्यं फलकाङ्क्षिभिः ॥ ५७ ॥ अकिंचनेषु भक्तेषु प्रायो नोद्यापनाग्रहः ॥ श्रवणेनैव पूतास्ते निष्कामा वैष्णवा यतः ॥ ५८ ॥ एवं नगाहयज्ञेऽस्मिन्समाप्ते श्रोतृभिस्तदा ॥ पुस्तकस्य च वक्तुश्च पूजा कार्यातिभक्तितः ॥ ५९ ॥ प्रसादतुलसीमालाः श्रोतृभ्यश्चाथ दीयताम् ॥ मृदङ्गतालललितं कर्तव्यं कीर्तनं ततः ॥ ६० ॥ जयशब्दान्नमःशब्दाञ्छङ्खशब्दांश्च कारयेत् ॥ विप्रेभ्यो याचकेभ्यश्च वित्तमन्नं च दीयताम् ॥ ६१ ॥

प्तेषु पुराणेषु शक्त्या तं तर्पयेन्नृप । वाचकः पूजितो येन प्रसन्नास्तस्य देवताः ॥ गोभूहिरण्यरजतं वासांसि विविधानि च । दीयते वाचकायैव यदीच्छेत्सफलं श्रुतम् ॥ वाचके पूजिते चैव विष्णुर्भवति पूजितः। नारायणादिदेवाश्च वाचके निवसंति वै॥ यो व्यासरूपी कृष्णाग्रे कथां वै वाचयेत् सुधीः।सर्वसौख्यमिह प्राप्य सोंते विष्णुपुरीं व्रजेत्॥ दर्शनात्पूजनात्स्पर्शान्नमस्करात्स्तवादपि । अश्वमेधसहस्रस्य फलं तेषां न दुर्लभम् ॥ तस्मिन्नित्यं पूजिते हि हरिः पूज्यो हि वाचके ॥ श्राद्धे यस्य द्विजो भुंक्ते वाचकः श्रद्ध यार्चितः । भवंति पितरस्तस्य तृप्ता वर्षशतं नृप॥" इति ॥ ५९ ॥ ततः कर्त्तव्यमाह—प्रसादेति द्वाभ्याम् । प्रसादो मोदकादिः । तुलसी प्रसिद्धा । माला पुष्पादिस्रक् एताः श्रोतृभ्योऽथ दीयतां दीयन्तामित्यर्थः । एकत्वमार्षम् । ततस्तदनंतरं मृदंगतालललितं मृदंगेन तालेन ललितं मनोहरं कीर्त्तनं कर्त्तव्यम् ॥ ६० ॥ जयशब्दान् जयेति वचनानि । नमः शब्दान् नमस्कारान् । च पुनः शंखशब्दान् शंखनादान् कारयेत् । विप्रेभ्यः च पुनः याचकेभ्यः भिक्षार्थिभ्यः वित्तं धनम् अन्नं च दीयताम् ॥ ६१ ॥

निष्कामसकामपरत्वेन समाप्तौ विशेषमाह—विरक्त इति । चेद्यदि विरक्तः कलत्राद्यसंसर्गी श्रोता भवेत्तदाऽपरेऽहनि अष्टमदिवसे गीता वाच्या वाचनीया । गृहस्थश्चेत्तर्हि कर्मशांतये कर्मणः शांत्यर्थं होमः कर्त्तव्यः ॥ ६२ ॥ तद्विधिमाह—प्रतिश्लोकमिति । प्रतिश्लोकंश्लोकं श्लोकं प्रति दशमस्य स्कंधस्य विधिना विधानतो जुहुयात् । विधानं तंत्र उक्तम् । यथा—"ब्रह्मस्तुतिं समुच्चार्य पूर्वार्द्धहवनं चरेत् । वेदस्तुतिं पठित्वादावुत्तरार्द्धाहुतिं चरेत् ॥ प्रत्यध्यायं समाप्तौ च मंत्राष्टकमुदीरयेत् ।" इति । ॐ विष्णवे नमः । ॐ नारायणाय नमः । ॐ ब्रह्मणे नमः । ॐ शिवाय नमः । ॐ वासुदेवाय नमः । ॐ प्रद्युम्नाय नमः । ॐ अनिरुद्धाय नमः । ॐ संकर्षणाय नमः । इत्यष्टाहुतयो देयाः । पायसं पयसि श्रृतं तंडुलम् । मधु क्षौद्रम् । सर्पिर्गोघृतम् । च पुनः तिलान्नादिकसंयुतं तिलाः कृष्णतिलाः, अन्नं यवादिः आदिना शर्करादिग्रहः, तैः संयुतं जुहुयात् ॥ ६३ ॥ प्रकारांतरमाह—अथवा यद्वा सुसमाहित एकाग्रचित्तः सन् गायत्र्या गायत्रीमंत्रेण हवनं कुर्यात् । तत्र हेतुः—परमस्योत्कृष्टस्य पुराणस्य श्रीमद्भागवताख्यस्य तत्त्वतः तन्मयत्वात् गायत्रीस्वरूपत्वात् ॥ ६४ ॥ अशक्तश्चेत्थं कुर्यादित्याह—

विरक्तश्चेद्भवेच्छ्रोता गीता वाच्या परेऽहनि ॥ गृहस्थश्चेत्तदा होमः कर्तव्यः कर्मशांतये ॥ ६२ ॥ प्रतिश्लोकं च जुहुयाद्विधिना दशमस्य च ॥
पायसं मधु सर्पिश्च तिलान्नादिकसंयुतम् ॥ ६३ ॥ अथवा हवनं कुर्याद्गायत्र्या सुसमाहितः ॥ तन्मयत्वात्पुराणस्य परमस्य च तत्त्वतः ॥ ६४ ॥
होमाशक्तौ बुधो हौम्यं दद्यात्तत्फलसिद्धये ॥ नानाछिद्रनिरोधार्थं न्यूनताधिकताख्ययोः ॥ ६५ ॥ दोषयोः प्रशमार्थं च पठेन्नामसहस्रकम् ॥ तेन
स्यात्सफलं सर्वं नास्त्यस्मादधिकं यतः ॥ ६६ ॥

होमेति । होमाशक्तौ होमे अशक्तिरसामर्थ्यं तस्यां सत्यां बुधो विवेकी हौम्यं होमाय योग्यं द्रव्यं तत्फलसिद्धये होमफलनिष्पत्त्यर्थं दद्यात् । नानाछिद्राणि नानांतरायाः विघ्नरूपाः तेषां निरोधार्थं निरोधाय न्यूनताधिकताख्ययोः न्यूनता लिखितार्थस्य अपूर्णता, अधिकता मूलवचनप्रसङ्गादधिकान्यप्रसंगकथनं, ते आख्ये ययोरित्युत्तरश्लोकेनान्वेतव्यम् । हौम्यद्रव्याणि आश्वलायनसूत्रभाष्य उक्तानि । यथा—"पयो दधि यवागूश्च सर्पिरोदनतंदुलाः । सोमो मांसं तथा तैलमापो हौम्यं प्रकीर्त्तितम् ॥" इति । "कलौ निषेधान्मांसस्य तत्र देयं तु तद्विधम् । लवणं पयसा युक्तं मांसमित्युच्यते बुधैः ॥ पृथक् पृथक् तु तद्धान्यमाहिष्यं माषसंयुतम् ॥" इति । वस्तुतस्तु श्लोकोत्तरार्द्धे "तैलमापश्च सोमश्च व्रीहयश्च यवास्तिलाः" इति पाठो युक्तः । हरिनामतः सर्वं संपूर्णं स्यादित्याह—दोषयोरिति । न्यूनताधिकताख्ययोर्दोषयोः प्रशमार्थं निवृत्त्यर्थं च पुनः नामसहस्रकं विष्णोः सहस्रं नामानि पठेत् । तेन नामसहस्रपठनेन सर्वं सफलं स्यात् । अस्मात् हरिनाम्नः अधिकमन्ययतो यस्मात्कारणान्नास्ति । तदुक्तम्—"यस्य

स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतम् ॥” इतिवचनात् ॥६५॥६६॥ होमांते ब्राह्मणभोजनं कर्त्तव्यमित्याह—द्वादश इति । पश्चात् होमानंतरं द्वादश रविसंख्याकान्ब्राह्मणान् मधुपायसैः मिष्टान्नादिभिर्भोजयेत् । व्रतपूर्णत्वहेतवे व्रतस्य समाप्त्यर्थं सुवर्णं कांचनं, धेनुं पयस्विनीं, चात्सवत्सां दद्यात ॥ ॥ ६७ ॥ अतिधनाढ्ये श्रीमति च श्रोतरि कर्त्तव्यविशेषमाह—शक्ताविति चतुर्भिः । शक्तौ सामर्थ्ये सति पलत्रयमितम् ‘ स्वर्णं षोडशमाषकम् ’ इत्युक्त्या स्वर्णशब्दः षोडशमाषसंख्यावाचकः, ‘पलं सुवर्णाश्चत्वारः’ इति चतुष्षष्टिमाषात्मकं पलमित्युच्यते । तस्य त्रयं द्विनंदचंद्रमाषात्मकम् । तन्मितं तत्प्रमाणं सिंहं सिंहासनं सिंहस्य प्राधान्यात्तन्निर्देशः। तदुक्तम्—“विजयो जयदो जेता रिपुहंता शुभंकरः । दुःखहा धर्मदः शांतः सर्वारिष्टविनाशकः ॥ एते वै सिंगधौ यस्मात्तत्र सिंहा महाबलाः । तेन सिंहासनेति त्वं वेदैर्मंत्रैश्च गीयसे ॥ त्वयि स्थितः शिवः शांतस्त्वयि सिंह सुरेश्वरः। त्वयि स्थितो हरिर्देवस्त्वदर्थं तप्यते तपः॥ नमस्ते सर्वदो भद्र भद्रदो भव भूपतेः। त्रैलोक्यजयसर्वस्व सिंहासन

द्वादश ब्राह्मणान्पश्चाद्भोजयेन्मधुपायसैः ॥ दद्यात्सुवर्णं धेनुं च व्रतपूर्णत्वहेतवे ॥ ६७॥ शक्तौ पलत्रयमितं स्वर्णसिंहं विधाय च ॥ तत्रास्य पुस्तकं स्थाप्यं लिखितं ललिताक्षरम् ॥ ६८ ॥ संपूज्यावाहनाद्यैस्तदुपचारैः सदक्षिणम् ॥ वस्त्रभूषणगन्धाद्यैः पूजिताय यतात्मने ॥ ६९ ॥ आचार्याय सुधीर्दत्त्वा मुक्तः स्याद्भवबन्धनैः ॥ एवं कृते विधाने च सर्वपापनिवारणे ॥ ७० ॥ फलदं स्यात्पुराणं तु श्रीमद्भागवतं शुभम् ॥ धर्मार्थकाममोक्षाणां साधनं स्यान्न संशयः ॥ ७१ ॥ कुमारा ऊचुः ॥ इति ते कथितं सर्वं किं भूयः श्रोतुमिच्छसि ॥ श्रीमद्भागवतेनैव भुक्तिमुक्ती करे स्थिते ॥ ७२ ॥

नमोस्तु ते ॥” इति । विधाय कृत्वा तत्र तस्मिन् सिंहासने अस्य श्रीमद्भागवतस्य ललिताक्षरं यथा स्यात्तथा लिखितं पुस्तकं स्थाप्यम्। ‘ललिताक्षरैः’ इत्यपि पाठः । एतेन सीसकशिलाक्षरैरंकितानां पुस्तकानां दानं परास्तमिति गुरवः ॥ ६८ ॥ आवाहनाद्यैः आवाहनमाद्यं मुख्यं प्रधानं येषु ते तथा तैरुपचारैः षोडशभिस्तत्पुस्तकं संपूज्य वस्त्रभूषणगंधाद्यैः पूजिताय अर्चिताय यतात्मने यतो वशीकृत आत्मा मनो येन स तथा तस्मै ॥ ६९ ॥ आचार्याय ब्राह्मणाय सदक्षिणं दक्षिणायुतं दत्त्वा सुधीः सुबुद्धिमान् नरो मनुष्यभवबंधनैः संसारबंधैर्मुक्तः स्यात् । एवं प्रकारेण विधाने कृते सति । कीदृशे—सर्वपापनिवारणे सर्वपापविनाशके । च पूर्तौ ॥ ७० ॥ धर्मार्थकाममोक्षाणां चतुर्वर्गाणां साधनं सिद्धिहेतुकं स्यात्, शुभं मङ्गलरूपं श्रीमद्भागवतं फलदं स्यात्, न संशयः संशयो नास्ति ॥ ७१ ॥ प्रकरणमुपसंहरति—इतीति । इत्येवं ते तुभ्यं सर्वं कथितं, भूयः पुनः किं श्रोतुमिच्छसि । श्रीमद्भागवतेन शास्त्रेण । एव निश्चये । भुक्तिमुक्ती करे हस्ते स्थिते स्तः ॥ ७२ ॥

भोगमोक्षप्रदायिनी कथेयमित्याह—इतीति । इत्येवमुक्त्वा ते कुमारा महात्मान उदारचित्ताः पूज्या वा सर्वपापहरां सर्वपापहंत्रीं पुण्यां पुण्यरूपां पुण्यवर्द्धिनीं वा भुक्तिमुक्तिप्रदायिनीं भोगमोक्षप्रदात्रीं भागवतीं कथां प्रोचुः ॥ ७३ ॥ केषामित्याह—शृण्वतामिति । नियतात्मनां नियतः वशीकृत आत्मा मनो यैः ते तथा तेषां सप्ताहं शृण्वतां सर्वभूतानां सर्वप्राणिनामग्रे कथां प्रोचुरिति पूर्वपद्यस्थेनान्वयः।ततस्तदनंतरं यथाविधि विधिमनतिक्रम्य पुरुषोत्तमं देवं श्रीनारायणं तुष्टुवुः॥ ७४ ॥स्तुत्यंते सपुत्राया भक्तेः परा तुष्टिरभूदित्याह—तदंत इति । तदंते स्तुत्यंते ज्ञानवैराग्यभक्तीनां परा श्रेष्ठा पुष्टता अभूत् । च पुनः सर्वभूतमनोहरं परमम् उत्कृष्टं तारुण्यं तरुणस्य भावोऽभूत् ॥ ७५ ॥ नारदस्य कृतकृत्यता जातेत्याह—नारद इति । नारदश्च कृतार्थः कृतो जातोऽर्थः प्रयोजनं यस्य स तथाऽभूत् । क सति—स्वीये आत्मीये मनोरथे मनईप्सिते सिद्धे सति । अत एव पुलकीकृतसर्वांगः पुलकीकृतानि सरोमांचितानि सर्वाणि अंगानि यस्य स तथा । परमः सर्वोत्तमश्चासौ आनंदश्च परमानंदस्तेन संभृतः पूर्णः ॥ ७६ ॥ कथां

सूत उवाच ॥ इत्युक्त्वा ते महात्मानः प्रोचुर्भागवतीं कथाम् ॥ सर्वपापहरां पुण्यां भुक्तिमुक्तिप्रदायिनीम् ॥ ७३ ॥ शृण्वतां सर्वभूतानां सप्ताहं नियतात्मनाम् ॥ यथाविधि ततो देवं तुष्टुवुः पुरुषोत्तमम्॥७४॥तदन्ते ज्ञानवैराग्यभक्तीनां पुष्टता परा॥तारुण्यं परमं चाभूत्सर्वभूतमनोहरम्॥७५॥ नारदश्च कृतार्थोऽभूत्सिद्धे स्वीये मनोरथे ॥ पुलकीकृतसर्वांगः परमानन्दसंभृतः ॥ ७६ ॥ एवं कथां समाकर्ण्य नारदो भगवत्प्रियः ॥ प्रेमगद्गदया वाचा तानुवाच कृताञ्जलिः॥७७॥ नारद उवाच ॥ धन्योऽस्म्यनुगृहीतोस्मि भवद्भिः करुणापरैः॥ अद्य मे भगवाँल्लब्धः सर्वपापहरो हरिः॥७८॥ श्रवणं सर्वधर्मेभ्यो वरं मन्ये तपोधनाः ॥ वैकुण्ठस्थो यतः कृष्णः श्रवणाद्यस्य लभ्यते ॥ ७९ ॥ सूत उवाच ॥ एवं ब्रुवति वै तत्र नारदे वैष्णवोत्तमे ॥ परिभ्रमन्समायातः शुको योगेश्वरस्तदा ॥ ८० ॥

श्रुत्वा नारद आहेत्याह—एवमिति।एवं प्रकारेण कथां समाकर्ण्य श्रुत्वा भगवत्प्रियः भगवतः प्रियः,भगवान् प्रियो यस्येति वा स नारदः कृतांजलिः कृतः अञ्जलिर्येन स तथा प्रेमगद्गदया प्रेम्णा गद्गदरूपया वाचा वाण्या तान्सनकादीन् उवाच ॥ ७७ ॥ नारदः स्वस्याहोभाग्यतां मन्यमानस्तद्गुणवर्णनपूर्वकं श्रीहरेः प्राप्तिमाह—धन्य इति । अहं धन्योऽस्मि महाभाग्योऽस्मि यतः करुणापरैर्दयापरायणैः भवद्भिरनुगृहीतः कृपापात्रीकृतोऽस्मि । अद्य इदानीं सर्वपापहरः हरिर्भगवान् मे मया लब्धः प्राप्तः, इत्यनुग्रहफलं सूचितम् ॥ ७८ ॥ श्रवणश्रैष्ठ्यं निरूपयति—श्रवणमिति । हे तपोधनाः सर्वधर्मेभ्यः श्रवणं वरं श्रेष्ठमहं मन्ये । यतः यस्माद्धेतोः वैकुंठस्थो वैकुंठलोकस्थायी कृष्णो यस्यास्य श्रीमद्भागवतस्य श्रवणात् लभ्यते प्राप्यते॥ ७९ ॥ इत्थं नारदस्य वदतः सतः शुकागमनं जातमित्याह—एवमिति । तत्र समाजे वैष्णवोत्तमे नारदे एवं ब्रुवति सति

तदा तस्मिन्नवसरे योगेश्वरो महायोगी शुकः शुकदेवः परिभ्रमन्पर्यटन्समायातः ॥ ८० ॥ सिंहासनसमीपे तदागमनं जातमित्याह—तत्रेति । व्यासात्मजः व्यासपुत्रः, सदा योगमहिम्ना षोडशवार्षिकः षोडशवर्षवयाः ज्ञानमेव महाब्धिर्महोदधिस्तस्मिंश्चंद्रमाः कथावसाने कथांते निजलाभपूर्णः आत्मानंदप्राप्त्या पूर्णः प्रेम्णा प्रेमतः शनैःशनैः मंदं मंदं भागवतं पठन्सन् तत्र कथास्थाने आययौ प्राप्तः ॥ ८१ ॥ निरीक्ष्योत्थिता जनास्तं सत्कृतवंत इत्याह—दृष्ट्वेति । सदस्याः सभ्याः परमोरुतेजसं परमम् अत्युत्कृष्टं उरु महत् तेजो यस्य स तथा तम् आगतं प्राप्तं तं शुकदेवं दृष्ट्वा सद्यस्तत्क्षणमेव समुत्थाय स्वासनेभ्य उत्थानं कृत्वा तस्मै प्रीत्या महासनं सर्वोत्तमासनं ददुः दत्तवंतः । सुरर्षिर्नारदस्तम् अपूजयत् । सुखं यथा स्यात्तथा स्थितः महासनोपविष्टः शुकः अमलां शुद्धां गिरं वाचं यूयं संशृणुत इत्यवदत ॥ ८२ ॥ "वेदवृक्षसमुद्भूतं श्रीमद्भागवतं फलम् । शुकमुखाद्गलितं भूमौ पिबंतु रसिका अहो ॥" इत्याह—निगमेति । निगमो वेदः स एव कल्पतरुः कल्पवृक्षस्तस्य फलं श्रीमद्भागवताख्यं रसं रसरूपं हेयांशहीनत्वात् । शुकमुखात्

तत्राययौ षोडशवार्षिकः सदा व्यासात्मजो ज्ञानमहाब्धिचन्द्रमाः ॥ कथावसाने निजलाभपूर्णः प्रेम्णा पठन्भागवतं शनैःशनैः ॥ ८१ ॥ दृष्ट्वा सदस्याः परमोरुतेजसं सद्यः समुत्थाय ददुर्महासनम ॥ प्रीत्या सुरर्षिस्तमपूजयत्सुखं स्थितोऽवदत्संशृणुतामलां गिरम् ॥ ८२ ॥ श्रीशुक उवाच ॥ निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ॥ पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥ ८३ ॥ धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ॥ श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ॥ ८४ ॥

भुवि गलितं पृथिव्यां पतितम्, अमृतद्रवसंयुतम् अमृतद्रवेण संयुतं, पक्षे अमृतस्य मोक्षस्य द्रवः प्रवाहस्तेन संयुतं, लयो मोक्षस्तमभिव्याप्य मुहुः पुनःपुनः यूयं पिबत, हे रसिकाः भावुकाः हे रसविशेषभावनानिपुणाः । अहो इति अलभ्यलाभं सूचयति ॥ ८३ ॥ " कर्मभक्तिज्ञानभेदाद्वेदाः काण्डत्रयात्मकाः ॥ तेभ्यः श्रेष्ठतरा चेयं सुखमोक्षप्रदायिनी ॥ " इत्याह—धर्म इति । अत्र श्रीमद्भागवते सतां सज्जनानां निर्मत्सराणां शांतानां परमो धर्मोऽस्ति । कीदृशः—प्रोज्झितकैतवः प्रकर्षेण उज्झितं त्यक्तं कैतवं कपटं यस्मात्स तथा । 'अत्रपरम' इत्येकपदे अपगता त्रपा लज्जा येषां ते अपत्रपा नास्तिका धूर्त्ता वा तान्रमते आकर्षतीति तथा धातूनामनेकार्थत्वात् । एतेन वेदबाह्यानामपि रुचिकरमिदं शास्त्रमिति कर्मकांडतः श्रेष्ठतोक्ता । अत्र वस्तु उपास्यं परमार्थरूपं तापत्रयोन्मूलनं तापत्रयम् उन्मूलयतीति तथा । अत एव शिवदं कल्याणप्रदमित्युपासनाकांडतोऽप्याधिक्यं सूचितम् । वास्तवं पारमार्थिकम् अविनाशि ब्रह्म वेद्यं ज्ञातुं योग्यमिति ज्ञानकांडतः श्रैष्ठ्यमुक्तम् । महामुनिकृते 'वेदव्यासो महामुनिः' इति

वचनान्महामुनिर्वेदव्यासः तेन कृते अत्र अस्मिञ्छ्रीमद्भागवते शास्त्रे शुश्रूषुभिः श्रोतुमिच्छद्भिः पुरुषैस्तत्क्षणादेव हृदि ईश्वर अवरुध्यते प्राप्यते । कृतिभिः पुण्यजनैः अपरैः शास्त्रैः सद्यः अवरुध्यते किं वा, अर्थान्नावरुध्यत इति कर्तृतोप्युत्कर्षः सूचितः ॥ ८४ ॥ पुराणोत्तमस्यैतस्य ज्ञानाद्याश्रयस्य श्रवणादितो मुक्तिर्भवतीत्याह—श्रीमदिति । श्रीमद्भागवतं पुराणतिलकं पुराणानां तिलकं शोभाकरं मुख्यमित्यर्थः । वैष्णवानां यदेव धनमस्ति । यस्मिन् शास्त्रे पारमहंस्यं परमहंसैः प्राप्यं "ब्रह्माहमस्मि" इति महावाक्येनानुभूतम् अमलं शुद्धं परं ज्ञानं ब्रह्मात्मैक्यरूपं गीयते । यत्र यस्मिन् शास्त्रे ज्ञानविरागभक्तिसहितं नैष्कर्म्यम् ईश्वरार्पणेनांतःकरणशुद्धिद्वारा कर्मादीनां मोक्ष साधनत्वम् आविष्कृतं प्रकटीकृतम् । तच्छास्त्रं भक्त्या शृण्वन् प्रपठन् विचारणपरो भवन् नरो विमुच्यते विशेषेण मुक्तो भवति ॥ ८५ ॥ दुर्लभं रसं पातव्यमेवेत्याह—स्वर्ग इति । अयं कथामृतरसः स्वर्गे नास्ति । च पुनः सत्ये सत्यलोके नास्ति । कैलासे नास्ति । वैकुंठे नास्ति । अतोऽस्मात्कारणात् हे सद्भाग्या यूयं पिबत कर्हिचित

श्रीमद्भागवतं पुराणतिलकं यद्वैष्णवानां धनं यस्मिन्पारमहंस्यमेवममलं ज्ञानं परं गीयते ॥ यत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं तच्छृण्वन्प्रपठन्विचारणपरो भक्त्या विमुच्येन्नरः ॥ ८५ ॥ स्वर्गे सत्ये च कैलासे वैकुण्ठे नास्त्ययं रसः ॥ अतः पिबत सद्भाग्या मामा मुञ्चत कर्हिचित् ॥ ८६ ॥ सूत उवाच ॥ एवं ब्रुवाणे सति बादरायणौ मध्ये सभाया हरिराविरासीत् ॥ प्रह्लादबल्युद्धवफाल्गुनादिभिर्वृतः सुरर्षिस्तमपूजयच्च तान् ॥ ८७ ॥ दृष्ट्वा प्रसन्नं महदासने हरिं ते चक्रिरे कीर्तनमग्रतस्तदा ॥ भवो भवान्या कमलासनस्तु तत्रागमत्कीर्तनदर्शनाय ॥ ८८ ॥

कदापि मा मुंचत मा मुंचत । वीप्सा हेयत्वनिरासार्था ॥ ८६ ॥ इति वदति शुके हरिरागत इत्याह—एवमिति । बादरायणौ बदरीणां समूहो बादरं तदयनं स्थानं यस्य स बादरायणो व्यासस्तस्यापत्यं बादरायणिः तस्मिन् बादरायणौ श्रीशुके एवं ब्रुवाणे इत्थं वदति सति सभाया मध्ये प्रह्लादबल्युद्धवफाल्गुनादिभिः प्रह्लादः प्रसिद्धः, बलिर्विरोचनपुत्रः, उद्धवो देवभागसुतः, फाल्गुनोऽर्जुनस्तदादिभिर्भक्तैर्वृतः संयुक्तो हरिः श्रीनारायण आविरासीत प्रकटोभूत् । सुरर्षिर्नारदस्तं हरिं तान्प्रह्लादादींश्चापूजयत् ॥ ॥ ८७ ॥ तुष्टस्य हरेरग्रे कीर्तनं ते चक्रुरित्याह—दृष्ट्वेति । महदासने महासिंहासनोपरि स्थितं प्रसन्नं हरिं दृष्ट्वा तदा ते प्रह्लादादयस्तदग्रतः हरेः पुरतः कीर्तनं चक्रिरे "कीर्तनं मुनिभिः प्रोक्तं हरेर्लीलाप्रगायनम्" इति । भवान्या पार्वत्या सह भवो महादेवः तत्रागमत्तस्मिन्स्थान आगतः । कमलासनो ब्रह्मा तु अप्यर्थे । आगमत् ।

१ आत्वाभाव आर्षः, महतामासनमिति वा ।

किमर्थम्—कीर्त्तनदर्शनाय कीर्त्तनदर्शनार्थम् ॥ ८८ ॥ कीर्तनेऽधिकारविशेषेण गायकवादकान्निरूपयति—प्रह्लाद इति द्वाभ्याम्। प्रह्लादः तालधारी तालं धर्तुं शीलमस्येति तथा। च पुनः तरलगतितया शीघ्रगतित्वेन उद्धवः कांस्यधारी 'कांस्यतालादिकं घनम्' इत्यमरोक्तेर्झल्लर्यादिधारी। सुरर्षिः नारदो वीणाधारी। स्वरकुशलतया स्वरे कुशलता नैपुण्यं तया रागकर्त्ताऽर्जुनः,। अभूदिति क्रिया सर्वत्रान्वेतव्या। इंद्रः मृदंगमवादीत्। यत्र कीर्त्तने जयजयसुकराः जयजयशब्दोच्चारिणः ते कुमाराः सनकाद्या अभूवन्। अग्रे सर्वेषामग्रभागे रसविरचनया रसानां विरचनया विवेचनेन भाववक्ता व्यासपुत्रो बभूव। रसा दशधा। तदुक्तम्—"रौद्रोद्भुतश्च शृंगारो हास्यं वीरो दया तथा। भयानकश्च बीभत्सः शांतः सप्रेमभक्तिकः॥" इति ॥ ८९ ॥ सुतेजसां तारुण्येन सुदीप्तिभाजां भक्त्यादिकानां भक्तिज्ञानवैराग्याणां त्रिकं तत्र तस्मिन्काले मध्ये सभामध्ये नटवत् ननर्त्त। अलौकिकं दिव्यम् एतत् कीर्त्तनमीक्ष्य आर्ष मिदम्, ईक्षित्वा प्रसन्नस्तुष्टो हरिरपि तत्तदा वच अब्रवीत ॥ ९० ॥ तदाह—मत्त इति। हे भागवता मत्तः सकाशात् यूयं वरं वृणुध्वं स्वीकुरुत। सांप्रतम् अद्य कथाकीर्त्त

प्रह्लादस्तालधारी तरलगतितया चोद्धवः कांस्यधारी वीणाधारी सुरर्षिः स्वरकुशलतया रागकर्ताऽर्जुनोऽभूत् ॥ इन्द्रोऽवादीन्मृदंगं जयजयसुकराः कीर्तने ते कुमारा यत्राग्रे भाववक्ता रसविरचनया व्यासपुत्रो बभूव ॥ ८९ ॥ ननर्त मध्ये त्रिकमेव तत्र भक्त्यादिकानां नटवत्सुतेजसाम् ॥ अलौकिकं कीर्तनमेतदीक्ष्य हरिः प्रसन्नोऽपि वचोऽब्रवीत्तत ॥ ९० ॥ मत्तो वरं भागवता वृणुध्वं प्रीतः कथाकीर्तनतोऽस्मि सांप्रतम् ॥ श्रुत्वेति तद्वाक्यमतिप्रसन्नाः प्रेमार्द्रचित्ता हरिमूचिरे ते ॥ ९१ ॥ नगाहगाथासु च सर्वभक्तैरेभिस्त्वया भाव्यमतिप्रयत्नात् ॥ मनोरथोऽयं परिपूरणीयस्तथेति चोक्त्वान्तरधीयताच्युतः ॥ ९२ ॥

नतोऽहं प्रीतोस्मि। इत्येवं तद्वाक्यं तस्य हरेर्वचनं श्रुत्वाऽऽकर्ण्य प्रेमार्द्रचित्ताः प्रेम्णा आर्द्रं द्रवीभूतं चित्तं येषां ते तथाऽतिप्रसन्ना अत्यानंदयुक्ताः ते प्रह्लादाद्या हरिमूचिरे जगदुः ॥ ९१ ॥ तद्वाक्यमाह—नगाहेति। नगाहगाथासु सप्ताहकथासु एभिः सर्वभक्तैः सहातिप्रयत्नात् अतिप्रयत्नेन त्वया भाव्यं स्थातव्यम्। अयं मे मम मनोरथः भवता पूरणीयः। तथास्तु एवमस्तु इत्युक्त्वाऽच्युतो हरिरंतरधीयत अदृश्योऽभवत्। अत्रांते गाथाशब्देन प्रक्रमोपसंहारयोः कथायामेव तात्पर्यमस्ति न तु पाठे सप्ताहे इति सूचितं भवति। तदुक्तम्—"उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम्। अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णये ॥" इति। प्रक्रमे 'परीक्षिते कथां वक्तुम्' इत्युक्तम्। "वेदोपनिषदां साराज्जाता भागवती कथा। श्रीमद्भागवतान्मुक्तिः सप्ताहे वाचनं कुरु" ॥ "धन्या भागवती वार्त्ता प्रेतपीडाविनाशिनी" इत्युपसंहारः। अभ्यासः—"गयाश्राद्धशतेनापि न मे

१ द्वौ एकं लिंगं वा।

मुक्तिर्भविष्यति" इति प्रसंगे। "कंपंते सर्वपापानि सप्ताहश्रवणे स्थिते। अस्माकं प्रलयं सद्यः कथा चेयं करिष्यति ॥" इत्यपूर्वता। "किं श्रुतैर्बहुभिः शास्त्रैः पुराणैश्च भ्रमावहैः। श्रीमद्भागवतं शास्त्रं मुक्तिदाने प्रगर्जति॥"इति फलम्। "सर्वेषां पश्यतां भेजे विमानं धुंधुलीसुतः। द्वादशात्मा प्रयागश्च" इत्यार्थवादः। "परीक्षित्साक्षी यच्छ्रवणगतमुक्त्युक्तिकथने" इत्युपपत्तिरिति विरोधपरिहारः। 'नगाहगाथासु च सर्वभक्तैः' इत्युपसंहारश्च तात्पर्यनिर्णये लिंगं हेतुरित्यर्थः ॥ ९२ ॥ ततः किं वृत्तमित्यत आह—तत इति। ततो हरेरंतर्धानानंतरं तच्चरणेषु तस्य हरेः चरणेषु पादेषु, बहुत्वं छंदोनुरोधात्। नारदः अनमत प्रणतोऽभूत। वस्तुतस्तु 'तच्चरणारविंदयोर्ऋषिः' इति पाठः। तथा तेनैव प्रकारेण शुकादींस्तापसांश्चाप्यनमदिति। समाप्तौ मंगलार्थोऽथ शब्दः। पीतकथामृताः पीतं कथाऽमृतं यैस्ते तथा अत एव प्रहृष्टाः प्रसन्नाः परिनष्टमोहाः परिनष्टो सर्वतो नाशं यातो मोहो येषां ते तथा ते शुकाद्याः सर्वे ययुः ॥ ९३ ॥ "शुकेन ससुता भक्तिः स्वशास्त्रे रक्षिता ध्रुवम्" इत्याह—भक्तिरिति। तदा निर्गमसमये

ततोऽनमत्तच्चरणेषु नारदस्तथा शुकादीनपि तापसांश्च ॥ अथ प्रहृष्टाः परिनष्टमोहाः सर्वे ययुः पीतकथामृतास्ते ॥९३॥ भक्तिः सुताभ्यां सह रक्षिता सा शास्त्रे स्वकीयेऽपि तदा शुकेन ॥ अतो हरिर्भागवतस्य सेवनाच्चित्तं समायाति हि वैष्णवानाम् ॥ ९४ ॥ दारिद्र्यदुःखज्वरदाहितानां मायापिशाची परिमर्दितानाम् ॥ संसारसिन्धौ परिपातितानां क्षेमाय वै भागवतं प्रगर्जति ॥ ९५ ॥ शौनक उवाच ॥ शुकेनोक्तं कदा राज्ञे गोकर्णेन कदा पुनः ॥ सुरर्षये कदा ब्राह्मैश्छिंधि मे संशयं त्विमम् ॥ ९६ ॥

सुताभ्यां ज्ञानवैराग्याभ्यां सह सा प्रसिद्धा भक्तिः स्वकीये शास्त्रे श्रीमद्भागवताख्ये शुकेन रक्षिता स्थापिता। अतोऽस्माद्धेतोः भागवतस्य सेवनात् वैष्णवानां चित्तं मनो हरिः समायाति समागच्छति। हि निश्चयेन ॥ ९४ ॥ अनाधाराणामाधारभूतमिदं शास्त्रमित्याह--दारिद्र्येति। दरिद्रस्य भावो दारिद्र्यं निर्धनता, दुःखं रोगादिजं, ज्वरस्तापस्तैर्दाहितानां दग्धानां, माया कपटादिरूपा सैव पिशाची तया परिमर्दितानां व्याकुलानाम् "मायाया द्वादशार्थो वै पुराणे आत्मपूर्वके द्रष्टव्या अथ संग्राह्या विबुधैश्च प्रयत्नतः ॥" संसारसिंधौ संसारसागरे परिपातितानां प्रारब्धकर्मभिः निमग्नानां क्षेमाय कल्याणार्थं वै निश्चयेन भागवतं प्रगर्जति उच्चैस्तरां शब्दायते ॥ ९५ ॥ " कस्मिन्कस्मिंस्तु काले वै नृपादिभ्यः शुकादिभिः। प्रोक्तं भागवतं सूतं परिपृच्छति शौनकः ॥" इत्याह—शुकेनेति। राज्ञे परीक्षिते शुकेन भागवतं कदा प्रोक्तम्, पुनः गोकर्णेन कदा प्रोक्तम्, सुरर्षये नारदाय ब्राह्मैः सनकादिभिः कदा उक्तम्, इमं मे मम संशयं संदेहं त्वं छिंधि अपाकुरु ॥९६॥

सूत उत्तरयाते—आकृष्णेति त्रिभिः । आकृष्णनिर्गमात् कृष्णस्य स्वधामगनं मर्यादीकृत्य त्रिंशद्वर्षाधिकगते त्रिंशद्वर्षेभ्यः अधिकं कालं गतः तथाभूते कलौ सति नभस्ये भाद्रपदे मासे नवमीतः कथारंभं शुकः अकरोत्कृतवान् ॥ ९७ ॥ परीक्षिच्छ्रवणांते परीक्षिच्छ्रवणांतात् । पंचम्यर्थे सप्तमीयम् । तथा पाठ एव इति गुरवः । च पुनः वर्षशतद्वये वर्षाणां शतं वर्षशतं तस्य द्वयं यस्मिन्स तथा तस्मिन्कलौ गते सति शुचौ आषाढमासे शुद्धे शुक्लपक्षे नवम्यां च तिथौ धेनुजो गोकर्णः कथामकथयत् ॥ ९८ ॥ तस्मादपि कालात् त्रिंशद्वर्षगते त्रिंशद्वर्षाणि गतानि यस्मिन्स तथा तस्मिन् एवंभूते कलौ प्राप्ते सति ऊर्ज्जे कार्त्तिकमासे सिते पक्षे शुक्ले पक्षे नवम्यां तिथौ ब्रह्मणः सुताः सनकाद्या ऊचुः ॥ ९९ ॥ प्रकरणं समाप्तमित्याह—इतीति । हे अनघ यत्त्वयाऽहं पृष्टः एतदित्येवं ते तुभ्यं समाख्यातं कथितम् । कलौ युगे भागवती भागवतसंबंधिनी वार्त्ता कथा भवरोगविनाशिनी संसाररोगहंत्री ॥ १०० ॥ सद्भिरिदं पेयमित्याह—कृष्णेति । कृष्णप्रियं कृष्णस्याभीष्टं सकलकश्मलनाशनं सकलपापविनाशनं च पुनः मुक्त्येक

सूत उवाच ॥ आकृष्णनिर्गमात्त्रिंशद्वर्षाधिकगते कलौ ॥ नवमीतो नभस्ये च कथारम्भं शुकोऽकरोत् ॥ ९७ ॥ परीक्षिच्छ्रवणान्ते च कलौ वर्षशतद्वये ॥ शुद्धे शुचौ नवम्यां च धेनुजोऽकथयत्कथाम् ॥ ९८ ॥ तस्मादपि कलौ प्राप्ते त्रिंशद्वर्षगते सति ॥ ऊचुरूर्जे सिते पक्षे नवम्यां ब्रह्मणः सुताः ॥ ९९ ॥ इत्येतत्ते समाख्यातं यत्पृष्टोऽहं त्वयाऽनघ ॥ कलौ भागवती वार्ता भवरोगविनाशिनी ॥ १०० ॥ कृष्णप्रियं सकलकश्मलनाशनं च मुक्त्यैकहेतुमिह भक्तिविलासकारि ॥ सन्तः कथानकमिदं पिबतादरेण लोके हितार्थपरिशीलनसेवया किम्॥१०१॥ स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले ॥ परिहर भगवत्कथासु मत्तान्प्रभुरहमन्यनृणां न वैष्णवानाम् ॥ १०२ ॥ असारे संसारे विषयविषसंगाकुलधियः क्षणार्धं क्षेमार्थं पिबत शुकगाथाऽतुलसुधाम् ॥ किमर्थं व्यर्थं भो व्रजत कुपथे कुत्सितकथे परीक्षित्साक्षी यच्छ्रवणगतमुक्त्येककथने ॥ १०३ ॥

हेतुं मुक्तेरेककारणम् इह लोके भक्तिविलासकारि भक्तेर्विलासं क्रीडारूपं कर्त्तुं शीलमस्येति तथा तत् इदं कथानकं हे संतः आदरेण यूयं पिबत पानं कुरुत । लोके जगति हितार्थपरिशीलनसेवया हितो वांछितश्चासौ अर्थश्च हितार्थः तस्य परिशीलनं चिंतनं तस्य सेवया किं, न किमपि ॥ १०१ ॥ वैष्णवेभ्यो यमोपि बिभेतीत्याह—स्वपुरुषमिति । पाशहस्तं पाशो हस्ते करे यस्य स तथा तं स्वपुरुषं स्वदूतं वीक्ष्य दृष्ट्वा तस्य दूतस्य कर्णमले यमः वदति—भगवत्कथासु मत्तान्प्रमादिनः त्वं परिहर मा आनय, अन्यनृणां हरिविमुखानां नृणामहं प्रभुः स्वाम्यस्मि । किल निश्चयेन वैष्णवानां प्रभुः—दंडकर्त्ता न, अप्येव तेषां ममापि पूज्यत्वात् ॥ १०२ ॥ असारे सारभूते यमित्याह—असार इति । असार साररहिते संसारे विषयविषसंगाकुलधियः विषयाः शब्दादयः "रूपं शब्दो गंधरसस्पर्शाश्च विषया अमी" इत्यमरोक्तेः । ते एव विषं तस्य

संगस्तेन आकुला व्याप्ता धीर्बुद्धिर्येषां ते तथा क्षणार्द्धम् अर्द्धक्षणमपि शुकगाथातुलसुधां शुकस्य गाथा श्रीमद्भागवती कथा सा एव अतुलसुधा अनुपमाऽमृतरूपा तां क्षेमार्थं कल्याणार्थं यूयं पिबत । कुत्सितकथे कुत्सिता निंदिता कथा यस्मिन्स तथा तस्मिन् कुपथे कत्सितः पंथा मार्गः कुपथस्तस्मिन्कुमार्गे व्यथ निष्फलं यथा स्यात्तथा किमर्थं कस्मै प्रयोजनाय ययं व्रजत गच्छत । यद्यतः श्रवणगतमुक्त्येककथने श्रवणाद्गता प्राप्ता मुक्तिस्तस्या एककथने मुख्यप्रवचने 'एके मुख्यान्यकेवलाः' इत्य मरोक्तेः । परीक्षित्साक्षी भवति । 'श्रवणगतमुक्तयुक्तिकथने' इति पाठे मुक्तिश्च भुक्तिश्च इति मुक्तयुक्ती । 'वर्णस्य वर्णयोर्लोपः' इति शिक्षायां शौनकोक्तेर्भलोपात् श्रवणगत मुक्तयुक्ती तयोः कथने इति केचित । तत्र दोषः, श्रवणादेः परीक्षितो मुक्तिः, भोगानुक्तेस्तन्मंदं, दिव्यभोगानामपि लाभात । गुरवस्तु विशेष्यवाचकपदानां सति विशेष णपदसंनिधाने विशेष्यमात्रपरत्वमिति युक्त्या श्रवण गतमुक्तिकथने इत्येवार्थो यक्त इत्याहुः ॥ १०३॥ "कथा कंठस्थिता चेयं वैकुंठपतिरेव सः" इत्याह—रसेति । रसप्रवाहसं स्थेन रसः प्रेमरूपः शांतरूपो वा तस्य प्रवाहस्तस्मिन्न संतिष्ठते इति तथा स तेन श्रीशुकेन ईरिता कथिता कथा येन पुंसा कंठे संबध्यते धार्यते स पुमान् वैकुंठप्रभुः वैकुंठस्वामी

रसप्रवाहसंस्थेन श्रीशुकेनेरिता कथा ॥ कण्ठे संबध्यते येन स वैकुण्ठप्रभुर्भवेत् ॥ १०४ ॥ इति च परमगुह्यं सर्वसिद्धान्तसिद्धं सपदि निगदितं ते शास्त्रपुंजं विलोक्य ॥ जगति शुककथा तो र्मलं नास्ति किञ्चित्पिब परसुखहेतोर्द्वादशस्कंधसारम् ॥ १०५ ॥ एतां यो नियततया शृणोति भक्त्या यश्चैनां कथयति शुद्धवैष्णवाग्रे ॥ तौ सम्यग्विधिकरणात्फलं लभेते याथार्थ्यान्न हि भुवने किमप्यसाध्यम् ॥ १०६ ॥ इति श्रीपद्मपुराण उत्तरखण्डे श्रीमद्भागवतमाहात्म्ये श्रवणविधिकथनं नाम षष्ठोऽध्यायः ॥६॥ श्रीकृष्णार्पणमस्तु ॥ समाप्तमिदं श्रीमद्भागवतमाहात्म्यम् ॥

स्यात ॥ १०४ ॥ परं रहस्यं नान्यदस्तीत्याह—इतीति । इति च इदमेव परमं गुह्यम् उत्कृष्टं गोप्यं रहस्यं सर्वसिद्धांतसिद्धं सर्वेषु सिद्धांतेषु सिद्धं प्रसिद्धं सपदि शीघ्रं शास्त्रपुंजं शास्त्रसंघं विलोक्य दृष्ट्वा ते तुभ्यं मया निगदितमुक्तम् । जगति संसारे शुककथातः श्रीमद्भागवतकथातो निर्मलं शुद्धिकरं किंचिदन्यन्नास्ति । परसुखहेतोः परं सुखं मोक्षाख्यं तस्य हेतोर्द्वादशस्कंधसारं द्वादश स्कंधा एव सारः, द्वादशस्कंधेषु वा सारः सारांशस्तं त्वं पिबेति सूतोक्तिः॥ १०५॥ श्रोतृवक्त्रोः कृतकृत्यतामाह—एतां कथां नियततया नियमेन भक्त्या यः शृणोति, एतां कथां शुद्धवैष्णवाग्रे यश्च कथयति तौ द्वौ सम्यक् विधिकरणाद्विधानकरणेन सम्यक् फलं लभेते प्राप्नुयाताम् । याथार्थ्यात वास्तवार्थत्वात् भुवने 'विष्टपं भुवनं जगत्" इति कोशात् । जगति असाध्यं किमु, अपि तु न किमपि ॥ १०६ ॥ रामपूर्वप्रतापेन ऋजुटीका कृता त्वियम् । राधाकृष्णमुदे भूयाज्जयपत्तनवासिना ॥ १ ॥ इति श्रीशेखावाट्यंतर्गतविजयपुरनिवासिव्राजलालिपंडितरामप्रतापशर्मविरचितायां श्रीमद्भागवतमाहात्म्यटीकायामृजुनाम्न्यां षष्ठोऽध्यायः ॥ ६ ॥

गजाब्धिगोभूसंख्याते वैक्रमीये सुवत्सरे ॥ बाहुले शुद्धपंचम्यां टीकेयं पूर्णतामगात् ॥ १ ॥ पठंतु बालकाः सर्वे विवदंतां विवादिनः॥ मनीषिणः शोधयंतु दुष्टा नश्यंतु मत्सरात् ॥ २ ॥ यथामति कृता चेयं दृश्यतां शुद्धभावतः ॥ परिशोध्या बुधैः प्रेम्णा श्रमचिंताविचारतः ॥ ३ ॥ "अथ वैष्णवचिंतेषु दृष्ट्वा भक्तिमलौकिकीम्" इत्यारभ्य "धावंतो प्यायुः सर्वे प्रथमं ये च वैष्णवाः" "विष्णुदीक्षाविहीनानां नाधिकारः कथाश्रवे" इति च मध्ये " यश्चैनां कथयति शुद्धवैष्णवाग्रे " इत्यंते चोक्तत्वाद्वैष्णवानां श्रेष्ठत्वमुक्तम्, तेषां च शालग्रामपूजनं तुलसीमंजर्यार्पणं गोपीचंदनधारणं च मुख्यो धर्मोऽस्ति, तदर्थं तेषां निरूपणं पुरश्चरणविधिश्च । तथाहि पाद्मे—"मस्तके धारणं कार्यं कर्णयोश्च तथैव च ॥ कंठदेशे च विपुलं बाह्वोश्च मणिबंधके ॥ १ ॥ लसीमञ्जरीश्चैव पंचांगे धारयेन्नरः । आजन्मपातकं धूय विष्णुलोके स गच्छति ॥ २ ॥ " "गोपीचंदनमाहात्म्ये इतिहासः पुरातनः । कांबोजसंज्ञिते देशे वैश्योभूद्वैष्णवोत्तमः ॥ सुशीलो विष्णुभक्तश्च कामक्रोधविवर्जितः । तस्य द्वार्य्येकदा मार्गी ह्यावेद्य संस्थितो बहिः ॥ न ज्ञातो वैष्णवेनैव रात्रौ सुप्तोऽभवद्द्विजः । निद्रायुक्तस्तु पांथः सोप्यहिना दंशितो भृशम् ॥ मृतमात्रस्य तस्यैव मूषकः स्पर्शतां गतः । क्षुधया पीड्यमानोपि कृत्वा सुविवरं महत् ॥ गोपीचंदनार्द्रमुखो तद्देहं संस्पृशन्खलु । गोपीचंदनसंयोगाद्गतोसौ विष्णुमंदिरम् ॥ अत एव मनुष्यैस्तु कर्त्तव्यं तिलकं शुभम् ॥ गायत्र्याः पुरश्चरणे यत्फलं प्राप्यते द्विजैः । तत्फलं प्राप्यते विप्र श्लोकार्द्धश्रवणेन वै ॥ आश्रुत्वा भगवद्वार्त्तां यो भुंजीत गृहेषु वा । अन्नं पीयेत पानं वा पापभुक् सोऽधमो मतः ॥ तदन्नं पापरूपं च तज्जलं मदिरासमम् । अत एव मनुष्यैस्तु विष्णुधर्मपरायणैः ॥ श्रोतव्यं च प्रयत्नेन नित्यं भागवतं शुभम् ॥ ब्राह्मणानां यथा संध्या वैष्णवानां तथा द्विजाः । श्रीमद्भागवतं शास्त्रं सत्यं सत्यं वदामि ते ॥ अष्टोत्तरशतं चास्य कार्यं पारायणं शुभम् । केदारे उदकं पीत्वा पुनर्जन्म न विद्यते ॥ नरस्यैव तथा तस्य पुनर्जन्म न विद्यते । स एव वैष्णवो धन्यः पारायणशताधिकृत् ॥ श्रीभागवतमंत्रस्य ऋषिः प्रोक्तश्च नारदः । ब्रह्म बीजं तथा प्रोक्तं छंदश्च बृहती स्मृतम् ॥ गुणातीतोऽव्ययश्चैव श्रीकृष्णो देवता स्मृतः। भवरोगहारिणी चैव भक्तिः शक्तिरिहोच्यते ॥ ज्ञानं तथा च वैराग्यं कीलकं वै तथा स्मृतम् । इदं मंत्रार्थविधिवज्जाप्यं मंत्रफलप्रदम् ॥ ॐकारं पूर्वमुच्चार्य शिवेनोत्कीलयेन्नरः । गायत्रीशतमुच्चार्य ततः पठनमाचरेत्॥ " इति विधिः । "अष्टोत्तरशतैः पाठैः पुरश्चरणमिष्यते । परात्परतरं ज्ञानमनेनैव हि जायते॥ विना वेदांतसेवाभिर्विना चांद्रायणादिभिः । विना काशीनिवासाद्यैर्विना गंगानिषेवणैः॥ महापापौघनाशाय पुण्योपायो महानयम् । पुरश्चरणमेतस्य कुरु पारायणं यथा॥ "॥ इति श्रीमद्भागवतपुरश्चरणविधिः ॥ समाप्तश्चायं ग्रन्थः ॥



इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासात्मजेन क्षेमराजेन स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्–मुद्रणालयेऽङ्कयित्वा प्रकाशितम् । संवत् १९६५, शके १८३०

अथ श्रीधरीयटीकया वंशीधरशर्मकृततद्भावार्थदीपिकाप्रकाशटीकया
चोपेते श्रीमद्भागवते प्रथमस्कन्धः प्रारभ्यते ॥

# प्रथमस्कन्धः



॥ अथ श्रीमद्भागवतं श्रीधरीयटीकया वंशीधरशर्मकृत तद्भावार्थदीपिकाप्रकाशटीकया चोपेतम् ॥

❀ महाराजनाभाधीशश्री १०८ श्रीहीरासिंहजीकस्य साहाय्येनेदं मुद्रितम् ❀

ॐ स्वस्ति श्रीगणेशाय नमः ॥ श्रीकृष्णं राधिकानाथं वृन्दावननिकुंजगम् ॥ बल्लवीगणसंवीतमाश्रये सर्वकारणम् ॥ १ ॥ ॐ स्वस्ति श्रीगणेशाय नम इत्यस्य व्याकृतिम् ॥ श्रीवंशीधरशर्माहं करोमि विदुषां
मुदे ॥ २ ॥ अथ सर्वशास्त्रारंभ इयमेव दशाक्षरी विद्या स्मर्यते तत्कथमन्येषां श्रीमहाविष्ण्वादीनां स्मरणस्यापि "मंगलानाञ्च मंगलम्" इत्यादिवाक्यैर्मंगलस्यापि मंगलत्वान्न स्मर्यत इति चेत्तत्रेदमवधेयम् ॥ अस्यामेव दशाक्षर्यां
स्मृतायां सर्वदेवस्मरणसंभवादियमेव स्मर्य्या ॥ किंचास्या दशाक्षर्याः सर्वदेवतानां मूलमंत्रत्वादप्यादौ जपो न्याय्यः । मूलमंत्रलक्षणस्य गरुडोक्तस्यात्र सत्त्वात् । तथा हि । "प्रणवादिनमोंतं च चतुर्थ्यंतं च सत्तम ॥
देवतायाः स्वकं नाम मूलमंत्रः प्रकीर्त्तितः" इति ॥ देवपूजायां जपरूपपूजाया एव श्रैष्ठ्यं "यज्ञानां जपयज्ञोऽस्मि" इति श्रीमुखोक्तेः । कथमत्र सर्वदेवतास्मरणमिति चेत्तद्दर्शयन्नाह । तथा हि । "कार्यारंभे
गणेशश्च पूजनीयः प्रयत्नतः ॥" इति स्मृतेस्तस्यैवादिपूज्यत्वं विघ्ननाथत्वेन विघ्नवारकत्वात् । श्रीगणेशाय नमः । नमआदियोगे चतुर्थी सर्वत्र बोध्या गण्यंते दुःखप्रदत्वेनेति गणा विघ्नाः । "समूहे भगणे विघ्ने प्रमथेंद्रियदैवते ।
यमसैन्ये स्तवार्हेषु पार्षदे च गणः स्मृतः ॥" इत्यनेकार्थध्वनिवाग्विलासे । गण संख्याने धातोः कर्मण्यप्रत्ययः । ईष्टे उपद्रवनाशकत्वेन द्योतत इतीशः । ईश ऐश्वर्येऽतः कर्त्तरीगुपधात्कः । "ईशः स्वामिनि शंकरे" इति
वामनः । गणानां विघ्नानां प्रमथानां वेशः स्वामी गणेशो हेरंबः । "रुद्रे विनायके विष्णौ विश्वक्सेने विधातरि । मुख्याधिष्ठातृसैन्येषु गणेशः परिकीर्तितः ॥" इत्यप्यनेकार्थध्वनिवाग्विलासे । श्रिया कीर्त्या दीप्त्या
ऋद्धिसिद्धिभ्यां वा सहितो गणेशः श्रीगणेशस्तस्मै तथा । "ऋद्धिश्रीकीर्त्तिदीप्त्याशीर्गिरासु श्रीरितीरितः ।" इत्यपि तत्रैव । स्वस्त्यस्तु नमस्कर्त्तुरिति शेषः । ओमित्यंगीकारे ब्रह्मणि चेत्यव्ययपाठात् । एतत्सर्वैः कार्यादावं
गीकार्यमिति भावः । "अनाराध्य गणाध्यक्षं यत्कर्म क्रियते नरैः । तन्न सिद्धिमवाप्नोति ह्यत आदौ तमर्चयेत्" इति पुराणात् । यद्वा कथंभूताय श्रीगणेशाय ॐ । कोर्थः ब्रह्मरूपिणे । अव्ययत्वादेव चतुर्थ्या लुक् ।
सत्यपि लुकि विभक्त्यर्थानपायस्योपविष्णु देहीत्यादिप्रयोगेषु दर्शनादव्ययस्य तत्तद्विभक्त्यंतविशेषणत्वे न दोष इत्यवधेयमत्र ॥ तथा च श्रुतिः । "नमस्ते गणपतये । त्वमेव प्रत्यक्षं ब्रह्मासि" इति । अत्र विशेष्यसं
बद्धत्वादन्ययोगव्यवच्छेदकेनैवकारेण "पार्थ एव धनुर्द्धरः" इत्यत्र च पार्थादन्यत्र धनुर्द्धरत्वस्येव गणपतेरन्यत्र साक्षाद्ब्रह्मत्वस्य योगो व्यवच्छिद्यते अतः श्रेयस्कामैः सर्वैरपि स एवाराध्यस्तत्पूजां विनान्यपूजाया वैयर्थ्यस्मरणेन
फलजनकत्वायोगात् । अवश्यापेक्षितानपेक्षितयोरपेक्षितं समर्पणीयमिति न्यायेन तदाराधनस्यावश्यकत्वात्कृते च तस्मिन् "विद्यार्थी लभते विद्यां धनार्थी लभते धनम् । पुत्रार्थी लभते पुत्रं मोक्षार्थी परमं पदम् ॥"
इत्यादिवचनेभ्यः सर्वेष्टलाभसंभवे "अनधीते महाभाष्ये व्यर्था स्यात्पदमंजरी । अधीतेपि महाभाष्ये व्यर्था स्यात्पदमंजरी" इति न्यायेनान्याराधने प्रयोजनाभावात् । सूर्याद्याराधनफलारोग्यादिमोक्षांतकथनानंतरं
"सर्वमिच्छेद्गणाधिपात्" इति स्मरणमप्यत्र मानम् । तस्मादेव ब्रह्माद्युत्पत्तिस्तत एव तेषां सृष्ट्यादिसामर्थ्यलाभश्च । अथ च गणपतेस्तत्त्वेन वर्णनमुपासनार्थं वास्तवाभेदबोधनार्थञ्च । न चैतावतान्यदेवानाराधनापत्तिः ।
प्रयाजादिषु कृतेष्वपि ज्योतिष्टोमादीनामननुष्ठानापत्तेः, इतरोपास्तिविधायकवाक्याप्रामाण्यापत्तेश्च । 'सर्वमिच्छेत् इति'तु विनायकाराधनस्य परंपरया सर्वत्रोपगमोपयोगवर्णनपरं नत्वितरनिषेधपरं तद्विधिविरोधात् । प्रयाजादयों
गानि ज्योतिष्टोमो ह्यंगी । न ह्यंगैकदेशे कृते सर्वांगिनो यथा सिद्धिस्तथा श्रीगणेशार्चनस्य यज्ञादिकर्मप्रारंभरूपैकांगत्वान्न तत्कृते सर्वयज्ञसिद्धिरिति गणेशपक्षः ॥ १ ॥ विष्णुपक्षेऽप्यस्य व्याख्या ॥ ॐ नमः । कोर्थः । ब्रह्मणे नमः ।
"ॐमित्येकाक्षरं ब्रह्म" इति ब्रह्मोपनिषदि श्रीगीतायां चाव्ययपाठेपि । ॐमित्यंगीकारे ब्रह्मणि च । अव्ययत्वादेव बिभक्तिलुक् । किंभूताय ॐ । श्रीगणेशाय । श्रयति विष्णुचरणमिति श्रीर्लक्ष्मीः क्विबत्र कर्तरि ।
"कटमुञ्चि" त्यादिना दीर्घः । "कमला श्रीर्हरिप्रिया" इत्यमरात् । श्रिया लक्ष्म्या गणाः पार्षदा इंद्राद्यास्तेषामीशः प्रेरकस्तस्मै । "इंद्राद्याः पार्षदा यस्याः सा लक्ष्मीर्वरदास्तु मे" इति पुराणांतरोक्तेः । यः श्रीपतिः स एव
तदीयगणानां पतिः । पुरुषस्य स्त्रीपतित्वात्तत्संबंधिनिखिलोपकरणपतित्वस्य प्रथितत्वादतो लक्ष्मीगणानां पतिर्विष्णुरेवेति । किंभूताय ॐ । स्वस्ति कल्याणरूपिणे । स्वस्तीति कल्याणेऽर्थेऽव्ययम् । अत एवात्रापि पूर्ववच्च
तुर्थ्या लुक् । "मंगलं भगवान्विष्णुः" इत्याद्युक्तेः ॥ "नमस्ते कमलाकांत सर्वकल्याणरूपिणे" इति पुराणाच्च । ॐमित्यत्रोंशब्दस्य ब्रह्मवाचित्वं स्वीकृतम् । तच्च सगुणस्यैवेति ज्ञेयम् । "द्वे वाव ब्रह्मणो रूपे मूर्त्तं चामूर्त्तं
च" इति श्रुतेर्ब्रह्मणो द्वैविध्यप्रसिद्धेर्मूर्त्तं सगुणममूर्त्तं च निर्गुणम् । निर्गुणस्य लक्ष्म्यादिपतित्वममूर्त्तत्वादेव न संगच्छते । सगुणस्य तु "लक्ष्मीकांतं कमलनयनम्" इत्यादिवाक्यात् ॥ "श्रियः पतिर्यज्ञपतिर्ध रापतिः"
इति द्वितीयस्कंधोक्तेः । "श्रियः पतिः श्रीमति शासितुं जगत्" इत्यादिमहाकविप्रयोगाच्च तत्संगच्छत एवेति ॥ २ ॥ श्रीविष्णोः सर्वदेवाधिपत्वेनोत्कृष्टत्वात्तत्पक्षेऽन्योप्यर्थः । ॐ ज्ञानं तदेव स्वं धनं येषां ते ॐस्वाः योगिनः

"भक्तिर्धनं भक्तिमतां ज्ञानं हि योगिनां धनम् ॥ विद्याधनं च विदुषां शीलं हि योषितां धनम् ॥" इत्यभियुक्तोक्तेः । "महेशे ब्रह्मणि विष्णौ त्रिगुण्यां प्रणवेऽपि च । ॐकारः शब्द्यते शुद्धौ ज्ञाने त्रय्यां च कोविदैः ॥" इत्यनेकार्थ ध्वनिवाग्विलासोक्तेः । "स्वः स्वीयात्मधनेषु च" इति हलायुधः । ॐस्वा ज्ञानयोगिनस्तैः स्तीर्य्यते ध्यायत इति ॐस्वस्तिर्विष्णुः । स्तृञाच्छादन इत्यस्मादौणादिको डिप्रत्ययस्ततष्टिलोपे रूपसिद्धेः । धातूनामनेकार्थ त्वाद्ध्यानार्थतापि स्तृणातेर्युक्तैव । "धातवश्चोपसर्गाश्च निपाताश्चेति ते त्रयः । अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम्" इति वैयाकरणराद्धांतात् । अत एवोक्तं "योगिभिर्ध्यानगम्यं" "ध्यायंति यं योगिनः" इति च । श्रिया सर्वोत्कृष्टकीर्त्या गण्यते संख्यायते स्तूयते वेति श्रीगणः "सर्वोत्कृष्टा यस्य कीर्त्तिस्स श्रीगण उदाहृतः" इति निरुक्तेः । न हि विष्णोरधिका कस्यचिदपि कीर्त्तिरस्ति । "न त्वत्समोस्त्यभ्यधिकः कुतोन्यः" इति श्रीगीतास्वर्जुनोक्तेः । स चासावीशः सर्वनियंता चेति श्रीगणेशः । सर्वस्येशानः सर्वस्य वशी चेति श्रुतेः । पुनरोंस्वस्तिशब्देन कर्मधारयः । ॐस्वस्तिश्चासौ श्रीगणेशश्चेति । तथा । कोर्थः । विष्णवे नमः । "विष्णुरेव परं ब्रह्म" इति स्कांदोक्तेः ॥३॥ परब्रह्मव्यानस्य परमानंदहेतुत्वात्पुनर्विष्णुपक्ष एव व्याख्यायते । "यदुवंशेऽवतीर्णस्य विष्णोर्वीर्याणि शंस नः" इति श्रीदशमोक्तेर्विष्णुशब्दः श्रीकृष्ण एव मुख्यया वृत्त्या वर्तते अत एवामरसिंहेन जैनेन प्रतिपक्षीभूतेनापि विष्णुनामकथनोत्तरं 'वसुदेवोऽस्य जनकः' इत्युक्त्या तस्यैव विष्णुत्वं व्याख्यातम् । अत एव श्रीव्यासदेवेनाप्युक्तम् "एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्" इति । ॐविष्णुशब्दवाच्यः कृष्णस्तेन स्वस्ति कल्याणं यस्य तदोंस्वस्ति व्रजमंडलं "व्रजभूमिविहारी च व्रजमंडलस्वस्तिकृत्" इति व्रजमाहात्म्योक्तेः । तस्योंस्वस्तिनो व्रजमंडलस्य श्रीः शोभा गण्यते येन स ॐस्वस्तिश्रीगणः श्रीकृष्णः "शोभा कल्याणलक्ष्मीषु श्रीशब्दः सेवने श्रुतौ" इति मार्त्तंडः । "व्रजाभा कृष्णचंद्रेण गण्यते सर्वदा प्रभो" इत्यपि व्रजमाहात्म्ये । पुनरीशशब्देन पूर्ववत्कर्मधारये पूर्ववत् ॥४॥ अपरोप्यर्थः कृष्णपक्ष एव । ॐ कृष्णस्तेन स्वस्ति कल्याणं यासां ता ॐ स्वस्तयो गोप्यः । "सख्यस्स्वस्तिकृदस्माकं न हि नंदात्मजं विना" इति व्रजमाहात्म्येन्योन्यं गोप्युक्तेः । "व्रजजनार्त्तिहन्वीरयोषिताम्" इति । श्रीदशमोक्तेश्च । ॐस्वस्तीनां गोपीनां श्रीः शोभा कल्याणं वा यया सा ॐस्वस्तिश्रीः राधा "राधा गोपीकदंबस्य शोभा सृष्टेह चात्मना" इति । आत्मना श्रीकृष्णेन स्ववामांगतः सर्वगोपीनां समूहस्य शोभा राधैव सृष्टेति निरूपितं ब्रह्मवैवर्त्ते । सा गण्यते पत्नीत्वेन येन स ॐस्वस्तिश्रीगणः सचासावीशश्चेति तथा । यद्वा ॐस्वस्तिश्रिया गणा गोपीसमूहास्तेषामीशस्तथा राधापतये गोपीनाथाय वा कृष्णाय नम इत्यर्थः ॥ ५ ॥ ॐ शुद्धिस्तां सूत इति ॐसूराचारः "शुद्धिराचारमाश्रिता" इत्युक्तेः । तेनासंति दीप्यंत इत्योंस्वस्तय ऋषयः अस गतिदीप्त्यादानेषु भौवादिकस्ततस्तिप्रत्ययः । ताञ्श्रीणाति हिनस्तीति ॐस्वस्तिश्री रावणः । धातूनामनेकार्थत्वादत्र श्रीणातिर्हिंसार्थकः प्रत्ययोत्र क्विप् तस्य गणा राक्षसास्तेषामीः संपत्तिः ॐस्वस्तिश्रीगणेस्तां शमयति रावणादिवधेन नाशयतीति ॐस्वस्तिश्रीगणेशो रामचंद्रस्तस्मै नमः । अत्र ण्यन्ताच्छमेर्डप्रत्ययः ॥ ६ ॥ अथवा "ज्ञानं महेश्वरादिच्छेत्" इत्युक्तेर्ज्ञानकामनया शिवपक्षेऽपि व्याख्यास्यामः । अवति पालयति विश्वमित्योम् औणादिकप्रयोगः । ॐविष्णुस्तस्यैव पालकत्वात् । सुष्ठु दुष्टादितिजनाशकत्वेन साधुत्राणार्थमस्तिर्भवनमवतारो यस्य स स्वस्तिर्विष्णुः । "संरक्षणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगेयुगे ॥" इति श्रीमुखोक्तेः । "स्वस्तिदः स्वस्तिकृत्स्वस्ति" इति विष्णुसहस्रनामस्वपि स्वस्तिशब्दो विष्णुवाचको दृश्यते । ॐ चासौ स्वस्तिश्चेति ॐस्वस्तिः । यद्यपि स्वस्तिशब्दोऽव्ययेषु पठितः ॥ तथापि "न तु शब्दनिर्देशे" इत्युक्तेर्विभक्तेर्लुङ्नेति ज्ञेयम् ॥ ॐस्वस्ति श्रयति सेवत इति ॐस्वस्तिश्रीर्महादेवः । "यमामपृच्छस्त्वमुपेत्य योगात्समासहस्रांत उपारतं वै । स एव साक्षात्पुरुषः पुराणः" इति पार्वतीं प्रति स्वयं शिवेनाष्टमस्कंधे मोहिन्युपाख्याने उक्तत्वात् । "तव वरदवरांघ्रावाशिषेहाखिलार्थे यदि रचितधियं मां विद्यलोकोपविद्धम्" इति दक्षोपाख्याने च । "अतो महेशोऽपि विहाय भेदबुद्धिं सदा सेवत एव विष्णुम्" इति विद्वन्मोदतरंगिण्यां चिरंजीवभट्टोक्तेश्च । गणाः प्रमथास्तेषामीशो गणेशः 'गणः संघे च प्रमथे' इत्यभिधानात् । ॐस्वस्तिश्रीश्चासौ गणेशश्चेति तथा शिवाय नम इत्यर्थः ॥ ७ ॥ नन्वयमपि पक्षो विष्णोरेव । ॐस्वस्तिं श्रयतीत्यनया निरुक्त्या विष्णोः प्राधान्यस्य शिवस्य च सेवकत्वस्योक्तत्वात् । यस्य पक्षो यत्र वर्ण्यते तत्र तस्यैव महत्त्वं वर्ण्यते अतो मृडमहत्त्वसूचकोऽपरः पक्षोत्र विरच्यते । उम्मा शुद्ध्या स्वस्ति कल्याणं येषां ते ॐस्वस्तयो विप्राः "शुद्ध्या ब्राह्मणतावृद्धिरशुद्ध्या शूद्रता भवेत्" इत्यादिपुराणात् । तैः श्रीयते सेव्यत इति ॐस्वस्तिश्रीर्महादेवः "त्वंहि भगवन्देवेषु ब्राह्मणोहं मनुष्येषु ब्राह्मणः ब्राह्मणो हि ब्राह्मणमुपधावति" इति जाबालोपनिषदुक्तेः "शिवो विप्रो हरिः क्षत्री" इत्यादिपराशरपुराणोक्तेश्चेशस्य ब्राह्मणदेवत्वाद्ब्राह्मणसेव्यत्वमस्तीति । ई लक्ष्मीं

गच्छतीतीगो विष्णुः 'लक्ष्मीरीकार उच्यते' इत्येकाक्षरात् । ईगेन नम्यत इतीगणः शिवः । निपातनान्नस्य णः । प्रत्ययश्चात्र डः । स चासावीशश्चेतीगणेशः यद्वा ॐ ज्ञानं सूते इति ॐसूर्वेदः
" वेदो वै ज्ञानकारणम् " इत्युक्तेः । ॐसुवो वेदस्यास्तिराविर्भावो यस्मात्स ॐस्वस्तिर्महादेवः । " त्वं शब्दयोनिर्जगदादिरात्मा " इति " सांख्यात्मनः शास्त्रकृतस्तवेक्षा " इति चाष्टमस्कंधे महादेवं प्रति लोकपालोक्तेः ।
"शास्त्रयोनित्वात् " इति सूत्राच्च । श्रीं गणयति भार्यात्वेनेति श्रीगणो विष्णुस्तस्येशश्श्रीगणेशः " सदाहं शंकरं सेवे वैकुंठेशोऽपि भोः सुराः ॥ " इति पाद्मपुराणात् । ॐस्वस्तिश्चासौ श्रीगणेशश्चेति ॐस्वस्तिश्री
गणेशस्तस्मै तथा शिवाय नम इत्यर्थः ॥८॥ " आरोग्यं भास्करादिच्छेत् " इति स्मृतेर्वक्तृश्रोत्रोरारोग्यताप्तये श्रीसूर्यं प्रणमति । ॐशब्देन ब्रह्मविष्णुरुद्राणां बोधो भवति । "अकारो वासुदेवः स्यादुकारः शंभुरुच्यते । मकारो
विधिवाचकः" इत्येकाक्षरात् । स्वर् स्वर्गे तप्यते सर्वोत्कृष्टत्वेनेष्ट इति स्वस्तिरिंद्रः स्वरन्ययोपपदात्तप ऐश्वर्येऽस्माद्दैवादिकात्कर्त्तरि डिप्रत्यय औणादिकः । श्रिया धनसंपत्त्या गण्यत इति श्रीगणः कुबेरः ' कुबेरः श्रीगण:
श्रीदः शिवमित्रो धनाधिपः ।' इत्यभिधानात् । स्वस्तिश्च श्रीगणश्चेति स्वस्तिश्रीगणौ इंद्रकुबेरौ ॐमा विष्णुरुद्रब्रह्मणा सहितौ स्वस्तिश्रीगणौ ॐस्वस्तिश्रीगणौ तयोरीश ॐस्वस्तिश्रीगणेशस्तस्मै तथा तदुक्तं भविष्यो
क्तादित्यहृदये " ब्रह्मेंद्रनारायणरुद्रवंदितः स नः सदा यच्छतु मंगलं रविः " इति । ईश एव वंद्यते न त्वनीशः । यतः सर्वैर्ब्रह्मादिदेवैः सूर्यो वंद्यतेऽतः स एव तेषामीश इति भावः । तथा च सूर्याय नमः अस्त्वित्यध्या
हार्य्यम् । "नहि क्रियाविनिर्मुक्तं वाक्यं भवती" त्युक्तेः । "कर्त्तृकर्मक्रियादीनां यदि स्थानं न लभ्यते । अध्याहारं तदा कुर्यान्मुख्यार्थप्रतिपत्तये ॥ " इत्यभियुक्तोक्तेश्च अपेक्षितपदानयनमध्याहारः । इति सूर्यपक्षः ॥ ९ ॥
चंद्रस्य "सोमोस्माकं ब्राह्मणानां राजा" इति सर्ववेदाधिकरणब्राह्मणकुलस्याधीशत्वात्सर्वकर्मारंभेऽनुकूलचंद्रस्यैव शुभं भवति । "कुर्याच्चंद्रबले सर्वम्" इति ज्योतिःशास्त्रोक्तेश्च प्रथमं तं नमति । श्रिया दीप्त्या विशिष्टा गणा
भगणास्तेषामीशः श्रीगणेशः यद्वा श्रिया शास्त्रसंपत्त्या विशिष्टो गणः श्रीगणः ब्राह्मणसमूहस्तस्येशस्तस्मै । किंभूताय श्रीगणेशाय ॐ । कोर्थः ब्रह्मरूपिणे । " नक्षत्राणामहं शशी " इति श्रीमुखोक्तेः । पुनः
स्वस्ति कल्याणकारिणे "पितृदेवमनुष्याणां स्वस्तिकर्त्ता निशाकरः । " इत्यादिपुराणात् । इह स्वस्तिपदं स्वस्तिकर्त्तरि लाक्षणिकम् । लक्षणा हि मुख्यार्थबाधे गौणार्थकल्पनम् । सा चानेकविधा । मंचाः क्रोशंति
शोणो धावतीत्याद्युदाहरणैरुदाहृता ग्रंथेषु यथेह मंचपदं मंचस्थे शोणपदं रक्तवर्णवत्यश्वादौ लाक्षणिकं तथात्रापि स्वस्तीति स्वस्तिकर्त्तरि । लक्षणाबीजं त्वन्वयानुपपत्तिः । क्वचित्क्वाचिच्च तात्पर्यानुपपत्तिः । इह च
तात्पर्यानुपपत्तिरेवेऽत्यलमतिप्रसंगेनेति चंद्रपक्षः ॥ १० ॥ अथोंकारस्य " ओंकारो वै सर्वा वाग् " इत्यादिश्रुतेः सर्ववाग्रूपत्वात्तद्ध्यानस्य च " कामदं मोक्षदं चैव " इत्युक्तेः सर्वाभीष्टहेतुत्वाच्चादौ तदेवाह ।
ॐ स्वस्ति श्रीगणेशाय नमः । अत्र षट् पदच्छेदाः कार्याः । हे श कोऽर्थः हे वरेण्य "शश्च शोभावरेण्ययोः" इति वामनः । ननु हेशब्दः संबुद्धिद्योतको भवत्यत्र तदभावात्कथं हेशेत्युक्तं तत्रोच्यते । " हेशब्देन
विनापि स्यात्क्वचिदंतेऽपि हेपदम् । यथा राम प्रसीद त्वं राम हे त्वां भजाम्यहम् " इति प्रबोधचंद्रिकोक्तेर्हेशब्देन विनापि संबुद्धिर्न विरुद्धेति । अथ प्रकृतम् । त्वमों कोर्थ ॐकारमक्षरं ब्रह्मस्वरूपमय ध्याय ।
अय गतावित्यस्य धातूनामनेकार्थत्वाद्ध्यानार्थतापि । " अनुक्तमप्यूहति पंडितो जनः " इत्यादिप्रयोगदर्शनादनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति बहुधा प्रपञ्चितं शाब्दिकैरतोऽयतेः परस्मैपदप्रयोगोपि न विरुद्ध
इति । न वोंकारस्य ध्यानं न कोऽपि करोतीति चेत्तत्राह । "ॐकारं बिन्दुसंयुक्तं नित्यं ध्यायंति योगिनः । कामदं मोक्षदञ्चैव ॐकाराय नमोनमः " इति मंत्रात्तद्ध्यानं तु योगिनोपि कुर्वंत्यन्येषां तु का कथेति
भावः । किंभूतम् ॐ । नमः । सर्वोत्कृष्टत्वेन नमस्कारार्हम् णम् प्रह्वत्वे इत्यस्मादौणादिकोऽसुप्रत्ययः । सर्वोत्कृष्टत्वञ्च प्रणवस्य ब्रह्मविद्योपनिषदि व्याख्यातम् " ओमित्येकाक्षरं ब्रह्म यदुक्तं ब्रह्मवादिभिः । शरीरं तस्य
वक्ष्यामि स्थानं कालं लयं तथा ॥ तत्र देवास्त्रयः प्रोक्ता लोका वेदास्त्रयोऽग्नयः । तिस्रो मात्रार्द्धमात्राश्च अक्षरस्य शिवस्य च ॥ ऋग्वेदो गार्हपत्यश्च पृथिवी ब्रह्म एव च । अकारस्य शरीरं तु व्याख्यातं ब्रह्मवादिभिः ॥
यजुर्वेदोंतरिक्षञ्च दक्षिणाग्निस्तथैव च । विष्णुश्च भगवान्देव उकारः परिकीर्त्तितः ॥ सामवेदस्तथा द्यौश्चाहवनीयस्तथैव च । ईश्वरः परमो देवो मकारः परिकीर्तितः ॥ सूर्यमंडलमाभाति अकारः शंखमध्यगः ।
उकारश्चंद्रसंकाशस्तस्य मध्ये व्यवस्थितः ॥ मकारश्चाग्निसंकाशो विधूमो विद्युतोपमः । तिस्रो मात्रास्तथा ज्ञेयाः सोमसूर्याग्नितेजसः ॥ शिखा च दीपसंकाशा यस्मिन्नुपरिवर्त्तते । अर्द्धमात्रा तथा ज्ञेया प्रणवस्योपरि
स्थिता । पद्मसूत्रनिभा सूक्ष्मा शिखा या दृश्यते परा । सा नाडी सूर्यसंकाशा सूर्यं भित्त्वा तथापरम् ॥ द्वासप्ततिसहस्राणि सूर्यं भित्त्वा तु मूर्द्धनि । वरदः सर्वभूतानां सर्वं व्याप्यैव तिष्ठति ॥ कांस्यघंटानिनादस्तु

यथा लीयति शांतये ॥ ॐकारस्तु तथा योज्यः शांतये सर्वमिच्छता ॥ यस्मिन्संलीयते शब्दस्तत्परं ब्रह्म गीयते । ध्रुवं हि चिंतयेद्ब्रह्म सोऽमृतत्वाय कल्पते ॥ " इति । कस्मै स्वस्ति । कोऽर्थः । स्वस्तये मोक्षाय । अत्र चतुर्थी त्वव्ययत्वादेव न । " कल्याणे भवने मोक्षे स्वस्तीत्युक्तस्तथा हरौ " इत्यभिधानात् । यद्वा किंभूतमों स्वस्ति मंगलरूपम् । " सर्वेषां मंगलानां च बीजं प्रणव एव हि " इत्यादिसंहितोक्तेः । च पुनः श्रीगणे कामास्यै श्रीयंते स्पृहयालुभिरिति श्रियः कामाः गण्यते प्राप्यत इति गण् गणनं प्रापणमित्यर्थः । धातूनामनेकार्थत्वादाप्त्यर्थाद्भावे क्विपि रूपम् । श्रियां गण् श्रीगण् तस्मै तथा । तथा च "ॐकारं बिन्दुसंयुक्तम्" इति मंत्रार्थोऽत्र ध्वनित इत्योंकारपक्षः ॥ ११ ॥ अथ च शास्त्रज्ञानस्य " गुरुमूलमिदं सर्वं शास्त्रज्ञानं सुरेश्वरि " इति शंभुवाक्यात् । "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः " इति श्वेताश्वतरश्रुतेश्च गुरुभक्तिजन्यत्वादादौ गुरुनतिरेव कार्यातो गुरुपक्षेपि दशाक्षरीं योजयति । ॐज्ञानं तदेव स्वं धनमोंस्वं तेन ज्ञानधनेन स्तभ्नाति त्रिकर्मप्रवृत्त्या संसारे भ्रमन्तं शिष्यं रुणद्धीत्योंस्वस्तिर्गुरुः । " गिरतीह पाप्मानम् " इतिश्रुतिप्रतिपादितो गुरुपदार्थोनेन ध्वनितः । स्तंभुरोधनेऽस्मात्क्रैय्यादिकादौणादिको डिप्रत्ययः कर्त्तरीति । अत्र दृष्टांतः । यथा कृतापराधं नरं गृहीत्वा राजपार्श्वे गच्छंतं तत्प्रियः कश्चिद्धनं दत्त्वा ततस्तं मोचयति एवं गुरुरपि ज्ञानधनं दत्त्वा कर्मणः सकाशान्मोचयति शिष्यमिति ध्येयः । न हि गुरूपदेशं विना संसारः शाम्यतीति भावः । श्रीर्लक्ष्मीस्तां गच्छति प्राप्नोतीति श्रीगोविष्णुस्तं नमतीति श्रीगणः । साधनमस्य शिवपक्षे वर्णितम् । ॐस्वस्तिश्रीगणपदाभ्यामत्र " श्रोत्रियं ब्रह्मनिष्ठम् " इति श्रुत्यर्थोऽपि ध्वनितः । ॐस्वास्तिश्चासौ श्रीगणश्चेति ॐस्वस्तिश्रीगणः । पुनरीशपदेन कर्मधारयः पूर्ववत् । किञ्च " आचार्यवान्पुरुषो वेद " इति श्रुतेर्भगवत्स्वरूपज्ञानमपि गुरुप्रसादादेव भवतीत्यलं विस्तरेणेति गुरुपक्षः ॥ १२ ॥ इंद्रस्य सर्वदेवराजत्वात्सोपि शास्त्रादौ ध्येय एवेत्यत इंद्रपक्षेप्यस्य योजनामाह ॥ ओमा विष्णुना वामनरूपेण स्वस्ति कल्याणं यस्य स ॐस्वस्तिरिन्द्रः श्रिया समेधिता गणाः श्रीगणा देवाः " श्रिया समेधिताः सर्वे उपारमत विग्रहात् " इति ब्रह्मप्रेषितनारदस्य देवासुरसंग्रामे देवान्प्रत्युक्तेः । अत्र मध्यमपदलोपी समासः तेषामीशः ॥ श्रीगणेश ॐस्वस्तिश्चासौ श्रीगणेशॐस्वस्तिश्रीगणेशस्तस्मै इंद्राय नमः ॥ १३ ॥ अथ शेषस्य सर्वाधारत्वात्सर्वसर्पगणमुख्यत्वेन सर्पादिभीतिवारणाय तमप्यत्र नमस्करोति । शाय नमः । कोऽर्थः शेषाय नमः । "शं वदंति बुधाः शेषम् " इत्येकाक्षरात् । किंभूताय शाय । ॐस्वस्तिश्रीगणे । ॐशब्देन सत्त्वादिगुणत्रयमुच्यते " त्रिगुण्यां प्रणवेपि च " इत्यभिधानात् । तथा च ओमा गुणत्रयेण सुष्ठु अस्ति भवनं यस्य तदोंस्वस्तिभवनमत्र स्थितिसंहारयोरप्युपलक्षणम् । तच्च ब्रह्मांडं तस्य श्रीः शोभा गण्यतेऽत्रेत्योंस्वस्तिश्रीगण् तस्मै तथा गणसंख्यानेऽतोऽधिकरणे क्विप् । सहस्रशिरसश्शेषस्य कस्मिंश्चिच्छिरोमुकुटैकदेशे सिद्धार्थ इव शोभा ब्रह्मांडस्येति पञ्चमस्कंधादौ विशेषतः प्रपंचितम् । वाक्यानि च विस्तरभियेह न लिखितानीति शेषपक्षः ॥ १४ ॥ "अनाराध्य जगद्धात्रीं विष्णुभक्तिर्न जायते ।" इति ब्रह्मवैवर्त्ते प्रकृतिखंडोक्तेः । किञ्च "आराधिता सैव नृणां भोगस्वर्गापवर्गदा" इति मार्कंडेयोक्तेश्चैहिकामुष्मिकफलार्थिभिरवश्यं दुर्गा सेव्या । अतस्तत्पक्षेप्यस्यायोजनां कुर्मः । ॐभ्यो वासुदेवादिभ्यः सुष्ठु अस्ति भवनं यस्यास्सा ॐस्वस्तिः । "यदभूच्छांभवं तेजस्तेनाजायत तन्मुखम् । ब्रह्मणस्तेजसा पादौ " इत्याद्युक्तेः । ॐभ्य इति बहुवचनं सप्तशतीस्तवप्रसिद्धदेवग्रहणार्थमन्यथा ब्रह्मादित्रयाणामेव ग्रहणं स्यादिति । यद्वोंभ्यो विष्ण्वादिभ्यः सुष्ठु अस्तिराविर्भावो यासां ता ॐस्वस्तयो वैष्णव्याद्याः शक्तयः तदुक्तम् "ब्रह्मेशगुहविष्णूनां तथेंद्रस्य च शक्तयः । शरीरभ्यो विनिष्क्रम्य तद्रूपैश्चंडिकां ययुः " इति मार्कंडेयोक्तेः । ताभिः श्रीर्द्युतिर्यस्याश्चंडिकायाः सा ॐस्वस्तिश्रीस्तस्या गणो महाकाली महासरस्वतीमहालक्ष्मीरूपस्तस्येशो मूलप्रकृतिरूपस्तस्मै नमः । अत्र पुंस्त्वं तु " नागं लिंगं च योनिं च बिभ्रती नृपमूर्द्धनि " इति रहस्योक्तेस्तस्याः पुंरूपत्वं स्त्रीरूपत्वञ्चास्तीति न विरुद्धम् । पुंस्त्वं नास्ति शंभुविधिकृष्णे स्त्रीत्वं नास्ति तथैव भवान्याम् ॥ कमलायां च तथैव च वाण्याम् " इति रघुनाथतीर्थोक्तेश्च । यद्वा ॐस्वस्तिश्रिया गणा भैरवादयस्तेषामीशा यद्वा "निश्वासान्मुमुचे यांश्च युध्यमाना रणेंबिका । त एव सद्यः संभूता गणाः शतसहस्रशः ॥ " इत्युक्तेर्गणा निःश्वासोद्भूतास्तेषामीशा तस्यै नमः । अस्या आर्षत्वाट्टाबाडागमाद्यभावेन पुंस्त्वम् । ऋषिरत्र वेदः । वैदिकत्वं चास्य सर्ववाङ्मयादित्वेनापौरुषेयत्वादिति । " अपौरुषेयं वाक्यं वेदः " इति पूर्वमीमांसायां वेदलक्षणोक्तेः । न हि केनचित्पुरुषेणैतद्रचितमनादित इत्थमेवेयं दशाक्षरी विद्येति प्रसिद्धेरिति दुर्गापक्षः ॥ १५ ॥ अथ "वाय्वधीनमिदं जगत्" इत्यादिपुराणात्सर्वचेष्टाहेतुत्वाद्वायुमप्यत्र नमस्करोति ॥ ॐभिस्सत्त्वरजस्तमोभिस्सुष्ठु अस्ति भवनं स्थित्युत्पत्तिसंहृतिरूपं यस्य तद्ब्रह्मांडमोंस्वस्ति तस्य श्रीः कल्याणं येन स ॐस्वस्तिश्रीर्वायुः " त्वं वायो सर्वब्रह्मांडे स्वस्तिकृत्प्राणदः सदा । त्वदधीनमिदं सर्वं जगतश्चेष्टितं विभो ॥

अतीव कश्मलो देहस्त्वत्संयोगात्परः शुचिः। त्वत्त्यक्तस्तु पवित्रोऽपि विप्रदेहोऽशुचिर्भवेत् ॥ पवित्राणां पवित्रस्त्वं मंगलानां च मंगलम्'' इत्यादि संहितोक्तेः । गण्यंते ज्ञानकर्मोपकारकत्वेनेति गणाः इंद्रियाणि तेषामीशः प्रवृत्ति हेतुत्वात्स्वामी गणेशः । प्राणवायुं विना किमपि कर्तुमिन्द्रियगणैर्न शक्यते तेषां तदधीनत्वात् । प्राणेंद्रियसंवादोपि श्रूयते शास्त्रे । तथाहि इंद्रियैरुक्तं वयं शरीरधारकाणि प्राणेरुक्तं वयमिति परस्परं विवादकत्वा त्तन्निर्णयाय ब्रह्मपार्श्वं गताः ब्रह्मणोक्तं शरीरान्निर्गत्य पृथक्पृथक् प्रवेशः पुनः शरीरे क्रियतां यत्प्रवेशेन शरीरमुत्तिष्ठते तदेव महदिति श्रुत्वा सर्वाणींद्रियाणि प्रविष्टानि शरीरे चेष्टापि नागता पुनर्ब्रह्मणा वायुं प्रत्युक्तं त्वं प्रविश ततः प्रविष्टे वायौ शरीरमुत्थितमभूत्ततो ब्रह्मणोक्तमयमेव शरीरधारकः सर्वेभ्यो महान्सर्वेषां भवतां स्वामीति तथा च श्रुतिः ''अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति'' इति । अत एव वक्ष्यते । ''उक्थेन रहितो ह्येष मृतकः प्रोच्यते यथा '' इति प्रथमपंचदशाध्याये। अथ प्रकृतमनुसरामः । ॐस्वस्तिश्रीश्वासौ गणेशश्चेति तथा तस्मै प्राणरूपाय वायवे नम इति वायुपक्षः॥ १६ ॥ ''ब्राह्मणोग्निश्च वै विष्णोः सर्वदेवा त्मनो मुखम्'' इति स्मृतेः । ''अग्निमीळे पुरोहितम्'' इति श्रुतेश्च पुरोग्रेऽग्निमहमीळे ईडे डलयोरैक्यात् । किंभूतं हितं सर्वहितकरम् '' अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥'' इति । तथा च पूर्वमग्निरेव हितेप्सुभिः सेव्योऽतोऽग्निपक्षेऽपि दशाक्षरीं योजयति । ॐमा ज्ञानेन स्वस्ति कल्याणं येषां ते ॐस्वस्तयो जीवाः । '' ऋते ज्ञानान्न मुक्तिः '' इति श्रुतेः । '' कषायपक्तिः कर्माणि ततो ज्ञानं प्रवर्त्तते । ज्ञानान्मोक्षमवाप्नोति '' इति स्मृतेश्च । तान्जीवान्श्रयत्याश्रयतीत्योंस्वस्तिश्रीः संसारस्तस्य गणो लोभादयः । '' न विद्यते तेग्रहणानुबंधः कुतो नु तद्धेतव ईश तत्कृताः । लोभादयो येबुधलिंगभावाः ॥ '' इति गोवर्द्धनधारिणं प्रतींद्रोक्तेः । अग्रहणानुबंधः संसारस्तद्धेतवः संसृतिहेतवः तत्कृता अज्ञानकृता इत्यर्थः । अत्र संसारस्य लोभादीनां चाज्ञानकार्यत्वेन समानत्वाद्गणगणिभावो ध्येयः । तस्य संसारगणस्य लोभादेरीशो निवर्त्तकः । अत्रायमाशयः । अग्नेर्यज्ञादिकर्मणो मुख्यसाधनत्वात्तत्साध्या चांतःकरणशुद्धिः सा च लोभादिनिवृत्तिरूपैवातः शुद्धेंतःकरणे ज्ञानमुदेति अत एवोक्तम् ''कर्मणा ज्ञानमातनोति ज्ञानेनामृती भवति अथामृतानि कर्माणि'' इति श्रुत्या कर्मणाऽग्निसाध्येन यागादिनेत्यर्थः । तथा चाग्नये नम इत्यग्निपक्षः ॥ १७ ॥ श्रीधर्मराजस्य सर्वरोगाधिपत्वाद्धर्माधर्मविवेचकत्वेन सर्वलोकहिताय प्रवृत्तत्वाच्च शास्त्रादौ वक्ष्यमाणपितॄणां रोगादिभयापनुत्तये ध्येयत्वा न्नमस्करोति । ॐविष्णुः स च गदाधरो गयाक्षेत्राधीशरूपोत्र ग्राह्यस्तेन स्वस्तिर्मुक्तिर्येषां ते ॐस्वस्तयः पितरः । ''गदाधरो गयाक्षेत्रे पितॄणां मोक्षदायकः ॥ '' इति बृहन्नारदीयोक्तेः । तैः श्रीयते सेव्यते इत्योंस्वस्तिश्री धर्मराजः । '' यस्यामग्निष्वात्तादयः पितृगणाः'' इत्यादिपंचमस्कंधोक्तेः । गणा निजसैनिकास्तेषामीशो गणेशः 'यमः सैन्येस्तुत्यनरे इति कोशात् । पुनरोंस्वस्तिश्रीश्वासौ गणेशश्चेति तथा तस्मै । यद्वा ओमा ज्ञानेनार्थात्तत्सद शेन गयापिंडप्रदानेन स्वस्ति येषां त ॐस्वस्तयः पितरः श्रिया पितृलोकलक्ष्म्या विशिष्टा ये गणा एकत्रिंशत्संख्याः ''विश्वो विश्वभुगाराध्य '' इत्यादिना मार्कंडेयोक्तास्ते श्रीगणा ॐस्वस्तीनां पितॄणां श्रीगणा ॐस्वस्तिश्री गणास्तेषामीशः स्वामी धर्मराजस्तस्मै नमः '' वाराणस्यां च यो वासो हरिभक्तिस्तथैव च । गयापिंडप्रदानं च ब्रह्मज्ञानं च तत्समम् '' इति बृहन्नारदीयादिति धर्मराजपक्षः ॥ १८ ॥ अथ च कुबेरस्य सर्वधनाधिपत्वात्तदाप्तये सोऽपि नमस्कार्य इति । ओमा शंकरेण स्वस्ति कल्याणं यस्य स ॐस्वस्तिः कुबेरस्तस्य शिवसखत्वप्रसिद्धेः । सखा हि सख्युः कल्याणं करोत्येवेति भावः । श्रीणां धनानां रक्षका गणाः श्रीगणा यक्षास्तेषामीशश्श्री गणेशः ॐस्वस्तिश्चासौ श्रीगणेशश्चेति तथा तस्मै कुबेराय नम इत्यर्थः इति कुबेरपक्षः ॥ १९ ॥ वरुणस्य जलाधीशत्वेन जलभीनिवृत्तये तमपि नमस्करोति । ॐ ज्ञानं तदेव स्वमोंस्वं तत्स्तृणंत्याच्छादयंत्योंस्वस्तीनि रत्नानि मुक्ताहीरकादीनि ''न ह्यन्यो जुषतो जोष्यान्बुद्धिभ्रंशो रजोगुणः । श्रीमदादाभिजात्यादिर्यत्र स्त्रीद्यूतमासवः'' इति दशमे नारदोक्तेः । अत्र स्तृणातेर्डिः । तैश्श्रीर्यस्य स ॐस्वस्तिश्रीर्वरुणः । ''मुक्तावैदूर्यहीरकैः । अलंकृत शरीराय वरुणाय नतोस्म्यहम् '' इति मंत्रात् । गणानां यादोगणानामीशो गणेशः । ''यादोगणानामृषभं प्रचेतसम् '' इति तृतीयस्कंधोक्तेः । ॐस्वस्तिश्रीश्वासौ गणेशः ॐस्वस्तिश्रीगणेशस्तस्मै वरुणाय नम इत्यर्थ इति वरुणपक्षः॥ २० ॥ अथ वागधिष्ठातृदेवीमप्रतिबद्धवाग्व्यापाराय नमति । ॐज्ञानं सूत इत्योंसूः सरस्वती '' बुद्धिप्रदां शारदाम् '' इत्युक्तेः । अस्ति श्रीरनयेत्यस्तिश्रीः ''धनं शोभां सर्वमानं लभते वाक्प्रसादतः ॥'' इत्यादि पुराणात् । ॐसूश्चासावस्तिश्रीरित्योंस्वस्तिश्रीः। गणानां छात्रादिसमूहानामीशोऽनयेति गणेशा ॐस्वस्तिश्रीश्चासौ गणेशा ॐस्वस्तीश्रीगणेशा तस्यै तथा यथा पुंस्त्वमत्र तथा व्याख्यातमधस्तात् सरस्वत्यै नमः इत्यर्थः॥ २१ ॥ श्रीभागवतपक्षेपि व्याख्यायते । तथाहि । '' व्यासो नारायणः स्वयम्'' इत्युक्तेरोंव्यासस्तस्य स्वस्ति स्वास्थ्यं येन तदोंस्वस्ति श्रीभागवतं श्रीः कीर्तिर्गण्यते संख्यायते येन तत् '' विद्यावतां भागवते परीक्षा ''

॥ श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ ॐ नमः परमहंसास्वादितचरणकमलचिन्मकरंदाय ॥ भक्तजनमानसनिवासाय श्रीरामचंद्राय ॥ १ ॥

इत्याद्युक्तेः । यद्वा श्रिया सर्वोत्कृष्टकीर्त्या गण्यते यत्तच्छ्रीगणम् “ क्षेत्राणां चैव सर्वेषां यथा काशी ह्यनुत्तमा । तथा पुराणव्रातानां श्रीमद्भागवतं द्विजाः ॥ ” तथा “ राजंते तावदन्यानि पुराणानि सतां गणे । यावन्न श्रूयते साक्षाच्छ्रीमद्भागवतं परम् । तथा भागवतं नाम पुराणं ब्रह्मसंमितम् ” इति चोक्तेः । ॐस्वस्ति च तच्छ्रीगणं चेति ॐस्वस्तिश्रीगणं तच्चेशं ब्रह्मरूपत्वात् । ॐस्वस्तिश्रीगणेशं तस्मै श्रीमद्भागवताय नम इत्यर्थः । अत्र विशेषापेक्षा चेत्तर्हि आद्यपद्यव्याख्याशल्यां श्रीभागवतपक्षो दृश्यः ग्रंथविस्तरभियात्र बहु वक्तव्यमप्युज्झितमिति :। अथ व्याख्यातां दशाक्षरीं विद्यां पुनरुल्लिख्य श्रीमद्भागवतं श्रीवंशीधरशर्मा दशाक्षरीनमस्कृतदेवानुकंपया टीकांतरसम्मत्या व्याकरोति॥ २२॥ ॐस्वस्तिश्रीगणेशाय नमः ॥ गणेशं गिरिजासूनुं श्रीस्कंदं श्रीशिवं गुरून्॥ भारतीं बुद्धिदां देवीं मातरं पितरं तथा ॥१॥ नमस्कृत्याखिलान्कुर्वे टीकाकारांश्च भक्तितः ॥ श्रीधरस्वामिभावार्थदीपिकायाः प्रकाशनम् ॥ २ ॥ हरिविधिवसिष्ठशक्तिपराशरव्यासशुकदेवान् ॥ वैशंपायनमुग्रश्रवसं च नुमः पुराणगुरुमुख्यान् ॥ ३ ॥ त्रय्यारुणिं कश्यपञ्च सावर्णिमकृतव्रणम् ॥ रोमहर्षणहारीतौ मैत्रेयञ्च मृकंडजम् ॥४॥ शेषं सांख्यायनं चाथ चतुरः सनकादिकान् ॥ श्रीमहाभारतं वेदान्कणादं जैमिनिं मुनिम्॥ ५ ॥ पतंजलिमक्षपादं व्यासञ्च कपिलं हरिम्॥ छन्दःकृतः कोशकृतः साहित्यकृतिनोऽखिलान् ॥ ६ ॥ श्रीनृसिंहं प्रणम्यैव श्रीधरस्वामिनः कृतेः ॥ विवृतिं श्रीधरस्यैव प्रसादादधुना ब्रुवे ॥ ७ ॥ श्रीधरस्वाम्यभिप्रायं श्रीधरो वेत्ति सर्वथा ॥ भविष्यति तत्कृपया तदभिव्यक्तिराशु मे ॥८॥ क्वचिच्च श्रीधरत्यक्तपदानामपि वर्णनम् ॥ यथामति माथुराणां प्रेरणातो मुहुर्मुहुः ॥९॥ करिष्यामि विदां प्रीत्यै क्षमंतां ते मम त्वराम् ॥ पूर्वाचार्यानुग्रहान्मे सर्वेर्थाः प्रतिभांतु वै ॥ १० ॥ वृंदारण्यांतर्गते नंदजेन सेवाकुंजे संयुतां कीर्त्तिजाताम् ॥ नत्वा तस्याः प्राप्य चाज्ञां स्वबुद्ध्या कुर्वे व्याख्यां श्रीधरस्वामिवृत्तेः :॥ ११ ॥ वंशीधरः कौशिकगोत्रगौडवंश्यः कृती श्रीधरवृत्तिवृत्तिम् ॥ करोमि तत्त्यक्तपदव्रजस्य :तथा गुरूणामनुकंपयैव ॥ १२ ॥ येषां न चेतो हरिभक्तिमध्ये मग्नं न षट्शास्त्रसमुद्रमध्ये ॥ ते नैव ज्ञास्यंति मम प्रयासानंधा यथा वारवधूविलासान् ॥१३॥ विद्वानेव हि जानाति विद्वज्जनपरिश्रमम् ॥ नहि वंध्या विजानाति गुर्वीं प्रसववेदनाम् ॥ १४॥ तथापि क्रियते ग्रंथः संति यद्यपि दुर्जनाः ॥ न हि दस्युभयाल्लोको दैन्यवानेव वर्त्तते ॥ १५॥ किञ्च ॥ वंदेहं दुर्जनान्पूर्वं सज्जनांश्च ततः परम्॥ मुखप्रक्षालनात्पूर्वं पायुप्रक्षालनं यथा ॥१६॥ लोके गरीयसी माता मातृतोप्यधिकः खलः ॥ माता पुनाति हस्ताभ्यां खलास्तु जिह्वया मलम्॥ १७॥ अतिविशदहृदयाधिगम्ये काव्ये खिद्यति नरो न जाड्ये स्वे ॥ निंदति कंचुककारं प्रायः शुष्कस्तनी नारी ॥१८॥ किञ्च । खलो मृगयते दोषं गुणपूर्णेषु वस्तुषु ॥ वने पुष्पफलाकीर्णे पुरीषमिव सूकरः॥ १९॥यदत्र स्खलितं किञ्चिद्विद्वांसः पूरयंतु तत्॥ यदत्र सौष्ठवं किंचित्तद्गुरोरेव मे न हि॥यदत्रासौष्ठवं किंचित्तत्सर्वं मे गुरोर्नहि ॥२०॥अल्पं गुणं परेषां प्रथितं कुर्वंति साधवो लोके ॥ तेषामेष स्वभावस्तृप्ताः स्युस्ते परोदयेनैव॥२१॥ इति ॥ न मे शास्त्रबलं किञ्चिन्न च बुद्धिबलं क्वचित्॥प्रवृत्तो बलमाश्रित्य गुरूणां केवलं कृतौ ॥२२॥तरणज्ञानहीनो ना यथा तरति नौकया॥नदीं प्रबलदुस्तीर्य्यामयत्नेन तथा ह्यहम्॥२३॥ श्रीगुरूणां बलेनैव तरिष्यामि न संशयः ॥ शास्त्रसिन्धुं विज्ञजनैर्दुस्तीर्य्यमपि सर्वथा ॥२४॥ यशोदात्मज गोपीश यथा प्रेरयसीह माम् ॥ तथा ब्रवीमि मे नाथ दोषो :मास्तु कदाचन ॥ २५:॥ श्रीविश्वनाथविजयध्वजजीवगोस्वामीचित्सुखश्वसनजादिभिरीरितायाः ॥ टीका अतीवगहनाः सुविलोक्य शास्त्रं श्रीभारतं च रचितोयमपि प्रबंधः ॥ २६ ॥ अथ माथुरविद्वज्जनप्रेरणया श्रीवंशीधरशर्मा माथुरमण्डलावतीर्णश्रीकृष्णप्रीतये श्रीधरस्वामिभावार्थदीपिकारंभकृतश्रीरामप्रणतिलक्षणं मंगलं व्याकरोति ।“ॐनमःश्रीपरमहंसे ” ति ॥ हंसपरमहंसश्रीपरमहंसभेदात्त्रिधा हंसा भवंति । तत्र हंसा हि दुग्धजलविभेदनिपुणाः संति । येषां चंचुस्पर्शाज्जलाद्दुग्धं पृथग्भवति ते च दुग्धं पीत्वांबु त्यजंति परमहंसास्तु चिज्जडविभेदनिपुणा भवंति ते च जडांशं प्रधानं चिदंशं पुरुषरूपमात्मानं पृथग्वर्णयित्वा स्वशिष्येभ्यो ज्ञापयंति । श्रीपरमहंसा हि चैतन्यैकनिष्ठाः प्रकृतिं सर्वथा विचारेण त्यक्त्वा कदापि तां न स्मरंति किन्तु सर्वदा चैतन्यरूपमेव परमात्मानं भावयंति ते च शुद्धप्रेमभक्ताः श्रीविष्णुमेवान्येभ्योऽप्युपदिशंति प्रकृतिं तच्छक्तित्वात्ततो भिन्ना नेच्छंति प्रकाशशक्तिः रवेरिव तैः श्रीपरमहंसैः श्रीनारदादिशुद्धभक्तैरास्वादितः सेवितश्चासौ चरणकमलयोश्चिदेव मकरंदो यस्य तस्मै भक्तजनानां मानसे चेतसि निवासो यस्य तस्मै श्रयति सेवते सदा रामचरणमिति श्रीः । रमन्ते यो

वागीशा यस्य वदने लक्ष्मीर्यस्य च वक्षसि ॥ यस्यास्ते हृदये संवित्तं नृसिंहमहं भजे ॥ २ ॥
विश्वसर्गविसर्गादिनवलक्षणलक्षितम् ॥ श्रीकृष्णाख्यं परं धाम जगद्धाम नमाम तत् ॥ ३ ॥

गिनो ध्यानेन क्रीडन्त्यत्रेति रामः । यद्वा राति कुक्षौ विश्वं गृह्णाति प्रलये इति रः । यद्वा रापयति प्रकाशयति सर्वमिति रः । रा दीप्त्यादानयोस्ततः पक्षे केवलात्पक्षेंतर्भावितण्यर्थाड्डः । अम्यते प्राप्यते भक्त्या दिनेत्यमः । अम गत्यादौ । रश्चासावमश्चेति रामः । जगज्जन्मादिहेतुर्मुक्तप्राप्य इत्यर्थः । चंदत्यानंदयति त्रैलोक्यं रावणादिवधेनेति चन्द्रः । रामश्चासौ चंद्रश्चेति रामचंद्रः श्रिया सहितो रामचंद्रः श्रीरामचंद्रस्तस्मै । रात्यखिलं यद्वा राजते रघोः कुले वा रामः । यद्वा राणां राक्षसानां मरणं येनेति वा राम इति । अत्राथर्वणीयरामतापनीयोपनिषत्प्रमाणम् । “ चिन्मयेस्मिन्महाविष्णौ जाते दाशरथे हरौ । रघोः कुलेखिलं राति राजते यो महीस्थितः ॥ स राम इति लोकेषु विद्वद्भिः प्रकटीकृतः । राक्षसा येन मरणं यांति स्वोद्रेकतोथ वा ॥ रामनाम भुवि ख्यातमभिरामेण वा पुनः । राक्षसान्मर्त्यरूपेण राहुर्मनसिजं यथा ॥ प्रभाहीनांस्तथा कृत्वा राज्यार्हाणां महीभृताम् । धर्ममार्गं चरित्रेण ज्ञानमार्गेण नामतः ॥ यथा ध्यानेन वैराग्यमैश्वर्यं यस्य पूजनात् । तथा रात्यस्य रामाख्या भुवि स्यादथ तत्त्वतः ॥ रमंते योगिनोनंते नित्यानंदे चिदात्मनि । इति रामपदेनासौ परब्रह्माभिधीयते ॥ चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः । उपासकानां कार्यार्थे ब्रह्मणो रूपकल्पना ” इत्यादि । ननु श्रीमद्भागवतशास्त्रे आदिमध्यावसानेषु श्रीकृष्णस्यैव प्रतिपाद्यत्वं मुख्यत्वेनास्त्यतस्तन्मंगलमेवादौ विधेयमस्ति यद्वा श्रीधरस्वामिनो हीष्टदेवः श्रीनृसिंहोस्ति तन्मंगलं वा विधेयम् । वस्तुतस्तु “कार्यारंभे गणेशश्च पूजनीयः प्रयत्नतः” इति स्मृतेर्गणेशमङ्गलस्याप्यावश्यकत्वमस्ति तत्कुतः श्रीरामचंद्रमंगलं कृतमिति चेदत्रेदमवधेयम् । यद्यपि श्रीभगवतः सर्वावताररूपाणां वस्तुतस्तुल्यतैव तथापि श्रीरामचंद्रं विना समुद्रे सेतुर्न कुत्राप्यवतारे कृतोस्त्यतस्तत्कृपया ममापि श्रीभागवतार्णवटीकारूपसेतुकरणं भूयादिति विमृश्यैव श्रीरामनतिरूपं मंगलं कृतमिति प्रतीयते यद्वा बालगोपालानां श्रीराम एव परमेश्वरत्वेनावसितोतः सर्वप्रसिद्धपरेशनतिरेवादौ युक्तेति ॥ १ ॥ रसाकारब्रह्मभजनेनैवाभीप्सितचतुर्वर्गसिद्धिरिति श्रीमद्भागवतसिद्धांतं सूचयन्निजेष्टस्मरणमंगलमाह वागीशेति । वाचामीशा सरस्वती । यद्वा ईशा विधिनिषेधयोर्जीवान्नियमयंती वेदलक्षणा वागिति । अनेन वदनस्मरणेनापरविद्यावाप्तिर्ध्वनिता । श्रीर्हेमरेखारूपेणास्ते इति अनेनोरःस्मरणेनेष्टसंपल्लाभो ध्वनितः । तदेवमपरविद्यालक्ष्म्यवाप्त्या त्रिवर्गसिद्धिः सूचिता । संवित्परविद्या अनेन हृदयस्मरणेन मोक्षावाप्तिश्च सूचिता । तदुक्तं “या वै साधनसंपत्तिः पुरुषार्थचतुष्टये । तया विना तदाप्नोति नरो नारायणाश्रयः ॥ ” इति । वक्ष्यति च । “धर्मार्थकाममोक्षाख्यं य इच्छेच्छ्रेय आत्मनः । एकमेव हरेस्तत्र कारणं पादसेवनम्” इति । त्रियते विक्षिप्यते चेतस्त्रैलोक्यं वाऽनेनेति नाविषयसमूहो हिरण्यकशिपुश्च तं हिनस्तीति नृसिंहस्तम् । यद्वा नृणां सिंहः श्रेष्ठतमो वीर्यवत्तरश्चेति नृसिंहः तदुक्तं नृसिंहतापनीये “ अथ कस्मादुच्यते नृसिंहमिति । यस्मात्सर्वेषां भूतानां सिंहो वीर्यतमः श्रेष्ठतमश्च तस्मान्नृसिंह आसीत्परमेश्वरो जगद्धितं वा एतद्रूपमक्षरं भवति । प्रतद्विष्णुस्तवते वीर्येण मृगो नभीमः कुचरोगिरिष्ठाः ॥ यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ तस्मादुच्यते नृसिंहमिति ” ॥ २ ॥ विश्वसर्गेति ॥ कृष्णाख्यमिति नामरूपोक्त्यापि मायातत्कार्यरहितमित्याह परं धाम मुक्तप्राप्यमित्यर्थः । इत्थमेव “वेत्ता च वेद्यं च परं च धाम” इति भाष्यकृद्भिर्व्याख्यातं जगतो धामेति लक्ष्यरूपतोपपादनम् ॥ श्रीदशमे व्याख्यातव्यमर्पीहौत्सुक्याच्छ्रीकृष्णं प्रणौति स्वामी ॥ विश्वसर्गेति ॥ वयं तदनिर्वचनीयमियत्तया गुणरूपादि वेयदीदृगिति वक्तुमशक्यं धाम तेजोरूपं ब्रह्म नमाम । बहुत्वं शिष्याभिप्रायम् । नमतेः “विधिनिमंत्रणामंत्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् । लोट् च ” इति प्रार्थनायां लोट् । नमनेन प्रार्थयाम इत्यर्थः । ननु यत्तदोर्नित्यसंबंधादत्र यच्छब्दोपादानं कथं न कृतमिति चेत्तत्राह तत्त्वमसीति श्रुतौ । तदिति ब्रह्मणो नामेति श्रुतौ च तच्छब्दस्य ब्रह्मवाचकत्वदर्शनात्तच्छब्दोत्र ब्रह्मवाचकः । सोहं हंस इत्यत्र च ततश्चात्र यच्छब्दोपादानं नापेक्षते “ प्रक्रांतप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते” इति काव्यप्रकाशोक्तेः । यथा

**माधवो माधवावीशौ सर्वसिद्धिविधायिनौ ॥ वंदे परस्परात्मानौ परस्परनुतिप्रियौ ॥ ४ ॥**

कुमारसंभवे " कला च सा कांतिमती कलावतः " इत्यत्रेति ॥"गृहदेहत्विट्प्रभावा धामानि" त्यमरः । किं भूतं श्रीयते सेव्यते ब्रह्मादिभिः श्रीकृष्णेन वेति श्री राधा "सर्वैराप्रूज्यते देवै राधा वृन्दावने वने" इति. ब्रह्मांडे ब्रह्मोक्तेः " यच्चिंत्यमखिलेश्वरैः " इति तत्रैव नारदोक्तेश्च । " राधैवाराध्यते मया " इति श्रीकृष्णोक्तेश्च । "राध्यते सा भगवता राधा इत्यभिधा स्फुटम् ।" इत्यादिपुराणोक्तेश्च श्रीशब्दो राधार्थकः । यद्वा श्रयत्याराध्नोति सर्वदा वृन्दावननिकुंजगं श्रीनंदनंदनमिति निरुक्त्यापि श्रीराधैव । " वृंदावने निकुंजस्थो राध्यते सर्वदा यया । नन्दसूनुरतो राधा सोच्यते मुनिसत्तम " इति नारदीयात् । कृषति निजसमीपमाकर्षति वेणुरवेण बल्लवीगणमिति कृष्णो यशोदानंदनः । ननु मधुरगीतादिना त्वन्येपि प्रमदागणमाकर्षंति तत्र को विशेष इत्यरुच्याह । कृषति विलिखति निजानां संसारमिति कृष्णः । सदानन्दरूपो भक्तजनपापौघनाशकश्च । " कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" इति तापनीयश्रुतेस्सदानंदरूपः । " कोटिजन्मकृतं पापं कृषिरित्युच्यते बुधैः । तन्नाशनकरो देवः कृष्ण इत्यभिधीयते ॥ " इति ब्रह्मवैवर्तोक्तेः । पापौघनाशकश्च कृष्णपदार्थः । श्रिया राधया सहितः कृष्णः श्रीकृष्णः । यद्वा " श्रीश्च ते लक्ष्मीश्च ते पत्न्यौ " इति श्रुतौ श्रीपदेन राधा लक्ष्मीपदेन चाभ्यां तुलसीसरस्वत्यौ ग्राह्ये । " लक्ष्मी सरस्वती बिष्णोस्तुलसी च तृतीयिका । गंगा चतुर्थी विज्ञेया भार्या वैकुंठवासिनः ॥" इति प्रकृतिखंडे बहुधोक्तेः । श्रीशब्देनैव गंगाया अपि ग्रहणम् । तथा च श्रीश्च श्रीश्च श्रीश्च श्रीश्चेत्येकशेषसमासेन श्रिय इति स्यात् । तथा च श्रीभी राधारमागंगागीर्भिस्सहितः कृष्णः श्रीकृष्णः स आख्याऽभिधा यस्य तच्छ्रीकृष्णाख्यम् । गोस्त्रियोरितिह्रस्वः । एतेनैताभिस्सह श्रीकृष्णनत्या प्रेमसंपत्पावित्र्यवाग्वैभवाश्च नमस्कर्त्तुरवश्यं भाविन इति ध्वनितम् । पुनः सर्गश्च विसर्गश्च सर्गविसर्गौ विश्वस्य सर्गविसर्गौ विश्वसर्गविसर्गौ तावादी येषां स्थानादीनां तानि च नवलक्षणानि विश्वसर्गविसर्गादिनवलक्षणानि तैर्नवभिर्लक्षितं लक्ष्यत्वेन ज्ञापितं यद्यपि " अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः । मन्वंतरेशानुकथा निरोधो मुक्तिराश्रयः ॥ " इति लक्षणानि दशोक्तानि । तथापीहाश्रयरूपस्य दशमस्य लक्ष्याभिप्रायेण नवेत्युक्तिर्बोध्या । पुनः परं सर्वेभ्यः परतरम् " इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः ॥ पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥ " इति श्रुतेः । यद्वा परं निर्भयम् । " भीषास्माद्वातः पवते " इत्यादिश्रुतेः " यद्बिभेति स्वयं भयम् " इत्युक्तेश्चास्मात्सर्वेषां भयं न त्वस्य कस्यचिदपि तदित्यर्थः । अन्येषां देवानां गृहीतशास्त्रत्वेन सभयत्वप्रतीतेः श्रीकृष्णस्य वंशीविभूषितकरत्वान्निर्भयत्वं स्फुटमिति । पुनर्जगतामनेकब्रह्मांडानां धामेति तत्पुरुषेणाश्रयरूपलक्ष्यत्वञ्च स्फुटमेव । " ईदृग्विधाविगणितांडपराणुचर्या वाताध्वरोमविवरस्य च ते महित्वम्" इति परमेष्ठ्युक्तेः । जगंति स्थावरजंगमात्मकानि सर्वाणि धामानि यस्येति समासस्तु सर्वांतर्यामितामाह । अत एव वक्ष्यति " कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् " इति । ननु " तस्मा इदं भागवतं पुराणं दशलक्षणम् " इत्युक्तेः सर्गादीनि दश महापुराणलक्षणानि श्रीमद्भागवतस्यैव संति कथं तानि श्रीकृष्णस्य संजाघटतीति तत्रेदमवधेयम् । "इदं भागवतं नाम पुराणं ब्रह्मसंमतम्" इत्युक्तेः " तेनेयं वाङ्मयी मूर्त्तिः श्रीकृष्णस्य न संशयः " इति पाद्मोक्तेश्च :श्रीकृष्णश्रीभागवतयोर्भेदाभावेनैक्यात्तत्रापि तानि न विरुद्धानीति । किञ्चैतानि च सर्गादीनि सर्वमहापुराणसाधारणानि श्रीभागवतस्य लक्षणान्युक्तानि यच्चासाधारणं लक्षणं तदिहैव मात्स्याद्युक्तं वक्ष्यति " ग्रंथोष्टादशसाहस्र " इत्यादिना । लक्षणञ्च लक्ष्यतावच्छेदकसमनियतत्वम् । लक्ष्यं च यदुद्दिश्य लक्षणं प्रवर्त्तते इति । इह च महापुराणं लक्ष्यं तत्र लक्ष्यतावच्छेदकं महापुराणत्वं तत्समनियतत्वं सर्गादिदशकस्येति समन्वयः । श्रीभागवतस्य महापुराणत्वं तु द्वादशे वक्ष्यति । " श्रीमद्भागवतं नाम सर्गादिदशलक्षणम् । महापुराणमल्पञ्च पंचलक्षणमिष्यते ॥ " इति । यत्त्वमरसिंहेन 'पुराणं पंचलक्षणम्' इत्युक्त्वा पंचलक्षणस्यैव पुराणत्वं प्रतिपादितं तदल्पपुराणविषयमेवान्यथा " दशलक्षणसंयुक्तं पुराणं कवयो विदुः । केचित्पंचविधं ब्रह्मन्महदल्पव्यवस्थया । " इति व्यासोक्तिर्व्याकुप्येतेति ॥ ३ ॥ अथ हरिहरयोरभेदज्ञानान्निर्बाधेष्टसिद्धिरिति बोधयन्नेतौ स्मरति ॥ माधवेति ॥ माया लक्ष्म्या धवः पतिर्मधुवंशे भवो वा मां मायां धुनोति " विलज्जमानया यस्य स्थातुमीक्षापथेमुया । " इत्युक्तेर्द्रावयतीति वा माधवो विष्णुः, उमायाः पार्वत्या धव उमाधवः स च स च माधवोमाधवौ । 'मा मायालोकमात्रोः' इति 'धवः

सम्प्रदायानुरोधेन पौर्वापर्यानुसारतः ॥ श्रीभागवतभावार्थदीपिकेयं प्रतन्यते ॥ ५ ॥ क्वाहं मंदमतिः क्वेदं मंथनं क्षीरवारिधेः ॥ किं तत्र परमाणुर्वै यत्र मज्जति मंदरः ॥ ६ ॥ मूकं करोति वाचालं पंगुं लंघयते गिरिम् ॥ यत्कृपा तमहं वंदे परमानंदमाधवम् ॥ ७ ॥

पतिर्धवो भीरुः ' इति च धरणिः । ' उमा कात्यायनी गौरी' इत्यमरः । सशक्तिकनतिस्तु वर्णनशक्त्याधिक्यलाभायेति ध्येयम् । ईशाविति ईश्वरद्वयासंभवादभेद एव तयोः पर्यवस्यतीत्याह । नामरूपादिभेदस्तु तत्तद्भक्तप्रीतिवशाज्जात इति । तदुक्तं " हरहर्योः प्रकृत्यैक्यं साधनैक्यं तथापि तौ । प्रत्यये भजतां रुच्यां संप्राप्तौ भिन्नरूपताम् ॥ " इति हरिहरशब्दयोस्तदर्थभूतविष्णुशिवयोश्च प्रकृतिश्चिद्रूपतास्त्रभावो हृञ् हरण इति धातुश्च साधनं भजनादिकं कर्त्राद्यर्थप्रत्ययगुणोत्पादनञ्च प्रत्ययः प्रतीतिः अकारेकारौ च रुचिरिच्छा मेवश्यामकर्पूरगौरकांतिश्च रूपं चतुर्भुजपंचमुखत्वादि अकरांतेकारांतशब्दरूपं च । भजतां नामसेविनाम् इच्छयाऽकारेकारादिप्रत्यये कृते सतीत्यन्वयः । अथ भक्तानां प्रत्यये प्रतीतौ कांत्या भिन्नरूपतामिति च । सर्वाश्च ताः सिद्धयो जन्मौषधितपोमंत्रयोगजरूपास्तासां विधायिनौ कर्त्तारौ । जन्मसिद्धयः पक्ष्यादीनां वियद्गमनाद्याः औषधिसिद्धयो रसायनादिना वलीपलितादिनाशनादयस्ताम्रादेः स्वर्णरूप्यादिसंपादनाद्याश्च तपःसिद्धयो यथा कर्दमादीनां विमानसंपादनाद्याः मंत्रसिद्धयो वृश्चिकसर्पादेर्विषहरणाद्याः योगसिद्धयोऽणिमाद्या इति विवेकः । परस्परमात्माऽभेदो ययोस्तौ परस्परात्मानौ परस्परैकस्वरूपौ 'शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः । ईषदप्यंतरं कृत्वा रौरवं नरकं व्रजेत्" इत्यादिपुराणात् । "यो हरिः स शिवः साक्षाच्छिवः स हरिः स्मृतः" इति हरिवंशाच्च " मम रुद्रस्य यः कश्चिदंतरं परिकल्पयेत् । तस्य पुण्यक्रियाः सर्वा निष्फलाः स्युर्न संशयः " इति पाद्मे सत्यां प्रति श्रीकृष्णोक्तेश्च । पुनः परस्परं या नुतिः स्तुतिस्सा प्रिया ययोस्तौ । शिवस्तुत्या विष्णुः प्रीणाति विष्णुस्तुत्या च शिवः प्रीणातीति । नतिप्रियाविति पाठे तु परस्पराणामन्योन्यभक्तानां या नतिस्सा प्रिया ययोस्तौ तथा वैष्णवो भूत्वा यदि शिवं नमति तदा विष्णुः प्रीणाति शैवो भूत्वा यदि विष्णुं नमति तदा शिवः प्रीणातीति । "शैवो भूत्वा नमेद्विष्णुं तेन शंभुः प्रसीदति । वैष्णवश्चेन्नमेच्छंभुं तेन विष्णुः प्रसीदति ॥ " इति संहितोक्तेः । किञ्च लंकाविजयावसरे श्रीरामचन्द्रेणाब्धितटे शिवलिंगं संस्थाप्य तस्य 'रामेश्वर' इति नाम कृतं तदाकर्ण्य मुनिभिः श्रीरामः पृष्टो भगवन्कोऽस्य पदस्यार्थस्तदा श्रीरामेणोक्तं रामस्येश्वरो रामेश्वरः पुनश्च संशयाकुलितैः श्रीशिवः पृष्टो भगवन्नब्धितटश्रीरामस्थापितरामेश्वराख्यलिंगस्य कोऽर्थस्तदा श्रीशिवः प्राह राम ईश्वरो यस्येति रामेश्वरः पुनर्मुनिभिर्विमृष्टमेतौ परस्परनुतिप्रियत्वाद्वस्तुत एकस्वरूपावेवेति तदुक्तं "रामस्तत्पुरुषं ब्रूते बहुव्रीहिं महेश्वरः ॥ रामेश्वरपदे प्राप्ते मुनयः कर्मधारयम्" इति ॥ ४ ॥ संप्रदायेति ॥ संप्रदायो ब्रह्मादिपरंपरागताद्वैतरूपस्तदनुवर्तनेऽपि पौर्वापर्यस्मरणमावश्यकमन्यथा " कृष्णस्तु भगवान्स्वयम् " इत्यादिपूर्वापरवाक्यानालोचने । ' अथाहमंशभागेन ' इत्यादावंशावतारत्वादिव्याख्यानं स्यात् । अथवा संप्रदायः श्रीमद्भागवतव्याख्यानपद्धतिः सा यथा ब्रह्मणा नारदं प्रति "त्वमेतद्विपुलीकुरु" इत्युक्त्वा "यथा हरौ भगवति नृणां भक्तिर्भविष्यति । सर्वात्मन्यखिलाधारे इति संकल्प्य वर्णय " इत्यादिरूपा । हरिलीलाप्राधान्येन श्रीभागवतं वर्णय न तु भक्तिरसविघातेन केवलं तत्त्वमिति । यथा भगवत्पादैः "मामेव ये प्रपद्यंते " इत्यादिपदानां भगवदेकशरणार्थं विहाय ब्रह्मात्म्यैक्यज्ञानार्थतादिव्याख्यातं तथात्र भक्तिप्राधान्यविधौ " भक्तिः सिद्धेर्गरीयसी । भक्त्याहमेकया लभ्यः " इत्यादौ भक्तिरसविघातकं ज्ञानादिप्राधान्यतया व्याख्यानं न कार्यमिति ब्रह्मणा पद्धतिर्विहिताऽत एव " नंदगोपकुमाराय" इत्यादौ नंदयतीति नंदः गां वेदलक्षणाम् वाणीं पातीति गोपः कुमविद्यां मारयतीति कुमारः नन्दश्चसौ गोपश्चासौ कुमारश्चेत्येवं भागवतं व्याचिकीर्षुः कश्चिद्विपश्चियतिः श्रीकृष्णेनैव वारित इति महाजनप्रसिद्धेः । तथा च ब्रह्मोपदिष्टसंप्रदायानुरोधेनेत्यर्थः । तदनुरोधेपि पौर्वापर्यानालोचने कृष्णेंशतया व्याख्यानं मायाप्रतिबिंबत्वं मायिकविग्रहत्वं मध्वाद्यभिप्रेतकेवलभेदादिव्याख्यानं च स्यात् । स्वरसतः पौर्वापर्यालोचने नैतदिति ध्येयम् । अक्षरार्थपदार्थवाक्यार्थास्तु श्रीभागवतस्य दुर्ज्ञेया इति मत्वाह । श्रीभागवतस्य भावार्थानां निर्गलितानां यद्वा श्रीभागवते श्रीकृष्णे यो भावो भक्तिः स एवार्थः प्रयोजनं यस्यास्सा चासौ दीपिका चेति तथा वितन्यते विस्तार्य्यते ॥ ५ ॥ वस्तुतो नाहं भावार्थप्रकाशनेऽपि शक्त इत्याह । क्वेति । द्वौ क्वशब्दौ महदंतरं द्योतयतः । यत्र क्षीराब्धौ मंदरोऽयुतयोजनप्रमाणो गिरिभेदः मज्जत्यधोगच्छति तत्रैव क्षीराब्धौ परमाणुर्जालांतर्गतद्व्यत्रसरेणुषष्ठो भागः । तदुक्तं " जालांतरगते भानौ यत्सूक्ष्मं दृश्यते रजः । तस्य षष्ठतमो भागः परमाणुः स उच्यते ॥ " इति ॥ ६ ॥ मूकमिति ॥ वाचालं भूषितं पर्याप्तं वा । लंघयते । इह लंघनफलस्यानात्मगामित्वादात्मनेपदं नेष्टमिति न ध्येयम् " ततान सोपानपरंपरामिव " इत्यादौ

ॐ जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदिकवये मुह्यंति यत्सूरयः ॥
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १ ॥

श्रीमद्भागवताभिधः सुरतरुस्तारांकुरः सज्जनिः स्कंधैर्द्वादशभिस्ततः प्रविलसद्भक्त्यालवालोदयः ॥ द्वात्रिंशत्त्रिशतं च यस्य विलसच्छाखाः सहस्राण्यलं पर्णा न्यष्ट दशेष्टदोऽतिसुलभो वर्वर्ति सर्वोपरि ॥ ८ ॥ अथ नानापुराणशास्त्रप्रबंधैश्चित्तप्रसत्तिमलभमानस्तत्रतत्रापरितुष्यन्नारदोपदेशतः श्रीमद्भगवद्गुणानुवर्णनप्रधानं भागवतशास्त्रं प्रारिप्सुर्वेदव्यासस्तत्प्रत्यूहनिवृत्त्यादिसिद्धये तत्प्रतिपाद्यपरदेवतानुस्मरणलक्षणं मंगलमाचरति जन्माद्यस्येति ॥ परं परमेश्वरं धीमहि । ध्यायतेर्लिङि छांदसं ध्यायेमेत्यर्थः । बहुवचनं शिष्याभिप्रायम् । तमेव स्वरूपतटस्थलक्षणाभ्यामुपलक्षयति । तत्र स्वरूपलक्षणं सत्यमिति । सत्यत्वे हेतुः । यत्र यस्मिन्ब्रह्मणि त्रयाणां मायागुणानां तमोरजः सत्त्वानां सर्गो भूतेन्द्रियदेवतारूपोऽमृषा सत्यः यत्सत्यतया मिथ्यासर्गोऽपि सत्यवत्प्रतीयते तं परं सत्यमित्यर्थः । अत्र दृष्टान्तः । तेजोवारिमृदां यथा विनिमय इति । विनि

कालिदासादिभिस्तन्मर्यादाया अनादृतत्वात् । अत्र परमानंदमाधवेति गुरुनामेति संप्रदायविदस्तेन गुरुवंदनमपि फलितम् । “ एका क्रिया द्व्यर्थकरी प्रसिद्धा . रसालसेकः पितृतर्पणञ्च ” इति न्यायात् । मूकोत्र शास्त्राभ्यासरहितो ज्ञेयः । इह ध्रुवो दृष्टांतः । पंगुः पादरहितः । अत्र दृष्टांतो गरुडाग्रजः । यद्वा यत्कृपा यत्सामर्थ्यं वाचालमपि मूकं करोतीति । अत्र दृष्टांतः कात्यायनः । कात्यायनो हि शंकरदत्तसूत्रव्याख्याप्रवृत्तपाणिनिं पराजिग्ये स च रुद्रं प्रति वृत्तं श्रावयामास रुद्रेणोक्तं मदभिमुखं शास्त्रार्थे तं योजय पुनस्तमहं शासिष्यामीति स तथैव कृतवान्पुनः खंडनप्रवृत्तं कात्यायनं शंकरोहमित्युक्त्वा मूकं चकार पुनः स रुद्रं ध्यानेनाराध्य वाग्व्यापारं लेभे रुद्राज्ञया पाणिनिन्यूनतां स्ववार्त्तिकैः पूरयामासेत्यैतिह्यात् । इहापि विष्णुशिवयोरभेद एवाभिप्रेतः ॥ ७ ॥ भक्तिभक्तभगवन्माहात्म्यप्रतिपादकं शास्त्रमपि श्रवणपठनपूजनवंदनादिभिः काममोक्षादिप्रदं कि मुत भक्ताभक्तिर्भगवांश्चेति व्यंजयितुं श्रीमद्भागवतशास्त्रं स्तौति । श्रीमदिति ॥ श्रीमद्भागवतमिति षडक्षरमभिधा यस्य “ श्रीमद्भागवते महामुनिकृते ” इति मूले व्यवहारात् । भागवतमिति । व्यवहारस्तु भामा सत्येति वत् । “तारः प्रणव ओंकार” इति विश्वः । स ब्रह्मैव जनिर्बीजं यस्य सः । स्कन्धैः प्रकांडैः ततो विस्तृतः । तनोतेः क्तः । प्रविलसंती देदीप्यमाना या भक्तिः सैवालवालः परितः कृतजलस्थित्यर्थं मध्यपरिमाणः खातस्तत्रोदयोऽत्र स्थितिर्यस्य सः । द्वात्रिंशच्च त्रयश्च शतानि चेति त्रिपदद्वंद्वः । ‘ कपिंजलानालभेत ’ इतिवदनिर्द्धारितविशेषं बहुत्वं त्रित्वे पर्यवस्यति तेन पञ्चत्रिंशदधिकशतत्रयसंख्याकाः शाखा इत्यर्थः । समाहारोत्तरद्वंद्वे तु त्रिशतीति स्यादिति । एतेनाघासुरवधाद्यध्यायाभिप्रायैः द्वात्रिंशत्पदमिति कस्यचिदुत्प्रेक्षितं प्रत्युक्तम् । हरिलीलाग्रंथे बोपदेवेन “ निरोधो दशमस्कंधे नवत्यध्याय ईरित ” इत्युपक्रम्य “ वधश्च वत्सवकयोस्तथाघासुरभोगिनः । वत्सचोरब्रह्ममोहो ब्रह्मणा स्तवनं हरेः ॥” इत्युक्तत्वेन तद्विरोधापत्तेः । अष्ट दश च सहस्राणीति पृथक्पदत्वेनान्वयः । समासे त्वष्टादशेति स्यात् । इष्टं सकामानां त्रिवर्गं निष्कामानामपवर्गश्च ददातीतीष्टदः । अतिसुलभो नृणां कल्पवृक्षापेक्षया । सुरतरुर्हि स्वर्गं गत्वा लभ्यतेऽयं त्वत्रैव लभ्यते इत्यत उक्तमतिसुलभ इति । सर्वेभ्यः पुराणेतिहासादिशास्त्रेभ्य उपर्युपरिष्टादलौकिकफलदत्वादतिशयेन वर्त्तते ॥ ८ ॥ तदेव दर्शयितुं ग्रंथावतरणिकामाह अथेति । नानापुराणानां श्रीमद्भागवतेतराणां शास्त्राणां धर्मशास्त्रवेदांतशास्त्राणाञ्च प्रबंधै रचनाभिः । चित्तस्य प्रसत्तिं प्रसादम् । तत्रतत्र पुराणेतिहासादिप्रबंधेषु श्रीमद्भागवतः श्रीकृष्णस्य गुणानां लीलानां वर्णनं प्रधानं मुख्यं यत्र तद्भागवतशास्त्रं प्रारिप्सुः प्रारंभं कर्तुमिच्छन् । तस्मिञ्शास्त्रवर्णनादौ ये प्रत्यूहा विघ्नास्तेषां निवृत्यादिसिद्धये आदिना पुनर्विघ्नाभावसिद्धये तस्मिन्भागवते प्रतिपाद्या या परदेवता परब्रह्मरूपा तस्या यदनुस्मरणं मुहुः स्मरणं तदेव लक्षणं स्वरूपं यस्य तत्तथा । “ मंगलादीनि मंगलमध्यानि मंगलान्तानि शास्त्राणि प्रथंते वीरपुरुषका आयुष्मत्पुरुषकाश्चाध्येतारो भवंति” इति भाष्यात् । यद्यपि

मयो व्यत्ययोऽन्यस्मिन्नन्यावभासः । स यथाधिष्ठानसत्तया सद्वत्प्रतीयत इत्यर्थः । तत्र तेजसि वारिबुद्धिर्मरीचितोये प्रसिद्धा । मृदि काचादौ वारिबुद्धिर्वारिणि च काचा दिबुद्धिरित्यादि यथातथमूह्यम् । यद्वा । तस्यैव परमार्थसत्यत्वप्रतिपादनाय तदितरस्य मिथ्यात्वमुक्तम् । यत्र मृषैवायं त्रिसर्गो न वस्तुतः सन्निति । यत्रेत्यनेन प्रतीतमुपा धिसंबंधं वारयति । स्वेनैव धाम्ना महसा निरस्तं कुहकं कपटं मायालक्षणं यस्मिंस्तम् । तटस्थलक्षणमाह । जन्मादीति । अस्य विश्वस्य जन्मस्थितिभंगा यतो भवंति तं धीमहीति तत्र हेतुः । अन्वयादितरतश्च । अर्थेष्वाकाशादिकार्येषु परमेश्वरस्य सद्रूपेणान्वयादकार्येभ्यश्च खपुष्पादिभ्यस्तद्व्यतिरेकात् । यद्वा अन्वयशब्देनानुवृत्तिरितर शब्देन व्यावृत्तिः । अनुवृत्तत्वात्सद्रूपं ब्रह्म कारणं मृत्सुवर्णादिवत् । व्यावृत्तत्वाद्विश्वं कार्यं घटकुंडलादिवदित्यर्थः । यद्वा । सावयवत्वादन्वयव्यतिरेकाभ्यां यदस्य

शास्त्राणि "कपिलस्य कणादस्य गातमस्य पतंजलेः । व्यासस्य जैमिनेश्चापि शास्त्राणि षड्विदुर्बुधाः॥" इत्याभियुक्तोक्तेः षडेव संति । तथापीह सर्वधर्मादिपुरुषार्थशासनान्मुख्यं शास्त्रत्वं श्रीव्यासप्रणीतत्वाच्च षडंतर्वर्त्तित्वमपीति । किञ्च प्रकरणप्रतिपाद्यार्थानां कार्त्स्न्येन प्रतिपादको ग्रंथः शास्त्रमेतस्य शास्त्रलक्षणस्यापि यथाकथंचिदत्र घटनादप्यस्य शास्त्रत्वमेवेत्यलम्॥ जन्मादीति॥ परं परमेश्वरं बिंबभूतमीश्वरमित्यर्थः । तेन मायाप्रतिबिंबितेश्वरव्यावृत्तिः। द्वेधात्र प्रक्रिया । तत्राद्या यथाऽविद्याप्रतिबिम्बो जीवः मायाप्रतिबिम्ब ईश्वरः । स चोपाधिभूतमायायास्त्रैगुण्यात्तत्तद्गुणाविशिष्टमायाप्रतिबिम्बभेदेन ब्रह्मविष्णुशिवरूपो बिम्बभूतस्तु परमेश्वरो निरुपाधिकं ब्रह्मैव।स चादिनारायणः श्रीकृष्ण इत्यादिपदैर्व्यवह्रियते । शिवपुराणादौ शिवादिपदैश्च । स च न स्वांशमायाप्रतिबिम्बितेश्वरधर्मैः सृष्टयादिकर्त्तृत्वादिभिरभिलिप्यते । द्वितीया यथा । अविद्या माया च एकैव तत्प्रतिबिम्बो जीवः बिम्बभूतं चैतन्यमीश्वरो निरुपाधिक एक एव सृष्टयाद्यारोपितधर्मैर्ब्रह्मविष्ण्वादिभेदव्यवहारभाक् । बिम्बत्वप्रतिबिम्बत्वाभ्यामनाक्रांतं शुद्धचैतन्यं निर्द्धर्मकं ब्रह्मेति द्विधैव प्रक्रियात्र शास्त्रे ह्युपलभ्यते । सर्वथैतच्छास्त्रपरमतात्पर्यगोचरो बिम्बभूतपरमेश्वरो निर्गुणं ब्रह्मैव तत्रोपलभ्यमानगुणानां चिन्मयत्वेन प्रकृतिपरिणामभूतगुणाश्रयत्वाभावात् । स्पष्टं चेदम् " मां भजंति गुणाः सर्वे निर्गुणं निरपेक्षकम् । सुहृदं प्रियमात्मानं साम्याः संगादयो गुणाः ॥ " इत्यादौ । तमेव परमेश्वरमेव ॥ स्वरूपतटस्थेति ॥ यत्स्वरूपांतर्गतं सदितरव्यावृत्ततया लक्ष्यं बोधयति । तत्स्वरूपलक्षणं यथा गोः सास्नाशृंगादियावल्लक्ष्यकालमनवास्थितत्वेन स्वरूपानंतर्गतं यल्लक्ष्यमितरव्यावृत्तं बोधयति तत्तटस्थलक्षणम् । यथा गोविशेषस्यालंकारविशेषादि देवदत्तगृहस्य काकादि वा । प्रकृते सत्यं ज्ञानमानंदश्च परमेश्वरस्वरूपमेव सत् । असज्जडदुःखप्रपञ्चव्यावृत्ततया बोधयतीति स्वरूपलक्षणं संपद्यते । जगज्जन्मादिकारणत्वं तु तटस्थलक्षणम्। न हि तत्सर्वदास्ति । प्रलयादिकाले तत्तदभावात् । अतः स्वरूपानंतर्गतं सदाकाशादिव्यावृत्तमीश्वरं लक्षयतीति तटस्थलक्षणमिति त्रयाणामहंकारसंवलितानां तमोरजःसत्त्वानां सर्गो भूतेंद्रियदेवतारूपस्तामसाहंकाराद्भूतसर्गो राजसादिंद्रियसर्गस्सात्त्विकादिंद्रियाधिष्ठातृदेवतासर्ग इति विवेकः । यत्र परमेश्वरे इत्यर्थ इति । मृत्तिकेत्येव सत्यमित्यादावन्यत्रापि सत्यशब्दप्रयोगस्त्वापेक्षिक एव । परमसत्यत्वं तु परमेश्वरस्यैवेति भावः। अत्रान्यसत्तयांऽन्यस्य सत्यत्वे इत्यर्थ इति । न हि परसत्तया परस्य सत्यत्वं वास्तवं भवतीति भावः । तत्रेति वाक्यालंकारे यथायथेति यथायथम् । यथास्वे यथाशब्दस्य द्वित्वमूह्यमिति । वारिणि समुद्रजले दूरत्वदोषेण नीलशिलाबुद्धिः कामलया शंखे पीतबुद्धिश्च । यथा सदसि दुर्योधनस्य स्थलभ्रमः यथा वान्धकारस्थरत्नरूपमृदि खदिरांगारभ्रम इत्यादिपदाद्ग्राह्यम् । मिथ्यापदार्थस्यामिथ्यात्वसाधनं न शोभनमिति॥चेत्तत्राह॥यद्वेति आधाराधेयभावेन सोपाधिकत्वमाक्षिप्यापाकरोति यत्रेत्यादिना । कुहकमज्ञानम् । अनावृतसंविद्रूपे बिम्बभूत ईश्वरेऽज्ञानाश्रयत्वासंभवात् । अज्ञानविषयमात्रेण भ्रमाधिष्ठानता ।न च तावतैश्वर्यहानिः अज्ञानविषये मण्यादौ कपर्दिकाद्यारोपेपि स्वरूपप्रकाशादेर्बाधादर्शनात जन्मादि यस्य स्थितिभंगस्य तथा तद्गुणसंविज्ञानः यत इत्यव्ययनिर्देशः कारणस्याविकृतत्वमाह । तत्र परमेश्वरस्य कारणत्वे सद्रूपेण घटः सन्पटः सन्नित्येवं रूपेण यत्सत्त्वे यत्सत्त्वं सोन्वयः घटादिसत्त्वे सत्तासत्त्वस्य दृश्यमानत्वादन्वयः । आदिना वंध्यात्मजादिग्रहः । यदभावे यदभावः स व्यतिरेकः । खपुष्पाद्यभावे तत्र सत्ताया अप्यभावात्खपुष्पं सदिति प्रयोगादर्शनाद्व्यतिरेकः । अत्र न केवलं सत एवान्वयव्यतिरेकौ विमृश्यौ । किं तु मृदादिविशिष्टस्यैव सतस्तौ । तथा च मृदादिविशिष्टसत्ताव्यतिरेकाधिकरणं तु तंत्वादिभावरूपमपि प्रसिद्धं तत्कथमलीकस्य खपुष्यादेस्तदधिकरणतेत्यपरितोषादाह॥ यद्वेति ॥ अनुवृत्तिस्तादात्म्येन प्रतीतिः व्यावृत्तिर्भेदः कार्येषु कार

जन्मादि तद्यतो भवतीति संबंधः । तथा च श्रुतिः । " यतो वा इमानि भूतानि जायंते । येन जातानि जीवंति । यत्प्रयंत्यभिसंविशंति " इत्याद्या । स्मृतिश्च " यतः सर्वाणि भूतानि भवंत्यादियुगागमे ॥ यस्मिंश्च प्रलयं यांति पुनरेव युगक्षये " इत्याद्या । तर्हि किं प्रधानं जगत्कारणत्वाद्ध्येयमभिप्रेतं नेत्याह । अभिज्ञो यस्तम् । " स ईक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजत " इति श्रुतेः । " ईक्षतेर्नाशब्दम् " इति न्यायाच्च । तर्हि किं जीवो ध्येयः स्यान्नेत्याह । स्वराट् स्वेनैव राजते यस्तं स्वतः सिद्धज्ञानमित्यर्थः । तर्हि किं ब्रह्मा ध्येयः । "हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्" इति श्रुतेः नेत्याह । तेन इति । आदिकवये ब्रह्मणेऽपि ब्रह्म वेदं यस्तेने प्रकाशितवान् । " यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तꣳह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये " इति श्रुतेः । ननु ब्रह्मणो

णस्यानुवृत्तिर्यथा सुवर्णकटकं सुवर्णमिति तादात्म्येन प्रतीतेः । कार्यस्य कारणावस्थायां नानुवृत्तिः । यथा सुवर्णे कुंडलं कटकं वेति प्रतीत्यभावात् । ननु मीमांसकैर्जगज्जन्माद्यनंगीकारात् । कथं जन्मादिकारणत्वं भगवत इति चेदाह ॥ यद्वा सावयवत्वेत्यादि ॥ घटादिष्वात्मनि च गृहीतान्वयव्यतिरेकव्याप्तिकस्य सावयवत्वादिहेतोरस्य पदवाच्यजगति पक्षे परामर्शादिसामग्रीबलाद्यजन्मादि निश्चितं तद्यतो भवतीति सम्बन्धः । हेतुपुरस्सरान्वयव्याप्तिः साध्याभावपुरस्सरा व्यतिरेकव्याप्तिरिति भेदः । तथा च इदं विश्वं जन्मादिमत्सावयत्वात् । यत्र सावयवत्वं घटादौ तत्र जन्मादिमत्त्वं यत्र जन्माद्यभाव आत्मनि तत्र सावयवत्वाभाव इति तटस्थलक्षणप्रतिपदिकां श्रुतिमाह । तथा चेति ॥ यतः परेशात् इमानि चराचराणि भूतानि जीवानि प्रयंति प्रलयं प्राप्नुवंति यद्यमभिसंविशंति सर्वतः प्रविशंतीति श्रुतिपदार्थः । एतदर्थिका स्मृतिरप्यस्तीत्याह ॥ स्मृतिश्चेति ॥ आदौ सृष्ट्यारम्भे यो युगस्यागमस्तत्र चान्त्ये यत्र तिष्ठंतीत्यप्यनुसंधेयम् "अव्यक्तादीनि भूतानि" इत्यादिश्रीगीतोक्तेरव्यक्तशब्दवाच्यप्रधानमत्र भगवच्छ्रीव्यासस्य ध्येयं प्रतीयत इत्याशंक्य समाधत्ते नहींति॥तर्हि शास्त्रारंभे प्रधानं प्रकृतिः अभितो जानातीत्यभिज्ञः सर्वज्ञानवान् स परमेशः ऐक्षत विचारयामास अहं लोकान्नु इति वितर्के सृजै रचयानि।इमान्सर्वान् श्रुत्यर्थनिर्णायको न्यायः न्यायाच्छारीरिकसूत्रादित्यर्थः।सांख्याभिमतं प्रधानं जगत्कारणं न तत्र हेतुरशब्दमिति।अशब्दत्वाद्वेदाप्रतिपाद्यत्वात् नहि वेदो जडं प्रतिपादयति तत्र हेतुःईक्षतेःस ऐक्षतेत्यत्र जगत्कर्त्तरीक्षणश्रवणात् । नन्वीश्वरस्य कर्तृत्वादिकं वैषम्यादिदोषाप्रसंगार्थं जीवकर्मापेक्षं जीवश्च धर्मादिकर्त्ता कर्मद्वारेश्वरस्य सृष्ट्यादिप्रयोजकत्वेन कारणताजयक तृयोधप्रयोजके जेतृत्वश्रुतेः । तथा च जीवो ध्येय इति नेति।अविद्यावृत्तज्ञानैश्वर्यस्य जीवस्य ध्याने फलाभावात् । इत्यर्थ इति अल्पज्ञानजीवध्याने प्रयोजनाभावात्स्वतः सिद्धज्ञानमेव वयं धीमहीति । ननु समष्टिजीवस्य हिरण्यगर्भस्य "हिरण्यगर्भः"इत्यादिश्रुतेस्तदैश्वर्यस्यान्यतः प्राप्त्यश्रवणात्तन्निदानज्ञानस्यापि तथात्वावगतेरनावृत्तत्वमिति श्रुत्यर्थः स्पष्ट एव॥नेति॥नानाविधस्तोत्रैस्तुष्टस्तस्मै वेदं ददाविति व्यंजयति कविपदम्।यः परेशःविदधाति उत्पादयति प्रहिणोति ददाति तस्मै ब्रह्मणे तं देवं देदीप्यमानं ह स्फुटं स्वबुद्धिप्रकाशकमहं मुमुक्षुः शरणं संसाराद्रक्षकमित्यर्थः अत्राक्षिपति ॥ नन्विति ॥ स्वानि शिक्षादियुक्तानि लक्षणानि यस्याः सा स्वलक्षणा । ऋषीणां ज्ञानदानामृषभः श्रेष्ठः विशेषत इदं पद्यं द्वितीयस्कंधे व्याख्यास्यते।पुनराक्षिपति॥नन्विति ॥ इह लोकेष्वतिप्रसिद्धोर्थो न्यायः यथा पूर्वेद्युराचार्याद्वेदमधीत्य सुप्त्वा परेद्युः प्रबुद्ध आचार्यनिरपेक्ष एव पठति तद्वदैनंदिनकल्पेपि । महाकल्पादौ तु जातिस्मरवददृष्टविशेषात्कल्पांतरानुष्ठितकर्मोपासनबललब्धब्रह्मत्वाधिकारः कल्पांतरस्थवेदं स्मरत्वित्यर्थः । सूरयोपि कपिलादयोऽपि । अतएव स्वतः सिद्धज्ञानत्वादेव । असतः प्रपञ्चस्य गायत्र्या सर्वगायत्रीमंत्राव्यभिचारि धीमहीतिपदसंवलितगायत्र्यर्थेन प्रारंभेणेत्यर्थः । चतुर्विंशत्यक्षरत्रिपाच्छंदसा प्रारंभ इत्यर्थो न युक्तः । चतुर्वैदैकगोचरतादृशच्छन्दोविशेषस्य क्वाप्यदर्शनेनैकस्मिन्नस्मिन्नेव पुराणे तदसंभवात् । गायत्र्यर्थतास्येत्थम् । सवितृपदं जगत्प्रसवकारणपरं तदर्थो जन्माद्यस्य यत इत्यनेन पालनादिक्रीडार्थकदेवपदार्थोप्यनेनैव जन्मादीत्यादिपदेन पालनादिग्रहात् । वरेण्यपदार्थः परपदेन परत्वोपपादकानि सत्यादिपदानि भर्गपदार्थो धामपदेन।धीमहीतिपदं स्वरूपेणैव तृतीयपादार्थः । तेने ब्रह्महृदेत्यादिना समष्टिगर्भबुद्धिप्रेरकत्वोक्तेः सर्वव्यष्टिबुद्धिप्रेरकता त्वर्थसिद्धेति । गायत्रीमंत्रेण पदेन वा यां ब्रह्मविद्या ख्यायते सारूप्यते प्रतिपाद्यते येन तद्रूपं प्रतिपाद्यप्रतिपादकाभेदविवक्षया श्रीमद्भागवतमित्यर्थः । ब्रह्मविद्यापदेनात्र सगुणनिर्गुणविद्ययोर्ग्रहणम् । अत्र प्रमाणमाह यथोक्तमित्यादि । गायत्रीं गायत्र्यर्थं धर्मस्य धर्मः प्रोज्झितकैतव इत्युक्तलक्षणभागवतधर्मादिर्विस्तरः वृत्रासुरस्यपरमभागवतत्वात्तद्वधचारितस्यापि भागवतत्व

क्षणत्वम्। अत्र सिंहपदेन सिंहासनं लक्ष्यते। भीमभीमसेनादिवत्। प्रौष्ठपद्यां भाद्रशुक्लपूर्णायाम्। अष्टादशसहस्राणि तत्पुराणं वेदाः प्रमाणमितिवद्व्यधिकरणसंबंधः। पुराणांतरे वामनपुराणे इत्यर्थः। हयग्रीवेणाश्वशिरोयुक्तेन दधीचिमुनिना प्रवर्तिता नारायणवर्माख्या ब्रह्मविद्येत्यर्थः। नारायणवर्मणो ब्रह्मविद्यात्वञ्च "एतच्छुत्वा तथोवाच दध्यङ्ङार्थवणस्तयोः। प्रवर्ग्यं ब्रह्मविद्यां च सत्कृतौ सत्यशंकितः" इत्यत्र टीकोत्थापितवचनेन गम्यते शुकाय प्रोक्तं शुकप्रोक्तम्। केचित् शुकं प्रीणातीति शुकप्रो व्यासस्तेन प्रोक्तमित्याहुः। यद्वा शुकेन परीक्षिते प्रोक्तमिति चास्य शास्त्रस्यानागताख्यानेनैव प्रवृत्तेर्वक्ष्यमाणत्वात्। अत एव॥ लक्षणोक्तिपूर्वकं पाठादिविधाना देवेत्यर्थः। अयं भावः। न लक्षणोक्तिं विना भागवतं दद्यादित्येवं दानादिविधाने भगवता प्रोक्तं भागवतमिति समाख्यां विचार्य च "एवं चकार भगवान्व्यासः कृपणवत्सलः" इत्युक्त्या भगवद्व्यासप्रणीतत्वेन पुराणमात्रस्य भागवतत्वसंभवात् शिवविष्ण्वादिदेवपाणिन्यादिमुनिष्वपि भगवच्छब्दप्रयोगात्तत्प्रतिपादकशिवविष्णुब्रह्मपुराणादेरष्टाध्याय्यादेश्च भागवतत्वसंभवाच्च न सामंजस्येन पदार्थनिर्णयस्तथा च भागवतं नामान्यच्छित्वविष्णुपुराणादिकमेव स्यादित्यतिव्याप्तिशंका स्याल्लक्षणोक्तौ विशेषनिर्णये न शंकनीयं न शंकितुं योग्यं भवति सर्वत्र लक्षणोक्तेरतिव्याप्त्यादिनिरासार्थायाः सत्त्वात्। इत्यपि न शंकनीयमित्यत्रेत्यपीत्युक्त्या ब्रह्मविद्यारूपत्वोक्तेः कर्मविद्यावन्मुमुक्षुभिरसेव्यमित्यपि न शंकनीयमिति बोध्यते। आलयमित्यादौ मुक्तादिसेव्यत्वस्य वक्ष्यमाणत्वाच्च गरुडपुराणेऽप्यस्य प्रशंसा। "अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः। गायत्रीभाष्यभूतोसौ वेदार्थपरिबृंहितः॥ पुराणानां सामरूपः साक्षाद्भगवतोदितः। ग्रंथोष्टादशसाहस्रः श्रीमद्भागवताभिधः" इति ब्रह्मसूत्राणामर्थोऽकृत्रिमो भाष्यभूत इत्यर्थस्तस्मात्तद्भाष्यभूते स्वतः सिद्धे तस्मिन्सत्यर्वाचीनमन्यद्भाष्यं स्वस्वकपोलकल्पितं तदनुगतमेवादरणीयमिति गम्यते। भारतार्थस्य विनिर्णयो यत्र स एतेन भारतेनास्य कथाविरोधो हि प्रातीतिको न वस्तुतः पदार्थानां दुर्ज्ञेयत्वात्। भारतस्यापि तात्पर्यं भागवतवद्भगवत्येवेत्यर्थः। यद्वा भारतस्यार्थविनिर्णयो वेदार्थतुल्यत्वेन विशिष्य निर्णयो यत्रेति गायत्रीभाष्यभूतोसाविति। यत्तु द्वादशे ओं नमस्त इत्यादिगद्येषु तदर्थत्वेन सूर्यः स्तुतस्तत्परमात्मदृष्ट्यैव न तु स्वातंत्र्येणेत्यदोषः। तथैवाग्रे शौनकवाक्यम् "ब्रूहि नः श्रद्दधानानां व्यूहं सूर्यात्मनो हरेः" इति। न चास्य भर्गस्य सूर्यमंडलमात्राधिष्ठानत्वम् मंत्रे वरेण्यशब्देनात्र च ग्रंथे परशब्देन पारमैश्वर्यपर्यंततादर्शितत्वात्। तदेवमग्निपुराणेऽप्युक्तं "ध्यानेन पुरुषोयं च द्रष्टव्यः सूर्यमंडले। सत्यं सदाशिवं ब्रह्म तद्विष्णोः परमं पदम्॥" इति। भविष्येपि "ध्येयः सदा सवितृमंडलमध्यवर्ती नारायणः सरसिजासनसंनिविष्टः। केयूरवान्मकरकुंडलवान्किरीटी हारी हिरण्मयवपुर्धृतशंखचक्रः॥" इति। श्रीमद्भागवताभिध इति॥ भागवतत्वं तु भगवत्प्रतिपादकत्वं श्रीमत्त्वं भगवन्नामादेरिव तादृशस्वाभाविकशक्तिमत्त्वम् नित्ययोगे मतुप्। अतः समस्ततयैव निर्दिश्य नीलोत्पलवद्भगवन्नामत्वमेव बोधितमन्यथा त्वविमृष्टविधेयांशतादोषः स्यात्। "अविमृष्टविधेयांशः समासपिहिते विधौ। विशंति विशिखप्रायकटाक्षाः कामिनां हृदि" इति चंद्रालोकोक्तेः। अत्र विशंतीवद्विशंतीति विधेयं तच्च प्रकृतसमासेन प्राप्यते। विशिखकटाक्षयोः साम्यमात्रं तु प्राप्यत इति। अत एवोक्तम्। श्रीमद्भागवते महामुनिकृते इति॥ अष्टादशसहस्रसंख्यागणनाप्रकारस्त्वित्थम्। दीर्घवृत्तगद्यानुष्टुप्छन्दस्समूहे ग्रंथे द्वात्रिंशदक्षरात्मिकानुष्टुप्परिमाणेन गणनायां पंचोनद्विशत्युत्तरषोडशसहस्रसंख्या १६१९५ संपद्यते उवाचमंत्राः सप्तत्यधिकद्वादशशतसंख्याकाः १२७० अर्द्धश्लोकाः शतद्वयसंख्याः २०० इति श्रीमद्भागवतेऽमुकस्कंधे प्रथमादिरध्याय इति वाक्यानामपि व्यासविरचितत्वेन ग्रंथसंख्यांतर्गतत्वेन तत्संख्या ३३५ पञ्चत्रिंशदुत्तरत्रिशती संकलनयाष्टादशसहस्रसंख्या १८००० संपत्तिः। यद्वा चंडीसप्तशतीन्यायेन मंत्रविभागेनापीयं संख्या संभाव्यते। तथाहि अनुष्टुप्श्लोकगद्यार्धरूपमंत्रा एकादशसहस्राणि द्विसप्तत्युत्तरे द्विशती च ११२७२ दीर्घवृत्तश्लोकानां षट्पंचाशदधिकसप्तविंशति २७५६ संख्याकानामर्धकानि मंत्रा द्वादशाधिकसार्द्धपञ्चसहस्राणि ५५१२ अनुष्टुबर्द्धकान्येकादशाधिकद्विशती २११ उवाचमंत्राणां सप्तत्यधिकद्वादशशतसंख्यानां मध्ये पञ्चषष्ट्युत्तरद्विशतानामनुवादरूपाणां पुरोवादशेषतया तावतो विहायावशिष्टा उवाचमंत्राः पंचोत्तरसहस्रं १००५ सर्वसंकलनयाष्टादशसहस्राणि १८०० आपातत एव संख्या तेन तत्तदध्यायेषु तत्तन्मंत्रगणनया संख्याधिक्यसंकलनमूह्यम् हेमाद्रिप्रभृतिधर्मशास्त्रग्रंथेषु कालखंडादौ 'कलिं सभाजयंत्यार्याः' इत्यादिश्रीमद्भागवतवचनोदाहरणेन कलिधर्मादिनिर्णयात्। कर्मादिकांडत्रयरूपत्वेन सकलवेदादिसाररुपत्वं 'सर्ववेदेतिहासानां सारंसारं समुद्धृतम्' इति वक्ष्यमाणत्वाच्च। किञ्च मुमुक्षूपकाराय हेमाद्रिप्रेरितबोपदेवेन कृते मुक्ताफलग्रंथे पुराणांतरं विहाय श्रीमद्भागवतश्लोकानामेवोदाहरणादेतस्यैव मोक्षैकफलरूपत्वेन मुमुक्षुसेव्यत्वं व्यज्यते। तथा च ग्रंथांतरे तत्पद्यं "विद्वद्धनेशशिष्येण भिषक्केशवसूनुना। हेमाद्रिर्बोपदेवेन मुक्ताफलमचीकरत्॥" इति। अत एव स्वाम्युदाहृतं यदीच्छसि भवक्षयमित्युक्तम्। अत्र शुकप्रोक्तमितिविशेषणेन विष्णुपुराणादीनां योगवृत्त्या भागवतत्वनिरासः। शुकाय प्रोक्तं शुक

प्रोक्तं "शुकमध्यापयामास निवृत्तिनिरतं मुनिः" इत्युक्तेश्चतुर्थीतत्पुरुषः। किञ्च योगवृत्त्या पुराणांतरस्यापि भागवतत्वे हेमाद्रिमाधवमधुसूदनस्वामिकमलाकरभट्टानंतदेवपर्यंतैर्महानिबंधकारैर्निरुपपदं भागवतमुच्चार्य्यैव पुराणस्यास्य वचांसि नोदाह्रियेरन् किंत्वन्यभागवतव्यावर्तकविशेषणमुपादीयेत भागवत इत्युक्त्वान्यपुराणवाक्यमप्युदाह्रियेत। न चैवं क्वाप्युपलभ्यते तस्मादिदमेव भागवतं न त्वन्यत्। किं च श्रीनारदपुराणे पुराणसूत्रेषु मरीचये ब्रह्मणा भागवतसूत्राण्यप्युक्तानि तथा हि " ब्रह्मोवाच ॥ मरीचे शृणु वक्ष्यामि वेदव्यासेन यत्कृतम्। श्रीमद्भागवतं नाम पुराणं ब्रह्मसंमितम् ॥ तदाष्टादशसाहस्रं कीर्तितं पापनाशनम्।सुरपादपरूपोयं स्कंधैर्द्वादशभिर्युतः॥भगवानेव विप्रेंद्र विश्वरूपी सनातनः। तत्र तु प्रथमे स्कंधे सूतर्षीणां समागमे ॥ व्यासस्य चरितं पुण्यं पांडवानां तथैव च। पारीक्षितमुपाख्यानमितीदं समुदाहृतम्॥परीक्षिच्छुकसंवादे सृष्टिद्वयनिरूपणम्। ब्रह्मनारदसंवादे देवताचारितामृतम् ॥ पुराणलक्षणं चैव सृष्टिकारणसंभवः। द्वितीयोयं समुदितः स्कंधो व्यासेन धीमता ॥ चरितं विदुरस्याथ मैत्रेयेणास्य संगमः। सृष्टिप्रकरणं पश्चाद्ब्रह्मणः परमात्मनः ॥ कापिलं सांख्यमप्यत्र तृतीयोयमुदाहृतः। सत्याश्चरितमादौ तु ध्रुवस्य चरितं ततः ॥ पृथोः पुण्यं समाख्यानं ततः प्राचीनबर्हिषः। इत्येष तुर्यो गदितो विसर्गस्कंध उत्तमः ॥ प्रियव्रतस्य चरितं तद्वंश्यानां च पुण्यदम्। ब्रह्मांडांतर्गतानां च लोकानां वर्णनं ततः ॥ नरकस्थितिरित्येष संस्थाने पंचमो मतः। अजामिलस्य चरितं दक्षसृष्टिनिरूपणम् ॥ वृत्राख्यानं ततः पश्चान्मरुतां जन्म पुण्यदम्। षष्ठोयमुदितः स्कंधो व्यासेन परिपोषणे ॥ प्रह्लादचरितं पुण्यं वर्णाश्रमनिरूपणम्। सप्तमो गदितो वत्स वासनाकर्मकीर्तनं ॥ गजेंद्रमोक्षणाख्यानं मन्वंतरनिरूपणे। समुद्रमंथनं चैव बलिवैभवबंधनम् ॥ मत्स्यावतारचरितमष्टमोयं प्रकीर्तितः। सूर्यवंशसमाख्यानं सोमवंशनिरूपणम् ॥ वंश्यानुचरिते प्रोक्तो नवमोयं महामते। कृष्णस्य बालचरितं कौमारं च व्रजस्थितिः॥ कैशोरे मथुराख्यानं यौवने द्वारकास्थितिः। भूभारहरणं चात्र निरोधे दशमः स्मृतः॥ नारदेन तु संवादो वसुदेवस्य कीर्तितः।यदोश्च दत्तात्रेयेण श्रीकृष्णेनोद्धवस्य च ॥ यादवानां मिथोन्तश्च मुक्तावेकादशःस्मृतः। कलिनृपकथापूर्वं कलिधर्मास्ततो हरेः ॥ अवतारश्च कल्क्याख्यो युगधर्मास्ततो लयः। चतुर्द्धा वर्णितो मोक्षः परीक्षिन्नृपतेस्ततः ॥ वेदशाखाप्रणयनं पुराणस्य च लक्षणम्। मार्कंडेयकथा प्रोक्ता सूर्यव्यूहस्ततः परम्॥ पुराणसंख्याकथनमाश्रये द्वादशो ह्ययम्। इत्येवं कथितं वत्स श्रीमद्भागवतं तव ॥ श्रोतुर्वक्तुश्चोपदेष्टुरनुमोदितुरेव च। साहाय्यकर्त्तुर्गदितं मुक्तिभक्तिविमुक्तिदम् ॥ प्रौष्ठपद्यां पूर्णिमायां हेमसिंहसमन्वितम्। देयं भागवतायेदं द्विजाय प्रीतिपूर्वकम् ॥ संपूज्य वस्त्रहेमाद्यैर्भगवद्भक्तिमिच्छता। योप्यनुक्रमणीमेतां श्रावयेच्छृणुयात्तथा स पुराणश्रवणजं फलमाप्नोति निश्चितम् ॥" इति यत्तु शारीरके भागवतमतनिरसनं तद्धयग्रीवपंचरात्रे गणितभागवताख्यतंत्रस्यैवेति तत्रैव स्पष्टम्। वासनाभाष्यसंबंधोक्तिविद्वत्कामधेनुहनुमद्भाष्यतत्त्वभावार्थदीपिकापरमहंसप्रियाशुकहार्दमनोहरातोषिणिसंदर्भेण्यादयष्टीकाग्रंथाश्चित्सुखाचार्यगौडाचार्यवल्लभाचार्यशंकराचार्यविजयध्वजादिभिः कृता बहुतरा विराजंते तथापि श्रीधरस्वामिकृतटीकाया भगवत्प्रियत्वेन सर्वसंमतत्वात्सर्वत्र प्रसिद्धत्वाच्च व्याख्यातुमुत्सहे। भगवत्प्रियत्वं चास्याः काश्यां प्रसिद्धम्। कदाचिद्द्वैतवादिवैष्णवैरुक्तं श्रीधरस्वामिकृतटीकायामद्वैतस्य हठाद्वर्णनमतो व्यासाभिप्रायबोधिकास्त्वन्या एव टीकाः संति ततः काशीस्थविद्वज्जनैरुक्तं श्रीमदिष्टदेवः श्रीजगन्नाथो यद्येवं वदिष्यति तदैतदंगीकुर्मः। तदर्थं सर्वटीकानामंकितपत्राणि श्रीकाशीस्थश्रीजगन्नाथाख्यविष्णुमंदिरे स्थापितानि। कश्चिद्ब्राह्मणबालस्तदानयनार्थं प्रेषितः श्रीभगवदग्रस्थापितसंकलितपत्रेभ्य एकं पत्रमानयेत्युक्त्वेति। तत्र तैः श्रीधरीयटीकापत्रमधः स्थापितमपि भगवता ततो निष्कास्य "व्यासो वेत्ति शुको वेत्ति शेषमैत्रेयनारदाः। पराशरोद्धवो वायुपुत्रश्चैव बृहस्पतिः ॥ एतेषां निखिलाः शिष्याः श्रीमद्भागवतं विदुः। श्रीधरः सर्वथा वेत्ति श्रीनृसिंहप्रसादतः॥" इति तत्र लिखित्वा बालाय दत्तमेवं त्रिर्दत्तं ततः सर्वैरुक्तमियमेव भगवत्प्रिया श्रीव्यासाभिप्रायबोधिका टीकेति ॥ अत्र निराकारब्रह्मपरतया व्याख्यातमपि श्रीकृष्णलीलाया अत्र प्राधान्येन प्रतिपादनात्साकारब्रह्मपक्षेपि व्याख्यायते। तत्र परं परिपूर्णावतारित्वेनांशावतारेभ्य उत्कृष्टं श्रीकृष्णं धीमहीत्यन्वयः अस्य स्वरूपलक्षणमाह ॥ धाम्ना स्वेनेति ॥ आत्मीयेन माथुराख्येन धाम्ना स्थानेन तन्निवासिनां सदा निरस्तं कुहकं मायाकार्यं संसारलक्षणं येन तं लीलामाह ॥ जन्मेति ॥ आद्यस्य जन्मादिविकाररहितस्यापि यतः यत्र वसुदेवगृहे सप्तम्यर्थे तसिः। तस्मादितरत् इतरत्र नंदगृहेपि योन्वयादन्वगच्छत् परेणैव य इति पदेनान्वयः।कस्माद्धेतोरन्वगात्तत्राहं अर्थेषु कंसवंचनादिप्रयोजनेषु। अभिज्ञ इति। यद्वा बाललीलारासलीलादिलोकोत्तरविलासरूपेष्वर्थेष्वभिज्ञस्तादृशार्थसंपादननिपुण इत्यर्थः। ततः स्वराट् स्वैर्गोकुलवासिगोपालादिभिरेव राजत इति गोपाललीलस्याप्यव्याहतैश्वर्यमाह ॥ तेन इति ॥ यो ब्रह्मणे ब्राह्मणं विस्मापयितुं हृदा संकल्पमात्रेण ब्रह्म सत्यज्ञानानंतानंदमात्रैकरसमूर्तिमयं वत्सपालादिरूपं वैभवं विस्तारितवान् यत् यत्र सूरयो बलरामचतुर्मुखादयो मुह्यंति तत्त्वं ज्ञातुं न शक्नुवन्ति "केयं

वा कुत आयाता सत्या वा कर्त्तरे न" इत्याद्युभयोक्तेः । यद्वा यल्लौकिकालौकिकताद्दशलीलाभिः सूरयो लीलातत्त्वज्ञा भक्ता मुह्यंति प्रेमातिशयोदयेन विवशा भवंति यदित्युत्तरत्राप्यन्वेति यद्याभ्यो लीलाभ्यस्तेजोवारिमृदां यथा यथावत् विनिमयो भवति तन्मुखकांत्या चंद्रादेर्निस्तेजस्त्वं तन्निकटवस्तूनां तत्तेजसा चंद्राधिकतेजोवत्त्वं वेणुनादलीलया वारिणः कठिनत्वं मृदः पाषाणादेर्द्रवत्वमिति यत्र श्रीकृष्णे निमित्ते सति त्रिसर्गः त्रिषु गोकुलमथुरां द्वारवतीपुरेषु सर्गः गोपालराधिकादेरक्रूरोद्धवादेरुक्मिण्यादेश्च प्रादुर्भावः अमृषा तेषां गोलोकवैकुंठादिवासित्वेन तद्विग्रहाणाञ्च भगवदवतारतुल्यत्वादिति काशीनाथः । विश्वनाथस्तु इह खलु निखिलकल्याणगुणमाधुर्य्य वारिधौ महैश्वर्यसम्राजि स्वयं भगवति परमभास्वत्यधिवराणि यथासमयं विलस्यांतर्हिते नानाशास्त्रपुराणेतिहासादीनां सर्वजननिकायत्रायकत्वरूपेष्वर्थेषु यामिकेष्विव कालेन दैवाद्दैगुण्योदयादालस्येनेव केषुचित्प्रसुप्तेषु तेष्वेव मध्ये कैश्चित्कैश्चिन्त्र्युत जुगुप्सितं धर्मक्तेनुशासतः स्वभावरक्तस्य महान्व्यतिक्रम इत्यादितोवगतैरनर्थाकारैश्चौरैरिवोद्भूय तत्तत्प्रणेतृपर्यंतानां सर्वेषां चित्तप्रसादरूपेषु महाधनेष्वपहृतेषु " यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ " इति " परित्राणाय साधूनां विनाशाय च दुष्कृताम् ॥ " इति श्रीगीतोक्तनिमित्तलब्धक्षणतया यादस्सुमहामीन इव विहंगेषु श्रीहंस इव नृषु स्वयं भगवान् श्रीकृष्ण इव देवेषूपेन्द्र इव वेदेषु श्रीमद्भागवताख्यं शास्त्रचूडामणिः ॥ " कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह । कलौ नष्टदृशामेष पुराणार्कोधुनोदितः ॥ " इति वचनव्यं जितश्रीकृष्णप्रतिमूर्तिकत्वेन ममाहमेवाभिरूपः कैवल्यादितिनिरस्ततद्भिन्नान्यसादृश्यतया श्रीशुकपरीक्षिद्भ्यां श्रीकृष्ण एव ज्योतिषु सहस्रांशुरिव पुराणेषु भास्वान्द्वादशस्कंधात्मकोऽष्टादशसहस्रच्छदनो महाजनवांछितार्थकल्पतरुरिवावततार । तत्प्रणेता प्रथमत एवाचार्यचूडामणिः श्रीकृष्णद्वैपायनः स्वाभीष्टदैवतध्यानलक्षणमंगलमाचरति ॥ जन्माद्यस्येति ॥ परमतिशयेन सत्यं सर्वकालदेशवर्तिनं परमेश्वरं धीमहि ध्यायेम बहुवचनेन कालदेशपरंपराप्राप्तान्सर्वानेव जीवान्स्वांतरीकृत्य स्वशिक्षया तान्ध्यानमुपदिशन्नेव क्रोडीकरोति । अनेन "अथातो ब्रह्मजिज्ञासा" इति सूत्रार्थः फलतो विवृतः ध्यानस्यैव जिज्ञासायाः फलत्वात्तस्य परमैश्वर्यमाह अस्य जगतो जन्मादि जंन्मस्थितिभंगं यतो भवति तम्।तर्हि किं कालं ध्यायथ न । अन्वयादितरतश्च अन्वयव्यतिरेकाभ्यां घटे मृदन्वयः मृदि घटव्यतिरेक इवेत्युपादानकारणमित्यर्थः । चकारात्स एव निमित्तकारणं च कालस्य तत्प्रभावरूपत्वात् । यद्वाऽन्वयात्प्रलये विश्वस्य परमेश्वरेनुप्रवेशात् इतरतश्च सर्गे ततो विभागाच्च पृथिव्या जलमिव जलस्य तेज इव योऽधिष्ठानकारणमित्यर्थः । यद्वाऽन्वयात्कारणत्वेन यत्कर्तृकानुप्रवेशाज्जन्म कर्मफलदातृत्वेन यत्कर्तृकानुप्रवेशात्स्थितिः संहारकत्वेन रुद्ररूपेण यत्कर्तृकानुप्रवेशाद्भंगश्च यतो भवति तम् । अत्र कारणस्य कार्यसमन्वितत्वमेव कार्यानुप्रवेशो ज्ञेयः। तत्कार्यस्य विश्वस्य तत्स्वरूपत्वं वारयन्विशिनष्टि । इतरत इति । सृज्यपाल्यसंहार्याद्विश्वतः स्वरूपशक्त्याभिन्नात् चकारान्मायाशक्त्या तदभिन्नाच्च एवं " जन्माद्यस्य यतः " इति " तत्तु समन्वयात् " इति सूत्रद्वयमुक्तम् । ननु च परमेश्वरस्योपादानत्वे विकारो दुर्वा रस्तस्मात्प्रकृतिरेवोपादानं परमेश्वरस्तु निमित्तमित्युच्यताम् ।मैवं"यः सर्वज्ञः सर्ववित्"इति"स ऐक्षत लोकान्तुसृजा"इति "तदैक्षत बहुस्यां प्रजायेय" इत्यादिभिश्श्रुतिभिश्चेतनस्यैव जगत्कारणत्वप्रतिपादनात्परमेश्वर एव जगत उपादानं निमित्तं च । तत्र प्रकृतेस्तच्छक्तित्वाच्छक्तिशक्तिमतोरभेदात् प्रकृतिद्वारकमेव तस्योपादानत्वं स्वरूपेण तु प्रकृत्यतीतत्वात्तस्य निर्विकारत्वमेव । यथोक्तं भगवता "प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः । सतो भिव्यंजकः कालो ब्रह्म तत्रितयं त्वहम् ॥" इति । प्रकृतेः स्वातंत्र्येणोपादनत्वमेव शास्त्रासंमतम् तस्मात्परमेश्वरः सर्वज्ञ एव स्वातंत्र्येण जगत्कारणमुच्यते न तु जडा प्रकृतिरित्याह ॥ अर्थेषु ॥ सृज्यासृज्यवस्तुमात्रेष्वभिज्ञो यस्तामित्यर्थः । अनेन " ईक्षतेर्नाशब्दम् " इति सूत्रार्थ उक्तः । स चायं प्रक्रांतं ब्रह्म जगत्कारणं भवति कुत ईक्षतेः ईक्षणात् जगत्कारणत्वप्रतिपादकश्रुतिवाक्येषु तस्यैव विचारविशेषात्मकेक्षणश्रवणात् अतो ब्रह्म नाशब्दं शब्दप्रमाणकं न भवति। किन्तु शब्दप्रमाणकमेवेति । तत्र श्रुतयः "तदैक्षतेति सदेव सौम्येदमग्र आसीत्" इति "आत्मा वा इदमेक एवाग्र आसीदिति तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत इति'यतो वा इमानि" इत्याद्याः।।स्मृतिश्च "यतः सर्वाणि भूतानि भवंत्यादियुगागमे " इत्याद्या । ननु तदानीं महदाद्यनुत्पत्तेस्तस्य क्षणादिसाधनं न संभवतीत्यत आह ॥ स्वराडिति ॥ स्वस्वरूपेणैव तथा तथा राजत इति "न तस्य कार्यं करणं च विद्यते " इत्यादौ "स्वाभाविकी ज्ञानबला क्रिया चेति " श्रुतेः । ननु जगत्सृष्टौ ब्रह्मणः स्वातंत्र्यमैश्वर्यञ्चावगम्यते "हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्" इति श्रुतेः स एव ध्येयोस्त्वित्यत आह ॥ तेन इति ॥ ब्रह्मस्वतत्त्वं वेदं वा अतो ब्रह्मणोपि पारतंत्र्यं सूरीणामपि तत्र मोहाद्ब्रह्मणोपि न स्वतः शक्तिरिति । अनेन " नेतरोऽनुपपत्तेः " इति सूत्रार्थो विवृतः । ननु धीमहीति ध्यानविषयत्वेन तस्य साकारत्वमभि

प्रेतमाकारणाच्च त्रिगुणसृष्टत्वम् तथात्वे चानित्यत्वं प्रसज्येतेत्यत आह ॥ तेज इति ॥ यथाऽज्ञानां तेजसि वारीदमिति वारिणि च स्थलमित्यादिबुद्धिस्तथैव पूर्णचिन्मयाकारे त्रिसर्गस्त्रिगुणसर्गोऽयमिति बुद्धिर्मृषैव । "तमेकं गोविंदं सच्चिदानंदविग्रहं वृन्दावनसुरतरुतलासीनम्" इति गोपालतापिनीश्रुतेः । "अर्द्धमात्रात्मको रामो ब्रह्मानंदैकविग्रहः" इति रामतापिन्याश्च "ऋतं सत्यं परं ब्रह्म पुरुषं नृकेशरिविग्रहम्" इतिनृसिंहतापिन्याश्च "निर्दोषपूर्णगुणविग्रह आत्मतन्त्रो निश्चेतनात्मकशरीरगुणैश्च हीनः आनन्दमात्रमुखपादसरोरुहादिरि तिध्यानबिंदूपनिषदश्च । "नन्दव्रजजनानंदी सच्चिदानंदविग्रहः" इति ब्रह्मांडपुराणात् "सर्वे नित्याः शाश्वताश्च देहास्तस्य परात्मनः।हानोपादानरहिता नैव प्रकृतिजाः क्वचित्" इति महावाराहाच्च "स्वेच्छामयस्य न तु भूतमयस्य" इति च "बबंध प्राकृतं यथा" इति "त्वय्येव नित्यसुखबोधतनौ" इति शाब्दं ब्रह्म वपुर्दधदिति "सत्यज्ञानानंतानंदमात्रैकरसमूर्त्तयः" इत्यादिश्रीभागवतादावपि तदाकारस्यामायिकत्वावगमात् "अनिंद्रिया अनाहारा अनिष्पन्नाः सुगंधिनः । एकांतिनस्ते पुरुषाः श्वेतद्वीपनिवासिनः॥" इति नारायणीयात्।"देहेंद्रियासुहीनानां वैकुंठपुरवासिनाम्" इति सप्तमस्कंधाच्च तद्भक्तानामपि श्वेतद्वीपवैकुंठपुरवासित्वेन साकारत्वे लब्धेऽनिंद्रिया इत्यादिभिर्मायिकाकारत्वनिषेधात्तदाकारस्यामायिकत्वे कः संशयः । यत्तु "माययोपात्तविग्रहम्" इति नवमे वक्ष्यति तत्र च माययाकृपयेत्यर्थः तत्रैव विशेषतो व्याख्यास्यामः।ननु तदप्यत्र केचिद्विवदन्त इत्यतआह।धाम्नेति॥ धाम्ना स्वरूपशक्त्या स्वभक्तनिष्ठस्वानुभवप्रभावेण वा प्रतिपदसमुच्छलन्माधुर्यैश्वर्यभ्राजि श्रीविग्रहेण वा स्वेनासाधरणेन सदा कालत्रय एव निरस्ताः कुहका कुतर्कनिष्ठा येन तम्। "तर्काप्रतिष्ठानात्" इति सूत्रार्थः सूचितः । अत्र "यमेवैष वृणते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्" इति श्रुत्या स्वशब्देन तनोः स्वरूपभूतत्वे लब्धे तथा प्रकृतिक्षोभात्पूर्वमेव 'बहुस्याम्' इति "स ऐक्षत" इत्यादिश्रुतिभिस्तदीयमनोनयनोदरमायिकत्वेवगमिते "परास्य शक्तिर्बहुधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुत्या स्वाभाविकत्वे प्रकटमुक्ते "अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् । प्रकृतिभ्यः परं यच्च तदचिंत्यस्य लक्षणम् ॥" इत्यत्र न योजयेदिति लिङा परदारान्न गच्छेत् इतिवत्तत्र कुतर्कयोजनाया निषिद्धत्वेऽपि यद्यसुरास्तदीयश्रीविग्रहं लक्षीकृत्य युक्तिशरानादित्सवो निरयेपि पतिष्यंति तदा पतंतु तैरलं संलापेन । अथात्र शास्त्रे "दशमस्य विशुद्ध्यर्थं नवानामिहलक्षणम्" इति दशमस्याश्रयतत्वस्यैवांगित्वे तस्य च श्रीकृष्णरूप एव मुख्यत्वे तदसाधारणधर्मप्रस्तुतावप्यस्य प्रथमपद्यस्यौचितीभवत्यतस्तदेकपरस्य व्याख्यांतरस्यावकाशः । तद्यथा । "सत्यव्रतं सत्यपरम्" इत्यादौ "सत्यात्मकं त्वां शरणं प्रपन्नाः" इति श्रीकृष्णजन्मारंभोक्तेः "सत्ये प्रतिष्ठितः कृष्णः सत्यमत्र प्रतिष्ठितम् । सत्यात्सत्यञ्च गोविंदस्तस्मात्सत्यो हि नाम ते" इत्युद्योगपर्वणि सञ्जयकृतकृष्णनाम्नां निरुक्तेश्च सत्यं श्रीकृष्णं धीमहि । "नराकृति परं ब्रह्म" इति ब्रह्मांडपुराणात्तस्मात्कृष्ण एव तं ध्यायेदिति गोपालतापिनीभ्यश्च परं स्वेन धाम्ना श्रीमथुराख्येन सर्वत्र तदानीं कृपया दर्शितेन श्रीविग्रहेण च सदा निरस्तं कुहकं जीवानामविद्या येन तं "मथ्यते तु जगत्सर्वं ब्रह्मज्ञानेन येन वा । तत्सारभूतं यद्यस्यां मथुरा सा निगद्यते ॥" इति गोपालतापनीप्रसिद्धेः "श्रवणात्कीर्तनाद्ध्यानात्पूयंतेन्तेवसायिनः । तव ब्रह्ममयेशस्य किमुतेक्षाभिमर्शिनः ॥" इति दशमोक्तेश्च 'गृहदेहत्विट्प्रभावा धामानि' इत्यमरः । ननु तद्विग्रहस्य प्रापंचिकलोकदृश्यत्वाद्यद्दृश्यं तदनित्यं घटवदिति न्यायेनानित्यत्वं प्रसज्येतेत्यत आह ॥ तेजोवारिमृदामिति ॥ त्रयाणां दृश्यभूतानां यथा यथावद्विनिमयः परस्परमिलनं यत्र तथाभूतास्त्रिसर्गस्त्रिगुणसृष्टो देहो मृषा मिथ्यैव येन तत्त्रितयसृष्टस्तद्विग्रह उच्यते तेन मृषैवोच्यत इत्यर्थः । प्रपंचातीतस्यापि तस्य यत्प्रापंचिकैरसुरैर्दर्शनं तत्खलु विचित्रलीलासाधिकया तदिच्छया दुस्तर्क्यस्वरूपयैव पित्तदूषितरसनैर्नरैर्मत्स्यंडिकाचर्वणमिव तन्माधुर्यानुभवहीनं तदन्यैश्च दुस्तर्क्यतत्कृपाप्रभावात्तन्माधुर्यानुभवसहितमेव । तदुक्तम् "अन्ये च तन्मुखसरोजमुदारहासस्निग्धेक्षणं नृप पपुर्दृशिभिर्नृनार्यः । तेभ्यः स्ववीक्षणविनष्टतमिस्रदृग्भ्यः क्षेमं त्रिलोकगुरुरर्थदृशञ्च यच्छन् ॥" इत्यतोऽदृश्यस्यापि यद्दृश्यत्वं तत्कृपाया एव महैश्वर्यं ज्ञापयतीति ज्ञेयम् । अत एव भागवतामृतधृतं नारायणाध्यात्मवचनं "नित्याव्यक्तोपि भगवानीक्ष्यते निजभक्तितः । तामृते परमानंदं कः पश्येत्तमिनं प्रभुम्" इति तत्रत्या कारिका । अतः स्वयं प्रकाशत्वशक्त्या स्वेच्छाप्रकाशया सोभिव्यक्तो भवेन्नेत्रे न नेत्रविषयः कृत इति एवमेव "तासां मध्ये साक्षाद्ब्रह्म गोपालपुरी" इत्यादिश्रुतेर्ब्रह्मभूतानामपि तद्धामादीनां दृश्यत्वं ततश्च यद्यद्दृश्यं चिद्भिन्नं तत्तद्भिन्नं घटवदित्यनुमिमते भागवताभिज्ञाः । एवंमेव सारमूलकारणं कृपामुक्त्वा तस्य लीलामाह । अस्य यतो यत्र वसुदेवगृहे जन्मादि जन्मैश्वर्यप्रकटनपूर्ववृत्तकथनादि तत इतरतश्चेतरत्र नंदगृहे अनु अयादयमेवागच्छत् । किमर्थमयात् । अर्थेषु कंसवंचनादिषु व्रजसंबंधिवात्सल्यादिप्रेमप्रकाशरूपेषु वाऽभिज्ञः न त्वन्यपरतंत्र इत्याह ॥ स्वेनैव राजते इति॥

यद्वा स्वैः पित्रादिभिः श्रीनंदाद्यैर्विराजमानत्वार्थमित्याभिप्रायः । न च तत्रतत्र तत्तत्प्रेमाधीनतया तादृशलीलाविशिष्टत्वेऽपि तस्य मौग्ध्यमेव प्रत्येतव्यमित्याह ॥ आदिकवये ॥ ब्रह्मणेऽपि ब्रह्म ब्रह्मात्मकं वत्सबालकादि तेने प्रकाशयामास । तच्च हृदा संकल्पमात्रेणैव यत्र योगमायाविभवे सूरयो भवनारदादयोपि मुह्यंति यद्वादिकवे स्वकुलस्यादिपुरुषः कविर्विज्ञश्च यस्सत्यव्रतमनुस्तस्मै ब्रह्म निर्विशेषं स्वरूपं तेने स्वांशमत्स्यदेवोक्त्या प्रकाशयामास तदुक्तिर्यथा "मदीयं महिमानं च परं ब्रह्मेति शब्दितम् । वेत्स्यस्यनुगृहीतं मे संप्रश्नैर्विवृतं हृदि ।" इति व्याख्यातं च श्रीधरस्वामिचरणैः । मे मयाऽनुगृहीतं प्रसादीकृतं ब्रह्मापरोक्षीकृतं वेत्स्यसीति ब्रह्मणस्तत्प्रसादीकृतत्वं च वेदस्तवारंभे व्याख्यास्यते । अथ तस्यापि शांतदास्यादिरसपरिकरविशिष्टत्वेपि । "तत्रातिशुशुभे ताभिर्भगवान्देवकीसुतः ॥" इत्यादिभ्यो व्रजदेवीसाहित्येन परममाधुर्योदयात्तदीयरसस्यातिशयेनोपादेयतां दर्शयन्पुनरप्यर्थांतरमत्रावकाशते । तद्यथा । आद्यस्य श्रृंगाररसस्य जन्म यतस्तं धीमहि पूर्वं तस्य परमार्थदर्शिभिः सद्भिर्विगीतत्वेन सतोपि नाश एवासीदिति भावः । अन्वयात्संयोगात् इतरतश्च विप्रलंभात् संयोगविप्रलंभाभ्यामेव श्रृंगाररसः सपरिकरः संपद्यत इति भावः । भीमसेनो भीम इतिवदाद्यरसोप्याद्यशब्देनोच्यते । यद्वात्र पिबत भागवतं रसमित्युक्तेः शास्त्रस्यास्य रसरूपत्वादाद्यस्येत्यनेनार्थप्रत्यासत्त्या रसस्येत्यस्यैव विशेष्यपदस्योपस्थितेः किं वा संयोगविप्रयोगाभ्यां निष्पत्तिः स्वप्रतियोगिनं रसमेवोपस्थापयत्यतो न्यूनपदता नाशंकनीया । प्रत्युत तथा प्राप्तत्वेनादिरसस्य रहस्यत्वमेव द्योतितं तत्रालंबनविभावत्वे तस्यान्यतो वैशिष्ट्यमाह । अर्थेषु चतुःषष्टिकलादिरसोपयोगिसमस्तवस्तुषु अभिज्ञो विदग्धः । न च प्राकृतनलादिनायकवत्कालकर्मादिग्रस्त इत्याह ॥ स्वराट् । किञ्च रसो ह्यन्यत्र नैव प्रसज्येतेत्याह ॥ य आदिकवये ॥ आदिरसस्य कवये भरताय हृदैव तदीयमनसैव ब्रह्म आदिरसस्य तत्त्वं तेने । रसस्यैकतानत्वोद्वा ऽनार्थमित्यर्थः । 'वेदस्तत्त्वं तपो ब्रह्म' इत्यमरः । तदपि यत्र तत्त्वे सूरयः कवयो मुह्यंति प्राकृतनलादिनायकनिष्ठतया वर्णनात् । तत्र दृष्टांतः ॥ तेज इति ॥ तेजआदिषु वार्यादिबुद्धिरिव भगवदेकनिष्ठे रसे प्राकृतजननिष्ठत्वबुद्धिरित्यर्थः । यत्र कृमिविड्भस्मांतनिष्ठेषु प्राकृतनायकेष्वतिनश्वरेषु रसो न भवति विचारतो विभाववैरूप्यात् तद्विपरीतं घृणामयं वैरस्यमेवोत्पद्यते तत्रैव रसं वर्णयंतीत्यर्थः । किं च त्रयाणां वाच्यलक्ष्यव्यंग्यानामर्थानां ध्वनिगुणालंकारणां वा सर्गो निर्माणप्रपंचः अमृषा सत्य एव भवन्नलौकिकत्वेन चमत्कारी स्यात् । अन्यत्र प्राकृतनायके कविप्रौढोक्तिमात्रप्राणो मिथ्यैवेत्यर्थः । ननु रसं केचिन्न मन्यन्ते तत्राह ॥ धाम्ना ॥ माधुर्य्यास्वादसाक्षात्कारचमत्कारप्रकारेण स्वेनासाधारणेन निरस्ताः कुहका जरन्मीमांसका येन तम् । अथ तासामपि मध्ये "कस्याः पदानि चैतानि याताया नंदसूनुना । अनया राधितो नूनं भगवान्हरिरिश्वरः ।" इत्यादिभिः परममुख्यायाः श्रीवृंदावनेश्वर्यास्साहित्येन परम एव माधुर्योत्कर्षो भवत्यतस्तत्प्रदर्शकोप्यर्थोस्मिन्नादिमे पद्येऽन्वेष्टव्यः । स यथा । यतो याभ्यामेवाद्यस्य रसस्य जन्म प्रादुर्भावः । यावेवादिरसविद्यायाः परमनिधानमित्यर्थः । तत्र यश्च इतरत इति ल्यब्लोपे पंचमी । इतरां कांतां परित्यज्यान्वयात् । "अत्रावरोपिता कांता पुष्पहेतोर्महात्मना । अत्र प्रसूनावचयः प्रियार्थे प्रेयसा कृतः" इत्यादिदृष्ट्या अनुगतेर्हेतोः अर्थेषु रसोपयोगिधीरललितत्यादिमयमुख्यरसेष्वज्ञः । या च तत एव हेतोः स्वेन कांतेनैव राजत इति स्वराट् स्वाधीनकांतेत्यर्थः । यश्च तत्तत्प्रकाशनार्थमादिकवये आदितो जन्मारभ्यैव कवये तत्त्वज्ञाय श्रीशुकदेवाय ब्रह्म श्रीभागवतं मूर्द्धन्यरसमयं रासपञ्चाध्यायिकं हृदा तेने । " इदं भागवतं नाम पुराणं ब्रह्मसंमितम् " इति " शुकमुखादमृतद्रवसंयुतम् " इति " शुकवागमृताब्धिन्दुः" इत्यादिभ्यः । यद्यतः श्रीभागवतात् यत्र रासे सति सूरयो मुह्यंति रसास्वादजनितामानंदमूर्च्छां प्राप्नुवंति यद्वा सूरयो भक्ताः किं वा याभ्यां श्रवणनयनादिविषयीभूताभ्यां सूरयस्तत्परिकरभूता भक्ता मुह्यंति महाविज्ञा अपि मूढा भवन्तो धर्मविपर्ययं प्राप्नुवंतीत्यर्थः । तत्र दृष्टान्तेनापरानपि संगृह्णाति तेजोवारिमृदां यथा विनिमयः स्वस्वधर्मव्यत्ययः तत्र तेजसां चंद्रादीनां तदीयरासलीलादर्शनात्स्तंभेन स्वीयचलत्वधर्मव्यत्ययः । वारिणां तन्मुरलीवाद्यादिना स्तंभेन मृद्धर्मः मृदामपि पाषाणादीनां द्रवेण वारिधर्मश्च यथेति यत्र ययोः स्वेन धाम्ना प्रभावेण तिसृणां श्रीभूलीलानां गोपीमहिषीलक्ष्मीणां वांतरंगा बहिरंगातटस्थानां वा शक्तीनां सर्गोऽमृषा सत्य एव सदा तासां तद्धाममयत्वात् यत्रेत्यधिष्ठानकारणत्वात् । याभ्यां सृष्टाः श्र्यादयः स्वमहसा सदा वर्तंत एवेत्यर्थः । यत्तदोर्नित्यसंबंधात् । तौ निरस्तकुहकं निष्कपटं यथा स्यात्सत्यं यथार्थस्वरूपं यथा स्यात्परं सर्वोत्कृष्टं यथा स्यात्तथा धीमहीति शास्त्रस्यास्य विषयो दर्शितः । अथ तथाभूतमप्याश्रयत्वं येनैव लभ्यते स शास्त्रस्याभिधेयो भक्तियोगस्तथा स एव परमकाष्ठामापद्य श्रीभगवदाकर्षको भवन्प्रेमाभिधः प्रयोजनं च अनेन श्लोकेन स भक्तियोगोऽवश्यं माननीय इत्यतोऽर्थांतरमत्र तंत्रेणांतर्भवति । तद्यथा सत्यं तदेव सत्यं "तदुहैव मंगलं यदुत्तमश्लोकयशोनुगीयते" इति द्वादशोक्तेः । तत्रापि परं श्रेष्ठं परं वास्तववस्तुरूपत्वात् त्रिगुणातीतं तथा सत्यं सद्भ्यो हितं परमकल्याणगुणमयं भक्तियोगं

धीमहि यदुक्तं "लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ॥" इति । "न ह्यंगोपक्रमे ध्वंसो मद्धर्मस्योद्धवाण्वपि । मयानुमोदितः सम्यङ्निर्गुणत्वादनाशिषः ॥" इति च श्रुतिश्च गोपालतापिनी " विज्ञानघनानंदघना सच्चिदानंदैकरसे भक्तियोगे तिष्ठति" इति तस्य प्रभावमाह यत एवाद्यस्य परमेश्वरस्य जन्म उपासकेषु भगवत्वेन प्रादुर्भावः । तथा इतरतः इतरेष्वर्थेषु निष्कामकर्मयोगज्ञानयोगेष्वन्वयात् । यत्साहित्याच्चाद्यस्य जन्म उपासकेषु परमात्मत्वेन ब्रह्मत्वेन च साक्षात्कारो भवेदित्यन्वयः । ननु ज्ञानेन केवलेनैव ब्रह्मसाक्षात्कारः प्रसिद्धस्तत्राह । योभिज्ञः अभि सर्वतो भावेन ज्ञा ज्ञानं यतः ज्ञानस्य सात्त्विकत्वाद्गुणातीताया भक्तेस्तत्रान्वयं विना परमात्मनो ब्रह्मत्वज्ञानमेव न भवेदित्यर्थः । " नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरंजनम् " इत्याद्युक्तेः "भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः" इत्यादेश्च । ननु ब्रह्मसाक्षात्कारार्थो ज्ञानयोगो यथा भक्तिमपेक्षते तथैव भगवत्साक्षात्कारार्थमपि भक्तियोगो ज्ञानयोगमपेक्षतामिति चेत्तत्राह । स्वराट् स्वेनैव राजत इति सः । सम्राडिव स्वतंत्रो न कस्याप्यधीन इत्यर्थः । " अकामः सर्वकामो वा मोक्षकाम उदारधीः । तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥ " इति विधिवाक्यान्मेवाद्यमिलितेन केवलेन सौरकिरणेनेव ज्ञानाद्यमिश्रेणेति तीव्रेणेत्यस्यार्थः । तथा " यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् । सर्वं तद्भक्तियोगेन मद्भक्तो लभतेंजसा । " इत्यादिवाक्याच्च । प्रत्युत "तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः । न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥" इति तत्साहित्यनिषेधश्रवणाच्च । किं चैतादृशो भक्तियोगो भक्तानुग्रहं न लभत इत्याह । तेने इति । ब्रह्म हृदि यस्य तेन ब्रह्महृदा नारदेनादिकवये व्यासाय तेने प्रकाशितः । ननु सर्वज्ञस्य व्यासस्यापि भक्तियोगज्ञानमन्याधीनं कथं प्रतीमस्तत्राह मुह्यंतीति । सूरयो वसिष्ठादयोपि यद्यस्मिन्मुह्यन्ति गुणातीतभक्तियोगे गुणजन्यानां बुद्ध्याद्यंतःकरणानां स्वतः प्रवेशाशक्तेर्मोहमज्ञानमेव प्राप्नुवंतीत्यर्थः।"यच्छक्तयो वदतां वादिनां वै विवादसंवादभुवो भवंति । कुर्वंति चैषां मुहुरात्ममोहं तस्मै नमोऽनंतगुणाय भूम्ने।।" इति हंसगुह्योक्तेः । ननु भक्तियोगो न केवलं गुणातीत एव तस्यापि तृतीयस्कंधे गुणमयत्वदर्शनादित्यत आह । यत्रत्रिसर्गस्त्रिगुणसृष्टत्वं मृषाऽवास्तव इत्यर्थः । यथा तेजोवारिमृदां विनिमयो मेलनं निस्तेजो निर्जलमपि निर्धूलिकमपि दुग्धं तप्तमिति जलवदिति मलिनमिति तत्तन्मेलनाद्भवति यथा तथैव त्रिगुणातीतोपि भक्तियोगः।।पुरुषवर्तिसत्त्वादिगुणयोगात्सात्त्विको राजसस्तामसश्चोच्यते । ननु भक्तियोगस्य त्रिगुणातीतत्वे बहवो विवदंते तत्राह धाम्नास्वेनेति। स्वस्वरूपेणालौकिकमाधुर्यमयेन भवगोचरीभूतेनैव निरस्ताः कुहकाः कुतर्कवंतो येन तम् । न ह्यनुभूयमानेर्थे प्रमाणापेक्षेति भावः । इह किल "अध्यात्मदीपमतितितीर्षतां तमोन्धम् इति"।"कस्मै येन विभासितोयमतुलो ज्ञानप्रदीपः" इत्याभ्यां श्रीभागवतस्य प्रदीपत्वं "पुराणार्कोधुनोदितः" इत्यनेनार्कत्वं "निगमकल्पतरोर्गलितं फलं रसम्" त्यनेन रसमयफलत्वं " हरिलीलाकथाव्रातामृतानंदितसत्सुरम् " इत्यनेन मोहिनीत्वं च दृश्यते । तत्रास्मिन्पद्ये प्रथमेन व्याख्यानेन दीपत्वं द्वितीयेनार्कत्वं तृतीयचतुर्थपंचमेन रसमयफलत्वम् । किंच पञ्चानामेवैषामर्थानां परमदुर्लभातिस्वादुत्वेनामृतत्वाद्भक्तानामेव तत्संप्रदानभूतत्वेन देयत्वात् तत्तद्वाचकस्य शास्त्रस्यास्य तत्परिवेष्टत्वेन मोहिनीत्वं च ज्ञेयम् । एवं च यद्यपि सर्वस्य द्वादशस्कंधस्यैव शास्त्रस्यास्य रसमयफलत्वार्कत्वदीपत्वादीनि तदपि भूम्ना व्यपदेशा भवंतीति न्यायेन सर्गनिरोधे च क्वाचित्तादृशास्तुत्यादौ चाध्यात्ममात्रप्रकाशत्वेन दीपत्वं विसर्गस्थानपोषणादिषु धर्मार्थकाममोक्षाणामन्येषाञ्चाशेषविशेषाणां प्रवृत्तनिवृत्तविहितनिषिद्धसाधनफलानामपि प्रकाशकत्वेनार्कत्वमाश्रयतत्त्वस्य भगवतस्तत्तद्भक्तानां च जन्मकर्मादिलीलाभक्तिप्रेमादौ च प्रस्तुते रसमयफलत्वं तत्र तत्रैव भक्तानुकूलेनार्थेन स्वभक्तवर्गानंदनार्थं तत्प्रतिकूलेनार्थेनासुरसंवव्यामोहनार्थं मोहिनीत्वं च ज्ञेयम् । न चास्य शास्त्रस्य साक्षाद्भक्तिरसमयस्य तत्तत्प्रतिकूलार्थप्रस्तुतिरसंगतेति वाच्यम् । सर्वशक्तिपरिपूर्णस्य साक्षाद्भगवत इवास्यापि विविधाधिकारिस्वस्वहृदयानुरूपार्थं सर्वशक्तिलिंगप्रकाशकत्वमौचित्यात् " मल्लानामशनिः" इत्यत्र "विराडविदुषाम्" इति वत्सर्वं समंजसम् १ अत्र विजयध्वजः ॥ परं गुणैः पूर्णमिति पॄपालनपूरणयोरिति धातोः । द्विविधा हि देवता ग्रंथारम्भे नमस्कारादि मंगलक्रियामर्हति आधिकारिकी अभीष्टाचेति । यथा ज्योतिःशास्त्रे सूर्यादिग्रहलक्षणा देवताधिकारिकी नमनादिक्रियापि वरप्रेमादिविषयाद्यभीष्टा तथा भगवांस्तूभयरूप इत्यभिप्रेत्याह परमिति परमात्मा हि सर्वप्राणिनां संसारोन्मूलनायात्र शास्त्रे प्रतिपाद्यते "तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोन्यस्मात्सर्वस्मादंतरतरं यदयमात्मा" इति श्रुतेः । स एव परमप्रेमविषय परोपि नारायण एव नान्यः कश्चिदिति "तदेतत्परमं ब्रह्म वेदवादेषु पठ्यते । स देवः पुंडरीकाक्षः स्वयं नारायणः परः" इति हरिवंशे नारायण एव परशब्देनोक्तः । "ब्रह्मविदाप्नोति परम्" इति श्रुतेश्च । धीमहि । ध्यायेम जन्माद्यस्य यत इत्यादिविशेषणैः परशब्दोक्तान्गुणान्विशिनष्टि पालनपूरणाभ्यां यथासंभवं सृष्ट्यादयो वाच्या इत्यूहनीयम् । अलौकिकवस्तुनो लक्षणोपदेशमंतरेण ज्ञातुमशक्यत्वाच्छशविषाणतुल्यं तदित्यतो लक्षणमाह ।

जन्माद्यस्येति । अस्य प्रत्यक्षस्य जगतो जन्मादि यस्य तज्जन्मादि तद्गुणसंविज्ञानो बहुव्रीहिः यतो यस्माद्भवतीतिशेषः आदिशब्देन स्थितिसंहारानियमनज्ञानाज्ञानबंधमोक्षा गृह्यंते न केवलस्थितिसंहारौ । श्रुतिस्मृतिविरोधात् । यथा सास्नादिमान् गौरिति वृद्धोपदिष्टः सास्नादिमंतं पदार्थमश्वादिभ्यो व्यावृत्तं गोशब्दवाच्यं प्रत्येति तथा जन्मादिकारणं परमिति श्रुत्याचार्योपदिष्टं जन्मादिकं प्रत्येकं परब्रह्मलक्षणतया ज्ञातव्यम् । वेदांतशास्त्रेषु प्रतिपादितत्वात् ननु परस्य जन्मादिकारणत्वं कुत इति तत्राह।अन्वयादिति।''यतो वा इमानि भूतानि जायंते येन जातानि जीवंति''इत्यादिश्रुतीनाम्।''अहं सर्वस्य प्रभवो मत्तःसर्वं प्रवर्तते।स्रष्टा पाता तथैवात्ता निखिलस्यैक एव हि''इत्यादिस्मृतीनां जगत्कारणे हरावन्वयात् उपक्रमोपसंहारादितात्पर्यलिंगात्परब्रह्मैव जगत्कारणं नान्यदिति भावः।ननु रुद्रादीनामपि जगत्कारणत्वं श्रूयते कथं परस्यैवेत्यवधार्यते उच्यते यद्यपि रुद्रादीनां वेदैकदेशप्रतिपाद्यत्वमस्ति तथाप्यनंतवेदपदकदम्बप्रतिपादितत्वं विष्णोरेव ''सर्वे वेदा यत्पदमामनंति वेदैश्च सर्वैरहमेव वेद्यः'' इत्यादिश्रुतिस्मृतिभ्यः । ननु श्रुत्यादेः पिपीलिकादिलिपिवदप्रमाणत्वान्माणवकदष्टशार्दूलकल्पेन तेन तन्निश्चयाभावादतः परमाणुपुंजस्यैव कारणत्वमिति तत्राह ॥ इतरत इति ॥ प्रत्यक्षागमाभ्यामनुगृहीतादितरस्मात्तर्कात्परब्रह्मणः कारणत्वं ज्ञायते। समुदाय उभयहेतुकेपि तदप्राप्तिरिति भगवता कृष्णद्वैपायनेन निरस्तत्वात् अस्यार्थः वैशेषिकस्तावत्परिमाणभेदेन देहादेराशुतरविनाशित्वांगीकारादात्मनः स्थायित्वांगीकाराच्चार्द्धवैनाशिकः । सर्वक्षणिकत्ववादिनस्तु पूर्णवैनाशिका इत्यर्द्धवैनाशिकवैशेषिकमतनिराकरणानंतरं पूर्णवैनाशिकमतं बुद्धिस्थमिदानीं निराक्रियते इत्यवांतरसंग तिर्द्रष्टव्या । तत्र तावद्बुद्धमुनिनाऽऽगम उपदिष्टः । स चागमो वैभाषिकसौत्रांतिकविज्ञानवादिसर्वशून्यवाद्याख्यचतुर्विधशिष्यप्रतिपत्तिवैचित्र्याय चतुर्विधो भवति । तत्र वैभाषिकसौत्रांतिकयोर्ज्ञानं तदतिरिक्तपदार्थाश्च सर्वे क्षणिकाः सत्यभूताः संति इयान्परमभेदः वैभाषिकस्य घटादिपदार्थाः प्रत्यक्षाः सौत्रांतिकस्य तु ज्ञाने घटाद्याकारे उत्पन्ने तेनाकारेणाप्रत्यक्षघटादयोऽनुमीयंत इति । तत्रादौ वैभाषिकसौत्रांतिकयोर्बाह्यार्थास्तित्वाविशेषात् तयोर्मतमेकीकृत्य तन्मतं प्रमाणमूलं भ्रांतिमूलं वेति संदेहे प्रमाणमूलमिति प्राप्तं तथा हि पृथिव्यप्तेजोवायवश्चत्वारि भूतानि चतुर्विधपरमाणुपुंजस्वरूपाणि एवं भौतिकानि रूपादिविषयेंद्रियाणि परमाणुपुंजस्वरूपाणि न हि परमाणुसमूहव्यतिरेकेणावयविभूतं किंचित्कार्यमस्तीति परमाणहेतुक एव पृथिव्यादिसमुदायो बाह्यः । आध्यात्मिकश्च समुदायस्कंधहेतुकः । तथाहि रूपविज्ञानवेदनासंज्ञासंस्काराश्च पंच ते स्कंधास्तत्र रूपस्कंधः सविषयेंद्रियाणि विषयाणां रूपादीनामाध्यात्मिकत्वमाध्यात्मिकेंद्रियसंबंधाद्द्रष्टव्यम् । अहमित्यालयविज्ञानप्रवाहो विज्ञानस्कंधः सुखादिप्रत्ययो वेदनास्कंधः । गौरश्व इत्यादिशब्दादिविशिष्टवस्तुविषयकसविकल्पकप्रत्ययः संज्ञास्कंधः रागद्वेषमोहधर्माधर्माः संस्कारस्कंधः । तत्र विज्ञानस्कंधश्चित्तमित्यात्मेति च गीयते इतरे स्कंधाश्चैत्ता एतेषां चित्तचैत्तानां स्कंधानां समुदायः सर्वव्यवहारास्पद आध्यात्मिकश्च स्कंधहेतुक इति सर्वक्षणिकत्ववादिनोर्वैभाषिकसौत्रांतिकयोर्मतं तन्निराकरोति । समुदाय उभयहेतुकेपि तदप्राप्तिरिति । उभयहेतुकेपि समुदाये परमाणुहेतुके बाह्यसमुदाये स्कंधहेतुके चाध्यात्मिकसमुदाये तदप्राप्तिस्तस्य समुदायस्याप्राप्तिरित्यर्थः । अचेतनानां परमाणूनां स्कंधानां च स्वतः समुदायायोगादन्यस्य च स्थिरस्य समुदायकर्तुश्चेतनस्यानभ्युपगमादिति सूत्रवाक्यशेषः । अत्र श्रुत्याद्यनुगृहीततर्काभावात् केवलतर्कस्याप्रतिष्ठितत्वात् । ननु कार्यं कारणपूर्वकं कार्यत्वादिति कारणसामान्यमात्रं सिद्धं विशेषतः कुतः सिद्धिरिति चेत्सत्यम् । प्रधानादेरचेतनत्वेन बुद्धिपूर्वककर्तृत्वानुपपत्तेरस्वातंत्र्याच्च क्षित्यादेश्चेतनकर्तृकत्वं परिशेषसिद्धं चेतनाद्रि पित्रादेः पुत्राद्युत्पत्तिदर्शनात्तद्दृष्टांतेन ब्रह्मादिचेतनजातं परमचेतनाद्विष्णोरुत्पद्यत इति शुष्कोयं तर्कः समुत्तिष्ठते। चशब्दः समुच्चये वेदानामपौरुषेयत्वेन कर्तृप्रसिद्ध्यभावादसंदिग्धप्रमाणत्वेन तदनुगृहीततर्कस्यापि प्रतितर्कपराहतिर्नाशंकनीयेत्यस्मिन्नर्थे वा अनेन''अथातो ब्रह्मजिज्ञासा। जन्माद्यस्य यतः । शास्त्रयोनित्वात् । तत्तु समन्वयात् ।'' इति चतुःसूत्री च व्याख्याता । जिज्ञासैव धीमहीत्यनेनोच्यते । वेदविचारनिर्णेतृगुणोपसंहाररूपत्वात् । इयानेव विशेषः । ध्यानमेव ज्ञानसाधनं न कर्मादिकमित्यतो धीमहीतिपदं कर्मणा शुद्धांतःकरणस्य ध्यानसंभवात् । यस्तु श्रुतिस्मृती अनादृत्य केवलतर्केण ब्रह्मणो जन्मादिकारणत्वं घटयितुं प्रत्यवतिष्ठति सोन्वयव्यतिरेकात्मकतर्केणापहस्तितव्य इत्यतो वा आह । अन्वयादितरतश्चेति ॥ अन्वयात् अन्वयानुमानात् इतरतो व्यतिरेकानुमानात्तौ च दर्शितौ । चशब्दस्तु परोक्ततर्कस्य केवलस्य व्याप्तिशून्यत्वादस्य च प्रत्यक्षगृहीतव्याप्तिकत्वेन बलीयस्त्वादप्रतिहतः स्वार्थं साधयतीत्येतस्मिन्नर्थे वर्त्तते । यथांबादेरचेतनस्य स्पंदनादिप्रवृत्तिदर्शनेन प्रधानस्य कारणत्वं किं न स्यात्तत्राह ॥ अर्थेष्विति ॥ अर्थेषु पटादिषु अभिज्ञः सर्वतोशेषविशेषाकारं जानातीत्यभिज्ञः । प्रधानस्य जडत्वेन ज्ञानाश्रयत्वलक्षणासंभवान्नितरां न सर्वज्ञत्वं विष्णोस्तु सर्वज्ञत्वं श्रुतिस्मृतिसिद्धम् ''यः सर्वज्ञः सर्ववित् । तान्यहं वेद सर्वाणि नत्वं वेत्थ परंतप'' इत्यादिना । नन्वस्य हेतोः सर्वज्ञे रुद्रादावपि वृत्तेरसाधकत्वमिति तत्राह । स्वराडिति । स्वयमेव राजत इति स्वराट् । स्वस्य स्वयमेव

राजा नान्योधिपतिरिरिति च । अयं भावः । ''यं कामये तमुग्रं कृणोमि'' इति रुद्रादीनां श्रीप्रसादायत्तज्ञानादिगुणवत्त्वदर्शनात् ''मम योनिरप्स्वान्तरः'' इति । श्रियश्च विष्ण्वनुगृहीतज्ञानादिमत्त्वदर्शनाद्विष्णोश्चानन्याधीनज्ञानादिगुणवत्त्वात्तद्गतानां विशेषाणामनंतानां तैरज्ञातत्वान्न तेषां निरुपमचरितसर्वज्ञत्वमतो न तेषु तस्य हेतोर्व्यभिचार इति स एव कर्त्तेति । ''न ते विष्णो जायमान एव भूताधिपतिः'' इत्यादिश्रुतिरनन्याधिपतित्वे सर्वाधिपतित्वे च मानं स्वष्टुराज्ञांतररहित इति वा स्वराट् । स्वात्मानं स्वयमेव राजयति वा प्रकाशयति न परेच्छयेति वा । ननु श्रुतीनामनंतत्वादेकत्र हरेरनन्याधीनत्वकथनसंवादतः कुतो निश्चयः परोऽनन्याधीनस्तत्राह ॥ तेन इति ॥ यः पर आदिकवये चतुर्मुखाय ब्रह्म सांगं वेदं हृदा स्नेहेन तेने विस्तारितवान् । तस्य सकृदुपदेशमात्रेणाशेषग्रहणसामर्थ्येऽपि विस्तारितमिति ''वक्तव्यं ब्रह्म गुरुणा चतुर्वारमथापि वा'' इत्युपदेशशास्त्रमनुसृत्य तेन इत्युक्तं शिष्यशिक्षायै तथोपदेशसंभवात् । चतुर्मुखस्य वेदोपदेशेन हरेरनन्याधिपत्वे किमायातमिति चेन्न । ''प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव'' इति श्रुतौ चतुर्मुखस्य निरतिशयमाहात्म्यकथनात्तदुपदेष्टृत्वात्तस्यानन्याधिपतित्वसिद्धेः ''यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै'' इति श्रुतेः सकलवेदविद्योपदेशोपि सिद्धः । आदिकवित्वं च ब्रह्मणः ''कविर्यः पुत्रः स इमा विकेत'' इत्यादिश्रुतिसिद्धम् ।''ब्रह्मा वेदस्तपस्तत्त्वं ब्रह्मा विप्रः प्रजापतिः'' इति । हृत्स्नेह मनसि स्निग्धे सुहृद्धंघी हरावपीत्यभिधानम । न प्रहेलिकावदुपदेश इति द्योतनाय हृदेत्युक्तम् । तेने ब्रह्मेति सर्वज्ञत्वे हेत्वंतरं वा सकलचेतनराश्युत्तमस्य चतुराननस्योपदेष्टुः शार्ङ्गपाणेः सर्वज्ञत्वं न्यायप्राप्तमिति भावः । ''वेदाहमेतं पुरुषं महांतमादित्यवर्णं तमसः परस्मादित्'' इति श्रुतौ नारायणविषयज्ञाने स्वातंत्र्यकथनात्तदुपदिष्टज्ञानेनैव तज्ज्ञानं कथं संगच्छत इत्याशंक्य ''यमेवैष वृणुते तेन लभ्यः'' इतिश्रुतेस्तत्प्रसादायत्तं तज्ज्ञानं न तु स्वप्रतिभयान्यथा ज्ञानमेव न स्यादुक्तहेतोरित्यभिप्रेत्याह ॥ मुह्यंति यत्सूरय इति । भूतभविष्यद्वर्त्तमानब्रह्मादयो यत्प्रसादमंतरेण मुह्यंति मुह वैचित्त्ये इति धातोश्चितिर्ज्ञानं न जानंति क्वचिदन्यथा च जानंतीत्यर्थः । तस्माद्ब्रह्मादिचेतनराश्यचिंत्यमहिमामहीश्वर इति प्रतीयते।नन्वीश्वरः सृष्ट्यादौ प्रवर्तमानः प्रयोजनार्थी सृजत्यन्यथा वा न प्रथमः।यत्प्रयोजनार्थं प्रवर्त्तते पूर्वं तदभावादपूर्णत्वेनाशक्तत्वात्सृष्ट्यनुपपत्तेः । न द्वितीयः । प्रवृत्तिमात्रस्य स्वप्रयोजनोद्देशेन दृष्टत्वाद्वृथा तदनुपपत्तेरतो मायामयी सृष्टिरेष्टव्येत्यत आह ॥ तेजोवारीति ॥ तेजोवारिमृदां विनिमयो यथा तथा त्रिसर्गो यत्र भगवति मृषैव पूर्वाप्राप्तप्रयोजनप्रापको नेत्यर्थः । कथं तर्हि प्रवृत्तिरिति चेदुच्यते ''देवस्यैष स्वभावोयमाप्तकामस्य का स्पृहा । लोकवत्तु लीलाकैवल्यम्'' इति श्रुतिसूत्रबलादाप्तसमस्तप्रयोजनस्य हरेर्लीलयैव प्रवृत्तिरिति भावः । जीवेश्वरजडानां सर्गस्त्रिसर्गः । यथैकमेव मूलं तेजः स्वकार्येषु पार्थिवादिपदार्थेषु बहुधा भूत्वा प्रविशति बहिश्च मथनादिनाविर्भवति तथेश्वरोऽपि जगत्सृष्ट्वा बहुरूपीभूय जगदंतः प्रविशति बहिश्च भक्तानुकंपया वासुदेवादिबहुरूप आविर्भवति अयमीश्वरसर्गः दीपाद्दीपांतरोत्पत्तिर्यथा तथेश्वरसर्ग इति वा यथा सूर्यादितेजसां जलाद्युपाधिनिमित्तैर्बहूनि प्रतिबिम्बानि जायन्ते तथैव सूक्ष्मस्थूलशरीराद्युपाधिनिमित्तैः प्रतिबिंबभूता जीवा हरेरुत्पद्यंते एष जीवसर्गः । यथा कुलालो मृदमुपादानीकृत्य घटादीन्सृजति तथेश्वरो जडप्रकृतिमुपादाय महदहंकाराद्यशेषजडपदार्थान्सृजतीत्येष जडसर्गः । अनेन मायामयी सृष्टिरित्यस्यकिमायातमिति चेदुच्यते यत्रेश्वर इति । विशेषणादन्यत्र जगत्यमृषा मिथ्या न भवति । तथा च योजना यथा तेजो वारिमृदां विनिमयः ॥ कार्यमर्थक्रियायोग्यत्वात्सदसद्विलक्षणो न भवति तथा यत्र यदाधारतया क्रियमाणस्त्रिसर्गो मृषा न भवति अतोर्थक्रियोपपत्तिरेव मिथ्यात्वबाधिकेति भावः । ननु तेजःकार्यं स्फुलिंगादि वारिकार्यं फेनादि मृत्कार्यं घटादि यथा मिथ्या तथा यत्र जगन्मृषेत्यर्थः स्यात् तथा च श्रुतिः '' वाचारंभणं विकारः '' अनुमानं च विमतं मिथ्या दृश्यत्वादित्यतो मायामयी सृष्टिरित्यत आह ॥ धाम्नेति ॥ स्वेन धाम्ना स्वरूपज्ञानमहिम्ना सदा निरस्तं कुहकमिंद्रजालादिमाया येन यस्य वा स तथा तं यः सर्वज्ञः । ''अथैनमाहुः सत्यकर्मेति विश्वं सत्यम्'' इत्यादिश्रुतिविरोधादुदाहृतश्रुतेरर्थांतरत्वसंभवान्नित्यनिरस्तेंद्रजालो विष्णुर्मायामयीं सृष्टिं न विदधाति किंतु सत्यामेव लोके चासमर्थः सन्निंद्रजालादिकं सृजति न तु समर्थः । विष्णुस्तु नित्यपरिपूर्णशक्तिः किमर्थं तत्करोतीत्यर्थः मुक्तव्यावृत्तये सदेत्युक्तं तेषां मुक्तेः पूर्वं बन्धनात्केन कुहकत्वसंभवात् । ननु विष्णोः सदानिरस्तकुहकत्वे मुक्तव्यावृत्तिर्घटेत । तदेव कुत इति तत्राह ॥ सत्यमिति ॥ सत्यं निर्दुःखनित्यनिरतिशयानंदाद्यनुभवरूपं '' सच्छब्द उत्तमं वक्ति ह्यानंदंतीति वै वदेत् । येनि ज्ञानं समुद्दिष्टाम्'' इति वचनान्नित्यनिरस्तकुहकत्वेन मुक्तव्यावृत्तिर्युज्यते इति भावः । एतदुक्तं भवति उपक्रमादितात्पर्ययुक्त्युपेतसर्वश्रुतिस्मृतितात्पर्यपर्यालोचनया सर्वजगत्सृष्ट्यादिकर्तृत्वात्सर्वज्ञत्वाच्चतुर्मुखज्ञानोपदेष्टृत्वात्स्वानुग्रहमंतरेण दुर्ज्ञेयत्वात्स्वप्रयोजनानुद्देशेन केवललीलयैव जगत्स

र्जनादिप्रवृत्तिमत्त्वात्स्वत एव न्नित्यनिरस्तेंद्रजालत्वेन सत्यमहिमत्वान्नित्यनिर्दुःखनिरतिशयानंदानुभवस्वरूपत्वाच्च सर्वगुणपूर्णो विष्णुः सर्वैश्वर्येय इति तात्पर्यार्थः । ननु धीमहीतिच्छान्दसः प्रयोगः: कस्मात्कृतः । उच्यते
गायत्रीप्रतिपाद्यं नारायणाख्यं परं ब्रह्मैव न तु सूर्यः “ चक्षोः सूर्यो अजायत ”इति श्रुत्या तदंगजननोक्तेरिति दर्शयितुं यथा वेदाध्ययनोपक्रमे गायत्र्यभिधीयते विशिष्टफलहेतुत्वात्तथा भागवतोपक्रमे इति वा
गायत्र्याशेषवेदप्रतिपाद्यो नारायण एव भागवते प्रतिपाद्यते इति वा इतरेषां भगवत्कृतत्वेनं तत्परत्वेपि तद्व्यावृत्तये वा इतरेभ्योप्यस्य माहात्म्याधिक्यप्रकटनायेति वा धीमहीति छांदसं पदं प्रायुंक्त भगवान्बादरायण इति ।
अथौपनिषद्व्याख्यानमाह । तं परं सत्यं वयं धीमहीति संबंधः । सत्यमबाध्यं तत्र किंचिद्व्यवहारमात्राबाध्यं तद्व्यावर्त्तयन्नाह परमिति । परमार्थसत्यमत्यंताबाध्यमित्यर्थः । तथा च श्रुतिः “ सत्यस्य सत्यम् ” इति
“प्राणा वै सत्यं तेषामेष सत्यम् ” इति प्राणशब्दोदितानां स्थूलसूक्ष्मभूतानां व्यवहारतः सत्यानामधिष्ठानभूतं परमार्थसत्यमात्मानं दर्शयति । एवं “ सत्यं ज्ञानमनंतं ब्रह्म ऐतदात्म्यमिदं सर्वं स आत्मा तत्त्वमसि” इत्यादि
श्रुतिरपि ब्रह्मात्मशब्दोदितं परं तत्त्वमबाध्यं दर्शयति । सर्वभ्रमाधिष्ठानत्वात्सर्वबाधावधित्वाच्च परमार्थसत्यत्वम् । नहि निरधिष्ठानो भ्रमोस्ति न वा निरवधिबाधः। तत्र सर्वभ्रमाधिष्ठानत्वं जन्माद्यस्येत्यादिना दर्शितं सर्वबाधावधि
त्वं च तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषेत्यादिना तं परं सत्यं सर्वाधिष्ठानसन्मात्रमखंडवाक्यार्थभूतंश्रुत्वा मत्वा च वयं मुमुक्षवो ध्यायेम निदिध्यासेम । ध्यानमत्र निदिध्यासनरूपमेवाभिप्रेतं न तूपासनम्
निदिध्यासनं हि वस्तुस्वरूपापेक्षप्रत्ययानंतरितशाब्दज्ञानसंततिरूपम् । “ आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यः ” इति श्रुत्या “ ततस्तु तं पश्यंति निष्कलं ध्यायमानः ” इत्यादिश्रुत्या चात्म
साक्षात्कारसाधनत्वेन विहितम् । उपासनन्तु वस्तुस्वरूपानपेक्षं पुरुषेच्छामात्रतंत्रं मानसाक्रियाप्रवाहरूपं यथा यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्नित्यादि । इदं च वस्तुस्वरूपानपेक्षमपि तंदविरोधि किं
चिद्विरोध्यपि यथा वाचं धेनुमुपासीतेत्यादि । द्विविधमप्युपासनं श्रुत्या च ब्रह्मणि निषिद्धम् । “ तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ” इति शुद्धगोचराया वृत्तेरुपनिषन्मात्रकरणकत्वात्“ तं त्वौपनिषदम्” इति श्रुते
स्तस्या एव चावर्त्यमानाया निदिध्यासनरूपत्वाद्युक्तं शुद्धगोचरत्वम् ।एतावन्मात्रपर्यवसानाच्च सर्वसाधनविधीनां धीमहीत्युक्तम् । एतस्य च मंगलत्वं “सर्वदा सर्वकार्येषु नास्ति तेषाममंगलम् । येषां हृदिस्थो भगवान्मंगलायत
नोहरिः”इत्यादिशास्त्रसिद्धम् एवं शुद्धस्य ब्रह्मणो निदिध्यास्यमानस्य परमार्थसत्यतामुपपादयितुं तत्पदार्थरूपतामाह जन्माद्यस्येत्यादिना अस्य प्रत्यक्षादिसकलप्रमाणसांनिधापितस्य जगतो जन्मादि जन्मस्थितिभंगं यतो
भवति तं सत्यं धीमहीति संबंधः । तथा च श्रुतिः “ यतो वा इमानि भूतानि जायंते । येन जातानि जीवंति । यत्प्रयंत्यभि संविशंति ” इत्याद्याः “ आनंदो ब्रह्मेति व्यजानात् । आनंदादेव खल्विमानि भूतानि जायंते”
इत्याद्या जगज्जन्मलयस्थितिकारणतां ब्रह्मणो दर्शयति । यत इति प्रकृतौ पंचमी । “जनिकर्तुः प्रकृतिः” इति पाणिनिस्मरणात् जन्मादिति तद्गुणसंविज्ञानो बहुव्रीहिः। “सर्वादीनि सर्वनामानि” इतिवत् । जन्मनश्चादित्वंश्रु
तिनिर्देशापेक्षं वस्तुवृत्तापेक्षं च ननु “ असद्वा इदमग्र आसीत् ” इति श्रुत्याकार्येष्वनुस्यूतत्वाच्छून्यमेव जगत्कारणमस्तु नेत्याह ॥ अन्वयादिति । इदं सदिदं सदिति सद्रूपस्यैव कार्येष्वनुस्यूतत्वात् । इतरतश्च
असतोनन्वयात् शून्यमिदमिति प्रतीत्यभावात् । “ कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः सज्जायेत ” इति वाक्येनासतः कारणताप्रतिषेधाच्च सद्रूपं ब्रह्मैव जगदुपादानमित्यर्थः । “ सदेव सोम्येदमग्र
आसीत्” इति श्रुतिवाक्यान्वयात् । इतरतश्च “असद्वा इदमग्र आसीत्” इत्यसतः सत्तानन्वयाच्चेति वा तथा चासत्पदं सूक्ष्मत्वेन गौण्या वृत्त्या सत्येव योजनीयमेतच्च समाकर्षादिति समन्वयाध्याये चतुर्थपादे चतुर्थाधि
करणे प्रकृतस्यैव सत्यज्ञानादिलक्षणस्याकर्षणम् प्रतिपादनमाकर्षः नामरूपादिराहित्यं सूत्रेण व्याख्यातम् । इतरतश्चेत्यत्र चकारादसतोऽन्वयलाभः । अथ वा कार्यान्वयाद्ब्रह्मकारणमित्युक्तेः कार्यान्वयात्कार्यविनाशे
तस्य विनाशमाशंक्योक्तमितरतश्चेति । तथा हि । घटनाशेपि तदन्विता मृन्न नश्यति । तत्कस्य हेतोर्घटे भिन्ने शरावादौ तस्या अन्वयात् ।एवं सदपि इतरत इतरत्र कार्यांतरेतदुपलंभान्वयादित्यर्थः । वाक्यार्थानुपपत्त्या
दिदोषाच्च नासतो जगत्कारणतेत्याह ॥ अर्थेष्वभिज्ञ इति ॥ न हि सतोप्यर्थानविदित्वा कश्चिद्रचितुं शक्यते किं पुनरवस्तुनेति भावः । तथा च श्रुतिः ।“यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं
च जायते ” इति “सदेव सोम्येदमग्र आसीत् । एकमेवाद्वितीयम् । तदैक्षत बहुस्यां प्रजायेय” इत्याद्या च । स्वरूपसाधनप्रयोजनादिविज्ञानवत एव जगत्कारणत्वं दर्शयति अभितः सर्वप्रकारेण । सामान्यतो विशे
षतश्च सर्वं वस्तु जानातीत्यभिज्ञः सर्वज्ञः सर्वविदिति पदद्वयार्थो दर्शितः अर्थानामभिज्ञ इति दर्शिते अर्थेष्विति सप्तमी सर्वत्रैकरूपैवावृत्त्या कल्पितत्वरूपा विषयतेति सूचयति । अथवान्वयादितरतश्चार्थे

त्विति पूर्वेणैव संबंधः । एवं च सर्वज्ञत्वोपादानत्वेन परमाणुकारणवादः प्रधानकारणवादश्च निराकृतः । ननु माभूत्कारणता परमाणूनां प्रधानस्य तु भविष्यति सत्त्वपरिणामेन सर्वज्ञत्वसंभवात् ब्रह्मणश्च निर्द्धर्मकत्वेन सर्वज्ञानाभावेनाकर्तृत्वादित्यत आह । स्वराडिति । स्वयमेव राजते प्रकाशत इति स्वराट् अन्यानपेक्षप्रकाशरूप इत्यर्थः । तथा च सविता प्रकाशत इत्यादिवत्कर्तृत्वोपचारिकत्वेन सर्वविषयज्ञानस्वरूपत्वस्य विवक्षितत्वात् न प्रधानस्याचैतनस्य कारणता प्रसंग इत्यर्थः । एवं चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञा समर्थिता भवति । अन्यथा प्रधानविज्ञाने तत्कार्यज्ञानसंभवेपि तत्कार्याणां ज्ञानासंभवात् ब्रह्मणि विदिते तु पुरुषाणां स्वत एव तद्रूपत्वात् इतरेषां च तत्र कल्पितत्वेन तदव्यतिरेकात् "येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" इत्यादिश्रुत्या "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इत्याद्यया "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञातमिदं सर्वं विदितम्" इत्याद्यया च प्रतिपादितैकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तेः । ननु । ब्रह्मकारणत्वेऽप्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञा नोपपद्यते वेदस्यापौरुषेयत्वेन स्वतंत्र्याभ्युपगमात् तस्य ब्रह्मकार्यत्वेन पौरुषेयत्वेनाप्रामाण्यप्रसंगात् । किं बलाद्ब्रह्मकारणतापि व्यवस्थाप्येत तस्मात्संकोचितायां प्रतिज्ञायां स्वकार्यापेक्षया प्रधानमपि लब्धप्रसरमित्याशंक्याह । तेन इत्यादि । ब्रह्म वेदं यस्तेने विस्तारितवान् श्वासप्रश्वासादिवल्लीलयाविर्भावितवान् । तथाच श्रुतिः "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः" इत्याद्या वेदस्यापि ब्रह्मोपादानतां दर्शयति । न च ब्रह्मकार्यत्वे सति तस्य पौरुषेयत्वं पुरुषमात्रजन्यत्वेपि पौरुषेयत्वे[१]वर्णानां नित्यत्वेप्यानुपूर्वीविशेषस्य पुरुषजन्यत्वान्मीमांसकं मन्यस्यापि वेदाप्रामाण्यप्रसंगः।वर्णनित्यत्वमात्रेणैवापौरुषेयत्वव्यवस्थापने लौकिकवाक्यस्यापि तत्प्रसंगः । तस्मान्मानांतरेणार्थमुपलभ्य रचितत्वं पौरुषेयत्वं सापेक्षत्वलक्षणाप्रामाण्यप्रयोजकम् । तच्च न वेदे वेदार्थस्य मानांतरागोचरत्वात् । इदमेव श्रुत्या निःश्वसितदृष्टांतेन दर्शितम् । यथा हि निश्वासः पुरुषाज्जायमानोपि न पुरुषचिकीर्षाजन्यः सुषुप्तावपि तद्दर्शनात् । एवं वेदो ब्रह्मणः सकाशाज्जायमानोपि न ब्रह्मचिकीर्षाजन्यस्तदर्थस्य वेदातिरिक्तमानाविषयत्वात् । तथा च वेदतदर्थज्ञानयोस्तुल्यकालत्वान्न ब्रह्मणः सार्वज्ञ्यव्याघातो न वा वेदस्य पौरुषेयत्वम् एवं च सत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञा न संकोचनीया बाधकाभावात् । अत्र चेदृशमनुमानं सूचितम् । वेदनिष्ठा सर्वार्थप्रकाशनशक्तिः सदुपादाननिष्ठा कार्यगतप्रकाशनशक्तित्वात् । वह्न्युपादानकदीपगतप्रकाशनशक्तिवत् अतो वेदोपादानत्वेनापि ब्रह्मणः सार्वज्ञसिद्धिः केचित्तु हिरण्यगर्भ एव वेदवक्ता जगत्कारणञ्चेत्याहुः तान्निराकरोति हृदा आदिकवय इति । आदिकविर्हिरण्यगर्भस्तस्मै हृदा सह यो ब्रह्म तेने अंतःकरणं सूक्ष्मपंचभूतकार्यमुत्पाद्य तदुपाधेर्हिरण्यगर्भस्य वेदतदर्थज्ञानं कारितवानित्यर्थः । तथा च श्रुतिः "यो ब्रह्माणं विदधाति" इत्याद्या हिरण्यगर्भतद्वेदाविर्भावयोः परमेश्वराधीनतां दर्शयति तदपि हृदा मनसैव तेने न तु मुखेनाध्यापितवानिति वा अनेन सर्वांतर्यामित्वं दर्शितम् । तथा च श्रुतिः "यः सर्वेषु भूतेषु तिष्ठन्सर्वभूतेभ्योंतरात्मा यं सर्वाणि भूतानि न विदुः यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यंतरो यमयत्येष त आत्मांतर्याम्यमृतः" इत्याद्या सर्वांतर्यामित्वेन परमात्मानं प्रतिपादयति । ननूदाहृतश्रुतीनां ब्रह्मणि प्रामाण्यं न संभवति ब्रह्मणः सिद्धत्वेन मानांतरायोग्यत्वात् अंततः स्वरूपचैतन्यस्यैव मानान्तरत्वात् । तथा च तत्संवादे[१] श्रुतीनां नाज्ञातज्ञापकत्वलक्षणं प्रामाण्यं विसंवादे तु बाधितविषयत्वात्सुतरामप्रामाण्यम् । तथा च प्रधानपरमाण्वादिकारणताबोधकमनुमानं लब्धावकाशं भविष्यतीत्यत आह मुह्यंतीति । यदत्र यस्मिन्विषयेऽखंडानंदाद्वयस्वरूपचिन्मात्रलक्षणे सूरयस्तार्किकादयो मुह्यंति मोहमज्ञानमनुभवंति । मोहो हि द्विविधः । आवरणरूपो विक्षेपरूपश्च । तत्रावरणरूपोप्यसत्त्वावरणरूपो भानावरणरूपश्चेति द्विविधः । तत्र नास्ति शुद्धं ब्रह्म न भासते वेति द्विविधो मोहो वेदांतशास्त्रविचारपराणां तु परोक्षज्ञानेनासत्त्वावरणनिवृत्तावप्यभानावरणमनुवर्तत एव । नास्ति ब्रह्मेति प्रतीत्यनुदयेपि मम न भाति ब्रह्मेति तेषां प्रतीतेः । अत एव ते तदभानावरणंनिवर्तकस्य साक्षात्कारस्य साधनान्यनुतिष्ठंति । एवं च विक्षेपोप्यावरणकार्यभ्रमविशेषरूपः प्रत्यक्ष एव । यतो जीवाद्भिन्न एवेश्वरो जगतो निमित्तकारणमात्रमेवेति तार्किकवैशेषिकपातंजलपाशुपतादयो व्यवहरंति । सांख्यमीमांसकादयस्तु जगन्निमित्तकारणत्वेनापीश्वरन्नोपयंति किं तु प्रधानपरमाण्वाद्येव तेन रूपेणोपास्यमाहुः । तस्माद्ब्रह्मविषयकमोहस्यापरोक्षत्वात्स्वरूपचैतन्यस्य च तत्साधकत्वेन तदनिवर्त्तकत्वात्तन्निवर्त्तकवृत्त्युत्पादनेन वेदांतानां प्रामाण्यमव्याहतमेव सिद्धत्वेपि[२] ब्रह्मणो मानांतरायोग्यत्वं रूपादिहीनत्वेन व्युत्पादितं भाष्यकारप्रभृतिभिः । एवं पूर्वार्द्धेन तत्पदवाच्यार्थमुक्त्वा परार्द्धेन तल्लक्ष्यं वक्तुमारभते "अध्यारोपापवादाभ्यां निःप्रपचं प्रपंच्यते ॥" इति न्यायेन तेजोवारीत्यादिना । यत्र ब्रह्मणि त्रयाणां तेजोबन्नानां सर्गस्त्रिसर्गः स मृषा मिथ्यैव शुक्तौ रजतवत् । छांदोग्ये सृष्टि

१ तस्य ब्रह्मणः संवादे सिद्धत्वे । २ तदसिद्धत्वे ।

**ऽन्यतो वेदाध्ययनमप्रसिद्धम् । सत्यम् । तत्तु हृदा मनसैव तेने विस्तृतवान् । अनेन बुद्धिवृत्तिप्रवर्तकत्वेन गायत्र्यर्थो दर्शितः । वक्ष्यति हि । " प्रचोदिता येन पुरा**

प्रकरणे त्रयाणां तेजोबन्नानां साक्षात्पठितत्वात्त्रिसर्ग इत्युक्तं वियदधिकरणन्यायेन तु पंचभूतसर्ग इति द्रष्टव्यम् । तथाहि "न वियदश्रुतेः" वियदाकाशो नोत्पद्यते कुतः छांदोग्ये तदुत्पत्तेरश्रवणात् यद्यपि "आत्मन आकाशः संभूत" इति श्रुतिरस्ति । तथापि सा गौणीति गूढोभिसंधिः तथा चाकाशोत्पत्तेरनभ्युपगमादेव न विरोधः । गूढाभिसन्धिमजानानः शंकते । अस्ति तु १ तुशब्दो वियतोनुत्पत्तिवारणार्थः कुतः । छांदोग्ये वियदुत्पत्त्यभावेपि सा श्रुतिस्तैत्तिरीयकेऽस्तीत्यर्थः । तथा च विरोधस्तदवस्थ इति शंकितुरभिप्रायः २ एकदेशी स्वाभिप्रायं प्रकटयति गौण्यसम्भवात् ३ न ह्याकाशोत्पत्तिश्रुतिर्मुख्या किन्तु गौणी । कुतः असंभवात् । आकाशोत्पत्तौ समवायिकारणादिसामग्र्यभावाद्विभुत्वेन नित्यत्वानुमानाच्चाकाशोत्पत्तेरसंभवादित्यलं प्रसक्तानुप्रसक्त्या । स्त्रीकृतेपि पांचभौतिकसर्गे त्रिवृत्सर्गस्तु सर्वथास्त्येवेति ज्ञेयम् । तन्मिथ्यात्वे दृष्टांतमाह । तेजोवारिमृदां विनिमयो व्यत्यासः व्यामिश्रीभावोऽन्यस्मिन्नन्यावभासरूप इति यावत् तथा च श्रुतिः "यदग्ने रोहितं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचारंभणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्" इत्यादिना । कृत्स्नस्यापि विकारस्यानृततां दर्शयति न ह्यारंभवादो वा परिणामवादो वा संभवति तथा हि परमाणुः परमाण्वंतरेण पूज्यमानो द्व्यणुकमारभते इत्युपेयते तत्र द्व्यणुकासमवायिकारणीभूतः संयोगः परमाण्वोः कार्त्स्न्येन वा समवाय्येकदेशेन वा आद्ये प्राथिमानुपपत्तिः । द्वितीये सावयवत्वापत्तिः । एवं परिणामोऽपि प्रधानस्य कात्स्नन वैकदेशेन वा । आद्ये कारणविनाशापत्तिः । द्वितीये सावयवत्वापत्तिः । न चेष्टमेवैतत् । सावयवत्वे तस्यापि जन्यत्वेन मूलकारणविनाशापत्तिः । एवं कार्यमपि कारणव्यापारात्प्रागसत् सद्वा । आद्ये कार्यकारणभावाग्रहः । नहि खपुष्पेण समं कस्यचित्सम्बधो गृह्यते उत्पन्नघट इव प्रागभावप्रतियेगित्वेनासतोपि कार्यत्वं भविष्यतीति चेत् हंत प्रागभावप्रतियोगित्वं निराश्रयं साश्रयं वा । आद्ये शशविषाणतुल्यता द्वितीये सत्कार्यवादापत्तिः प्रागभावप्रतियोगित्वाश्रयत्वेनैव कार्यसत्त्वांगीकारात् नच सत्कार्यवादोऽपि घटते । अविद्याकारकव्यापारवैयर्थ्यापातात् आविर्भावतिरोभावयोरपि सदसत्त्वविकल्पग्रासात् तस्मात्सदसद्विलक्षणत्वेनानिर्वचनीयतैव कार्यकारणयोरिति विवर्तवादोवशिष्यते । तथा चाविद्यावशाच्छुद्धे ब्रह्मणि द्वैताभासो मिथ्येत्यर्थः । नन्वविद्याकार्याणामसत्त्वेप्यविद्यायाः सत्यत्वमस्तु । अनादिभावत्वात् ब्रह्मवत् कल्पकशून्यत्वाच्च । नहि द्वैतप्रपञ्चकल्पनाहेतोरविद्यायाः कल्पकांतरमस्ति स्वस्या एव कल्पकत्वे आत्माश्रयात् । अविद्यांतराभ्युपगमे चानवस्था स्यात् । तथा चैकविज्ञानेन सर्वविज्ञानव्याघातोऽनिर्मोक्षापत्तिश्चेत्यत आह धाम्ना स्वेन । सदा निरस्तं नित्यनिवृत्तं कुहकं कपटमविद्याख्यं यस्मिंस्तत्तथा तत्र हेतुः । स्वेन धाम्नेति । अखंडानंदाद्वितीयचैतन्यरूपत्वादित्यर्थः । तथा च श्रुतिः " सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् " इत्यादिः अन्यथानुपपद्यमानैरेकाद्वितीयशब्दैरखंडमेव वस्तु प्रतिपादयति दृग्दृश्यसंबंधानुपपत्त्या कल्पितत्वेनैवाविद्यायाश्चैतन्यभास्यत्वनियमाच्च एकस्या एव च स्वपरसाधारणकल्पनामूलत्वान्नाविद्यांतराभ्युपगमः । उत्पत्त्यनंगीकारेण ज्ञप्तेश्च नित्यत्वेन नात्माश्रयादिदोषः । अनादिभावत्वं चात्मनो नित्यत्वे प्रयोजकं न भवति किंतु परमार्थसत्यत्वमविद्यायाश्च सदसद्विलक्षणत्वाज्ज्ञाननिवर्त्यत्वोपपत्तेः । तथा च मायातत्कार्यहीनः परमात्मा तत्पदलक्ष्यो दर्शितः एतेनैव त्वंपदलक्ष्योपि दार्शितः । तस्यापि मायातत्कार्यशरीरादिहीनत्वात् । जाग्रत्स्वप्नसुषुप्तिसाक्षिणस्तद्वत्त्वाभावात् । एवं च पदार्थज्ञानपूर्वकवाक्यार्थबोधे सति तदावृत्तिरूपं निदिध्यासनमुपपन्नम् अथ जन्माद्यस्य यत इत्यनेनानंदरूपत्वं दर्शितम् "आनंदादेव खल्विमानि भूतानि जायंते"इत्यादिश्रुतेः । अन्वयादित्यनेन सद्रूपत्वं नित्यत्वं विभुत्वं च सर्वदेशकालान्वयबोधनात् । स्वराडित्यनेन स्वप्रकाशज्ञानरूपत्वं धाम्ना स्वेन निरस्तकुहकमित्येनाद्वितीयत्वं सत्यमित्यनेन परमार्थत्वमिति सत्यं ज्ञानमनंतं ब्रह्मेत्यादिना वाक्यार्थो दर्शितः । अथ च त्वं पदार्थोपि शक्यतेऽनेन श्लोकेन दर्शयितुं श्लेषालंकारस्यात्यंतचारुत्वात् । तथाहि । यो जीवोऽस्य देहेंद्रियादेर्जन्मादि विकारजातमन्वयादनुगतवान् अविद्ययात्मन्यारोपितवांस्तं परं सत्यं धीमहीति संबंधः । अस्य कीदृशस्य यतः गच्छतः सर्वदा परिणममाणस्येत्यर्थः । जन्मादि गच्छत इति वा जातो देवदत्तो मृतो देवदत्त इत्यादिप्रतीतेः । तद्यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरंत्येवमस्मादात्मनः सर्व एव आत्मानो व्युच्चरंतीति जन्मश्रुतेश्च । स्वत एव जन्मादिमाङ्गवो स्तु नेत्याह इतरतश्चेति । जन्माद्ययोगत्वादित्यर्थः । तथाच श्रुतिः "न जायते म्रियते वा विपाश्चिन्नायं कुताश्चिन्न बभूव कश्चित् । अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे" इत्याद्या स्मृतिश्च भगवद्गीता जीवस्य जन्मनाशौ वारयति कृतहान्यकृताभ्यागमादिदोषप्रसंगादुपाध्युत्पत्तिमात्रेणैव व्युच्चरन्तीत्यादिश्रुत्युपपत्तेस्तद्गुणसारत्वादित्यादिन्यायाच्चेति चकारार्थः । तद्गुणसारत्वात्तु व्यपदेशः प्राज्ञत्वात् । अस्यार्थः । तुशब्दः पूर्वपक्षनिरासाय

सरस्वती वितन्वताजस्य सतीं स्मृतिं हृदि । स्वलक्षणा प्रादुरभूत्किलास्यतः स मे ऋषीणामृषभः प्रसीदताम् । ” इति ॥ ननु ब्रह्म स्वयमेव सुप्तप्रतिबुद्धन्यायेन वेदमुपलभ

अणुर्जीवः किं ब्रह्मणस्तत्त्वांतरमुत विकारः आहोस्विद्ब्रह्मणो भिन्नः । नाद्यः । एकविज्ञानात्सर्वविज्ञानप्रतिज्ञाबाधात् । न द्वितीयो निर्विकारत्वात् । तस्मात्सर्वश्रुत्यनुसारी तृतीयः पक्षः परिशिष्यते । तथा च ब्रह्मणो नव धिकमहत्त्वावगमाज्जीवोप्यनवधिकमहत्त्ववान् “स वा एष महानज आत्मा योयं विज्ञानमय” इति विज्ञानमयस्य जीवस्य स्वतो महत्त्वावगमाच्च “एषोणुरात्मा चेतसा वेदितव्य” इत्येतच्च जीवविषयं वेदितव्यत्वश्रवणात् । किन्तु चक्षुराद्यविषयत्वेन दुर्विज्ञेयब्रह्मविषयं बालाग्रशतभागस्येति वाक्यं । तु जीवस्यौपाधिकमणुत्वमनूद्य स चानंत्याय कल्पत इति वाक्यशेषेणानंत्यमपरिच्छिन्नत्वं बोधयति । किञ्चात्मनोणुत्वे देहव्याप्युपलंभो न स्यात् न च चंदनबिंदुदृष्टांतः । तस्य सावयवत्वेनावयवद्वारा व्यापित्वसंभवात् । नापि व्याप्यज्ञानाद्व्याप्तिकार्यसंभवः । गुणिव्यतिरेकेण गुणावस्थानां योगेन व्याप्तिज्ञानस्यासम्भवात् । न च गंधन्यायेन गुणस्य ज्ञानस्य गुणिव्यतिरेकसंभवः गंधस्यापि गणत्वेन साश्रयस्यैवा गमनांगीकारात् । अन्यथा गुणत्वव्याहतेर्गंधस्य द्रव्यत्वेन तद्दृष्टांतो भवेत् । प्रज्ञया शरीरमारुह्येत्येतदपि प्रज्ञया बुद्ध्याख्यांतःकरणेनेति व्याख्येयम् । कथं तर्हि जीवेणुत्वव्यपदेशस्तद्गुणसारत्वादिति ब्रूमः । तस्या बुद्धेर्गुणा अणुत्वोत्क्रांतिगत्यागतिसुखदुःखादयस्ते गुणाः सारं प्रधानं यस्य जीवस्य स तथा तस्य भावस्तत्वं तस्मात्तद्व्यपदेशोणुत्वादिव्यपदेशो न तु स्वाभाविकः प्राज्ञवत् प्राज्ञस्य परमात्मनः सगुणेषूपासनेषु “दहरोस्मिन्नंतराकाशः अणीयान् व्रीहेर्यवाद्वे” त्यादिषूपाधिवशाद्यथाणुत्वादिकं व्यपदिश्यते तद्वदित्यर्थः । किं च देहमिंद्रियं मनः प्राणं च केचिदात्मत्वेन प्रतिपन्नास्तान्निराकरोति । अर्थेष्वभिज्ञ इति । न हि भौतिकानां देहेंद्रियप्राणमनसां ज्ञातृत्वं संभवति घटादाव पि तत्प्रसङ्गात् । एतेषां चानित्यत्वादात्मनित्यत्वस्य च व्यवस्थापितत्वात् । एतेन विभुत्वमपि व्याख्यातम् । नित्यत्वं हि मध्यमपरिमाणत्वेऽनुपपद्यमानं परमाणुत्वे वा परममहत्त्वे वा व्यवतिष्ठत तत्र परमाणुत्वे सकलशरीरव्यापिसुखदुःखानु पलंभप्रसंगात्सकलदेहव्यापिकार्योपलब्धेश्च परममहत्त्व एव नित्यत्वं व्यवतिष्ठेत । एतेन देहाद्यतिरिक्तोपि देहपरिमाण एवात्मेति क्षपणकपक्षो निरस्तः । अस्तु तर्हि देहेंद्रियातिरिक्तो विभुरेवात्मा ज्ञानाश्रयो न तु ज्ञानरूप इति मतं तत्राह । स्वराडिति । स्वयमेव राजत इति स्वराट् । स्वप्रकाशज्ञानरूप इत्यर्थः । “अत्रायं पुरुषः स्वयं ज्योतिर्भवति” इत्यादि श्रुतेः संदेहविपर्ययाद्यविषयत्वे सदाभासमानत्वात् । स्वजन्यज्ञानविषयत्वे च कर्तृकर्मविरोधात् । ज्ञोऽत एवेति न्यायाज्ज्ञानरूप एवा त्मेत्यर्थः । अविरोधाध्याये तृतीयपादे द्वादशाधिकरणे ज्ञो नित्यचैतन्यरूपोऽयमात्मा अत एवोत्पत्त्यसंभवादेव परमात्मवदिति न्यायार्थः । ननु जीवस्य स्वप्रकाश ज्ञानरूपत्वे जन्मादिशून्यत्वे च ब्रह्मणो भेदकाभावात्स्वत एव च ब्रह्माभिन्नत्वे शास्त्रारंभो निरर्थकः । ब्रह्मावबोधस्य सर्वदा विद्यमानत्वादित्यत आह । तेनेऽब्रह्महृदा य आदिकवय इति । हृदा मनसा उपाधिना तादात्म्या पन्नः सन्नब्रह्म ब्रह्मविपरीतं कर्तृत्वभोक्तृत्वादिलक्षणं संसारसंचरणरूपं विस्तारितवान् । तथा च श्रुतिः । “समासमानः सन्नुभौ लोकावनु संचरति ध्यायतीव लेलायतीव सधीः स्वप्नो भूत्वा” इत्याद्या धीसंबंधाद संसारिणोऽसंसारितां दर्शयति । तथा च तन्निवृत्तये ब्रह्मात्मतोपदेशो युक्त इत्यर्थः । संसारस्य मोक्षहेतुतां दर्शयति । आदिकवय इति । आदिभूतं च यत्कं सुखं ब्रह्मानंदरूपो मोक्ष इत्यर्थः । तस्य वयः प्राप्तिस्तदर्थ मयवयगताविति स्मरणात् । निमित्तात्कर्मयोगे चेयं सप्तमी । चर्मणि द्वीपिनं हंतीतिवत् । न हि संसाराभावे श्रवणमननादिसाधनानुष्ठानं संभवति । न च तदभावे तत्त्वज्ञानोदयः । न च तमंतरेणानाद्यविद्यानिवृत्ति रिति मोक्षार्थमेव संसारं विस्तारितवानित्यर्थः । तथा च श्रुतिः । “रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इंद्रो मायाभिः पुरुरूप ईयते” इति च “ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्सर्वमभवत् ।” इति च । संसारद्वाराऽविद्यानिवृत्तिरूपं मोक्षं दर्शयति । ननु तर्हि भवतु स्वप्रकाशज्ञानरूप आत्मा किं तु नानंदरूपः प्रतिशरीरं भिन्नश्चेति सांख्यमतं तत्राह । मुह्यंति यत्सूरय इति । यत्र यस्मिञ्जीव स्वरूपे सूरयस्तार्किकाद्यपेक्षया सुधियोपि मुह्यंति भ्राम्यंति. शुद्धस्वरूपं जानाना अपि आनंदरूपत्वं प्रतिदेहमेकत्वं ब्रह्माभिन्नत्वं चाजानंतः । तथा च श्रुतयः “एष एव परमानंद” इति “एको देवः सर्वभूतेषु गूढः” इति “अयमात्मा ब्रह्म” इति तादृग्रूपतां जीवस्य बोधयंति । “तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा” इति श्रुत्यंतराच्च परमप्रेमास्पदत्वादानंदरूपत्वं नानात्वे भोगव्यवस्थानुपपत्तेश्च प्रतिदेहमेकत्वम् ।

---

१ ज्ञानसंभवः ।

ताम् । नेत्याह । यद्यस्मिन्ब्रह्मणि सूरयोऽपि मुह्यंतीति तस्माद्ब्रह्मणोपि पराधीनज्ञानत्वात्स्वतः सिद्धज्ञानः परमेश्वर एव जगत्कारणम् । अत एव सत्योऽसतः सत्ताप्रदत्वाच्च

न हि विभूनामात्मनां सर्वदेहसंबंधित्वाविशेषे कर्मप्रदेशानां भिन्नदिक्त्वमपि भोगानियामकं भवितुमर्हति अविशेषात् । एकात्मवादे तु तत्तदंतःकरणावच्छिन्नप्रदेशानां भिन्नत्वादुपपद्यत एव व्यवस्था देहभेदादेव च प्रति
संधानाभावः । एवं च भेदकशून्यत्वाद्ब्रह्मभिन्नत्वमसिद्धम् । तदभिन्नत्वं तु सिद्धमेव लक्षणैक्यात् । एवं त्वंपदवाच्यार्थं पूर्वार्द्धेन प्रतिपाद्य तल्लक्ष्यमुत्तरार्द्धेन वक्तुमध्यारोपापवादन्यायेनारभते । तेजोवारिमृदां यथा विनिमय
इत्यादिना । यत्रात्मनि त्रयाणां स्थूलसूक्ष्मकारणोपाधीनां जाग्रत्स्वप्नसुषुप्त्यवस्थाहेतूनां सर्गः संसर्गो मृषा मिथ्यैव । न तु परमार्थतः । "स यत्तत्र न किंचित्पश्यत्यनन्वागतस्तेन भवत्यसंगो ह्ययं पुरुष" इत्यादिश्रुतिभ्यः
साक्ष्यस्य साक्षिधर्मानुपपत्तेर्भास्यस्य घटादेर्भासकदीपादिधर्मत्वादर्शनात् । मिथ्यात्वे दृष्टांतः । तेजोवारिमृदां यथा विनिमय इत्यादिना । वारिणि करकारूपे मृद्बुद्धिः । एवं काचादिरूपायां मृदि तेजोबुद्धिरित्युदाहार्यम् ।
तथा चेदमनुमानं सूचितम् । आत्मनि जाग्रदादिबुद्धिर्मृषा तदभाववति तद्बुद्धित्वात् । तेजसि वारिबुद्धिवत् । तदभाववत्त्वं चात्मनः श्रुतिस्मृतिन्यायैर्निश्चितमिति नासिद्धिः । एवं लक्षणैक्येन ब्रह्माभिन्नत्वं
दर्शयति । धाम्ना स्वेन सदा निरस्तकुहकमिति । तदेवं तत्पदार्थत्वं पदार्थतदैक्यकथनद्वारेण शास्त्रस्य विषयो दर्शितः । श्रवणमननयोस्तृतीयश्च निदिध्यासनमिह प्रतिपाद्यते श्रवणमननवतो विजातीय
प्रत्ययनिवारणस्य मनोनिग्रहद्वारा व्युत्पाद्यमानत्वात् । चतुर्लक्षणमीमांसारूपत्वं चास्य सूचितम् । तथाहि । पूर्वार्द्धेन "जन्माद्यस्य यतः" इति न्यायः साक्षादेव दर्शितः । अन्वयादित्यनेन "तत्तु समन्वयात् " इति ।
अर्थेष्वभिज्ञ इत्यनेन "ईक्षतेर्नाशब्दम्" इति । तेने ब्रह्महृदेत्यादिना "शास्त्रयोनित्वाद्" इति । मुह्यंति यत्सूरय इत्यनेन "एतेन सर्वे व्याख्याताव्याख्याता" इत्यंतो न्यायकलापः सूचित इति समन्वयाध्यायो
व्याख्यातः १ तेजोवारिमृदामित्यादिना "तदनन्यत्वमारंभणशब्दादिभ्यः" इत्यादिन्यायसूचनादविरोधाध्यायार्थः २ धीमहीत्यनेन "सहकार्यंतरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवद्" इत्यादि न्यायसूचना
त्साधनाध्यायार्थः ३ धाम्ना स्वेन सदा निरस्तकुहकं परं सत्यमिति फलाध्यायार्थः ४ अविद्यातत्कार्यनिवृत्त्युपलक्षितपरमानंदरूपावशेषात् । पूर्वोक्तन्यायार्थस्तु अस्य जगतो यतो जन्मादि तद्ब्रह्मेत्यर्थः । तद्ब्रह्मैव साक्षाद्वेदांत
प्रतिपाद्यं कुतः समन्वयात् । सम्यगन्वयः समन्वयस्तस्मात् । अन्वयस्य सम्यक्त्वं तात्पर्यवत्त्वं वेदांता न कर्त्रादिप्रतिपादका भिन्नप्रकरणस्थत्वात् । तुशब्दोऽवधारणे इति । अशब्दं प्रधानं न जगत्कारणम् । कुतः । ईक्षतेः ।
जगत्कर्त्तरीक्षितृत्वश्रवणादिति । शास्त्रं वेदस्तद्योनित्वं तत्कर्तृत्वं तस्माद्ब्रह्म सर्वज्ञमित्यर्थः । एतेनं प्रधानवादनिराकरणेन ये हेतवोऽशब्दत्वाचेतनत्वैकविज्ञानप्रतिज्ञानुपपत्त्यादयस्तेषामण्वादिपक्षेपि साम्येन सर्वेऽ
णुस्वभावासत्कारणवादा निराकृतत्वेन व्याख्याताः । अभ्यासोऽध्यायसमाप्त्यर्थः । तस्माद्ब्रह्मणः प्रपंचस्यानन्यत्वं पृथक्सत्ताराहित्यं कुतः आरंभणशब्दादिभ्य एकविज्ञानात्सर्वविज्ञानप्रतिज्ञासिद्ध्यर्थं दृष्टांत उपन्यस्तः ।
"यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति ज्ञानफलभूतसाक्षात्कारे श्रवणाद्यपेक्षया सहकार्यं तदस्य मौनस्य निदिध्यासनाख्यस्य विधिरित्यर्थः । ननु
गार्हस्थ्यमाचार्यकुलं वानप्रस्थं मौनमित्यत्र मौनशब्दस्य पारिव्रज्ये प्रयोगात्कथमत्र मौनं निदिध्यासनं स्यादतः । आह । तृतीयमिति । श्रवणमननद्वयापेक्षया तृतीयं निदिध्यासनमेवात्र मौनं विधेयमित्यर्थः ।
तत्रेतराश्रमसमभिहारबलान्निदिध्यासनप्रधानपारिव्रज्यं मौनशब्देन लक्ष्यते इतिभावः । कस्यायं मौनविधिस्तत्राह । तद्वत इति । ब्रह्मपरोक्षज्ञानवतः पूर्ववाक्ये प्रकृतस्य संन्यासिन इत्यर्थः । ननु सूक्ष्मवस्तुसाक्षात्कारे
निदिध्यासनस्य प्राप्तत्वान्न विधेयत्वमत आह । पक्षेणेति । यस्मिन्पक्षे भेददर्शनप्राप्तिस्तस्मिन्पक्षे प्राप्त्यभावाद्विधिरर्थवानित्यर्थः । ननु ब्रह्मपरवाक्ये कथं मौनविधिरित्याशंक्य दृष्टांतमाह । विध्यादिवदिति । यथा
दर्शपूर्णमासप्रधानपरे वाक्येऽन्वाधानादेरंगजातस्य विधिस्तद्वदित्यर्थः । प्रधानमारभ्यांगपर्यंतो विधिस्तदादिर्विध्यादिः प्रधानमिति यावत् । अत एव प्रयाजादिर्विध्यंत इत्यर्थः । ब्राह्मण्यस्य फलत्वान्न विधिकल्पना
त्रिफलेत्यर्थः । अथ प्रकृतमनुसरामः । एवं सति परमहंससंहितेति समाख्योपपद्यते । परमहंसानां वेदांतवाक्यार्थनिदिध्यासननिष्ठत्वात् । अत्रत्योपाख्यानां तत्तात्पर्यकत्वात् । अत्र गायत्र्यर्थसूचनाद्गायत्री
वदनिशं जप्तव्या गायत्र्यधिकारिभिरेव पठितव्या चेति दर्शितम् । अत्र च सर्गादीन्यपि दशलक्षणान्यनेन पद्येन सूचितानि । जन्माद्यस्य यत इत्यनेन सर्गविसर्गस्थानानि तृतीयचतुर्थपंचमस्कंधव्युत्पाद्यानि सूचितानि

**परमार्थसत्यः सर्वज्ञत्वेन च निरस्तकुहकस्तं धीमहीति । गायत्र्या प्रारंभेण च गायत्र्याख्यब्रह्मविद्यारूपमेतत्पुराणमिति दर्शितम् । यथोक्तं मत्स्यपुराणे पुराणदानप्रस्तावे ।**

तेने ब्रह्म हृदा य आदिकवय इत्यनेन भक्तानुग्रहलक्षणं षष्ठस्कंधव्युत्पाद्यम् मुह्यंति यत्सूरय इत्यनेन कर्मवासनारूपा गतिः सप्तमस्कंधव्युत्पाद्या । मन्वन्तरेशानुकथेऽष्टमस्कंधप्रमेये स्थानमध्य एवांतर्भूते । तेजोवारिमृदां यथा विनिमय इत्यनेन निरोधो दशमस्कंधार्थो दर्शितः । धाम्ना स्वेन सदा निरस्तकुहकमित्यनेन मुक्तिरेकादशस्कंधार्था दर्शिता । सत्यं परमित्यनेनाश्रयो द्वादशस्कंधार्थो दर्शितः । धीमहीत्यात्मनेपदोत्तमपुरुषप्रयोगाद धिकारी प्रथमस्कंधार्थस्तेनैव च ध्यानोपलक्षितसाधनानुष्ठानरूपो द्वितीयस्कंधार्थ इति कृत्स्नभागवतार्थसूचनमिति । अस्मिन्नेव पद्ये विशेषतो द्वादशस्कन्धकथासूचको लीलाकल्पद्रुमाख्यो ग्रंथोपि मया वंशीधरशर्मणैव संदृब्धस्तत्र सर्वाः कथाः स्फुटाः प्रतीयंत इति । व्याख्यानं चैतदौपनिषेदभ्यो रोचते । सात्वतास्तु वर्णयंति पंचीकृतपंचमहाभूतोपहितं शुद्धचैतन्यं तदभिमानिविराडन्तर्यामिरूपमौतमित्यनिरुद्ध इति चाख्यायते । एवमपंचीकृत महाभूतोपहितं शुद्धचैतन्यं तदभिमानिहिरण्यगर्भान्तर्यामिरूपमनुज्ञातेति प्रद्युम्न इति चाख्यायते । एवं स्थूलसूक्ष्मभूतकारणीभूतं यन्मायात्मकमव्याकृतं तदुपहितं शुद्धचैतन्यं तन्निष्ठचिदाभासोपलक्षितमनुज्ञेति संकर्षण इति चाख्यायते । अनुपहितं तु चैतन्यं सर्वानुस्यूतं सन्मात्रं सर्वसाक्षिपरमानंदघनोऽविकल्प इति वासुदेव इति चाख्यायते । संकर्षणप्रद्युम्नानिरुद्धानामपि वासुदेवत्वं वर्त्तत एव । उपाधिकृतः केवलं विशेषः । एतच्च नृसिंहतापनीयोत्तरभागे व्याख्यातम् । औतानुज्ञात्रनुज्ञाविकल्पैः स्थूलसूक्ष्मबीजसाक्षिभिरिति बहुकृत्वोऽभ्यासेन । अत्र च वासुदेवः परमात्मा संकर्षणो जीवः प्रद्युम्नस्तु मनोऽनिरुद्धोऽहंकार इति पाञ्चरात्रिक प्रक्रिया नादरणीया तद्वचनविरोधाच्चेत्याद्युत्पत्त्यसंभवादित्यधिकरणे व्याख्यातम् । केवलं परमात्मैवानुपहितो वासुदेवः कारणोपहितः संकर्षणः सूक्ष्मभूतोपहितः प्रद्युम्नः स्थूलभूतोपहितोऽनिरुद्ध इति यथाव्याख्यानमे वादरणीयं श्रौतत्वादुपपन्नत्वाच्च एवं स्थिते योजना चेत्थम् । परं सत्यं वासुदेवाख्यं धीमहि उपास्महे । ध्यानमन्त्रोपासनमेवाभिप्रेतम् । चतुर्व्यूहरचनाया उपासनार्थत्वात् । नन्वनुपहितस्य वासुदेवस्य बुद्धावनारोहात्कथ मुपास्यत्वं सत्यमनिरुद्धादिरूपमप्यविवक्षितोपाधिसंबंधवासुदेवात्मकमेव क्षेत्रकूपद्वारादिकमिवाविवक्षिततत्तदुपाधिसंबंधमाकाशात्मकमेव विवक्षितोपाधिसंबंधं तु पृथग्व्यपदेशभेदं लभते न तु तावता वस्त्वन्यता भवति । तथा च तया द्वारा वासुदेवे मनोवृत्तिः कार्येति वक्तुमारभते । जन्माद्यस्येत्यादिना । अस्य जगतश्चतुर्दशभुवनरचनात्मकस्य ब्रह्मांडस्य जन्मादिविकारजातं यतो भवति तं धीमहीति संबंधः । तस्य जगद्विरचनयोग्यतामाह अर्थेष्वभिज्ञ इति । ब्रह्मांडाभिमानिविराडपेक्षया वैलक्षण्यमाह । स्वराडिति । ब्रह्मांडावच्छिन्नचिदाभासोहि विराड् जीवः अयं तु तद्बिम्बभूतस्तदंतर्यामी स्वयमेव राजत इति स्वराट् । बिम्बभूतत्वेनान्यानपेक्षत्वात् । एवमनिरुद्धमोतमुक्त्वा प्रद्युम्नमनुज्ञातारमाह । तेने ब्रह्म हृदा य आदिकवय इति । आदिकवये सूक्ष्मभूतावच्छिन्नचिदाभासाय हिरण्यगर्भसूत्रादिसंज्ञकाय ब्रह्म वेदं तदंतर्यामिरूपेण बिंबभूतो यस्तन्मनसैव तेने हिरण्य गर्भवैलक्षण्यं स्वयमेवोक्तं संप्रति संकर्षणमनुज्ञामाह । ननु हिरण्यगर्भाय कारणोपाधिः संकर्षणो वेदमुपदिशतामिति चेदत्राह । मुह्यंतीति । यस्मिन्वेदे सूरयः कपिलादयोपि संकर्षणस्यापि कारणोपहितत्वान्मोहोस्ति न तद्बिंबभूते परमात्मनीति । अथाविकल्पं वासुदेवमाह । यत्र वासुदेवे त्रिसर्गोऽनिरुद्धप्रद्युम्नसंकर्षणरूपो भेदो मृषैव । मिथ्यात्वे दृष्टांतः । तेजोवारीति । धाम्ना स्वरूपस्फूर्त्या निरस्तमपास्तं कुहकं विराडाद्युपाधिरूपं यत्र तत्तथा । एतेनानिरुद्धादयो वासुदेवानतिरिक्ता एव तद्रूपेणैवोपास्या न पृथक्त्वेन । अन्वयादितरतश्चेति हेतुद्वयं जन्मादीत्यत्र ध्येयम् । निजाभासरूपेण विराडादावन्वयाद्बिम्बरूपेण तेभ्यो व्यतिरेकादिति १२ अथ श्रीभागवतप्रतिपाद्यार्थो भगवानवतारी श्रीकृष्ण एतदवतारगुणवर्णनप्राचुर्यमन्यत्प्रासंगिकमिति स्थितं तत्र तावच्छ्रीवेदव्यासो नानाशास्त्रप्रबंधेन निरूपितश्रीकृष्णचारित्रोऽपि तत्रतत्र निरूपणाभावाच्चित्तस्वास्थ्यमलभ मानो नारदोपदेशेन विदिततत्स्वरूपभक्तियोगः संस्तद्गुणप्रधानं श्रीमद्भागवतमारब्धुकामः । परममंगलमेव श्रीकृष्णं ध्यायति जन्माद्यस्येति । परं परमेश्वरं श्रीकृष्णं हृदा मनसा धीमहि ध्यायेम । कथंभूतं सत्यं सर्व प्रकारेण । सत्यम् । तदुक्तं गर्भस्तुतौ ब्रह्मादिभिः "सत्यव्रतम्" इत्यादि । इत्यनेन सत्यशब्दवाच्यः श्रीकृष्ण एव दर्शितः । ननु तस्यापि देहसंबंधात्कथं सत्यत्वमित्याशंक्याह । यत्र त्रिसर्गो मृषेति । यत्र श्रीकृष्णे त्रयाणां तमआदिगुणानां सर्गो भूतेंद्रियदेवतारूपोऽर्थाद्देहो मृषैव । आत्मनामप्यात्मत्वात् । तदुक्तं श्रीदशमे "कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् । जगद्धिताय सोऽप्यत्र देहीवाभाति मायया ॥ गोपीनां तत्पतीनां च सर्वेषामेव देहिनाम् । योंतश्चरति सोऽध्यक्षः क्रीडनेनेह देहभाक्" । तस्माद्योगमायया परब्रह्मणो नराकृतित्वम् । अत्र दृष्टांतः । तेजोवारिमृदामिति । धाम्ना स्वरूपप्रकाशेन निरस्तः स्वयोगमायाकृतः कुहकः कपटो यस्य तं

**''यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः । वृत्रासुरवधोपेतं तद्भागवतमिष्यते ॥ लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् । प्रौष्ठपद्यां पौर्णमास्यां स याति परमं पदम् ॥**

सूतीगृहे निजरूपेणाविर्भावात् । तत्रैव योगमायया नरबालकत्वं तत्तु श्रीवत्सकौस्तुभादिचिह्नैः पूतनाशोषणविश्वदर्शनाद्यैश्वर्यप्रकाशैश्च सदैव निरस्तमिति । एवं तावत्स्वरूपलक्षणेन ध्यात्वा तटस्थलक्षणेन च तमेव ध्यायति ॥ जन्माद्यस्येति ॥ यतो यस्य । सार्वविभक्तिकतासिरूपम् । यस्यान्वयादन्वयप्रवर्त्तकरूपाद्गुणावताराद्ब्रह्मविष्णुरुद्रादस्य विश्वस्य जन्मादि तम् अग्रे वक्ष्यति''सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते॥ स्थित्यादये हरिविरिंचिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः'' इति तटस्थलक्षणेन जगत्कारणमुक्त्वा ब्रह्मादीनां कारणत्वं तस्याह । इतरत इति । यतो यस्येतरस्माद्द्वयात् श्रीनारायणात्स्वराट् ब्रह्मा बभूव कथंभूतः स्वराट् अर्थेषु सृष्टिकार्येष्वभिज्ञो निपुणः श्रीकृष्णस्यैव मूर्तिर्नारायण इति ब्रह्मापि वक्ष्यति ''नारायणोंगं नरभूजलायनात्तच्चापि सत्यं न तवैव माया'' इत्यादिना ब्रह्मेत्युपलक्षणं तस्यैव महाविष्णुरूपाद्ब्रह्मादि त्रयाणामपि ज्ञेयम् । तदुक्तं बृहन्नारदीये नारदेन सनत्कुमारं प्रति ''सृष्ट्यर्थमसृजद्देवो दक्षिणांगात्प्रजापतिम् । मध्ये रुद्राख्यमीशानं जंगदंतकरं मुने । पालनायास्य जगतो वामांगाद्विष्णुमव्ययम् । आदिसर्गे महाविष्णुरेवं त्रित्वमवाप्तवान् ॥ '' इति ब्रह्मसंहितायाञ्च '' वामांगादसृजद्विष्णुं दक्षिणांगात्प्रजापतिम् । ज्योतिर्लिंगमयं शंभुं कूर्चदेशादवासृजत् ॥ '' तस्मादस्य गुणावताराद्विश्वस्य जन्मादि भवति इतरस्माद्गुणावताराणां जन्म तं श्रीकृष्णाख्यं परं ब्रह्म परमेश्वरं धीमहीति । अथ वाऽन्वयव्यतिरेकाभ्यामस्य विश्वस्य जन्मादि भवति यतस्तं '' यतो वा इमानि भूतानि '' इत्यादिश्रुतेः '' यतः सर्वाणि भूतानि भवंत्यादियुगागमे '' इत्यादिस्मृतेश्च । एक एव सृष्ट्यादि करोतीत्येतद्वत्साहरणप्रस्तावे व्यक्तीभूतं ''यावद्वत्सपवत्सकाल्पकवपुः'' इत्यादिना केवलात्सृष्टिर्दर्शिता । '' एवमात्मात्मनात्मानं वत्सपालमिषेण सः । पालयन्वत्सपो वर्षं चिक्रीडे वनगोष्ठयोः ॥'' इत्यनेन पालकत्वं दर्शितम् । तत्रोद्वहत्पशुपवंशशिशुत्वनाट्यब्रह्माद्वयं परमनंतमगाधबोधम् । वत्सान्सखीनिव पुरा परितो विचिन्वदेकं सपाणिकवलं परमेष्ठ्यचष्ट ॥'' इत्यनेन स्वयमेव संहारकत्वं च दर्शितमिति । किं च परमगुरुत्वं च तस्य दर्शयति । तेन इति। आदिकवये ब्रह्मणे ब्रह्मरूपमात्मानं तेने । तथाहि द्वितीये ब्रह्माणं प्रति स्वयं वदति ''अहमेवासमेवाग्रे नान्यत्'' इत्यादि। तथोद्धवाग्रे स्वयमेव वदति तृतीये''पुरा मया प्रोक्तमजाय नाभ्ये पद्मे निषण्णाय''इत्यादि। तथा हंसावतारे यदुक्तं तत्सर्वमर्जुनोद्धवादिभ्यः कथितवान् अखंडज्ञानाप्रच्युतस्वरूपत्वाच्च। तदुक्तम् ''एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्'' इति। नन्वेवंभूतः परमेश्वरश्चेत्तर्हि तस्य गोपबालकैः सह यथेच्छभोजनादि उग्रसेनादीनां कैंकर्यं वर्णाश्रमादिधर्माचरणमिति सत्यं तस्य कैंकर्यं केपि न जानंतीत्याह मुह्यंतीति यद्यस्मिन्कृष्णे सूरयो ब्रह्मरुद्रादयो मुह्यंति तत्त्वं न जानंति । तदुक्तं दशमे ''शक्रशर्वपरमेष्ठिपुरोगाः कवय आनतकंधरचित्ताः । कश्मलं ययुरनिश्चिततत्त्वा'' इति । तस्मादेवं सर्वभूतस्वरूपं परं ब्रह्म परमेश्वरं नारायणं पुरुषाद्यवतारकारणं सर्वांतर्यामिणं सर्वसेव्यं श्रीकृष्णं धीमहीति । अतस्तस्मिन्नेव परब्रह्मत्वाद्याविर्भावात् । तथाहि । अघासुरशिशुपालदंतवक्रादीनां जीवतत्त्वं तस्मिन्नेव प्रविष्टं परब्रह्मत्वात् ब्रह्मत्वं यशोदाबंधने व्यक्तीभूतं ब्रह्ममहेश्वरयमवरुणेंद्रकंदर्पा लीलयैव पराजिताः परमेश्वरत्वात् । नारायणस्वरूपं ब्रह्महृदेऽक्रूरेण दृष्टं सर्वकारणत्वमर्जुनेन विश्वरूपदर्शने दृष्टमंतर्यामित्वं परीक्षिता गर्भे दृष्टं सर्वसेव्यत्वं राजसूये दृष्टम् एवं सर्वावतारकार्याणि तत्तत्समये व्यक्तीभूतानीति दिक् । एवं स्वामिचरणैः संप्रदायविशुद्ध्यर्थं कथितं तदेव स्पष्टतया दर्शितम् । इदानीं तदवशिष्टानर्थानेकी करोति। तत्र तावत्कर्मयोगज्ञानयोगभक्तियोगाः सम्यक्सर्वत्र निरूपितास्तन्मध्ये भक्तियोगेनैव भगवाञ्छ्री कृष्णो लभ्यते नान्यैरिति भागवते वक्तुंतमपि स्मरति।जन्माद्यस्येति। तं सत्यं भक्तियोगं धीमहि कथंभूतं परं कर्मज्ञानाभ्यां परं श्रेष्ठम्। येन विना तयोरसिद्धेः । तदुक्तं बृहन्नारदीये ''अश्वमेधसहस्रं वा कर्म वेदोदितं कृतम्। तत्सर्वं निष्फलं ब्रह्मन्यतो भक्तिविवर्जितम् ॥ धर्मार्थकाममोक्षाख्याः पुरुषार्था द्विजोत्तम। हरिभक्तिपराणां वै संपद्यंते न संशयः ॥''इत्यादिनाऽतो धर्मादीनां तदाश्रयत्वात्सत्यत्वमित्याह। यत्रेति । यत्र भक्तियोगे त्रिसर्गो धर्मार्थकामानां सर्गः पुनः पुनरुद्भवोऽमृषा सत्यः। आश्रयस्य सत्यत्वेनाश्रितानां सत्यतेति भावः । यथा तेजोवारिमृदां विनिमयस्तद्वत् । तदुक्तं बृहन्नारदीये ''यथा भूमिं समाश्रित्य सर्वे जीवंति जंतवः । तथा भक्तिं समाश्रित्य सर्वकार्याणि साधयेत्'' इत्यादिना । स्वयं तु धर्मादिभ्यः पृथगित्याह । धाम्नेति । स्वेन धाम्ना प्रकाशेन निरस्तं ज्ञानकर्मांगत्वादि कुहकं येन तस्मात् ज्ञानकर्मसंसर्गरहितया भक्त्यैव भगवत्प्राप्तिरिति दर्शितम्। वक्ष्यत्येकादशे ''भक्त्याहमेकया ग्राह्य'' इति । एवं भक्तिद्वारा कर्मयोगसिद्धिमुक्त्वा ज्ञानयोगस्यापि तद्द्वारा सिद्धिमाह । जन्माद्यस्येति । जन्म आद्यं यस्य षड्भावविकारस्य स जन्माद्यस्तस्य जन्माद्यस्य जायतेऽस्ति वर्द्धते विपरिणमतेऽपक्षीयते नश्यतीति षट् योजनिकेयम् । अर्थेषु मायाकार्येषु देहेषु जन्माद्यस्याभिज्ञस्तत्त्वज्ञो जनो

अष्टादशसहस्राणि पुराणं तत्प्रकीर्तितम् ॥ " पुराणांतरे च " ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कंधसंमितः ॥ हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा ॥ गायत्र्या च समारंभस्तद्वै
यतो भक्तियोगात्स्वराट् स्वरूपस्थं ब्रह्मान्वयात्प्राप्तवान्। तदुक्तं दशमे "पुरेह भूमन्बहवोऽपि योगिनस्त्वदर्पितेहा निजकर्मलब्धया । विबुध्य भक्त्यैव कथोपनीतया प्रपेदिरेंऽजोऽच्युत ते परां गतिम् ॥" इति भक्तियोगं विना मोहं प्राप्य स्वार्थाद्भ्रश्यंतीत्याह । इतरत इति ।यद्यस्मादितरतः केवलाज्ज्ञानयोगाच्चकारात्कर्मयोगात्सूरयः सम्यगभिज्ञा अपि मुह्यंति स्वार्थाद्भ्रश्यंति तदुक्तं "येन्येरविन्दाक्ष विमुक्तमानिनः" इत्यादि । अत्र स्वानुभवमाह । तेन इति । यो भक्तियोगः कवये मह्यमादि आद्यं यद्वस्तु श्रीकृष्णाख्यं तद्धृदा तेने विस्तीर्य प्रकाशितवान् । अत्रैव वक्ष्यति "भक्तियोगेन मनसि सम्यक्प्रणिहितेमले । अपश्यत्पुरुषं पूर्णं मायाञ्च तदुपाश्रयाम् ॥" इति तस्मादेवंभूतं भक्तियोगं धीमहीति भक्तियोगपक्षः ॥ अथ देहात्मपक्षः । एवंभूतो भक्तियोगो देहातिरिक्तशुद्धात्मज्ञाने सति संभवति अत एव देहत आत्मा पृथक् आत्मनश्च देहोपि पृथगिति तृतीयस्कंधादौ वक्तुमुभावपि युगपत्स्मरति । जन्माद्यस्येति । तं सत्यमात्मानं सत्यात्परिभिन्नं देहं धीमहि । उभयोः प्राधान्याच्चकारादिनिर्देशो न कृतः । कोसौ देहस्तत्राह । यत्रेति । यत्र देहे त्रिसर्गः त्रयाणां मायागुणानां सर्गश्चतुर्विंशतितत्त्वसमूहः अमृषा सत्यः । कथंभूतः सर्गः । तेजोवारिमृदां यथा यथावत्परिणामो यत्र सः तत्र तेजसा रुधिरत्वं वारिणा क्लिन्नत्वं श्लेष्मत्वं वा मृदा मांसत्वमिति विनिमयः । वाय्वाकाशयोर्विकाराभावान्न निर्देशः । आत्मनि तु त्रिसर्गो मृषैव ज्ञेयः देहादात्मनः पृथक्त्वात्। ननु देहात्मनोः पृथक्त्वे सति कथं देहस्य जडस्य जन्मादिकम् । आत्मनोपि चिदंशस्य भोक्तृत्वमित्याशंक्याह। जन्माद्यस्येति । यतो यस्यात्मनोऽन्वयात्संबंधादस्य देहस्य जन्ममरणादि तथा देहस्यान्वयादस्यात्मनोपि जन्ममरण सुखदुःखभोक्तृत्वादि भवति न तु स्वतस्तं च तं च । तत्र प्रकृतिपरिणामो देहः पुरुषांश आत्मा तस्मादुभयसंयोगादेवोभयोर्जन्मादि नान्यथेति । तदुक्तं वेदस्तुतौ "न घटत उद्भव" इत्यादिना । किंचात्मनोऽन्वयाद्यो देहः अर्थेषु विषयेष्वभिज्ञो निपुणो भवति आत्मा तु इतरतो देहाहंकाराभावात्स्वराट् स्वरूपस्थो विराजते येः तं च तं च । किंच तेन इति। आत्मान्वयाद्देहः आदिकवये परमेश्वराय तं प्राप्तुं ब्रह्ममयं यज्ञं विस्तारितवान् । "तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्" इति गीतोक्तेः । यथा देहान्वयादात्मापि यदा गर्भस्थः सन्ब्रह्मज्ञानं तेने तं च तं च । तदुक्तं तृतीये जीवस्तुतौ "ज्ञानं यदेतददधात्कतमः स देवः" इत्यादिना । नन्वेवं चेत्तर्हि कथं मिथ्याभूते देहे विवेकिनामप्यात्मत्वेनाभिनिवेशो दृश्यते । सत्यम् । आत्मतत्त्वस्य दुर्ज्ञेयत्वादित्याह । मुह्यंतीति । यद्यस्मिन्नात्मनि सूरयस्तत्त्वज्ञा अपि मुह्यंति । तदुक्तं गीतासु "आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति। तथैव चान्यः । आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् " इति । नन्वेवंभूतश्चेदात्मा कथं तर्हि तस्य विकारित्वं कथं वा बंध इत्याशंक्याह । धाम्नेति । स्वेन धाम्ना स्वरूपस्फुरणेन निरस्तो दूरीकृतो मायाकृताज्ञानदेहसंबंधविकारादिकपटो यस्य तम् । आत्मा सदैव निर्विकारो देहात्पृथक्स्थतुरीयावस्थायां योगिभिर्लभ्यते । तदुक्तमेकादशे "सन्ने यदेंद्रियगणेऽहमि च प्रसुप्ते कूटस्थ आशयमृते तदनुस्मृतिर्नः" इति तथा देहात्मवादिनामपि या देहात्मबुद्धिः सा निरस्ता । तद्यथा । धाम्ना स्वाश्रयेण मिथ्यात्वं दृश्यत एव । अत एवोभावपि सत्यासत्यत्वेन धीमहीति देहात्मपक्षे व्याख्यानम् । एतद्भक्तियोगपक्षे देहात्मपक्षव्याख्याद्वयं विद्वज्जनविनोदाय कृतमपि पारमार्थिकं ज्ञातव्यम्। प्रतिपदं प्रमाणवत्त्वात् । अथेदानीं मथुरामंडलवासिनां प्रीतये व्याख्यांतरमारभते । तत्र यस्तु तपोयोगसमाधिभिरप्यदृश्यो भगवान्स तु मथुरामंडल अविर्भूतोऽतस्तमपि स्मरति । तं सत्यं मथुरामंडलं धीमहि अत्र "मंडलं त्रिषु" इत्यमरोक्तेः पुल्लिंगत्वेन निदशोऽप्युचित एव । कथं भूतं परं सर्वतीर्थपुरीणां श्रेष्ठं चतुर्धामोक्षप्रदत्वात् । तदुक्तं वाराहे "काश्यादयो यद्यपि संति पुर्यस्तासां तु मध्ये मथुरैव धन्या । या जन्ममौंजीव्रतमृत्युदाहैर्नृणां चतुर्द्धा विदधाति मुक्तिम्॥"इति । न केवलं चतुर्द्धामोक्षप्रदत्वेनैव तस्य परत्वमपि तु परमेश्वरनित्यसंबंधादपीत्याह।जन्मेति।यत इति।सार्वविभक्तिकस्तसिरूपं सप्तम्यंतम् । यतो यस्मिन्मथुरामंडले आद्यस्यादिपुरुषस्य श्रीकृष्णस्य जन्म तम् । कुतोऽन्वयात् नित्यसंबंधात् "मथुरा भगवान्यत्र नित्यं संनिहितो हरिः" इत्युक्तेः।हेत्वंतरमितरतो ब्रह्मादिप्रार्थनातश्च । किं च यः अर्थेषु योग्यायोग्यदानपात्रेषु अभिज्ञो वेत्ता तं "त्रिवर्गदा कामिनां या मुमुक्षूणां च मोक्षदा । भक्तीच्छोर्भक्तिदा या तु मथुरां को न तां वसेत्॥"इति वाराहोक्तेः । यः स्वराट् स्वप्रकाशो ज्योतिर्मयस्तम् । किं च य आदिकवये विवेकिने जीवाय मृत्युकाले हृदा हृदि ब्रह्म मंत्रं तारकं तेने तम् । तस्मिन्काले कविश्चेत्स्वयमेव जानातु । नेत्याह । मुह्यंतीति यद्यस्मिन्मृत्युकाले सूरयो विवेकिनोऽपि मुह्यंति व्यामोहं गच्छंति । अत एव संन्यासिनोपि विविक्तक्षेत्रमाश्रयंते । ननु ज्योतिर्मयश्चेत्कथं लोकैरन्यथा दृश्यते ।

**भागवतं विदुः" ॥ पद्मपुराणेंऽबरीषं प्रति गौतमोक्तिः । " अंबरीष शुकप्रोक्तं नित्यं भागवतं शृणु ॥ पठस्व स्वमुखेनापि यदीच्छसि भवक्षयम् " इति । अत एव भागवतं**

सत्यमविवेकिनामन्यस्मिन्नन्याभास इत्याहुः । तेज इति।तेजसि धातुरत्नाभासः यमुनामृते वारिबुद्धिः चिंतामणौ मृत्तिकाप्रतीतिरिति साधारणी दृष्टिरज्ञाततत्त्वानां भवति ''भूमिश्चिंतामणिस्तोयममृतम्''इत्याद्युक्तेः।मथुरामाहात्म्ये तु ''मथुरायां प्रकुर्वंति पुरीसाधारणीदृशम् । ते नराः खलु विज्ञेयाः पापराशिभिरन्विताः॥''इति । नन्वेवं चेत्कथमत्रोच्चनीचादीनां जन्म तत्राह। यत्रेति। यत्र मथुरायां त्रिसर्गस्त्रयाणामुच्चनीचमध्यमानां सर्ग उत्पत्तिर्मृषैव ज्ञेया। यत्र सर्वेषां लक्ष्मीविष्णुरूपत्वात्तदुक्तं संहितायां ''स्त्री लक्ष्मीः पुरुषो विष्णुः''इत्यादिना यद्वा त्रयाणां नरतिर्यक्स्थावराणां सर्गो जन्म मृषा सर्वेषां भगवज्जनत्वात् । ''अहो अमी देववरामरार्चितं पादांबुजं ते सुमनःफलार्हणैः'' इत्यादिना ''हंतायमद्रिरबले'' त्यादिना स्थावराणां पार्षदत्वमुक्तम् ''प्रायो बतांग विहगा मुनयो वनेऽस्मिन्''इति तिरश्चां भागवतत्वमुक्तम् । ''स्त्री लक्ष्मीः पुरुषो विष्णुरि''त्यादिना मनुष्याणां तत्स्वरूपत्वमुक्तं तस्मादत्र स्थावरादिजन्म मृषैव ज्ञेयम् । नन्विदमेव मथुरामंडलमिति कथं ज्ञायते तत्राह । धाम्नेति । धामाश्रयः श्रीकृष्णः स्वेन धाम्ना स्वाश्रयेण श्रीकृष्णेन केशवगोविंदगोपालादिना स्वमूर्तिभेदेन निरस्तं लोकानां कुहकं भ्रांतिज्ञानं यस्मिंस्तं तस्मादेवंभूतं द्वादशारण्यसहितं श्रीमथुरामंडलं धीमहीति मथुरामंडलपक्षः ४ अथ सर्वोत्सवानां मध्ये रासोत्सवः प्रेष्ठतमः स तु मथुरामंडलांतर्वर्त्तिनि श्रीवृंदावने नित्यं वर्त्तते तं दशमे पञ्चाध्याय्या निरूपयितुमत्र स्मरति । जन्माद्येति । यतो यस्माद्रासोत्सवाद्धेतोरन्वयात्क्षत्रियकुलादितरतो वैश्यकुलादाद्यस्य श्रीकृष्णस्य जन्माविर्भावस्तं परमोत्कृष्टं रासोत्सवं हृदा मनसा धीमहि । वसुदेवगृहान्नंदगृहे यशोदात्मजत्वेन तस्याविर्भाव इत्यर्थः । किमर्थं धीमहि तत्राह। आदिकवये श्रीकृष्णं प्राप्तुमित्यर्थः । ''तुमर्थाच्चे''ति चतुर्थी स्नानाय व्रजतीत्यादिवत् । कथंभूतं सत्यं सत्यानुष्ठानात् । पुनश्च धाम्नेति । स्वेन धाम्ना सदैव निरस्तो दूरीकृतः श्रीकृष्णगोपकन्यानामन्योन्यसंभवः कपटो येन तं तस्माच्छ्रीकृष्णस्य यत्कापट्यं सर्वाः स्त्रियो विहायैकां गृहीत्वा पलायनं तामपि त्यक्त्वांतर्द्धानादिकं तथा गोपकन्यानामपि यत्कापट्यमन्योन्यवंचनादिकं श्रीकृष्णेऽपि कृतघ्नोयमित्यसूयया यदंतःकोपादिकमेतत्सर्वं रासस्य महिम्ना निरस्तमित्यर्थः । तद्यथा " न पारयेहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषापि वः'' इत्यादिना स्वस्य निष्कापट्यमुक्तमिति । ननु कोऽयं रासोत्सवो यस्यायं महिमा तत्राह तेज इति । यत्र रासे तेजोवारिमृदां यथा विनिमयः यथायोग्यं विनिमयो विपरिवर्त्तनं तद्यथा तेजसां चंद्रादीनां गतिविस्मरणात्स्थगितत्वं वारिणां यमुनादिजलानां स्रोतसां परिवर्तनं मृद्भूमिस्तस्या विनिमय उच्छूनत्वं रोमांचितत्वमिति । तदुक्तं तत्रैव " कृष्णविक्रीडितं वीक्ष्य मुमुहुः खेचरस्त्रियः । कामार्दिताः शशांकश्च सगणो विस्मितोऽभवत् " इत्यनेन । तेजसां गतिविस्मरणत्वमुक्तं " नद्यस्तदा तदुपधार्य मुकुंदगीतमावर्त्तलक्षितमनोभवभग्नवेगाः'' इत्यादिना वारिणां गतिवैपरीत्यमुक्तं ''किं ते कृतं क्षिति तपो बत केशवांघ्रिस्पर्शोत्सवोत्पुलकितांगरुहैर्विभासि'' इत्यादिना मृत्तिकाया विनिमय उक्त इति । किंच यत्र त्रिसर्गोऽमृषा त्रयाणां नृत्यगीतवाद्यानां सर्गः संभवोऽमृषा सत्यः । यतस्तेन सर्वं जगदावृतं तदुक्तम् " उच्चैर्जगुर्नृत्यमाना रक्तकंठ्यो रतिप्रियाः । कृष्णाभिमर्शमुदिता यद्गीतेनेदमावृतम्'' इति । नन्वेवंभूतो रासः कथं नंदादिभिर्न दृष्टस्तत्राह । अर्थेष्विति । अर्थेषु दर्शनयोग्यविषयेष्वेव स्वराट् विराजमानो नान्यत्र । यतोऽभिज्ञः विचक्षणः । अयमर्थः । नंदादीनां गोपानां लज्जाविषयत्वाद्दर्शनायोग्यत्वमन्येषां मर्त्यानां मांसचक्षुष्ट्वाद्दर्शनायोग्यत्वं गंधर्वादीनां तदभावात्तैर्दृष्टः इति । तदुक्तं ''नभस्तावद्विमानशतसंकुलम् । दिवौकसां सदाराणाम्'' इति । जगुर्गंधर्वपतयः सस्त्रीकास्तद्यशोऽमलम् " इति " कृष्णविक्रीडितं वीक्ष्य मुमुहुः खेचरस्त्रियः'' इत्यादिना । ननु रासो नामोत्सवधर्मविशेषोऽमूर्त्तः कथं तस्य स्वराट्त्वमभिज्ञत्वञ्चेति चेदाह । रासकर्तॄणां ये गुणास्ते रासोत्सवे उपचर्यंते मंचाः क्रोशंति, सभा भाति, स्थाली पचतीतिवत् । अतो रासकर्तॄणां या शोभा भुजविधुतादिभिरुक्ताऽभिज्ञत्वादिकं च सर्वं रासस्येत्युपचर्यते । अहो रासस्थानां महिमानं पश्यतेत्याह। तेन इति । यद्यस्मिञ्छ्रीकृष्णे सूरयो ब्रह्मादयोऽपि मुह्यंति तद्ब्रह्म श्रीकृष्णाख्यमेकमपि यो रासस्तेने विस्तारितवान् तं धीमहीति । तदुक्तं ''रासोत्सवः संप्रवृत्तो गोपीमंडलमंडितः । योगेश्वरेण कृष्णेन तासां मध्ये द्वयोर्द्वयोः ॥ प्रविष्टेन गृहीतानां कंठे स्वनिकटं स्त्रियः । कृत्वा तावंतमात्मानं यावतीर्गोपयोषित'' इत्यादिनाऽतः सर्वोत्कृष्टं रासोत्सवं धीमहीति रासमंडलपक्षः । अत्र व्याख्याशतकमपि मया पृथगेव रचितं विस्तरभियेह नो निक्षिप्तम् । तथा श्रीभागवतस्य सर्वकथाप्रदर्शकलीलाकल्पद्रुमाख्यनिबंधोपि सपादशतव्याख्यात्मकोप्यत्र मया संबद्धः सोऽपि विस्तरभियैवेह नो निक्षिप्तः ॥ अत्र श्लोके ''सूर्याश्वैर्मसजास्तताः सगुरवः शार्दूलविक्रीडितम्'' इति

धर्मः प्रोज्झितकैतवोत्र परमो निर्मत्सराणां सतां वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ॥
श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः सद्यो हृद्यवरुध्यतेत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ॥ २ ॥

नामान्यदित्यपि न शंकनीयम् ॥ १ ॥ इदानीं श्रोतृप्रवर्तनाय श्रीभागवतस्य कांडत्रयविषयेभ्यः सर्वशास्त्रेभ्यः श्रैष्ठ्यं दर्शयति । अत्र श्रीमति सुंदरे भागवते परमो धर्मो निरूप्यते । परमत्वे हेतुः । प्रकर्षेणोज्झितं कैतवं फलाभिसंधिलक्षणं कपटं यस्मिन्सः । प्रशब्देन मोक्षाभिसंधिरपि निरस्तः । केवलमीश्वराराधनलक्षणो धर्मो निरूप्यत इति । अधिकारितोऽपि धर्मस्य परमत्वमाह । निर्मत्सराणां परोत्कर्षासहनं मत्सरस्तद्रहितानाम् । सतां भूतानुकंपिनाम् । एवं कर्मकांडविषयेभ्यः शास्त्रेभ्यः श्रैष्ठ्यमुक्तम् ।

लक्षणवत्त्वाच्छार्दूलविक्रीडितं छंदः ॥१॥ कांडत्रयं हि देवताकांडकर्मकांडज्ञानकांडरूपं विषयो येषां शास्त्राणां तेभ्यः परमः सर्वोत्कृष्टः ननु वैशेषिकादिशास्त्रस्याऽप्यंततस्तात्पर्यं वास्तववेदने एव सर्वपदार्थनिरूपणं विना तद्भिन्नत्वेन तत्स्वरूपस्य दुर्ज्ञेयत्वात्तदर्थमेव तेन पदार्थविवेचनं कृतमिति चेत्तत्राह यद्वेति । इत्यर्थ इति । शास्त्रांतरोक्तसाधनानां दुःसंपाद्यत्वादिति भावः । ततः ततो भगवतो न पृथक् । वास्तववस्तुवेदनात् ॥ परम सुखं श्रीकृष्णप्रेमादितत्प्रदम् । किं तु तद्रूपमेव तदुक्तं "मनसा वचसा चैव गृह्यतेऽन्यैरपींद्रियैः । अहमेव न मत्तोन्यदिति बुध्यध्वमंजसा" इत्येकादशे श्रीहंसावतारेण सनकादीन्प्रतीति । द्रव्यगुणादीनामवास्तवत्वं पराशरपुराणे खंडनादौ बहुधा प्रपंचितमेव । अवास्तववस्तुचिंतनेन युगसहस्रेणापि पुरुषार्थसिद्धिर्न भवेत् । अतस्तत्ररतिं त्यक्त्वेदमेवानवरतं मुमुक्षुभिश्चित्यमिति भावः॥ततो वास्तववस्तुचिंतनेन किं स्यादत आह।किंचेति । आधिदैविकाध्यात्मिकाधिभौतिकभेदेन तापस्त्रिधा तथाहि आत्मानं शरीरमंतःकरणं वाधिकृत्य यज्जायते तदाध्यात्मिकं वातपित्तादिकोपजन्यं कामादिजन्यश्च । तत्र भूतानि प्राणिनोऽधिकृत्य यज्जायते तदाधिभौतिकं व्याघ्रचौरायुत्थम् । देवा अग्न्यादयस्तानधिकृत्ययज्जायते तदाधिदैविकं दाहशीतादिकृतं यक्षराक्षसग्रहाद्यावेशनिबंधनं चेति विवेकः । अनेन तापत्रयोन्मूलनपूर्वकपरमशिवाप्तिकथनेन । संक्षेपतश्चतुश्श्लोकीरूपेण । स मुनिर्भूत्वा समचिंतयदिति श्रुतेः । यद्वा कस्मै येन विभासितोयमतुल " इत्युक्तन्यायेन संपूर्ण एव कृते अन्यशास्त्रश्रवणादिना देवतांतरस्यैव हृदि वासो भवत्यस्य श्रवणादिना तु साक्षाद्धरेरेवेत्याह । देवताकांडविषयगतमिति । अत्राक्षिपति । नन्विति । इत्यर्थ इति । "जन्मांतरे यदा पुण्यं तदा भागवतं लभेदि" ति पाद्मोक्तेः अयं भावः । यत इदमेव सर्वशास्त्रेभ्यश्श्रेष्ठम् । किञ्च कांडत्रयार्थोप्यत्र यथावत्तत्तत्स्थले प्रतिपादितस्ततोपीदमेव सेव्यमिति संदर्भेण धर्मस्य परमत्वं हरिभक्त्युत्पादकत्वेनैव । "स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे" इत्युक्तं तद्युक्तमेव विजयध्वजस्तु श्रीमत्त्वं नाम श्रूयमाणरमणीयतयाऽर्थपर्यालोचनतया वाऽस्येतरेभ्यः श्रैष्ठ्यं "राजंते तावदन्यानि पुराणानि सतां गणे । यावन्न श्रूयते साक्षाच्छ्रीमद्भागवतं परम् ॥ इति । ध्रियतेऽधः पतन्पुरुषोऽनेनेति धर्मः । धारयतीति धरो भगवान्समीयते ज्ञायतेऽनेनेति वा। दधाति कर्त्तारं रमयति मिनुते हिनस्ति पापमिति भगवत्प्राप्तिसाधनभूतः । "धरति यस्मादधो यांतं ज्ञायते येन वा हरिः । कर्त्तारं यो मोदयति हंति पापं सदाऽखिलम् । तेन धर्म इति प्रोक्तो रूपसिद्धिर्निपाततः" इतिशब्दार्थनिर्णयोक्तेः । ननु धर्मोऽन्यत्रापि प्रतिपाद्यते किमत्रैवेति तत्राह । प्रोज्झितकैतवः । कितवस्य भावः कैतवं प्रकर्षेणोज्झितं कैतवं येन स तथोक्तः । कितवो नाम लोके मनस्यन्यदभिसंधायान्यदभिधत्ते अन्यदेवाभिचरति तद्वदत्रापि भगवत्प्रीतिमंतरेण स्वर्गादिफलं मनस्यनुसंधाय भगवद्गुणप्रतिपादनलोलुपनिरासार्थमन्यथा वदन्स्वात्मनो देहेंद्रियागामीश्वराधिष्ठितत्वमीश्वरनियम्यत्वं निगूह्य हरेः कारयितृत्वं फलदातृत्वमप्यगणय्याहमेवेदं करिष्येऽर्थी समर्थो विद्वानहमेव स्वतंत्र इति बुद्ध्या कितवेन क्रियमाणो धर्मः कैतव इत्युच्यते । अतोऽफलकामनयैव धर्मः कर्त्तव्य इत्ययमर्थोत्र प्रतिपाद्यत इत्यर्थः । "तत्कर्म यन्न बंधाय सा विद्या या विमुक्तये"इति विष्णुपुराणोक्तेः। तर्ह्येतावता पूर्यत इति चेत्तत्राह परम इति"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणम्॥ इति स्मृतेर्भगवदर्पणतः परमो भवतीत्यर्थः ॥परः परमात्मा मीयतेऽनेनेत्येतदभिप्रायेण परम इत्यभ्यधायि"परोऽरिपरमात्मनोः"इतित्यभिधानात्परः शत्रुः

**ज्ञानकाण्डविषयेभ्योऽपि श्रैष्ठ्यमाह । वेद्यमिति । वास्तवं परमार्थभूतं वस्तु वेद्यं न तु वैशेषिकाणामिव द्रव्यगुणादिरूपम् । यद्वा वास्तवशब्देन वस्तुनोंऽशो जीवो वस्तुनः शक्तिर्माया वस्तुनः कार्यं जगच्च तत्सर्वं वस्त्वेव न ततः पृथगिति वेद्यम् । अयत्नेनैव ज्ञातुं शक्यमित्यर्थः । ततः किमत आह । शिवदं परमसुखदम् । किं च आध्यात्मि**

संसाराख्यो मीयते प्रलीयते इति वा । 'मीञ्हिंसायाम्' । किं च यतोन्योधिकतमः सुखहेतुर्न भवति स परमो धर्मः । स च भक्तियोगलक्षण एव । तथा च भारते भीष्मयुधिष्ठिरसंवादे ''को धर्मः सर्वधर्माणां धर्मोधिकतमो मतः । यद्भक्त्या पुंडरीकाक्षं स्तवैरर्चेन्नरः सदा'' इति । किं च ''एतावानेव लोकेऽस्मिन्पुंसां धर्मः परः स्मृतः । भक्तियोगो भगवति तन्नामग्रहणादिभिः॥नृणामयं परो धर्मः सर्वेषां समुदाहृतः॥त्रिंशल्लक्षणवान्साक्षात्सर्वात्मा येन तुष्यति'' इति सप्तमोक्तेः । केषामधिकारः कश्च साक्षाद्विषय इति तत्राह निर्मत्सराणामिति ॥ भावप्रधानो निर्देशः।निर्गतं मात्सर्यं येषां ते तथोक्तास्तेषां प्रशस्तकर्मणां सतामपि कचिन्मात्सर्यं स्यात्।अत उक्तं निर्मत्सराणामिति वेद्यं ज्ञेयम् ॥ कृयोगे षष्ठी । सतामिति वा वास्तवं नित्यनिरस्तदोषं वस्तु अप्रतिहतनित्यवसनशीलं दुःखनिवृत्तिसुखप्राप्तिलक्षणस्य पुरुषार्थत्वात्तदभाववत्त्वात्किमनेनेति तत्राह शिवदमिति। परमानंदं ददातीति वा । आध्यात्मिकादिसकलदुःखनिवर्त्तकत्वं च ''वेत्ता वेद्यस्य सर्वस्य मुनिः सद्भिरुदाहृतः'' इत्यभिधानान्मुनयो ब्रह्मादयस्तेभ्योप्यतिशयितसर्वज्ञत्वान्महामुनिर्व्यासः साक्षान्नारायणः।''कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ॥'' इति भारतोक्तेः । तेन कृते ननु किमितीश्वरतुष्टिकरो भक्तियोगलक्षणो धर्म ईश्वरश्चात्र प्रतिपाद्यो न धर्मादिरिति तात्राह । किं वेति।भक्तियोगलक्षणधर्मस्य हेरपरोक्षज्ञानमुत्पाद्य तत्प्रसादांतरंगसाधनत्वेनापवर्गलक्षणानश्वरफलहेतुत्वाद्बहिर्मुखमनोरंजकत्वेन स्वर्गादिक्षयिष्णुफलमुत्पाद्य संसारावृत्तिहेतुत्वाद्धर्मादिकथनैः किं वा प्रयोजनं न किमपीत्यतस्तानंतरेण भक्तियोगलक्षणधर्मस्तद्विषय ईश्वरश्चात्र प्रतिपाद्यत इत्यर्थः। ननु दृष्टफलस्य प्रवृत्तिहेतुत्वात्किमत्र दृष्टफलमिति तत्राह । ईश्वर इति । अस्मिञ्छ्रीमद्भागवते शास्त्रे सम्यगभ्यस्यमाने कृतिभिः शिक्षितबुद्धिभिः शुश्रूषुभिः मनोवाक्कर्मभिर्गुर्वादिपरपुरुषपरिचर्याकरणकुशलैः साधनसामग्र्युपेतैरेभिः । ईश्वरो लक्ष्मीशादिचेतनगणादप्युत्तमः तत्प्रवर्त्तनशीलो वा परमात्मा हृदि हृदयकमले सद्यः शीघ्रं तत्क्षणात्कालव्यवधानमन्तरेणावरुध्यते भक्तिश्रृंखलया बद्धो दृश्यत इत्यर्थः। अत्र सद्यस्तत्क्षणशब्दावधिकारिविशेषद्योतकतया प्रयुक्तौ ये साधनसामग्रीमंतस्तेषां यस्मिन्क्षणे ग्रंथोपक्रमस्तस्मिन्नेव क्षणे भगवान्दृश्यते तदुक्तं ''शनकैर्भगवल्लोकान्नृलोकं पुनरागतः'' इति । ये भविष्यत्साधनसंपत्तिसंपादनयोग्यास्तेषामपि सद्यः साधनसामग्र्यां सत्यां दृश्यते । किं च भक्तियोगलक्षणधर्मे ईश्वरविषयतया निर्मत्सरसदाधिकारिभिः प्राप्यं निर्दुःखपरमानंदाख्यं प्रयोजनमित्येतत्त्रियमत्र प्रतिपाद्यते इत्यभिप्रायेणात्रेति त्रिशः कथितं: कर्मदेवब्रह्मकांडार्थोप्यत्रैव निर्णीयते इति विशेषणं भिन्नत्वबोधनाय वा धर्म इति कर्मकाण्डार्थः निर्मत्सराणां सतामिति देवताकांडार्थः देवानामेव मात्सर्यराहित्येन मुख्यसत्त्वेनोत्तमाधिकारित्वाच्च वेद्यमिति ब्रह्मकांडार्थः । तस्मान्नारायणावतारेण सर्वज्ञतमेन कृष्णद्वैपायनेनात्युत्तमेन प्रणीतत्वात्प्रमाणतममिदं श्रीमद्भागवतं सर्वहितेप्सुभिरभ्यसनीयमिति सिद्धम् । ब्राह्मणपक्षेप्यस्य योजनास्ति । ब्राह्मणा एव सर्वथा शास्त्रप्रवर्त्तकत्वेन शास्त्रादौ ध्येया इति मनसि निधाय व्यासदेवः स्वशिष्येभ्यो वदति मत्कृतव्याख्याशतके जन्माद्यस्येत्यस्य ब्राह्मणसंघे योजितत्वादत्रेत्यनेन ब्राह्मणपरामर्शः : त्यदादीनां बुद्धिस्थपरामर्शकत्वात् । भोशिष्याः अत्र विप्रसंघे धरति नरके पतंतमिति धर्मोस्ति । किंभूतः प्रकर्षेणोज्झितं कैतवं पाखंडलक्षणं यस्मिन्स तथा । वेदविहित इत्यर्थः । तत्र हेतुः, पर उत्कृष्टो मा यस्मात्स परमः सर्वोत्कृष्टः श्रीकृष्णभक्तिलक्षणस्तं विना मोक्षासिद्धेः । तद्वक्ष्यति श्रीदशमे ब्रह्मा ''श्रेयःसृतिं भक्तिमुदस्य ते विभो क्लिश्यंति ये केवलबोधलब्धये । तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषावघातिनामिति ।'' सतां सदाचारपराणां वास्तवं परमार्थभूतं वस्तु ब्रह्मात्रैव वेद्यं ब्रह्मकुलादेव वेद्यं ज्ञातुं योग्यं पंचम्यर्थे त्रल्प्रत्ययः ब्रह्मकुलस्यैवाचार्यत्वात् । ''आचार्यत्वमाद्यवर्णे मया संस्थापितं धरे । '' इति वाराहोक्तेः ''तद्विज्ञानार्थं गुरुमेवाभिगच्छेत्समित्पाणिःश्रोत्रियं ब्रह्मनिष्ठम्'' इति श्रुतेः । श्रोत्रियत्वं हि ब्राह्मण एव पर्यवस्यति । ''जन्मना ब्राह्मणो ज्ञेयः संस्काराद्द्विज उच्यते । विद्यया याति विप्रत्वं त्रिभिः श्रोत्रियशब्दभाक्'' इति वारतांतविस्मृतेः ॥ ''ब्राह्मिष्ठं ब्राह्मणं गुरुमुपासीत'' इति श्रुतौ तु स्फुट एवायमर्थ उक्त इति । आधुनिकैर्विप्रद्विड्भिस्तु ''जन्मना जायते शूद्रः'' इति पाठः कल्पितः । स चानादरणीय एव । न हि ब्राह्मणाच्छूद्रो ब्राह्मण्यां जायते गोर्गर्दभोत्पत्तिप्रसंगात् ''ब्राह्मण्यां ब्राह्मणाज्जातः स हि ब्राह्मण ईरित'' इति जातूकर्ण्यस्मृतेर्बाधप्रसंगाच्च यच्च कैश्चिदुक्तं ब्रह्म जानातीति ब्राह्मणः । तथात्वे गच्छतीति गौरिति

कादितापत्रयोन्मूलनं च । अनन ज्ञानकांडविषयेभ्यः श्रैष्ठयं दर्शितम् । कर्तृतोऽपि श्रैष्ठयमाह । महामुनिः श्रीनारायणस्तेन प्रथमं संक्षेपतः कृते । देवताकांडविषयगतं श्रैष्ठयमाह । किं वेति । परैः शास्त्रैस्तदुक्तसाधनैर्वेश्वरो हृदि किं वा सद्य एवावरुद्ध्यते स्थिरी क्रियते । वाशब्दः कटाक्षे । किं तु विलंबेन कथंचिदेव । अत्र तु शुश्रू

निरुक्तेः यूकाया अपि गोत्वं स्यात् । अतस्तदपि नादरणीयम् । लक्षणस्यैव वस्तुनिर्णायकत्वं न निरुक्तेः । किंभूतानां सताम् । परोत्कर्षासहनं मत्सरस्तद्रहितानाम् । पाखंडानुगा हि विप्रोत्कर्षं न सहंते ते चेत्थं वदंति यथान्ये प्राणिनस्तथा विप्रा न तेषु किंचिदाधिक्यं किमर्थं वयं तानाश्रयाम इति ये मत्सरिणस्तद्भिन्नानां शास्त्रमार्गानुयायिनामित्यर्थः । किंभूतं वस्तु । शिवं परमानंदं ददातीति शिवदं मोक्षदमित्यर्थः । प्रकाशरूपस्य रवेः प्रकाशदत्ववच्छिवरूपस्यापि ब्रह्मणः शिवदत्वं न विरुद्धमिति । पुनः अध्यात्माधिदैवाधिभूतरूपतापत्रयाणामुन्मूलनमुत्पाटनकरम् । अध्यात्मतापाः कामादयः अधिदैवा वाय्वग्नितडित्पातादिजन्या अधिभूतास्सर्पव्याघ्रादिजन्या इति विवेकः । किंभूते विप्रसंघे श्रीमद्भागवते " ऋचः सामानि यजूंषि सा हि श्रीरमृता सताम्" इति श्रुतेर्वेदाभ्यास एव श्रीः सा विद्यतेऽस्यास्मिन्वेति श्रीमान् "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतींगते " इति स्मृतेर्भगः षड्विधमैश्वर्यं सोस्यास्तीति भगवान्कृष्णस्तं भगवंतमुपास्त इति भागवतः । अत्र कारकादण् श्रीमांश्चासौ भागवतश्चेति श्रीमद्भागवतस्तस्मिंस्तथा । श्रोत्रिये ब्रह्मनिष्ठे चेत्यर्थः । पुनर्मह्यते पूज्यते सर्वैरिति महान् । मन्यते जानाति सर्वमिति मुनिः । महतेरतृ, मन्यतेरिश्च प्रत्ययः । महांश्चासौ मुनिर्महामुनिः महावंद्यो महामुनिः इति गोपालसहस्रनामसु पठितत्वान्महामुनिः श्रीकृष्णस्तेन कीर्त्यते स्तूयते इति महामुनिकृतस्तस्मिंस्तथा " कृत संशब्दे" इत्यतः कर्मणि क्तः । धातोरुपधाया ह्रस्वश्च निपातनादुणादौ बोध्यः । "ब्राह्मणेभ्यो नमस्यामो येऽस्मद्रूपं त्रयीमयम् । बिभ्रत्यात्मसमाधानतपःस्वाध्यायसंयमैः ॥ " इत्यादिना हरिणा विप्राः स्तुता दृश्यंते । अन्यत्रापि "इयं ब्राह्मणनौ राजन्विपरीता भवार्णवे । तरन्त्यधोगता यस्या मज्जन्त्युपरिवर्तिनः" इत्यादिना श्रीमद्भागवत इत्यत्र ब्राह्मणा विष्णोरुपासका उक्ताः महामुनिकृत इत्यत्र च विष्णुर्ब्राह्मणोपासक उक्त इतश्च विरोधः प्रतीयते । न हि स्तोतैव स्तुत्यः तुल्यश्च स्तोता लोके कुत्रचिद्दृश्यते इति चेदत्रेदमवधेयम् । "ब्रह्मा विष्णुः शिवो विप्राः सर्वदेवैः प्रपूजिताः । परस्परं स्तुवंत्येते लीलया भेदभावनात् " इत्यादिपुराणात् । किञ्च परैर्विप्राद्विड्भिः किमीश्वरो हृद्यवरुध्यते किं तु न कदापि । अत्र विप्रसंघे शुश्रूषुभिः शुश्रूषां कुर्वद्भिस्तत्क्षणादेवावरुध्यते स्थिरी क्रियते । किंभूतो हरिः । द्येनाब्धिना शयनार्थं वर्तते इति सद्यः । "द्योब्धिर्द्यौः स्यात्त्रिविष्टपम्" इति' सौभरीनाममालायाम् । " विप्रद्विषं नरं दृष्ट्वा हरिर्दूरात्पलायते । विप्राणां सेवनादाशु हरिरायाति मानसे । " इति संहितोक्तेः । " सर्वं सहे महाराज विप्रद्वेषं न वै क्वचित् । विप्रा मे देवदेवस्य सदोपास्या न संशयः " इत्यादिनारदपुराणाच्च । तर्हि सर्वे विप्रानेव कथं न सेवन्ते तत्राह । कृतिभिर्जन्मांतरे कृतपुण्यपुञ्जैर्जन्मांतरीयपुण्यं विना तत्र विश्वासो न जायते । तदुक्तं " तीर्थे देवे गुरौ विप्रे ईशनाम्नि च पार्थिव । स्वल्पपुण्यवतां लोके विश्वासो नैव जायते ॥ " इतिपुराणांतरे युधिष्ठिरं प्रति श्रीकृष्णोक्तेरिति ब्राह्मणपक्षः २ । एतच्छास्त्रस्य श्रीकृष्णभक्तिप्रतिपादकत्वाद्भक्तियोगेऽप्येनं योजयति । भोः शिष्या इति संबोध्य व्यासो वदति । भागवते । भगवतो विष्णोरयं भागवतो भक्तियोगस्तस्मिन्धर्मोऽस्ति । तत्र श्रीविष्णुपूजनादिरूपधर्मस्य विद्यमानत्वात् किंभूतो धर्मः । न विद्यते त्रपा नामोच्चारणदंडवत्प्रणत्यादिषु येषां तेऽत्रपा वैष्णवास्ते रमंते क्रीडंत्यत्रेत्यत्रपरमः । यद्वा न विद्यते त्रपा स्त्र्यादिदर्शनादिषु येषां तेऽत्रपाः शुकादयस्ते रमंतेऽत्रेत्यत्रपरमः । वैष्णवेतरास्तु हरिनामोच्चारणादौ लज्जंते मृषाभाषणपरस्त्र्युपरि पतनादौ तु न लज्जंते । तदुक्तं "नामोच्चारेथ साष्टांगप्रणतौ श्रीहरेर्नृणाम् । अभक्तानां यथा लज्जा जायते न तथा ध्रुवम् ॥ मृषोक्तौ व्यभिचारादौ भक्तानां त्वन्यथा ततः" इत्यादिना बहु प्रपञ्चितं श्रीहरिभक्तिप्रदीपे । इत्यभिप्रेत्यैव भगवंतं कुंती वक्ष्यति "जन्मैश्वर्यश्रुतश्रीभिरेधमानमदः पुमान् । नैवार्हत्यभिधातुं वै त्वामकिंचनगोचरम्" इति । एकादशेऽपि भगवानुद्धवं वक्ष्यति 'रजःसत्त्वतमोनिष्ठाः' इत्यारभ्य 'मानिनां चातिस्तब्धानां मद्वार्त्तापि न रोचते' इत्यंतेन।पुनः प्रोज्झितं प्रकर्षेण त्यक्तं कैतवं फलाभिसंधिलक्षणं यत्र स तथा।"फलेच्छा यत्र जायेत स स्याद्धर्मः सकैतवः । निष्कामो यो भवेद्धर्मः स शुद्धः परिकीर्त्तितः ॥" इति स्मृतेः । यद्वा प्रकर्षेणोज्झितं कैतवं लक्षणं यत्रेति तथा । तद्वक्ष्यति चित्रकेतूपाख्याने "जितमजित तदा भगवता यदाह भागवतं धर्ममनवद्यम् ।

निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ॥ पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥ ३ ॥

षुभिः श्रोतुमिच्छद्भिरेव तत्क्षणादेवावरुद्ध्यते । इदमेव ताह किमिति सर्वे न शृण्वंति तत्राह । कृतिभिरिति । श्रवणेच्छा तु पुण्यैर्विना नोत्पद्यत इत्यर्थः । तस्मादत्र कांडत्रयार्थस्यापि यथावत्प्रतिपादनादिदमेव सर्वशास्त्रेभ्यः श्रेष्ठमतो नित्यमेतदेव श्रोतव्यमिति भावः ॥ २ ॥ इदानीं तु न केवलं सर्वशास्त्रेभ्यः श्रेष्ठत्वादस्य श्रवणं विधीय तेऽपि तु सर्वशास्त्रफलरूपमिदमतः परमादरेण सेव्यमित्याह । निगमेति । निगमो वेदः स एव कल्पतरुः सर्वपुरुषार्थोपायत्वात्तस्य फलं भागवतं नाम तत्तु वैकुंठगतं नारदेना

निष्किञ्चना ये मुनय आत्मारामा यमुपासतेऽपवर्गाय ॥ विषममतिर्न यत्र नृणां त्वमहमिति मम तवेति यदन्यत्र । विषमधिया रचितो यः सह्यविशुद्धः क्षयिष्णुरधर्मबहुलः'' इति ॥ इत्यभिप्रेत्यैवोद्धवं प्रति भगवताप्युक्तं ''कर्मशुद्धिर्मदर्पणम्'' इति । सतां सदाचारतत्पराणां वास्तवं सत्यभूतं वस्तु परमात्मात्र भक्तियोग एव वेद्यः ''भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः'' इति श्रीमुखोक्तेः ''ज्ञानकारणसामग्र्यां भक्तिरेव गरीयसी'' इति शिष्टोक्तेश्च । '' न युज्यमानया भक्त्या भगवत्यखिलात्मनि । सदृशोऽस्ति शिवः पंथा योगिनां ब्रह्मसिद्धये'' इति श्रीकपिलोक्तेश्च । '' भक्त्याहमेकया ग्राह्य'' इत्यादि बहुश उक्तेश्च ''सत्यं ज्ञानमनंतं ब्रह्म '' ॥ इति श्रुतेः परमात्मैव सत्यं वस्त्विति । किंभूतं वस्तु निर्मत्सराणां शिवदं मोक्षफलदम् । सासूयानां जातमपि ज्ञानं न फलपर्यवसायि । '' निःश्रेयसकरं ज्ञानं सुवृत्तानां प्रजायते । दुर्वृत्तानां कथमपि जातमप्यन्यथा भवेत् ॥ '' इति पुराणांतरात् । पुनः किंभूतं तापयंति क्लेशयन्तीतीति तापाः कामक्रोधलोभास्त एव त्रयस्तापत्रयास्तेषामुत्पाटनकरम् । ''तपंति विविधांस्तापानैतान्मद्गतचेतस '' इति कपिलोक्तेः । पुनः श्रीमत् । श्रीशब्दोदिता राधा तद्युतमित्यर्थः । एतेन श्रीराधाकृष्ण एव परमार्थभूतं वस्तु तद्भिन्नं सर्वमवस्त्वेव । ''यस्मिन्सर्वं विलीयेत वस्तु तत्परमार्थकम् ॥ एतादृशं परं ब्रह्म राधाकृष्णो न संशयः'' इति गोस्वाम्युक्तेः । ''कृष्णात्परं किमपि तत्त्वमहं न जाने'' इति मधुसूदनस्वाम्युक्तेश्च । ''सर्वेषामेव भावानां भावार्थो भवति स्थितः । तस्यापि भगवान्कृष्णः किमु तद्वस्तु रूप्यताम् '' इति वक्ष्यमाणत्वात्स एव सर्वं परमार्थभूत इत्यादिबहुश उक्तेश्च । किंभूते भागवते महामुनयो नारदादयस्तैः कृते प्रवर्त्तिते । यद्वा महामुनिर्विष्णुरेव तेन प्रवर्त्तिते उद्धवादिभ्य उपदिष्ट इत्यर्थः । परैर्भक्तियोगेतरैः सांख्ययोगादिसाधनैरीश्वरः । किं सद्यो हृद्यवरुध्यते स्थाप्यते वेति विलंबेन । अत्र शुश्रूषुभिर्भक्तियोगं सेवमानैस्तत्क्षणादेवावरुध्यते। ''नसाधयाति मां योगो न सांख्यं धर्म्म उद्धव । न स्वाध्यायस्तपस्त्यागो यथाभक्तिर्ममोर्ज्जिता ॥ '' इति भगवदुक्तेः । अत्र विशेषो हि मत्कृताद्यपद्यव्याख्याशत्युत्तारपद्यद्वयव्याख्यायां च द्रष्टव्यः । अत्रानेकजन्मानुष्ठितसुकृतत्वेन मत्सरादिदोषरहितः शुद्धांतःकरणोऽधिकारी साधनतया श्रवणादिधर्मस्तत्प्राप्यतया सच्चिदानंदात्मको भगवांश्च विषयः । निखिलदुःखनिवृत्तिपूर्वकपरमानंदावाप्तिश्च फलापरपर्यायं प्रयोजनं ग्रंथस्य विषयेण प्रतिपाद्यप्रतिपादकभावः । प्रयोजनेन साध्यसाधनभावश्च संबंध इत्यनुबंधचतुष्टयं बोध्यम् । पूर्वोक्तं छन्दः ॥२॥ कल्पितं संकल्पितं राति ददातीति कल्पतरुः । पृषोदरादित्वादार्षत्वाद्वा कल्पितपदस्थेकारस्याकारः । यद्वा कल्पमतीव समर्थं चतुर्वर्गं तरति ददातीति कल्पतरुः । तस्य स्वाश्रितेभ्यो वांछितविविधपुरुषार्थरूपफलदायित्वेपि यत्साहजिकं तदिदं भागवतं फलं श्लेषेण भगवत्स्वामिकमिदं तेनैव स्वभक्तेभ्यो दत्तमिति तान्विना न कस्याप्यत्र स्वत्वारोपे शक्तिरिति भावः । गलितमिति । वृक्षपक्वतया स्वयमेव पतितं न तु बलात्पातितमिति । स्वादु संपूर्णत्वं न चोच्चनिपातेन स्फुटितमित्यर्थ इति । नाप्यनतिमधुरं चेत्याह । शुकेति । परमोर्द्ध्वचूडातः श्रीनारायणाद्ब्रह्मशाखायां ततोऽधस्तान्नारदशाखायां ततोऽधस्ताद्व्यासशाखायां ततः शुकमुखं प्राप्यातपान्मध्विवामृतद्रवं संयुतं शुकेनैव तेन स्वचंच्वाऽमृतनिष्क्रमणार्थं द्वारमपि कृतम् । अथ च तेन स्वादितत्वादतिमधुरं ततः सूतादिशाखातः शनैः शनैः पतनादखंडितं तेन गुरुपरंपरां विना स्वबुद्धिबलेनास्वादने श्रीभागवतस्याखंडितत्वे पानाशक्तिश्च सूचिता । अनागताख्यानमनादित्वं तेनैवेदं शास्त्रं प्रवृत्तं न तु व्यासदेवेन रचितं व्यासस्य प्राकट्यकर्तृत्वमेव नतूत्पादकत्वं कल्पितत्वे तु प्राकृतगाथावत्संसारनिस्तारकत्वमप्यस्य न सेत्स्यति ।

नीय मह्यं दत्तम् । मया च शुकस्य मुखे निहितम् । तच्च तन्मुखाद्भुवि गलितं शिष्यप्रशिष्यादिरूपपल्लवपरंपरया शनैरखंडमेवावतीर्णम् । न तूच्चनिपातेन स्फुटितमित्यर्थः। एतच्च भविष्यदपि भूतवन्निर्दिष्टम् । अनागताख्यानेनैवास्य शास्त्रस्य प्रवृत्तेः । अत एवामृतरूपेण द्रवेण संयुतम् । लोके हि शुकमुखस्पृष्टं फलममृतमिव स्वादु भवतीति प्रसिद्धम् । अत्र शुको मुनिः। अमृतं परमानंदः । स एव द्रवो रसः। "रसो वै सः । रस ँ ह्येवायं लब्ध्वानन्दी भवति" इति श्रुतेः। अतो हे रसिका हे रसज्ञास्तत्रापि भावुका

"कृतवान्द्वापरस्यांते" इत्यादौ करणं प्राकटयकरणमित्येवं व्याख्येयम् । श्रीभगवतापि सृष्ट्यादौ ब्रह्मणे स्वस्मिन्नित्यस्थितमेवोपदिष्टं न तु कल्पयित्वा साक्षाद्वेदरूपत्वादस्य "पुराणं ब्रह्मसंमितम्" इत्याद्युक्तेर्ब्रह्मसंमितत्वं ब्रह्मण एव संपनीपद्यते । न त्वन्यवस्तुनस्तथात्वे रंगस्य हेमसाम्यं शूद्रस्य ब्राह्मणसाम्यं वैश्वामित्रवर्तुलाकारचरहीत्याख्यातस्य गोधूमसाम्यञ्च स्यादतोऽनाद्येतत्पुराणमेतच्च विशेषत आद्यपद्यव्याख्याशत्यां मत्कृतायां भागवत पक्षव्याख्याने वर्णितमस्तीत्युपरम्यते किंच "पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् । अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥पुराणमेकमेवासीत्तदा कल्पांतरेऽनघ। त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ॥ अंगानि चतुरो वेदाः पुराणन्यायविस्तरम् । मीमांसा धर्मशास्त्रञ्च प्रतिगृह्य मया कृतम् ॥ प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत्ततः । कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो नृप ॥ व्यासरूपमहं कृत्वा संहरामि युगेयुगे । चतुर्लक्षप्रमाणेन द्वापरेद्वापरे सदा ॥ तथाष्टादशधा कृत्वा भूर्लोकेस्मिन्प्रकाश्यते । अद्यापि देवलोकेस्मिञ्शतकोटिप्रविस्तरम् ॥ तदर्थोत्र चतुर्लक्षं संक्षेपेण प्रकीर्तितम्" ॥ इति मात्स्यपञ्चाशत्तमाध्याये मनुं प्रति श्रीमत्स्योक्तेः पुराणानामनादित्वमेव । अत्राक्षिपति । नन्विति । अष्टिः सावरणबीजम् । आदिना तदंतस्तृणादिग्रहः । अतो रसरूपत्वात् । तादात्म्यं ताद्रूप्यम् । ननु रसवदिति मतुपा भाव्यं रूपवान्घट इतिवत् । अन्यथा फलसामानाधिकरण्यं न स्यात्तत्राह । अत्र चेति । अत्र प्रकृते रसवत्त्वस्याविवक्षितत्वान्मतुपः प्राप्तिरेव नास्तीति तं मतुपं विनैव रसतादात्म्यविवक्षया फलसामानाधिकरण्यमित्यर्थः । ननु मतुपो लोपेनापि तद्वत्त्वविवक्षया नीलो घट इतिवत्सामानाधिकरण्यसंभवात्किमर्थं मतुपः प्राप्त्यभाव उच्यतेऽत आह । अगुणवचनेपीति । गुणं मुक्त्वा गुणिनि ये पर्यवस्यंति शब्दास्तेभ्यो मतुपो लोपो भवति । रस शब्दस्तु गुणवाची न तु गुणिनि पर्यवसायी रसः शर्करेत्यादिप्रयोगदर्शनात् । मतुपो लोपेन सामानाधिकरण्यासंभवात्साधुत्वार्थं मतुपो प्राप्तिरेवेत्यर्थः । भिन्नप्रवृत्तिनिमित्तयोः शब्दयोरेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमिति । अगुणं गुणभिन्नं वक्तीत्यगुणवचनस्तस्मिंस्तथा । तत्र स्वीकृतेपि सामानाधिकरण्ये हेयांशः त्वगादिः । तन्निवृत्यर्थं हेयांशानिवृत्तये । भागवतामृतपानस्य सदा सेव्यत्वमाह । न चेति । मोक्षः सालोक्यादिर्जीवन्मुक्तत्वं वा तमभिव्याप्य तंत्र तत्र भगवल्लीलागानप्रसिद्धेः । यद्वा लयः रसास्वादजनितः प्रलयोऽष्टमः सात्त्विकस्तत्पर्यंतम् । पिबतेत्यनेन पाने स्तंभाद्याः सात्त्विका भवंतीति ज्ञेयम् । तत्र प्रलये सति पानस्यास्पष्टत्वात् । यद्यपि विरामस्तदपि पुनः प्रबोधे सति पुनरपि प्रलयपर्यंतं पिबत नतु त्यजतेति मुहुरिति पदम् । यद्वा मुहुरिति पीतस्यापि पुनः पाने स्वादाधिक्यमेवेत्यहो इत्यतिविस्मये । रसिकाः हे रसज्ञा इति भक्तानामेव जातरतित्वाद्रतेरेव स्थायिभावत्वात्स्थायिन एव रस्यमानत्वान्नात्र ज्ञानिकार्मियोगिनां कोपि दाय इति भावः । हे भावुकाः तत एव यूयमेव कुशलिनोऽन्येऽमंगला एवेति भावः। भावका इति पाठे भावकत्वव्यापारवंतः । तथा हि भावकत्वव्यापारेण भाव्यमानः स्थायी भुज्यते इति भट्टनायकमतम् । अत्र श्लेषेण भगवतः स्वरूपं रस एव भवति तथाहि तैत्तिरीयकोपनिषदि " ब्रह्मविदाप्नोति परम् " इत्युक्त्वा ब्रह्मणः सकाशादाकाशादिक्रमेणान्नमयविराट्पुरुषपर्यंतां सृष्टिमुक्त्वा तस्य चांतरतः क्रमेण "तस्माद्वा एतस्मात्"इत्यादिनान्नमयप्राणमयमनोमयविज्ञानमयानंदमया आम्नायंते । तेष्वप्यानंदमयस्यैवानन्दमयोऽभ्यासात्"इत्यनेन ब्रह्मत्वं मतभेदे च तत्पुच्छस्यैव ।"आनंद आत्मा ब्रह्मपुच्छं प्रतिष्ठा" इत्यनेन ब्रह्मत्वं ब्रह्मण एव प्रतिष्ठात्वं च प्रतिपादितम् । तदनंतरं च "रसो वै सः रसं ह्येवायं लब्ध्वानंदी भवति" इति श्रुतेः । तत्र श्रुतौ च स इत्यनेन प्रक्रांत आनंदमयो वा तत्पुच्छं ब्रह्म वां न परामृश्यते पृथक्पृथगुत्तरोत्तरार्थप्रकर्षप्रतिपादिकास्वन्नमयादिश्रुतिष्वंते तस्याः पाठात्प्रक्रमभंगापत्तेः । ततश्च तस्या अयमर्थः । स प्रसिद्धो वै निश्चितं रस एव आनंदमयात्तथा ब्रह्मतोऽप्यांतरं प्रकृष्टं "ब्रह्मणो हि प्रतिष्ठाहम्" इत्यनेन श्रीकृष्णस्यैव ब्रह्मतः प्रकृष्टत्वं "मल्लानामशनिः" इत्यत्र तस्मिन्नेव यौगपद्येन सर्वरसस्य साक्षादुपलब्धेस्तत्र च शृंगारादिसर्वरसकदम्बमूर्तिर्भगवांस्तदभिप्रायेण बभाविति श्रीस्वामिचरणानां व्याख्यानाच्च तस्यैव सर्वरसरू

हे रसविशेषभावनाचतुराः । अहो भुवि गलितमित्यलभ्यलाभोक्तिः । इदं भागवतं नाम फलं मुहुः पिबत । ननु त्वगष्ट्यादिकं विहाय फलाद्रसः पीयते कथं फलमेव पातव्यं तत्राह । रसं रसरूपम् । अतस्त्वगष्ट्यादेर्हेयांशस्याभावात्फलमेव कृत्स्नं पिबत । अत्र च रसतादात्म्याविवक्षया रसवत्त्वस्य विवक्षितत्वाद्गुणवचनेऽपि रसशब्दे मतुपः

पल्वंचातः श्रीगीताश्रीभागवताभ्यामेव रसशब्देन श्रीकृष्णो व्याख्यातः।तमेवायं विज्ञानमयो लब्धांनदपरावधिकाष्ठां प्राप्नोति“सैषानंदस्य मीमांसा भवति”इति तदुत्तरश्रुत्या रस एव तस्मिन्नानंदविचारपर्यवसानज्ञापनात् यद्वाऽयमानंदम योपि “द्विजात्मजा मे युवयोर्दिदृक्षुणा”इति“विस्मापनं स्वस्य च सौभगर्द्धेः इति” इत्यादिभ्यस्तमेव लब्ध्वानंदी भवतीति । ततश्च तं रसं श्रीकृष्णं फलं निगमकल्पतरोः सकाशाद्गलितम्।न तु तत्र साक्षात्स्थितमिति तदर्थं निगमो नान्वेष्टव्यः किन्तु शुकमुखमेवेत्याह।शुकमुखादिति फलमिदमतिस्वादु ज्ञात्वा तत आकृष्य व्यासेन स्नेहात्स्वपुत्रमुखे एव निहितमिति संभाव्यत इति भावः । किंवा शुकमुखादिति हेतौ पंचमी । येषामहं प्रिय आत्मेत्यादि शुकवाक्य प्रामाण्याद्भुविव्रजभूमावुत्पद्य हेभावुका रसिकाः प्रियाः सत्यः भागवतं भगवत्स्वरूपभूतं रसमाधुर्यं पिबत । यद्वा भगवतः श्रीकृष्णस्य रसमालयं लयः श्लेषालिंगनमिति यावत् । 'ली श्लेषण' इति धातुपाठात् । तमभिव्याप्य एतदभि प्रायेण न्यायरत्नाकरेऽप्युक्तं “परमिममुपदेशमाद्रियध्वं निगमवनेषु नितान्तखेदखिन्नाः॥विचिनुत भवनेषु बल्लवीनामुपनिषदर्थमुलूखले निबद्धम्” इति । अमृतोऽनश्वरो योद्रवो मनोनयनद्रौत्यं तत्संयुतं यथा स्यात्तथा पिबतेत्यधरपानं सूचितमिदमेव निगमकल्पतरोर्गलितं परिपक्वं फलमिति फलतो गोपीजनानुगतिमयी रागानुगाख्या भक्तिरादिष्टा । यतो निगमोपि तल्लोभादेव बृहद्वामनदृष्टां तादृशीं भक्तिं विधाय व्रजभूमावुत्पद्य शतसहस्रशो गोप्यो भूत्वा तदधरामृतरसं पपाविति वेदस्तुतौ दृष्टमिति अतिरहस्योर्थः । “ब्रह्मणो हि प्रतिष्ठाहम्” इत्येतत्केचिदन्यथा व्याचक्षते सत्यं तदप्राकरणिकत्वात्काल्पितत्वादयुक्तमेव:मंतव्यं किं त्वेवमेव युक्तम् । तथाहि “मां च योव्यभिचारेण भक्तियोगेन सेवते । स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते॥ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च । शाश्वतस्य च धर्मस्य सुखस्यैकांतिकस्य च” इति ।अनयोरर्थः।ननु त्वद्भक्तया कथं निर्गुणब्रह्मप्राप्तिः सा तु अद्वितीयतदेकानुभवेन भवेत्तत्राह । ब्रह्मणो हींति । हि यस्मात्परमप्रतिष्ठात्वेन प्रसिद्धं श्रुतौ यद्ब्रह्म तस्याप्यहं प्रतिष्ठा प्रतिष्ठीयतेऽस्मिन्निति प्रतिष्ठाश्रयः । अन्नमयादिषु श्रुतिषु सर्वत्रैव प्रतिष्ठापदस्य तथार्थत्वात् । अत एवामृतस्य मोक्षस्याप्यहं प्रतिष्ठा । तस्य लक्षणया स्वर्गादिपरत्वं वारयति । अव्ययस्येति । तथा शाश्वतस्य साधनफलदशयोरपि स्थितस्य धर्मस्य भक्तयाख्यस्याहं प्रतिष्ठा तथा तत्प्राप्यस्यैकांतिकस्य सुखस्य प्रम्णश्च प्रतिऽष्ठातः सर्वस्यापि मदधीनत्वात्कैवल्यकामनया कृतेन मद्भजनेन ब्रह्मणि लीयमानो ब्रह्मधर्ममपि प्राप्नोतीति । अत्र श्रीविष्णुपुराणमपि प्रमाणम् । “शुभाश्रयः सचित्तस्य सर्वगस्य तथात्मनः”इति । व्याख्यातं च तत्रापि स्वामिचरणैः सर्वगस्यात्मनः परब्रह्मणोप्याश्रयः प्रतिष्ठा । तदुक्तं भगवता “ब्रह्मणो हि प्रतिष्ठाहम” इति । यथा विष्णुधर्मेपि नरकद्वादशीप्रसंगे “प्रकृतौ पुरुषे चैव ब्रह्मणोपि च स प्रभुः । यथैक एव सर्वात्मा वासुदेवो व्यवस्थितः” इति । तत्रैव मासर्क्षपूजाप्रसंगे “यथाच्युतत्वं परतः परस्मात्स ब्रह्मभूतात्परतः परात्मा । तथाच्युतत्वं कुरु वांछितं तन्ममापदं चापहराप्रमेय ॥” इति । तथाहि हरिवंशेपि विप्रकुमारानयनप्रस्तावेऽर्जुनं प्रति भगवद्वाक्यं “तत्परं परमं ब्रह्म सर्वं विभजते जगत् । ममैव तद्घनं तेजो ज्ञातुमर्हसि भारत ॥” इति । ब्रह्मसंहितापि“यस्य प्रभा प्रभवतो जगदंडकोटिकोटिष्वशेषवसुधादिविभूतिभिन्नम् । तद्ब्रह्म निष्कलमनंतमशेषभूतं गोविंदमादिपुरुषं तमहं भजामि ॥” इति । अत एव श्रुतिश्च गोपालतापिनी “ योऽसौ जाग्रत्स्वप्नसुषुप्तिमतीत्य तुर्यातीतो गोपालस्तस्मै वै नमो नमः” इति । संदर्भस्तु त्रिकांडतोपि श्रैष्ठ्ये तदीयावयवसारत्वनिर्देशेन दोषपरिहारपूर्वकं कारणांतरं योजयन्पूर्वतोपि वैशिष्ट्यमाह । निगमेति । हेभावुकाः परममंगलायनाः ये रसिका भगवत्प्रीतिरसज्ञा इत्यर्थः । ते यूयं वैकुंठात्क्रमेण भुवि पृथिव्यामेव गलितमवतीर्णं निगमकल्पतरोः सर्वफलोत्पत्तिभुवः शाखोपशाखाभिर्वैकुंठमप्यध्यारूढस्य वेदरूपतरोर्यत्खलु रसरूपं श्रीभागवताख्यं फलं तद्भुव्यपि स्थिताः पिबत आस्वाद्यांतर्गतं कुरुत । श्रीभागवताख्यं यच्छास्त्रं तत्खलु रसवदपि रसस्यैकमयताविवक्षया रसशब्देन निर्दिष्टं भागवतशब्देनैव तस्य रसस्यान्यदीयत्वं व्यावृत्तं भागवतस्य तदीयत्वाक्षेपात् । शब्दश्लेषेण च भगवत्संबंधिरसमिति गम्यते । स च रसो भगवत्प्रीतिमय एव । “यस्यां वै श्रूयमाणायाम्” इत्यादिफलश्रुतेः । यन्मयत्वेनैव श्रीभगवति रसशब्दः प्रयुज्यते “रसो वै स” इति स एव च प्रशस्यते “रसं ह्येवायं लब्ध्वानंदी भवति” इति । अत्र रसिका इत्यनेन प्राचीनार्वाचीनसंस्काराणामेव तद्विज्ञत्वं दर्शितम् । गलितमित्यनेन रसस्य

**प्राप्त्यभावात्तेन विनैव रसं फलमिति सामानाधिकरण्यम् । तत्र फलमित्युक्ते पानासंभवो हेयांशप्रसक्तिश्च भवेदिति तन्निवृत्त्यर्थं रसमित्युक्तं रसमित्युक्तेऽपि गलितस्य रसस्य पातुमशक्यत्वात्फलमिति द्रष्टव्यम् । नच भागवतामृतपानं मोक्षेऽपि त्याज्यमित्याह । आलयं लयो मोक्षः अभिविधावाकारः लयमभिव्याप्य । नहीदं**

सुपाकिमत्त्वेनाधिकस्वादुत्वमुक्त्वा शास्त्रपक्षे सुनिष्पन्नार्थत्वेनाधिकस्वादुत्वं दर्शितं रसमित्यनेन फलपक्षे हेयांशरहितत्वम् ॥ भागवतमित्यनेन सत्स्वपि फलांतरेषु निगमस्य परमफलत्वेनोक्त्या तस्य पुरुषार्थत्वं दार्शितम् । एवं तस्य रसात्मकस्य फलस्य स्वरूपतोऽपि वैशिष्ट्ये सति परमोत्कर्षबोधनार्थं वैशिष्ट्यांतरमाह शुकेति । अत्र फलपक्षे कल्पतरुवासित्वादलौकिकत्वेन शुकोप्यमृतमुखोभिप्रेयते । ततस्तन्मुखं प्राप्य यथा तत्फलं विशेषतः स्वादु भवति यथा परमभागवतमुखसंबंधं भगवद्गुणमपि ततस्तादृशपरमभागवतवृंदमहेंद्रश्रीशुकदेवमुखसंबंधं किमुतेति भावः । अत एव परमस्वादुपरमकाष्ठाप्राप्तत्वात्स्वतोऽन्यतश्च तृप्तिरपि न भविष्यतीत्यालयं मोक्षानंदमभिव्याप्य पिबतेत्युक्तम् । तथा च वक्ष्यते परिनिष्ठितोपीत्यादि । अनेनास्वाद्यांतरवन्नेदं कालांतरेप्यास्वादकबाहुल्येपि व्ययिष्यतीति दर्शितम् । यद्वा तत्र तस्य रसस्य भगवत्प्रीतिमयत्वेपि द्वैविध्यं तत्प्रीत्युपयुक्तत्वं तत्प्रीतिपरिणामत्वं चेति । यथोक्तं द्वादशे “ कथा इमास्ते कथिता महीयसां विताय लोकेषु यशः परेयुषाम् । वैराग्यविज्ञानविवक्षया विभो वचोविभूतीर्न तु पारमार्थ्यम् ॥ यत्तूत्तमश्लोकगुणानुवादः संगीयतेभीक्ष्णममंगलघ्नः । तमेव नित्यं श्रृणुयादभीक्ष्णं कृष्णेमलां भक्तिमभीप्समानः ॥ ” इति । ततः सामान्यतो रसत्त्वमुक्त्वा विशेषतोऽप्याह अमृतेति । अमृतं तल्लीलारसः हरिलीलाकथावातामृतानंदितसत्सुरं इति द्वादशे श्रीभागवतविशेषणात् । लीलाकथारसनिषेवणमिति तस्यैव रसत्वनिर्देशाच्च । सत्सुरमिति । संतोऽत्रात्मारामाः इत्थं सतां ब्रह्मसुखानुभूत्येत्यादिवत् त एव सुरा अमृतमात्रस्वामित्वात् । अत्रामृतद्रवपदेन लीलारसस्य सार एवोच्यते । तस्मादेवं व्याख्येयम् । यद्यपि प्रीतिमयरस एव श्रेयांस्तथाप्यस्त्यत्र विवेकः । रसानुभविनो यत्र द्विविधाः । पिबतेत्युपदेश्याः स्वतस्तदनुभविलीलापरिकराश्च । अत्र लीलापरिकरा एव रससारमनुभवंति अंतरंगत्वात् । परे तु यत्किंचिदेव बहिरंगत्वात् । यद्यप्येवं तथापि तदनुभवमयरससारं स्वानुभवमयेन रसेनैकतया विभाव्य पिबत । यतस्तादृशतया तादृशशुकमुखाद्गलितं प्रवाहरूपेण वहंतमित्यर्थः । तदेवं भगवत्प्रीतेः परमरसतापत्तिः शब्दोपात्तैव । अन्यत्र च सर्ववेदांतसारमित्यादौ तद्रसामृततृप्तस्येत्यादि । एवमेवाभिप्रेत्य भावुका इत्यत्र रसविशेषभावनाचतुरा इति स्वामिचरणैर्व्याख्यातम् । “तथास्मरन्मुकुन्दांघ्र्युपगूहनं पुनर्विहातुमिच्छेन्न रसग्रहो जनः ” इत्यादि । अत्र वैकुंठस्थितकल्पतरुफलस्य रसमात्ररूपत्वं च यथा हयशीर्षपंचरात्रे पञ्चतत्त्वनिरूपणे “द्रव्यतत्त्वं श्रृणु ब्रह्मन्प्रवक्ष्यामि समासतः । सर्वभोगप्रदा यत्र पादपाः कल्पपादपाः ॥ गंधरूपं स्वादुरूपं द्रव्यं पुष्पादिकं च यत् ॥ हेयांशानामभावाच्च रसरूपं भवेच्च तत् ॥ त्वग्बीजं चैव सर्वेषां हेयांशं किल यद्भवेत् ॥ सर्वं तद्भौतिकं विद्धि न ह्यभूतमयं हि तत् ॥ रसवद्भौतिकं द्रव्यमत्र स्याद्रसरूपकम्” इति । अत्र वैकुंठे इति तत्प्रकरणलब्धम् । “द्रुतविलंबितमाह नभौ भरौ” इति लक्षणवत्वादिदं छंदो द्रुतविलंबितं नामेति ॥ हे भावुकाः कल्याणेप्सवः “भावुकं भविकं भव्यम्” ॥ इत्यमरः।भावुकमस्ति प्राप्यत्वेन येषां ते भावुकाः । मत्वर्थीयोच्।पुनर्हे रसिका रसज्ञाः।यूयं भुवि अमृतं मोक्षस्तस्य द्रवः प्राप्तिस्तेन संयुतं युक्तं विप्रकुलं पिबत आदरेण सेवध्वं यद्वा “वन संभक्तौ”इति धातुरार्षत्वाददादिकोत्र बोध्यस्तस्य लोटो मध्यमपुरुषबहुवचनेऽपि पूर्वमिदं रूपं अनुनासिकस्य लोपः।इह सूत्रे वनतेरपि गृहीतत्वात्॥“वष्टि भागुरिः” इति अप्युपसर्गाकारलोपः ।“भूत्वा द्विजवरस्त्वं वैमामुपेष्यासि केवलम्” इति श्रीकृष्णेन मुचुकुंदं प्रत्युक्तेः । विप्रदेहस्यैव मोक्षहेतुत्वात्।किंभूतम् अमृतद्रवसंयुतं शुकः श्रीशुकः मुखं प्रधानं येषु ते शुकमुखा योगीश्वरा नारदादयः तैरत्यते सातन्येन प्राप्यते इति शुकमुखात् “अत सातत्यगमने” अतः क्विप् । नारदेन कदाचित्सत्यभामादत्तः कृष्णः सदा ब्राह्मणदेहो मे भवत्विति प्रार्थितस्ततस्तथेत्युच्चारायित्वा मुक्त इति प्रसिद्धं हरिवंशे । पुनः निगमो वेदः स एव कल्पतरुस्तस्य फलं फलमस्त्यामिन्निति फलम्।मत्वर्थीयोच्।वेदफलं चाध्ययनाध्यापनादि।तद्विप्रकुलेऽस्त्येवेति भावः ।पुनः किंभूतं भगवन्तमुपास्ते इति भागवतस्तं “किमुमत्कलया पुनः” इति श्रुतदेवं प्रति श्रीमुखोक्तेः । पुनः किम्भूतं रस आनंदो मीयते प्राप्यतेऽनयेति रसमा सरस्वती तस्या आलयं स्थानम् । पुनः किंभूतं “गॄ विज्ञाने” गीर्य्यते ज्ञायते परतत्त्वमनेनेति गरो ज्ञानं तज्जातमस्येति गरितं रलयोरैक्याद्गलितमिति।अहोद्भुतेऽव्ययं तथा च “श्रोतियं ब्रह्म

नैमिशेऽनिमिषक्षेत्रे ऋषयः शौनकादयः ॥ सत्रं स्वर्गाय लोकाय सहस्रसममासत ॥ ४ ॥

स्वर्गादिसुखवन्मुक्तैरुपेक्ष्यते किंतु सेव्यत एव । वक्ष्यति हि । "आत्मारामाश्च मुनयो निर्ग्रंथा अप्युरुक्रमे । कुर्वंत्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः" इति ॥ ३ ॥ तदेवमनेन श्लोकत्रयेण विशिष्टेष्टदेवतानुस्मरणपूर्वकं प्रारिप्सितस्य शास्त्रस्य विषयप्रयोजनादिवैशिष्ट्येन सुखसेव्यत्वेन च श्रोतॄनभिमुखीकृत्य शास्त्रमारभते । नैमिश इति । ब्रह्मणा विसृष्टस्य मनोमयस्य चक्रस्य नेमिः शीर्यते कुंठीभवति यत्र तन्नैमिशं नेमिशमेव नैमिशम् । तथा च वायवीये । " एतन्मनोमयं चक्रं मया सृष्टं विसृज्यते । यत्रास्य शीर्यते नेमिः स देशस्तपसः शुभः ॥ इत्युक्त्वा सूर्यसंकाशं चक्रं सृष्ट्वा मनोमयम् । प्रणिपत्य महादेवं विससर्ज पितामहः ॥ तेऽपि हृष्टतमा विप्राः प्रणम्य जगतां प्रभुम् । प्रययुस्तस्य चक्रस्य यत्र नेमिर्व्यशीर्यत ॥ तद्वनं तेन विख्यातं नैमिशं मुनिपूजितम् ॥ " इति । नैमिष इति पाठे वराहपुराणोक्तं द्रष्टव्यम् । तथाहि गौरमुखमृषिं प्रति भगवद्वाक्यम् । " एवं कृत्वा ततो देवो मुनिं गौरमुखं तदा । उवाच निमिषेणेदं निहतं दानवं बलम् ॥ अरण्येऽस्मिंस्ततस्त्वेतन्नैमिषारण्यसंज्ञितम् । भविष्यति

निष्ठम्"इति श्रुत्यर्थौ ध्वनितोत्रेति।इति ब्राह्मणपक्षेप्ययं योज्यः।"ब्राह्मिष्ठं ब्राह्मणं गुरुमुपासीत"इति श्रुत्यर्थश्च ॥३॥भागवतारंभे पुनर्मंगलमाचरति।ॐ मिति।।"ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।कण्ठं भित्वा विनिर्यातौ तेन मांगलिकावुभौ।" इति।ननु कंठभेदनात्कुतो मांगलिकत्वमिति चेन्न।महतां दूषणं भूषणमिति न्यायेन नीलकंठवत्। किञ्च शास्त्रस्यास्य प्रणवार्थविवृतिरूपत्वञ्च सूचयति ॥ नैमिश इति।।निरुक्तौ प्रमाणमाह।तथाचेति। मूर्द्धन्यषांतपाठे प्रमाणांतरमाह। नैमिष इति।विशेषकं वैशिष्ट्यापादकम्।अत्रेदं विवक्षितम्।यत्र कामादीञ्शत्रूञ्शीघ्रमेव हं तुं प्रभवेत्तत्र वसेदिति भावः। इत्यर्थ इति। "तुमोप्रयुक्तस्य"इति कर्मणि चतुर्थी बोध्यात्रेति भावः।प्रथमं शौनकादीनां सकामकर्मपरत्वमेवासीद्रोमहर्षणसंगेन ततो नानापुराणादिशास्त्रश्रवणमननादिभिर्जिज्ञासुत्वमिति प्रासिद्धिः। ततश्च साधोरुग्रश्रवसः संगेन भक्तिरसे स्पृहा । तदुक्तं "कर्मण्यस्मिन्ननाश्वासे धूमधूम्रात्मनां भवान्। आपाययति गोविंदपादपद्मासवं मधु" इति । ततश्च जिज्ञासुत्वमपि शिथिलं कुर्वतां तेषां भक्तौ प्रवेशे स्वर्गार्थकं सत्रं तच्च मिषमेवाभूत् । तदुक्तं "कथायां सक्षणा हरेः" इति।एतच्च श्रीभागवतश्रोतृषु तेषु कर्मिषु कर्मनिष्ठाव्यवधानेन भक्तेः प्रभावद्योतनं तथैवं श्रीभागवतवक्तरि श्रीशुकदेवेपि"परिनिष्ठितोपि नैर्गुण्ये"इत्यादिभिर्ब्रह्मनिष्ठाव्यवधानेनेति।यद्वा स्वः स्वर्गे गीयत इति स्वर्गायो हरिः उरुगाय इति वत् । तस्य लोको वैकुंठस्तस्मै। ये ऋत्विजस्त एव यजमानाः। यत्र बहुकर्तृकयागस्तत्र सत्रशब्दः प्रयुज्यते यद्वा "बहुभ्यो दीयते यत्र तृप्यंति प्राणिनो बहु ॥ कर्तारो बहवो यत्र तत्सत्रमभिधीयते" ॥ इति नीलकंठः । ननु सहस्रसममित्युक्तेः "शौनकस्य कुलपतेः सत्रे द्वादशवार्षिके" इति भारतविरोधस्तु द्वाभ्यां बिंदुभ्यामधिका दशेति द्वादश।दशसंख्याकांकोपरि बिंदुद्वयपातनेन सहस्रं भवतीति समासेन परिहरणीयः । कल्पांतरापेक्षया वा द्वादशेति पाठो भारतेऽस्तीति । यद्वा"यो मासः स संवत्सर" इति श्रुतेः। सहस्रमासिको वा यागो ज्ञेयः।एतद्वनपर्वणि पंचत्रिंशाध्यायेऽस्ति "मासः प्रतिनिधिः"इत्यत्र नीलकंठेनोक्तम्।उद्दिश्येत्यध्याहारे तु गौरवमेव प्रतिभाति।तं विनाप्यर्थसिद्धेः। "कर्तृकर्मक्रियादीनां यदि स्थानं न लभ्यते।अध्याहारं तदा कुर्यान्मुख्यार्थप्रतिपत्तये"इत्यभियुक्तोक्तेरत आह । यद्वेति। इत्यर्थ इति "सर्वेषामेव धातूनामंतर्भूतकृञर्थता । सा वाच्या प्रत्ययार्थेन ह्येवं भाट्टादयो जगुः" इत्युक्तेरिति भावः । तत्तद्धात्वर्थस्तत्र तत्र न संभवतीति धातुं विना केवलप्रत्ययोच्चारणं न युज्यते।"न केवला प्रकृतिः प्रयोक्तव्या न केवलः प्रत्ययश्च।"इत्युक्तेः।प्रत्ययस्य तिबादेरुच्चारणमेवार्थः प्रयोजनं यत्र तादृशतया धात्वर्थस्याविवक्षितत्वात्। "कृञर्थानुगतकर्तृवाचि प्रत्यये न कृञर्थस्तु समर्प्यते"इति।तथाहि "अग्नीषोमीयपशोरालभनमालभते,अमावास्यायां पितृभ्यः श्राद्धं निर्वपति,अष्टवर्षायाः परिणयनमुपयंति" इति । इहालभते,कुरुते,निर्वपति,करोति,उपयंति,कुर्वंतीत्यर्थौ विधेयःकृञर्थानुगतप्रत्ययार्थस्यैव कर्तृरूपस्य विवक्षा।न तु धात्वर्थस्येति"वायव्यं श्वेतमालभेत, अग्नये चरुं निर्वपति,प्रतितिष्ठंति ह वा एते य एता रात्रीरुपयंति" इत्यादीनामादिपदाद्ग्रहः।रात्रीः सत्राणि"शौनः सर्वविवेकः स्यात्" इति लीलावत्याम्।

त एकदा तु मुनयः प्रातर्हुतहुताग्नयः ॥ सत्कृतं सूतमासीनं पप्रच्छुरिदमादरात् ॥ ५ ॥ ऋषय ऊचुः ॥
त्वया खलु पुराणानि सेतिहासानि चानघ ॥ आख्यातान्यप्यधीतानि धर्मशास्त्राणि यान्युत ॥ ६ ॥

यथार्थं वै ब्राह्मणानां विशेषकम्॥'' इति । अनिमिषः श्रीविष्णुरलुप्तदृष्टित्वात्तस्य क्षेत्रे । तथा चात्रैव शौनकादिवचनम् ''क्षेत्रेऽस्मिन्वैष्णवे वयम्'' इति । स्वः स्वर्गे गीयत इति स्वर्गायो हरिः स एव लोको भक्तानां निवासस्थानं तस्मै तत्प्राप्तय इत्यर्थः । सहस्रं समाः संवत्सरा अनुष्ठानकालो यस्य तत्सत्रं सत्रसंज्ञकं कर्मोद्दिश्यासत उपविविशुः । यद्वा।आसताकुर्वतेत्यर्थः।आलभेत निर्वपति उपयंतीत्यादिवत्प्रत्ययोच्चारणमात्रार्थत्वेनास्तेर्धात्वर्थस्याविवक्षितत्वात्॥ ४॥प्रातःकाले हुता एव हुता अग्नयो यैस्ते।अनेन नित्यनैमित्तिकहोमसाकल्यं दर्शितम् । इदं वक्ष्यमाणमादरात्पप्रच्छुः ॥ ५ ॥ विविदिषितानर्थान्प्रष्टुं सूतस्य सर्वशास्त्रज्ञानातिशयमाहुः । त्वयेति त्रिभिः श्लोकैः । इतिहासो महाभार

सर्वो विवेको यस्य सः सर्वविवेकः स एव शौनकः सर्वविवेकोपि भगवद्भक्तानामेव भवति सर्वव्यापिनो भगवतो याथार्थ्येन ज्ञातत्वात् । भगवद्भावरसिकोमु निवरः स आदिर्येषां ते तथा । यद्वा शुनकस्यापत्यं शौनकः ।''शुनकः शौनको यस्य बह्वृचप्रवरो मुनिः'' इति नवमस्कंधे वक्ष्यमाणत्वात् । विजयध्वजस्तु निमिषा ऋषिसेव्यफला वृक्षविशेषास्तेषां क्षेत्रं''चित्रकन्निमिषो नेमिर्वञ्जुलोऽथापुराच्छदः'' इत्यभिधानात् । निमिषनाम्नर्षिणा यत्र तपश्चीर्णं तन्नैमिषम् । तत्र सतः सुजनान् त्रायत इति सत्रम् । सतो ब्रह्मणस्त्राणमनेनेति यज्ञाभावे वदे एव लुप्येतेत्यर्थः॥ ४॥ननु''ब्राह्मण्यां क्षत्रियाज्जातः सूतः'' इति स्मृतेस्तस्य विलोमजातीयत्वेन शूद्रत्वात् ''श्वचर्मणि यथा क्षीरमपेयं स्याद्द्विजातिभिः । तथा शूद्रमुखाच्छास्त्रं न श्रोतव्यं कदाचन'' इति भारतादिस्मृतेश्च । कथमतीवविज्ञाः शौनकादयः सूतात्साक्षाद्वेदरूपं श्रीभागवतं शुश्रुवुरिति चेदत्रेदमवधेयम् । नह्ययं जातिसूतः । अस्योत्पत्तिस्तु वायुपुराणे ''वैन्यस्य तु पृथोर्यज्ञे वर्तमाने महात्मनः । सुत्यायामभवत्सूतः प्रथमं वर्णवैकृतम् ॥ऐंद्रेण हविषा तत्र हविः पृक्तं बृहस्पतेः । जुहावेंद्राय दैवेन ततः सूतो व्यजायत । शिष्यहव्येन संपृक्तमभिभूतं गुरोर्हविः । अधरोत्तरचारेण जज्ञे तद्वर्णवैकृतम् ॥'' इति । किंच''अग्निकुंडसमुद्भूत सूत निर्मलमानस'' इति पुराणांतराच्च । रोमहर्षणो ''ब्राह्मण्यां क्षत्रियाज्जातः सूत'' इत्युक्तलक्षणो न जातिसूतः किं त्वग्निजः । ब्रह्मासनार्हता त्वस्य ब्राह्मणसंकल्पादेव धृष्टद्युम्नस्य क्षत्रियत्ववत् । यद्वा''अग्निर्वै ब्राह्मणः''इति श्रुतेरग्निजत्वेन ब्राह्मणत्वादेव ब्रह्मासनं मुनिभिर्दत्तमन्यथा''व्यासासनोपवेशाच्च शूद्रश्चांडालतां व्रजेत् । विप्रस्यैवाधिकारोस्ति व्यासासनसमाक्रमे ॥ धर्माणां श्रुतिगीतानामुपदेशे तथा द्विज॥'' इति संहितोक्तिर्व्याकुप्येत । किंच ब्रह्मासनं वैशंपायनहारीतशांतव्रतमार्कंडेयादिसमानस्तत्सजातीय एवार्हति न हीनः । न महांतः शौनकादयो हीनात्परं रहस्यं जगृहुरिति वक्तुं युक्तम् । ''न हनितः परमस्मा ददीत''इति श्रुतेः।''नीचादप्युत्तमा विद्या ग्राह्या''इति त्वापत्परं वृत्त्युपयोगिविद्यापरं वा । अत एव तद्वधाद्बलरामेण ब्रह्महत्याव्रतं चीर्णमिति स्मर्यते।''यद्येतद्ब्रह्महत्यायाः पावनं लोकपावन । चरिष्यत'' इति दशमे बलदेवं प्रति शौनकोऽपिवक्ष्यति च । सूतशब्दस्तु तत्र कथाप्रवक्तृसाम्यादेव पुराणानां प्रवक्तृत्वे''वरयेद्ब्राह्मणं गुरुम्''इति पुराणांतेरपि स्मर्यते । जातिसूतेषु पौराणिकपदप्रयोगः प्राचीनराज्ञामुत्साहौदार्यादिगुणवर्णनादेवेति। यद्यपि''मन्ये त्वां विषये वाचां स्नातमन्यत्र छांदसात्''इत्युक्तिस्तु जातिसूतविषयैव तथापि त्वयि सूतशब्दप्रयोगात्त्वय्युपचर्य्यतेऽन्यथा ''पुराणं ब्रह्मसंमितम्'' इत्युक्तेः श्रीभागवतवक्तृत्वमपि न संभवतीति रहस्यम् ॥ सत्कृतं तद्योग्यसत्कारैः पूजितम् आसीनं सुखोपविष्टम् । अनेन हुतहुताग्नय इत्युच्चारणेन ॥ ५ ॥ अनघेति ॥ त्वयि सूतपदप्रयोगो हि हविषोर्वैपरीत्येनैव न तु जात्यभिप्रायेणातोहं विलोमजो ब्राह्मणेभ्यः कथमुपदिशामीति शंकां मा कार्षीर्यतस्त्वमनघोसीति भावः।पुराणानि मात्स्यादीनि भारतादीतिहासादिना वाल्मीकीयादिग्रहः।चादुपपुराणान्यपि धर्मशास्त्राणि मनुयाज्ञवल्क्यादिप्रणीतस्मृतयः ''मन्वाद्याः स्मृतयो धर्मशास्त्रमित्यभिधीयते''इति संग्रहोक्तेः ।अधीतानीत्युक्त्या

यानि वेदविदां श्रेष्ठो भगवान्बादरायणः ॥ अन्ये च मुनयः सूत परावरविदो विदुः ॥ ७ ॥ वेत्थ त्वं सौम्य तत्सर्वं तत्त्वतस्तदनुग्रहात् ॥ ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत ॥ ८ ॥ तत्रतत्रांजसायुष्मन्भवता यद्विनिश्चितम् ॥ पुंसामेकांततः श्रेयस्तन्नः शंसितुमर्हसि ॥ ९ ॥ प्रायेणाल्पायुषः सभ्य कलावस्मिन्युगे जनाः ॥ मंदाः सुमंदमतयो मंदभाग्या ह्युपद्रुताः ॥ १० ॥ भूरीणि भूरिकर्माणि श्रोतव्यानि विभागशः ॥ अतः साधोत्र यत्सारं समुद्धृत्य मनीषया ॥ ब्रूहि नः श्रद्धधानानां येनात्मा संप्रसीदति ॥ ११ ॥

तादिस्तत्सहितानि । न केवलमधीतान्यपि त्वाख्यातान्यपि व्याख्यातानि च।उत अपि।यानि धर्मशास्त्राणि तान्यपि॥६॥किंच यानीत्यादि । विदां विदुषां मध्ये श्रेष्ठो व्यासो यानि वेद । परावरे सगुणनिर्गुणे ब्रह्मणि विदंतीति तथा ॥७॥ वेत्थ जानासि । सौम्य हे साधो तेषामनुग्रहात् । तत्त्वतो ज्ञाने हेतुमाह । ब्रूयुरिति । स्निग्धस्य प्रेमवतः । उत एव । गुह्यं रहस्यमपि ब्रूयुरेव ॥८॥ अंजसा ग्रंथार्जवेन । एकांततः श्रेयोऽव्यभिचारि श्रेयःसाधनम् ॥९॥ अन्येपि बहुना कालेन बहुशास्त्रश्रवणादिभिर्विनिश्चिन्वंतु नेत्याहुः।प्रायेणेति।हे सभ्य साधो अस्मिन्युगे कलावल्पायुषो जनास्तत्रापि मंदा अलसास्तत्रापि सुमंदमतयस्तत्रापि मंदभाग्याः विघ्नाकुलास्तत्राप्युपद्रुताः रोगादिभिः ॥ १० ॥ न च बहुशास्त्रश्रवणेऽपि तावतैव फलसिद्धिरित्याहुः । भूरीणीति । भूरीणि कर्माण्यनुष्ठेयानि येषु तानि । समुद्धृत्य यथावदुद्धृत्य येनोद्धृतवचनेनात्मा बुद्धिः संप्रसीदति

वेदवत्तासां गुरुमुखादेव पठनं न्याय्यमिति सूचितम्।उतेति पादपूरणेप्यर्थे वा।उतापि॥६॥ अन्यदाह किञ्चेति॥भगवान्साक्षान्नारायणत्वात्। “व्यासो नारायणः स्वयम्”इत्यादिपुराणात् । बदरीणां समूहो बादरं तदुपलक्षितमयनं निवासस्थानं “तस्मिन्स्व आश्रमे व्यासो बदरीखंडमण्डिते”इति वक्ष्यमाणत्वात् । यद्वा वादाननीश्वरवादादीन् रिणाति हिनस्तीति बादरायणः। ‘री गतिरेषणयोः’ रेषणं हिंसा कार्येयुण् वृद्ध्यायौ । अन्ये श्रीवसिष्ठप्रभृतयः । हे सूतेति । पौराणिकस्त्वमसीति भावः ।“सूताः पौराणिकाः प्रोक्ताः पुराणं सर्वसंग्रहः”इति धरणिदेवः॥७॥हे सौम्येति । सौम्यस्वभावत्त्वात्त्वयि गुरुप्रसादोऽवश्यमिति भावः । गुह्यं चेत्कथं ब्रूयुस्तत्राह।स्निग्धस्येति। ब्रूयुरिति विधिलिङेव । त्वयि स्निग्धे शिष्ये तेषामवश्यमेव रहस्यप्रकाशकत्त्वं तव च सर्वरहस्यविज्ञत्वमवगम्यते । अतस्तानपि प्रति स्वमतमेवोत्कृष्य ब्रुवतो मुनीनपहाय सर्वमतवक्ता त्वमेवास्माभिः पृच्छ्यस इति भावः ॥ ८ ॥ तर्हि तत्सर्वमेव ब्रवीमीति किं तत्राह॥ तत्रेति ॥ आयुष्मन्निति ॥ त्वया बहुकालं व्याप्य तान्यधीत्य विचारितानीति भावः । यद्वा वयं ब्राह्मणाः स्वोपकारकेभ्योप्याशिषमेव दद्म इत्यतएवमायुष्मान्भविष्यसीति भावः । अंजसा शीघ्रं तत्र तत्र झटित्यर्थबोधकवाक्येष्वित्यर्थः।एकांतत एकांतेन सर्वथेत्यर्थः।यद्वा प्रथमान्तात्तसिः।एकमद्वितीयञ्च तारतम्यगणनायामंतर्भूतञ्च यतोऽन्यदधिकं श्रेयो नास्तीत्यर्थः । तच्च प्रेमैव । ननु स्वर्गापवर्गादिकं ब्रह्मपरमात्मभगवत्सुमुख्यस्य भगवत्स्वरूपस्यापि वशीकारकत्वादित्यग्रिमग्रंथे व्यक्तीभविष्यति“तत्रतत्रांजसा”इत्यादिना“अतः साधो” इत्यंतेन सर्वशास्त्रसारोद्धारप्रश्नः प्रथमः।तत्रोत्तरं“स वै पुंसाम्” इत्यादिना“वासुदेवे” इत्यंतेन॥९॥ननु मन्मुखात्तत्सर्वं श्रुत्वा युष्मदादय एव श्रेयो निश्चिन्वंतु । हे सभ्येति देशकालपात्रज्ञोसीति भावः । अस्मिन्कलौ प्रायेणाल्पायुषस्तत्राप्यल्पायुष्ट्वेपि तत्रापि सालसत्वेपि तत्रापि मंदमतित्वेपि तत्रापि विघ्नाकुलत्वेपि अत्र चक्रवर्ती यदि कथंचिद्दीर्घायुषस्तर्हि मंदाः परमार्थेष्वलसाः।यदिकेचिन्निरलसा अपि तर्हि।निर्बुद्धयः।यदिसुबुद्धयोपि स्युस्तदा मंदभाग्यास्त्वादृशसाधुसंगहीनाः यदि लब्धसुसंगा अपि तदोपद्रुताः रोगाद्युपद्रववशात्तन्मुखाच्छ्रोतुं श्रुत्वा वा स्वश्रेयो निश्चित्य तत्तदनुष्ठातुं नावकाशं लभंत इति ॥ १० ॥ तावतैव बहुशास्त्रश्रवणेनैव।किंच तादृशस्य श्रेयसः साधनेषु मध्ये यन्मुख्यं कलिकालवर्त्तिभिर्जनैः सुशकयं च तत्साधनं वदेति पृच्छति श्रोतव्यानि शास्त्राणि । प्रसीदति

---

१ योः “युवोरनाकौ”इति सूत्रेणानादेशः ।

सूत जानासि भद्रं ते भगवान्सात्वतां पतिः ॥ देवक्यां वसुदेवस्य जातो यस्य चिकीर्षया ॥ १२ ॥ तन्नः शुश्रूषमाणानामर्हस्यंगाऽनुवर्णितुम् ॥ यस्याऽवतारो भूतानां क्षेमाय च भवाय च ॥ १३ ॥ आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन् ॥ ततः सद्यो विमुच्येत यद्बिभेति स्वयं भयम् ॥ ॥ १४ ॥ यत्पादसंश्रयाः सूत मुनयः प्रशमायनाः ॥ सद्यः पुनंत्युपस्पृष्टाः स्वर्धुन्यापोऽनुसेवया ॥ १५ ॥

सम्यगुपशाम्यति ॥ ११ ॥ प्रश्नान्तरं सूत जानासीति पंचभिः । भद्रं ते इत्यौत्सुक्येनाशीर्वादः । भगवान्निरतिशयैश्वर्यादिगुणः । सात्वतां सच्छब्देन सत्त्वमूर्तिर्भगवान्स उपास्यतया विद्यते येषामिति सत्वंवो भक्ताः । स्वार्थेऽण् राक्षसवायसादिवत् । तस्य चाश्रवणमार्षम् । तदेवं सात्वंत इति भवति । तेषां पतिः पालकः । यस्यार्थविशेषस्य चिकीर्षया वसुदेवस्य भार्यायां देवक्यां जातः ॥ १२ ॥ अंग हे सूत तन्नोऽनुवर्णयितुमर्हसि । सामान्यतस्तावद्यस्यावतारो भूतानां क्षेमाय पालनाय भवाय समृद्धये ॥ १३ ॥ तत्प्रभावमनुवर्णयंतस्तद्यशःश्रवणौत्सुक्यमाविष्कुर्वंति । आपन्न इति त्रिभिः । संसृतिमापन्नः प्राप्तः विवशोऽपि गृणन् । ततः संसृतेः । अत्र हेतुः । यत् यतो नाम्नो भयमपि स्वयमेव बिभेति ॥ १४ ॥ किं च यस्य पादः संश्रयो येषामत एव प्रशमः अयनं वर्त्म आश्रयो वा येषां ते मुनयः उपस्पृष्टाः सन्निधिमात्रेण सेविताः सद्यः पुनंति । स्वर्धुनी

निर्मलीभवति । तच्च श्रवणकीर्तनादिकमेवेत्यग्रे ज्ञास्यते । साधो इति सारग्राहिणः परोपकारनिरता एव साधवो भवंतीति भावः । अत्र श्रोतव्येषु 'श्रद्धालवे नित्यमनुव्रताय' वाच्यम् ॥ इति वक्ष्यमाणत्वात् ॥ ११ ॥ 'सूत जानासि' इत्यारभ्य 'कलिमलापहम्' इत्यंतो द्वितीयः प्रश्नः।सूतेति।अहो सूत त्वयैते महानुभावा अपि सूतान्मत्तः पृच्छतीति विमृश्य झटिति वाच्यमिति भावः । यथा रक्ष एव राक्षसः वय एव वायसस्तथा सत्वंत एव सात्त्वता इति तस्याण्प्रत्ययस्य तदेवमण्प्रत्ययाश्रवणे। अत्र संदर्भः । नानावतारावतारिष्वपि सत्सु महापुराणप्रारंभ एव श्रीशौनकादीनां श्रीकृष्णैकतात्पर्यम्। यथात्र पूर्वं सामान्यतोऽस्माभिरेकांतश्रेयस्त्वेन सर्वशास्त्रसारत्त्वेना त्मप्रसादहेतुत्वेन च यत्पृष्टं तदेतदेवास्माकं भवति यच्छ्रीकृष्णलीलावर्णनमित्यभिप्रेत्याहुः । भद्रं त इति। श्रीकृष्णलीलाप्रश्ने महादरौत्सुक्यादाशीर्वादः । सात्वतां यादवानां वा। जातो जगद्दृश्यो बभूव । यद्वा "सातिः सुखे" सौत्रो धातुर्ण्यंतात्तस्मात्क्विपि सात्परमात्मा स सेव्यतयास्त्येषामिति मतुपि सात्त्वंतो भक्तास्तेषां पतिरिति । यस्य।चिकीर्षया तच्च स्वयशःख्यापनमेव न तु भूभारहरणादेश्चिकीर्षया । वस्तुतः सिद्धांतसिद्धश्रवणस्मरणार्हाणि करिष्यन्निति कुंतीवाक्यपर्यवसानात् देवक्यां यशोदायां " द्वे नाम्नी नंदभार्याया यशोदा देवकीति च ।" वसुना गोधनेन " वसु धने सुवर्णादौ गोष्वग्नौ गणदैवते " इति कोशात्। दीव्यति द्योतते इति वसुदेवः। वसुषु दीव्यति द्योतत इति वा वसुप्रवर इत्यर्थः । यद्वा वसुश्चासौ देवश्चेति वसुदेवो नंदः "द्रोणो वसूनां प्रवरो धरया सह भार्यया । जज्ञे नंद इति ख्यातो यशोदा सा धराभवत् ।" इति श्रीदशमोक्तेः । यथाश्रुतार्थस्तु प्रसिद्ध एव एतेन कृष्णावतारद्वयमास्ति[1] नंदगृहे वसुदेवगृहे च। तयोर्द्वयोरेव लीलायाः प्रश्न इति ध्येयं सुमतिभिः। एवमग्रेऽपि ॥ १२ ॥ तस्य जिज्ञासया किं फलमिति चेच्छुत्वात्मानं कृतार्थीकरिष्याम इत्याहुः । यस्यावतार एव क्षेमायेत्यादि। किं पुनः स इत्यर्थः ॥ १३ ॥ विवशोपि विशेषण पराधीनः सन्नपि यस्य श्रीकृष्णस्य नाम । तस्य सर्वावतारित्वादवंतारनाम्नामपि तत्रैव पर्यवसानात् । अत एव साक्षाच्छ्रीकृष्णादपि तत्तन्नामप्रवृत्तिः प्रकारान्तरेण श्रूयते श्रीविष्णुपुराणे । तत्र तु "अखिलानामेव भगवन्नाम्नां कारणान्यभवन्" इति गद्यं तदिदं च वासुदेवदामोदरगोविंदकेशवादि नाम ज्ञेयम्। ततः संसृतेः अत्र घोरामिति विवश इति सद्य इति पदत्रयेणाजामिलादयः सूचिताः । स्वयं भगवानितिवत् । मूलभूतं भयं महाकाल एव बिभेति किं पुनर्मृत्युर्यमश्च किमुततरां यमदूता इति ॥ १४ ॥ अन्यदाधिक्यमाह ।

१ अयं वल्लभसिद्धान्तानुसारी विचार इति प्रतिभाति ।

को वा भगवतस्तस्य पुण्यश्लोकेड्य कर्मणः ॥ शुद्धिकामो न शृणुयाद्यशः कलिमलापहम् ॥ १६ ॥
तस्य कर्माण्युदाराणि परिगीतानि सूरिभिः ॥ ब्रूहि नः श्रद्दधानानां लीलया दधतः कलाः ॥ १७ ॥

गंगा तस्याः आपस्तु तत्पादान्निसृताः न तु तत्रैव तिष्ठंति अतस्तत्संबंधेनैव पुनंत्योऽपि अनुसेवया पुनंति न तु सद्य इति मुनीनामुत्कर्षोक्तिः ॥ १५॥ पुण्यश्लोकैरीडचानि स्तव्यानि कर्माणि यस्य तस्य यशः कलिमलापहं संसारदुःखोपशमनम्॥ १६॥ प्रश्नांतरम् । तस्येति । उदाराणि महांति विश्वसृष्ट्यादीनि । सूरिभिर्नारदादिभिः । कलाः

किश्चेति ॥ यस्य श्रीकृष्णस्य । पाद इत्येकत्वं सामान्याभिप्रायम् । पादावित्यर्थः । ''प्रशमो भगवनिष्ठबुद्धिता शमो मन्निष्ठता बुद्धेः'' इति स्वयं श्रीभगवद्वाक्यात्स एव । प्रकृष्टः प्रशमः साक्षात्पूर्णभगवच्छ्रीकृष्णललिलाकृष्टचित्त मुनयः श्रीशुकदेवादयः सद्यः पुनंति सवासनपापेभ्यः शोधयंति । स्वर्धुनी गंगा । '' योऽसौ निरंजनो देवश्चित्स्वरूपो जनार्दनः । स एव द्रवरूपेण गंगांभो नात्र संशयः'' इति । स्वयं तथाविधरूपा अपि साक्षाच्छ्री वामनदेवचरणनिस्सृता अपि अनुसेवया साक्षात्सेवाभ्यासेनैव शोधयंति न तु सन्निधानमात्रेण । साक्षात्सेवयापि न सद्य इति । तस्या अपि श्रीकृष्णमाश्रितानामुत्कर्षादुत्कर्षः । एवमेव तद्यशसोप्याधिक्यं वर्ण्यते । ''तीर्थं चक्रे नृपोनं यदजनि यदुषु स्वः सारित्पादशौचम्'' इति । टीका च । इतः पूर्वं स्वस्सरिदेव सर्वतोधिकं तीर्थमित्यासीत् । इदानीं तु यदुषु यदजनि जातं तीर्थं श्रीकृष्णकीर्त्तिरूपमेतत्स्वःसरिद्रूपं पादशौचं तीर्थमूनमलं चक्रे इत्येषा । विश्वनाथस्तु यत्पादावेव संश्रित्यैव वर्त्तमानाः सद्य इति स्मृतिमात्र एव पुनंति अविद्यामालिन्यानि शोधयंति किं पुनर्दृष्टाः स्पृष्टाः सेविता वेति व्याख्येयम् ।''येषां संस्मरणात्पुंसां सद्यः शुद्ध्यंति वै गृहाः । किं पुन दर्शनस्पर्शपादशौचासनादिभिः'' इत्यनेनैकार्थप्राप्तेः।स्वर्धुन्या आप इत्यत्रापि तस्याः सकाशाद्दूरदेशं नीता इत्येव व्याख्येयम् । ''मुक्तिस्त्वद्दर्शनादेवं न जाने स्नानजं फलम्'' इति बाक्यार्थविरोधात् । किंच । स्वर्द्धुन्या दर्शनादेव साधूनां तु स्मरणादपि मुक्तिरिति तदपि साधूनामेवोत्कर्षो ज्ञेयः । ततश्च तास्तु तत्पादान्निसृता एवातस्तत्संबंधेन पुनन्त्योपि उपर्युपरि स्पृष्टाः सत्यः पुनंति । नुर्विकल्पे सेवया प्रणत्यादिना वादता बा। स्वर्द्धुन्याप इति समासां ताभावस्त्वार्षः ॥१९॥ शुद्धिरात्मप्रसादः । ''येनात्मा सुप्रसीदति'' इति पूर्वोक्तेः । यशः ब्रह्मरुद्रेंद्रजयादिकं रासक्रीडादिकं चासाधारणमेव । ''पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः । पुण्यश्लोकस्तु वैदेहः पुण्य श्लोको जनार्दनः ॥ पुण्यश्लोकः शांतनवः पुण्यश्लोको बलिः स्मृतः ॥ पुण्यश्लोको व्यासदेवः पुण्यश्लोकाः सनादयः'' ॥ इत्यादि पुराणोक्तेः । पुण्यश्लोकैर्युधिष्ठिराद्यैः । यद्वा पुण्यश्लोकश्चासावीड्यकर्मा चेति कर्मधारयः । कलेर्युगसंबंधानि मलानि कलिं स्वांगावेशेन दुष्कृतप्रवर्त्तकत्वरूपं मलानि कायिकादिपापान्यपहंतीति । तथा को वेत्युक्त्या सर्वैः स्वांतःकरणशोधनार्थं कृष्णयश एव श्राव्यमिति भावः। सूत जानासीत्यारभ्य कोवेत्यंतेन कृष्णावतारप्रयोजनतच्चरितयोः प्रश्नाविति ज्ञेयम् । ''तस्य कर्माण्युदाराणि'' इत्यादिना विश्वसृष्ट्यादिलीलाप्रश्नः । तस्योत्तरं ''स एवेदं ससर्जाग्रे'' इत्यादिना । उदाराणि भक्ताभीष्टप्रदानि परमानंददानि वा ''उदारो दातृमहतोः'' इत्यमरः । दधदिति वर्त्तमानकालेन तदवताराणां नित्यत्वं तस्य च परिपूर्णत्वं कलाः पुरुषादिरूपा दधतस्तत्तदंशानभ्यादाय तस्यावतीर्णस्य सत इति संदर्भः ॥ १६ ॥ ''अथाख्याहि'' इत्यादिनावतारांतर कथाप्रश्नस्तस्योत्तरं तृतीयाध्यायः । श्रीकृष्णस्य तावन्मुख्यत्वेन कथय । अथ तदनंतरमानुषंगिकतयैवेत्यर्थः । हरेः श्रीकृष्णस्य प्रकरणबलात् अवताराः पुरुषावतारा गुणावतारा लीलावताराश्च तेषां कथाः लीलाः सृष्ट्यादि कर्मरूपा भूभारहरणादिरूपाश्च आत्ममायया निजेच्छया शक्त्या ''आत्ममाया तदिच्छा स्याद्गुणमाया जडात्मिका''इति महासंहितातः ॥ शुभा अमायिकीः । दधत इति वर्त्तमानकालेन लीलानां नित्यत्वं आत्ममायया योगमाय येति विश्वनाथः । अथावतारनिर्णयः । सर्वप्रधानानन्यापेक्षिमहैश्वर्यमाधुर्य्यः श्रीकृष्ण एव स्वयंरूपः प्रायस्तस्य तुल्यशक्तिधारी यः स तस्य विलासः । यथा वैकुंठनाथः न्यूनशक्तिधारी यः स स्वांशः यथा मत्स्यकूर्मादिः । यत्रै कशक्तिसंचारमात्रं स आवेशः यथा पृथुनारदादिः । पुरुषावतारगुणावतारलीलावतारभेदादवतारास्त्रिधा । महत्स्रष्टा कारणोदशायी प्रकृत्यंतर्यामी संकर्षणांशः पुरुषः प्रथमः । गर्भोदशायी समष्टिविराडंतर्यामी प्रद्युम्नांशो द्वितीयः पुरुषः । क्षीरोदशायी व्यष्टिविराडंतर्याम्यनिरुद्धांशस्तृतीयः पुरुष इति पुरुषावताराः । सत्वगुणेन विष्णुः पालनकर्त्ता क्षीरोदनाथ एव । रजोगुणेन ब्रह्मा सृष्टिकर्त्ता गर्भोदशायिनाभिपद्मोद्भवः । क्वचित्कल्पे तु तादृश

**अथाऽऽख्याहि हरेर्धीमन्नवतारकथाः शुभाः ॥ लीला विदधतः स्वैरमीश्वरस्याऽऽत्ममायया ॥ १८ ॥**

**ब्रह्मरुद्रादिमूर्तीः ॥ १७ ॥ अथेति प्रश्नांतरे । अवतारकथाः स्थित्यर्थमेव तत्तदवसरे ये मत्स्याद्यवतारास्तदीयाः कथाः । स्वैरं लीलाः कुर्वतः । श्रीकृष्णावतारप्रयोजन**

पुण्यकारी जीव एव ब्रह्मा । तदा तत्रेश्वरस्य सृष्टिशक्तिसंचारेणावेशादावेशावतार एव।रजोगुणयोगाद्गुणावतारत्वमपि विष्णुना तस्य साम्यं तु क्वचित्कल्पे स्वयमेव ब्रह्मा भवति।यथा यज्ञः स्वयमेवेंद्रो जात इति।पातालादिस त्यलोकांतः समष्टिविराट्स्थूलो ब्रह्मण एव विग्रहः प्राकृतः । सोपि ब्रह्मा शुद्धो जीवः हिरण्यगर्भस्तस्यांतर्यामी तु गर्भोदशायीश्वर एव । अथ तमोगुणेन रुद्रः संहारकर्त्ता क्वचिद्विष्णुरेव सदाशिवः । किञ्च सदाशिवः स्वयं रूपांगविशेषस्वरूपो निर्गुण एव सगुणः शिवश्चांशः । ब्रह्मा तु शिवान्नाधिकः सगुणत्वेप्यस्य विष्णुना साम्यमेवेति गुणावताराः । लीलावतारास्तु चतुःसननारदवाराहमत्स्ययज्ञनरनारायणकपिलदत्तहयग्रीवहंसपृश्निगर्भ र्षभपृथुनृसिंहकूर्मधन्वंतरिमोहिनीवामनपरशुरामरघुनाथव्यासबलभद्रकृष्णबुद्धकल्कीत्यादय एते प्रतिकल्पं प्रादुर्भवंति।मन्वंतरावतारास्तु यज्ञविभुसत्यसेनहरिवैकुंठजितवामनसार्वभौमविष्वक्सेनर्षभधर्मसेतुसुधामयोगेश्वरबृहद्भानवः । युगावतारास्तु शुक्लरक्तपीतकृष्णाः । एषां मध्ये केचिदावेशाः केचित्प्रभावाः केचिद्वैभवाः केचित्परावस्थाः । चतुःसननारदहारिविष्णुपृथुप्रभृतय आवेशाः । ततोधिकशक्तिमंतः प्रभावा मोहिनीधन्वंतर्यृषभव्यासदत्तशुकादयः। ततोधिकशक्तिप्रकाशा वैभवा मत्स्यकूर्मनरनारायणवराहहयग्रीवपृश्निगर्भबलदेवयज्ञादयः । ततोप्यधिकशक्तिमंतः परावस्था उत्तरोत्तरश्रेष्ठास्त्रयः नृसिंहरामकृष्णाश्च । कृष्ण एव स्वयं भगवान्न ततोधिकः को प्यस्ति । तस्य वासस्थानानि पूर्वपूर्वमुख्यानि चत्वारि।व्रजमधुपुरद्वारावतीगोलोकाख्यानि । सपरिवारो बलदेवसहितो ब्रजे पूर्णतमः, मथुरायां पूर्णतरः । द्वारकायां प्रद्युम्नानिरुद्धसहितः सपरिवारः पूर्णः । गोलेके पूर्णकल्पोपि वृंदावनीयलीलत्वात्पूर्णतमसजातीयः।पूर्वपूर्वेषु माधुर्याधिक्यतारतम्यादैश्वर्याच्छादनतारतम्यम् । उत्तरोत्तरेषु माधुर्यह्रासतारतम्यादैश्वर्यप्रकाशतारम्यम् । यस्या जलेऽनेककोटिब्रह्मांडानि महाविष्णुरोमकूपगतानि तस्या विरजाया महावैकुंठलोकपरिखीभूताया उपरि महावैकुंठलोकः । तदूर्द्ध्वभागे गोलोकस्तत्र गोलोकनाथः श्रीकृष्णो देवलीलः सपरिवारो वर्त्तते । तस्य विलासो महावैकुंठनाथः परव्योमनाथनामा । तस्य विलासो वासुदेवस्तस्य विलासः परमात्मा । ब्रह्म च निर्विशेषरूपम् । गोलोकनाथस्य द्वितीयव्यूहो बलदेवस्तस्य विलासो महावैकुंठे संकर्षणस्तस्यांशः कारणार्णवशायी । तस्य विलासो गर्भोदशायी ब्रह्मांडांतर्यामित्वेन प्रद्युम्नांशस्तस्य विलासः क्षीरोदशायी । अनिरुद्धांशः तस्य विलासोंतर्यामी । मत्स्याद्यवतारास्तु गर्भोदशायिविलासाः । द्वारकामथुरावृंदावनाख्ये धामत्रये श्रीकृष्णस्य नरलीलत्वादैश्वर्याधिक्यतारतम्याक्रमेण माधुर्याधिक्यतारतम्यम् । सा लीला द्विधा । प्रकटाऽ प्रकटा च । या बाल्यपौगण्डविलाससहस्रस्य सपरिकरस्य श्रीकृष्णस्यानंतप्रकाशेन नित्यमेवाप्रकटलीला वर्त्तन्ते ता एवैकेनैव प्रकाशेन सपरिकरेण कृष्णेन यदा प्रपंचे क्रमात्प्रकाश्यन्ते तदा प्रकटा इति । गमनागमने तु तत्तद्धामतः प्रकटलीलायामेवेति विशेषः।एकमेव वृंदावनमेकैव मथुरा एकैव द्वारवती ब्रह्मांडसमूहकोटिमध्यगतभारतभूमौ तत्तदंडवासिजनैर्दृश्यते।प्रकटलीला च जन्मादिमौशलांता प्रत्येकब्रह्मांडसमूहे क्रमेण तत्रतत्रस्थैर्दृश्या।यथा ज्योतिश्चक्रस्थ एव सूर्ये किरणावलीति।यथा ज्योतिश्चक्रस्थ एव सूर्य एकस्मिन्वर्षे पूर्वाह्णादिकं समाप्यान्यस्मिन्वर्षे प्रकाशयति एवमेव कृष्णः प्रकटप्रकाशो निजधामस्थ एव एकस्मिन्ब्रह्मांडे बाल्यादिलीलाः समाप्य प्रकटयति । अन्यस्मिन्किमपि न प्राकटयेत । बाल्यादिलीला नित्या एव सच्चिदानंदरूपाः । मौशलमहिषीहरणलीलास्तु कृत्रिमा एवेंद्रजालवत् । लीलांतरस्थनित्यत्वसंगोपनार्थत्वमेतयोरुपासकाभावात् । किञ्च प्रकटलीलायामपि श्रीवृंदावनस्य मणिमयभूम्यादिकल्पवृक्षादिमत्त्वं तत्परिवारेण केनचिदपि न दृश्यते दृश्यते च केनचित्तदिच्छावशात् । प्रकटलीलासमाप्त्यनंतरं तु तत्रस्थजनेन भजनाधिक्येनात्युत्कंठायां जातायामेव दृश्यते।तत्रापि स्ववासना तदिच्छानुसाराभ्यामिति विवेकः । एवं च सर्वरूपेभ्यो व्रजेंद्रनंदनस्य मुख्यत्वम्।सर्वधामतो गोकुलस्य मुख्यत्वम्।तत्रापि "चतुर्द्धा माधुरी तस्य व्रज एव विराजते। ऐश्वर्यक्रीडयोर्वेणोस्तथा श्रीविग्रहस्य च" भागवतास्तु "मार्कं डेयोंबरीषश्च वसुर्व्यासो विभीषणः । पुंडरीको बलिश्शंभुः प्रह्लादो विदुरोद्धवौ॥दाल्भ्यः पराशरो भीष्मो नारदाद्याश्च वैष्णवाः ॥१७॥ एषु प्रह्लादः श्रेष्ठस्ततोऽपिपांडवास्तेभ्योपि केचिद्यादवास्तेष्वप्युद्धवस्तस्मादपि व्रजदेव्यस्ता

वयं तु न वितृप्याम उत्तमश्लोकविक्रमे ॥ यच्छृण्वतां रसज्ञानां स्वादुस्वादु पदेपदे ॥ १९ ॥ कृतवान्किल वीर्याणि सह रामेण केशवः ॥
अतिमर्त्यानि भगवान्गूढः कपटमानुषः ॥२०॥ कलिमागतमाज्ञाय क्षेत्रेऽस्मिन्वैष्णवे वयम् ॥ आसीना दीर्घसत्रेण कथायां सक्षणा हरेः ॥२१॥

प्रश्नेनैव तच्चरितप्रश्नोऽपि जात एवेति ज्ञातव्यम् ॥ १८ ॥ अत्यौत्सुक्येन पुनरपि तच्चरितान्येव श्रोतुमिच्छन्तस्तत्रात्मनस्तृप्त्यभावमावेदयंति । वयं त्विति । योगयागादिषु तृप्ताः स्मः । उद्गच्छति तमो यस्मात्स उत्तमस्तथाभूतः श्लोको यशो यस्य तस्य विक्रमे तु विशेषेण न तृप्यामः अलमिति न मन्यामहे । तत्र हेतुः । यद्विक्रमं शृण्वताम् । यद्वा । अन्ये तृप्यंतु नाम वयं तु नेति तुशब्दस्यान्वयः । अयमर्थः । त्रेधा ह्यलंबुद्धिर्भवति । उदरादिभरणेन वा रसाज्ञानेन वा स्वादुविशेषाभावाद्वा । तत्र शृण्वतामित्यनेन श्रोत्रस्याकाशत्वादभरणमित्युक्तम् । रसज्ञानमित्यनेन चाज्ञानतः पशुवत्तृप्तिर्निराकृता । इक्षुभक्षणवद्रसांतराभावेन तृप्तिं निराकरोति । पदेपदे प्रतिक्षणं स्वादुतोऽपि स्वादु ॥ १९ ॥ अतः श्रीकृष्णचरितानि कथयेत्याशयेनाहुः । कृतवानिति । अतिमर्त्यानि मर्त्यानतिक्रांतानि गोवर्धनोद्धरणादीनि । मनुष्येष्वसंभावितानीत्यर्थः । ॥ २० ॥ ननु याजनाध्यापनादिव्यग्राणां कुतः एतच्छ्रवणावकाशः स्यादत आहुः । कलिमिति । कलिमागतं ज्ञात्वा तद्भिया विष्णुपदं गन्तुकामाः दीर्घसत्रेण निमि

भ्योपि राधेति । तदुक्तं " त्रैलोक्ये पृथिवी धन्या यत्र वृंदावनं वनम् । यत्र राधासखीवर्गस्तत्र राधा प्रिया मम " इति कृष्णवाक्यं भागवतामृतेस्तीत्यलं प्रसक्तानुप्रसक्त्या ॥ १८ ॥ वयं त्वित्यादिद्वयं सूत जानासीत्येतत्प्रश्नानुवाद एव । अत्रोभयत्रोत्तरं "भावयत्येष सत्वेन इति लोकपालनं तच्चरितमप्युक्तम् ॥ एवं षट्प्रश्नाः द्वितीयाध्याये चत्वार्युत्तराणि ॥ तत्र श्रवणे उत्तमैः श्लोवयते कीर्त्यत इति उत्तमश्लोकः । अलमिति न मन्यामहे । एतेन योगयागादिषु तृप्ताः स्म इति भावः । तत्रातृप्तौ बहुश्रवणे कथं तृप्तिर्नेति चेत्तत्राह । यद्वेति । अत्राशयमाह । अयमर्थ इति । तत्र त्रिधालंबुद्धिमध्ये आकाशत्वादिति । "कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम्" इति तल्लक्षणात् । विक्रमस्य चामूर्तत्वान्न भरणम् । पदे पदे प्रतिसुतिङंतमेव स्वादुस्वादु चर्वितस्येक्षदंडादेरिव न नीरसत्वेन हेयत्वं प्रत्युतातिस्वादुत्वेन परमोपादेयत्वमिति ॥ १९ ॥ यतस्तत्रालंबुद्ध्यभावः अतो हेतोः । इत्यर्थ इति न हि बलयुतेनापि नरेण पर्वतश्चालयितुमपि शक्यते कुत उद्धर्तुमिति भावः । ननु मानुषः कथमतिमर्त्यानि कृतवांस्तत्राह । कपटमानवः । अत एव गूढः । स्वतस्तु तद्रूपतयैव भगवान् । अत एव स्यमंतकाहरणे 'पुरुषं प्राकृतं मत्वा' इत्यतेन जांबवतोऽन्यथाज्ञानव्यंजकेन वाक्येन तस्य प्राकृतत्वं निषिद्ध्य पुरुषत्वं स्थाप्यते । एवं "मायामनुष्यस्य वदस्व विद्वन्" इत्यादिष्वपि ज्ञेयम् ।यस्मात्कपटमानुषस्तस्माद्गूढः । विश्वनाथः नराकृतिपरब्रह्मत्वान्मर्त्योप्यतिमर्त्यानि तात्कालिकमनुष्येष्वसंभावितानि । तदपि गूढः । तत्र हेतुः कपटं भक्तहितार्थं ब्रह्मवेशादिना प्रार्थनलक्षणं मानुषेषु प्राकृतेषु जरासंधादिषु यस्य तथा । कपटं प्रेमविलासार्थं धर्मोपदेशादिलक्षणं मानुषेषु वेणुनादाकृष्टगोपीजनेष्वप्राकृतेषु यस्य सः सप्तम्याः परनिपातः । गड्वादित्वात् । तेषांतेषां मायया मोहनात् प्रेम्णा मोहनाच्चैवं कपटो नेश्वरो भवितुमर्हतीति प्रत्यायनाद्गूढ इत्यर्थः ॥ २० ॥ ननु याज्ञिकानां युष्माकमीदृशं कृष्णयशःश्रवणौत्सुक्यमतिचित्रमित्याक्षिपति । नन्विति । सत्यं संप्रत्यस्माकं याज्ञिकत्वं प्रथमात्रमेव जातमिति जानीहीत्याहुः । कलिमिति । लब्धो

त्वं नः संदर्शितो धात्रा दुस्तरं निस्तितीर्षताम् ॥ कलिं सत्त्वहरं पुंसां कर्णधार इवार्णवम् ॥ २२ ॥ ब्रूहि योगेश्वरे कृष्णे ब्रह्मण्ये धर्मवर्मणि ॥ स्वां काष्ठामधुनोपेते धर्मः कं शरणं गतः ॥ २३ ॥ इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां प्रथमस्कंधे नैमिषेयोपाख्याने प्रथमोऽध्यायः ॥ १ ॥ व्यास उवाच ॥ इति संप्रश्नसंहृष्टो विप्राणां रौमहर्षणिः ॥ प्रतिपूज्य वचस्तेषां प्रवक्तुमुपचक्रमे ॥ १ ॥ सूत उवाच ॥ यं प्रव्रजंतमनुपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहाव ॥ पुत्रेति तन्मयतया तरवोऽभिनेदुस्तं सर्वभूतहृदयं मुनिमानतोऽस्मि ॥ २ ॥

तेनात्र वैष्णवे क्षेत्रे आसीनाः हरेः कथायां सक्षणाः लब्धावसराः ॥ २१ ॥ अस्मिंश्च समये त्वद्दर्शनमीश्वरेणैव संपादितमित्यभिनंदंति । त्वमिति । कलिं संसारं निस्तर्तुमिच्छताम् । अर्णवं तितीर्षतां कर्णधारो नाविक इव ॥ २२ ॥ पुनः प्रश्नांतरम् । ब्रूहीति । धर्मस्य वर्मणि कवचवद्रक्षके स्वां काष्ठां मर्यादां स्वस्वरूपमित्यर्थः । अस्य चोत्तरम् । "कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह "इत्ययं श्लोकः ॥ २३ ॥ इति श्रीमद्भागवते प्रथमस्कंधे भावार्थदीपिकायां टीकायां प्रथमोऽध्यायः ॥ १ ॥

तदेवं प्रथमेऽध्याये षट् प्रश्ना मुनिभिः कृताः ॥ द्वितीये तूत्तरं सूतश्चतुर्णामाह तेष्वथ ॥ १ ॥ विप्राणामित्येवंभूतैः सम्यक्प्रश्नैः सम्यग्घृष्टो रोमहर्षणस्य पुत्रः उग्रश्रवास्तेषां वचः प्रतिपूज्य सत्कृत्य प्रवक्तुमुपचक्रमे उपक्रांतवान् ॥ १ ॥ प्रवचनस्योपक्रमो नाम गुरुदेवतानमस्कार इति तमाह । यमिति त्रिभिः । तत्र स्वगुरोः

त्सवाः । क्षण उत्सवे कालविशेषेऽवकाशे च ॥ २१ ॥ सत्त्वहरं धैर्यहरम् 'सत्वं धैर्ये गुणे सत्ये' इत्यभिधानात् ॥ २२ ॥ योगेश्वर इति सामर्थ्यं ब्रह्मण्य इति दयालुत्वं स्वां काष्ठां स्वीयां स्थितिं मर्यादाम् । सा च साविर्भावात्सपादशतवर्षान्ते प्रापञ्चिकजनदृष्टयविषयतैव "काष्ठोत्कर्षे स्थितौदिशि" इति "मर्यादा धारणा स्थितिः" इति चामरः । धर्मो भक्तिज्ञानलक्षणः । तत्र पुंसामेकांततः श्रेय इति साधनविषयः १ सर्वशास्त्रसारं "ब्रूहि नः श्रद्दधानानां येनात्मा सुप्रसीदति" इति २ देवक्यां किमर्थं जात: "तन्नः शुश्रूषमाणानामर्हस्यंगानुवर्णितुम्" इति ३ तस्य कर्माणि "ब्रूहि नः श्रद्दधानानां लीलया दधतः कला"इति ४ "अथाख्याहि हरेर्धीमन्नवतारकथाः शुभा" इति ५ ब्रूहि योगेश्वरे कृष्णे धर्मः कं शरणं गत" इति ६ षडेव प्रश्नाः एतत्प्रत्युत्तराण्येव सप्रसंगानि श्रीभागवतमिति विवेचनीयम् ॥ २३ ॥ इति भावार्थदीपिकाप्रकाशे बंशीधरशर्मसंदब्धे प्रथमस्कंधे प्रथमोऽध्यायः॥ १ ॥तदेवं पूर्वोक्तरीत्या तेषु षट्सु चतुर्णां शास्त्रसारवीर्यकर्मपालनरूपाणाम् ॥ १ ॥"रोमाणि हर्षयांचक्रे श्रोतॄणां यः स्वभाषणैः । कर्मणा प्रथितस्तेन रोमहर्षणसंज्ञया" इति कौर्मोक्तेरन्वर्थनामैव सूतो न तु डित्थादिवदर्थशून्यनामेति । उग्रस्य नृसिंहतापनीयोपनिषत्प्रतिपाद्यस्य वस्तुनः श्रवः श्रवणं यस्य स उग्रश्रवा अपि तथाविधनामा ॥ १ ॥ तत्र त्रिषु । अनुपनीतस्य प्रव्रजनाऽनर्हत्त्वादाह । यद्वेति ।

१ ननु श्रीशुकोऽनुपनीतः कथं वेदमधीतवान् । "शूद्रो वाऽनुपनीतो वा पठेद्वा शृणुयाच्च यः । वेदवाक्यं स कांक्षेत यच्चुं स्वां मातरं हठात् ॥ यस्तात्पर्यमविज्ञाय व्याख्यां कुर्यान्निजेच्छया । श्रुतेः स मात्रा यभति तं दृष्ट्वा स्नानमाचरेत् ॥" इति वरतन्तुसंहितोक्तेस्तत्राह–"तं महात्मा स्वयं प्रीत्या देव्या सह महाद्युतिः । जातमात्रं मुनेः पुत्रं विधिनोपानयत्तदा ॥" इत्युक्तेस्तं महादेवस्तदैवोपनीतवानिति । श्रीस्वामिचरणैरप्यनुपेतं मामुपनयस्वेत्युपनयनार्थमनुपसन्नमिति व्याख्यातम् । तेनेति ज्ञायत इत्येवं कथनं विनैव स्वयं श्रीमहादेवेनोपनीतम् । अत एव यद्वेति । केनाप्यननुगतमुपनयनसत्त्वमेव बोधयतीति पक्षः । ननु "ब्राह्मणेन वेदविदा ह्युपनेया द्विजातयः"इत्युक्तेः कथं शिव उपनेताऽभूत्तत्राह–"त्वं हि भगवो देवेषु ब्राह्मणः" इति जाबालश्रुतेः श्रीशिवो ब्राह्मण एवेति । वस्तुतस्तु श्रीशुकबुद्धौ स्वयमेव वेदाः प्रादुर्बभूवुः "उत्पन्नमात्रं तं वेदा उपतस्थुः ससंग्रहाः ॥ सरहस्या महाराज यथास्य पितरं तथा । बृहस्पतिं च वव्रे स वेदवेदांगभाष्यवित् । उपाध्यायं महाराज धर्ममेवानुचिन्तयन् ॥" इति । ननु "अष्टवर्षं ब्राह्मणमुपनयेत्" इति श्रुतेश्च का गतिः । तस्या मनुष्याधिकारपरत्वेन श्रीशुकस्य साक्षान्नन्दनन्दनरूपत्वात्तत्रेयं शंकैव नोदेति । "नन्दनन्दनरूपो हि श्रीशुको व्यासनन्दनः ।" इति स्कान्दीयभागवतमाहात्म्योक्तेः ॥ किं च ब्रह्मवैवर्तोक्तरीत्या गर्भस्याब्दसंख्यया वा समाधेयम् । "गर्भाज्जनेर्वाष्टमे" इति ज्योतिःशास्त्रात् ।

शुकस्यैश्वर्यं तच्चरितेनैव द्योतयन्नाह । यमिति । यं प्रव्रजंतं संन्यस्य गच्छंतम् अनुपेतं मामुपनयस्वेत्युपनयनार्थमाचार्यमनुपसन्नम् । यद्वा केनाप्यनुपेतमननुगतमेकाकिनमित्यर्थः । तत्र हेतुः अपेतकृत्यं कृत्यशून्यं कर्ममार्गे अप्रवर्तमानं नैष्ठिकत्वात् । द्वैपायनो व्यासो विरहात्कातरो भीतः सन्पुत्र ३ इति प्लुतेन आजुहाव आहूतवान्।दूरादाह्वाने प्लुते सत्यपि संधिरार्षः । तदा तन्मयतया शुकरूपतया तरवोऽभिनेदुः प्रत्युत्तरमुक्तवंतः । पितुः स्नेहानुबंधपरिहाराय यो वृक्षरूपेण उत्तरं दत्तवानित्यर्थः । तं मुनिमान

इत्यर्थ इति । उप समीपमितः प्राप्त उपेतः न उपेतोऽनुपेतोऽसंग इति भावः । तवासंगत्वे द्विर्गता अंतर्गता वाऽऽपोऽत्रेति द्वीपः "ऋक्पू"इत्यः समासांतः । "द्व्यंतरुपसर्गेभ्योऽप ईत्" द्वीप एवायनं स्थानं यस्य स तथा सत्यवत्या तत्र लज्जया स्थापितत्वादिति महाभारतादवसेयम् । केचित् "पुलिनं द्वीपमुच्यते" इत्याहुस्तन्मते पुलिनं जलादचिरनिर्गतं क्षेत्रं तदेवायनं तपोभूमिरस्येति तथा । ततः स्वार्थिकाणि द्वैपायनः । प्लुतेन त्रिमात्रस्वरांतेन । पुत्र इत्येवं रूपेण "अप्लुतवदितौ" इति सूत्रे इतिशब्दे प्लुतोऽप्लुतवदित्यत्रावैदिक इतिशब्दो गृहीतोऽस्य शास्त्रस्य साक्षाद्वेदरूपत्वादत्राप्लुतत्वं न भवति। किंतु प्लुतत्वमेवेत्यभिप्रेत्यस्वामिचरणैर्व्याख्यातं संधिरार्षइति । इत्यर्थ इति । यथास्मासु जन्यजनकभावे विद्यमानेपि पितृपुत्रव्यवहारो नास्ति तथा त्वय्यपि नास्त्यतः पुत्रेत्याह्वानं व्यर्थमित्यर्थः । यद्वाऽयं सर्वभूतानि हरति प्राप्नोत्यंतर्यामितयेति सर्वभूतहृत् । अतोपि पुत्रेत्याह्वानं सर्वांतर्यामिणि न युज्यत इति भावः । अत्र संदर्भः। अथोपक्रमे स्वगुरुं नमस्कुर्वंस्मस्मागुद्य्ं स्मरति द्वाभ्याम् । तत्र यमित्यत्र तन्मयतयेति तच्छब्देन तत्तादात्म्यापन्नः परमात्मोच्यते। स हि तदानीं ध्यानावेशेन प्राप्तसर्वांतर्यामितादात्म्यः । 'दृष्ट्वानुयांतम्' इत्यादेर्वक्ष्यमाणत्वात् । यत एव तस्य तदुत्तरदानानुसंधानराहित्ये सति तत्पक्षपातेनांतर्यामिणैव स्वयं तरूणामपि द्वारा तदुत्तरं दत्तमिति । यद्वा न केवलं सर्वात्मब्रह्मनि ष्ठत्वान्निरपेक्षेपि तस्मिन्पितैव स्निग्धो जातः अपि तु तरवोपि जाता इत्याह । तन्मयतया तद्वत्स्नेहमयतया तरवोपि अभि तदाभिमुख्येन नेदुः । किमुतान्ये जीवा इत्यर्थः।एतच्च तत्प्रभावदेव ज्ञेयम्।अत एव सर्वभूतानां हृदयं यस्मिंस्तम्।अनपेतमिति चित्सुखपाठांतरम् । विश्वनाथस्तु अत्रैवं सूतस्य परामर्शः। एतत्प्रश्नस्योत्तरं सर्वशास्त्रसारं किमपि वस्त्वहं ब्रवीमि।तेन चेदेषामात्मा न प्रसीदेत्तर्हि किं भविष्यातिं 'येनात्मा सुप्रसीदतीत्युक्तत्वात्।ततश्च सारेष्वपि मध्ये यस्यात्मप्रसादकत्वं भव्यैर्निरूपितं सोऽन्वेषणीयः । तत्रापि केषांचिन्मते सांख्यस्यैव केषांचिन्मीमांसादेः केषांचिदुपनिषदामेव केषांचित्तदर्थतात्पर्यानिर्णायकानां वेदांतसूत्राणामेवात्मप्रसादकत्त्वमस्ति यद्यपि तदपि न तत्प्रत्येतव्यं तेषामपि मुख्यस्य तत्तत्सर्वमतविदुषोपि कृतवेदांतसूत्रस्य श्रीकृष्णद्वैपायनस्यापि चित्ताप्रसाददृष्टेः।ततश्च यदाविर्भावेन तस्याप्यात्मा प्रसीदतिस्म परीक्षिन्महासदसि तस्थुषामेव तेषां सर्वसारवादिनां महाज्योतिषामग्र एव परीक्षयोत्तीर्णं शुद्धं जांबूनदमिवात्मप्रसादकत्त्वे निर्विवादमेव ।.यत्स्थिरं व्यराजत तदेव श्रीभागवतं मम वक्तव्यमभूदिति ततस्तद्वक्तारं श्रीशुकदेवं शरणं यामीति तं प्रणमति।।यमिति।। प्रव्रजंतं संन्यस्य गच्छंतम् । अनुपेतं निकटमप्यप्राप्तम् । अपेतकृत्यमुपनयनादिरहितम् । हे पुत्रेति प्लुतेनाजुहाव । न केवलं परमनिरपेक्षेपि तस्मिंस्तत्पितैव स्निग्धोभूदपि तु "येनार्चितो हरिस्तेन तर्पितानि जगंत्यपि । रज्यंति जंतवस्तत्र स्थावरा जंगमा अपि ।" इति पाद्मोक्तेस्तरवोपीत्याह । तन्मयतया शुकमयतया तरवोपि आभिमुख्येन हेतुना हे पुत्रेति प्रतिध्वनिमिषेण व्यासवदाजुहुवुः।'यो हि यस्मिन्नासज्जति स तन्मय उच्यते । यथा स्त्रीमयः कामुकः'इति। ततश्च सर्वेषां भूतानां हृदयं मनो यस्मिंस्तम् । तेन सर्वमनोहरे भगवद्विग्रह इव तस्मिन्स्नेहोयं न प्राकृतमोह इति व्यासस्याप्यविवेकोयमिति दोषः पराहतः । यद्वा तदा तन्मयतया शुकरूपतया तरवोभिनेदुः प्रतिध्वनिमिषेण हे पुत्रेति प्रत्युत्तरं ददुः । यदि तवाहं पुत्रस्तदा त्वमपि मे पुत्र इत्यतः "कस्य के पितृपुत्राद्या मोह एव हि कारणम्" इति तत्त्वमविज्ञाय किमिति मुह्यसीति व्यंजयामासुः । तन्मयत्त्वोपपादनाय सर्वभूतानां हृत् मनोऽयते योगबलेन प्रविशतीति सर्वभूतहृदयस्तम् । तेन स एव ममाप्यंतः प्रविश्य मन्मुखेनैव श्रीभागवतं वदतु । यो हि जडानपि वृक्षान्प्रविश्य प्रत्युत्तरेण पितरमपि समादधौ स एव चेतनं मां प्रविश्य श्रीभागवतेनैवैषां श्रोतॄणामात्मानं प्रसादयत्विति

यः स्वानुभावमखिलश्रुतिसारमेकमध्यात्मदीपमतितितीर्षतां तमोंधम् ॥
संसारिणां करुणयाऽऽह पुराणगुह्यं तं व्याससूनुमुपयामि गुरुं मुनीनाम् ॥ ३ ॥

तोऽस्मि । तन्मयत्वोपपादनाय विशेषणम् । सर्वभूतानां हृत् मनः अयते योगबलेन प्रविशतीति सर्वभूतहृदयस्तम् ॥ २ ॥ तत्कृपालुतां दर्शयन्नाह । य इति । अंधं गाढं तमः संसाराख्यमतितर्तुमिच्छताम् । पुराणानां मध्ये गुह्यं गोप्यम् । तत्र हेतुत्वेन चत्वारि विशेषणानि । स्वो निजोऽसाधारणोऽनुभावः प्रभावो यस्य तत्स्वानुभावम् । अखिलश्रुतीनां सारम्।एकमद्वितीयमनुपममित्यर्थः।आत्मानं कार्यकारणसंघातमधिकृत्य वर्तमानमात्मतत्त्वमध्यात्मं तस्य दीपं साक्षात्प्रकाशकम्।उपयामि शरणं व्रजामि।। ३॥

प्रवचनकाले श्रीभागवतस्य वक्तान्योपि ध्यायेदिति सूचितम् ॥२॥ तद्वृत्तिस्तदितरावृत्तिरसाधारणः यः श्रीमद्भागवतशास्त्रस्य प्रभावः सोन्यत्र नास्तीत्यर्थः संदर्भः।अतो य एवं साक्षाच्छ्रीकृष्णद्वैपायनेपि स्वपितर्यनुसंधानर हित आसीत्स एव श्रीभगवल्लीलावर्णनमयश्रीमद्भागवतनामैतद्ग्रंथावेशेनेदृशोपि जात इत्याह।य इति तदेतच्छ्रीसूतस्य शास्त्रोपक्रमाय श्रीगुरुप्रणतिरूपं वाक्यं'स्वसुखनिभृतचेता' इत्यादिना तदुपसंहाराय तद्रूपेण वाक्येनैकीकृत्य व्याख्यायते । यः खलु "हित्वा स्वशिष्यान्पैलादीन्भगवान्बादरायणः । मह्यं पुत्राय शांताय परं गुह्यमिदं जगौ" इत्यनुसारेण पुराणगुह्यमिदं श्रीभागवताख्यमाह गिरा प्रकाशयामास तं "तत्राभवद्भगवान्व्यासपुत्रः" इत्यस्य पूर्वोत्तरं प्रघट्टकानुसारेण मुनीनां गुरुमुपयामि शरणमाश्रये । कीदृशं तत् तत्राह । किं वा परैरीश्वर इत्याद्यनुसारेणासाधारणप्रभावम् ।पुनः कीदृशं तत् । तत्राह "स्वसुखनिभृतचेताः" इत्याद्यनुसारेणात्मानं स्वचित्तमधिकृत्य वर्त्तते यत्परमरहस्यमजितरुचिरलीलाख्यं तत्त्वं तस्य दीपकं प्रकाशकम् । नेन्वेवंचेत्तर्हि कथं प्रकाशयते तत्राह । अंधंकरणं यत्तमः सर्वावरकमज्ञानं तर्त्तुमिच्छतां संसारिणां करुणया तेषु यत्कारुण्यं तेन प्रीत्येर्थः । यद्यप्यजितरुचिरलीलारहस्यं न ते जानंति तथापि तत्पर्यंतप्रकाशकं तत्प्रकाशयामासेत्यहो करुणाया गरिमा दृश्यतामिति भावः । सेयञ्च तस्य करुणा तल्लीलानुभवेन तत्स्वभावलाभाज्जाता केवलात्मारामत्वे "भजतोपि न वै केचिद्भजंत्यभजतः कुतः । आत्मारामा आत्मकामा अकृतज्ञा गुरुद्रुहः" इति श्रीभगवद्वाक्यविरोधादसौ न स्यादेवेति च।विश्वनाथस्तु अस्मिन्नर्थे तस्य कृपालुत्वमेव हेतुरस्त्येवेत्याह। यइति।संसारिणां करुणयाहेति न केवलमयं परीक्षिदेव तारयितव्यः किं त्वग्रेपि जनिष्यमाणास्संसारिणोऽनेनैव तरंत्विति तदैव सर्वानर्वाचीनान्सस्मारेति भावः । अंधं गाढं तमोऽविद्यामतिशयेन सुखेनैव तरीतुमिच्छतामात्मन्यधिष्ठितानि तत्त्वानि महदादीनि तेषां दीपं प्रकाशकमिति मुमुक्षूणामविद्याक्षयोऽनुसंहितं फलमुक्तं शुद्धभक्तानां त्वखिलानां श्रुतीनामुपनिषदां सारं श्लेषेण श्रुतीनां श्रवणानां श्रोत्रेंद्रियास्वाद्यानां सारमिति । अतः पूर्वोक्तं निगमकल्पतरुफलत्वमेवास्य सूचितम् । अपूर्वोक्तव्याख्यानङ्गीकारे "स संहितां भागवतीम्" इति "यत्रैषा सात्वती श्रुतिः" इत्यादिवाक्यैर्वेदवाचकसंहिताश्रुतिपदाभ्यां श्रीभागवतस्योक्तत्वेन साक्षाद्वेदाविर्भावकर्तृश्रीहयग्रीवभगवत्प्रेरितसरस्वतीप्रसादलब्धसूत्रसारस्वतव्याकरणप्रणेतृपरमाप्तश्रीस्वरूपान्तानुभूत्यादिमस्कारिणा कारकप्रक्रियायां छान्दसप्रयोगोदाहरणे " दध्ना जुहोति" "पुनन्तु ब्रह्मणस्पतिः" इति वाक्यसमभिव्याहृतेन श्रीदशमस्कन्धीयेन "व्रजतीर्विरेजुः" इत्युदाहरणेनोपबृंहितसाक्षाद्वेदरूपत्वेन चास्य प्रश्नोऽपि श्रीशौनकर्षिर्न संभाव्येत । शौनकनामान्वर्थताव्याघातापत्तेः ॥ "शोनः सर्वविवेकः स्यात्" इति लीलावतीकोशात्सर्वविवेकवत एव शौनकत्वम्अद्विजातिसूतं प्रति तत्कृतप्रश्ने तन्नसेत्स्यतीति. तत्त्वम् । त एव स्वः स्वत एवानुभावो रसोत्कर्षप्रभावज्ञापको यस्य तत् । स्वसुखनिभृतचेता इत्यत्राजितरुचिरलीलाकृष्टसार इति हरेर्गुणाक्षिप्तमतिराख्यानं यदधीतवानित्यादिभ्यः । यद्वा स्वस्यानुभावः प्रभावो यस्मात् । यद्व्याख्यानादेव शुकस्य सर्वमुनिभ्योप्युत्कर्षोभूदितिभावः । एकमनुपममद्वितीयमित्यर्थः । मुनीनां परीक्षित्सभोपविष्टानां नारदव्यासादीनामपीदमश्रुतचरमिव जातमिति तानपि श्रीशुकदेव उपदिदेश । देश्यमिति ॥ ३॥

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ॥ देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ ४ ॥ मुनयः साधु पृष्टोऽहं भवद्भिर्लोकमंगलम् ॥ यत्कृतः कृष्णसंप्रश्नो येनाऽऽत्मा सुप्रसीदति ॥ ५ ॥ स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे ॥ अहैतुक्यप्रतिहता ययाऽऽत्मा संप्रसीदति ॥ ६ ॥

जयत्यनेन संसारमिति जयो ग्रंथः तमुदीरयेदिति स्वयं तथोदीरयन्नन्यान्पौराणिकानुपशिक्षयति ॥ ४ ॥ तेषां वचः प्रतिपूज्येति यदुक्तं तत्प्रतिपूजनं करोति । हे मुनयः साधु यथा भवति तथाहं पृष्टः । यतो लोकानां मंगलमेतत् । यद्यतः कृष्णविषयः संप्रश्नः कृतः । सर्वशास्त्रार्थसारोद्धारप्रश्नस्यापि कृष्णे पर्यवसानादेवमुक्तम् ॥ ५ ॥ तत्र यत्प्रथमं पृष्टं सर्वशास्त्रसारमैकांतिकं श्रेयो ब्रूहीति तत्रोत्तरम् । स वै पुंसामिति । अयमर्थः । धर्मो द्विविधः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च । तत्र यः स्वर्गाद्यर्थः प्रवृत्तिलक्षणः

गुरुं नत्वा । देवतादीन्प्रणमति । नारायणमिति । देशाधिकारित्वेन नरनारायणावस्याधिष्ठातृदेवते निर्दिष्टे । नरोत्तममिति । पुरुषोत्तमः श्रीकृष्णोऽस्य देवता सरस्वती शक्तिश्चकाराद्व्यास ऋषिः । व्यासमिति पाठे स्पष्ट एव । बीजं तु प्रणवो ज्ञेयः । छंदोत्र प्राधान्येन गायत्र्येव ज्ञेया । तयैवारब्धत्वात् । तान्नमस्कृत्य । जयेति क्रियापदमाक्षेपलब्धं श्रीकृष्णसंबोधनकमुदीरयेदिति । स्वयं तथोदीरयन्नन्यानपि पौराणिकानुपशिक्षयति । अत्र क्त्वाप्रत्ययेनैवानंतर्ये सिद्धे तत इति कर्तृविशेषणं तन्यते विस्तार्यते स्वबुद्ध्यनुरूपो ग्रंथोऽनेनेति ततः।केचित्तु नरशब्दोत्र गुरुपरो ग्राह्यः । नृणाति नयोपदेशेन शिष्यं संसारादुद्धरतीति नर इति व्युत्पत्तेः । नरोत्तमशब्देन वायुर्ग्राह्यः नरेषूत्तमो नरा उत्तमा येनेति वा नरोत्तमस्तं विना देहस्यास्पृश्यत्वदर्शनात् । प्राणेंद्रियसंवादेषूपनिषत्कथायां वायोरेवोत्कर्षस्य श्रवणाच्च।वायोर्नतिस्तु वक्तुः शरीरादिस्वास्थ्यार्थं श्रोतृणामपि तथात्वार्थं चेति ज्ञेयम्॥ श्रुतौ तु साक्षाद्ब्रह्मैवोक्तः“ॐ नमो ब्रह्मणे नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि ऋतं वदिष्यामि सत्यं वदिष्यमि तन्मामवतु तद्वक्तारमवतु अवतु मामवतुवक्तारम्” ॥ जयति संसारमनेनेति जयः पुराणमहाभारतादिः । तदुक्तम् “अष्टादशपुराणानि रामस्य चारितं तथा । कार्ष्णं वेदं पञ्चमञ्च यन्महाभारतं विदुः । तथैव विष्णुधर्माश्च शिवधर्माश्च शाश्वताः । जयेति नाम तेषां च प्रवदंति मनीषिणः॥” इति भविष्ये॥४॥ हे मुनय इति । मननशीला एवैतादृशप्रश्नान्कुर्वन्तीति भावः । अत एवोत्तरेष्वपि पद्येष्वधोक्षजवासुदेवसात्वताम्पतिकृष्णशब्दास्तत्प्राधान्यविवक्षयैव पठिताः । अत्र श्रेयः प्रश्नस्याप्युत्तरं लोकमंगलमित्येतावतैव दत्तं भवति । तथाप्यात्मप्रसादहेतोश्च ‘येनात्मा सुप्रसीदति’ इत्यनेन ये नव प्रश्नास्तत्र प्रश्नेषु अत्राशयमाह । अयमर्थ इति।तत्र द्वयोर्मध्ये । अत्र विश्वनाथः “सर्वशास्त्रसारमैकांतिकं श्रेयो ब्रूहि”इति प्रश्नद्वयस्योत्तरमाह।स वा इति। पुंसां पुम्मात्राणामेव धर्मः परः परमः श्रवणकर्त्तिनादिलक्षणः । यदुक्तं “ एतावानेव लोकेस्मिन्पुंसां धर्मः परः स्मृतः । भक्तियोगो भगवति तन्नामश्रवणादिभिः ” इत्यतः परशब्दविशेषो धर्म्मो भक्तियोग एव भवेदिति । तथात्र वतुप्प्रत्ययेनैवकारेण चैतदन्यस्य परधर्मत्वं च निषिद्धं यतो भक्तिः प्रेम लक्षणा भवेत् । अहैतुकीं हेतुं विनैवोत्पद्यमानातिसगुणा व्यावृत्ता । ननु महानयमपलापः क्रियते । मैवं श्रवणकीर्त्तनादिरूपो यो धर्मः स भक्तिरेव साधननाम्नी सैव पाकदशायां प्रेमनाम्नी ते द्वेऽपि भक्तिशब्देनैवोच्येते । ‘भक्त्या संजातया’ ‘भक्त्या बिभ्रत्युत्पुलकां तनुम्’ इति “यतो भक्तिरधोक्षजे ” इत्यादिषूत्तरस्या भक्तेः पूर्वा भक्तिः कारणं पक्वाम्रस्य कारणमामाम्रमितिवत् । स्वादभेदनिबंधनमेव तस्य कारणत्वं बालबोधनार्थं काल्पनिकमेव न तु वास्तवम् । न ह्येकस्यैव पुरुषस्य बाल्ययौवनाद्यनेकावस्थावतो हेतुहेतुमद्भावस्तात्विक इति घटपटौदनादिषु मृत्तन्तुतंडुलादीनां नामरूपलोप इवेति । न तादृशत्वमत्र व्याख्यातुं शक्यमित्यवसेयम् । न च भक्तेः प्रसिद्धो हेतुः साधुसंग एवास्तीति वाच्यम् । तस्याप्यादौ श्रद्धा ततः साधुसंगोथ भजनक्रिये तत्रादौ भक्तेर्द्वितीयभूमिकात्वेनोक्तत्वात् । भक्तित्वमेव ‘स्यान्महत्सेवया विप्रा’ इत्यग्रेपि व्याख्यास्यमानत्वाच्च । किञ्च दानव्रततपोहोमादिनिष्कामकर्मयोगश्च ज्ञानांगभूतायाः सात्विक्या एव भक्तेः कथंचिद्धेतुर्भवति न तु निर्गुणायाः । “यन्न योगेन सांख्येन दानव्रतपोध्वरैः । व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपि” इत्येकादशोक्तेः । न च निर्गुणाया भक्तेर्भगवत्कृपैव हेतुरिति वाच्यम्।तस्यापि हेतावन्विष्यमाणेऽनवस्थानात् । न च सा निरुपाधिरेव केवला हेतुरिति वाच्यम्।तस्या असार्वत्रिकत्वेन भगवति वैषम्यप्रसक्तेः।किंच भक्तकृपैव हेतुरित्युक्तेर्न किंचिदसामंजस्यम् । उत्तमभक्तानां वैषम्याभावेपि

वासुदेवे भगवति भक्तियोगः प्रयोजितः ॥ जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम् ॥ ७ ॥
धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः ॥ नोत्पादयेद्यदि रतिं श्रम एव हि केवलम् ॥ ८ ॥

सोऽपरः । यतस्तु धर्माच्छ्रवणादरादिलक्षणा भक्तिर्भवति स परो धर्मः स एवैकांतिकं श्रेय इति । कथंभूता । अहैतुकी हेतुः फलानुसंधानं तद्रहिता अप्रतिहता विघ्नैरनाभिभूता ॥ ६ ॥ ननु "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसा नाशकेन" इत्यादिश्रुतिभ्यो धर्मस्य ज्ञानांगत्वं प्रसिद्धं तत्कुतो भक्तिहेतुत्वमुच्यते ? । सत्यम् । तत्तु भक्तिद्वारेणेत्याह । वासुदेव इति । अहैतुकं शुष्कतर्काद्यगोचरमौपनिषदमित्यर्थः॥७॥ व्यतिरेकमाह । धर्म इति । यो धर्म इति प्रसिद्धः स यदि विष्वक्सेनस्य कथासु रतिं नोत्पादयेत्तर्हि स्वनष्ठितोऽपि सन्नयं श्रमो ज्ञेयः । ननु मोक्षार्थस्यापि धर्मस्य श्रमत्वमस्त्येवात आह । केवलं विफलः श्रम इत्यर्थः । नन्वरित तत्रापि स्वर्गादि फल

"प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः" इति मध्यमभक्तलक्षणे वैषम्यस्य दर्शनात् । ततश्च भगवतो भक्तयधीनत्वात् । भक्तकृपानुगामिनी भगवत्कृपा हेतुरिति सिद्धांतः । ननु तर्हि कथं भक्तेरहैतुकत्वमभूत्। उच्यते । भगवत्कृपाया भक्तकृपांतर्भूतत्वाद्भक्तकृपायाश्च भक्तसंगांतर्भूतत्वाद्भक्तसंगस्य भक्त्यंगत्वादहैतुकत्वमेव सिद्धम् । किंच भक्तकृपाया हेतुर्भक्तस्यैव तस्य हृदयवर्त्तिनी भक्तिरेव । तां विना कृपोदयसंभवाभावात्सर्वप्रकारेणापि भक्तेर्भक्तिरेव हेतुरिति निर्हेतुकत्वं सिद्धं भक्तिमते । भक्तिभक्तभजनीयतत्कृपादीनां न पृथग्वस्तुत्वमिति भक्तेः स्वप्रकाशकत्वेन भक्तिप्रकाश्यत्वेपि भगवतः स्वप्रकाशकत्वं नानुपपन्नमिति । अप्रतिहता केनापि निवारयितुमशक्या । तथा हि तल्लक्षणे "मनोगतिरविच्छिन्ना यथा गंगांभसोंबुधौ" इति वक्ष्यते । उक्तं च श्रीरूपगोस्वामिचरणैः "सर्वथा ध्वंसरहितं सत्यपि ध्वंसकारणे" इति।ज्ञानकर्मादिभिरनावृतेति वा । यया भक्त्यात्मा मनः सम्यगेव प्रसीदतीति । कामनामालिन्ये सति मनः प्रसादहेतुत्वासंभवादस्या भक्तेर्निष्कामत्वं स्वत एवागतम् ॥९॥६॥ अत्राक्षिपति । नन्विति॥ वेदानुवचनं वेदाभ्यसनम् । अनाशकेन जीवाभयप्रदानेनेत्यर्थः । इत्यर्थ इति । "यदा तदेवासत्तर्कैस्तिरो धीयेत विप्लुतम्।" इत्युक्तेस्तर्कस्य विरोधित्वात्तदविषयमिति भावः । अत्र विश्वनाथः।ननु स एव किमाकार आत्मप्रसाद इत्यपेक्षायां सर्वदुर्विषयवैमुख्यापादकभगवद्रूपगुणमाधुर्यानुभवज्ञानमय एवायमित्याह । वासुदेव इति । प्रकर्षेण योजितस्संबद्धो दाससख्यादिसंबंधयुक्तः कृत इति यावत् । श्लेषेण प्रयोजनीकृतः। भक्तियोगस्य भक्तियोग एव प्रयोजनं नान्य इत्येवं विचारित इत्यर्थः।जनयतीति । ज्ञानवैराग्यार्थं पृथग्यत्नो भक्तैर्न कर्त्तव्य इति भावः। आशु शीघ्रं तत्काल एवेत्यर्थः । यद्वक्ष्यते " भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एक कालः । प्रपद्यमानस्य यथाश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम् " इति । ननु तर्हि ज्ञानान्मोक्ष एव भावीति तत्राह । अहैतुकम् । अन्नस्य हेतोर्वर्तीतिवद्धेतुः प्रयोजनं तदत्र सायुज्यं तन्नार्हतीति । तेन भगवद्रूपगुणमाधुर्यानुभवमयमेव ज्ञानमायातम् । एवमेव चतुर्थेपि वक्ष्यते "वासुदेवे भगवति भक्तियोगः समाहितः । सध्रीचीनेन वैराग्यं ज्ञानं च जनयिष्यति" इति । तत्र सध्रीचीनप्रकारं खलु मोक्षादिफलांतराभिसक्तिराहित्यमेवेति व्याख्यास्यते । "सोचिरादेव राजर्षे स्यादच्युतकथाश्रयः । शृण्वतः श्रद्दधानस्य नित्यदा स्यादधीयतः" इत्यनंतरवाक्ये च तत्कारणं स एव दृष्ट इति । एवं च भक्तेः कारणं प्रयोजनं च भक्तिरेवेति व्यवस्थितम् । यद्वाऽकारो वासुदेवः स एव हेतुः प्रयोजनं यस्य तत्तथा भगवत्प्रसादजनकमित्यर्थः ॥ ७ ॥ वासुदेवभक्तिजनकत्वे धर्मस्य परत्वमन्यथा श्रमत्वमित्येवं व्यतिरेकमाह । विष्वक्सर्वव्यापिनी सेनेव सेना भक्तिलक्षणा भक्तसंसारदुःखजेतृत्वाद्यस्य स विष्वक्सेनः । अत्राक्षिपति । नन्विति । इत्यर्थ इति । तस्य तु मोक्षाख्यं फलमपि । स तु सर्वथा श्रम एवेति भावः। पुनराक्षिपति नन्विति । तत्रापि मोक्षसाधनेतरधर्मेपि तत्फलं यन्न नश्यतीत्युक्तेस्तस्य नाशशीलत्वादफलत्वमेवेति भावः।पुनराक्षिपति । नन्विति । चातुर्मास्यो यागविशेषः सुकृतं पुण्यफलमक्षय्यमविनाशीत्यर्थः।कर्मणा चितः संपादितः कर्मचितो घटादिः पुण्यचितः स्वर्गादिः । अत्र विश्वनाथः । ननु वर्णाश्रमाचारलक्षणो धर्मः परः कथं न तत्राह । धर्म इति । यः पुंसां विप्रादीनां सुष्ठ्वनुष्ठितो धर्मः स विष्वक्सेनकथासु रतिं नोत्पादयेत्

**धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते ॥ नार्थस्य धर्मैकांतस्य कामो लाभाय हि स्मृतः ॥ ९ ॥**

मित्याशंक्यैवकारेण निराकरोति । क्षयिष्णुत्वान्न तत्फलमित्यर्थः । ननु "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्यादिश्रुतेर्न तत्फलस्य क्षयिष्णुत्वमि
त्याशंक्य हिशब्देन साधयति । "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति तर्कानुगृहीतया श्रुत्या क्षयिष्णुत्वप्रतिपादनात् ॥ ८ ॥
तदेवं हरिभक्तिद्वारा तदितरवैराग्यात्मज्ञानपर्यंतः परो धर्म इत्युक्तम् । अन्ये तु मन्यंते धर्मस्यार्थः फलं तस्य च कामः फलं तस्य चेंद्रियप्रीतिस्तत्प्रीतेश्च पुनरपि धर्मार्थो

"कर्मणा पितृलोक" इति श्रुतेः।कर्मणां रत्यनुत्पादकत्वं च "कर्मभिर्वा त्रयीप्रोक्तैः" इत्यादौ न। "यत्रात्मप्रदो हरिः" इति चतुर्थे नारदोक्तेरेव व्यक्तम् । यदा च रतिं नोत्पादयेत्तर्हि केवलं श्रम एव पितृलोकादेर्नश्वरत्वात्।
तस्मात्स्वधर्मं त्यक्त्वा श्रवणकीर्त्तनादिलक्षणः पूर्वोक्तः परो धर्म एवानुष्ठेय इति भावः । यद्वा ननु च "अस्मिँल्लोके वर्त्तमानः स्वधर्मस्थोनघः शुचिः । ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया" इति श्रीभगवदुक्तेर्निष्कामभ
क्तियोग एव भक्तेर्हेतुरस्ति तत्कथं भक्तिरहैतुकीत्युच्यते । सत्यम् । तत्र कर्मयोगस्य ज्ञानजनकत्वमिव न साक्षाद्भक्तिजनकत्वं व्याख्यातुं शक्यम् । मध्ये यदृच्छयेति पदोपादानात् । ततश्च तत्र पुंसि भक्तेर्यदृच्छा स्वैरिता यदि
स्यादैवादस्य निरपेक्ष एव शुद्धभक्तेः प्रवेशः स्यात्तदा तामपि स प्राप्नोतीति तत्रार्थः । 'यदृच्छास्वैरिता' इत्यभिधानात् । कष्टकल्पनया व्याख्यांतरे भक्तेः स्वप्रकाशत्वं न सिध्येदिति तदनादृतमित्यतो निष्कामोपि कर्मयोगो न
भक्तेर्हेतुरित्याह । धर्म इति । य इति । "स वै पुंसां परो धर्मः" इति पद्योक्तात्परमधर्मादन्यो वर्णाश्रमाचारलक्षणः स्वनुष्ठितो निष्कामोपि धर्मो विष्वक्सेनकथासु रतिं प्रीतिं नोत्पादयेत्स केवलं श्रम एव । यदीति गर्हायाम् ।
श्रमजनकत्वाद्गर्हित इत्यर्थः । 'यदि गर्हाविकल्पयोः' इति मेदिनी। यद्वाऽसंदेहेपि संदेहवचनं "यदिवेदाः प्रमाणम्"इतिवत्।"धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि"इत्यत्र यदीतिशब्दो निश्चये इति श्रीस्वामिचरणानां व्याख्या
नाच्च।यद्वा ननु प्रसिद्धधर्मादपि कचिद्धरिकथासु रतिरुत्पद्यते इति श्रूयते । सत्यम्।तया विनां धर्मफलाप्राप्तेः।सा खल्वौपाधिक्येव न तात्त्विकीत्याह । धर्म इति । य इति।स प्रसिद्धो धर्मः काम्यो नित्यो वा, स विष्वक्सेनकथा
सु रतिं यदि नोत्पादयेत्तदा श्रम एव । अयमर्थः । यथा कर्षकाणां नृपे प्रीतिं कृषिरेवोत्पादयत्यन्यथा तस्याः फलाप्राप्तेरेवमेव धर्मोपि विष्वक्सेनप्रीतिं विना स्वस्य वैफल्यदर्शनायैव तत्र विवेकिनां प्रीतिमुत्पादयेदेव । स
यद्यविवेकिनां नोत्पादयेत्तदा श्रम एव । यथा नृपे प्रीतिं विना कृषिफलस्यालाभाच्छ्रम एव । तथा हरौ भक्तिं विना प्रवृत्तनिवृत्तधर्मफलयोः स्वर्गादिज्ञानयोरलाभाच्छ्रमः । तदुक्तं "कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं
कर्म यदप्यकारणम् ।" इति।यथा च कृषौ प्रीत्यनुरोधादेव नृपे प्रीतिर्न तु वस्तुतस्तथैव धर्मप्रीत्यनुरोधादेव तत्कथासु प्रीतिर्न तु तत्र वस्तुत इति विवेचनीयम्। अत एव प्रह्लादेनोक्तं"नान्यथेहावयोरर्थो राजसेवकयोरिव"इति।
संदर्भस्तु "निर्णीते केवलम्" इत्यमरः । केवलमित्यव्ययेन निमित्तमात्रलक्षणधर्मफलस्य ज्ञानस्य साध्यत्वं सिद्धस्यापि नश्वरत्वं तत्रापि तेनैव हिशब्देन "यस्य देवे परा भक्तिः" इत्यादिश्रुतिप्रमाणत्वं "नैष्कर्म्यमप्यच्युतभा
ववर्जितम् ।" इत्यादि"श्रेयः स्रुतिं भक्तिमुदस्य ते"इत्यादि।"आरुह्य कृच्छ्रेण परं पदं ततः पतंत्यतोनादृतयुष्मदंघ्रयः" इत्यादिवचनप्रमाणत्वं च सूचितं श्लोकद्वयेन। भक्तिर्निरपेक्षा । ज्ञानवैराग्ये तु तत्सापेक्षे इति लभ्यते॥
॥ ८ ॥ तदितरो हरिभक्तीतरः स्वर्गादिऽस्तत्र वैराग्यं जिहासात्मज्ञानं पर्यंतः फलं यस्य स परो धर्म इति । विश्वनाथस्तु। किञ्चात्र चतुर्विधा जनाः कार्मिणो ज्ञानिनो योगिनो भक्ताश्च । तत्र "धर्मादर्थश्च कामश्च स किमर्थं
न सेव्यते" इति दृष्ट्या धर्मस्यार्थः फलं तस्य कामस्तस्येंद्रियप्रीतिरिन्द्रियप्रीतौ च सत्यां तदर्थं पुनरपि धर्मादिपरंपरा । यथा कार्मिणां न तथोत्तरेषां त्रयाणामित्याह । धर्मस्य शमदमादेर्यमनियमादेश्च श्रवणकीर्त्तनादे
श्चार्थः सर्वथा भवन्नप्यर्थाय फलत्वाय न कल्पते तमनुसंधाय तत्तदप्रवृत्तेः । यतः आपवर्ग्यस्यापवर्गप्रयोजनकस्य तदस्य प्रयोजनमित्यर्थे "स्वर्गादिभ्यो यः" इति स्वार्थिकाणंताद्यः प्रत्ययः । तेनापवर्ग एवा
नुसंहितं फलमिति भावः । ज्ञानियोगिनोर्मतेऽपवर्गो मोक्षः भक्तमते प्रेमभक्तिः । यथा वर्णविधानमपवर्गश्च भवति । योसौ भगवति वासुदेवेऽनन्यनिमित्तभक्तियोगलक्षणो नानागतिनिमित्ताविद्याग्रंथिरंधनद्वारेण यदा हि
महापुरुषपुरुषप्रसंग इति पञ्चमस्कंधे वक्ष्यमाणत्वात् । "येनापवर्गाख्यमदभ्रबुद्धिः" "इत्यादौ"खगेंद्रध्वजपादमूलम्" इत्यस्मिन्नेव स्कंधे वक्ष्यमाणत्वाच्च "निश्चला त्वयि भक्तिर्या सैव मुक्तिर्जनार्दन।मुक्ता एव हि भक्तास्ते

कामस्य नेंद्रियप्रीतिर्लाभो जीवेत यावता ॥ जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभिः ॥ १० ॥
वदंति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ॥ ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥ ११ ॥

दिपरंपरेति । यथाहुः " धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते " इत्यादि तन्निराकरोति धर्मस्येति । द्वाभ्याम् । आपवर्ग्यस्य उक्तन्यायेनापवर्गपर्यंतस्य धर्मस्यार्थाय फलत्वायार्थो नोपकल्पते योग्यो न भवति । तथार्थस्याप्येवंभूतधर्माव्यभिचारिणः कामो लाभाय फलत्वाय नहि स्मृतो मुनिभिः ॥९॥ कामस्य च विषयभोगस्येंद्रियप्रीतिर्लाभः फलं न भवति किं तु यावता जीवेत तावानेव कामस्य लाभः । जीवनपर्यात एव कामः सेव्य इत्यर्थः । जीवस्य जीवनस्य च पुनः कर्मानुष्ठानद्वारा कर्मभिर्य इह प्रसिद्धः सोऽर्थो न भवति किंतु तत्त्वजिज्ञासैवेति ॥ १० ॥ ननु च तत्त्वजिज्ञासा नाम धर्मजिज्ञासैव धर्म एव हि तत्त्वमिति केचित्तत्राह । तत्त्वविदस्तु तदेव तत्त्वं वदंति ।

तव विष्णो यतो हरे ॥" इति स्कांदरेवाखंडाच्च । तथाऽर्थस्य धनादेः कामो विषयभोगः लाभाय फलत्वाय न । यतो धर्म एवैकांतं मुख्यफलं यस्य तस्य धर्म एवानुसंहितं फलामिति भावः । तथा ज्ञानियोगिनां शमदमादियमनियमाद्यनुकूले कर्मिणश्च धर्मविशेषेऽर्थस्य विनियोगः । भक्तस्य तु भगवतो भागवतानां वा सेवायां स्पष्ट एव ॥ ९ ॥ इत्यर्थ इति " सत्यां क्षितौ किं" इत्यादि "चीराणि किं पथि न संति" इत्याद्युक्त न्यायेनेति भावः । अत्र ज्ञानिनां योगिनां वार्थकामेंद्रियप्रीतयो ज्ञानयोगयोरानुषंगिकफलानि कर्मफलत्वेनैव व्यपदिश्यंते । ज्ञानयोगयोस्तयोर्निष्कामकर्मपरिणामत्वादतो ज्ञानिनां योगिनां च दृष्टे सुखदुःखे कर्मफले एवोच्येते भक्तानां त्वर्थकामेंद्रियप्रीतयो भक्तेरेवानुषंगिकफलानीति भक्तेः कर्मपरिणामत्वाभावान्न तेषां कर्मफलत्वव्यपदेशः । अतो भक्तानां दृष्टं सुखं भक्तिफलमेव । दुःखं तु "यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः । अतोऽधनं त्यज्यंत्यस्य स्वजना दुःखदुःखितम्"इत्यादिभगवद्वचनाद्भगवदुत्थं भक्तयपराधफलञ्च यथायोगं विवेचनीयम्।अग्रे स्वामिव्याख्यानमेव॥ १०॥अत्राक्षिपति । नन्विति । पुनराक्षिपति । विगीतवचना विरुद्धवचनाः।अत्र विश्वनाथः तत्त्वमेव किं तत्राह । यदद्वयं ज्ञानं तत्तत्त्वम् । ज्ञानमेव किं तत्राह । ब्रह्मेति । शब्द्यते ब्रह्मेतिपदेन यदुच्यते ज्ञानिभिस्तज्ज्ञानं तन्मते ज्ञानं निराकारं ज्ञातृज्ञेयादिविभागशून्यं चित्सामान्यं । चिद्विशेषाणां भगवद्धामादीनां तदनन्यत्वमननात्। जीवमाययोस्तच्छक्तित्वेन तदैक्यादिदंकारास्पदस्य कार्यस्य विश्वस्य कारणमात्रात्मकत्वादद्वैतम्।तथा परमात्मेति योगिभिर्यदुच्यते न तज्ज्ञानम्।एतन्मते परमात्मनश्चिदेकरूपत्वाज्ज्ञानमात्रत्वम्।ज्ञानमात्रत्वेपि साक्षित्वादे र्ज्ञानविशेषस्याश्रयत्वमपि द्युमणिदीपादेर्ज्योतीरूपत्वेपि ज्योतिष्मत्वमिव नानुपपन्नम् । केचित्स्वदेहांतर्हृदयावकाशे "प्रादेशमात्रं पुरुषं वसंतम्"इत्यादेः साकारत्वञ्च मायायाः शक्तित्वान्मायिकानां च तदन्यत्वाज्जीवस्य तद्विभिन्नांशत्वात्ततो द्वितीयत्वाभावादद्वयत्वम्।तथा भगवानिति भक्तैर्यदुच्यते तज्ज्ञानमेतन्मते पूर्ववत् ज्ञानमात्रत्वेपि भगशब्दवाच्यषडैश्वर्यस्याप्यप्राकृतत्वेन चिन्मात्रत्वात्तद्रूपत्वम्। तदुक्तं । विष्णुपुराणे "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना॥ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः।भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः॥ " इति।तथैव द्विभुजत्वचतुर्भुजत्वादिभिर्विविधचिद्घनाकारैर्बहिरंतर्वर्तित्वेपि 'न च्यवंते च यद्भक्ता महत्यां प्रलयापदि'इति स्कांदादिवाक्यैः सदैव सेव्यसेवकादिविभागेप्यद्वयत्वं पूर्ववत्तच्छक्तीनां चिदादीनां तद्विलासानां च वैकुंठादीनां तदभिन्नत्वमननात्।ततो भिन्नत्वभावनैवाद्वयपदेन व्यावृत्ता ।एवं च भगवतः सामान्यस्वरूपमात्रस्योपादेयत्वे ज्ञानिन्यधिकारिणि ब्रह्मेति अंतर्यामित्वादिद्वित्रधर्मवत्वस्योपादाने योगिन्यधिकारिणि परमात्मेति अचिंत्यानंतचिदानंदमयस्वरूपरूपगुणलीलाद्यनेकधर्मवत्त्वस्य ग्रहणयोग्यतायां भक्तेधिकारिणि भगवानिति स एवैको भाति । किंच "यन्मित्रं परमानंदं पूर्णं ब्रह्म सनातनम्"इति "कृष्णाय परमात्मने" इति "मदीयं महिमानं च परं ब्रह्मेति शब्दितम्॥" इति "ब्रह्मणो हि प्रतिष्ठाहम्॥" इति "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इत्यादिवचनेभ्यस्तथा भगवदुपासकानां मोक्षप्राप्तेरपि दर्शनात् । ब्रह्मपरमात्मोपासकानां तु प्रेमप्राप्त्यदर्शनाद्भगवत एव ब्रह्मत्वपरमात्मत्वे इत्यतो भगवत्त्वमेव मूलमिति द्रष्टव्यम्।अत्र ब्रह्मोपासकेभ्यो ज्ञानिभ्यः

तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया ॥ पश्यंत्यात्मनि चात्मनं भक्त्या श्रुतगृहीतया ॥ १२ ॥
अतः पुंभिर्द्विजश्रेष्ठा वर्णाश्रमविभागशः ॥ स्वनुष्ठितस्य धर्मस्य संसिद्धिर्हरितोषणम् ॥ १३ ॥

किं तत् यज्ज्ञानं नाम अद्वयमिति क्षणिकविज्ञानपक्षं व्यावर्तयति । ननु तत्त्वविदोऽपि । विगीतवचना एव । मैवम् । तस्यैव तत्त्वस्य नामांतरैरभिधानादित्याह । औप निषदैर्ब्रह्मेति हैरण्यगर्भैः परमात्मेति सात्वतैर्भगवानित्यभिधीयते ॥ ११ ॥ तच्च तत्त्वं सपरिकरया भक्त्यैव प्राप्यत इत्याह । तच्चेत्यन्वयः । ज्ञानवैराग्ययुक्तयेत्यत्र ज्ञानं परोक्षम् । तच्च तत्त्वमात्मनि क्षेत्रज्ञे पश्यंति । किं तत् आत्मानं परमात्मानम् । श्रतेन वेदांतादिश्रवणेन गृहीतया प्राप्तयेतिभक्तेर्दार्ढ्यमुक्तम् ॥ १२॥ धर्मस्य फलं भक्तिर्नार्थ

सकाशात्परमात्मोपासको योगी श्रेष्ठः । तेभ्यो योगिभ्योपि भगवदुपासकः श्रेष्ठ इति तारतम्यं गीतासु दृष्टं यथा “तपस्विभ्योधिको योगी ज्ञानिभ्योपि मतोधिकः । कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ योगिनामपि सर्वेषां मद्गतेनांतरात्मनां।श्रद्धावान्भजने यो मां स मे युक्ततमो मतः ” इति । योगिनामिति पंचम्यर्थे षष्ठी संदर्भस्तु विगीतवचना इति। स्वामिव्याख्याने परस्परमिति शेषः।तत्त्वस्य नामांतरैरभिधानादिति धार्मिणि सर्वेषामभ्रमाद्धर्मे एव तु भ्रमादिति । यद्वा किं तत्त्वमित्यपेक्षायामाह वदंतीति । ज्ञानं चिदेकरूपमद्वयत्वं चास्य स्वयंसिद्धतादृशातादृशतत्त्वांतराभावात्स्वशक्त्येकसहायत्वात्परमाश्रयं तं विना तासामसिद्धत्वाच्च । तत्त्वमिति परमपुरुषार्थताद्योतनाय परमसुखरूपत्वं तस्य ज्ञानस्य बोध्यतेऽत एव तस्य नित्यत्वं च दर्शितम् । अत्र श्रीमद्भागवताख्य एव शास्त्रे क्वचिदन्यत्रापि तदेकं तत्त्वं त्रिधा शब्द्यते क्वचिद्ब्रह्मेति क्वचित्परमात्मेति क्वचिद्भगवा निति च । किं त्वत्र श्रीव्याससमाधिलब्धाद्विदाजीव इति च शब्द्यत इति। नोक्तमिति । तत्र शक्तिवर्गलक्षणतद्धर्मातिरिक्तं केवलं ज्ञानं ब्रह्मेति शब्द्यते । अंतर्यामित्वमयमायाशक्तिप्रचुरचिच्छक्त्यंशविशिष्टं परमात्मेति, परिपूर्ण सर्वशक्तिविशिष्टं भगवानिति एवमेवोक्तं श्रीजडभरतेन “ज्ञानं विशुद्धं परमात्ममेकमनंतरं त्वबहिर्ब्रह्म सत्यम् । प्रत्यक्प्रशांतं भगवच्छब्दसंज्ञं यद्वासुदेवं कवयो वदंति” इति “तस्मै नमो भगवते ब्रह्मणे परमात्म ने ॥ ” इत्यत्र वरुणकृतस्तुतौ टीका च ‘परमात्मने सर्वजीवनियंत्रे’ इत्येषा । ध्रुवं प्रति मनुना च“त्वं प्रत्यगात्मनि तदा भगवत्यनंत आनंदमात्र उपपन्नसमस्तशक्तौ” इति । अत्रानंदमात्रं विशेष्यं समस्ताः शक्तयो विशेषणा तिविशिष्टो भगवानित्यायातम् । भगवच्छब्दार्थश्च विष्णुपुराणे प्रोक्तः “ ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ॥ भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥ ” इति ॥ ११ ॥ तत्प्राप्तिसाधनमाह । तज्ज्ञानं त्रिरूपं मुनयो मननशीला ज्ञानिनो योगिनो भक्ताश्च पश्यंति । तत्र ब्रह्मेति मते आत्मनि च तत्पदार्थे ईश्वरे आत्मानं त्वंपदार्थं जीवं पश्यंत्यनुभवंति । परमात्मेति मते आत्मन्यंतर्हृदये आत्मानमंतर्यामिणं पश्यंति ध्यानेनालोकयंति । भगवानिति मते आत्मनि मनसि चकाराद्बहिश्च स्फुरंतमात्मानं भगवंतं स्वलोचनाभ्यामेव तन्माधुर्यमास्वादयंति । भक्त्येति । आदौ गुरुमुखात् श्रुत्वा पश्चाद्गृहीता तया भगवद्विषयिण्येव श्रवणकीर्तनादौ भक्तिशब्दस्य रूढेर्ब्रह्मोपा सकैः परमात्मोपासकैश्च स्वस्य साध्यसिद्ध्यर्थं भगवति भक्तिः कर्त्तव्यैव । ज्ञानवैराग्ये पृथगेव । तेषामुभे येषां साधने ज्ञेये । भक्तमते भक्त्योत्थ एव ते भक्तेः प्रेमत्वव्यंजके ज्ञेये । “तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः।न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह” इति शुद्धभक्तानां पृथक्तयोर्निषेधात् । अथवा तच्च त्रिरूपं ज्ञानं भक्तास्तु भक्त्यैवानुभवितुं शक्नुवंतीत्याह । तच्छ्रद्दधानाः केचित्तद्द्विरूपमप्यनुभवितुं साभिलाषा भवंतीत्यर्थः । तदा भक्त्यैव पश्यंति । तेन ब्रह्मपरमात्मनोः साधने ज्ञानयोगौ भक्त्यै वसिद्धौ स्यातामिति भावः ॥१२॥ तदेवं धर्मः स्वनुष्ठित इत्यादिना कर्मणः श्रमत्वमेव ज्ञानयोगयोरपि“ श्रेयःसृतिं भक्तिमुदस्य ते विभो”इति॥ “नैष्कर्म्यमप्य च्युतभाववर्जितम् ” इति । “पुरेह भूमन्बहवोपि योगिनः” इत्यादिभ्यो भक्त्या विना श्रमत्वमेव । भक्तेश्च कर्मयोगज्ञानादौ मिश्रिताया एव शुद्धाया आत्मप्रसादकत्वं प्रकरणतोऽवगतम्। तत्रैव शंकते। ननु ज्ञानयोगयोरप्रवृत्तौ न काचिच्चिंता । कर्मणां तु नित्यानामकरणे महान्प्रत्यवायो दुर्गतिहेतुस्तत्र का वार्त्तेत्यत आह । अतः पुंभिरिति । यत उक्तन्यायेनोत्कृष्टावपि ज्ञानयोगौ भक्त्यैव सिद्धौ भवेतां भक्तिश्च ताभ्यां विनापि स्वयं सिद्ध्यति अतो हे

तस्मादेकेन मनसा भगवान्सात्वतां पतिः ॥ श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यदा ॥ १४ ॥
यदनुध्याऽसिना युक्ताः कर्मग्रंथिनिबंधनम् ॥ छिंदंति कोविदास्तस्य को न कुर्यात्कथारतिम् ॥ १५ ॥

कामादिकमितीममर्थमुपपाद्योपसंहरति । अत इति । हे द्विजश्रेष्ठाः हरितोषणं हरेराराधनम् । संसिद्धिः फलम् ॥ १३ ॥ यस्माच्च भक्तिहीनो धर्मः केवलं श्रम एव तस्माद्भक्तिप्रधान एव धर्मोऽनुष्ठेय इत्याह । तस्मादिति । एकेनैकाग्रेण मनसा ॥ १४ ॥ भक्तिरहितो धर्मः केवलं श्रम एवेति प्रपंचितम् । इदानीं तु भक्तेर्मुक्तिफलत्वं प्रपंचयति । यदिति । यस्यानुध्या अनुध्यानं सैवासिः खड्गस्तेन युक्ताः विवेकिनो ग्रंथिमहंकारं निबध्नाति यत्कर्म तच्छिंदंति तस्य कथायां रतिं को न कुर्यात् ॥ १५ ॥

तोर्हरितोषणं भक्त्यैव जातं चेत्तदा धर्मस्य संसिद्धिः । यो यत्नादनुष्टितोपि कार्मिणां सांगोपांगतया प्रायः सिद्धो न भवनि सोपि भक्तिमतामननुष्ठितोपि सम्यगेव सिद्धो भवति । "यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्" इत्यादौ "सर्वं मद्भक्तियोगेन मद्भक्तो लभतेंजसा" इति भगवदुक्तेः । तेन कर्माकरणजनितप्रत्यवायो भक्तानां पराहतः । ननु यदि भक्त्या धर्म्मः संसिद्धस्तर्हिं धर्मफलमपि तैर्लभ्यताम् । सत्यम् । सकामत्वे सति लभ्यत एव निष्कामत्वे सति तेषां नैष्कर्म्यमेव भवति । तथा च गोपालतापनीयश्रुतिः "भक्तिरस्य भजनं तदिहामुत्रोपाधिनैरास्येनामुष्मिन्मनःकल्पनमेतदेव नैष्कर्म्यम्" इति । तदेवं "यथा तरोर्मूलनिषेचनेन" इति न्यायेन भक्त्यैव धर्म्माः संसिद्धा एवातो भक्तानां कर्मण्यधिकार एव दूरीकृतो भगवता । तदुक्तम् । "तावत्कर्माणि कुर्वीत न निर्विद्येत यावता । मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते" इति । "धर्मान्संत्यज्य यः सर्वान्मां भजेत स सत्तमः" । इति । "सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज" इति । तदपि यत्प्राच्यादिभक्तानामनन्यानामपि कार्मिकुलसंघट्टगतत्वेनैव तदनुरोधवशादीषत्कर्मकरणं तत्कर्माकरणमेव श्रद्धाराहित्यात् । "अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह" इति भगवदुक्तेः । संदर्भस्तु तदेवं श्रुतगृहीतया मुनयः श्रद्दधाना इति पदत्रयेण तस्या एव भक्तेर्दौर्लभ्यं दर्शितम् । यद्गुरोः सकाशाद्वेदांताद्यखिलशास्त्रार्थविचारद्वारा यदि स्वावश्यकपरमकर्त्तव्यत्वेन जायते।पुनश्च"भगवान्ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया । तदध्यवस्यत्कूटस्थो रतिरात्मन्यतोभवेत्"इति यत् । यदि विपरीतभावनात्याजकौ मननयोग्यताममताभिनिवेशौ स्यातां ततः श्रद्दधानैः सा भक्तिरुपासनाद्वारा लभ्यत इति । अतः श्रुतिरपि तदर्थमागृह्णाति । "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यः" इति । अत्र निदिध्यासनमुपासनं दर्शनं साक्षात्कार उच्यते । सा चैवं दुर्लभा भक्तिः श्रीहरितोषणे प्रयुक्तात्स्वाभाविकधर्मादपि लभ्यते ।तस्माद्धरितोषणमेव तस्य परमं फलमित्याह । अत इति । स्वनुष्ठितस्य बहुप्रयत्नेनाच्छिद्रमुपार्जितस्येति तुच्छे स्वर्गादिफले तत्प्रयोगोऽतीवायुक्त इति भावः ॥ ॥ १३ ॥ भक्तिहीनो भक्तिः श्रवणादिरुचिस्तद्विहीनस्तदनुत्पादक इत्यर्थः तस्माद्भक्तिप्रधान इति ॥ यद्वा यद्येवं श्रीहरिसंतोषकस्यापि धर्मस्य श्रवणादिलक्षणा भक्तिरेव फलं तत्प्रवार्त्तिताश्च ज्ञानवैराग्यादिगणास्तदा साक्षाच्छ्रवणादिरूपा भक्तिरेव कर्त्तव्या किं तत्तदाग्रहेणेत्याह तस्मादिति । एकेन धर्माद्याग्रहशून्येन श्रवणं नामगुणादीनां तथा कीर्त्तनञ्च ॥१४॥ ननु च"मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते" इति। "श्रद्धालुर्मे कथां शृण्वन्", इति "जातश्रद्धो मत्कथाम्" । इत्यादिभगवदुक्तेः कथायां श्रद्धावानेव भक्तावधिकारीत्यतः श्रद्धा कथं स्यादित्यत आह।यदन्विति । स्वसञ्चितधनेभ्यः पृथक्कृत्य किंचिन्मात्रमेकैकदिनभोजनार्थं जनाः स्वग्रंथौ निबध्नंति यथा तथैव ग्रंथिनिबंधनं वर्तमानजन्मयोग्यं प्रारब्धं कर्म तदपि छिंदंति । तस्य कथायां रतिं प्रीतिं को न कुर्यादिति तत्कथायां प्रीतिरपि सहसा जायते किं पुनरधिकारव्यंजिका श्रद्धेति भावः । युक्ताः संयतचित्ता वा ॥१५॥

शुश्रूषोः श्रद्दधानस्य वासुदेवकथारुचिः ॥ स्यान्महत्सेवया विप्राः पुण्यतीर्थनिषेवणात् ॥ १६ ॥ शृण्वतां स्वकथां कृष्णः पुण्यश्रवणकीर्तनः ॥
हृद्यंतःस्थो ह्यभद्राणि विधुनोति सुहृत्सताम् ॥ १७ ॥ नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया ॥ भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी ॥ १८ ॥
तदा रजस्तमोभावाः कामलोभादयश्च ये ॥ चेत एतैरनाविद्धं स्थितं सत्त्वे प्रसीदति ॥ १९ ॥ एवं प्रसन्नमनसो भगवद्भक्तियोगतः ॥ भगवत्तत्त्व
विज्ञानं मुक्तसंगस्य जायते ॥ २० ॥

ननु सत्यमेव कर्मनिर्मूलनी हरिकथारतिः तथापि तस्यां रुचिर्नोत्पद्यते किं कुर्मः तत्राह । शुश्रूषोरिति । पुण्यतीर्थनिषेवणान्निष्पापस्य महत्सेवा स्यात् तया च तद्धर्मश्रद्धा ततः श्रवणेच्छा ततो रुचिः स्यादित्यर्थः ॥ १६ ॥ ततश्च । शृण्वतामिति । पुण्ये श्रवणकीर्तने यस्य सः । सतां सुहृत् हितकारी । हृदि यान्यभद्राणि कामादिवासनास्तानि । अंतःस्थो हृदयस्थः सन् ॥ १७ ॥ ततश्च नष्टप्रायेष्विति । सर्वाभद्रनाशस्य ज्ञानोत्तरकालत्वात्प्रायग्रहणम् । भागवतानां भागवतशास्त्रस्य वा सेवया नैष्ठिकी निश्चला विक्षेपकाभावात् ॥ १८ ॥ रजश्च तमश्च ये च तत्प्रभवाः भावाः कामादयः एतैरनाविद्धमनभिभूतम् । प्रसीदत्युपशाम्यति ॥ १९ ॥ भगवद्भक्तियोगतः प्रसन्नमनसः अत

अत्राक्षिपति नन्विति । इत्यर्थ इति । रुच्युत्पादनार्थमियमेव पद्धतिर्ग्राह्येति भावः । अत्र संदर्भः । “ पुण्यतीर्थनिषेवणादिभिः ” इति अय मध्येको मार्गः स्यात् । “ ते पुनंत्युरुकालेन ” इत्यादिना । “सद्यः पुनंत्युपस्पृष्टाः” इत्यादिना च ऋजुमार्गोप्यस्ति । यद्वा नन्वेवमपि तस्य कथारुचिर्मंदभाग्यानां न जायते इत्याशंक्य तत्र सुगमोपायं वदंस्तामारभ्य नैष्ठिकभक्तिपर्यंतां भक्तिमुपदिशति पञ्चभिः । शुश्रूषोरिति ॥ “ भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदा ” इत्याद्यनुसारेण प्रायस्तत्र महत्संगो भवतीति तदीयटीकानुमत्या च पुण्यतीर्थ तीर्थ निषेवणाद्धेतोर्लब्धा यदृच्छया महत्सेवा तया वासुदेवकथा रुचिः स्यात्कौर्यांतरेणपि तीर्थे भ्रमतां महतां प्रायस्तत्र भ्रमतां तिष्ठतां वा दर्शनस्पर्शनसंभाषणादिलक्षणसेवा स्वत एव संपद्यते । तत्प्रभावेण तदीयाचरणे श्रद्धा भवति तदीयस्वाभाविकपरस्परभगवत्कथायां किमेते संकथयंतीति तच्छृणोमीति तदिच्छा जायते।तच्छ्रवणेन च तस्यां रुचिर्जायत इति।तथा च महद्भ्य एव श्रद्धा झटिति कार्यकरोति भावः । तदुक्तं श्रीकपिलेन “सतां प्रसंगान्मम वीर्यसंविदो भवंति हृत्कर्णरसायनाः कथाः । तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धा रतिर्भक्तिरनुक्रमिष्यति”।विश्वनाथस्तु कथायां प्रीतेराविर्भावप्रकारं श्रुणुतेत्याह । शुश्रूषोरिति । महत्सेवया यादृच्छिकमहत्कृपाजनितया महतां सेवया जातश्रद्धस्य पुंसः पुण्यतीर्थं सद्गुरुस्तस्य निषेवणं चरणाश्रयणं स्यात् “निपानागमयोस्तीर्थमृषिजुष्टेजले गुरौ” इत्यमरः।तस्माच्च शुश्रूषोः सेवमानस्य वासुदेवकथारुचिः स्यादित्यन्वयः । यद्वा पुण्यतीर्थानां श्रीमद्भागवतादिशास्त्राणां गंगादिनदीव्रजभूम्यादि क्षेत्राणां सेवयेत्यर्थः ॥ १६ ॥ ततश्च रुचेरनंतरमंतस्थः कथाद्वारा भावनापदवीं गतः ॥ १७॥ नष्टप्रायेष्विति । नामापराधलक्षणस्याभद्रस्य कश्चनकश्चन प्रबलो भागः क्षीणत्वं गच्छन् रतिपर्यंतोपि भवतीति भावः ॥ निष्ठा चित्तैकाग्र्यं तां प्राप्ता ॥ १८ ॥ रजस्तमोभ्यां भाव उत्पत्तिर्येषांते चित्तविक्षेपलयादयः । आदिशब्दात् क्रोधमोहमात्सर्याणि । अनाविद्धमविकृतं भवति।तेन विषयेष्वरुच्या श्रवणकीर्तनादिषु स्वादुत्व भानलक्षणा रुचिर्भ वतीत्यायातम् । तेन पूर्वदशायां कामलोभाद्यैस्तीक्ष्णशरायितैराविद्धं चेतः कथं प्रसीदतु, कथं वा कीर्तनादेः सम्यगास्वादं लभताम् । न हि व्याध्या जर्जरितायान्नादिकं सम्यग्रोचते इति भावः । ततश्च सत्वे शुद्धसत्वमूर्तौ भगवति स्थितमासक्तम् । तदैव त्रिभुवनविभवहेतवेप्यकुंठस्मृतिरित्याद्युक्तरीत्या सर्ववासनानाशाच्चित्तं शुद्धसत्वमयं सद्भगवत्तत्त्वसाक्षात्कारयोग्यं भवतीति भावः ॥ १९ ॥ एवं पूर्वोक्तप्रकारेणासक्तिपूर्वकं प्रतिक्षणं भगवतः कृष्णस्य भजनं कुर्वतः प्रसन्नमनस उत्पन्नरतेरित्यर्थः । रत्या विना सर्वथा विषयासंस्पर्शस्यानुत्पत्तेस्तेन विना च मनःप्रसादासंभवादिति । ततश्च भगवति भक्तियोगः प्रेमा तस्माच्च भगवत्तत्त्वस्य स्वरूपगुण

भिद्यते हृदयग्रंथिश्छिद्यंते सर्वसंशयाः ॥ क्षीयंते चास्य कर्माणि दृष्ट एवात्मनीश्वरे ॥ २१ ॥ अतो वै कवयो नित्यं भक्तिं परमया मुदा ॥ वासुदेवे भगवति कुर्वंत्यात्मप्रसादनीम् ॥ २२ ॥ सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहाऽस्य धत्ते ॥ स्थित्यादये हरिविरिंचिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः ॥ २३ ॥

एव मुक्तसंगस्य ॥ २० ॥ ज्ञानफलमाह । भिद्यत इति । हृदयमेव ग्रंथिश्चिज्जडग्रथनरूपोऽहंकारः । अत एव सर्वे संशयाः असंभावनादिरूपाः । कर्माण्यनारब्धफलानि । आत्मनि स्वरूपभूते ईश्वरे दृष्टे साक्षात्कृते सति । एवकारेण ज्ञानानंतरमेवेति दर्शयति ॥ २१ ॥ तत्र च सदाचारं दर्शयन्नुपसंहरति । अत इति । आत्मनः प्रसादनीं मनःशोधनीं वासुदेवे भक्तिं कुर्वंतीति भजनीयविशेषो दर्शितः ॥ २२ ॥ तदेवोपपादयितुं ब्रह्मादीनां त्रयाणामेकात्मकत्वेऽपि वासुदेवस्याधिक्यमाह । सत्त्वमिति । इह यद्यप्येक

लीलैश्वर्यमाधुर्यस्य विज्ञानमनुभव इत्यनुसंहितं भक्तेः फलमुक्तम् । "जनयत्याशु वैराग्यं ज्ञानं च यदहैतुकम् ।" इति यत्पूर्वमुक्तं तदिदमेव ज्ञेयम् । मुक्तसंगस्योत्पन्नवैराग्यस्य त्यक्तकामादिवासनस्येति यावत् ॥ २० ॥ अविद्या वा हृदयग्रंथिः भिद्यत इति कर्मकर्तरि प्रयोगेणाविद्याध्वंसो भक्तानामननुसंहितं फलम् । अत एवाहंकारादिध्वंसादेव । आदिपदाद्विपरीतभावनादिग्रहः । आत्मनीतीश्वरविशेषणम् । यद्वात्मन्येव मनस्येव दृष्टे किं पुनः साक्षात् दृष्टे सतीति स्फूर्तिसाक्षात्कारावुक्तौ "सतां कृपा महत्सेवा श्रद्धा गुरुपदाश्रयः । भजनेषु स्पृहा भक्तिरनर्थापगमस्ततः । निष्ठा रुचिरथासक्ती रतिः प्रेमाथ दर्शनम् । हरेर्माधुर्यानुभव इत्यर्थाः स्युश्चतुर्दश" इति विश्वनाथः । संदर्भस्तु तस्य च परमानंदैकरूपत्वेन स्वतः फलरूपस्य साक्षात्कारस्यानुषंगिकफलमाह । भिद्यंत इति । श्रवणमननादिप्रधानानामपि तस्मिन्द्रष्टर्येव सर्वे संशयास्समाप्यंत इत्यर्थः । अतः श्रवणेन तावज्ज्ञेयगता संभावना छिद्यते । मननेन तद्गतविपरीतभावनासाक्षात्कारेण आत्मयोग्यतागतासंभावनाविपरीतभावने इति ज्ञेयम् । क्षीयंते तदिच्छामात्रेणैव तदाभासः किंचिदेव तेष्ववशिष्यत इत्यर्थः ॥ २१ ॥ तत्र चात्मसाक्षात्कारेण दुःखनिवृत्तिरूपहेतोर्भक्तिमार्गे च अतो निःशेषदुःखनिवृत्तबुद्धिगोचरसुखानुभवलक्षणमोक्षाख्यपुरुषार्थलाभात् । परमया मुदेतिकर्मानुष्ठानवन्नसाधनकाले साध्यकाले वा भक्त्यनुष्ठानं दुःखरूपं प्रत्युत सुखरूपमेवेत्यर्थः ॥ आत्मप्रसादिनीं विष्णुप्रसादजननीं वा ॥ २२ ॥ तदेव वासुदेवभजनमेव । संदर्भस्तु तदेवं कर्मज्ञानवैराग्ययत्नपरित्यागेन भगवद्भक्तिरेव कर्तव्येति मतम् । कर्मविशेषरूपं देवतांतरभजनमपि न कर्तव्यमित्याह सप्तभिः । तत्रान्येषां का वार्त्ता । सत्यपि श्रीभगवत एव गुणावतारत्वे श्रीविष्णुवत्साक्षात्परब्रह्मत्वाभावात्सत्वमात्रोपकारकाभावाच्च । प्रत्युत रजस्तमोबृंहणत्वाच्च । ब्रह्मशिवावपि श्रेयोर्थिभिर्नोपास्यावित्याह । सत्वमिति द्वाभ्याम् । इह यद्यप्येक एव पुमानस्य विश्वस्य स्थित्यादये स्थितिसृष्टिलयार्थं तैः सत्वादिभिर्युक्तः पृथक्पृथक् तदधिष्ठाता तथापि परस्तत्तदसंश्लिष्टः सन् हरिविरिंचिहरेति संज्ञा भिन्ना धत्ते तत्तद्रूपेणाविर्भवतीत्यर्थः । तथापि तत्र तेषां मध्ये श्रेयांसि धर्मार्थकाममोक्षाख्यानि शुद्धफलानि सत्वतनोरधिष्ठितसत्वशक्तेः श्रीविष्णोरेव स्युः । अयम्भावः । उपाधिदृष्ट्या तौ द्वौ सेवमाने रजस्तमसोर्घोरमूढत्वात् । भवंतोपि धर्मार्थकामा नातिसुखदा भवंति । तथोपाधित्यागेन सेवमाने भवन्नपि मोक्षो न साक्षान्न च झटिति । किं तु कथमपि परमात्मांश एवायमित्यनुसंधानाभ्यासेनैव परमात्मन एव भवति । तत्रतत्र साक्षात्परमात्माकारेणाप्रकाशात् । तस्मात्ताभ्यां श्रेयांसि न भवंतीति । अथोपाधिदृष्ट्यापि श्रीविष्णुं सेवमाने सत्वस्य शांतत्वाद्धर्मार्थकामा अपि सुखदाः । तत्र निष्कामत्वेन तु तं सेवमाने " सत्वात्संजायते ज्ञानम्" इति चोक्तेर्मोक्षश्च साक्षात् । अत उक्तं स्कांदे "बंधको भवपाशेन भवपाशाच्च मोचकः । कैवल्यदः परं ब्रह्म विष्णुरेव सनातनः ॥" इति । उपाधिपरित्यागेन तु पंचमः पुरुषार्थो भक्तिरेव भवति । तस्य परमात्माकारेणैव प्रकाशात् । तस्माच्छ्रीविष्णोरेव श्रेयांसि स्युरिति । अत्र विश्वनाथः । एवं कर्मज्ञानादिकमतिक्रम्य भक्तेरेव यथा कर्त्तव्यत्वमुक्तं तथैव देवतांतरोपासनामप्यपहाय भगवानेवोपास्य इत्युच्यते । स च भगवानेक एवापि क्रीडयाऽवतरन्ननेकोपि भवति ।

**एव परः पुमानस्य स्थित्यादये स्थितिसृष्टिप्रलयार्थं हरिविरिंचिहरेति संज्ञाः केवलं भिन्नाः धत्ते । ‘हरिविरिंचिहरा इति’ इति वक्तव्ये संधिरार्षः । तत्र तेषां मध्ये श्रेयांसि**

“बहुमूर्त्त्यैकमूर्तिकम्” इति दशमात् । तस्यावतारा द्विविधाश्चिच्छक्त्या मायाशक्त्या च । चिच्छक्त्या मत्स्यकूर्मादयो भजनीया एव । मायाशक्त्या च ये सत्वरजस्तमोभिर्विष्णुब्रह्मरुद्रास्तेषु विष्णुरेव भजनीय इत्याह । सत्वमिति । यद्यप्येक एव पुमानादिपुरुषः अस्य विश्वस्य स्थित्याद्यर्थं तैस्सत्वादिभिर्युक्तो हर्यादिसंज्ञा धत्ते । संधिरार्षः । पर इति । गुणैर्युक्तोप्यचिंत्यशक्त्या तेभ्यो बहिः पृथक् स्थित्यैव तेषामस्पर्शनात्परोऽयुक्त इत्यर्थः । तदपि श्रेयांसि भक्तानामभीष्टानि तत्र तेषु मध्ये सत्वतनोः “भेजिरे मुनयोथाग्रे भगवंतमधोक्षजम् । सत्वं विशुद्धं क्षेमाय कल्पंते ये तु तानिह” इत्युत्तरश्लोकदृष्ट्या विशुद्धसत्वात्मकशरीराद्धरेरेव स्युः । “साक्षीचेताः केवलो निर्गुणश्च” इति “सत्वादयो न संतीशे यत्र च प्राकृता गुणाः” इति “हरिर्हि निर्गुणः साक्षात्पुरुषः प्रकृतेः परः” इत्यादिश्रुतिस्मृतिविरोधाद्धरौ मायागुणस्य सत्वस्य युक्तत्वेपि तस्या योग एव । सत्वस्य प्रकाशरूपत्वादौदासीन्याच्च । तेन सच्चिदानंदवस्तुनो महाप्रकाशकस्योपरागासंभवात्प्राकृतसत्वस्य न हि हरिशरीरारंभकत्वम् । रजस्तमसोस्तु विक्षेपरूपत्वावरणरूपत्वाभ्यामुपकारकत्वापकारकत्वाभ्यां च ताभ्यामानंदस्य विक्षिप्तत्वमावृतत्वमित्युपरागसंभवात् । ब्रह्मरुद्रयो रजस्तमस्तनुत्वमेवेति तयोः सगुणत्वं हरेर्निर्गुणत्वञ्च युक्तिसिद्धमेव । निर्गुणत्वेपि प्राकृतसत्त्वस्य प्रकाशरूपेण तत्समीपवर्त्तितया तत्र स्थितत्वाद्विश्वपालनलक्षणस्तद्धर्म औदासीन्येन हरौ प्रतीयते । न च तेन तस्य निर्गुणत्वं व्याहतमिति वाच्यम् ॥ संयोगसमवायसंबंधाभ्यां प्राकृतसत्वस्य तत्रासंभवात्सामीप्यसंबंधेनैव तत्र स्थितत्वादिति । स्वभक्तिज्ञानस्फूर्तिसाक्षात्कारादिदानेनैवासक्त्यैव । स्वभक्तपालनं तु स्वरूपभूतस्य शुद्धसत्वस्य धर्मो ज्ञेयः । किञ्चात्र ब्रह्मणो हिरण्यगर्भत्वात् “नेतरोनुपपत्तेः” इति न्यायेन तस्येश्वरत्वाभावात् । जीवत्वेन तद्वति रजसि परमेश्वरस्य योगात्तत्रावेशादेवावतारत्वम् । तदुक्तं ब्रह्मसंहितायाम्—“भास्वान्यथाऽश्मशकलेषु निजेषु तेजः स्वीयं कियत्प्रकटयत्यपि तद्वदत्र । ब्रह्मा य एव जगदंडविधानकर्ता गोविंदमादिपुरुषं तमहं भजामि” इति । शिवस्य तु जीवत्वाभावाद्गुणयुक्तेश्वरत्वमेव । तदुक्तं तत्रैव “क्षीरं यथा दधिविकारविशेषयोगात्संजायते न तु ततः पृथगस्ति हेतोः । यः शंभुतामपि तथा समुपैति कार्याद्गोविंदमादिपुरुषं तमहं भजामि” इत्यतो ब्रह्मशिवयोर्मध्ये शिवस्येश्वरत्वमिति केचिदाहुः । केचित्तु तैर्युक्त इति नियामकसंबंधेन संयोगसंबंधेन सामीप्यसंबंधेन च योगो ज्ञेयः । तत्र सत्वादीनां नियामकतासंबंधेन सति पुरुषः स्वस्वरूपेण स्थितो निर्गुण एव भवति । रजसि तमसि च संयोगसंबंधेन योगे स एव पुरुषो ब्रह्मा रुद्रश्च सगुण एव भवति । सत्वे सामीप्यसम्बन्धेन योगे स एव पुरुषो विष्णुस्वरूपेण स्थितो निर्गुण एव भवतीत्याचक्षतेऽत एव योगो नियामकतया गुणैः संबंध उच्यतेऽतः स तैर्न युज्येत । तत्र स्वांशपरस्य य इति भागवतामृतकारिकार्थ उपपद्यत इति । अत्र च शास्त्रांतरविचारतो वस्तुतो ब्रह्मादित्रयाणामभेद एव । “त्रयाणामेकभावानां यो न पश्यति वै भिदाम् । सर्वभूतात्मन ब्रह्मन्स शांतिमधिगच्छति” इति चतुर्थस्कंधोक्तेरभेदस्यैव शांतिपदवाच्यमोक्षहेतुत्वात्स एवात्र विचार्य्यते । तथा हि । एक एवेशः स्वोपाधिमायागुणत्रयप्रयुक्तसर्गादिकर्मभेदेन ब्रह्मविष्णुरुद्रशब्दैरुच्यते । यथैक एव क्षेत्रे बीजवापं कुर्वन्नावापकः सस्योपेतं तदेव क्षेत्रं जलसेकादिनापालयन् पालकोन्ते दात्रादिना तदुपसंहरँल्लावक इत्युच्यते । तत्र कारणीभूतरजोगुणग्रहणेन सर्वप्रपंचस्य स्रष्टा सन्स एव ब्रह्मेत्युच्यते । हिरण्यगर्भस्तु यद्यप्यपंचीकृतस्रष्टृत्वाभावान्न ब्रह्मा । तथापि पंचीकृतभूतभौतिकस्रष्टृत्वात्क्वाचिद्ब्रह्मेत्युपचर्यते । स च जीवः कल्पांतरीयसूत्रात्माहंग्रहोपासनया तद्भावं प्राप्त इति प्रसिद्धमितिहासादिषु । अतस्तदीशत्वबोधका वाचस्तदंतर्यामिपरा एव । एवं विराड्वह्नीन्द्रसूर्यादीशत्वबोधका अपीति बोध्यम् । तदंतर्यामिणश्च वस्तुतस्तदभेदेपि भेदव्यपदेशाच्चान्य इत्यादिसूत्रेभ्यः “यश्चादित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमंतरो यमयति । भीषास्माद्वातः पवते” इत्यादिश्रुतिभ्यश्च व्यावहारिकभेदोपि स्वीक्रियते । कारणीभूतसत्वगुणमादाय सर्वचराचरप्रपञ्चं पालयन्स विष्णुरित्युच्यते । तादृशतमोगुणमादाय उपसंहरन्स एव रुद्र इति कथ्यते । एवञ्चैकस्यैव वस्तुनः परब्रह्मपरमशिवमहाविष्णुवासुदेवादिशब्दगोचरस्य चतुर्मुखचतुर्भुजपंचमुखरूपाः पुमाकारा वाणीरमोमारूपास्त्र्याकाराः लीलाविग्रहाः । ननु चतुर्मुखाकारो विधेश्चतुर्भुजाकारो हरेः पंचमुखाकारो हरस्य वाण्याकारो विधे रमाकारो हरेरुमाकारो हरस्य विग्रह इति विशिष्य वक्तव्यम् । गुणत्रयभेदेन तदवच्छिन्नानां भेदात् । तथा च कथमेकस्येत्युक्तमिति चेच्छृणु । चतुर्भुजशरीरिणः पालकत्वप्रयोजकं विष्णुत्वमेवेति वक्तुमशक्यं दैत्यसंहारादिरूपस्य तमोऽवच्छिन्नरुद्रकार्यस्य दर्शनात् । तस्य सुरादिरक्षणफलकत्वेपि तमःकार्यत्वेन तदवच्छिन्नरुद्रकार्यत्वात् ।

एवं पंचमुखाकारावच्छिन्नस्येशस्य त्रिपुरादिदैत्यसंहर्तृत्वेपि न केवलरुद्रत्वरूपनिर्णयः । संहारस्य देवादिपालनफलकत्वेन विष्णुकार्यत्वात् । "शिव एको ध्येयः शिवंकरः । प्रज्ञा च तस्मात्प्रसृता पुराणी" इत्यादि श्रुत्या "स मोचयति सुप्रीतः । मोचयामि श्वपाकं वा" इत्यादिस्मृत्या च मुक्तिदानादिरूपस्य सत्वावच्छिन्नविष्णुकार्यस्य प्रतीतेश्च ।"तमूचुर्भ्रातरो रुद्रः सेवितः सात्विकैर्जनैः । मोचयेत्सत्वसंयुक्तः पूजयेशमतो हरम् ।" इति । कौर्मे तु रुद्रे साक्षादेव सत्वयोगः प्रतिपादितः । एतेन तामसत्वेन रुद्रस्यापकर्षत्वप्रलापो मूर्खाणां निरस्तः । निरंतरे दुःखमयसंसारपारवृत्तिश्रांतानां जीवानां कंचित्कालं विक्षेपविगमसमुल्लसदात्मानंदानुभवेन विश्रांतिं संपादयितुकामस्य तस्य संहाराय तमोग्रहणस्य दुश्चिकित्सवणपीडितानां व्रणं शिशमयिषोः शस्त्रग्रहणन्यायेन "निदानज्ञस्य भिषजो रुग्णाहिंसां प्रयुंजतः । न किंचिदपि नैर्घृण्यं घृणैवात्र प्रयोजिका" । इति शिवपुराण व्याख्यानेन निरतिशयकरुणांबुधित्वलिंगात् । ब्रह्मकोटौ गुणवश्यत्वासंभवात् । निद्रालस्यादेस्तमःकार्यस्य तत्राप्रसिद्धेश्च । तमोयोगमात्रेण तत्पारवश्यस्य शंकितुमशक्यत्वात् । अन्यत्राप्यतिप्रसंगादुत्कर्षापकर्षाभावे श्रुतिस्मृतिविगीत त्वस्य प्रतिपिपादयिष्यमाणत्वाच्च "सत्वोद्रिक्तस्ततो ब्रह्मा" इति विष्णुपुराणादौ ब्रह्मणोपि सत्वगुणयोगेन विष्णुत्वं प्रतीयते । भारते चातिवृद्धानां प्रजानां विधेः कोपाग्निनोपसंहर्तृत्त्वस्य स्मरणेन रुद्ररूपत्वं चावगम्यते । वासिष्ठे तु "सत्वं देवा हरादयः" इति साम्येन सर्वेषां शुद्धसत्वप्रधानमायोपाधित्वमुक्तम् । एवं भवान्या दैत्यादिसंहर्तृत्वेपि पालनरूपविष्णुकार्यप्रतीतेः ।"नृणां भवति मुक्तये" इति मार्कंण्डेयोक्तेर्मोचकत्वरूपसत्वावच्छिन्नविष्णुकार्यप्रतीतेश्च । महिषासुरयुद्धेऽसंख्यगणोत्पादकत्वरूपरजोवच्छिन्नब्रह्मकार्यप्रतीतेश्च न केवलरुद्ररूपत्वनिर्णयः । ननु मोक्षप्रदत्वादिकमिदं महालक्ष्म्या उक्तं "सा चान्यैव समष्टिरूपा" इति मार्कण्डेयप्राधानिकरहस्य गततन्माहात्म्यालोचनेन बुध्यते । तथा च कथमनेन पार्वत्या मोचकत्वाद्युक्त्या विष्ण्वादिरूपतोच्यते इति चेत् । सत्यम् । एवं प्रतीयतेऽल्पश्रुतानाम् । बहुश्रुतैस्तूमावतार एव सेति निर्द्धार्य्यते । तथाहि । मार्कण्डेये तस्य महिषशुंभादिहंतृत्त्वं नंदपुत्रीत्वादिकं च यदुक्तं तत्सर्वं हरिवंशे गौर्या उक्तम् । तत्र तावत्प्रद्युम्नशंबरयुद्धे "हतायां सर्वमायायां शंबरोऽचिंतयत्पुनः । अस्ति मे कालदंडाभो मुद्गरो हेमभूषितः । पुरा यो मम पार्वत्या दत्तः परमतुष्टया ॥ गृहाण शंबरेमं त्वं मुद्गरं हेमभूषितम् । मायांतकरणं नाम सर्वासुरविनाशनम् । अनेन दानवौ रौद्रौ बलिनौ कामरूपिणौ । शुंभश्चैव निशुंभश्च सगणौ सूदितौ मया" इति पार्वत्या एव ससैन्यशुंभहंतृत्वमुक्तम् । ततः शक्रप्रेषितनारदेन मुद्गरवृत्तांतं तस्य शांत्यै गौर्युपासनं चोपदिश्य गते सति दैत्येन तस्मिन्गृह्यमाणे संति तदुपादानाद्द्वादशादित्योत्थान्महोत्पातान्दृष्ट्वा प्रद्युम्नः शंभुप्रियां हृदि स्मृत्त्वा भूमौ शिरसा प्रणम्य तुष्टाव "ॐनमः कात्यायन्यै गुहस्य जनन्यै नमः । नमस्त्रैलोक्यमायायै कात्यायन्यै नमोनमः॥ नमस्ये शुंभमथिनीं निशुंभहृद्विदारिणीम्॥ विंध्यवासिनीं दुर्गघ्नीं रणदुर्गां रणप्रियाम्॥ त्रिशूलिनीं नमस्यामि महिषासुरघातिनीम् । सिंहवाहां नमस्यामि" इत्यादिना मध्यमोत्तमचरितोक्तं सर्वं गुप्तमत्र विषयमुपपादितम्। प्रथमचरितदेवता तु योगनिद्रारूपा तामसी शक्तिः । सा च रुद्रांतर्भूतैवेति न विवादः । यद्यपि तत्र शुंभनिशुंभयोः शूलखड्गाभ्यां हननमत्र तु मुद्गरेणेति विरोधस्तथापि स कालभेदेनापास्तुं शक्यः । "वैवस्वतेन्तरे" इत्यादिभगवत्युक्तेः । हरिवंश एवानिरुद्धविष्णुकृते भीष्मपर्वणि पार्थकृते च स्तवे पुराणांतर्गतोमामाहात्म्यवचनेष्वयमेवार्थः स्पष्टः । ग्रन्थविस्तरभिया वाक्यानि नेह लिख्यंते । यानि तूमादेर्महालक्ष्मीविभूतित्त्ववचांसि तानि विष्णवादेर्नृसिंहविभूतित्वबोधकवचांसीवोपासनार्थस्तुतिपराणि । वस्तुतस्तु गौरीत्वमेवेत्यादीनि साक्षादभेदपराण्येव । अन्यथा "त्वमक्षरं ब्रह्म" इत्यादेरपि तादृशवाक्यगणे पठितस्य तथात्वप्रसंगेनाक्षरस्य परब्रह्मणोपि स्तुत्यश्रीरामादिविभूतित्वप्रसंगः । अवतारावतारिणोश्चात्यंताभेद एव । किञ्च "न मे नारायणाद्भेदो विद्यते हि विचारतः । तन्मायाहं परं ब्रह्म स विष्णुः परमेश्वरः" इति कौर्मे शिवयैव स्वस्या विष्णुरूपत्वमुक्तम् । "सदाशिवांकमारूढा शक्तिरिच्छाह्वया शिवा । महालक्ष्मीः" इति शैवे साक्षान्महालक्ष्मीरूपतो माया इत्युक्ता । लक्ष्मीतन्त्रे लक्ष्म्याः काल्यादेः स्वावतारत्वोक्तेरपि सोभयोरभेदपरैव "हिरण्यगर्भरुचिरौ स्त्रींपुंसौ कमलासनौ" इत्यादि प्राधानिकरहस्ये रमाया रजोवच्छिन्नब्रह्मरूपत्वं प्रतीयतेतोस्या न केवलविष्णुरूपत्वनिश्चयः । न चैतेनास्याः केवलं विधिरूपत्वमस्तु । कौर्मे "इयं सा परमा शक्तिर्मन्माया ब्रह्मरूपिणी" इति विष्णूक्त्या विष्णुपुराणादिवचनैश्चास्या विष्णुरूपत्वस्यापि प्रतीतेः । एवम् । "मोक्षदे मुक्तिमार्गे" इत्यादिरुद्रयामलोक्त्या सरस्वत्या मोक्षादिरूपसत्वावच्छिन्नकार्यप्रतीतेः । "सत्वाख्येनातिशुद्धेन गुणेनेंदुप्रभं दधौ" इति प्राधानिकरहस्ये श्वेतरूपत्वात्साक्षात्सत्वयोगोक्तेश्च न केवलब्रह्मरूपत्वनिर्णयः । एतच्च शिवेऽपि तुल्यम् । तस्मात्सर्वेषां सर्वे देहा इति सिद्धम् । तथा च एकरूपत्वमेव सर्वेषां पर्यवसन्नम् । तदुक्तं हरिवंशे । "यो विष्णुः स तु वै रुद्रो यो रुद्रः स पितामहः । एकमूर्त्तिस्त्रयो देवा रुद्रविष्णुपितामहाः ॥ वरदा लोककर्त्तारो लोकनाथाः स्वयंभुवः । अर्द्धनारीश्वरास्ते तु व्रतं तीव्रं समास्थिताः ॥"

पार्थिवाद्दारुणो धूमस्तस्मादग्निस्त्रयीमयः ॥ तमसस्तु रजस्तस्मात्सत्त्वं यद्ब्रह्मदर्शनम् ॥ २४ ॥

शुभफलानि सत्त्वतनोर्वासुदेवादेव स्युः ॥ २३ ॥ उपाधिवैशिष्टयेन फलवैशिष्टयं सदृष्टांतमाह । पार्थिवात्स्वतःप्रवृत्तिप्रकाशरहिताद्दारुणः काष्ठात्सकाशाद्धूमः प्रवृत्तिस्वभावः

इत्यादि । एतेन ''रुद्रो नारायणश्चैवेत्येकं सत्वं द्विधा कृतम्'' इत्यादिभारतादिवचनमाश्रित्य शिवविष्णू एव सत्वावच्छिन्नेशरूपौ । ब्रह्मा तु जीव एवेशाविष्टःस्रष्टा भवतीति ब्रुवाणा निरस्ताः । यस्तु हरादिषु कचित्कस्माचित्कस्यचित्कदाचित्केनचिन्निमित्तेन लीलया वाविर्भाव उच्यते । सोपि विचार्य्यमाण ऐक्य एव पर्यवस्यति । तथाहि । कचिद्विधेरुभयोराविर्भाव उच्यते । यथा ''यथा यजुर्म्योथ विष्णुम्'' इत्यादिश्रुता वष्टमूर्त्तिब्राह्मणे चान्यत्रापि पुराणादिषु कचित्कचिद्धरात् । तथा च श्रुतिः ''अण्डं हिरण्मयं रुद्रस्य वीर्यात्प्रथमं संबभूव तत्र ब्रह्मा विष्णुर्जातः'' इत्यादि । हरिवंशे च हरं प्रति हरिवचनम् ''अहं ब्रह्मा कपिलोथा प्यनंतः पुत्राः सर्वे ब्रह्मणश्चातिवीर्याः । त्वत्तः सर्वे देवदेव प्रसूता एवं सर्वेशः कारणात्मा त्वमीड्यः ॥'' इति कचिद्धरेर्यथा ''नारायणाद्ब्रह्मा जायते नारायणादिंद्रो जायते नारायणाद्द्वादशादित्या रुद्राः सर्वे देवताः'' इत्यादिश्रुतौ । यथा च भारते ''त्वद्विस्तारो यतो ब्रह्मा अहं भूतपतिस्तथा'' इति एवमन्यान्यपि शैववैष्णवादिमतेषूदाहृतानीदृशानि वचांसि स्मर्तव्यानि । एतानि कल्पभेदेन व्यवस्थितानि एतद्व्यतिविस्तरेण श्रीवसिष्ठो वासिष्ठे श्रीरामं प्रति कथयामास । तत्रैवेशश्चाह वसिष्ठं प्रति ''एवं सर्गे हि कस्मिंश्चित्प्रथमोथ सदाशिवः । कस्मिंश्चिद्विष्णुरित्युक्तो नाम्युत्पन्नपितामह ॥ पितामहस्स कस्मिंश्चित्कस्मिंश्चिदपि चेतरः ॥'' इति । इतरो दुर्गाभैरवविनायकादिः । तेषामपि तन्माहात्म्यबोधकपुराणादिभागेषु ब्रह्माद्युद्भवहेतुत्वसिद्धेः । भगवान्वायुश्चाह ''ब्रह्मनारायणौ पूर्वं रुद्रः कल्पांतरेसृजत् । कल्पांतरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयः ॥ विष्णुश्च भगवांस्तद्वद्ब्रह्माणमसृजत्पुनः । नारायणं पुनर्ब्रह्मा ब्रह्माणं च पुनः शिवः । एवं कल्पेषुकल्पेषु ब्रह्मविष्णुमहेश्वराः । परस्परस्माज्जायंते परस्परजयैषिणः । तत्तत्कल्पांतवृत्तांतमाधिकृत्य महर्षिभिः । प्रभावः कथ्यते तेषां परस्परसमुद्भवात् ॥'' इति । कौर्मे च '' कचिद्रुद्रः कचिद्ब्रह्मा कचिद्विष्णुः प्रशस्यते । नान्येन तेषामाधिक्यं न्यूनत्वं वा कथंचन ॥ तत्तत्कल्पांतवृत्तांतमाधिकृत्य महर्षिभिः । तानि तानि प्रणीतानि विद्वांस्तत्र न मुह्यति'' इत्युक्तं । मार्कंडेयेपि ''विष्णुः शरीरग्रहणमहमीशान एव च । कारितास्ते यतोतस्त्वां कः स्तोतुं शक्तिमान्भवेत् ॥''इत्यादिना दुर्गाया विष्ण्वाद्युदयमुक्त्वा यस्तेदेहेभ्योऽस्या उद्भव उक्तः सोपि कालभेदेन व्यवस्थितः । एवं गणेशपुराणादौ विनायकादेर्ब्रह्माद्याविर्भाव उक्तः सोपि समाधातुं शक्य इति न कुत्रापि विरोधः । इत्थं सर्वेषां सत्वतनुत्वात्सत्वतनुत्वेन या विष्ण्वादेरप्युपासना सापि श्रेयोहेतुरिति सिद्धम् । अत्र बहु वक्तव्यमस्ति ग्रन्थाविस्तरभिया नोक्तमित्यलम् ॥ २३ ॥ ईषत्कर्मप्रत्यासत्तेर्धूमदर्शने सत्यधुनाग्निरप्याविर्भवति । जातश्चाधुना होमनैकव्यमिति ज्ञानात् । इतिभाव इति । उपाधिरेव वैशिष्टयविशिष्टयेहेतुस्स्वतस्त्वेकरूपत्वेत्याशयः । अत्र संदर्भः ।अत्र यत्त्रयाणामभेदवाक्येनोपजस्तमतयो विवदंते । तत्रेदं ब्रूमः । यद्यपि तारतम्यमिदमधिष्ठानगतमेव । अधिष्ठाता तु परः पुरुष एक एवेति भेदासंभवात्सत्यमेवाभेदवाक्यम् । तथापि तस्य तत्रतत्र साक्षात्त्वासाक्षात्वभेदेन प्रकाशेन तारतम्यं दुर्निवारमेवेति सदृष्टांतमाहपार्थिवादिति । पार्थिवान्न तु धूमवदंशेनाग्नेयात् । तत्रतत्र वेदोक्तकर्मणः साक्षात्प्रवृत्तिप्रकाशरहितात्दारुणः यज्ञियात् मंथनकाष्ठात्सकाशादंशेनाग्नीयो धूमस्त्रयीमयः पूर्वापेक्षया वेदोक्तकर्माधिक्याविर्भावास्पदं तस्मादपि स्वयमग्निस्त्रयीमयः साक्षात्तदुक्तकर्माविर्भावास्पदम् । एवं काष्ठस्थानीयात्सत्वगुणविदूरात्तमसः सकाशाद्धूमस्थानीयं किंचित्सत्वसंनिहितं रजो ब्रह्मदर्शनं वेदोक्तकर्मस्थानीयस्य ब्रह्मणस्तु तत्तदवतारिणः पुरुषस्य प्रकाशद्वारम् । यदग्निस्थानीयं सत्वं साक्षाद्ब्रह्मणो दर्शनं साक्षादेव सम्यक्तत्तद्गुणरूपाविर्भावद्वारम् । अतो ब्रह्मशिवयोरसाक्षात्त्वं सिद्धमिति भावः । तथा च श्रीवामनपुराणे ''ब्रह्म विष्ण्वीशरूपाणि त्रीणि विष्णोर्महात्मनः । ब्रह्मणि ब्रह्मरूपः स शिवरूपः शिवे स्थितः । पृथगेव स्थितो देवो विष्णुरूपी जनार्दनः ॥'' इति श्रीदशमे च शिवः शक्तियुतः ''शश्वत्त्रिलिंगो गुणसंवृतः'' इत्यादौ ''हरिर्हि निर्गुणः साक्षादीश्वरः प्रकृते परः । स सर्वदृगुपद्रष्टा तं भजन्निर्गुणो भवेत् ॥'' अत एव श्रीविष्णोरेव परमपुरुषेण साक्षादभेदोक्तिः ''सृजामि तन्नियुक्तोहम्'' त्यादिना द्वितीये तदुक्तं स एव विष्णुरीति । श्रुतिश्च ''पुरुषो ह वै नारायणोऽकामयत अथ नारायणादजो जायते यतः प्रजाः सर्वाणि भूतानि । नारायणः परंब्रह्म तत्वं नारायणः परः । ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिंगलमिति'' ''एको नारायण आसीन्न ब्रह्मा

त्रयीमयो वेदोक्तकर्मप्रचुरः ईषत्कर्मप्रत्यासत्तेः । तस्मादप्यग्निस्त्रयीमयः साक्षात्कर्मसाधनत्वात् । एवं तमसः सकाशाद्रजो ब्रह्मदर्शनं ब्रह्मप्रकाशकम् । तुशब्देन लयात्मकात्त मसः सकाशाद्रजसः सोपाधिकज्ञानहेतुत्वेन किंचिद्ब्रह्मदर्शनप्रत्यासत्तिमात्रमुक्तं न तु सर्वथा तत्प्रकाशकत्वं विक्षेपकत्वात् । यत्सत्त्वं तत्साक्षाद्ब्रह्मदर्शनम् अतस्तद्गुणोपाधीनां

नं च शंकरः । स मुनिर्भूत्वा समचिंतयत् । तत एवैते व्यजायंत । विश्वे हिरण्यगर्भोऽग्निर्वरुणरुद्रेंद्रा'' इति च । एवं त्रिदेवीपरीक्षायामपि श्रीविष्णोरेवाबाध्यत्वं स्पष्टम् । एवं भगवद्दवतारानुक्रमणिकासूत्राणां भेदमंगी कृत्यैव केवलश्रीदत्तस्य गणना सोमदुर्वाससोरगणना । तदेवं श्रीविष्णोरेव सर्वोत्कर्षे स्थिते यदन्यत्र विष्णुशिवयोर्भेदे नरकः श्रूयते । तदनैकान्तिकवैष्णवशास्त्रत्वादनैकान्तिकवैष्णवपरमेव । तद्विपरीतं हि श्रूयते पाद्मोत्तरखंडादौ ''यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः । समत्वेनैव वीक्षेत स पाखंडी भवेद्ध्रुवम् ॥'' इत्यादि । तथा च विष्णुधर्मोत्तरांते लिंगस्फोटनृसिंहोपाख्यानम् । विष्वक्सेननामा विप्रः कश्चिदेकान्ते विष्णुभक्त आसीत्तस्य पृथिवीं भ्रमतो दैवात्केनचिद्ग्रामाध्यक्षपुत्रेण मिलनमभूत् । तयोः संकथा चेयम् ''देवकर्मण्यशक्तिर्मे तात पूजय शंकरम् । देवतायतनं गत्वा तत्र तात प्रतिष्ठि तम् । लिंगमस्ति सुरेशस्य महादेवस्य निर्मलम् । एवमुक्तः प्रत्युवाच वयमेकांतिनः श्रुताः । चतुरात्मा हरिः पूज्यः प्रादुर्भावगतोथवा । पूजयामश्च नैवान्यं तस्मात्त्वं गच्छ मा चिरम्'' इत्यादिका । ततो ग्रामाध्यक्ष पुत्रे तस्य विष्वक्सेनस्य शिरश्छेत्तुमुद्यते तद्धस्तेन मृत्युमनभीप्सन्स इदं विचारयामास भवतु तत्रैव गच्छाम इति ततो लिंगसमीपं गत्वा तस्मिन्नधिष्ठाने श्रीनृसिंहाय नम इति पुष्पांजलौ विक्षिप्ते तच्छ्रुत्वा पुनः शिरश्छेत्तु मुद्यतस्य तल्लिंगं स्फोटयित्वा निर्गतेन श्रीनृसिंहेन सपरिवारस्य ग्रामाध्यक्षपुत्रस्य शिरांसि छिन्नानीति । तदेतदुक्तं स्कांदे '' शिवशास्त्रेषु तद्ग्राह्यं भगवच्छास्त्रयोगि यत् '' इति । मोक्षधर्मे नारायणीयोपाख्याने ''सांख्यं च योगश्च सनातने द्वे वेदाश्च सर्वे निखिलेपि राजन् । सर्वैः समस्तैर्ऋषिभिर्निरुक्तो नारायणो विश्वमिदं पुराणम्'' इति । महाभारते ''यस्तु विष्णुं परित्यज्य मोहादन्यमुपासते । स हेमराशिमुत्सृज्य पांशुमुष्टिं जिघृ क्षति ॥ '' इति । अत एवोक्तं नारदेन ''अविस्मितं तं परिपूर्णकामं स्वेनैव लाभेन शमं प्रशांतम् । विनोपसर्पत्यपरं हि बालिशः श्वलांगुलेनातितितर्त्ति सिंधुम् ॥ '' श्रीहरिवंशे ''हरिरेव सदा ध्येयो भवद्भिः सत्वसंस्थि तैः । विष्णुमंत्रं सदा विप्राः पठध्वं ध्यात केशवम् ॥ '' इति । अत एव विष्णुमंत्रजापकस्याधिक्यं श्रीनृसिंहतापिन्यां श्रुतौ ''अनुपनीतशतमेकमेकेनोपनीतेन तत्समम् उपनीतशतमेकमेकेन गृहस्थेन तत्समम् गृहस्थ शतमेकमेकेन वानप्रस्थेन तत्समम् वानप्रस्थशतमेकमेकेन यतिना तत्समम् यतीनां शतं पूर्णमेकेन रुद्रजापेन तत्समम् रुद्रजापकशतमेकमेकेनाथर्वांगिरसशिखाध्यापकेन तत्समम् । अथर्वांगिरसशिखाध्यापकशतमेकमेकेन मंत्रराजाध्यापकेन तत्समम्'' इति । मंत्रराजः श्रीनृसिंहमंत्र एव । अत एवोक्तं वाराहे ''जन्मांतरसहस्रेषु समाराध्य वृषध्वजम् । वैष्णवत्वं लभेद्धीमान्सर्वपापक्षये सति'' इति।यत्तु श्रीभागवत एव ''त्रयाणामेकभावानां यो न पश्यति वै भिदाम् । सर्वभूतात्मतां ब्रह्मन्स शांतिमधिगच्छति'' इत्यादि । तत्खलु श्रीविष्णोः सकाशादन्यास्वातंत्र्यापेक्षयैव । तदुक्तं श्रीब्रह्मणा '' सृजामि तन्नियुक्तोहं हरो हरति तद्वशः । विष्णुः पुरुषरूपेण परिपाति त्रिशक्तिधृक्'' इति । श्रीसंकर्षणेन च ''ब्रह्मा हरोहमपि यस्यकलाः कलायाः'' इति । ''यत्पादनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवोऽभूत्'' इति च । एतदभिप्रेत्यैवोक्तं पाद्मेपि ''शिवस्य श्रीविष्णोर्य इह गुणनामादि सकलं धिया भिन्नं पश्येत्स खलु हरिनामाहितकरः'' इति । अत्र श्रीविष्णुनेति तृतीयाया निर्देशादत्रैव श्रीशब्ददानाच्च श्रीमतः सर्वशक्तियुक्तविष्णोः सर्वव्यापकत्वेन तन्नाम्नस्तस्माच्च शिव स्य गुणनामादि सकलं धिया भिन्नं स्वतंत्रं पश्येदित्यर्थः । अतो मार्कण्डेयं प्रति श्रीशिववाक्यं चेदमेव । ''न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते । नात्मनश्च परस्यापि तद्युष्मान्वयमीमहि ॥'' तत्तेभ्योपि सर्वसम दृष्टिभ्यो वयं युष्मानेव ईमहि प्रियत्वेन जानीम इति । ''अथ भागवता यूयं प्रियाः स्थ भगवान्यथा । न मद्भागवतानां च प्रेयानन्योस्ति कर्हिचित्'' इति चतुर्थे तस्यैवोक्तेः । अत एव तत्पूर्वं ''नैवेच्छत्याशिषः क्वापि ब्रह्मर्षिर्मोक्षमप्युत । भक्तिं परां भगवति लब्धवान्पुरुषेऽव्यये ॥ '' इति । श्रीशिवोक्तमाहिमभक्त्या भगवति समाधिस्थस्य तस्य देव्यै महिमदर्शनार्थं हृदि छलेन स्वयं शिवे प्रविष्टे विरतिर्जाता । यथोक्तं ''किमिदं कुत एवेति समाधेर्विरतो मुनिः'' इति । '' तच्चान्यथा न संभवति'' इति । श्रुतौ च श्रीविष्णोरेव सर्वोत्कर्षत्वमुक्तम् । '' यः कामये तमुग्रं कृणोमि तं ब्रह्माणं तं सुधाम् ''इत्यादिना । तस्मात्तदयित्वेनैव ब्रह्मरुद्रभजने न दोषः ।

## भेजिरे मुनयोऽथाग्रे भगवंतमधोक्षजम् ॥ सत्त्वं विशुद्धं क्षेमाय कल्पंते येऽनु तानिह ॥ २५ ॥

**ब्रह्मादीनामपि यथोत्तरं वैशिष्ट्यमिति भावः ॥ २४ ॥ वासुदेवभक्तौ पूर्वाचारं प्रमाणयति । भेजिर इति । अथातो हेतोरग्रे पुरा विशुद्धं सत्त्वं सत्त्वमूर्तिं भगवंतमधोक्षजम् ।**

''स आदिदेवो जगतां परो गुरुः'' इति, ''वैष्णवानां यथा शंभुः'' इत्याद्यंगीकारात् । यथानुष्ठितं श्रीप्रह्लादेन''ततः संपूज्य शिरसा ववंदे परमेष्ठिनम् । भवं प्रजापतीन्देवान्प्रह्लादो भगवत्कलाः ॥'' इति । युधिष्ठिरेण च ''क्रतुराजेन गोविन्द राजसूयेन पावनीः । यक्ष्ये विभूतीर्भवतस्तत्संपादय नः प्रभो ॥ '' इति।''स्वतन्त्रेण तु भजने भृगुशापो दुरत्यय'' इति। तथा चतुर्थे ''भृगुः प्रत्यसृजच्छापं ब्रह्मदण्डं दुरत्ययम् । भवव्रतधरा ये च ये च तान्समनुव्रताः ॥ पाखंडिनस्ते भवंतु सच्छास्त्रपरिपन्थिनः ॥ '' इत्यादि । वेदविहितमेवात्र भवव्रतमनूद्यतेऽन्यविहितत्वे पाखंडिविधानायोगः स्यात् । पूर्वत एव पाखंण्डित्वसिद्धेः । तस्मात्स्वतंत्रत्वेनैवोपासनायामयं दोषः । यतश्च तत्रैव तेन श्रीजनार्दनस्यैव वेदमूलत्वमुक्तम् । ''अत एव हि लोकानां शिवः पन्थाः सनातनः । यं पूर्वे चानुसंतस्थुर्यत्प्रमाणं जनार्दनः ॥ '' इति । एष वेदलक्षणः । यत्प्रमाणं यत्र मूलमित्यर्थः । स्वतन्त्रोपासनायाः तत्प्राप्तिः श्रीगीतोपनिषत्स्वेव निषिद्धा । ''येप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः । तेपि मामेव कौतेय यजन्त्यविधिपूर्वकम् ॥ अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च । न तु मामभिजानंति तत्त्वेनातश्च्यवंति ते ॥ यान्ति देवव्रता देवान्पितॄन्यान्ति पितव्रताः । भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोपि माम्'' इति । अवज्ञानादिकं तु सर्वथा परिहरणीयम् । यथा पाद्मे ''हरिरेव सदाराध्यः सर्वदेवेश्वरेश्वरः । इतरे ब्रह्मरुद्राद्या नावज्ञेयाः कदाचन ।''श्रीभगवद्वाक्यं च ''यो मां समर्चयेन्नित्यमेकान्तं भावमास्थितः । विनिंदन्देवमीशानं स याति नरकं ध्रुवम् ॥ '' गौतमीये च ''गोपालं पूजयेद्यस्तु निंदेद्यद्यन्यदेवताः । अस्तु तावत्परो धर्मः पूर्वधर्मो विनश्यति॥'' ''हयशीर्षा मां पथि देवहेलनात्'' इति नारायणवर्मणि तदागःप्रायश्चित्तं चतुर्थे नंदीश्वरशापश्च ''संसरन्त्विह ये चामुमनु शर्वावमानिनम्'' इति । अत्र विशेषजिज्ञासा चेत्परमात्मभक्तिसंदर्भौ दृश्यौ । विश्वनाथस्तु आवरणविक्षेपप्रकाशधर्माणां तमोरजःसत्त्वानां यथोत्तरं श्रैष्ठ्यम् । तथा सत्त्वस्य शुद्धसत्त्वे प्रातिकूल्याभावं च सदृष्टांतमाह । पार्थिवात्स्ववृत्तिप्रकाशप्रवृत्तिरहिताद्दारुणः काष्ठाद्धूमः प्रवृत्तिस्वभावः श्रेष्ठस्ततोऽप्यग्निः प्रवृत्तिप्रकाशधर्मकः वेदोक्तकर्मसाधनत्वात्त्रयीमयः । एवं तमसो लयात्मकत्वाद्रजोविक्षेपकं श्रेष्ठम्।ततोपि सत्त्वं लयविक्षेपशून्यं ब्रह्मदर्शनं''सत्त्वात्संजायते ज्ञानम्''इत्युक्तेः । शुद्धसत्त्वे तस्य प्रातिकूल्याभावेनोपरागाभाव उक्तः । तेन ब्रह्मदर्शने तस्य व्यवधायकत्वाभाव एव साधकत्वमौपचारिकं भक्त्या विना ब्रह्मदर्शनासंभव इत्यग्रिमग्रंथे प्रतिपादनात् । एवं च ''आनन्दो ब्रह्मणो रूपम्'' इति परमेश्वरस्यानन्दरूपत्वात् ''मायापरैत्यभिमुखे च विलज्जमाना '' इत्यादेर्मायागुणानां रजःसत्त्वतमसां परमेश्वरस्पर्शे स्वतः सामर्थ्याभावात्परमेश्वरेणैव स्वेच्छया तत्स्पर्शे स्वीकृतेपि ब्रह्माणि विक्षेपविशिष्टो विष्णौ प्रकाशविशिष्टः शिवे आवरणविशिष्ट आनन्द इत्यत आनन्दस्य प्रकाशयुक्तत्वे न क्षतिरिति विष्णुरेवोपास्य इति विवेकः । अत्र दारुणि शुद्धतेजस उपलब्धेर्धूमे त्वनुपलब्धेर्धूमस्थानीयाद्रजसः सकाशाद्दारुस्थानीयं तमः श्रेष्ठं तत्कार्यसुषुप्तावपि केवलात्मानुभवादिति रजस्तमोवतोर्ब्रह्मरुद्रयोर्मध्ये रुद्र एव श्रेष्ठ इति केचिदाहुः । अतो भगवदवतारत्वे त्रयाणां साम्यम्।गुणोपरागानुपभ्यामसाम्यं चेत्यभेदभेदप्रतिपादकानि पौराणिकवाक्यानि संगमनीयानि।अत्र''असंगो ह्ययं पुरुषः''इति श्रुतेः परमात्मा जीवात्मा च यद्यपि स्वरूपतो गुणसंगरहित एव भवति तदपि परमात्मनश्चिन्महोदधित्वात्परमेश्वरत्वात्स्वातंत्र्यात्स्वैरलीलत्वाच्च स्वेच्छयैव स्वकर्तृकेण गुणस्पर्शेन शंभुत्वे सति गुणकार्यक्रोधादिमत्त्वेप्यात्मारामत्वमसंसारित्वं स्वाज्ञानापचयश्च भवति । जीवात्मनश्च चित्कणत्वादल्पप्रकाशकत्वादीशितव्यत्वादस्वातंत्र्यादल्पबलत्वाच्च गुणकर्तृक एव तत्स्पर्शे सति स्वज्ञानलोपः संसारश्च भवतीति विवेचनीयम् ॥ २४ ॥ अत इति । अथ शब्दार्थः । यतः सत्त्वतनोरेव श्रेयांसि अत इत्यर्थः । विश्वनाथस्तु विशुद्धं सत्त्वं स्वरूपभूताचिच्छक्तिरेव तन्मयम् । '' विद्याविद्याभ्यां भिन्नः ।'' इति गोपालतापनीश्रुतेः ''छायातपौ यत्र न गृध्रपक्षौ'' इति स्मृतेश्च । ''सत्यज्ञानानन्तानन्दमात्रैकरसमूर्त्तयः'' इति दश

मुमुक्षवो घोररूपान्हित्वा भूतपतीनथ ॥ नारायणकलाः शांता भजंति ह्यनसूयवः ॥२६॥ रजस्तमःप्रकृतयः समशीला भजंति वै ॥ पितृभूतप्रजेशादीञ्छ्रियैश्वर्यप्रजेप्सवः ॥ २७ ॥ वासुदेवपरा वेदा वासुदेवपरा मखाः ॥ वासुदेवपरा योगा वासुदेवपराः क्रियाः ॥ २८ ॥ वासुदेवपरं ज्ञानं वासुदेवपरं तपः ॥ वासुदेवपरो धर्मो वासुदेवपरा गतिः ॥ २९ ॥

अतो ये ताननुवर्तंते त इह संसारे क्षेमाय कल्पंते ॥२५॥ नन्वन्यानपि केचिद्भजंतो दृश्यंते । सत्यम् । मुमुक्षवस्त्वन्यान्न भजंति किं तु सकामा एवेत्याह । मुमुक्षव इति द्वाभ्याम् । भूतपतीनिति पितृप्रजेशादीनामुपलक्षणम् । अनसूयवो देवतांतरानिंदकाः संतः ॥ २६ ॥ रजस्तमसी प्रकृतिः स्वभावो येषां ते । अत एव पितृभूतादिभिः समं शीलं येषाम् । श्रिया सहैश्वर्यं प्रजाश्चेप्संतीति तथा ते ॥ २७ ॥ मोक्षप्रदत्वाद्वासुदेवो भजनीय इत्युक्तम् । सर्वशास्त्रतात्पर्यगोचरत्वादपीत्याह । द्वाभ्याम् । वासुदेव एव परस्तात्पर्यगोचरो येषां ते । ननु वेदा मखपरा दृश्यंते इत्याशंक्य तेऽपि तदाराधनार्थत्वात्तत्परा एवेत्युक्तम् । मखा इति । योगा योगशास्त्राणि । तेषामप्यासनप्राणायामादिक्रियापरत्वमाशंक्य तासामपि तत्प्राप्त्युपायत्वात्तत्परत्वमुक्तम् ॥ २८ ॥ ज्ञानं ज्ञानशास्त्रम् । ननु च तज्ज्ञानपरमेवेत्याशंक्य ज्ञानस्यापि तत्परत्वमुक्तम् । तपोऽत्र ज्ञानम् । धर्मो धर्मशास्त्रं दानव्रतादिविषयम् । ननु तत्स्वर्गपरमित्याशंक्य गम्यत इति गतिः स्वर्गादिफलं साऽपि तदानंदांशरूपत्वात्तत्परैवेत्युक्तम् । यद्वा । वेदा इत्यनेनैव तन्मूलत्वात्सर्वाण्यपि वासुदेवपराणीत्युक्तम् । तत्र ननु तेषां मखयोगक्रियादिनानार्थपरत्वान्न तदेकपरत्वमित्याशंक्य मखादीनामपि तत्परत्व

माच । विष्णुवपुषो मायातीतत्वात् । मायाशक्तिवृत्तिविचैव विशुद्धसत्त्वशब्दवाच्येति न व्याख्येयम् । क्षेमाय मोक्षाय ॥ २५ ॥ अत्राक्षिपति नन्विति । अन्यान्भैरवादीन् । अथातो हेतोर्विशुद्धसत्वरूपत्वादित्यर्थः ॥ २६ ॥ ॥ २७ ॥ ननु वेदैरेव पित्रादयो भजनीयत्वेनोच्यंते तेषां को दोषस्तत्राह वासुदेव एव परस्तात्पर्यगोचरस्तात्पर्यविषयो येषां ते "कालेन प्रलये नष्टा वाणीयं वेदसंज्ञिता । मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ॥" इति "किं विधत्ते किमाचष्टे" इत्यतो "मां विधत्तेऽभिधत्ते माम्" इत्यादिभगवदुक्तेश्च । "ब्रह्मावधार्यात्मगुणानुवादम्" इतिवाराहचरितोक्तेश्च"वेदैश्च सर्वैरहमेव वेद्यः"इति गीतोपनिषद्येवकारेणान्ययोगव्यवच्छेदाच्च । वेदतात्पर्यम नवबुद्ध्वैव पित्रादीन्भजंतीति भावः । पुनराक्षिपति नन्विति । मखादिपरत्वं दृश्यते सत्यम् । "स्वं लोकं न विदुस्ते वै यत्र देवो जनार्दनः । आहुर्धूम्रधियो वेदं सकर्मकमतद्विदः ॥" इति श्रीनारदोक्तेर्मखादौ वेदस्य तात्पर्याभावात् "धर्मो यस्यां मदात्मकः" इति भगवदुक्तेः । "तेपुस्तपस्ते जुहुवुः सस्नुरार्या ब्रह्मानूचुर्नाम गृणंति ये ते" इति श्रीदेवहूत्युक्तेः । "यथा तरोर्मूलनिषेचनेन" इति नारदोक्तेश्च । वासुदेव एव वेदतात्पर्यावगमाच्च सर्ववेदार्थः केवलभगवद्भक्तिरेवेति । यद्वा मखस्य वासुदेवभुजाद्यंगविभूतींद्रादिदेवताराधनमयत्वेन वासुदेवपरत्वमादिभरतचारिते प्रसिद्धम् । "संप्रचरत्सु नानायागेषु विरचितांगक्रियेष्वपूर्वं यत्तत्क्रियाफलं धर्माख्यं परे ब्रह्मणि यज्ञपुरुषे सर्वदेवतालिंगानामर्थनियामकतया साक्षात्कर्त्तरि परदेवतायां भगवति वासुदेव एव भावयमान आत्मनैपुण्यमृदितकषायो हविःष्वध्वर्युभिर्गृह्यमाणेषु यजमानो ये यज्ञभाजो देवास्तान्पुरुषावयवेष्वभ्यध्यायत्" दित्याद्युक्ते । योगस्यापि कापिलेये भगवद्ध्यानादिपरत्वं प्रसिद्धम् । कर्मणामपि तत्समर्पणं विना फलासिद्धेस्तत्परत्वम् ॥ २८ ॥ ज्ञानशास्त्रं वेदान्तशास्त्रम् । अत्राक्षिपति नन्विति । तत्परत्वं ज्ञानशास्त्रेणापि वासुदेव एव ज्ञेयत्वेन प्रतिपाद्यतेऽतस्तस्यापि तत्परत्वमेव । "यस्य ज्ञानमयं तपः" इति श्रुतेस्तपो ज्ञानम् । येन ज्ञेयसाक्षात्कारस्तज्ज्ञानम् "ज्ञानं ज्ञेयं परं ब्रह्म" इति स्मृतेर्ज्ञानस्य वासुदेवस्वरूपत्वात्तदपि तत्परमेव । यत्र दानानां व्रतानाञ्च महिमा वर्ण्यते तच्छास्त्रं महाभारतादि । अत्राक्षिपति । नन्विति । तद्धर्मशास्त्रम् । आदिना कुबेरादिलोकपालग्रहः । तस्य परमात्मन आनन्दांशरूपत्वात् "तस्यैवानन्दस्य मात्रामुपजीवन्त्यन्यानि" इत्यादिश्रुतेः । अत्र हस्ति

स एवेदं ससर्जाग्रे भगवानात्ममायया ॥ सदसद्रूपया चासौ गुणमय्याऽगुणो विभुः ॥ ३० ॥
तया विलसितेष्वेषु गुणेषु गुणवानिव ॥ अंतः प्रविष्ट आभाति विज्ञानेन विजृंभितः ॥ ३१ ॥
यथा ह्यवहितो वह्निर्दारुष्वेकः स्वयोनिषु ॥ नानेव भाति विश्वात्मा भूतेषु च तथा पुमान् ॥ ३२ ॥
असौ गुणमयैर्भावैर्भूतसूक्ष्मेंद्रियात्मभिः ॥ स्वनिर्मितेषु निर्विष्टो भुंक्ते भूतेषु तद्गुणान् ॥ ३३ ॥

मित्युक्तमिति द्रष्टव्यम्॥ २९॥ ननु जगत्सर्गतत्प्रवेशनियमनादिविलासयुक्ते वस्तुनि सर्वशास्त्रसमन्वयो दृश्यते। कथं वासुदेवपरत्वं सर्वस्य। तत्राह। स एवेति चतुर्भिः। ऐतैरेव श्लोकैस्तस्य कर्माण्युदाराणि ब्रूहीति प्रश्नस्योत्तरमुक्तम्। सदसद्रूपया कार्यकारणात्मिकया अगुणश्चेत्यन्वयः। स्वतो निर्गुणोऽपि सन्नित्यर्थः ॥ ३० ॥ भगवतो जगत्कारणत्वमुक्तं प्रवेशनियमनलक्षणां लीलामाह। तयेति। विलसितेषूद्भूतेषु गुणेष्वाकाशादिष्वंतः प्रविष्टः सन्गुणवानिव मदधीना एते गुणा इत्यभिमानवानिव न तु वस्तुतस्तथा। यतो विज्ञानेन चिच्छक्त्या विजृंभितोऽत्यूर्जितः ॥ ३१ ॥ बहुलीलारूपत्वमाह। यथेति। स्वयोनिषु स्वाभिव्यंजकेषु। अवहितो निहितः। विश्वात्मा पुमान्परमेश्वरः। भूतेषु प्राणिषु। अंतर्यामिणोऽपि प्रतियोनिनानात्वेन नानात्वमिवोच्यते। क्षेत्रज्ञरूपेण वा ॥ ३२ ॥ भोगरूपां लीलामाह। असाविति। असौ हरिर्भूतसूक्ष्माणि चेंद्रियाणि चात्मा मनश्च तैः स्वयं निर्मितेषु भूतेषु चतुर्विधेष्विति भोगे स्वातंत्र्यं द्योत्यते। तद्गुणांस्तत्तदनुरूपान्विषयानिच्छया भुंक्ते भोजयतीति णिजर्थो वा

पदन्यायेन वेदस्य सर्वमूलत्वाद्भिन्नत्वेन कथनमनुचितमिति चेत्तत्राह-यद्वेति। तत्र पूर्ववाक्ये ॥२९॥ पुनराक्षिपति।नन्विति। सर्गः सृष्टिः प्रवेशः "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुत्युक्तः प्रवेशः। नियमनं "यः पृथिवीमंतरा यमयति" इत्याद्यन्तर्यामिब्राह्मणोक्तम्। आदिना पालनादिग्रहः।वस्तुनि सत्यरूपे ब्रह्मणि "सर्वे वेदा यत्पदमामनन्ति" इत्यादिश्रुतेः।सर्वशास्त्राणां समन्वयस्तात्पर्यम्।तत्राह-यस्मिन्सर्वशास्त्रसमन्वयः स एव परमात्मा भगवान्वासुदेवः "वेदैश्च सर्वैरहमेव वेद्यः" इति गीतोक्तेः। ब्रह्मण एवापरपर्यायो भगवच्छब्दवाच्यो वासुदेवो नान्य इति "ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" इत्युक्तेः। इत्यर्थ इति। वस्तुतो निर्गुण एव मायया सगुण इव स आभातीति भावः ॥ ३० ॥ प्रतियोगिनोऽत्रांतःकरणानि देहा वा तेषां नानात्वेन सांख्यादिमतमादायाह-क्षेत्रज्ञरूपेणेति। अवस्थितः सदा स्थितो यथा तथा विश्वात्मांतर्यामी भूतेषु प्राणिषु। यदि तेष्वेवाग्निर्मथनेन प्रकटीकृतः स्यात्तदा तान्येव दहति।एवमेव श्रवणादिभिः साधनैः साक्षात्कृतः परमात्मा मायिकमुपाधिं जीवस्य दूरीकरोतीति भावः॥३१॥३२॥भुंक्ते इति॥जीवानां भोक्तृत्वमंतर्यामिणा विना न सिद्ध्यतीति जीवस्य तदीयतटस्थशक्तित्वाद्वा जीवद्वारा

भावयत्येष सत्त्वेन लोकान्वै लोकभावनः ॥ लीलावतारानुरतो देवतिर्यङ्नरादिषु ॥ ३४ ॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे द्वितीयोऽध्यायः ॥ २ ॥ सूत उवाच ॥ जगृहे पौरुषं रूपं भगवान्महदादिभिः ॥ संभूतं षोडशकलमादौ लोकसिसृक्षया ॥ १ ॥

ज्ञेयः । पालयतीति वा । तदा त्वात्मनेपदमार्षम् । "भुजोऽनवने" इति स्मरणात्॥ ३३॥इदानीं सूत जानासीति प्रश्नस्योत्तरमाह । भावयति पालयति । एतत्तु सर्वावतार साधारणं प्रयोजनम्। विशेषतः कृष्णावतारस्य कुंतीस्तुतौ वक्ष्यते। लोकभावनो लोकभर्ता । देवादिषु ये लीलावतारास्तेष्वनुरतोऽनुरक्तः॥ ३४॥इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे भावार्थदीपिकायां टीकायां द्वितीयोऽध्यायः ॥ २ ॥ अवतारकथाप्रश्ने तृतीये तूत्तराभिधा ॥ पुरुषाद्यवतारोक्त्या तच्चारित्रवर्णनैः ॥ १ ॥ यदुक्तम् 'अथाख्याहि हरेर्धीमन्नवतारकथाः शुभाः' इति तदुत्तरत्वेनावतारानुक्रमिष्यन्प्रथमं पुरुषावतारमाह । जगृह इति पंचभिः । महदादिभिर्महदहंकारपंचतन्मात्रैः संभूतं सुनिष्पन्नम् । एकादशेंद्रियाणि पंच महाभूतानीति षोडश कला अंशा यस्मिन् । यद्यपि भगवद्विग्रहो नैवंभूतस्तथापि विराड्जीवांतर्यामिणो भगवतो विराड्रूपेणोपासनार्थमे

स्वयमंतर्यामी भुंक्त इति युज्यत इति । जीववदीशस्य गुणभोक्तृत्वं सर्वथानुचितमेवेति मन्वानं प्रत्याह-भोजयतीति । णिजर्थोन्तर्भावितणिजर्थ इत्यर्थः । धातोः पालनार्थमादायाह-पालयतीति । तदा पालनार्थांगीकारेऽनवनेऽपालने भुजेरात्मनेपदं भवतीति । स्मरणात्पाणिनिसूत्रात् ॥ ३३ ॥ लोकान्भावयत्युत्पादयति ब्रह्मद्वारेति तथाभूतो विष्णुः । एतत् विश्वपालनलक्षणम् । आदिशब्दात्स्तंभाच्छ्रीनृसिंहाविर्भावश्रवणात्तत्रापि लीलावतारानुगत इति ज्ञेयम् ॥ ३४ ॥ इति श्रीमद्भागवते प्रथमस्कन्धे भावार्थदीपिकाप्रकाशे द्वितीयोध्यायः ॥ २ ॥ अवतारकथानां प्रश्ने या उत्तराभिधा उत्तरकथनं सा तृतीयेऽध्याये तत्तदवतारचारित्रवर्णनपूर्वकमुच्यते ( १ ) अत्र "कलाश्च पञ्चभूतानि ज्ञानकर्मेंद्रियाणि च । पंचपंच मनश्चेति षोडशोक्ता महर्षिभिः" इति तर्थिः । "यस्मिन्नेताः षोडशकलाः प्रविशन्ति" इति श्रुतेः । अत्र संदर्भः । तत्र ब्रह्मेति परमात्मेत्यत्र यो भगवान्निर्दिष्टः स एवेदमित्यादौ च यस्यैवाविर्भावा महत्स्रष्ट्रादयो विष्णुपर्यंता निर्दिष्टाः स भगवान्स्वयं श्रीकृष्ण एवेति पूर्वदर्शितशौनकाद्यभीष्टनिजाभिमतस्थापनाय परमात्मनो विशेषानुवादपूर्वकं दर्शयितुं तत्प्रसंगेनान्यानवतारान्कथयितुं तत्रैव ब्रह्म च निर्देष्टुमारभते । जगृहे इति । यः श्रीभगवान्पूर्णषडैश्वर्यत्वेन पूर्णो निर्दिष्टः स एव पौरुषं रूपं पुरुषत्वेनाम्नायते । यद्रूपं तदेवादौ सर्गारम्भे जगृहे प्राकृतप्रलये स्वस्मिँल्लीनं सत्प्रकटतया स्वीकृतवान् । किमर्थं तत्राह-लोकसिसृक्षया तस्मिन्नेव लीनानां लोकानां समष्टिव्यष्ट्युपाधिजीवानां प्रादुर्भावनार्थमित्यर्थः । कीदृशं सत्तद्रूपं लीनमासीत्तत्राह-महदादिभिः संभूतं मिलितम् अंतर्भूतमहदादितत्त्वमित्यर्थः।"सभूयांबोधिमभ्येति महानद्या नगापगाः"इत्यादौ हि संपूर्वो भवतिर्मिलनार्थः । अत्र हि महदादीनि लीनान्यासन्निति । तदेवं"विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः । एकन्तु महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम् ॥ तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते ॥" इति नारदीयतन्त्रादौ महत्स्रष्टृत्वेन प्रथमं पुरुषाख्यं यद्रूपं श्रूयते "तस्मिन्नाविरभूल्लिंगे महाविष्णुर्जगत्पतिः" इत्यादि । "नारायणः स भगवान्नापस्तस्मात्सनातनात् । आविरासन्कारणार्णोनिधिः संकर्षणात्मकः ॥ योगनिद्रां गतस्तस्मिन्सहस्रांशुः स्वयं महान्" इत्यादिब्रह्मसंहितादौ कारणार्णवशायिसंकर्षणत्वेन श्रूयते । तदेव जगृहे इति प्रतिपादितम् । पुनः कीदृशं षोडशकलं तत्सृष्ट्युपयोगिपूर्णशक्तिरित्यर्थः । तदेवं यस्तद्रूपं स भगवान् । यत्तु तेन गृहीतं तत्तु स्वसृज्यानामाश्रयत्वात्परमात्मेति पर्यवसितम् । विश्वनाथस्तु पूर्वाध्यायान्ते लीलावतारानुरत इत्युक्तं तत्र कास्तस्य लीलाः केऽवतारा इत्यपेक्षायां प्रथमं पुरुषावतारमाह-जगृह इति पंचभिः । पौरुषं पुरुषाकारं पुरुषसंज्ञं वा । ननु जगृह इति चेदुच्यते तर्हि तद्रूपं पूर्वं नासीदित्यवगत्या तद्रूपस्याऽनित्यत्वं प्रसक्तमित्यत आह सम्यग्भूतं परमसत्यं पूर्वपूर्वमपि सदैव स्वरूपेण स्थितमेव तज्जगृहे । लोकसृष्ट्यर्थमुपादत्त । ग्रहणस्य विद्यमानवस्तुविषयत्वात् । घटस्याविद्यमानत्वे घटं जग्राहेति प्रयोगादर्शनाच्च । राजा सेनान्यं दिग्विजिगीषया स्वसंगे जग्राहेतिवत् । "युक्तेक्ष्मादावृते भूतं प्राण्यतीते समेषु"इत्यमरः।इतरत्रापि 'स एव प्रथमं देव' इत्यादौ सर्वत्र संभूतमिति पदमनुवर्त्तनीयम् । महदादिभिर्महत्तत्त्वाहंकारादिभिर्लोकानां समष्टिव्यष्टीनां भुवनानां वा स्रष्टुमिच्छा तया

यस्यांभसि शयानस्य योगनिद्रां वितन्वतः ॥ नाभिह्रदांबुजादासीद्ब्रह्मा विश्वसृजां पतिः ॥ २ ॥
यस्यावयवसंस्थानैः कल्पितो लोकविस्तरः ॥ तद्वै भगवतो रूपं विशुद्धं सत्त्वमूर्जितम् ॥ ३ ॥

वमुक्तमितिद्रष्टव्यम् ॥ १ ॥ कोऽसौ भगवानित्यपेक्षायां तं विशिनष्टि । यस्यांभसि एकार्णवे शयानस्य विश्रांतस्य तत्र च योगः समाधिस्तद्रूपां निद्रां विस्तारयतो नाभिरेव ह्रदस्तस्मिन्यदंबुजं तस्मात्सकाशाद्ब्रह्मासीदभूत्पाद्मे कल्पे स पौरुषं रूपं जगृहे ॥ २ ॥ कीदृशं रूपं तदाह । यस्येति । ननु कीदृशो विग्रहस्तस्य योंभसि

षोडशैव कला यस्मिन्राकाचन्द्रमिव मत्स्यकूर्माद्यवतारानपेक्ष्य परिपूर्णमित्यर्थः । "कला तु षोडशो भागः" इत्यमरः । अत्र योयं भगवान्स परव्योमनाथस्तेन गृहीतं यत्षोडशकलं रूपं स महाविष्णुः प्रकृतीक्षणकर्त्ता संकर्षणांशः कारणार्णवशायी प्रथमः पुरुषो भागवतामृतोक्तयुक्त्या ज्ञेयः ॥ यद्वा "ताः षोडशकलाः प्रोक्ता वैष्णवैः शास्त्रदर्शनात्" शक्तित्वेन ता भक्तिविवेकादिषु संमताः "श्रीर्भूः कीर्तिरिलाकान्तिर्लीलाविद्येति सप्तकम् । विमलाद्या नवेत्येता मुख्याः षोडश शक्तयः ॥ विमलोत्कर्षिणी ज्ञाना क्रिया योगा तथैव च । प्रह्वी सत्या तथेशानाऽनुग्रहेति नव स्मृताः ॥" इति ॥१॥ तत्र चैकार्णवे पाद्मे ब्राह्मे । विश्वनाथस्तु यस्य पुरुषस्यांभसि स्वरोमकूपस्थे ब्रह्माण्डान्तरे एकैकप्रकाशेन प्रविश्य स्वसृष्टे गर्भोदे शयानस्य यस्यावयवानां संस्थानैः प्रदेशविशेषैर्लोकविस्तरः पातालादिसत्यांतभुवनविन्यास इत्ययं प्रथमः । पद्मनाभोऽनिरुद्धांशो गर्भोदशायी द्वितीयो ज्ञेयः।यस्तु पूर्वाध्याये "हरिविरिंचिहरेतिसंज्ञा" इत्यत्र हरिरिति पठितः स क्षीरोदशायीअनिरुद्धांशस्तृतीयः पुरुषो ज्ञेय इति पुरुषत्रयम् । अत्र प्रथमः प्रकृतेरंतर्यामी द्वितीयः समष्टिविराजस्तृतीयो व्यष्टीनामिति त्रय एवांशेनान्तर्यामिणः । तदुक्तं "एकं तु महतः स्रष्टृ" इत्यादिना । एवं चैतत्प्रकरणव्यंजिका महाविष्णोर्लीलाकथापरिपाटी चेयं यदैव तस्य पुनरपि प्रदेशविशेषे शयनेच्छाऽजनिष्ट तदा कारणार्णवे शयान एव स्वनिश्श्वासनिष्क्रमणप्रथमक्षणे स्वशक्तिं मायामैक्षिष्ट । तया च तदिंगितज्ञया तदिच्छावशालब्धसामर्थ्यया महत्तत्त्वादितत्त्वानि स्वत एव निष्कास्य ब्रह्माण्डं तैः सृष्ट्वा स्वप्रभुर्विज्ञाप्यते स्म। हे नाथ शयितुमागच्छेति । ततोसौ तत्र गत्वा निमेषमात्रं शयित्वा यदैव पुनरागतवांस्तदैव तद्ब्रह्माण्डं शयनमंदिरं निर्माल्यमिव माययैव स दूरी चकार । पुनरपि नवीनमंदिरे तं शाययितुमेवं च ब्रह्मणः परार्द्धद्वयं गच्छति स्म। तदुक्तं तृतीये "निमेष उपचर्यते" इति । संदर्भस्तु यस्य च तादृशत्वेन तत्र शयानस्य अवयवसंस्थानैः साक्षाच्छ्रीचरणादिसन्निवेशैः लोकस्य विस्तरो विस्तारो विराडाकारः प्रपञ्चः कल्पितः यथा तदवयवसन्निवेशास्तथैव "पातालमेतस्य हि पादमूलम्" इत्यादिना नवीनोपासकान्प्रति मनःस्थैर्याय प्रख्यापितः न तु वस्तुतस्तदेव तस्य रूपमित्यर्थः।यद्वा "चन्द्रमा मनसो जातः" "इत्यारभ्य "पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकानकल्पयत्" इत्यादिश्रुतेस्तैस्तैर्हेतुभूतैर्लोकाविस्तारो रचित इत्यर्थः । तथा च मोक्षधर्मे नारायणीये गर्भोदके शयानस्य रूपांतरेण श्वेतद्वीपपतेर्वाक्यम् "अस्मन्मूर्तिश्चतुर्थी या सासृजच्छेषमव्ययम् । स हि संकर्षणः प्रोक्तः प्रद्युम्नं सोप्यजीजनत् ॥ प्रद्युम्नादनिरुद्धोहं सर्गो मम पुनः पुनः । अनिरुद्धात्तथा ब्रह्मा तत्रादिकमलोद्भवः ॥ ब्रह्मणः सर्वभूतानि स्थावराणि चराणि च ।" तत्रैव वेदव्यासः "परमात्मेति यं प्राहुः साङ्ख्ययोगविदो जनाः । महापुरुषसंज्ञां स लभते स्वेन कर्मणा ॥ तस्मात्प्रभूतमव्यक्तं प्रधानं यद्विर्बुधाः । अव्यक्ताद्व्यक्तमुत्पन्नं लोकसृष्ट्यर्थमीश्वरात् ॥ अनिरुद्धो हि लोकेषु महानात्मेति कथ्यते । योऽसौ व्यक्तत्त्वमापन्नो निर्ममे च पितामहम्" इति । तदेवं संकर्षणस्य वैभवमुक्त्वाऽनिरुद्धस्याप्याह–अनिरुद्धो हीति । लोकेषु प्रत्येकब्रह्माण्डेषु महानात्मा परमात्मा व्यक्तत्वं प्राकट्यं प्रद्युम्नादिति शेषः । सूतेन त्वभेदविवक्षया प्रद्युम्नः पृथङ्नोक्तः । "विष्णोस्तु त्रीणि रूपाणि" इतिवत् । सेयं प्रक्रिया द्वितीयस्कन्धस्य षष्ठे दृश्यते । यथा "स एव आद्यः पुरुषः" इत्यादिग्रंथे टीका । स एवाद्यो भगवान् यः पुरुषावतारः सन् सृष्ट्यादिकं करोतीत्येषा । एवम् "आद्योऽवतारः पुरुषः परस्य" इत्यस्य टीका परस्यभूम्नः पुरुषः प्रकृतिप्रवर्त्तकः यस्य सहस्रशीर्षेत्याद्युक्तो लीलाविग्रहः स आद्योवतार इत्येषा । तथा तृतीयस्य विंशे "दैवेन" इत्यादिकं "सोनु" इत्यन्तं सटीकं प्रकरणमत्रानुसंधेयम् । तस्माद्विराट्त्वेन तद्रूपं न व्याख्येयं तस्माच्च वासुदेवस्थानीयो भगवान्पुरुषादन्य एवेत्यायातम् ॥२॥ अथ तस्य पुरुषस्य सामान्यत एकत्वेन स्वरूपमाह-तदिति ।तत् श्रीभवतः पौरुषं रूपं वै प्रसिद्धौ।विशुद्धोर्जितसत्त्वादिभिर्व्यक्तत्वाच्छाक्तिस्वरूपयो

पश्यंत्यदो रूपमदभ्रचक्षुषा सहस्रपादोरुभुजाननाद्भुतम् ॥ सहस्रमूर्द्धश्रवणाक्षिनासिकं सहस्रमौल्यंबरकुंडलोल्लसत् ॥ ४ ॥ एतन्नानावताराणां विधानं बीजमव्ययम् ॥ यस्यांशांशेन सृज्यंते देवतिर्यङ्नरादयः ॥ ५ ॥ स एव प्रथमो देवः कौमारं सर्गमास्थितः ॥ चचार दुश्चरं ब्रह्मा ब्रह्मचर्यमखंडितम् ॥ ६ ॥ द्वितीयं तु भवायाऽस्य रसातलगतां महीम् ॥ उद्धरिष्यन्नुपादत्त यज्ञेशः सौकरं वपुः ॥ ७ ॥ तृतीयमृषिसर्गं वै देवर्षित्वमुपेत्य सः ॥ तंत्रं सात्वतमाचष्ट नैष्कर्म्यं कर्मणां यतः ॥ ८ ॥

शेते स्म तदाह । तत्तस्य भगवतो रूपं तु विशुद्धं रजआद्यसंभिन्नमत एवोर्जितं निरतिशयं सत्त्वम् ॥ ३ ॥ एतच्च योगिनां प्रत्यक्षमित्याह । पश्यंतीति । अदभ्रमनल्पं ज्ञानात्मकं यच्चक्षुस्तेन । सहस्रमपरिमितानि यानि पादादीनि तैरद्भुतम् । सहस्रं मूर्धादयो यस्मिंस्तत् । सहस्रं यानि मौल्यादीनि तैरुल्लसच्छोभमानम् ॥ ४ ॥ एतत्तु कूटस्थं नत्वन्यावतारवदाविर्भावतिरोभाववदित्याह । एतदिति । एतदादिनारायणरूपम् । निधीयतेऽस्मिन्निति निधानम् । कार्यावसाने प्रवेशस्थानमित्यर्थः । बीजमुद्गमस्थानम् । बीजत्वेऽपि नान्यबीजतुल्यं किंत्वव्ययम् । न केवलमवताराणामेव बीजं किंतु सर्वप्राणिनामपीत्याह । यस्यांशो ब्रह्मा तस्यांशो मरीच्यादिस्तेन ॥ ५ ॥ सनत्कुमाराद्यवतारं तच्चरित्रं चाह । स एवेति । कौमार आर्षः प्राजापत्यो मानव इत्यादीनि सर्गविशेषनामानि । यः पौरूषं रूपं जगृहे स एव देवः कौमाराख्यं सर्गमास्थितः सन्ब्रह्मा ब्रह्मणो भूत्वा ब्रह्मचर्यं चचार । प्रथमद्वितीयादिशब्दा निर्देशमात्रापेक्षया॥६॥वराहावतारमाह । द्वितीयमिति । अस्य विश्वस्य भावायोद्भवाय । महीमुद्धरिष्यन्निति कर्मोक्तिः । एवं सर्वत्रावतारस्तत्कर्म चोक्तमित्यनुसंधेयम् ॥ ७ ॥ नारदावतारमाह । तृतीयमिति । ऋषिसर्गमुपेत्य तत्र च देवर्षित्वमुपेत्येत्यर्थः । सात्वतं वैष्णवं

रभेदाच्च तद्रूपमेवेत्यर्थः । उक्तं च द्वितीयं पुरुषव्यूहमधिकृत्य स्वरूपत्वं तद्रूपस्य "नातः परं परम यद्भवतः स्वरूपम्" इत्यत्र विशुद्धं जात्यंशेनापि रहितम् । स्वरूपशक्तिवृत्तित्वात् । ऊर्जितं सर्वतो बलवत् । परमानन्दरूपत्वात् । "को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात्" इति श्रुतेः । तस्मात्साक्षाद्भगवद्रूपे तु कैमुत्यमेवायातमिति ॥३॥ तदेव पुरुषस्य द्विधा स्थानकर्मणी उक्तं स्वरूपवदाकारं त्वेकप्रकारमाह-पश्यन्तीति । अदः पौरुषं रूपमदभ्रचक्षुषा भक्त्याख्येन "पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।" इत्युक्तेः । "भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति" इत्यादिश्रुतेश्च । प्रथमपुरुषस्य सहस्रपादादित्वं परमात्मसंदर्भे व्यंजितम् । तृतीयस्याष्टमं तु द्वितीयं पुरुषव्यूहमुपलक्ष्य "वेणुभुजांघ्रिपांघ्रेः" इति "दोर्दण्डसहस्रशाखम्" इति "किरीटसाहस्रहिरण्यशृंगम्" इति च । तथा नवमस्य चतुर्दशे "संहस्रशिरसः पुंसो नाभिह्रदसरोरुहात् । जातस्यासीत्सुतो धातुरत्रिः पितृसमो गुणैः" इति ॥४॥ कूटस्थं लयविक्षेपशून्यम् । इत्यर्थ इति । अंशिभूतमिति भावः॥५॥ अथ प्राचुर्येण तदवतारान्कथयंस्तदैक्यविवक्षया तदंशांशिनामप्याविर्भावमात्रं गणयति विंशत्या ।तत्र स एवेति योम्भसि शयानो यश्च सहस्रपादादिरूपः स एव पुरुषाख्यो देवः । "एते चांशकलाः सर्वे कृष्णस्तु भगवान्स्वयम्" इत्युपसंहारस्यापि संवादात् ।"ब्रह्मा विप्रो विधाता च" इत्यभिधानात् । निर्देशः कथनं तन्मात्रापेक्षया "निर्देशः शासनेऽपि स्यात्कथनोपान्तयोः" इति मेदिनी॥६॥सूकरस्येदं सौकरम्॥७॥तत्र च ऋषिसर्गेपि इत्यर्थ इति ।देवत्वे सति ऋषित्वं ब्रह्मपुत्रर्षित्वमिति भावः।"ये जाता ब्रह्मणो देहात्ते देवर्षय ईरिताः।सृष्ट्यादौ कर्दमाद्या वै देवता अपि ते स्मृताः" इत्युक्तेः । निष्कर्मशब्दे कर्मशब्दो भावप्रधानो ज्ञेयोऽत उक्तं निर्गतं कर्मत्वम् । इत्यर्थ इति ।"एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः । त एवात्मविनाशाय कल्पन्ते कल्पिताः परे" इत्यु

तुर्ये धर्मकलासर्गे नरनारायणावृषी ॥ भूत्वाऽऽत्मोपशमोपेतमकरोद्दुश्चरं तपः ॥ ९ ॥ पंचमः कपिलो नाम सिद्धेशः कालविप्लुतम् ॥ प्रोवाचाऽऽसुरये सांख्यं तत्त्वग्रामविनिर्णयम् ॥ १० ॥ षष्ठे अत्रेरपत्यत्वं वृतः प्राप्तोऽनसूयया ॥ आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान् ॥ ११ ॥ ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत ॥ स यामाद्यैः सुरगणैरपात्स्वायंभुवांतरम् ॥ १२ ॥ अष्टमे मेरुदेव्यां तु नाभेर्जात उरुक्रमः ॥ दर्शयन्वर्त्म धीराणां सर्वाश्रमनमस्कृतम् ॥ १३ ॥ ऋषिभिर्याचितो भेजे नवमं पार्थिवं वपुः ॥ दुग्धेमामौषधीर्विप्रास्तेनायं स उशत्तमः ॥ १४ ॥

तंत्रम् । पंचरात्रागमपाचष्टोक्तवान् । यतस्तंत्रान्निर्गतं कर्मत्वं बंधहेतुत्वं येभ्यस्तानि निष्कर्माणि तेषां भावो नैष्कर्म्यम् । कर्मणामेव मोचकत्वं यतो भवति तदाचष्टेत्यर्थः ॥ ८ ॥ नरनारायणावतारमाह । तुर्ये इति । तुर्ये चतुर्थेऽवतारे । धर्मस्य कलांशो भार्येत्यर्थः । "अर्धो वा एष आत्मनो यत्पत्नी" इति श्रुतेः । तस्याः सर्गे । ऋषी भूत्वेत्येकावतारत्वं दर्शयति ॥ ९ ॥ कपिलावतारमाह । पंचम इति । आसुरये तन्नाम्ने ब्राह्मणाय । तत्त्वानां ग्रामस्य संघस्य विनिर्णयो यस्मिन् शास्त्रे तत्सांख्यम् ॥ १० ॥ दत्तात्रेयावतारमाह । षष्ठमिति । अत्रेरपत्यत्वं तेनैव वृतः सन्प्राप्तः । "अत्रेरपत्यमभिकांक्षत आह तुष्टः" इति वक्ष्यमाणत्वात् । कथं प्राप्तः । अनसूयया मत्सदृशापत्यमिषेण मामेवापत्यं वृतवानिति दोषदृष्टिमकुर्वन्नित्यर्थः । आन्वीक्षिकीमात्मविद्याम् । प्रह्लादादिभ्यश्च । आदिपदाद्यदुहैहयाद्या गृह्यंते ॥ ११ ॥ यज्ञावतारमाह । तत इति । स यज्ञो यामाद्यैः स्वस्यैव पुत्रा यामा नाम देवास्तदाद्यैः सह स्वायंभुवं मन्वंतरं पालितवान् । तदा स्वयमिंद्रोऽभूदित्यर्थः ॥ १२ ॥ ऋषभावतारमाह । अष्टम इति । सर्वाश्रमनमस्कृतमंत्याश्रमं पारमहंस्यं वर्त्म धीराणां दर्शयन्नाभेराग्नीध्रपुत्रादृषभो जातः ॥ १३ ॥ पृथ्ववतारमाह । ऋषिभिरिति पार्थिवं वपुः राजदेहं पृथुरूपम् । पाठांतरे

त्कन्यायेन बंधकानामपि मोचकत्वमिति भावः ॥ ८ ॥ यद्यपि कलांशकः षोडशांशे वर्त्तते तथाप्यत्रार्द्धे एव ज्ञेयः । दायविभागप्रकरणे "कला ज्येष्ठाय दातव्या कलायामितरे सुताः" इति कलाऽर्द्धं ज्येष्ठाय पुत्राय दायाद्भागो देयः कलायामपरार्द्धभागे इतरे पुत्रा भागिन इत्यर्थः । "काला स्यादंशमात्रके" इति मेदिन्युक्तेर्वा कलाशब्दोऽर्धपरः । अत उक्तं भार्येत्यर्थ इति । वक्ष्यमाणश्रुतिप्रामाण्याद्भार्यैवार्धमिति भावः । यत्पत्नीति लोके कथ्यते एष आत्मनो देहस्यार्धोऽर्धभागः । यद्यपि समेंशकेऽर्धशब्दस्य क्लीबत्वं भवति तथाप्यत्रार्षत्वात्पुंस्त्वमिति भावः । "पुंस्यर्धोऽर्धं समेंऽशके" इत्यमरः । भूत्वेति व्यक्तिद्वयत्वेऽप्येकावतारतामाह ॥ ९ ॥ सिद्धेशः योगीश्वरः । "तत्त्वानां प्रकृत्यादीनां ग्रामः संघ "ग्रामः संघे चावसथे" इति कोशात् । "ऋषिं प्रसूतं कपिलम्" इति श्रुतावपि कपिलावतारो वर्णितः ॥ १० ॥ इत्यर्थ इति । भक्तवात्सल्येन भक्ताभीष्टसंपादकत्वादिति भावः । यद्वाऽनसूययाऽत्रिपत्न्या वृतः । तदुक्तं ब्रह्माण्डे पतिव्रतोपाख्याने "अनसूयाब्रवीन्नत्वा देवान्ब्रह्मेशकेशवान् । यूयं यदि प्रसन्ना मे वरार्हा यदि चाप्यहम् ॥ प्रसादाभिमुखाः सर्वे मम पुत्रत्वमेष्यथ" इति । श्रीविष्णोरेवावतारोऽयमिति । श्रुतिरपि "यं वै सूर्यं स्वर्भानुस्तमसाविध्यदासुरः । अत्र यस्तमन्वविंदन्न ह्यन्येऽशक्नुवन्" इति सूर्यमात्मानं स्वर्भानुर्माया तमसा विपर्ययेणाविध्यत् जीवत्वमनयत् । अत्रेरपत्यान्यात्रेयो दत्तात्रेयः बहुत्वं पूजार्थम् । तमात्मानं साक्षादीश्वरं ज्ञानवन्तम् । ईश्वरावतारत्वेन मायावशत्वाभावादित्यर्थः । अन्ये त्वविद्यावृतत्वान्न विदुरिति श्रुतिपदार्थः । अलर्काय राज्ञे । आदिना यदुग्रहः ॥ ११ ॥ ततस्तदनु आकूत्यां स्वायंभुवपुत्र्यां रुचेः प्रजापतेः यज्ञो नाम "तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे" इति श्रुतेः । इत्यर्थ इति । तदान्यस्य देवपालनासमर्थत्वात्स्वयमेवेंद्राधिकारं शिष्टत्वानिति भावः ॥ १२ ॥ मेरुदेवी नाभिनृपपत्नी तस्यां धीराणां ब्रह्मविद्यारतानाम् ॥ १३ ॥ पाठांतरे पार्थवमिति पाठे उप

रूपं स जगृहे मात्स्यं चाक्षुषोदधिसंप्लवे ॥ नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम् ॥ १५ ॥ सुरासुराणामुदधिं मथ्नतां मंदराचलम् ॥ दध्रे कमठरूपेण पृष्ठ एकादशे विभुः ॥१६॥ धान्वन्तरं द्वादशमं त्रयोदशममेव च ॥ अपाययत् सुरानन्यान्मोहिन्या मोहयन् स्त्रिया ॥१७॥ चतुर्दशं नारसिंहं बिभ्रद्दैत्येंद्रमूर्जितम् ॥ ददार करजैर्वक्षस्येरकां कटकृद्यथा ॥१८॥ पंचदशं वामनकं कृत्वाऽगादध्वरं बलेः ॥ पदत्रयं याचमानः प्रत्यादित्सुस्त्रिविष्टपम्॥१९॥अवतारे षोडशमे पश्यन्ब्रह्मद्रुहो नृपान् ॥ त्रिःसप्तकृत्वः कुपितो निःक्षत्रामकरोन्महीम्॥२०॥ ततः सप्तदशे जातः सत्यवत्यां पराशरात् ॥ चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः ॥२१॥ नरदेवत्वमापन्नः सुरकार्यचिकीर्षया॥समुद्रनिग्रहादीनि चक्रे वीर्याण्यतः परम्॥२२॥

पृथोरिदं पार्थवम् । ओषधीरित्युपलक्षणम् । इमां पृथ्वीं सर्वाणि वस्तूनि दुग्ध अदुग्ध अडागमाभावस्त्वार्षः । हे विप्रास्तेन पृथ्वीदोहनेन । सोऽयमवतार उशत्तमः कमनीयतमः । वशकांतावित्यस्मात् ॥ १४ ॥ मत्स्यावतारमाह । रूपमिति । चाक्षुषमन्वंतरे य उदधीनां संप्लवः संश्लेषस्तस्मिन् यद्यपि मन्वंतरावसाने प्रलयो नास्ति तथापि केनचित्कौतुकेन सत्यव्रताय माया प्रदर्शिता यथाकांडे मार्कण्डेयायेति द्रष्टव्यम् । महीमय्यां नावि । नौकारूपायां मह्यामित्यर्थः । अपाद्रक्षितवान् । वैवस्वतमिति भाविनी संज्ञा ॥ १५ ॥ कूर्मावतारमाह । कमठः कूर्मस्तद्रूपेणैकादशेऽवतारे विभुर्दध्रे दधार ॥ १६ ॥ धन्वंतर्यवतारमाह । धान्वंतरं धन्वंतरिरूपम् । द्वादशमादिप्रयोगस्त्वार्षः । त्रयोदशतममेव रूपं तच्चरितेन सह दर्शयति । अपाययदित्यत्र सुधामित्यध्याहारः । मोहिन्या स्त्रिया तद्रूपेणान्यानसुरान्मोहयन् धन्वंतरिरूपेणामृतमानीय मोहिन्याऽपाययदित्यर्थः ॥ १७ ॥ नृसिंहावतारमाह । नारसिंहं रूपं बिभ्रत् । एरकां निर्ग्रंथितृणम् ॥ १८ ॥ वामनावतारमाह । पंचदशमिति । दुष्टानां मदं वामयतीति वामनकं रूपम् । ह्रस्वं वा प्रत्यादित्सुस्तस्मादाच्छिद्य ग्रहीतुमिच्छुः ॥ १९ ॥ परशुरामावतारमाह । अवतार इति । त्रिस्त्रिगुणं यथा भवति तथा सप्तकृत्वः सप्तवारानेकविंशतिवारानित्यर्थः ॥ २० ॥व्यासावतारमाह । तत इति । अल्पमेधसोऽल्पप्रज्ञान्पुंसो दृष्ट्वा तदनुग्रहार्थं शाखाश्चक्रे ॥ २१ ॥ रामावतारमाह । नरेति । नरदेवत्वं राघवरूपेण

लक्षणं काकदधिरक्षणन्यायः । यथा तत्र न हि काकेभ्यो दधि रक्षित्वा वानरेभ्यो दीयते किं तु काकपदेन सर्वेभ्यो रक्षणमुक्तं तथात्रापीत्यर्थः ॥ १४ ॥ इत्यर्थ इति । भगवदिच्छया भूरेव नौकाभूदिति भावः । विष्णुधर्मोत्तरे तु "मन्वन्तरे परिक्षीणे कीदृशी द्विज जायते" इत्यादिवज्रप्रश्नांते मार्कण्डेयोत्तरम् "ऊर्मिमाली महावेगः सर्वमावृत्य तिष्ठति । भूर्लोकमाश्रितं सर्वं तदा नश्यति यादव॥न विनश्यन्ति राजेन्द्र विश्रुताः कुलपर्वताः।नौर्भूत्वा तु मही देवी" इत्यादिः। एवमेव "मन्वन्तरे तु संहारः"इत्यादिप्रकरणमत एव भागवतामृते प्रतिमन्वन्तर एव प्रलय उक्तः । श्रीहरिवंशे तदीयटीकासु च ।तदप्यत्र चाक्षुष एवेत्युक्तिः।सत्यव्रतस्य मनोर्मत्स्यदेवपरमभक्तत्वाद्भक्तोत्कर्षादेव भगवत्प्रादुर्भावस्याप्युत्कर्षस्याप्युत्कर्षात् । "भक्तेच्छोपात्तदेहाय" इत्यादिभिर्युक्तिसिद्धात् । सर्वमन्वन्तराण्युपलक्षयति ॥ १५॥ अमृतोत्पादनार्थमिति शेषः पातालं विशन्तं मन्दरगिरिम् ॥ १६ ॥ बिभ्रदिति शेषः । इत्यर्थ इति । अवतारद्वयकर्म चेत्थं ज्ञेयमिति भावः ॥ १७ ॥ निर्ग्रन्थिर्ग्रन्थिरहितोतिलंबायमानस्तृणाविशेषः । कटस्तृणास्तरणम् । ऊर्जितमतिबलिनम् ॥ १८ ॥ अध्वरो यागः ॥ १९ ॥ त्रयो वारा इति त्रिः । सुच्प्रत्ययः । सप्तवारान् इति सप्तकृत्वः । इत्यर्थ इति । त्रिगुणिताः सप्तैकविंशतिर्भवन्तीति भावः ॥ २० ॥ ततः सर्वव्यापी ॥ २१ ॥ समुद्रनिग्रहस्याद्यापि सेतुबन्धरूपेण दृश्यमानत्वात्तत्रैव च महैश्वर्यस्याविष्कराच्च । तस्यैव

एकोनविंशे विंशतिमे वृष्णिषु प्राप्य जन्मनी ॥ रामकृष्णाविति भुवो भगवानहरद्भरम् ॥ २३ ॥ ततः कलौ संप्रवृत्ते संमोहाय सुरद्विषाम् ॥ बुद्धो नाम्नाऽजनसुतः कीकटेषु भविष्यति ॥ २४ ॥ अथासौ युगसंध्यायां दस्युप्रायेषु राजसु ॥ जनिता विष्णुयशसो नाम्ना कल्किर्जगत्पतिः ॥२५॥ अवतारा ह्यसंख्येया हरेः सत्त्वनिधेर्द्विजाः ॥ यथाऽविदासिनः कुल्याः सरसः स्युः सहस्रशः ॥ २६ ॥ ऋषयो मनवो देवा मनुपुत्रा महौजसः ॥ कलाः सर्वे हरेरेव सप्रजापतयस्तथा ॥ २७ ॥ एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम् ॥ इंद्रारिव्याकुलं लोकं मृडयंति युगेयुगे ॥ २८ ॥

प्राप्तः सन् । अतः परमष्टादशे ॥२२॥ रामकृष्णावतारमाह । एकोनेति । विंशतितम इतिवक्तव्ये तकारलोपश्छंदोनुरोधेन । रामकृष्णावित्येवं नामनी जन्मनी प्राप्य॥२३॥ बुद्धावतारमाह । तत इति । अजनस्य सुतः । जिनसुत इति पाठे जिनोऽपि स एव । कीकटेषु मध्ये गयाप्रदेशे ॥ २४ ॥ कल्क्यवतारमाह । अथेति । युगसंध्यायां कलेरंते विष्णुयशसो ब्राह्मणात्सकाशाज्जनिता जनिष्यते ॥ २५ ॥ अनुक्तसर्वसंग्रहार्थमाह । अवतारा इति । असंख्येयत्वे दृष्टांतः । यथेति । अविदासिन उपक्षयशून्यात् । दसु उपक्षय इत्यस्मात् । सरसः सकाशात्कुल्याः क्षुद्रप्रवाहाः ॥ २६ ॥ विभूतीराह । ऋषय इति ॥ २७ ॥ तत्र विशेषमाह । एते चेति । पुंसः परमेश्वरस्य केचिदंशाः केचित्कला विभूतयश्च । तत्र मत्स्यादीनामवतारत्वेन सर्वज्ञत्वसर्वशक्तिमत्त्वेऽपि यथोपयोगमेव ज्ञानक्रियाशक्त्याविष्करणम् । कुमारनारदादिष्वाधिकारि

प्राधान्येन निर्देशः समुद्रनिग्रहादीनीति ॥ २२ ॥ भगवानिति । साक्षाच्छ्रीभगवत एवाविर्भावोऽयं न तु पुरुषसंज्ञस्यानिरुद्धस्येति विशेषप्रतिपत्त्यर्थम् । तत्र तस्य साक्षाद्रूपत्वात्कृष्णरूपेण निजांशरूपत्वाद्रामरूपेणापि भारहारित्वं भगवत एवेत्युभयत्रापि भगवानहरद्भरमिति श्लिष्टमेव । अतो रामस्याप्यनिरुद्धावतारत्वं प्रत्याख्यातम् । श्रीकृष्णस्य वासुदेवत्वाच्छ्रीरामस्य संकर्षणत्वात् युक्तमेव च तदिति ॥ २३ ॥ सुरद्विषां त्रिपुरवासिनां दैत्यानामयोग्यानां वेदमार्गे प्रवर्त्तमानानां संमोहाय मोहनाय कीकटेषु मगधेषु "निन्द्ये नीयवृति कीकट" इत्यभिधानात् । नीवृद्देशः स च " अंगवंगकलिंगेषु सौराष्ट्रमगधेषु च । तीर्थयोगं विना गत्वा पुनः संस्कारमर्हति" इत्यादिस्मृत्युक्तः ॥ २४ ॥ युगादावंशः युंगाते संध्या च भवति । तच्च तृतीयस्कन्धे वक्ष्यति "संध्यांशयोरन्तरेण" इत्यादिना । कलिं युगं जनानां क्लेशं वा कृणोति हिनस्तीति कल्किः । कृ हिंसायामत औणादिकडिप्रत्यये कलेरिकारलोपे रूपसिद्धेः ॥ २५ ॥ अथ श्रीहयग्रीवहरिहंसपृश्निगर्भविभुसत्यसेनवैकुण्ठाजितसार्वभौमविष्वक्सेनधर्मसेतुसुधामयोगेश्वरबृहद्भान्वादीनां शुक्लादीनां चानुक्तानां संग्रहार्थमाह—अवतारा इति । असंख्याताः सहस्रशः संभवंति । हि प्रसिद्धौ । असंख्येयत्वे हेतुः। सत्त्वनिधेः सत्त्वस्य स्वप्रादुर्भावशक्तेः शेवधिरूपस्य । तत्रैव दृष्टांतः यथेति । कुल्यास्तत्स्वभावकृतानिर्वारा अविदासिनः सहस्रशः संभवन्तीत्यर्थः । अत्र येंशावतारास्तेषु चैव विशेषो ज्ञेयः । श्रीकुमारनारदादिष्वाधिकारिकेषु ज्ञानशक्त्यंशावेशः श्रीपृथ्वादिषु क्रियाशक्त्यंशावेशः । क्वचित्तु स्वयमेवावेशस्तेषां भगवानेवाहमिति वचनात् । अथ श्रीमत्स्यदेवादिषु साक्षादंशत्वमेव । तत्रांशत्वं नाम साक्षाद्भगवत्त्वेप्यव्यभिचारितादृशतदिच्छावशात्सर्वदैवैकदेशतया वानभिव्यक्तशक्त्यादिकत्वमिति ज्ञेयम् । तथैवोदाहरिष्यते । रामादिमूर्त्तिषु कलानियमेन तिष्ठन्नानावतारमकरोदित्यादि । विश्वनाथस्तु सत्त्वानां शुद्धसत्त्वचिदंशानां निधेः । श्लेषेण तु पुरुषाद्या अवताराः ख्याता अन्ये तु न सम्यक्ख्याता वर्त्तंत एवेति ज्ञाप्यते । तदुक्तं प्रह्लादेन "इत्थं नृतिर्यगृषिदेवझषावतारैर्लोकान्विभावयसि हंसि जगत्प्रतीपान् । धर्मं महापुरुष पासि युगानुवृत्तं छन्नः कलौ यदभवस्त्रियुगोऽथ सत्त्वम् ।" इति । छन्नत्वादेवासंख्यात इत्यर्थः ॥ २६ ॥ अल्पशक्तेः प्रकाशत्वाद्विभूतित्वम् ॥ २७ ॥ तत्र तेषु अंशः शक्तिसमावेशः । कला ज्ञानप्रबोधनम् । "सर्वेश्वरोहमत्रैव राधिकाप्राणवल्लभः" इति नन्दिनीं सखीं प्रति श्रीकृष्णवाक्यमादिपुराणीयवृन्दावनमाहात्म्ये । अत्र संदर्भः । तदेवं परमात्मानं सांगमेव निर्द्धार्य प्रोक्तानुवादपूर्वकं

केषु यथोपयोगमंशकलावेशः तत्र कुमारादिषु ज्ञानावेशः । पृथ्वादिषु शक्त्यावेशः । कृष्णस्तु भगवान्साक्षान्नारायण एव आविष्कृतसर्वशक्तित्वात् । सर्वेषा प्रयोजनमाह ।

श्रीभगवन्तमप्याकारेण निर्द्धारयति ॥ एत इति एते पूर्वोक्ताः चादनुक्ताश्च प्रथममुद्दिष्टस्य पुंसः पुरुषस्यांशकलाः । केचित्स्वयमेवांशाः साक्षादंशत्वेनांशांशत्वेन द्विविधाः । केचिदंशाविष्टत्वादंशाः।केचित्तु कलाविभूतयः।इह यो विंशतितमावतारत्वेन कथितः कृष्णस्तु भगवान् एष पुरुषस्याप्यवतारी भगवानित्यर्थः । अत्र“अनुवादमनुक्त्वैव न विधेयमुदीरयेत्”इति दर्शनाच्छ्रीकृष्णस्यैव भगवत्त्वलक्षणो धर्मः साध्यते।न तु भगवतः श्रीकृष्णत्वमित्यायातम् । ततः श्रीकृष्णस्यैव भगवत्त्वलक्षणधर्मत्वे सिद्धे मूलत्वमेव सिध्यति न तु ततः प्रादुर्भूतत्वम् । एतदेव व्यनक्ति स्वयमिति । तत्र च स्वयमेव भगवान्न तु भगवतः प्रादुर्भूतत्वेन, न तु वा भगवत्त्वाध्यासेनेत्यर्थः । नचावतारप्रकरणे पठित इति संशयः । पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवदिति न्यायात् । यथा “अतिष्टोमे यद्युद्गाता विच्छिद्यादक्षिणेन यजते यदि प्रतिहर्त्ता सर्वस्वदक्षिणेन” इति श्रुतेः । तयोश्च कदाचिद्द्वयोरपि विच्छेदे प्राप्ते विरुद्धयोः प्रायश्चित्तयोः समुच्चयासंभवं च प्रायश्चित्तं सिद्धांतितं तद्वदिहापीति । अथवा “कृष्णस्तु भगवान्स्वयम्” इति श्रुत्या प्रकरणस्य बाधः । यथा शंकरशारीरिकभाष्ये “श्रुत्यादिबलीयस्त्वाच्च न बाधाः” इति सूत्रे “ते हैते विद्याचित एव” इति श्रुतिर्मनश्चिदादीनामग्नीनां प्रकरणप्राप्तं क्रियानुप्रवेशलक्षणमस्वातंत्र्यं बाधित्वा विद्यात्वेनैव स्वातंत्र्यं स्थापयति तद्वदिहापि इति । अत एतत्प्रकरणमप्यत्र क्वचिदपि भगवच्छब्दमकृत्वा तत्रैव भगवानिति भगवानहरद्भरमिति कृतवान् । ततश्चास्यावतारेषु गणना तु स्वयं भगवानप्यसौ स्वरूपस्थ एव निजपरिजनवृन्दानामानन्दविशेषचमत्काराय किमपि माधुर्य्यं निजजन्मादिलीलया पुष्णन् कदाचित्सकललोकदृश्यो भवतीत्यपेक्षयैवेत्यागतम् । यथोक्तं ब्रह्मसंहितायां “रामादिमूर्त्तिषु कलानियमेन तिष्ठन्नानावतारमकरोद्भुवनेषु किन्तु । कृष्णः स्वयं समभवत्परमः पुमान्यो गोविंदमादिपुरुषं तमहं भजामि” इति । अवतारश्च प्राकृतवैभवेऽवतरणमिति कृष्णसाहचर्याद्रामस्यापि पुरुषांशतात्पर्यो ज्ञेयः । अत्र तुशब्दोंशकलाभ्यः पुंसश्च सकाशाद्भगवतो वैलक्षण्यं बोधयति । यद्वानेन तुशब्देन सावधारणा श्रुतिरियं प्रतीयते । ततश्च सावधारणा श्रुतिर्बलतीति न्यायेन श्रुत्यैव श्रुतमप्यन्येषां महानारायणादीनां स्वयं भगवत्त्वं गुणीभूतमापद्यते । एवं पुंस इति भगवानिति च प्रथममुपक्रमोद्दिष्टस्य तस्य शब्दद्वयस्य तत्सहोदरेण तेनैव चशब्देन प्रतिनिर्देशात्तावेव खल्वेताविति स्मारयति । उद्देशप्रतिनिर्देशयोरप्रतीतिः स्थगितता तन्निरसनाय विद्वद्भिरेक एव शब्दः प्रयुज्यते तत्समो वा । यथा ज्योतिष्टोमाधिकारे “वसन्ते ज्योतिषा यजेत” इत्यत्र ज्योतिःशब्दो ज्योतिष्टोमविषयो भवतीति । इंद्रारीति पद्यार्द्धे तत्र नान्वेति । तुशब्देन वाक्यस्य भेदात् । तच्च तावतैवाकांक्षापरिपूर्तेः । एकवाक्यत्वे तु चशब्द एवाकारिष्यत।ततश्चेंद्रारीत्यत्रार्थात एव पूर्वोक्ता मृडयंतीत्यायाति । अत्र विशेषजिज्ञासायां कृष्णसंदर्भो दृश्यः । अत्र विश्वनाथः । नन्वेषां सर्वेषां तुल्यत्वमेवास्ति वा तारतम्यमित्यपेक्षायामाह—एते चेति । एते पूर्वोक्ताः चादनुक्ताश्च पुंसः प्रथमनिर्दिष्टस्य पुरुषस्यांशकलाः । केचिदंशा मत्स्यकूर्मवराहाद्याः केचित्कलाः कुमारनारदाद्याः आवेशाः तदुक्तं भागवतामृते “ज्ञानशक्त्यादिकलया यत्राविष्टो जनार्दनः । त आवेशा निगद्यन्ते जीवा एव महत्तमाः ॥ वैकुंठेऽपि यथा शेषो नारदः सनकादयः ॥” तथा पाद्मे “आविष्टोभूत्कुमारेषु नारदे च हरिर्विभुः । ” तथा तत्रैव“आविवेश पृथुं देवः शंखी चक्री चतुर्भुजः” इति । “एतत्ते कथितं देवि जामदग्नेर्महात्मनः । शक्त्यावेशावतारस्य चरितं शार्ङ्गिणः प्रभोः” इति । “कलेरन्ते च संप्राप्ते कल्किनं ब्रह्मवादिनम्।अनुप्रविश्य कुरुते वासुदेवो जगत्स्थितिम्” इति । अत्र कुमारनारदादिषु ज्ञानभक्तिशक्त्यंशावेशः । पृथ्वादिषु क्रियाशक्त्यंशावेशः । ते चावेशा महाशक्त्याऽल्पशक्त्या चेति द्विविधाः । प्रथमाः कुमारनारदाद्या अवतारशब्देनोच्यन्ते । द्वितीया मरीचिमन्वाद्या विभूतिशब्देनेति भेदो ज्ञेयः । इह यो विंशतितमावतारत्वेन कथितः स कृष्णस्तु भगवान्न त्वंशो न चांशी पुरुषः किं तु भगवान् । “जगृहे पौरुषं रूपं भगवान्महदादिभिः” इति पद्योक्तो यः पुरुषस्यावतारी भगवान्स एवेत्यर्थः।“अनुवादमनुक्त्वैव न विधेयमुदीरयेत्”इति दर्शनात्कृष्णस्यैव भगवल्लक्षणो धर्मः साध्यते।न तु भगवतः कृष्णत्वं तेन कृष्ण एव भगवान्मूलभूत इति तदेव पुनः स्पष्टीकुर्वन्नाह-स्वयमिति।तेन पुरुषावतारिणो भगवतो महानारायणादपि कृष्णस्योत्कर्षः साधितः । अत एव छान्दोग्ये पंचमप्रपाठके “ज्यायांश्च पुरुषः सर्वं खल्विदं ब्रह्म यत्प्राणा आदित्याः” इत्याद्युक्त्वा पश्चादुपसंहृतं “कृष्णाय देवकीपुत्राय”इत्यादिना । तेनात्रं पुरुषादिभ्योऽपि श्रेष्ठो देवकीपुत्र एव ज्ञेयः । तदप्यवतारमध्ये तस्य गणनं तु भूर्लोकस्थमथुरादिधामविलासित्वान्नरलीलत्वात्प्रापंचिकलोकेषु करुणाधिक्यादाविर्भावतिरोभावाभ्याञ्च । तथा च गोपालतापनीश्रुतिः “सहोवाचाब्जयोनिरवताराणां मध्ये श्रेष्ठोऽवतारः को भविता येन लोकास्तुष्यंति देवास्तुष्टा भवंति यं स्मृत्वा मुक्ता अस्मात्संसाराद्भवंन्ति” इति । ननु “तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणि शंस नः” इति । “दिष्ट्यांब

ते कुक्षिगतः परः पुमानंशेन साक्षाद्भगवान्भवायनः''इति ''ताविमौ वै भगवतो हरेरंशाविहागतौ'' इत्यादिबहुवाक्यविरोधे''कृष्गस्तु भगवान्स्वयम्''इत्येकेनैव वाक्येन कृष्णस्य पूर्णत्वं कथं व्यवतिष्ठताम्।अत्रोच्यते । श्रीभागवतशास्त्रारंभे जन्मगुह्याध्यायोयं सर्वभगवदवतारवाक्यानां सूचकत्वात्सूत्रम्।तत्र च''एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्'' इति परिभाषासूत्रम् । यत्रयत्रावताराः श्रूयन्ते तत्रान्यान्पुरुषांशत्वेन जानीयात् । कृष्णस्तु स्वयं भगवत्त्वेनेति प्रतिज्ञारूपमिदं सर्वत्रोपतिष्ठेत।परिभाषा ह्येकदेशस्था सकलं शास्त्रमभिप्रकाशयति यथा वेश्मप्रदीप इति प्राञ्चः।सा च शास्त्रे सकृदेव पठयते । न त्वभ्यासेनेति वाक्यानां कोटिरप्यनेनैकेनापि महाराजचक्रवर्त्तीनेव शासनीया भवेदित्येतद्विरुद्धायमानानां तेषां वाक्यानामेतदनुगुणार्थतैव तत्रतत्र व्याख्येया।किं च तेषां वाक्यानां प्राकरणिकत्वेन दुर्बलत्वात्।अस्य तु श्रुतिरूपत्वेन प्रबलत्वात् ''श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्'' इति न्यायेन तान्येवार्थांतरतया संगमनीयानि न तु तदनुरोधेनैतदित्यतः श्रीधरस्वामिपादैरपि तत्रतत्र तथैव समाहितमिति । ननु मत्स्यकूर्माद्यवताराणां कृष्णस्य च द्विभुजत्वचतुर्भुजत्वबालत्वकिशोरत्वाद्याकाराणां च सर्वेषां च नित्यत्वश्रवणादनेकेश्वरत्वप्रसक्तिः । मैवम् ''बहुमूर्त्यैकमूर्त्तिकम्'' इति दशमात्।यथैकस्यैव जीवस्य कालभेदेनाल्पशक्तिकबहुशक्तिकत्वेन नश्वरस्वभिन्नविग्रहधारित्वं प्रतीयते । एवमेकस्यैवेश्वरस्य सर्वव्यापकस्याचिंत्यशक्त्या यौगपद्येनैवानन्तानित्यस्वाभिन्नविग्रहधारित्वम् जीवानामनन्तानामानन्त्यमीश्वरस्य चैकस्यैवानंत्यमिति जीवदृष्टयैव तद्विलक्षण ईश्वरश्च प्रत्येतव्य इति।नन्वानन्दमात्रस्य चिद्वस्तुनो व्यापकस्य परमेश्वरस्य किं नामांशित्वमंशत्वं वा परिच्छिन्नस्यैव वस्तुनो भागविभागादिसंभवात् । तदुक्तं महावाराहे ''सर्वे नित्याः शाश्वताश्च देहास्तस्य परात्मनः । हानोपादानरहिता नैव प्रकृतिजाः क्वचित् ॥ परमानन्दसंदोहाज्ज्ञानमात्राश्च सर्वतः । सर्वे सर्वगुणैः पूर्णाः सर्वे दोषविवर्जिताः'' इति । सत्यम्।तदपि तस्य माधुर्यैश्वर्यकारुण्यादिशक्तिप्राकट्यतारतम्येनैवांशत्वपूर्णत्वव्यवस्था । आविर्भावितपूर्णसर्वशक्तित्वं पूर्णत्वम् । आविर्भावितयथाप्रयोजनाल्पशक्तित्वमंशत्वम् । तदुक्तं भागवतामृते ''शक्तेर्व्यक्तिस्तथाव्यक्तिस्तारतम्यस्य कारणम्'' इति । ''शक्तिः समापि पुर्य्यादिदाहे दीपाग्निपुञ्जयोः । शीताद्यार्त्तिक्षये चाग्निपुंजादेव सुखं भवेत् ॥'' इति । एवं च पूर्णत्वांशत्वाभ्यामुत्कर्षापकर्षौ महानुभावमुनीनामप्यनुभवसिद्धौ ज्ञेयौ। यथा तृतीये''आसीनमुर्व्यां भगवंतमाद्यं संकर्षणं देवमकुंठधिष्ण्यम् । विवित्सवस्तत्त्वमतः परस्य कुमारमुख्या मुनयोन्वपृच्छन्॥ स्वमेव धिष्ण्यं बहु मानयंतं यं वासुदेवाभिधमामनन्ति'' इति । अतश्चिद्वस्तुनोंशांशित्वभेदो न विरुद्धः । तदुक्तं वाराहे ''स्वांशाश्चाथ विभिन्नांश इति द्वेधांश इष्यते'' इत्यादि । तत्र मत्स्यादनामवतारत्वेन सर्वज्ञत्वसर्वशक्तित्वेपि यथोपयोगमेव ज्ञानक्रियाशक्त्याविष्कारणं कुमारनारदादिष्वाधिकारिकेषु यथोपयोगमंशकलावेश इति श्रीधरस्वामिपादाः । अत्र प्राचां कारिकाः ''नृसिंहो जामदग्न्यश्च कल्की पुरुष एव च । भगवत्त्वे च तत्रादेरैश्वर्यस्य प्रकाशकाः ॥ नारदोथ तथा व्यासो वाराहो बुद्ध एव च । धर्माणामेव वैविध्यादमी धर्मप्रदर्शकाः ॥ रामो धन्वन्तरिर्यज्ञः पृथुः कीर्त्तिप्रदर्शिनः । बलरामो मोहिनी च वामनः श्रीप्रधानकाः ।'' श्रीरत्र सौन्दर्यम् ''दत्तात्रेयश्च मत्स्यश्च कुमारः कपिलस्तथा । ज्ञानप्रदर्शका एते विज्ञातव्या मनीषिभिः ॥ नारायणो नरश्चेति कूर्मश्च ऋषभस्तथा । वैराग्यदर्शिनो ज्ञेयास्तत्तत्कर्मानुसारतः ॥ कृष्णः पूर्णषडैश्वर्यमाधुर्याणां महोदधिः । अंतर्भूतसमस्तावतारो निखिलशक्तिमान् ॥'' इति । गर्गसंहितायां तु ''अंशांशोंशस्तथावेशः कला पूर्णः प्रकथ्यते । व्यासाद्यैश्च स्मृतः षष्ठः परिपूर्णतमः स्वयम् ॥ अंशांशास्तु मरीच्यादिरंशो ब्रह्मादयस्तथा । कलाः कपिलकूर्माद्या आवेशा भार्गवादयः ॥ पूर्णो नृसिंहो रामश्च श्वेतद्वीपाधिपो हरिः । वैकुंठोपि तथा यज्ञो नरनारायणः स्मृतः ॥ परिपूर्णतमः साक्षाच्छ्रीकृष्णो भगवान्स्वयम् ॥ असंख्यब्रह्मांडपतिर्गोलोके धाम्नि राजते । कार्याधिकारं कुर्वंतः सदांशास्ते प्रकीर्त्तिताः ॥ तत्कार्यभारं कुर्वंतस्तेंशांशा विदिताः प्रभोः ॥ येषामंतर्गतो विष्णुः कार्यं कृत्वा विनिर्गतः । तानावेशावतारांश्च विद्धि राजन्महामते ॥ धर्मं विज्ञाप्य कृत्वा यः पुनरन्तरधीयत । युगेयुगे वर्तमानं सोवतारः कला हरेः ॥ चतुर्व्यूहो भवेद्यत्र दृश्यंते च रसा नव । अतः परं च वीर्याणि स तु पूर्णः प्रकथ्यते ॥ यस्मिन्सर्वाणि तेजांसि विलीयन्ते स्वतेजसि । तं वदन्ति परं ज्ञानं परिपूर्णतमं स्वयम् ॥ '' इति । किञ्च ''अंशांशोभ्यः समुन्मील्य पूर्णरूपकलायुतः । श्रीकृष्णचन्द्रो भगवान्'' इति सम्मोहनतन्त्रे श्रीशङ्करोक्तेश्च । श्रीकृष्ण एव परिपूर्णतमः । सर्वेषां साधारणं प्रयोजनमाह–इंद्रारीति । यद्वा ''इंद्रो मायाभिः पुरुरूप ईयते'' इह श्रुतावि

जन्मगुह्यं भगवतो य एतत्प्रयतो नरः ॥ सायं प्रातर्गृणन्भक्त्या दुःखग्रामाद्विमुच्यते ॥ २९ ॥ एतद्रूपं भगवतो ह्यरूपस्य चिदात्मनः ॥ मायागुणैर्विरचितं महदादिभिरात्मनि ॥ ३० ॥ यथा नभसि मेघौघो रेणुर्वा पार्थिवोऽनिले ॥ एवं द्रष्टरि दृश्यत्वमारोपितमबुद्धिभिः ॥ ३१ ॥ अतः परं यदव्यक्तमव्यूढगुणव्यूहितम् ॥ अदृष्टाश्रुतवस्तुत्वात्स जीवो यत्पुनर्भवः ॥ ३२ ॥

इंद्रारयो दैत्यास्तैर्व्याकुलमुपद्रुतं लोकं मृडयंति सुखिनं कुर्वंति ॥ २८ ॥ एतत्कीर्तनफलमाह । जन्मेति । गुह्यमतिरहस्यं जन्म । प्रयतः शुचिः सन् दुःखग्रामात्संसारात ॥ २९ ॥ विमुच्यत इति यदुक्तं तत्र कथं देहद्वयसंबंधे सति तद्विमुक्तिरित्याशंक्य देहद्वयसंबंधस्य भगवन्मायोत्थाविद्याविलसितत्वादेतच्छ्रवणादिजनितविद्यया तन्निवृत्ति रुपपद्यत इत्याशयेनाह । एतदितिपंचभिः । अरूपस्य चिदेकरसस्यात्मनो जीवस्यैतत्स्थूलं रूपं शरीरं भगवतो या माया तस्या गुणैर्महदादिरूपैर्विरचितम् । क्व । आत्मनि आत्मस्थाने शरीरं कृतमित्यर्थः ॥ ३० ॥ कथमित्यपेक्षायां स्वरूपावरणेन तदध्यासत इति सदृष्टांतमाह । यथेति । यथा वाय्वाश्रितो मेघौघो नभस्याकाशेऽबुद्धिभिरज्ञैरारोपितः । यथा वा पार्थिवो रेणुस्तद्गतं धूसरत्वायनिले एवं द्रष्टर्यात्मनि दृश्यत्वं दृश्यत्वादिधर्मकं शरीरमारोपितमित्यर्थः॥ ३१ ॥ किंच । अतः स्थूलाद्रूपात्परमन्यदपि रूपमारोपितमित्यनुषंगः । कथंभूतं तत् । यदव्यक्तं सूक्ष्मम् । तत्र हेतुः । अव्यूढगुणव्यूहितं व्यूहः करचरणादिपरिणामः न तथा अव्यूढा अपरिणताः ये गुणास्तैर्व्यूहितं रचि

द्रूपदमात्मपरं दृश्यते । तथाचेंद्र आत्मा तदरयः कामादयस्तज्ज्ञानप्रतिबन्धकत्वात्तैरुपद्रुतं लोकं विश्वं ज्ञानोपदेशेन मृडयन्ति स्वदत्तज्ञानेन संसारात्तारयन्तीत्यर्थः । एतच्च सर्वावतारैः कृतमित्यनुसंधेयं तत्तच्चरिते ॥ २८ ॥ जन्मान्याविर्भावाः गुह्यान्यनधिकारिजनाद्गूहितुं योग्यानि यस्मिन्नध्याये स जन्मगुह्यस्तं "पवित्रः प्रयतः पूतः" इत्यमरः । गृणन्भवेदिति शेषः ॥ २९ ॥ तत्रेति वाक्यालंकारे तद्विमुक्तिर्दुःखग्रामाद्विमुक्तिः । 'विद्याविद्ये मम तनू मायया मे विनिर्मिते" इत्युक्तेरविद्यापि भगवन्मायात एवोत्तिष्ठते । एतच्छ्रवणादिना जन्मगुह्याध्यायश्रवणादिना जनिता या विद्या तया तन्निवृत्तिः संसारनिवृत्तिः । आदिना पाठविचारादिग्रहः । इत्यर्थ इति । स्थूलरूपस्यारोपितत्वादवास्तवमेव । तदिति तन्निवृत्तिरपि संपत्स्यत इति भावः । अत्र विश्वनाथः । ननु "पातालमेतस्य हि पादमूलम्" इत्यादिना द्वितीयस्कंधे योयं विराट्रूपी भगवान्प्रथममुपास्यत्वेनोक्तः स कथमवतारमध्ये न गणितस्तत्राह—एतत्समष्टिव्यष्टिविराडात्मकं जगच्चिदात्मनश्चिन्मयविग्रहस्य अत एवारूपस्य प्राकृतरूपरहितस्य भगवतो रूपं स्थूलशरीरम् । किं तु मायागुणैर्महदादिभिः पृथिव्यंतैस्तत्त्वैर्विरचितमात्मनि स्वस्मिन्नंतर्याम्यधिष्ठाने स्थितमित्यर्थः । अतो विशुद्धसत्त्वरूपमत्स्यकूर्माद्यवतारमध्ये मायिकरूपी विराडेष न पठित इति भावः । संदर्भस्तु तदेवमेतानि साक्षाद्रूपाण्याविष्टरूपाणि चोपदिश्योपासनार्थं शास्त्रेण भगवत्यारोपितं रूपमुपदिशति । एतद्रूपमिति । अरूपस्य प्राकृतरूपासंबद्धस्य मायागुणैर्विरचितमेवेतज्जगदाकारं रूपम् तच्चात्मनि जीवे एव विरचितं तत्संबंधतयैव कल्पितं न तु परमेश्वरसंबंधतयेत्यर्थः । आसंगादनासंगाच्चेति भावः ॥ ३० ॥ इत्यर्थ इति । अज्ञानेनारोपितत्वादज्ञाननिवृत्तौ तन्निवृत्तिरपि संगच्छत एवेति भावः ॥ विश्वनाथस्तु । कस्मिन्किमित्यपेक्षायामाह—यथेति । एतद्विराड्रूपमिति पूर्वेणान्वयः । तेन यथा मंचस्थः पुरुषो मंच उच्यते तथा भगवति स्थितो विराडपि भगवानुच्यते । एवमेवाधिष्ठितधर्मो दृश्यत्वमपि द्रष्टरि भगवत्यदृश्येप्यारोपितमित्यर्थः । अबुद्धिभिरल्पबुद्धिभिः यथाऽदृश्ययोरपि नभोनिलयोर्नीलं नभ इति धूसरोऽनिल इति मेघरेणुधर्मो नीलिमधूसरत्वलक्षणं दृश्यत्वमारोपितम् । ततश्च भगवानयं विराट् दृश्यः प्रथमदशास्थैर्योगिभिराराध्य इत्युपपन्नम् ॥ ३१ ॥ अन्यदाह किं चेति ॥ पूर्ववाक्यस्थपदानुवर्त्तनमनुषंगः । तत्र सूक्ष्मत्वे । इत्यर्थ इति । आकारवद्वस्त्वैव व्यक्तं भवति । तस्य तद्राहितत्वात्तथात्वमुचितमेवेति भावः । एतदेवाव्यक्तत्वमेव । इत्यर्थ इति । संभाव्यत एव न तु दृश्यत इति भावः ।

**यत्रेमे सदसद्रूपे प्रतिषिद्धे स्वसंविदा ॥ अविद्ययाऽऽत्मनि कृते इति तद्ब्रह्मदर्शनम् ॥ ३३ ॥**

तम् । आकारविशेषरहितत्वादव्यक्तमित्यर्थः । एतदेव कुतस्तत्राह । अदृष्टाश्रुतवस्तुत्वाद्यद्याकारविशेषवद्वस्तु तदस्मदादिवद्दृश्यते श्रूयते वा इंद्रादिवत् । इदं तु न तथा । तर्हि तस्य सत्त्वे किं प्रमाणं तत्राह । सजीवः जीवोपाधिः । जीवो जीवेन निर्मुक्तो जीवो जीवं विहायेत्यादौ जीवोपाधौ लिंगदेहे जीवशब्दप्रयोगात् । जीवोपाधितया कल्प्यत इत्यर्थः । ननु स्थूलमेव भोगायतनत्वाज्जीवस्योपाधिरस्तु किमन्यकल्पनयेत्यत आह । यद् यस्मात्सूक्ष्मात्पुनर्भवः पुनर्जन्म उत्क्रांतिगत्यागतीनां तेन विनासंभवादितिभावः ॥३२॥ तदेवमुपाधिद्वयमुक्त्वा तदपवादेन जीवस्य ब्रह्मतामाह । यत्रेति । यत्र यदा इमे स्थूलसूक्ष्मे रूपे स्वसंविदा श्रवणमननादिभक्त्या स्वरूपसम्यग्ज्ञानेन प्रतिषिद्धे भवतः । ज्ञानेन प्रतिषेधार्हत्वे तमेव हेतुमाह । अविद्ययात्मनि कृते कल्पिते इति हेतोः तद्ब्रह्म तदा जीवो ब्रह्मैव भवतीत्यर्थः । कथंभूतम् । दर्शनं

अत्राक्षिपति नन्विति । इति भाव इति । स्थूलदेहस्तु न कुत्रापि परलोकादौ गमनागमनं करोति । तस्यात्रैव स्थितिदर्शनात् । अतस्तदेव यातनादेहादौ प्रविष्टं गमनागमनादिमदिति तात्पर्यम् । अत्र संदर्भः । तस्य यथा स्थूलं रूपं तथा सूक्ष्ममपीत्याह--अतः परमिति । अतः स्थूलात् । सूक्ष्मत्वे हेतुः अदृष्टेति । अदृष्टत्वादश्रुतमित्यन्यतोऽप्यश्रुतत्वाच्चेत्यर्थः । तत्र हेतुः अव्यूढेति । अस्पष्टशब्दादिगुणमित्यर्थः । यद्यस्मा देकरूपाद्धेतोः यदंशावेशेनैवेत्यर्थः । स जीवन् पुनर्भवो भवति पुनःपुनर्जन्मादिकं लभत इत्यर्थः । तदपि मायागुणैर्विरचितमिति पूर्वेणानुषंगः । पूर्ववदुपासनार्थमेवेदं रूपमारोपितमिति भावः । वक्ष्यते च " अमुनी भगवद्रूपे मया ते अनुवर्णिते । उभे अपि न गृह्णंति मायासृष्टे विपश्चितः " इति । विश्वनाथस्तु । यथा स्थूलं रूपं भगवद्रूपत्वेनोक्तमपि योगिभिरुपास्यमपि मायागुणैर्विरचितं तथैव सूक्ष्ममपि रूपम् । "अमुनी भगवद्रूपे" इत्यनेन भगवद्रूपत्वेन प्रयुक्तमपि "कर्णौ दिशः श्रोत्रममुष्य शब्दः" इति । "सर्वात्मनोन्तःकरणं गिरित्रम्" इत्याद्युक्तेर्योगिभिरुपास्यमपि मायिकमेवेत्याह—अतः स्थूलादित्यादि सर्वं स्वामिवद्व्याख्यातम् । तेन च समष्टिव्यष्टिविराजां जीवत्वात्तत्स्थूलसूक्ष्मरूपयोर्मायिकत्वात्तत्र चेश्वरत्वमारोपितमेव न तु साहजिकमिति भावः । यदुक्तं "विराट् हिरण्यगर्भश्च कारणं चेत्युपाधयः । ईशस्य यत्त्रिभिर्हीनं तुरीयं तत्प्रचक्षते" इति । अत्रापि वक्ष्यते "अमुनी भगवद्रूपे" इत्यादिना ॥ ३२ ॥ तमेव मायागुणैर्विरचितमेव । इत्यर्थ इति । उपाधिनिवृत्त्या निरुपाधि शुद्धं ब्रह्मैव जायत इति भावः । अत्र विश्वनाथः । नन्वेवं चेदिदं सर्वं वस्तुतो मायादर्शनमेव ब्रह्मदर्शनं किमित्यपेक्षायामाह। यत्र भगवति मे सदसद्रूपे उक्तलक्षणे मायिके स्थूलसूक्ष्मरूपे प्रतिषिद्धे भवतः । तेनामायिकं रूपं तस्य न प्रतिषिद्धं भवतीति भावः । केन स्वेषां भक्तानां संविदाऽनुभवेन । ते कथं भगवति न स्त इत्यत आह । अविद्ययाऽऽत्मनि जीव एव कृतेऽध्यस्ते न त्वीश्वरे । तदुक्तं "देहाहंकरणाद्देहाध्यासो जीवे ह्यविद्यया । न तथा जगदध्यासः परमात्मनि युज्यते " इति । तत् ततश्च तस्य ब्रह्मणो दर्शनं साक्षात्कारः स्यात् । यद्येषा माया देवी उपरता स्यात् । तथा वैशारदी विशारदो भक्तानां हिते निपुणो भगवानेव तदीया मतिर्मामयं पश्यत्विति कृपामयी तदिच्छा यदि प्रवृत्ता स्यात्तदैव नान्यथा "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम्" इति श्रुतेः । यद्वा वैशारदी भगवद्विषयिणी पुरुषस्य स्यादिति । संदर्भस्तु "यत्र स्वसंविदा" इत्युक्त्या जीवस्वरूपज्ञानमपि तदाश्रयमेव भवतीति । तथा केवलस्वसंविदा ते न निषिद्धे भवत इति च ज्ञापितम् । ततश्च जीवत एवाविद्याकल्पितमायाकार्यसंबंधमिथ्यात्वज्ञापकजीवस्वरूपसाक्षात्करणतादात्म्यापन्नब्रह्मसाक्षात्कारो जीवन्मुक्तिविशेष इत्यर्थः । ईदृशमेव तन्मुक्तिलक्षणं कापिलेये "मुक्ताश्रयं यर्हि" इत्यादिचतुष्टये दर्शितम् । तस्मादस्य प्रारब्धकर्ममात्राणामनभिनिवेशेनैवोपभोगः । एवमेवोक्तं "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इति । स्वामिचरणास्तु यद्यप्यविद्यानिवृत्तौ ब्रह्मत्वमुक्तं तथापीति । अत्राशयमाह—अयं भाव इति । यावन्मायाऽविद्यारूपेण । विश्वनाथस्तु संपन्न एव तन्मतिमानेव पुरुषः संपन्नोऽन्यस्तु दरिद्र इत्यर्थः । विदुस्तज्ज्ञाः स्वे महिम्नि स्वीये माहात्म्ये वर्तमानः स महीयते पूज्यतेऽन्यथा स्वमाहात्म्याद्भ्रष्टः स

यद्येषोपरता देवी माया वैशारदी मतिः ॥ संपन्न एवेति विदुर्महिम्नि स्वे महीयते ॥ ३४ ॥ एवं जन्मानि कर्माणि ह्यकर्तुरजनस्य च ॥ वर्णयंति स्म कवयो वेदगुह्यानि हृत्पतेः ॥ ३५ ॥ स वा इदं विश्वममोघलीलः सृजत्यवत्यत्ति न सज्जतेऽस्मिन् ॥ भूतेषु चांतर्हित आत्मतंत्रः षाड्वर्गिकं जिघ्रति षड्गुणेशः ॥ ३६ ॥



ज्ञानैकस्वरूपम् ॥ ३३ ॥ तथापि भगवन्मायायाः संसृतिकारणभूताया विद्यमानत्वात्कथं ब्रह्मता तत्राह । यदीति । यदीत्यसंदेहे संदेहवचनम् । यदि वेदाः प्रमाणं स्युरितिवत् । वैशारदी विशारदः सर्वज्ञः ईश्वरस्तदीया देवी संसारचक्रेण क्रीडन्ती एषा माया यद्युपरता भवति । किमित्युपरता भवेत्तत्राह । मतिर्विद्या। अयं भावः। यावदेषाविद्यात्मनावरणविक्षेपौ करोति तावन्नोपरमति यदा तु सैव विद्यारूपेण परिणता तदा सदसद्रूपं जीवोपाधिं दग्ध्वा निरिंधनाग्निवत्स्वयमेवोपरमेदिति तदा संपन्नो ब्रह्मस्वरूपं प्राप्त एवेतिविदुस्तत्त्वज्ञाः। किमतः यद्येवं स्वे महिम्नि परमानंदस्वरूपे महीयते पूज्यते । विराजत इत्यर्थः ॥ ३४ ॥ यथा जीवस्य जन्मादिमाया एवमीश्वरस्यापि जन्मादिमायेत्याह । एवमिति । अकर्तुः कर्माणि अजनस्य जन्मानि । हृत्पतेरंतर्यामिणः ॥ ३५ ॥ तर्हि जीवादीश्वरस्य को विशेषः स्वातंत्र्यमेव

निन्यत इति भावः ॥३३॥ संदर्भस्तु अथांतिमां ब्रह्मसाक्षात्कारलक्षणां मुक्तिमाह–यदीति । एषां जीवन्मुक्तिदशायां स्थिता विशारदेन परमेश्वरेण दत्ता देवी द्योतमाना मतिर्विद्या तद्रूपमायास्वरूपशक्तिवृत्तिभूतविद्याविर्भाव द्वारलक्षणा सत्त्वमयी मायावृत्तिः सा यदि उपरता निवृत्ता भवति तदा व्यवधानाभासस्यापि राहित्यात्संपन्नो लब्धपरमानन्दसंपत्तिरेवेति विदुर्मुनयः । ततश्च तत्संपत्तिलाभात्स्वे महिम्नि स्वरूपसंपत्तावपि महीयते पूज्यते प्रकृष्टप्रकाशो भवतीत्यर्थः ॥ ३४ ॥ संदर्भः । एवं भगवत्त्वं दर्शयित्वा ब्रह्मत्वं दर्शितम् । ननु ब्रह्मानुभवेनैव यदि मुक्तिः स्यात्तर्हि कथं जन्मगुह्यमित्यादिना तत्कीर्त्तनमात्रेण संसारविमोक्ष उक्तस्तत्राह एवमिति । यथै वाव्यवहितपूर्वोक्ताविद्या मायोपरतावेव ब्रह्मानुभवसंपत्ती भवतः । एवं प्राकृतजन्मकर्मरहितस्य हृत्पतेः सर्वबुद्ध्यगोचरस्य जन्मानि कर्माणि च कवयो वर्णयन्ति । तत्तदुपरतावेव तज्जन्मकर्मानुभवसंपत्ती साधकानां भवत इति मन्यन्त इत्यर्थः । संपत्तिरत्र साक्षाल्लब्धिः । अत एव वेदगुह्यानीति । तथोक्तं भगवता "जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन" इति । तथैव तेषु श्रीशुकदेवादीना मपि ब्रह्मनिष्ठापरित्यागेनापि रागतः प्रवृत्तिर्वर्णयिष्यते द्वादशे "स्वसुखनिभृतचेताः" इत्यादौ । अतो ब्रह्मवत्तन्निदिध्यासनेनैव संसारदुःखोपक्षयः स्यात्तदनुभवसंपत्ती च भवत इत्यर्थः । पृथगर्थस्त्वेवमित्यस्य व्यव हितवाक्यार्थेनान्वयायोगात्कष्टाय संपद्यते च । विश्वनाथस्तु एवमनेनोक्तलक्षणप्रकारेण मायिकशरीरद्वयप्रतिषेधेनेत्यर्थः । अजनस्य जन्मानि "अजायमानो बहुधा विजायते" इति श्रुतेः । अकर्तुः कर्माणि "न चास्य कार्यं करणं च विद्यते" इत्यादौ "स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतेः । ननु जीवस्यापि वस्तुतोऽजनस्यैवाकर्तुरेव जन्मानि कर्माणि च दृश्यन्ते । सत्यम् । तस्य तानि मायासंबंधेन, अस्य तु मायाप्रतिषेधेने त्येष एव भेद इत्याह । वेदेषु वेदैर्वा गुह्यानि रहस्यत्वेन परमोपादेयत्वेन च संवृत्य स्थापितानि तात्त्विकानि । जीवस्य तु तानि मायिकत्वेन हेयान्येवावास्तवानीत्यर्थः । तदुक्तं श्रीगीतोपनिषदि "जन्म कर्म च मे दिव्यम्" इत्यादि । हृत्पतेरंतर्यामिणः विराड्रूपस्यैवंभूतत्वाभावादवतारमध्ये गणना तस्य न कृतेति प्रकरणार्थः ॥३५॥ अथ प्राकृतासंगरहितस्यानन्दैकलीलत्वमाह–सवा इति । षड्भिरैश्वर्यादिभिर्गुणैर्भगाख्यैरीष्टे यः स षड्गुणेशः षाड्वर्गिकं जिघ्रति । तेषु नानाभेदत्वाद्वर्गात्मकेषु चरति। यद्भक्तानां भक्तिसुखं यद्वा "तत्तेऽर्हत्तम नमःस्तुतिकर्मपूजाकर्मस्मृतिश्चरणयोः श्रवणं कथायाम् ॥संसेवया त्वयि विनेति षडंगया ।किं भक्तिं जनः परमहंसगतौ लभेत" इति श्रीप्रह्लादसंमत्या षड्वर्गसंसेवातः संजातं यत्प्रेम भक्तिसुखं तदेव जिघ्रति अन्विष्यास्वादयतीत्यर्थः । ततश्च न चास्येति तादृशतल्लीलानभिज्ञानां कुमनीषत्वे स वेदेति तादृशतल्लीलातत्त्वस्य भक्त्यैकानुभवनी

न चास्य कश्चिन्निपुणेन धातुरवैति जंतुः कुमनीष ऊतीः॥नामानि रूपाणि मनोवचोभिः संतन्वतो नटचर्यामिवाऽज्ञः॥३७॥स वेद धातुःपदवीं परस्य दुरंतवीर्यस्य रथांगपाणेः॥योऽमायया संततयाऽनुवृत्त्या भजेत तत्पादसरोजगंधम् ॥३८॥ अथेह धन्या भगवंत इत्थं यद्वासुदेवेऽखिललोकनाथे ॥ कुर्वंति सर्वात्मकमात्मभावं न यत्र भूयः परिवर्त उग्रः ॥३९॥ इदं भागवतं नाम पुराणं ब्रह्मसंमितम् ॥ उत्तमश्लोकचरितं चकार भगवानृषिः॥४०॥

विशेष इत्याह । स वा इति । षाडर्गिकमिंद्रियषडर्गविषयं जिघ्रति दूरादेव गंधवद्गृह्णाति न तु सज्जत इत्यर्थः । कुतः । षड्गुणेशः षडिंद्रियनियंता ॥ ३६ ॥ ननु किमी श्वरस्य सृष्ट्यादिकर्मभिर्विषयभोगैर्वा तत्राह । न चेति । धातुः जगद्विधातुरीश्वरस्य ऊतीर्लीलाः कुमनीषः कुबुद्धिः निपुणेन तर्कादिकौशलेन नावैति न जानाति । मनसा रूपाणि वचसा नामानि संतन्वतः सम्यग्विस्तारयतः वचोभिरिति बहुत्वं श्रुत्यभिप्रायेण मनोवचोभिः सहेति वा ॥ ३७ ॥ भक्तस्तु कथंचिज्जानातीत्याह । स वेदेति । अमाययाऽकुटिलभावेन संततया निरंतरया अनुवृत्त्या आनुकुल्येन भजेत ॥ ३८ ॥ भक्तिमार्गे प्रवृत्तानृषीनभिनंदति । अथेति । यतो भक्त एव भगवत्तत्त्वं जानाति । अथ अतो भगवंतः सर्वज्ञाः भवंतो धन्याः कृतार्थाः । कुतः । यद्यस्मादित्थं प्रश्नैर्वासुदेवे आत्मभावं मनोवृत्तिं कुर्वंति । सर्वात्मकमैकांतिकम् । यत्र यस्मिन्भावे सति भूयः उग्रो गर्भवासादिदुःखरूपः परिवर्तो जन्ममरणाद्यावर्तो न भवति ॥ ३९ ॥ सूत किमेतच्छास्त्रमपूर्वं कथयसि तत्राह । ब्रह्मसंमितं सर्वज्ञतुल्यम् । उत्तमश्लोकस्य चरितं

यत्वे संगमनीयम् । अत एव "अथेह धन्या" इत्यादीनि सुष्ठु संगतानि स्युरिति संदर्भः । विश्वनाथः भगवतस्त्वन्यानि ततो वैलक्षण्यानि बहूनि सन्ति, तत्र प्रथमं निरंकुशमैश्वर्यमाह-सवा इति । षाड्वर्गिकमिन्द्रिय षड्वर्गविषयमित्यादि स्वामिवत् ॥ ३६ ॥ अत्राक्षिपति-नन्विति । "लीलावासनयोरूतीस्तंतूनां तननेपि च" इति निरुक्तिः । आदिना शास्त्रकौशलादिग्रहः । श्रुत्यभिप्रायेण "यतो वाचो निवर्त्तन्ते" इति श्रुत्यभिप्रा येण । क्वचिद्वृत्त्यभिप्रायेणेत्यपि पाठः । अत्र सहार्थस्य गम्यमानत्वात्तत्रैवेयं तृतीयेत्याह-मनोवचोभिः सहेति । स्वीयं मनोपि भक्ताभिलषितपूरणे वाचश्च विस्तारयत इति मनसा संचिन्त्य वाचापि वदतीत्यर्थः । विश्वनाथः ज्ञानागम्यत्वमाह-निपुणेन ज्ञानयोगादिनैपुण्येन ऊतीर्लीलानामानि रूपाणि च मनो वचोवृत्तिभिर्नावैति । मनोवचसोरगम्यत्वादिति भावः । "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इति श्रुतेः । कुमनीष इति । जन्तुरिति । यो हि भक्तिहीनो ज्ञानी नामरूपवद्वस्तुमात्रं मिथ्येत्याचष्टे तं प्रत्ययमाक्षेपः । संतन्वतः अवतीर्य्यावतार्य कृपयातांनि विस्तारयतः । अज्ञाने दृष्टांतः । नटस्य चर्या पाण्यादिभिरभिनीयमानस्य गीतपदा र्थस्य चंद्रकमलादेर्नामरूपादिप्रदर्शनां यथाऽज्ञो नावैति अतो नास्वादं लभते ततश्च रसममूलकं ब्रूते । विज्ञः सभ्यस्तु सकलसहृदयसाक्षिकं रसं साक्षादेवानुभवतीत्यर्थः । यद्वा नटपदेन वंशस्तंभबद्धरज्वादिषु नर्त्तको ज्ञेयः । स यथा पादयोर्महिषश्रृंगे सित्वां ते च कांस्यस्थाल्यादिषु निधाय हस्ताभ्यामतिदीर्घवंशं गृहीत्वाकाशबद्धरज्जूपरि चलंस्तन्मार्गागतमन्यं नटं चाण्डालोहमिति मां मा स्पृशेति वदंस्तमस्पृश्यैव लंघते तच्चर्यां यथा तद्विद्याऽनभिज्ञो न जानाति तद्वदित्यर्थः ॥ ३७ ॥ ननु यदि कोपि न जानाति तर्ह्यनिर्मोक्षप्रसंगः स्यादित्यत आह--भक्तस्त्विति । धातुः सर्वपालकस्य पदवीं स्वरूपं "स्वरूपेऽध्वनि पादुके पदवी स्थानमात्रके" इति निरुक्तिः ॥ ३८ ॥ उग्रो गर्भवासादिदुःखप्रदः । यद्वा ॐ रुद्रमपि ग्रसतीत्युग्रः । ग्रसतेर्डप्रत्ययः ॥३९॥ सर्ववेदतुल्यम् । अनेन "वेदाक्षराणि यावंति पठितानि द्विजोत्तमैः । तावंति हरिनामानि कीर्त्तितानि न संशयः" इति शौनकस्मृतेः प्रत्यक्षरं हरिनामोच्चारणफलदमिति ध्वनितम् । यद्वा नराकृतिपरब्रह्मणा श्रीकृष्णेन तुल्यमिति । "कृष्णे स्वधामोपगते" इत्याद्युक्तेः । धन्यं सर्वपुरुषार्थावहम् । अत एव स्वस्त्ययनं सर्वमंगलावहं महत्

निःश्रेयसाय लोकस्य धन्यं स्वस्त्ययनं महत् ॥ तदिदं ग्राहयामास सुतमात्मवतां वरम् ॥ ४१ ॥ सर्ववेदेतिहासानां सारंसारं समुद्धृतम् ॥ स तु संश्रावयामास महाराजं परीक्षितम् ॥ ४२ ॥ प्रायोपविष्टं गंगायां परीतं परमर्षिभिः ॥ तत्र कीर्तयतो विप्रा विप्रर्षेर्भूरितेजसः ॥४३॥ अहं चाध्यगमं तत्र निविष्टस्तदनुग्रहात् ॥ सोऽहं वः श्रावयिष्यामि यथाऽधीतं यथामति ॥ ४४ ॥ कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह ॥ कलौ नष्टदृशामेष पुराणार्कोऽधुनोदितः ॥४५॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे तृतीयोऽध्यायः ॥ ३ ॥

यस्मिंस्तत् । ऋषिर्व्यासः ॥ ४० ॥ तत्संप्रदायप्रवृत्तिमाह । तदिदमिति । सुतं शुकम् ॥ ४१ ॥ प्रायेण मृत्युपर्यंतानशनेनोपविष्टमिति परमवैराग्योक्तिः ॥ ४२ ॥ हे विप्राः विप्रर्षेः सकाशात् ॥ ४३ ॥ अध्यगमम् ज्ञातवानस्मि तत्र कीर्तयतस्तत्र निविष्ट इति चान्वयभेदात्तत्रपदावृत्तिरदोषः । यथाधीतं न तु स्वमतिविलसितम् । तत्रापि यथामति स्वमत्यनुसारेण संक्षेपतः कथितं विस्तरतः श्रावयिष्यामि ॥४४॥४५॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे टीकायां तृतीयोऽध्यायः ॥ ३ ॥

सर्वतः श्रेष्ठम् ॥४०॥ तदिदं तल्लीलामयं महापुराणं ब्रह्मानुभविगुरुणा श्रीशुकेनाप्युपादेयत्वेन गृहीतमित्येव जन्मानि कर्माणीत्यस्योदाहरणत्वेनोह-तदिदमिति । वक्ष्यते च परिनिष्ठितोपीत्यादि "हित्वा स्वशिष्यान्पैलादीन्" इत्यादि च।तस्मात्तज्जन्मकर्मलीलामयेनानेन दुःखग्रामाद्विमुच्यते।इत्येतावन्मात्रं किं वक्तव्यं किं तु तद्विधानामपि परमपुरुषार्थ इति भावः।अत एवाह सर्ववेदेतिहासानां समुद्धृतो यः सारस्तद्रूपमिति।किं च यद्द्रव्यमतीव गुह्यं तत्खलु पुत्राय सुवृत्ताय दीयते इति विमृश्य व्यासदेवेन वेदांस्तु पैलादीन्पाठयित्वापि ततोऽप्यस्यातीव रहस्यत्वात्तान्विहायैवात्मजायेदं श्रीभागवतं दत्तम्।तत्र हेतुः आत्मवतां सुबुद्धीनां मध्ये वरं मुख्यम् ॥४१॥ नवनीतवत्सारम्।तेनान्यच्छास्त्रं तक्रादिवच्छ्रीभागवतवन्न सरसमिति भावः ॥४२॥ "प्रायो मरणानशने मृत्यौ बाहुल्यतुल्ययोः" इति मेदिनी। तत्र गंगातटस्थपरमर्षिसभायाम्। हे विप्रा इति।यूयमेव विप्रत्वात्पुराणेतिहासश्रावणयोग्या नाहमिति भावः। यद्वा विशेषेण प्रांति सेवकमनोरथान्पूरयंतीति विप्राः "समीहितार्थार्पणकामधेनवो विपद्गणध्वान्तसहस्रभानवः । अपारसंसारसमुद्रसेतवः पुनंतु मा ब्राह्मणपादरेणवः" इत्यादिपुराणाद्विप्राणामतीव पूज्यतमत्वेन श्रीमत्कथाश्रावणायोग्योपि भवदाज्ञयैव श्रावयिष्यामि । "इदमेव परं श्रेयो यदाज्ञापालनं गुरोः" इत्युक्तेरिति भावः । विप्रर्षेः सर्वाभीष्टप्रदज्ञानवतः श्रीशुकदेवात् ॥ ४३ ॥ तत्र परीक्षिदर्थमिलितर्षिसमाजे । तदनुग्रहाच्छ्रीशुकानुग्रहात् । "एतां वक्ष्यत्यसौ सूतः" इति द्वादशोक्तेः । यथामतीति । सर्वमर्थजातं तु स श्रीशुकदेव एव वेत्तीति भावः॥४४॥ तदिदं पुराणं न तु शास्त्रांतरतुल्यं किं तु श्रीकृष्णप्रतिनिधिरूपमेवेत्याह-कृष्ण इति।स्वस्य कृष्णस्य धाम नित्यलीलास्थानमुपगते सति श्रीकृष्णे तत्र च "धर्मः प्रोज्झितकैतवोऽत्र" इति "नैष्कर्म्यमप्यच्युतभाववर्जितम्" इति चानुसृत्य परमप्रकटतयाऽवगते भगवद्धर्मभगवज्ज्ञानादिभिरपि सह स्वधामोपगते सति कलौ नष्टदृशां तादृशधर्मज्ञानविवेकरहितानां कृते तदिदं पुराणमेवार्कः न तु शास्त्रांतरवद्दीपस्थानीयं यत्तथाविधोयं पुराणार्क उदितः । तादृशधर्मज्ञानप्रकाशनात्तत्प्रतिनिधिरूपेणाविर्बभूव । अर्कवत्तत्प्रेरिततयैवेति भावः । विश्वनाथस्तु किं बहुना युष्माभिः पृष्टं "धर्मः कं शरणं गत" इति तदिदमेव बुद्ध्यस्वेत्याह-कृष्ण इति। स्वधाम्नो द्वारकातः सकाशात् उपसमीपं प्रभासं गते धर्मज्ञानादिभिः षड्भिरैश्वर्यैः तत्रांतर्धाने सतीत्यर्थः । तल्लीलाया भक्तक्षोभकारित्वात्स्पष्टतयानुक्तिः । नष्टदृशां लुप्तज्ञानानाम् । अत्र दृक्पदेन तत्र चैकदेशांते "दृष्टिः प्रणष्टा तमसि प्रविष्टा" । इति प्रयुक्तेन कृष्णस्य सूर्यत्वं मथुराया उदयशैलत्वं प्रभासस्यास्ताचलत्वं शिष्टानां चक्रवाकत्वं दुष्टानां नीहारत्वं पापानां तमस्त्वं भक्तानां कमलवनत्वं च बोधितम् । अतस्तृतीये "कृष्णद्युमणिनिम्लोचे" इति स्पष्टतया सूर्योक्तिः । एष पुराणार्क इति । कृष्णसूर्येऽस्तमिते सति पुराणसूर्योयमुदित इति सूर्यस्य प्रतिमूर्तिस्सूर्य एव भवेदिति भावः ॥४५॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कधे भावार्थदीपिकाप्रकाशे तृतीयोऽध्यायः ॥ ३ ॥

व्यास उवाच ॥ इति ब्रुवाणं संस्तूय मुनीनां दीर्घसत्रिणाम् ॥ वृद्धः कुलपतिः सूतं बह्वृचः शौनकोऽब्रवीत् ॥ १ ॥ शौनक उवाच ॥ सूतसूत महाभाग वद नो वदतां वर ॥ कथां भागवतीं पुण्यां यदाह भगवाञ्छुकः ॥ २ ॥ कस्मिन्युगे प्रवृत्तेयं स्थाने वा केन हेतुना ॥ कुतः संचोदितः कृष्णः कृतवान्संहितां मुनिः ॥ ३ ॥ तस्य पुत्रो महायोगी समदृङ्निर्विकल्पकः ॥ एकांतमतिरुन्निद्रो गूढो मूढ इवेयते ॥ ४ ॥ दृष्ट्वाऽनुयांतमृषिमात्मजमप्यनग्नं देव्यो ह्रिया परिदधुर्न सुतस्य चित्रम् ॥ तद्वीक्ष्य पृच्छति मुनौ जगदुस्तवास्ति स्त्रीपुंभिदा न तु सुतस्य विविक्तदृष्टेः ॥ ५ ॥

तुर्ये भागवतारंभकारणत्वेन वर्ण्यते ॥ व्यासस्यापरितोषस्तु तपःप्रवचनादिभिः ॥ १ ॥ इत्येवं प्रसन्नतया श्रावयिष्यामीति ब्रुवाणम् । मुनीनां बहूनां मध्ये एकेन वक्तव्ये यो वृद्धो वृद्धेष्वपि बहुषु यः कुलपतिर्गणमुख्यस्तेष्वपि बहुषु यो बह्वृचः ऋग्वेदी तेन वक्तव्यम् । अत एवंभूतत्वाच्छौनकोऽब्रवीत् ॥ १ ॥ यत् यां कथामाह ॥ ॥ २ ॥ कस्मिन्वा स्थाने केन हेतुनेति । महाभारतादिधर्मशास्त्राणि कृतवतः पुनरेतत्संहिताकरणे किं कारणमित्यर्थः । कुत इति । सार्वविभक्तिकस्तसिः । केन प्रवर्तित इत्यर्थः । कृष्णो व्यासः ॥ ३ ॥ यदुक्तम् 'स तु तं श्रावयामास' इति तच्छुकस्य व्याख्यानादिकं कथं घटितमिति प्रष्टुं तस्यासंगोदासीनतामाह द्वाभ्याम् । तस्येति । समदृक् समं ब्रह्म पश्यति । अतो निर्विकल्पकः स्वार्थे कः । निरस्तभेदः । किं च एकस्मिन्नेवांतः समातिर्यस्यास्तथाभूता मतिर्यस्य सः यत उन्निद्रो मायाशयनादुद्बुद्धः । "या निशा सर्वभूतानां तस्यां जागर्ति संयमी" इति स्मृतेः । अत एव गूढोऽप्रकटः मढ इव प्रतीयते ॥ ४ ॥ निर्विकल्पकत्वं प्रपंचयति । दृष्ट्वेति । आत्मजं शुकं प्रव्रजंतमनुगच्छंतमृषिं व्यासमनग्नमपि दृष्ट्वा जले क्रीडंत्यो देव्योऽप्सरसो ह्रिया लज्जया परिदधुर्वस्त्रपरिधानं कृतवत्यः । अनग्नमपीत्यनेनार्थात्तत्सुतो नग्न इत्युक्तम् । नग्नस्य पुरतो

प्रवचनं वेदाभ्यासः।आदिना ग्रन्थनिर्माणादिग्रहः । तपआदिभिःश्रीव्यासदेवस्य चेतसि योऽपरितोषः स एव भागवतारंभे कारणमित्यर्थः (१) "एको दशसहस्राणि योन्नदानादिना भरेत्। स वै कुलपतिः प्रोक्तः" इति श्रीभारतटीकायां नीलकण्ठोक्तेः कुलपतिर्बहुपालकः ॥१॥ सूतसूतेति । वीप्सादरे ज्ञेया । सुवति प्रेरयति शुभे कर्मणि व्यासशिक्षया लोकानिति सूत इत्यभिप्रेत्याह-महाभागेति । श्रीकृष्णकथावक्तृश्रोत्रनुमन्तार एव महाभागा भवन्ति "ते धन्यास्ते महाभागा येषां कृष्णकथारतिः" इत्याद्युक्तेः । वदतां कथयतां वर श्रेष्ठ । तथा च कृष्णकथावक्तैव श्रेष्ठवाग्भवति "सा वाग्यया तस्य गुणान्गृणीते" इत्युक्तेः । भगवान्सर्वज्ञः "उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥" इत्युक्तलक्षणवान् शुकः । शोचयति हरिविमुखान्निजशास्त्रश्रावणेनेत्यन्वर्थनामा श्रीशुकदेवः । अत एवोक्तं "यैर्न श्रुतं भागवतं पुराणं नाराधितो यैः पुरुषः पुराणः ॥ हुतं मुखे नैव धरामराणां तेषां वृथा जन्म गतं नराणाम्" इति संहितायाम् ॥२॥ संहितां वेदरूपाम् । "सम्यग्हितं या वदति संहिता सा प्रकीर्त्तिता । हितं वेदानुगमनमहितं च तदन्यथा" इति वारतंतविः । इत्यर्थ इति । तृतीयार्थे तसिरत्रेति भावः ॥३॥ तस्य व्यासस्य "निर्दोषं हि समं ब्रह्म" इत्युक्तेर्म्मया लक्ष्म्या वा सह वर्तते इति सममिति निरुक्तेश्च समपदं ब्रह्मवाचकमस्तीति। अतः समदर्शित्वात् । न स केवलं निरस्तभेद एवापि तु भगवत्सर्मर्पितधीश्चेत्याहा-किं चेति । उद्बुद्धः ब्रह्मसाक्षात्कारवान् । सर्वभूतानामज्ञजनानां या निशेव निशा ब्रह्मविचारस्तस्यां ब्रह्मनिष्ठायां संयमी यमादिसाधनसंपन्नः । अत एव ब्रह्मनिष्ठत्वादेव प्रतीयते मूढैरेव न तु विज्ञैस्तल्लक्षणज्ञा अपि गूढवर्चसमिति वक्ष्यमाणत्वात् ॥ ४ ॥ तच्चित्रम् अहो युवानं तत्रापि मग्नं तत्रापि सर्वत्र स्पष्टं विलोकयत । मत्पुत्रं वीक्ष्यैता न लज्जिताः । मां तु वृद्धं सवसनम् । इतो युवतयः खेलन्तीति

कथमालक्षितः पौरैः संप्राप्तः कुरुजांगलान् ॥ उन्मत्तमूकजडवद्विचरन्गजसाह्वये ॥ ६ ॥ कथं वा पांडवेयस्य राजर्षेर्मुनिना सह ॥ संवादः समभूत्तात यत्रैषा सात्वती श्रुतिः ॥ ७ ॥ स गोदोहनमात्रं हि गृहेषु गृहमेधिनाम् ॥ अवेक्षते महाभागस्तीर्थीकुर्वंस्तदाश्रमम् ॥ ८ ॥ अभिमन्युसुतं सूत प्राहुर्भागवतोत्तमम् ॥ तस्य जन्म महाश्चर्यं कर्माणि च गृणीहि नः ॥ ९ ॥ स सम्राट् कस्य वा हेतोः पांडूनां मानवर्धनः ॥ प्रायोपविष्टो गंगायामनादृत्याऽधिराट्श्रियम् ॥ १० ॥ नमंति यत्पादनिकेतमात्मनः शिवाय हाऽऽनीय धनानि शत्रवः ॥ कथं स वीरः श्रियमंग दुस्त्यजां युवैषतोत्स्रष्टुमहो सहासुभिः ॥ ११ ॥

गच्छतः सुतस्य तु ह्रिया न परिदधुः तच्चित्रं वीक्ष्य । इयं स्त्री अयं पुमानिति भिदा भेदस्तवास्ति । विविक्ता पूता दृष्टिर्यस्य॥५॥ एवं भूतोऽसौ कथमालक्षितो ज्ञातः। कुरवो जांगलाश्च देशविशेषास्तान्संप्राप्तः प्रथमम् । ततो गजसाह्वये विचरन् गजेन सहित आह्वयो नाम यस्य तस्मिन्हस्तिनापुरे । हस्ती नाम राजा तेन निर्मितत्वात् ॥ ६ ॥ सः एवंभूतेन मुनिना सह । यत्र संवादे एषा सात्वती भागवती श्रुतिः संहिता ॥ ७ ॥ एतद्व्याख्यानं बहुकालावस्थानापेक्षं तस्य त्वेकत्रावस्थानं दुर्लभमित्याह । स इति । गोदोहनमात्रं कालं प्रतीक्षते तदपि न भिक्षार्थं किंतु तेषामाश्रमं गृहं तीर्थी कुर्वन्पवित्रीकुर्वंस्तस्मादेवंभूतोऽत्र वक्तेत्याश्चर्यम् ॥ ८ ॥ श्रोतुस्तु चरितमतीवाश्चर्यमतः कथयेत्याह । अभिमन्युसुतमिति पंचभिः । गृणीहि कथय ॥ ९ ॥ सम्राट् चक्रवर्ती । वेति वितर्के । कस्य वा हेतोः कस्मात्कारणात् । अधिराट्श्रियम् अधिराजां श्रियं संपदमनादृत्य ॥ १० ॥ यस्य पादनिकेतं चरणपीठम् । ह स्फुटम् । धनानि आनीय शत्रवः नमंति । अंग हे सूत । युवा तरुण एव । ऐषत ऐच्छत् । अत्रा

तद्दिशि दृशमप्याददानं विलोक्य लज्जंते स्म तदिमा एवार्जवेन कारणं पृच्छामीति मुनौ पृच्छति सति जगदुः। पूता द्वैतमलरहिता कामादिमलरहिता वा दृष्टिर्यस्य स तथा । वयं युवतिजनाः कलाभिज्ञाः स्त्रीपुंसयोर्नयनदर्शनेनैव तदंतस्तत्त्वं सर्वं ज्ञातुं प्रभवाम इति भावः ॥ ५ ॥ जडः कार्यविवेकशून्यः । लोकविपरीतचेष्टावैशिष्ट्ये उन्मत्तवदिति दृष्टान्तः । लोकरञ्जकव्यापाराराहित्ये मूकवदिति, सर्वथोद्यमराहित्ये जडवदिति भेदः ॥ ६ ॥ मुनिना श्रीशुकेन ॥ ७ ॥ पवित्रीकुर्वन् "येषां संस्मरणात्पुंसां सद्यः शुध्यन्ति वै गृहाः" इति वक्ष्यमाणत्वात् । गृहपदेनात्र गृहस्था ग्राह्याः । मंचाः क्रोशन्तीतिवत् । यद्वा तत्रत्यजीवमात्रेभ्योपि सद्वार्तां दातुमिति भावः ॥ ८॥ अभिमन्युसुतं न भीर्येषां तेऽभयो ह्रस्वस्त्वत्र पृषोदरादित्वात्। ते च द्रोणकर्णादयस्तैरपि मन्यते शूरत्वेन श्लाघ्यत इत्यभिमन्युस्तस्य सुतं परीक्षितम्॥९॥ "येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राडिति कथ्यते" इत्यभिधानात्॥ १० ॥ ननु "परिश्रान्तो वयस्थश्च षष्टिवर्षो जरान्वितः । क्षुधितः स महारण्ये ददर्श मुनिसत्तमम्" इति महाभारतविरोधाद्युवेति कथमुक्तं तत्राह-भारतवाक्यस्य त्वयमर्थः । "आचत्वारिंशद्यौवनमाषष्टि मध्यमं वयः" इत्युक्तेर्यद्यपि षष्टिवर्षो मध्यवया भवति तथापि यौवनस्य तत्प्राग्वर्तित्वेन तत्संबद्धत्वात्तदपि यौवनमेव न स्थाविर्यं सशक्तिदेहत्वात्। "तथा च षष्टिवर्षोपि वयस्थस्तरुणो युवा" इत्युक्तेर्युवैव "वार्द्धक्यं षष्टितः परम्" इत्युक्तेः । अन्यथाऽत्र वयस्थपदमयुक्तं स्यादिति भावः । जराजीर्ण इत्यस्य त्वयमर्थः । जीर्य्यतेम्बुपानेनेति जरा तृषा तदन्वितः क्षुधित इत्यग्रे दर्शनात् । एवं च

शिवाय लोकस्य भवाय भूतये य उत्तमश्लोकपरायणा जनाः ॥ जीवंति नात्मार्थमसौ पराश्रयं मुमोच निर्विंद्य कुतः कलेवरम् ॥ १२ ॥ तत्सर्वं नः समाचक्ष्व पृष्टो यदिह किंचन ॥ मन्ये त्वां विषये वाचां स्नातमन्यत्र छांदसात् ॥ १३ ॥

र्षमात्मनेपदम् । असुभिः प्राणैः सह ॥ ११ ॥ विरक्तस्य किं धनादिभिरिति चेत्, तत्राह । शिवायेति । लोकस्य शिवाय सुखाय, भवाय समृद्ध्यै, भूतये ऐश्वर्याय च ते जीवंति न त्वात्मार्थम् । एवं सति असौ राजा निर्विंद्य विरज्यापि परेषामाश्रयं कलेवरं कुतो हेतोः मुमोच । न हि परोपजीवनं स्वयं त्यक्तुमुचितमित्यर्थः ॥ ॥ १२ ॥ यत्किंचन पृष्टोऽसि तत्सर्वं नः अस्मभ्यं समाचक्ष्व यत् यस्माद्वाचां विषये गिरां गोचरेऽर्थे स्नातं पारंगतं त्वां मन्ये, छांदसादन्यत्र वैदिकव्यतिरेकेण । अत्रैवर्णि

"क्षुधितस्तृषितो भृशम्" इति वक्ष्यमाणेन "युवैषतोत्स्रष्टुमहो सहासुभिः" इत्यनेन च समानार्थकतया विरोधोत्र न सेत्स्यतीति ध्येयम् ॥ ११ ॥ इत्यर्थ इति । परोपकृतियुक्तदेहस्त्वकृत्येनापि रक्षणीय इति भावः ॥ १२ ॥ सूतजातेस्त्रैवर्णिकत्वाभावात् । अत्र क्रमसंदर्भः । वेदपुराणयोर्ब्राह्मणपरिव्राजकवद्भेदाभेदव्यवस्थयोक्तम् । माध्यंदिनश्रुतौ च वेदपुराणेतिहासानामपौरुषेयत्वेनाभेदनिर्देशः कृतः । यथा "एवं वा अरे अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वांगिरस इतिहासः पुराणं विद्या उपनिषदः" इत्यादिना ब्रह्मयज्ञाध्ययनेपि विनियोगो दृश्यतेमीषाम् "यद्ब्राह्मणानितिहासपुराणानि" इति । अनेन च प्रणवादिमयं छंदः सुपर्णं यद्वाक्यमत्रास्ति तत्रापि तस्याधिकारित्वं दर्शितम् । किं त्वत्र कश्चिदुच्चारो भेदगम्यः यः खलु स्वरप्लुतादिवैशिष्ट्यमयो वैदिकस्तदभावात् तदज्ञानात् । तच्च सूतेन नावगत मित्यत उक्तं छान्दसादन्यत्रेति । हे छान्दस त्वामहमत्र जगति वाचां वाग्रूपाणां शास्त्राणां विषये स्नातं मन्ये किंभूतं स्नातमनि इति योज्यम् । "छन्दो वेदे च पद्यादाविच्छाह्लादनदीप्तिषु" इति निरुक्तिकोशा च्छन्दोभिर्वेदैः स्तुतश्छान्दसोऽग्निः "ॐमूर्द्धानं दिवो अरति पृथिव्यां वैश्वानरमृतमाजातमग्निम् । कविं सम्राजमतिथिं जनानाम्" इत्याद्यानन्तश्रुतेः । तमतति सातत्येन गच्छति तदुद्भूतत्वेन प्राप्नोतीति छांदसात् । यद्वा छन्दसां मात्रावर्णभेदादिनार्यानुष्टुभादीनां समूहश्छान्दसं तमतति सामस्त्येन जानातीति छांदसात् । क्विबत्र कर्त्तरि । गत्यर्थानां ज्ञानार्थतानियतत्वात् । "यानि वेदविदां श्रेष्ठो भगवान्बादरायणः । अन्ये च मुनयः सूत परावरविदो विदुः ॥ वेत्थ त्वं सौम्य तत्सर्वं तत्त्वतस्तदनुग्रहात्" इत्यादेः । अ कोर्थ आदौ निकोर्थो नीत्यक्षरं यस्य तत् अनि स्नातशब्दतः पूर्वभागे नीति लिखिते निष्णातं स्यात्तथा च तत्पदं कौश लार्थकं जातम् "निनदीभ्यांस्नातेः सस्यषः कौशले" इति शाब्दिकोक्तेः । "अ आदावधिक्षेपवर्जनामन्त्रणेषु च" इति कोशात् । तर्हि "स्नातस्य मे न्यूनमलं विचक्ष्व" इति व्यासोक्तेः । का गतिरिति चेद्धातूनामने कार्थत्वैवेत्यवेहि । सात्र कथं नाश्रिता पूर्वोक्तयोजनाया इह गतित्वात्तत्र त्वगतिकत्वादेव स्नातेः कुशलार्थतेति। यद्वाऽव्ययानां यथेष्टयोगित्वान्न्यूनमिह नि ऊनमित्यवग्रहेण निकारस्नातस्येत्यनेन युज्यते । तथा च निष्णातस्येति स्यात्तेन "निनदीभ्याम्" इति सूत्रसार्थक्यं च । यद्वाऽन्यान्संसृतितप्तांस्त्राति हरिकथामृतपायनेन जीवयतीत्यन्यत्रस्तत्संबुद्धौ हे अन्यत्र । त्वामहं वाचां विषये स्नातं मन्ये । अत्र हेतुगर्भितसंबोधनमाह-हे छंदसादिति । "तव कथामृतं तप्तजीवनम्" इत्यादिश्रीगोपीवाक्यमन्यरक्षकत्वे मानम् । स्वामिचरणैस्तु "वृद्धानुवृत्त्यापि विलोमजाता" इति "दौष्कुल्यमाधिं विधुनोति शीघ्रं महत्तमानामभिधानयोगे" इति यदुक्तं तेन तदाश्रित्यैवापाततोऽत्रैवर्णि कत्वादिति व्याख्यातम् । वस्तुतस्तु तत्रापि विगतानि लोमानि सलोम्नो दहनावसरे प्रथमं यस्मात्स विलोमाग्निः तदुद्भूतत्वाद्विलोमजाता इत्युक्तम् । किञ्च महतामभिधानं नामोच्चारणं तेनापि योगः संबंधो दौष्कुल्यमाधिं विधुनोति । अहं दुष्कुलजो नास्मि यतो महन्नामोच्चारितम् । यद्वा मां महान्त आहूय पृच्छन्ति दौष्कुलजेन तेन संभाषणं कुर्वंति । सोपि तन्नामादि नो वक्ति । ततोयमाधिर्न कार्य इति । तथाच पूज्यानां नामो

सूत उवाच ॥ द्वापरे समनुप्राप्ते तृतीये युगपर्यये ॥ जातः पराशराद्योगी वासव्यां कलया हरेः ॥ १४ ॥
स कदाचित्सरस्वत्या उपस्पृश्य जलं शुचि ॥ विविक्तदेश आसीन उदिते रविमंडले ॥ १५ ॥

कत्वात् ॥ १३ ॥ कस्मिन्युगे इत्यादिप्रश्नानां व्यासजन्मकथनपूर्वकमुत्तरमाह । द्वापर इति । द्वापरे समनुप्राप्ते । कदेत्यपेक्षायामाह । तृतीये युगस्य पर्यये परिवर्ते । वासव्यामुपरिचरस्य वसोर्वीर्याज्जातायां सत्यवत्यां योगी ज्ञानी व्यासो जातः ॥ १४ ॥ जलमुपस्पृश्य जले स्नानादिकं कृत्वेत्यर्थः । आसीनः । बभूवेति शेषः । विविक्ते

चारणादियोगो यदि मानसीं व्यथामपाकरोति तर्हि किं महत्तराणां किंतरां महत्तमानाञ्च । स यदि तमपाकरोति । तदुक्तं "महान्तो जन्मना विप्रा विद्यावन्तो महत्तराः । महत्तमा विष्णुभक्तास्तत्संबन्धो महत्त्वकृत्" इति संहितोक्तेः । प्रकृतमनुसरति । किं चास्य पुराणस्य "स सहितां भागवतीम्" इत्यत्र "यत्रैषा सात्वती श्रुतिः" इत्यत्र च वेदवाचकसंहिताश्रुतिशब्दाभ्यामुपात्तत्वात्साक्षाद्वेदत्वमेव ध्वनितमतोऽत्रैवर्णिके सूते शौनकादि कृतानुयोगोपि न संगच्छेत । किं च तैरेवोक्तं श्रीबलदेवं प्रति सूतवधोत्तरं "यदेतद्ब्रह्महत्यायाः पावनं न करिष्यसि" इति । तदपि न संगच्छेत । तथा च यद्वा "श्रीधरस्वाम्यभिप्रायं श्रीधरो वेत्ति सर्वथा" इति शिष्टो क्तिरपि संगतैव । न चैवं सूताधिकारात्पुराणादीनां न्यूनत्वमाशंक्यम् । सकलनिगमवल्लीसत्फले श्रीभगवन्नाम्नि सर्वेषामधिकारात्सर्वयज्ञाद्यधिकश्रीभगवद्भक्त्यन्तरवत् । श्रीभागवते त्वात्मारामशिरोमणेः श्रीशुकस्यापि सर्वस्वत्वदावेशात् ॥ १३ ॥ युगानां सत्यादीनां बहूनां पर्ययोऽतिक्रमो यत्र तस्मिन् "पर्ययोतिक्रमस्तस्मिन्नतिपात उपात्ययः" इत्यमरः । बहुयुगातिक्रमे । यद्वा परं तस्मिंस्तच्च कृष्णावतारसंबंध्येव ज्ञेयम् । तदवतारश्च वैवस्वतमन्वंतरीयाष्टाविंशतितमे द्वापरे व्याख्यास्यते । कीदृशे तृतीये संध्यारूपयुगरूपसंध्यांशरूपाणीति सर्वयुगानि त्रिरूपाणि भवन्त्यतस्तृतीये संध्यांशरूपे इति विश्वनाथः । तीर्थस्तु कृतयुगापेक्षया तृतीये द्वापरे समनुप्राप्ते किंभूते युगस्य पर्ययोऽवसानं यत्र तस्मिन् । द्वापरान्त इत्यर्थमाह । अत्रेयं भारताद्युक्ता कथानुसंधेया । उपरिचरवसुनामा चेदिपो राजा शक्रसेवया विमानं लब्ध्वा तेनोपरितनलोकेषु गच्छति यतोऽतस्तन्नामोपरिचरवसुरिति जातः । स कदाचित्पित्राज्ञया मृगयां गतः स्वपत्नीं गिरिकाख्यामृतुस्नातां स्मृत्वा तद्रूपस्मरणेन रेतस्त्यक्त्वा वटपर्णपुटे क्षिप्त्वा श्येनाय दत्त्वा स्वपत्न्यै प्रेषितवान् । मार्गे यान्तं तं श्येनं तदन्यो मांसभ्रांत्या तेन युयुधे । ततस्तद्रेतः कालिंद्यां पपात । तच्च जलेऽघमर्षणं जपता केनचिन्मुनिना पादग्रहणाच्छप्ताद्रिकाप्सरा मत्स्यीभूता जगार । सा च गर्भवती सती केनचिन्मत्स्यजीविना दाशेन गृहीत्वा तद्देशराज्ञे दत्ता विदारितोदरायास्तस्या मिथुनं बहिर्गर्भात्पपात । यश्च पुत्रः स तु तेन राज्ञा गृहीतो मत्स्यनामा राजाभूत् । या च कन्या सा दाशेन गृहीता वासवी काली मत्स्योदरीति नामभिः प्रसिद्धाभूत् । मत्सी तु देहान्ते स्वर्गं ययौ । वासवीं दाशः पालितवान् । अथ कदाचित्तीर्थयात्राप्रसंगेन तत्रागतः पराशरमुनिस्तं दाशमाह । मां शीघ्रं पारं नयस्व । स च भोजनं कुर्वाणस्तां स्वपुत्रीभूतां वासवीं त्वमुडुपेनर्षिं पारं प्रापयेत्युवाच । सा च पितुराज्ञया तथा चकार । तामतीव सुन्दरीं वीक्ष्य कामार्त्तो मुनिर्मैथुनाय ययाचे । सा च नैतत्त्वादृशामृषीणामुचितं कर्मेति बहुशो बोधयामास तं किं च दुर्गंधाहं कन्याहं लोकः पिता देवाश्च पश्यन्तीत्याद्युवाच । स च प्रसह्य तां ययाभ । वरं च दत्तवान् । योजनगंधा भविष्यसि । पुत्रस्ते विष्णोरंशः पुराणाचार्यो भविष्यति चेत्युक्त्वा स्नात्वार्षिस्तु स्वाश्रमं गतः । सा च सद्यो गर्भं धृत्वा कर्णतो वीर्यग्रहणात्कर्णत एव पुत्रं प्रासूत । तं च द्वीपे स्थापयित्वा पालयामास । कंचित्कालमतो द्वैपायन इति नाम तस्य जातम् । स च मातरमामंत्र्य ततः स्वपितरमवधार्य कार्यकाले स्मरणादेव तव पार्श्वमागमिष्यामीत्युक्त्वा पित्राश्रमं जगामेति भारताद्युक्तेः ॥ १४ ॥ इत्यर्थ इति । "उपस्पर्शः स्पर्शमात्रे स्नानाचमनयोरपि" इति मेदिन्युक्तेरयं भावः । अनेन विविक्तासीनत्वकथनेन सूचितमिति चिंत्यम् । तत्र सरस्वत्याः श्रवणात् शम्याप्राश इत्येव तस्य नाम वक्ष्यत इति संदर्भः । स्वामिचरणैर्हि

परावरज्ञः स ऋषिः कालेनाऽव्यक्तरंहसा ॥ युगधर्मव्यतिकरं प्राप्तं भुवि युगेयुगे ॥ १६ ॥ भौतिकानां च भावानां शक्तिह्रासं च तत्कृतम् ॥
अश्रद्दधानान्निःसत्त्वान्दुर्मेधान्ह्रसितायुषः ॥ १७ ॥ दुर्भगांश्च जनान्वीक्ष्य मुनिर्दिव्येन चक्षुषा ॥ सर्ववर्णाश्रमाणां यद्दध्यौ हितममोघदृक् ॥
॥ १८ ॥ चातुर्होत्रं कर्म शुद्धं प्रजानां वीक्ष्य वैदिकम् ॥ व्यदधाद्यज्ञसंतत्यै वेदमेकं चतुर्विधम् ॥ १९ ॥ ऋग्यजुःसामाऽथर्वाख्या वेदाश्चत्वार
उद्धृताः ॥ इति हासपुराणं च पंचमो वेद उच्यते ॥ २० ॥ तत्रर्ग्वेदधरः पैलः सामगो जैमिनिः कविः ॥ वैशंपायन एवैको निष्णातो यजुषामुत ॥
॥२१॥ अथर्वांगिरसामासीत्सुमंतुर्दारुणो मुनिः ॥ इतिहासपुराणानां पिता मे रोमहर्षणः ॥ २२ ॥ त एते ऋषयो वेदं स्वंस्वं व्यस्यन्ननेकधा ॥
शिष्यैः प्रशिष्यैस्तच्छिष्यैर्वेदास्ते शाखिनोऽभवन् ॥२३॥ त एव वेदा दुर्मेधैर्धार्यंते पुरुषैर्यथा ॥ एवं चकार भगवान्व्यासः कृपणवत्सलः ॥२४॥

देशे इत्यादि । चित्तैकाग्र्यार्थमुक्तम् । अनेनैव बदरिकाश्रमस्थानं सूचितम् ॥ १५ ॥ तत्र च स ऋषिः युगधर्मव्यतिकरादिकं वीक्ष्य सर्ववर्णाश्रमाणां यत् हितं तत् दध्याविति तृतीयेनान्वयः । परावरज्ञः अतीतानागतवित् । अव्यक्तं रंहः वेगो यस्य तेन कालेन युगधर्माणां व्यतिकरं संकरं प्राप्तं वीक्ष्य । तथा भुवि युगेयुगे ॥ १६ ॥ भौतिकानां शरीरादीनाम् । तत्कृतं कालकृतम् । निःसत्त्वान्धैर्यशून्यान् । दुर्मेधान् मंदमतीन् ॥ १७ ॥ १८ ॥ ततश्च होत्रोपलक्षिताः चत्वार ऋत्विजः चतुर्होतारः तैः अनुष्ठेयं कर्म चातुर्होत्रम् । शुद्धं शुद्धिकरम् । यज्ञसंतत्यै यज्ञानामविच्छेदाय ॥ १९ ॥ चातुर्विध्यमेवाह । ऋगिति । उद्धृताः पृथक्कृताः ॥ २० ॥ २१ ॥ दारुणः क्रूरः अथर्वोक्ताभिचारादिप्रवृत्तेः ॥ २२ ॥ व्यस्यन् विभक्तवंतः ॥ २३ ॥ वेदविभागप्रयोजनमाह । त एवेति । ये पूर्वमतिमेधाविभिर्धार्यंते स्म ते एव ॥ २४ ॥

न गंधमादनस्थबदरिकाश्रमोऽभिप्रेतः । किं तु सिंधुवनस्थोभिप्रेतस्तत्रैवादिबदरिकाश्रमप्रसिद्धेस्तत्र सरस्वतीबदरीखंडयोरपि सत्त्वादिति ज्ञेयं सुज्ञैः ॥ १५ ॥ तत्र चाश्रमे आदिना शक्तिह्रासादिग्रहः ॥ १६ ॥ १७ ॥ दुर्भगान्मंदभाग्यान् । दिव्येन तपोजन्ययोगचक्षुषा ॥ १८ ॥ चत्वारो होत्रध्वर्यूद्गातृब्रह्माणो होतारो यत्र तस्मिन्यद्वा दर्शहोत्रादिचातुर्होत्रपर्यंतैर्मंत्रैः प्रकाश्यं वाऽग्निष्टोमादिकं प्रजानां वैदिकीनां यज्ञसंतत्यै यज्ञानामग्निष्टोमादीनां परंपराप्रवर्तनायैकमविभक्तं वेदमृगादिभेदेन चतुर्विधमकरोत् ॥ १९ ॥ मूलवेदसिंधोरुद्धृता न तु कृताः । तदर्थज्ञानाय कृतमितिहासपुराणं च वेदार्थवेदकत्वात्पंचमो वेद इत्युच्यते । पञ्चमो वेद इत्युक्तेरितिहासादीनामर्थतो रचनाभाव एव सूचितः । वेदवत्तेषामप्याविर्भाव एव व्यासेन कृतो न तु रचना तेषामपि नित्यत्वादिति भावः ॥ २० ॥ तत्र तेषां वेदानां मध्ये ऋग्वेदप्रवर्त्तकः पैलस्तन्नामर्षिः साम गायति स्वशिष्येभ्यो गमयतीति सामगः । कविः सूक्ष्मदर्शी । एवकारेण मनुष्येषु तत्प्रवर्तकः स एव देवेषु सूर्य इवेत्युक्तम् । यजुषां यजुर्वेदानां निष्णातः कुशलः प्रवर्त्तकतयेति शेषः ॥ २१ ॥ अथर्वांगिरसामथर्ववेदानां निष्णात इति योज्यमत्र ॥ एवमितिहासपुराणानां निष्णात इति "आर्षादिबहुधाख्यानं देवर्षिचरिताश्रयम् । इतिहासमिति प्रोक्तं भविष्यद्भूतधर्मयुक् ॥" केचित्तु "धर्मार्थकाममोक्षाणामुपदेशसमन्वितम् । पूर्ववृत्तकथायुक्तमितिहासं प्रचक्षते।" किंच "वर्ण्यंते यत्र सर्गाद्याः पञ्च वा दश वा च तत्। पुराणं प्रोच्यते वेदखिलार्थानां प्रपूरणात्॥" इति विष्णुपुराणटीकोक्तेः॥ २२ ॥ शाखिनः शिष्यप्रशिष्यादिभिस्तत्तन्नामपूर्वशाखावंतोऽभवन्नित्यर्थः॥ २३ ॥ व्यासनामनिर्वचनमाह-दुर्मेधैरल्पमतिभिरपि धार्यंतेपठित्वाऽवधृतार्थाः क्रियंते । तथा शिष्यप्रशिष्यादिभिः शाखोपशाखाभेदेन चकार व्यसत्तस्माद्व्यास इति भगवान् "व्यासो नारायणः स्वयम्" इत्यादिपुराणात् ॥ २४ ॥

स्त्रीशूद्रद्विजबंधूनां त्रयी न श्रुतिगोचरा ॥ कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ॥ इति भारतमाख्यानं कृपया मुनिना कृतम् ॥ २५ ॥ वेदार्थं च समुद्धृत्य भारते प्रोक्तवान्मुनिः ॥ एवं प्रवृत्तस्य सदा भूतानां श्रेयसि द्विजाः ॥ २६ ॥ सर्वात्मकेनापि यदा नाऽतुष्यद्धृदयं ततः ॥ २६ ॥ नातिप्रसीदद्धृदयः सरस्वत्यास्तटे शुचौ ॥ वितर्कयन्विविक्तस्थ इदं प्रोवाच धर्मवित् ॥२७॥ धृतव्रतेन हि मया छंदांसि गुरवोऽग्नयः ॥ मानिता निर्व्यलीकेन गृहीतं चानुशासनम् ॥ २८ ॥ भारतव्यपदेशेन ह्याम्नायार्थश्च दर्शितः ॥ दृश्यते यत्र धर्मादि स्त्रीशूद्रादिभिरप्युत ॥ २९ ॥ अथापि बत मे दैह्यो ह्यात्मा चैवात्मना विभुः ॥ असंपन्न इवाभाति ब्रह्मवर्चस्यसत्तमः ॥ ३० ॥

किंच । स्त्रीशूद्रेति । द्विजबंधवः त्रैवर्णिकेष्वधमाः तेषाम् । कर्मरूपे श्रेयसि श्रेयःसाधने । एवं भवेत् अनेनैव प्रकारेण भवतु । इति अतएव । तेषां कृपया भारताख्यानं मुनिना कृतम् ॥ २५ ॥ एवम् अनेन प्रकारेण । भूतानां श्रेयसि हिते सर्वात्मकेनापि कर्मणा ॥२६॥ न अतिप्रसीदत् हृदयं यस्य सः । चित्ताप्रसत्तौ हेतुं वितर्कयन् इदम् उवाच स्वगतम् ॥२७॥ निर्व्यलीकेन निष्कपटबुद्ध्या । मानिताः पूजिताः ॥२८॥२९॥ दैह्यः देहे भवः आत्मा जीवः वस्तुतो विभुः परिपूर्ण एव आत्मना स्वेन रूपेणासंपन्नः तादात्म्यमप्राप्त इवाभाति । ब्रह्मवर्चसं वेदश्रवणाध्यापनोत्कर्षजं तेजः तत्र साधवः ब्रह्मवर्चस्याः तेषु सत्तमः अतिश्रेष्ठोऽपि । यद्वा न केवलमसंपन्न इव

एवं त्रैवर्णिकानां वैदिककर्मानुष्ठानेन शुद्धान्तःकरणानामधोक्षजोपासनाजनितज्ञानेन मुक्तिस्स्यादिति व्यासदेवेन स्थापितम् । तदनधिकारिणां स्त्रीशूद्रादीनां कथं सा स्यादित्याकांक्षायामाह-स्त्रीशूद्रेति । वेदोक्तकर्माख्यश्रेयसि पुरुषार्थसाधने मूढानामयोग्यानां त्रयी त्रयो वेदाः श्रोतुमप्ययोग्याः कुतोऽध्येतुमिति भावः । इति यस्मादत एवं मया करिष्यमाणभारतशास्त्रोक्तविधिना इह स्त्रीशूद्रजने श्रेयो भवेदिति कृपया मुनिना सर्वज्ञेन श्रीव्यासेन भारताख्यानं कृतमित्यन्वयः । अत्रायं भावः । स्त्रीशूद्रादिकृपया भगवता भारताख्यानस्य कृतत्वात्तेषामेव तत्राधिकारो नान्येषामिति न ध्येयम् । "इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत्" इति वचनाद्ब्राह्मणादीनामपि वेदार्थज्ञानायावश्यं भारताद्यभ्यासस्योक्तत्वादुभयत्राधिकारो युज्यते । तेषां स्त्रीशूद्रादीनां वेदाक्षरोच्चारणाच्च "शूद्रश्चांडालतां व्रजेत्" इति स्मृतेः । "सावित्रीं लक्ष्मीं यजुः प्रणवं यदि जानीयात्स्त्री शूद्रः स मृतोऽधो गच्छति । तस्मात्सर्वदा नाचष्टे । यद्याचष्टे स आचार्यस्तेनैव मृतोऽधो गच्छति" इति नृसिंहतापनीयोक्तेश्च । सर्वथा साक्षाद्वेदाध्ययनश्रवणादिनिषेधेन गत्यन्तराभावाद्भारताद्युक्तानुष्ठानेन मुक्तिरिति "मूढो योग्ये यथाजाते विचित्ते विकलेऽपि च" इति निरुक्तिः । त्रैवर्णिकेष्वधमाः कुण्डगोलव्रात्यादिरूपाः ॥२५॥ साक्षाद्भगवदवतारस्यापि दुर्जनमोहनाय लोकानुकरणमाह—एवमिति हे द्विजा इति । यूयं तु द्विजत्वात्साक्षाद्वेदाधिकारिण एव कथमस्माकं भद्रं स्यादिति भीर्भवतां नास्तीति भावः । ततः सर्वभूतहितप्रवृत्तेरपि यदा हृदयं नातुष्यत्तदेदं प्रोवाचेत्यग्रिमेणान्वयः । धर्मवित्सर्वधर्मज्ञो व्यासः ॥ २६ ॥ २७ ॥ धृतव्रतेन लौकिकाचारापेक्षया वेदव्रतधारणावता मया छंदांसि वेदाः गुरवोध्यापकाः त्रेताग्नयः मानिताः सत्कृताः अनुशासनमाज्ञा । हि शब्देन विप्रादिभिर्वेदे व्रतादि वैदिकं कर्मावश्यं कर्त्तव्यमित्यसूचि ॥ २८ ॥ आम्नायतेऽभ्यस्यते त्रिवर्णैरित्याम्नायः । यद्वाम्नायते पुरुषार्थचतुष्टयमनेनेत्याम्नायो वेदः "श्रुतिः स्त्री वेद आम्नायः" इत्यमरः । यत्र भारते आदिनांत्यजादिग्रहः । अपि नो । तेन च न केवलं स्त्रीशूद्रादिभिरेवापि तु ब्राह्मणादिभिरपीत्युच्यते ॥ २९ ॥ अथापि एवं सत्यपि भूतश्रेयासि प्रवृत्तस्यापीत्यर्थः । तादात्म्यं तादूप्यम् वस्तुत इवेन प्राप्तिरेवोक्तेति स्वगुणाविष्क्रियादोष इत्युक्तेः स्वात्मश्लाघाभयोग्यांमत्वाह-यद्वेति । पाठान्तरे

किं वा भागवता धर्मा न प्रायेण निरूपिताः ॥ प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः ॥३१॥ तस्यैवं खिलमात्मानं मन्यमानस्य खिद्यतः ॥
कृष्णस्य नारदोऽभ्यागादाश्रमं प्रागुदाहृतम् ॥ ३२ ॥ तमभिज्ञाय सहसा प्रत्युत्थायागतं मुनिः ॥ पूजयामास विधिवन्नारदं सुरपूजितम् ॥३३॥
इति श्रीमद्भागवते म० प्रथमस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥ सूत उवाच ॥ अथ तं सुखमासीन उपासीनं बृहच्छ्रवाः ॥ देवर्षिः प्राह विप्रर्षिं
वीणापाणिः स्मयन्निव ॥ १ ॥ नारद उवाच ॥ पाराशर्य महाभाग भवतः कच्चिदात्मना ॥ परितुष्यति शारीर आत्मा मानस एव वा ॥ २ ॥

आभाति, प्रत्युत ब्रह्मवर्चसी ब्रह्मवर्चसवानपि असत्तम इव आभाति। पाठांतरे कमनीयतमोऽपीति ॥ ३० ॥ असंपत्तौ हेतुं स्वयमेवाशंकते। किं वेति। प्रायेण भूयस्त्वेन हि यस्मात् ते एव धर्माः अच्युतस्य प्रियाः ॥ ३१ ॥ खिलं न्यूनम्। खिद्यतः खेदं प्राप्नुवतः। कृष्णस्य व्यासस्य। प्रागुदाहृतं सरस्वतीतीरस्थम् ॥ ३२ ॥ तं नारदम् आगतम् अभिज्ञाय सहसा प्रत्युत्थाय विधिवत्पूजयामास। सुरपूजितमिति। ब्रह्मलोकादागतमित्यर्थः ॥ ३३ ॥ इति प्रथम० टीकायां चतुर्थोऽध्यायः ॥ ४ ॥
पंचमे सर्वधर्मेभ्यो हरिकीर्तनगौरवम् ॥ व्यासचित्तप्रसादाय नारदेनोपदिश्यते ॥ १ ॥ उप समीप आसीनं विप्रर्षिं व्यासं बृहच्छ्रवाः महायशाः। स्मयन् ईषद्धसन्निवेत्यनेन मुखप्रसत्तिर्द्योत्यते यद्वा इवेत्यनधिकारार्थम्। अहो महानपि मुह्यतीति स्मयमानः॥ १ ॥शारीरःशारीराभिमानी आत्मा आत्मना तेन शरीरेण कच्चित् किं परितुष्यति मानसः

ब्रह्मवर्चस्युशत्तम इति पाठे॥३०॥असंपत्तौ तादात्म्याप्राप्तौ। अत्र भागवतधर्मपदेन ज्ञानं व्याख्यातुं न शक्यते किन्तु भक्तिरेव "नामान्यनन्तस्य यशोंकितानि" इति "भवतानुदितप्रायो यशो भगवतोऽमलम्" इत्यादेः। ततश्च परमहंसपदेनाप्यत्र भक्ता एव ग्राह्याः। सारग्राहित्वात् "सारोत्र श्रीहरेर्भक्तिस्तदन्योऽसार एव हि" इत्युक्तेः। अतः पारमहंसी संहितेयं श्रीभागवतमिति ज्ञानिभिरेवात्र स्वत्वं नारोपणीयमिति ॥३१॥ "कृष्णः श्रीवासुदेवे च सत्यवत्याः सुतेऽर्जुने" इत्यभिधानात्। अत्र भगवदवतारत्वादसंभाविनावप्यसर्वज्ञताचित्ताप्रसादौ व्यासस्य स्वयं भगवता श्रीकृष्णेनैव स्वसदृशस्य सर्वशास्त्रशिरोमणेः श्रीभागवतस्य प्रादुर्भावार्थमेव बलादुपपादिताविति व्यवसीयते। यथा ब्रह्ममोहनप्रस्तावे स्वलीलासौंदर्यार्थं श्रीबलदेवस्याप्यसर्वज्ञता कल्पिता। नारदोपदेशात्प्रादुर्भूते च यस्मिन्" सर्वं मद्भक्तियोगेन मद्भक्तो लभतेंजसा" इति।"किं वा योगेन सांख्येन न्यासस्वाध्याययोरपि। किं वा श्रेयोभिरन्यैश्च न यत्रात्मप्रदो हरिः" इति वाक्याभ्यां सर्वार्थमुख्यो मोक्षोपि भक्त्यैव लभ्यते न तु साधनान्तरेणेति सर्वशास्त्रविलक्षणार्थः सर्वैरेवं दृष्टो भवतीति ज्ञेयः ॥३२॥ विधिवत् विधिं ब्रह्माणमिव।"इव वद्वा च सादृश्ये" इत्यभिधानादत्र वच्छाब्देन सह समासः। यथा विधातुः पूजा क्रियते तद्वन्नारदमपूजयदित्यर्थः। यद्वा यथा स्वाश्रमागतमहतां पूजा विहिता तथा पाद्यार्घ्यादिभिरर्चयामासेत्यर्थः ॥ ३३ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे प्रथमस्कंधे चतुर्थोऽध्यायः ॥ ४ ॥ सर्वधर्मेभ्यो यज्ञदानादिभ्यः गौरवमाधिक्यम् ( १ ) अथाश्रमप्राप्तेरनंतरम्। उपासीनमातिथ्यार्थमासनार्घ्यपाद्यादिभिरुपासनां कुर्वन्तमेवाह। स्मयन्निवोष्ठाधराभ्यां स्मितं निष्क्रमयन्निव सर्वज्ञतया तं प्रत्यन्तः प्रसादं नानाप्रश्नकौतुकार्थमवहित्थया गोपायितुमशक्नुवन्नित्यर्थः। स्वामिचरणैस्तु न हि स्मितेन केवलं प्रसक्तिरेव द्योत्यते किं त्वयोग्यतारीत्यभिप्रायेणोक्तं यद्वेति। अहो महानयं मुग्धीभवितुं नार्हतीति सूचनार्थं स्मयं चकारेत्यर्थः ॥ १ ॥ मोहायोग्यतां सूचयन्नामंत्रयति-महाभागेति। न हि महाभाग्यस्य तवायं विषादो युक्तः। अत्र हेतुत्वेन संबुद्ध्यन्तरमाह-पाराशर्येति। नहि सर्वे

जिज्ञासितं सुसंपन्नमपि ते महदद्भुतम् ॥ कृतवान् भारतं यस्त्वं सर्वार्थपरिबृंहितम् ॥ ३॥ जिज्ञासितमधीतं च यत्तद्ब्रह्म सनातनम् ॥ अथापि शोचस्यात्मानमकृतार्थ इव प्रभो ॥ ४ ॥ व्यास उवाच ॥ अस्त्येव मे सर्वमिदं त्वयोक्तं तथापि नात्मा परितुष्यते मे ॥ तन्मूलमव्यक्तमगाधबोधं पृच्छामहे त्वाऽऽत्मभवात्मभूतम् ॥ ५ ॥ स वै भवान्वेद समस्तगुह्यमुपासितो यत्पुरुषः पुराणः ॥ परावरेशो मनसैव विश्वं सृजत्यवत्यत्ति गुणैरसंगः ॥ ६ ॥ त्वं पर्यटन्नर्क इव त्रिलोकीमंतश्चरो वायुरिवात्मसाक्षी ॥ परावरे ब्रह्मणि धर्मतो व्रतैः स्नातस्य मे न्यूनमलं विचक्ष्व ॥७॥ नारद उवाच ॥ भवतानुदितप्रायं यशो भगवतोऽमलम् ॥ येनैवासौ न तुष्येत मन्ये तद्दर्शनं खिलम् ॥ ८॥

आत्मा मनोभिमानी तेन मनसा परितुष्यति कच्चित् किं वा ॥ २ ॥ ते जिज्ञासितं ज्ञातुमिष्टं धर्मादि यत् तत्सर्वं सुसंपन्नं सम्यग्ज्ञातम् । अपिशब्दादनुष्ठितं चेत्यर्थः । अयीति पाठे संबोधनम् । सुसंपन्नत्वे हेतुः । महदद्भुतमित्यादि । सर्वैः अर्थैः धर्मादिभिः परिबृंहितं परिपूर्णम् ॥ ३ ॥ किं च यत्सनातनं नित्यं परं ब्रह्म तच्च त्वया जिज्ञासितं विचारितमधीतमधिगतं प्राप्तं चेत्यर्थः । अथापि शोचसि । तत्किमर्थमिति शेषः ॥ ४ ॥ आत्मा शारीरो मानसश्च । तन्मूलं तस्य अपरितोषस्य कारणमव्यक्तमस्फुटम् हे नारद त्वा त्वां पृच्छामि । आत्मभवो ब्रह्मा तस्य आत्मनः देहादुद्भूतः तम् अत एवागाधोऽतिगंभीरो बोधो यस्य तम् ॥ ५ ॥ अगाधबोधतां प्रपंचयन्नाह । स वा इतिद्वाभ्याम् । सर्वगुह्यज्ञाने हेतुः । यद्यस्मात् पुराणः पुरुष उपासितस्त्वया । कथंभूतः । परावरेशः कार्यकारणनियंता । मनसैव संकल्पमात्रेण गुणैः कृत्वा विश्वं सृजतीत्यादि ॥ ६ ॥ किं च । त्वं त्रिलोकीं पर्यटन्नर्क इव सर्वदर्शी योगबलेन प्राणवायुरिव सर्वप्राणिनामंतश्चरः सन्नात्मसाक्षी बुद्धिवृत्तिज्ञः अतः परे ब्रह्मणि धर्मतो योगेन निष्णातस्य । तदुक्तं याज्ञवल्क्येन । "इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् । अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्" इति । अवरे च ब्रह्मणि वेदाख्ये । व्रतैः स्वाध्यायनियमैर्निष्णातस्य मेऽलमत्यर्थं यन्न्यूनं तद्विचक्ष्व वितर्कय ॥ ७ ॥ अनुदितप्रायमनुक्तप्रायम् । विमलं भगवद्यशो विना येनैव धर्मादिज्ञानेनासौ

ज्ञमुन्यात्मजस्यापरं बोधयितुं समर्थस्य तव सर्वथा मोहो योग्य इति भावः॥२॥ न च तव शास्त्रज्ञानं किंचिदपेक्षितव्यं तदलब्धिमूलकोयं विषाद इति वाच्यम् । यतो जिज्ञासितमिति कृतवान्भारतमित्यस्य यद्विरोधि मात्स्ये "अष्टादशपुराणानि कृत्वा सत्यवतीसुतः । भारताख्यानमखिलं चक्रे तदुपबृंहितम्" इति । अत्र "स संहितां भागवतीं कृत्वा" इति सप्तमाध्यायवाक्येन समाधानं दृश्यते । प्रथमतः सामान्यतः कृत्वा पश्चान्नारदोपदेशतोनुक्रम्य तत्संमत्यानुक्रमेण विशेषतः कृत्वेत्यविरोधः । नारदेनापि "भवतानुदितप्रायम्" इत्युक्तेः सामान्यतस्तूक्तमेवेति सूचितम् । न केवलं भारतमेव कृतमपि तु सनातनं ब्रह्म वेदः परमात्मा च "शब्दब्रह्म परं ब्रह्म ममोभे शाश्वती तनू" इति श्रीमुखोक्तिरुभे एवाधिगते त्वयेति अहो पुनरपि शोकः ॥३॥ इत्यर्थ इति । अनुभवगोचरीकृतमित्याशयः । अहो कृतावतारकार्योपि पुनः कथं त्वं शोचसीति हे प्रभो इति । भगवदवतारस्य तव शोकोनुचित इति भावः ॥४॥ हे इति संबुद्ध्यर्थेऽव्ययम् ।तेन हे नारदेति लब्धम् । अत एव ब्रह्मपुत्रत्वादेव ॥५॥ अत्राशयमाह-पराशरपुत्रत्वेन महाभागत्वेन चतुर्वेदज्ञत्वेन ब्रह्मानुभवित्वेन च त्वयाहमुक्तस्त्वं तु ब्रह्मपुत्रोऽगाधबोधः सर्वज्ञो भगवदुपासक इति मत्तः सर्वथैव विशिष्ट इति भावः । यः परावरेशः स त्वया यद्यत उपासितोऽतोभवान्समस्तगुह्यं वेदेत्यन्वयः । असंगः गुणसंगरहितः ॥ ६ ॥ न्यूनं नितरासुर्वरितम् ॥ ७ ॥ भगवतो यशः सर्वस्वरूपेभ्यो भगवत्स्वरूपोत्कर्षः सर्वोत्कर्षद्योतिनी तस्य लीला भक्तिश्च । ननु मया ब्रह्ममीमांसाशास्त्रं वेदान्तदर्शनं कृतं तत्राह-येनेति । तद्दर्शनं दर्शनशास्त्रमपि खिलं न्यूनमेव मन्ये तद्दर्शनकर्तुरेव तवापि

यथा धर्मादयश्चार्था मुनिवर्यानुकीर्तिताः ॥ न तथा वासुदेवस्य महिमा ह्यनुवर्णितः ॥ ९ ॥ न यद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित् ॥ तद्वायसं तीर्थमुशंति मानसा न यत्र हंसा निरमंत्युशिक्क्षयाः ॥ १० ॥

भगवान्न तुष्येत तदेव दर्शनं ज्ञानं खिलं न्यूनं मन्येऽहम् ॥ ८ ॥ ननु भगवद्यश एव तत्रतत्रानुवर्णितं तत्राह । यथेति । चशब्दाद्धर्मादिसाधनानि च । तथा धर्मादिव त्प्राधान्येन वासुदेवस्य महिमा न ह्युक्त इत्यर्थः ॥ ९ ॥ वासुदेवव्यतिरिक्तान्यविषयज्ञानवदेवान्यविषयं वाक्चातुर्यं च खिलमेवेत्याह । नेति । चित्रपदमपि यद्वचो हरे र्यशो न प्रगृणीत तद्वायसं तीर्थं काकतुल्यानां कामिनां रतिस्थानमुशंति मन्यंते । कुतः । मानसाः सत्त्वप्रधाने मनसि वर्तमाना हंसा यतयो यत्र न निरमंति कर्हिचिदपि नितरां न रमंते । उशिक्क्षयाः उशिक् कमनीयं ब्रह्म क्षयो निवासो येषां ते । यथा प्रसिद्धा हंसा मानसे सरसि चरंतः कमनीयपद्मखंडनिवासास्त्यक्तविचित्रान्नादिषु

चित्ताप्रसदाश्चेत्तर्ह्यधीत्याधीत्य तद्दर्शनाभ्यासिनामपि कथं चित्तं प्रसीदत्वित्यत्र भवानेव प्रमाणमिति भावः । स्वामिचरणोक्तेरपि तदेव दर्शनं खिलं मन्ये भगवद्यशसोऽप्राधान्येन वर्णनकरशास्त्रवर्णनमेवेत्यर्थः ॥ ८ ॥ अत्रा क्षिपति नन्विति । तत्र तत्र पाद्मब्रह्माण्डादिपुराणेषु । इत्यर्थ इति । पुरुषार्थशिरोमणिरपि वासुदेवमहिमा पुरुषार्थत्वेनापि न वर्णितः किं तु मोक्षसाधनत्वेन वर्णितोऽतोऽत्यादरणीयवस्तुन आदराभावश्चित्तस्याप्रसादमपि किं न करोत्विति भावः । ननु अन्यत्र पुण्यतीर्थेषु मुक्तिरेव महाफलम् । "मुक्तैः प्रार्थ्या हरेर्भक्तिर्मथुरायां च लभ्यते" इति । "ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्" इत्यादिभि स्तत्रतत्र क्वचिन्मोक्षोपर्य्यपि भक्तिरुक्तेत्यत आह-अन्विति । अन्वनु पौनःपुन्येन न वर्णितः । "आनन्दमयोऽभ्यासात्" इत्यत्राभ्यासस्यैव शास्त्रतात्पर्यज्ञापकत्वेनोक्तत्वात् । अतो भगवन्महिम्न एव फलत्वेनोत्कर्षं पौनःपुन्येन यदा वर्णयिष्यसि तदैव ते चित्तप्रसादो भावीति भावः ॥ ९ ॥ चित्राणि गुणालंकारयुक्तानि पदानि यत्र श्लेषेण चित्रस्य विस्मयस्य स्थानमपि यथा मंत्रशास्त्रादि झटिति फलप्रदर्शकतया विस्मयकारि । कीदृशं जगदपि पवित्रयति स्वश्रोतृवक्त्राद्यात्मकं सर्वं जगदपि पुनाति किं पुनः स्वमिति जीवतुल्येन तद्यशसा विना कविवचोऽलंकारादियुक्तमपि मृतशरीरमिवापवित्रं भवतीति भावः । वायसं वयसो देहावस्थाया निर्वाहकं जीवनोपयोगिगाणि तायुर्वेदादिरूपं वा । यद्वा।वायसं वयो हंतीति वायसं कर्मकारकादत्र हननेऽर्थेऽण्प्रत्ययः। "किमन्यैरसदालापैरायुषो यदसद्व्ययः" इत्युक्तेः। मानसा हरेर्मनसि स्थिता भक्ताः "स त्वं हरेरनुराध्यातः"इत्युक्तन्यायेन यत्र न नितरां रमन्ते सर्वथैव न रमन्ते इत्यर्थः । यद्वा "यमकश्लेषचित्रेषु शसयोर्बवयोर्न भित्" इत्यालंकारिकोक्तेः।वा निश्चयेन आयशमयशस्करं तीर्थं शास्त्रमित्यर्थः । न यशो यस्मात्तदयशम् । समासान्तो डः । पुनः स्वार्थिकाण्यग्रश मिति "निपानागमयोस्तीर्थम्"इति कोशः।तच्चानंगरंगादिकामशास्त्रमिति ध्येयम्।यद्वा मानसाः सनकादय इत्युशन्तीत्यस्य कर्तृपदं कमनीयं सरो ब्रह्म वा।वशकात्तावत औणादिकः किच्प्रत्ययः।कित्त्वात्संप्रसारणे प्रतिपादिकसंज्ञोत्तरं "चोः कुः" इति कुत्वे रूपमुशगिति । यद्वा। जगदेव पविर्वज्रं"कुलिशं भिदुरं पविः"इत्यमरोक्तेस्तस्मात्त्रायत इति । यद्वा।जगत्पिबति संहरतीति जगत्पः कालस्तस्माद्धित्रायत इति तथा"जगदघभिदलं स्याच्छ्रावयेद्वा मुरारेः" इति श्रीदशमोक्तेः । यद्वा।जगत्पान्ति तत्त्वोपदेशादिनेति जगत्पाः शुकसनकादयस्तैर्विशेषेण त्रायते वर्ध्यत इति जगत्पवित्रम् । अत्र वचःशब्देन वाक्येऽभिधीयमाने "नाभागा नभगापत्यं यतंतं भ्रातरः कविम् ॥ यविष्ठं व्यभजन्दायं ब्रह्मचारिणमागतम्" इत्यादीनां श्रीभागवतीयानामपि पृथग्वाक्यानां वायसतीर्थत्वं प्रसज्येत शास्त्रेऽभिधीयमाने व्यासादिकृतेषु पुराणादिषु न कुत्रापि हरियशः।सामान्याभाव इति न कस्यापि वायसतीर्थत्वं स्यात् । तस्मात् "कलिमलसंहतिकालनोऽखिलेशो हरिरितरत्र न गीयते ह्यभीक्ष्णम् । इह तु पुनर्भगवानशेषमूर्त्तिः परिपठितोऽनुपदं कथाप्रसंगैः" इति द्वादशोक्तेरत्र वचःशब्देनोत्तरत्र वाग्विसर्गपदेन च कथाप्रसंग एवोच्यते । एवं च

तद्वाग्विसर्गो जनताऽघविप्लवो यस्मिन्प्रतिश्लोकमबद्धवत्यपि ॥ नामान्यनंतस्य यशोंकितानि यच्छृण्वंति गायंति गृणंति साधवः ॥ ११ ॥ नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरंजनम् ॥ कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम् ॥ १२ ॥ अथो महाभाग भवानमोघदृक्छुचिश्रवाः सत्यरतो धृतव्रतः ॥ उरुक्रमस्याखिलबंधमुक्तये समाधिनाऽनुस्मर तद्विचेष्टितम् ॥ १३ ॥

क्तेऽप्युच्छिष्टगर्ते काकक्रीडास्थाने न निरमंत इति श्लेषः ॥ १० ॥ विनापि पदचातुर्यं भगवद्यशःप्रधानं वचः पवित्रमित्याह । तदिति । तद्वाग्विसर्गः स चासौ वाग्विसर्गो वाचः प्रयोगः । जनानां समूहो जनता तस्या अघं विप्लावयति नाशयतीति तथा सः । यस्मिन्वाग्विसर्गे अबद्धवत्यप्यपशब्दादियुक्तेऽपि प्रतिश्लोकमनंतस्य यशसांकितानि नामानि भवंति । तत्र हेतुः । यद्यानि नामानि साधवो महांतो वक्तरि सति शृण्वंति श्रोतरि सति गृणंति अन्यदा तु स्वयमेव गायंति कीर्तयंति ॥ ११ ॥ भक्तिहीनं कर्म शून्यमेवेति कैमुत्यन्यायेन दर्शयति । नैष्कर्म्यमिति । निष्कर्म ब्रह्म तदेकाकारत्वान्निष्कर्मतारूपं नैष्कर्म्यम् । अज्यतेऽनेनेत्यंजनमुपाधिस्तन्निवर्तकं निरंजनम् । एवंभूतमपि ज्ञानमच्युते भावो भक्तिस्तद्वर्जितं चेदलमत्यर्थं न शोभते । सम्यगपरोक्ष्याय न कल्पत इत्यर्थः । तदा शश्वत्साधनकाले फलकाले चाभद्रं दुःखरूपं यत्काम्यं कर्म यदप्यकारणमकाम्यं तच्चेति चकारस्यान्वयः । तदपि कर्म ईश्वरे नार्पितं चेत्कुतः पुनः शोभते बहिर्मुखत्वेन सत्त्वशोधकत्वाभावात् ॥ १२ ॥ तदेवं भक्तिशून्यानि ज्ञानवाक्चातुर्यकर्मकौशलानि व्यर्थान्येव यतोऽतो हरेश्चरितमेवानुवर्णयेत्याह । अथो अतः कारणात् । अमोघा यथार्था दृक् धीर्यस्य शुचि शुद्धं श्रवो यशो

सत्यत्रत्यानि सर्वाण्येवोपाख्यानानि हरियशोलंकृतान्येवान्यत्र पुराणादौ बहून्येवोपाख्यानानि हरियशोरहितानि वायसतीर्थान्येवेति संगतिः॥ १० ॥ व्यतिरेकेणोक्त्वाऽन्वयेनाह-विनापीत्यादिना । "अबद्धं स्यादनर्थकम्" इत्यमरः। प्रतिश्लोकं श्लोकमात्रे प्रतीतसांकेतादित्वादसम्यगर्थबोधकेपि यस्मिन्यशउपाख्याने यद्यशोपाख्यानं तत्र जनताघविप्लवत्वे हेतुरीति स्वामिचरणानाम् । शृण्वन्ति श्रुत्वापि गायंति गीत्वापि गृणन्ति न तृप्यंतीति भावः ॥ ११ ॥ इत्यर्थ इति । "ज्ञानकारणसामग्र्यां भक्तिरेव गरीयसी" इति वाक्यात् । "श्रेयःसृतिं भक्तिमुदस्य ते विभो क्लिश्यंति ये केवलबोधलब्धये।तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषावघातिनाम्" इति ब्रह्मवाक्याच्चायं भावः । यद्वा नैष्कर्म्यं ज्ञानमत्र वेदान्तशास्त्राभ्यासः।निष्कर्मतापादकं गीतोक्तम् "अभयं सत्त्वसंशुद्धिः"इत्यादिरूपं वा।अत्र विश्वनाथः।न केवलं वचोमात्रमेव भक्तिरहितं व्यर्थमपि तु श्रौतवचसापि प्रतिपाद्यमपरोक्षं ज्ञानमपि भक्तिरहितं व्यर्थं किमुत परोक्षं ज्ञानं किमुततरां निष्कामकर्म किमुततमां सकामकर्म व्यर्थमित्याह।नैष्कर्म्यरूपम् ।अच्युतभावश्चिदानंदविग्रहत्वभावनया या भक्तिस्तद्वर्जितं चेज्ज्ञानं न शोभते। तेन तस्मिन्मायाशबलतालक्षणापकर्षभावनया मोक्षसाधकं न भवतीत्यर्थः । अलमतिशयेन । निरञ्जनम् अंजनमविद्या तद्रहितमपरोक्षमपि किं पुनः परोक्षमित्यर्थः । न च वाच्यमुपाध्यभावे मोक्षस्यासंभावना नास्तीति । भगवतोऽचिंत्यशक्त्या नष्टस्याप्युपाधेः पुनःपुनः प्ररोहात् । तथा हि वासनाभाष्यधृतं परिशिष्टवचनं "जीवन्मुक्ता अपि पुनर्बंधनं यान्ति कर्मभिः । यद्यचिंत्यमहाशक्तौ भगवत्यपराधिनः" इति । तत्रैवान्यत्र च "जीवन्मुक्ताः प्रपद्यन्ते क्वचित्संसारवासनाम् ॥ योगेन न विलिप्यंते कर्मभिर्भगवत्पराः" इति । तथा "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" इति। ज्ञानकार्य्यं नैष्कर्म्यमपि न शोभते । तथाहि । रथयात्राप्रसंगे विष्णुभक्तिचन्द्रोदयधृतं पुराणान्तरवाक्यं "नानुव्रजति यो मोहाद्व्रजन्तं जगदीश्वरम् । ज्ञानाग्निदग्धकर्मापि स भवेद्ब्रह्मराक्षसः" इति । अत एवाग्रे वक्ष्यते "आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः" इति । ज्ञानस्याप्यच्युतभाववर्जितत्वे तस्मिन्भगवति मायामयत्वभावनादिलक्षणोऽपराधो दुर्निवारण एव । एवं च यदि तादृशभक्तिहीनं ज्ञानमपि विफलं तदा कुतः पुनरिति स्वामिवत् ॥ १२ ॥ इत्यर्थ इति । स्मरणे प्रयोजकता मत्कर्तृका सा वर्णनायैवेति भावः । विश्वना

ततोऽन्यथा किंचन यद्विवक्षतः पृथग्दृशस्तत्कृतरूपनामभिः ॥ न कुत्रचित्क्वापि च दुःस्थिता मतिर्लभेत वाताहतनौरिवास्पदम् ॥ १४ ॥ जुगुप्सितं धर्मकृतेऽनुशासतः स्वभावरक्तस्य महान्व्यतिक्रमः ॥ यद्वाक्यतो धर्म इतीतरः स्थितो न मन्यते तस्य निवारणं जनः ॥ १५ ॥

यस्य सत्ये रतो धृतानि व्रतानि येन स भवानेवं महागुणस्तावत् । अत उरुक्रमस्य विविधं चेष्टितं लीलां समाधिना चित्तैकाग्र्येणाखिलस्य बंधमुक्तये त्वमनुस्मर स्मृत्वा वर्णयेत्यर्थः । एतच्च वाक्यांतरमिति मध्यमपुरुषप्रयोगो नानुपपन्नः ॥ १३ ॥ विपक्षे दोषांतरमाह । तत इति । तत उरुक्रमचेष्टितात्पृथग्दृशोऽत एवान्यथा प्रकारांतरेण यत्किंचिदर्थांतरं विवक्षतस्तया विवक्षया कृतैः स्फुरितै रूपैर्नामभिश्च वक्तव्यत्वेनोपस्थितैर्दुःस्थितानवस्थिता सती मतिः कदाचित्क्वापि विषये आस्पदं स्थानं न लभेत वातेनाहताघूर्णिता नौरिव । तदुक्तं गीतासु । "व्यवसायात्मिका बुद्धिरेकेह कुरुनंदन । बहुशाखा ह्यनंताश्च बुद्धयोऽव्यवसायिनाम्" इत्यादि ॥ १४ ॥ तदेवं हरियशो विना भारतादिषु कृतं धर्मादिवर्णनमकिंचित्करमित्युक्तं प्रत्युत विरुद्धमेव जातमित्याह । जुगुप्सितमिति । जुगुप्सितं निंद्यं काम्यकर्मादि स्वभावत एव रक्तस्य तत्र रागिणः पुरुषस्य धर्मकृते धर्मार्थमनुशासतस्तव महानयं व्यतिक्रमोऽन्यायः । कुत इत्यत आह । यस्य वाक्यतोऽयमेव मुख्यो धर्म इति स्थित इतरः प्राकृतो जनः

यस्तु—सत्यं तद्धृच्युतभाव एव सर्वोत्कृष्टत्वेन तवाभिमतः । स च तन्नामलीलाकीर्त्तनश्रवणादिभिरेव भवति । तत्र नाम रामकृष्णादि प्रसिद्धमेव । लीला कीदृशी तवाभिमता तामुपदिशेत्यपेक्षायामाह—अथो इति । अमोघदृक् अव्यर्थज्ञानः।लीला हि भक्तिमति शुद्धे चित्ते स्वयमेव स्फुरति।तस्याः स्वप्रकाशत्वादनन्तत्वादतिरहस्यत्वादन्यथा केनापि वक्तुं गृहीतुं चाशक्यत्वादिति भावः । स्मृत्वा च वर्णय तदेव शुद्धयशस्त्वममोघदृक्त्वमन्यथा नैवेति । यद्वाऽमोघे दृशौ नेत्रे यस्य शुचिनी श्रवसी कर्णौ यस्येति काचिल्लीला नेत्राभ्यां दृष्टा काचित्कर्णाभ्यां श्रुता च । तथा सत्यरत इति धृतव्रत इति आसक्तिनिश्चयसूचिताभ्यां मनोबुद्धिभ्यामदृष्टाऽश्रुताप्यवकलितैव सा।संप्रति चित्तैकाग्र्येण स्मर्यतां स्मृत्वा च वर्ण्यतामिति स्वामिचरणोक्तमेतच्चेतिपदम् । तदर्थस्तु एतदुरुक्रमस्येत्यादि । अथो महाभाग इत्यतः पृथग्वाक्यमिति । तत्र व्रतानि शरणागतपालनादीनीति ज्ञेयम् । महाभागेति । महस्यात्युत्सवरूपस्याप्रासिद्धं भागोंशो महाभा गस्तदवतार इति यावत् । अत एवामोघदृगिति । तीर्थस्तु समाधिना दर्शनगुह्यसमाधिभेदेन त्रिधाभिन्नानां भाषाणां मध्ये यथास्थितवस्तुकथनलक्षणया समाधिभाषयाऽनुस्मर । श्रीभगवन्महिमप्रतिपादकश्रीभागवताख्यं ग्रन्थं कुरु । तेन न्यूनता नंक्ष्यतीत्याह ॥१३॥ विपक्षे भगवद्यशो विहाय काम्यकर्मादिवर्णने तद्बुद्धेरनवस्थानमुक्तं भगवतेत्यर्थः । व्यवसायात्मिकात्मतत्त्वनिश्चयात्मिका बुद्धिरेकैव चतुर्णामाश्रमाणां साध्या विवक्षिता । सांख्यविषया योगविषया च बुद्धिरेकफलत्वादेका व्यवसायात्मिका सर्वविपरीतबुद्धीनां बाधिका। निर्दोषवेदवाक्यसमुत्थत्वादितरास्त्वव्यवसायात्मिका बुद्धयो बाध्या इति भगवत्पादाः। परमेश्वराराधनेनैव संसारं तरिष्यामीति निश्चयात्मिका एकनिष्ठैव बुद्धिरिह कर्मयोगे भवतीत्यन्ये।कर्मकांडे पुनर्बहुशाखा अनंतभेदाः कामानामानन्त्यादनन्ताश्च।तत उरुक्रमचेष्टितादन्यथा यत्किंचनापि किं पुनर्बहु विवक्षतो वक्तुमिच्छतोपि किं पुनर्वदतोपि किं पुनस्तन्मुखाच्छ्रुत्वा तदनुतिष्ठतः सर्वत्र हेतुः पृथग्दृशः तच्चेष्टितात्पृथग्वस्तुन्येव दृग्दृष्टिस्तात्पर्यं यस्य तस्य अतस्तत्कृतै रूपैर्निरूपणीयैरर्थैर्नामभिस्तद्वाचकैः शब्दैश्चानवस्थिता मतिः कदाचिदपि काले क्वापि देशे वा तेन घूर्णयित्वा नानास्थानं नीत्वाऽऽहता व्याहता ततो निमज्जत एव यथा तथा तैर्ज्ञानकर्मकाव्यकौशलादिभिरपीति विश्वनाथः॥१४॥ प्रत्युत वाक्यालंकारे ।तव तु का वार्त्ता साक्षाद्वेदेनोक्तमपि न मनुत इत्याह—यद्वेति। तत्प्रवृत्तिमार्गानधिकृतविषयत्वमेव। भट्टैर्मीमांसकैः । यत्रान्धपंग्वादयस्संन्ति तत्रेत्यर्थः । विश्वनाथस्तु—ननु मया भगवद्यश एव ग्राहयितुं भारतादिशास्त्रं कृतं किं तु कामिलोकानां भगवद्भक्तिमनिच्छूनां शास्त्रे प्रवर्त्तनार्थमेव प्रथमं ग्राम्यसुखप्रक्षेपो दत्तः न तु मे तत्र तात्पर्यं "मुनिर्विवक्षुर्भगवद्गुणानां सखापि ते भारतमाह कृष्णः । यस्मिन्नृणां ग्राम्यसुखानुवादैर्मतिर्गृहीता नु हरेः कथायाम्" इति विदुरोक्तिरेव प्रमाणमिति चेत्सत्यम् । उपकारे प्रवृत्तास्त्वत्त एव लोकानामपकार एवाभू

विचक्षणोऽस्यार्हति वेदितुं विभोरनंतपारस्य निवृत्तितः सुखम् ॥ प्रवर्तमानस्य गुणैरनात्मनस्ततो भवान्दर्शय चेष्टितं विभोः ॥ १६ ॥

तस्य काम्यकर्मादेरन्येन तत्त्वज्ञेन क्रियमाणं निवारणं स्वयमेव वा त्वया क्रियमाणं यद्वा " न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः " इति श्रुत्या क्रियमाणं निवारणं यथार्थमेतदिति न मन्यते । किंतु प्रवृत्तिमार्गानधिकृतविषयं तदिति कल्पयति । तदुक्तं मतांतरोपन्यासे भट्टैः । " तत्रैवं शक्यते वक्तुं येऽधपंग्वादयो नराः । गृहस्थत्वं न शक्ष्यंति कर्तुं तेषामयं विधिः ॥ नैष्ठिकब्रह्मचर्यं वा परिव्राजकतापि वा । तैरवश्यं ग्रहीतव्या तेनादावेतदुच्यते॥ " इत्यादि ॥ १५ ॥ ननु यद्येवं प्रवृत्तिमार्गो निंद्यते तर्हि निवृत्तिमार्गे सर्वक्रियात्यागेनैव पारमेश्वरसुखस्वरूपानुभूतेः किं तद्यशःकथनेनापि तत्राह । विचक्षण इति । विचक्षणो निपुणः कश्चिदेव निवृत्तितः सर्वक्रियानिवृत्त्यास्य विभोः सुखं निर्विकल्पकसुखात्मकं स्वरूपं वेदितुं ज्ञातुमर्हति । न पुनरविचक्षणः प्रवृत्तिस्वभावः । विभुत्वे हेतुः अनंतः कालतो देशतश्च पारं न

दित्याह—जुगुप्सितमिति । धर्मकृते विदुरोक्तन्यायेन भगवद्धर्मग्रहणार्थमेव जुगुप्सितमनुशासतः काम्यधर्माद्युपदिशतस्त्वत्तः सकाशादेव स्वभावरक्तस्य विषयेषूत्पत्तित एव रागिणो लोकस्य महान्व्यतिक्रम उपप्लवो जातः । कुत इत्यत आह—यद्वाक्यतो वेदव्यासवाक्यतो धर्म इति । इतरः प्राकृतो जनः "देवान्पितॄन्समभ्यर्च्य खादन्मांसं न दोषभाक्" इत्यादिविधावेव स्थितस्तस्य धर्मस्य निवारणं "सर्वधर्मान्परित्यज्य मामेव शरणं व्रज" इत्यादिवाक्येन क्रियमाणं न मन्यते किं तु प्रवृत्तिमार्गानधिकृतविषयमेतद्वाक्यमिति कल्पयति तदुक्तमित्यादि स्वामिवत् । अत्र संदर्भस्तु तदेवं हरियशो गौणीकृत्य भारतादिषु कृतं जुगुप्सितकाम्यकर्मादिवर्णनप्राचुर्य्यं लोकानां तदेकनिष्ठत्वाय जातमित्याह--जगुप्सितमिति । स्वभावरक्तस्यानादिविषयवासनया स्वभावत एव कामनापरस्य पुरुषस्य धर्मकृते भगवद्धर्मपर्यंतस्य निष्कामस्य धर्मस्य कृते भगवद्धर्ममेव तत्र पर्यवसायितुमनु निरन्तरमेव निन्द्यं काम्यं कर्म शासत उपदिशतो न तु वेदे प्रवर्तनार्थं तत्प्ररोचनया यत्किंचिदनूद्य मुहुरपवदतः कस्यचिदन्यस्यापि महान्व्यतिक्रमो वेदतात्पर्यलंघनेनान्यायः स्यात्, भवतः स्यादिति तु कथं ब्रवाणीति भावः । ननु वेदेपि तादृक्काम्यकर्मकथनस्य निरंतरता दृश्यते तत्राह-यद्वाक्यत इति । यस्य तद्विधस्य वाक्यतो दुरूहवेदार्थनिर्णायकाद्वाक्याद्वचनमात्रात् । किमुत ब्रह्मलोकप्रसिद्धशतकोटिविस्तरपुराणेतिहासतः स्वेच्छया येन संगृहीतात्तत्तद्वाक्यादितरो जनस्तदेव कर्त्तव्यमिति परामृशन्स्थितो यंत्र निश्चलस्तस्य स्यात्तद्विधस्य निवारणमन्यथावक्तृतया चिन्तनं तव स्वल्पतमवाक्येनान्यस्य प्रचुरतमवाक्येनापि न मन्यते यस्मात्तव शिष्याणामपि जैमिन्यादीनां प्रतिपत्तिर्दृश्यते तस्मात्प्रवृत्तञ्च परित्यज्य "निवृत्ततर्षैरुपगीयमानात्" इत्यादिरीत्या सर्वेषां सर्वापच्छमकं काम्यञ्च यद्भगवद्यशस्तदेव वर्ण्यतामिति भावः । अतो "न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम् । जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥" इति श्रीगीतावाक्यं ज्ञानाद्युपदेष्टृविषयमेव न तु भगवद्धर्ममहिमत्वतादृशविषयम् । तदुक्तं श्रीमदजितेन "स्वयं निःश्रेयसं विद्वान्न वक्त्यज्ञाय कर्म हि । न राति रोगिणोऽपथ्यं वाञ्छतोऽपि भिषक्तमः" इति तादृशोपदेशे सर्वेषामेव परमविश्वासास्पदत्वादिति भावः ॥ १९ ॥ अत्राक्षिपति--नन्विति । इत्यर्थ इति । भवच्छब्दयोगे मध्यमपुरुषप्रयोग आर्षः । पाठान्तरे भवान्निति पाठे हे भवन्निति सर्वदा विद्यमानत्वेन त्वं साक्षादीशत्वात्समर्थोसीति भावः । विश्वनाथस्तु किञ्च तदपि धर्मान्तरं विनिंद्य भगवद्यशः एव वर्णयेत्याह--विचक्षण इति । इतरः प्राकृतो विवेकशून्यो जनः स्थित इत्युक्तं विचक्षणो विवेकी जनस्तु अस्य विभोः सुखं निवृत्तितस्तदितरग्राम्यसुखनिवृत्त्या वेदितुमर्हति । तत्र हेतुः । अनंतपारस्य । तेन साक्षादल्पप्रमाणाच्च विषयसुखान्निवृत्त्य अनन्तमपारप्रमाणं च विभोः सुखं विदित्वा तदर्थं भक्तिमेव कर्तुमर्हतीति भावः । ततश्च विचक्षणजनस्य भक्तौ प्रवृत्तिमालोक्य "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः"इति न्यायेनाविचक्षणोपि तत्रैव प्रवर्त्तेतेत्यतस्तदर्थमपि भगवच्चरितं वर्णयेत्याह । गुणैः प्रवर्तमानस्यात एवानात्मनो बुद्धिविवेकशून्यस्य जनस्य बन्धमुक्तये चेष्टितं लीलां दर्शय । हे विभो तत्र समर्थः । यतोऽसावपि सर्वतो निवृत्य शुद्धां भक्तिं कृत्वा तदीयं सुखं लभतामिति भावः । यद्वा एवमवतारणीयम् । ननु यदि निवारणं जनो न मन्यते

त्यक्त्वा स्वधर्मं चरणांबुजं हरेर्भजन्नपक्कोऽथ पतेत्ततो यदि ॥ यत्र क्व वाभद्रमभूदमुष्य किं को वाऽर्थ आप्तोऽभजतां स्वधर्मतः ॥ १७ ॥

यस्य तस्य विभोश्चेष्टितम् । ततः कारणात् हे विभोऽनात्मनो देहाद्यभिमानिनोऽत एव गुणैः सत्त्वादिभिः प्रवर्तमानस्य जनस्य दशय। भवानिति। त्वमित्यर्थः । पाठांतरे हे भवन्निति संबोधनम् ॥ १६॥ एवं तावत्काम्यधर्मादेरनर्थहेतुत्वात्तं ।विहाय हरेर्लीलैव वर्णनीयेत्युक्तमिदानीं तु नित्यनैमित्तिकस्वधर्मनिष्ठामप्यनादृत्य केवलं हरिभक्तिरेवोपदेष्टव्येत्याशयेनाह । त्यक्त्वेति । ननु स्वधर्मत्यागेन भजन् भक्तिपरिपाकेन यदि कृतार्थो भवेत्तदा न काचिच्चिंता यदि पुनरपक्व एव म्रियेत ततो भ्रश्येद्वा तदा स्वधर्मत्यागनिमित्तोऽनर्थः स्यादित्याशंक्याह।ततो भजनात्कथंचित्पतेद्भ्रश्येन्म्रियेत वा यदि तदापि भक्तिरसिकस्य कर्मानधिकारान्नानर्थशंका। अंगीकृत्याप्याह । वा शब्दः कटाक्षे।यत्र क्व वा नीचयोनावप्यमुष्य भक्तिरसिकस्याभद्रमभूत्किं नाभूदेवेत्यर्थः।भक्तिवासनासद्भावादितिभावः।अभजद्भिस्तु केवलं स्वधर्मतःको वा अर्थ आप्तः।अभजतामिति षष्ठी तु संबंधमात्र

तर्ह्यधुना त्वदुपदेशेनाप्यारब्धेन तत्तत्सर्वमतनिवर्त्तकभक्तिमात्रप्रवर्त्तकेन शास्त्रेणाऽलम्।मैवम् ।न ह्यस्मिञ्जगति सर्वे एवाविवेकिनो विवेकिनोऽपि सन्तीत्याह-विचक्षण इति। विभोः कथंभूतस्यानन्तपारस्य।तत्र कालतोन्ताभावमाह । प्रकर्षेणाधुनापि वर्त्तमानस्य । तेन तस्य तच्चेष्टितस्य भूतपूर्वमात्रत्वं न ज्ञेयमिति भावः । प्रमाणतोन्ताभावमाह । गुणैः सत्त्वादिभिर्न भवत्यात्मा देहो यस्य चिदानन्दमयविग्रहस्येत्यर्थः । न हि घनचिद्वस्तु केनापि प्रमातुं शक्यत इति भावः । संदर्भस्तु पूर्वमभिप्रेतं यशोवर्णनमेवोपदिशति । विचक्षणो भवानित्यन्वयः । हे विभो यतो विचक्षणो भवान् सर्वतो निवृत्तिपूर्वकमस्य विभोः श्रीभगवतः संबंधि सुखं भक्तिरूपं वेदितुमर्हति योग्यो भवति ततो हेतोरनात्मनः पारमार्थिकबुद्धिहीनस्यात एव गुणैर्विषयैस्तत्सुखेन प्रवर्त्तमानस्यापि जनस्य कृते तस्य चेष्टितं लीलामेव त्वं वर्णय "निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोभिरामात्" इति तस्याप्यनायासेन सुखप्राप्त्युपपत्तेः । ततो निवृत्तानां तु सुतरामेव तदुद्भूतं भवतीति भावः । ततश्च विचक्षणो यो भवति स एव सर्वविषयनिवृत्त्या भजनान्तरेण यदस्य भक्तिरूपं सुखं तद्वेदितुमर्हति। अतो यद्यपि "स संहितां भागवतीं कृत्वानुक्रम्य चात्मजम् । शुकमध्यापयामास निवृत्तिनिरतं मुनिम्" इति । तथा"हित्वा स्वशिष्यान्पैलादीन्भगवान्बादरायणः । मह्यं पुत्राय शान्ताय परं गुह्यमिदं जगौ" इति तस्यैव मुख्याधिकारित्वमुक्तम् ।तथापि "निवृत्ततर्षैः" इत्यादिन्यायेन गुणैः प्रवर्त्तमानस्यापि हितार्थं तस्य चेष्टितमेव वर्णयेत्यादि पूर्ववत् ॥ १६॥ अत्राक्षिपति-नन्विति । इत्यर्थ इति । तस्यांतस्यां स लभते पौर्वदैहिकम् इत्याशयः । अत्र विश्वनाथः । ननु "न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम्। जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन्"इति श्रीगीतोपनिष द्वाक्येन कर्मत्याजनं निषिद्धम् । सत्यम्।तज्ज्ञानोपदेष्टृविषयमेव ज्ञानस्यान्तःकरणशुद्ध्यधीनत्वात्तच्छुद्धेस्तु निष्कामकर्माधीनत्वात् । भक्तेस्तु स्वतः प्राबल्यादन्तःकरणशुद्धिपर्यन्तानपेक्षकत्वान्न भक्त्युपदेष्टृविषयम् । तदुक्तं श्रीमदजितेन "स्वयं निःश्रेयसं विद्वान्न वक्त्यज्ञाय कर्म हि ।न राति रागिणोऽपथ्यं वांछतोऽपि भिषक्तमः" इति ।तस्मात् "सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज" इति "धर्मान्संत्यज्य यः सर्वान्मां भजेत स सत्तमः" इत्यादिभगवद्वाक्यबलान्नित्यनैमित्तिकस्वधर्मनिष्ठाया अपि त्याजनयैव केवलैव हरिभक्तिरुपदेष्टव्येत्याशयेनाह-त्यक्त्वेति। क्त्वाप्रत्ययेन भजनारम्भदशायामपि कर्मानुवृत्तिर्निषिद्धा । "स्वधर्मं त्यक्त्वा यो भजन्स्यादमुष्याभद्रं तावन्न भवेदेव देवर्षिभूताप्तनृणां पितॄणाम्"इत्यादेः । यदि पुनरपक्वो भगवत्प्राप्त्ययोग्यो म्रियेत जविन्नेव कथंचिदन्यासक्तस्ततो भजनाद्दुराचारतया वा पतेत्तदपि कर्मत्यागनिमित्तमभद्रं संभवेदेव । भक्तिवासनाया अनुच्छित्तिधर्मत्वात्सूक्ष्मरूपेण तदापि सत्त्वात्, कर्मानधिकारादित्याह-यत्र क्व वा जन्मनि किमभद्रमभून्नाभूदेव।वाशब्दस्य कटाक्षार्थकत्वात् "तुष्यतु दुर्जनः" इति न्यायेनैव पाताद्युपगमः न तु वस्तुतः पातस्तद्धेतुकं नीचयोनित्वं च । "न ह्यंगोपक्रमे ध्वंसो मद्धर्मस्योद्धवाण्वपि" इति श्रीभगवद्वाक्यादमोघभक्त्यंकुरस्यावश्यभाव्यपत्रपुष्पफलादित्वादिति भावः । तत्र भवेदित्यनुक्त्वा भूतनिर्देशस्तु वादिनं प्रत्याक्षेपं सूचयति । संदर्भस्तु यदि भगवत्प्राप्त्ययोग्यः स्यादायुःक्षयेण चित्रकेतुवदपराधेन वा देहान्तरं प्राप्नुयात् । भरतवत्तस्मिन्नेव देहेपि बाल्याद्याविष्टः स्यात्तदा तस्य भक्त्यभावसम

तस्यैव हेतोः प्रयतेत कोविदो न लभ्यते यद्भ्रमतामुपर्यधः ॥ तल्लभ्यते दुःखवदन्यतः सुखं कालेन सर्वत्र गभीररंहसा ॥ १८ ॥ न वै जनो जातु कथंचनाव्रजेन्मुकुंदसेव्यन्यवदंग संसृतिम् ॥ स्मरन्मुकुंदांघ्र्युपगूहनं पुनर्विहातुमिच्छेन्न रसग्रहो यतः ॥ १९ ॥

विवक्षया॥ १७॥ ननु स्वधर्ममात्रादपि "कर्मणा पितृलोकः" इति श्रुतेः पितृलोकप्राप्तिः फलमस्त्येव तत्राह।तस्यैवेति।तस्यैव हेतोस्तदर्थं यत्नं कुर्यात्।यदुपरि ब्रह्मपर्यंतमधः स्थावरपर्यंतं च भ्रमद्भिर्जीवैर्न लभ्यते । षष्ठी तु पूर्ववत् । तत्तु विषयसुखमन्यत एव प्राचीनकर्मणा सर्वत्र नरकादावपि लभ्यते दुःखवत् यथा दुःखं प्रयत्नं विनापि लभ्यते तद्वत्।तदुक्तम् "अप्रार्थितानि दुःखानि यथैवायांति देहिनाम् । सुखान्यपि तथा मन्ये दैन्यमत्रातिरिच्यते" इति॥ १८॥ यदुक्तं यत्र क्व वाभद्रमभूदिति तदुपपादयति । न वा इति । मुकुंदसेवी जनो जातु कदाचित्कथंचन कुयोनिगतोऽपि संसृतिं नाव्रजेन्नाविशेत् । अंग अहो अन्यवत्केवलकर्मनिष्ठवदिति वैधर्म्ये दृष्टांतः । कुत इत्यत आह । मुकुंदांघ्रेरुपगूहनमालिंगनं पुनः स्मरन्विहातुं नेच्छेत् । यतोऽयं जनो रसग्रहः रसेन रसनीयेन गृह्यते वशीक्रियते यद्वा रसे रसनीये ग्रह आग्रहो यस्य । तदुक्तं भगवता ।

येपि यः स्वधर्मत्यागस्तेनापि नाभद्रं भवेद्भक्तिवासनाया अनुच्छित्तिधर्मत्वात् । ततश्च यत्र क्वाप्यवस्थायां तस्याभद्रं न स्यादेव । अभक्तानां तु कोवाऽर्थः सततमव्यभिचारी स्यादपि तु सर्वोपि व्यभिचार्येव स्यादिति भावः ॥ १७ ॥ अत्राक्षिपति-नन्विति । "अपाम सोमममृता अभूम" इत्यादयोऽदृष्टस्वर्गादिसुखे तथा कृषिवाणिज्यादयो दृष्टसुखे च जनान्प्रवर्त्तयंते तत्तत्सुखमनपेक्ष्य स्वधर्मं त्यक्त्वा कथं भक्तौ जनाः प्रवर्त्तंतामिति चेत् । सत्यम् । कोविदस्तु नैवं तैः प्रतारितः स्यात्कर्मणा यो योर्थ आभासते स पुनरर्थाभास एव नार्थ इति विमृश्येत्याह-तस्यैवेति । यत्स्वरूपसाक्षात्कारपूर्वकं परमानन्दसुखं भगवद्विग्रहध्यानादिभक्तिसुखं वा तस्यैवेत्यर्थः। पूर्ववत् अभजतामित्यत्र यथा तृतीयार्थे षष्ठी तथात्रापीत्यर्थः । नरकादौ इहादिनाशूकरादिग्रहः । तत्प्रयत्नं विना दुःखादिप्रापणमुक्तं भारतादावित्यर्थः । अत्र यत्नकरणे दैन्यमात्राधिक्यमिति भावः । अत एव ग्रन्थान्तरेप्युक्तम् । "आयू रक्षति मर्माणि त्वायुरन्नं प्रयच्छति । अर्जुनस्य प्रतिज्ञे द्वे न दैन्यं न पलायनम्" इति। तस्मादैहिकार्थं सुतरां कर्म न कर्त्तव्यमिति भावः । कालोत्र प्राचीनकर्मभोगावसरः॥ १८॥संसृतिं कर्मफलभोगमयीं नाव्रजेत् । तस्य भगवदुत्थशुभाशुभफलभोगवत्त्वात्तदुत्थशुभाशुभयोः कर्मजन्यत्वाभावादिति भावः । "त्वदवगमी न वेति भवदुत्थशुभाशुभयोर्गुणविगुणान्वयात्" इति श्रुत्युक्तेः । "न कर्मबन्धनं जन्म वैष्णवानां च विद्यते" इति पाद्मोक्तेश्च । ततश्च पूर्वाभ्यासादेव मुकुन्दस्यांघ्र्योरुपगूहनं मनसा परिष्वंगं स्मरन्पुनरत्यक्तुं नेच्छेत्। "अत्रांघ्री स्मरन्" इत्यनुक्त्वा "तदुपगूहनम्"इति पुनरिति पादाभ्यामेकद्वित्रिवारं स्वेच्छयैव दुरभिनिवेशवशाद्भजनं त्यक्त्वापि कियतः समयादनन्तरं स्वपूर्वापरदशयोस्तत्स्मरणसुखमस्मरणदुःखं च स्मृत्वा कृतानुतापो हन्तहन्त दुर्बुद्धिरहं किमकरवम्।भवतु नामातः परं तु न प्रभोर्भजनं हास्यामीति पुनरपि भजनमारभत एवेत्यर्थः। अत्र विजह्यादित्यनुक्त्वा विहातुं नेच्छेदित्यनेन तस्य गर्वराहित्यं सूचितम् । भजनं न हास्यामीतीच्छामात्रं मया क्रियते । तन्निर्वाहस्त्वीश्वरस्यैव पाणाविति तदाशयः।तत्र हेतुः । रसे ग्रहः आग्रहो यस्य रस एव ग्रह इव यं न हास्यतीति वा। अयमर्थः--भजनमेव निष्ठारुच्यशक्त्यंते रतिदशायां साक्षादेव रसो भवेदतो भजनस्य प्रथमारम्भादिनेऽपि प्रच्छन्नतया रसांशत्वमस्त्येव तदुक्तं "भक्तिः परेशानुभवे विरक्तिः" इत्यत्र "तुष्टिः पुष्टिः क्षुदपायोनुघासम्" इति। स च स्वादविशेषो भक्तेन दुस्त्यजस्तेन च भक्त इति।ततश्च भजनस्याविच्छेद उत्पद्यमाने भजनीयस्य मुकुन्दस्याचिरादेव प्राप्तिरित्यत्र कः संदेह इति भावः । संदर्भस्तु तर्हि किं संसारध्वंस एव पुरुषार्थ इत्याशंक्य तत्राप्यस्ति वैशिष्ट्यमित्याह-स्मरन्निति । यस्तु तद्भक्तिरसग्रहः सं पुनारित्यन्वयः । वक्ष्यते च "त्रिभुवनविभवहेतवेप्यकुण्ठस्मृतिरजितात्मसुरादिभिर्विमृग्यात् । न चलति भगवत्पदारविन्दाल्लवनिमिषार्द्धमपि स वैष्णवाग्र्यः" इति ।

इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसंभवाः ॥ तद्धि स्वयं वेद भवांस्तथाऽपि वै प्रादेशमात्रं भवतः प्रदर्शितम् ॥ २० ॥
त्वमात्मनात्मानमवेह्यमोघदृक्परस्य पुंसः परमात्मनः कलाम् ॥ अजं प्रजातं जगतः शिवाय तन्महानुभावाभ्युदयोऽधिगण्यताम् ॥ २१ ॥
इदं हि पुंसस्तपसः श्रुतस्य वा स्विष्टस्य सूक्तस्य च बुद्धदत्तयोः ॥ अविच्युतोऽर्थः कविभिर्निरूपितो यदुत्तमश्लोकगुणानुवर्णनम् ॥ २२ ॥

'यतते च ततो भूयः संसिद्धौ कुरुनंदन । पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः'' इति ॥ १९ ॥ तदेवं भगवल्लीलां प्राधान्येन वर्णयेत्युक्तं तत्र को भगवान् काश्च तस्य लीला इत्यपेक्षायामाह । इदं विश्वं भगवानेव । स त्वस्माद्विश्वस्मादितरः । ईश्वरात्प्रपंचो न पृथगीश्वरस्तु प्रपंचात्पृथगित्यर्थः । तत्र हेतुः । यतो भगवतो हेतोर्जगतः स्थित्यादयो भवंति । अनेनैव लीला अपि दर्शिताः । यद्वा । इदं विश्वं भगवान् । इतर इव यः स जीवोऽपि भगवान् । चेतनाचेतनः प्रपंचस्तद्व्यतिरेकेण नास्ति स एवै कस्तत्त्वमित्यर्थः हिशब्देन "सर्वं खल्विदं ब्रह्म" इत्यादि प्रमाणं सूचितम् । तद्धि स्वयमेव भवान्वेद । प्रादेशमात्रमेकदेशमात्रमाचार्यवान्पुरुषो वेदेत्यादिश्रुत्यर्थसंपादनाय प्रदर्शितम् ॥ २० ॥ न च तवाचार्यापेक्षा ईश्वरावतारत्वादित्याह । त्वमिति । हे अमोघदृक् त्वमात्मना स्वयमात्मानमजमेव संतं जगतः शिवाय प्रजातमवेहि । कुतः । परस्य पुंसः कलामंशभूतम् । तत्तस्मान्महानुभावस्य हरेरभ्युदयः पराक्रमः अधि अधिकं गण्यतां निरूप्यताम् ॥ २१ ॥ अनेनैव तपआदि सर्वं तव सफलं स्यादित्याह ।

''न पारमेष्ठ्यं न महेन्द्रधिष्ण्यम्'' इत्यादि ॥१९॥ तत्र भगवल्लीलयोर्मध्ये । इत्यर्थ इति । कारणाद्धि कार्यं न पृथगस्ति मृदो घटवत्कारणं हि कार्यात्पृथगस्त्येव घटान्मृदिवेति भावः । तदेवाह-तत्रेति । तत्रः प्रपञ्चात्पृथक्त्वे अनेनैव विश्वस्थानादिकथनेन श्रीनारदेन श्रीव्यासदेवाय सर्गादिदशलक्षणवच्छ्रीमद्भागवतं सूत्ररूपेण सूचितं स्थानपदेन स्थानं तु प्रत्यक्षत एव दृश्यते । पोषणमन्वंतरवंशवंश्यानुचरितोक्तीनामपि स्थित्यन्तर्गतत्वमेव विमर्शत आयाति । संभवपदेन सर्गविसर्गावुक्तौ । निरोधपदेन मुक्तिराश्रयश्चोक्ताविति । आत्यंतिकलयेऽवधित्वेन हरिरेवाश्रय आत्यन्तिकलय एव हि मोक्षः।यद्वेदं हि विश्वमिति पूर्वार्द्धेन जीवन्मुक्तिरप्युक्ता । तस्याः सर्वत्रात्मदृष्टिभावनारूपत्वादित्यर्थः । पूर्वव्याख्याने विश्वपदेन केषांचिन्मते जडप्रपञ्च एव गृह्यते जीवस्य चेतनत्वात् । तेन तद्ग्रहणं न स्यादित्यस्वारस्यादाह-यद्वेति । श्रुतिर्व्याख्यातप्रायैवेति । अत्र विश्वनाथः । एवं भक्तिमुपदिश्य भजनीयेश्वरस्यै तावदेव ज्ञानं भक्तैः प्रथममपेक्षितव्यमिति तदुपदिशति-इदं दृश्यमानं विश्वं भगवानिव सदिव चेतनमिवानंदरूपमिव । न तु साक्षात्सच्चिदानंदरूपो भगवानेवेत्यर्थः । भगवतः सत्त्वादीनां सार्वकालिकत्वाद्विश्वस्य सत्त्वादीनां काचित्कत्वादिति भावः।यतोऽसौ भगवानितरः विश्वस्मादस्मादन्यः कथं विश्वं भगवानिव कथं भगवान्विश्वस्मादितरस्तत्राह-यत इति।यस्मान्मायाशक्तिमतो भगवतः सकाशाज्जगतः स्थाननिरोधसंभवा इति विश्वस्य कार्यरूपत्वात्केनचिदंशेनैव तद्रूपत्वं निरूप्यते।भगवतस्तत्कारणत्वात्तदितरत्वमित्यतः''सर्वं खल्विदं ब्रह्म''इत्यादिश्रुतिभिरपि ब्रह्मकार्यत्वादेव ब्रह्मत्वातिदेशो ज्ञाप्यते।तत्सर्वं भगवदवतारत्वात्त्वं वेद एव तथापि''आचार्यवान्पुरुषो वेद''इति न्यायेन प्रादेशमात्रं दिङ्मात्रं कोटिपरार्द्धादप्यधिकप्रमाणस्य भगवतस्तद्भक्तेश्च तदैश्वर्यज्ञानस्य च प्रादेशमात्रं दशांगुलमात्रे प्रदर्शितम् । ''प्रादेशतालगोकर्णस्तर्जन्यादियुते ततः'' इत्यमरः॥२०॥स्वयं वेदेति यदुक्तं तदुपपादयति त्वमिति।अमोघा लोककल्याणकरा दृग्दृष्टिर्ज्ञानमिति यावत्।यस्य हि एतादृक्''सर्ववर्णाश्रमाणां यद्दध्यौ हितममोघदृक्''इत्युक्तेः।अत्र विश्वनाथः।तदेवं धर्मान्परित्यज्य भक्त्यैव कृतार्थीभवतीत्युक्तम् ॥२१॥ इदानीं कस्यचिद्भक्तस्य केषुचित्कर्मसु यदि स्पृहा स्यात्तदा ते धर्मा अपि भक्त्यैव भवन्तीत्याह-अविच्युतोऽव्यभिचारी अर्थो हेतुः।''अर्थो विषयार्थनयोर्धनकारणवस्तुनि।अभिधेये च शब्दानां निवृत्तौ च प्रयोजने'' इति मेदिनी। ''यत्कर्मभिर्यत्तपसा'' इत्यादिभगवदुक्तेस्तपआदिफलानामपि सिद्धिर्भवेत्किं पुनस्तेषाम्।''स्मर्त्तव्यः सततं विष्णुर्विस्मर्त्तव्यो न जातुचित्। सर्वे विधिनिषेधाः स्युरेतयोरेव किंकराः'' इत्यादिवाक्यतः सर्वेषामपि धर्माणां किं पुनस्तपआदि

अहं पुरातीतभवेऽभवं मुने दास्यास्तु कस्याश्चन वेदवादिनाम् ॥ निरूपितो बालक एव योगिनां शुश्रूषणे प्रावृषि निर्विविक्षताम् ॥ २३ ॥
ते मय्यपेताखिलचापलेऽर्भके दांतेऽधृतक्रीडनकेऽनुवर्तिनि ॥ चक्रुः कृपां यद्यपि तुल्यदर्शनाः शुश्रूषमाणे मुनयोऽल्पभाषिणि ॥ २४ ॥
उच्छिष्टलेपाननुमोदितो द्विजैः सकृत्स्म भुञ्जे तदपास्तकिल्बिषः ॥ एवं प्रवृत्तस्य विशुद्धचेतसस्तद्धर्म एवात्मरुचिः प्रजायते ॥ २५ ॥

इदं हीति । श्रुतादयो भावे निष्ठा । इदमेव हि तपःश्रवणादेरविच्युतो नित्योऽर्थः फलम् । किं तत् उत्तमश्लोकस्य गुणानुवर्णनमिति यत् ॥ २२ ॥ सत्संगतो हरिकथाश्रवणादिफलं स्ववृत्तांतेन प्रपंचयति । अहमिति । अहं पुरा पूर्वकल्पेऽतीतभवे पूर्वजन्मनि वेदवादिनां दास्याः सकाशादभवं जातोऽस्मि । निरूपितो नियुक्तः । क्व । योगिनां शुश्रूषणे । प्रावृषि वर्षोपलक्षिते चातुर्मास्ये निर्विविक्षतां निर्वेशमेकत्र वासं कर्तुमिच्छताम् ॥ २३ ॥ अपेतानि गतान्यखिलानि चापलानि यस्मात्तस्मिन् । दांते नियतेंद्रिये । अधृतक्रीडनके त्यक्तक्रीडासाधने । अनुवर्तिन्यनुकूले ॥ २४ ॥ उच्छिष्टस्य लेपान्पात्रलग्नांस्तैर्द्विजैरनुज्ञातः सन् भुंजे स्म । तेन भोज

मात्राणामिति । यद्वा तपस इति तपःश्रुतादिविधायकश्रुतिवाक्यानां भगवद्भक्तिविधान एव तात्पर्याद्धरिकीर्त्तनमेवाविच्युतोऽर्थोऽभिधेयः ''धर्मो यस्यां मदात्मकः'' इति भगवदुक्तेः । सर्वशास्त्रवाक्यानां श्रीभगवत्येव तात्पर्यमिति मधुसूदनसरस्वतीव्याख्यानाच्च । तपः कायक्लेशलक्षणं व्रतादि श्रुतं शास्त्रश्रवणं स्विष्टमुत्तमकल्पतया यजनं सूक्तमध्ययनं बुद्धिर्ज्ञानं दत्तं दानम् । बुद्धमिति पाठः प्रशस्तः । निष्ठेति क्तप्रत्ययसंज्ञा पाणिनीयनये ॥ २२ ॥ यादृच्छिकी भगवद्भक्तकृपैव शुद्धाया उक्तलक्षणाया भक्तेर्हेतुर्नान्यत्तपआदिकमिति वक्तुं स्वपूर्ववृत्तांतमाह-अहमिति । योगिनां ''तत्रान्वहं कृष्णकथाः प्रगायताम्'' इत्यग्रे वक्ष्यमाणत्वाद्भक्तियोगवता निरूपितो नियुक्तोऽस्मि ॥ २३ ॥ त्यक्तक्रीडासाधने बाल्योचितं क्रीडनमप्यकुर्वति यद्यपि ते तुल्यदर्शनाः सुशीलेषु दुःशीलेषु च सत्कुर्वत्सु तिरस्कुर्वत्सु च सदाचारेषु दुराचारेषु च जगज्जनेषु यद्यपि समदृष्टयः को वा तेषामनुग्राह्यः को वा निग्राह्यस्तदपि मयि कृपां चक्रुः । सर्वत्र साम्येपि महत्सु भरतप्रह्लादादिषु कृपाया वैषम्यदर्शनादिति भावः । अत्र मत्सौशील्यानुवृत्त्यादिकमनपेक्ष्यैव प्रथमं कृपां चक्रुः । ततश्च तत्कृपाजन्यसौशील्यानुवृत्त्यादिकं पुनरपि तेषां कृपातिशयस्यैव कारणमभूदिति तेषां निरुपाधिकरुणत्वमप्यवश्यमेव व्याख्येयम् । ते यद्यपि तुल्यदर्शनास्तदपि अचापल्यादिगुणविशिष्टे मयि कृपां चक्रुरिति व्याख्याने गुणदोषदर्शनप्रसक्त्या तेषां तुल्यदर्शनत्वं व्याहन्येत । प्रथमकृपायाश्च निरुपाधित्वं न स्यादिति न तथा व्याख्येयम् । कृपा हि द्विविधा गुणमयी निर्गुणा च । तत्राद्या सर्वेषां सांसारिकाणामपि सर्वत्र गुणोपाधिका यथासंभवं भवेत् । गुणापाये तदपायश्च दोषद्वेषादयश्च । द्वितीया तु निस्तीर्णसंसाराणां तादृशानां परमभक्तिमतां निरुपाधिकैव सर्वत्र साम्येन मायिकं कमपि गुणमनपेक्ष्य ''गिरयो मुमुचुयं कचिन्न मुमुचुः शिवम् । यथा ज्ञानामृतं काले ज्ञानिनो ददते न वा'' इति शुकोक्तन्यायेन कदाचित्कमपि जनं विषयीकरोति । सा ह्यन्तःकरणस्य गुणकृतायाः कठोरताया भगवद्भक्त्यैव ध्वंसे सति तयैव द्रवीभावमापादिते तत्रैवान्तःकरणे आविर्भवेत् । तदुक्तं ''रुचिभिश्चित्तमासृण्यकृदसौ भाव उच्यते'' इति । एवं ''सतां कृपा महत्सेवा श्रद्धा गुरुपदाश्रयः'' इति भूमिकाचतुष्टयं सूचितम् ॥ २४ ॥ ननु ''न शूद्राय मतिं दद्यान्नैवोच्छिष्टं कदाचन'' इति मनूक्तिस्तु गृहस्थशूद्रपरैव तदुक्तं व्याघ्रमुनिना ''उच्छिष्टमन्नं दातव्यं शूद्रायागृहमेधिने । गृहस्थाय तु दातव्यमनुच्छिष्टं दिनेदिने'' इति । अतो मम तदा गृहस्थाभावादुच्छिष्टभुजौ न दोषः । किं च ''शूद्रस्तु ब्राह्मणोच्छिष्टभोजनान्नाशुचिर्भवेत्'' इति पुराणान्तरात् । ब्राह्मणेन तु कदाचिदपि कस्यचिदप्युच्छिष्टं नादनीयं तदुक्तं ''ब्राह्मणो यश्च लोभेन स्वादेनाद्याच्च कस्यचित् । उच्छिष्टं तस्य सततं नरकाः क्रमशो नृप'' इत्युक्तेः । स्वयमपि ब्राह्मणायोच्छिष्टं न दद्यात् । ''आत्मोच्छिष्टं तु मिष्टान्नं पयो दधि घृतं मधु । ब्राह्मणाय न दातव्यं दत्त्वा निरयमाप्नुयात्'' इति स्मृतेः । यच्च ''गुरुमूर्तेः सदा ध्यानं गुरोरुच्छिष्टस्य भोजनम्'' इत्युक्तं तद्भक्षितावशिष्टं भोजनपात्रस्थमन्नं

तत्रान्वहं कृष्णकथाः प्रगायतामनुग्रहेणाशृणवं मनोहराः ॥ ताः श्रद्धया मेऽनुपदं विशृण्वतः प्रियश्रवस्यंऽग ममाभवद्रुचिः ॥ २६ ॥ तस्मिंस्तदा लब्धरुचेर्महामुने प्रियश्रवस्यस्खलिता मतिर्मम ॥ ययाहमेतत्सदसत्स्वमायया पश्ये मयि ब्रह्मणि कल्पितं परे ॥२७॥ इत्थं शरत्प्रावृषिकावृतूहरे र्विशृण्वतो मेऽनुसवं यशोऽमलम्॥संकीर्त्यमानं मुनिभिर्महात्मभिर्भक्तिः प्रवृत्ताऽऽत्मरजस्तमोपहा ॥२८॥ तस्यैवं मेऽनुरक्तस्य प्रश्रितस्य हतैनसः॥ श्रद्दधानस्य बालस्य दांतस्यानुचरस्य च ॥ २९ ॥ ज्ञानं गुह्यतमं यत्तत्साक्षाद्भगवतोदितम् ॥ अन्ववोचन्गमिष्यंतः कृपया दीनवत्सलाः ॥३०॥

नेनापास्तकिल्बिषो जातोऽस्मि । तेषां धर्मे परमेश्वरभजने एवात्मनो मनसो रुचिः प्रजायते स्मेत्यनुषंगः ॥ २५ ॥ अशृणवं श्रुतवानस्मि । मे श्रद्धया ममैव स्वतःसिद्धया न त्वन्येन बलाज्जनितया । अतो ममेत्यस्यापौनरुक्त्यम् । अनुपदं प्रतिपदम् । प्रियं श्रवो यशो यस्य तस्मिन् ॥ २६ ॥ प्रियं श्रवो यस्य तस्मिन्भगवति लब्धरुचेर्ममास्खलिताऽप्रतिहता मतिरभवदित्यनुषंगः । यया मत्या परे प्रपंचातीते ब्रह्मरूपे मयि सदसत्स्थूलं सूक्ष्मं चैतच्छरीरं स्वमायया स्वाविद्यया कल्पितं नतु वस्तुतोऽस्तीति तत्क्षणमेव पश्यामि ॥ २७ ॥ एवं शुद्धे त्वंपदार्थे ज्ञाते देहादिकृतविक्षेपनिवृत्तस्तत्कारणभूतरजस्तमोनिवर्तिका दृढा भक्तिर्जातेत्याह । इत्थमिति । हरेर्यशः । अनुसवं त्रिकालम्॥ ॥ २८ ॥ यस्येति तस्य ज्ञानशुद्धत्वंपदार्थस्य दृढभक्तिमतो मे प्रश्रितस्य विनीतस्य ॥२९॥ गुह्यतममिति । साधनभूतधर्मतत्त्वज्ञानं गुह्यं तत्साध्यं विविक्तात्मज्ञानं गुह्यतरं

न वक्ति, किन्तुं पाकभांडस्थमेव गुरुभोजनतोवशिष्टमिति अन्यथा ''उच्छिष्टभोजिनश्चानः'' इत्युक्तिर्विरुध्येत । यद्वा निषेधो हि विहितेतरपरो बोध्यः । विहितास्तु निर्णयसुधाकरे उक्ताः । ''पितुर्ज्येष्ठस्य भ्रातुर्हि भोज्यमुच्छिष्टमेव हि । गुरुवद् गुरुपुत्रः स्यादन्यत्रोच्छिष्टभोजनात् ॥'' इत्यादिना । यद्वा प्राणाहुत्यनन्तरं भोजनस्य समाप्तत्वादतिप्रेमवते शिष्याय किंचिदन्नं देयमित्यभिप्रायिका चेयमुक्तिरिति ''प्राणस्याहुतिपर्यन्तं भोजनं परिकीर्त्तितम् । पश्चाज्जठरपूर्त्यर्थमन्नं प्राशायते जनैः'' इति । ''गुरोरुच्छिष्टं वा भुञ्जीत'' इति श्रुतिर्हि सामयिकं तदशनं वदति न सार्वकालिकमित्यलम् । यद्वा उच्छिष्टस्य लेपो मार्जनं पात्रपक्षे भस्मना भूमिपक्षे गोमयादिना बहुत्वं द्विजापेक्षया उच्छिष्टमार्जनं प्रति द्विजैरनुमोदित आज्ञप्तः तैः सह सकृदेकवारं भुञ्जे स्म । यथा ते प्रत्यहं सकृदेव भुञ्जते तथाहमपीत्यर्थः । द्विजा अत्र सनकादयो ज्ञेयाः । तदुक्तं ब्रह्मवैवर्त्ते ''एकस्मिन्नन्तरे विप्रा आययुर्विप्रमन्दिरे । शिशवः पंचवर्षीया महतां च महीयसः ॥ फलमूलादिकं काले चत्वारो मुनिपुंगवाः । विप्रदत्तं बुभुजिरे तच्छेषं बुभुजे शिशुः ॥'' इति । अत्रापि शेषभुजिरेवोक्ता न तूच्छिष्टभुजिरिति । तेनार्षिभोजनावशिष्टभोजनेन तदुच्छिष्टपात्रादिमार्जनेन वा निरस्तपाप्माहं जातोस्मि । एवं भजनेषु स्पृहा भक्तिरनर्थापगमस्तथा निष्ठा रुचिरिति पंच भूमिकाः अनेन श्लोकार्थेन सूचिताः । ''लेपो लेपनवृद्धयोश्च शोधनाशनयोरपि'' इति कोशात् ॥ २९ ॥ तत्र तदा विप्राश्रमे वा कृष्णकथा नन्दनन्दनस्य जन्मादिलीला अन्वहं प्रत्यहं । श्रद्धयेति । श्रद्धापदेनासक्तिर्दशमी भूमिका सूचिता । प्रतिपदं प्रतिक्षणं प्रतिसुप्तिङन्तं वा । प्रियश्रवसि कृष्णे । कृष्णे रतिमित्येकादशी ॥ २६ ॥ लब्धरुचेर्लब्धास्वादविशेषस्य स्खलनशून्या मतिरभूत् । अत्र विश्वनाथः । स्वमायया हेतुना मयि वर्त्तमानं यदेतत्स्थूलं सूक्ष्मं च शरीरं तत् यया मत्या परे ब्रह्मणि श्रीकृष्णे विषये एव कल्पितं पश्ये पश्यामि कल्पितं क्लृप्तीकृतं स्थापितमिति यावत् । तथाहि । स्थूलं शरीरं भगवज्जलकलशवहनदण्डवत्प्रणत्यादौ न तु स्वीये व्यावहारिके क्वापि कृत्ये सूक्ष्मं श्रवणनयनमनोबुद्ध्यादिकं तदीयगुणरूपमाधुर्यास्वादादावेव कल्पितं न तु वैषयिके क्वापि स्वभोग्ये वस्तुनीति पश्ये इति यत्पूर्वं बह्वायासेनापि भगवति क्लृप्तं नासीत् तदेव मनोनयनादिकं रतौ जातायां स्वस्वं बहुकालाभ्यस्तमपि विषयं त्यक्त्वा तत्रैव क्लृप्तमिति साक्षादनुभवामीत्यर्थः॥२७॥ऋतू ऋतुद्वयं व्याप्य''कालाध्वनोरत्यंतसंयोगे'' द्वितीया।भक्तिः प्रेमा।आत्मनां जीवमात्राणामपि रजस्तमसी अपहंतीति सा तदा तां भगवद्भक्तिं पृष्टवतामन्येषामपि रजस्तमसोर्नाशोऽभूदित्यर्थः।भूमिकेयं द्वादशी।ततो दर्शनसाक्षान्माधुर्यानुभवावुत्तराध्याये वक्ष्येते॥२८॥ ननु सद्गुरूपदेशसंतरेण केवलयशःश्रवणेनैव कथं ज्ञानोदय इति चेत्तत्राह-तस्येति युग्मेन । एवंभूतस्य मे ममोत्पन्नप्रेमभक्तेः साक्षाद्भगवता देवकीनन्दनेनोदितं

येनैवाहं भगवतो वासुदेवस्य वेधसः ॥ मायानुभावमविदं येन गच्छंति तत्पदम् ॥ ३१ ॥ एतत्संसूचितं ब्रह्म तापत्रयचिकित्सितम् ॥ यदीश्वरे भगवति कर्म ब्रह्मणि भावितम् ॥ ३२ ॥ आमयो यश्च भूतानां जायते येन सुव्रत ॥ तदेव ह्यामयं द्रव्यं न पुनाति चिकित्सितम् ॥ ३३ ॥ एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः ॥ त एवात्मविनाशाय कल्पंते कल्पिताः परे ॥ ३४ ॥

तत्राप्यैश्वरज्ञानं गुह्यतमम् । भगवतोदितं भागवतं शास्त्रमन्ववोचन्नुपदिष्टवंतः ॥ ३० ॥ तदेव ज्ञानं पूर्वोक्तत्वंपदार्थज्ञानाद्विवेकेन दर्शयति । येनैवेति । अविदं ज्ञातवानहम् ॥ ३१ ॥ तत्साधनधर्मरहस्यं च सूचितमित्याह । एतदिति । तापत्रयस्याध्यात्मिकादेश्चिकित्सितं भेषजं निवर्तकं तत्त्वशोधकमिति यावत् । किं तत् । भगवति । भावितं समर्पितं यत्कर्म तत् । कथंभूते भगवति ईश्वरे सर्वनियंतरि । एवमपि च ब्रह्मण्यप्रच्युतवर्णरूपे ॥ ३२ ॥ ननु संसारहेतोः कर्मणः कथं तापत्रयनिवर्तकत्वम् । सामग्रीभेदेन घटत इति सदृष्टांतमाह द्वाभ्याम् । य आमयो रोगो येन घृतादिना जायते तदेव केवलमामयकारणभूतं द्रव्यं तमामयं न पुनाति न निवर्तयतीत्यर्थः । किंतु चिकित्सितं द्रव्यांतरैर्भावितं सत्पुनात्येव यथा ॥ ३३ ॥ तथात्मविनाशाय कर्मनिवृत्तये कल्पंते समर्था भवंति । परे ईश्वरे कल्पिता अर्पिताः संतः । अत्र च प्रथमं महत्सेवा ततश्च तत्कृपा ततस्तद्धर्मश्रद्धा ततो भगवत्कथाश्रवणं ततो भगवति रतिस्तया च देहद्वयविवेकात्मज्ञानं ततो दृढा भक्तिस्ततो भगवत्तत्त्वज्ञानं ततस्तत्कृपया सर्वज्ञत्वादिभगवद्गुणाविर्भाव इति



ज्ञायतेऽनेनेति ज्ञानं ज्ञानशास्त्रम्।तच्च केवलज्ञानप्रधानात् भक्तिमिश्रज्ञानप्रधानं शास्त्रगुह्यं ततोपि ज्ञानमिश्रभक्तिप्रधानं गुह्यतरं ततोपि केवलभक्तिप्रधानं गुह्यतमं यदुद्धवं ब्रह्माणं च प्रति श्रीभागवतमर्जुनं प्रति श्रीगीताभिधं च गमिष्यंतः श्वो वयं यास्याम इति विभाव्यान्ववोचन्।संदर्भस्तु ज्ञानं ज्ञानविज्ञानादिसारं चतुःश्लोकीरूपं तदर्थरूपं न तु साक्षाच्छ्लोकात्मकं तत्रानधिकारादित्यर्थः।तस्य रहस्याख्यभक्त्येकतात्पर्यादिति भावः।साक्षाद्भगवतोदितमिति "पुरा मया प्रोक्तमजाय इनाभ्य"इत्यादिकं स्मारयति।गुह्यतमं ब्रह्म ज्ञानादपि रहस्यतममित्याह।।२९।।३०।।येनैव श्रीभागवतेन भगवतो मायायाश्चिच्छक्तेरैश्वर्यमाधुर्यज्ञानस्य कृपाशक्तेस्त्रिगुणमायाशक्तेश्चानुभावं कार्यं प्रभावं वाऽविदं ज्ञातवानस्मि"त्रिगुणात्मिकाथ ज्ञानं च विष्णुशक्तिस्तथैव च।मायाशब्देन भण्यंते कृपालीलार्थवेदिभिः।।"इति शब्दमहोदधिः "माया च वयुनं ज्ञानम्"इति निघण्टुः।"माया स्याच्छाम्बरीबुद्ध्योः"इति त्रिकाण्डशेषः। "माया दम्भे कृपायां च"इति विश्वः।अत एव स्वरूपभूतया नित्यशक्त्या मायाख्याया युतम्। "अतो मायामयं विष्णुं प्रवदन्ति सनातनम्"इति माध्वभाष्यप्रमाणिता श्रुतिश्च।एवमग्रिमेषु ग्रंथेष्वपि मायाशब्देन यथासंभवं चिच्छक्तित्रिगुणशक्त्यादयो व्याख्येयाः । यद्वाऽविदं हेयत्वेन ज्ञातवानस्मि । स्वमते मायाशब्दस्य चिच्छक्तिवाचित्वे तूपादेयत्वेन तत्पदं तस्य चरणारविन्दं गच्छन्ति परमप्रीत्या साक्षात्कुर्वन्ति इमं स्वनिगममित्यादि श्रीनारदत्वमाप्तौ तत्फलपराकाष्ठादर्शनाच्च ॥ ३१ ॥ एवं च शुद्धां निर्गुणां भक्तिं मयि प्रेमपर्यंतां प्रवर्त्यानुभाव्य च भक्तेः साक्षाद्वाचकं श्रीभगवदुक्तं श्रीभागवतं चोपदिश्य ज्ञानकारणं ज्ञानं च मोक्षप्रयोजनकमाजिज्ञासवेपि मह्यं संप्रति बालस्यास्य बयोवृद्धावायत्यां कदाचिज्जिज्ञासा जनिष्यते वेति विभाव्य नैरपेक्षार्थभंग्या ज्ञापितमित्याह--एतदिति । संसूचितं न तु साक्षादुक्तं मत्प्रयोजनाभावादिति भावः । किं तत् तापत्रयस्याध्यात्मिकादेश्चिकित्सितं भेषजं निवर्त्तकम् । तदेव किं यत्स्वस्वभावानुसारेणेश्वरे परमात्मनि वा भगवति षडैश्वर्यवति वा ब्रह्मणि तदीयनिर्विशेषस्वरूपे वा कर्म भावितं समर्पितम् ॥३२॥ अत्राक्षिपति नन्विति। इत्यर्थ इति । पवनं पवित्रीकरणमिति पूञ्धातोरर्थः । तच्च मलापकर्षणमेव मलदूरीकरणमित्ति यावत् । अत उक्तं निवर्त्तयतीति ॥३३॥सर्वे इत्युक्त्या शुभकर्मणामपि "सत्त्वं सुखे संजयति"इत्युक्तेस्संसृतिहेतुत्वेन बंधकत्वमेव न हि सुवर्णशृंखलाबंधिका

यदत्र क्रियते कर्म भगवत्परितोषणम् ॥ ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम् ॥३५॥ कुर्वाणा यत्र कर्माणि भगवच्छिक्षयाऽसकृत् ॥ गृणंति गुणनामानि कृष्णस्यानुस्मरंति च ॥ ३६ ॥ नमो भगवते तुभ्यं वासुदेवाय धीमहि ॥ प्रद्युम्नायानिरुद्धाय नमः संकर्षणाय च ॥ ३७ ॥

क्रमो दर्शितः ॥ ३४ ॥ ननु च ज्ञानेनाज्ञानप्राप्तकर्मनाशस्तच्च ज्ञानं भक्तियोगाद्भवति कथं कर्मणा कर्मनाशः स्यात्तत्राह । यदत्रेति ॥ ३५ ॥ भगवदर्पणेन क्रियमाणं कर्म भक्तियोगं जनयतीति सदाचारेण दर्शयति । यत्र यदा भगवतः शिक्षया कर्माणि कुर्वाणा भवंति तदा श्रीकृष्णस्य गुणनामानि गृणंत्यनुस्मरंति च कृष्णमित्यर्थः । इयं च भगवच्छिक्षा । "यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणम्" इति ॥ ३६ ॥ कीर्तनस्मरणरूपभाक्तिहेतुत्वमुक्तं

नायस्यैव बन्धिकेति युक्तं सौवर्ण्यमौल्यमात्रमेवाधिकं बन्धकत्वं तुल्यमेवास्येति । तथा च शुभकर्मणोपि सुखासक्तिजनकत्वेन बन्धकत्वमेवेत्यर्थः।संसृतिहेतवो बन्धनहेतवः॥३४॥अत्राक्षिपति । नन्विति । भक्तियोगसमन्वितं यज्ज्ञानं तत् हि निश्चितमत्र लोके भगवत्परितोषणं यत्कर्म पुरुषैः क्रियते तदधीनमित्यन्वयः।भगवदर्पितकर्मणा भगवद्भक्तियुक्तं ज्ञानमुत्पद्यते।तथा च कर्मनिवर्त्तकभक्तियुक्तज्ञानोत्पादनद्वारा कर्मणा कर्मनाशकत्वमिति भावः । चक्रवर्त्तिनापीत्थमेव व्याख्यातम् । तथा हि तदेवेश्वरार्पितं कर्म सत्त्वशोधकत्वाज्ज्ञानसाधनं भवतीत्याह ।भगवदर्पितत्वाद्भगवत्परितोषणं निष्कामं यत्कर्म तदधीनं ज्ञानं तज्जन्यत्वादित्यर्थः।"कर्मणा ज्ञानमाप्नोति ज्ञानेनामृती भवति अथामृतानि कर्माणि" इति श्रुतेः । कर्मणा ज्ञानं जायते हि यतोऽतः कर्मज्ञानद्वारा बन्धनिवर्त्तकमिति भावः । कीदृशं यत् भक्तियोगसमन्वितम् । अन्यस्य भक्तिरहितस्य ज्ञानस्य तु मोक्षसाधकत्वाशक्तेः "नैष्कर्म्यमप्यच्युत भाववर्जितम्" इत्यादिना तिरस्कार एव दृष्टः । भक्तियोगोऽत्र श्रवणकीर्त्तनादिरूपः ॥ ३५ ॥ एवं भक्तिमिश्रेण कर्मणा भक्तिमिश्रं ज्ञानं मोक्षसाधनं भवतीत्युक्तम् । इदानीं भक्तिमिश्रनिष्कामकर्मवतां तादृशभक्तसंगभाग्येन केषांचित्कदाचित्कर्ममिश्रा भक्तिरपि भवेदित्याह-कुर्वाणा इति । यत्र भक्तिमिश्रकर्माणि स्थिता अकस्माद्भक्तसंगभाग्येन भगवच्छिक्षया कर्माणि कुर्वाणाः संतः केचित्कृष्णस्य गुणनामानि गृणंति स्मरंति च कीर्त्तनस्मरणाद्यात्मिकां भक्तिं कुर्वतीत्यर्थः । भगवच्छिक्षाया यत्करोषीत्यादिकाया भक्तिप्रकरणपठितत्वान्न कार्मिविषयतया व्याख्या युक्ता । कार्मिणो हि कर्मवैफल्याभावार्थं वैदिकमेव कर्मार्पयन्ति । भक्तास्तु भगवत्स्वामिकत्वेनैवात्मानं जानन्तः स्वकर्त्तव्यं वैदिकं लौकिकं दैहिकं च कर्म स्वप्रभुप्रवर्त्यमानं प्रतियंतः सर्वमेव तस्मिन्समर्पयन्तीति महान्भेदः । अत एवात्र यदश्नासीत्युक्तम् ॥३६॥ तदेवं भक्तिरहितानां ज्ञानकर्मादीनां नैष्कर्म्यमित्यादिना विनिंद्य सर्वथा "हेयत्वमुक्त्वामु" त्यक्त्वा स्वधर्म इत्यादिश्लोकत्रय्या परमोपादेयां शुद्धां निर्गुणां भाक्तिं स्तुत्वा अहं पुरातीतभवे" इत्यादिश्लोकषट्केन तस्या एव भक्तेराविर्भावप्रकारं प्रेमपर्यंतां वृद्धिं चोक्त्वाऽधिकारिविशेषे पुनरुपादेयं भक्तिमिश्र ज्ञानं ततोऽधिकां कर्ममिश्रां भक्तिं चोक्त्वेदानीं "ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत"इत्युक्तेः श्रीगुरोः प्राप्तं स्वमंत्रमपि तमुपदिदिक्षुस्तत्र श्रद्धामुत्पादयन्नाह द्वाभ्याम्। ॐ नम इति । त्रयस्त्रिंशदक्षरात्मको मंत्रः चतुर्व्यूहात्मको भगवानत्र देवता संकर्षणादिक्रमविपर्ययेणात्र निर्देशस्तु श्रीकृष्णचतुर्व्यूहत्वं बोधयितुं तत्पुत्रपौत्रत्वेन प्रद्युम्नानिरुद्धयोस्तान्निकटपाठात् । यद्वा प्रद्युम्नानिरुद्धसंकर्षणानां क्रमेण सृष्टिस्थितिसंहारकारणत्वात्तथोक्तिः । नमो धीमहि नमस्कारं ध्यायेम । मनसा नमनं कुर्वीमहीत्यर्थः । भगवते षडैश्वर्यपूर्णाय । सर्वत्र वसति दीव्यति चेति वासुदेवः । सर्वान्तर्यामी सर्वप्रकाशकस्तस्मै प्रकृष्टं द्युम्नं वित्तं हिरण्यं तद्द्रूपाय। "हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात्सर्व एव सुवर्णः" इति श्रुतेः । यद्वा प्रकृष्टं द्युम्नं बलं यस्य कामदेवरूपत्वात् "कामो हि बलवत्तमः" इत्याद्युक्तेः । स तथा । "द्युम्नं वित्ते बलेपि च" इति मेदिनी। न केनापि स्वेच्छां विना निरुद्धोऽनिरुद्धः । अनो मुख्यप्राणः सोऽस्ति जितत्वेनास्येत्यनी तेन मुख्यप्राणजयवता रुद्धो वशीकृत इति वा । न निरुद्ध्यंते विषयैर्नाव्रियंते इत्यनिरुधो विवेकिनस्तान्दधाति पोषयति धारयति वेत्यनिरुद्धस्तस्मै अनिरस्तमुदाख्यं नाम धत्त इति वा "तस्योदिति नाम" इति श्रुतेः । सम्यक्पापकर्षणशीलत्वात्संकर्षणः । सम्यक्करं हस्तं ददाति निजप्रियगोपेभ्य इति वा "हास्यहस्तग्रहादिभिः" इत्युक्तेः। करशब्दाकारलोपस्तु पृषोदरादित्वाद्बोध्यः । मंत्रश्चायं पञ्च

इति मूर्त्यभिधानेन मंत्रमूर्तिममूर्तिकम् ॥ यजते यज्ञपुरुषं स सम्यग्दर्शनः पुमान् ॥३८॥ इमं स्वनिगमं ब्रह्मन्नवेत्य मदनुष्ठितम् ॥ अदान्मे ज्ञानमैश्वर्यं स्वस्मिन्भावं च केशवः ॥३९॥ त्वमप्यदभ्रश्रुत विश्रुतं विभोः समाप्यते येन विदां बुभुत्सितम् ॥ प्रख्याहि दुःखैर्मुहुरर्दितात्मनां यत्क्लेशनिर्वाणमुशंति नान्यथा ॥४०॥ इति श्रीमद्भा० प्रथ० व्यासनारदसं० पंचमोऽध्यायः ॥ ५ ॥ सूत उवाच ॥ एवं निशम्य भगवान्देवर्षेर्जन्म कर्म च ॥ भूयः पप्रच्छ तं ब्रह्मन्व्यासः सत्यवतीसुतः ॥१॥ व्यास उवाच ॥ भिक्षुभिर्विप्रवसिते विज्ञानादेष्टृभिस्तव ॥ वर्तमानो वयस्याद्ये ततः किमकरोद्भवान् ॥२॥

ज्ञानहेतुत्वमाह द्वाभ्याम् । नम इति । नमो धीमहि मनसा नमनं कुर्वीमहि ॥ ३७ ॥ अमूर्तिकं मंत्रोक्तव्यतिरिक्तमूर्तिशून्यम् । यजते पूजयति स पुमान्सम्यग्दर्शनो भवति ॥ ३८ ॥ एवं कृतवति मयि हरिः स्वसदृशं ज्ञानादिकं दत्तवानित्याह । इमं स्वनिगमं स्वोपदेशं मदनुष्ठितं मयानुष्ठितमवेत्य ज्ञात्वा । भावं च प्रीतिं च ॥ ३९ ॥ अतस्त्वमप्येवं कुर्वित्याह । त्वमिति । अदभ्रमनल्पं श्रुतं यस्य । हे अदभ्रश्रुत विभोर्विश्रुतं यशः प्रख्याहि कथय । येन विश्रुतेन बुद्धेन विदां विदुषां बुभुत्सितं बोद्धुमिच्छा समाप्यते यतो दुःखैः पीडितानां क्लेशशांतिं प्रकारांतरेण न मन्यंते ॥ ४० ॥ इति प्रथमे टीकायां पंचमोऽध्यायः ॥ ५ ॥ व्यासस्य प्रत्ययार्थं च षष्ठे प्राग्जन्मसंभवम् ॥ स्वभाग्यं नारदः प्राह कृष्णसंकथनोद्भवम् ॥ १ ॥ १ ॥ स्वयमपि तथा चिकीर्षुर्गुरूपदेशानंतरभावि तच्चरितं पृच्छति । भिक्षुभिरिति । विप्रवसिते दूरदेशगमने कृते सति विज्ञानस्यादेष्टृभिरुपदेशकर्तृभिः ॥ २ ॥

रात्रवक्तुः श्रीनारायणादेव लब्धो ब्रह्मपुत्रजन्मन्येव न तु पूर्वजन्मनीति संदर्भः ॥ ३७ ॥ इति मूर्तीनां वासुदेवादीनामभिधानेन नामचतुष्टयेन यजते पञ्चरात्रोक्तविधिना वासुदेवाय नमः प्रद्युम्नाय नम इत्येवं षोडशोपचारैर्यः पूजयेन्मत्रध्यानोक्तमूर्त्तिं मंत्रेणैव जपितेनाविर्भवति मूर्त्तिः शरीरं यस्येति वा। यद्वा "मंत्रेण चत्वारि श्रृंगा त्रयो अस्य पादा" इत्यादिमंत्रेण प्रतिपादिताकारं यज्ञ पुरुषम् "यज्ञो वै विष्णुः" इति श्रुतेः यज्ञ एव पुरुषोऽन्तर्यामीतन्मूर्त्तिकं प्राकृतमूर्त्तिरहितम् कठिनं कृपार्द्रमिति वा । मूर्त्तिः काठिन्यकाययोः" इत्यमरः । स सम्यग्दर्शनः तं दृष्ट्वाऽन्योपि कृतार्थी भवतीत्यर्थः । यद्वा दर्शनं ज्ञानं यद्वा दृश्यतेऽनेनेति दर्शनं शास्त्रं भक्तिप्रतिपादकं पञ्चरात्रादि सम्यग्धन्यमात्मप्रसादकत्वात् । ननु "येनैवासौ न तुष्येत मन्ये तद्दर्शनं खिलम्" इत्युक्तलक्षणं भक्तिरहितं शास्त्रमेव खिलमित्यर्थः । ततश्च कृते वेदान्तदर्शनस्यापि तवायमात्मा न वै परितुष्टः मम तु कृतपंचरात्रशास्त्रस्यात्मा सदा प्रसन्न एवेति भावः ॥ ३८ ॥ स्वनिगमं निजांतरंगवेदोक्तं ज्ञानं प्रथमतः स्वानुभवं तत ऐश्वर्यं स्वाणिमादिरूपं ततस्तत्र ममानासक्तिमभिप्रेत्य भावं स्वमहाप्रमाणं चादात् ततश्च मह्यमपीमं मंत्रं कृपयोपादिशेति प्रार्थितेन श्रीनारदेन व्यासस्तमेव मंत्रमुपदिष्ट इति सुधीभिर्बोद्धव्यम् ॥ ३९ ॥ अदभ्रश्रुत सर्वज्ञेत्यर्थः । "दभ्रो दम्भवदल्पयोः" इति निरुक्तिः । येन विश्रुतेन यशसा समाप्यते तद्यशोमृतास्वादानिमग्नानां सदा तदेकभक्तिगतां ज्ञानाय स्पृहैव न भवेदित्यर्थः ॥४०॥ इति श्रीभा० श्रीभावार्थदीपिकाप्रकाशे प्रथमस्कन्धे पंचमोध्यायः ॥५॥ प्रत्ययार्थं विश्वासार्थं कृष्णसंकथनेन कृष्णकीर्त्तनेनोद्भवो यस्य तत्स्वभाग्यम् (१)॥ इदं व्यासनारदसंवादोपाख्यानं सूतः शौनकादिभ्योऽब्रवीदिति विज्ञापयितुमाह-एवमिति । हेब्रह्मन्निति । त्वं तु सर्वं जानास्येव परं तु ब्राह्मणानां परोपकृतिस्वभावत्वादयमपि हरियशोवर्णनेन शुद्धो भवत्विति कृपया मां पृच्छसीति भावः । अत्र ब्रह्मशब्दो ब्राह्मणजातिपरो ज्ञेयः ॥ "व्यासः सत्यवतीसुतः" इत्यनेनाहो ब्रह्मवीर्यमहत्त्वं दासावितमत्स्युदरजातकन्योद्भूतोपि वेदविभाजकत्वाद्व्यास इति नामा विप्रर्षिरभूदिति ध्वनितम् । तथा चिकीर्षुरहमपि नारदशिष्यत्वान्नारदाचरितमेव ग्रहीष्यामीतिच्छावान् । विप्रवसित इह संप्रसारणाभाव आर्षः ॥ १ ॥ ततः भिक्षुप्रवासानंतरं तेषां गृहस्थेतरत्वाद्भिक्षुत्वम् गृहस्थेतरके । "भिक्षुराश्रमे ब्राह्मणेऽपि च" इति निरुक्तिः ॥ २ ॥

स्वायंभुव कया वृत्त्या वर्तितं ते परं वयः ॥ कथ चेदमुदस्राक्षीः काले प्राप्ते कलेवरम् ॥ ३ ॥ प्राक्कल्पविषयामेतां स्मृतिं ते सुरसत्तम ॥ न ह्येष व्यवधात्काल एष सर्वनिराकृतिः ॥ ४ ॥ नारद उवाच ॥ भिक्षुभिर्विप्रवसिते विज्ञानादेष्टृभिर्मम ॥ वर्तमानो वयस्याद्ये तत एतदकारषम् ॥५॥ एकात्मजा मे जननी योषिन्मूढा च किंकरी ॥ मय्यात्मजेऽनन्यगतौ चक्रे स्नेहानुबंधनम् ॥ ६ ॥ साऽस्वतंत्रा न कल्पाऽऽसीद्योगक्षेमं ममेच्छती ॥ ईशस्य हि वशे लोको योषा दारुमयी यथा ॥ ७ ॥ अहं च तद्ब्रह्मकुल ऊषिवांस्तदवेक्षया ॥ दिग्देशकालाव्युत्पन्नो बालकः पंचहायनः ॥ ८ ॥ एकदा निर्गतां गेहाद्दुहंतीं निशि गां पथि ॥ सर्पोऽदशत्पदास्पृष्टः कृपणां कालचोदितः ॥ ९ ॥ तदा तदहमीशस्य भक्तानां शमभीप्सतः ॥ अनुग्रहं मन्यमानःप्रातिष्ठं दिशमुत्तराम् ॥१०॥ स्फीतान्जनपदांस्तत्र पुरग्रामव्रजाकरान् ॥ खेटखर्वटवाटीश्च वनान्युपवनानि च ॥११॥

परं वय उत्तरमायुस्ते त्वया वर्तितं नीतम् । इदमिति दासीपुत्रभूतं कलेवरमुदस्राक्षीरुत्सृष्टवानसि ॥ ३ ॥ एष कल्पांतलक्षणः कालस्ते स्मृतिं कथं न व्यवधान्न खंडितवान् । अडागमाभावस्त्वार्षः । हि यत एष सर्वस्य निराकृतिरपलापो यस्मात्सः ॥ ४ ॥ अकारषं कृतवानहम् । रेफषकारयोर्विश्लेषश्छंदोऽनुरोधेन ॥ ५ ॥ तत्र तावत्कंचित्कालं तत्रैव मातृस्नेहयंत्रितो न्यवसमित्याह त्रिभिः । एक एवअहमात्मजः यस्याः सा । योषिदिति मूढेति च स्नेहानुबंधे हेतुः ॥ ६ ॥ किंकरीत्यस्यार्थं प्रपंचयति । सेति । अस्वतंत्रा सा अतो न कल्पा न समर्था आसीत् । दारुमयी योषेत्यतिपारवश्ये दृष्टांतः ॥ ७ ॥ तदेवं सा स्नेहं चक्रेऽहं च दिगादिष्वनभिज्ञोऽतस्तत्रैव न्यवसमित्याह । अहं च तस्मिन्ब्रह्मकुले तस्याः मातुः स्नेहानुबंधस्यावेक्षया कदा विरमेदिति प्रतीक्षयेत्यर्थः । ऊषितवान्वासं कृतवान् । पंचहायनः पंचवर्षः ॥ ८ ॥ गेहान्निर्गतां गां दुहंतीम् । हेतौ शतृप्रत्ययः । दोग्धुं निर्गतामित्यर्थः । पदा पादेनास्पृष्टः ईषदाक्रांतोऽदशदखादत् ॥ ९ ॥ तन्मातुर्मरणं भक्तानां शं कल्याणमभीप्सतः ईशस्यानुग्रहं मन्यमानः प्रातिष्ठं प्रस्थितोऽस्मि ॥ १० ॥ स्फीतान् जनपदादीनतियातः सन्महद्विपिनमद्राक्षमिति चतुर्थेनान्वयः । जनपदा

स्वयंभुवो ब्रह्मणः सकाशाद्योनिव्यवधानं विना भवतीति स्वायंभुवस्तत्संबुद्धौ तथा।अत्रोवङादेशस्त्वार्षः । ब्रह्मपुत्रत्वात्तव त्रिकालज्ञत्वमस्तीत्यत एतद्वृत्तं वदेति भावः । उत्तरं बाल्यावस्थापश्चिमम्॥३॥अपलापो नाशः॥४॥ एतद्वक्ष्यमाणम् । छन्दोनुरोधेन छंन्दोभंगभयात् । तदुक्तम् "मूर्द्धरेफा विकल्प्यंते छन्दोभंगभयादिह" इति विश्वनाथेन ॥ ५ ॥ तत्र तावदिति वाक्यालंकारे तत्रैव विप्राश्रम एव । योषितां मूढानां च पुत्रादिषु स्नेहाधिक्यात् । योषितां मध्ये मूढेति वाऽत एव किंकरी दास्यमापन्ना । नान्या गतिराश्रयो यस्य तस्मिन्मयि स्नेहस्यानुबंधनं चक्रे । "अनुबंधस्तु बन्धे स्यात्" इत्यभिधानात् । अत्रानूपसर्गो धात्वर्थानुगाम्येवातः स्नेहबंधनं चक्र इत्यर्थः ॥ ॥ ६ ॥ अतोऽस्वतंत्रत्वात् अलब्धलाभो योगः लब्धस्य परिरक्षणं क्षेमः । मत्पुत्रस्य सुखमुद्वाहादि भवतु यदधुनास्य सुखाद्यस्ति तदन्वहमेधतामित्येवं सदैवेयेषेत्यर्थः । ईशस्य स्वामिनो वशे लोकः सेवकजन इति वा । दारुमयी योषा काष्ठपुत्तलिका यथा प्रनर्त्तकपुरुषाधीना तथेत्यर्थः ॥ ७ ॥ अतो दिगाद्यभिज्ञत्वात् । ब्रह्मकुले ब्राह्मणगृहे । "कुलं वंशे गृहे सार्थे जातिसांकर्ययोरपि"इत्यभिधानात् । इत्यर्थ इति । कदेयं मां त्यक्ष्यति मरिष्यतीति प्रतीक्षां कुर्वाणस्तत्रैवावसमिति भावः । पञ्च हायनाः परिच्छेदका यस्य स तथा "हायनोऽस्त्री शरत्समाः" इत्यमरः ॥ ८ ॥ इत्यर्थ इति । "लक्षणहेत्वोः क्रियायाः" इति शतृप्रत्यये दोहनार्थं गृहाद्गोशालां गच्छंती मार्गे कृपणामनाथामदशदिति भावः ॥ ९ ॥ तदा मातृमरणोत्तरावसरे मातैव ममबन्धनमासीत्तन्मरणान्मम बंधननिवृत्त्येशानुग्रहो जात इति भावः ॥१०॥ 'नीवृज्जनपदो देश" इत्यमरः । "अटव्यरण्यं विपिनम् "च । तत्र तेषां

चित्रधातुविचित्राद्रीनिभभग्नभुजद्रुमान् ॥ जलाशयाञ्छिवजलान्नलिनीः सुरसेविताः ॥ १२ ॥ चित्रस्वनैः पत्ररथैर्विभ्रमद्भ्रमरश्रियः ॥ नलवेणुशरस्तंबकुशकीचकगह्वरम् ॥ १३ ॥ एक एवातियातोऽहमद्राक्षं विपिनं महत् ॥ घोरं प्रतिभयाकारं व्यालोलूकशिवाऽजिरम् ॥ १४ ॥ परिश्रांतेंद्रियात्माऽहं तृट्परीतो बुभुक्षितः ॥ स्नात्वा पीत्वा ह्रदे नद्या उपस्पृष्टो गतश्रमः ॥ १५ ॥ तस्मिन्निर्मनुजेरण्ये पिप्पलोपस्थ आस्थितः ॥ आत्मनात्मानमात्मस्थं यथाश्रुतमचिंतयम् ॥ १६ ॥

दिषु नानागुणदोषयुक्तेषु समदृष्टिः सन्गतोऽहमिति तात्पर्यार्थः । स्फीतान्समृद्धान् जनपदान्देशान् । तत्र तस्यां दिशि । पुरग्रामव्रजाकरान् । तत्र पुराणि राजधान्यः । ग्रामाः भृगुप्रोक्ताः "विप्राश्च विप्रभृत्याश्च यत्र चैव वसंति ते । स तु ग्राम इति प्रोक्तः शूद्राणां वास एव च" इति । व्रजाः गोकुलानि । आकराः रत्नाद्युत्पत्तिस्थानानि तान् । खेटाः कर्षकग्रामाः । खर्वटाः गिरितटग्रामाः भृगुप्रोक्ता वा "एकतो यत्र तु ग्रामो नगरं चैकतः स्थितम् । मिश्रं तु खर्वटं नाम नदीगिरिसमाश्रयम्" इति । वाट्यः पूगपुष्पादीनां वाटिकास्ताः । वनानि स्वतःसिद्धवृक्षाणां समूहाः । उपवनानि रोपितवृक्षाणां समूहास्तानि च ॥ ११ ॥ चित्रैर्धातुभिः स्वर्णरजताद्यैर्विचित्रानद्रींश्च । इभैर्भग्नाः भुजाः शाखाः येषां ते द्रुमाः येषु तान् । शिवानि भद्राणि जलानि येषां तान् । नलिनीः सरसीः ॥ १२ ॥ चित्राः स्वनाः येषां तैः पत्ररथैः पक्षिभिस्तन्नादप्रबुद्धैरित्यथः । विभ्रमद्भिर्भ्रमरैः श्रीः शोभा यासां ताः नलिनीरतियातोतिक्रम्य गतः सन्महद्विपिनं वनमद्राक्षम् । कीदृशम् । नलवेणुशराणां स्तंबैः कुशैः कीचकैश्च गह्वरं दुर्गमम् । तत्र वेणुजातय एव विपुलांतरालगर्भाः कीचकाः ॥ १३ ॥ घोरं दुःसहं प्रतिभयाकारं भयंकररूपं व्यालादीनामजिरं क्रीडास्थानम् ॥ १४ ॥ परिश्रांतानींद्रियाण्यात्मा देहश्च यस्य तृषा परीतो व्याप्तः उपस्पृष्टः आचांतः ॥ १५ ॥ पिप्पलोपस्थे अश्वत्थमूले आश्रितः उपविष्टः । आत्मना बुद्ध्या मनसा वात्मस्थं हृदिस्थमात्मानं परमात्मानम् ॥ १६ ॥

मध्ये अग्रे स्पष्टम् ॥ ११ ॥ "इभः स्तंबेरमः पद्मी" इत्यमरः ॥ १२ ॥ "पत्री पत्ररथः पक्षी" इत्यभिधानात् ॥ इत्यर्थ इति पक्षिशब्दं श्रुत्वा जागरीमितैर्द्विरेफैरिति भावः ॥ नलाः पोटगला वेणवोऽसुषिरवंशाः शरास्तेजनकास्तेषां स्तंबास्तृणसंघाः कुशा दर्भाः कीचकाः शुष्कवंशाः वायुनोद्धतस्वना वेणवो वा तैर्गह्वरं निबिडम् । "नलः पोटगले राज्ञि पितृदेवे कपीश्वरे । कमलेपि कुनद्यां च क्रमेण क्लीबयोषितोः" इति मेदिनी । "वेणुर्नृपांतरे त्वक्सारेपि" इति च । "शरस्तेजनके बाणे दध्यग्रे ना शरं जले" इति "ना दर्भेऽस्त्री कुशं जले" इति । "स्तंबो गुच्छे समूहे च" इति धरणिः । "कीचका वेणवस्ते स्युर्ये स्वनंत्यनिलोद्धताः" इत्यमरः । "कीचको दैत्यभेदे च शुष्कवंशे नृपान्तरे" इति विश्वः । गह्वरो गुहागहनदंभेषु निकुंजे तु पुमानयम्" इति मेदिनी ॥ १३ ॥ व्याला दुष्टगजा उलूका घूकाः शिवाः शृगाल्यः "व्यालो दुष्टगजे सर्पे श्वापदे नान्यवत्सले" इति मेदिनी "शिवा गौर्यभवा फेरुभार्या चामलकी तथा" इति च । "अजिरं प्रांगणे वाते" इति च तेषुतेषु बहुविस्मयास्पदेषु भीत्यास्पदेषु च दृष्टेष्वपि न मे विस्मयो नापि भीतिरभूत् । तदा मन्मनसो भगवन्माधुर्यास्वादमात्राविष्टत्वादिति भावः ॥ १४ ॥ "ह्रदो घट्टे गाधजले" इति धरणिः । नद्या घट्टे उपस्पृष्टः पादप्रक्षालनादिपूर्वकमाचांतः स्नात्वा पीत्वा च गतश्रमो भूत्वा तस्मिन्नरण्ये आत्मानं परमात्मानमचिंतयमित्यग्रिमेणान्वयः ॥ १५ ॥ निर्मनुजे मनुष्यसंचाररहिते यथाश्रुतं भिक्षुद्विजैर्यथोपदिष्टं "पिप्पलं सलिले क्लीबमश्वत्थे ना पतत्रिणि । निरंशुके वस्त्रभेदे कणायां पिप्पली मता" इति कोशात् ॥ १६ ॥

ध्यायतश्चरणांभोजं भावनिर्जितचेतसा ॥ औत्कंठ्याश्रुकलाक्षस्य हृद्यासीन्मे शनैर्हरिः ॥ १७ ॥ प्रेमातिभरनिर्भिन्नपुलकांगोऽतिनिर्वृतः ॥ आनं दसंप्लवे लीनो नापश्यमुभयं मुने ॥ १८ ॥ रूपं भगवतो यत्तन्मनःकांतं शुचाऽपहम् ॥ अपश्यन्सहसोत्तस्थे वैक्लव्याहुर्मना इव ॥ १९ ॥ दिदृक्षुस्तदहं भूयः प्रणिधाय मनो हृदि ॥ वीक्षमाणोऽपि नापश्यमवितृप्त इवातुरः ॥ २० ॥ एवं यतंतं विजने मामाहाऽगोचरो गिराम् ॥ गंभी रश्लक्ष्णया वाचा शुचः प्रशमयन्निव ॥ २१ ॥ हंताऽस्मिञ्जन्मनि भवान्न मा द्रष्टुमिहार्हति ॥ अविपक्वकषायाणां दुर्दर्शोऽहं कुयोगिनाम् ॥ २२ ॥ सकृद्यद्दर्शितं रूपमेतत्कामाय तेऽनघ ॥ मत्कामः शनकैः साधुः सर्वान्मुंचति हृच्छयान् ॥ २३ ॥

भावेन भक्त्या निर्जितं वशीकृतं यच्चेतस्तेन । औत्कंठ्येनाश्रुकलायुक्ते अक्षिणी यस्य ॥ १७ ॥ प्रेम्णोऽतिभरेण निर्भिन्नपुलकान्यंगानि यस्य । आनंदानां संप्लवे महापूरे परमानंदे । उभयमात्मानं परं च ॥ १८ ॥ मनसः कांतमभीष्टम् । शचा शोकस्तामपहंतीति तथा तत् उत्तस्थे व्युत्थितोऽस्मि ॥ १९ ॥ हृदि मनः प्रणिधाय स्थिरीकृत्यावितृप्तोऽहमातुर इव अभवमिति शेषः ॥ २० ॥ गिरामगोचरः संवेदनस्याविषयभूत ईश्वरः ॥ २१ ॥ हंतेति सानुकंपसंबोधने । मेति । मां द्रष्टुं नार्हति । यतो न विपक्वाः दग्धाः कषायाः मलाः कामादयो येषां तेषां कुयोगिनामनिष्पन्नयोगानाम् ॥ २२ ॥ कुतस्तार्हि दृष्टोसि तत्राह । सकृद्दर्शितं मयेति यदेतत्कामाय मय्यनुरागाय ।

हृदि मनस्येव ध्यायतो मम हरिः क्रमेणासीदागत्याग्रे बभूव।यद्वा शनैः प्रथमं हृद्याविर्बभूव ततो हृद्वृत्तिषु तिसृषु नासिकाश्रोत्रचक्षुष्वपि स्वांगसौरभान् पुरु सौस्वर्यमुखसौन्दर्यग्राहणार्थमाविर्बभूव।किंभूतस्य औत्कंठ्येनाश्रूणि कलयतो धारयतोऽक्षिणी यस्य तस्य॥१७॥निर्भिन्नानि अतिभिन्नानि पुलकानि रोमांचा यस्य स तथा।“पुलकः कृमिप्रभेदे प्रस्तरभेदे च मणिदोषे।रोमांचे हरिताले गजान्नपिंडे च गंधर्वे”इति मेदिनी।हे मुने इति।मुनित्वाद्भगवद्ध्याना नंदं त्वं जानस्येवेति भावः ॥ १८ ॥ ततः किं वृत्तं तत्राह-रूपमिति । शुचेति । भागुरिमतेन हलंताट्टावन्तः । वैक्लव्याद्वैकल्यात् । यथा प्राप्तच्युतनिधिर्जनो दुर्मना भवति तथैवेत्यर्थः ॥ १९ ॥ रोगीवासंतुष्टोऽभव मित्यर्थः ॥ २० ॥ विजने जनसंचाररहिते वन इत्यर्थः । गिरामगोचरः । “यतो वाचो निवर्त्तंते” इति श्रुतेः । सर्वैरेव वचनगोचरीकर्त्तुमशक्योपि भगवान्मामाह स्वीयवचनसौस्वर्यं श्रवणाभ्यामनुभावयामास । एवं नारदस्य वैद्यभक्तिमत्त्वाद्भगवत्सौरभ्यसौस्वर्यसौन्दर्याणां त्रयाणामेव माधुर्याणामनुभवः साधकदेहे अन्येषां सर्वेषां सिद्धदेहं एव तन्माधुर्याणामनुभवो भावीति ज्ञेयम् । शुचस्तद्दर्शनोद्भूतदुःखशोकान्प्रशमयन्नपाकुर्वन् । अत्र वियोगौत्कठ्यवतः प्रेम्णा सर्वथा तृह्यभावधर्मत्वादिवशब्दः ॥ २१ ॥ किमाहत्येत आह-हन्तेति । अस्मिञ्जन्मनि साधकदेहे तुभ्यं तु दर्शनं दत्तमेवेति त्वं तु कुयोगी न भवसीति भावः । संदर्भस्तु “भक्तिः प्रवृत्तात्म रजस्तमोपहा” इत्युक्तेः कषायोत्र सात्त्विकोत्त्वनवासाद्याग्रहः “वनं तु सात्त्विको वासः” इत्याद्युक्तेः । ऊत्कंठावर्द्धनार्थमेतत् ॥ २२ ॥ तार्हि हाहा पुनरप्येकवारं दर्शनं देहीत्यत आह-सकृदिति । एतदेकवारदर्श नं ते कामाय त्वन्मनोरथं साधयितुं योग्यमित्यर्थः । न तु मुहुर्दर्शनम् औत्कंठयस्यानतिवृद्धया प्रेम्णोऽप्यनतिवृद्धेस्तस्य तारुण्यं न स्यादिति भावः । अत एव जातप्रेम्णे भक्ताय साधकदेहे एकवारमेव दर्शनं ददामीति मम नियमः यथा बालभूतः साधकदेहे प्रेमा वियोगौत्कठ्येन लब्धातिवृद्धिः सिद्धदेहे तरुणः सन्स्वाधारं भक्तं मुहुरपि मां दर्शयति साक्षात्सेवयति च स्वभक्तमनोरथपूर्त्तिप्रकारमहमेव जानामि न तु मे स्वभक्त इति भावः । मत्कामः यो हि मां कामयते मात्रं मद्दर्शनालाभेपीत्यर्थः । हृच्छयान् विषयवासनाः तत्रापि “सर्वान्मोक्ष्यसि हृच्छयान्” इत्युक्तेर्नारदं प्रति नेदं वाक्यं किन्तु स्वभक्तेः स्वभावं तं ज्ञापयामासेत्येवात्र तत्त्वं सर्वमिदं

सत्सेवयादीर्घया ते जाता मयि दृढा मतिः ॥ हित्वावद्यमिमं लोकं गंता मज्जनतामसि ॥ २४ ॥ मतिर्मयि निबद्धेयं न विपद्येत कर्हिचित् ॥ प्रजासर्गनिरोधेपि स्मृतिश्च मदनुग्रहात् ॥२५॥ एतावदुक्त्वोपरराम तन्महद्भूतं नभोलिंगमलिंगमीश्वरम् ॥ अहं च तस्मै महतां महीयसे शीर्ष्णाऽवनामं विदधेऽनुकंपितः ॥ २६ ॥ नामान्यनंतस्य हतत्रपः पठन्गुह्यानि भद्राणि कृतानि च स्मरन् ॥ गां पर्यटंस्तुष्टमना गतस्पृहः कालं प्रतीक्षन्विमदो विमत्सरः ॥ २७ ॥ एवं कृष्णमतेर्ब्रह्मन्नसक्तस्यामलात्मनः ॥ कालः प्रादुरभूत्काले विद्युत्सौदामनी यथा ॥ २८ ॥

त्वत्कामेन किमित्यत आह । मत्कामः पुमान् । हृच्छयान्कामान् ॥ २३ ॥ अदीर्घयाऽपि सतां सेवयावद्यं निंद्यमिमं लोकं देहं मज्जनतां मत्पार्षदतां गंताऽसि ॥ २४ ॥ प्रजानां सर्गे सृष्टौ निरोधे संहारेऽपि । प्रजासर्गस्य निरोध इति वा ॥ २५ ॥ तत्प्रसिद्धं महद्भूतम् । "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः" इत्यादिश्रुतेः । कीदृशम् । ईश्वरं सर्वनियंतृ नभसि लिंगं मूर्तिर्यस्य तन्नभोलिंगं संनिहितमपि न लिंग्यते इत्यलिंगं तस्मै अदृष्टायावनामं प्रणामं विदधे कृतवानहं तेनानुकंपितः सन् ॥ २६ ॥ अनंतस्य नामानि पठन्ननवरतं गृणन् हतत्रपस्त्यक्तलज्जो विमत्सर जात इति शेषः ॥ २७ ॥ काले स्वावसरे कालो मृत्युः प्रादुरभूदाविर्बभूव । अकस्मात्प्रादुर्भावे दृष्टांतः तडिदिति । सौदामनीति । विशेषणं स्फुटत्वप्रदर्शनार्थम् । तथा हि । सुदामा माला तत्र भवा सौदामनी मालाकारेत्यर्थः । यद्वा सुदामा नाम कश्चित्स्फटिकपर्वतः । ततः " तेनैक

दैन्यवर्द्धनार्थमित्येके॥२३॥देहं दासीपुत्रकलेवरम् यद्वा निंद्यं लोकं सांसारिकजनावासं त्रिभुवनमेव त्यक्त्वेत्यर्थः॥२४॥ननु यद्यंतरेव सा नश्येत्तदा किं कार्यं तत्राह-मतिरिति । स्मृतिश्चैतज्जन्मविषया।सर्गे हि मतेर्नाशो न सर्वथेति चेत्तत्राह-प्रजासर्गस्येति यतो मयि निबद्धा स्थापिता प्रेम्णाऽतो न विपद्येत न नश्येत्।मम नित्यत्वान्मतिरपि नित्यैव स्यादिति भावः॥२५॥महद्भूतमिति।भगवतो नामैवात एवं क्लीबत्वम्।यस्य निःश्वसितमेव चत्वारो वेदास्तस्य वचनं तु ततोप्यतिप्रमाणमिति भावः । ईश्वरम् अतिनिकृष्टाय दासीपुत्रायापि मह्यं तथा वरप्रदानं यदिदमपि तस्यैकमीश्वरत्वमिति भावः।नभसि हार्द्दाकाशे लिंग्यते ज्ञायते इति वा । यद्वा नभो लिंगं दृष्टांतत्वेन गमकं यस्य तत्तथा "आकाशवत्सर्वगतश्च नित्यः" इति । नभोलिंगं शरीरं यस्येति वा तथा "आकाशशरीरं ब्रह्म" इति श्रुतेः ॥ २६ ॥ स्मरन्नेव न तु प्रकाशयन् । तत एव तुष्टमनाः स्पृहाशून्यश्च सन् पूर्वत एव विमदो विमत्सरश्च सन् केवलं कालं तत्कृपावसरं प्रतीक्षमाणोहं बभूवेति संदर्भः । कालं प्रतीक्षन्स कालो मे कदा भविष्यति यत्र तत्पार्षदतां यास्यामीति भगवत्पार्षदो भविष्यमि । कोन्यो वराको मत्सम इत्येवं मदमत्सरौ मम नाभूताम् ॥ २७ ॥ कालस्तत्कृपावसरः प्रादुरभूत् । यथावग्रहक्षये तडित्सौदामनीति गोबलीवर्दन्यायेन चेयमुक्तिरिति संदर्भः । स्वामिचरणास्तु भवार्थप्रत्ययस्यैवार्थाप्रसिद्धेराहुः । यद्वेति । सुदाम्नाऽद्रिणा एका दिक् सौदामनी सर्वव्यापिन्यास्तस्या नियतमेकदिक्त्वं न संभवती तिपुनराह-यद्वेति । इत्यर्थ इति । तडिदित्यव्ययमपीति भावः । नैरुक्तस्मरणान्निरुक्तिकारवचनात् । विश्वनाथस्तु काले मम स्थूलदेहभंगसमये कालः प्रादुरभूत् । यं कालं प्रतीक्षमाणः पूर्वं चिरादभूवं स इत्यर्थः । राज्ञो गमनसमये तस्य गमनसमयामितिवत् । बुद्धिर्हि भगवति अभेदेपि भेदं जनयतीत्यनुन्यासः । कालयोरतयोरकस्माद्युगपदेवाधाराधेयभावेन प्रादुर्भावे दृष्टांतः ।

प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुम् ॥ आरब्धकर्मनिर्वाणो न्यपतत्पांचभौतिकः ॥ २९ ॥ कल्पांत इदमादाय शयानेंऽभस्युदन्वतः ॥
शिशयिषोरनुप्राणं विविशेंतरहं विभोः ॥ ३० ॥ सहस्रयुगपयत उत्थायेदं सिसृक्षतः ॥ मरीचिमिश्रा ऋषयः प्राणेभ्योऽहं च जज्ञिरे ॥ ३१ ॥

दिक्" इति सूत्रेणाण् । स्फटिकादिमयपर्वतप्रांतभवा हि विद्युदतिस्फुटा भवति तद्वदित्यर्थः । यद्वा तडिदित्यंतिके इत्यर्थः ॥ "तडिदित्यंतिकबंधयोः" इति नैरुक्तस्मरणात ॥ २८ ॥ प्रयुज्यमाने मयि तामिति । अयमर्थः । 'हित्वावद्यमिमं लोकं गंता मज्जनतामसि' इति या भागवती भगवत्पार्षदरूपा शुद्धा सत्त्वमयी तनुः प्रतिश्रुता तां प्रति भगवता मयि प्रयुज्यमाने नीयमाने आरब्धं यत्कर्म तन्निर्वाणं समाप्तं यस्य । आरब्धकर्मणो निर्वाणमेव निर्वाणं यस्येति वा स पंचभूतात्मको देहोन्यपतत् । अनेन पार्षदतनूनामकर्मारब्धत्वं शुद्धत्वं नित्यत्वमित्यादि सूचितं भवति ॥२९॥ इदं त्रैलोक्यमादायोपसंहृत्योदन्वत एकार्णवस्यांभसि शयाने श्रीनारायणे शिशयिषोः शयनं कर्तुमिच्छोर्विभोर्ब्रह्मणोंऽतर्मध्यमनुप्राणं निःश्वासेन सह विविशे प्रविष्टोऽहम् । "ततोऽवतीय विश्वात्मा देहमाविश्य चक्रिणः । अवाप वैष्णवीं निद्रामेकीभूयाथ विष्णुना" इति कौर्मोक्तेः । स्वायनेंभसीति पाठे स्वायने स्वस्यायने आश्रयेंभसि शिशयिषोर्ब्रह्मण इति श्रीनारायणेनाभेदविवक्षयोक्तमित्यवगंतव्यम् ॥ ३० ॥ प्राणेभ्य इंद्रियेभ्योऽहं मरीचिमिश्रास्तन्मुख्याः

तडिति विद्युति सौदामनी यथा एकस्यां सौदामन्यां तथैवान्या सौदामनी कदाचिद्यथा भवति तथैव मम पांचभौतिकदेहभंगकाले एव [पार्षददेहप्राप्तिकालेभूदित्यर्थः ॥ २८ ॥ नीयमाने सति न्यपतदिति गोषु दुह्यमानासु गत इतिवत् । यथा गोदोहनगमनयोरतुल्यकालत्वं तथा मम भौतिकदेहत्यागचिन्मयदेहप्राप्त्योरपीति भावः । "हित्वावद्यमिमं लोकम्" इति भगवदुक्तौ क्त्वाप्रत्ययस्तुल्यकाल एव । तदुक्तं "क्वचित्तुल्यकालेपि । उपविश्य भुंक्ते, ज्ञणत्कृत्वा पतति, चक्षुः संमील्य हसति, मुखं व्यादाय स्वपितीत्यादिकमुपसंख्येयम्" इति । भाष्यवृत्तौ । अनेन वृत्तेन पार्षदतनूनामकर्मारब्धत्वं शुद्धत्वं नित्यत्वमित्यादि सूचितं भवतीति स्वामिचरणाः ॥ अत्रारब्धानां कर्मणां नायकत्वादग्नितुल्यानां निर्वाणो नाशो यत्र स इति बहुव्रीहिणा न केवलं तदानीमेव प्रारब्धनाश इति लभ्यते । देहपातात्पूर्वकालेपि तन्नाशे तत्प्रयोगासिद्धेः । न च जातप्रेम्णो भक्तस्यापि प्रारब्धं तिष्ठतीति शुद्धभक्तानां मतं साधनदशायामेव तन्नाशात् । यद्वक्ष्यते प्रियव्रतकथायां "मैवं विधः पुरुषकार उरुक्रमस्य पुंसां तदंघ्रिरजसा जितषड्गुणानाम् । चित्रं विदूरविगतः सकृदाददीत यन्नामधेयमधुना स जहाति तन्वम्" इति । अस्यार्थः । एवंविधं पौरुषं न चित्रम् । चित्रंखल्वेतदेव किं तदित्य आह । विदूरविगतोंत्यजोपि यन्नामधेयं सकृदाददीत यः सः अधुना नामग्रहणकाल एव तन्वं तनूं जहाति । अत्र नामग्रहणसमकाले तनुत्यागादर्शनात् । तन्वारंभकं प्रारब्धकर्मैव तनूशब्देन लभ्यते इत्येके प्राहुरपरे तु भक्तिसंपर्कात्स्पर्शमाणिन्यायेन त्रिगुणमयतनूरेष त्रिगुणातीता भवति । ध्रुवादौ तथा दर्शनात् । अत्र तस्यास्त्रैगुण्यत्याग एव तनुत्याग उच्यते । एतच्च रासारंभे "जहुर्गुणमयं देहम्" इत्यत्र प्रपंचयिष्यते चक्रवर्तिना । क्वचित्त स्वभक्तानां देहत्यागोपि भगवता दर्श्यते इत्याहुः । यथा जातप्रेम्णोपि नारदस्य देहत्यागस्तदपि प्रारब्धकर्मनाशो भक्त्यारंभ एव व्याख्येयस्तदुक्तं श्रीरूपगोस्वामिचरणैः । "यद्ब्रह्म साक्षात्कृतिनिष्ठयापि विनाशमायाति विना न भोगैः । अपैति नामस्मरणेन तत्ते प्रारब्धकर्मेति विरौति वेदः" इति । प्रारब्धनाश एव देहपातमित्याभिप्रायेण "प्रारब्धकर्मनिर्वाणेन्यपतत्पांचभौतिकेः" इति सप्तम्यंतमेव पदं प्रयुज्यत इत्यवधेयम् । तदप्रयुज्य बहुव्रीहिप्रयोगेण भक्तानां प्रारब्धकर्मनिर्वाणाधिकरणीभूत एव देहः पतेन्न तु ततोन्य इति ज्ञापितम् ॥ २९ ॥ ननु तव नित्यतनुत्वे कथमस्मिन्कल्पे स्वायंभुवे मन्वतरे । "उत्संगान्नारदो जज्ञे" इति ब्रह्मणः सकाशात्तव जन्मप्रसिद्धिः । सत्यं नित्यतनोरेव भगवतो लीलाविशेषार्थं देवक्यादिगर्भे प्रवेश इव ममापि ब्रह्मपुत्रत्वलीलार्थं पूर्वकल्पांत एव ब्रह्मणोभूदित्याह-कल्पान्त इति ॥ ३० ॥ सहस्रयुगेति । युगशब्दोत्र चतुर्युगपरः । जज्ञिमह इति वक्तव्ये जज्ञिर इत्यार्षम् । मरीचिमिश्रा इत्यस्यायं भावः । यथा मरीच्यादीनां

अंतर्बहिश्च लोकांस्त्रीन्पर्यैम्यस्कंदितव्रतः ॥ अनुग्रहान्महाविष्णोरविघातगतिः क्वचित् ॥ ३२ ॥
देवदत्तामिमां वीणां स्वरब्रह्मविभूषिताम् ॥ मूर्च्छयित्वा हरिकथां गायमानश्चराम्यहम् ॥ ३३ ॥

ऋषयश्च जज्ञिरे ॥ ३१ ॥ ये कर्मिणस्ते बहिर्न यांति । ये तपआदिभिर्ब्रह्मलोकं गतास्तेंतर्न यांति । अहं तु महाविष्णोरनुग्रहादखंडितब्रह्मचर्यव्रतः सन्नंतर्बहिश्च पर्यैमि पर्यटामि । क्वचिदप्यविघाताप्रतिहता गतिर्यस्य सः ॥ ३२ ॥ किमिति पर्यटसि ईश्वराज्ञया लोकमंगलार्थमित्याह चतुर्भिः—देवेन ईश्वरेण दत्ताम् । स्वराः " निषादर्षभगांधारषड्जमध्य

ब्रह्मकल्पादनुवृत्तानां संप्रति सुप्तप्रबुद्धतैव जन्मोच्यते तथेति ज्ञेयम् । अत्रेदं विवेचनीयम् । सर्वेषु वैकुण्ठेषु सर्वेषु कालेषु च श्रीनारदस्य नित्यता श्रूयते । यद्यप्येतन्न घटते तथापि नित्यश्रीनारदस्य रूपादिकं प्राप्तं महाभागधेयं जीवविशेषमवलंब्य घटेतेति ॥ ३१ ॥ न च मरीच्यादयः प्राकृताः स्वस्वकर्मपतिता इवाहं क्वापि कर्मणि । नापि सनकाद्या इव ज्ञानेपि नियुक्तः । किं त्वहं प्रवृत्तिनिवृत्तिधर्मातीतो हरिं भजन्नेव स्वच्छंदेन वर्ते इत्याह—अंतरिति । मे कार्मिणस्ते त्रिलोक्या बहिर्न यान्ति । "अंतस्त्रिलोक्यास्त्वपरो गृहमेधो बृहद्व्रत" इत्युक्तेः । ये तपआदिभिर्ब्रह्मलोकं गतास्ते त्रिलोक्या अंतर्न यांति कर्मबंधभीतेः । अहं त्वखंडितस्वभक्तिनिष्ठः सन्नंतर्बहिश्च पर्यैमि पर्यटामि। यद्वा बहिर्ब्रह्मांडान्महावैकुंठेपि।अत एवोक्तं नारसिंहेपि "सनकाद्या निवृत्त्याख्ये ते च धर्मे नियोजिताः । प्रवृत्त्याख्ये मरीच्याद्या मुक्त्वैकं नारदं मुनिम्" इति॥३२॥ स्वर्गापवर्गविलक्षणाः सर्वैरन्यै र्दुर्लभा मम भोगसामग्री तु सदा सर्वत्रेत्याह । देवेन श्रीकृष्णेन दत्ताम् । तथोक्तं लिंगपुराणे उपरिभागे तेनैव तस्य वीणाग्रहणं प्रसिद्धं "श्रीकृष्णदेवो भगवान्स्वरब्रह्मविभूषिताम् । कल्पादौ दत्तवान्वीणामृषये नारदाय वै" इति । स्कांदीयकेदारखण्डे तु "रागज्ञानं तथा वीणां नारदाय महेश्वरः । प्रादात्तत्तपसा प्रीतः पार्वतीपतिशंकरः" इत्युक्तं तत्कल्पांतरापेक्षमिति ध्येयम् । "स्वरब्रह्मणि निर्भातहृषीकेशपदांबुज" इत्युक्तेः ।स्वराणां निषादादीनां साक्षाद्ब्रह्मानंद इव श्रवणेनानन्दजनकत्वाद्ब्रह्मत्वमित्युक्तम् । स्वराणामारोहणावरोहणक्रमो मूर्च्छा तद्वतीं वीणां कृत्वेति भावः । अथ स्वरादिकथनं संगीतार्णवात् । "सामवेदात्स्वरा जाताः स्वरेभ्यो ग्रामसंभवः । ग्रामेभ्यो जातयो जाता जातिभ्यो रागसंभवः ॥ सप्तस्वरास्त्रयो ग्रामा मूर्च्छनाश्चैकविंशतिः । द्वाविंशतिश्च श्रुतय एतेभ्यो रागसंभवः ॥ षड्जर्षभकगांधारमध्यपञ्चमधैवताः । निषादश्चेत्यमी सप्त तंत्रीकंठोत्थिताः स्वराः ॥ षड्जादयः स्वराः सप्त ग्रामौ च षड्जमध्यमौ । केचिद्गांधारमप्याहुः स तु नेहास्ति भूतले ॥ चतुर्दशैव श्रुतयस्तावन्मानाश्च मूर्च्छनाः । गीयंते मानवैर्भूमावन्यास्तु त्रिदशालये ॥ स्वयं यो राजते नादः स स्वरः परिकीर्तितः । स्वरैश्च निखिलं व्याप्तं तद्विज्ञेयं पृथक्पृथक् ॥उच्चैर्निषादगांधारौ नीचैर्ऋषभधैवतौ । शेषास्तु स्वरिता ज्ञेयाः षड्जपञ्चममध्यमाः ॥ षड्जं वदेन्मयूरो हि ऋषभं चातको वदेत् । अजा वदति गांधारं क्रौञ्चो वदति मध्यमम् ॥ पुष्पसाधारणे काले कोकिलः पंचमं वदेत् । दर्दुरो धैवतं चैव निषादं च वदेद्गजः ॥ हास्यशृंगारयोः कार्यौ स्वरौ पञ्चममध्यमौ । षड्जर्षभौ तथा ज्ञेयौ वीररौद्राद्भुते रसे ॥ गांधारश्च निषादश्च कर्त्तव्यौ करुणारसे । धैव तश्चैव कर्त्तव्यो बीभत्से च भयानके ॥ चतुःश्रुतिस्त्रिश्रुतिश्च द्विश्रुतिश्च चतुःश्रुतिः । चतुःश्रुतिस्त्रिश्रुतिश्च द्विःश्रुतिश्चेतिभेदकाः ॥ " श्रुतिश्च स्वरारंभकः शब्दविशेषः । लक्षणं चास्या आद्यपद्यव्याख्याशतकांतर्गत नारदपक्षव्याख्याने उक्तम् । अथ प्रसंगाद्रागनामानि "भैरवः पंचमो नाटो मल्लारो गौडमालवः । देशाखश्चेति षड्भागाः प्रोच्यंते लोकविश्रुताः॥ बंगपालो गुणकरी मध्यमादिर्वसंतकः । धन्या श्रीश्चेति पंचैते रागा भैरवसं श्रयाः॥ ललिता गूर्जरी देशी वराठी रामकृत्तथा । मता रागार्णवे रागाः पंचैते पञ्चमाश्रयाः॥ नटो नारायणः पूर्वं गांधारः सालगस्तथा । ततः केदारकर्णाटौ पंचैते नाटसंश्रयाः॥मेघमल्लारिका मालकौशिकः प्रतिमंजरी । आसावरी च पंचैते रागा मल्लारसंश्रयाः ॥ हिंदोलस्त्रिगुणाधालीगौडीकोलाहलास्तथा । पंचैते गौडनामानं रागमाश्रित्य संस्थिताः ॥ भौपाली हरिपालश्च कामोदी धोरणी तथा । वेलावली च पंचैते रागा देशाखसंश्रयाः ।

१ प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रतः । सा श्रुतिः संपरिज्ञेया इति । श्रुत्यनंतरभावी यः स्निग्धोऽनुरणनात्मकः । स्वरो रंजयति श्रोतुश्चित्तं स स्वर उच्यते ॥ इति ।

प्रगायतः स्ववीर्याणि तीर्थपादः प्रियश्रवाः ॥ आहूत इव मे शीघ्रं दर्शनं याति चेतसि ॥ ३४ ॥ एतद्ध्यातुरचित्तानां मात्रास्पर्शेच्छया मुहुः ॥ भवसिंधुप्लवो दृष्टो हरिचर्याऽनुवर्णनम् ॥ ३५ ॥ यमादिभिर्योगपथैः कामलोभहतो मुहुः ॥ मुकुंदसेवया यद्वत्तथात्माऽद्धा न शाम्यति ॥ ३६ ॥ सर्वं तदिदमाख्यातं यत्पृष्टोऽहं त्वयाऽनघ ॥ जन्मकर्मरहस्यं मे भवतश्चात्मतोषणम् ॥ ३७ ॥

मधैवतपंचमाः" इति सप्त। त एव ब्रह्म । ब्रह्माभिव्यंजकत्वात् तेन विभूषिताम् । स्वतःसिद्धसप्तस्वरामित्यर्थः मूर्च्छयित्वा मूर्च्छनालापवतीं कृत्वा ॥ ३३ ॥ स्वप्रयोजनमाह प्रगायत इति ॥ ३४ ॥ परप्रयोजनमाह—एतद्धीति । मात्रा विषयाः तेषां स्पर्शाः भोगाः तेषामिच्छया आतुराणि चित्तानि येषां तेषां हरिचर्यानुवर्णनं यद् एतदेव भवसिंधौ प्लवः पोतः । न केवलं श्रुतिप्रामाण्येन, किंत्वन्वयव्यतिरेकाभ्यां दृष्ट एवेत्यर्थः ॥ ३५ ॥ एतदेवेत्युक्तमवधारणमनुभवेन द्रढयति—यमादिभिरिति । यमादिभिः तथा न शाम्यति, यद्वत् मुकुंदसेवया अद्धा साक्षादात्मा मनः शाम्यति कथंचिन्मुकुंदसेवामात्रेण शाम्यति, किं पुनस्तद्गुणवर्णनेनेति भावः ॥ ३६ ॥ भवतो मनःपरितोषकं मम जन्म कर्म रह

अन्येऽपि बहवो रागा जाता देशविशेषतः । मारूप्रभृतयो लोके ते च भद्रेशिकाः स्मृताः ॥ न रागाणां न तालानामंतः कुत्रापि विद्यते । संतोषाय शिवस्यैते ज्ञेया बुधजनैः सदा ॥ तथा नयति कैलासं न गंगा न सरस्वती । यथा नयंति रागास्ते नरं गायनकोविदम्॥ अपि ब्रह्मपरानंदादिदमप्यधिकं ध्रुवम् । जहार नारदादीनां चित्तानि कथमन्यथा॥" इह तालतान ध्रुवकादि बहु वक्तव्यमस्ति। तच्च संगीतार्णवादिभ्योऽवसेयम् । रागाणामन्यथागुणप्रधानभावेन क्वचित्कथनं तु वक्तुरिच्छयैवेति ध्येयम्॥३३॥ पोतः"यानपात्रं तु पोत" इत्यमरः । "प्लवो भेकेर्भके पोते मृगपक्षिविशेषयोः"इति निरुक्तिः । इत्यर्थ इति। साक्षात्प्रत्यक्षीकृतो नात्र प्रमाणापेक्षेति भावः । तीर्थवच्छोधकौ पादौ तीर्थं गंगाख्यं पादे वा यस्य स तथा ॥ ३४ ॥ यत्र हरिचर्यानुवर्णनं ध्रुवप्रह्लादादिषु तत्र संसारतरणमपि दृष्टं यत्र वेनादौ तदभावस्तत्र संसारतरणस्याप्यभाव इत्यन्वयव्यतिरेकावत्र ज्ञेयौ ॥ ३५ ॥ भक्तिसद्भाव एव निस्तार इति निर्द्धारेऽपि यथा केवलया भक्त्यात्मा साक्षाच्छाम्यति न तथा भक्तिमिश्रैर्योगज्ञानादिभिरत्याह-यमादिभिस्तथा न शाम्यति यद्वन्मुकुंदसेवयाऽद्धा साक्षादेव । अत्र पुरेह भूमन्नित्यादिना नैष्कर्म्यमित्यादिना च योगादीनां भक्तिराहित्ये वैयर्थ्याद्भक्तिमिश्रैरेव यमादिभिरिति लभ्यते । अतस्तैरात्मा यद्यपि शाम्यति तदपि यद्वन्मुकुंदसेवया यमादिविनाभूतत्वात्केवलयेत्यर्थः । अत्र भवतानुदितप्रायमित्यादिना तथात्माद्धा न शाम्यतीत्यंतेन ग्रंथेन भक्तेरेव निस्तारोपायत्वेनोक्तेपि तस्यास्त्रैविध्यं दृश्यते । केवलत्वं प्राधान्यं गुणभावश्च "त्यक्त्वा स्वधर्मम्"इत्यादिषु "अहं पुरातीतभवे" इत्यादिषु केवलत्वं"कुर्वाणा यत्र कर्माणि भगवच्छिक्षया सकृत् गृणंति गुणनामानि कृष्णस्यानुस्मरंति च" इत्यादिषु प्राधान्यं "यदत्र क्रियते कर्म भगवत्परितोषणम् । ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम्"इत्यत्र गुणभावः ।तत्र केवलत्वे निष्कामाधिकारिणो भक्तिरनन्या शुद्धा निर्गुणोत्तमाऽकिंचनेत्यादिनाम्नी प्रेमफला भवति । प्राधान्ये कर्ममिश्रा ज्ञानमिश्रा योगमिश्रेत्यादिनाम्नी भक्तिः शांताधिकारिणोरतिफला कस्यचिन्मोक्षफलापि भवति । दास्यादिभाववत्साधुसंगवशात्कस्यचिदास्याद्यभिलाषिणो भक्तेरतिप्राधान्ये सत्यैश्वर्यप्रधानदास्यादिभावप्रदा प्रेमफलापि भवति।गुणभावे तु स्वीयं नाम फलं चप्रकाशयंति कर्मज्ञानयोगादीनां तया विना प्रतिस्वफलं सम्यक्साधयितुमसमर्थानां तत्र साहाय्यमात्रं कुर्वती स्वयं तटस्थैव भवति।ततश्च भक्तिमिश्रं कर्म ज्ञानं योगश्च मोक्षं साधयतीत्यतोत्र शास्त्रे भक्तिर्द्विविधैव। केवला प्रधानीभूता चेत्येतत्सर्वं नारदेनोपदिष्टो व्यासो द्वादशसु स्कंधेषु प्रपंचयिष्यतीति ज्ञेयम् ॥३६॥ सर्वं भक्तेराविर्भा

सूत उवाच ॥ एवं संभाष्य भगवान्नारदो वासवीसुतम् ॥ आमंत्र्य वीणां रणयन्ययौ यादृच्छिको मुनिः ॥ ३८ ॥ अहो देवर्षिर्धन्योऽयं यत्कीर्तिं शार्ङ्गधन्वनः ॥ गायन्माद्यन्निदं तंत्र्या रमयत्यातुरं जगत् ॥ ३९ ॥ इति श्रीभा० म० प्रथम० व्यासनारदसंवादे षष्ठोऽध्यायः ॥ ६ ॥ शौनक उवाच ॥ निर्गते नारदे सूत भगवान्बादरायणः ॥ श्रुतवांस्तदभिप्रेतं ततः किमकरोद्विभुः ॥ १ ॥ सूत उवाच ॥ ब्रह्मनद्यां सरस्वत्यामाश्रमः पश्चिमे तटे ॥ शम्याप्रास इति प्रोक्त ऋषीणां सत्त्रवर्धनः ॥ २ ॥ तस्मिन्स्व आश्रमे व्यासो बदरीषंडमंडिते ॥ आसीनोऽप उपस्पृश्य प्रणिदध्यौ मनः स्वयम् ॥ ॥ ३ ॥ भक्तियोगेन मनसि सम्यक्प्रणिहितेऽमले ॥ अपश्यत्पुरुषं पूर्वं मायां च तदुपाश्रयाम् ॥ ४ ॥

स्यं च आख्यातम् ॥ ३७ ॥ आमंत्र्यानुज्ञाप्य । यादृच्छिकः स्वप्रयोजनसंकल्पशून्यः ॥ ३८ ॥ हरिकथागायकनारदभाग्यं श्लाघते—अहो इति । माद्यन् हृष्यन् । तंत्र्या वीणया ॥ ३९ ॥ ॥ इति भा० प्रथम० टीकायां षष्ठोऽध्यायः ॥ ६ ॥ ॥ अथ भागवतश्च तुर्जन्म वक्तं परीक्षितः ॥ सुतबालवधाद्द्रौणेर्दंडः सप्तम उच्यते ॥ १ ॥ तस्य नारदस्य अभिप्रेतं श्रुतवान्सन् ॥ १ ॥ ब्रह्मनद्यां ब्रह्मदैवत्यायां ब्राह्मणैराश्रितायां च । सत्रं कर्म वर्धयतीति तथा ॥ २ ॥ बदरीणां षंडेन समूहेन मंडिते मनः प्रणिदध्यौ स्थिरी चकार "समाधिनाऽनुस्मर तद्विचेष्टितम्" इति नारदोपदिष्टं ध्यानं कृतवानित्यर्थः ॥ ३ ॥ प्रणिहिते निश्चले । अत्र हेतुः—भक्तियोगेन अमले ।

वप्रकारो वृद्धिः फलं तद्वतो जनस्य चेष्टाप्रारब्धकर्मनाशः साधकदेहत्यागप्रकारोऽकर्मारब्धचिन्मयदेहप्राप्तिश्च। रहस्यं वेदांतदर्शिभिरप्यगम्यम् ॥ ३७ ॥ यदृच्छया चरतीति यादृच्छिकः । हेतुशून्यगमनादिक्रियः तेन च भक्तिर्यादृच्छिकी भक्तोऽपि यादृच्छिकस्तत्संगोपि व्यासस्य यादृच्छिक इति भक्तिमतां यादृच्छिकत्रयी जीवतु ॥ ३८ ॥ नरे परमेश्वरे सदा तिष्ठतीति नारं ज्ञानं तद्ददाति व्यासादिभ्य इति नारदः । यद्वा नरेषु जीविषु तिष्ठतीति नारमज्ञानं द्यति खण्डयतीति नारदः । अरदो दोषदो न भवतीति वा । यद्वाऽऽरःशास्त्रभेदस्तद्ददायुः खंडको न भवतीति । यद्वा । नारं नरसमूहं दयते पालयति ज्ञानदानेनेति नारदः । छन्दो भंगस्त्वार्षः "श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्" इत्युक्तिविरोधात् । यस्तंत्र्याऽऽतुरं संसारक्लेशाक्रांतं जगद्रमयत्यानंदयति अयं देवर्षिर्धन्य इत्यन्वयः ॥ ३९ ॥ इति श्रीभागवतभावार्थदीपिकाप्रकाशे प्रथम स्कन्धे षष्ठोऽध्यायः ॥ ६ ॥ अथ नारदजन्मादिवर्णनानंतरं द्रौणेरश्वस्थाम्नः ( १ ) ततो नारदाभिप्रायश्रवणानन्तरम् । विशेषेण भाति वेदविभागादिषु इति विभुः ॥ १ ॥ ब्रह्मानद्यां वेदानां विप्राणां तपतां परमेश्वर स्य वा संबन्धिन्यां नद्यां "वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः" इत्यमरः । सतस्त्राति सदाचारपरान्रक्षतीति सत्रो हरिस्तेन वर्द्धयते स्वस्थित्या जगति ख्याप्यत इति सत्रवर्द्धनः । शम्यायुगकीलाः प्राप्स्यंते प्रक्षिप्यंते परिध्यर्थेऽस्मिन्निति शम्याप्रासः लकुटीकृतशम्या नाम यज्ञियतरुशाखापातितस्थले कृतशालांतर्यज्ञकरणाच्छम्याप्रास इति तीर्थः । यद्वा । शम उमशमोऽस्त्येषामिति शमिनः । शम इत्युपलक्षणं दमोपरत्यादेः । तेन शमादियुक्ता आसमन्तात्प्रकर्षेणासते तिष्ठन्त्यत्रेति शम्याप्रासः ॥ २ ॥ इत्यर्थ इति । अयं चाश्रमः सिन्धुवनांतर्गत एव न गंधमादनग इति शिष्टास्तत्रैवादिबदरिकाश्रमोयमिति प्रसिद्धेः । सरस्वत्यपि तत्रास्त इति । इत्यर्थ इति । ध्यानस्यैव प्रणिधिपदार्थत्त्वादिति भावः । उपस्पृश्य स्नानादि कृत्वा ॥ ३ ॥ अत्र निश्चलत्वे । अत्र संदर्भः । भक्तियोगेन प्रेम्णा "अस्त्येवमंग भजतां भगवान्मुकुंदो मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम् " इत्यादौ "भक्त्या संजातया भक्त्या" इत्यादौ च प्रसिद्धेः । प्रणिहिते समाहिते "समाधिनानुस्मर तद्विचेष्टितम्" इति तं प्रति नारदोपदेशात् । पूर्णपदस्य मुक्तप्रग्रहया वृत्त्या "भगवानिति शब्दोयं तथा

## यया संमोहितो जीव आत्मानं त्रिगुणात्मकम् ॥ परोऽपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते ॥ ५ ॥

**पूर्वं प्रथमं पुरुषम् । ईश्वरम् अपश्यत् । पूर्णमिति वा पाठः । तदुपाश्रयाम् । ईश्वराश्रयां तदधीनां मायां च अपश्यत् ॥ ४ ॥ ईशमायाकृतां च जीवानां संसृतिमपश्यदित्याह**

पुरुष इत्यपि । निरुपाधिश्च वर्तन्ते वासुदेवेखिलात्मनि '' इति पाद्मोत्तरखंडवचनावष्टम्भेन तथा ''कामकामो यजेत्सोममकामः पुरुषं परम् । अकामः सर्वकामो वा'' इत्यादौ ''यजते पुरुषं परम्'' इत्यस्य वाक्यद्वयस्य पूर्ववाक्ये पुरुषं परं प्रकृत्यै कोपाधिमुत्तर वाक्ये पुरुषं पूर्णं निरुपाधिमिति टीकानुसारेण पूर्णः पुरुषोत्र स्वयं भगवानेवोच्यते । पूर्वमिति पाठे पूर्वमेवाहमिहासमिति ''तत्पुरुषस्य पुरुषत्वम्'' इति श्रौतानिर्वचनविशेषपुरस्कारेण स एवोच्यते । तमपश्यच्छ्रीवेदव्यास इति स्वरूपशक्तिमंतमेवेत्येतत्स्वयमेव लब्धम् । पूर्णचंद्रमपस्यदित्युक्ते कांतिमंतमपश्यदिति हि लभ्यत एव । वक्ष्यते च ''त्वमाद्यः पुरुषः साक्षादीश्वरः प्रकृतेः परः । मायां व्युदस्य चिच्छक्त्या कैवल्ये पर आत्मानि'' इति अत एव ''मायाञ्च तदपाश्रयाम्'' इत्यनेन तस्मिन् अप अपकृष्ट आश्रयो यस्याः निलीय स्थितत्वादिति मायाया न स्वरूपभूतत्व मित्यपि लभ्यते । वक्ष्यते च ''माया परैत्यभिमुखे च विलज्जमाना'' इति । स्वरूपशक्तिरियमत्रैव व्यक्ती भविष्यति । ''अनर्थोपशमं साक्षात्'' इत्यनेन ''आत्मारामाश्च मुनयः'' इत्येनेन च पूर्वत्र हि भक्तियोगप्रभावः खल्वसौ मायाभिभावकतया स्वरूपशक्तिवृत्तित्वेनैव गम्यते । परत्र ते च गुणाः ब्रह्मानंदस्याप्युपरिचरतया स्वरूपशक्तेः परमवृत्तितायामेवार्हति ॥ मायाधिष्ठातृपुरुषस्तु तदंशत्वेन । ब्रह्म च तदीयनिर्विशेषाविर्भावरूपत्वेन । तदंतर्भावणापृथग्दृष्टत्वात् पृथङ् नोक्त इति ज्ञेयम् । तदेतच्च द्वितीयतृतीयसंदर्भयोः प्रतिपादितमस्ति । अत्र विश्वनाथः । पुरुषं पुरुषाकारं श्रीकृष्णमित्यर्थः । '' कृष्णे परमपूरुषे'' इत्यग्रिमोक्तेः । पूर्णमिति पदेन तस्य स्वरूपभूतं चिच्छक्तिमंशकलावतारान् पूर्तीलिंगेन ब्रह्म चापश्यदिति गम्यते । पूर्णं चंद्रमपश्यदित्युक्त चंद्रस्य कांतेरंशककलानां च पूर्त्तेच दर्शनं स्वत एव भवेदित्यर्थः । किं तु तस्य बहिरंगायाः शक्तेर्मायाया स्तद्विपरीतधर्मवत्यास्तद्दर्शनेन दर्शनं न भवतीति तां पृथग्लिखति । मायां चेति । तस्या यम् अपरं पश्चिमभाग एवाश्रयो यस्यास्ताम् '' विलज्जमानया यस्य स्थातुमीक्षापथेमुया'' इत्यनेन तस्या भगवत्पृष्ठदेशाश्रयत्वे नोक्तेः ॥ ४ ॥ अभिधेयस्य प्रयोजनस्य च स्थापकं जीवस्य स्वरूपत एव परमेश्वराद्वैलक्षण्यमपश्यदित्याह-ययेति । यया मायया संमोहितो जीवः स्वयं चिद्रूपत्वेन त्रिगुणात्मकाज्जडात्परोऽपि आत्मानं त्रिगुणात्मकं जडं देहादिसंघातं मनुते तन्मननकृतमनर्थं संसारव्यसनं चाभिपद्यते तदेवं जीवस्य चिद्रूपत्वेपि यया संमोहित इति मनुते इति स्वरूपभूतज्ञानशालित्वं व्यनक्ति । प्रकाशैकरूपस्य तेजसः स्वपरप्रकाशनशक्तिवत् ॥ ''अज्ञानेनावृत्तं ज्ञानं तेन मुह्यन्ति जन्तवः''इति गीतादिभ्यः तदेवमुपाधेरेव जीवत्वं तन्नाशस्यैव च मोक्षत्वमिति मतांतरं परिहृतवान् । अत्र यया संमोहित इत्यनेन तस्या एव तत्र कर्तृत्वं भगवतस्तु तत्रोदासीनत्वं मतम् । वक्ष्यते च''विलज्जमानया यस्य स्थातुमीक्षापथेमुया ।विमोहिता विकत्थन्ते ममाहमिति दुर्धियः'' इति । अत्र विलज्जमानयेत्यनेनेदमायाति । तस्या जीवसंमोहनं कर्म श्रीभगवते न रोचते इति यद्यपि सा स्वयं जानाति तथापि भयं ''द्वितीयाभिनिवेशतः स्यादीशादपेतस्य विपर्ययस्मृतिः'' इत्यादिदिशा जीवानामनादिभगवदज्ञानमयवैमुख्यमसहमाना स्वरूपास्फुरणमस्वरूपावेशं च करोति । श्रीभगवांश्चानादित एव भक्तायां प्रपंचाधिकारिण्यां तस्यां दाक्षिण्यं लंघितुं न शक्नोति । तथा तद्वयेनापि जीवानां स्वसांमुख्यं वांछन्नुपदिशति''दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यंते मायामेतां तरंति ते''इति। ''सतां प्रसंगान्मम वीर्यसंविदो भवंति हृत्कर्णरसायनाः कथाः । तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धा रतिर्भक्तिरनुक्रमिष्यति''इति च । लीलया श्रीमद्व्यासरूपेण तु विशिष्टतया तदुपदिष्टवानित्यनंतरमेवायास्यति ।अनर्थोपसमं साक्षाद्भक्तियोग इति तस्माद्वयोरपि तत्तत्समंजसं ज्ञेयम् ननु माया खलु शक्तिः शक्तेश्च कार्यक्षमत्वं तच्च धर्मविशेषः तस्य कथं लज्जादिकम् । उच्यते । एवं सत्यपि भगवति तासां शक्तीनामधिष्ठातृदेव्यः श्रूयन्ते । यथा केणोपनिषदि महेन्द्रमाययोः संवादः । तदास्ताम् । प्रस्तुतं प्रस्तूयते । तत्र जीवस्य तादृशचिद्रूपत्वेपि परमेश्वरतो वैलक्षण्यं तदपाश्रयमिति यया संमोहित इति च दर्शयति । यद्वैव यदेकं चिद्रूपं ब्रह्म मायाश्रयतावलितं विद्यामयं तद्वैव तन्मायाविषयतापन्नमविद्यापरिभूतं चेत्ययुक्तमिति जीवेश्वरविभागोऽवगतः । ततश्च स्वरूपसामर्थ्यवैलक्षण्येन तद्द्वितयं मिथो विलक्षणस्वरूपमेवेत्यागतम् । न चोपाधितारतम्यमयपरिच्छेदप्रतिबिंबत्त्वादिव्यवस्थया तयोर्विभागः स्यात् । तत्र यद्युपाधेरनाविद्यक

**अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे ॥ लोकस्याजानतो विद्वांश्चक्रे सात्त्वतसंहिताम् ॥ ६ ॥**

**ययेति । यया संमोहितः स्वरूपावरणेन विक्षिप्तः परोऽपि गुणत्रयातिरिक्तोऽपि तत्कृतं त्रिगुणत्वाभिमानकृतमनर्थं च कर्तृत्वादिकं प्राप्नोति ॥ ५ ॥ अनर्थम् उपशमयति यः अधोक्षजे साक्षाद्भक्तियोगः तं च अपश्यत् । एतत्सर्वं स्वयं दृष्ट्वा एवमजानतो लोकस्य अर्थे सात्वतसंहितां श्रीभागवताख्यां चक्रे । तदनेन श्लोकत्रयेण भागवतार्थः संक्षेपतो दर्शितः । एतदुक्तं भवति—विद्याशक्त्या मायानियंता नित्याविर्भूतपरमानंदस्वरूपः सर्वज्ञः सर्वशक्तिरीश्वरः तन्मायया संमोहितः तिरोभूतस्वरूपः तद्विपरीतधर्मा जीवः तस्य च**

त्वेन वास्तवत्वं तर्ह्यविषयस्य तस्य परिच्छेदविषयत्वासंभवः । निर्द्धर्मकस्य व्यापकस्य निरवयवस्य च प्रतिबिंबत्वायोगोऽप्युपाधिसम्बन्धाभावाद्बिम्बप्रतिबिम्बभेदाभावाद्दृश्यत्वाभावाच्च । उपाधिपरिच्छिन्नाकाशस्थज्योतिरंशस्यैव प्रतिबिंबो दृश्यते नत्वाकाशस्य दृश्यत्वाभावादेव तथा वास्तवपरिच्छेदादौ सति समानाधिकरणज्ञानमात्रेण न तत्त्यागश्च भवेत् । तत्पदार्थप्रभावस्तत्र कारणमिति चेदस्माकमेव संमतम् । उपाधेराविद्यकत्वे तत्र न तत्परिच्छिन्नत्वादेरप्यघटमानत्वादाविद्यकत्वमेवेति । घटाकाशादिषु वास्तवोपाधिमयतद्दर्शनया न तेषामवास्तवस्वप्रदृष्टांतोपजीविनां सिद्धांतः सिद्ध्यति । घटमानाघटमानयोः संगतेः कर्त्तुमशक्यत्वात् । ततश्च तेषां सर्वमविद्याविलास एवेति स्वरूपमप्राप्तेन तेन तत्तद्व्यवस्थापयितुमशक्यमिति ब्रह्माविद्ययोः पर्यवसाने सति यदेव ब्रह्म चिन्मात्रत्वेनाविद्यायोगस्यात्यंताभावास्पदत्वाच्छुद्धं तदेव तद्योगादशुद्धया जीवः पुनस्तदेवाविद्याकल्पितोपाधौ तस्यामीश्वराख्यायां विद्येति तथा विद्यावत्त्वेपि मायित्वमित्यसमंजसा च कल्पना स्यादित्याद्यनुसंधेयम् । किं च यद्यत्राभेदवाद एव तात्पर्यमभविष्यत्तर्ह्येकमेव ब्रह्माऽज्ञानेन भिन्नं ज्ञानेन तु तस्य भेदमयदुःखं विलीयते इत्यपश्यदित्येवावक्ष्यत् । तथा भगवल्लीलादीनां वास्तवत्वाभावे सति शुकहृदयविरोधश्च जायते। तस्मात्परिच्छेदप्रतिबिम्बत्वादिप्रतिपादकशास्त्राण्यपि कथंचित्तत्सादृश्येन गौण्यैव वृत्त्या प्रवर्त्तेरन् । अंबुवद्ग्रहणात्तु तथात्वं वृद्धिह्रासभाक्त्वमंतर्भावादुभयसामंजस्यादेवमिति पूर्वोत्तरपक्षमयन्यायाभ्यां तत एवाभेदशास्त्राण्युभयोश्चिद्रूपत्वेन जीवसमूहस्य दुर्घटघटनापटीयस्याः स्वाभाविकतदचिंत्यशक्त्याः स्वभावत एव तद्रश्मिपरमाणुगणस्थानीयत्वात्तद्व्यतिरेकेऽव्यतिरेकेण च विरोधं परिहृत्यैवाग्रे मुहुरपि तदेतद्व्याससमाधिलब्धसिद्धांतयोजनाय योजनीयानि । तदेवं मायाश्रितत्वमायामोहितत्वाभ्यां स्थिते तयोर्भेदे तद्भजनस्याभिधेयत्वमायातम् । अतः श्रीभगवत एव सर्वहितोपदेष्टृत्वात्सर्वदुःखहरत्वाद्रश्मीनां सूर्यवत्सर्वेषां परमस्वरूपत्वात्सर्वाधिक्यगुणशालित्वात्परमप्रेमयोग्यत्वमिति प्रयोजनं च स्थापितमिति संदर्भः ॥ विश्वनाथस्तु ननु भगवद्रूपगुणलीलामाधुर्यवर्णनार्थं भगवद्दर्शनमपेक्षणीयमेव व्यासस्य मायादर्शनं किमर्थं तत्राह-यया संमोहित इति । अयमर्थः । यदर्थं श्रीभागवतम्प्रारीप्सितं स जीवो मायारोगग्रस्तः कथं स्वयं स्वादयतु तन्माधुर्यम् । अतस्तस्य रोगदर्शनं विना चिकित्सा न भवति । तयां च विना रोगिणस्तस्य कथमौषधपथ्ययोर्व्यवस्थेति मायाजीवावपि द्रष्टुमवश्यमेवापेक्षणीयाविति यया संमोहितः स्वरूपावरणविक्षेपाभ्यां भ्रमितः परोपि तस्या मायाया गुणत्रयातिरिक्तोपि तत्कृतं गुणकृतमनर्थं तदभिमानेन प्राप्नेति ॥ ॥ ५ ॥ श्लोकत्रयेण भक्तियोगेनेत्यादिवृत्तत्रयेण । अत्राशयं द्योतयति-एतदुक्तं भवतीति । तज्जीवेश्वरस्वरूपम् । ह्लादिन्या तदाख्यया संविदा ज्ञानशक्त्या य आश्लिष्टः सर्वदा युक्तः स सच्चिदानंद ईश्वर इत्यर्थः । यस्तु स्वाविद्यया स्वरूपाज्ञानेनाच्छादितः स जीवः क्लेशसमूहखनिः अर्दितः स्वाधीनीकृतः स्वस्मिन्नाविर्भूतः परानंदो यस्य स तथेतीशविशेषणम् । स्वस्मिन्नाविर्भूतानि यानि सुदुःखान्यात्यंतिकदुःखानि तेषां भूः क्षेत्रमिति जीवविशेषणम् । स्वस्यादृशाऽऽदर्शनेनोत्थो यो विपर्यासो देहाद्यात्मधीस्तस्माद्भवंत्युद्भवंतीति स्वादृगुत्थविपर्यासभवाः ताश्च भेदजभीशुचश्चेति स्वादृगुत्थविपर्यासभवभेदजभीशुचस्ता जुषन्यन्मायया तिष्ठति भेदाद्भयं शोकश्च भवत्येव "द्वितीयाद्वै भयं भवति" "अनीशया शोचति मुह्यमानः" इत्यादि श्रुतिभ्यामिति । अत्र संदर्भः । तत्राभिधेयं च तादृशत्वे दृष्टवानपि यतस्तत्प्रवृत्त्यर्थं श्रीभागवताख्यामिमां संहितां प्रवर्त्तितवानित्याह-अनर्थोपशममिति । भक्तियोगोत्र कीर्त्तनश्रवणादिलक्षणः । साधनभक्तिर्न तु प्रेमलक्षणः । अनुष्ठानं ह्युपदेशापेक्षं प्रेम तु तत्प्रसादापेक्षमिति । तथापि तस्य तत्प्रसादहेतोस्तत्प्रेमफलगर्भत्वात्साक्षादेवानर्थोपशमनत्वं नत्वन्यसापेक्षत्वेन "यत्कर्मभिर्यत्तपसा"इत्यादेः। ज्ञानादेस्तु भक्तिसापेक्षत्वमेव"श्रेयःसृतिं भक्तिमुदस्य"इत्यादेः । अथवाऽनर्थस्य संसारव्यसनस्य तावत्साक्षादव्यवधानेनोपशमनमिति । विश्वनाथस्तु-तस्य यदौषधं तदपि दृष्टमित्याह । अनर्थमुपशमयति

यस्यां वै श्रूयमाणायां कृष्णे परमपुरुषे ॥ भक्तिरुत्पद्यते पुंसः शोकमोहजरापहा ॥ ७ ॥ स संहितां भागवतीं कृत्वाऽनुक्रम्य चात्मजम् ॥ शुकमध्यापयामास निवृत्तिनिरतं मुनिः ॥ ८ ॥ शौनक उवाच ॥ स वै निवृत्तिनिरतः सर्वत्रोपेक्षको मुनिः ॥ कस्य वा बृहतीमेतामात्मारामः समभ्यसत् ॥ ९ ॥ सूत उवाच ॥ आत्मारामाश्च मुनयो निर्ग्रंथा अप्युरुक्रमे ॥ कुर्वंत्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥ १० ॥

ईश्वरभक्त्या लब्धज्ञानेन मोक्ष इति । तदुक्तं विष्णुस्वामिना—"ह्लादिन्यासंविदाश्लिष्टः सच्चिदानंद ईश्वरः । स्वाविद्यासंवृतो जीवः संक्लेशनिकराकरः" तथा—"स ईशो यद्वशे माया स जीवो यस्तयार्दितः । स्वाविर्भूतपरानंदः स्वाविर्भूतसुदुःखभूः ॥ स्वादृगुत्थविपर्यासभवभेदजभीशुचः । यन्मायया जुषन्नास्ते तमिमं नृहरिं नुमः" इत्यादि॥६॥ संहितायाः अनर्थोपशामकत्वं दर्शयति—यस्यामिति । यस्यां वै श्रूयमाणायामेव किं पुनः श्रुतायामित्यर्थः ॥ ७ ॥ अनुक्रम्य शोधयित्वा ॥ ८ ॥ कस्य वा हेतोः । बृहतीं वितताम् ॥ ९ ॥ निर्ग्रंथाः ग्रंथेभ्यो निर्गताः । तदुक्तं गीतासु—"यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति । तदा गंतासि निर्वेदं श्रोतव्यस्य श्रुतस्य च"

यस्तं भक्तियोगमपश्यत् । अत्र दर्शनेऽयं क्रमः । प्रथमं भगवन्तमपश्यत् । पूर्णेतिपदप्रयोगादंशान्विना कथं पूर्णत्वमिति तदंशान्पुरुषावतारगुणावतारादनिपश्यत् । पूर्त्तिमत्वं पूर्णत्वमिति पूर्त्तिरूपं ब्रह्मापश्यत् ।तत्कांतिभूतां विमलोत्कर्षिण्याद्यनेकप्रभेदवतीं चिच्छक्तिमपश्यत् । पृष्टे बहिरंगां मायां शक्तिमपश्यत् । तया मोहितां जीवशक्तिं तदनंतरमपश्यत् । तस्यास्तन्मोहनिवार्त्तिकां सर्वतोपि महतीं चिच्छक्तिमुख्यां भक्तिरूपां शक्तिमनुग्रहशक्तिविलासभूतां भगवतो वशयित्रीं भगवत्येवापश्यत् । तदेतत्सर्वं स्वयं दृष्ट्वा जानतो लोकस्यार्थे सात्वतसंहितामेतत्सर्वतत्त्वप्रकाशिकां श्रीभागवताख्यां चक्रे । "ईशः स्वतंत्रश्चित्सिंधुः सर्वव्याप्येक एव हि । जीवोधीनश्चित्कणोपि स्वोपाधिव्यापिशक्तिकः ।। अनेकोऽविद्ययोपात्तस्त्यक्ताविद्योपि कर्हिचित् । मायात्वचित्प्रधानं चाविद्या विद्येति सा द्विधा ॥" ईश्वरजीवजगतां स्वरूपशक्तेर्भक्तेश्च स्वरूपलक्षणप्रमाणादिकं वेदस्तुतिव्याख्यायां व्यक्तीभविष्यति ॥ ६ ॥ इत्यर्थ इति । श्रोतुमुद्यतस्य चेद्भक्तिरुत्पद्येत । श्रुतायां तस्यां चेद्भक्तिः स्यात्तर्हि किमु वक्तव्यमिति भावः । संदर्भः । अथ प्रयोजनं स्पष्टयितुं पूर्वोक्तस्य पूर्णपुरुषस्य च श्रीकृष्णरूपत्वं व्यञ्जयितुं ग्रंथफलनिर्देशद्वारा तत्र तदनुभावांतरं प्रतिपादयन्नाह-यस्यामिति । भक्तिः प्रेमा श्रवणरूपया साधनभक्त्या साध्यत्वात् उत्पद्यत आविर्भवति । तस्यानुषंगिकं गुणमाह—शोकेति । अत्रैषां संस्कारोपि नश्यतीति भावः । "प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावत्" इति ऋषभदेवोक्तेः । परमपुरुषे पूर्वोक्ते पूर्णपुरुषे किमाकारे इत्याकांक्षायामाह-कृष्ण इति । "कृष्णस्तु भगवान्स्वयम्" इत्यादिशास्त्रसहस्रसंभावितांतःकरणानां परंपरया तत्प्रसिद्धमध्यपातिनां चासंख्यलोकानां तन्नामश्रवणमात्रेण यः प्रथमप्रतीतिविषयः स्यात्तथा तन्नाम्नः प्रथमाक्षरमात्रं मंत्राय कल्पमानं यस्याभिमुख्याय स्यात्तदाकारामित्यर्थः । आहुश्च नाम कौमुदीकाराः । कृष्णशब्दस्य तमालश्यामलत्विषि श्रीयशोदास्तनंधये परब्रह्मणि रूढिरिति । विश्वनाथस्तु संहितायाः श्रेयःसाधनत्वमाह। यस्यां श्रूयमाणायां किं पुनः श्रुतायां किंतरां कीर्त्यमानायां किंतमां कीर्त्तितायां भक्तिः प्रेमा ईश्वरः सद्यो हृद्यवरुध्यते। अत्र कृतिभिरित्युक्तेरीश्वरावरोधस्य फलस्य प्रेम्ण एव लिंगात् भक्तानामननुसंहितं फलं संसारनिवृत्तिः । सा च भक्तानामेव भवतीत्याह—शोकेत्यादि ॥ ७ ॥ अथ तस्यैव प्रयोजनस्य प्रेम्णो ब्रह्मानंदानुभवादपि परमत्वमनुभूतवानेव यतस्तादृशं शुकमपि प्रेमानंदस्य वैशिष्ट्योपलंभनाय तामध्यापयामास । लोके हि स्वादितापूर्वमिष्टवस्तुकः पित्रादिरवश्यमेव पुत्रादिकं तत्तदास्वादयितुं प्रयतते इत्याह-स संहितामिति । कृत्वानुक्रम्य चेति प्रथमतः स्वयं संक्षिप्तभक्तिकं कृत्वा पश्चान्नारदोपदेशादनुक्रमेण श्रीभगवदुक्त्यैकप्रधानतयाऽनुक्रम्य संशोध्येत्यर्थः । स च नारदोपदेशः श्रीकृष्णांतर्द्धानानंतरं परीक्षित्कर्तृककलिनिग्रहात्पूर्वं ज्ञेयस्तदैव कलिना स्वाधिकारारंभे स्वप्राबल्यप्रकटनाद्धार्मिकाणामपि शास्त्रदर्शिनामप्यधर्मे प्रवृत्तेः ।यत एव व्यासस्य चित्ताप्रसादः । तदुक्तं "जुगुप्सितं धर्मकृतेनुशासतः" इत्यत्र "न मन्यते तस्य निवारणं जनः" इति कलियुगात्पूर्वमेव चित्ताप्रसादे न मंस्यत इति प्रयुज्येत अतस्तदैव पूर्वनिर्मितस्यैव श्रीभागवतस्यानुक्रमणम् । तदुक्तं "कृष्णे स्वधामोपगते" इत्यत्र "पुराणार्कोधुनोदितः" इति । अत एवेदं श्रीमद्भागवतं भागवतानंतरं यदत्र श्रूयते यच्चान्यत्राष्टादशपुराणानंतरं भागवतमिति तद्द्वयमपि संगतं स्यात् । निवृत्तिनिरतं ब्रह्मानुभवितमपि ॥८॥ स शुकः उपेक्षत औदासीन्येन वर्त्तत इत्युपेक्षकः । ग्रंथेभ्य इत्युक्ते ॥९॥ श्रीभागवतस्यापि हेयत्वं प्रसक्तमित्यत आह-यद्वेति । इत्यर्थ इति । "भिद्यते हृदयग्रं

हरेर्गुणाक्षिप्तमतिर्भगवान्बादरायणिः ॥ अध्यगान्महदाख्यानं नित्यं विष्णुजनप्रियः ॥ ११ ॥
परीक्षितोऽथ राजर्षेर्जन्मकर्मविलायनम् ॥ संस्थां च पांडुपुत्राणां वक्ष्ये कृष्णकथोदयम् ॥ १२ ॥

इति । यद्वा ग्रंथिरेव ग्रंथः । निवृत्तहृदयग्रंथय इत्यर्थः । ननु मुक्तानां किं भक्त्येत्यादिसर्वाक्षेपपरिहारार्थमाह—इत्थंभूतगुण इति ॥ १० ॥ ननु भक्तिं कुर्वंतु नाम एतच्छास्त्राभ्यासे शुकस्य किं कारणमिति । अत आह—हरेरिति । अध्यगात् अधीतवान् । विष्णुजनाः प्रियाः यस्येत्यर्थः । व्याख्यानादिप्रसंगेन तत्संगतिकाम इति भावः । एतेन "तस्य पुत्रो महायोगी" इत्यादिना शुकस्य व्याख्याने प्रवृत्तिः कथमिति यत्पृष्टं तस्योत्तरमुक्तम् ॥ ११ ॥ यदन्यत्पृष्टं परीक्षितः प्रायोपवेशेन श्रवणं कथमिति "तस्य जन्म महाश्चर्यम्" इत्यादिना तस्योत्तरं वक्तुमाह—परीक्षित इति । विलायनं मुक्तिं मृत्युं वा । संस्थां महाप्रस्थानम् । श्रीकृष्णकथानाम् उदयो यथा भवति तथा ॥ १२ ॥

थिः" इत्युक्तेरयं भावः । अत्राक्षिपति-नन्विति । यद्वा निर्ग्रंथा विधिनिषेधग्रंथातीता इति । तदुक्तं "चरेदविधिगोचरः" इति । ननु मुक्तानां किं भक्त्या, निर्ग्रंथानां किं भक्तिग्रंथेन श्रीभागवतेन, निरभिमानानां किं पुनः सेव्यसेवकलक्षणाभिमानेन, विधिनिषेधातीतानां किं पुनः श्रीभागवतोक्तेन भक्तेर्विधिनेत्यादि सर्वाक्षेपपरिहारार्थमाह—इत्थंभूता आत्मारामाणामप्याकर्षणशीला गुणा यस्य सः । तेन मूलत एव भक्तिप्राधान्याभ्यासेन वा मद्गुणानुभव एषामस्त्विति सनकादिषु भगवत्कृपयैव श्रीकृष्णगुणानुभवो मत्सुतस्यास्त्विति श्रीशुके व्यासस्येव भगवतो भक्तानां वा कृपया यैरात्मारामैस्तद्गुणानुभवयोग्यता लब्धा त एवाहैतुकीं भक्तिं कुर्वंति। अन्ये त्वात्मारामाः सायुज्यार्थां भक्तिं कुर्वंतीत्यहैतुकीपदव्यावृत्तिरनुसंधेया । तदुक्तं "ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ॥ ततो मां तत्त्वतो ज्ञात्वा विशते तदनंतरम् ॥" इति ॥ १० ॥ अत्राशंकते—नन्विति । इति भाव इति । "संसारेस्मिन्क्षणार्द्धोपि सत्संगः शेवधिर्नृणाम्" इत्येकादशोक्तेः । सत्समाजो हि विना शास्त्रश्रवणाद्यर्थं न भवतीत्याशयः । श्रीभगवदाज्ञया वै तच्छास्त्रमधीतवांस्तदुक्तंनारदपुराणे सनत्कुमारेण नारदाय सुमेरुपर्वते "आकल्पांतं तपःसंस्थौ नरनारायणावृषी । तयोर्निदेशतो व्यासो जनकस्तत्र सुव्रत । कर्त्ता भागवतं शास्त्रं तदधीष्व भुवं व्रज । स तप्यति तपस्तत्र पर्वते गंधमादने । त्वद्वियोगेन खिन्नात्मा तं प्रसादय मत्प्रियम् ॥ एवमुक्तः शुको विप्र नमस्कृत्य चतुर्भुजम् । यथागतो निवृत्तोसौ पितुरंतिकमागमत् । पुत्रं प्राप्य प्रहृष्टात्मा नारायणनियोगतः । चकार संहितां दिव्यां नानाख्यानसमन्विताम् ॥ वेदतुल्यां भागवतीं हरिभक्तिविवर्द्धिनीम् । निवृत्तिनिरतं पुत्रं शुकमध्यापयच्च ताम् ॥ त्वन्मुखेन समावाप्तामष्टादशसहस्रिकाम् ॥" इति । अत्र विश्वनाथः । नारदकृपया व्यासस्येव व्यासकृपया शुकस्यापि तद्गुणमाधुर्यानुभवो विशेषत एवाभूदित्याह-हरेरिति । हरेर्गुणेनाक्षिप्ता आक्षेपविषयीकृता मतिर्ब्रह्मानंदो येन सः धिग्मे मतिं यत ईदृशे भगवद्गुणमाधुर्ये सत्यपि एतावान्कालो ब्रह्मानुभवेन मया वृथैव यापित इति। ततश्च तत्कथासौहार्देन विष्णुजना एव। न तु केवला आत्मारामाः प्रिया यस्य सः षष्ठीसमासो वा । अत्र व्यास एव भगवद्गुणाभिव्यंजकाञ्छ्लोकान्भागवतीयान्कांश्चन श्लोकाँल्लोकद्वारा विविक्तारण्ये सदा समाधिस्थमपि शुकं श्रावयामास । ततस्तच्छ्रुत्वैव भग्नसमाधिस्तन्माधुर्याकृष्टचित्तस्तादृशं समाधिमप्याक्षिप्य सर्वज्ञतया ताञ्छ्लोकाञ्छ्रीभागवतीयाञ्ज्ञात्वा तत्प्रकाशकं च स्वपितरं ज्ञात्वा तदंतिकमागत्य श्रीभागवतमध्यैष्टेति ब्रह्मवैवर्त्तानुसारेण कथा ज्ञेया । तदेवं व्यासशुकौ पितापुत्रौ ब्रह्मानुभविचूडामणी अपि विजित्य भक्तिरेकच्छत्रामिव सर्वजगतीं चक्रे। तदपि ये तां तथा न मन्यंते कुपथगामिनश्चौरास्ते यमेनैव दंड्या इति । संदर्भस्तु । तमेवार्थं श्रीशुकस्याप्यनुभवेन संवादयति हरेरिति। श्रीव्यासादेव श्रुतेन यत्किंचिद्गुणेनाक्षिप्ता मतिर्ब्रह्मानंदानुभवो यस्य स पश्चादध्यगात् । महद्विस्तीर्णमपि । ततश्च तत्सत्कथासौहार्देन नित्यं विष्णुजनाः प्रिया यस्य तथाभूता वा तेषां प्रियो वा स्वयमभवमित्यर्थः । अयं भावः । ब्रह्मवैवर्त्तानुसारेण पूर्वं तावदयं गर्भमारभ्य श्रीकृष्णस्य स्वैरितया मायानिवारकत्वं ज्ञातवान् । ततः स्वनियोजनया श्रीव्यासदेवेनानीतस्य तस्य दर्शनात्तन्निवारणे सति कृतार्थंमन्यतया स्वयमेकान्तमेव गतवांस्तत्र श्रीव्यासदेवस्तं वशीकर्त्तुं तदनन्यसाधनं श्रीभागवतमेव ज्ञात्वा तद्गुणातिशयप्रकाशमयांस्तदीयपद्यविशेषान्कथंचिच्छ्रावयित्वा तेनाक्षिप्तमतिं कृत्वा तदेव पूर्णमध्यापयामासेति श्रीभागवतमहिमातिशयः प्रोक्तः ॥ ११ ॥ विलापनं विपूर्वाल्लिङेर्ण्यंताल्ल्युट् । श्रीभागवतकथावाचनमित्यर्थः । कृष्णकथोदयमित्यनेन श्रीभागवतस्य तत्रैव तात्पर्यात् । किञ्चानेन मुख्यतया तेन पृष्टानां कृष्णकथानामारंभोपि सूचितः ॥ १२ ॥

यदा मृधे कौरवसृंजयानां वीरेष्वथो वीरगतिं गतेषु ॥ वृकोदराविद्धगदाभिमर्शभग्नोरुदंडे धृतराष्ट्रपुत्रे ॥ १३ ॥ भर्तुः प्रियं द्रौणिरिति स्म पश्यन्कृष्णासुतानां स्वपतां शिरांसि ॥ उपाहरद्विप्रियमेव तस्य तज्जुगुप्सितं कर्म विगर्हयंति ॥ १४ ॥ माता शिशूनां निधनं सुतानां निशम्य घोरं परितप्यमाना ॥ तदाऽरुदद्बाष्पकलाकुलाक्षी तां सांत्वयन्नाह किरीटमाली ॥ १५ ॥ तदा शुचस्ते प्रमृजामि भद्रे यद्ब्रह्मबंधोः शिर आततायिनः ॥ गांडीवमुक्तैर्विशिखैरुपाहरे त्वाक्रम्य यत्स्नास्यसि दग्धपुत्रा ॥ १६ ॥ इति प्रियां वल्गुविचित्रजल्पैः स सांत्वयित्वाऽच्युत मित्रसूतः ॥ अन्वाद्रवद्दंशित उग्रधन्वा कपिध्वजो गुरुपुत्रं रथेन ॥ १७ ॥

तत्र परीक्षितो जन्म निरूपयिष्यन् आदौ तावद्गर्भस्थ एव अश्वत्थाम्नो ब्रह्मास्त्रात् कृष्णेन रक्षित इति वक्तुं कथां प्रस्तौति—यदेत्यादिना । यदा द्रौणिः अश्वत्थामा कृष्णा सुतानां द्रौपदीपुत्राणां शिरांसि उपाहरत्—तदा तन्माता अरुदत् । तां च सांत्वयन्किरीटमाली अर्जुन आहेति तृतीयेनान्वयः । किमिति बालानां शिरांस्यानीतवानित्य पेक्षायामाह । मृधे युद्धे । यद्यपि पांडवा अपि कौरवा एव । तथापि सृंजयवंशजः धृष्टद्युम्नः पांडवानां सेनापतिरिति सृंजयानामित्युक्तम् । वीरगतिं स्वर्गम् । अथो अनंतरम् । वृकोदरेण आविद्धायाः क्षिप्तायाः गदायाः । अभिमर्शेन अभिघातेन भग्नौ ऊरुदंडौ यस्य तथाभूते धृतराष्ट्रपुत्रे दुर्योधने सति ॥ १३ ॥ भर्तुः दुर्योधनस्य । स्मेति वितर्के । इति एवं प्रियं स्यादिति पश्यन् । तस्य तद्विप्रियमेवेति वाक्यांतरम् । विप्रियत्वे हेतुः । जुगुप्सितमिति ॥ १४ ॥ घोरं दुःसहं यथा भवति । बाष्पस्य कलाभिः बिंदुभिः अकुले अक्षिणी यस्याः । किरीटस्यैकत्वेऽपि तदग्राणां बहुत्वात् किरीटमालीत्युक्तम् ॥ १५ ॥ शुचः शोकाश्रूणि प्रमृजामि परिमार्जयामि यद् यदा ब्रह्मबंधोः ब्राह्मणा धमस्य । आततायिन इति । "अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते ह्याततायिनः" इति स्मरणादत्र आततायी शस्त्रपाणिः तेन च पुत्रहंतृत्वं लक्ष्यते गांडीवात् धनुषः मुक्तैः विशिखैः बाणैः उपाहरे त्वत्समीपम् आनयामि यत् शिरः आक्रम्य आसनं विधाय दग्धपुत्रा सती ॥ १६ ॥ वल्गवः रम्याः विचित्राः जल्पाः भाषणानि तैः स अर्जुनः । अच्युत एव मित्रं सूतश्च यस्य । दंशितो बद्धकवचः । उग्रं धनुश्चापं यस्य । कपिः हनुमान् ध्वजे यस्य सः । गुरोः पुत्रं रथेन अन्वाद्रवद्

वीरगतिम्मुक्तिं "यमिह निरीक्ष्य हता गताः सरूपम्" इति भीष्मोक्तेः ॥१३॥ तस्य दुर्योधनं तद्बालहननम् । विप्रियमप्रियमेव । वस्तुतः प्रथमं शत्रुवधश्रवणेन हर्षोदयात्पश्चात्स्पर्शेन भीमादीनां स्वशत्रूणामवधश्रवणाद्बालव धाच्च कुरुवंशलोपश्रवणाच्च विषादोत्पत्तेर्हर्षविषादाभ्यां च तन्मृत्युप्राप्तेरिति भावः ॥ १४ ॥ किरीटे माला पुष्पस्रगस्येति वा किरीटमाली ॥ १५ ॥ "शुक्छोकेश्रुणि शुद्धौ च" इति निरुक्तिः । भद्र इति । मां तद्वध प्रवृत्तमपि त्वं भद्रस्वभावत्वाद्वारयिष्यसीति भावः ॥ १६ ॥ "वल्गु । स्याच्छगले पुंसि सुंदरे त्वाभिधेयवत्" इति मेदिनी । "दंशितमपि जातदंशितेपि स्यात्कवचान्विते" इति च । उग्रो महादेवस्तत्प्रसादलब्धं धनुरस्येत्युग्रधन्वा । यद्वा उं रुद्रं ग्रसतीत्युग्रं तद्धनुरस्येति । एतच्च भारते किरातीयोपाख्याने वनपर्वणि सर्वशरक्षयेऽर्जुनेन किरातरूपरुद्रकंठे धनुः क्षिप्त्वा पुनस्स आकृष्ट इति । यद्वोग्रं भयंकरं धनुरस्येति

तमापतंतं स ।विलक्ष्य दूरात्कुमारहोद्विग्नमना रथेन ॥ पराद्रवत्प्राणपरीप्सुरुर्व्यां यावद्गमं रुद्रभयाद्यथा कः ॥ १८ ॥ यदाऽशरणमात्मानमैक्षत श्रांतवाजिनम् ॥ अस्त्रं ब्रह्मशिरो मेन आत्मत्राणं द्विजात्मजः ॥ १९ ॥ अथोपस्पृश्य सलिलं संदधे तत्समाहितः ॥ अजानन्नुपसंहारं प्राणकृच्छ्र उपस्थिते ॥ २० ॥ ततः प्रादुष्कृतं तेजः प्रचंडं सर्वतोदिशम् ॥ प्राणापदमभिप्रेक्ष्य विष्णुं जिष्णुरुवाच ह ॥ २१ ॥

अन्वधावत् ॥ १७ ॥ आपतंतम् आधावंतं सः द्रौणिः । कुमारहा बालघाती । उद्विग्नमनाः कंपितहृदयः । प्राणपरीप्सुः प्राणान् लब्धुमिच्छुः न तु कीर्तिम् । यावद्गमं यावद् गंतुं शक्यं तावद् उर्व्यां पराद्रवत्पलायत । को ब्रह्मा मृगो भूत्वा सुतां यब्धुमुद्यतः सन् रुद्रस्य भयाद्यथा पलायते स्म । अर्क इति पाठे वामनपुराणकथा सूचिता । तथा हि । विद्युन्माली नाम कश्चिद्राक्षसो माहेश्वरः तस्मै रुद्रेण सौवर्णं विमानं दत्तम् । ततोऽसौ अर्कस्य पृष्ठतो भ्राम्यन् विमानदीप्त्या रात्रिं विलोपितवान् । ततोऽर्केण निजतेजोभिः द्रावयित्वा तद्विमानं पातितम् । तच्छ्रुत्वा कुपिते रुद्रे भयादर्कः पराद्रवत् । ततो रुद्रस्य क्रूरदृष्ट्या दंदह्यमानः पतन् वाराणस्यां पतितो लोलार्कनाम्ना विख्यात इति ॥ १८ ॥ अशरणं रक्षकरहितम् । ननु पलायनमेव रक्षकमस्ति न तस्यापि कुंठितत्वादित्याह–श्रांताः वाजिनो यस्य तम् । ब्रह्मशिरोऽस्त्रं ब्रह्मास्त्रम् । द्विजात्मज इति अदीर्घदर्शितामाह ॥ १९ ॥ तद् ब्रह्मास्त्रम् । समाहितः कृतध्यानः । उपसंहारमजानतोऽपि संधाने हेतुः–प्राणकृच्छ्र इति ॥ २० ॥ ततः अस्त्रात् सर्वतोदिशं प्रादुष्कृतं

स तथा ॥ १७ ॥ तमर्जुनम् । केचित्तु रुद्रभयाद्यथार्किरिति समागतं शनैश्चरं दृष्ट्वा कुपितेन रुद्रेण तृतीयनेत्राद्वह्निरुद्भावितः । तं दृष्ट्वा यथा शनैश्चरः पलायतेति पुराणांतरे ॥ १८ ॥ ब्रह्मेति पदं शिरस्यग्रभागे यस्यास्त्रस्य तद्ब्रह्मशिरो ब्रह्मास्त्रमित्यर्थः । यदपि स्वामिचरणैर्व्याख्यातमित्थं तथापि ब्रह्मशिरोऽस्त्रं ब्रह्मास्त्रात्पृथगप्यस्तीत्युक्तं स्कान्दे । अथ प्रसंगादन्यान्यप्यस्त्राणि कथ्यंते "अथास्त्राणि प्रवक्ष्यामि सावधानोऽवधारय । ब्रह्मास्त्रं प्रथमं प्रोक्तं द्वितीयं ब्रह्मदंडकम् ॥ १ ॥ ब्रह्मशिरस्तृतीयं च तुर्यं पाशुपतं मतम् । वायव्यं पञ्चमं ज्ञेयमाग्नेयं षष्ठकं स्मृतम् ॥ २ ॥ नारसिंहं सप्तमं च तेषां भेदा ह्यनंतकाः । ससंहारं सविक्षेपं शृणु द्रोण यथातथम् ॥ ३ ॥ वेदमात्रा सर्वशस्त्रं गृह्यते क्षिप्यतेऽथ वा । तत्प्रयोगं शृणु प्राज्ञ ब्रह्मास्त्रं प्रथमं शृणु ॥ ४ ॥ दादिदंताञ्च सावित्रीं विपरीतां जपेत्सुधीः । जप्त्वा पूर्वं निखर्वं चाभिमंत्र्य विधिवच्छरम् ॥ ॥ ५ ॥ क्षिपेच्छत्रुषु सहसा नश्यंति सर्वजातयः । बाला वृद्धाश्च गर्भस्था ये च योद्धुं समागताः ॥ ६ ॥ सर्वे ते नाशमायांति मम चैव प्रसादतः । यथाक्रमं दादिदंतं जपेत्संहारसिद्धये ॥ ७ ॥ ब्रह्मदण्डं प्रवक्ष्यामि प्रणवं पूर्वमुच्चरेत् । ततः प्रचोदयाज्ज्ञेयं ततो नो यो धियः क्रमात् ॥ ८ ॥ ततो धीमहि देवस्य ततो भर्गोवरेणियम् । सवितुस्तच्च योक्तव्यममुकशत्रूंस्तथैव च ॥ ९ ॥ ततो हनहनहुंफट् जप्त्वा पूर्वं द्विलक्षकम् । अभिमंत्र्य शरं तद्वत्प्रक्षिपेच्छत्रुषु द्रुतम् ॥ १० ॥ नश्यंति शात्रवः सर्वे यमतुल्या अपि ध्रुवम् । एतदेव विपर्यस्तं जपेत्संहारसिद्धये ॥ ११ ॥ ब्रह्मशिरः प्रवक्ष्यामि प्रणवं पूर्वमुच्चरेत् ॥ धियो यो नः प्रचोदयाद्भर्गो देवस्य धीमहि ॥ १२ ॥ तत्सवितुर्वरेणियं शत्रून्मे हनहनेति च । हुं फट् चैव प्रयोक्तव्यं क्षिपेद्ब्रह्मशिरस्ततः ॥ १३ ॥ पुरश्चर्यां पुरः कृत्वा त्रिलक्षं नियतः शुचिः । नश्यंति सर्वे रिपवः सर्वे देवासुरा अपि ॥ १४ ॥ इदमेव विपर्यस्तं प्रयोक्तव्यं विकर्षणे । अतः परं प्रवक्ष्यामि शस्त्रं पाशुपतं मम ॥१५॥ यस्य विज्ञानमात्रेण नश्यंति सर्वशात्रवः । दादिदंतां च सावित्रीं प्रोच्य प्रणवमेव च ॥ १६ ॥ श्लींपशु हुंफट् अमुकशत्रून्हनहनहुंफट् । जप्त्वा पूर्वं द्विलक्षं च ततः पाशुपतं क्षिपेत् ॥ १७ ॥ पुनस्तदेव व्यस्तं स्यात्संहारे तां न योजयेत् । एतत्पाशुपतं शस्त्रं सर्वशत्रुनिवारणम् ॥ १८ ॥ वच्मि वायव्यमस्त्रं ते येन नश्यंति शात्रवः । ॐ वायव्ययावायव्ययाण्यौर्वाययावा तथा ॥१९॥ अमुकशत्रुन्हनहनहुंफट्चैव प्रकीर्त्तयेत् । पूर्वमेव तथा जप्त्वा नियुतद्वितयं तथा॥२०॥पुनः संहाररूपेण संहारं च प्रकल्पयेत् ॥ अस्त्रं वायव्यकं नाम देवानामपि

अर्जुन उवाच ॥ कृष्णकृष्ण महाभाग भक्तानामभयंकर ॥ त्वमेको दह्यमानानामपवर्गोऽसि संसृतेः ॥ २२ ॥
त्वमाद्यः पुरुषः साक्षादीश्वरः प्रकृतेः परः ॥ मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि ॥ २३ ॥

प्रकटीभूतं तेजः अभिप्रेक्ष्य समंताद्विलोक्य ततः प्राणापदं च अभिप्रेक्ष्य अर्जुनः कृष्णमुवाच ॥ २१ ॥ प्रस्तुतं विज्ञापयितुं प्रथमं स्तौति । कृष्णेति चतुर्भिः । संसृतेर्हेतोः दह्यमानानां तस्याः अपवर्ग अपवर्जयिता नाशक इत्यर्थः ॥ २२ ॥ यतः त्वमीश्वरः साक्षात् । कुतः यतः प्रकृतेः परः पुरुषः । तत्कुतः यतः आद्यः कारणम् ।

वारणम् ॥२१॥आग्नेयं संप्रवक्ष्यामि यतः परभयं ददेत् । ॐ अग्निस्त्यता हृदुभूं च शिवं वनाश्वाविणि च ह्गादुतिदशरूपनः सदवेति ततः क्रमात् ॥ हादतितोयतिरामतथामसोहिवावानसुसेदवेदया च वदेदमुकादींस्ततो वदेत् ॥२२॥ पूर्वोक्तां च पुरश्चर्यां कृत्वा शस्त्रेभियोजयेत् । इमं मंत्रं पुनर्व्यस्तं संहारे चैव योजयेत् ॥२३॥ ॐ वज्रनखवज्रदंष्ट्रायुधाय महासिंहाय हुंफट् । पूर्वं जप्त्वा च लक्षं हि नारासिंहं च योजयेत् ॥२४॥ सिंहरूपा स्तथा बाणाः पतंति शात्रवे वने । पूर्वोक्तेन प्रकारेण संहारं च प्रकल्पयेत् ॥२५॥ संक्षेपतो महाभाग तवोक्तानि महामते । भेदास्त्वेषां धनुर्वेदे ह्यनंताः परिकीर्तिताः ॥२६॥" इति केदारखंडे द्रोणं प्रति श्रीशिवेनोक्तम् ॥ ॥ १९ ॥ अथेक्षणानंतरम् । उपस्पृश्याचम्य ॥ २० ॥ ततस्तेजसः । जिष्णुरर्जुनः । "अर्जुनः फाल्गुनो जिष्णुः सव्यसाची धनंजयः । बीभत्सुर्विजयः कृष्णः किरीटी श्वेतवाहनः ॥ कपिध्वजश्च गांडीवी शिवाशिष्यश्च कर्णहा । " इत्यभिधानात् । सर्वत इति द्वितीयार्थे तसिः । सर्वा दिशमित्यर्थः । "अभिसर्वतसोः" इत्याद्युक्तेर्द्वितीया । एकत्वं जात्यभिप्रायम् । सर्वत्र दिक्ष्वित्यर्थः ॥ २१ ॥ अत्र संभ्रमे वीप्सा कृष्ण कृष्णेति । यद्वा प्रवृत्तिनिमित्तभेदाभिप्रायेण द्विरुक्तिः । एकत्र सदानंदत्वमपरत्र प्रपन्नापन्नाशकत्वमिति विवेकः । न हि सदानंदस्वरूपस्य निजक्लेशकर्षकस्य च तव पार्श्वे ममैतद्दुःखमुचितमिति भावः । ननु त्वमपि कृष्णोसि कथं मामेव कृष्णकृष्णेति ब्रूषे इति चेत्तत्राह–हे महाभागेति । मह्यंते पूज्यंते सर्वैरिति महाः । इंद्रादयो देवास्तैरासमंताद्भज्यते सेव्यते इति महाभागस्तत्संबुद्धौ तथा । तथा च नाममात्रेणैवाहं कृष्णो न तु महा भागोस्मीति भावः । त्वमपि पांडुराजपुत्रत्वान्महाभाग एवेति चेत्तत्राह–हे भक्तानामभयंकरेति । मया तु स्वभयमपि नापाकर्तुं शक्यते किमुतान्यस्यातस्त्वमेव संबुद्धिचतुष्टयो नाहमिति भावः । इत्यर्थ इति । "वृजी वर्जने "इत्यतो घञि रूपमेतदिति यतस्त्वमपवर्गरूपोसि तेनास्माकं संसृतेर्मोक्षमपि दास्यसि किमुतास्मादग्नेस्त्राणमात्रमिति भावः ॥ २२ ॥ तत्प्रकृतिपरत्वम् । अत्र संदर्भः । मायाहेतुकायाः संसृतेर्नाशकत्वेन मायातो विलक्षणं शक्तिं दर्शयति । त्वं साक्षात्पुरुषो भगवान् तथा य ईश्वरो अंतर्याम्याख्यः पुरुषः सोपि त्वमेव । तदेवमुभयस्मिन्नपि प्रकारे प्रकृतेः परस्तदसंगी । ननु कथं केवलानुभवानंदस्यापि तदनुभवित्वं यतो भगवत्त्वमपि लक्ष्यते । कथं वेश्वर त्वात्प्रकृत्यधिष्ठातृत्वेपि तदसंगित्वं तत्राह–मायां व्युदस्येति । अव्यभिचारिण्या स्वरूपशक्त्या तामाभासशक्तिं दूरे विधाय तयैव स्वरूपशक्त्या कैवल्ये "परावराणां परम आस्ते कैवल्यसंज्ञितः । केवलानुभवानन्दसंदोहो नि रुपाधिकः" इत्येकादशोक्तरीत्या कैवल्याख्ये केवलानुभवानन्दे आत्मनि स्वरूपे स्थितः अनुभूतस्वरूपसुख इत्यर्थः । तदुक्तं षष्ठे देवैरपि "स्वयमुपलब्धनिजसुखानुभवो भवान्" इति । संदोहशब्देन चैकादशे वैचित्री दर्शिता । सा च शक्तिवैचित्र्यादेव भवतीति । अत एव सत्येव स्वरूपशक्तिः प्रकृतिर्नामात्र मायायास्त्रैगुण्यम् । एवमेव शक्तित्रयविवृत्तिः श्रीस्वामिभिरेव दर्शिता । "परं प्रधानं पुरुषम्" इत्यादिदेवहूति वाक्ये तत्र पुरुषस्यापि मायांतःपातित्वं तदधिष्ठातृतयोपचर्यते । एवं वस्तुतः तस्य तु तस्याः परत्वं यथा श्रीकपिलवाक्ये "अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः । प्रत्यग्धामा स्वयं ज्योतिर्विश्वं येन समन्वितम् ॥ इति । त्रिशक्तिनिरूपणे विशेषजिज्ञासा चेद्भगवत्संदर्भो दृश्यः । अथवा श्रीवैकुंठे मायां निषेधन्नपि साक्षात्स्वरूपशक्तिमेवाह–त्वमिति । कैवल्ये मोक्षाख्ये श्रीवैकुंठलक्षणे आत्मनि स्वांश एव स्थितः । किं कृत्वा तत्रातिविराजमानया चिच्छक्त्या मायां दूरस्थितामपि तिरस्कृत्यैव । मतं चैतन्मायादिकं निषेधता श्रीशुकदेवेन "प्रवर्त्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रं न च कालविक्रमः । न यत्र माया किमुतापरे हरेरनुव्रता

स एव जीवलोकस्य मायामोहितचेतसः ॥ विधत्से स्वेन वीर्येण श्रेयो धर्मादिलक्षणम् ॥२४॥ तथाऽयं चावतारस्ते भुवो भारजिहीर्षया ॥ स्वानां चानन्यभावानामनुध्यानाय चासकृत् ॥२५॥ किमिदं स्वित्कुतो वेति देवदेव न वेद्म्यहम् ॥ सर्वतोमुखमायाति तेजः परमदारुणम् ॥२६॥ श्रीभगवानुवाच ॥ वेत्थेदं द्रोणपुत्रस्य ब्राह्ममस्त्रं प्रदर्शितम् ॥ नैवासौ वेद संहारं प्राणबाध उपस्थिते॥२७॥न ह्यस्यान्यतमं किंचिदस्त्रं प्रत्यवकर्शनम् ॥ जह्यस्त्रतेज उन्नद्धमस्त्रज्ञो ह्यस्त्रतेजसा॥२८॥सूत उवाच॥श्रुत्वा भगवता प्रोक्तं फाल्गुनः परवीरहा॥स्पृष्ट्वाऽपस्तं परिक्रम्य ब्राह्मं ब्राह्माय संदधे॥२९॥

कारणत्वेप्यविकारितामाह। मायां व्युदस्य अभिभूय कैवल्यरूपः आत्मन्येव स्थितः ॥ २३ ॥ त्रिवर्गदातापि त्वमेवेत्याह। स इति। यस्त्वं मायामभिभूय स्थितः स एव मायाभिभूतस्य जनस्य धर्मादिफलमुपासितः सन् विधत्से। वीर्येण प्रभावेण ॥ २४ ॥ तथा चानेनावतारेण तव साधुपक्षपातो लक्ष्यत इत्याह। तथेति। किं भूभारहरणं मदिच्छामात्रेण न भवति तत्राह। स्वानां ज्ञातीनाम् अनुध्यानाय च तथा अनन्यभावानाम् एकांतभक्तानां च ॥ २५ ॥ एवं स्तुत्वा प्रस्तुतं विज्ञापयति—किमिति। किमात्मकमिदं कुतो वा आयातीति। स्विद्वितर्के ॥ २६ ॥ इदं द्रोणपुत्रस्य ब्राह्ममस्त्रं तेन च प्राणबाधे प्राप्ते प्रदर्शितं केवलं न तत्प्रयोगे कुशल इत्यर्थः। यतः असौ उपसंहारं न वेद। एतच्च त्वं तु वेत्थ जानासि ॥ २७ ॥ प्रत्यवकर्शनं कृशत्वकरं निवर्तकमित्यर्थः। अतः तदस्त्रतेजः उन्नद्धमुत्कटम् ब्रह्मास्त्रतेजसैव जहि घातय। त्वत्प्रयुक्तं चास्त्रं तदुपसंहृत्य स्वयमुपशाम्येत—यतः त्वमस्त्रज्ञोऽसि ॥ २८ ॥ परे शत्रवः त एव वीराः तान् हंतीति तथाविधः फाल्गुनः अर्जुनः अपः स्पृष्ट्वा आचम्य तं

यत्र सुरासुरार्चिताः'' इति। ''मोक्षं परं पदं लिंगममृतं विष्णुमंदिरम्'' इति पाद्मोत्तरखंडे वैकुण्ठपर्यायाः। विश्वनाथः। ननु त्वन्मातुलेयोहं त्वत्सम एव। मैवं वादीरित्याह-त्वमिति। ननु त्वं प्रकृतेः पर इति किं प्रकृतिशब्देनाविद्यां मायां वा ब्रूषे तत्राह। चिच्छक्त्या स्वरूपभूतया शक्त्या सुभगया पट्टमहिष्येव मायां विद्याविद्येति वृत्तिद्वयवतीं दुर्भगामिव स्वशक्तित्वात्प्राप्तां व्युदस्य दूरीकृत्य तया शक्त्या सहित एव त्वमात्मनि चिन्मये स्वरूपे स्थितः। ननु चिच्छक्त्येत्यस्याः कारणत्वेन मत्तो भिन्नतया स्थितत्वं कथं ममात्मनि स्थितत्वमित्यत आह-कैवल्य इति। केवलस्य भावः कैवल्यं तस्मिन्निति तया सहितत्वेपि तव कैवल्यमेव तस्याः स्वरूपशक्तित्वात्। तस्मिंश्च सति त्वमात्मनि स्थितो वस्तुत एवेति भावः। अतः स्वरूपभूता चिच्छक्तिः सा त्वत्तः सदाऽभिन्नैव त्वद्देहेंद्रियपारिकरादिरूपेण तिष्ठति ''परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'' इति श्रुतेः। माया तु छायेव त्वदस्वरूपत्वात् ज्ञानाज्ञानगुणमयजगद्रूपेण वर्त्तत इति त्वत्तो भेद एव तस्या मायायास्त्वच्छक्तित्वात्कचिदभेदोपीति भिन्नाभिन्नरूपा सा शक्तिरित्यर्थः। मायैव शक्तिरेका नान्येति मतं परास्तम्। पुरुषपदं तीर्थेन प्रकारांतरेण व्याख्यातम्। पापान्यौषददहदिति पुरुषः ''सर्वान्पाप्मन औषत्तस्मात्पुरुषः'' इति श्रुतेः। पुरु बहु सरतीति वा पुरुषः। ''स भगवान्कस्मिन्प्रतिष्ठित इति स्वे महिम्नि'' इति श्रुतिर्हि कैवल्ये स्थित इह प्रमाणम् ॥ २३ ॥ आदिनाऽर्थकामग्रहः ॥ २४ ॥ यथा भगवतस्तवान्येवतारः पुंसामनुध्यानादिना मोक्षहेतवस्तथायमप्यवतारः प्राकट्यं परमभक्ताया भुवो भारजिहीर्षया जातोऽप्यन्येषां स्वानां भक्तानामसकृदनुऽध्यानाय स्यादित्यतो मोक्षं साधयतस्तव भक्तैहिकदुःखनिवारकत्वं किं वर्णनीयमिति भावः ॥ २५ ॥ यत्तेजः परमदारुणं सर्वतोमुखं सर्वदिङ्मुखं तदिह किं स्वित्कुतो वेति पृष्टे भगवानुवाच। कंचिद्देवं पृच्छ किमिदमिति चेत्तत्राह--हे देवदेवेति। त्वं तु देवानामपि देवः। न हि त्वत्तः परः कश्चिद्देवोस्तीति भावः ॥ २६ ॥ द्रोणपुत्रस्याश्वत्थाम्नः। इत्यर्थ इति। प्राणसंकटे कार्याकार्यज्ञानं नश्यतीति भावः ॥ २७ ॥ इत्यर्थ इति। कृशो भूत्वा स्वयमेव नश्यतीति भावः। यतोऽस्यास्त्रस्यान्यदस्त्रं निवर्त्तकं नास्त्यतो हेतोः ॥ २८ ॥ फाल्गुनः फाल्गुनीनक्षत्रजातोऽर्जुनः

संहत्याऽन्योऽन्यमुभयोस्तेजसी शरसंवृते ॥ आवृत्य रोदसी खंच वबृधातेऽर्कवह्निवत् ॥ ३० ॥ दृष्ट्वाऽस्त्रतेजस्तु तयोस्त्रीँल्लोकान्प्रदहन्महत् ॥
दह्यमानाः प्रजाः सर्वाः सांवर्तकममंसत ॥३१॥ प्रजोपप्लवमालक्ष्य लोकव्यतिकरं च तम् ॥ मतं च वासुदेवस्य संजहाराऽर्जुनो द्वयम् ॥३२॥
तत आसाद्य तरसा दारुणं गौतमीसुतम् ॥ बबंधाऽमर्षताम्राक्षः पशुं रशनया यथा ॥ ३३ ॥ शिबिराय निनीषंतं दाम्ना बद्ध्वा रिपुं बलात् ॥
प्राहार्जुनं प्रकुपितो. भगवानंबुजेक्षणः ॥ ३४ ॥ मैनं पार्थाऽर्हसि त्रातुं ब्रह्मबंधुमिमं जहि ॥ योऽसावनागसः सुप्तानवधीन्निशि बालकान् ॥
॥ ३५ ॥ मत्तं प्रमत्तमुन्मत्तं सुप्तं बालं स्त्रियं जडम् ॥ प्रपन्नं विरथं भीतं न रिपुं हंति धर्मवित् ॥ ३६ ॥

श्रीकृष्णं परिक्रम्य प्रदक्षिणीकृत्य त्वाज्ञाय ब्रह्मास्त्रं निवर्तयितुम् ॥ २९ ॥ ततश्च उभयोर्ब्रह्मास्त्रयोः तेजसी शरैः संवृते संवेष्टिते परस्परं मिलित्वा ववृधाते अवर्धेताम् ।
किं कृत्वा रोदसी द्यावापृथिव्यौ खमंतरिक्षं च आवृत्य । यथा प्रलये संकर्षणमुखाग्निः उपरि स्थितोऽर्कश्च संहत्य वर्धेते तद्वत् ॥ ३० ॥ तयोः द्रौणिफाल्गुनयोः । तेन
दह्यमानाः सांवर्तकं प्रलयाग्निम् अमंसत मेनिरे ॥ ३१ ॥ लोकानां व्यतिकरं व्यत्ययं नाशमित्यर्थः । वासुदेवस्य मतं च आलक्ष्य ब्रह्मास्त्रद्वयमुपसंहृतवान् ॥ ३२ ॥
गौतमवंशजा गौतमी कृपी तस्याः सुतम् । अमर्षेण कोपेन ताम्रे अक्षिणी यस्य सः । निष्कृपत्वे दृष्टांतः—पशुं यथेति । तस्य बंधनं धर्म इत्यत्र दृष्टांतः—यथा याज्ञिकः
पशुमिति । रशनया रज्वा बध्नाति ॥ ३३ ॥ शोकरोषादियुक्तस्यापि अर्जुनस्य धर्मनिष्ठाख्यापनाय श्रीकृष्णवाक्यं—तदाह षड्भिः—शिबिराय राजनिवेशाय नेतुमिच्छं
तमर्जुनं प्रकुपित इवेति ॥ ३४ ॥ अनागसो निरपराधान् ॥ ३५ ॥ रिपोरपि सुप्तस्य बालस्य च वधो न धर्म इत्यन्यार्थैर्दर्शयति—मत्तमिति । मत्तं मद्यादिना ।

ततश्चार्जुनकृतब्रह्मास्त्रप्रयोगोत्तरञ्च ॥२९॥३०॥ दृष्टेति । प्रदहत् प्रदग्धुमारभमाणम् । दह्यमाना दग्धुमारभमाणाः । ''वर्त्तमानसामीप्ये वर्त्तमानवद्वा'' इति लट् ॥ ३१ ॥ इत्यर्थ इति । ''अथ व्यतिकरः पुंसि व्यस
नव्यतिषंगयोः । समूहनाशयोर्देशे योगराजकरे क्रुधि'' इति कोशाद्व्यतिकरेण नाशो ग्राह्य इति भावः । मतं चेति । प्रथमं भगवतास्त्रप्रतिघातनमात्रं समादिष्टं न तु संहरणम् । तच्च नूनं परास्त्रं न संहर्तुं शक्यमिति
स्वशस्त्रेणैक्यं विधाय संहरणाभिप्रायेण । तत्तु तदाज्ञामात्रेण कृत्वापि पश्चात्प्रत्युत ताभ्यां वृद्धाभ्यामुपद्रवे सति स्थगितायमानमर्जुनं प्रति संहारोनुमत इति भावः ॥ ३२ ॥ ततोऽस्त्रद्वयसंहारोत्तरम् । ''रज्ज्वां वै रशना क्षुद्र
घण्टिकाजिह्वयोरपि'' इति कोशात् ॥ ३३ ॥ ''स्कंधावारे तु शिबिरम्'' इत्यभिधानात्सेनानिवेशस्थानं स्कंधावारः । अरुणेक्षण इत्यनुक्त्वांबुजेक्षण इत्युक्ते बहिरेव प्रकुपित इत्यभिप्रायेण स्वामिचरणैः प्रकुपित इवेत्युक्तम् ॥
॥ ३४ ॥ पार्थेति । पृथाया मत्पितृभगिन्याः पुत्रत्वात्तव ममापि तव दुःखेन दुःखमत इमं मा रक्षेति भावः । यद्वा पृथाया अस्मद्वंशजायाः पुत्रेण त्वया ब्रह्महत्या कर्तुं नोचितेति गूढोभिप्रायः ॥ शयाना भुंजते यवना
इतिवत्सुप्तानीति । न हि शयानैर्निद्राग्रस्तैर्भोक्तुं शक्यते किं तु शयनोद्यता एव भुंजत इत्यर्थः । तथा सुप्तान् स्वप्तुमुद्यतान् सुप्तमस्ति कर्त्तव्यत्वेन येषामिति मत्वर्थीयाच्चायमर्थो लभ्यः । अन्यथा महाभारतश्रुततत्कर्तृकयुद्धश्रुति
विरोधस्स्यात् । बालकानिति । शिष्यपुत्रत्वेन बालकवत्पालनीयान्न वधार्हानित्यर्थः । न तु ते बालका महाभारते तेषामतिशौर्यत्वश्रवणात् । यद्वा बलमेव बालं तेन कायन्ति युद्धे गर्जंतीति बालकाः । यद्वा बलानां सेनानां
समूहो बालं तत्किरंति विक्षिपंति कृण्वंति हिंसंतीति वा बालकाः । ''कॄ विक्षेपे कॄ हिंसायां'' चेत्युभयोर्डप्रत्यये रूपम् । तेन महारथा इत्यर्थः । अत्र तीर्थेन ''अनागसं प्रसुप्तं च बालकं हन्ति यो नरः। स खंडशो विधातव्य
इत्येवं मनुरब्रवीत् '' इति श्लोकोपि प्रमाणितः ॥ ३६ ॥ मद्यादिना धत्तूरकादिग्रहः । अनवहितमसावधानम् । ग्रहः पिशाचादिवार्तो रोगः । आदिनेष्टवियोगादिग्रहः । बालं दिग्देशादि ज्ञानशून्यम् । जडं विवेकशून्यं वा

स्वप्राणान्यः परप्राणैः प्रपुष्णात्यघृणः खलः ॥ तद्वधस्तस्य हि श्रेयो यद्दोषाद्यात्यधः पुमान् ॥ ३७ ॥ प्रतिश्रुतं च भवता पांचाल्यै शृण्वतो मम ॥ आहरिष्ये शिरस्तस्य यस्ते मानिनि पुत्रहा ॥ ३८ ॥ तदसौ वध्यतां पाप आततायात्मबंधुहा ॥ भर्तुश्च विप्रियं वीर कृतवान्कुलपांसनः ॥ ३९ ॥ एवं परीक्षता धर्मं पार्थः कृष्णेन चोदितः ॥ नैच्छद्धंतुं गुरुसुतं यद्यप्यात्महनं महान् ॥ ४० ॥ अथोपेत्य स्वशिबिरं गोविंदप्रियसारथिः ॥ न्यवेदयत्तं प्रियायै शोचंत्या आत्मजान्हतान् ॥ ४१ ॥ तथाहृतं पशुवत्पाशबद्धमवाङ्मुखं कर्मजुगुप्सितेन ॥ निरीक्ष्य कृष्णाऽपकृतं गुरोः सुतं वामस्वभावा कृपया ननाम च ॥ ४२ ॥

प्रमत्तम् अनवहितम् । उन्मत्तं ग्रहवातादिना । जडम् अनुद्यमम् । प्रपन्नं शरणागतम् । विरथं भग्नरथम् ॥ ३६ ॥ तद्वधो दंडरूपः तस्यैव श्रेयः पुरुषार्थः । यद्यतः दंडप्रायश्चित्तरहितात् दोषात् स पुमानधो यातीति । तथा च स्मरंति—"राजभिर्धृतदंडास्तु कृत्वा पापानि मानवाः । विधूतकल्मषा यांति स्वर्गं सुकृतिनो यथा॥" इति ॥ ३७ ॥ ३८ ॥ ३९ ॥ यद्यपि चोदितः । तथापि हंतुं नैच्छत् । आत्महनं पुत्रहंतारमपि । यतः महान् ॥ ४० ॥ गोविंदः प्रियः सारथिः यस्य सः । आत्मजान् शोचंत्यै ॥ ४१ ॥ तथा परिभवेन आहृतमानीतम् । कर्मणः जुगुप्सितेन दोषेण अवाङ्मुखम् । अपकृतम् अपकारिणम् । कृपया निरीक्ष्य । वामः शोभनः ।

भीतं युद्धमार्गादपसृतम् ॥ ३६ ॥ खल इंद्रियारामः अघृणो निर्दयः । दंडस्य श्रेयस्त्वे प्रमाणमाह-तथा चेति । स्मरंति भृग्वादय इति शेषः । स्पष्टार्थो स्मृतिः ॥ ३७ ॥ प्रतिज्ञा च रक्षणीयेत्याह-प्रतिश्रुतं चेति । प्रतिश्रुतं प्रतिज्ञातम् । पांचाल्यै द्रौपद्यै । हे मानिनीति । यथा त्वं प्रसन्ना स्यास्तथा ते मानं करिष्यामीति भावः॥३८॥यद्यतोसौ पापस्तत्तस्माद्वध्यतामित्यन्वयः । आत्मबंधुहा पुत्रहा "आत्मबंधुः सुतस्तोको राजीवोंगज आत्मजः" इत्यभिधानात् । वीरेति । न हि वीरैर्ब्राह्मणो हन्यत इति गूढोभिप्रायः । यद्वा वीरेणैव वैरानिर्यातनं कर्त्तुं शक्यो नान्येनेति भावः । कुलपांसनः कुलनिंदाहेतुः ॥ ३९ ॥ धर्मं परीक्षमाणेन यद्यपि चोदितस्तदपि हंतुं नैच्छत् । आत्महनं पुत्रहन्तारमपि । "आत्मा वै पुत्रनामासि" इति श्रुतेः । यतो महान् कृष्णस्य स्वभावाभिज्ञः । तस्य चायं स्वभावः । स्वयं सर्वज्ञोपि धर्मादिनिष्ठाख्यापनाय तद्वतो भक्तान्परीक्षत इति । तत्र "मैनं पार्थार्हसि त्रातुम्" इत्यादिना वीररौद्ररसं प्रदर्श्य धर्मवन्तमर्जुनं यथा परीक्षते स्म तथा "भर्त्तुः शुश्रूषणं स्त्रीणां परो धर्मः" इत्यादिना "भवतीनां वियोगो मे न हि सर्वात्मना क्वचित्" इत्यादिना "अहं हि सर्वभूतानामादिरंतोन्तरं बहिः" इत्यादिना च कर्मज्ञानयोगौ प्रदर्श्य प्रेमवतीर्गोपीः "वरं च मत्कंचन मानवेंद्र वृणीष्व" इत्यादिना "वरं वृणीष्व भद्रं ते कामपूरोऽस्म्यहम्" इत्यादिना च भोगैश्वर्यादीन्प्रदर्श्य भक्तिमतः पृथुप्रह्लादादीन् "दीयमानं न गृह्णन्ति" इत्यादिनाऽन्यानपि भक्तान्परीक्षांचकारेवेति । तदीयसिद्धभक्ता अपि तथा परीक्षन्ते । तथा हि शुक एव षष्ठस्कंधे पापनिस्तारार्थं पृष्टः प्रायश्चित्तमात्रमुक्त्वा परीक्षितः सिद्धांन्ताभिज्ञतां नवमे श्रीकृष्णलीलां संक्षेपेणोक्त्वा लीलोत्सुकयं द्वादशे ब्रह्मज्ञानमुपक्षिप्य भक्तिनिष्ठां परीक्षां चक्रे इति न तत्रतत्र स्पष्टेर्थे तात्पर्यम् ॥ ४० ॥ अथ कृष्णवाक्यश्रवणोत्तरं तमश्वत्थामानं न्यवेदयत्प्रादर्शयत् ॥ ४१ ॥ कृष्णा द्रौपदी ॥ ४२ ॥

उवाच चाऽसहंत्यस्य बंधनानयनं सती ॥ मुच्यतां मुच्यतामेष ब्राह्मणो नितरां गुरुः ॥४३॥ सरहस्यो धनुर्वेदः सविसर्गोपसंयमः ॥ अस्त्रग्रामश्च भवता शिक्षितो यदनुग्रहात् ॥ ४४ ॥ स एष भगवान्द्रोणः प्रजारूपेण वर्तते ॥ तस्याऽऽत्मनोऽर्धं पत्न्याऽऽस्ते नान्वगाद्वीरसूः कृपी ॥४५॥ तद्धर्मज्ञ महाभाग भवद्भिर्गौरवं कुलम् ॥ वृजिनं नार्हति प्राप्तुं पूज्यं वंद्यमभीक्ष्णशः ॥ ४६ ॥ मारोदीदस्य जननी गौतमी पतिदेवता ॥ यथाऽहं मृतवत्साऽऽर्ता रोदिम्यश्रुमुखी मुहुः ॥४७॥ यैः कोपितं ब्रह्मकुलं राजन्यैरकृतात्मभिः ॥ तत्कुलं प्रदहत्याशु सानुबंधं शुचाऽर्पितम् ॥४८ ॥ सूत उवाच ॥धर्म्यं न्याय्यं सकरुणं निर्व्यलीकं समं महत् ॥ राजा धर्मसुतो राज्ञ्याः प्रत्यनंदद्वचो द्विजाः॥४९॥नकुलः सहदेवश्च युयुधानो धनंजयः भगवान्देवकीपुत्रो ये चान्ये याश्च योषितः॥५०॥तत्राहाऽमर्षितो भीमस्तस्य श्रेयान्वधः स्मृतः ॥ न भर्तुर्नात्मनश्चार्थे योऽहन्सुप्तान्शिशून्वृथा॥५१॥

स्वभावः यस्याः सा ॥ ४२ ॥ ननाम चोवाच चेति चकाराभ्यां संभ्रमः सूचितः । बंधनेनानयनमसहमाना ॥ ४३ ॥ सरहस्यः गोप्यमंत्रसहितः । विसर्गः अस्त्रप्रयोगः उपसंयमः उपसंहारः ताभ्यां सहितः अस्त्रसमूहश्च ॥ ४४ ॥ किं च तस्य द्रोणस्य आत्मा देहः तस्या अर्धं कृपी आस्ते । अर्धत्वे हेतुः—पत्नी । 'अर्धो वा एष आत्मनो यत्पत्नी' इति श्रुतेः 'जायापती अग्निमादधीयाताम्' इतिश्रुतेरुभयोरेकाकारत्वावगमाच्च । ननु भर्तरि मृते सा कथं जीवति तत्राह—नान्वगात् भर्तारं—यतः वीरसूः पुत्रवती ॥४५॥ तत् तस्माद्गौरवं गुरोः कुलं भवद्भिः कर्तृभिः वृजिनं दुःखं प्राप्तुं नार्हति, किं तु पूज्यं वंद्यं च ॥४६॥ मृतवत्सा मृतपुत्रा ॥४७॥ विपक्षे,दोषमाह—यैरिति । तेषां राजन्यानां कुलं कर्म कथं भूतं ! सानुबंधं सपरिवारम् । शुचा शोकेन अर्पितं व्याप्तं च ब्रह्मकुलं कर्तृ प्रदहति ॥ ४८ ॥ धर्म्यमित्यादयो वचसः षड्गुणाः पूर्वश्लोकषट्के द्रष्टव्याः । तत्र धर्म्यं धर्मादनपेतं मुच्यतांमुच्यतामिति । न्याय्यं न्यायादनपेतं—सरहस्य इत्यादि । सकरुणं तस्यात्मनोऽर्धमिति । निर्व्यलीकं तद्धर्मज्ञेति । समं मा रोदीदिति दुःखसाम्योक्तेः । महद्यैः कोपितमिति निष्ठुरोक्त्या हितोपदेशात् । एवं भूतं राज्ञ्याः वचो हे द्विजाः प्रत्यनंदनुमोदितवान् ॥ ४९ ॥ नकुलादयश्च प्रत्यनंदन् । युयुधानः सात्यकिः ॥ ५० ॥ तस्य तथाविधस्य द्रौणेः वध एव श्रेष्ठः । अन्यथास्य नरकपातप्रसंगात् । तदाह—न भर्तुरिति । अहन् जघान ॥ ५१ ॥

अस्याश्वत्थाम्नः। सती तद्बंधनासहत्वादियं भगवता परीक्षितादर्जुनादपि धार्मिकत्वे साधुत्ववती । एष यतः सर्वेषां वर्णाश्रमाणां गुरुरस्माकं तु नितरामतिशयेन गुरुः। अहो गुरोर्बन्धनमतीवानुचितं कृतवानस्यातो मुच्यतामिति संभ्रमे वीप्सा ॥ ४३ ॥ यदनुग्रहाद्यत्कृपातः ॥ ४४ ॥ प्रजारूपेण "आत्मा वै जायते पुत्रः" इति श्रुतेः । भगवान् तद्वत्पूज्यः । स्वसाध्वीत्वमुद्भावयति-किं चेति । श्रुतिः स्पष्टार्था । आदधीयातामाधानं कुर्वीयाताम् । एककारकत्वमत्राग्न्याधाने कर्तृत्वं तस्यावगमाद्दर्शनात् । अत्राक्षिपति-नन्विति। पुत्रहीना तु भर्त्तारं विना स्वयोगक्षेममपश्यंत्यनुगमनं कुर्यात्समर्थपुत्रायास्तन्नोचितमित्याह—वीरसूरिति । ब्राह्मण्या अनुगमनं वैकल्पिकमिति भरतोपाख्याने पञ्चमस्कंधे व्याख्यास्यामः ॥४५॥ यतोऽयं गुरुपुत्रस्ततो हेतोः । हे धर्मज्ञेति। त्वं तु धर्मं गुरुसेवातदपराधसहनादिलक्षणं जानास्येवेति भावः । पुनरैहिकामुष्मिकभयं द्योतयंत्याह—हे महाभागेति । एतादृशकर्मणा महाभागत्वं न स्थास्यतीति भावः । "वृजिनं कल्मषे दुःखे केशे ना कुटिले त्रिषु" इत्यभिधानात् । अभीक्ष्णशः मुहुर्मुहुः पूज्यम् ॥ ४६ ॥ "वत्सः पुत्रे प्रिये चाल्पे वक्षस्तर्णकयोरपि" इति धरणिः ॥ ४७ ॥ विपक्षे पूर्वोक्ताकरणे । अकृतात्मभिरशिक्षितबुद्धिभिः ॥ ४८ ॥ हे द्विजाः शौनकादयः । यूयं हि द्वितीयजन्मवत्वादुपनयनोत्तरं शास्त्राभ्यासबलेनैतज्जानंत्येवेति भावः ॥ ४९ ॥ ५० ॥ तत्र तदाऽमर्षितो जातक्रोधः । तथाविधस्य

निशम्य भीमगदितं द्रौपद्याश्च चतुर्भुजः ॥ आलोक्य वदनं सख्युरिदमाह हसन्निव ॥ ५२ ॥ श्रीभगवानुवाच ॥ ब्रह्मबंधुर्न हंतव्य आततायी वधार्हणः ॥ मयैवोभयमाम्नातं परिपाह्यनुशासनम् ॥५३॥ कुरु प्रतिश्रुतं सत्यं यत्तत्सांत्वयता प्रियाम् ॥ प्रियं च भीमसेनस्य पांचाल्या मह्यमेव च ॥ ५४ ॥ सूत उवाच ॥ अर्जुनः सहसाऽऽज्ञाय हरेर्हार्दमथासिना ॥ मणिं जहार मूर्धन्यं द्विजस्य सहमूर्धजम् ॥ ५५ ॥ विमुच्य रशनाबद्धं बालहत्याहतप्रभम् ॥ तेजसा मणिना हीनं शिबिरान्निरयापयत् ॥ ५६ ॥ वपनं द्रविणादानं स्थानान्निर्यापणं तथा ॥ एष हि ब्रह्मबंधूनां वधो नान्योऽस्ति दैहिकः ॥ ५७ ॥

चतुर्भुजोक्तेरयं भावः—भीमे तं हंतुं प्रवृत्ते द्रौपद्यां च सहसा तन्निवारणे प्रवृत्तायाम् उभयोः संवरणाय आविष्कृतचतुर्भुज इति। संदिहानस्य सख्युरर्जुनस्य ॥ ५२ ॥ वधार्हणः वधार्हः। मयैव शास्त्रकृता "ब्राह्मणो न हंतव्यः"तथा—"आततायिनमायांतमपि वेदांतपारगम्। जिघांसंतं जिघांसीयान्न तेन ब्रह्महा भवेत्॥" इति च वदता। तदुभयमपि अनुशासनं परिपालय ॥ ५३ ॥ तव च प्रतिज्ञां पूरयेत्याह—कुर्विति। प्रियां सांत्वयता त्वया यत् प्रतिश्रुतं हननं तच्च सत्यं कुरु, प्रियं च कुरु। मह्यं मम। तत्र वधे भीमस्य प्रियं भवति, अवधे द्रौपद्याः, द्वये श्रीकृष्णस्य॥५४॥ हार्दमभिप्रायमाज्ञाय ज्ञात्वा न ह्यशक्यमुभयं विदध्यादतोऽस्यायमभिप्राय इति ज्ञात्वेत्यर्थः। असिना खड्गेन। मूर्धन्यं मूर्धनि जातम्। सहमूर्धजं सकेशम्॥५५॥मणिना च हीनं निरयापयन्निःसारितवान्॥ ५६॥अनेन श्रीकृष्णोक्तं सर्वं संपादितमित्याह। वपनमिति॥५७॥

बालहंतुस्तत्तथाविधत्वम्। भर्तुर्दुर्योधनस्य आत्मनः स्वस्य च। श्यंति तनूकुर्वंति शत्रुबलानीति शिशवस्तान्। "श्यतेः कुः सन्वच्च" इति सूत्रेण रूपसिद्धेः। महाबलानित्यर्थः। यद्वा शिशूनिति। पित्रपेक्षयाऽशीतिवर्षोऽपि शिशुरेवेति भावः। "शिशुर्वर्षत्रयो बाल" इति यथा श्रुतार्थांगीकारे महाभारतश्रुततत्पुरुषार्थविरोधः स्यात्॥५१॥हसन्निवेति।अद्य सखे ते बुद्धेः स्सौक्ष्म्यमहं परीक्षिष्ये इत्येतद्व्यंजकं स्मितमात्रमाविष्कुर्वन्न तु हास्यमिति भावः ॥ ५२ ॥ जिघांसाऽस्यास्तीति जिघांसी जिघांसंतमियाद्गच्छेदित्यर्थः। आयांतमुद्यतम्। अत एवोद्यतस्य द्रोणस्य वधोऽनुमतो न तु बद्धस्यास्येत्यर्थः। ब्रह्मबंधुत्वमप्याततायित्वादेवास्य विवक्षितं न वस्तुतः ॥ ५३ ॥ ५४ ॥ उभयं वधावधं विदध्यादयं कुर्यात्। एतदशक्यं न हि। अतो हेतोरस्य भगवतोऽयमभिप्रायः। इत्यर्थ इति। "आहरिष्ये शिरस्तस्य" इति मया प्रतिज्ञातोऽस्य शिरश्छेद एव "कुरु प्रतिश्रुतं सत्यम्" इति वदता भगवताप्यभिप्रेतः। पुनश्च पांचाल्याः प्रियं कुर्विति वदता शिरसो न च्छेदश्च विहितोऽतो मयेत्थमुभयमेव कर्त्तव्यमिति निश्चित्येति भावः। तेन शिरस्थमपि वस्तु लक्षणया शिरःशब्देनोच्यते इति शिरश्छेद एव अभिधया तु न शिरश्छेद इत्यश्वत्थाम्नो वधोऽवधश्च कृत इत्याशयः। यत्तु भारते सौप्तिकपर्वणि व्यासेनोक्तमश्वत्थाम्ने "मणिं चैव प्रयच्छाद्य यस्ते शिरसि तिष्ठति। एतदादाय ते प्राणान्प्रतिदास्यंति पांडवाः॥" इत्याकर्ण्याश्वत्थाम्ना बहूनि वाक्यान्युक्त्वा "प्रदायाथ मणिं द्रौणिः पांडवानां महात्मनाम्" इत्यत्राप्ययमेवार्थो लभ्यते। न ह्यत्र स्वहस्तेन तेन मणिर्दत्त इत्युक्तं किं तु प्रदायेति। तथा च तेनोक्तं मम शिरसो मणिर्गृह्यतामित्युक्तेऽर्जुनेन सहजो मणिरसिनोद्धृतस्सकेश इति। यद्वाऽसिना सह मणिं सकेशं जहार स्वीकृतवान्। तेन शिरस उत्पाद्य सकेशो मणिरसिश्च दत्तः। अत एव द्रौपद्यै भीमेनोक्तं तत्रैव "वियोजितश्च मणिना भ्रंशितश्चायुधं भुवि" इति। द्विजस्येत्युक्त्यायमेव ब्राह्मणवध इति ध्वनितम् ॥ ५५ ॥ तेजसा तेजोवता मणिना। यद्वा तेजसा शरीरकांत्या मणिना च ॥ ५६ ॥ अनेन मणिग्रहणादिना वपनं मुंडनं द्रविणस्य हिरण्यादेरा

पुत्रशोकातुराः सर्वे पांडवाः सह कृष्णया ॥ स्वानां मृतानां यत्कृत्यं चक्रुर्निर्हरणादिकम् ॥ ५८ ॥ इति श्रीभा० म० प्रथ० सुतबालघातिद्रौणिनिग्रहो नाम सप्तमोऽध्यायः ॥ ७ ॥ सूत उवाच ॥ अथ ते संपरेतानां स्वानामुदकमिच्छताम् ॥ दातुं सकृष्णा गंगायां पुरस्कृत्य ययुः स्त्रियः ॥ १ ॥ ते निनीयोदकं सर्वे विलप्य च भृशं पुनः ॥ आप्लुता हरिपादाब्जरजःपूतसरिज्जले ॥२॥ तत्रासीनं कुरुपतिं धृतराष्ट्रं सहानुजम् ॥ गांधारीं पुत्रशोकार्तां पृथां कृष्णां च माधवः ॥ ३ ॥ सांत्वयामास मुनिभिर्हतबंधूञ्छुचार्पितान् ॥ भूतेषु कालस्य गतिं दर्शयन्नप्रतिक्रियाम् ॥४॥ साधयित्वाऽजातशत्रोः स्वं राज्यं कितवैर्हृतम् ॥ घातयित्वाऽसतो राज्ञः कचस्पर्शक्षतायुषः ॥ ५ ॥

निर्हरणं दाहार्थं नयनम् ॥ ५८ ॥ इति श्रीमद्भागवते प्रथमस्कंधे टीकायां सप्तमोऽध्यायः ॥ ७ ॥ अष्टमे कुपितद्रौणेरस्त्राद्रक्षा परीक्षितः ॥ श्रीकृष्णेन स्तुतिः कुंत्या राज्ञः शोकश्च कीर्त्यते ॥१॥ ते पांडवाः संपरेतानां मृतानां गंगायामुदकं दातुं सकृष्णा श्रीकृष्णेन सहिताः स्त्रियः स्त्रीः पुरस्कृत्याग्रतः कृत्वा । तस्मिन्कार्ये स्त्रीपुरःसरत्व विधानात् ॥ १ ॥ निनीय दत्त्वा । हरिपादाब्जरजोभिः पूता या सरिद्गंगा तस्या जले । पुनर्ग्रहणादादावपि स्नाता इति गम्यते ॥ २ ॥ कुरुपतिं युधिष्ठिरं सहानुजं भीमादिभिः सहितम् । पुत्रशोकार्तामिति तिसृणां विशेषणम् ॥ ३ ॥ मुनिभिः सहितः ॥ ४ ॥ कितवैर्धूर्तैर्दुर्योधनादिभिः । द्रौपद्याः कचग्रहणादिना क्षतं नष्टमायुर्येषां तान् ॥ ५ ॥

दानं ग्रहणं स्थानान्निर्यापणं देशान्निष्कासनम् । दैहिकः शिरश्छेदशूलारोपणकर्णनासादिकर्त्तनरूपो वधो ब्राह्मणस्य नास्तीत्यर्थः । सहमूर्द्धजमित्युक्त्या वपनं मण्यादानेन द्रविणादानं,शिबिरान्निर्यापणेन स्थानान्निर्यापणं चेति त्रयमेवात्र संपादितमिति । महाभारते हि भीमसेन एव तद्वधार्थं गतः । "मयैतदस्त्रमुत्सृष्टं भीमसेनभयान्मुने" इत्यश्वत्थामोक्तेः " तमभ्यधावत्कौंतेयः प्रगृह्य सशरं धनुः । भीमसेनो महाबाहुः" इत्यतः पूर्वमुक्तेश्च । यद्य पीत्थं तथापि श्रीकृष्णाज्ञयाऽर्जुनोपि गतस्तेनैवास्त्रं प्रतिसंहृतमिति ज्ञेयम् । "अर्जुनार्जुन यद्दिव्यमस्त्रं ते हृदि वर्तते । द्रोणोपदिष्टं तस्यायं कालः संप्रति पांडव ॥" इति श्रीकृष्णोक्तिमाकर्ण्यास्त्रवारणार्थमस्त्रमर्जुन एव युयुज इति सर्वं सौप्तिकपर्वणि विस्तृतमस्तीत्युपरम्यते ॥५७॥ कृष्णया द्रौपद्या । आदिना जलपिंडदानादिग्रहः ॥५८॥ इति श्रीभागवतभावार्थदीपिकाप्रकाशे प्रथमस्कंधे सप्तमोध्यायः ॥७॥ श्रीकृष्णेन परीक्षितो रक्षेत्यन्वयः ॥(१)॥ अथ निर्हरणाद्यनंतरम् ॥ १ ॥ २ ॥ तत्र गंगातटे । पुत्रशोकार्त्तामिति तिसृणां विशेषणम् । गांधार्या दुर्योधनादयः, पृथायाः कर्णः,कृष्णाया द्रौपद्याः प्रतिविंध्यादयः । कृष्णापदेन सुभद्रापि गृह्यते तस्या अभिमन्युरिति नामानः पुत्रास्तेषां तस्य तस्य च शोकेनार्ताम् ॥ ३ ॥ मुनिभिर्द्वारभूतैः । यद्वा तैः सह सांत्वयामास तत्तच्छास्त्रादिवाक्यैर्बोधयामास । हता बंधवो येषां तान्युधिष्ठिरादीन् । अप्रतिक्रियां दुर्निर्वार्याम् । "नांतकस्य क्रिया कापि नापराधो न च त्रपा । न गौरवं भयं प्रीतिर्भूतसंघातमश्नुते ॥" इत्यादिवाक्यात् । "समुद्रा यद्रथाघातजाताः सोपि प्रियव्रतः । अदर्शनं गतो भागीरथ्या नेता भगीरथः ॥ येन ग्रामादिरचना कृता सोपि पृथुर्नृपः । कालेनादर्शनं यातः । का कथान्यनृणामिह ॥" इत्यादिबहुविधवाक्यैः सांत्वनं चकारेत्यर्थः ॥ ४ ॥ कचानां द्रौपदीकेशानां स्पर्शेन हतमायुर्येषां दुःशासनदुर्योधनादीनां तान् । अत्र तीर्थेन सुयोधनादीनामजातसंज्ञावत्वे "सुयोधनादयः सर्वे त्वजाता जज्ञिरे घटात् । व्यासेनानंतवीर्येण मार्त्तण्डाधिकतेजसा" इति ग्रंथांतरीयश्लोकः प्रमाणत्वेन न्यस्तः । तथा चाजाता दुर्योधनदुःशासनाद्याः शत्रवो यस्य स तथा । तस्य युधिष्ठिरस्य स्वं पितृपितामहक्रमात्प्राप्तम् ॥ ५ ॥

याजयित्वाऽश्वमेधैस्तं त्रिभिरुत्तमकल्पकैः ॥ तद्यशः पावनं दिक्षु शतमन्योरिवातनोत् ॥६ ॥ आमंत्र्य पांडुपुत्रांश्च शैनेयोद्धवसंयुतः ॥ द्वैपायनादिभिर्विप्रैः पूजितैः प्रतिपूजितः ॥ ७ ॥ गंतुं कृतमतिर्ब्रह्मन्द्वारकां रथमास्थितः ॥ उपलेभेऽभिधावंतीमुत्तरां भयविह्वलाम् ॥ ८ ॥ पाहिपाहि महायोगिन्देवदेव जगत्पते ॥ नान्यं त्वदभयं पश्ये यत्र मृत्युः परस्परम् ॥ ९॥ अभिद्रवति मामीश शरस्तप्तायसो विभो ॥ कामं दहतु मां नाथ मा मे गर्भो निपात्यताम् ॥ १० ॥ सूत उवाच ॥ उपधार्य वचस्तस्या भगवान्भक्तवत्सलः ॥ अपांडवमिदं कर्तुं द्रौणेरस्त्रमबुध्यत ॥ ११ ॥ तर्ह्येवाऽथ मुनिश्रेष्ठ पांडवाः पंच सायकान् ॥ आत्मनोऽभिमुखान्दीप्तानालक्ष्या स्त्राण्युपाददुः ॥ १२ ॥

याजयित्वेत्यादि भाविकथसंक्षेपः । शतमन्योः शतक्रतोरिव ॥ ६ ॥ शैनेयः शिनेर्नप्ता सात्यकिस्तेन चोद्धवेन च संयुतः ॥ ७ ॥ रथमास्थितः सन्नुत्तरां परीक्षिन्मातरं भयेन विह्वलां व्याकुलां अभिमुखं धावंतीमुपलेभे ददर्श ॥ ८ ॥ उत्तरा श्रीकृष्णं प्रार्थयते । पाहिपाहीति द्वाभ्याम् । अन्यस्तु प्रार्थनायोग्यो नास्तीत्याह । त्वत् त्वत्तोऽन्यमभयं भयरहितं न पश्यामि यत्र लोके । परस्परमन्योऽन्यम् । मृत्युर्भवति ॥ ९ ॥ तत्र प्रस्तुतं भयमावेदयति । अभिद्रवत्यभिमुखमायाति । तप्तमायसं लोहमयं शल्यं यस्य सः । अतिकार्पण्येनाह । काममिति । कामं यथेच्छम् ॥ १० ॥ पराभवेनातिकुपितस्य द्रौणेरपांडवं पांडवशून्यमिदं विश्वं कर्तुं प्रवृत्तं ब्रह्मास्त्रमबुध्यत ॥ ११ ॥ अत एव

उत्तमाः कल्पकाः सामग्र्यो यद्वोत्तमा व्यासादयः कल्पकाः कारयितारो येषु तैरश्वमेधैः त्रिभिरिति एकस्मिन्नेव यागे त्रिगुणदक्षिणदानादेकस्यैव यागस्य त्रियागत्वं जातमिति महाभारतेऽश्वमेधपर्वणि विवृतम् । वाक्यानि चह विस्तृतिभयान्नोदाहृतानि । तस्य युधिष्ठिरस्य यशः शतं मन्यवो यज्ञा यस्य स तथा तस्य । "मन्युर्यज्ञे हरेः क्रुधि" इत्यभिधानात् । यथा वामन इंद्रयशो विस्तृतवांस्तथा श्रीकृष्णोपि युधिष्ठिरस्येत्यर्थः ॥६॥ आदिना धौम्यादिग्रहः ॥ ७ ॥ हे ब्रह्मन्निति मत्कथनात्पूर्वमपि त्वं तपोबलेनैतज्जानासीति भावः ॥ ८ ॥ वीप्सात्र संभ्रमे । किं यामीति चेत्तत्राह-हे महायोगिन्निति । योगिनः "अनागतमतीतं : च वर्त्तमानमतींद्रियम् । विप्रकृष्टं व्यवहितं सम्यक्पश्यन्ति योगिनः" इति वाक्यात्सर्वज्ञाः संति । त्वं तु महायोग्यतां जानास्येवेति भावः । तर्हि रक्षासमर्थास्तु देवाः संतीति चेत्तत्राह-हे देवदेवेति । त्वं तु देवानामपि देव इति भावः । ननु देवदेव इंद्रो महादेवो वास्ति नाहमिति चेत्तत्राह-हे जगत्पते इति । स्तां तौ देवदेवौ जगत्पाता त्वमेवासि । तथा च सर्वजगत्पातुस्ते मद्गर्भरक्षणं त्वल्पतरमेवेति भावः। यत्र जगति परस्परमेकस्य मृत्युरन्यस्तस्यापरस्तंस्याप्यन्य इत्येवं मृत्युरस्ति । तत्र त्वत्त्वतोऽन्यमभयं भयनिवर्त्तकं न पश्यामित्यर्थः । "यद्बिभेति भयं स्वयम्" इत्यादेः ॥ ९ ॥ तत्र तदा तद्वारणे सर्वथा भगवतस्सामर्थ्यं द्योतयंत्याह-हे ईशेति । त्वमीशत्वान्ममाभिलषितपूरणे समर्थोसीति भावः । अभिलषितदानेऽन्येपि देवाः समर्थाः संतीति चेत्तदाह–विभो इति । ते तु परिच्छिन्नत्वान्न त्वादृशास्त्वमेव विभुरसीति भावः । अभिद्रवतीति । यान्प्रति शरः प्रयुक्तस्त एव तं पश्यन्ति नान्य इति सूचयति । नन्वभिमन्युना तेन पत्या विनापि जीवितं प्रार्थयंती न लज्जसे तत्राह-कामं यथेच्छम् । हे नाथेति । सर्वविधैश्वर्ययुक्तस्य तव मद्दहनेऽपि मद्गर्भरक्षणसामर्थ्यमस्तीति भावः ॥ १० ॥ तस्या उत्तरायाः । उपधार्य श्रुत्वा । यतो भगवानतोऽबुध्यत ॥ ११ ॥ अत एवं अपांडवजगत्करणाद्धेतोरेव । पांडवा इति । योयो हि पांडुवंशजः स एव पश्यति नान्य इति ज्ञेयम् । तर्ह्येव तदानीमेव सायंयत्यंतं कारयंतीति सायकाः ।

व्यसनं वीक्ष्य तत्तेषामनन्यविषयात्मनाम् ॥ सुदर्शनेन स्वास्त्रेण स्वानां रक्षां व्यधाद्विभुः ॥ १३ ॥ अंतस्थः सर्वभूतानामात्मा योगेश्वरो हरिः॥ स्वमाययाऽवृणोद्गर्भं वैराट्याः कुरुतंतवे ॥ १४ ॥ यद्यप्यस्त्रं ब्रह्मशिरस्त्वमोघं चाप्रतिक्रियम् ॥ वैष्णवं तेज आसाद्य समशाम्यद्भृगूद्वह ॥ १५ ॥ मामंस्था ह्येतदाश्चर्यं सर्वाश्चर्यमयेऽच्युते ॥ य इदं मायया देव्या सृजत्यवति हंत्यजः ॥ १६॥ ब्रह्मतेजोविनिर्मुक्तैरात्मजैः सह कृष्णया ॥ प्रयाणाभिमुखं कृष्णमिदमाह पृथा सती ॥१७॥ कुंत्युवाच ॥ नमस्ये पुरुषं त्वाऽऽद्यमीश्वरं प्रकृतेः परम् ॥ अलक्ष्यं सर्वभूतानामंतर्बहिरवस्थितम् ॥१८॥

बहुमुखं तदागतमित्याह । तर्ह्येवेति । तर्ह्येव तदानीमेव ॥ १२ ॥ ब्रह्मास्त्रस्यास्त्रांतरैरनिवर्त्यत्वात्तद्दुष्परिहरं व्यसनं वीक्ष्य । अनन्यविषयः आत्मा येषां स्वैकनिष्ठानामित्यर्थः ॥ १३ ॥ वैराट्या उत्तराया अंतस्थः सन् गर्भमावृतवान् । तत्र हेतुः । यतः आत्मांतर्यामी । योगेश्वर इति बहिष्ठस्यापि प्रवेशघटनार्थमुक्तम् । कुरूणां तंतवे संतानाय । पांडवानामपि कुरुवंशजत्वादेवमुक्तम् ॥ १४ ॥ अमोघमप्रतिक्रियं च समशाम्यत् संशांतमासीत् ॥ १५ ॥ एतद्ब्रह्मास्त्रशमनमाश्चर्यं मा मंस्था न मन्यस्व । इदं जगत् ॥ १६ ॥ कृष्णया सह ॥ १७ ॥ त्वा त्वां नमस्ये नमस्करोमि ननु कनिष्ठं मां कथं नमस्करोषि कथं तत्राह । आद्यं पुरुषं कुतः । प्रकृतेः परम् । तत्कुतः । ईश्वरं

यद्वा स्यन्त्यन्तं कुर्वतीति सायकाः । षोंतकर्मणि ण्वुल् ॥ १२ ॥ एकेन ब्रह्मास्त्रेण पूर्वत्रदर्जुनप्रयुक्तेनापि प्रतिजनाभिमुखमागतस्य पृथक्पृथक् ब्रह्मास्त्रस्य दुर्निर्वारत्वात्तत्प्रयोगादिकालविलंबासहत्वाच्च दुष्परिहरं वीक्ष्य विचार्य न्यस्तशस्त्रोपि सुदर्शनेनेत्यादि । तेन स्वप्रतिज्ञाभंगेनापि भक्तवात्सल्यनामानं स्वधर्ममसाधारणं ररक्षेति भावः । अस्त्राणि शस्त्राणि “व्यसनं विपदि भ्रंशे” इति कोशात् । विपदं भ्रंशं वा । इत्यर्थ इति । श्रीभगवंतं विना स्वरक्षकमन्यममन्यमानानामिति भावः ॥ १३ ॥ अंतस्थः सन्नंतर्यामितया स्थितोऽपि योगेश्वरः योगबलेन हरिरिति कृष्णरूपेण गर्भमावृणोत् आवृत्य स्थितो ररक्षेत्यर्थः । स्वमायया योगमाययेति । वैराट्या तु तथाभूतत्वेनाज्ञात इत्यर्थः । तीर्थस्तु स्वमायया स्वसामर्थ्येन तथा वृणोद्यथा ब्रह्मास्त्रं न दहेदात्मना गूहितमकरोदित्याह । ब्रह्मास्त्रप्रभावं क्षयं नीतवानिति भावः । “माया तु ज्ञानसामर्थ्यकृपेच्छावञ्चनास्वपि” इत्याभिधानात् ॥ १४ ॥ भगवत्सामर्थ्यं सर्वतः प्रबलतममित्याह-यद्यपीति । हे भृगूद्वहेति । संबुद्धिर्दृष्टांतगर्भेति ज्ञेयम् । भृगुं तद्गोत्रमुद्वहति धारयतीति भृगूद्वह इति । यथा सर्वविधविप्रेषु भृगुस्तपसातीव समर्थोभूद्येन भगवानपि पदा ताडितस्तथा सर्वदेवेषु भगवानेवातीव समर्थो नान्य इति प्रदर्शनार्थमुक्तं हेभृगूद्वहेति । “प्रधाने च परिणये उद्वाहो धारकेऽपि च” इति धरणिः । भृगुकुलमुख्यत्वादेव त्वामिदं ब्रवीमीति वाभिप्रायः ॥ १५ ॥ सर्वाश्चर्याणि स्वरूपं यस्येति । स्वरूपेप्यमृतमय इतिवन्मयट्प्रत्ययो भवतीत्यर्थः । तदेवाह-यदेदमिति । माययेच्छया देव्या देदीप्यमानया । अच्युते विनाशशून्ये ॥ १६ ॥ ब्रह्मपदमत्र ब्रह्मास्त्रपरमेकदेशन्यायेन । तथा च ब्रह्मास्त्रादभिनिर्मुक्तैरित्यर्थः ॥ १७ ॥ अत्राक्षिपिति नन्विति । तत्प्रकृति परत्वम् । अत एव प्रकृतिनियंतृत्वादेव । तथाप्यंतर्बहिष्ठेपि । अत्र विश्वनाथः । ज्ञाततात्कालिकश्रीकृष्णसर्वकृत्या कुन्ती हृद्युदितस्य तन्महैश्वर्यस्य वेगं सोढुमपारयान्ती स्तौति—नमस्य इति । किं भ्रात्रेय मां नमस्यति । तत्राह-पुरुषं न तु पुरुष एवास्मि कोत्र संदेहस्तत्राह-आद्यम् । ननु देहानामेवागमापायित्वं पुरुषो जीवस्त्वाद्य एव सर्वस्तत्राह-ईश्वरम् । ननु स्वर्गे इंद्रचंद्राद्या भूमौ राजानोऽपीश्वरा उच्यंते तत्राह-प्रकृतेः परम् । किमहमंतर्यामी पुरुषः न । अलक्ष्यम् । अंतर्यामी बुद्ध्यादिप्रकाशलक्ष्य

मायाजवनिकाच्छन्नमज्ञाधोक्षजमव्ययम् ॥ न लक्ष्यसे मूढदृशा नटो नाट्यधरो यथा ॥१९॥ तथा परमहंसानां मुनीनाममलात्मनाम् ॥ भक्तियोगविधानार्थं कथं पश्येम हि स्त्रियः ॥ २० ॥ कृष्णाय वासुदेवाय देवकीनंदनाय च ॥ नंदगोपकुमाराय गोविंदाय नमोनमः ॥ २१ ॥ नमः पंकजनाभाय नमः पंकजमालिने ॥ नमः पंकजनेत्राय नमस्ते पंकजांघ्रये ॥ २२ ॥

प्रकृतेरपि नियंतारम् । अत एव सर्वभूतानामंतर्बहिश्च पूर्णत्वेनावस्थितं तथाप्यलक्ष्यम् ॥ १८ ॥ तत्र हेतुः । मायैव जवनिका तिरस्कारिणी तयाच्छन्नं प्रतिच्छन्नम् । अतोऽहमज्ञा भक्तियोगानभिज्ञा केवलं नमस्यामि । अधोक्षजमिंद्रियजं ज्ञानं यस्मात्तम् । अव्ययमपरिच्छिन्नम् । तत्प्रपंचः । मूढदृशा देहाभिमानिना पुंसा न त्वं लक्ष्यसे ॥ १९ ॥ किं च परमहंसानामात्मानात्मविवेकिनां ततो मुनीनां मननशीलानामपि ततश्चामलात्मनां निवृत्तरागादीनामपि तथा तेन निजमहिम्ना न लक्ष्यसेऽतो भक्तियोगं विधातुं त्वां वयं स्त्रियः कथं हि पश्येम यद्वा परमहंसादीनामपि भक्तियोगविधानार्थं त्वाम् आत्मारामाणामप्यचिंत्यनिजगुणैराकृष्य भक्तियोगं विधातुं कारयितुमवतीर्णमित्यर्थः ॥ २० ॥ ज्ञानभक्त्योरशक्यत्वमुक्त्वा पुनः केवलं नमस्करोति । कृष्णायेति द्वाभ्याम् ॥ २१ ॥ पंकजं नाभौ यस्य पंकजानां माला

एव किं ब्रह्म न । अंतर्बहिश्चावस्थितम् । यस्मादंतरुत्तरागर्भस्थो बालकं च रक्षितवानसि बहिश्चास्मांश्च रक्षन्समीपे तिष्ठसीति ॥ १८ ॥ किं त्वं परिच्छिन्नोसि व्यापको वेति त्वामहं ज्ञातुं न शक्नोमीत्याह-मायैव जवनिका तिरस्करिणी तया च्छन्नं पश्यामीत्यर्थः । किं माया मामावृणोति तत्राह—अज्ञा मेघाच्छन्नं सूर्यमहं न पश्यामीतिवन्मायया मद्दृष्टयाच्छादनात्त्वात्त्वा मय्याच्छन्नं पश्यामीत्यर्थः । यतोधोक्षजमधःस्थितमक्षजमिन्द्रियजं ज्ञानं यस्य तम् । इंद्रियजं ज्ञानं यत्र स्प्रष्टुं प्रभवतीत्यहमैन्द्रियिकज्ञानवत्यज्ञैव । न च मादृशनिकृष्टजनाज्ञेयत्वे तव कापि क्षतिरित्याह-अव्ययमिति । ननु मां साक्षात्पश्यसि स्तौषि प्रकृतेः परत्वेन जानासि तदप्यज्ञासीत्यात्मानं किमिति निंदसीत्यत आह-न लक्ष्यस इति । नाट्यधरः गीयमानगीतपदार्थाभिनयरसानुरूपनृत्यतालादिविशिष्टो नटो मूढदृशा संगीतशास्त्रानभिज्ञेन नटोयं नटतीत्येवं दृष्टोपि यथा न लक्ष्यते न ज्ञाततत्त्वो भवति तथैव त्वं मया दृष्टोपि न लक्ष्यसे इति तथेत्यस्य पूर्वेणैवान्वयः । पांडवान्पालयन्नपि सर्वांतर्याम्यपि मुहुरश्वत्थामादीन्पांडववधार्थं मंत्रं ग्राहयसि । स्वयं न्यस्तशस्त्रोप्यस्त्रं गृह्णासि शिष्टपालनप्रवृत्तोपि भीष्मादीन्संहारयासि । द्रौपदीसुभद्रयोरतिस्निह्यन्नपि तत्पुत्रान्घातयसीत्येवमादिका लीला तव किंतत्त्वेत्यहं न जानामीति भावः ॥ १९ ॥ स्त्रींजातेर्मम का वार्ता सर्वज्ञा मुनयः परमहंसा अपि न जानंतीत्याह-किं चेति । तेन दुर्ज्ञेयेन यतो न लक्ष्यसेऽतो हेतोः तव भक्तिं कर्तुं वयं त्वां कथं पश्येमेत्यर्थः । त्वां भजंतोऽपि लीलामाधुर्याकृष्टचित्तास्तव तत्त्वं न जानंति यतोऽतस्तेषां भक्तियोगे प्रवर्त्तयितुं स्वीकृतविग्रहं वयं कथं जानीम इत्याह यद्वेति । इत्यर्थ इति । अमलात्मनां गुणमयमालिन्यान्निष्क्रांतानां जीवन्मुक्तानामित्यर्थः । तेषामपि भक्तियोगविधानमेवार्थः । प्रयोजनं यस्य तम् । "आत्मारामाश्च मुनयः" इत्याद्युक्तेरयं भावः ॥ २० ॥ तदेवंभूतस्त्वमहो अस्माकमित्थं सुखदस्तापहारी च संवृत्तोसीति तत्तत्स्मृत्वा नमस्करोति । सर्वावतारेष्वप्ययमेव तवावतारो धन्योऽतोहं कृष्णाय नमस्करोमीति । तत्रापि यांस्त्वं स्वीकरोषि तेष्वपि प्रेमवत्सु धन्येषु मध्ये मद्भ्रातापि धन्यो यस्ते पितेत्याह-वासुदेवायेति । ततोप्यधिकप्रेमवती देवकी धन्या या ते मातेत्याह-देवकीं नन्दयसि तदीयगर्भे स्थित्वा तां सर्वतोपि समृद्धिमतीं करोषीत्यर्थः । ततोप्यधिकप्रेमवान्नंदो धन्य इत्याह-नन्दगोपस्य कुमाराय । कौमारलीलामाधुर्यं स एवास्वादितवानिति भावः । ततोपि प्रेमवती धन्या यशोदेत्यग्रिमपद्ये वक्ष्यते । कौमारलीलातोपि व्रजस्थस्य नवकैशोरलीलामाधुर्यमधिकमित्याह-गोविंदायेति । कैशोरारंभ एव अभिषेकानंतरं गोविंदनामख्यातेः । तदैव गाः सर्वेषां सर्वैन्द्रियाणि विंदत्याकृष्य प्राप्नोषीत्यर्थः ॥ २१ ॥ तदेवमेव सुखदत्वतापहारित्वरूपं निजस्वभावं प्रकटयन्निव पंकजाभैर्निजांगैर्विराजस इत्याह—

यथा हृषीकेश खलेन देवकी कंसेन रुद्धाऽतिचिरं शुचार्पिता ॥ विमोचिताऽहं च सहात्मजा विभो त्वयैव नाथेन मुहुर्विपद्गणात् ॥२३॥ विषान्महाग्नेः पुरुषाददर्शनादसत्सभाया वनवासकृच्छ्रतः ॥ मृधेमृधेऽनेकमहारथास्त्रतो द्रौण्यस्त्रतश्चास्म हरेऽभिरक्षिताः ॥ २४ ॥ विपदः संतु नः शश्वत्तत्रतत्र जगद्गुरो ॥ भवतो दर्शनं यत्स्यादपुनर्भवदर्शनम् ॥ २५ ॥ जन्मैश्वर्यश्रुतश्रीभिरेधमानमदः पुमान् ॥ नैवार्हत्यभिधातुं वै त्वामकिंचनगोचरम् ॥ ॥ २६ ॥ नमोऽकिंचनवित्ताय निवृत्तगुणवृत्तये ॥ आत्मारामाय शांताय कैवल्यपतये नमः ॥ २७ ॥

अस्ति यस्य पंकजवत्प्रसन्ने नेत्रे यस्य पंकजांकितावंघ्री यस्य तस्मै ॥ २२ ॥ तत्कृतोपकाराननुस्मरति । यथेति द्वाभ्याम् । अयमर्थः । मातृतोऽपि मय्यधिका तव प्रीतिः । तथा हि । हे हृषीकेश यथा देवकी कंसेन रुद्धा त्वया विमोचिता अहं च तथैव किं विमोचितेति काक्वा महान्विशेष उक्तः । तं दर्शयति । साऽतिचिरं रुद्धा सती तस्मा देव सकृद्विमोचिता । तथा शुचार्पिता च सती । न च तस्याः पुत्रा रक्षिताः । अस्ति चान्यो नाथस्तस्याः । अहं तु विपद्गणात्तत्रापि मुहुः शीघ्रं च सात्मजा च त्वयैव च नाथेनेति ॥ २३ ॥ विपद्गणमेव दर्शयति । विषाद्भीमस्य विषमोदकदानात् । महाग्नेर्जतुगृहदाहात् पुरुषादाः हिडिंबादयो राक्षसास्तेषां दर्शनात् । असत्सभायाः द्यूतस्थानात् । अभितो रक्षिता आस्म अभवाम ॥ २४ ॥ यत् यासु विपत्सु कीदृशं दर्शनं नास्ति पुनरपि भवदर्शनं यस्मात् ॥ २५ ॥ संपदस्तु श्रेयःपरिपंथिन्य इत्याह । जन्म सत्कुले जन्मादिभिरेधमानो मदो यस्य सः । अभिधातुं श्रीकृष्ण गोविंदेति वक्तुमपि । अकिंचनानां गोचरं विषयभूतम् ॥ २६ ॥ प्रस्तुतमनोरथपूरणाय पुनः प्रणमति । आकिंचना भक्ता एव वित्तं सर्वस्वं यस्य तस्मै । ततः किम् । निवृत्ताः गुणवृत्तयो धर्मार्थकामविषया यस्मात्तस्मै । तत्कुतः आत्मारामाय । तत्कुतः

नम इति । पंकजाकारं भगवल्लक्षणं नाभौ यस्य तस्मै इति सन्दर्भः । तव नाभिमालानेत्रादिषु पतिता मे दृष्टिः शीतली भवतीति भावः ॥ २२ ॥ तत्कृतोपकारैः स्वतापहारित्वं दर्शयन्ती दीनाहं त्वया स्वमातृवत्पालितेत्याह-हे हृषीकेशेति । मदंतःकरणं त्वमेव जानासीति भावः । अहं तु तथा न मोचिता किं तु सहात्मजेति मयि विशेषेण तव दया । तत्र हेतुः । शुचार्पिता । शुचायां शोक एव मत्कर्मणा ऽहमर्पितेति तस्याः सकाशादप्यहमतिदुःखिनीत्यर्थः । किं च त्वयैव नाथेनेति । तस्यास्तु नाथो विद्यत इत्यपत्यांतरोत्पत्तिसंभावनाया विद्यमानत्वात् । त्वं चापत्यचूडामणिरभूरेव किमन्यैरपालितैर्निकृष्टैः षड्गर्भैरिति भावः । किञ्चाहं मुहुः पुनःपुनरपि यो विपदां गणस्तस्मान्मोचिता । सा तु सकृदेव कंसहेतुको यो विपद्बंध एव तस्मान्मोचिता । तत्रापि मद्गर्भे परमेश्वरो जनिष्यत इति मनोनुलाप सुखाभिमानवत्याः कुतो विपद्बंधोपि तदनंतरं विपत्कापि तस्या नाभूदेवेति । अहमेव सर्वतोप्यतिदीनेति मयि तव दीनबंधुत्वादेव दया । न त्वहं देवकीव त्वयि प्रेमवती भाग्यवती चेति भावः । स्वामिचरणैरयमेवार्थः स्फोटितः अयमर्थ इत्यादिना । त्वयैवेत्येवकारेण बलदेवस्याप्यन्यत्र पक्षपातदर्शनमसूचीति ॥ २३ ॥ आदिना बककिर्मिरादिग्रहः । अनेके द्रोणभीष्मकर्णशल्याद्या ये महारथास्तेषामस्त्रेभ्यः ॥ २४ ॥ भगवत्स्मरणविरोधिसंपत्परंप रातो भगवद्दर्शनकारिविपत्परंपरैव श्रेयसीत्याह । विपदः तत्रतत्र सांसारिकव्यापारेषु अपुनर्भवो मोक्षस्तस्य दर्शनं यस्मात् । हे जगत्पते इति विपदंजनप्रदानेन संपन्मदान्धजगतां हितकारी त्वमसीति भावः ॥ २५ ॥ परिपंथी विरोधी प्रतिपक्षीति पर्यायाः । ऐश्वर्यं प्रभुत्वं श्रुतं शास्त्रं श्रीर्धनं श्रीकृष्णादन्यन्न किंचनोपादेयं येषां तेऽकिञ्चना भक्ताः ॥ २६ ॥ न विद्यते किंचिन्मात्रं प्राकृतं वस्तु, अपि तु त्वल्लक्षणं पूर्णचिदानंदस्व

मन्ये त्वां कालमीशानमनादिनिधनं विभुम् ॥ समं चरंतं सर्वत्र भूतानां यन्मिथः कलिः ॥ २८ ॥ न वेद कश्चिद्भगवंश्चिकीर्षितं तवेहमानस्य नृणां विडंबनम् ॥ न यस्य कश्चिद्दयितोऽस्ति कर्हिचिद्द्वेष्यश्च यस्मिन्विषमा मतिर्नृणाम् ॥ २९ ॥ जन्म कर्म च विश्वात्मन्नजस्याकर्तुरात्मनः ॥ तिर्यङ्नृषिषु यादस्सु तदत्यंतविडंबनम् ॥ ३० ॥



शांताय रागादिरहिताय । किं च कैवल्यपतये कैवल्यं दातुं समर्थाय ॥ २७ ॥ ननु देवकीपुत्रं मां कथमेवं स्तौषि तत्राह । मन्ये त्वां कालं न तु देवकीपुत्रम् । तत्र हेतवः ईशानं नियंतारम् । अनादिनिधनम् आद्यंतशून्यम् । विभुं प्रभुम् । समं यथा भवति तथा सर्वत्र चरंतम् । ननु पार्थसारथेः कथं मम साम्यं तत्राह । यद्यतस्त्वत्तो निमित्तभूताद्भूतानामेव मिथः कलिः कलहो भवति न तु स्वतस्त्वयि वैषम्यम् ॥ २८ ॥ ननु निग्रहानुग्रहरूपं मयि प्रसिद्धं वैषम्यमत आह । न वेदेति । नृणां विडंबनमनुकरणमीहमानस्य कर्वतः यस्मिंस्त्वयि विषमा मतिरनुग्रहनिग्रहरूपा भवति ॥ २९ ॥ तेऽजस्य जन्म । अकर्तुः कर्म । तिर्यक्षु वराहादिरूपेण । नृषु रामादिरूपेण ।

रूपं वस्त्वस्ति येषां त एकांतभक्ता एव वित्तानि धनानीवातिप्रेमास्पदानि सर्वतः संगोपनीयाश्च यस्य तस्मै तेषां वित्तायेति वा । नन्वकिञ्चना दरिद्रा उच्यंते । सत्यम् । भगवद्भक्तानां मायागुणवृत्त्याख्याः संपदो न संतीत्याह—निवृत्ता गुणंवृत्तयो विषयभोगा यस्मात्तस्मै । यद्वा । निवृत्ता गुणागुणकार्यभूता रागद्वेषादयो येषां ते निवृत्तगुणा जीवन्मुक्तास्तेषु वृत्तिर्वर्त्तनं यस्य । यद्वा तेषां वृत्तिर्यस्मिन् स निवृत्तगुणवृत्तिस्तस्मै । यद्वा गुणैर्वृत्तिर्येषां ते गुणवृत्तयो लंपटाः निवृता गुणवृत्तयो यस्मात्तस्मै । अकिंचनेष्वासक्तोप्यन्यत्रोदासीन एवेत्याह—आत्मारामाय स्वानंदमग्नाय । तदात्मारामत्वम् । यद्वा भक्तानामपराधे सत्यपि न त्वं कुप्यसीत्याह-शांताय स्वभक्तेष्वनुग्रहाय । मुमुक्षुभक्तेषूपकारकत्वमाह-कैवल्येति ॥ २७ ॥ अत्राक्षिपति नन्विति । तत्र कालत्वे । पुनराक्षिपति । न चासक्त्यौदासीन्योपकारापकारकत्वैरपि त्वयि वैषम्यमित्याह-सममिति । यद्यत्र मिथः कलिः कलहः ईश्वरो दुःखदः सुखदः समो विषमो निर्घृणः सघृण इत्यादि । यद्वा येषु भावेषु भूतानां मिथः कलिर्भवति तेषु समं चरन्तमित्यर्थः ॥ २८ ॥ पुनराक्षिपति-नन्विति । अत्र विश्वनाथः । ननु तत्र कलहे तत्त्वीनश्चयकः को भवेत्तत्र न कोपीत्याह—न वेदेति द्वाभ्याम् । नृणां शास्त्रविवादिनां तेषां विडंबनं ज्ञानवैफल्यमीहमानस्येच्छतः । यद्वा । रामकृष्णाद्यवतारे स्वीयेन नरत्वेन नृणां नरमात्राणामेव विडंबनमीहमानस्य तादृशसौन्दर्यसाद्गुण्यचीरत्राद्यदर्शनादन्येन वा विडंबिता एव भवंतीति भावः । नृणां नरमात्राणां विषमा मतिरिति । यथा सूर्यस्य सूर्यकांतशिलायां स्वतुल्यधर्मत्वप्रदानेनासक्तौ अंधेष्वौदासीन्ये चक्रवाकेषूपकारित्वे घूकतस्करांधकारादिष्वपकारित्वे लक्ष्यमाणेपि न तस्य वैषम्यम् । किं तु तत्रतत्र वस्तुसाद्गुण्यवैगुण्याद्येव कारणमिति ज्ञेयम् ॥ २९ ॥ किं च तदपि तव साम्यवैषम्यकर्तृत्वाकर्तृत्वजन्मवत्त्वाजत्वादिषु सिद्धांतानिर्विंद्य लीलैवास्वादनीयेत्याह—जन्मेति द्वाभ्याम् । अजस्य जन्माकर्तुः कर्म तत्रापि तिर्यगादिषु तच्च तच्च तव सर्वोत्कृष्टस्येश्वरस्यात्यंतविडंबनं तत्तज्जातीयार्थेनात्मना न्यूनत्वांगीकारात् । तथाहि वाराहजन्मनि "घ्राणेन पृथ्व्याः पदवीं विजिघ्रन्" इत्यादिना सर्वज्ञत्वेपीश्वरत्वेऽपि वास्तवशूकर एवाभूर्यमवलोक्य "जहास चाहो वनगोचरो मृगः" इत्येव न तत्त्वज्ञास्त्वां कर्माधीनं जीवमेव मन्यंत इति भावः । अत्राजत्वकर्तृत्वयोरेव सत्यत्वे जन्मकर्मलक्षणयोर्लीलयोर्मिथ्यात्वं तथात्वे च तया शुकदेवाद्यात्मारामगणीचित्ताकर्षणत्वासंगतिः । "जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः" इति भगवदुक्तेश्च । जन्मकर्मणां सत्यत्वेऽजत्वाकर्तृत्वयोरसंगतिरिति । तस्मादचिंत्यानंतशक्तिमतो भगवतः को वेद

गोप्याददे त्वयि कृतागसि दाम तावद्या ते दशाऽश्रुकलिलांजनसंभ्रमाक्षम् ॥ वक्त्रं निनीय भयभावनया स्थितस्य सा मां विमोहयति भीरपि यद्बिभेति ॥ ३१ ॥ केचिदाहुरजं जातं पुण्यश्लोकस्य कीर्तये ॥ यदोः प्रियस्याऽन्ववाये मलयस्येव चंदनम् ॥ ३२ ॥ अपरे वसुदेवस्य देवक्यां याचितोऽभ्यगात् ॥ अजस्त्वमस्य क्षेमाय वधाय च सुरद्विषाम् ॥ ३३ ॥ भारावतरणायाऽन्ये भुवो नाव इवोदधौ ॥ सीदंत्या भूरिभारेण जातो ह्यात्मभुवाऽर्थितः ॥ ३४ ॥ भवेऽस्मिन्क्लिश्यमानानामविद्याकामकर्मभिः ॥ श्रवणस्मरणार्हाणि करिष्यन्निति केचन ॥ ३५ ॥

ऋषिषु वामनादिरूपेण । यादस्सु मत्स्यादिरूपेण ॥ ३० ॥ नरविडंबनमत्याश्चर्यमित्याह । गोपीति । गोपी यशोदा त्वयि कृतागसि दधिभांडस्फोटनं कृतवति यावद्दाम रज्जुमाददे जग्राह तावत्तत्क्षणमेव या ते दशाऽवस्था सा मां विमोहयति । किंभूतस्य । अश्रुभिः कलिलं व्यामिश्रमंजनं ययोस्ते च ते संभ्रमे व्याकुले अक्षिणी यस्मिंस्तद्वक्त्रं निनीयाधःकृत्वा ताडयिष्यतीति भयस्य भावनया स्थितस्य । यद्यतस्त्वत्तोभीरपि स्वयं बिभेति तस्य ते दशा ॥ ३१ ॥ अत एव जगन्मोहनतया दुर्ज्ञेयत्वात्तव जन्मादि बहुधा वर्णयंतीत्याह । केचिदिति चतुर्भिः । पुण्यश्लोकस्य युधिष्ठिरस्य कीर्तये यदोरेव कीर्तये इति वा मलयस्य कीर्तये वंशे वा चंदनं यथा ॥ ३२ ॥ तथा वसुदेवस्य भार्यायां देवक्यामज एव त्वमभ्यगात् । पुत्रत्वमिति शेषः । प्रथमपुरुषस्त्वार्षः । अर्भत्वमिति पाठः सुगमः । ताभ्यामेव पूर्वं सुतपःपृश्निरूपाभ्यां याचितः सन् । अस्य जगतः क्षेमाय ॥ ३३ ॥ आत्मभुवेति ब्रह्मप्रार्थनस्य प्राधान्यविवक्षया ॥ ३४ ॥ मतांतरम् । परमानंदस्वरूपाज्ज्ञानमविद्या ततो देहाद्यभिमानात्कामस्ततः कर्मा

तत्त्वमिति भावः । ''अतर्क्येण कृतौ दीर्घलंबने च विडंबनम् । हासास्पदे निविष्टे च'' इति धरणिः ॥ ३० ॥ तस्मात्तव लीलामेवास्वादयामीत्याह-गोपीति । एतेन नंदगोपादप्यतिप्रेमवती श्रीयशोदा धन्या यया तवै तादृशो वशीकार इति सूचितम् । तत्र ''भीरपि यद्बिभेति'' इत्युक्त्यैव कुन्त्या ऐश्वर्यज्ञानं व्यक्तीकृतं भयभावनया स्थितस्येत्यन्तर्भयस्य च तया सत्यत्वमेवाभिमतम् । अनुकरणमात्रत्वे ज्ञाते तस्य मोहो न संभवेदिति ज्ञेयम् । अत एवेहमानस्य नृणां विडंबनमित्यादौ विडम्बनमनुकरणमिति व्याख्यान्तरं पराहतम् ॥ ३१ ॥ यतस्तव कर्मातवर्यमत एवेत्यर्थः । एवं त्वं च न चेन्नटवत्प्रादुरभविष्यस्तदा जगन्मोहनीयं लीला केन वास्वादयिष्यतेति प्रादुर्भावकारणमेव मतभेदेन बहुधाह-केचिदिति । पुण्यश्लोकस्य युधिष्ठिरस्य ''पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः'' इति पुण्यश्लोकत्वेन तदानीं तस्यैव प्रसिद्धेः ॥ ३२ ॥ अर्भत्वं बालत्वम् ॥ ३३ ॥ अन्ये इत्याहुः सीदंत्या आसन्नमज्जनायाः ॥ ३४ ॥ ततोऽविद्यातः ततः कामात् । क्लिश्यमानानां सांसारिकाणामपि प्रेमभक्तिसिद्ध्यर्थमेव कर्माणि करिष्यन् । ''जीवस्य यः संसरतो विमोक्षणं न जानतोऽनर्थवहाच्छरीरतः । लीलावतारैः स्वयशःप्रदीपकं प्राज्वालयत्त्वां तमहं प्रपद्ये । '' इति दशमे श्रीनारदोक्तेः ॥ ''ततः स कीर्तिं सुश्लोक्यां वितत्य ह्यंजसा नु कौ । तमोनया तरिष्यंतीत्यगात्स्वं पदमीश्वरः ॥'' इति चैकादशोक्तेश्च । क्लेशनिवृ

शृण्वंति गायंति गृणंत्यभीक्ष्णशः स्मरंति नंदंति तवेहितं जनाः ॥ त एव पश्यंत्यचिरेण तावकं भवप्रवाहोपरमं पदांबुजम् ॥ ३६ ॥ अप्यद्य नस्त्वं स्वकृतेहितप्रभो जिहाससि स्वित्सुहृदोऽनुजीविनः ॥ येषां न चान्यद्भवतः पदांबुजात्परायणं राजसु योजितांहसाम् ॥३७॥ के वयं नामरूपाभ्यां यदुभिः सह पांडवाः ॥ भवतोऽदर्शनं यर्हि हृषीकाणामिवेशितुः ॥ ३८ ॥ नेयं शोभिष्यते तत्र यथेदानीं गदाधर ॥ त्वत्पदैरंकिता भाति स्वलक्षणविलक्षितैः ॥ ३९ ॥

णि तैः क्लिश्यमानानां तन्निवृत्तये श्रवणाद्यर्हाणि कर्माणि करिष्यन् ॥ ३५ ॥ अस्य पक्षस्य सिद्धांततामभिप्रेत्य श्रवणादिफलमाह । शृण्वंतीति । नंदंत्यन्यैः कीर्त्यमानमभिनंदंति ये जनाः ईहितं चारितं तावकं त्वदीयं पदांबुजं त एव पश्यंत्येवाचिरेणैवेति च सर्वत्रावधारणम् । कीदृशम् । भवप्रवाहस्य जन्मपरंपराया उपरमो यस्मिंस्तत् ॥ ३६ ॥ इदानीं तवास्मत्परित्यागोऽनुचित इत्याशयेनाह । अपीति चतुर्भिः । हे प्रभो सुहृदोऽतिस्निग्धाननुजीविनश्च नाऽद्यापि स्वित्किंचित्त्वं जिहाससि येषामस्माकमन्यत्परायणं नैवास्ति । तत्कुतः । राजसु योजितमंहो दुःखं यैस्तेषां स्वानां कृतमीहितमपेक्षितं येन तस्य संबोधनम् । विसर्गांतपाठे त्वंपदविशेषणम् ॥ ३७ ॥ ननु तव बंधवो यदवः पुत्राश्च पांडवाः शूराः समर्थाश्च तत्किं कार्पण्यं भाषसेऽत आह । के वयमिति । यर्हि भवतो दर्शनं यदा त्वमस्मान्न पश्यसि तदा नामरूपाभ्यां नाम्ना विख्यात्या रूपेण समृद्ध्या च यदुभिः सहिता पांडवा नाम के वयं न केऽपि । अतितुच्छा इत्यर्थः । हृषीकाणामिंद्रियाणामीशितुर्जीवस्यादर्शने यथा न किंचिन्नाम च रूपं च तद्वत् ॥ ३८ ॥ किं च यथेदानीमियमस्मत्पाल्या भूमिः स्वैरसाधारणैर्वज्रांकुशादिभिर्लक्षणैर्विलक्षितैश्चिह्नितैस्त्वत्पदैरंकिता सती भाति तत्र तदा त्वयि निर्गते

त्तिस्त्वानुषंगिकी । इतरश्लोके पदांबुजदर्शनस्यैव श्रवणादिफलत्वोक्तेः । तद्दर्शनं तु प्रेमलभ्यमेव ॥ ३५ ॥ शृण्वंतीति । भवेस्मिन्नित्यस्य पूर्वपद्यस्यैवोपोद्बलकत्वेनोक्तं न तु तस्यैव स्वमतत्वेन श्रीयुधिष्ठिरादीनां परमभक्तानां संबंधेनैव तत्तल्लीलाश्रवणादिकमन्येषां भवतीति प्रत्युत तत्रतत्रैव मुख्यत्वमवसीयते । तदेवं तत्तन्मतसमाहारेण समुदायस्य कारणत्वेऽप्यवांतरतारतम्यंविवेचनीयम् । मम तु "गोप्याददे" इति वर्णिता यशोदैव सर्वोत्तमत्तया भातीति कुंतीदेव्यभिप्रायः । चक्रवर्तिनात्रार्थसौंदयार्य षडवधारणानि सूचितानि । त एव न त्वन्ये, पश्यंत्येव न तु न पश्यंति, अचिरेणैव न तु चिरेण, तावकमेव न तु त्वदंशस्य कस्यचित्, भवप्रवाहोपरममेव न तु संसारानिवर्त्तकं,पदाम्बुजमेव न तु तव निर्विशेषं स्वरूपमिति ॥ ३६ ॥ अस्माकं सुखदुःखे तु त्वद्दर्शनादर्शने एव नान्ये । तत्र सुखसमयो गतः संप्रति दुःखसमयोऽयमायादित्याह-अप्यद्येति । अद्य त्वं नोऽस्मानपि स्विजिहाससि यतोऽद्य द्वारकां यातुमिति भावः । ननु बहुदिनमत्रावसं संप्रति द्वारकां याम्येव तत्रावश्यं मम किंचित्कृत्यमस्तीत्यनुज्ञां देहीत्यत आह-स्वकृते हितः स्वेनैव कृतं निष्पादितमीहितं चिकीर्षितं यस्य सः त्वं कृतकर्त्तव्योऽसीति भावः । यद्वा । हे प्रभो इति त्वमत्रत्योपि तत्रत्यकृत्यकरणसमर्थोस्यतो मास्मांस्त्यजेति भावः । निर्विसर्गपाठे संबुद्धिरियम् । तस्य चायमभिप्रायः । त्वदनुजीविनो मत्पुत्रानधुनापि रक्षन्नत्रैव तिष्ठेत्यर्थः ॥ ३७ ॥ अत्राक्षिपति-नन्विति । इत्यर्थ इति । त्वद्वियोगोस्माकं मरणकल्प इति भावः ॥ ३८ ॥ अन्यदाह-किञ्च हे गदाधरेति । त्वया शरणागतरक्षणार्थमेवास्त्राणि धृतानीति

इमे जनपदाः स्वृद्धाः सुपक्कौषधिवीरुधः ॥ वनाद्रिनद्युदन्वंतो ह्येधंते तव वीक्षितैः ॥ ४० ॥ अथ विश्वेश विश्वात्मन्विश्वमूर्ते स्वकेषु मे ॥ स्नेहपाशमिमं छिन्धि दृढं पांडुषु वृष्णिषु ॥ ४१ ॥ त्वयि मेऽनन्यविषया मतिर्मधुपतेऽसकृत् ॥ रतिमुद्वहतादद्धा गंगेवौघमुदन्वति ॥ ४२ ॥ श्रीकृष्ण कृष्णसख वृष्ण्यृषभाऽवनिध्रुग्राजन्यवंशदहनाऽनपवर्गवीर्य ॥ गोविंद गोद्विजसुरार्तिहरावतार योगेश्वराऽखिलगुरो भगवन्नमस्ते ॥ ४३ ॥

सति न शोभिष्यते ॥ ३९ ॥ अपि चेमे जनपदा देशाः स्वृद्धाः सुसमृद्धाः संतः ॥ ४० ॥ गमने पांडवानामकुशलमगमने च यादवानामित्युभयतो व्याकुलचित्ता सती तेषु स्नेहनिवृत्तिं प्रार्थयते । अथेति । विश्वेशेत्यादिसंबोधनानि स्नेहपाशच्छेदे सामर्थ्यख्यापनाय । दृढं संतम ॥ ४१ ॥ ततः किमत आह । त्वयीति । अनन्यविषया सती मे मती रतिमुद्वहतात् । अनवच्छिन्नां प्रीतिं करोत्वित्यर्थः । ओघं पूरम् । यथा गंगा प्रतिबंधं न गणयत्येवं मतिरपि विघ्नान्मा गणयत्विति भावः ॥ ४२ ॥ एवमभ्यर्थ्य पुनः प्रणमति । हे श्रीकृष्ण ते नमः । उपकाराननुस्मरंती बहुधा संबोधयति । कृष्णसखाऽर्जुनस्य सखे । वृष्णीनामृषभ श्रेष्ठ । अवन्यै भूम्यै द्रुह्यंति ये राजन्या

भावः । गदेत्युपलक्षणम् । यद्वा सर्वजगत्पितृतोषणं द्वारीकृत्य जगद्वृद्धिकरो गदाधररूपेण यो गयाक्षेत्रेऽतिदयावांस्तिष्ठति स एव मद्वंशवृद्धयेऽप्यत्रैव तिष्ठेति भावः । आदिना यवध्वजादिग्रहः ॥ ३९॥ त्वमेवस्थिरचरसुखहेतुरित्याह-इम इति ॥ ४० ॥ विश्वेशेति । संबुद्धित्रयस्य त्वमेव विश्वरूपेण तदंतर्यामिरूपेण तन्नियंतृरूपेण विदुषां भासीत्यतस्तव सर्वविश्वहितं कर्तुं समर्थस्य विश्वांतर्गताया एकस्याः ममाभिलषितपूरणं चात्यल्पतरमेवेति भावः । दृढं गाढम् । अत्रायं भावः । यस्त्वं सर्वेषामेव विश्वेषामीशश्चेतायिता तद्रूपोपि स स्वानुवर्तिनां वृष्णिपांडूनां कल्याणाय कृपासिंधुस्त्वमेव सावधानस्सदैवासि । अहं किं तत्कुशलचिंतया वृथैव म्रिय इति भावः ॥४१॥ तर्हि किं ब्रह्मज्ञाने स्पृहावती भवसि वृष्णिषु स्नेहच्छेदे मय्यपि स्नेहच्छेदात्तत्र नेत्याह–त्वयि मतिर्मे धीः । इत्यर्थ इति । किं त्वनन्यविषयास्त्वद्भक्तास्त्वदभिन्ना एव तेषु प्रीतिं विना त्वय्यपि प्रीतिर्न सिध्येत् । त्वं प्रसीदसीत्यपि नेत्यहं जानाम्येवातस्त्वद्भक्तेभ्योऽन्यत्र ममत्वशून्या तदपि पांडवेषु यादवेषु त्वद्भक्तेष्वपि यत्स्नेहस्य छेदं प्रार्थये तत्त्वदवतारात्पूर्वं एव देहसंबंधेन यो व्यवहारमयः स्नेहः प्रवृत्तस्तस्यैव न तु त्वत्प्रियत्वनिबंधनस्य । अत एव बंधकत्वेन मया स पाशरूपकेण प्रयुक्त इति भावः । अत एव गंगा यथोदन्वत्यखिलनदनदीनामाश्रये ओघं पूरं वहति तथा मतिरपि सर्वभक्ताश्रयणीये त्वयि रतिम् । अपरं स्वामिवत् ॥ ४२ ॥ हे श्रियाऽतसीकुसुमकान्त्या कृष्ण नीलवर्णेति वा । ''अतसीकुसुमोपमेयकान्तिः'' इत्याद्युक्तेः । यद्वा श्रिया स्वरूपसंपत्त्या कर्षत्याकर्षति गोपीजनप्रेमभक्तान्स्वसमीपमिति श्रीकृष्णः । श्रीप्रदः कृष्णः श्रीकृष्णः । देवब्राह्मणवत्समासः । यद्वा वृष्णिवद्वर्षन्मेघवदृषभश्रेष्ठ सर्वोपकारकेत्यर्थः । ''वृष्णिः कुलविशेषे च वर्षन्मेघेपि कथ्यते'' इति तीर्थः । ''वृष्णिः पांडवचंद्रयोः । त्रिषु ना यादवे मेषे'' इति मेदिन्युक्तेः । वृष्णयः पांडवा ऋषभाः प्रिया यस्य स तथा । ''प्रिये श्रेष्ठे वृषेर्षभः'' इत्यभिधानात् । भूमिद्रोहोऽत्र तदुपरि पापाचरणमेव तद्वन्तो राजानः कंसाद्यास्तेषां वंशस्य दहनो नाशकः । एवमपि दुष्टराजवंशदाहकत्वेपि अक्षीणप्रभावोऽप्राप्तश्रमः । प्राप्तं कामधेनुहेतुकं गव्यामिंद्रत्वरूपमैश्वर्यं येन । वस्तुतस्तु गोभिर्वेदांतवाक्यैर्विद्यते उपलभ्यत इति गोविंदः । तथा च तदनभिज्ञाहं न त्वां ज्ञातुं समर्थास्मीति भावः । त्वं भक्तजनक्लेशकर्षकोपि सामान्यतः मत्पुत्रस्यार्जुनस्य तु विशेषत इत्याह– कृष्णसखेति । न केवलमर्जुन एव तव प्रियोपि तु यदवोऽपीत्याह–वृष्ण्यर्षभेति । तत्प्रियत्वं हि तद्विरोधिनृपनाशेनैवाक्तेत्याह–अवनिध्रुग्राजन्यवंशदहनेति । तैरेकीभूयापि त्वं जेतुं न शक्य इत्याह–अनपवर्गवीर्येति । भक्तानुग्रहार्थमकर्तव्यमपि त्वं करोष्येवेत्याह–गोविंदेति । गोचारणरूपमतिनिकृष्टमपि कर्म त्वयांगीकृतं श्रीनंदयशोदानुग्रहायेति भावः । वस्तुतस्तवावतारो गोब्राह्मणामरदुःखनिवृत्त्यर्थमेव नापि तु सर्वजनदुःखहरणार्थमेव । गवादित्रिभी रक्षितैः सर्वे रक्षिताः स्युस्तथाहि–गवां ब्राह्मणानाञ्च हविर्मंत्राधारत्वेन तद्रक्षया यज्ञसिद्धेर्देवा अपि रक्षितास्स्युस्ते च सम्यग्वृष्ट्यादिना विश्वमखिलमेव रक्षंतीति ''देवान्भावयतानेन ते देवा भावयंतु वः । पर

सूत उवाच ॥ पृथयेत्थं कलपदैः परिणूताखिलोदयः ॥ मंदं जहास वैकुंठो मोहयन्निव मायया ॥४४॥ तां बाढमित्युपामंत्र्य प्रविश्य गजसाह्वयम् ॥ स्त्रियश्च स्वपुरं यास्यन्प्रेम्णा राज्ञा निवारितः ॥ ४५ ॥ व्यासाद्यैरीश्वरेहाज्ञैः कृष्णेनाद्भुतकर्मणा ॥ प्रबोधितोऽपीतिहासैर्नाबुध्यत शुचार्पितः ॥ ॥ ४६ ॥ आह राजा धर्मसुतश्चिंतयन्सुहृदां वधम् ॥ प्राकृतेनात्मना विप्राः स्नेहमोहवशंगतः ॥ ४७ ॥

स्तेषां वंशस्य दहन । एवमप्यनपवर्गवीर्याक्षीणप्रभाव । गोविंद प्राप्तकामधेन्वैश्वर्य । गोद्विजसुराणामार्तिहरोऽवतारो यस्येति ॥ ४३ ॥ कलानि मधुराणि पदानि येषु तैर्वाक्यैः परिणूतः स्तुतोऽखिरुमुउदयो महिमा यस्य सः । णुस्तुतावित्यस्मात् । परिणुतेति वक्तव्ये दीर्घश्छंदोऽनुरोधेन । मंदमीषत् । तस्य हास एव माया । वक्ष्यति हि । 'हासो जनोन्मादकरी च माया' इति ॥ ४४ ॥ त्वयि मेऽनन्यविषया मतिरिरिति यत्प्रार्थितं तद्बाढमित्यंगीकृत्य रथस्थानाद्गजसाह्वयमागत्य पश्चात्तां चान्याश्च सुभद्राप्रमुखाः स्त्रिय उपामंत्र्यानुज्ञाप्य स्वपुरं यास्यन् राज्ञा युधिष्ठिरेण प्रेम्णात्रैव किंचित्कालं निवसेति संप्रार्थ्य निवारितः ॥ ४५ ॥ अथ भीष्मनिर्याणोत्सवं वक्तुमुपोद्घातकथां प्रस्तौति । व्यासाद्यैः प्रबोधितोऽपि शुचा व्याप्तः सन्नाबुद्ध्यत विवेकं न प्राप । कुतः । ईश्वरेहाया अज्ञैः स्वभक्तभीष्मनिर्याणमहोत्सवाय राज्ञा सह कुरुक्षेत्रं गंतव्यं तत्र तन्मुखेनैवायं प्रबोधनीय इतीश्वराभिप्रायः कार्यद्वयविधायकस्तमजानाद्भिरित्यर्थः । श्रीकृष्णेनापि प्रबोधितो नाबुध्यत । अत्र हेतुः । अद्भुतकर्मणेति । यथा कुरुपांडवसंधानार्थं गतेऽपि यथोचितमेव वदन्नपि विग्रहमेव दृढी कृतवानेवमत्रापि प्रबोधयन्नबोधमेव दृढी चकारेत्यर्थः ॥ ४६ ॥ अवबोधमेव प्रपंचयति । आहेति षड्भिः । प्राकृतेनाविवेकव्याप्ते

स्परं भावयंतः श्रेयः परमवाप्स्यथ॥'' इति श्रीगीतोक्तेः।एतेऽधुना दुःखिन इति ज्ञाने तवान्यापेक्षैव नेत्याह–योगेश्वरेति।ननु योगेश्वराणामन्यक्लेशापहरणावकाश एव नास्ति''मौनं चरंति मुनयो न परार्थनिष्ठाः' इति प्रह्लादोक्ते स्तत्राह–अखिलगुरो इति। सर्वहितकर्तुस्तव न ह्यन्ययोगेश्वरसाम्यमिति । नन्वखिलहितोपदेष्टुरपि सामर्थ्याभावे न किञ्चित्तेन कर्तुं शक्यत इति चेत्तत्राह–हे भगवन्निति। परमैश्वर्ययुक्तस्य सर्वेश्वरस्य तव न किमप्यशक्यमिति भावः । अहं तु सर्वथा तव तत्त्वमजानाना केवलं नमस्करोम्येवेत्याह–नमस्त इति॥४३॥ ''णू स्तवने'' इति तौदादिकस्य नुवतेर्दीर्घोतत्त्वात्तस्यैवायं प्रयोग इति ध्येयम् । स्वामिचरणानामार्षत्वव्याख्यानं प्रयास एव । हासो जनोन्मादकरीत्यस्य विराड्गतत्वमेवातो मायया कृपया मोहयन् । इवशब्दो वाक्यालंकारे । ''माया दंभे कृपायां च'' इत्यभिधानात् । विश्वनाथस्तु माययेव मोहयन्न तु मायया किं तु प्रेम्णैवेत्यर्थमाह॥४४॥अत्र राज्ञःप्रम्णेतिवे वशकरत्वं व्यंजितम्॥४५॥उपोद्घातकथां प्रस्तावविशेषकारिणीं कथाम्।वर्णनीयमर्थं मनसि निधाय तदर्थमर्थांतरकल्पनमुपोद्घातः।तत्र कुरुक्षेत्रे तन्मुखेन भीष्मास्येन। इत्यर्थ इति। ''न ह्यस्य कर्हिचिद्राजन्पुमान्वेद विधित्सितम्। यद्विजिज्ञासया युक्ता मुह्यंते कवयोऽपि हि॥''इत्युक्तेः।तत्राबोधे।इत्यर्थ इति।तस्य विचित्रानंतशक्तित्वात्तत्कथनाभिप्रायो दुर्ज्ञेय इति भावः।अत्र विश्वनाथः यद्यहमिदानीमिहैव स्थितोऽभूवं तर्ह्यासन्नमृत्युकालं मद्दर्शनं विना मर्त्तुमनिच्छंतं भीष्मं स्वभक्तमात्मानं सपरिकरमेव संदर्श्य सुखयामि।लोके तदुत्कर्षं ख्यापयितुं तन्मुखेनैव राजानं च प्रबोधयामिति भगवदभिप्रायं व्यंजयन्नाह।ईश्वरस्य श्रीकृष्णस्येहाया उक्तलक्षणाभिप्रायस्याज्ञैर्विज्ञैर्वा। अद्भुतकर्मणेति। इदमस्याद्भुतं कर्म यत्स्वयमेवास्य हृदि प्रविश्याविवेकमुत्थापितवान् । बहिश्च स्वकर्तृकेण व्यासादिकर्तृकेणापि प्रबोधेनाबोधमेव दृढीचकार। तेन च भीष्ममुखोदितेन तत्त्वेन तं प्रबोध्य व्यासादिभ्योऽपि मत्तोपि मदेकांतभक्तो भीष्म एवातिशयेन धर्मज्ञानतत्त्वज्ञ इति लोके विख्यापयामास। किञ्च युधिष्ठिरस्य तु ततोपि प्रेमाधिक्यादाधिक्यं यत्तदनुरोधेनैव द्वारकामगंच्छंस्तत्र स्थितः। तत एव तन्निकटं गत्वा तथा चक्रे इति विवेचनीयम्॥४६॥ वस्तुतस्तु तस्यात्मा ह्यप्राकृत

अहो मे पश्यताज्ञानं हृदि रूढं दुरात्मनः ॥ पारक्यस्यैव देहस्य बह्व्यो मेऽक्षौहिणीर्हताः ॥ ४८ ॥ बालद्विजसुहृन्मित्रपितृभ्रातृगुरुद्रुहः ॥ न मे स्यान्निरयान्मोक्षो ह्यपि वर्षायुतायुतैः ॥ ४९ ॥ नैनो राज्ञः प्रजाभर्तुर्धर्मयुद्धे वधो द्विषाम् ॥ इति मे न तु बोधाय कल्पते शासनं वचः ॥ ५० ॥ स्त्रीणां मद्धतबंधूनां द्रोहो योऽसाविहोत्थितः ॥ कर्मभिर्गृहमेधीयैर्नाहं कल्पो व्यपोहितुम् ॥ ५१ ॥ यथा पंकेन पंकांभः सुरया वा सुराकृतम् ॥ भूतहत्यां तथैवैकां न यज्ञैर्मार्ष्टुमर्हति ॥ ५२ ॥ इति श्रीमद्भा० म० प्र० कुंतीस्तुतियुधिष्ठिरानुतापो नामाष्टमोऽध्यायः ॥ ८ ॥

नात्मना चित्तेन हे विप्राः ॥ ४७ ॥ पारक्यस्य श्वसृगालाद्याहारस्य देहस्यार्थे । मे मया । अक्षौहिणीरक्षौहिण्यः । अक्षौहिणीप्रमाणं तु व्यासेनोक्तम् । "अक्षौहिणी प्रसंख्याता रथानां द्विजसत्तमाः । संख्यागणनतत्त्वज्ञैः सहस्राण्येकविंशतिः । शतान्युपरि चैवाष्टौ तथा भूयश्च सप्ततिः । गजानां च प्रसंख्यानमेतदेव प्रकीर्तितम् । ज्ञेयं शतसहस्रं तु सहस्राणि नवैव तु । नराणामपि पंचाशच्छतानि त्रीणि चैव हि । पंचषष्टिसहस्राणि तथाश्वानां शतानि च । दशोत्तराणि षट् प्राहुः संख्यातत्त्वविदो जनाः । एतामक्षौहिणीं प्राहुर्यथावदिह संख्यया" इति ॥ ४८ ॥ सुहृदः संबंधिनः । मित्राणि सखायः । पितरः पितृव्याः ॥ ४९ ॥ स्मृत्याद्यनुशासनाद्धर्मयुद्धे न दोष इति चेत्तत्राह । नैनो राज्ञ इति । द्विषां वध एनः पापं न भवतीति यच्छासनं शिक्षारूपं वचः कुतो न कल्पते यतस्तद्वचः प्रजाभर्तुरेव । अयं भावः । स्वप्रजानामन्यतो बाधे प्रसक्ते तद्वधोऽनुज्ञातः । दुर्योधनेन तु प्रजायां पाल्यमानायां मया केवलं राज्यलोभेन हतत्वात्पापमेवेदमिति ॥ ५० ॥ किं च युद्धे पुंसां वधो भवतु नाम धर्मः । स्त्रीणां तु मया हता बंधवो यासां तासां योऽसौ द्रोहोऽनुद्दिष्टोऽप्युत्थितस्तं व्यपोहितुमपाकर्तुं कल्पः समर्थो नाहं गृहमेधीयैर्गृहाश्रमविहितैः ॥ ५१ ॥ ननु "सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद" इति श्रुतेः पापमश्वमेधेन नश्येदेवेत्याशंक्याविवेकविजृंभितं हेतुवादमाश्रित्य निराकरोति । यथेति । यथा घनपंकेन पंकांभो न मृज्यते यथा वा सुरालेशकृतमपावित्र्यं बह्व्या सुरया न मृज्यते तथैव भूतहत्यामेकां प्रमादतो जातां बुद्धिपूर्वहिंसाप्रायैर्यज्ञैर्मार्ष्टुं शोधयितुं नार्हतीति ॥ ५२ ॥ इति श्रीभा० म० प्रथमस्कंधे टीकायामष्टमोऽध्यायः ॥ ८ ॥ ॥ युधिष्ठिराय भीष्मेण सर्वधर्मनिरूपणम् ॥ कृष्णस्तुतिश्च मुक्तिश्च नवमे तस्य वर्ण्यते ॥ १ ॥

एवेति । तदपि प्राकृतत्वारोपो भगवदिच्छयोक्तप्रयोजनार्थैवेति ज्ञेयम् । हे विप्रा इति । यथा विप्रा अपि कर्म कृत्वातिसाहसेन पश्चाच्छोचन्त्यहो किमस्माभिः कृतं पुरैवैतन्न विचारितं तथा राजापि शोकवानभूदिति भावः ॥ ४७ ॥ व्यासेनोक्तं महाभारते ॥ २१८७० रथाः २१८७० गजाः ६५६१० अश्वाः १०९३५० पदातयः सर्वमेकीकृत्य २१८७०० अक्षौहिणी भवति इति विवेकः ॥ ४८ ॥ बाला अभिमन्युलक्ष्मणादयः । द्विजा द्रोणादयः सुहृदो धृष्टद्युम्नादयः । मित्राणि विराटप्रभृतीनि पितरो भूरिश्रवःप्रभृतयः । भ्रातरो दुर्योधनादयः । गुरवो द्रुपदादयः । एतान्द्रोहितवानिति बालद्विजसुहृन्मित्रभ्रातृगुरुध्रुक् तस्य : तथा निरयान्नरकात् अयुतायुतैः कोटिभिरित्यर्थः ॥ ४९ ॥ अत्राशयमाह-अयम्भाव इति ॥ ५० ॥ तत्पापस्य प्रायश्चित्ताभावमाह-किञ्चेति । अनुद्दिष्टः शास्त्रेणानुदितोपि ॥ ५१ ॥ अत्राक्षिपति-नन्विति । यः पुरुषः । ऊचेति निपातौ । उ वितर्के च । पुनरेनमात्मानं वेद सोपि सर्वपाप्मानं तरतीति श्रुतिभागार्थः । हेतुवादं नास्तिकताम् "नास्तिक्ये कारणोक्तौ च हे तुवादः प्रकीर्त्तितः" इति निरुक्तिः । यद्वा ज्ञानपक्षमाश्रित्यैव युधिष्ठिरेण यज्ञो निंदितो न त्वकर्त्तव्यबुद्ध्या, 'ब्रह्मार्पणं ब्रह्महविः" इत्यादौ ब्रह्मार्पणबुद्ध्या कर्त्तव्यत्वेन विहितत्वात् । "कर्मणा ज्ञानमाप्नोति" इति श्रुतेः ॥ ५२ ॥ इति श्रीभागवतभावार्थदीपिकाप्रकाशे प्रथमस्कन्धेऽष्टमोध्यायः ॥ ८ ॥

सूत उवाच ॥ इति भीतः प्रजाद्रोहात्सर्वधर्मविवित्सया ॥ ततो विनशनं प्रागाद्यत्र देवव्रतोऽपतत् ॥ १ ॥ तदा ते भ्रातरः सर्वे सदश्वैः स्वर्णभूषितैः ॥ अन्वगच्छन्रथैर्विप्रा व्यासधौम्यादयस्तथा ॥ २ ॥ भगवानपि विप्रर्षे रथेन सधनंजयः ॥ स तैर्व्यरोचत नृपः कुबेर इव गुह्यकैः ॥३॥ दृष्ट्वा निपतितं भूमौ दिवश्च्युतमिवामरम् ॥ प्रणेमुः पांडवा भीष्मं सानुगाः सह चक्रिणा ॥ ४ ॥ तत्र ब्रह्मर्षयः सर्वे देवर्षयश्च सत्तम ॥ राजर्षयश्च तत्रासन्द्रष्टुं भरतपुंगवम् ॥ ५ ॥ पर्वतो नारदो धौम्यो भगवान्बादरायणः ॥ बृहदश्वो भरद्वाजः सशिष्यो रेणुकासुतः ॥ ६ ॥ वसिष्ठ इंद्रप्रमदस्त्रितो गृत्समदोऽसितः ॥ कक्षीवान्गौतमोऽत्रिश्च कौशिकोऽथ सुदर्शनः ॥ ७ ॥ अन्ये च मुनयो ब्रह्मन्ब्रह्मरातादयोऽमलाः ॥ शिष्यैरुपेता आजग्मुः कश्यपांगिरसादयः ॥८॥ तान्समेतान्महाभागानुपलभ्य वसूत्तमः ॥ पूजयामास धर्मज्ञो देशकालविभागवित् ॥ ९ ॥

यदर्थं तस्याविवेकः श्रीकृष्णेन संवर्धितस्तद्दर्शयति । इतीति । सर्वेषां धर्माणां विवित्सया वेदितुमिच्छया । विनशनं कुरुक्षेत्रं देवव्रतो भीष्मः ॥ १ ॥ संतः श्रेष्ठा अश्वा येषु तै रथैः ॥ २ ॥ ३ ॥ सानुगाः परिवारसहिताः ॥ ४ ॥ तत्र तदा तत्रासन् । तत्क्षणमेवागता इत्यर्थः । भरतपुंगवं भीष्मम् ॥ ५ ॥ रेणुकासुतः परशुरामः ॥ ॥ ६ ॥ ७ ॥ ब्रह्मरातः शुकः आंगिरसो बृहस्पतिः ॥ ८ ॥ वसूत्तमो भीष्मः देशकालविभागविदित्युत्थातुमशक्यत्वाच्छयान एव मनसा वाचा च पूजयामासे

तस्य भीष्मस्य ( १ ) इत्युक्तरीत्या ततो हस्तिनापुरतः । विशेषेण नश्यंति पापान्यत्रेति विनशनम् । देवानामिव व्रतं सत्यसंभाषणादिनियमो देवस्य श्रीकृष्णस्येव व्रतं ब्रह्मचर्यं यस्येति देवव्रतः । "आत्मन्यवरुद्धसौरतः" इति श्रीदशमे वक्ष्यमाणत्वात् । "यद्यहं ब्रह्मचर्येण न भग्नो भूतले सदा । तेनैव सत्यमानेन पार्थस्यायातु वै शिरः" इति जैमिनीयाश्वमेधोक्तेश्च । कृष्णब्रह्मचर्यस्य प्रसिद्धत्वमस्तीति । यत्र विनशने । अयं जीवः । यद्ययं तवाविवेको नापयाति तदा सर्वधर्मतत्त्वज्ञं भीष्ममेव पृच्छेति युक्तिश्श्रीकृष्णोक्ता सर्वसंमताभूत्तदा राजा तत्रैव ययाविति ॥ १ ॥ आदिना कश्यपांगिरसादिग्रहः ॥ २ ॥ हे विप्रर्षे इति । यथा भवान्सर्वतत्त्वज्ञोऽपि व्यासं विहाय मद्यशोवृद्धये मां पृच्छति तथा राजापि श्रीकृष्णं विहाय भीष्मं प्रष्टुं श्रीकृष्णेच्छया ययाविति भावः । स युधिष्ठिरः । गुह्यकैर्यक्षैः ॥ ३ ॥ अमरमिव द्योतमानम् । चक्रिणा कृष्णेन । इत्यर्थ इति । अत्रासतेर्गत्यर्थस्य रूपमिदम् ॥ "असगतिदीप्त्यादानेषु" इति धातुपाठात् ॥ ४ ॥ तत्र तदा कर्मज्ञानोभयप्रधाना ब्राह्मणा ब्रह्मर्षयः कर्मगौणज्ञानप्रधानास्तु देवर्षयः तपश्चर्यापुरस्सरं यथाशास्त्रं प्रजावितारो राजर्षय इति विवेकः । " कर्मज्ञानोभयपरा विप्रा ब्रह्मर्षयः स्मृताः । कर्मगौणा ज्ञानपरा विप्रा देवर्षयः स्मृताः ॥ तपश्चर्यां पुरस्कृत्य यथाशास्त्रं प्रजावनम् । ये क्षत्रियाः प्रकुर्वंति ते तु राजर्षयः स्मृताः" इति संहितोक्तेः पुंसि परमेश्वरे गौर्दृष्टिर्यस्य स पुंगवः । इदं समासांतटचि रूपम् । "पुमाञ्जीवे परेशे च ब्राह्मणे पालकेपि च" इति निरुक्तिः । भरतेषु पुंगवो हरिभक्त इत्यर्थः । "दिग्दृष्टिदीधितिस्वर्गवज्रवाग्बाणवारिषु । भूमौ पशौ च गोशब्दो विद्वद्भिः परिकीर्तितः" इत्यनेकार्थमञ्जरी ॥ ५ ॥ भगवान् "व्यासो नारायणः स्वयम्" इत्युक्तेः ॥ ६ ॥ कौशिको विश्वामित्रः ॥७॥ हे ब्रह्मन्निति । त्वमपि त्रिकालज्ञत्वाज्जानास्येवेति भावः ॥ ८ ॥ महाभागान्महानुभावान् । उपलभ्य दृष्ट्वा । मनसा प्रतिगम्य वा देशकालयोर्विभागमौचित्यं वेत्तीति तथा । प्रत्युत्थानाभिवंदनादिपूजायामशक्तत्वान्मानसीं वाचकीमांजलिकीं वा पूजां कृतवानित्यर्थः । आपत्संपद्धर्मौ जानातीति धर्मज्ञः । यद्वा "धर्मो धर्मविदुत्तमः" इति सहस्रनामसु धर्मोपि विष्णुवाचकस्तं सर्वदेहेषु स्थितं वा जानातीति धर्मज्ञः । भीष्मस्य वसूत्तमत्वं कथमिति चेत्तत्रेयं कथानुसंधेया श्रीमन्महाभारतीया । कदाचिन्महाभिषाख्यो राजा तपोयज्ञादिप्रभावेण ब्रह्मलोकं गतस्तत्र ब्रह्मसेवार्थमागतां स्त्रीरूपां गंगां दृष्ट्वा कामवशोऽभूत् । सापि तं दृष्ट्वा तथाविधैव जाता। तौ तादृशौ दृष्ट्वा ब्रह्मा त्वं मनुष्यो नृपो भव । त्वमपि मानुषी भूत्वास्य भार्या

कृष्णं च तत्प्रभावज्ञ आसीनं जगदीश्वरम् ॥ हृदिस्थं पूजयामास माययोपात्तविग्रहम् ॥१०॥ पांडुपुत्रानुपासीनान्प्रश्रयप्रेमसंगतान् ॥ अभ्याचष्टा ऽनुरागास्रैरंधीभूतेन चक्षुषा ॥ ११ ॥ अहो कष्टमहोऽन्याय्यं यद्यूयं धर्मनंदनाः ॥ जीवितुं नार्हत क्लिष्टं विप्रधर्माच्युताश्रयाः ॥ १२ ॥

त्यभिप्रायः ॥ ९ ॥ हृदिस्थं संतं पुरतश्चासीनं पूजयामास ॥ १० ॥ उपासीनान् समीप उपविष्टान् प्रश्रयो विनयः प्रेम स्नेहस्ताभ्यां संगतानुपसन्नान् । पाठांतरे ताभ्यामवनतान् । अभ्याचष्टाभ्यभाषत । अनुरागास्रैः स्नेहाश्रुभिरंधीभूतेन चक्षुषोपलक्षितो ददर्शेति वा ॥ ११ ॥ अभिभाषणमाह । अहो इत्येकादशभिः ।

भविष्यसीति शशाप । स च शप्तः प्रतीपं पितृत्वेन संचित्य तस्थौ । तदवसरेऽष्टवसवो वसिष्ठाश्रमं जग्मुस्तेषु द्यौर्नामा च पत्न्या पृष्टो धेनुं दृष्ट्वा कस्येयमिति तच्छ्रुत्वा स च तामाह । नंदिनीयं वसिष्ठस्य धेनुरस्या दुग्ध पानेनायुतायुः स्थिरयौवनो भवेदिति । सा चेदं श्रुत्वाह । उशीनरनृपपुत्री मत्प्रियसखी तदर्थं धेनुमाहरेति । स चान्यैर्वसुभिः संभूय तां गां जहार ततो वनादागत्य वसिष्ठेन गोहरणाद्वसवो मनुष्या भवतेति शप्ताः येन हृता स चिरमन्येऽल्पकालमिति । स्त्रीहीनश्च स्त्र्याज्ञया हरणात् । प्रसादितो मुनिराह । ते च मार्गे गंगां ब्रह्मलोकादागतां तद्वृत्तं श्रुत्वा त्वं मानुषी भूत्वाऽस्माञ्जनय मातरिति जाताञ्जातान्स्वप्रवाहे क्षिपास्मानिति चोचुः । किञ्च स महाभिषः प्रतीपाद्राज्ञः शंतनुनाम्ना जातोऽभूत् । स च पित्रेत्थमुक्तः । पुत्र पुराहं गंगातीरं गत्वा सूर्यं सेवितवानस्मि । तदा काचित्सुंदरी जलान्निःसृत्य मद्दक्षिण ऊरावुपविष्टा स मयोक्ता किमर्थमागता । तयोक्तं पत्यर्थमिति त्वं मे पतिर्भवेति । तच्छ्रुत्वा मयोक्तं नाहं परस्त्रीगामी । किं च मद्दक्षिणांगसेवनात्त्वं मदपत्यपत्नी भविष्यसीत्यतो हे पुत्र तत्र गत्वा तां भज । सा का त्वमिति न प्रष्टव्येत्युक्त्वा पुत्राय राज्यं दत्वा प्रतीपो वनं जगा मेति । अथ कदाचिच्छंतनुर्मृगयां चरन्गंगातटस्थामतीव सुंदरीं कांचिन्नारीं ददर्श । सा च तं महाभिषं मत्वा स्मितादिभिर्मोहयामास । स च राजा तां न जानाति गंगेयमिति । सा च तमाह। प्रतीपतनयं त्वामहं जानामि मत्कृतं शुभमशुभं वा यदि नो वारयिष्यसि तदा त्वां वरिष्यामीति । स च तथेत्याह । सा च काले नृपाद्गर्भं दधार । ततः सा जातमात्रं बालं गंगांभसि चिक्षेप ।एवं सप्त चिक्षेप । शंतनुर्विचारयामास । यद्येनां वारयिष्ये तदा मां त्यक्त्वा गमिष्यतीयम् । अधुना त्वष्टमो गर्भो जातस्तं कथं जीवयामीति विचार्योवाचाहं तव दासोस्मि । सप्त सुतास्तु त्वया हता एकं वंशरक्षार्थं देहि । इत्युक्त्वापि यदा तं तत्रैव क्षेप्तुमियेष । तदा स उवाच । पापिष्ठे नरकान्न बिभेषि । मत्पुत्रं दत्वा गच्छ वा तिष्ठ यथेच्छम् । सोवाच । समयलंघनादहं तु गच्छामि । तव पुत्रं वने पालयिष्येऽहं तु गंगा देवकार्यार्थं मनुष्ययोनिं प्राप्तास्मि । येंऽभसि क्षिप्ता मया ते वसिष्ठशप्ता वसव एव । तत्प्रार्थनया मानुषीभावं गतास्मीति । मातरं विना पुत्रजीवनं दुर्घटमत एनं प्राप्तयौवनं तत्रैवागतं त्वां दास्यामि । यत्राहं त्वया वृता इत्युक्त्वा सा गता । राजा तच्चिंतया दुःखं लेभे। कदाचिन्मृगयां गतस्तत्र सरित्तटे धनुरादाय क्रीडन्तं तमेव बालं शंतनुर्नृपः पप्रच्छ । कस्यात्मजोसि । स न किंचिदुवाच । तदा राजा स्वपुत्रोयमिति निश्चित्य स्थितः । गंगा च तस्मै दर्शनं दत्वोवाच । वसिष्ठाश्रमस्थेनानेन त्वदात्मजेन धनुर्वेदो जामदग्न्यादधीतस्तदधुनेमं गृहीत्वा पुरंगच्छेति । ततः स गजाह्वयं गत्वादैवज्ञमाहूय तं यौवराज्ये स्थापयामासेतीत्थं भीष्मो वसूत्तमो ज्ञेयः ॥ ९ ॥ कृष्णमिति । सदा स्वेषां भक्तानां हृदिस्थं हृदयस्थमपि मायया कृपया उप नेत्रसमीपे आत्त आनीतो विग्रहो येन तम् । यद्वा माययोपात्तो युधिष्ठिरेण साकं प्रबोधाप्रबोधहेतुको विग्रहो विवादो येन तम् ॥ "विग्रहः कायविस्तारे विभागे ना रणेऽस्त्रियाम् । विवादे च विरोधे च हलेऽपि परिकीर्तितः" इत्यभिधानात् । तीर्थस्तु मायया स्वेच्छयोपात्तः पितृत्वेन गृहीतो वसुदेवदेहो येन तमित्याह ॥ १० ॥ पाठांतरे प्रश्रयप्रेमसन्नतानिति पाठे चक्षिङो दर्शनार्थतामाश्रित्याह-ददर्शेति वेति ॥ ११ ॥ हे धर्मनंदना इति बहुत्वं प्रधानापेक्षम् । यद्वा छत्रिणो यांतीतिवत् । अहो यो धर्ममाचरणेन नंदयति समर्द्धयति तस्यापि चेत्कष्टं तर्ह्यन्याय्यमेवेति भावः । विप्रादिष्वेकोपि सुखजीवनायालं "विप्राणां सेवनं लोके विपद्ध्वान्तसहस्रपात्" ।

संस्थितेऽतिरथे पांडौ पृथा बालप्रजा वधूः ॥ युष्मत्कृते बहून्क्लेशान्प्राप्ता तोकवती मुहुः ॥ १३ ॥ सर्वं कालकृतं मन्ये भवतां च यदप्रियम् ॥ सपालो यद्वशे लोको वायोरिव घनावलिः ॥ १४ ॥ यत्र धर्मसुतो राजा गदापाणिर्वृकोदरः ॥ कृष्णोऽस्त्री गांडिवं चापं सुहृत्कृष्णस्ततो विपत् ॥ १५ ॥ न ह्यस्य कर्हिचिद्राजन्पुमान्वेद विधित्सितम् ॥ यद्विजिज्ञासया युक्ता मुह्यंते कवयोऽपि हि ॥ १६ ॥

हे धर्मनंदनाः क्लिष्टं यथा भवत्येवं जीवितुं नार्हथ यूयमिति यदेतदहो कष्टं जुगुप्सितम् । अहो अन्याय्यं चैतत् । यतो यूयं विप्रा धर्मोऽच्युतश्चाश्रयो येषां ते ॥१२॥ किं च पांडौ संस्थिते मृते बालाः प्रजाः पुत्रा यस्याः सा । वधूश्चेति दैन्यं दर्शितम् । तोकान्यपत्यानि तद्वती । अपत्यैः सह क्लेशान् प्राप्तेत्यर्थः ॥ १३ ॥ कालकृतत्वेन शोकं वारयति । सर्वमिति द्वाभ्याम् । भवतामपि । यद्वशे यस्य वशवर्ती ॥ १४ ॥ अहो दुर्घटघटनापटुः काल इत्याह । यत्रेति । कृष्णोऽर्जुनः । अस्त्री धन्वी । ततस्तत्रापि विपत् । पुण्यशारीरबलास्त्रनैपुणशस्त्रदेवसंपत्तावपि दुर्वारा विपदित्यर्थः ॥ १५ ॥ ननु कृष्णं कथं कालोऽतिक्रमेदित्यपेक्षायामाह । न ह्यस्य श्रीकृष्णस्येत्यं

''धर्मो रक्षति कान्तारे यत्र कोऽपि न रक्षिता'' ।''हरिस्मृतिः सर्वविपद्विमोक्षणम्''इत्यादिवाक्येभ्यः । किमुत संहिता एतेऽत उक्तमहो कष्टमहोऽन्याय्यमित्याश्चर्यादप्याश्चर्यमिति द्योतनाय कष्टान्याय्योभयोपादानम् । अत्र प्रगृह्यसंज्ञाभावस्त्वार्ष एव । वस्तुतस्तु भूभारावतारायावतीर्णानां पांडवानामासुरजननिधनेन वनवासादिष्वपि नित्यसुखित्वान्नास्ति दुःखमिति ज्ञेयम् ॥ १२ ॥ अतिरथे महारथसहस्रजेतारि संस्थिते स्वर्गं गतवति सत्य तोकवती पुत्ररहिता यथा बहुक्लेशवर्ता भवति तथा बालप्रजा युष्मन्माता पृथा पुत्रवत्यपि युष्मत्कृते युष्मत्पोषणपालनार्थाय बहून्क्लेशान्प्राप्तेति तीर्थः । स्वामिचरणातु तन्मातृक्लेशं स्मृत्वाह-किंचेति । इत्यर्थ इति । बालप्रजत्वदशांयामेकाकिन्येव क्लेशान्प्राप्ता युष्माकं प्रौढवयस्त्वे तु तोकवती पुत्रैर्युष्माभिस्सहितापि कष्टान्प्राप्तेति भावः ॥ १३ ॥ ननु तर्हि कथमस्माकं क्लेशस्तत्र तत्कारणं प्राचीनार्वाचीनं किमपि पापमपश्यन्वक्तुमसमर्थ एव लोकोक्तिरीत्यैवाह-सर्वमिति । ननु कालो हि प्रारब्धसुखदुःखभोगयोरेवाधिकरणमेवेति सहकारित्वादुपचारेणैव कालकृतं मन्ये इति ब्रूषे । प्रारब्धपापकृतमिति स्पष्टं कथं न वदसीत्यत आह-भवतां चेति । युधिष्ठिरो हि साक्षाद्धर्मावतार इति प्रसिद्ध एव । धर्मस्यापि प्रारब्धं पापमस्यास्तीति चेन्मंतव्यं तर्हि कथं धर्मस्याधर्मत्वमतोऽतिप्रबलोऽतिदुर्निर्वारो दुस्तर्कः । काल एव कारणमित्याह-सपाल इति । क्वचित्सकाल इत्यपि पाठः । लोक इंद्रादिसहितश्चतुर्दशभुवनात्मकः ॥१४॥ ननु''न कर्हिचिन्मत्पराः शांतरूपे नंक्ष्यंति नो निमिषो लेढि हेतिः । येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टम् ॥'' इति श्रीकपिलदेवोक्तेः । कृष्णे दास्यसख्यवात्सल्यवतः पाडवान्कथं कालोऽतिक्रमेतेत्यतोऽतिविस्मयान्वितः कारणं विनैव कर्मोत्पत्तिरूपं विभावनालंकारं भावयन्नाह-यत्रेति । राजा रंजकः सर्वेषां धर्मसुतत्वात् । यत्र च तस्य राज्ञः कनिष्ठः क्षितिभारायितदितिसुतशोणितदिग्धां गदां पाणौ बिभ्रत् भक्तिवशीकृतपरब्रह्मा वृकोदरः । वृकानतिक्रूरानप्युद्दृणाति विदारयति यः स भीमसेनः । वृकशब्दः उपलक्षणं येन विराटनगरे सिंहोऽपि युद्धे विदीर्ण इत्यर्थः । तथा यत्रेन्द्रावतारकृष्णार्जुनोऽस्त्री स्वीकृतद्रोणाखिलास्त्रविद्यः तस्य च करे रिपुपूयशोणितवमनकारिगांडिवाख्यं धनुर्येन शंकरोपि तोषितः सर्वसुपर्वाधिराजोऽनंतबलवीर्यादिगुणार्णवः श्रीमान्कृष्णो वासुदेवः सुहृदनिमित्तबंधुस्ततस्तत्रापि । इत्यर्थ इति । सर्वापेक्षितबलसत्वे पुनर्विपदहो कालमाहात्म्यं वर्णितुं न शक्यत इति भावः । ''विना कारणमुत्पत्तिः कार्यस्येति विभावना । अनध्ययनविद्वांसो निर्द्रव्याः परमेश्वराः'' इति वाग्भटः ॥१५॥ ननु ''योऽयं कालस्तस्य तेव्यक्तबंधो चेष्टामाहुः'' इत्युक्तेः कालस्य तच्चेष्टारूपत्वात्स कथं तमतिक्रमेतेत्याक्षिपति-नन्विति । तर्ह्यत्र किं निर्द्धारयामि । सामान्यतस्तावदयं सिद्धान्तः सर्ववादिसंमतो यत्कृष्णस्य चिकीर्षितमन्यथा कर्तुं समर्थस्तच्चिकीर्षितं किमित्यद्यापि कोपि न वेत्तीत्याह-नह्यस्येति । कर्हिचिदपि काले कोपि पुमान् ब्रह्मभवादिः कोपि न वेद । अहं को वराक इति भावः । ननु कोपि मा जानातु जिज्ञासा त्ववश्यमेव जायते । तत्र।

तस्मादिदं दैवतंत्रं व्यवस्य भरतर्षभ ॥ तस्यानुविहितोऽनाथा नाथ पाहि प्रजाः प्रभो ॥ १७ ॥ एष वै भगवान्साक्षादाद्यो नारायणः पुमान् ॥
मोहयन्मायया लोकं गूढश्चरति वृष्णिषु ॥ १८ ॥ अस्यानुभावं भगवान्वेद गुह्यतमं शिवः ॥ देवर्षिर्नारदः साक्षाद्भगवान्कपिलो नृप ॥१९॥ यं
मन्यसे मातुलेयं प्रियं मित्रं सुहृत्तमम् ॥ अकरोः सचिवं दूतं सौहृदादथ सारथिम् ॥ २० ॥

गुल्या निर्दिशति । विधित्सितं कर्तुमिष्टम् । यत् यस्य विधित्सितस्य जिज्ञासया ॥ १६ ॥ इदं सुखादि दैवतंत्रमीश्वराधीनं व्यवस्य निश्चित्य तस्येश्वरस्यानुविहितोऽनुवर्ती सन् । कर्तरि क्तः । हे नाथ कुलपरंपरागत स्वामिन् प्रभो अनाथा असमर्थाः प्रजाः पाहि ॥१७॥ अनुविधेयः परमेश्वरश्च श्रीकृष्ण एवेत्याह । एष एव भगवान्सर्वेश्वरः । यत आद्यः पुमान् । तच्च कुतः । यतो नारायणः साक्षात् ॥ १८ ॥ तदुपपादयति । अस्येति । अनुभावं प्रभावम् ॥ १९ ॥ त्वमज्ञानायमेवं मन्यसे । मातुलेयं देवक्याः

स्वासु दुःखदानमेव किं चिकीर्षितं सुखदानमेव वा उभयदानमेव वा । तत्राद्यं न । भक्तवात्सल्यगुणस्य लोपादनौचित्यात् । द्वितीयमपि न । अदृष्टत्वादेव । तृतीयमपि न । सौहार्दलोपापत्तेः । तर्हि जिज्ञासापि नैव कर्तुमुचितेति विनिर्णयन्नाह-यद्विजिज्ञासयेति । युक्ता विवेकिनोपि कवयः सर्वशास्त्रज्ञा अपि मोहमेव प्राप्नुवंति सिद्धांतालाभादिति भावः । अत्र भीष्मस्य महाविज्ञस्योक्तौ कवय इति मुह्यंतीति पदाभ्यां युधिष्ठिरादयोपि भगवद्भक्ताः प्रारब्धं भुंजत इति मतं परास्तम् । हे राजन्निति । यत्र ब्रह्मादीनां मोहस्तत्र राज्ञस्तव का वार्त्तेति भावः । संदर्भस्तु तेषामार्त्तिद्वारेण स्वस्मिन्नावेशार्थं तत्खण्डनजनितहर्षद्वारेण च स्वस्मिन्प्रेमवर्द्धनार्थं तथा विधित्सितमिति गूढोभिप्रायः ॥ १६ ॥ तस्मादुक्तदुर्ज्ञेयत्वहेतोः । किञ्च स्वभक्ताय तत्प्रदानादिकं दुर्ज्ञेयप्रयोजनकमित्यपि निश्चित्य हे नाथेति हे भरतर्षभेति हे प्रभो इति संबुद्धित्रयस्य स्वामित्वं कुलपरंपरागतं तव तत्कर्तुं समर्थे न त्याज्यमिति भावः ॥ १७ ॥ नन्वीश्वराधीनमिति तद्विधित्सितं तु न वेदेत्यादि कथं ब्रूषे । ईश्वरः संप्रति तव साक्षाद्वर्तत्येवेत्यत इमं कृष्णमेव दृष्ट्वा कथं सर्वं तत्त्वं न वेत्सीत्यत आह-एष इति । मायया मोहयन्निति पृष्टो हि भीष्मादपि किमहमतितत्त्वज्ञ इत्यादिवाचा वंचयन्वक्ष्यति । कथंचिद्वदन्नपि मोहयिष्यत्येवेत्यसावनुवर्त्तनीय एव । न तु जिज्ञासनीय इति भावः । संदर्भस्तु न च नरलीलादृष्ट्या साधारणदृष्टिरत्र कर्त्तव्येत्याह-एष इति । साक्षादेव स्वयं भगवान् यः खल्वाद्यः पुमान्महत्स्रष्टा सोप्ययमेव । यश्चाद्यो नारायणः परमव्योमाधिपतिः सोप्ययमेवेति । स्वामी तु अनुविधेयोऽनुवर्त्तनीयः । तत्रादिपुंस्त्वं चेत्याह ॥ १८ ॥ तत्रादिनारायणत्वम् । विश्वनाथस्तु अनुभावं भावबोधकं चेष्टाविशेषं शिवो वेद न तु विधित्सितं स्वरूपं प्रभावं चेत्यर्थः । तथाहि । रसशास्त्रज्ञाः । प्रथममनुभावं स्तंभस्वेदरोमांचादिकं वेद च तेन च स्थायिभावं च अनुभावस्य वैशिष्ट्यतारतम्याभ्यां स्थायिभावस्यापि वैशिष्ट्यतारतम्यं च । तथैव यशोदादिगोपीष्वस्य दामबन्धना दिरूपमर्जुनयुधिष्ठिरोग्रसेनादिषु सारथ्यदास्यादिरूपं च पारवश्यमनुभावं वेद तेन च तस्य । सर्वेश्वरस्य सर्वनियन्तुः । सर्वेश्वरस्यापि वशीकारकः कोऽपि पदार्थविशेषस्तत्रतत्र वर्त्तमानोऽस्यापि चित्तमभीक्ष्णं विद्रुतीकुर्वन्नध्यास्ते इत्यनुमिमीते च । स च नानाविशेषवान्स्वविषयाश्रययोश्चेतोविद्रावकः परस्परवशीकारकश्च प्रेमाभिधान एव परमपुरुषार्थचूडामणिः भक्तिस्नेहानुरागादिशब्दैरुच्यमानो भवति । किञ्च तत्त जनकत्वेन प्रतिसमयदृष्टेनास्य वशीकाराधिक्यमेव दृष्टान्तेन च प्रेमाधिक्यमनुमाय सिद्धसाधकभक्तेष्वेतत्कर्तृकमेव कष्टप्रदानं भक्तिवृद्ध्यर्थमेवेति सिद्धान्तं निश्चिनोति । शिवनारद एव कपिलदेव एवेति । अत एव द्रौपद्यादिषु कष्टाधिक्यात्प्रेमाधिक्यं च दृष्टं तथा "यस्याहमनुगृह्णामि हरिष्येतद्धनं शनैः । ततोधनं त्यजंत्यस्य स्वजना दुःखदुखितम्" इत्यादि श्रीमुखवाक्येन. च भक्तकष्टस्य हितैषिणा भगवतैव दीयमानत्वान्न कर्म बद्धत्वम् । किंचैतदपि न सार्वत्रिकं क्वचित्क्वचिदकष्टेनापि स्वभक्तभक्तिं वर्द्धयतीति विधित्सितं तु न कोपि वेदेत्युक्तम् । अनुभावं तु शिवनारदादिरेव वेद । अन्ये पुनर्मदा दामबन्धनादिकमप्यनुकरणत्वेन व्याचक्षाणा अनुभावमपि न विदुरिति ॥ १९ ॥ अस्यानुभावज्ञानसद्भाववतामपि भवतां संबन्धविशेषमयसर्वोच्छादकमाधुर्यज्ञानात्मकप्रेमविशेषेण वशीकारित्वं तु तैरपि दुर्लभमित्याह-यमिति । मातुलेयमिति । स्त्रीभ्यो ढक्सिद्ध्यर्थं

सर्वात्मनः समदृशो ह्यद्वयस्याऽनहंकृतेः ॥ तत्कृतं मतिवैषम्यं निरवद्यस्य न क्वचित् ॥ २१ ॥ तथाप्येकांतभक्तेषु पश्य भूपाऽनुकंपितम् ॥ यन्मेऽसूंस्त्यजतः साक्षात्कृष्णो दर्शनमागतः ॥ २२ ॥ भक्त्यावेश्य मनो यस्मिन्वाचा यन्नाम कीर्तयन् ॥ त्यजन्कलेवरं योगी मुच्यते कामकर्मभिः॥ ॥ २३ ॥ स देवदेवो भगवान्प्रतीक्षतां कलेवरं यावदिदं हिनोम्यहम् ॥ प्रसन्नहासारुणलोचनोल्लसन्मुखांबुजो ध्यानपथश्चतुर्भुजः ॥ २४ ॥ सूत उवाच ॥ युधिष्ठिरस्तदाकर्ण्य शयानं शरपंजरे ॥ अपृच्छद्विविधान्धर्मानृषीणामनुशृण्वताम् ॥२५॥ पुरुषस्वभावविहितान्यथावर्णं यथाऽऽश्रमम्॥ वैराग्यरागोपाधिभ्यामाम्नातोभयलक्षणान् ॥ २६ ॥

सुतम् । प्रियं प्रीतिविषयम् । मित्रं प्रीतिकर्तारम् । सुहृत्तममुपकारानपेक्ष्योपकारकं च । सौहृदाद्विश्वासात् । अकरोः कृतवानसि । सचिवं मंत्रिणम् ॥ २० ॥ नन्वीश्वरश्चेत्कथं नीचे सारथ्यादौ प्रवृत्तस्तत्राह । सर्वेति । तत्कृतं नीचोच्चकर्मकृतं मम योग्यमयोग्यमिति मतेर्वैषम्यं क्वचिदपि नास्ति । कुतः निरवद्यस्य रागादिशून्यस्य । तत्कुतोऽनहंकृतेः । तच्च कुतोऽद्वयस्य । तदपि कुतः समदृशः । तत्रापि हेतुः । सर्वस्यात्मनः । यथेष्टं वा हेतुहेतुमद्भावः ॥ २१ ॥ तथापि समत्वेऽपि । हे भूप । अनुकंपितमनुकंपाम् ॥ २२ ॥ इदानीं स्वदेहत्यागपर्यंतं श्रीकृष्णावस्थानं प्रार्थयते । भक्त्येति द्वाभ्याम् ॥२३॥ यावदिति विलंबं द्योतयति । अहं हिनोमि त्यजामीति स्वातंत्र्यम् । इदमित्यनात्मत्वेन ज्ञातम् । प्रसन्नहासेनारुणलोचनाभ्यां चोल्लसद्रुचिरं मुखांबुजं यस्य । ध्यानस्य पंथा विषयः । योऽन्यैश्चिंत्यते केवलं सोऽग्रतः स्थितः सन्मां प्रतीक्षतामित्यर्थः ॥ २४ ॥ तत्सानुकंपं वाक्यमाकर्ण्य ॥ २५ ॥ पुरुषस्वभावेन विहितान्नरजातिसाधारणान्वर्णयामासेति तृतीयेनान्वयः । यथावर्णं वर्णधर्मान् । यथाश्रममाश्रम

देवक्याः सुतमिति व्याख्यातमन्यथा मातुलस्यापत्यं मातुलायनिरित्येव स्यात् । सर्वेश्वरस्यापि युष्मत्साचिव्यदूत्यादिकं प्रेमवश्यत्वानुभाव इत्यर्थः । अत्र यामित्यस्यानुभावमित्यनेन पूर्वेणैवान्वयः ॥ २० ॥ अत्राक्षिपाति-नन्विति । तद्रागादिशून्यत्वं तच्चानहंकृतित्वं च तदपि अद्वयत्वमपि । तत्रापि समदृक्त्वेपि । संभवत्वाद्यथेष्टं वेत्याह । अत्र विश्वनाथः । ननु परमेश्वरस्य भक्तिवशीकृतत्वे दूत्यसारथ्यादिरपकर्ष एव तस्मिंश्च सति कथं प्रेमा परमेश्वरस्य सुखप्रद इत्यत आह-सर्वात्मन इति । निरवद्यस्य निर्दोषप्रेमवतोऽस्य कृष्णस्य तत्कृतं दूत्यादिकृतं मतिवैषम्यं न । अत्र हेतुः । सार्वकालिकं स्वतःसिद्धं महैश्वर्यमेवेत्याह-सर्वस्यात्मन इति । अर्जुनस्याप्यात्मा स एवेति स्वयमेव सारथी रथी चेत्यत एव समदृशः समं तुल्यमात्मानमेव सर्वत्र पश्यतः सर्वात्मत्वादेवाद्वयस्य द्वितीयाभावादेवानहंकृतेर्गर्वरहितस्य :। किं च महैश्वर्यहीनोप्यन्यः प्रेमी प्रेमत एव हेतोरात्मनो नीचकर्मोत्थमपकर्षं क्लेशञ्च दुःखत्वेन न मन्यते । अस्य तु महैश्वर्यादेवानन्दमात्रस्य कुतः प्रेमवतो दुःखं तस्माद्युष्माकमेवोत्कर्षो यत एतादृशोपि परमेश्वरो भवतां दूत्यादिकं करोतीत्यहो वशीकारकत्वं प्रेम्णा इति भावः ॥ २१ ॥ यद्यपि युष्मत्तुल्यो भवतुं न शक्नोमीति भावः । अनुकंपां पश्य ययाऽयमानंदमयसाक्षाद्ब्रह्मस्वरूपोप्येतादृशं बीभत्सितं मत्समीपस्थानं प्रस्थापित इत्ययमप्येकोऽनुभावोनुभूयतामिति भावः । हे भूपेति । अहो भूपे त्वयि त्वस्यानुकंपोचितैव । यतो मयि भूपत्वाभावेपि समदृक्त्वादेव सा कृतेति भावः ॥ २२ ॥ योगी समाहितांतःकरणः कामकर्मभिः कामनया कृतैः सारबंधहेतुभूतैः कर्मभिः ॥ २३ ॥ इत्यर्थ इति । प्रसन्नहासेत्यादिना तद्दर्शनबहुकालतार्थमेव शरीरत्यागे विलंबः कृत इति लभ्यते । तच्च शरीरांतरासौ मे कदा दर्शनं स्यादित्युत्कंठाविष्टत्वादिति गम्यत इति भावः । यद्वा प्रतीक्षतांक्षणमत्रैव तिष्ठतु । यावदहं किंचिद्विलंब्य चक्षुर्भ्यामाभ्यामेव सौंदर्यामृतं पिबन्स्वस्य मनोनुलापं प्रकाशयन्स्तौमीति भावः । ममत्वाद्ध्यानस्य पंथा विषयभूतो यः सर्वकालमेव भवेत् प्रसन्नहासेस्यादिरूपोऽस्मिन्नंतकाले साक्षान्नयनगोचर एव तिष्ठत्विति भावः । चतुर्भुज इति । भीष्मोपास्यमंत्रध्यानस्य तथात्वमवगम्यते ॥ २४ ॥ २५ ॥ यथावर्णं वर्णयोग्यधर्मान् । योग्यतायामव्ययीभावः । अयं भावः । न हि ब्रह्मचर्यादय आश्रमधर्माः सर्वे क्रमेणानुष्ठेया इति नियमः । किं तु

दानधर्मान्राजधर्मान्मोक्षधर्मान्विभागशः ॥ स्त्रीधर्मान्भगवद्धर्मान्समासव्यासयोगतः ॥ २७ ॥ धर्मार्थकाममोक्षांश्च सहोपायान्यथा मुने ॥ नानाख्यानेतिहासेषु वर्णयामास तत्त्ववित् ॥ २८ ॥ धर्मं प्रवदतस्तस्य स कालः प्रत्युपस्थितः ॥ यो योगिनश्छंदमृत्योर्वाञ्छितस्तूत्तरायणः ॥ ॥२९॥ तदोपसंहृत्य गिरः सहस्रणीर्विमुक्तसंगं मन आदिपूरुषे ॥ कृष्णे लसत्पीतपटे चतुर्भुजे पुरःस्थिते मीलितदृग्व्यधारयत् ॥३०॥ विशुद्धया धारणया हताशुभस्तदीक्षयैवाऽऽशु गतायुधश्रमः ॥ निवृत्तसर्वेंद्रियवृत्तिविभ्रमस्तुष्टाव जन्यं विसृजञ्जनार्दनम् ॥ ३१ ॥ भीष्म उवाच ॥ इति मतिरुपकल्पिता वितृष्णा भगवति सात्वतपुंगवे विभूम्नि ॥ स्वसुखमुपगते क्वचिद्विहर्तुं प्रकृतिमुपेयुषि यद्भवप्रवाहः ॥ ३२ ॥

धर्मांश्च । वैराग्यरागाभ्यामुपाधिभ्यां क्रमेणाम्नातमुभयं निवृत्तिप्रवृत्तिरूपं लक्षणं येषां तान् ॥ २६ ॥ पुनस्तत्रैव विशेषमाह । दानेति । मोक्षधर्मान् शमदमादीन् । भगवद्धर्मान्हरितोषणान्द्वादशादिनियमरूपान् । समासव्यासौ संक्षेपविस्तारौ तावेव योगावुपायौ ततस्ताभ्याम् ॥ २७ ॥ धर्मादींश्च यथाधिकारं प्रतिनियतोपायसहितान् । यथा यथावत् । नानाख्यानेषु य इतिहासास्तेषु यथा संति तथा वर्णयामासेति ॥ २८ ॥ छंदेनेच्छया मृत्युर्यस्य ॥ २९ ॥ सहस्रणीर्युद्धे समीपस्थान्सहस्रं रथिनो नयति पालयतीति सहस्रणीर्भीष्मः । सहस्रिणीरिति पाठे सहस्रार्थवतीर्गिरः । लसंतौ पीतौ पटौ यस्य तस्मिन् । अमीलितदृगेव मनो व्यधारयत् ॥ ३० ॥ अनयैव विशुद्धया धारणया हतमशुभं यस्य सः । तस्य श्रीकृष्णस्येक्षया कृपादृष्ट्यैव गत आयुधश्रमो यस्य सः । अत एव निवृत्तः सर्वेंद्रियवृत्तीनां विभ्रमो विविधं भ्रमणं यस्मात्सः । जन्यं देहम् ॥ ३१ ॥ परमफलरूपां श्रीकृष्णे रतिं प्रार्थयितुं प्रथमं स्वकृतमर्पयति । इति नानाधर्माद्युपायैर्मतिर्मनोधारणलक्षणोपकल्पिता समर्पिता । क्व । सात्वतानां पुंगवे श्रेष्ठे भगवति । वितृष्णा निष्कामा । अवितृष्णेति वा छेदः अवितृप्तेत्यर्थः । विगतो भूमा यस्मात्तस्मिन् यमपेक्ष्यान्यत्र महत्त्वं नास्तीत्यर्थः । तदेव परमैश्वर्यमाह ।

वैराग्यं चेत्सदैव भिक्षवो भवेयुः "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति श्रुतेः । रागश्चेत्तदा गृहस्था एव भवेयुः "अविपक्वकषायोस्मादमुष्माच्च विहीयते" इत्युक्तेः । कर्मणा कषायपाकार्थं गार्हस्थ्यमेव सेवेतेति भावः । ततश्च तत्रैव दानधर्मानित्यादि सर्वांते च भगवद्धर्मान् भक्त्यंगानीति मोक्षधर्मेभ्योप्यस्य पार्थक्यं श्रैष्ठ्यं च व्यञ्जितम् । समासः संक्षेपो व्यासो विस्तरस्तयोर्योगेन युक्ततया धर्मार्थकामेत्यादि । एवञ्चोक्तास्सर्वे धर्माश्चतुर्षु वर्णेष्वेव पर्यवस्यंतीत्युक्तपोषन्यायेन तानेवाह-धर्मेति । उपाया धर्मादिसाधनानि । यथा यावदेव नानाख्यानादिषु येये इतिहासास्तेषु प्रदर्श्य प्रमाणीकृतानित्यर्थः ॥ २६ ॥ २७ ॥ २८ ॥ "छंदो वशेप्यभिप्राये पद्यैषणरतिष्वपि" इति कोशात् । एतेनोत्तरायणमरणमेव श्रेष्ठमिति न ध्येयम् । "देशे च काले च मनो न सज्जयेत्" इति वक्ष्यमाणत्वात् । किं तु स्वच्छन्दमृत्युतैवात्रासूचीति ॥ २९ ॥ तदोत्तरायणे प्राप्ते सति उपसंहृत्यान्यतः प्रत्याहृत्य अमीलितदृगेव चक्षुषी स्पष्टमुन्मील्यैव व्यधारयदानखशिखं प्रवेशयामास । काले च नेत्रसंमीलनपूर्वकमंतर्ध्येयस्य संमुखस्थत्वात्तन्मीलने प्रयोजनाभावादिति भावः ॥ ३० ॥ इति मदायुःसमाप्तौ मतिर्भगवति उपकल्पिता मत्प्रभौ मदंतकाले कृपावशतयैव मत्समीपमागते किञ्चिदुपायनं दातुमुचितम् तत्र संप्रति ममाहंतास्पदममतास्पदयोर्मध्ये समीचीनं किमप्यन्यन्नास्तीति हेतोरेषा मतिरेवोपायनत्वेन कल्पिता ॥ ३१ ॥ ननु उपायनदायिनो लोके किञ्चिज्जिघृक्षवो दृश्यंते तत्राह-वितृष्णा निष्कामा भगवति षड्ऐश्वर्यपूर्णे किन्नारायणत्वेन प्रसिद्धे न सात्वतपुंगवे यदुकुलान्तःसत्वेन प्रसिद्धे

त्रिभुवनकमनं तमालवर्णं रविकरगौरवरांबरं दधाने ॥ वपुरलककुलावृताननाब्जं विजयसखे रतिरस्तु मेऽनवद्या ॥ ३३ ॥ युधि तुरगरजोविधूम्र विष्वक्कचलुलितश्रमवार्यलंकृतास्ये ॥ मम निशितशरैर्विभिद्यमानत्वचि विलसत्कवचेऽस्तु कृष्ण आत्मा ॥ ३४ ॥

स्वसुखं स्वस्वरूपभूतं परमानंदमुपगते प्राप्तवत्येव । कचित्कदाचिद्विहर्तुं क्रीडितुंप्रकृतिं योगमायामुपेयुषि स्वीकृतवति । न तु स्वरूपतिरोधानेन जीववत्पारतंत्र्यमित्यर्थः । विहर्तुमिति यदुक्तं तत्प्रपंचयति । ययतः प्रकृतेर्भवप्रवाहः सृष्टिपरंपरा भवति ॥ ३२॥ इदानीं श्रीकृष्णमूर्तिं वर्णयन्रतिं प्रार्थयते त्रिभुवनकमनं त्रिलोक्यामेकमेव कमनीयं यत्तद्वपुर्दधाने रतिर्मेऽस्तु । कथंभूतं वपुः । तमालवन्नीलो वर्णो यस्य तत् । प्रातःकालिका रवेः करा इव स्वत एव गौरे पीते वरे निर्मले चांबरे यस्मिंस्तत् । अलककुलैरुपर्यावृतमाननाब्जं यस्मिंस्तत् । विजयसखे पार्थसारथौ । अनवद्याऽहैतुकी फलाभिसंधिरहिता रतिरस्तु ॥ ३३ ॥ विजयसखित्वमेवानुवर्णयन् रतिं प्रार्थयते । युधि युद्धे तुरगाणां खुररजस्तुरगरजस्तेन विधूम्रा धूसरास्ते च ते विष्वंच इतस्ततश्चलंतः कचाः कुंतलास्तैर्लुलितं विकीर्णं श्रमवारि स्वेदबिंदुरूपं तेन भक्तवात्सल्यद्योतकेनालंकृतमास्यं यस्य तस्मिन् श्रीकृष्णे ममात्मा मनोऽस्तु रमतामित्यर्थः पुनः किंभूते । मदीयैर्निशितैस्तीक्ष्णैः शरैर्विभिद्यमाना त्वग्यस्य तस्मिन् । शरैरेव विलसत्त्रुटयत्कवचं यस्य तस्मिन्॥ ३४॥

ननु नारायणस्यैव भगवत्त्वेन महती प्रसिद्धिश्च सार्वकालिकी तत्राह–विभूम्नीति । इत्यर्थ इति । सर्वेश्वर इति भावः । तदेव भूमत्वसमर्पकं "यो वा भूमा तत्सुखं नाल्पे सुखमस्ति" इति श्रुतेः । यद्वा स्वैर्यादवपांडवैरेव सह सुखं परमानंदमुपाधिक्येन प्राप्ते इत्यर्थः । स्वरूपलक्षणमुक्त्वा तटस्थलक्षणमाह–इत्यर्थ इति । प्रकृतिं मायामीक्षणेन महत्तत्त्वाद्युत्पादकतया उपेयसीति भावः । भवप्रवाह इति वदता [पुरुषादयोप्यस्यैवावतारा उक्तास्तेषामेव भवप्रवाहकत्वादिति भावः । यद्वा यतः प्रकृतेरिति । "विलीनो हि प्रकृतौ संसारमेति" इति श्रुतेः । प्रकृतिरेव जीवानां संसारहेतुः ॥ ३२ ॥ नन्विति । मतिरित्युक्ता मतिः किमाकारा तत्राह–त्रिभुवनेति । रतिः प्रेमा त्रिभुवनस्य ऊर्द्ध्वाधोमध्यलोकस्थजनसमुदायस्य कमनमभिलाषो यत्र तद्वपुर्दधाने । रवेः करैर्गौरवरेऽतिगौरीकृतेंऽबरे यत्र । तत् अर्जुनरथोपरि स्थितस्य कृष्णस्य पीतांबरद्वयं सूर्यकिरणसंपर्कादतिचाकचक्यवत्त्वेन तदानीमतिपीतं मया दृष्टं तेन पार्थसारथित्वेनोपलब्धमहासौंदर्ये कृष्णे रतिः प्रार्थनामयी मतिर्मया तस्मिन्नेवोपकल्पितेति भावः । अत्र चाग्रिमेष्वपि पद्येषु साक्षाद्वर्तिन्यपि भगवति प्रार्थनायां युष्मत्प्रयोगाभावः । आस्वादितचरे सांग्रामिकवीररसावेशमये तन्माधुर्य एव चित्तस्यासक्तिं बोधयति ॥ ३३ ॥ इत्यर्थ इति । धातूनामनेकार्थत्वादस्ते रमणार्थतापीति भावः । विभिद्यमानविलसत्पदयोर्विप्रिय इतिद्व्युपसर्गौ गतार्थ एव ध्येयः । अत्र संदर्भः । अथ प्राक्तनस्वापराधं तस्मिन्दैन्येन विज्ञापयन्नपि रतिमेव प्रार्थयते युधीति । मम निशितेत्यादिकं मायिकलीलावर्णनमेव । "एवं वदन्ति राजर्षे ऋषयः केचनान्विताः" इत्यादिविरोधात् । तथाहि स्कांदे "असंगश्चाव्ययोभेद्योतिऽग्राह्योऽशोष्य एव च । विद्धोसृगार्चितो बद्ध इति विष्णुः प्रदृश्यते ॥ असुरान्मोहयन्देवः क्रीडत्येष सुरेष्वपि । मानुषान्मध्यया दृष्ट्या न मुक्तेषु कथंचन" इति । श्रीभीष्मस्य युद्धसमये दैत्याविष्टत्वात्तथा भानं युक्तमेव । किं त्वधुना दुःस्वप्नदुःखस्यैव निवेदनं कृतमिति ज्ञेयम् । किञ्च 'युधि तुरंग इत्यादि 'मम निशित' इत्यंतैर्विशेषणैस्तथाप्यर्जुनसाहाय्यापारित्यागात्तस्य भक्तवात्सकल्यं दार्शितम् । स्वस्यापराधित्वेऽपि सांप्रतं तदनुगृहीतत्वञ्च । विश्वनाथस्तु अलककुलेत्यादि यदुक्तं तन्माधुर्यमेव त्यक्तुमसमर्थः। पुनरपि विशिष्यास्वादयति । युधीति। तुरगरज इति ।"सुंदरे किमसुंदरम्" इति न्यायेन विष्वंच इत्यावेगसूचकं श्रमवारीति भक्तवात्सल्यद्योतकं निशितेत्यादि कंदर्परसाविष्टस्य पुंसः प्रगल्भकांतादंतावातैः सुखमेवेतिवद्युद्धरसाविष्टस्य महावीरस्य कृष्णस्य मद्बलसूचकशराघातैः सुखमेवेति नात्र मम युद्धरसोन्मत्तस्यापि प्रेमशून्यत्वं मंतव्यम् । न हि स्वप्राणकोटयाधिकप्रेयसि सुरतसमरौद्धत्यकृतनिर्भरनखरदशनाघाता वनिता प्रेमशून्या कथ्यते इति भावः । अत्र तु विभिद्यमानत्वचि न तु विभिन्नत्वचि यतो विलसद्विराजमानंकवचं यस्मिन्तस्मिन्नितीषद्भेदमात्रमुक्तम् ॥ ३४॥

सपदि सखिवचो निशम्य मध्ये निजपरयोर्बलयो रथं निवेश्य ॥ स्थितवति परसनिकायुरक्ष्णा हृतवति पार्थसखे रतिर्ममास्तु ॥ ३५ ॥
व्यवहितपृतनामुखं निरीक्ष्य स्वजनवधाद्विमुखस्य दोषबुद्ध्या ॥ कुमतिमहरदात्मविद्यया यश्चरणरतिः परमस्य तस्य मेऽस्तु ॥ ३६॥ स्वनिगम
मपहाय मत्प्रतिज्ञामृतम धिकर्तुमवप्लुतो रथस्थः ॥ धृतरथचरणोऽभ्ययाच्चलद्गुर्हरिरिव हंतुमिभं गतोत्तरीयः ॥ ३७ ॥

किं च । सपदीति । " सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत । यावदेतांन्निरीक्षेऽहं योद्धुकामानवस्थितान् "इति सख्युरर्जुनस्य वचो निशम्य सपदि तत्क्षणमेव स्वपरयोर्बलयोः सैन्ययोर्मध्ये रथं निवेश्य स्थिते पार्थसखे मम रतिरस्तु । तत्र स्थित्वा कृतं सख्यं दर्शयति । परस्य दुर्योधनस्य सैनिकानामायुरक्ष्णा कालदृष्ट्या हृतवति । असौ द्रोणोऽसौ भीष्मोऽसौ कर्ण इति तत्तत्प्रदर्शनव्याजेन दृष्टयैव सर्वेषामायुराकृष्यार्जुनस्य जयं कृतवति ॥ ३५ ॥ न केवलमर्जुनस्य सपत्नायुर्हरणेनैव जयमावहात्किं त्वाविद्याहरणेनापीत्याह । व्यवहिता दूरे स्थिता या पृतना तस्या मुखमिव मुखमग्रे स्थितान्भीष्मादीन्निरीक्ष्येत्यर्थः । स्वजनवधाद्विमुखस्य निवृत्तस्य । तदुक्तं गीतासु । "एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् । विसृज्य सशरं चापं शोकसंविग्नमानसः॥ "इति । कुमतिमहं हंतेत्यादिकुबुद्धिम् ॥ ३६ ॥ मम तु महांतमनुग्रहं कृतवानित्याह द्वाभ्याम् । स्वनिगममशस्त्र एवाहं साहाय्यमात्रं करिष्यामीत्येवंभूतां स्वप्रतिज्ञां हित्वा श्रीकृष्णं शस्त्रं ग्राहयिष्यामीत्येवंरूपां मत्प्रतिज्ञामृतं सत्यं यथा भवति तथा अधि अधिकां कर्तुं यो रथस्थः सन्नवप्लुतः सहसैवावतीर्णः सन् योऽभ्ययादभिमुखमधावत् । इभं हंतुं हरिः सिंह इव किंभूतः धृतो रथचरणश्चक्रं येन सः तदा च संरंभेण मानुष्यनाट्यविस्मृतेरुदरस्थसर्वभूतभुवनभारेण प्रतिपदं चलद्गुश्चलती गौः पृथ्वी यस्मात्सः । तेनैव संरंभेण पथि गतं पतितमुत्तरीयं वस्त्रं यस्य स मुकुंदो मे गतिर्भवत्वित्युत्तरेणान्वयः ॥ ३७ ॥

आयुर्हरणं तु तेषां मोक्षार्थमेव । "यमिह निरीक्ष्य हता गताः सरूपम्" इत्युक्तेः ॥ ३५ ॥ इत्यर्थ इति । तेषामेवाग्रे स्थितत्वादिति भावः । कुमतिं सांप्रतिकीं युधिष्ठिरस्येव तदानींतनीमर्जुनस्यापि स्वयं भगवतैवोत्थापितां तस्य नित्यपार्षदत्वान्नरावतारत्वाच्च कुमतेरसंभवाच्च । जगदुद्धारकस्वतत्त्वज्ञापकश्रीगीताशास्त्रमाविर्भावयितुमिति भावः । आत्मविद्यया स्वतत्त्वज्ञानेन ॥ ३६ ॥ स्वस्मादपि स्वभक्तमुत्कर्षयतीति यच्छ्रुतं तन्मया स्वस्मिन्नेवानुभूतमित्याह—द्वाभ्यम् । स्वनिगमेति । यद्वा ऋतमित्यजहल्लिंगम् । "ऋतं च सूनृता वाणी" इति भगवदुक्तेः । रथस्थः सन्नेवावप्लुत इत्यतिलाघवेनावप्लुतिमतस्तस्य रथाद्विश्लेषः केनापि न लक्षित इति भावः । अलक्षितप्रकाशेनैकेन रथरक्षार्थं स्थित एवेति वा । ऋतमिति । सा लीला तव स्वाभाविक्येव न तु मदनुरोधेनैव कृतेति भावः । अत्र कृष्णेन स्वभक्तवात्सल्यगुणस्य दुस्त्यजत्वादर्जुनस्य युद्धासामर्थ्ये सति स्वप्रतिज्ञामपि त्यक्त्वा स्वयमेवार्जुनस्य रक्षार्थं शस्त्रेण योत्स्यत एव । तच्चार्जुनस्यासामर्थ्यप्रापणमन्यैर्दुःशक्यमित्यतः क्षणमर्जुनं पराभूयास्य युद्धं भक्तवात्सल्यद्योतकं द्रक्ष्यामीति भीष्मस्य मनोरथसिद्ध्यर्थैव प्रतिज्ञेत्यतः स्वप्रतिज्ञाभंगेनार्जुने स्वप्रेमाणं तं दर्शयित्वा भीष्मं प्रमोद्य तस्योत्कर्षं च लोके विख्यापयामासेति तत्त्वम् । यच्चोक्तं विस्मृतमनुष्यनाट्यत्वमिति तच्च भगवतो विस्मृतेरसंभवादित्थं समाधेयम् । भगवतः प्रतिज्ञाहानिं निरीक्ष्याहो अयं मद्वारहणप्रतिज्ञामपि हास्यतीति भूः कंपिता । तदाश्वासनाय भगवता स्वोत्तरीयं तत्र पातितं त्वं माभैरिति शिरसि हस्तनिधानमिव वस्त्रं तदुपरि न्यस्तमिति ध्येयम् । अत्र निगमो वाणिजे पुर्यां कटे वेदे प्रतिश्रुतौ" इत्यभिधानात् ॥ ३७ ॥

शितविशिखहतो विशीर्णदंशः क्षतजपरिप्लुत आततायिनो मे ॥ प्रसभमभिससार मद्वधार्थं स भवतु मे भगवान्गतिर्मुकुंदः ॥३८॥ विजयरथकुटुंब आत्ततोत्रे धृतहयरश्मिनि तच्छ्रियेक्षणीये ॥ भगवति रतिरस्तु मे मुमूर्षोर्यमिह निरीक्ष्य हता गताः सरूपम् ॥ ३९ ॥ ललितगतिविलासवल्गुहासप्रणयनिरीक्षणकल्पितोरुमानाः ॥ कृतमनुकृतवत्य उन्मदांधाः प्रकृतिमगन्किल यस्य गोपवध्वः ॥ ४० ॥

एवं यदाभ्ययात्तदास्मयमानस्याततायिनो धन्विनो मे शितैस्तीक्ष्णैर्विशिखैर्हतोऽतो विशीर्णदंशो विध्वस्तकवचः क्षतजेन रुधिरेण परिप्लुतो व्याप्तः सन्प्रसभं बलाद्वारयंतमर्जुनमप्यतिक्रम्य मद्वधार्थमभिससाराभिमुखं जगाम । एवं यो लोकप्रतीत्यार्जुनपक्षपातीव लक्षितो वस्तुतस्तु ममैवानुग्रहं कृतवान्यन्मद्भक्तेनोक्तं वचो मा मृषास्त्विति । स भगवान्मे गतिर्भवत्वित्यर्थः ॥ ३८ ॥ तदेवमन्यायैरपि भृत्यरक्षाव्यग्रे कृष्णे रतिमाशास्ते । विजयोर्जुनस्तस्य रथ एव कुटुंबमकृत्यशतैरपि रक्षणीयो यस्य तस्मिन् । आत्तं तोत्रं प्रतोदो येन तस्मिन् । धृताश्च ते हयानां रश्मयः प्रग्रहास्ते संति यस्य तस्मिन् "व्रीह्यादिभ्यश्च" इत्यनकारांतादपि रश्मिशब्दादिनिः ॥ तच्छ्रिया तया सारथ्यश्रियेक्षणीये शोभमाने । मुमूर्षोर्मर्तुमिच्छोः । नन्वन्यायवर्तिनि किमिति रतिः प्रार्थ्यतेऽत आह । भगवत्यचिंत्यैश्वर्ये तदाह । इह युद्धे हताः सर्वे यं निरीक्ष्य सरूपं तत्समानं रूपं गताः प्राप्ता इति दिव्यदृष्ट्या पश्यन्नाह ॥ ३९ ॥ क्षत्रधर्मेण युध्यमानास्तत्सरूपं प्रापुरित्येतन्न चित्रं यतो मदांधा अपि प्रापुरित्याह । ललितगतिश्च

किञ्च यदैव रथाद्भूमाववप्लुतस्तदैव क्षतजै रुधिरैः परिप्लुतः सांग्रामिकरुधिरनद्या बिंदुव्याप्तः । ननु कवचस्य विद्यमानत्वात्कथं तथात्वं तत्राह—मम शितविशिखैस्तीक्ष्णशरैर्हतस्य संरंभसुखवर्द्धनार्थं तदपि मया हन्यतेस्मैवति भावः । यतो विशीर्णकवचः प्लवनात्प्रागेवाभवादित्यर्थः । प्रसभमद्य स्वहस्तेनैव भीष्मं वधिष्यामीत्यभिप्रायेणेत्यर्थः । अभिससारेत्यत्राभिशब्देनाभिसरंतं नायकमालोकितवत्या नायिकाया इव तदानीं मम सुखमपारमेवाभूदिति द्योत्यते । सोऽन्येषां मुकुन्दो मुक्तिप्रदोऽपि मम तु गतिस्तथाभूतत्वेनैव प्राप्यो भवतीत्यर्थ इति । हे कृष्ण त्वामहमेतदेव प्रार्थये इति भावः ॥ ३८ ॥ ईक्षणीये वामहस्तेऽश्वधारणरज्जुर्दक्षिणहस्ते प्रतोदः मुखारविंदे हुंहुमिति तन्नोदनशब्द इति शोभया यन्माधुर्य्यमीक्षणीयं तन्मयैव तदा स्वचक्षुर्भ्यामीक्षितम् । न त्वर्जुनेनापीति भावः । मुमुर्षोरिति । अत एवाहं संप्रति मर्त्तुमिच्छामि । यन्मृत्वा तदेव माधुर्यं मुहुः द्रक्ष्यामः । जीवंस्तु कथं तद्द्रष्टुं प्राप्स्यामः । प्रकटप्रकाशे तस्या लीलाया भगवता समापीकृतत्वादिति भावः । अत्र म्रियमाणस्येत्यनुक्त्वा सन्प्रत्ययेनेच्छाधीनमृत्योर्भीष्मस्य भगवतः सकाशादपि तल्लीलायामतिलोभो व्यज्यते । तेन च सा युद्धलीलापि नित्येत्यन्यस्या लीलाया नित्यत्वे कैमुत्यमानीतम् । सत्यं तस्यामेव मे सारथ्यलीलायां त्वमत्यासक्तो यत्प्रतिपद्यमेव तामास्वादयंस्तामेवोद्दिश्य तल्लीलाविशिष्ट एव मयि रतिं प्रार्थयसे । किं तु संप्रति मृत्वैवं तल्लीलाप्राप्तौ तत्र किं प्रमाणमित्यत्र "मरणे या मतिः सा गतिः" इति प्रसिद्धात्प्रमाणादपि तत्र दर्शनमेव परं प्रमाणमित्याह—यमिति । यं निरीक्ष्य हता युद्धेऽन्येनापि हताः संत आसुरस्वभावा अपि तादृशज्ञानहीना अपि स्वरूपं सायुज्यमुक्तिं प्राप्ताः । अहं तु भक्तस्तत्रापि मरणकाले तादृशमतिमांस्त्वां साक्षाद्दृष्ट्वा मृत्वा कथं न तां लीलां प्राप्स्यामीति । अत्र नरसारथ्यमनधिकारिभ्योपि सायुज्यदायित्वमिति युगपदेवानैश्वर्यमहैश्वर्यस्वीकारलक्षणं महामाधुर्यं सर्वभगवत्स्वरूपासाधारणमेव तदानीमुदितमिति ज्ञेयम् । संदर्भस्तु । मर्यादातिक्रमेप्यदोषाय सामर्थ्यमाह-भगवतीति । "यथारुद्रोऽब्धिजं विषम्" इति न्यायात् तदतिक्रमे च स्वाभाविकं कारुण्यमेव कारणमिति दर्शयति । रथे कुटुंबत्वारोपस्तु सर्वथा रक्षणतात्पर्यक एव । "वृद्धौ च मातापितरौ भार्या साध्वी शिशुः सुतः । अप्यकार्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत् ॥" इति स्मृत्युक्तन्यायेनेत्यर्थः ॥ ३९ ॥ अतः प्राप्तोरुमानत्वात् । अत एवोन्मदांधत्वादेव अत्र विश्वनाथः । ननु मत्सारथ्यसंबंधिन्यै लीलायै सर्वतत्त्वज्ञोपि

मुनिगणनृपवर्यसंकुलेंऽतःसदसि युधिष्ठिरराजसूय एषाम् ॥ अर्हणमुपपेद ईक्षणीयो मम दृशि गोचर एष आविरात्मा ॥ ४१ ॥ तमिममहमजं शरीरभाजां हृदिहृदि धिष्ठितमात्मकल्पितानाम् ॥ प्रतिदृशमिव नैकधाऽर्कमेकं समधिगतोऽस्मि विधूतभेदमोहः ॥ ४२ ॥

विलासश्च वल्गुहासादिश्च मंजुगत्यादिभिरात्मीयैस्तदीयैर्वा कल्पित उरुर्मानः पूजा यासां ताः । अत उत्कटेन मदेनांधा विवशाः । अत एव तदेकचित्तत्वेन तस्य कृतं कर्म गोवर्धनोद्धरणादिकमनुकृतवत्यो गोपवध्वो यस्य प्रकृतिं स्वरूपमगन्नगमन् । मकारलोपस्त्वार्षः । किल प्रसिद्धम् । तस्मिन्मे रतिरस्त्विति पूर्वेणैवान्वयः ॥ ४० ॥ जगत्पूज्यतामनुस्मरन्नाह । मुनिगणैर्नृपवर्यैश्च संकुले व्याप्तेंऽतःसदसि सभामध्ये युधिष्ठिरस्य राजसूये एषां मुनिगणादीनामीक्षणीयोऽहो रूपमहो महिमेत्येवमाश्चर्येण विलोकनीयः सन्नर्हणमुपपेदे प्राप । एष जगतामात्मा मम दृशि गोचरो दृष्टिविषयः सन्नाविः प्रकटो वर्तते । अहो मे भाग्यमिति भावः ॥ ४१ ॥ सोऽहं कृतार्थोऽस्मीत्याह । तमिममजं सम्यगधिगतः प्राप्तोऽस्मि । सम्यक्त्वमाह । विधूतभेदमोहः । तदर्थं भेदस्यौपाधिकत्वमाह । आत्मकल्पितानां स्वयं निर्मितानां शरीरभाजां प्राणिनां हृदिहृदि प्रतिहृदयं धिष्ठितमधिष्ठितमधिष्ठाय स्थितमिति यावत् । अकारलोपस्त्वार्षः । नैकधाऽनेकधा । अधिष्ठानभेदादनेकधा भांतमित्यर्थः । अत्र दृष्टांतः । सर्वप्राणि

त्वं स्पृहयसे सोर्जुन एव तर्हि मम सर्वेषु प्रेमवत्परिकरवृंदेष्वेको मुख्य इति निर्द्धार्य्यते । मैवम् । ततोर्जुनादप्यतिमुख्यतमाः । सर्वतोपि प्रेमोत्कर्षवंतो ये तव प्रियजना वर्त्तंते न तेषां पदवीं प्रार्थयितुमपि कोपि साहसं धत्ते । भवतु तदपि तदुद्देशेनाप्यस्मिन्नंतकाले कृतार्थी भवामीत्याह—ललितगतिश्च रासनृत्यादिवैदग्धी कायिकी विलासश्च धीरलालित्यादिवैदग्धी मानसवल्गुहासश्च परिहासवैदग्धी वाचिकी प्रणयनिरीक्षणं च प्रेममयसर्वभावव्यंजककटाक्षवैदग्धी चाक्षुषी च तैरुपकल्पितो दत्त उरुमान आदरः पूजा याभ्यस्ताः । तेन स्वस्मिंस्ताः प्रसादयितुं स्वीयानसाधारणान्सर्वानेव साद्गुण्यं भवांस्तासु विनियुक्तवान् ।अतस्तासां निरुपाधिकस्य प्रेमातिशयस्य फलं यत्स्वसाद्गुण्यसर्वस्वार्पणपूर्वकत्वत्कर्तृकानुरंजनप्राप्तिः साह्ययंत्रणैवोभयतः सुखमयमहावशीकारव्यंजिका । अर्जुनस्य तु प्रेम्णः फलं वशीकारव्यंजिका सख्यदूत्यादिमात्रप्राप्तिर्या सा तूभयतो यंत्रणामयीति न तत्समकक्षतां प्राप्तुमर्हत्यर्जुन इति भावः । अत्रैव तृतीयान्यपदार्थे बहुव्रीहौ । ताभिरपि स्वीयसाद्गुण्यसर्वस्वार्पणेन सोऽनुरंजित इति परस्परानुरंजनसुखमयं सख्यं व्यंजितम् । तत एवासाधारणसौभाग्यप्रदानमाह । कृतं रासे नृत्यं गीतं वादनानि च यथा तथैव ता अप्यनुकृतवत्यः तत्साहित्येनैव रासे तासां तथा नृत्याद्युक्तेः । न च तासां तत्तच्छिक्षणाभ्यासकोऽप्यासीदित्याह-उन्मदेन महाप्रेमोत्थेनान्धा व्यवहारमात्रमदृष्टवत्यः। अतः किलेत्याश्चर्ये । यस्य प्रकृतिं स्वभावमेवागच्छन् ।भगवतो नृत्यगीतादिवैदग्ध्यादयः स्वाभाविकाः असाधारणा । अनंता एव ये गुणास्तान्सर्वानपि तेन दत्तान्प्रापुरित्यर्थः । अर्जुनाय तु स्वमसाधारणं तदपेक्षितं बलिष्ठत्वमपि भगवता न दत्तमिति । यद्वा कृतं गोवर्द्धनधारणादि उन्मद उन्माद इति विरहश्च दर्शितः। एवं चातिमदास्तावत्सायुज्यं प्रापुः। अत्युत्कृष्टप्रेम्णाः परां काष्ठाम् । अहं तूभयमध्यवर्त्ती स्वाभीप्सितां तव सारथ्यलीलां कथं न प्राप्स्यामीति भावः । अत्र संदर्भः । यत एतावतोऽपि प्रेम्णो जनकत्वं दृश्यते इत्याह—ललितेति । अत्र कृतानुकरणं नाम लीलाख्ये नायिकानुभावः । तदुक्तं "प्रियानुकरणं लीला" इति । "प्रकृतिं स्वामवष्टभ्य" इति न्यायात् । "प्रकृतिश्च स्वभावश्च रूपं च" इत्याद्यमरकोशाच्च । प्रकृतिं स्वभावं तादृशः प्रेमावेशो जातो .येन तत्स्वभावनिजस्वभावयोरैक्यमेव तासु जातमित्यर्थः । यथोज्वलनलिमणौ महाभावोदाहरणम् ।"राधाया भवतश्च चित्तजतुनी स्वेदैर्विलाप्य क्रमाद्युञ्जन्नद्रिनिकुञ्जकुञ्जरपते निर्धूतभेदभ्रमम् । चित्राय स्वयमन्वरञ्जयदिह ब्रह्मांडहर्म्योदरे भूयोभिर्नवरागहिंगुलभरैः शृंगारकारुः कृती" इति ॥ ४० ॥ इति भाव इति । अहो भाग्यवशात्सर्वथाऽदृश्यरूपोप्यात्मा मे दृश्यतां गत इति तात्पर्यम् ॥ ४१ ॥ इत्यर्थ इति । उपाधेरनेकत्वे एकोपि जलचंद्रादिन्यायेन बहुधा प्रतीयत इति भावः। तत्रैकस्यानेकधा भाने

**सूत उवाच ॥ कृष्ण एवं भगवति मनोवाग्दृष्टिवृत्तिभिः ॥ आत्मन्यात्मानमावेश्य सोंतःश्वास उपारमत् ॥ ४३ ॥ संपद्यमानमाज्ञाय भीष्मं ब्रह्मणि निष्कले ॥ सर्वे बभूवुस्ते तूष्णीं वयांसीव दिनात्यये ॥ ४४ ॥**

नां दृशंदृशं प्रत्येकमेवार्कमनेकधा प्रतीतमिवेति ॥ ४२ ॥ मनोवाग्दृष्टीनां वृत्तिभिः । परमात्मनि श्रीकृष्णे । अंतरेव विलीनः श्वासो यस्य सः ॥ ४३ ॥ निष्कले

चक्षुरभिमानित्वेन प्रतिदृशं दृशंदृशं प्रति नैकधा चक्षुरिन्द्रियनियामकतयाऽनेकरूपं स्थितमर्कं यथैकमेव समधिगच्छति । ज्ञानी तथाहमपीति भावः । अत्र विश्वनाथः । ननु कथं तर्हि त्वयि मे रतिरस्त्वित्येकवारमपि युष्मत्प्रयोगेण न ब्रूषे किं तु प्रतिपद्यमेव विजयसखे विजयरथकुटुंबे मे रतिरस्तु। "चरणरतिः परमस्य तस्य मेस्तु स भवतु मे भगवान्गतिः" इति तच्छब्दप्रयोगेणैवेति तत्राह–तमिति। तं पार्थसारथिं प्रग्रहप्रतोदालंकृतवामदक्षिणकरं मम हृदि स्फुरन्तमेवममधिगतोस्मि । न त्विममेव तं तस्यैव हृदि प्रविष्टत्वादभ्यासेन तदीयस्फूर्तिव्याप्ते हृदि अयं प्रवेष्टुं न शक्नोतीति भावः । तं कीदृशमजं न जायत इत्यजस्तम् । न केवलं तदानीं युद्धकाल एव तादृशस्वरूपो मच्चक्षुषोरग्रे स जातोऽपि युद्धात्पूर्वमपि तु स्वाभाविकेन मनोरथेन मम हृदि तथा भात आसीदेवेति भावः । तेनात्र न मम दोषः किं तु हृदिस्थः परमेश्वरो यथायथा यं यं स्फोरयति स तथा तथैवाशास्त इत्याह–शरीरभाजां जीवानां हृदिहृदि धिष्ठितम् । अकारलोपश्छांदसः । आत्मना स्वयमेव कल्पितानाम् । "यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरंति" इति श्रुतेः । न चाहं हृदिस्थं तत्पदवाच्यं पार्थसारथिमन्यं तथा पुरस्थमिदं पदवाच्यं चतुर्भुजमन्यं जानामीत्याह–प्रतीति । आकाशस्थमेकमर्कमपि जनानां प्रतिदृशमवलोकनं प्रति नैकधाऽनेकधाऽयं मन्मूर्द्धोपरि अर्क इति प्रतिमूर्द्धोपरिस्थमर्कं तत्तद्दृष्टिभेदादनेकधा भातमिवेति । विधूतो दुरीकृतो भेदरूपो मोहो येन सः । अयमर्थः । : मम हृदि तथा युधिष्ठिरादीनां वसुदेवादीनामुद्धवादीनां नंदादीनां गोपिकानां च हृदि भावभेदेन प्रेमतारतम्येन च पृथक्पृथग्लीलतयैव यद्यपि स्फुरति तदप्येक एव कृष्ण इति जानामि । तथा तेषां तत्तत्प्रेम्णां तत्तद्भावानां चोत्कर्षतारतम्यं सर्वमहं जानाम्येव । तदपि पार्थसारथावेव स्वाभाविक्यासक्तिस्तां त्यक्तुं नैव शक्नोति । पुरःस्थितेऽस्मिंश्चतुर्भुजे रूपे धारणापि कृता । साप्यकिंचित्कर्यैवाभूदिति । संदर्भस्तु परमात्मत्वस्थापनाय तत्र विभुत्वं दर्शयन्स्वमत्युपकल्पनमेवोपसंहरति–तमिति । तमिममग्र एवोपविष्टं श्रीकृष्णं व्यष्ट्यंतर्यामिरूपेण निजांशेन शरीरभाजां हृदि हृदि धिष्ठितं केचित्स्वदेहांतर्हृदयावकाशे "प्रादेशमात्रं पुरुषं वसंतम्" इत्युक्तदिशा भिन्नमूर्तिमत्सु वसंतमप्येकमभिन्नमूर्त्तिमेव समधिगतोस्मि । अयं परमानंदविग्रह एव व्यापकः स्वांतर्भूतेन निजाकारविशेषेणान्तर्यामितया तत्रतत्र स्फुरतीति विज्ञातवानस्मि । यतोहं विधूतभेदमोहः अस्यैव कृपया विधूतः दूरीकृतः भेदमोहो भगवद्विग्रहस्य व्यापकत्वासंभावनाजनितनानात्वज्ञानलक्षणो मोहो यस्य तथाभूतोहम् । तेषु व्यापकत्वे हेतुः । आत्मकल्पितानामात्मन्येव परमाश्रये प्रादुष्कृतानाम् । अत्र दृष्टान्तः । प्रतिदिशमिति । प्राणिनां नानादेशस्थितानामवलोकनं प्रति यथैक एवार्को वृक्षकूटाद्युपारिगतत्वेन तत्रापि कुत्रचिदव्यवधानसंपूर्णत्वेन सव्यवधानं त्वसंपूर्णत्वेनानेकधा दृश्यते तथेत्यर्थः । दृष्टांतोयमेकस्यैव तत्रतत्रोदय इत्येतन्मात्रांशे । वस्तुतस्तु भगवद्विग्रहोऽचिंत्यशक्त्या तथातथा भासते। सूर्यस्तु दूरस्थविस्तीर्णात्मना स्वभावेनेति शेषः । अथवा तं पूर्ववर्णितस्वरूपमिममग्रत एवोपविष्टं समधिगतोस्मि । यद्यप्यंतर्यामिरूपं तस्माद्रूपादन्याकारं तथाप्येतद्रूपमेवाधुना तत्रतत्र पश्यामि॥ सर्वतो महाप्रभावस्यैव तस्य रूपस्याग्रतोऽन्यस्य रूपस्य स्फुरणाशक्तेरिति भावः । अत्र दृष्टांतो देशभेदेप्यभेदबोधनाय । न तु पूर्णत्वविवक्षायै । अमीलितदृग्व्यधारयदिति। कृष्ण एवं भगवति मनोवाग्दृष्टिवृत्तिभिरित्युपक्रमोपसंहारादिभिरत्र श्रीविग्रह एव प्रस्तूयते । अतो नेदं पद्यं ब्रह्मपरतया व्याख्येयमिति ॥ ४२ ॥ अंतरेव लीनः श्वासो यस्य "न तस्य प्राणा उत्क्रामंति ह्यत्रैव समलीयंते" इति श्रुतेः । अत्र विश्वनाथः । एवमात्मनि हृदि स्थिते पार्थसारथावित्यर्थः । ॥ ४३ ॥ एवं भीष्मः स्वाभिलषितं पार्थसारथिं प्राप । लोकास्तु तदविद्वांसो भीष्मो ब्रह्मणि लीनो बभूवेति जानंति स्मेत्याह–संपद्येति । अज्ञाने दृष्टांतः । वयांसि पक्षिणः दिनस्यात्ययेवसाने सति दिनं नष्टमिति दिनस्य स्वरूपध्वंसमेव ज्ञात्वा यथा तूष्णीं भवंति न शब्दायंत इत्यर्थः । न तु वस्तुतो दिनं नश्यति तत्क्षणेपि वर्षांतरे तस्य स्थितेरवगमात् । यामचतुष्टयानंतरं तत्रापि पुनरागमात् । एवं भीष्मस्याप्यत्यये भीष्मो मुक्त इत्यज्ञा विदंति । विज्ञास्तु तदैवाप्रकटप्रकाशे । रथ

तत्र दुंदुभयो नेदुर्देवमानववादिताः ॥ शशंसुः साधवो राज्ञां खात्पेतुः पुष्पवृष्टयः ॥ ४५ ॥ तस्य निर्हरणादीनि संपरेतस्य भार्गव ॥ युधिष्ठिरः कारयित्वा मुहूर्तं दुःखितोऽभवत् ॥ ४६ ॥ तुष्टुवुर्मुनयो हृष्टाः कृष्णं तद्गुह्यनामभिः ॥ ततस्ते कृष्णहृदयाः स्वाश्रमान्प्रययुः पुनः ॥ ४७ ॥ ततो युधिष्ठिरो गत्वा सहकृष्णो गजाह्वयम् ॥ पितरं सांत्वयामास गांधारीं च तपस्विनीम् ॥ ४८ ॥ पित्रा चानुमतो राजा वासुदेवानुमोदितः ॥ चकार राज्यं धर्मेण पितृपैतामहं विभुः ॥ ४९ ॥ इति श्रीभा० प्रथ० युधिष्ठिरराज्यप्रलंभनो नाम नवमोऽध्यायः ॥ ९ ॥ ॥ शौनक उवाच ॥ हत्वा स्वरिक्थस्पृध आततायिनो युधिष्ठिरो धर्मभृतां वरिष्ठः ॥ सहानुजैः प्रत्यवरुद्धभोजनः कथं प्रवृत्तः किमकारषीत्ततः ॥ १ ॥

निरुपाधौ । संपद्यमानं मिलितमाज्ञायालक्ष्य । वयांसि पक्षिण इव ॥ ४४ ॥ देवैर्मानवैश्च वादिताः राज्ञां मध्ये ये साधवोऽनसूयवः ॥ ४५ ॥ निर्हरणादीनि दाहसंस्कारादीनि सम्यक्परेतस्य मुक्तस्यापीत्यर्थः ॥ ४६ ॥ तस्य गुह्यनामभिर्वेदोक्तैः कृष्ण एव हृदयं येषां ते कृष्णहृदयाः ॥ ४७ ॥ पितरं धृतराष्ट्रम् । तपस्विनीं संतापवतीम् ॥ ॥ ४८ ॥ राजा युधिष्ठिरः अनुमतोऽनुज्ञातः ॥ ४९ ॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे टीकायां नवमोऽध्यायः ॥ ९ ॥ दशमे कृतकार्यस्य हस्तिनापुरतो हरेः ॥ स्त्रीभिः संस्तूयमानस्य वर्ण्यते द्वारकागमः ॥ १ ॥ राज्यं चकारेत्युक्तं तत्र पृच्छति । हत्वेति । स्वस्य रिक्थे धने स्पर्धंते स्म ये ते तथा । यद्वा । स्वरिक्थाय स्पृत्संग्रामो येषामत एव धनादिहरणादाततायिनस्तान्हत्वा । प्रत्यवरुद्धभोजनो बंधुवधदुःखेन संकुचितभोगो राज्यलाभेन प्राप्तभोगो वा । कथं राज्ये प्रवृत्तः प्रवृत्तो वा

चरणपाणिना कृष्णेन भूमौ धावता सह भीष्मो युद्ध्यत एवेति पुनरागामिकृष्णावतारे तेन सह भीष्म आविर्भविष्यत्येवेति जानंति । यद्वा निष्कं पदकं लातीति तास्मिन्ब्रह्मणि श्रीकृष्ण इत्यर्थः । ब्रह्मसायुज्यप्राप्तिस्तु न व्याख्येया । नित्यपार्षदभीष्मेण फलाभिसंधिरहिताया रतेर्वांच्छितत्वात् । मोक्षस्याकामितत्वात् । भगवतोपि बलादकामितफलदानानौचित्यात् । संदर्भस्तु निष्कलब्रह्मशब्देन मायातीतो नराकृतिपरब्रह्मरूपः श्रीकृष्ण एवोच्यते । तस्मिन्संपद्यमानता च तत्संगतिरेव । तथोक्तं सप्तमे "अधोक्षतालंभमिहाशुभात्मनः शरीरिणः संसृतिचक्रशातनम् । तद्ब्रह्मनिर्वाणसुखं विदुर्बुधास्ततो भजध्वं हृदये हृदीश्वरम् " इति । अत्र भीष्मस्य वसुत्वात् "यावदधिकारमवस्थितिरधिकारिणाम्" इत्यधिकरणाविरोधः स्यादिति चेन्न । लीलया स्वांशेन तत्राप्यवस्थितेः संभवात् । "भवद्भिरंशैर्यदुषूपजन्यताम् " इति ब्रह्मप्रोक्तेरंशेनैव सर्वे देवा अवतेरुर्न तु सर्वात्म्येनेति "तस्य सर्वेषु लोकेषु कामचारो भवति" इति श्रुतेर्ज्ञानियोगिवद्देवानामपि सर्वसमर्थवत्वमस्तीत्यवधेयम् ॥ ४४ ॥ तत्र भीष्मनिर्याणसमये पुष्पवृष्टयो भीष्ममूर्ध्नि पेतुः ॥ ४५ ॥ तस्य भीष्मस्य । इत्यर्थ इति । सम्यक् परं परमात्मानं श्रीकृष्णमितस्य प्राप्तस्येति भावः । यद्यपि सांपरायिकं परलोकहितार्थं क्रियते श्रीभीष्मस्य भगवत्पार्षदत्वेनाविकारिवसुत्वेन च तन्न संगच्छते । तथापि युधिष्ठिरस्य साक्षाद्धर्मावतारत्वेन धर्मप्रवर्तकत्वात् । "श्रुत्युक्तं न त्यजेत्कचित्" इति स्मृतेः । "कुरु त्वं प्रेतकार्याणि पितुः पूतस्य सर्वशः" इति प्रह्लादं प्रति श्रीनृसिंहवाक्याच्च । जीवन्मुक्तविदेहमुक्तानामपि सांपरायिकमवश्यं कार्यमिति वर्णयिष्यामो विशेषतः सप्तमस्कंधे। दुःखित इति लोकदृष्ट्योक्तम् ॥ ४६ ॥ गुह्यनामभिर्दुस्तर्क्यमहिमकृष्णगोविंदेत्यादिभिः । हे कृष्ण भक्तवत्सल प्रेमाधीन नमस्त्वचातुर्यायेति तुष्टुवुः । ततो भीष्मनिर्याणोत्तरम् ॥४७॥ ततः मुनिजनगमनोत्तरम् ॥४८॥ पित्रा धृतराष्ट्रेण।पितृपितामहादागतं पितृपैतामहम् । अत्र परपदवृद्धिरार्षः॥४९॥इति श्रीभागवतभावार्थदीपिकाप्रकाशे प्रथमस्कन्धे नवमोऽध्यायः॥९॥कृतं कार्यं युधिष्ठिराय राज्यदानरूपं येन तस्य (१) स्वस्य युधिष्ठिरस्य

सूत उवाच ॥ वंशं कुरोर्वंशदवाग्निनिर्हृतं संरोहयित्वा भवभावनो हरिः ॥ निवेशयित्वा निजराज्य ईश्वरो युधिष्ठिरं प्रीतमना बभूव ह ॥२॥ निशम्य भीष्मोक्तमथाच्युतोक्तं प्रवृत्तविज्ञानविधूतविभ्रमः ॥ शशास गामिंद्र इवाऽजिताश्रयः परिध्युपांतामनुजानुवर्तितः ॥ ३ ॥ कामं ववर्ष पर्जन्यः सर्वकामदुघा मही ॥ सिषिचुः स्म व्रजान्गावः पयसोधस्वतीर्मुदा ॥ ४ ॥ नद्यः समुद्रा गिरयः सवनस्पतिवीरुधः ॥ फलंत्योषधयः सर्वाः काममन्वृतु तस्य वै ॥ ५ ॥ नाधयो व्याधयः क्लेशा दैवभूतात्महेतवः ॥ अजातशत्रावभवञ्जंतूनां राज्ञि कर्हिचित् ॥ ६ ॥ उषित्वा हास्तिनपुरे मासान्कतिपयान्हरिः ॥ सुहृदां च विशोकाय स्वसुश्च प्रियकाम्यया ॥ ७ ॥ आमंत्र्य चाऽभ्यनुज्ञातः परिष्वज्याऽभिवाद्य तम् ॥ आरुरोह रथं कैश्चित्परिष्वक्तोऽभिवादितः ॥ ८ ॥ सुभद्रा द्रौपदी कुंती विराटतनया तथा ॥ गांधारी धृतराष्ट्रश्च युयुत्सुर्गौतमो यमौ ॥ ९ ॥ वृकोदरश्च धौम्यश्च स्त्रियो मत्स्यसुतादयः ॥ न सेहिरे विमुह्यंतो विरहं शार्ङ्गधन्वनः ॥ १० ॥

ततः किमकार्षीत् ॥ १ ॥ राज्यप्रवृत्तौ श्रीकृष्णस्य प्रीतिं पर्यालोच्य प्रवृत्त इत्याशयेनोत्तरमाह । वंशं कुरोः संरोहयित्वा परीक्षिद्रक्षणेन संरोह्यांकुरितं कृत्वा । कथंभूतम् । वंशदवाग्निनिर्हृतं वंश एव दवो वनं तस्मादुद्भूतो यः क्रोधरूपोऽग्निस्तेन निर्हृतं दग्धम् । निजराज्ये निवेश्य च ॥२॥ प्रवृत्तौ हेतुमुक्त्वा किमकार्षीदित्यस्योत्तरमाह । प्रवृत्तं यद्विज्ञानं परमेश्वराधीनं जगन्न स्वतंत्रमित्येवंभूतं तेन विधूतो विभ्रमोऽहंकर्तेत्येवंभूतो मोहो यस्य सः । अनुजैरनुवर्तितः सेवितः सन् । अजितः श्रीकृष्ण एवाश्रयो यस्य सः । परिधिः समुद्रस्तत्पर्यंतां गां पृथ्वीं पालयामास ॥ ३ ॥ तस्य राज्यमनुवर्णयति । काममिति त्रिभिः मही सर्वकामदोग्ध्री बभूव । व्रजान् गोष्ठानि । ऊधस्वतीरूधस्वत्यः ऊधः क्षीराशयस्तद्वत्यः । स्थूलोधस इत्यर्थः । सिषिचुरभ्यषिंचन् ॥ ४ ॥ अन्वृतु ऋतावृतौ । ५ ॥ आधयो मनोव्यथाः । व्याधयो रोगाः । क्लेशाः शीतोष्णादिकृताः । दैवं च भतानि चात्मा च हेतुर्येषामाधिदैविकादीनां ते जंतूनां नाभवन् ॥ ६ ॥ इदानीं द्वारकागमनं निरूपयितुमाह । उषित्वेति । स्वसुः सुभद्रायाः ॥ ७ ॥ तं युधिष्ठिरम् ॥ ८ ॥ युयुत्सुर्धृतराष्ट्राद्वैश्यायां जातः । गौतमः कृपः । यमौ नकुलसहदेवौ ॥ ९ ॥ अन्याश्च स्त्रियः । मत्स्यसुतोत्तरा तस्याः

स्पर्द्धकानां प्रायो हननं नोचितमित्यत आह—यद्वेति । अत एव स्वरिक्थस्पृहत्वादेव भोगानामाधिक्यदर्शनात्संकोचो न संभवतीति पक्षांतरमाह राज्यलाभेनेत्यादि ॥ १ ॥ भक्तानां भवमुदयं भावयत्युत्पादयतीति भवभावनः । यद्वा भवं रुद्रमपि भावयति स्वलीलां ध्याययतीति भवभावनः ॥ २ ॥ उपेंद्रवज्रावंशस्थयोरुपजातिः । गां पृथ्वीं स्वर्गं च अजितः कृष्ण उपेंद्रश्च परिधिः समुद्र ऊर्द्ध्वगदिङ्मंडलं च ।अनुजेनोपेंद्रेणानुवृत्तिं प्रापितः पुनरिंद्रपदं प्रापितः विजयध्वजस्तु प्रणिध्युपात्तामिति पपाठ । तत्र "अमात्या मंत्रिणो दूताः श्रेणयश्च पुरोहिताः । पुरं जनपदं चैव सप्त प्रणिधयः स्मृताः" इत्युक्तेः । प्रणिधिभिः सहोपात्तामित्यर्थः ॥ ३ ॥ कामं यथेष्टं पर्जन्यो मेघाभिमानी देवः । इत्यर्थ इति । अत्र भूमार्थे मतुप्प्रत्यय इति भावः ॥ ४ ॥ नदीनां फलं देशस्य नदीमातृकत्वसंपादनेन व्रीह्यादिसमृद्धिः।समुद्राणां रत्नादिसंपत्तिः । गिरिवनस्पतिवीरुधां धातुफलपुष्पादिसमृद्धिः ।ओषधीनां यवगोधूमादिसमृद्धिः । तस्य युधिष्ठिरस्य काममिच्छानुसारेण सर्वा इत्युक्त्या न कस्याश्चिदपि वंध्यत्वं भवतीत्यसूचि॥५॥अधिदैवहेतुरनावृष्ट्यादिः । अधिभूतहेतुरुन्मादादिरध्यात्महेतुः लोभादिरिति ॥६॥७॥ आमंत्र्य द्वारकां गमिष्यामीति युधिष्ठिरायोक्त्वा शिष्टाचाररक्षणाय तं परिष्वज्यालिंग्याभिवाद्य वाचा नमस्कृत्य च॥८॥९॥ पुनरुक्तिर्यद्यपि पुराणादौ न दुष्टा तथाप्यृजुमार्गेण सिद्ध्यतोऽर्थस्य

सत्संगान्मुक्तदुःसंगो हातुं नोत्सहते बुधः ॥ कीर्त्यमानं यशो यस्य सकृदाकर्ण्य रोचनम् ॥११॥ तस्मिन्न्यस्तधियः पार्थाः सहेरन्विरहं कथम्॥ दर्शनस्पर्शसंलापशयनासनभोजनैः ॥ १२ ॥ सर्वे तेऽनिमिषैरक्षैस्तमनुद्रुतचेतसः ॥ वीक्षंतः स्नेहसंबद्धा विचेलुस्तत्र तत्र ह ॥ १३ ॥ न्यरुंधन्नुद्गलद्बाष्पमौत्कंठ्याद्देवकीसुते ॥ निर्यात्यगारान्नोभद्रमिति स्याद्बांधवस्त्रियः ॥ १४ ॥ मृदंगशंखभेर्यश्च वीणापणवगोमुखाः ॥ धुंधुर्यानकघंटाद्या नेदुर्दुंदुभयस्तथा ॥ १५ ॥ प्रासादशिखरारूढाः कुरुनार्यो दिदृक्षया ॥ ववृषुः कुसुमैः कृष्णे प्रेमव्रीडास्मितेक्षणाः ॥ १६ ॥ सितातपत्रं जग्राह मुक्तादामविभूषितम् ॥ रत्नदंडं गुडाकेशः प्रियः प्रियतमस्य ह ॥ १७ ॥ उद्धवः सात्यकिश्चैव व्यजने परमाद्भुते ॥ विकीर्यमाणः कुसुमै रेजे मधुपतिः पथि ॥ १८ ॥ अश्रूयंताऽऽशिषःसत्यास्तत्रतत्र द्विजेरिताः ॥ नानुरूपानुरूपाश्च निर्गुणस्य गुणात्मनः ॥ १९ ॥

पुनर्ग्रहणं गर्भरक्षककृष्णविरहे मोहाधिक्यात् । यद्वा मत्स्यसुता सत्यवती ॥ १० ॥ तेषां कृष्णविरहासहनं कैमुत्यन्यायेनाह । सत्संगादिति । द्वाभ्याम् । सतां संगाद्धेतोर्मुक्तः पुत्रादिविषयो दुःसंगो येन सः । सद्भिः कीर्त्यमानं रुचिकरं यस्य यशः सकृदप्याकर्ण्य सत्संगं त्यक्तुं न शक्नोति ॥ ११ ॥ दर्शनादिभिस्तस्मिन् श्रीकृष्णे न्यस्ता अध्यस्ता धीर्येषां ते ॥ १२ ॥ अत एवानिमिषैर्नेत्रैस्तमेव वीक्षमाणास्तत्रतत्रार्हणानयनाद्यर्थं चलंति स्म । यतः स्नेहेन सम्यग्बद्धाः । अत एव तमनुद्रुतानि गतानि चेतांसि येषां ते ॥ १३ ॥ अगारान्निर्याति निर्गच्छति सति । औत्कंठ्यादासक्त्यतिशयाद्धेतोरुद्गलत्स्रवद्बाष्पमश्रु न्यरुंधन्नेत्रेष्वेव स्तंभितवत्यः । तत्र हेतुः । अभद्रं नो स्यादमंगलं मा भूदित्येतदर्थम् ॥ १४ ॥ मृदंगादयो दश वाद्यभेदाः ॥ १५ ॥ प्रेमव्रीडास्मितपूर्वकमीक्षणं यासां ताः ॥ १६ ॥ गुडाका निद्रा तस्या ईशो जितनिद्रोऽर्जुनः ॥ १७ ॥ व्यजने चामरे जगृहतुः । मधुपतिः श्रीकृष्णः ॥ १८ ॥ सत्याः श्रीकृष्णे तासामव्यभिचारात्किं तु नानुरूपाश्चानुरूपाश्च । निर्गुणस्य परमानंदस्य

क्रेणं दर्शनायोगादाह—यद्वेति । मत्सीभूताद्रिकाप्सरस उद्भूतत्वान्मत्स्यसुतेति ॥ १० ॥ तेषां पूर्वोक्तानां युधिष्ठिरादीनां किमुत साक्षादेतत्संगमिति भावः ॥ ११ ॥ सत्संगं विना दुःसंगो मदमत्सरादिहेतुर्नापयाति । तदपगमेन विना भगवद्यशो रोचकं न भवतीत्युक्तं सत्सङ्गान्मुक्तदुःसंग इति विशेषणेन ॥ १२ ॥ अत एव तत्रार्पितबुद्धित्वादेवानिमिषैः पक्ष्मव्यापाररहितैः । "अक्षो ज्ञानार्थशकटव्यवहारेषु पाशके । रुद्राक्षेंद्राक्षयोः सर्पे विभीतकतरौ दृशि । चक्रे कर्षे पुमान्क्लीबं तुत्थे सौवर्चलेंद्रिये" इति मेदिनी । तमनुद्रुतेति । यावद्यावद्दूरं गतस्तावत्तावदुत्तुंगंभूपृष्ठमारुह्य वीक्ष्यमाणास्तस्थुरदर्शनं याते तस्मिश्चेतसा तमनुदुद्रुवुरिति भावः ॥ १३ ॥ अगारात् न गारो निगरणं यस्य सोगारः । अगा वृक्षा एवाराणीव वंशत्रंश्यस्थूणादिलक्षणानि यस्येति वा । अगमगमनमारस्य पित्तलस्य यस्मादिति । आरपदमुपलक्षणं कांस्यादेरपि । अगानां स्वर्णाद्यात्मकपर्वतानामारः प्रवेशो यस्मिन्निति वा । तत्राल्लस्तंभने । इत्यर्थ इति । गमनागमने रोदनं त्वमंगलमेवेति शाकुनिकाः ॥ १४ ॥ भेरीनाम चर्मविहितो दीर्घमहदाकृतो वाद्यविशेषः । दुंदुभिस्तिरश्चीनवाद्यविशेषः ॥ १५ ॥ "प्रसादो देवभूभुजाम्" इत्यमरः ॥ १६ ॥ "निद्रा गुडाका संप्रोक्ता प्रमीला मृत्युतंद्रिका" इत्यभिधानात् । यदेंद्रकीले विनिद्रेण तपस्ततं तदा पशुपतिना गुडाकेशोयमित्युक्तमिति पुराणांतरे । गुडा कुटिला गुडवद्रक्ता वा केशा यस्य स इति वा । दीर्घश्छांदसः । "गुडः कौटिल्यगुडयोः" इति च ॥ १७ ॥ १८ ॥ ब्रह्मण्यत्वप्रेमवश्यत्वाद्यप्राकृतगुणमयस्य तस्यानुरूपाश्च युष्माकमाशीर्भिरेव मम सदा सुखमिति प्रतिवचनस्य मिथ्यात्वानर्हत्वात् । तस्य दास्यसख्य

अन्योन्यमासीत्संजल्प उत्तमश्लोकचेतसाम् ॥ कौरवेंद्रपुरस्त्रीणां सर्वश्रुतिमनोहरः ॥ २० ॥ स्त्रिय ऊचुः ॥ स वै किलायं पुरुषः पुरातनो य एक आसीदविशेष आत्मनि ॥ अग्रे गुणेभ्यो जगदात्मनीश्वरे निमीलितात्मन्निशि सुप्तशक्तिषु ॥ २१ ॥ स एव भूयो निजवीर्यचोदितां स्वजीवमायां प्रकृतिं सिसृक्षतीम् ॥ अनामरूपात्मनि रूपनामनी विधित्समानोनुससार शास्त्रकृत् ॥ २२ ॥

सुखी भवेत्यादयो नानुरूपा गुणात्मनो मानुष्यनाट्यावतारेनुरूपाश्चेत्यर्थः । संधिरार्षः ॥ १९ ॥ सर्वासां श्रुतीनां मनोहरः । उपनिषदोपि मूर्तिमत्यः सत्यस्तं संजल्पमभ्यनंदन्नित्यर्थः ॥ २० ॥ तत्र तेजःसौंदर्याद्यतिशयेन विस्मिताभ्यः सखीभ्योऽन्याः स्त्रियः कथयंति नात्र विस्मयः कार्यः साक्षादीश्वरत्वादस्येति । स वा इति चतुर्भिः वै स्मरणे । किलेति प्रसिद्ध्या प्रमाणद्योतकम् । य एक एवाद्वितीयः पुरुषः आसीत्स एवायं श्रीकृष्णः । कुत्रासीत् । अविशेषे आत्मनि निष्प्रपंचे निजस्वरूपे । कदा । अग्रे गुणेभ्यो गुणक्षोभात्पूर्वम् । तथा निशि प्रलये च तस्य लक्षणं जगतामात्मनि जीवे निमीलितात्मनि निमीलितात्मन्निति लुप्तसप्तम्यंतं पदम् । जातावेकवचनम् । ईश्वरे लीनरूपेषु जीवेषु सत्स्वित्यर्थः । ननु जीवानां ब्रह्मत्वात्कथं लयस्तत्राह । सुप्तासु शक्तिषु सतीषु जीवोपाधिभूतसत्त्वादिशक्तिलय एव जीवलय इत्यर्थः ॥ २१ ॥ तदेवं सृष्टेरादौ प्रलयानंतरं च निष्प्रपंचावस्थानमुक्त्वा सृष्टिप्रलययोर्मध्ये सप्रपंचावस्थानमाहुः । स एवाप्रच्युतस्वरूपस्थितिरेव प्रकृतिमनुससाराधिष्ठितवान् । भूयः पुनः सृष्टिप्रवाहस्यानादित्वात् । कीदृशीम् । निजवीर्यचोदितां स्वकालशक्तिप्रेरितां स्वांशभूतानां जीवानां मायां मोहिनीम् । अत एव सिसृक्षतीं स्रष्टुमिच्छंतीम् । किमर्थमनुससार । अनामरूप आत्मनि जीवे रूपनामनी विधातुमिच्छन् । उपाधिसृष्ट्या जीवानां भोगायेत्यर्थः । कर्माणि च विधातुं वेदान्कृतवानित्याहुः । शास्त्रकृ

वात्सल्यादिरसविषयाश्रयाश्रयत्वे सति तत्तद्भक्तजनसंयोगविरहाद्यलौकिकसुखदुःखादिमयत्वाच्च । यद्वा निर्गता गुणेभ्यो गुगा यस्य तस्य प्राकृतगुणातीतस्य नित्यगुणस्य नानुरूपाः नित्यं तत्परिपूर्णत्वेन लाभान्तरायोगादित्यर्थ इत्थं व्याख्येयमिति भावः । यद्वा दुष्टान् जहि साधून्पालयास्माननुगृहाणेत्येवंरूपा आशिषो वाक्यप्रबंधा अश्रूयंतेति ॥ १९ ॥ श्लेषेणाह—सर्वेषां श्रुतीः श्रवणानि मनांसि च हरत्याकर्षतीति सर्वश्रुतिमनोहरः । इत्यर्थ इति । श्रुत्यभिमानिदेवता अपि तच्छ्रुत्वा सविस्मया बभूवुरहो अस्मत्तो पीमा विशेषतो भगवत्स्वरूपज्ञा इति भावः ॥ २० ॥ तत्र तदा प्रथमं शांतिरतिमत्यस्सविस्मयमूचुः । यद्वा न विद्यते विशेषो वैशिष्ट्यमुत्कर्षो वा यस्मात्तथाभूत एक एवासीत् । व्यासादिमुखादस्माभिः श्रुतोभूदित्यर्थः स वै निश्चितमयमेवेति तर्जनीभिर्दर्शयामासुः । इत्यर्थ इति । न हि जीवानां स्वरूपतो नाशोऽस्ति प्रलय इति भावः । अत्रा क्षिपति—नन्विति । इत्यर्थ इति । कृपगवननाशे कृपगो यथा लोकैर्नष्टो मन्यते तथोपाधिलये जीवोपीति भावः । एकोऽयमेव न तु ब्रह्मादिरित्यर्थः ॥ २१ ॥ अत एव मोहिनीत्वादेव । इत्यर्थ इति । स्थूलसूक्ष्मोपाधिसृष्ट्येत्यर्थः । ननु प्रकृत्यनुगतत्वं नाम प्रकृत्यधीनत्वम् । स च दोष एव । मैवम् । निजबलेन प्रेरितां स्वतन्त्रशक्त्या कस्मिंश्चन कृत्ये नियुक्तामित्यर्थः । कर्मज्ञानयोगभक्तिसाधनसिद्ध्यर्थं तु प्रकृत्यनुगमनात्पूर्वमेव वेदशा

स वा अयं यत्पदमत्र सूरयो जितेंद्रिया निर्जितमातरिश्वनः ॥ पश्यंति भक्त्युत्कलितामलात्मना नन्वेष सत्त्वं परिमार्ष्टुमर्हति ॥ २३ ॥ स वा अयं सख्यऽनुगीतसत्कथो वेदेषु गुह्येषु च गुह्यवादिभिः ॥ य एक ईशो जगदात्मलीलया सृजत्यवत्यत्ति न तत्रसज्जते ॥ २४ ॥ यदा ह्यधर्मेण तमोधियो नृपा जीवंति तत्रैष हि सत्त्वतः किल ॥ धत्ते भगं सत्यमृतं दयां यशो भवाय रूपाणि दधद्युगेयुगे ॥ २५ ॥ अहो अलं श्लाघ्यतमं यदोः कुलं अहो अलं पुण्यतमं मधोर्वनम् ॥ यदेष पुंसामृषभः श्रियः पतिः स्वजन्मना चंक्रमणेन चांचति ॥ २६ ॥

दिति ॥ २२ ॥ अस्य दर्शनमतिदुर्लभमस्माभिर्लब्धमित्याहुः ॥ स वै अयम् । अस्य पदं स्वरूपमंघ्रिं वा । निर्जितो मातरिश्वा प्राणो यैः । ह्रस्वत्वमार्षम् । ते सूरय एव पश्यंति । केन । भक्त्योत्कलित उत्कंठितोऽमलो य आत्मा बुद्धिस्तेन । 'दृश्यते त्वग्र्यया बुद्ध्या' इति श्रुतेः । बुद्धिवैमल्यस्याप्ययमेव हेतुरित्याहुः । ननु हे सखि एष एव सत्त्वं बुद्धिं परिमार्ष्टुं सम्यक् शोधयितुमर्हति । न तु योगादय इत्यर्थः । यद्वा । नु अहो एष सत्त्वं ज्ञानं परिमार्ष्टुं नाशयितुं दूरगमनेनाप्रत्यक्षी भवितुं नार्हति । किं त्वनेन सहैव गंतव्यमित्यर्थः ॥ २३ ॥ पुण्यश्लोकतामाहुः । हे सखि यो वेदेषु रहस्यागमेषु च रहस्यनिरूपकैरनुगीतसत्कथः अनुगीताः सत्यः कथा यस्य स एवायम् । गानप्रकारमाहुः । य एक ईश इत्यादि ॥ २४ ॥ एवंभूतस्य नानावतारे कारणमाहुः । यदा हीति । तमोव्याप्ता धीर्येषां ते नृपा यदा धर्मेण जीवंति केवलं प्राणान्पुष्णंति तत्र तदैष एव भवाय स्थित्यै सत्त्वतो विशुद्धसत्त्वेन रूपाणि दधद्भगादीनि धत्ते प्रकटयति । युगेयुगे तत्तदवसरे । भगमैश्वर्यम् । सत्यं सत्यप्रतिज्ञत्वम् । ऋतं यथार्थोपदेशकत्वम् । दयां भक्तकृपाम् । यशोऽद्भुतकर्मत्वम् ॥ २५ ॥ विशेषतः श्रीकृष्णावतारसौभाग्यं वर्णयंति । अहो इति पंचभिः । यद्यस्मादेष पुरुषोत्तमः श्रियः पतिः

स्त्राणि कृतवानेवेति शास्त्रकृत् ॥ २२ ॥ योगादीनां भक्तिसापेक्षत्वान्न ते स्वतंत्रा इति भावः । सत्त्वस्यार्थांतरमाश्रित्याह—यद्वेति । इत्यर्थ इति । अस्य त्यागेन नास्माकं गतिरिति भावः । अत्र विश्वनाथः । ननु सृष्ट्यारंभे पुरुषादयोऽवतारा लक्ष्यंते न त्वेष ईदृशप्रकारः । किं तु वैवस्वतमन्वन्तरीयाष्टाविंशतिचतुर्युगस्थद्वापरे संप्रत्येवैष उपलभ्यते । सत्यमसौ भक्तिगम्यो नित्यस्वरूपो नित्यलीलोऽस्मिन्द्वापरेऽवतीर्णोऽप्यस्य भक्तिमद्भिः सदैवायमुपलभ्यते इत्याह-स वा इति । निर्जितान्मातारिश्वनः प्राणाद्धेतोर्निर्जितेंद्रियाः सर्वेन्द्रियाणां प्राणाधीनवृत्तित्वात् । प्राणजयादेव निर्जितेंद्रिया इत्यर्थः । तथाभूता अपि भक्त्या उत्कलितोऽमलो य आत्मा बुद्धिस्तेनैव यस्य पदं स्वरूपं चरणारविन्दं वा पश्यंति । अत्र सूरित्वं जितेन्द्रियत्वं जितप्राणत्वं च तेषां भक्त्यैव न तु प्राणापानादिभिरिति भावः । अत्र सूरयो भक्त्युत्कंठत्वे सत्येव पश्यंतीति वर्तमाननिर्देशेन सार्वकालिकदृष्टिगोचरत्वात्तस्य सार्वकालिकलीलत्वम् । अतः "परार्द्धांते सोवबुध्यत गोपवेषो मे पुरुषः पुरस्तादाविर्बभूव" इति गोपालतापनीश्रुतौ ब्रह्मवाक्यम् । तथा ब्रह्मसंहितायां सृष्ट्यारंभे गोपवेषः कृष्ण एव दृष्टस्तुतश्च ॥२३॥ किंचास्य लीलाकथातिरहस्या रहस्यलेकैरेव वेद्येत्याह-अयमर्जुनसखो नराकृतिः गुह्येषूपनिषत्सु च आगमेषु पंचरात्रादिषु यः खलु एक एवेशः ईश्वरः सन्न तु साक्षादेतद्रूप इत्यर्थः । तत्र जगति न सज्जते आप्तकामत्वात् । हे सखीति । सख्यभावेनास्य सेवनं त्वतिदुर्लभम् । सख्यपालनस्य दुःशकत्वादिति भावः । रहस्यनिरूपकैरुपनिषद्विचारकुशलैः ॥ २४ ॥ साक्षादस्यावतारस्य कालदेशपात्रेषु जिज्ञास्येषु प्रथमं कालमाहुर्यदेति । नृपाः कंसादयः युगेयुगे कल्पेकल्पे वैवस्वतीयाष्टाविंशचतुर्युगीये द्वापरेद्वापरे वा ॥ २५ ॥ पात्रदेशावाहुः—अहो इति । यदोः कुलं श्लाघ्यतमं सर्वोर्वितं मधुरामंडलं पुण्यतमम् । तत्र श्लाघ्य

अहो बत स्वर्यशसस्तिरस्करी कुशस्थली पुण्ययशस्करी भुवः ॥ पश्यंति नित्यं यदनुग्रहेषितं स्मितावलोकं स्वपतिं स्म यत्प्रजाः ॥ ॥ २७ ॥ नूनं व्रतस्नानहुतादिनेश्वरः समर्चितो ह्यस्य गृहीतपाणिभिः ॥ पिबंति याः सख्यधरामृतं मुहुर्व्रजस्त्रियः संमुमुहुर्यदाशयाः ॥ २८ ॥

स्वजन्मना यदोः कुलमंचति पूजयति सत्करोति अतः श्लाघ्यतमं तत् । चंक्रमणेन च मधोर्वनं मथुरां सत्करोत्यतस्तत्पुण्यतममिति । तमबर्थस्याप्यत्यंतातिशयेऽलमिति । तत्राप्याश्चर्ये अहो इत्युक्तम् ॥ २६ ॥ द्वारकां श्लाघंते । अहो बतात्याश्चर्यम् । किं तत् । कुशस्थली द्वारका । स्वर्गे उत्कृष्ट इति यद्यशस्तस्य तिरस्करी परिभवकर्त्री । भुवश्च पुण्ययशःकर्त्री भवति । यद्यतो यत्रत्याः सर्वाः प्रजाः स्वानुग्रहेणेषितं प्रेषितम् । स्मितपूर्वकोऽवलोको यस्य तम् । यद्वानुग्रहार्थमिषितमिष्टम् । अनुग्रहोषितमिति पाठे स्वानुग्रहार्थमुषितं कृतनिवासम् । ऐकपद्यपाठे त्वनुग्रहेणेषितं प्रेषितं यत्स्मितं तत्पूर्वकोऽवलोको यस्य तम् । स्वस्यात्मनः पतिं श्रीकृष्णं न तु पित्रादिवद्देहमात्रपतिं नित्यं पश्यंति स्म । नैतत्स्वर्गेऽस्तीत्यर्थः ॥ २७ ॥ हे सखि अस्य गृहीतपाणिभिः पत्नीभिरीश्वरोऽयमेव नूनं जन्मांतरेषु समर्चितः । यस्मिन्नधरामृत

तममित्यनेनैव द्वयोरुत्कर्षे सिद्धे पुण्यतममिति पृथगुक्तिर्देशस्य पुण्यदेशत्वेनैवोत्कर्षस्य प्रसिद्धेः । तत्र तस्यैवार्थस्याप्यत्यंतातिशयेऽलमिति तत्राप्यतिशयाश्चर्ये अहो इति । यत्स्वजन्मना चंक्रमणेन गमनेन चकारादन्यैरपि विविधाद्भुतकर्मभिरञ्चति सत्करोति । अत्रालं चेत्यनुक्त्वांचतीति वर्त्तमाननिर्देशेन जन्मादिलीलानां नित्यत्वं बोधयामासुः । उपक्रमतः य एक आसीदिति भूतनिर्देशेन तृतीयपद्ये पश्यंति भक्त्येति वर्तमाननिर्देशेन तासां तथाभिप्रायस्यावगमात् । ननु कथं जन्मकर्मणोर्नित्यत्वम् । ते हि क्रिये । क्रियात्वञ्च प्रतिनिजांशमप्यारंभपरिसमाप्तिभ्यामेव सिद्ध्यति । आरंभसमाप्ती ते विना स्वरूपहान्यापत्तिः । नैष दोषः । श्रीभगवति सदैवाकारानंत्यात् प्रकाशानन्त्यात्' जन्मकर्मलक्षणलीलानन्त्यात्, अनंतप्रपंचानंतवैकुंठगततत्तल्लीलास्थानतत्तल्लीलापरिकराणां व्यक्तिप्रकाशयोरानंत्याच्च । यत एव सत्योरपि तत्तदाकारप्रकाशगतयोस्तदारंभपरिसमाप्त्योरेकत्रैव ते जन्मकर्मणोरंशा यावत्परिसमाप्यंते न परिसमाप्यंते वा तावदेवान्यत्राप्यारब्धा भवंतीत्येवं भगवति विच्छेदाभावान्नित्ये एव जन्मकर्मणी वर्तेते । क्वचित्किंचिद्विलक्षणत्वेनारभ्येते क्वचिदैकरूप्येणेति ज्ञेयम् । विशेषभेदाद्विशेषणैक्याच्च एक एवाकारप्रकाशभेदेन पृथक्क्रियास्पदं भवतीति "चित्रं बतैतदेकेन वपुषा" इत्यादौ प्रतिपादयिष्यते । ततः क्रियाभेदात्तत्क्रियावत्सु प्रकाशभेदेष्वभिमानभेदश्च गम्यते । तथा सत्येकत्रैकत्र लीलाक्रमजनितरसोद्बोधश्च जायते । ननु कथं ते एव जन्मकर्मणी वर्तेते इत्युक्तं पृथगारब्धत्वादन्ये एव ते आस्ताम् । उच्यते । कालभेदेनोदितानामपि समानक्रियाणामेकत्वं यथा शंकरशारीरके "द्विर्गोशब्दोयमुच्चरितो न तु द्वौ गोशब्दाविति प्रतीतिनिर्णीतं शब्दैकत्वं तथैव द्विः पाकः कृतोनेन न तु द्वौ पाकौ" इति । ततो जन्मकर्मणोरपि नित्यता युक्तैव । अत एवागमादावपि भूतपूर्वलीलोपासनविधानं युक्तम् । तथा चोक्तं माध्वभाष्ये 'परमात्मसंबंधित्वेन नित्यत्त्वात् । त्रिविक्रमत्वादिष्वप्युपसंहार्यत्वं युज्यत' इति । अनुमतं चैतच्छ्रुत्या "यद्भूतं भवच्च भविष्यच्च" इत्यनयैव । उपसंहार्यत्वमप्युपासनायामुपादेयत्वमित्यर्थः । तत्र तस्य जन्मनः प्राकृतादस्माद्विलक्षणत्वं प्राकृतजन्मानुकरणेनाविर्भावमात्रत्वम् । क्वचित्तदनुकरणेनेति भगवत्संदर्भः क्वचित्तु "तद्भक्तधामादीनामिवानंतप्रपञ्चनित्यधामसु जन्मकर्मणोरपि प्रकाशबाहुल्यान्नित्यत्वसिद्धेः" इत्याहुः॥२६॥ मधुवनं स्तुत्वा द्वारकां स्मरन्त्य आहुः । स्वानुग्रहेण कर्तृभूतेन संभवादर्थांतरमाह—यद्वेति । इष्टमभिमतम् । इत्यर्थ इति । स्वर्गे यद्यप्युपेन्द्रोऽस्त्येव तथापि श्रीकृष्णमूर्तेस्तत्रादर्शनादित्थमुक्तमिति भावः ॥ २७ ॥ तत्तोज्ज्वलरसौत्सुक्यवत्य आहुः । वयं त्वकृततादृशव्रताः संप्रत्येव सौंदर्यामृतमेव किञ्चिदद्य पिबाम इति भावः । किञ्चास्मत्तः कोटिगुणतोऽप्यधिका अपि व्रजसुंदरीभ्यः सकाशादतिन्यूना इत्याहुः । संमुमुहुः रात्रौ पीततरस्याप्यधरामृतस्य प्रातःस्मर

या वीर्यशुल्केन हृताः स्वयंवरे प्रमथ्य चैद्यप्रमुखान्हि शुष्मिणः ॥ प्रद्युम्नसांबांबसुतादयोऽपरा याश्चाहृता भौमवधे सहस्रशः ॥ २९ ॥ एताः परं स्त्रीत्वमपास्तपेशलं निरस्तशौचं बत साधु कुर्वते ॥ यासां गृहात्पुष्करलोचनः पतिर्न जात्वपैत्याहृतिभिर्हृदि स्पृशन् ॥ ३० ॥ एवंविधा गदंतीनां स गिरः पुरयोषिताम् ॥ निरीक्षणेनाभिनंदन्सस्मितेन ययौ हरिः ॥ ३१ ॥ अजातशत्रुः पृतनां गोपीथाय मधुद्विषः ॥ परेभ्यः शंकितः स्नेहात्प्रायुंक्त चतुरंगिणीम् ॥ ३२ ॥ अथ दूरागताञ्छौरिः कौरवान्विरहातुरान् ॥ सन्निवर्त्य दृढं स्निग्धान्प्रायात्स्वनगरीं प्रियैः ॥ ३३ ॥ कुरुजांगलपांचालाञ्छूरसेनान्सयामुनान् ॥ ब्रह्मावर्तं कुरुक्षेत्रं मत्स्यान्सारस्वतानथ ॥ ३४ ॥

आशयश्चित्तं यासां ताः । संमोहं प्राप्ता इति मनोहरत्वमुक्तम् ॥ २८ ॥ एतत्प्रपंचयंति । या इति द्वाभ्याम् । वीर्यं प्रभाव एव शुल्कं मूल्यं तेन शुष्मिणो बलिष्ठान् । प्रद्युम्नश्च सांबश्चांबश्च सुता यासां रुक्मिणीजांबवतीनाग्निजितीनां ता आदिर्यासां सत्यभामादीनां ताः । याश्चापराः । अस्य श्लोकस्योत्तरश्लोकेनान्वयः ॥ २९ ॥ एताः स्त्रीत्वमेव परं केवलं साधु शोभनं कुर्वते । किंभूतम् । अपास्तं गतं पेशलं भद्रं स्वातंत्र्यं यस्मात्तत् । निरस्तं शौचं शुचित्वं यस्मात्तथाभूतमपि जातु कदाचिदपि नापैति न निर्गच्छति । आहृतिभिर्व्याहारैः । यद्वा । पारिजातादिप्रियवस्त्वाहरणैः । हृदि स्पृशन्नानंदयन् ॥ ३० ॥ एवंविधा विचित्रा गिरः सस्मितेन निरीक्षणेनाभिनंदन् स हरिर्ययौ ॥ ३१ ॥ मधुद्विषोपि गोपीथाय रक्षणाय स्नेहात्परेभ्यः शत्रुभ्यः शंकितः सन् प्रायुंक्त । "हस्त्यश्वरथपादातं सेनांगं स्याच्चतुर्विधम्" इत्येवं चतुरंगिणीम् । पृतनां सेनाम् ॥ ३२ ॥ पांडोः कुरुवंशजत्वात्पांडवा अपि कौरवा एव तान् । प्रियैरुद्धवादिभिः सह ॥ ३३ ॥ कुरुक्षेत्रं कुरुदेशांतर्गतमेव । क्रमोऽत्र न विवक्षितः ॥ ३४ ॥

णेप्यानंदमूर्च्छां प्रापुः । न जाने पानकाले ताः कीदृशीं दशां प्रापुरिति तासां प्रेमाधिक्यादानंदाधिक्यं द्योतितम् ॥ २८ ॥ "शुल्कं घट्टादिदेये स्याद्वरादर्थग्रहेऽस्त्रियाम्" इति मेदिनी । "शुष्मी गोपतिमत्तयोः" इति च ॥ २९ ॥ स्त्रीत्वं स्त्रीजातिः सा च रुक्मिण्याद्यवरतज्जातिभेदत्वेनैवात्र गृहीता । अपास्तपेशलत्वादिकं हि तज्जात्यतराश्रयं न तु रुक्मिण्याद्याश्रयं ताभिस्तासामपि साधुत्वकरणात् । ततश्चान्यां तत्तद्दोषयुक्तां स्त्रीजातिमपि या निजकीर्त्यादिना शुद्धां कुर्वंतीत्यर्थः । तासां तत्तद्दोषरहितसर्वगुणालंकृतत्वे तदवराणां साधुत्वविधाने च हेतुमाह—यासामिति । स्वयं तथाविधोऽप्याहृतिभिः प्रेयसीजनोचितगुणसमाहारैर्या एव हृदि स्पृशन्मनस्यासज्जयन्यासां गृहादपि न त्वपैतीति "पिता रक्षति कौमारे भर्ता रक्षति यौवने । सुता रक्षंति वार्द्धक्ये न स्वातंत्र्यं हि योषिताम्" इति चाणक्योक्तेः स्त्रीणां स्वातंत्र्याभावोस्तीति । "स्त्रियो मेध्यास्तु सर्वतः" इति वाक्यं तु स्त्रीणामल्पशौचपरमन्यथा तासाम् । "स्त्रीशूद्राणां तदर्द्धतः" इत्यादिस्मृतिविहितशौचोक्तिरनार्थिका स्यादिति ज्ञेयम् ॥ ३० ॥ ३१ ॥ अथ राज्ञः प्रेममहिमानमाह—मधुद्विषोपि गोपीथाय "गोपीथो रक्षणे प्रोक्तो गवां पेये च गोकुले" इति निरुक्तिः । तत्र हेतुः । स्नेहादिति । अनेन भगवदैश्वर्यज्ञानस्य दुर्ज्ञेयत्वमुक्तम् ॥ ३२ ॥ ३३ ॥ अत्र पंथानमतिक्रम्य गमनं तत्तन्निजजनमेलनार्थं शूरसेनागमनं तु श्रीवृंदावनादिदिदृक्षयैव ॥ ३४ ॥

मरुधन्वमतिक्रम्य सौवीराभीरयोः परान् ॥ आनर्तान्भार्गवोपागाच्छ्रांतवाहो मनाग्विभुः ॥ ३५ ॥ तत्रतत्र ह तत्रत्यैर्हरिः प्रत्युद्यतार्हणः ॥ सायं भेजे दिशं पश्चाद्गविष्ठो गां गतस्तदा ॥ ३६ ॥ इति श्रीभा० प्र० दशमोऽध्यायः ॥ १० ॥ ॥ सूत उवाच ॥ आनर्तान्स उपव्रज्य स्वृद्धाञ्जनपदान्स्वकान् ॥ दध्मौ दरवरं तेषां विषादं शमयन्निव ॥१॥ स उच्चकाशे धवलोदरो दरोऽप्युरुक्रमस्याऽधरशोणशोणिमा ॥ दाध्मायमानः करकंजसंपुटे यथाब्जखंडे कलहंस उत्स्वनः ॥ २ ॥ तमुपश्रुत्य निनदं जगद्भयभयावहम् ॥ प्रत्युद्ययुः प्रजाः सर्वा भर्तृदर्शनलालसाः ॥३॥

मरुर्निरुदको देशः । धन्वोऽल्पोदकः । आनर्ताख्यो द्वारकादेशः स विभुरुपागात्प्राप्तः । हे भार्गव । मनागीषच्छ्रान्ता वाहा यस्य सः ॥ ३५ ॥ तत्रतत्र देशे तत्रत्यैर्जनैः प्रत्युद्यतानि निवेदितान्यर्हणान्युपायनानि यस्मै सः । सायमपराह्णे । पश्चाद्दिशं पश्चिमां दिशं भेजे प्राप्तः । तदा च गविष्ठः स्वर्गस्थः सूर्यो गामुदकं गतः प्रविष्टोऽस्तं गत इत्यर्थः । 'अद्भ्यो वा एष प्रातरुदेत्यपः सायं प्रविशति' इति श्रुतेः । यद्वा । तदा सायंकाले जाते रथादवतीर्य गविष्ठो भूमौ स्थितस्ततो गां जलाशयं गतः सन्पश्चाद्दिशं संध्यां भेज उपासितवानित्यर्थः ॥ ३६ ॥ इति प्रथमस्कंधे टीकायां दशमोऽध्यायः ॥ १० ॥ आनर्तैः स्तूयमानस्य पुरीं निर्विश्य बंधुभिः ॥ एकादशे रतिः सम्यग्यादवेंद्रस्य वर्ण्यते ॥ १ ॥ उत्सवैरुच्चलत्पौरमुदंचद्ध्वजतोरणम् ॥ उल्लसद्रत्नदीपालि स्वपुरं प्रभुराविशत् ॥ २ ॥ स्वृद्धान्समृद्धान् दरवरं पांचजन्यं शंखम् । दध्मौ वादितवान् ॥ १ ॥ स इति । दरः शंखो दाध्मायमानो भगवता आपूर्यमाण उच्चकाशेऽतिशयेन शुशुभ इत्यन्वयः । कथंभूतो दरः धवलमुदरं यस्य सः । तथाप्युरुक्रमस्य कृष्णस्याधरस्य यः शोणगुणस्तेन शोणिमा यस्य सः । करकंजे करकमले तयोः संपुटे मध्ये वर्तमानः कथमुच्चकाशे अब्जखंडे रक्तकमलसमूहे कलहंसो राजहंस उत्स्वन उच्चशब्दो यथा तद्वत् ॥ २ ॥ जगतो यद्भयं तस्य भयावहम् । प्रत्युद्ययुः प्रत्युज्जग्मुः भर्तुर्दर्शने लालसौत्सुक्यं यासां ताः ॥ ३ ॥

हे भार्गवेति । सर्वज्ञभृगुवंश जातत्वात्त्वमपि योगबलेन भगवन्माहात्म्यं जानास्येवेति भावः।''वाजिवाहार्वगंधर्वहयसैन्धवसप्तयः''इत्यमरः॥३५॥ इत्यर्थ इति।समुद्रतीरवासिभिर्जलादुद्गमो जले प्रवेशश्चोदयास्तमये दृश्यत इति भावः संभवत्वाच्छ्लेषेणार्थांतरमाह—यद्वेति। इत्यर्थ इति। ''उत्तमा सूर्यसहिता मध्यमा लुप्ततारका।अधमा तारकोपेता सायंसंध्या त्रिधा मता'' इति स्मृतेः।सूर्यास्तात्प्रागेव संध्यां चक्र इति । पुनर्निजजनसंगतः।संध्याकालातिक्रमे प्रायश्चित्तापत्तेरिति भावः । प्रायश्चित्तं च शतकृत्वो गायत्र्याभिमंत्र्य जलं पीत्वा पुनः संध्यामुपासीतेति विशेषाद्वर्णितमस्माभिर्निर्णयसुधाकरे । अत्र संदर्भः । पश्चात्तदनंतरं सायं यस्मिन्दिने चलितस्तस्यैव दिवसस्यांते । दिशं द्वारकागन्तव्यकाष्ठाम् । तेन रथस्य शैघ्र्यमुक्तम् ॥ ननु हस्तिनापुरतो द्वारकामार्गे नैते देशाः संतीत्यत आह । तत्रत्यैस्तत्तद्देशभवैर्भक्तैस्तत्रतत्र द्वारकामार्गे आगत्य प्रत्युद्यतानि निवेदितान्यर्हणान्युपायनानि स्वस्वदेशनयनार्थं यस्मै सः । तेन तत्तद्भक्तमनोरथपूरणार्थं तत्तद्देशं गत्वा गत्वैव तत्र तत्रैकैकानि दिनानि स्थित्वा पुनर्वर्त्मानुससारेति भावः ।। संदर्भस्तु प्रकटेन स्वप्रकाशेन । प्रकटतत्प्रकाशविशेषदर्शनं कौतुकार्थमेव । तदा तत्र गमनमित्याह ॥ ३६ ॥ इति श्रीभागवतभावार्थदीपिकाप्रकाशे प्रथमस्कन्धे दशमोऽध्यायः ॥ १० ॥ बंधुभिः सह ( १ ) उच्चलंतः पौरा यस्मिस्तत्स्वपुरम् । उदश्चतश्चलंतो देदीप्यमाना वा ध्वजास्तैर्युतं तोरणं द्वारबाह्यभागो यत्र तत्तथा । ''तोरणोऽस्त्री बहिर्द्वारम् '' इत्यमरः । उल्लसंती रत्नदीपानामालिर्यत्र तत्तथा ( २ ) इवेति । साक्षाद्दर्शनं विना विषादशांत्यनुपपत्तेः ॥ १ ॥ स दरः ॥ २ ॥ तं शंखोद्भूतं निनदं शब्दम् । ''शब्दे निनादनिनदध्वनिध्वानरवस्वनाः'' इत्यमरः । जगतो भयं यस्मात्कालात् येभ्यो दैत्येभ्यो वा तस्य तेषां च भयमावहति समंतात्प्रापयतीति तम् । भर्तुः श्रीकृष्णस्य ॥ ३ ॥

तत्रोपनीतवलयो रवेर्दीपमिवाऽऽदृताः ॥ आत्मारामं पूर्णकामं निजलाभेन नित्यदा ॥ ४ ॥ प्रीत्युत्फुल्लमुखाः प्रोचुर्हर्षगद्गदया गिरा ॥ पितरं सर्वसुहृदमवितारमिवार्भकाः ॥ ५ ॥ नताः स्म ते नाथ सदांघ्रिपंकजं विरिंचवैरिंच्यसुरेंद्रवंदितम् ॥ परायणं क्षेममिहेच्छतां परं न यत्र कालः प्रभवेत्परः प्रभुः ॥ ६ ॥ भवाय नस्त्वं भव विश्वभावन त्वमेव माताऽथ सुहृत्पतिः पिता ॥ त्वं सद्गुरुर्नः परमं च दैवतं यस्यानुवृत्त्या कृतिनो बभूविम ॥ ७ ॥ अहो सनाथा भवता स्म यद्वयं त्रैविष्टपानामपि दूरदर्शनम् ॥ प्रेमस्मितस्निग्धनिरीक्षणाननं पश्येम रूपं तव सर्वसौभगम् ॥ ८ ॥ यर्ह्यंबुजाक्षाऽपससार भो भवान्कुरून्मधून्वाऽथ सुहृद्दिदृक्षया ॥ तत्राब्दकोटिप्रतिमः क्षणो भवेद्रविं विनाक्ष्णोरिव नस्तवाऽच्युत ॥ ९ ॥ इति चोदीरिता वाचः प्रजानां भक्तवत्सलः ॥ शृण्वानोऽनुग्रहं दृष्ट्या वितन्वन्प्राविशत्पुरीम् ॥ १० ॥

तत्र तस्मिन् श्रीकृष्णे उपनीताः समर्पिता वलय उपायनानि याभिस्ताः । निरपेक्षेऽपि तस्मिन्नादरेण समर्पणे दृष्टांतः । रवेर्दीपमिवेति । पितरमर्भका इव तं सर्वसुहृदमवितारं प्रोचुरित्युत्तरेणान्वयः । सुहृत्त्वेनैवावितारं न तु कामेन । अत्र हेतुः । आत्मारामम् । तत्रापि हेतुः परमानंदनिजस्वरूपलाभेनैव पूर्णकामम् ॥ ४ ॥ ५ ॥ किमूचुरिति तदाह । नताः स्मेति । विरिंचो ब्रह्मा । वैरच्याः सनकादयः । इह संसारे परं क्षेममिच्छतां परायणं परमं शरणम् । कुतः । परेषां ब्रह्मादीनां प्रभुरपि कालो यत्र प्रभुर्न भवेत् ॥ ६ ॥ अतो भवायोद्भवाय नोऽस्माकं त्वं भव । हे विश्वभावन कृतिनः कृतार्था बभूविम जाता वयम् ॥ ७ ॥ कृतार्थत्वमेवाहुः । अहो भवता वयं सनाथाः स्म । यद्यस्मात्तव रूपं पश्येम । त्रैविष्टपानामपि दूरे दर्शनं यस्य तत् । देवानामपि दुर्लभदर्शनमित्यर्थः । प्रेम्णा यत्स्मितं तद्युक्तं स्निग्धं निरीक्षणं यस्मिंस्तदाननं यस्मिंस्तद्रूपम् । सर्वेषु चांगेषु सौभगं यस्मिंस्तत् ॥ ८ ॥ अर्भका इव सकरुणमाहुः । यर्हि यदा । भो अंबुजाक्ष । नो भवानिति पाठे न इत्यनादरे षष्ठी । अस्माननादृत्यापससारापहाय जगाम । कुरून्हस्तिनापुरम् । मधून्मथुराम् । वा । तत्र तदा रविं विना आंध्यादक्ष्णोर्यथैकोऽपि क्षणोऽब्दकोटिप्रतिमो भवेदेवं तव नस्त्वदीयानामस्माकमपीत्यर्थः ॥ ९ ॥ इति चैवंविधा अन्याश्चोच्चारिता वाचः शृण्वन् दृष्ट्या साभिनंदनावलोकेनानुग्रहं कुर्वन् पुरीं द्वारकां प्राविशत् ॥ १० ॥

उपायनान्युपढौकितानि अत्र कामाभावे अत्रात्मारामत्वे तेजोरूपत्वेन निरपेक्षस्यापि रवेरग्रे यथा दीपं समर्पयंति तथा निरपेक्षस्य श्रीकृष्णस्याग्रे बलिसमर्पणं स्वाभ्युदयार्थमेवेति भावः॥४॥५॥हे नाथेति।त्वमस्माकं सर्वाभीष्टदानसमर्थोसीति भावः॥६॥यतस्त्वमेव सर्वप्रभुरतो हेतोः हे विश्वभावनेति सर्वविश्वपालकस्यास्मद्रक्षणे तव न कश्चित्परिश्रमोऽस्तीति भावः॥७॥इत्यर्थ इति।तत्कार्यार्थमवतीर्णत्वाद्दर्शनाभावो न व्याख्येय इति भावः॥८॥हे अंबुजाक्षेति । तव दर्शनमस्माकं शांतिजनकं संसारतापहारकत्वादिति भावः । मथुराशब्देन तन्मन्डलं ग्राह्यं नन्दव्रजमित्यर्थः।न तु मथुरायां तदानीं तस्य सुहृदः संति । तत्र योगप्रभावेण नीत्वा सर्वजनं हरिरिह सर्वशब्दात् तेन आयास्ये इति दौत्यकैरिति । “ज्ञातीन्वो द्रष्टुमेष्यामो विधाय सुहृदां सुखम्” इति यद्भगवता प्रतिश्रुतं व्रजं प्रत्यागमनं तत्पाद्मादिषु पुराणेषु स्पष्टं सदपि श्रीभागवते त्वस्मिन्नत्रैव ज्ञापितामिति ध्येयम् ॥ ९॥१० ॥

मधुभोजदशार्हार्हैः कुकुरान्धकवृष्णिभिः ॥ आत्मतुल्यबलैर्गुप्तां नागैर्भोगवतीमिव ॥ ११ ॥ सर्वर्तुसर्वविभवपुण्यवृक्षलताश्रमैः ॥ उद्यानोपवनारामैर्वृतपद्माकरश्रियम् ॥ १२ ॥ गोपुरद्वारमार्गेषु कृतकौतुकतोरणाम् ॥ चित्रध्वजपताकाग्रैरंतःप्रतिहतातपाम् ॥ १३ ॥ संमार्जितमहामार्गरथ्यापणकचत्वराम् ॥ सिक्तां गंधजलैरुप्तां फलपुष्पाक्षतांकुरैः ॥ १४ ॥ द्वारिद्वारि गृहाणां च दध्यक्षतफलेक्षुभिः ॥ अलंकृतां पूर्णकुंभैर्बलिभिर्धूपदीपकैः ॥ १५ ॥ निशम्य प्रेष्ठमायांतं वसुदेवो महामनाः ॥ अक्रूरश्चोग्रसेनश्च रामश्चाद्भुतविक्रमः ॥ ॥ १६ ॥ प्रद्युम्नश्चारुदेष्णश्च सांबो जांबवतीसुतः ॥ प्रहर्षवेगोच्छशितशयनासनभोजनाः ॥ १७ ॥ वारणेंद्रं पुरस्कृत्य ब्राह्मणैः ससुमंगलैः ॥ शंखतूर्यनिनादेन ब्रह्मघोषेण चादृताः ॥ प्रत्युज्जग्मू रथैर्हृष्टाः प्रणयागतसाध्वसाः ॥ १८ ॥ वारमुख्याश्च शतशो यानैस्तद्दर्शनोत्सुकाः ॥ लसत्कुंडलनिर्भातकपोलवदनश्रियः ॥ १९ ॥

तां द्वारकां स्तौति पंचभिः। स्वतुल्यबलैर्मधुभोजादिभिर्गुप्तां रक्षिताम्।।११॥सर्वेष्वृतुषु सर्वे विभवाः पुष्पादिसंपदो येषां ते पुण्यवृक्षा लताश्रमा लतामंडपाश्च येषु तैरुद्यानादिभिर्वृता ये पद्माकराः सरांसि तैः श्रीः शाभा यस्यां ताम्। उद्यानं फलप्रधानम्। उपवनं पुष्पप्रधानम्। आरामः क्रीडार्थं वनम् ॥१२॥ गोपुरं पुरद्वारम्। द्वारं गृहद्वारम्। कृतानि कौतुकेनोत्सवेन तोरणानि यस्यां ताम्।गरुडादिचिह्नांकिता ध्वजाः जयप्रदयंत्रांकिताः पताकाः।चित्राणां ध्वजपताकानामग्रैरंतः प्रतिहत आतपो यस्यां ताम्॥१३॥ संमार्जितानि निःसारितरजस्कानि महामार्गादीनि यस्यां ताम्। महामार्गा राजमार्गाः। रथ्या इतरमार्गाः। आपणकाः पण्यवीथयः चत्वराण्यंगणानि। फलादिभिरुप्तामवकीर्णाम् ॥ १४ ॥ १५ ॥ प्रेष्ठमंतरात्मानमायांतं निशम्य श्रुत्वा वसुदेवादयः प्रत्युज्जग्मुरिति चतुर्थेनान्वयः ॥ १६ ॥ प्रहर्षवेगेनोच्छशितान्युल्लंघितानि शयनादीनि यैस्ते। शश प्लुतगतौ ॥ १७ ॥ वारणेंद्रं मंगलार्थं पुरतः कृत्वा। ससुमंगलैः सुमंगलं पुष्पादि तद्युक्तपाणिभिः। ब्रह्मघोषो मंत्रपाठः ॥ १८ ॥ प्रणयेन स्नेहेनागतं साध्वसं संभ्रमो येषां ते। वारमुख्या नटादयश्च प्रत्युज्जग्मुः। लसत्कुंडलैर्निर्भातानि यानि कपोलानि तैर्वदनेषु श्रीः शोभा यासां ताः। वारमुख्या

मन्वादयः सप्त यदूनामवांतरभेदाः। भोगवती नागानां पुरी ॥ ११॥ ऋतुषु वसंतादिषु पुण्यवृक्षा अश्वत्थाम्रादयः। पुण्यलता विष्णुक्रांताद्यास्तासामाश्रमैर्निवासैः ॥१२ ॥ "तोरणोऽस्त्री बहिर्द्वारं तथा वंदनमालिका" इति कोशात् ॥ १३॥ १४ ॥ बलिभिः पूजासाधनैर्धूपाद्यैः ॥ १५॥१६॥१७ ॥ वारणेन्द्रं करधृतमुक्तापूर्णघटमितिशेषः। " मुक्तापूर्णघटो यस्य शुण्डादण्डे धृतः करी। स कार्योंग्रे मंगलार्थं वेदज्ञैर्ब्राह्मणैः सह ॥" इति शकुनशास्त्रात् ॥१८॥ वारे द्वारे मुखं यासां कृतसंकेतनरागमनविलोकनार्थं ता वारमुख्याः। पृषोदरादित्वान्मुखस्य मुख्यादेशः। तस्य श्रीकृष्णस्य दर्शने उत्सुकाः सोत्कंठाः तत्पराः। "तत्परे प्रसितोत्सुकौ" इत्यमरः ॥१९॥

नटनर्तकगंधर्वाः सूतमागधबंदिनः ॥ गायंति चोत्तमश्लोकचरितान्यद्भुतानि च ॥२०॥ भगवांस्तत्र बंधूनां पौराणामनुवर्तिनाम् ॥ यथाविध्युपसंगम्य सर्वेषां मानमादधे ॥ २१ ॥ प्रह्वाभिवादनाश्लेषकरस्पर्शस्मितेक्षणैः ॥ आश्वास्य चाऽऽश्वपाकेभ्यो वरैश्चाभिमतैर्विभुः ॥ २२ ॥ स्वयं च गुरुभिर्विप्रैः सदारैः स्थविरैरपि ॥ आशीर्भिर्युज्यमानोऽन्यैर्वंदिभिश्चाऽविशत्पुरम् ॥ २३ ॥ राजमार्गं गते कृष्णे द्वारकायाः कुलस्त्रियः ॥ हर्म्याण्यारुरुहुर्विप्र तदीक्षणमहोत्सवाः ॥ २४ ॥ नित्यं निरीक्षमाणानां यदपि द्वारकौकसाम् ॥ न वितृप्यंति हि दृशः श्रियो धामांगमच्युतम् ॥ २५॥ श्रियो निवासो यस्योरः पानपात्रं मुखं दृशाम् ॥ बाहवो लोकपालाना सारंगाणां पदांबुजम् ॥ २६ ॥ सितातपत्रव्यजनैरुपस्कृतः प्रसूनवर्षैरभिवर्षितः पथि ॥ पिशंगवासा वनमालया बभौ घनो यथार्कोडुपचापवैद्युतैः ॥ २७ ॥

नर्तक्यो वेश्या इति यावत् ॥ १९ ॥ अद्भुतानि चेति चकारस्य बंदिनश्चेत्यन्वयः । नटा नवरसाभिनयचतुराः तालाद्यनुसारेण नृत्यंतो नर्तकाः । गंधर्वा गायकाः । "सूताः पौराणिकाः प्रोक्ता मागधा वंशशंसकाः । बंदिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः" । ते सर्वे गायंति चेत्यन्वयः । उत्तमश्लोकस्याद्भुतानि चरित्राणि भक्तवात्सल्यादीनि ॥ २० ॥ यथाविधि यैः सह यथोचितं तैस्तथा समागमं कृत्वा । सर्वेषां मानमादधे कृतवानित्यर्थः ॥ २१ ॥ तदाह । प्रह्वेति । प्रह्वं प्रह्वत्वं शिरसा नतिः अभिवादनं वाचा नतिः । आश्वास्याभयं दत्त्वा । श्वपाकानभिव्याप्य वरैरभीष्टदानैश्च मानं कृतवान् ॥ २२ ॥ अन्यैश्च बंदिभिश्च ॥ २३ ॥ हे विप्र शौनक । तस्येक्षणेन महानुत्सवो यासां ताः ॥ २४ ॥ यद्यस्मान्नित्यं सदाच्युतं निरीक्षमाणानामपि दृशो नैव तृप्यंत्यत आरुरुहुः । कथंभूतम् । श्रियः शोभाया धाम स्थानमंगं यस्य तम् ॥ २५ ॥ एतदेवाभिनयेनाह । श्रियो लक्ष्म्या यस्योरो वक्षो निवासः । यस्य मुखं सर्वप्राणिनां दृशां सौंदर्यामृतपानाय पात्रम् । यस्य बाहवो लोकपालानां निवासः । सारं श्रीकृष्णं गायंतीति सारंगा भक्तास्तेषां यस्य पदांबुजं निवासः । तं निरीक्षमाणानां दृश इति पूर्वेणान्वयः ॥ २६ ॥ सितैरातपत्रव्यजनैरुपस्कृतो मंडितः । अर्कश्चोडुपो नक्षत्रसहितश्चंद्रश्च चापमिंद्रधनुश्च वैद्युतं विद्युत्तेजश्च तैः । अर्कश्छत्रस्योपमानम् । नक्षत्राणि पुष्पवृष्टेः । चंद्रः परिभ्रमकृतमंडलाकारयोश्चामरव्य

नवरसाः श्रृंगारवीरादयस्तेषामभिनयेऽनुकरणे चतुराः पौराणिकाः पुराणोक्तार्थानुसारेण स्तावकाः । वंशशंसकाः पराक्रमांकितस्तुतिकर्त्तारः । अमलप्रज्ञा मंगलपाठकाः "प्राचीनातीतराज्ञां च स्तोतारः सूतसंज्ञकाः । भविष्यन्नृपस्तोतारो मागधाः परिकीर्त्तिताः ॥ वर्त्तमाननृपाणाञ्च स्तोतारो बंदिनः स्मृताः" इत्यपि केचित् ॥ २० ॥ तत्र तदा । इत्यर्थ इति । सर्वेषां सत्कारं चकारेति भावः॥२१॥ तन्मानम् ॥ २२ ॥ स्वयं च श्रीकृष्णश्च ॥२३॥ "यस्मिन्मार्गे प्रगच्छंति पुरुषाः सचतुष्पदाः । अवारिता अहोरात्रं राजमार्गः स उच्यते॥" इति कात्यायनः । हे विप्रेति । यथा युष्माकं विप्राणां भगवद्दर्शनोत्साहस्सदा भवति तथा तासामपीति भावः ॥ २४ ॥ २५ ॥ एतदेव श्रियो धामाङ्गत्वमेव अभिनयेन व्यञ्जकवाक्येन ॥ २६ ॥ घनः कृष्णस्योपमानम् । इत्यर्थ इति । इयमभूतोपमा वर्ण्यत एव कविभिर्न तु सा दृश्यते श्रीकृष्णं विनेति । अतोतीव

प्रविष्टस्तु गृहं पित्रोः परिष्वक्तः स्वमातृभिः ॥ ववंदे शिरसा सप्त देवकीप्रमुखा मुदा ॥ २८ ॥ ताः पुत्रमंकमारोप्य स्नेहस्नुतपयोधराः ॥ हर्षविह्वलितात्मानः सिषिचुर्नेत्रजैर्जलैः ॥ २९ ॥ अथाविशत्स्वभवनं सर्वकाममनुत्तमम् ॥ प्रासादा यत्र पत्नीनां सहस्राणि च षोडश ॥ ३० ॥ पत्न्यः पतिं प्रोष्य गृहानुपागतं विलोक्य संजातमनोमहोत्सवाः ॥ उत्तस्थुरारात्सहसाऽऽसनाशयात्साकंव्रतैर्व्रीडितलोचनाननाः ॥ ३१ ॥ तमात्मजैर्दृष्टिभिरंतरात्मना दुरंतभावाः परिरेभिरे पतिम् ॥ निरुद्धमप्यास्रवदंबु नेत्रयोर्विलज्जतीनां भृगुवर्य वैक्लवात् ॥ ३२ ॥

जनयोः । चापं वनमालायाः । विद्युत्तेजः पिशंगवाससोः । अभूतोपमेयम् । यदि घनस्योपरि सूर्यबिंबमुभयतश्चंद्रौ सर्वतो नक्षत्राणि मध्ये च मिलितं चापद्वयं स्थिरं विद्युत्तेजश्च भवेत्तर्हि स घनो यथा भाति तथा हरिर्बभावित्यर्थः ॥ २७ ॥ देवकीप्रमुखाः सप्त ववंद इति मातृसौदर्यादादरविशेषज्ञापनार्थमुक्तम् । अष्टादशापि वसुदेवभार्या मातृतुल्यत्वान्नमस्कृता एव ॥ २८ ॥ नेत्रजैर्जलैर्हर्षाश्रुभिः ॥ २९ ॥ स्वगृहप्रवेशमाह । अथेति सहस्राणि च षोडशेति चकारादष्टोत्तरशताधिकानीति ज्ञेयम् ॥ ३० ॥ प्रोष्य देशांतरे उषित्वा । आराद्दूरादेव विलोक्य संजातो मनसि महोत्सवो यासां ताः । आसनादाशयाच्च । आसनाद्देहेनोत्तस्थुः । आशयोंऽतःकरणं तस्मादप्यात्मनोत्तस्थुः । श्रीकृष्णेनात्मनः संश्लेषेंऽतःकरणव्यवधानमपि ता नासहंतेत्यर्थः । व्रीडितानि लोचनान्याननानि च यासां ताः । अपांगैरेव वीक्षणाद्व्रीडितलोचनाः अवनतमुखत्वाद्व्रीडिताननाः साकं व्रतैरिति हास्यक्रीडावर्जनादिनियमा अपि ताभिः उत्तस्थुरित्यर्थः । धृतव्रता एवोत्तस्थुरिति वा । व्रतानि च याज्ञवल्क्येनोक्तानि "क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् । हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका ॥" इति ॥ ३१ ॥ आयांतं तं पतिं दर्शनात्पूर्वमात्मना बुद्ध्यांतर्हृदये परिरेभिरे ततो दृष्टिभिस्ततः समीपमागतमात्मजैः पुत्रैर्गृहीतकंठमालिंगयंत्य इव स्वयमालिंगितवत्य इत्यर्थः । अत्र हेतुः । दुरंतभावा गंभीराभिप्रायाः । तदा च तासां नेत्रयोर्नि

चमत्कृतिविशिष्टः श्रीकृष्णस्तदा बभाविति भावः ॥ २७ ॥ प्रवासादागत्य प्रथमं मातृपितृगृहे एव गंतव्यं जीवतोस्तयोरन्यथा तद्गृहं नमस्कृत्य पुनः स्वपत्नीगृहे गंतव्यमित्युक्तमनेन श्लोकेन ॥ २८ ॥ ता मातरः ॥ २९ ॥ अथ मातापितृवंदनोत्तरम् । सर्वे कामा अभिलषितपदार्था यस्मिंस्तत् ः। न विद्यते उत्तमं यस्मात्तत्सर्वोत्तममित्यर्थः । यत्र भवने ॥ ३० ॥ यावत्यो महिष्यस्तावद्भिरेवप्रकाशैर्युगपदेव पृथक्पृथक् तत्तन्मन्दिरं प्रविष्टमालोकमानानां मामेवायं प्रथमं प्राप्त इत्यभिमन्यमानानां तासां तात्कालिकीं चेष्टामाह–संजातो मनसो महोत्सवः परिरंभस्पृहा यासां ताः । इत्यर्थ इति । अंतःकरणममि तदाकारं चक्रुरिति भावः । ततश्च व्रीडितलोचनानना अपांगैरेव वीक्षणाद्व्रीडितलोचना अवनतमुखत्वाद्व्रीडिताननाः । अयमर्थः । आसनं परित्यज्य प्रथमं देहेनैव परिरब्धुमुत्थिताः । मध्ये लज्जया कृतं विघ्नमालक्ष्य लज्जोत्पत्तिस्थानमंतःकरणं च त्यक्त्वा केवलमात्मनैव परिरेभिरे इति केवलमुत्प्रेक्षेव । कांतमालोक्यसहसैव स्पर्शौत्सुक्यपूर्णप्रेमानंदमूर्च्छितास्ता बभूवुरिति तत्त्वम् । मूर्च्छायां सत्यामेव सुषुप्तिप्रलययोरिवांतःकरणव्यवधानाभावसिद्धेः । व्रतैः सहिता एवोत्तस्थुरिति तेषां व्रतानां पतिं दर्शयितुमनुचितानामपि सहसा त्यक्तुं शक्यत्वात्तैः साकमेवोत्तस्थुः । ततश्च तेन दृष्टानां तासामसंस्कृतशारीरपरिच्छदता स्नेहवर्द्धनायैवाभूदिति ॥ ३१ ॥ इत्यर्थ इति । अत्र सहार्थस्य गम्यमानत्वादात्मजैः सहालिंगनं चक्रुरिति भावः । यद्वात्मजैर्देहजै रोमांचादिभिः सहेत्यर्थः । अत्र पुत्रैः सहालिंगने दुरंतभावा इति वेलातीतस्नेहाः स्नेहपारवश्यात्पुत्रा

यद्यप्यसौ पार्श्वगतो रहोगतस्तथापि तस्यांघ्रियुगं नवंनवम् ॥ पदेपदे का विरमेत तत्पदाच्चलापि यच्छ्रीर्न जहाति कर्हिचित् ॥३३॥ एवं नृपाणां क्षितिभारजन्मनामक्षौहिणीभिः परिवृत्ततेजसाम् ॥ विधाय वैरं श्वसनो यथानलं मिथो वधेनोपरतो निरायुधः ॥ ३४ ॥ स एष नरलोकेऽस्मिन्नवतीर्णः स्वमायया ॥ रेमे स्त्रीरत्नकूटस्थो भगवान्प्राकृतो यथा ॥ ३५ ॥ उद्दामभावपिशुनामलवल्गुहासव्रीडावलोकनिहतोऽमदनोऽपि यासाम् ॥ संमुह्य चापमजहात्प्रमदोत्तमास्ता यस्येंद्रियं विमथितुं कुहकैर्न शेकुः ॥ ३६ ॥

रुद्धमप्यंबु बाष्पं वैक्लव्याद्वैवश्यादास्रवदीषत्सुस्राव । अत एव धैर्यहान्या विलज्जतीनाम् । हे भृगुवर्य चित्रं शृण्विति ॥ ३२ ॥ पार्श्वगतः समीपस्थस्तत्रापि रहोगत एकाते प्रवर्तते स्म । पदेपदे प्रतिक्षणं नवंनवमेव । अत्र कैमुत्यन्यायः का विरमेतेति । चला चंचलस्वभावापि ॥ ३३ ॥ उक्तं श्रीकृष्णचरितं संक्षिप्याह । एवमिति द्वाभ्याम् । क्षितेर्भाराय जन्म येषाम् । अक्षौहिणीभिः कृत्वा परिवृतं सर्वतः प्रसृतं तेजः प्रभावो येषाम् । श्वसनो वायुर्वेणूनामन्योन्यसंघर्षेणानलं विधाय मिथो दाहेन यथोपशाम्यति तद्वत् ॥ ३४ ॥ स्त्रीरत्नकटस्थ उत्तमस्त्रीकदंबस्थः ॥ ३५ ॥ नन्वेवं स्त्रीसंगादिभिः संसारप्रतीतेः कथं भगवानवतीर्ण इत्युच्यते तत्राह । उद्दामेति द्वाभ्याम् । यासा

दिलज्जामपि जह्वुरिति भावः । यद्वा दुर्ज्ञेयाभिप्रायाः अस्मदालिंगनेनैवैते जाता यदि विशेषपुत्रेच्छा तर्ह्येतान्विहायास्मानेवालिंगस्वेति तासामभिप्रायः । अत एव वैवश्यादेव । श्रीकृष्णलीलामृतपानयोग्यविप्रकुलोद्भूतत्वात्तुभ्यमहमेतद्रहस्यकथां ब्रवीमीत्यभिप्रायेणाह-भृगुवर्येति । तपश्चर्यादिपरायणेभ्यो भार्गवकुलजेभ्यस्त्वमेव वर्योसि । श्रीकृष्णलीलाश्रुतिनिहितचेतस्त्वादिति भावः । "सर्वेभ्यश्चैव धर्मेभ्यः परो धर्मोयमीरितः । सर्वशास्त्रार्थतत्त्वज्ञश्रीपराशरसूनुना ॥ श्रीकृष्णलीलाश्रवणं सर्वं त्यक्त्वा व्रतादिकम्। " इत्यादिपुराणात् । अत्र विश्वनाथः । लज्जया कृतविघ्नानामपि तासां तत्परिरंभे प्रकारमाह—तमिति । आत्मजैर्मनोभवैस्तद्दर्शनोद्दीपितैः कामैर्हेतुभिरित्यर्थः । "मकरध्वज आत्मभूः" इत्यमरः । बहुत्वं परमबलिष्ठत्वेन पूज्यत्वात् । दृष्टिभिः परिरेभिर इति प्रथमं चाक्षुषः संभोग उक्तः । ततो दृष्टिभिरेव नेत्ररन्ध्रैरेवान्तःप्रवेश्यात्मनान्तर्देहेनापि यतो दुरन्तभावा दुर्ज्ञेयाभिप्रायाः । अत एव वक्ष्यते चायमेव प्रकारो भाववतीनां "तं काचिन्नेत्ररन्ध्रेण हृदि कृत्य निमील्य च । पुलकांग्युपगुह्यास्ते योगीवानंदसंप्लुता" इति । तदपि सूक्ष्मधिया प्रेयसा स्वाभिप्रायं ज्ञातमालक्ष्य विलज्जमानानां तासां नेत्रयोरंबु निरुद्धमपीति स्वामित्वत् ॥ ३२ ॥ चिरविरहानंतरमेतादृशानुरागोदययोग्यतायां तासामेव स्थलांतरं कैमुत्येन दृष्टांतयति । यदीति । असौ श्रीकृष्णः तासां श्रीपट्टमहिषीणाम् नवंनवमिति । तासां स्वाभाविकानुरागवतीनां नाश्चर्यं यतः का वान्यापि तत्पदाद्विरमेत्तदास्वादेन तृप्ता भवेत् । तत्कैमुत्येनोदाहरणम्—चलापीति ॥ ३३ ॥ ताभिः सह रमणं निष्प्रत्यूहं वक्तुं तस्य कार्यांतरव्यग्रत्वाभावमाह—केवलं पापाचरेणन भारायैव जन्म येषाम् ॥ ३४ ॥ य एवमुपरतं स एव रेमे इति योज्यम् । स्वेषु निजेषु या माया तत्सुखचिकीर्षामयप्रेमा तया लोकेऽवतीर्ण इति तस्या एव सर्वावतारप्रयोजननिमित्तत्वात्स्त्रीरत्नकूटस्थोपि तादृशरमणावेशकारिप्रेमविशेषरूपयानयैव रेमे न तु प्रसिद्धकामेनेत्यर्थः । तत्र रत्नपदेन तासामपि तद्योग्यत्वं बोधयित्वा तादृशप्रेमविशेषमयत्वं बोधितम् । एवं भाववैलक्षण्येऽपि क्रियया साम्यमित्याह—प्राकृतो यथेति । अत्र श्रीभगवतोप्यप्राकृतत्वं दर्शयित्वा तद्वत्कामविषयत्वं निराकृतम् । अत्र विश्वनाथः । स्वमाया योगमायैव स्त्रीरत्नसमूहे प्रकाशबाहुल्येन प्रत्येकमेव तिष्ठतीति सः प्राकृतो यथेत्यनेन तस्य तथा रमणकारणस्य कामस्य रमणस्य चाप्राकृतत्वान्निर्गुणत्वमुक्तमित्याह ॥ ३५ ॥ अमदनो मदनदाहकत्वेन तदनधीनः । एवं प्रभावा महादेवमोहनसमर्थाः याः यद्वहं स्त्रीकटाक्षैर्जितस्तार्हि किं तच्छेदासमर्थेनानेन धनुषेति । तत्त्यक्तवानिति

तमयं मन्यते लोको ह्यसंगमपि संगिनम् ॥ आत्मौपम्येन मनुजं व्यापृण्वानं यतोऽबुधः ॥ ३७ ॥
एतदीशनमीशस्य प्रकृतिस्थोऽपि तद्गुणैः ॥ न युज्यतेऽसदात्मस्थैर्यथा बुद्धिस्तदाश्रया ॥ ३८ ॥

मुद्दामो गंभीरो यो भावोऽभिप्रायस्तस्य पिशुनः सूचकोऽमलो वल्गुः सुंदरो हासो व्रीडावलोकश्च ताभ्यां निहतोऽमदनः श्रीमहादेवोपि संमुह्य लज्जया चापं पिनाकमजहात् । एवंप्रभावा याः स्त्रिय इत्येतावद्विवक्षितम् । यद्वा । भगवतो मोहिनीरूपेण महेशोऽपि मोहित एवमेताश्च तादृग्विलासा एवेति तथोक्तम् । ताः कुहकैः कपटैर्विभ्रमैर्यस्येंद्रियं मनो विमथितुं क्षोभयितुं न शेकुर्न शक्ताः । अथ वा निहतस्ताडितो मदनोऽपि जगद्विजयी संमुह्य तत्तत्कर्तव्यतामूढः संश्चापं धनुर्लज्जयाजहाज्जहौ ताश्च प्रमदोत्तमाः कामविजयिन्योऽपीत्यादि पूर्ववत् ॥ ३६ ॥ तं श्रीकृष्णमयं प्राकृतो लोक आत्मौपम्येन स्वसादृश्येन संगिनं मनुजं मन्यते । अत्र हेतुः । व्यापृण्वानं व्याप्रियमाणम् । यतोऽयमबुधोऽतत्त्वज्ञः ॥ ३७ ॥ कुत इत्यपेक्षायामैश्वर्यलक्षणमाह । एतदिति ईशस्येशनमैश्वर्यं नामैतदेव । किं तत् । प्रकृतिस्थोऽपि तस्या गुणैः सुखदुःखादिभिः सदा

भावः । एतद्वृत्तमदृष्टचरं मत्वाह—यद्वेति । एता भगवत्पत्न्यश्च तादृग्विलासा भगवत्तुल्यप्रभावा एवेति हेतोस्तथोक्तममदनोपीत्युक्तम् । अत्र संदर्भः । पुनरपि कामानधीनत्वमाह-मदनः प्राकृतः काम उद्भटभावसूचक निर्मलमनोहराभ्यां हासव्रीडावलोकनाभ्यां निहतस्तन्महिमदर्शनेन स्वयमेवोक्तार्थीकृतवस्त्रास्त्रादिबलोभूत् । अत एव संमुह्य चापमजहात् । "भूपल्लवं धनुरपांगतरंगितानि बाणा गुणः श्रवणपालिरिति स्मरेण । अस्त्राणि निर्जितजगन्ति किमर्पितानि" इतिवत् । तत्र निजास्त्रप्रयोगं न कुरुत एवेत्यर्थः । तथाभूता अपि प्रमदोत्तमाः प्रमदेन प्रकृष्टप्रेमानंदविशेषेण परमोत्कृष्टास्ताः स्ववृंद एव याः स्वतोऽपि प्रेमवत्यस्तासां साम्येच्छया कुहकैस्तादृशप्रेमाभावेन कपटांशप्रयुक्तैः सद्भिः कटाक्षादिभिर्यस्येंद्रियं विमथितुं तद्विशेषेण मथितुं न शेकुः । किं तु स्वप्रेमानुरूपमेव शेकुरिति । तस्मात्प्रेममात्रोत्थायिविकारित्वात्तस्य कामुकवैलक्षण्यमिति भावः । विश्वनाथस्तु—नन्विंद्रियैर्विषयान्भुंजानस्य तस्य कथमप्राकृतत्वं तत्राह । यासाम् उद्दामभावपिशुनामलवल्गुहासव्रीडावलोकाभ्यां कृष्णविषयकाभ्यां स्वरूपकंदर्पपीडोत्थाभ्यां निहतः अहो एता मच्छराघातं विनैव सस्पृहं कान्तमालोकयन्ते इति विचारयन्नेव तदतिमाधुर्यावलोकोत्थविस्मयवशीकृतः सन्मदनः प्राकृतकंदर्पस्तन्मोहनार्थमागतोऽपि स्वयं संमुह्य चापमजहात् । आसां भ्रूचापाकृष्टानां व्रीडावलोकशराणामग्रे किं मे चापेन सशरेणेति तं तत्याज । ताः प्रमदोत्तमा अपि यस्येन्द्रियं कुहकैः कपटप्रयुक्तैर्वल्गुहासादिभिर्न शेकुः । किं तु प्रेमप्रयुक्तैः शेकुरिति तासां समंजसरतिमत्वात्प्रेममया काममया अपि कटाक्षादयः संभवन्ति तत्राद्या भावपिशुनशब्देनोच्यंते । द्वितीयाः कुहकशब्देन । तत्राद्यैर्वशीकृतेन्द्रियत्वेऽपि भगवतोऽप्राकृतत्वलक्षणं नैर्गुण्यमेव तस्य प्रेमवश्यत्वात् । प्रेम्णश्च चिच्छक्तिविलासत्त्वात्तन्मयानां कटाक्षादीनाञ्च तदुत्थितस्य कामस्य च तत्कारणस्य च रमणस्य च चिन्मयत्वाद्विषयभोगशब्देन वक्तुमशक्यत्वान्मायिकानामेव शब्दस्पर्शादीनां विषयशब्देनाभिधानादिति । द्वितीयैः प्रेमरहितैर्वशीकारासंभवात् । "यस्येन्द्रियं विमथितुं कुहकैर्न शेकुः" इत्युक्तम् । सर्वथैव तदिंद्रियविमथनाभावे व्याख्याते "रमे स्त्रीरत्नकूटस्थो भगवान्प्राकृतो यथा" इत्यनेन व्यंजिता रमणासक्तिश्च नोपपद्यते । किञ्चात्र कादाचित्कैस्तदीयकाममयकटाक्षादिभिर्वशीकाराभावेपि तेषां प्राकृतत्वं न वाच्यम् । पट्टमहिषीणां सर्वासां चिच्छक्तित्वात्तदीयेषु कटाक्षादिषु प्राकृतत्वप्रवेशाशक्तेः । न च स्वरूपभूतत्वेपि चिच्छक्तिसामान्यस्यैव वशो भगवान् किं तु चिच्छक्तिविशेषस्य प्रेम्ण एवेति सिद्धांतादिति सर्वमनवद्यम् ॥ ३६ ॥ अत्र संगिमनने लोको बहिर्दर्शी व्याप्रियमाणां सत्यभामायामासक्तेरेव पारिजातार्थं बहुव्यापारदर्शनादित्यर्थः । अतोऽबुधः सदसद्विवेचनशून्यः नीलमणिं काचमिव प्रेमाणमेव विषयासक्तिं निश्चिनोतीत्यर्थः ॥ ३७ ॥ अत्रासंगित्वे हेतुमाशंकते।कुत इति । आनन्दादीनां कदाचिद्वृद्धी दर्शनादाह—वैधर्म्येति । अकारप्रश्लेषेणार्थांतरमाह—एवं वेति । अत्र विश्वनाथः । ननु भवतु नाम तासां चिच्छ

तं मेनिरेऽबला मूढाः स्त्रैणं चाऽनुव्रतं रहः ॥ अप्रमाणविदो भर्तुरीश्वरं मतयो यथा ॥ ३९ ॥
इति श्रीमद्भा० महा० प्र० श्रीकृष्णद्वारकाप्रवेशो नामैकादशोऽध्यायः ॥ ११ ॥

न युज्यत इति यत् । यथात्मस्थैरानंदादिभिरात्माश्रयापि बुद्धिर्न युज्यते तद्वत् । वैधर्म्ये दृष्टांतो वा । आत्मस्थैः सत्ताप्रकाशादिभिर्यथा बुद्धिर्युज्यत इति । एवं वा । असदात्मा देहस्तत्रस्थैर्गुणैस्तदाश्रया बुद्धिस्तदुपाधिर्जीवो यथा युज्यत एवं प्रकृतिस्थोऽपि तद्गुणैर्न युज्यत इति यदेतदीशनमीशस्येति ॥ ३८ ॥ तत्पत्न्योऽपि तस्य तत्त्वं न जानंतीत्याह । तं स्त्रैणमात्मवश्यं रह एकांतेऽनुव्रतमनुसृतं च मेनिरे । भर्तुरप्रमाणविदः प्रमाणमियत्तां महिमानमजानंत्य इत्यर्थः । ईश्वरं क्षेत्रज्ञं मतयोऽहंवृत्तयो यथा स्वाधीनं स्वधर्मयोगिनं मन्यंते तद्वत् । यद्वा । यथा तासां मतयः कल्पनास्तथातथा तमीश्वरं स्त्रैणादिरूपं मेनिर इत्यर्थः ॥ ३९ ॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे टीकायामेकादशोऽध्यायः ॥ ११ ॥ पुरोक्तं यत्प्रसंगाय द्रौणिदंडादि विस्तरात् ॥ द्वादशे तु तदेवाथ परीक्षिज्जन्म वर्ण्यते ॥ १ ॥

क्तित्वात्तद्रमणादेर्निर्गुणत्वं तदपि प्राकृतप्रपंचमध्ये प्राकृत एव यदुवंशेवतीर्णस्य प्राकृतानामेव जरासंधादीनामसुराणां रूपशब्दादीन्विषयान्स्वचक्षुःश्रोत्रादीन्द्रियैराददानस्य गुणसंगः खलु दुर्वार एवेत्यत आह—एतदिति । ईशस्येश्वरस्येशनमैश्वर्यं नामैतदिति यत्प्रकृतौ स्थितोपि तस्या गुणैर्न युज्यते । गुणैः कीदृशैरात्मस्थैः । अयमर्थः । स्वयं गुणेषु तिष्ठति गुणा अपि तिस्मिंस्तिष्ठंति तदपि तस्य गुणैरसंपर्क इति । वस्तुतो भगवत एव सर्वप्रपंचाधिष्ठानत्वेधिष्ठातृत्वे चापि निर्गुणत्वमेवोक्तं "साक्षी चेता केवलो निर्गुणश्च"इति । "सत्त्वादयो न संतीशे यत्र च प्राकृता गुणाः"इति । "हरिर्हि निर्गुणः साक्षात्पुरुषः प्रकृतेः परः" इत्यादिभिः श्रुतिस्मृतिभिर्यथा तदाश्रया—स एवाश्रयो विषयो यस्याः सा तत्स्मरणवती परमभागवतीनां बुद्धिः प्रकृतिस्थापि संतुष्टिस्तुतिनिंदादिषु तृप्तिक्षुत्पिपासापीडादिषु जागरस्वप्नसुषुप्तिषु सत्त्वादिगुणेषु स्थितापि तेष्वौदासीन्यान्न तैर्युज्यते । तथैव प्राकृतान्विषयानाददानस्यापि तस्य तेष्वासक्तिशून्यत्वान्न तैर्योग इति।अत्र संदर्भः । प्राकृतगुणेष्वसक्तत्वे हेतुः-एतदिति । अत एवादौ प्रकृतिगुणमये प्रपंचे तिष्ठन्नपि सदैव तद्गुणैर्न युज्यत इति यत् एतदीशस्यैव मैश्वर्यम् । तत्र व्यतिरेके दृष्टांतः-यथेति । तदाश्रया प्रकृत्याश्रया बुद्धिर्जीवज्ञानं यथा युज्यते तथा नेति । अन्वये वा तदाश्रया भगवदाश्रया परमभागवतानां बुद्धिर्यथा प्रकृतिस्था कथंचित्तत्र पतितापि न युज्यते तद्वत् । एवमेवोक्तं तृतीये "भगवानपि विश्वात्मा लोकवेदपथानुगः । कामान्सिषेवे द्वार्वत्यामसक्तः सांख्यमाश्रितः ॥" इति ॥ ३८ ॥ ननु तर्हि यासु तस्य सदैवासक्तिस्ताः पट्टमहिष्य एवाभिज्ञास्तस्य तत्त्वं सामस्त्येन जानंतिमैवमित्याह—तत्पत्न्योपीति । रसपुष्टिसिद्ध्यर्थं तासां स्वरूपभूतानामपि योगमायया भगवतैव स्वसंपूर्णज्ञानावरणात्ता अपि तं न जानंतीत्याह—तमिति । तं स्वभर्त्तारं रहोनुव्रतं स्वप्रेमवश्यमपि स्त्रैणं स्त्रीमात्रभाववश्यं मेनिरे । यतो मूढाः भगवतैवादिरसपुष्ट्यर्थं मूढीकृताः । इत्यर्थ इति । यथा समुद्रे विहरंतोपि समुद्रस्येयत्तां न जानंति तथा भर्त्तुः प्रमाणं न विदंतीति भावः । मतीनां जडत्वात्तथा मननं न संगच्छत इति चेत्तत्राह—यद्वेति । इत्यर्थ इति । यथायथा तासां मतयः प्रेमवासनास्तथातथैव स प्रतीयत इति भावः । "ये यथा मां प्रपद्यंते तांस्तथैव भजाम्यहम्"इति स्वेच्छामयस्य न तु भूतमयस्येत्यादेश्च । यद्वा मतयः शास्त्रकृतां वैशेषिकादीनां बुद्धय ईश्वरनिरूपणे प्रवृत्ताः जगदुपादानत्वमीश्वरत्वं जगन्नियंतृत्वं तथा जगन्निमित्तत्वमस्विरत्वमिति मतवैविध्यात् । किञ्चित्किञ्चिज्जानंत्योपि वस्तुतो मूढा एवेति "याः संपर्यचरन्प्रेम्णा" । इत्याद्युक्तेस्तासां प्रेमवत्त्वाद्भगवतश्च प्रेमवश्यत्वात्तासां प्राकृतत्वं न व्याख्येयम् ॥ ३९ ॥ इति श्रीभागवतभावार्थदीपिकाप्रकाशे प्रथमस्कंधे एकादशोध्यायः ॥ ११ ॥ यत्प्रसंगाय यस्य परीक्षिज्जन्मनः प्रस्तावाय । तदेवेत्यन्वयः ( १ )

शौनक उवाच ॥ अश्वत्थाम्नोपसृष्टेन ब्रह्मशीर्ष्णोरुतेजसा ॥ उत्तराया हतो गर्भ ईशेनाऽऽजीवितः पुनः ॥१॥ तस्य जन्म महाबुद्धेः कर्माणि च महात्मनः ॥ निधनं च यथैवासीत्स प्रेत्य गतवान्यथा ॥ २ ॥ तदिदं श्रोतुमिच्छामि गदितुं यदि मन्यसे ॥ ब्रूहि नः श्रद्दधानानां यस्य ज्ञानमदाच्छुकः ॥ ३ ॥ सूत उवाच ॥ अपीपलद्धर्मराजः पितृवद्रंजयन्प्रजाः ॥ निःस्पृहः सर्वकामेभ्यः कृष्णपादानुसेवया ॥ ४ ॥ संपदः क्रतवो लोका महिषी भ्रातरो मही ॥ जंबुद्वीपाधिपत्यं च यशश्च त्रिदिवं गतम् ॥५॥ किं ते कामाः सुरस्पार्हा मुकुंदमनसो द्विजाः ॥ अधिजह्रुर्मुदं राज्ञः क्षुधितस्य यथेतरे ॥ ६ ॥

"परीक्षितोऽथ राजर्षेर्जन्म कर्म विलापनम् । संस्थां च पांडुपुत्राणां वक्ष्ये कृष्णकथोदयम्" इति प्रतिज्ञाय पांडवानां राज्यस्थितिरुपोद्घातरूपा सप्रसंगं सप्तमाध्यायमारभ्य निरूपिता । इदानीमोपोद्घातिकमुक्तानुवादपूर्वकं पृच्छति । अश्वत्थाम्नेति।उपसृष्टेन विसृष्टेन।तस्य जन्मादि ब्रूहीत्युत्तरेणान्वयः ॥१॥ स परीक्षित् । प्रेत्य देहं त्यक्त्वा ॥ २ ॥ प्रार्थये नत्वाज्ञापयामीत्याह गदितुं यदि मन्यसेऽनुग्रहेण तर्हि ब्रूहीति । 'यस्य ज्ञानमदाच्छुकः' इति श्रवणेच्छायां कारणम् ॥ ३ ॥ निस्पृहस्यापि राज्ञः श्रीकृष्णानुग्रहात्तादृक्पौत्रः समजनीति वक्तुं तस्य श्रीकृष्णे भक्त्युद्रेकमाह अपीपलदिति त्रिभिः । पितृवदपीपलत्पालयामास ॥४॥ क्रतवस्तदुपार्जिता लोकाश्च ॥ ५ ॥ सुरस्पार्हाः सुराणां स्पृहणीयास्ते संपदादयः कामा विषया राज्ञः किं मुदं प्रीतिमधिजह्रुः कृतवंतो न कृतवंत इत्यर्थः । अत्र हेतुः । मुकुंद एव मनो यस्येति ।

"चिंतां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः" इत्यभिधानात् । द्रौण्यस्त्रक्षेपगर्भरक्षाकुंतीस्तवभीष्मनिर्याणभगवद्द्वारकायात्राद्वारकाप्रवेशपट्टमहिषीरमणादिकथामाधुर्य्येषु तत्प्रसंगोत्थितेषु मज्जंतं सूतं तदेव परीक्षिज्जन्म शुश्रूषुः शौनकः पुनर्विशेषतः पृच्छति—अश्वत्थाम्नेति।ईशेन कर्त्तुमकर्त्तुमन्यथा कर्त्तुं समर्थेन श्रीकृष्णेन हतो नाशितोपि पुनराजीवित इत्युक्त्या महाभारतसमानार्थतासूचि । तत्र हि मृतो जातः परीक्षित्पुनः सुभद्रादिप्रार्थनया श्रीकृष्णेन संजीवनमापित इत्युक्तम् । सर्वथा श्रीकृष्णदत्ततज्जीवने तात्पर्यमिति साम्यमत्र । यद्वा कल्पांतरीया श्रीभारतकथेति बोध्यम् ॥ १ ॥ तस्य परीक्षितः । गतवान् वैकुंठमिति शेषः । "भेजे खगेन्द्रध्वजपादमूलं ज्ञानेन वैयासकिशाब्दितेन" इति वक्ष्यमाणत्वात् ॥ २ ॥ तदिदं परीक्षिद्वृत्तांतं मामधिकारिणं विज्ञाय यदि वक्तुं मन्यसे श्रीशुकस्य श्रीकृष्णलीलामृतपानमग्नस्य सर्वतोनपेक्षस्यापि यदुपदेशे प्रवृत्तिरित्यद्भुततमं तद्वृत्तमिति कृपया ब्रूह्येवेति भावः ॥ ३ ॥ धर्मेणैव राजत इति । न तु राजपरिच्छद्भिरित्यन्वर्थनामा युधिष्ठिरः । धर्मावतारत्वात्स चासौ राजा चेति।"राजाहःसखिभ्यष्टच्" इति टच् अत्र च सर्वकामसेवातः कृष्णपादसेवायाः स्वादुत्वं ध्वनितम् ॥ ४ ॥ निस्स्पृहत्वमेवाह-संपद इति । संपदो धनधान्यादिसमृद्धयः। महिषी द्रौपदी । यद्रूपदर्शनक्षुभितराजन्यचक्रेण स्वयंवरेऽप्युपद्रवः कृतो यदर्थं जयद्रथोपि वने भीमसेनेनार्दितः सापि पट्टराज्ञीत्यर्थः । मही परिध्यन्तापि जंबूद्वीपस्य पुण्यक्षेत्रभारतखंडवत्त्वात्प्राधान्येन तदुक्तिस्तस्य "शास्ति ससार्णवां महीम्" इति पुराणान्तरोक्तेः । सार्वभौमत्वात् यथा सर्वजगदीशोपि श्रीरामचंद्रोऽयोध्याधीश इति कथ्यते तद्वादियमुक्तिः प्रतीयते यथाश्रुतं वास्त्विति ॥ ५ ॥ स्पृहा विद्यते येषु ते स्पार्हाः । अत्र मत्वर्थेऽण् । तद्धितप्रत्ययानां सर्वार्थविधानात् । इत्यर्थ इति । सर्वकामनिःस्पृहत्वस्योक्तत्वादिति भावः । अत्र मुदनधिककरणे । मुकुंदसेवापेक्षया

मातुर्गर्भगतो वीरः स तदा भृगुनंदन ॥ ददर्श पुरुषं कंचिद्दह्यमानोऽस्त्रतेजसा ॥ ७ ॥ अंगुष्ठमात्रममलं स्फुरत्पुरटमौलिनम् ॥ अपीच्यदर्शनं श्यामं तडिद्वाससमच्युतम् ॥ ८ ॥ श्रीमद्दीर्घचतुर्बाहुं तप्तकांचनकुंडलम् ॥ क्षतजाक्षं गदापाणिमात्मनः सर्वतोदिशम् ॥ परिभ्रमंतमुल्काभां भ्रामयंतं गदां मुहुः ॥ ९ ॥ अस्त्रतेजः स्वगदया नीहारमिव गोपतिः ॥ विधमंतं संनिकर्षे पर्यैक्षत क इत्यसौ ॥१०॥ विधूय तदमेयात्मा भगवान्धर्मगुब्विभुः ॥ मिषतो दशमास्यस्य तत्रैवांतर्दधे हरिः ॥११॥ ततःसर्वगुणोदर्के सानुकूलग्रहोदये॥जज्ञे वंशधरः पांडोर्भूयःपांडुरिवौजसा ॥१२॥

क्षुधितस्यान्नैकमनसो यथेतरे स्रक्चंदनादयो न कुर्वंति तद्वत् ॥ ६ ॥ प्रस्तुतमाह । मातुरिति । स परीक्षित् ॥ ७ ॥ पुरटं सुवर्णं स्फुरन् पुरटमौलिर्यस्यास्ति तम् । व्रीह्यादिभ्यश्चेति इनिप्रत्ययः । अपीच्यमतिसुंदरं दृश्यत इति दर्शनं रूपं यस्य तम् । तडिद्वद्वाससी यस्येति श्याममिति च पदाभ्यां विद्युद्युक्तमेघोपमा सूचिता । अच्युतमविकारम् ॥ ८ ॥ तप्तं दाहोत्तीर्णं यत्कांचनं तन्मये कुंडले यस्य । क्षतजाक्षं संरंभादत्यारक्तनेत्रम् ॥ ९ ॥ अस्त्रतेजो विधमंतं विनाशयंतम् । नीहारं हिमं गोपतिः सूर्य इव । सन्निकर्षे समीपे ददर्श । दृष्ट्वा चासौ क इति पर्यैक्षत वितर्कितवान् ॥ १० ॥ अमेयात्मा कथं तद्विधूतवानित्यवितर्क्यरूपः । धर्मं गोपायतीति धर्मगुप् । यद्वा धर्मं गोपायंतीति धर्मगुपो राजानस्तत्प्रभुस्तेषामपि पालकत्वात् । दशमासपरिच्छेद्यस्य तस्य मिषतः पश्यतो यत्र दृष्टस्तत्रैवांतर्हितो न त्वन्यत्र गतः । यतो विभुः सर्वगतः ॥ ११ ॥ उदर्के उत्तरफलम् । सर्वगुणानामुत्तरोत्तराधिक्यसूचके लग्ने । तत्र हेतुः । अनुकूलैरन्यैर्ग्रहैः सहितानां शुभग्रहाणामुदयो यस्मिन् ॥ १२ ॥

तेषां तुच्छत्वादिति भावः "मधुद्विट्सेवानुरक्तमनसामभवोपि फल्गुः"इति पंचमे भरताख्यानोक्तेरिति।अत्र दृष्टांतः—क्षुधितस्येति । आदिना वीणावाद्यादिग्रहः ॥ ६॥ वीर इति।स्वाभाविकवीरत्वेनैवास्ततेजसस्तस्मादाबिभ्यदिति भगवद्रूप एव स्वविषयग्रहणारंभः प्रथमतः कृत इति । हे भृगुनन्दनेति । कुलनन्दनता हि भगवद्ध्यानयशःश्रवणादिभिर्भवतीति यथा त्वमाबाल्यतो भगवत्कथाश्रवणानिष्ठत्वाद्भृगुकुलनन्दनतां प्राप्त इति भावः ॥ ७ ॥ अंगुष्ठमात्रमिति । आत्मनः सर्वतो दिक्षु गर्भे तावन्मात्रस्यैव विकारस्य स्थितत्वात् । तत्प्रमाणमेव भगवत्युपचारितम् । वस्तुतस्तु तावत्यपि देशेऽचिंत्यशक्त्या यथावत्प्रमाणमेव भगवंतं ददर्श न त्वन्यथा "गर्भे दृष्टमनुध्यायन्परीक्षेत नरेष्विह" इत्युपरिष्टादुक्तेर्नरलोके तस्य परीक्षणान्यथानुपपत्तेः । अत एवापीच्यमन्यूनानातिरिक्तत्वात्सुंदरं दृश्यत इति दर्शनं रूपं यस्य तम् । "अपीच्यं त्वतिसुंदरे" इत्यभिधानात् । पुरटस्य हेम्नो मौलिर्यस्य तम् "दुर्वर्णं पुरटं जांबूनदकार्त्तस्वरे वसु । सुरूपं पीतलोहं च मुख्यद्रव्यं तथाग्निभूः" इति विचित्रकोशात् । व्रीह्यादित्वादिनिः । श्यामं तडिद्वाससमिति पदाभ्यां विद्युद्भूषितमेघो ब्रह्मास्त्रदावानलदह्यमानपरीक्षित्कलभत्राणाय सहसैवोत्तराकुक्षिनभसि प्रादुरभूदिति द्योतितम् ॥ ८ ॥ क्षतजाक्षं ब्रह्मास्त्रं प्रति क्रोधादहो मद्भक्तस्यापि पीडने प्रवृत्तमिदमिति कोपात् ॥ ९ ॥ वितर्कितवान् कोऽसौ वीरासनेन मामंनियुक्तोपि रक्षतीति विमृष्टवानित्यर्थः ॥ १० ॥ पदाविभागेनार्थान्तरमाह—धर्मं गोपायन्तीति । धर्मगुपो राजानस्तेषां प्रभू राज्ञामपि धर्मपालकत्वात् । यद्वा धर्मं भक्तवात्सल्यरूपं स्वधर्मं गोपायतीति तथा । हरिरिति । तस्य मनोऽपहृत्य तस्मिन्नवधाने सत्यन्तर्दधे । चौरस्य लक्षणमिदमेव । यद्धनवत्यवधानेन्तर्द्धत्त इति । कूटयामिकवत्तन्मनोहर्त्तुमेव तत्र प्रविष्ट आसीदित्युत्प्रेक्षात्र द्योतिता ॥ ११ ॥ ततो हरेर्दर्शनानन्तरम् । सर्वे गुणा उत्तरफलानि यस्मिन्निति । समासे फलितमाह-सर्वगुणानामिति । ग्रहाणामनुकूलत्वं स्ववर्गमित्रवर्गस्वोच्चादिस्थितत्वम् । वर्गस्तु "ग्रहं होरा च द्रेष्काणसप्तांशकनवांशकाः । द्वादशांशकत्रिंशांशौ वर्ग इत्युच्यते बुधैः " इति । मित्रत्वं च

**तस्य प्रीतमना राजा विप्रैर्धौम्यकृपादिभिः ॥ जातकं कारयामास वाचयित्वा च मंगलम् ॥ १२ ॥**

**जातकं जातकर्म । मंगलं पुण्याहम् ॥ १३ ॥**

"रवीन्दुभौमगुरवो ज्ञशुक्रशनिराहवः । स्वस्मिन्मित्राणि चत्वारि परस्मिञ्छत्रवः स्मृताः ॥" इति । "अजवृषमृगांगनाकर्कमीनवणिजस्त्विनादुच्चाः । उच्चात्सप्तमगो नीचो राशौ वा यदि वांशके । मेषवृश्चिकयोर्भौमः शुक्रो वृषतुलाभृतोः । बुधः कन्यामिथुनयोः प्रोक्तः कर्कस्य चंद्रमाः । सिंहस्याधिपतिः सूर्यः शनिर्मकरकुम्भयोः ॥ स्यान्मीनधन्विनोर्जीवोऽधिपतिः समुदाहृतः ॥ कन्या राहुगृहं प्रोक्तं राहूच्चं मिथुनं स्मृतम् । वर्गोत्तमनवांशाश्चरादिषु प्रथममध्यांताः । होरे विषमेऽर्केन्द्वोः समराशौ चंद्रसूर्ययोः क्रमशः । द्रेष्काणपाः स्वभाञ्ज्ञेयाः प्रथमेषु नवाधिपाः । ओजे सप्तांशकः स्वर्क्षात्समे सप्तमराशितः । क्रियमृगास्य तौलिकेंदुभतो नवांशविधिरुच्यते । शुक्रज्ञजीवशनिभूतनयस्य बाणशैलाष्टपंचविशिखास्समराशिमध्ये । त्रिंशांशको विषमभे विपरीतमस्मात्स्याद्वादशांशानिजराशित एव ज्ञेयः ॥ यस्मिन्राशौ भवेत्खेटस्तद्गृहं परिकीर्तितम् । तदेव लग्नमुद्दिष्टं लवात्रिंशकसंमितम् । होरापञ्चेन्दुभि (१९) र्भागैर्द्रेष्काणो दशभिर्लवैः । वेदैः (४) सप्तेन्दु (१७) भिश्चैव लवाद्यैः सप्तमांशकाः । नवांशश्च त्रिभिर्भागैस्तृतीयांशेन ( २० ) संयुतैः । सार्द्धद्वयांशकैः (१३०) र्भागै र्द्वादशांशक उच्यते । त्रिंशांशविधिरुद्दिष्टः शुक्रज्ञेत्यादिना बुधैः । विषमे ग्रहस्य विषमो राशिः समभे त्रिंशांशके समः" इत्यलमतिप्रसंगेन । ओजसा प्रभावेण तत्राधिक्यसूचकत्वे ॥ १२ ॥ तस्य बालस्य । मंगलं पुण्यहवाचनम् । त्रिकाण्डमण्डने तद्विधिरुक्तः तथा हि । "गर्भाधानादिसंस्कारेष्विष्टापूर्त्तक्रतुष्वपि । वृद्धिश्राद्धं नरैः कार्यं कर्मादौ स्वस्तिवाचनम् ॥" व्यासः "संपूज्य गंधपुष्पाद्यैर्ब्राह्मणान्स्वस्ति वाचयेत् ॥ धर्मकर्मणि मांगल्ये संग्रामेऽद्भुतदर्शने ॥" इति । गृह्यपरिशिष्टेपि "स्वस्तिवाचनमृद्धिपूर्तेषु तत्कर्मणाद्यंतयोः कुर्यात् ॥" आश्वलायनः "वैदिके तांत्रिके चादौ तत्तत्पुण्याहमिष्यते ॥" तच्च रूपनारायणीये इत्थम् "त्रीनधिकान्वा ब्राह्मणान्भोजयित्वोदमुङ्मुखानुपवेश्य वस्त्रादिभिः परितोष्य"पुण्याहं भवन्तो ब्रुवन्तु"इति ब्राह्मणान्यजमानस्त्रिः श्रावययेत्।ततो ब्राह्मणाः"पुण्याहं पुण्याहं पुण्याहम्।इति त्रिर्ब्रूयुः।ततः स्वस्ति भवंतो ब्रुवंत्विति त्रिः श्रावयेत्। ॐ स्वस्ति इति त्रिर्ब्रूयुः । तत ऋद्धिं भवन्तो ब्रुवन्तु इति त्रिः श्रावयेत् । ऋद्ध्यतामिति त्रिः प्रतिवचनम् ।" एतच्च ब्राह्मणानन्नेन परितोष्य पुण्याहं स्वस्ति ऋद्धिरित्योंकारपूर्वं त्रिस्त्रिरेकैका आशिषो वाचयित्वे त्यादिना बौधायनेनोक्तम् । यमः "पुण्याहवाचनं दैवे ब्राह्मणस्य विधीयते । एतदेव निरोंकारं कुर्यात्क्षात्रियवैश्ययोः ॥" इति । बह्वृचगृह्यपरिशिष्टे तु "अवनिकृतजानुमण्डलः कमलमुकुलसदृशमंजलिं शिरस्याधाय दक्षिणेन पाणिना सुवर्णपूर्णकलशं धारयित्वा दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च तेनायुःप्रमाणेन पुण्याहं दीर्घमायुरस्तु । शिवा आपः सन्तु । सौमनस्यमस्तु । अक्षतं चारिष्टमस्तु । गंधाः पांतु सुमंगल्यं चास्तु । पुष्पाणि पांतु सौश्रियमस्तु । अक्षताः पांतु आयुष्यमस्तु । तांबूलानि पांतु ऐश्वर्यमस्तु । दक्षिणाः पान्तु बहुधनमस्तु । दीर्घमायुः शांतिः पुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रश्चायुष्यं चास्तु। यं कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारंभाः शुभाः शोभनाः प्रवर्त्तंते तमहमोंकारमादिं कृत्वा ऋग्यजुः सामाशीर्वचनं बह्वृषिमतं समनुज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये । वाच्यताम्। द्रविणोदा द्रविणसस्तुरस्य० सविताः पश्चातात्०नवोनवो भवति जायमान०उच्चा दिवि दक्षिणावन्तो अस्थुः० इत्येता ऋचः पुण्याहे ब्रूयात्" । व्रतनियमतपःस्वाध्यायक्रतुदमदानविशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम् । समाहितमनसः स्मः । प्रसीदन्तु भवन्तः । प्रसन्नास्स्मः। शान्तिरस्तु पुष्टिरस्तु तुष्टिरस्तु वृद्धिरस्तु अविघ्नमस्तु आरोग्यमस्तु आयुष्यमस्तु शिवं कर्मास्तु कर्मसमृद्धिरस्तु पुत्रलमृद्धिरस्तु । धनधान्यसमृद्धिरस्तु । इष्टसमृद्धिरस्तु । अनिष्टनिरसनमस्तु यत्पाप तत्प्रतिहतमस्तु । यच्छ्रेयस्तदस्तु । उत्तरे कर्मण्यविघ्नमस्तु उत्तरोत्तरमहरहरभिवृद्धिरस्तु । उत्तरोत्तराः क्रियाः शुभाः शोभनाः प्रवर्त्तंताम् । तिथिकरणमुहूर्त्तनक्षत्रसंपदस्तु । तिथिकरणमुहूर्त्तत्रग्रहलग्नाधिदेवताः प्रीयंताम् तिथिकरणे मुहूर्त्तनक्षत्रे सग्रहे सदैवते प्रीयेताम् । अग्निपुरोगा विश्वेदेवाः प्रीयन्ताम् । इंद्रपुरोगा मरुद्गणाः प्रीयंताम् वसिष्ठपुरोगा ऋषिगणाः प्रीयंताम् । माहेश्वरीपुरोगा उमामातरः प्रीयंताम् । अरुंधतीपुरोगा एकपत्न्यः प्रीयंताम् । विष्णुपुरोगाः सर्वे देवाः प्रीयंताम् । ब्रह्मपुरोगाः सर्वे वेदाः प्रीयंताम् । ब्रह्म च ब्राह्मणाश्च प्रीयंताम् । श्रद्धामेधे प्रीयेताम् । भगवती कात्यायनी प्रीयताम् । भगवती माहेश्वरी प्रीयताम् । भगवती

ऋद्धिकरी प्रीयताम् । भगवती वृद्धिकरी प्रीयताम् । भगवंतौ विघ्नविनायकौ प्रीयेताम । सर्वा ग्रामदेवताः प्रीयंताम् । सर्वाः कुलदेवताः प्रीयन्ताम् । ब्रह्महता ब्रह्मद्विषः । हताः परिपंथिनः । हताश्च विघ्नकर्त्तारः शत्रवः पराभवं यांतु । शाम्यन्तु घोराणि । शाम्यन्तु पापानि । शाम्यन्त्वीतयः । शुभानि वर्द्धन्ताम् । शिवा आपः संतु । शिवा अग्नयः संतु । शिवा आहुतयः सन्तु । शिवा वनस्पतयः सन्तु । शिवा अतिथयः सन्तु । अहोरात्रे शिवे स्याताम् । निकामे निकामे पर्जन्यो वर्षतु । फलिन्यो न ओष धयः सन्तु । योगक्षेमो नः कल्पताम् । शुक्रांगारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिता आदित्यपुरोगाः सर्वे ग्रहाः प्रीयंताम् । भगवान्नारायणः प्रीयताम् । भगवान्पर्जन्यः प्रीयताम् । प्रीयतां भगवान्स्वामी महासेनः । पुण्याहकालं वाचयिष्ये । वाच्यताम् । उद्गातेव शकुने साम गायसि । याज्यया यजति । यत्पुण्यं नक्षत्रं तद्वद् कुर्वीतोपव्युषम् । यदा वै सूर्य उदात । अथ नक्षत्रं नैति । यावति तत्र सूर्यो गच्छेत् । यत्र जघन्यं पश्येत्तावति कुर्वीत यत्कारी स्यात् । पुण्याह एव कुरुते । तानि वा एतानि यमनक्षत्राणि । यान्येव देवनक्षत्राणि । तेषु कुर्वीत यत्कारी स्यात् । पुण्याह एव कुरुते । पुण्याहं भवंतो ब्रुवंतु । ॐ पुण्याहम् । स्वस्तये वायुमुपब्रवामहै आदित्य उदयनीयः० स्वस्ति न इंद्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पति र्दधातु । अष्टौ देवा वसवः सोम्यासः । चतस्रो देवीरजराश्रविष्ठाः। ते यज्ञं पांतु रजसः परस्तात् । संवत्सरीणममृतं स्वस्ति ॥ स्वस्ति भवंतो ब्रुवन्तु । आयुष्मते स्वस्ति । ऋध्यामस्तोमं० सर्वामृद्धिमृध्नुयामिति०ऋद्ध्याः स्म हव्यैर्नमसोपसद्य।मित्रं देवं मित्रधेयं नो अस्तु।अनूराधान्हविषावर्द्धयंतः।शतं जीवेम शरदः सवीराः । त्रीणि त्रीणि वै देवानामृद्धानि । त्रीणि च्छन्दांसि। त्रीणि सवनानि। त्रय इमे लोकाः । ऋद्ध्यामेव तद्वीर्य एषु लोकेषु प्रातितिष्ठति । ऋद्धिं भवंतो ब्रुवंतु । कर्म ऋद्ध्यताम् । ऋद्धिः समृद्धिः । श्रिये जातः श्रिय एवैनं० यस्मिन्ब्रह्माभ्यजयत्सर्वमेतत् । अमुं च लोकमिदमूच सर्वम् । तन्नो नक्षत्रमभिजिद्विजित्य । श्रियं दधात्वहृणीयमानम् । अहेर्बुध्निय मंत्रं मे गोपाय । यमृषयस्त्रयिविदो विदुः । ऋचः सामानि यजूंषि । सा हि श्रीरमृता सताम् । श्रीरस्त्विति भवंतो ब्रुवंतु । अस्तु श्रीः।पुण्याहवाचनसमृद्धिरस्तु । भगवान्प्रजापतिः प्रीयताम्।इति पुण्याहवाचनम्। जातकशब्देन पितृदेवार्चनमपि गृहीतं भवति "जातकं कारयामास पितृदेवार्चनं तथा" इति श्रीदशमे नंदराजोत्सवोक्तेः । तत्र पित्रर्चनं वृद्धिश्राद्धम् । तच्च तदा पिंडहीनमेव कार्यम्। "पिंडनिर्वापरहितं यत्र श्राद्धं विधीयते। स्वधावाचनलोपोत्र विकिरस्तु न लुप्यते । अक्षय्यदक्षिणा स्वस्ति सौमंनस्य यथास्थितम् ॥ " तत्र संक्षिप्य प्रयोगः । सत्यवसुसंज्ञका विश्वेदेवाः ॐभूर्भुवःस्वरिदं वः पाद्यम् । एवं सर्वत्र पाद्यम् । मातृपितामहीप्रपितामह्यो नांदीमुख्यो भूर्भुवः स्वरिदं वः पाद्यम् । पितृपितामहप्रपितामहा नांदीमुखा भूर्भुवः स्वरिदं वः पाद्यम् । मतामहप्रमातामहवृद्धप्रमातामहाः नांदीमुखाः सपत्नीका भूर्भुवः स्वरिदं वः पाद्यम् । आचमनम् । सत्यवसुसंज्ञकानां विश्वेषां देवानां भूर्भुवः स्वरिदमासनं सुखासनम् । नांदीश्राद्धे क्षणौ क्रियेताम् । ॐतथा। प्राप्नुवन्तु भवंतः। प्राप्नवामः । मातृपितामहीप्रपितामहीनां नांदीमुखीनां भूर्भुवःस्वरिदमासनम् । सुखासनम्। नांदीश्राद्धे क्षणौ क्रियेताम् । ॐ तथा । प्राप्नुवंतु भवन्तः प्राप्नवामः । पितृपितामहप्रपितामहानां नांदीमुखानां भूर्भुवः स्वरिदमासनम् । सुखासनम् । नांदीश्राद्धे क्षणौ क्रियेताम् । ॐ तथा । प्राप्नवतु भवन्तः प्राप्नवामः । मातामहप्रमातामहवृद्धप्रमातामहानां नांदीमुखानां समत्नीकानां भूर्भुवः स्वरिदमासनम् । सुखासनम् । नांदीश्राद्धे क्षणौ क्रियेतां भवद्भिः । ॐतथा । प्राप्नुवन्तु भवंतः । प्राप्नुवामः । ततो गंधादिदानम् । सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्य इदं गंधाद्यर्चनं स्वाहा संपद्यतां वृद्धिः । मातृपितामहीप्रपितामहीभ्यो नांदीमुखीभ्य इदं गंधाद्यर्चनं स्वाहा संपद्यतां वृद्धिः । पितृपितामहप्रपितामहेभ्यो नांदमुखेभ्य इदं गंधाद्यर्चनः स्वाहा संपद्यतां वृद्धिः । मातामहप्रमातामहवृद्धप्रमातामहेभ्यो नांदीमुखेभ्यः सपत्नीकेभ्य इदं गंधाद्यर्चनं स्वाहा संपद्यतां वृद्धिः । ततः परिवेषणं कृत्वा गायत्र्या प्रोक्ष्य पृथिवी ते पात्रमिति पात्रमालभ्य सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो युग्मब्राह्मणभोजनपर्याप्तमन्नममृतरूपेण स्वाहा संपद्यतां वृद्धिः । मातृपितामहीप्रपितामहीभ्यो नांदीमुखीभ्यो युग्मब्राह्मणभोजनपर्याप्तमन्नममृतरूपेण स्वाहा संपद्यतां वृद्धिः । पितृपितामहप्रपितामहेभ्यो नांदीमुखेभ्यो युग्मब्राह्मणभोजनपर्याप्तमन्नममृतरूपेण स्वाहा संपद्यतां वृद्धिः । मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यो नांदीमुखेभ्योयुग्मब्राह्मणभोजनपर्याप्तमन्नममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः । स्वस्ति न इन्द्रो वृद्धश्रवा इत्यादिपाठः । अनेन नांदीश्राद्धेन कर्मांगदेवताः प्रीयंताम् वृद्धिः संपद्यताम् । ततः पुरुषसूक्तादिजपः । नांदीश्राद्धं संपन्नं सुसंपन्नं सुप्रोक्षितमस्तु । शिवा आपस्संतु । सौमनस्यमस्तु । अक्षतं चारिष्टमस्तु । नांदीमुख्यो मातरः प्रीयन्ताम् । नांदीमुखाः पितरः पितामहाः प्रपितामहाः प्रीयंताम् । नांदीमुखा मातामहः । प्रमातामहवृद्धप्रमातामहाः सपत्नीकाः प्रीयंताम् । ततो गोत्रन्नो वर्द्धताम् । वर्द्धतामिति प्रत्युक्ते । "दातारो

हिरण्यं गां महीं ग्रामान्हस्त्यश्वान्नृपतिर्वरान् ॥ प्रादात्स्वन्नं च विप्रेभ्यः प्रजातीर्थे स तीर्थवित् ॥ १४ ॥ तमूचुर्ब्राह्मणास्तुष्टा राजानं प्रश्रयानतम् ॥ एष ह्यस्मिन्प्रजातंतौ पूरूणां पौरवर्षभ ॥ १५ ॥ दैवेनाप्रतिघातेन शुक्ले संस्थामुपेयुषि ॥ रातो वोऽनुग्रहार्थाय विष्णुना प्रभविष्णुना ॥ ॥ १६ ॥ तस्मान्नाम्ना विष्णुरात इति लोके बृहच्छ्रवाः ॥ भविष्यति न संदेहो महाभागवतो महान् ॥ १७ ॥ युधिष्ठिर उवाच ॥ अप्येष वंश्यान्राजर्षीन्पुण्यश्लोकान्महात्मनः ॥ अनुवर्तिता स्विद्यशसा साधुवादेन सत्तमाः ॥ १८ ॥ ब्राह्मणा ऊचुः ॥ पार्थ प्रजाऽविता साक्षादिक्ष्वाकुरिव मानवः ॥ ब्रह्मण्यः सत्यसंधश्च रामो दाशरथिर्यथा ॥ १९ ॥

वरान् श्रेष्ठान् । स्वन्नं शोभनमन्नं च तीर्थविज्ञानकालज्ञः । “ यावन्न च्छिद्यते नालं तावन्नाप्नोति सूतकम् । छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते ” इति वचनात्ततः पूर्वं प्रादात् । आमान्नं वा । प्रजातीर्थे पुत्रोत्पत्तिपुण्यकाले । “ पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयम् ” इतिस्मृतेः “ देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम् । आयांति हि नृपश्रेष्ठ पुण्याहमिति चाब्रुवन्” इति च ।। १४ ॥ हे पौरवर्षभ पुरूणां पुरुवंश्यानां शुक्ले शुद्धेऽस्मिन्प्रजातंतौ दैवेन कथंभूतेनाऽप्रतिघातेन दुर्वारेण संस्थां नाशमुपेयुषि गते सति वोऽनुग्रहार्थाय यस्मात्प्रभवनशीलेन श्रीविष्णुना रातो दत्तस्तस्माल्लोके विष्णुरात इति नाम्ना भविष्यति महाभागवतश्च गुणैश्च महान् भविष्यति नात्र संदेह इति तं राजानं ब्राह्मणा ऊचुरिति त्रयाणामन्वयः ॥ १५ ॥ १६ ॥ १७ ॥ महाभागवतो भविष्यतीत्युक्ते हृष्टः पृच्छति । अपि स्वित्किंस्वित् । साधुवादेन यशसा सत्कीर्त्या चानुवर्तिता भविष्यतीति पूर्वस्यैवातः परमप्यनुषंगः ।। १८ ॥ प्रजानामविता रक्षकः । मानवो मनोः पुत्रः । ब्राह्मणेषु हितः सत्यप्र

नोभिवर्द्धतां वेदाः सन्ततिरेव नः।श्रद्धा च नो मा व्यगमद्बहुदेयञ्च नोऽस्तु॥अन्नं च नो बहु भवेदतिथींश्च लभेमहि। याचितारश्च नः सन्तु मा च याचिष्म कंचन” इति संप्रार्थ्य।विप्रैः“दातारो वोभिवर्द्धतां वेदाः संततिरेव वः।श्रद्धा च वो मा व्यगमद्बहुदेयं च वोऽस्तु । अन्नं च वो बहुभवेदतिथींश्च लभध्वम्।याचितारश्च वः सन्तु मा च याचिढ्वं कञ्चन” इति प्रत्युक्ते द्राक्षामलकादितन्निष्क्रयं वा दक्षिणां दत्त्वा विश्वे देवाः प्रीयन्तामिति दैवे वाचयित्वा वाजेवाज इति मानपूर्वं मात्रादीन्विसृज्यामावाजस्येत्यनुजोदिति संक्षिप्तवृद्धिश्राद्धञ्च । नृपो विप्रैः कारयामास।यद्वा“हैमेन श्राद्धं कुर्वीत ग्रहणे पुत्रजन्मनि” इति स्मृतेः। हेम्नैवाद्यपुत्रोत्पत्तिसमये नांदीश्राद्धकरणजन्यफलसमफलप्राप्तये इदं स्वर्णमग्निदेवताकं विभज्याविभज्य वाऽमुकामुकगोत्रामुकामुकशर्मभ्यो विप्रेभ्योऽमुकशर्मणे वाहं दस्य इति संकल्पश्राद्धमेव कुर्यात्तेन पित्रादितृप्तिर्बालश्च चिरायुः स्यादिति पुण्याहवाचनात्पश्चात्कार्यम्। ॥ १३ ॥ शोभनमन्नं पायसादि । ननु लोकविरुद्धत्वात्तदा न कोपि भुंक्त इति चेदाह—आमान्नं वेति । किं च “अच्छिन्ननाड्यां यद्दत्तं पुत्रे जाते द्विजोत्तमाः । संस्कारेषु च पुत्रस्य तदक्षय्यं प्रकीर्तितम् ॥ ” इति। विष्णुधर्मे “प्रमीते गोत्रपुरुषे सूतके वा समागते। दशरात्रमनर्हः स्यात्कर्तुं दानप्रतिग्रहौ ॥ पिंडोदकादि मृतके दातुं प्रेताय युज्यते । अच्छिन्नायां तथा नाड्यां दानार्हः सुतसूतके ॥ ” इति वाराहोक्तेः । सत्यपि सूतकादौ तदुपयोगि कर्मावश्यं कार्यमेवेति । न तत्र दोषः । “वरो वै दक्षिणा” इति श्रुतेर्वरान्दक्षिणा वा ॥ १४॥ हे पौरवर्षभेति । पुरुनृपस्य पितृभक्तत्वेन “तंतुं तन्वन्पितॄन्यजेत्” इत्यायुक्तेः पितृभक्तवंशानुच्छेदादपि तद्वंशर्षभस्य तत्र वंशोऽनुच्छेदार्ह एवेति भावः ॥ १५ ॥ १६ ॥ बालस्य तादृशयोग्यतायामश्रद्दधानं राजानं प्रत्याहुर्न संदेह इति ॥ १७ ॥ साधुषु वादः कथनं यस्य तेन । यशसेति । अनेन धूर्तव्यसनिवंचकमूर्खगोष्ठीश्लाघ्यता निरस्ता । तत्र तादृशां श्लाघ्यत्वे प्रत्युत निंदैव जायत इति । हे सत्तमा इति । भवंतो हि यथार्थशास्त्रसंपन्नत्वेन सर्वकथनसमर्थास्तपस्वित्वेन त्रिकालज्ञाश्चेति भावः ॥ १८ ॥ तेषां सदृशो यशसेति

एष दाता शरण्यश्च यथा ह्यौशीनरः शिबिः ॥ यशो वितनिता स्वानां दौष्यंतिरिव यज्वनाम् ॥२०॥ धन्विनामग्रणीरेष तुल्यश्चाऽर्जुनयोर्द्वयोः॥ हुताश इव दुर्धर्षः समुद्र इव दुस्तरः ॥ २१ ॥ मृगेंद्र इव विक्रांतो निषेव्यो हिमवानिव ॥ तितिक्षुर्वसुधेवाऽसौ सहिष्णुः पितराविव ॥ २२ ॥ पितामहसमः साम्ये प्रसादे गिरिशोपमः ॥ आश्रयः सर्वभूतानां यथा देवो रमाश्रयः ॥ २३ ॥ सर्वसद्गुणमाहात्म्य एष कृष्णमनुव्रतः ॥ रंतिदेव इवोदारो ययातिरिव धार्मिकः ॥ २४ ॥ धृत्या बलिसमः कृष्णे प्रह्लाद इव सद्ग्रहः ॥ आहर्तैषोऽश्वमेधानां वृद्धानां पर्युपासकः ॥ २५ ॥ राजर्षीणां जनयिता शास्ता चोत्पथगामिनाम् ॥ निग्रहीता कलेरेष भुवो धर्मस्य कारणात् ॥२६॥ तक्षकादात्मनो मृत्युं द्विजपुत्रोपसार्जितात् ॥ प्रपत्स्यत उपश्रुत्य मुक्तसंगः पदं हरेः ॥ २७ ॥

तिज्ञश्च श्रीरामो यथा ॥ १९ ॥ उशीनरदेशाधिपतिः शिबिर्येन स्वमांसं श्येनाय दत्त्वा शरणागतः कपोतो रक्षितः स्वानां ज्ञातीनां यज्वनां च यशोविस्तारको दौष्यं तिर्भरत इव ॥२०॥ अर्जुनयोः पार्थकार्तवीर्ययोः ॥ २१ ॥ हिमवानिव सतां निषेव्योऽनन्यगतिकत्वेन । वसुधेव तितिक्षुः क्षंता । प्रीत्या मातापितराविव सहिष्णुः ॥ २२ ॥ पितामहो ब्रह्मा तेन समः । साम्ये समत्वे रमाश्रयो हरिः ॥२३॥ सर्वैः सद्गुणैर्माहात्म्यं यत्स्मिन् श्रीकृष्णतुल्यः ॥२४॥ धृत्या धैर्येण । सद्ग्रहः सन्भद्रो ग्रहोऽभिनिवेशो यस्य सः आहर्ता कर्ता ॥ २५ ॥ राजर्षीणां जनमेजयादीनाम् ॥ २६ ॥ द्विजपुत्रेण प्रेरितात्तक्षकादात्मनो मृत्युमुपश्रुत्य विरक्तः सन्हरेः पदं प्रपत्स्यते

किं पृच्छ्यते । यैरेवैकैकैर्गुणैस्ते सर्वे एव गुणास्तास्मिन्नधुनैव संति । यथावसरमाविर्भविष्यंति तस्मादेतत्तुल्यास्ते न बभूवुरिति प्रतीयतामित्याशयेनाहुः पार्थेति । पृथापुत्रत्वेन तव भगवत्पैतृष्वस्रीयत्वान्न त्वां वयं प्रतारणवचो वच्म इति भावः ॥ १९ ॥ दौष्यंतिर्दुष्यंतपुत्रः ॥ २० ॥ दुर्द्धर्षः दुःसहः । दुस्तरः तर्तुमशक्यः ॥ २१ ॥ विक्रांतः शूरः । सर्वसहापि वसुधा परेषां वाक्छरज्वालां नानुभवति । अयं तु तामनुभन्नपि न प्रतिकारिष्यतीति । अत्र दृष्टांतः । पितराविवेति चक्रवर्ती ॥ २२ ॥ पितामहो ब्रह्मा युधिष्ठिरो वा । साम्ये सर्वत्र द्वेषाभावे ॥ २३ ॥ उदार औदार्यविशिष्टस्तेन कारुण्यं लक्ष्यते । येनाष्टचत्वारिंशद्दिनपर्यंतमपश्नतापि सर्वमन्नमतिथिभ्यो दत्त्वा पानीयमपि तृट्परीताय दत्तमिति नवमे प्रथयिष्यते । ननु ययातेः प्रतिलोमोद्वाहवत्वात्कथं धार्मिकत्वमिति न शंक्यम् । धर्मस्य सूक्ष्मगतित्वेन दुर्ज्ञेयत्वात् । तदुक्तमपि—“कानीनस्य मुनेः स्वबांधववधूवैधव्यविध्वंसिनो नप्तारः किल गोलकस्य तनयाः कुंडाः स्वयं पांडवाः । तेऽमी पंच समानयोनिनिरताः ख्यातास्त्रिलोकीतले तेषां कीर्तनमेव पापशमकं धर्मस्य सूक्ष्मा गतिः ॥” इति “अमृते जारजः कुंडो मृते भर्तरि गोलकः” इत्यमरः । पापशमकत्वं तु “धर्मो विवर्द्धति युधिष्ठिरकीर्तनेन पापं प्रणश्यति वृकोदरकीर्तनेन । शत्रुर्विनश्यति धनंजयकीर्त्तनेन माद्रीसुतौ कथयतां न भवंति रोगाः” इति शिष्टगीतोक्तेः ॥ २४ ॥ २५ ॥ उत्पथगामिनामशास्त्रविहितमार्गवर्तिनाम् । भुवः पृथिव्याः धर्मस्य च कारणाद्धेतोः ॥ २६ ॥ द्विजपुत्रेण शमीकात्मजेन शृंगिनाम्ना हरेः पदं चरणारविंदं ज्ञानेन वैयासकिशब्दितेन

जिज्ञासितात्मयाथात्म्यो मुनेर्व्याससुतादसौ ॥ हित्वेदं नृप गंगायां यास्यत्यद्धाऽकुतोभयम् ॥ २८ ॥ इति राज्ञ उपादिश्य विप्रा जातककोविदाः ॥ लब्धापचितयः सर्वे प्रतिजग्मुः स्वकान्गृहान् ॥ २९ ॥ स एष लोकविख्यातः परीक्षिदिति यत्प्रभुः ॥ गर्भदृष्टमनुध्यायन्परीक्षेत नरेष्विह ॥ ३० ॥ स राजपुत्रो ववृधे आशु शुक्ल इवोडुपः ॥ आपूर्यमाणः पितृभिः काष्ठाभिरिवसोऽन्वहम् ॥ ३१ ॥ यक्ष्यमाणोऽश्वमेधेन ज्ञातिद्रोहजिहासया ॥ राजा लब्धधनो दध्यावन्यत्र करदंडयोः ॥ ३२ ॥ तदभिप्रेतमालक्ष्य भ्रातरोऽच्युतचोदिताः ॥ धनं प्रहीणमाजहुरुदीच्यां दिशि भूरिशः ॥ ३३ ॥ तेन संभृतसंभारो धर्मपुत्रो युधिष्ठिरः ॥ वाजिमेधैस्त्रिभिर्भीतो यज्ञैः समयजद्धरिम् ॥ ३४ ॥ आहूतो भगवान्राज्ञा याजयित्वा द्विजैर्नृपम् ॥ उवास कतिचिन्मासान्सुहृदां प्रियकाम्यया ॥ ३५ ॥ ततो राजाभ्यनुज्ञातः कृष्णया सह बंधुभिः ॥ ययौ द्वारवतीं ब्रह्मन्सार्जुनो यदुभिर्वृतः॥३६॥इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे परीक्षिज्जन्माद्युत्कर्षो नाम द्वादशोऽध्यायः ॥ १२ ॥

भजिष्यति ॥ २७ ॥ ततश्च जिज्ञासितमात्मनो याथात्म्यं येन सः । इदं शरीरं गंगायां हित्वाऽकुतोभयं पदं यास्यति । अद्धा निश्चयेन ॥ २८ ॥ लब्धापचितिः पूजा यैस्ते ॥ २९ ॥ परीक्षिदिति नाम निर्वक्ति । स एष इति । यद्यस्मात्प्रभुः समर्थः सन्गर्भे दृष्टं पुरुषमनुध्यायन्निह दृश्यमानेषु नरेषु मध्ये सर्वमपि नरं परीक्षेतायमसौ भवेन्नो वेति विचारयेदतः परीक्षिदिति विख्यातः । पूर्वदृष्टमिति वा पाठः । तदा मातृगर्भे पूर्वं दृष्टमित्यर्थः ॥३०॥ शुक्ले शुक्लपक्षे स प्रसिद्ध उडुपोऽन्वहं यथा काष्ठाभिः पंचदशकलाभिरापूर्यमाणो वर्धत एवं पितृभिर्युधिष्ठिरादिभिः कामैश्चतुःषष्टिकलाभिश्चापूर्यमाणो ववृधे ॥ ३१ ॥ पूर्वमपकृष्योक्तानश्वमेधान्स्वावसरे सप्रकारं कथयति । ज्ञातिद्रोहस्य हानेच्छया यक्ष्यमाणः करदंडयोरन्यत्र ताभ्यां विना लब्धधनो दध्यौ चिंतयामास । करदंडजस्य परिजनभरणमात्रोपक्षीणत्वात् ॥ ३२ ॥ प्रहीणं मरुत्तस्य यज्ञे त्यक्तं सुवर्णपात्रादिकमानीतवंतः ॥ ३३ ॥ संभृतसंभारः संपादितयज्ञोपकरणः । भीतो ज्ञातिद्रोहात् ॥ ३४ ॥ ३५ ॥ ३६ ॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे भावार्थदीपिकायां टीकायां द्वादशोऽध्यायः ॥ १२ ॥ निर्गमो धृतराष्ट्रस्य विदुरोक्त्या त्रयोदशे ॥ उक्तः पौत्राभिषेकेण वक्तुं राज्ञो महापथम् ॥ १ ॥

"भेजे खगेंद्रध्वजपादमूलम्" इत्युक्तेः ॥ २७ ॥ प्रकृतत्वादत्रात्मा हरिस्तस्य याथात्म्यम् अकुतोभयमपि तत्पदारविंदमेव । तद्वक्ष्यति श्रीदेवकी देवी "मर्त्यो मृत्युव्यालभीतः पलायं[1]ल्लोकान्सर्वान्निर्भयं नाध्यगच्छत् । त्वत्पादाब्जं प्राप्य यदृच्छयाद्य स्वस्थः शेते मृत्युरस्मादपैति ॥" इति श्रीदशमे ॥ २८ ॥ इतीत्थं जातको होराशास्त्रं तत्र कोविदाः । "भवेदपचितिः पूजा व्ययनिष्कृतिहानिषु" इति मेदिनी ॥२९॥ पुरुषेषु परीक्षणं हि श्रीकृष्णदर्शनात्प्रागेवातिबाल्यावस्थायामेव ज्ञेयम् ॥ ३० ॥ अत्र द्वाविवशब्दौ क्रमेण यथातथार्थे वर्तेते । "यथातथेववावैवं शब्दा एकार्थवाचकाः" इति कोशात् । अत एव स्वामिचरणैरेवं पितृभिरिति व्याख्यातम् ॥ ३१ ॥ करः षष्ठांशग्रहणं दंडो दुष्टनिग्रहजनितो धनलाभः । ज्ञातीनां भीष्मादीनाम् । द्रोहो हिंसनं तस्य जिहासया ॥ ३२ ॥ तस्य राज्ञोभिप्रेतं कुतश्चिद्धनप्राप्तिः कथं भवेदित्यभिप्रायं विचार्य्य अच्युतेन श्रीकृष्णेन व्यासदेवेन च प्रेरिताः ॥ ३३ ॥ तेन मरुत्तयज्ञविप्रत्यक्तस्वर्णपात्रादिरूपधनेन । "संभारः संभृतौ संघे" इति मेदिनी। "सामग्री संभृतिः समे" इति कोशांतरात् । त्रिभिस्त्रिगुणदक्षिणात एकस्य वाश्वमेधस्य त्रित्वं जातमिति महाभारतीयाश्वमेधपर्वणि विवृतम् ॥ ३४ ॥ अत्राहूत इत्यादिपद्यद्वयमपि केनचित्प्रक्षिप्तमस्ति । तच्च न स्वामिचरणसंमतम् ॥ इति श्रीभागवतभावार्थदीपिकाप्रकाशे प्रथमस्कन्धे द्वादशोध्यायः ॥ १२ ॥ महापथमिति पाठो युक्तः ।

१ पलायन्–परस्मैपदमार्षम् । पलायमान इत्यपेक्षितम् ।

सूत उवाच ॥ विदुरस्तीर्थयात्रायां मैत्रेयादात्मनो गतिम् ॥ ज्ञात्वागाद्धास्तिनपुरं तयावाप्तविवित्सितः ॥१॥ यावतः कृतवान्प्रश्नान्क्षत्ता कौषारवाग्रतः ॥ जातैकभक्तिर्गोविंदे तेभ्यश्चोपरराम ह ॥ २ ॥ तं बंधुमागतं दृष्ट्वा धर्मपुत्रः सहानुजः ॥ धृतराष्ट्रो युयुत्सुश्च सूतः शारद्वतः पृथा ॥ ३ ॥ गांधारी द्रौपदी ब्रह्मन्सुभद्रा चोत्तरा कृपी ॥ अन्याश्च जामयः पांडोर्ज्ञातयः ससुताः स्त्रियः ॥ ४ ॥ प्रत्युज्जग्मुः प्रहर्षेण प्राणं तन्व इवागतम् ॥ अभिसंगम्य विधिवत्परिष्वंगाभिवादनैः ॥ ५ ॥ मुमुचुः प्रेमबाष्पौघं विरहौत्कंठ्यकातराः ॥ राजा तमर्हयांचक्रे कृतासनपरिग्रहम् ॥ ६ ॥ तं भुक्तवंतमासीनं विश्रांतं सुखमासने ॥ प्रश्रयावनतो राजा प्राह तेषां च शृण्वताम् ॥ ७ ॥ युधिष्ठिर उवाच ॥ अपि स्मरथ नो युष्मत्पक्षच्छायासमेधितान् ॥ विपद्गणाद्विषाग्न्यादेर्मोचिता यत्समातृकाः ॥८॥ कया वृत्त्या वर्तितं वश्चरद्भिः क्षितिमंडलम् ॥ तीर्थानि क्षेत्रमुख्यानि सेवितानीह भूतले ॥९॥ भवद्विधा भागवतास्तीर्थीभूताः स्वयं विभो ॥ तीर्थी कुर्वंति तीर्थानि स्वांतस्थेन गदाभृता ॥ १० ॥

इदानीं परीक्षितः कलिनिग्रहादिकर्माणि कथयिष्यन्विदुरागमनेन धृतराष्ट्रप्रस्थानं ततोऽर्जुनागमनं ततः श्रीकृष्णांतर्धानं निशम्य पांडवप्रस्थानं च निरूपयति त्रिभिरध्यायैः । गतिं हरिं तयात्मगत्यावाप्तं विवित्सितं ज्ञातुमिष्टं सर्वं येन ॥ १ ॥ तदेवाह । यावतः कर्मयोगव्रतादिविषयान् प्रश्नान्प्रथमं कृतवान् । कौषारवस्य मैत्रेयस्य पुरतः पश्चात्त्रिचतुःप्रश्नार्थज्ञानमात्रेण गोविंदे जातैकभक्तिः कृतार्थः संस्तेभ्यः प्रश्नेभ्य उपरराम । ततः परं न विजिज्ञासितवान् ॥ २ ॥ सूतः संजयः । शारद्वतः कृपः । पृथा कुंती ॥ ३ ॥ कृपी द्रोणभार्या । जामयो ज्ञातिभार्याः । अन्याश्च स्त्रियः ॥ ४ ॥ प्राणं तन्व इवेति कुतश्चिन्मूर्च्छादिदोषतः प्राणेऽवसन्ने सति तन्वः करांघ्र्यादयो निश्चेष्टा भवंति पुनस्तस्मिन्नाविर्भूते यथोत्तिष्ठंति तद्वत् ॥ ५ ॥ विरहेण यदौत्कण्ठ्यं तेन कातरा विवशाः ॥ ६ ॥ तं विदुरम् ॥ ७ ॥ पक्षिणो ह्यपत्यानि यथातिस्नेहेन पक्षच्छायया वर्धयंति तद्वद्युष्मत्पक्षपातच्छायया समेधितान्वर्धितान्नोऽस्मान् किं स्मरथ । समेधितत्वमेवाह । विपद्गणाद्यस्मान्मोचिताः स्मः ॥ ८ ॥ वो युष्माभिः कया वृत्त्या वर्तितं देहवृत्तिः कृता कानि च तीर्थादीनि सेवितानीति ॥ ९ ॥ भवतां च तीर्थाटनं न स्वार्थं किन्तु तीर्थानुग्रहार्थमित्याह । भवद्विधा इति । मलिनजनसंपर्केण

उत्तरत्रावतरणे पांडवप्रस्थानं चेति कथनात् । महोदयमिति पाठो हि न स्वामिसंमतः प्रतिभाति । तत्स्वीकारे तु महस्य स्वप्राक्तनाधिकारप्राप्त्युत्सवस्योदयो यस्मान्महापथगमनात्स महोदयस्तमित्यर्थः कार्यः ( १ ) आत्मनो जीवस्य गतिं गम्यम् ''गतिर्गम्ये दशायात्राज्ञानोपायेषु कीर्तिता'' इति निरुक्तिः । सा च गतिर्हरिरेव । ''सोयमद्य महायोगिन्भवता करुणात्मना । दर्शितस्तमसः पारो यत्राकिञ्चनगो हरिः'' इति चतुर्थस्कंधान्ते मैत्रेयं प्रति विदुरोक्तेः । आत्मगत्या श्रीकृष्णतत्त्वज्ञानेन । यद्वात्मगतिर्हरिभक्तिस्तयावाप्तविवित्सित इति तद्धानेनैव सर्वं ज्ञातवानित्यर्थः । हस्तिपदन्यायेन तस्याः सर्वाश्रयत्वात् । तदुक्तं ''भक्त्या सिद्ध्यंति धर्माद्या भक्तिः सिद्धा स्वयं हरेः'' इति संहितायाम् । एतच्च तृतीयस्कंधानुरोधेन युद्धात्पूर्वं दुर्योधनाद्विच्छिद्य गत इति ध्येयम् ॥ १॥ तदेवाप्तविवित्सितत्वमेव ततः परस्य जिज्ञासितस्याभावात् । '' आत्मनि ज्ञाते सर्वं ज्ञातं भवति'' इति श्रुतेः । यद्वा तेभ्यः प्रश्नेभ्य उपरराम ह । तदुत्तरं श्रोतुं नैच्छद्भक्तौ जातायामन्यस्य जिज्ञास्यस्य वैय्यर्थ्यादिति भावः ॥ २ ॥ तं विदुरम् ॥ ३ ॥ जामिशब्दश्चवर्गादिरंतस्थादिश्च द्विधैव कोशेषु दृष्टः । ''यामिः कुलस्त्रीस्वस्रोः स्त्री'' इति मेदिनी । ''भार्यास्तु भ्रातृवर्गस्य जामयः स्युः परस्परम्'' इत्यमरश्च । क्वचित् ''यातरस्तु परस्परम्'' इति पाठः। अन्याश्चाप्रसिद्धनामवत्यः ॥ ४ ॥ ''तत्प्राणे प्रपन्ने उदतिष्ठत् ''इति श्रुतेः ॥ ५ ॥ राजा युधिष्ठिरः ॥ ६ ॥ तेषां पूर्वोक्तानाम् ॥ ७ ॥ विषाद्दुर्योधनदत्तान्महाग्नेर्जतुगृहात् । आदिना नदीतरणादिग्रहः ॥ ८ ॥ ९॥ हे प्रभो इति । पितृभ्रातृत्वेन गौरवमालक्ष्य प्रभवत्स्वावनकर्तृत्वं चालक्ष्य वेयं संबुद्धि

अपि नः सुहृदस्तात बांधवाःकृष्णदेवताः ॥ दृष्टाः श्रुता वा यदवः स्वपुर्यां सुखमासते ॥ ११ ॥ इत्युक्तो धर्मराजेन सर्वं तत्समवर्णयत् ॥ यथानुभूतं क्रमशो विना यदुकुलक्षयम् ॥ १२ ॥ नन्वप्रियं दुर्विषहं नृणां स्वयमुपस्थितम् ॥ नावेदयत्सकरुणो दुःखितान्द्रष्टुमक्षमः ॥ १३ ॥ कंचित्कालमथावात्सीत्सत्कृतो देववत्सुखम् ॥ भ्रातुर्ज्येष्ठस्य श्रेयस्कृत्सर्वेषां प्रीतिमावहन् ॥ १४ ॥ अबिभ्रदर्यमा दंडं यथावदघकारिषु॥ यावद्दधार शूद्रत्वं शापाद्वर्षशतं यमः ॥ १५ ॥ युधिष्ठिरो लब्धराज्यो दृष्ट्वा पौत्रं कुलंधरम् ॥ भ्रातृभिर्लोकपालाभैर्मुमुदे परया श्रिया ॥ १६॥ एवं गृहेषु सक्तानां प्रमत्तानांतदीहया ॥ अत्यक्रामदविज्ञातः कालः परमदुस्तरः ॥ १७ ॥

मलिनानि तीर्थानि संतः पुनः स्वयं तीर्थी कुर्वंति । स्वांतं मनस्तत्रस्थेन स्वस्यांतःस्थितेनेति वा ॥ १० ॥ अपि किं सुखमासते भवद्भिः क्वापि दृष्टाः श्रुता वा॥ ११ ॥ १२॥ यदुकुलक्षयावर्णने कारणमाह । नन्विति ॥ १३ ॥ श्रेयस्कृत्तत्त्वमुपदिशन् ॥ १४॥ ननु शूद्रोऽसौ कथमुपदिशेत् । न ह्यसौ शूद्रः किं तु यमस्तद्रूपेणासीत् । किं तत्र कारणं यमे चात्रागतेऽमुत्र को दंडधर इत्यपेक्षायामाह । अबिभ्रदिति । धृतवानित्यर्थः । मांडव्यस्य शापात् । तथा हि कश्चिच्चोराननुधावंतो राजभटा मांडव्यस्य ऋषेस्तपश्चरतः समीपे तान् संप्राप्य तेन सह निबद्ध्यानीय राज्ञे निवेद्य तदाज्ञया सर्वान् शूलमारोपयामासुः । ततो राजा तमृषिं ज्ञात्वा शूलादवतार्य प्रसादयामास । ततो मुनिर्यमं गत्वा कुपित उवाच कस्मादहं शूलमारोपित इति । तेनोक्तं त्वं बाल्ये शलभं कुशाग्रेणाविद्ध्य क्रीडितवानिति । तच्छ्रुत्वा मांडव्यस्तं शशाप बाल्येऽजानतो मे महांतं दंडं यत स्त्वं कारितवानतः शूद्रो भवेति ॥ १५ ॥ इदानीं राज्यस्यापकर्षं निरूपयितुमुत्कर्षं निगमयति । युधिष्ठिर इति । कुलंधरं वंशधरम् ॥ १६ ॥ तदीहया गृहव्यापारेण

रिति भावः । क्वचिद्विभो इत्यपि पाठः । सोप्येतदभिप्रायक एव । भगवतोखिलमानसस्थत्वात्सर्वे एव तादृशा भवेयुरिति चेदाह—स्वस्यांतस्थेनेति ॥ १० ॥ तांतेति । पांडौ मृतेऽस्माकं तातवद्रक्षकत्वात्त्वमेव तातोऽसीति भावः ॥ ११ ॥ तीर्थयात्रार्थां यमुनायां भगवदाज्ञया बदरीं गच्छंतमुद्धवं दृष्ट्वा तस्माद्विप्रशापाद्धेतोः षड्विंशाद्वर्षादुपरि नाशमेष्यद्यदुकुलं श्रुत्वा तन्नावर्णयदिति भावः ॥ १२ ॥ ननु निश्चये ॥ १३ ॥ १४ ॥ अत्राक्षिपति-नन्विति । इत्यर्थ इति । आर्षोऽयं प्रयोग इति भावः । उपदेशश्चायं वैराग्योत्पादनार्थमनौपनिषद एवेति ज्ञेयमन्यथा धृतराष्ट्रस्य तत्त्वज्ञानार्थं तदानीन्तनसनत्सुजातकृतौपनिषदतत्त्वोपदेशो न संगंस्यते । तच्च महाभारतोद्योगपर्वत एवावसेयम् । तथाहि । "धृतराष्ट्र उवाच । त्वं किं न वेद तद्भूयो यन्मे ब्रूयात्सनातनः । त्वमेव विदुर ब्रूहि प्रज्ञाशेषोस्ति चेत्तव । विदुर उवाच । शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे । कुमारस्य तु या बुद्धिर्वेद तां शाश्वतीमहम् ॥ ब्राह्मीं हि योनिमापन्नः सुगुह्यमपि यो वदेत् ॥ न तेन गर्ह्यो देवानां तस्मादेतद्ब्रवीमि ते ।" इति । ब्रह्मणो ब्राह्मणस्येयं ब्राह्मी तां ब्राह्मणजातिं देवानां गर्ह्यो न । किंतु तन्मध्ये स्वर्गं गतः स्तुत्यो भवति । अन्यथा नरकं गच्छतीति भावः । एतत्सनातनमुन्यानयनम् । वर्षशतं वर्षाणां शते शतानि वा यस्मिन्काले तं नैरंतर्ये द्वितीया । यथाश्रुते तु पञ्चवर्षाधिकशतवर्षमवनिस्थितश्रीकृष्णज्येष्ठ युधिष्ठिरपितृव्यस्य तस्य श्रीकृष्णांतर्द्धानानंतरदेहत्यागोक्तिर्वक्ष्यमाणा न संगंस्यते । यद्वा शतपदमत्रानियतार्थकं "शताद्या नियतानंतवाचका अर्थसंगतेः" इत्यभिधानात् । किंचिदधिकानि वर्षाणि शतं चेति संदर्भः । किं च "शतं शतसहस्रं च सर्वमक्षय्यवाचकम् । परिमाणं शतं त्वेतन्नैतदक्षय्यवाचकम्" इति पञ्चाप्सरउपाख्याने श्रीमहाभारतादिपर्वणि । शलभस्तत्कालपूर्वकगतिमान् जीवविशेषः । यतो विना विचारं शूद्रवन्मां ददंडातस्त्वं शूद्रो भवेति । "अर्यमा तु पुमान्सूर्ये पितृदेवांतरेपि च" इति मेदिनी । अघकारिणः पापिनस्तेषु ॥ १५ ॥लोकपालाभैरिंद्रादिलोकपालसमानैः । श्रिया राज्यसंपत्त्या ॥ १६ ॥ एवं युधिष्ठिरपालनलब्धसुखप्रकारेण गृहेषु

विदुरस्तदभिप्रेत्य धृतराष्ट्रमभाषत ॥ राजन्निर्गम्यतां शीघ्रं पश्येदं भयमागतम् ॥ १८ ॥ प्रतिक्रिया न यस्येह कुतश्चित्कर्हिचित्प्रभो ॥ स एव भगवान्कालः सर्वेषां नः समागतः ॥ १९ ॥ येन चैवाऽभिपन्नोऽयं प्राणैः प्रियतमैरपि ॥ जनः सद्यो वियुज्येत किमुतान्यैर्धनादिभिः ॥ २० ॥ पितृभ्रातृसुहृत्पुत्रा हतास्ते विगतं वयः ॥ आत्मा च जरया ग्रस्तः परगेहमुपासते ॥ २१ ॥ अहो महीयसी जंतोर्जीविताशा यथा भवान् ॥ भीमेनावर्जितं पिंडमादत्ते गृहपालवत् ॥ २२ ॥ अग्निर्निसृष्टो दत्तश्च गरो दाराश्च दूषिताः ॥ हृतं क्षेत्रं धनं येषां तद्दत्तैरसुभिः कियत् ॥ २३ ॥ तस्यापि तव देहोऽयं कृपणस्य जिजीविषोः ॥ परैत्यनिच्छतो जीर्णो जरया वाससी इव ॥ २४ ॥

प्रमत्तानाम् । अत्यक्रामदायुष्कालोऽतिक्रांतः । यद्वा तानत्यभवदित्यर्थः ॥ १७ ॥ अभिप्रेत्य ज्ञात्वा ॥ १८ ॥ ननु तत्प्रतीकारः क्रियतां किं निर्गमनेन तत्राह । प्रतिक्रियेति । सर्वेषामिति । यैः प्रतिकर्तव्यं तेषामपीत्यर्थः ॥ १९ ॥ कथं धनादिवियोगः सोढुं शक्योऽत आह । येन चेति । अभिपन्नोऽभिग्रस्तः ॥ २० ॥ अत्रावस्थानमतिदैन्यमिति दर्शयन् वैराग्यमुत्पादयति । पितृभ्रात्रिति सप्तभिः । आत्मा च देहः ॥ २१ ॥ येन पुत्रा हतास्तेन भीमेन दत्तं पिंडं गृहपाल इव । गृहपालः श्वा ॥ २२ ॥ निसृष्टः प्रक्षिप्तः । गरो विषम् । दूषिताः अवमताः । तद्दत्तैरन्नादिभिर्लब्धैरसुभिः कियत्प्रयोजनम् । न किंचिदित्यर्थः ॥ २३ ॥ तस्यापि तवैवं दैन्यमनुभवतोऽपि परैति क्षीयतेऽत

सक्तानां जनानां न तु पांडवानाम् । "किं ते कामाः सुरस्पार्हा मुकुंदमनसो द्विजाः । अधिजह्रुर्मुदं राज्ञः क्षुधितस्य यथेतरे" इत्युक्तेः । "येऽध्यासनं राजकिरीटजुष्टं सद्यो जहुर्भगवत्पार्श्वकामाः" इति वक्ष्यमाणत्वाच्च । अतो विदुरोऽपि धृतराष्ट्रं प्रत्येव तथोपदिदेश न तान्प्रतीति परमदुस्तरः यौवनादिरूपस्तत्र कामाचैराकुली क्रियत इति भावः । "कालो न यातो वयमेव याताः" इति भर्तृहर्युक्तेः कालस्यातिक्रमणं न संगच्छते इति चेदाह—यद्वेति । इत्यर्थ इति । उपसर्गवशादत्र क्रम्यतेरभिभवोर्थ इति भावः ॥ १७ ॥ राजन्निति । त्वत्तः पूर्वतनराज्ञामयमेवांते धर्मोऽतस्त्वमपि तं गृहाणेति भावः । तत्कालातिक्रमणम् ॥ १८ ॥ प्रतीकारो निवृत्त्युपायः । इत्यर्थ इति । यदि कश्चिदवशिष्येत्तदा तु सोऽपि भवेदेवेति भावः । कालस्याप्रतिक्रियत्वं तु "बलेन सचिवैर्बुद्ध्या मंत्रैरोषधिभिस्तथा । सामादिभिरुपायैश्च कालं नात्येति वै जनः" इत्यष्टमस्कंधोक्तेः । "नांतकस्य क्रिया कापि" इति गारुडोक्तेश्च । हे प्रभो इति । प्रगता भा प्रतिभा यस्येति प्रभुः । पृषोदरादित्वमाश्रित्य भाशब्दस्य भुरादेशः । तव तु बुद्धिर्न स्थिरा यतोऽप्रतिक्रियस्यापि प्रतिक्रियामिहसे इति भावः ॥ १९ ॥ येन कालेन प्रिया धनादयः प्रियतराः स्त्र्यादयः प्रियतमाः प्राणाः । यतोऽग्निप्रदीप्तगृहांतगर्तधनस्त्र्याद्यादानाय तत्र प्रवेशं न कश्चित्करोतीत्यतः प्राणानां प्रियतमत्वमिति ॥ २० ॥ उपाससे । शबन्तार्षः । न श्रेयस्साधनायेहसे मृतस्यापि तव परलोकसुखाप्तिर्न भविष्यतीति भावः ॥ २१ ॥ परलोके सुखं नेति चेत्तर्हीहैव दीर्घजीवनमस्त्वित्यभिप्रायश्चेत्तर्हि त्वं निरपत्रप इत्याह—अहो इति । जीविताशा बहुकालं जीवामीतीच्छा महीयसी बृहत्तमाऽहो अज्ञातिरेकः । यया जीविताशया भीमेनावर्जितं तिरश्चीनहस्तेन दत्तं पिंडमन्नमादत्ते ॥ २२ ॥ ननु भीमस्य कनिष्ठपुत्रत्वेन मत्पुत्रत्वात्तद्दत्तान्नेन शरीरपोषणं नानुचितमिति चेत् । सत्यम् । विषदानादिना त्वयापराद्धत्वात्तद्दत्तमन्नं विषोपममित्यभिप्रेत्याह—अग्निरिति । इत्यर्थ इति । तद्दत्तान्नपुष्टैर्लज्जाकरत्वान्मृतिरेव गरीयस्यतो निर्गम्यतामिति संबन्धः ॥ २३ ॥ ननु युधिष्ठिरादीनां मयि तात्पर्यत्वान्न निर्जिगमिष्यामीति चेत्तत्राह—तस्येति । कृपणस्य परान्नादननिरतस्य वाससी इव "ईदूदेद्द्विवचनं प्रगृह्यम्" । इति प्रगृह्यत्वादसंधिः । वाससी अंतरीयोत्तरीये इति दृष्टान्तस्य द्विवचनदृष्ट्या दार्ष्टान्तिकस्य देहस्यापि

गतस्वार्थमिमं देहं विरक्तो मुक्तबंधनः ॥ अविज्ञातगतिर्जह्यात्स वै धीर उदाहृतः ॥ २५ ॥ यः स्वकात्परतो वेह जातनिर्वेद आत्मवान् ॥ हृदि कृत्वा हरिं गेहात्प्रव्रजेत्स नरोत्तमः ॥ २६ ॥ अथोदीचीं दिशं यातु स्वैरज्ञातगतिर्भवान् ॥ इतोऽर्वाक्प्रायशः कालः पुंसां गुणविकर्षणः ॥ २७ ॥ एवं राजा विदुरेणानुजेन प्रज्ञाचक्षुर्बोधितो ह्याजमीढः॥ छित्त्वा स्वेषु स्नेहपाशान्द्रढिम्नो निश्चक्राम भ्रातृसंदर्शिताध्वा ॥२८॥ पतिं प्रयांतं सुबलस्य पुत्री पतिव्रता चानुजगाम साध्वी ॥ हिमालयं न्यस्तदंडप्रहर्षं मनस्विनामिव सत्संप्रहारः ॥ २९ ॥

एव धीरो भवेति ॥२४॥ किंलक्षणो धीर इत्यपेक्षायामाह । गतस्वार्थं यशोधर्मादिशून्यं मुक्तबंधनस्त्यक्ताभिमानः क्व गत इत्यविज्ञाता गतिर्यस्य स धीरः प्राप्तदुःखस्य स्वयं सहनेन मुक्तिप्राप्तेः ॥ २५ ॥ नरोत्तमस्तु ततः प्रागेव कृतप्रतीकारः स्वकात्स्वत एव परतः परोपदेशतो वा ॥ २६ ॥ त्वं तु नरोत्तमो नाभूरत इदानीं धीरो भवेत्याह । अथेति । अर्वागर्वाचीन एष्यन्नित्यर्थः । गुणान् धैर्यदयादीन् विकर्षत्याच्छिनत्तीति तथा ॥ २७ ॥ आजमीढः अजमीढवंशजः । प्रज्ञाचक्षुरंधः । एवं बोधितः सन् । द्रढिम्नश्चित्तदार्ढ्यात् । भ्रात्रा संदर्शितोऽध्वा बंधमोक्षयोर्मार्गो यस्य सः ॥ २८ ॥ सुबलस्य पुत्री गांधारी साध्वी सुशीला हिमालयं प्रयांतं पतिमनुजगाम।ननु कथं सा सुकुमारी हिमादिदुःखबहुलं हिमवंतं गता अत आह । न्यस्तदंडानां प्रहर्षो यस्मिंस्तम् । दुःखदमपि केषांचित्प्रहर्षहेतुर्भवतीत्यत्र दृष्टांतः । मनःस्विनां शूराणां युद्धे संस्तीव्रः संप्रहारो

स्थूलसूक्ष्मभेदेन द्वितयात्मकस्य जीर्णत्वं वलिपलितत्वादिकं स्थूलदेहस्यान्ध्यबाधिर्यादिकं च सूक्ष्मदेहस्य जीर्णत्वमिति ज्ञेयम् ॥ २४ ॥ ननु प्रथममेव पतिष्यतीति देहमुपेक्ष्यमाणस्यात्महननाख्यदोषानुषंग इति तत्राह--गतस्वार्थमकृतकृष्णभजनत्वेन शोकमोहजरादिव्याकुलं मुक्तबंधनस्त्यक्तधनपुत्रादिः । अविज्ञाताऽन्यजनैरनवबुद्धारण्यगतिर्यस्य स तथा सन् जह्यात् । क्वापि तीर्थे देहं त्यक्त्वैव यः तिष्ठेत्स धीर इति । तस्मात्पुरुषार्थसाधनायोग्यदेहहानौ न दोषः । निर्जनवनं गत्वा तपश्चर्यया शरीरमिदं साधितस्वार्थं कुर्वीति भावः ॥ २५ ॥ धनं हृदि कृत्वा वणिग्यातीतिवत् । हरिं हृदि कृत्वा हरिं प्राप्तुमिति भावः । जातनिर्वेद उत्पन्नवैराग्यः । आत्मवान्वशीकृतमनाः । पूर्वश्लोकेन त्वातुरसंन्यासो द्वितीये सदसद्विवेकवत्त्वेन हरिशरणतया सन्यासोऽसूचीति ॥ २६ ॥ अथ तस्माद्भवानुदीचीमुत्तराम् । स्वैरज्ञातगतिर्विविक्तगतिर्न तु स्वैः पांडवैरविज्ञातगतिः । पांडवानुज्ञयैव तस्य महाभारते वनवासाय गत्युक्तेः । स्वैरेणेच्छानुसारेण ज्ञाता गतिर्यस्य न परेच्छातः स तथोक्त इति विवरणोपपत्तेः । अन्यथाऽविज्ञातगतिरित्यपहस्तितं स्यात् । इतोऽर्वाक् प्राक्तनः कालः पुंसामधिकारिणां ज्ञानभक्त्यादिगुणसामग्र्यापादकः । अर्वागित्यस्यार्थांतरमादायाह—इत उपरितनः काल एष्यन्निति स्वामिचरणैरुक्तत्वादिति । यद्वाऽर्वागित्यव्ययं तस्यानेकार्थत्वोपपत्तेः ॥ २७ ॥ आजेन ज्ञानेन मीढः सिक्तः । मिह सेचनेऽतः क्तप्रत्यये रूपम् । प्रज्ञयाचष्टे पश्यति न तु मांसदृष्ट्येति वा अध्वा लौकिको वैदिको वा । द्रढिम्नो दृढतरान् । निर्जगाम गृहादिति शेषः ॥ २८ ॥ पत्युः शुश्रूषैव व्रतं यस्याःसा तथोक्ता । वैय्यधिकरणबहुव्रीहित्वान्मध्यमपदलोपः । चकारात्कुंती चानुजगामेत्यवधेयम् । महाभारते तथैवोक्तत्वात् । ननु सा सुकुमारी दुःखबहुलं हिमाद्रिं कथं गते

अजातशत्रुः कृतमैत्रो हुताग्निर्विप्रान्नत्वा तिलगोभूमिरुक्मैः ॥ गृहं प्रविष्टो गुरुवंदनाय न चापश्यत्पितरौ सौबलीं च ॥ ३० ॥ तत्र संजयमासीनं पप्रच्छोद्विग्नमानसः ॥ गावल्गणे क्व नस्तातो वृद्धो हीनश्च नेत्रयोः॥३१॥अम्बा च हतपुत्राऽऽर्ता पितृव्यः क्व गतः सुहृत् ॥ अपि मय्यकृतप्रज्ञे हतबंधुः सभार्यया ॥ आशंसमानः शमलं गंगायां दुःखितोऽपतत् ॥ ३२ ॥ पितर्युपरते पांडौ सर्वान्नः सुहृदः शिशून् ॥ अरक्षतां व्यसनतः पितृव्यौ क्व गतावितः ॥ ३३ ॥ सूत उवाच ॥ कृपया स्नेहवैक्लव्यात्सूतो विरहकर्शितः ॥ आत्मेश्वरमचक्षाणो न प्रत्याहातिपीडितः ॥ ३४ ॥ विमृज्याऽश्रूणि पाणिभ्यां विष्टभ्यात्मानमात्मना ॥ अजातशत्रुं प्रत्यूचे प्रभोः पादावनुस्मरन् ॥ ३५ ॥

यथा । पाठांतरे सत्संप्रहारं युद्धं यथेति ॥ २९ ॥ कृतं मैत्रं मित्रदैवत्यं संध्यावंदनं येन । नत्वा संपूज्य । पितरौ विदुरधृतराष्ट्रौ ॥ ३० ॥ हे गावल्गणे गवल्गणस्य पुत्र संजय ॥ ३१ ॥ अकृतप्रज्ञे मंदमतौ शमलमपराधमाशंसमान आशंकमानः । भर्यया सह ॥ ३२ ॥ यावरक्षतां तौ । इतः स्थानात् ॥ ३३ ॥ कृपया स्नेहवैक्लव्याचातिपीडित आत्मेश्वरं धृतराष्ट्रमपश्यन् विरहकर्शितश्च सूतः संजयो न प्रत्युत्तरमाह ॥ ३४ ॥ आत्मना बुद्ध्यात्मानं मनो विष्टभ्य धैर्ययुक्तं कृत्वा प्रभोर्धृतराष्ट्रस्य ॥ ३५ ॥

तिं चेदाह—न्यस्तदंडानां कायवाङ्मनोभिस्त्यक्तभूतद्रोहाणां प्रहर्षो यत्र तं "संप्रहाराभिसंपातकनिसंस्फोटसंयुगाः" इत्यमरः । सत्संप्रहारमिति पाठे क्लीबत्वमार्षम् ॥ २९ ॥ तिलगोभूमिरुक्मैः संपूज्येति प्रविश पिंडीमितिवदाक्षेपलब्धम् । गुरुवंदनाय गुरूणां धृतराष्ट्रादीनां नमस्काराय चात्कुन्तीञ्च ॥ ३० ॥ तत्र गृहे नेत्रयोरिति षष्ठी तृतीयार्थे । नेत्राभ्यामित्यर्थः । इह महाभारतविरोधस्तु कल्पांतरव्यवस्थयैव वार्य्यः । यद्वा राजा हि धृतराष्ट्रादीनां गमनानंतरमपि प्रतिदिनं तदुपवेशस्थानवंदनाय पितृगृहं यात्येव । "गुरौ भक्तेन कर्त्तव्यमन्वहं गुरुवन्दनम् । गुरौ मृते प्रवसिते गत्वा च गुरुमंदिरम् ॥ उपवेशभुवं तस्य पूजयित्वा नमेत्सदा । य एवं कुरुते विप्राः स लोकसुखमश्नुते॥" इति वारतंतवोक्तेः । एकस्मिन्दिवसे मृतधृतराष्ट्रादिगतिं निवेदितुं धृतराष्ट्रगृहागतं संजयं तत्र दृष्ट्वा पितरौ कुंतीधृतराष्ट्रौ सौबलीं गांधारीञ्च अहो अयं तैस्साकं गतोऽधुनाऽत्रागतोऽतस्ते मृता इति मनसा न चापश्यत् । काकापश्यदेवेत्यर्थः ।अत्र पितृशब्देन विदुरो न ग्राह्यः तस्य धृतराष्ट्रादिमृतेः पूर्वं तद्दर्शनार्थं वनं गतेन युधिष्ठिरेणैकीभूतत्वात् । अथ प्रकृतसंबुद्ध्यर्थमाह—हे गावल्गणेति । परंपरागतभृत्यानामयमेव धर्मो यदापदि प्रभुर्यावदायुर्न त्याज्यो मृते तस्मिंस्तत्पुत्रादिरपि न त्याज्य इति भावः । ततो धृतराष्ट्रः क्व कं लोकं गतः । अंबा कुंती वा हतपुत्राऽऽर्त्ता गांधारी च परत्र कं प्रति गतेति । पितृव्यो धृतराष्ट्रः क्व गत इति पुनः प्रश्नस्तात्पर्यातिशयात् ॥ ३१ ॥ धृतराष्ट्रस्य मरणकाले स्वस्मिन्प्रियाप्रियविवेकमस्य मरणप्रकारञ्च पृच्छति । अपीति । अकृतप्रज्ञेऽशिक्षितबुद्धौ मयि स्वभार्यया सह शमलं पापमपराधमाशंसमानः दुःखितः सन् गंगायामपतदपि बंधून्सर्वान्मारयित्वा स्वयं राज्यमादाय मां निष्कासितवानिति शमलबुद्धिर्नाभवत्किं तद्दुःखातिशयादेव गंगायां पतित्वा मृतो नन्विति भावः । चक्रवर्ती तु अहो युधिष्ठिरेण ममैकोऽपि पुत्रो न रक्षितस्तत्किं मे जीवितेनेति मनसानुलपन्निर्विद्यमान इत्यर्थः । यद्वा मद्वधात्मकमपि पापं भवत्विति व्यंजयन्नित्यर्थः ॥ ३२ ॥ स्वस्याकृतप्रज्ञत्वमुपपादयति—पितरीति । नोस्माकं पितरि पाण्डौ उपरते स्वर्गं गते सति यौ गांधारीधृतराष्ट्रौ शिशून्सर्वान् व्यसनतोऽरक्षताम् । सुहृत्त्वं शिशुत्वं च रक्षणीयत्वे हेतुः । तौ पितृव्यौ मृत्वेतोऽस्माल्लोकात्परत्र कं लोकं गतावित्यन्वयः । तयोरनवरतशुश्रूषणाभावादेवमप्यकृतप्रज्ञत्वमिति भावः ॥ ३३ ॥ ननु आत्मनः स्वस्येश्वरं स्वामिनं धृतराष्ट्रमचक्षाणो मृतत्वादेवापश्यन् अत एव विरहेण वियोगेन कर्शितः कृशतरः कुतः स्नेहपारवश्याद्दाक्षिण्याच्च संजयो युधिष्ठिरवाक्योत्तरं वक्तुं नाशक

संजय उवाच ॥ नाहं वेद व्यवसितं पित्रोर्वः कुलनंदन ॥ गांधार्या वा महाबाहो मुषितोऽस्मि महात्मभिः ॥३६॥ अथाजगाम भगवान्नारदः सहतुंबुरुः ॥ प्रत्युत्थायाभिवाद्याऽऽह सानुजोऽभ्यर्चयन्निव ॥३७॥ युधिष्ठिर उवाच ॥ नाहं वेद गतिं पित्रोर्भगवन्क्व गतावितः ॥ अंबा वा हतपुत्राऽऽर्ता क्व गता च तपस्विनी ॥ कर्णधार इवापारे भगवान्पारदर्शकः ॥ ३८ ॥ अथाबभाषे भगवान्नारदो मुनिसत्तमः ॥ मा कंचन शुचो राजन्यदीश्वरवशं जगत् ॥३९॥ लोकाः सपाला यस्येमे वहंति बलिमीशितुः ॥ स संयुनक्ति भूतानि स एव वियुनक्ति च ॥४०॥ यथा गावो नसि प्रोतास्तंत्यां बद्धाः स्वदामभिः ॥ वाक्तंत्यां नामभिर्बद्धा वहंति बलिमीशितुः ॥ ४१ ॥ यथा क्रीडोपस्कराणां संयोगविगमाविह ॥ इच्छया क्रीडितुः स्यातां तथैवेशेच्छया नृणाम् ॥ ४२ ॥ यन्मन्यसे ध्रुवं लोकमध्रुवं वा न चोभयम् ॥ सर्वथा हि न शोच्यास्ते स्नेहादन्यत्र मोहजात् ॥ ४३ ॥

गांधार्याश्च व्यवसितं निश्चितम् । यतो मुषितो वञ्चितोऽस्मीति॥ ३६॥ एवं कंचित्कालं शोचति तस्मिन्नथ नारद आजगाम । अत्रास्ति क्वचित्पुस्तके पाठांतरं तदुल्लंघ्य यथासंप्रदायं व्याख्यायते । शोकवेगादभ्यर्चयन्निवाह राजा न त्वभ्यर्चयत् ॥ ३७ ॥ नाहं वेद वेद्मि । तपस्विनी दुःखयुक्ता । अपारे शोकार्णवे भगवांस्त्वमेव पारदर्शकः । अतो ब्रूहीति शेषः ॥ ३८ ॥ आदावेव यथावृत्तकथने शोकेन मूर्छितः पतेदिति प्रथमं तावच्छोकमुपशमयति । कंचन मा शुचो मा शोचः । न केवलं तानेव । यद्यस्मादीश्वराधीनं जगत् ॥ ३९ ॥ तदेवाह । लोका इति । संयुनक्ति संयोजयति वियुनक्ति वियोजयति च ॥ ४० ॥ गावो बलीवर्दा नसि नासिकायां प्रोतास्तंत्यां दीर्घतंत्यां दामभिर्बद्धाः स्वामिनो बलिं वहंति यथा एवं वाक्तंत्यां कर्तव्याकर्तव्यविधायकवेदलक्षणायां नामभिर्ब्राह्मणो ब्रह्मचारीत्यादिवर्णाश्रमलक्षणैर्बद्धाः परमेश्वरस्य बलिं तेन प्रेरिताः सर्वे वहंतीत्यर्थः ॥ ४१ ॥ प्रवृत्तौ पारतंत्र्यमुक्त्वा संयोगवियोगयोरप्याह । यथेति । क्रीडोपस्कराणां क्रीडासाधनानाम् ॥४२॥ ईश्वराधीनत्वान्न शोकः कार्य इत्युक्तम् । लोकतत्त्वे च विचार्यमाणे निर्विषयोऽयं शोक इत्याह । यद्यदि लोकं जनं ध्रुवं जीवरूपेण अध्रुवं देहरूपेण । न चेति । न ध्रुवं नाप्यध्रुवम् । शुद्धब्रह्मरूपेणानिर्वचनीयत्वेन वा

दित्यन्वयः । यद्वा कृपया हा वृद्धानामनाथानां का दशा भविष्यतीति चेतोद्रवेण । स्नेहस्त्वत्र संबंधहेतुक एव ॥ ३४ ॥ ३५ ॥ प्रजा रंजयित्वा कुलं नंदयतीति निरुक्त्या कुलनन्दनता त्वय्यस्तीति साक्षेपा संबुद्धिः । हे महाबाहो इति संबुद्धिरपि धन्यौ ते भुजौ यत्प्रभावेण धृतराष्ट्रादेरियं व्यवस्था जातेति भावः । मुषितोस्मि मामपीह त्यक्त्वा गतास्ते इत्यर्थः । बहुत्वं गांधार्यपेक्षया ॥ ३६ ॥ अथ युधिष्ठिरसंवादे प्रवृत्ते पाठांतरम् अभ्यर्चयन्मुनिमित्येवंरूपम् । तुंबुरुर्गंधर्वविशेषः ॥ ३७ ॥ हे भगवन्निति । श्रीनारदस्य सर्वज्ञतां द्योतयन्नाह—मृतयोः पित्रोः परलोकगतिं न वेद तां भवंतं पृच्छामि तौ मृत्वेतः कं लोकं प्रति गताविति ॥ ३८ ॥ धृतराष्ट्रादिषु कञ्चन मा शुचः । यद्यतः कर्मानुसारेण भूतानि संयोजयतीश्वरो वियोजयति च तस्मादस्ववशत्वाच्छोको वृथैवेति भावः ॥ ३९ ॥ ईश्वरजीवस्वातंत्र्यपारतंत्र्यं सोदाहरणमाह—यथेति । इत्यर्थ इति । बलिं यज्ञादिलक्षणां पूजां वहंति कुर्वन्ति । तस्मात्स एव स्वतंत्रो जीवास्तदधीना इति शोकपरिहाराय स ईशः स्वविहितकर्मणा पूज्य इति भावः ॥ ४० ॥ ननु वेदस्यानेकार्थत्वेन तात्पर्यस्य दुर्ज्ञेयत्वाद्धीरैयाणां च गोण्यादिपातनेन स्वामिकार्यावज्ञानदर्शनाद्विषमोऽयं दृष्टान्तोतो निदर्शनान्तरमाह—यथेति । तथैवेशेच्छया नृणां संयोगवियोगौ स्यातामिति । अनेन वेदस्य मुख्योऽर्थः श्रीनारायण एवेत्यसूचि । तस्मात्पराधीनत्वत्तव शोकोऽयुक्त इति भावः ॥ ४१ ॥ ४२ ॥ इत्यर्थ इति । अहं ममेति मोहो बुद्धिभ्रमस्तस्माज्जातात्स्नेहादन्यत्र शोककारणं नास्ति । तस्माद्भ्रमजन्यस्नेह एव हेतुरिति । तथा च भक्तिसंबंधिस्नेहोत्थशोको हि करुणारसस्थायी

तस्माज्जह्यंग वैक्लव्यमज्ञानकृतमात्मनः ॥ कथं त्वऽनाथाः कृपणा वर्तेरंस्ते न मां विना ॥ ४४ ॥ कालकर्मगुणाधीनो देहोऽयं पांचभौतिकः ॥
कथमन्यांस्तु गोपायेत्सर्पग्रस्तो यथा परम् ॥४५ ॥ अहस्तानि सहस्तानामपदानि चतुष्पदाम् ॥ फल्गूनि तत्र महतां जीवो जीवस्य जीवनम् ॥
॥४६॥तदिदं भगवान्राजन्नेक आत्माऽऽत्मनां स्वदृक् ॥ अंतरोऽनंतरो भाति पश्य तं माययोरुधा॥४७॥सोयमद्य महाराज भगवान्भूतभावनः ॥
कालरूपोऽवतीर्णोऽस्यामभवाय सुरद्विषाम् ॥ ४८ ॥ निष्पादितं देवकृत्यमवशेषं प्रतीक्षते ॥ तावद्यूयमवेक्षध्वं भवेद्यावदिहेश्वरः ॥ ४९ ॥

उभयं वा चिज्जडांशतः । सर्वथा चतुर्ष्वपि पक्षेषु ते पित्रादयो न शोच्याः । स्नेहादन्यत्र । स्नेह एव केवलं शोकहेतुः स चाज्ञानमूल इत्यर्थः ॥ ४३ ॥ तस्मान्मां विना कथं ते वर्तेरन्निस्यात्मनो मनसो वैक्लव्यं व्याकुलतां त्यज ॥ ४४ ॥ तत्र त्वद्देहतस्तेषां वृत्तिरेतत्तावन्नास्तीत्याह । कालो गुणक्षोभकः कर्म जन्मनिमित्तं गुणा उपादानं तदधीनः पांचभौतिको जडस्तद्विभागे नाशवांश्च सर्पग्रस्तोऽजगरगिलितो यथाऽन्यं न रक्षति तद्वत् ॥ ४५ ॥ ईश्वरेण विहिता वृत्तिश्च सर्वतः सुलभैवेत्याह । अहस्तानि पश्वादीनि । अपदानि तृणादीनि । तत्र तेष्वहस्तादिष्वपि फल्गून्यल्पानि । एवं जीवः सर्वोऽपि जीवस्य सर्वस्य जीवनं जीविका । एतेनैव सर्वतो मृत्युग्रासत्वं चोक्तम्॥ ॥ ४६ ॥ मोहनिवृत्त्यर्थं द्वैतस्यावस्तुत्वमाह । तदिदमहस्तसहस्तादिरूपं जगत् स्वदृग्भगवानेव न ततः पृथक् । स चैक एव न तु नाना ।ननु सजातीयविजातीयभेदे प्रत्यक्षे कुत एतत्तत्राह आत्मनां भोक्तृणामात्मा स्वरूपम् । अतो न सजातीयभेदः । अंतरोऽनंतरश्चान्तर्बहिश्च भोक्तभोग्यरूपश्च भाति । अतो न विजातीयभेदोऽपि । नन्वेकः कथं तथा प्रतीयतेऽत आह । मायया बहुधा भाति तं पश्येति ॥ ४७ ॥ क्वासावस्तीदृशो महामायावी द्वारकायामित्याह । सोऽयमिति । अस्यां भूम्याम् । अभवाय नाशाय ॥ ४८॥ तर्हि श्रीकृष्णोऽत्रास्तीत्यत्रैवास्थां मा कृथा इत्याह । तच्च देवानां कार्यं तेन निष्पादितम् । केवलमवशेषं प्रतीक्षते । यदुकुलक्षयमिति हृदिस्थम् । ततो निजं धाम

भावः परमोपादेय इति भावः ॥ ४३ ॥ यतः शोकोऽज्ञानमूलकस्तस्माद्धेतो । अंगेत्यव्ययमामंत्रणे ॥ ४४ ॥ किञ्च तवायं देहः स्वाधीनः पराधीनो वा स्वाधीनत्वे भोगयोग्यदुःखनिवारणाक्षमता कथम् । न हि कश्चि दुःखं मे स्यादित्याकांक्षते विचक्षणस्तस्मात्पराधीन इति वक्तव्यम् । तथा च पररक्षणसामर्थ्यं न घटते इत्याह—कालेति । अतो न कोपि कंचिद्वृत्तिदानादिना विनेश्वरं रक्षितुं प्रभुरस्तीति भावः । अतः स्वामिचरणै रस्य वृत्तस्यावतरणिकायामुक्तं तत्र त्वद्देहत इत्यादि।तत्रेति वाक्यलंकारे।अतो ममायं पित्रादिर्मा विनैतान्को रक्षितेत्यभिमतिर्न कार्या "स रक्षिता रक्षति यो हि गर्भे" इत्याद्युक्तेरीशप्रेरितकालाद्यधीन एव जीवनादिरितिध्येयं सुधियेति ॥४५॥ननु भगवन्सत्यमेतत्तथापि वृद्धानामंधानाञ्चान्नादिदौस्थ्यात्तज्जीवने मम संदेह इति चेत्तत्राह—ईश्वरविहिता वृत्तिरिति। अहस्तानि शशपारावतपक्षिप्रभृतीनि सहस्तानां मनुष्यादीनां जीवनं देहधारणसाधनं तत्रापि अहस्तसहस्ते ष्वपि राक्षसाद्यपेक्षया मनुष्या अप्यणव एवेति जीवस्य जीव एव साहजिकी जीविका । अन्नादीनामजीवत्वे तद्वापेण पुनरुत्पत्तिस्तेषां न भवेद्वर्जितक्वथितादेरप्युत्पत्तिर्भवेच्च । अतः सर्वं सजीवमेव । एवं तपस्विनामपि पत्रपुष्पा दिरीश्वरकल्पितैवानिषिद्धा जीविकास्तीति किमर्थं वृथा विषीदसीति: भावः।एतेन जीवस्य जीव एव जीविकेति कथनेन ॥४६ ॥ननु यदीश्वरवशं जगदित्यादिना यत्त्वयोक्तं:भगवदधीनं सर्वं चेत्तर्हि कथं कालकर्मगुणाधीनो देह इत्युच्यते । सत्यम् । कालकर्मादिकस्य सर्वस्य जगतो भगवच्छक्तिकार्यत्वात्सर्वं भगवानेवेत्याह—तदिदमिति । स्वरूपशक्त्यात्मनां जीवानामात्मांतर्यामिरूपेण स्वदृक् स्वयं प्रकाशः ।:अत्र स्वामिचरणैराक्षिप्तं नन्विति । सजातीयोऽश्वत्थस्याम्राः उभयत्र वृक्षत्वसत्त्वात् । विजातीयोऽश्वत्थस्य पाषाणादिरितिरीतिसजातीयादिज्ञाने । पुनराक्षिमति नन्विति । उरुधा देवतिर्यगादि रूपेण वा ॥ ४७ ॥ हे महाराजेति । यत्कृपया त्वं महाराजो जातस्सोयमिति भावः । स्वयं तु परमानंदरूपत्वेन भूतभावनोपि सुरद्विषामभावाय सोयं कालरूप इति संबंधः ॥ ४८ ॥ अवेक्षध्वमिति । कर्माश्रवणादहंतास्पदं ममतास्पदं च सर्वं लभ्यते :। तदंतर्द्धाने श्रुते सति

धृतराष्ट्रः सह भ्रात्रा गांधार्या च स्वभार्यया ॥ दक्षिणेन हिमवत ऋषीणामाश्रमं गतः ॥ ५० ॥ स्रोतोभिः सप्तभिर्या वै स्वर्धुनी सप्तधा व्यधात् ॥ सप्तानां प्रीतये नाना सप्तस्रोतः प्रचक्षते॥५१॥स्नात्वाऽनुसवनं तस्मिन्हुत्वा चाग्नीन्यथाविधि॥अब्भक्ष उपशांतात्मा स आस्ते विगतैषणः॥५२॥ जितासनो जितश्वासः प्रत्याहृतषडिंद्रियः ॥ हरिभावनया ध्वस्तरजःसत्त्वतमोमलः ॥ ५३ ॥ विज्ञानात्मनि संयोज्य क्षेत्रज्ञे प्रविलाप्य तम् ॥ ब्रह्मण्यात्मानमाधारे घटांबरमिवांबरे ॥५४॥ ध्वस्तमायागुणोदर्को निरुद्धकरणाशयः ॥ निवर्तिताखिलाहार आस्ते स्थाणुरिवाचलः ॥ ५५ ॥

यास्यति ततो यूयमपि गच्छतेत्यर्थः । तच्च भूतमपि विदुरवदेव नावर्णयत् ॥ ४९ ॥ तदेवं शोकमास्थां च निवार्य जिज्ञासवे तस्मै यथावृत्तं कथयति धृतराष्ट्र इति षड्भिः । हिमवतो दक्षिणे भागे ॥ ५० ॥ तदपि कुत्रेत्याह । स्रोतोभिरिति । या वै प्रसिद्धा स्वर्धुनी सा आत्मानं यत्र सप्तधा व्यधात् । किमर्थम् । नाना पृथक्सप्तभिः स्रोतोभिः प्रवाहैः सप्तानामृषीणां प्रीतये । अत एव तत्तीर्थं सप्तस्रोतो वदंति ॥ ५१ ॥ तत्र तेन कृतमष्टांगयोगमाह । स्नात्वेति चतुर्भिः । तत्र स्नानं होमोऽब्भक्षणं चेति नियमा उक्ताः भक्षस्थानेऽपां स्वीकारादब्भक्षः उपशांत आत्मा यस्य सः । विगताः पुत्राद्येषणा यस्मादिति यमा उक्ताः ॥ ५२ ॥ जितासन इत्यादिना आसनप्राणायामप्रत्याहारा उक्ताः । हरिभावनयेति धारणोक्ता । ध्वस्ता रजःसत्त्वतमोरूपा मला यस्येति फलतो ध्यानमुक्तम् ॥ ५३ ॥ समाधिमाह । विज्ञानेति द्वाभ्याम् । आत्मानं मनोऽहंकारास्पदं स्थूलदेहाद्वियोज्य विज्ञानात्मनि बुद्धौ संयोज्यैकीकृत्य तं च विज्ञानात्मानं दृश्यांशाद्वियोज्य क्षेत्रज्ञे द्रष्टरि प्रविलाप्य तं च क्षेत्रज्ञं द्रष्टृंशाद्वियोज्याधार आश्रयसंज्ञे ब्रह्मणि प्रविलाप्य घटांबरं घटोपाधेर्वियोज्य यथा महाकाशे प्रविलाप्यते तद्वत् ॥५४॥ व्युत्थानाभावमाह । ध्वस्तेति । अंतर्गुणक्षोभाद्वा बहिरिंद्रियविक्षेपाद्वा व्युत्थानं भवेत्तदुभयं तस्य नास्ति यतो ध्वस्तो मायागुणानामुदर्क उत्तरफलं वासना यस्य सः । निरुद्धानि करणानि चक्षुरादीन्याशयो मनश्च यस्य सः । अत एव निवर्तितोऽखिल आहारो भोज्यमिंद्रिये

सर्वमेवोपेक्षध्वमिति भावः ॥ ४९ ॥ "नाहं वेद गतिं पित्रोः" इति प्रश्नं परिहरिष्यन्धृतराष्ट्रस्य तपश्चर्याश्रमतीर्थनामाद्याह–धृतराष्ट्र इति । दक्षिणेनेति । दक्षिणस्यामित्यर्थः । निर्गमनावसरे भ्रात्रा विदुरेण चात्कुंत्या सह हस्तिनापुरान्निर्गम्य हिमवतो गिरेर्दक्षिणदिग्गतमृषीणामाश्रमं सप्तस्रोतोनाम गतोभूदित्यन्वयः ॥ ५० ॥ कस्मात्सप्तस्रोतस्त्वं तस्येति तत्राह–यत्राश्रमे । स्वामिव्याख्याने तदपि कुत्रेत्यस्य दक्षिणस्यामपि कुत्र गत इत्यर्थः । अत एव सप्तप्रवाहवत्त्वादेव॥५१॥तेन धृतराष्ट्रेण । तत्राष्टांगेषु । आदिना लोकैषणावित्तैषणाग्रहः । आस्ते इति भूते लट् । अन्यथोक्तार्थविरोधः स्यात् । अनुसवनं त्रिकालम्॥५२॥अपि मयीति मृत्युकालीननिष्ठाविषयप्रश्नं परिहरन्नाह–धृतराष्ट्र उक्तविधिना तपः कुर्वन्नभ्यासपाटवेन जितासनः स्वस्तिकाद्यासनजयवान् जितश्वासः प्राणजयवान्।विषयेभ्यः प्रत्याहृतानि निवर्त्तितानि षडिन्द्रियाणि येन स इति।प्रत्याहार उक्तः॥५३॥स्वदेहगतानि भूतानि क्रमेण कारणेषु प्रवेश्यात्मानमहंकारं विज्ञानात्मनि महत्तत्वे संयोज्य भावयित्वा। तच्च विज्ञानात्मानं क्षेत्रज्ञे जीवे प्रविलाप्य संयुक्तं विभाव्य तच्च क्षेत्रज्ञं ब्रह्मणि संयोज्यात्मानं स्वदेहस्थमन्तर्यामिणमाधार आश्रयतत्वेभगवत्यंशिनि संयुक्तं विभाव्य।नन्वन्तर्यामिभगवतोरैक्यमेव प्रसिद्धम् ।सत्यम्।ऐक्येप्यौपचारिको भेदो। विवक्षित एवेति सदृष्टांतमाह–घटांबरमिवेति। उपाधिस्थमाकाशं निरुपाधावाकाश इव तयोश्च घटाकाशमहाकाशयोर्वस्तुतः सर्वव्यापकत्वादैक्यमेवेत्यर्थः ॥ ५४ ॥ अधुना स्थाणुरिवाचल आस्ते तदा मृतिकाले आसीदित्येकान्वयः । अतस्त्वयि शमलमाशंसमानो गंगायां नापतदिति भावः । ब्रह्मार्पणबुद्ध्यासंन्यस्तसमस्तकर्मणस्तस्य धृतराष्ट्रस्य त्वमपि

तस्यांतरायो मैवाभूः संन्यस्ताखिलकर्मणः ॥ स वा अद्यतनाद्राजन्परतः पंचमेऽहनि ॥ कलेवरं हास्यति स्वं तच्च भस्मी भविष्यति ॥ ५६ ॥ दह्यमानेऽग्निभिर्देहे पत्युः पत्नी सहोटजे ॥ बहिःस्थिता पतिं साध्वी तमग्निमनुवेक्ष्यति ॥ ५७ ॥ विदुरस्तु तदाश्चर्यं निशाम्य कुरुनंदन ॥ हर्षशोकयुतस्तस्माद्गंता तीर्थनिषेवकः ॥ ५८ ॥ इत्युक्त्वाऽथारुहत्स्वर्गं नारदः सहतुंबुरुः ॥ युधिष्ठिरो वचस्तस्य हृदि कृत्वाऽजहाच्छुचः ॥ ५९ ॥ इति श्री० भा० प्र० विदुरोक्त्या धृतराष्ट्रमोक्षवर्णनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ सूत उवाच ॥ संप्रस्थिते द्वारकायां जिष्णौ बंधुदिदृक्षया ॥ ज्ञातुं च पुण्यश्लोकस्य कृष्णस्य च विचेष्टितम् ॥१॥ व्यतीताः कतिचिन्मासास्तदा नाऽयात्ततोऽर्जुनः ॥ ददर्श घोररूपाणि निमित्तानि कुरूद्वहः ॥२॥

विषयाहरणं वा येन सः । स्थाणुरिव निश्चल आस्ते ॥ ५५ ॥ तथाभूतमप्यानेतुमुद्यतं प्रत्याह । तस्येति । अंतरायो विघ्नः । मैवाभूरित्यडागमश्छांदसः । दर्शनमपि तावत्कुर्यामित्युद्यतं प्रत्याह । स वा अद्यतनादह्नः परत उत्तरत्र । स्वं स्वाधीनम् । तर्हि तद्दाहार्थं गमिष्यामि नेत्याह । तच्चेति ॥ ५६ ॥ तर्हि गांधार्यानयनाय गमिष्यामि नेत्याह पत्युर्देहे सहोटजे पर्णशालासहिते योगाग्निना सह गार्हपत्यादिभिर्दह्यमाने तस्य पत्नी बहिः स्थिता सती तं पतिमन्वग्निं वेक्ष्यति प्रवेक्ष्यति ॥ ५७ ॥ तर्हि विदुरानयनार्थं गंतव्यमेव नेत्याह । विदुरस्तु तन्निशाम्य दृष्ट्वा भ्रातुः सुगत्या हर्षस्तन्मृत्युना शोकश्च ताभ्यां युक्तस्तस्मात्स्थानात्तीर्थानि सेवितुं गंता गमिष्यति ॥ ५८ ॥ शुचः शोकान् ॥ ५९ ॥ इति श्रीमद्भा० महा० प्र० टी० त्रयोदशोऽध्यायः ॥ १३ ॥ चतुर्दशे त्वरिष्टानि दृष्ट्वा राजा विशंकितः ॥ अशृणोदर्जुनात्कृष्णतिरोधानमितीर्यते ॥ १ ॥ श्रीकृष्णस्य चेति चकारेणाभिप्रायं च ज्ञातुम् ॥ १ ॥ कतिचित्सप्त । तदा कालातिक्रमेऽपि ततो द्वारकातो नायान्नागतः । निमित्तान्युत्पातान् । कुरूद्वहो युधिष्ठिरः॥ २॥

तपोविघ्नो माभूरिति तात्पर्यम् ॥ ५५ ॥ इदानीं तन्मृतिकालमाह—स वा इति । अद्यतनादह्नः परतः पूर्वस्मिन्पंचमेहनि कलेवरं हास्यति जही । भूते लृट् । तच्च भस्मी भविष्यति भस्मसाद्भूत् । लृट् पूर्ववत् । अत्र स्कांदीयवाक्यमपि प्रमाणम् "तांस्तदा नारदो विद्वाञ्छमयामास धर्मवित् । उक्त्वोत्तमां गतिं तेषां निष्ठां तात्कालिकीं तथा" इति । तथा च तत्कलेवरमेव भस्मी भविष्यति न तु स शून्यतामेष्यति चेतनस्य नित्यत्वात् । "परः स्यात्पूर्वपरयोरंशे शत्रौ च पालने" इति निरुक्तिः ॥ ५६ ॥ पत्युर्धृतराष्ट्रस्य पत्नी गान्धारी । साध्वीशब्देन कुंती ग्राह्या । तस्य गार्हपत्याद्यग्नयोपि वनं दग्धुं दावानले प्रवृत्ते तत्रैव मिलिता इति महाभारतीयाश्रमवासपर्वणीत्युक्तमतो न विरोधः । तस्मादुत्तमगतिं प्राप्तांस्तान्प्रति परलोकमुद्दिश्य न शोचितव्यमिति भावः ॥ ५७ ॥ ऐष्यज्ञस्य विदुरस्य धृतराष्ट्रवनप्रवेशात्पूर्वतनाचरणप्रकारमाह—विदुर इति । सर्वज्ञो विदुरो दिव्यज्ञानेन भविष्यदाश्चर्यं धृतराष्ट्रपांडवयादवानां निर्याणं निशाम्य दृष्ट्वा हरिसामर्थ्यस्मरणेन बन्धुमरणस्मरणेन च हर्ष शोकान्वितः सर्वमनित्यमीश एव नित्यस्ततस्तीर्थयात्रादितत्सेवैव पुरुषार्थप्रदेत्यतस्तीर्थनिषेवको गंता । गंगादितीर्थानां भागवतादिशास्त्राणां च सेवनाय ययौ । तुशब्दो गंतेति लुटो भूतार्थत्वभेदमाह । "तु स्याद्भेदेवधारणे" इत्यभिधानात् । स पुनर्धृतराष्ट्रपरिसरमागतोभूत् । धृतराष्ट्रादिदिदृक्षया वनं गतेषु भवत्सु भवंतं प्रविश्यैकत्वमागतो हि तस्मान्न तस्य गतिर्मया वर्णनीयेति भावः । यथाश्रुतार्थपरिग्रहे तु कल्पांतरीयव्यवस्थयैव व्यवस्था । सा चागतिकगतिरेव । ऋजुमार्गेण सिध्यतोर्थस्य वक्रेण दर्शनायोगादिदमेव व्याख्यानं कृतिजनानंदकरमिति ॥ ५८ ॥ इतीत्थम् । प्रायेण नारदतुंबुरुगंधर्वयोः सदैव संगतिरस्तीति द्योतनाय सतुंबरुरिति वक्तव्ये सहतुंबरुरित्युक्तम् ॥ ५९ ॥ इति श्रीभागवतभावार्थदीपिकाप्रकाशे प्रथमस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥

अरिष्टानि दुर्निमित्तानि । तिरोधानमंतर्द्धानम् ( १ ) संप्रस्थिते इति । अश्वमेधार्थे श्रीकृष्णस्य पुनरागमनं गमनानंतरं ज्ञेयम् ॥ १ ॥ अत्र तीर्थेन मासशब्देन दिनं गृहीतं तत्र च "अहस्तु मासशब्दोक्तं यत्र

कालस्य च गतिं रौद्रां विपर्यस्तर्तुधर्मिणः ॥ पापीयसीं नृणां वार्तां क्रोधलोभानृतात्मनाम् ॥ ३ ॥ जिह्मप्रायं व्यवहृतं शाठ्यमिश्रं च सौहृदम् ॥ पितृमातृसुहृद्भ्रातृदंपतीनां च कल्कनम् ॥ ४ ॥ निमित्तान्यत्यरिष्टानि काले त्वनुगते नृणाम् ॥ नृलोभाद्यधर्मप्रकृतिं दृष्ट्वोवाचानुजं नृपः ॥ ५ ॥ युधिष्ठिर उवाच ॥ संप्रेषितो द्वारकायां जिष्णुर्बंधुदिदृक्षया ॥ ज्ञातुं च पुण्यश्लोकस्य कृष्णस्य च विचेष्टितम् ॥ ६ ॥ गताः सप्ताऽधुना मासा भीमसेन तवानुजः ॥ नायाति कस्य वा हेतोर्नाहं वेदेदमंजसा ॥ ७ ॥ अपि देवर्षिणाऽऽदिष्टः स कालोऽयमुपस्थितः ॥ यदात्मनोऽगमाक्रीडं भगवानुत्सिसृक्षति ॥ ८ ॥ यस्मान्नः संपदो राज्यं दाराः प्राणाः कुलं प्रजाः ॥ आसन्सपत्नविजयो लोकाश्च यदनुग्रहात् ॥ ९ ॥ पश्योत्पातान्नरव्याघ्र दिव्यान्भौमान्सदैहिकान् ॥ दारुणाञ्छंसतो दूराद्भयं नो बुद्धिमोहनम् ॥ १० ॥ ऊर्वक्षिबाहवो मह्यं स्फुरंत्यंग पुनःपुनः ॥ वपथुश्चापि हृदये आराद्दास्यंति विप्रियम् ॥ ११ ॥ शिवैषोद्यंतमादित्यमभिरौत्यनलानना ॥ मामंग सारमेयोऽयमभिरौति ह्यऽभीरुवत् ॥ १२ ॥

रौद्रां घोराम् । तदेवाह । विपर्यस्ता ऋतुधर्मा यस्मिंस्तस्य वार्तां जीविकाम् । क्रोधलोभानृतैर्युक्त आत्मा येषाम् ॥ ३ ॥ जिह्मप्रायं कपटबहुलम् ॥ व्यवहृतं व्यवहारं शाठ्यं वंचनं तन्मिश्रं सौहृदं सख्यम् । पित्रादीना स्वप्रतियोगिभिः कल्पनं कलहादि ॥ ४ ॥ अत्यरिष्टान्यत्यंतमशुभानि दृष्ट्वा नृणां लोभाद्यधर्मप्रकृतिं च दृष्ट्वा अनुजं भीमम् ॥ ५ ॥ ॥ ६ ॥ वेति वितर्के । कस्माद्धेतोर्नायातीत्यहं न वेद्मि ॥ ७ ॥ अपि किं यदा आत्मन आक्रीडं क्रीडासाधनमंगं मनुष्यनाट्यमुत्स्रष्टुमिच्छति स कालः प्राप्तः ॥ ८ ॥ अस्माकं सर्वपुरुषार्थत्वे हेतुः श्रीकृष्णोऽतस्तद्वियोगं विनानिष्टं न स्यादित्याशयेनाह । यस्माच्छ्रीकृष्णाद्धेतोः । एतच्चोपरिष्टादर्जुनः स्पष्टी करिष्यति । लोकाश्च यज्ञकरणानुरूपा यस्यानुग्रहात् ॥ ९ ॥ अदूरात्संनिहितं नो अस्माकं शंसत उत्पातान् ॥ १० ॥ दैहिकानाह । ऊर्विति । ऊर्वादयो वामाः स्फुरंति वेपथुः कंपश्च हृदये वर्तते । एते मह्यमारात्संनिहितं विप्रियं दास्यंति ॥ ११ ॥ भौमानाह सार्धैस्त्रिभिः । शिवा क्रोष्ट्री आदित्यमभिरौत्युद्यत्सूर्याभिमुखं क्रोशति । अनलानना अग्निं मुखेन वमंती । अंग हे

चिन्तायुतं व्रजेत्'' इति प्रमाणञ्च न्यस्तम् ॥ २ ॥ पापीयसीं पापभूयिष्ठाम् ॥ ३ ॥ व्यवहारं हानोपादानादिरूपम् ॥ ४ ॥ ''अरिष्टं पापाशुभयोः'' इत्यभिधानात् ॥ ५ ॥ ६ ॥ भीमसेनेति । तदा राज्ञा तन्नामोच्चारणेन प्रीत्यतिशयो द्योतितः ॥ ७ ॥ यदात्मनोंगमिति । युधिष्ठिरस्य बंधुशोकानुरूपैवोक्तिर्न तु सिद्धांतस्पर्शिनी । सरस्वती तु तन्मुखे समुचितमेवाह ''नारायणोंऽगं नरभूजलायनात्'' इति ब्रह्मोक्तेः । यदात्मनोंगमंशरूपं नारायणमुत्सिसृक्षति ऊर्द्ध्वं वैकुंठं प्रति सिसृक्षति प्रस्थापयितुमिच्छति । कीदृशमंगम् आ ईषदेव क्रीडा यस्मिंस्तदिति । विश्वनाथः । अंगं स्वधामगमनेन विराड्रूपं त्यक्ष्यतीति संदर्भः । आत्मनः स्वस्याक्रीडं क्रीडास्थानमंगं पृथिवीम् । ''यस्य पृथिवी शरीरम्'' इति श्रुतेरिति तीर्थः ॥ ८ ॥ यस्यानुग्रहाल्लोकाश्च वशीकृता आसन्निति संदर्भः ॥ ९ ॥ हे नरव्याघ्रेति । नरकृतोपद्रवशमनसमर्थोप्येतान्निवर्त्तयितुं न समर्थोऽसीति भावः । बुद्धिमोहनं बुद्धिभ्रंशकम् ॥ १० ॥ नृणां शुभं दक्षिणांगस्फुरणं स्त्रीणाञ्च वामांगस्फुरणं तद्विपरीतं विपरीतफलदमिति शाकुनिकाः ॥ ११ ॥ ''देवतायतनानि कंपंते देवताप्रतिमा हसंति रुदंति स्फुटंति खिद्यंति उन्मीलंति

शस्ताः कुर्वंति मां सव्यं दक्षिणं पशवोऽपरे ॥ वाहांश्च पुरुषव्याघ्र लक्षये रुदतो मम ॥ १३ ॥ मृत्युदूतः कपोतोऽयमुलूकः कंपयन्मनः ॥ प्रत्युलूकश्च कुह्वानैरनिद्रौ शून्यमिच्छतः ॥ १४ ॥ धूम्रा दिशः परिधयः कंपते भूः सहाद्रिभिः ॥ निर्घातश्च महानासीत्साकं च स्तनयित्नुभिः ॥१५॥ वायुर्वाति खरस्पर्शो रजसा विसृजंस्तमः ॥ असृग्वर्षंति जलदा बीभत्समिव सर्वतः ॥ १६ ॥ सूर्यं हतप्रभं पश्य ग्रहमर्दं मिथो दिवि ॥ ससंकुलैर्भूतगणैर्ज्वलिते इव रोदसी ॥ १७ ॥ नद्यो नदाश्च क्षुभिताः सरांसि च मनांसि च ॥ न ज्वलत्यग्निराज्येन कालोऽयं किं विधास्यति ॥१८॥ न पिबंति स्तनं वत्सा न दुह्यंति च मातरः ॥ रुदंत्यश्रुमुखा गावो न हृष्यंत्यृषभा व्रजे ॥ १९ ॥ दैवतानि रुदंतीव स्विद्यंति ह्युच्चलंति च ॥ इमे जनपदा ग्रामाः पुरोद्यानाकराश्रमाः ॥ भ्रष्टश्रियो निरानंदाः किमघं दर्शयंति नः ॥२०॥ मन्य एतैर्महोत्पातैर्नूनं भगवतः पदैः ॥ अनन्यपुरुषश्रीभिर्हीना भूर्हतसौभगा ॥२१॥ इति चिंतयतस्तस्य दृष्टारिष्टेन चेतसा ॥ राज्ञः प्रत्यागमद्ब्रह्मन्यदुपुर्याः कपिध्वजः ॥ २२ ॥

भीम । मामभिलक्ष्य सारमेयः श्वाऽभिरौति प्लुतं भषति । अभीरुवन्निःशंकम् ॥ १२ ॥ शस्ता गवादयो मां सव्यं वामं कुर्वंति । अपरे गर्दभाद्याः प्रदक्षिणं कुर्वंति । वाहानश्वान् ॥ १३ ॥ अयं कपोतो मृत्युदूतो मृत्युसूचकः उलूको घूकः प्रत्युलूकस्तत्प्रतिपक्षो घूकः काको वा कुह्वानैः कुत्सितशब्दैर्विश्वं शून्यं कर्तुमिच्छतः ॥ १४ ॥ धूम्रा धूसरा दिशः परिधयोऽग्निमिव लोकमावृण्वंति । दिव्यानाह साधार्ध्याम् । निर्घातो निरभ्रवज्रपातः स्तनयित्नवोऽत्र गर्जितानि तैः सह ॥ १५ ॥ तमोविशेषेण सृजन् असृग्रक्तम् ॥ १६ ॥ ग्रहाणां मर्दं युद्धम् । भूता रुद्रानुचरास्तेषां गणैः संकुलैर्व्यामिश्रैः । प्राणिभिः सहितैः रोदसी द्यावापृथिव्यौ ज्वलिते प्रदीप्ते इव च पश्येति ॥ १७ ॥ पुनर्भौमानाह नद्य इति सार्धैस्त्रिभिः । प्राणिनां मनांसि च ॥ १८ ॥ दुह्यंतीति कर्मकर्तर्यार्षम् । न प्रस्नुवंतीत्यर्थः ॥ १९ ॥ दैवतानि प्रतिमाः । अघं दुःखम् ॥ २० ॥ एतैर्महोत्पातैः कृत्वा विद्यतेऽन्येषु पुरुषेषु श्रीर्वज्रांकुशादिशोभा येषां तैर्भगवतः पदैर्हीना भूरित्यहं मन्ये ॥ २१ ॥ तस्य राज्ञः इत्येवं दृष्टान्यारिष्टानि येन तेन चेतसा चिंत

प्रतियांति''इति सामवेदे षड्विंशब्राह्मणेऽद्भुतशांतिप्रकरणप्रोक्तमर्थमनुवदति । शांतिरपि तत्र प्रोक्ता ''इदं विष्णुर्विचक्रमे इति''स्थालीपाकं हुत्वा पंचाभिरेभिर्जुहोति विष्णवे स्वाहा । सर्वभूताधिपतये स्वाहा । चक्रपाणये स्वाहा। सर्वपापशमनाय स्वाहा इति व्याहृतिभिर्जुहोति'' इति ॥ १२ ॥ संबुद्धिः पूर्ववत्पुरुषव्याघ्रेति ॥१३॥ उलूकः कपोतः । उलूकाख्यः पक्षीति योज्यम् । ''कपोतस्तु चित्रकण्ठपारावतविहंगयोः''इति मेदिनी । तत्प्रतिपक्ष उलूकशत्रुः बक इति लेखप्रमादात् । घूक इति सम्यक् । बकोलूकविरोधस्याप्रसिद्धत्वात् ।तीर्थस्तु कपोतः शिलाकणाशनपक्षी अग्नौ पदं करोति । ''यत्कपोतः पदमग्नौ करोति''इति मंत्रात् । इदं स्वप्नदर्शनमिति ज्ञातव्यम् । अत्र पक्षे कपोतोग्न्यावुलूक इति पाठः ॥ १४ ॥ परिधय इवेति । मूले लुप्तोपमा ज्ञेया । तत्प्रयोजकं साधर्म्यञ्चावरकत्वेनेत्येतत्फलितम् । परिधयो ह्यत्र वेद्याः कुंडस्य च परितः क्रियन्ते । यद्वा परिधयः समिधः । ''परिधिर्नो यज्ञियद्रुशाखायामुपसूर्यके । वह्निकुंडाद्यावरणे समुद्रे परिखांतके'' इति रुद्रः ॥ १५ ॥ खरस्पर्शो निष्ठुरस्पर्शः । सर्वतो दिशं बीभत्सं भीषकमिव रक्तं वर्षन्ति ॥ १६ ॥१७॥ नद्यो गंगाद्याः । अत्र न ज्ञेयाः तासां दिव्यत्वात् । नदाः शोणादयः ॥ १८ ॥ इत्यर्थ इति । धातोरर्थांतरवृत्तित्वादकर्मकत्वमपीति भावः ॥ १९ ॥ जनपदा देशाः ॥ २० ॥ २१ ॥ यदुपुर्या द्वारकायाः ॥ २२ ॥

तं पादयोर्निपतितमयथापूर्वमातुरम् ॥ अधोवदनमब्बिंदून्मुंचंतं नयनाब्जयोः ॥ २३ ॥ विलोक्योद्विग्नहृदयो विच्छायमनुजं नृपः ॥ पृच्छति स्म सुहृन्मध्ये संस्मरन्नारदेरितम् ॥२४॥ युधिष्ठिर उवाच ॥ कच्चिदानर्तपुर्यां नः स्वजनाः सुखमासते ॥मधुभोजदशार्हार्हाः सात्वतांधकवृष्णयः ॥ २५ ॥ शूरो मातामहः कच्चित्स्वस्त्यास्ते वाऽथ मारिषः ॥ मातुलः सानुजः कच्चित्कुशल्यानकदुंदुभिः ॥ २६ ॥ सप्त स्वसारस्तत्पत्न्यो मातुलान्यः सहात्मजाः ॥ आसते सस्नुषाः क्षेमं देवकीप्रमुखाः स्वयम् ॥ २७ ॥ कच्चिद्राजाऽऽहुको जीवत्यसत्पुत्रोऽस्य चानुजः ॥ हृदीकः ससुतोऽक्रूरो जयंतगदसारणाः ॥ २८ ॥ आसते कुशलं कच्चिद्ये च शत्रुजिदादयः ॥ कच्चिदास्ते सुखं रामो भगवान्सात्वतां प्रभुः ॥ २९ ॥ प्रद्युम्नः सर्ववृष्णीनां सुखमास्ते महारथः ॥ गंभीररयोऽनिरुद्धो वर्धते भगवानुत ॥ ३० ॥ सुषेणश्चारुदेष्णश्च सांबो जांबवतीसुतः ॥ अन्ये च कार्ष्णिप्रवराः सपुत्रा ऋषभादयः ॥ ३१ ॥ तथैवानुचराः शौरेः श्रुतदेवोद्धवादयः ॥ सुनंदनंदशीर्षण्या ये चान्ये सात्वतर्षभाः ॥ ३२ ॥ अपि स्वस्त्यासते सर्वे रामकृष्णभुजाश्रयाः ॥ अपि स्मरंति कुशलमस्माकं बद्धसौहृदाः ॥ ३३ ॥ भगवानपि गोविंदो ब्रह्मण्यो भक्तवत्सलः ॥ कच्चित्पुरे सुधर्मायां सुखमास्ते सुहृद्वृतः ॥ ३४ ॥

यतः सतः ॥२२॥ अयथापूर्वं निपतितम् । तदेवाह आतुरमित्यादि । अपां बिंदूनश्रूणि नेत्राभ्यां विसृजंतमित्यर्थः ॥२३॥ उद्विग्नं हृदयं कंपितं यस्य सः विच्छायं विगतकांतिम् ॥ २४ ॥ स्वजना बांधवाः ॥ २५ ॥ किं वक्ष्यतीति शंकया व्यवहितक्रमेण पृच्छति । शूर इत्यादिना । मारिषो मान्यो मातामहः शूरो नाम यादवः कुंत्याः पिता । आनकदुंदुभिर्वसुदेवः ॥ ॥ २६ ॥ स्वसारः परस्परम् । वसुदेवक्षेमेण तासामपि क्षेमं पृष्टमेव तथापि पृथक् पृच्छति । स्वयमिति ॥ २७ ॥ आहुक उग्रसेनः। असन्पुत्रो यस्य । अत एव जीवनमात्रमेव पृष्टम् । अनुजश्च देवकः । हृदीकः । सुतः कृतवर्मा । जयंतादयः कृष्णभ्रातरः ॥ २८ ॥ २९ ॥ सर्ववृष्णीनां मध्ये महारथः । गंभीररयो युद्धे महावेगः वर्धते मोदत इत्यर्थः ॥ ३० ॥ कृष्णस्यापत्यानि कार्ष्णयस्तेषु प्रवराः ॥ ३१ ॥ सुनंदनंदौ शीर्षण्यौ मुख्यौ येषां ते ॥ ३२ ॥ ३३ ॥ भगवति सुखमास्त

अयथापूर्वं पूर्वं यथा तथा न भवतीत्यर्थः । तदेव अयथापूर्वत्वमेव । आतुरं संभ्रांतं रोगिकल्पं वा । इत्यर्थ इति पंचम्यर्थे सप्तमीयमिति भावः ॥ २३ ॥ नारदेनेरितं "तावद्यूयमवेक्षध्वं भवेद्यावदिहेश्वरः" इत्येवंरूपं वचनम् ॥ २४ ॥ मध्वादीनामर्हीतानां द्वंद्वो वृष्ण्यंतानां वा ॥ २५ ॥ "मारिषः शाकभिद्यार्ये" इति मेदिनी ॥ २६ ॥ २७ ॥ असन्कृष्णद्वेषी कंसः पुत्रो यस्य स तादृशपुत्रत्वादद्यापि लज्जितोसौ कदाचिद्देहं त्यक्तवानित्यभिप्रायेणोक्तमसत्पुत्र इति । अत एवासत्पुत्रत्वादेव ॥२८॥२९॥ गंभीररयोऽगाधज्ञानः ।"रय गतौ" धातुः ॥३०॥३१॥ शौरेः कृष्णस्य ॥३२॥३३॥ भगवति कुशलप्रश्नस्यानौचित्यं मत्वाह–पुर इति । ब्रह्मणा वेदेन गम्यत इति ब्रह्मण्यः ब्रह्मशब्दोदिताः ब्राह्मणाः प्रिया अस्येति वा ब्रह्मण्यः । भवाद्यर्थविहिततद्धितप्रत्ययानां पाक्षिकवृद्ध्यभावार्थणित्वं वैकल्पिकमेव । "ब्रह्मण्यो ब्रह्मसाधी स्याद्ब्रह्मदारुशनैश्चरे" इति मेदिनी ॥३४॥

मंगलाय च लोकानां क्षेमाय च भवाय च ॥ आस्ते यदुकुलांभोधावाद्योऽनंतसखः पुमान् ॥ ३५ ॥ यद्बाहुदंडगुप्तायां स्वपुर्यां यदवोऽर्चिताः ॥ क्रीडंति परमानंदं महापौरुषिका इव ॥ ३६ ॥ यत्पादशुश्रूषणमुख्यकर्मणा सत्यादयो द्व्यष्टसहस्रयोषितः ॥ निर्जित्य संख्ये त्रिदशांस्तदाशिषो हरंति वज्रायुधवल्लभोचिताः ॥ ३७ ॥ यद्बाहुदंडाभ्युदयाऽनुजीविनो यदुप्रवीरा ह्यऽकुतोभया मुहुः ॥ अधिक्रमंत्यंघ्रिभिराहृतां बलात्सभां सुधर्मां सुरसत्तमोचिताम् ॥ ३८ ॥ कच्चित्तेनामयं तात भ्रष्टतेजा विभासि मे ॥ अलब्धमानोऽवज्ञातः किं वा तात चिरोषितः ॥ ३९ ॥ कच्चिन्नाभिहतोऽभावैः शब्दादिभिरमंगलैः ॥ न दत्तमुक्तमर्थिभ्य आशया यत्प्रतिश्रुतम् ॥ ४० ॥ कच्चित्त्वं ब्राह्मणं बालं गां वृद्धं रोगिणं स्त्रियम् ॥ शरणोपसृतं सत्त्वं नात्याक्षीः शरणप्रदः ॥ ४१ ॥ कच्चित्त्वं नागमोऽगम्यां गम्यां वाऽसत्कृतां स्त्रियम् ॥ पराजितो वाऽथ भवान्नोत्तमैर्नाऽसमैः पथि ॥ ४२ ॥

इति प्रश्नस्यानौचित्यमाशंक्याह । पुर इत्यादि ॥ ३४ ॥ भगवतोऽत्रावस्थाने हि लोकानां मंगलं नान्यथेत्याशयेनाह चतुर्भिः । मंगलाय शुभाय क्षेमाय लब्धपालनाय भवायोद्भवाय । अनंतसखो बलभद्रसहायः ॥ ३५ ॥ अर्चिताः सर्वैः पूजिताः परमानंदं यथा भवति तथा । महापुरुषो विष्णुस्तदीया महापौरुषिका वैकुंठनाथानुचरा इव ॥ ३६ ॥ यस्य पादशुश्रूषणमेव मुख्यं तप आदिभ्यः श्रेष्ठं यत्कर्म तेन । सत्यभामादयः । संख्ये युद्धे श्रीकृष्णबलेन त्रिदशान्देवान्निर्जित्य तदाशिषो देवभोग्यान्पारिजातादीन् वज्रायुधस्य वल्लभा शची तस्या उचिताः ॥ ३७ ॥ यद्बाहुदंडप्रभावोपजीविनः सुधर्मामंघ्रिभिरधिक्रामंति स गोविंदः सुखमास्ते इति गतपंचमश्लोकेनान्वयः॥ ३८॥ इदानीं तस्यैव कुशलं पृच्छति । कच्चिदिति षड्भिः । अनामयमारोग्यम् । न लब्धो मानो येन बंधुभ्यः सकाशात् किं वा तैः प्रत्युतावज्ञातस्तिरस्कृतः । यतश्चिरोषितो बहु कालं तत्र स्थितः ॥ ३९ ॥ अभावैरिति छेदः । प्रेमशून्यैः । अमंगलैः परुषैः शब्दादिभिर्नाभिहतो न ताडितोऽसि किम् । यद्वा । अर्थिभ्यः किमपि दास्यामीति नोक्तं किम् । यद्वा । आशया सह यथा आशा भवति तथा दास्यामीति प्रतिश्रुतं यत्तन्न दत्तं किम् ॥४०॥ अन्यद्वा शरणागतं सत्त्वं प्राणिमात्रं न त्यक्तवानसि किम् । यतस्त्वं पूर्वं शरणप्रद आश्रयप्रदः ॥४१॥ अगम्यामिति छेदः । निंदितां स्त्रियं नागमः किं न गतवानासि । असत्कृतां मलिनवस्त्रादिना नागमः किम् । नोत्तमैरनुत्तमैः समैरित्यर्थः ।

मंगलाय प्रेमदानाय । क्षेमाय मुक्तये ॥ ३५ ॥ ३६ ॥ यस्य कृष्णस्य ॥ ३७ ॥ अत्र पूर्वत्राग्रे चांघ्रिशब्दस्थाने अंह्रिशब्द उपलभ्यते । प्राचीनपुस्तकेषु सोपि युक्त एव । उणादिषु चतुर्थपादे ''एवंत्र्यादयश्च'' इत्यनेनोभयोरपि निपातनात् । ''अंह्रिरंघ्रिश्च चरणे'' इति व्याख्यातत्वाच्च ॥ ३८ ॥ आदरातिशयेन:संबुद्धिद्वयमत्र ॥ ३९ ॥ आदिना इंगितक्रिययोर्ग्रहः । वाचेंगितेन क्रियया वा न ताडित इत्यर्थः ॥ ४० ॥ ''यस्याः पाणिर्न दत्तो वै पित्राद्यैश्च यथाविधि । सा चागम्या भवेन्नारी तां गत्वा नारकी भवेत्'' इति स्मृतेः ॥४१॥ असत्कृतामित्यनेन रजोवती लक्ष्यते । तस्या एव संस्काराविधानात् । इत्यर्थ इति । नाकादित्वादत्रानादेशाभाव

अपि स्वित्पर्यभुङ्क्थास्त्वं संभोज्यान्वृद्धबालकान् ॥ जुगुप्सितं कर्म किंचित्कृतवान्न यदक्षमम् ॥४३॥ कच्चित्प्रेष्ठतमेनाऽथ हृदयेनात्मबंधुना ॥ शून्योऽस्मि रहितो नित्यं मन्यसे तेऽन्यथा न रुक् ॥४४ ॥ इति श्रीभा०महा०प्र०युधिष्ठिरवितर्के द्वारकाया अर्जुनस्यागमनवर्णनं नाम चतुर्दशोऽध्यायः ॥१४॥ सूत उवाच ॥ एवं कृष्णसखः कृष्णो भ्रात्रा राज्ञाविकल्पितः ॥ नानाशंकाऽऽस्पदं रूपं कृष्णविश्लेषकर्शितः ॥१॥ शोकेनशुष्य द्वदनहृत्सरोजो हतप्रभः ॥ विभुं तमेवाऽनुध्यायन्नाऽशक्नोत्प्रतिभाषितुम् ॥२॥कृच्छ्रेण संस्तभ्य शुचः पाणिनाऽऽमृज्य नेत्रयोः॥परोक्षेण समुन्नद्धप्र णयौत्कंठचकातरः॥३॥सख्यं मैत्रीं सौहृदं च सारथ्यादिषु संस्मरन् ॥ नृपमग्रजमित्याह बाष्पगद्गदया गिरा॥४॥अर्जुन उवाच॥वंचितोहं महाराज हरिणा बंधुरूपिणा॥येन मेऽपहृतं तेजो देवविस्मापनं महत्॥५॥यस्य क्षणवियोगेन लोको ह्यप्रियदर्शनः॥उक्थेन रहितो ह्येष मृतकः प्रोच्यते यथा॥ ॥६॥यत्संश्रयाद्द्रुपदगेहमुपागतानांराज्ञां स्वयंवरमुखे स्मरदुर्मदानाम्॥तेजो हृतं खलु मयाऽभिहतश्च मत्स्यः सज्जीकृतेनधनुषाऽधिगता च कृष्णा॥७॥

असमैरधमैर्वा किं न पराजितोऽसीत्यर्थः ॥ ४२ ॥ संभोजनार्हान्वृद्धान्बालकांश्च किंस्वित्पर्यभुङ्क्थास्त्यक्त्वा भुक्तवानसि किम् । अक्षमं कर्तुमयोग्यं यत्तन्न कृतवानसि किम् ॥ ४३ ॥ नित्यं सदा प्रेष्ठतमेन हृदयेनांतरंगेण स्वबंधुना श्रीकृष्णेन रहितः शून्योऽस्मीति मन्यसेऽन्यथा ते रुक् न पीडा न घटेत ॥ ४४ ॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥ कलिप्रवेशमालक्ष्य धुरं न्यस्य परीक्षिति ॥ आरुरोह नृपः स्वर्गमिति पंचदशेऽब्रवीत् ॥ १ ॥ कृष्णोऽर्जुनः । आविकल्पित इति छेदः । नानाशंकास्पदं रूपमालक्ष्य विकल्पित इत्यर्थः । प्रतिभाषितुं नाशक्नोदित्युत्तरेणान्वयः । तत्र हेतवः । कृष्णविश्लेषेण कर्शितः कृशः कृतः ॥ १ ॥ शोकेन हेतुना वदनं च हृच्च ते एव सरोजे । शुष्यती वदनहृत्सरोजे यस्य सः । हता प्रभा तेजो यस्य सः ॥ ॥ २ ॥ शुचः शोकाश्रूणि यान्युद्गच्छंति तानि नेत्रयोरेव संस्तभ्य गलितानि च पाणिनामृज्य परोक्षेण दर्शनागोचरेण श्रीकृष्णेन हेतुना समुन्नद्धमधिकं यत्प्रेमौत्कंठचं तेन कातरो व्याकुलः सन्नृपमित्याहेत्युत्तरेणान्वयः ॥ ३ ॥ सख्यं हितैषिताम् । मैत्रीमुपकारिताम् । सौहृदं सुहृत्त्वं चात्संबंधितां च । बाष्पेण कंठावरोधाद्गद्गदया ॥ ४ ॥ येन मां वंचयता । देवान्विस्मापयति यत् ॥ ५ ॥ यस्य क्षणवियोगेनेत्यादि यच्छब्दानां तेनाहमद्य मुषित इति सप्तमश्लोकस्थेन तच्छब्देन संबंधः । प्रियस्याप्यप्रियत्वे दृष्टांतः । उक्थेन प्राणेन । एष पित्रादिः ॥ ६ ॥ श्रीकृष्णोपकाराननुस्म

इति भावः । इत्यर्थ इति । नीचजातितोपि पराभवो महतां तेजोहानिकर इति भावः ॥ ४२ ॥ अक्षमं कर्तुमशक्यं शास्त्रनिषिद्धमेकादशीभोजनस्वर्णस्तेयादि किंचिज्जुगुप्सितं कर्म कृतवानित्यर्थः ॥ ४३ ॥ किंचैता आशंका त्वयि न संभवति । संभवति चेदमिति नारदोक्तिं स्मरन्नाह–कच्चिदिति । इत्यर्थ इति । प्राणहीनदेहवद्दीपहीनमंदिरवदहं प्रकाशहीनो जात इत्यात्मानं मन्यस इति भावः । किञ्च लोकशास्त्रविरुद्धा कर्तुर्विज्ञस्य तव श्रीकृष्ण वियोगं विना विच्छायत्वं न घटत इत्याह । अन्यथा ते रुङ् मनोव्यथा नेत्यर्थः ॥४४॥ इति श्रीभागवतभावार्थदीपिकाप्रकाशे प्रथमस्कंधे चतुर्दशोऽध्यायः ॥ १४ ॥ धुरं राज्यभारम् । न्यस्य स्थापयित्वा ( १ ) भगवति भक्ति.विधानार्थं दुःखकथनव्याजेन तन्महिमा प्रतिपाद्यतेऽत्राध्याये । इत्यर्थ इति । एवंभूतस्त्वमेवंभूतो वेत्यनेककोटिविषयक्ति इति भावः । तत्राप्रतिभाषणे । आपदेन लक्ष्येति तदर्थत्वेन लभ्यतेऽव्ययानामनेकार्थत्वादिति ॥१॥२॥३॥४॥ महाराजेति । तवापि महाराजत्वं तत्कृतमेवेति भावः ॥५॥ "उक्थं कर्मफले प्राणे वेदभागे वचस्यपि" इति निरुक्तिः ॥६॥ द्रुपदगेहं पांचालपुरम् । राज्ञां जरासंधादीनाम् । अधिगता। वेदाध्ययनवदादरेण

यत्संनिधावहमु खांडवमग्नयेऽदामिंद्रं च साऽमरगणं तरसा विजित्य ॥ लब्धा सभा मयकृताद्भुतशिल्पमाया दिग्भ्योऽहरन् नृपतयो बलिमध्वरे ते ॥ ८ ॥ यत्तेजसा नृपशिरोंघ्रिमहन्मखार्थं आर्योनुजस्तव गजायुतसत्त्ववीर्यः ॥ तेनाहृताः प्रमथनाथमखाय भूपा यन्मोचितास्तदमयन्बलिमध्वरे ते ॥ ९ ॥ पत्न्यास्तवाधिमखक्लृप्तमहाभिषेकश्लाघिष्ठचारुकबरं कितवैः सभायाम् ॥ स्पृष्टं विकीर्य पदयोः पतिताश्रुमुख्या यैस्तत्स्त्रियोऽकृत हतेशविमुक्तकेशाः ॥ १० ॥ यो नो जुगोप वनमेत्य दुरंतकृच्छ्राद्दुर्वाससोऽरिविहितादयुताग्रभुग्यः ॥ शाकान्नशिष्टमुपयुज्य यतस्त्रिलोकीं तृप्तामंमस्त सलिले विनिमग्नसंघः ॥ ११ ॥

रति । यत्संश्रयादिति दशभिः । यस्य संश्रयाद्बलात्स्मरेण कामेन दुर्मदानामतिमत्तानां तेजः प्रभावो हृतं धनुर्ग्रहणेनैव पश्चात्तद्धनुः सज्जीकृतं च तेन च मत्स्यो यंत्रोपरि भ्रमन्विद्धस्ततस्तान्विजित्य द्रौपदी प्राप्ता च ॥ ७ ॥ उ इति विस्मये खांडवमिंद्रस्य वनमग्नयेऽदां दत्तवानस्मि । खांडवदाहे रक्षितेन मयेन कृता च सभा लब्धा । अद्भुतशिल्परूपा माया यस्यां सा। तेऽध्वरे यागे राजसूये ॥८॥ अनंतरश्लोको विगीतस्तथापि व्याख्यायते नृपशिरःस्वंघ्रिर्यस्य तं जरासंधं तवानुजो भीमो मखार्थमहन् हतवान् । तन्निर्जयं विना राजसूयमखानुपपत्तेः । गजायुतस्येव सत्त्वमुत्साहशक्तिर्वीर्यं बलं च यस्य सः।तं हत्वा प्रमथनाथो महाभैरवस्तस्य मखाय ये राजानस्तेनाहृतास्ते च यद्यस्मान्मोचितास्तत्तस्मात्तेऽध्वरे बलिमानीतवंतः ॥ ९ ॥ यैः कितवैर्दुःशासनादिभिस्तव पत्न्याः कबरं विकीर्योन्मुच्य स्पृष्टमाकृष्टं तेषां स्त्रियो हतेशा अत एव वैधव्याद्विमुक्तकेशा अकृत चकार । कथंभूतं कबरम् । अधिमखं राजसूयमधिकृत्य क्लृप्तो रचितो यो महाभिषेकस्तेन श्लाघ्यतमम् । चारु रम्यम् । यत्स्मरणात्तदानीमेवास्मत्कृपया प्राप्तस्य श्रीकृष्णस्य नमने पादयोः पतितान्यश्रूणि मुखाद्यस्याः पत्न्याः । पदशब्दसापेक्षस्यापि पतितशब्दस्याश्रुपदेन समासो नित्यसापेक्षितत्वात ॥ १० ॥ शिष्याणामयुतस्याग्रे तत्पंक्तौ भुंक्ते यस्तस्माद्दुर्वाससो हेतोररिणा दुर्योधनेन रचितं यद्दुरंतं कृच्छ्रं शापलक्षणं तस्मात्सकाशान्नोऽस्मान्वनमेत्य जगोप।किं कृत्वा।शाकमेवान्नं तस्मिन्नेव पात्रेऽवशिष्टमुपयुज्य जग्ध्वा । यत उपयोगात्सलिले विनिमग्नो मुनीनां संघस्त्रिलोकीं तृप्तामभंस्त । एवं हि भारते कथा । कदाचिद्दुर्वाससो दुर्योधनेनातिथ्यं कृतम् । तेन च परितुष्टेन वरं वृणीष्वेत्युक्ते दुर्वाससः शापात्पांडवा नश्येयुरिति मनसि निधाय दुर्योधनेनोक्तं युधिष्ठिरोऽस्मत्कुलमुख्योऽतस्तस्यापि भवतैवमेव शिष्यायुतसहितेनातिथिना भवितव्यं किं तु द्रौपदी यथा क्षुधा न सीदेत्तथा तस्यां भुक्तवत्यां तद्गृहं गंतव्यमिति । ततश्च तथैव दुर्वाससि प्राप्ते परमादरेण युधिष्ठिरेण माध्याह्निकं कृत्वा आगम्यतामिति विज्ञापितो मुनिसंघोऽघमर्षणाय जले

प्राप्तेत्यर्थः । ''कृष्णा स्याद्द्रौपदी कालिंदी सुभद्रा कणा स्त्रियाम् । नीली द्राक्षा कृष्णपत्नी'' इति निरुक्तिः ॥ ७ ॥ अद्भुतानि शिल्पानि जले स्थलप्रत्ययादीनि कौशलानि यस्यां सा माया यस्यां सा सभेति । यत्सभायामिति शेषः । नृपतयस्तेऽध्वरे बलिमहरन् ॥ ८ ॥ ९ ॥ पदयोः पतिता चासावश्रुमुखी चेति पतिताश्रुमुखी तस्या इति वा ॥ १० ॥ यः कृष्णः ॥ ११ ॥

यत्तेजसाऽथ भगवान्युधि शूलपाणिर्विस्मापितः सगिरिजोऽस्त्रमदान्निजं मे ॥ अन्येऽपि चाहममुनैव कलेवरेण प्राप्तो महेंद्रभवने महदासनार्धम् ॥
॥१२॥तत्रैव मे विहरतो भुजदंडयुग्मं गांडीवलक्षणमरातिवधाय देवाः॥सेंद्राः श्रिता यदनुभावितमाजमीढ तेनाहमद्य मुषितः पुरुषेण भूम्ना॥१३॥
यद्बांधवः कुरुबलाब्धिमनंतपारमेको रथेन ततरेऽहमतीर्यसत्त्वम्॥प्रत्याहृतं बहुधनं च मया परेषां तेजास्पदं मणिमयं च हृतं शिरोभ्यः॥१४॥यो
भीष्मकर्णगुरुशल्यचमूष्वऽदभ्रराजन्यवर्यरथमंडलमंडितासु ॥ अग्रेचरो मम विभो रथयूथपानामायुर्मनांसि च दृशा सह ओज आर्च्छत्॥१५॥
यद्दोःषु मा प्रणिहितं गुरुभीष्मकर्णद्रौणित्रिगर्तशलसैंधवबाह्लिकाद्यैः॥अस्त्राण्यमोघमहिमानि निरूपितानि नो पस्पृशुर्नृहरिदासमिवाऽऽसुराणि॥१६॥

निममज्ज । तत्र चिंतातुरया द्रौपद्या स्मृतमात्रः श्रीकृष्णोंकस्थां रुक्मिणीं हित्वा तत्क्षणमेव भक्तवत्सलतया चागतः । तया चावेदिते वृत्तांते भगवतोक्तं हे द्रौपद्यहं च बुभुक्षितोस्मि प्रथमं मां भोजयेति । तया चातिलज्जयोक्तं स्वामिन् मद्भोजनपर्यंतमक्षयमप्यन्नं सूर्यदत्तस्थाल्यां मया च सर्वान्संभोज्य भुक्तमतो नास्त्यन्नमिति । तथाप्यतिनिर्बंधेन स्थालीमानाय्य तत्कंठलग्नं किंचिच्छाकान्नं प्राश्योक्तमनेन विश्वात्मा भगवान्प्रीयताम् । अथ भोक्तुं मुनिसंघमाह्वयेति भीमं प्रहितवान् । स च तावतातितृप्तो वृथापाकभयेन पलायित इति ॥ ११ ॥ गिरिजासहितो विस्मापितः सन्निजं पाशुपतमस्त्रम् । अन्येपि लोकपाला निजान्यस्त्राण्यदुः । अन्यदप्याश्चर्यमाह । अमुनेति । महत इंद्रस्यासनार्धम् ॥ १२ ॥ तत्रैव स्वर्गे क्रीडतः । गांडीवं लक्षणं चिह्नं यस्य तत् । अरातयो निवातकवचा दैत्यास्तेषां वधार्थमाश्रितवंतः । येनानुभावितं प्रभावयुक्तं कृतम् । हे आजमीढ युधिष्ठिर । तेन मुषितो वंचितोस्मि । कथंभूतेन । भूम्ना निजमहिमावस्थानेन ॥ १३ ॥ यद्बांधव इत्यादिश्लोकत्रयस्यापि तेन मुषितोहमिति पूर्वेणैव संबंधः । श्रीकृष्णबांधव एक एवाहं कौरवसैन्याब्धिं नास्त्यंतो गांभीर्येण पारं च देशतो यस्य तं ततरे तीर्णवानुत्तरगोग्रहे । अतीर्याणि दुस्तराणि सत्त्वानि तिमिंगिलादीनि भीष्मादिरूपाणि यस्मिन् । परैर्नीतं गोधनं प्रत्याहृतम् । परेषां च शिरोभ्यः सकाशात्तेजास्पदं प्रभावस्यास्पदमुष्णीषरूपं मणिमयं मुकुटरत्नरूपं च बहुधनं तान्मोहनास्त्रेण मोहयित्वा हृतं यद्बांधवेन मया ॥१४॥ अदभ्रा अनल्पा ये राजन्यवर्यास्तेषां रथमंडलैर्मंडितासु भीष्मादीनां चमूषु सारथिरूपेण ममाग्रेचरः सन् हे विभो तेषां रथयूथपानामायुरादीनि यो दृशा दृष्ट्यैवाच्छिद्धृतवान् । मनांसीत्युत्साहादिशक्तिम् । सहो बलम् । ओजः अस्त्रादिकौशलम् ॥ १५ ॥ यस्य दोःषु भुजेषु मा मां प्रणिहितं स्थापितं तैरेव गुर्वादिभि

यस्य कृष्णस्य तेजसा युधि वराहनिमित्तयुद्धे इंद्रकीलगिरौ॥१२॥हे अजमीढवंशोद्भूतेति।अजमीढस्य हरिभक्तिनिष्ठत्वाच्छोकाकुलो हि हरिं तद्भक्तांश्च सोच्छ्वासं स्मरन्नेव किञ्चिद्वक्ति यथा तथाऽर्जुनोपि राजानं हरिभक्तसंबंधेनामंत्रयामासेति भावः ॥१३॥ उत्तरगोग्रहे विराटनगरे । उत्तरकर्तृकपरहृतगोग्रहनिमित्तं युद्धे । ततरे तेजास्पदमिति पदद्वयमार्षम् । अत्र चेयं कथानुसंधेया । विराटे सुशर्मादिभिर्हृतगोधनार्थं भीमादिभिः सह युद्धाय गते पश्चाद्दुर्योधनादिपारिहृतगोधनार्थं बृहन्नटीभूतमर्जुनं सारथिं विधाय युद्धार्थं विराटात्मज उत्तरनामा गतः । स च तान्दृष्ट्वातीवाकुलोऽर्जुनेन सारथिः कृतः स्वयं रथी भूत्वा ताञ्जित्वा गोधनमानयामासेति निर्णेयं महाभारतविराटपर्वतः ॥ १४ ॥ हे विभो इति । अधुना त्वमपि भाहीनो जात इत्यभिप्रायः । पृषोदरादित्वाद्भाशब्दस्य भ्वादेशो ज्ञेयोत्र ॥१५॥ पाठांतरेऽमोघमहितानीति पाठे । आसुराणि हिरण्यकशिपुप्रेरितान्यस्त्राणि ॥ १६ ॥

सौत्ये वृतः कुमतिनाऽऽत्मद ईश्वरो मे यत्पादपद्ममभवाय भजंति भव्याः ॥ मां श्रांतवाहमरयो रथिनो भुविष्ठं न प्राहरन्यदनुभावनिरस्त चित्ताः ॥ १७ ॥ नर्माण्युदाररुचिरस्मितशोभितानि हे पार्थ हेऽर्जुन सख कुरुनंदनेति ॥ संजल्पितानि नरदेव हृदिस्पृशानि स्मर्तुर्लुठंति हृदयं मम माधवस्य ॥ १८ ॥ शय्यासनाटनविकत्थनभोजनादिष्वैक्याद्वयस्य ऋतवानिति विप्रलब्धः ॥ सख्युः सखेव पितृवत्तनयस्य सर्वं सेहे महान्महितया कुमतेरघं मे ॥ १९ ॥ सोहं नृपेंद्र रहितः पुरुषोत्तमेन सख्या प्रियेण सुहृदा हृदयेन शून्यः ॥ अध्वन्युरुक्रमपरिग्रहमंग रक्षन्गोपैरसद्भिरबलेव विनिर्जितोऽस्मि ॥ २० ॥

निरूपितानि प्रयुक्तान्यस्त्राणि न स्पृशंति स्म । गुरुर्द्रोणः । त्रिगर्तस्त्रिगर्तदेशाधिपतिः सुशर्मा । शलः शल्यः । सैंधवः सिंधुदेशाधिपतिर्जयद्रथः । बाह्लिकः शंतनोर्भ्राता । अमोघो महिमा येषां तथाभूतान्यपि । पाठांतरेऽपि स एवार्थः । प्रतीकाराकरणेऽप्यस्पर्शे दृष्टांतः । नृहरिदासं प्रह्लादमिवेति ॥ १६ ॥ स्वापराधमनुस्मरन् संतप्यमान आह । सौत्ये सारथ्ये कुमतिना मे मया स वृतः । कुमतित्वमेवाह । आत्मद इत्यादिना । अभवाय मोक्षाय । भव्याः श्रेष्ठाः श्रांता वाहा अश्वा यस्य तं माम् । जयद्रथवधे हि जल पानं विनाश्वाः श्रांतास्ततो रथादवतीर्य बाणैर्भुवं भित्त्वा मया जलं संपादितं तदा यस्यानुभावेन निरस्तचित्ता अरयो मां न प्रहृतवंतः स सौत्ये वृतः इति कुमतित्वम् ॥ १७॥ हे नरदेव उदारं गंभीरं रुचिरं च यत्स्मितं तेन शोभितानि नर्माणि परिहासवाक्यानि तथा कार्यप्रस्तावेषु हे पार्थेत्यादीनि मधुराक्षराणि संजल्पितानि च हृदिस्पृशानि मनो ज्ञानि माधवस्य यान्येतानि तानीदानीं स्मर्तुर्मम हृदयं लुठंति लोठयंति । क्षोभयंति । णिजभाव आर्षः ॥ १८ ॥ विकत्थनं स्वगुणश्लाघनादि । शय्यादिष्वैक्यादव्यति रेकाद्धेतोः कदाचिद्व्यभिचारं दृष्ट्वा हे वयस्य ऋतवान् सत्ययुक्तस्त्वमिति वक्रोक्त्या विप्रलब्धस्तिरस्कृतोऽपि ॥ ऋभुमानिति पाठे ऋभवो देवाः सेवकाः संति यस्य सः । असौ महानपि मया वयस्य इति मत्वा विप्रलब्धस्तिरस्कृत इत्यर्थः । ऋतमानितिपाठे वत्त्वाभाव आर्षः । मेऽघमपराधमसहत । महितया महत्त्वेन ऐकपद्येऽतिमहत्त्वेनेत्यर्थः । सख्युरघं सखेव तनयस्याघं पितेव ॥ १९॥ त्वया शंकितं पराजयं चापि प्राप्तोऽहमित्याह । तेन सख्या रहितोऽतो हृदयेन शून्यः। अंग हे राजन् । उरुक्रमस्य परिग्रहं षोडश

आत्मद इति । "आत्मदा बलदा" इति श्रुतेः ॥ १७ ॥ हे नरदेवेति । भगवत्सांनिध्ये हि त्वं देवैरपि दीव्यस्यधुना केवलं नरदेव एव जात इति भावः । यद्वा पूर्वं त्वं नरनारायणाभ्यामुभाभ्यामावाभ्यां दीव्यन्नासाधुना केवलेन मया नरेणैव दीव्यसीति भावः ॥ १८ ॥ व्यभिचारं लीलया स्वोक्तिविलंघनादिरूपम् । इत्यर्थ इति । न हि सर्वेश्वरं प्रति वयस्यादिरूपा संबुद्धिरुचितेति भावः । आदिशब्देन विरुद्धभाषणादिग्रहः । ऐकपद्ये महामहि तयेत्येवमैकपद्ये । इत्यर्थ इति । महती चासौ महिता चेति तथा । सामानाधिकरण्ये महतष्टेराकारः पुंवद्भावश्च ॥ १९ ॥ हे नृपेन्द्रेति । तत्रापि नृपेंद्रत्वं तत्कृतमेवेति भावः । त्वया शंकितं पराजयं च प्राप्तोस्मीत्याह । तेन सख्या रहितः । अतो हृदयेन मनसा शून्यो मूर्च्छितप्राय इत्यर्थः । उरुक्रमस्य परिग्रहं षोडशस्त्रीसहस्रलक्षणम् । असद्भिर्नीचैः । वस्तुतस्तु न विद्यंते संतो येभ्यस्तैर्गां पृथ्वीं द्यां च पांतीति तैः गोपजातित्वाच्च

तद्वै धनुस्त इषवः स रथो हयास्ते सोहं रथी नृपतयो यत आनमंति ॥ सर्वं क्षणेन तदभूदसदीश रिक्तं भस्मन्हुतं कुहकराद्धमिवोतमूष्याम् ॥ ॥२१॥राजंस्त्वयाऽभिपृष्टानां सुहृदां नः सुहृत्पुरे ॥ विप्रशापविमूढानां निघ्नतां मुष्टिभिर्मिथः॥२२॥वारुणीं मदिरां पीत्वा मदोन्मथितचेतसाम् ॥ अजानतामिवान्योन्यं चतुःपंचाऽवशेषिताः ॥ २३ ॥ प्रायेणैतद्भगवत ईश्वरस्य विचेष्टितम् ॥ मिथो निघ्नंति भूतानि भावयंति च यन्मिथः ॥ ॥ २४ ॥ जलौकसां जले यद्वन्महांतोऽदंत्यणीयसः ॥ दुर्बलान्बलिनो राजन्महांतो बलिनो मिथः ॥ २५ ॥

सहस्रस्त्रीलक्षणम् । असद्भिर्नीचैः। अबला योषेव॥२०॥ श्रीकृष्णवियोग एवात्र हेतुर्नान्य इत्याह ।तदिति। यतो येभ्यो हेतुभ्यो नृपतय आनमंति । ईशेन रिक्तं शून्यमसत्कार्याक्षमं सन्मंत्रविधानैरपि भस्मनि हुतमिव । अतिप्रीतादपि कुहकान्मायाविनः सकाशाद्राद्धं लब्धं यथा असत् सम्यक्कर्षणादिनाप्यूषरभूमावुप्तं बीजमिव ॥ २१ ॥ सुहृत्पुरे त्वया पृष्टानां नः सुहृदां मध्ये चत्वारः पंच वावशेषिताः । तत्र हेतुर्विप्रशापेत्यादि । वारुणीमन्नमयीम् । अजानतामिवान्योन्यमेरकामुष्टिभिर्निघ्नताम् ॥२२॥२३॥ अवशेषिता इत्यनेनोक्तं हेतुकर्तारमाह त्रिभिः।प्रायेणेति।भावयंति पालयंति॥२४॥जलौकसां मत्स्यादीनां मध्ये महांतः स्थूला अणीयसः सूक्ष्मान्यथा अदंति भक्षयंति॥२५॥

गोपैः ताः स्वप्रेयसीव प्रकटप्रकाशो प्रवेशनार्थं तत्तद्रूपेण भगवतैव तासामाकर्षणात्। "न वयं साध्वि साम्राज्यम्" इत्यादौ कामयामह एतस्येत्यनेन "व्रजस्त्रियो यद्वांछंति पुलिंद्यस्तृणवीरुधः। गावश्चारयतो गोपाः पादस्पर्शं महात्मनः ।" इति । तासां वाक्येन व्रजस्त्रीवांछित एव भगवत्स्वरूपे तासां भगवदुपभुक्तदेहानां साक्षाल्लक्ष्मरूपाणां नीचस्पर्शे सद्य एवांतर्द्धानं स्यादित्यतः प्रकारांतरेण तासां व्रजस्त्रीत्वप्राप्तिरिति ज्ञेयम् । विष्णुपुराणब्रह्मपुराणयोरप्यत्रैवार्थे तात्पर्यमवगम्यते । यथा तत्रतत्रार्जुनं प्रति व्यासवचनम् । "एवं तस्य मुनेश्शापादष्टावक्रस्य केशवम् । भर्त्तारं प्राप्य ता याता दस्युहस्ता वरांगनाः" इति पुरा देव्योष्टावक्रमुनिं स्तुत्वा विष्णुर्वः पतिर्भविष्यतीति तस्माद्वरं प्राप्य तदंगवक्रिमदर्शनोत्थादुपहासात् "दस्युहस्ता भविष्यथ" इत्यभिशापं च प्राप्य पुनः प्रसादिताच्च तस्माच्छापांतं च प्राप्येता भर्त्तारं प्राप्य दस्युहस्तं गता इति मुनेः शापप्रसादयोरमोघत्वाद्दस्युहस्तगतत्वं भर्तुः प्राप्तिश्च तासां तंत्रेणैवाभूत्स्वभर्त्तुः कृष्णस्यैव दस्युरूपत्वात् । अतस्तत्रैव पुनर्वचनांतरञ्च यथा "तत्त्वया न हि कर्त्तव्यः शोकोल्पोपि हि पांडव।तेनाप्यखिलनाथेन सर्वं तदुपसंहृतम्" इति । अखिलः पूर्ण एव नाथः पतिः कृष्णस्तेन तत्सर्वप्रियावृन्दमुपनिकट एव सम्यक् हृतमर्ज्जुनसकशाद्गृहीतमित्येव व्याख्येयम् ॥ २० ॥ भस्मनि हुतमिति निष्फलत्वे कुहकराद्धमित्यवस्तुभूतत्वे । उप्तमिति । नश्यदवस्थत्वे च दृष्टांतः । कुहकोऽत्रैंद्रजालिकः । स यथा कपालिकां मुद्रां विधायान्येभ्यो ददाति सा चावस्तुभूतैवेति । यद्वा कुहकाय वंचकायासत्पात्राय दांभिकतपसे राद्धं दत्तं यथाऽसद्भवतीति "दंभे स्याद्दांभिके पापे छले विस्मापके स्मये :। कुहको दैत्यभेदे च" इति निरुक्तिः । क्षणेन श्रीकृष्णवियोगाव्यवहितक्षणेनेत्यर्थः ॥२१॥ सुहृत्पुरे द्वारकायाम् । हे राजन्निति । राज्ञामावसानिकधर्मस्मरणार्थमधुना भवतापि सर्वं त्यक्त्वा गंतव्यमिति भावः । तत्र चतुःपञ्चावशेषत्वे विमूढानां कृत्याकृत्यज्ञानरहितानाम् ॥ २२ ॥ २३ ॥ प्रायेण निश्चयेन । प्रायपदमत्रावधारणार्थकमेव । यद्वा प्रायेणेति लौकिकरीत्योक्तं न तु सिद्धांतरीत्येत्यत आह–मिथ इति । यद्यतो निमित्तभूताद्भावयंति ॥ २४ ॥ जलौकसां मध्ये बलिनस्तुल्यबलास्तु मिथः परस्परमेव ये यान् शक्नुवंतीत्यर्थः । भूभारान्भूभारभूतान् यदून्संजहार इत्यर्ज्जुनादीन्प्रति भगवता तल्लीलायास्तथैव प्रत्यायितत्वात् । तत्कारणं तत्रैवैकादशांते व्यक्ती भविष्यति । किञ्च तदपि भूभारभूतान्यदूनित्यर्ज्जुनोक्त्या न तु भुवोलंकारभूतान् यदून् । तन्नित्यपरिकरानित्यर्थस्तूपलभ्यत एव नारी खल्वलंकाराणां भारं भारन्न मन्यते।यथा तथैव भूर्नित्यपरिकराणां यदूनां ये तु देवास्तत्रैव यदुष्वंशावतारेण प्रविश्योद्भूतास्तेषामपि रजस्तमोरहितानां भारत्वेन वक्तुमनुचितानामपि स्वस्वपदप्रापणाय तन्मिषेणैवोपसंहारार्थम् । "अष्टादशाक्षौहिणिको मदंशैरास्ते बलं दुर्विषहं यदूनाम्"। इत्युक्तवता भगवता भारत्वारोपः कृतः॥२५॥

एवं बलिष्ठैर्यदुभिर्महाद्भिरितरान्विभुः ॥ यदून्यदुभिरन्योन्यं भूभारान्संजहार ह ॥ २६ ॥ देशकालार्थयुक्तानि हृत्तापोपशमानि च ॥ हरंति स्मरतश्चित्तं गोविंदाभिहितानि मे ॥ २७ ॥ एवं चिंतयतो जिष्णोः कृष्णपादसरोरुहम् ॥ सौहार्देनातिगाढेन शांताऽऽसीद्विमला मतिः ॥२८॥ वासुदेवांघ्र्यभिध्यानपरिबृंहितरंहसा ॥ भक्त्या निर्मथिताशेषकषायधिषणोऽर्जुनः ॥ २९ ॥ गीतं भगवता ज्ञानं यत्तत्संग्राममूर्धनि ॥ कालकर्मतमोरुद्धं पुनरभ्यगमत्प्रभुः ॥ ३० ॥ विशोको ब्रह्मसंपत्त्या संछिन्नद्वैतसंशयः ॥ लीनप्रकृतिनैर्गुण्यादलिंगत्वादसंभवः ॥ ३१ ॥

एवं बलिष्ठैर्महद्भिः पांडवैर्दुर्योधनजरासंधादीन्निहत्य यदुभिरितरान् शाल्वादीन्निहत्य यदून्यदुभिरन्योन्यं निहत्य भगवान् भुवो भारभूतान् संहृतवान् ॥ २६ ॥ अतः परं वक्तुं न शक्नोमीति सूचयन्नाह । देशकालोचितार्थयुक्तानि मनःपीडोपशमकराणि च गोविंदस्य वचनानि स्मरतो मे मम चित्तं हरंत्याकर्षंति ॥ २७ ॥ एवमिति सूतोक्तिः । अतिदृढेन स्नेहेन कृष्णपादसरोरुहं चिंतयतोऽर्जुनस्य मतिः शांता विशोका विमला विरक्ता चासीत् ॥ २८ ॥ मतिवैमल्यफलमाह । वासुदेवांघ्र्यनुध्यानेन परिबृंहितं रंहो वेगो यस्यास्तया भक्त्या निर्मथिता उन्मूलिता अशेषाः कषायाः कामादयो यस्याः सा धिषणा बुद्धिर्यस्य स ज्ञानं पुनरध्यगमदित्युत्तरेणान्वयः ॥ २९ ॥ कालेन कर्मभिस्तमसा भोगाभिनिवेशेन च रुद्धमावृत्तं सत ॥ ३० ॥ ज्ञानफलमाह । विशोक इति । एतदेव शोकहेत्वभावेनोपपादयति शोकस्य हि हेतुर्द्वैतभ्रमस्तस्य देहस्तस्य लिंगं तस्य गुणास्तेषामविद्या ।

एवं बलिष्ठैर्महद्भिः: पांडवैर्दुर्योधनजरासंधादीन्निहत्य यदुभिरितराञ्शाल्वादीन्निहत्य यदून्यदुभिरन्योन्यं निहत्य भुवो भारभूतान्संहृतवान् ॥ २६ ॥ देशकालार्थयुक्तानि तत्तद्देशतत्तत्कालतत्तद्वस्तूचितानि । अतस्त्वमपि मा पृच्छेति भावः ॥ २७ ॥ मतिस्तद्विरहसंतप्तापि शान्ता निरंतरतच्चिंतनजनितस्फूर्तिलब्धेन तेन निर्वापितदाहत्वाच्छीतलेत्यर्थः । अत एव विमलाऽस्थैर्यलक्षणमालिन्यमपि तस्या गतमित्यर्थः ॥ २८ ॥ ननु कामादयः कषाया अपि मलशब्देनोच्यंते । सत्यम् । अर्जुनस्य भगवन्नित्यपरिकरत्वेन साक्षान्नरावतारत्वेन च तदसंभव एव । महेंद्रांशोद्भवत्वेन कषायः संभवति चेत्तदपि नेत्याह—वासुदेवेति । जन्मारभ्यैवोत्पन्नया भक्त्या प्रथमत एव निर्मथिता उन्मूलिता अशेषाः कषायाः कामादयो यस्याः सा धिषणा यस्यः तथाभूत एवार्जुनः ॥ २९ ॥ किन्तु "प्रियस्य विच्छेददवे प्रियोक्तिस्मृत्यैव संधुक्षणमातुरस्ये" इति रीत्या तन्मुखचंद्रविनिर्गतं सर्वसंतापोपशमकं श्रीगीतामृतमेव पातुमारेभे इत्याहुः--गीतमीति ॥ ३० ॥ अत्र विश्वनाथः । तत्र च "मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोसि मे" इत्यत्र पद्ये एष्यसीति भविष्यन्निर्देशेनेदं द्योतितम् । हे कौन्तेय संप्रति त्वं मामेष्यस्येव यदा तु तव मद्वियोगो महान्भावी तदा मां प्राप्तुं यतिष्यमाणस्य तव तदुपायमहमधुनैव स्नेहेन ब्रवीमिति स्वप्राप्त्यर्थं यद्ध्यानमुक्तं संप्रति तेन मुहुरत्यंतेन ध्यानेनैव तत्पार्श्वगतमेवात्मानमभिमन्यमानस्यापि मम देह एवांतरायो यतोयं मध्येमध्ये बहिर्वृत्तिमनुभाव्य मां शोकार्णवे क्षिपति । तदस्माद्देहादात्मनः पार्थक्यमापादयितुं सर्वशस्त्रास्त्रविद्यावत्पूर्वाभ्यस्तं योगमेव रक्षणमनुशीलयामीति मनसि निश्चित्य चिन्मयशरीरोप्यात्मानं श्रीकृष्णनित्यप्रियसखत्वेन नारायणसखत्वेन वा नानुसंदधानः प्रेमवैवश्येन प्राकृतनरमेव जानंस्तद्भावापलापाय क्षणमात्रेणैव योगारूढो बभूवेत्याह-विशोक इति । ब्रह्मसंपत्त्या प्राप्तया विशोकोभूदिति । तदभिमत्यनुसारेणैव सूतोक्तिः । वस्तुतस्तु प्रपंचगतां संपत्तिं त्यक्त्वा ब्रह्मसंपत्त्याऽप्रकटप्रकाशगतया श्रीकृष्णप्रियसखत्वप्राप्त्या विशोको विगतशोकः संछिन्नो द्वैतसंशयो देहेन सह मम संबंधोस्ति नास्ति वेति संदेहो यस्य सः । वस्तुतस्तु द्वैते सख्युः श्रीकृष्णात्सकाशात्स्वस्य छिन्नत्वे सति संशयः पूर्वमावयोः परस्परसख्यादैक्यमासीत्संप्रति द्वैतं वृत्तं तदधुना स कृष्णः किं पुनरपि सख्यसुखमयाद्वैते एव मां नेष्यति । किं वा पार्थक्यलक्षणद्वैतदुःखाब्धौ निमज्जयिष्यतीति भावनामयः संदेहः संछिन्नो यस्य सः । न च तस्य प्राकृतलोकस्येव पुनः संसार आशंकनीय इत्याह—लीन इति । स्पष्टम् । वस्तुतस्तु

निशम्य भगवन्मार्गं संस्थां यदुकुलस्य च ॥ स्वःपथाय मतिं चक्रे निभृतात्मा युधिष्ठिरः ॥ ३२ ॥ पृथाप्यनुश्रुत्य धनंजयोदितं नाशं यदूनां भगवद्गतिं च ताम् ॥ एकांतभक्त्या भगवत्यऽधोक्षजे निवेशितात्मोपरराम संसृतेः ॥ ३३ ॥

तत्र ब्रह्मसंपत्त्या वेदांतश्रवणेन ब्रह्माहमिति ज्ञानेन लीना प्रकृतिरविद्या यस्मिंस्तत्नैर्गुण्यं भवति न तु सुषुप्तिप्रलययोरिवाविद्याशेषः । तस्मान्नैर्गुण्याद्गुणकार्यलिंगनाशः । अलिंगत्वाच्चासंभवः सम्यग्भोगाय भवति पुनःपुनरिति संभवः स्थूलदेहस्तद्रहितस्ततश्च तत्परिच्छेदाभावात्संछिन्नो द्वैतलक्षणः संशयो भ्रमो यस्य स विशोको जात इति ॥ ३१ ॥ भगवतो मार्गमालक्ष्य यदुकुलस्य संस्थां नाशं श्रुत्वा नारदोक्तं चानुस्मृत्य स्वःपथाय स्वर्गमार्गाय निभृतात्मा निश्चलचित्तः ॥ ३२ ॥ तां दुर्विज्ञेयाम् । वक्ष्यति ह्येकादशे । "सौदामन्या यथाकाशे यांत्या हित्वाभ्रमंडलम् । गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैः॥" ॥ इति । संसृतेरुपरराम जीवन्मुक्ता बभूव । देहं जहाविति वा ॥ ३३ ॥

लीनं सुश्लिष्टं दुर्लक्ष्यं यत्प्रकृतितः स्वभावादेव नैर्गुण्यं कृष्णसखत्वेन गुणातीतत्वं तस्मादेवालिंगत्वं लिंगदेहाभावस्तत एव न सम्यग्भवः संसारो यस्य सः । यद्वा महेंद्रांशभूतोऽर्जुनस्तु जीवन्मुक्तोभूदित्याह-विशोक इति । संछिन्नो द्वैतसंशयः प्रपंचानुसंधानगतशोकमोहादिर्यस्य सः । तत्र हेतुः । लीना ईश्वरे लीनी कृता या प्रकृतिस्तत एव यन्नैर्गुण्यं तस्मात् । अत एवालिंगत्वाल्लिंगदेहापगमादसंभवः अपुनर्जन्मेत्यर्थः । अत्र संदर्भः । ब्रह्मसंपत्त्या श्रीमन्नराकारब्रह्मसाक्षात्कारेण संछिन्न इयं मच्चेतसि स्फूर्तिरेव साक्षात्कारस्त्वन्य इति द्वैतसंशयो येन सः । तदा भगवत्प्राप्तौ नान्यत्वजन्मांतरप्राप्तिकालसंधिरप्यन्तरायोभवदित्याह-लीनेति । लीना पलायिता प्रकृतिर्गुणकारणं यस्मादेवंभूतं यन्नैर्गुण्यं तस्माद्धेतोः गुणकारणातीतत्वादित्यर्थः । तथैवालिंगत्वात्प्राकृतशरीररहितत्वाच्चासंभवो जन्मांतररहितः तस्मादनंतरं चक्षुष्याविर्भविष्यतीत्येवं स्फूर्तिविशेष इति भावः । अत एव कलिं प्रति श्रीपरीक्षिद्वचनं "यस्त्वं कृष्णे गते दूरं सह गांडीवधन्वनः"। इति। "एवं येऽध्यासनं राजकिरीटजुष्टं सद्यो जहुर्भगवत्पार्श्वकामाः" इति श्रीमुनिवृंदवाक्यं च । तस्मात्सर्वेषां पांडवानां तदीयानां च सैव गतिर्व्याख्येया ॥ ३१॥ मार्गं पदवीं चातुर्य्यपरिपाटीमिति यावत् । संस्थां वक्ष्यमाणसिद्धांतानुसारेणाप्रकटप्रकाशगतत्वेन सम्यक्स्थितिं स्वांतर्दशायां, तद्बहिर्दशायां तु नाशं च स्वः कृष्णधाम ."येऽध्यासनं राजकिरीटजुष्टं सद्यो जहुर्भगवत्पार्श्वकामाः" इत्युक्तत्वात् । तथा संपदः क्रतवो लोका इत्यादिभ्यश्च । युधिष्ठिर इत्युपलक्षणम् । पंचैव पांडवाः स्वःपथाय श्रीकृष्णधामपथं गंतुं मतिं चक्रुः । निभृतात्माऽन्यालक्षितचित्तव्यापारः । संदर्भस्तु संस्थां श्रीकृष्णस्य नित्यसामीप्येन सम्यक्स्थितिं वितर्क्येति वास्तवोऽर्थः । स्वःपदं श्रीकृष्णधामपरमेव । " ब्रह्मादयो लोकपालाः स्वर्वासं मेऽभिकांक्षिणः " इति भगवद्वाक्यात् ॥ ३२ ॥ पृथा हि हिमालयगमनात्पूर्वमेव स्वगृहागतान्नारदाद्भावियदुकुलसंस्थां भगवदंतर्द्धानादिकं च श्रुत्वा जविन्मुक्तिं प्राप्यैव धृतराष्ट्रेण साकं हिमालयं गतेति ध्येयमत्र । तथाहि—धं धैर्यं नाशयतीति धनमविवेकस्तं जयति विचारेणेति धनंजयो नारदः । यद्वा धं धैर्यं नयति प्रापयतीति । धनं विवेकस्तेन जयति सर्वत्रोत्कर्षं प्राप्नोतीति धनंजयः । धशब्दोपपदादंतर्भावितणिजर्थान्नशेर्नयतेश्च उ प्रत्ययः । "धं धैर्यं धनमुच्यते" इत्येकाक्षरीनाममालोक्तेः । धनशब्दोपपदाज्जयतेः खश् तत एव पूर्वपदस्य मुम् । धनंजयेनोदितं लोकदृष्ट्या नाशं वस्तुतस्त्वदर्शनमेव । ननु जीवन्मुक्ता चेत्तर्हि कथं हिमालयं गता । "तनुं त्यजतु वा काश्यां श्वपचस्य गृहेऽथवा । ज्ञानसंप्राप्तिसमये विमुक्तो विशदाशयः" इत्यादिस्मृतेस्तत्राह—देहं जहौ वेति । देहहेतुं लिंगदेहं न तु स्थूलम् । महाभारतविरोधात् । यथाश्रुतार्थस्वीकारे तु कल्पांतरमादायैव व्यवस्था ज्ञेया ॥ ३३ ॥

ययाऽहरद्भुवो भारं तां तनुं विजहावजः ॥ कंटकं कंटकेनेव द्वयं चापीशितुः समम् ॥ ३४ ॥
यथा मत्स्यादिरूपाणि धत्ते जह्याद्यथा नटः ॥ भूभारः क्षपितो येन जहौ तच्च कलेवरम् ॥ ३५ ॥

**तदेवमुक्तमपि यादवेभ्यो भगवतो वैलक्षण्यमबुद्ध्वा तत्साम्यं वदतो मंदमतीन्प्रति वैलक्षण्यं स्पष्टयति द्वाभ्याम् । यया यादवरूपया तन्वा भुवो भारं कंटकेन कंटकमिवाहरत् । यादवतनुर्भूभारतनुश्चेति द्वयमपीश्वरस्य संहार्यत्वेन सममेव ॥ ३४ ॥ श्रीकृष्णमूर्तेर्विशेषमाह । यथेति । तान्यपि यथा धत्ते जहाति च। तदाह। यथा नटो निजरूपेण स्थितो**

यादवादीनामंतिमदशाश्रवणेन विषीदतः शौनकादीनाश्वासयन्सिद्धांतरहस्यमाह—ययेति।यया यादवादितन्वा भुवः स्वपादभूताया भारं कंटकेन सूच्यग्रेण कंटकमिवाहरत् तामेवं तनूं विजहौ । देवदत्तो वसनं विजहावितिवत्स्वसंगाद्विच्युतीं चकारेत्यर्थः । न तु यया नित्यं क्रीडति तामपीति भावः । तेनांशावतरणसमये ये देवा नित्यभूतेषु यादवेषु प्रविष्टास्त एव तेभ्यो योगबलेन निष्कास्य प्रभासं गमितास्तद्देहत्यागं लोकान्माययैव दर्शयता भगवता मधुपानानंतरं देवरूपीकृताः स्वर्गं प्रापयामासिरे इत्येकादशांतव्याख्यानुसृत्या ज्ञेयम् । नित्यलीलापरिकरा यादवास्तु प्रापंचिकलोकाऽलक्षिताः श्रीकृष्णेन समं द्वारकायामेव यथापूर्वमेव खेलंतीति भागवतामृतोक्तसिद्धान्तादवगंतव्यम् । द्वयमिति । भूभारभूता असुरा यादवादिरूपा देवाश्चेति द्वयमीशितुः परमेश्वरस्य सममेव । किं तु दृष्टांते कंटकत्वेन साम्येपि कारणभूतस्य सूच्यग्रस्योपकारकत्वेनांतरंगत्वं कर्मभूतस्य कंटकस्यापकारकत्वेन बहिरंगत्वमित्यपि ज्ञापितम् । "सूच्यग्रे क्षुद्रशत्रौ च लोमहर्षे च कंटकः" इत्यमरः । संदर्भस्तु ययेति तनुरूपकलेवरशब्दैरत्र श्रीभगवतो भूभारजिहीर्षालक्षणो देवादिपिपालयिषालक्षणश्च भाव एवोच्यते । यथा तृतीये विंशतितमेऽध्याये तनुशब्दैर्ब्रह्मणो भाव एवोक्तः । यदि तत्रैव तथा व्याख्येयं तदा सुतरामेव श्रीभगवतीति ततश्च तस्य भावस्य भगवति तदाभासरूपत्वात् । कंटकदृष्टान्तस्तु सुसंगत एव । तथा द्वयमेवेशितुः साम्यमपि तत्तु तृतीयसंदर्भे विवृतमस्ति ॥ ३४ ॥ कृष्णस्त्वैन्द्रजालिक नट इव स्वदेहत्यागं मिथ्याभूतमेव प्रत्याययामासेत्याह—यथेति । भगवान्धत्ते जह्यात् । ननु धृत्वा जह्यादिति तनुत्यागकालेपि तत्तदनुधारणमस्त्येव । ननु कथमेतद्बोद्धव्यमित्यत आह—यथा नट ऐन्द्रजालिकः छेददाहमूर्च्छादिभिः स्वदेहं त्यजति तस्य त्यागं सर्वान्दर्शयति प्रत्याययति च अथ च स्वदेहं धत्त एव न तु म्रियते तथैव मत्स्यादिरूपाणि मत्स्यादिशरीराणि स्वीयानि भगवान्धत्ते जह्यात् । दधान एव जहाति तेन नटस्य शरीरधारणं सत्यमेव तत्त्यागस्तु मिथ्यैव यथा तथैव भगवतोऽपि मत्स्यादिस्वीयशरीरधारणं सत्यमेव तत्त्यागो मिथ्यैवेत्यर्थः । यथा च मत्स्यादिशरीराणि जहाति तथैव येन भूभारः क्षपितस्तच्च कलेवरं जहाविति श्रीकृष्णकलेवरत्यागो मिथ्यैवेति नराकृतिपरब्रह्मत्वादिकमपि नटरूपनरधर्ममेव भगवान्करोति न तु तत्त्वेन । स्वदेहस्याभौतिकत्वेन नाशासंभवात् । तदुक्तं महाभारते "न भूतसंघसंस्थानो देहोस्य परमात्मनः" इति । बृहद्वैष्णवेपि "यो वेत्ति भौतिकं देहं कृष्णस्य परमात्मनः । स सर्वस्माद्बहिः कार्यः श्रौतस्मार्त्तविधानतः ॥ मुखं तस्यावलोक्यापि सचैलः स्नानमाचरेत्" । इति । वैशंपायनसहस्रनामनि च— "अमृतांशोऽमृतवपुः" इति । अमृतं मरणवार्जितं वपुर्यस्येति तत्र श्रीशंकराचार्यव्याख्या च प्रसिद्धा । अत्र श्लेषेण जह्यादिति जहातेस्त्यागार्थत्वात्त्यागस्य च दानार्थत्वात् । वैकुंठादिधाम तेभ्यो भक्तेभ्यः स्वशरीरप्रविष्टचरं नारायणादिरूपं तेषां पालनार्थं ददावित्येकादशांते व्याख्यास्यते. इति विश्वनाथः । संदर्भस्तु मत्स्यादिरूपाणि मत्स्याद्यवतारेषु तत्तद्भावान् । अथ नटदृष्टान्तेपि नटः श्राव्यरूपकाभिनेता व्याख्यातं तैः प्रथमस्यैकादशे 'नटा नवरसाभिनयचतुरा' इति । ततो यथा श्राव्यरूपकाभिनेता नटः नटस्वरूपेण स्ववेशेन च स्थित एव पूर्ववृत्तमभिनयेन गायन् नायकनायिकादिभावं धत्ते जहाति च तथेति । अथ वा "नाहं प्रकाशः सर्वस्य योगमायासमावृतः" इति श्रीगीतावाक्येन "योगिभिर्दृश्यते भक्त्या नाभक्त्या दृश्यते क्वचित् । द्रष्टुं न शक्यो रोषाच्च मत्सराच्च जनार्दनः" इति पाद्मोत्तरखंडनिर्णयेन "मल्लानामशनिः" इति श्रीभागवतदर्शनेन "आत्मविनाशाय भगवदस्त्रचक्रांशुमालोज्ज्वलमक्षयतेजःस्वरूपं परमं ब्रह्मभूतमपगतद्वेषादिदोषो भगवंतमद्राक्षीत्" इति शिशुपालमुद्दिश्य श्रीविष्णुपुराणगद्येन चासुरेषु यद्रूपं स्फुरितं तत्तस्य स्वरूपं न भवति किं तु मायाकल्पितमेव । स्वरूपे दृष्टे द्वेषश्चापयातीति । ततश्चासुरेषु स्फुरंत्या यया तन्वा भुवो भाररूपमसुरवृंदमहरत्तां तनुं विजहौ । पुनस्तत्प्रत्यायनं न चकारेत्यर्थः । भक्तिदृश्या तनुस्तु तस्य नित्यसि

यदा मुकुंदो भगवानिमां महीं जहौ स्वतन्वा श्रवणीयसत्कथः ॥ तदाहरेवाऽप्रतिबुद्धचेतसामधर्महेतुः कलिरन्ववर्तत ॥ ३६ ॥ युधिष्ठिरस्तत्परिसर्पणं बुधः पुरे च राष्ट्रे च गृहे तदात्मनि ॥ विभाव्य लोभानृतजिह्महिंसनाद्यधर्मचक्रं गमनाय पर्यधात् ॥३७॥ स्वराट् पौत्रं विनयिनमात्मनः सुसमं गुणैः ॥ तोयनीव्याः पतिं भूमेरभ्यषिंचद्गजाह्वये ॥ ३८ ॥ मथुरायां तथा वज्रं शूरसेनपतिं ततः ॥ प्राजापत्यां निरूप्येष्टिमग्नीनपिबदीश्वरः ॥ ३९ ॥ विसृज्य तत्र तत्सर्वं दुकूलवलयादिकम् ॥ निर्ममो निरहंकारः संछिन्नाशेषबंधनः ॥ ४० ॥

रूपांतराणि धत्तेंऽतर्धत्ते च तथा तदपि कलेवरं जहौ । अंतरधादित्यर्थः ॥ ३५ ॥ युधिष्ठिरस्य स्वर्गारोहप्रसंगाय कलिप्रवेशमाह । यदेति । स्वतन्वा जहौ सतनोरेव वैकुंठारोहात् । श्रवणार्हा सती कथा यस्य तदा यदहस्तस्मिन्नेव । अहारिति लुप्तसप्तम्यंतं पदम् । अप्रतिबुद्धचेतसामविवेकिनामिति विवेकिनां तु न प्रभुरित्युक्तम् । अन्ववर्ततेति पूर्वमेवांशेन प्रविष्टस्य तेन रूपेणानुवृत्तिरुक्ता ॥ ३६ ॥ बुधो युधिष्ठिरस्तस्य कलेः परिसर्पणं प्रसरणं विलोक्य । कथंभूतम् । लोभाद्यधर्मचक्रं यस्मिन् । जिह्मं कौटिल्यम् । पर्यधात्तदुचितं परिधानमकरोत् ॥ ३७ ॥ आत्मनः स्वस्य गुणैः सुसममतिसदृशं तोयं सर्वतः स्थितं समुद्रोदकमेव नीवी परिधानविशेषो यस्यास्तस्या भूमेः पतित्वेनाभिषिक्तवान् ॥ ३८ ॥ वज्रमनिरुद्धस्य पुत्रम् । निरूप्य कृत्वेत्यर्थः । अपिबदात्मन्यारोपयामास । ईश्वरः समर्थः ॥ ३९ ॥ संछिन्नान्यशेषाणि बंधनान्युपाधयो येन ॥४०॥

द्वैवेत्याह—अज इति । "देवक्यां देवरूपिण्याम्" इत्यादेः । "कृष्णश्च तत्र च्छन्दोभिः" इत्यत्र गोलोकाधिष्ठातृत्वनिर्देशाच्च । ततश्च यथा नट ऐंद्रजालिकः कश्चित्स्वभक्षकानां बकादीनां निग्रहाय मत्स्याद्याकारान्धत्ते स्वस्मिन्प्रत्याययति इति तन्निग्रहे सति यथा च तानि जहाति तथा सोयमजोऽपि येन मायिकेन लक्ष्यतां प्रापितेन रूपेण भूभाररूपोऽसुरवर्गः क्षपितस्तद्वर्गं क्षपितवानित्यर्थः । तच्च कलेवरमजो जहौ अंतर्द्धापितवानित्यर्थः । किं तु गीतापद्ये "योगमायासमावृतः" इति सर्पकंचुकवन्मायारचितवपुरात्मा समावृत इत्यर्थः ॥ ३५ ॥ तनुत्यागस्यावास्तवत्वं स्पष्टयन्नाह—यदा स्वतन्वा जहौ स्वतनोरेव वैकुंठारोहादिति स्वामिचरणाः । त्यागोऽत्र स्वतनुकरणक एव न तु स्वतन्वा सह महीं जहाविति कुव्याख्यावकाशः । "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति न्यायात् । " प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम् । आदायांतरधाद्यस्तु स्वबिम्बं लोकलोचनम् " इत्यत्रापि लोकलोचनरूपं स्वबिंबं निजमूर्त्तिं प्रदर्श्य पुनरादायैव चान्तरधात् । न तु त्यक्त्वेति संदर्भश्च तदा यदहस्तदभिव्याप्येत्यर्थः । अप्रबुद्धचेतसामिति । चौरोहि निद्रितस्यैव धनं हरति प्रतिबुद्धाद्बिभेति चेत्यर्थः ॥ ३६ ॥ युधिष्ठिर इत्यत्र तस्य त्यागे कलिपरिसर्पणं तूद्दीपनमात्रम् । वस्तुतस्तु भगवत्पार्श्वकामत्वमेव कारणं ज्ञेयम् । पर्यधान्निश्चितवान् । " प्रणिधानं तु निक्षेपः परिधानं तु निश्चयः" इत्यभिधानादिति तदर्थः । आदिना परुषादिग्रहः समासे ॥ ३७ ॥ विनयो नम्रता तद्वान्विनयी तं, सुसमं सोः पूजायां षत्वनिषेधः "सुः पूजायाम्" इति कर्मप्रवचनीयविधेः । स्वराट् चक्रवर्त्ती युधिष्ठिरः । "स्वराट् सम्राट् चक्रवर्ती सार्वभौमश्च राजराट् । सामंतेशोऽखिलेशश्च राजसूयकरो वशी" इति निरुक्तिः ॥३८॥ इत्यर्थ इति । धातूनामनेकार्थत्वादिति भावः । "प्राजापत्या भवेदिष्टिस्सर्वस्वं यत्र दक्षिणा । परिव्रज्याप्रक्रमे सा विहिता पूर्वसूरिभिः" इत्युक्तेः । यद्यपि "ब्राह्मणः परिव्रजेत्" इति श्रुतेर्ब्राह्मणस्यैव परिव्रज्या विहिता युधिष्ठिरस्य क्षत्रियत्वात्स कथं तां चकारेति चेत् । तत्र देवलस्मृत्यवलोकनतो व्यवस्था लभ्यते । तथाहि "मुखजानामयं धर्मो यद्विष्णोर्लिंगधारणम् । बाहुजातोरुजातानां नायं धर्मो विधीयते" इत्यत्र हि विष्णुलिंगं दंडकमंडल्वादि तद्धारणमेव क्षत्रियवैश्ययोर्निषिद्धं न तु त्यागरूपपारिव्रज्यानिषेध इति । एतच्चाद्यपद्यव्याख्याशत्यां बहुधा प्रपञ्चितमत उपरम्यते । समर्थो राज्यादित्यागे शक्तः ॥ ३९ ॥ तत्र गृहे । आदिना किरीटादिग्रहः ॥४०॥ तदेव संछिन्नाशेषबंधनत्वमेव । युधिष्ठिरोऽप्यर्जुनवद्बहिरनुसंधाननिवृत्त्यर्थं यतते स्मेत्याह—

वाचं जुहाव मनसि तत्प्राण इतरे च तम् ॥ मृत्यावपानं सोत्सर्गं तं पंचत्वे ह्यजोहवीत् ॥४१॥ त्रित्वे हुत्वाऽथ पंचत्वं तच्चैकत्वेऽजुहोन्मुनिः ॥ सर्वं
मात्मन्यजुहवीद्ब्रह्मण्यात्मानमव्यये ॥ ४२ ॥ चीरवासा निराहारो बद्धवाङ् मुक्तमूर्धजः ॥ दर्शयन्नात्मनो रूपं जडोन्मत्तपिशाचवत् ॥ ४३ ॥
अनवेक्षमाणो निरगादशृण्वन्बधिरो यथा ॥ उदीचीं प्रविवेशाऽऽशां गतपूर्वां महात्मभिः ॥ हृदि ब्रह्मपरं ध्यायन्नाऽऽवर्तेत यतो गतः ॥ ४४॥ सर्वे
तमनु निर्जग्मुर्भ्रातरः कृतनिश्चयाः ॥ कलिनाऽधर्ममित्रेण दृष्ट्वा स्पृष्टाः प्रजा भुवि ॥ ४५ ॥ ते साधुकृतसर्वार्था ज्ञात्वाऽऽत्यंतिकमात्मनः ॥
मनसा धारयामासुर्वैकुंठचरणांबुजम् ॥ ४६ ॥

तदेव दर्शयति द्वाभ्याम् । वाचमित्युपलक्षणम् । सर्वेंद्रियाणि मनसि प्रविलापितवानित्यर्थः । तच्च मनः प्राणे प्राणाधीनवृत्तित्वात् । तं च प्राणमितरेऽपाने तेनाकर्षणात् । अपानव्यापार उत्सर्गस्तत्सहितमपानं मृत्यौ तदधिष्ठातृदेवतायाम् । अनेनैव वागादिष्वपि तत्तत्कर्मसाहित्यं ज्ञेयम् । तं मृत्युं पंचत्वे पंचभूतानामैक्य देहे देहस्यैव मृत्युर्नात्मन इति भावितवानित्यर्थः । अजोहवीदिति यङ्लुगंताल्लुङि रूपम् ॥ ४१ ॥ त्रित्वे गुणत्रये पंचत्वं । देहम् । तच्च त्रित्वमेकत्वेऽविद्यायाम् । सर्वं सर्वारोपहेतुमविद्यामात्मनि जीवे । अजोहवीदिति वक्तव्येऽजुहवीदित्यार्षम् । एवं शोधितमात्मानं ब्रह्मण्यव्यये कूटस्थे न तस्यान्यत्र लय इत्यर्थः ॥ ४२ ॥ तदेवमात्मप्रतिपत्तिमुक्त्वा बाह्यस्थितिमाह । चीरवासा इति द्वाभ्याम् । बद्धवाङ् मौनी ॥ ४३ ॥ अनवेक्षमाणोऽनुजादिप्रतीक्षामकुर्वन् । आशां दिशम् । गतपूर्वां पूर्वं प्रविष्टाम् । महात्मभिर्विवेकवद्भिः । यतो यां दिशम् ॥ ४४ ॥ अधर्मो मित्रं यस्य तेन ॥ ४५ ॥ साधुकृताः सर्वेऽर्था धर्मादयो यैः अत एव वैकुंठस्य चरणांबुजमेवात्यंतिकं शरणं ज्ञात्वा ॥ ४६ ॥

वाचमिति । इत्यर्थ इति।मनोधीनवृत्तित्वात् । "यन्मनसा मनुते तद्वाचा वदति" इति श्रुतेरिति भावः । प्राण एव समर्पयामास जुहोतेर्दानार्थत्वात् । हे मनस्तुभ्यमेवेंद्रियाणि दत्तानि । तवैवैतानि संतु । सांप्रतं न ममैतैः प्रयोजनमिति भावयामास । तेषु स्वत्वाभावेन वस्तुतः संप्रदानाभावान्न चतुर्थी । एवमग्रेपि सर्वत्र ज्ञेयम् । नन्वहं कस्य भवामीत्यत आह–तन्मनः प्राणे । । इत्यर्थ इति । हे मृत्यो त्वं देहस्यैव भवेति भावितवान् आत्मनो नित्यत्वान्मरणं नास्तीति भावः ॥४०॥४१॥ इत्यर्थ इति । ब्रह्मणः परमावधिभूतत्वात् "पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः" इति श्रुतेरयंभावः ततश्च पृथिव्या भूतपंचकं क्व स्थास्यतीत्यत आह–त्रित्व इति । अविद्यायां व्यष्टिरूपे मायांशे । हे जीव तवैतन्मायांशकृतमुपाधित्रिकमेतस्मात्त्वं पृथग्भूत एव विराजस्व । नैतस्याधीनो भवेति भावः । एवं परीक्षिति स्वराज्यभारं वज्रे च मथुरां समर्प्य तत्संबंधमात्मनो दूरीकृत्य बहिर्निश्चिन्त इवेन्द्रियादीन्यपि तत्तद्वशायितारि योग्ये समर्प्यान्तर्निश्चिन्तो बभूव । तथा हि । ब्रह्मणः श्रीकृष्णस्यैव जीवस्यैव व्यष्टिर्माया तस्या एव गुणत्रयं गुणत्रयस्यैव पंचभूतात्मको देहो देहस्यैव मृत्युर्मृत्योरेवापानोऽपानस्यैव प्राणः प्राणस्यैव मनो मनस एवेंद्रियाणि इंद्रियाणामेव विषया राज्यादिभोगास्तेषां च भोक्ता संप्रति परीक्षिदेव न त्वहमिति विचारयामास । किं तु भगवन्नित्यपरिकरत्वान्नित्यविग्रहाणामपि तदादीनामात्मानं प्राकृतशरीरं मत्वैवायं विचारोप्यकिञ्चित्कर एवेति ज्ञेयम् ॥ ४२ ॥ तदेवं सर्वथा निश्चिन्तस्य तस्य बाह्यस्थितिमाह–चीरेति । "चीरं स्याद्गोस्तने वस्त्रभेदे चीवरवल्कयोः" इति कोशाच्चीवरवासा वल्कलवस्त्रः निराहारो मनुष्यान्नवर्जितः ॥४३॥ गता पूर्वं या सा गतपूर्वा ताम् । प्रथमार्थे बहुव्रीहिः । यद्वा पूर्वं गता गतपूर्वा । राजदन्तादित्वात्परनिपातः । महात्मभिर्विवेकवद्भिः । विश्वनाथस्तु अधुना न्यस्तसमस्तभारोहमव्यग्रः क्वापि विविक्ते देशे श्रीकृष्णप्राप्त्यर्थं "मन्मना भव मद्भक्तः" इति भगवदुपदिष्टमेवोपायं करिष्यामीति निश्चिततत्त्वस्य चेष्टामाह–उदीचीमिति । परं ब्रह्म श्रीकृष्णं ध्यायन्ध्यातुमित्याह । तीर्थस्तु यावच्छरीरपातं भुवं प्रदक्षिणीकृत्य

तद्ध्यानोद्रिक्तया भक्त्या विशुद्धधिषणाः परे ॥ तस्मिन्नारायणपदे एकांतमतयो गतिम् ॥ ४७ ॥ अवापुर्दुरवापां ते असद्भिर्विषयात्मभिः ॥ विधूतकल्मषाः स्थानं विरजेनात्मनैव हि ॥४८॥ विदुरोपि परित्यज्य प्रभासे देहमात्मवान् ॥ कृष्णावेशेन तच्चित्तः पितृभिः स्वक्षयं ययौ ॥४९॥ द्रौपदी च तदाऽऽज्ञाय पतीनामनपेक्षिताम्॥वासुदेवे भगवति ह्येकांतमतिराप तम्॥५०॥यः श्रद्धयैतद्भगवत्प्रियाणां पांडोः सुतानामिति संप्रयाणम्॥ शृणोत्यऽलं स्वस्त्ययनं पवित्रं लब्ध्वा हरौ भक्तिमुपैति सिद्धिम् ॥५१॥ इति श्री भा०म०प्रथ०पांडवस्वर्गारोहणं नाम पंचदशोऽध्यायः॥१५॥

सूत उवाच ॥ ततः परीक्षिद्द्विजवर्यशिक्षया महीं महाभागवतः शशास ह ॥ यथा हि सूत्यामभिजातकोविदाः समादिशन्विप्र महद्गुणस्तथा ॥१॥

कथंभूते पदे । विधूतकल्मषाणामास्थानं निवासस्थानं यत्तस्मिन् । विरजेनात्मनैव गतिं प्रापुर्न तु षोडशकलेन लिङ्गेन । गतेर्वा विशेषणम् । विरजेनात्मनैवावस्थानरूपां गतिं ते विधूतकल्मषाः प्रापुरिति ॥ ४७ ॥ ४८ ॥ विदुरोऽपि तीर्थान्यटन्प्रभासे श्रीकृष्णावेशेन कृष्णे चित्तमावेश्य देहं परित्यज्य तच्चित्त एव संस्तदानीं नेतुमागतैः पितृभिः सह स्वक्षयं स्वाधिकारस्थानं ययौ ॥ ४९ ॥ आत्मानं प्रत्यनपेक्षितां तदा ज्ञात्वा तमाप ॥ ५० ॥ इति एवं यत्संप्रयाणम् । अलमतिशयेन स्वस्त्ययनं मंगलास्पदम् । अलं पवित्रं च ॥ ५१ ॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे टीकायां पंचदशोऽध्यायः ॥ १५ ॥ ततश्च षोडशे भूमिधर्मयोः कलिखिन्नयोः ॥ संवादे वर्ण्यते प्राप्तिः पालकस्य परीक्षितः ॥ १ ॥ द्विजवर्याणां शिक्षया । सूत्यां जन्मनि । अभिजातकोविदा जातकर्मविदः । हे विप्र महतां गुणा यस्मिन्सः ॥ १ ॥

निरंतराटनमेव संकल्प्य हृदि परं ब्रह्म ध्यायन्महात्मभिः क्षत्रियैर्गतपूर्वामुत्तरां दिशं प्रविवेश । वीरगतिं गमिष्यन् यतो यां वीरगतिङ्गतो वीरसंन्यासं प्राप्तः पुनर्नायाति तामित्याह ॥ ४४ ॥ ४५ ॥ ४६ ॥ तस्मिन्निति । तच्छब्दानुरोधेन यच्छब्दाध्याहारः । अत्र पक्षे विधूतकल्मषाः स्थानमितिच्छेदः । "खर्परे शारि" इति पाक्षिको विसर्गलेपः । स्थानमित्यजहल्लिंगत्वाक्लीबत्वम् । तदित्यादिपद्यद्वयस्यैकोन्वयः ॥ ४७ ॥ संदर्भस्तु विधूतकल्मषं यत् आस्थानं नित्यश्रीकृष्णप्रकाशास्पदं तदीया सभा । आत्मना स्वशरीरेणैव । तत्र हेतुः । विरजेनाप्राकृतेन । हिशब्दोऽसंभावनानिवृत्त्यर्थः । यद्वा साधुना पुण्येन कर्मणा कृताः छिन्नाः सर्वेऽर्थाश्शब्दादिविषया यैस्ते । 'कृती छेदने' धातुः ॥ ४८ ॥ विदुरस्य भूतपूर्वां धृतराष्ट्रादिदर्शनार्थवनगतयुधिष्ठिरदेहं प्रवेक्ष्यमाणस्य गतिमाह—प्रकृष्टा चासौ भा दीप्तिर्बुद्धिर्वेति प्रभा तयाऽऽस्ते सदा तिष्ठति तामसत्याददाति वेति प्रभासो युधिष्ठिरस्तस्मिन्नात्मवान् प्रवेशितनिजात्मस्वरूपः सन् कृष्णावेशेन कृष्णानुरागेण देहत्यागावसरे तच्चित्त एव श्रीकृष्णांघ्रिसमर्पितचित्तः देहं त्यक्त्वा श्रीकृष्णनित्यपारिकरत्वात्पितृभिः श्रीमैत्रेयेण बोधितः सन्स्वस्य क्षयं नित्यनिवासं श्रीकृष्णं ययौ प्राप बोधित इति शेषः । 'अस गतिदीप्त्यादानेषु' । मैत्रेयस्य ज्ञानदातृत्वात्पितृत्वं बहुत्वं गुरुत्वात् । " एकत्वं न प्रयुंजीत गुर्वात्मनि कदाचन" इति स्मृतेः । "अन्नदाता भयत्राता यश्च विद्यां प्रयच्छति । जनको ह्युपनेता च पंचैते पितरः स्मृताः ।।" इति स्मृतेश्च । यथाश्रुतार्थांगीकारे तु कल्पांतरीयैव व्यवस्थेति । संदर्भस्तु विदुरस्य यमलोकगतिः स्वाधिकारपालनार्थं लीलया कायव्यूहेनेति गम्यते । तदित्थं भारतादिविरोधोपि न स्यादिति ॥ ४९ ॥ आत्मानं प्रति अनपेक्षमाणानां तत् श्रीकृष्णसंगमनमाज्ञाय सम्यग्ज्ञात्वा वासुदेवे श्रीवसुदेवनंदने । हि प्रसिद्धौ । यस्मिन्नेकांतमतिस्तमेव प्राप्तवती । अत्रान्ये न पथा गच्छतोप्येताञ्छ्रीद्वारकानाथः स्वयं स्वभक्त्या स्वसमीपमेवानीतवानिति गम्यते । "नित्यं संनिहितः" इत्याद्युक्तेः । अत्र श्रीमहाभारतोक्तरीत्या मार्गे पतितां तां युधिष्ठिरादयो नाद्रिरे । सा च तदैव श्रीकृष्णावेशितचित्ता तमापेति ध्येयम् ॥ ५० ॥ ५१ ॥ इति श्रीभागवतभावार्थदीपिकाप्रकाशे प्रथमस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥ खिन्नयोः खेदं प्राप्तवतोः ( १ ) ततः पांडवनिर्याणानंतरम् । हे विप्रेति । ब्राह्मणा हि

स उत्तरस्य तनयामुपयेम इरावतीम् ॥ जनमेजयादींश्चतुरस्तस्यामुत्पादयत्सुतान् ॥ २ ॥ आजहाराश्वमेधांस्त्रीन्गंगायां भूरिदक्षिणान् ॥ शारद्वतं गुरुं कृत्वा देवा यत्राक्षिगोचराः ॥ ३ ॥ निजग्राहौजसा वीरः कलिं दिग्विजये क्वचित् ॥ नृपलिंगधरं शूद्रं घ्नंतं गोमिथुनं पदा ॥ ४ ॥ शौनक उवाच ॥ कस्य हेतोर्निजग्राह कलिं दिग्विजये नृपः ॥ नृदेवचिह्नधृक्छूद्रः कोसौ गां यः पदाऽहनत् ॥ ५ ॥ तत्कथ्यतां महाभाग यदि कृष्ण कथाश्रयम् ॥ अथ वास्य पदांभोजमकरंदलिहां सताम् ॥६॥ किमन्यैरसदालापैरायुषो यदसद्व्ययः ॥ क्षुद्रायुषां नृणामंग मर्त्यानामृतमिच्छताम् ॥ ॥ ७ ॥ इहोपहूतो भगवान्मृत्युः शामित्रकर्मणि ॥ न कश्चिन्म्रियते तावद्यावदास्त इहांऽतकः ॥ ८ ॥ एतदर्थं हि भगवानाहूतः परमर्षिभिः ॥ अहो नृलोके पीयेत हरिलीलामृतं वचः ॥ ९ ॥ मंदस्य मंदप्रज्ञस्य वयो मंदायुषश्च वै ॥ निद्रया ह्रियते नक्तं दिवा च व्यर्थकर्मभिः ॥ १० ॥

जनमेजयादीनित्यक्षराधिक्यंछांदसम् । उत्पादयन्निति पाठे हेतौ शतृप्रत्ययः।सुतानुत्पादयितुमिरावतीमुपयेम इति वाक्ययोजना॥ २॥आजहार कृतवानित्यर्थः।शारद्वतं कृपम् यत्र येष्वश्वमेधेषु देवा दृष्टिगोचरा बभूवुः॥ ३॥ निजग्राह निगृहीतवान् । कलिमेव निर्दिशति । नृपेति ॥ ४॥ कस्य हेतोरिति। अयमर्थः।कलिं कस्माद्धेतोः केवलं निजग्राह न तु हतवान्यतोऽसौ शूद्रः कोऽतिकुत्सितः यो गां पदाहनदहन्निति ॥ ५ ॥ अस्य विष्णोः पदांभोजयोर्यो मकरंदस्तं लिहंत्यास्वादयंति ये तेषां सतां महतां वा कथाश्रय मिति समासान्निष्कृष्टस्यानुषंगस्तर्हि कथ्यताम् ॥ ६ ॥ नो चेत्किमन्यैरसद्भिरालापैर्येयैरायुषो वृथा क्षयः । अस्माकमयं सत्रप्रयत्नोऽपि हरिकथामृतपानार्थ एवेत्याह सार्धा भ्याम् । क्षुद्रमल्पमायुर्येषाम् अतो मर्त्यानां मरणधर्मवताम् । तथाप्यृतं सत्यं मोक्षमिच्छताम्॥ ७॥ यो मृत्युः स इह सत्रे शमितुरिदं शामित्रं कर्म पशुहिंसनं तदर्थमुपहूतः। ततः किमत आह । न कश्चिदिति ॥ ८ ॥ ततोऽपि किमत आह । अहो नृलोके हरिलीलामृतं वचः पीयेतेत्येतदर्थम् । हरिलीलैवामृतं यस्मिंस्तत् ॥ ९ ॥ तदभावे वृथैवे

सर्वकल्याणहेतवस्संति । विशेषेण प्रांति पूरयंति स्वसेवकाभिलषितामिति निरुक्तेः । अतस्त्वं मदभिलषितसत्पुरुषसंगादिसंपादनार्थमेव विज्ञतरोपि सन्मां पृच्छसीति भावः । "अभिजातः कुलीने स्यान्याय्यप ण्डितयोस्त्रिषु" इति कोशात् । पंडितापण्डिता अत्राभिजातपदेन ग्राह्याः सर्वशास्त्रनिपुणा इत्यर्थः । यद्वाऽभितो जातके होराशास्त्रे कोविदाः । पृषोदरादित्वात्ककारलोपः ॥ १ ॥ अडभावश्चार्षः ॥ २ ॥ इत्यर्थ इति । अनेकार्थत्वादुपसर्गवशाद्वा हरतेः करणार्थतेति भावः ॥ ३ ॥ क्वचिदेकान्ते ॥ ४ ॥ शूद्रकः कुत्सार्थे कप्रत्ययः । कुत्सितत्वाद्धंतुमेवोचित इति भावः ॥ ५ ॥ तत्क लिनिग्रहरूपं कर्म । हे महाभागेति । श्रीकृष्णकथासेविन एव महाभागा इति भावः । "ते धन्यास्ते महाभागा येषां कृष्णकथोत्सवः" इति संहितोक्तेः । समासान्निकृष्टस्यापि "भीष्मद्रोणप्रमु खतो ह्यन्येषां च महीक्षिताम्" इतिवत्संबन्धो भवत्येव क्वचित् । मदं हर्षं करोतीति मकरः पृषोदरादिस्तं भावं ददातीति मकरंदः सेवनं तं लिहत्यास्वादयन्तीति तेषाम् ॥ ६ ॥ ऋतं सत्यं श्रीकृष्णं वा ॥ ७ ॥ ततो मृत्योराह्वानात् न म्रियतेति । निर्विघ्नता सूचिता ॥ ८ ॥ ततोपि मरणाभावादपि ॥ ९ ॥ तदभावे हरिलीलामृतपानाभावे । अत्र केचिदर्द्धश्लोकमाधिकं पठन्ति ।" यस्मिन्पीते कृतं

सूत उवाच ॥ यदा परीक्षित्कुरुजांगले वसन्कलिं प्रविष्टं निजचक्रवर्तिते ॥ निशम्य वार्तामनतिप्रियां ततःशरासनं संयुगशौंडिराददे॥११॥ स्वलं कृतं श्यामतुरंगयोजितं रथं मृगेंद्रध्वजमाश्रितः पुरात् ॥ वृतो रथाश्वद्विपपत्तियुक्तया स्वसेनया दिग्विजयाय निर्गतः ॥ १२ ॥ भद्राश्वं केतुमालं च भारतं चोत्तरान्कुरून् ॥ किंपुरुषादीनि सर्वाणि विजित्य जगृहे बलिम् ॥ १३ ॥ तत्रतत्रोपशृण्वानः स्वपूर्वेषां महात्मनाम् ॥ प्रगीयमानं च यशः कृष्णमाहात्म्यसूचकम् ॥ १४ ॥ आत्मानं च परित्रातमश्वत्थाम्नोऽस्त्रतेजसः ॥ स्नेहं च वृष्णिपार्थानां तेषां भक्तिं च केशवे ॥ १५ ॥ तेभ्यः परमसंतुष्टः प्रीत्युज्जृंभितलोचनः ॥ महाधनानि वासांसि ददौ हारान्महामनाः ॥ १६ ॥ सारथ्यपारषदसेवनसख्यदौत्यवीरासनानुग मनस्तवनप्रणामम् ॥ स्निग्धेषु पांडुषु जगत्प्रणतिं च विष्णोर्भक्तिं करोति नृपतिश्चरणारविंदे ॥ १७ ॥ तस्यैवं वर्तमानस्य पूर्वेषां वृत्तिमन्वहम् ॥ नातिदूरे किलाश्चर्यं यदासीत्तन्निबोध मे ॥१८॥ धर्मः पदैकेन चरन्विच्छायामुपलभ्य गाम् ॥ पृच्छति स्माऽश्रुवदनां विवत्सामिव मातरम् ॥१९॥

जीवनमित्याह । मंदस्यालसस्य । नक्तं रात्रौ यद्वय आयुस्तन्निद्रया ह्रियते । दिवा अह्नि च यद्वयस्तद्व्यर्थकर्मभिरपह्रियते ॥ १० ॥ तत्र तावत्कलिनिग्रहप्रसंगमाह । तदेति । यदा निजचक्रवर्तिते स्वसेनया पालिते देशे कलिं शुश्राव तदा तामनतिप्रियां वार्तां किंचित्प्रियां च युद्धकौतुकसंपत्तेर्निशम्य ततः शरासनं दुष्टनिग्रहार्थमाददे । संयुगे शौंडिर्युद्धे प्रगल्भः । पाठांतरे युद्धे शौरिः कृष्णतुल्यः ॥ ११ ॥ ततश्च दिग्विजयाय निर्गतः ॥ १२ ॥ भद्राश्वादीनि पूर्वपश्चिमदक्षिणोत्तरतः समुद्रलग्नानि वर्षाणि । मेरोः सर्वतः इलावृतम् । तत उत्तरतो रम्यकं हिरण्मयं च दक्षिणतो हरिवर्षं किंपुरुषं च तानि विजित्य ॥ १३ ॥ प्रगीयमानं यशः । यश आदीनि शृण्वंस्तेभ्यो ददाविति तृतीये नान्वयः ॥ १४ ॥ १५ ॥ १६ ॥ किं च स्निग्धेषु पांडवेषु विष्णोर्यानि सारथ्यादीनि कर्माणि तानि शृण्वन् तथा विष्णोर्जगत्कर्तृकां प्रणतिं च शृण्वन् । नृपतिः परीक्षिद्विष्णोश्चरणारविंदे भक्तिं करोति स्म । पारषदमिति रेफषकारयोर्विश्लेषश्छांदसः । तत्र पार्षदं सभापतित्वम् । सेवनं चित्तानुवृत्तिः । वीरासनं रात्रौ खड्गहस्तस्य तिष्ठतो जागरणम् ॥ १७ ॥ वृत्तिमनुवर्तमानस्य सतः । नातिदूरे शीघ्रमेव ॥ १८ ॥ धर्मो वृषरूपः । विच्छायां हतप्रभाम् । गां गोरूपां पृथ्वीम् । विवत्सां नष्टापत्याम् ॥ १९ ॥

सर्वमिष्टापूर्त्तादिकं भवेत्'' इति ''नृलोक एतदेव सारम्'' इति मंदस्यापि प्रज्ञाबाहुल्यादनेकशास्त्रश्रवणादिना शुभं स्यादित्यत आह–मंदप्रज्ञस्येति । व्यर्थकर्मभिर्हिरण्याद्यर्थान्वेषणकर्मभिः । चो हेतौ । तस्मान्निद्रादिजयेन हरिकथा त्वया कथ्यतामिति भावः ॥ १० ॥ तत्र तावदिति वाक्यालंकारे । ''चक्रः कोके पुमान्क्लीबं व्रजे सैन्यरथांगयोः ॥ राष्ट्रे दंभांतरे कुंभकारोपकरणास्त्रयोः'' इति मेदिनी । शुश्रावेति शेषः । अनतिप्रियां राष्ट्रविप्लवरूपां दुष्टनिग्रहार्थमित्युक्त्या कलिनिग्रह एवायातीति । तस्य स्वयं दुष्टत्वादन्येषां दुष्टतापादकत्वाच्च । पाठांतरे संयुगशौरिरिति पाठे । शौरिः श्रीकृष्णः ॥ ११ ॥ ततश्च शरासनग्रहणोत्तरञ्च मृगेन्द्रध्वजं सिंहलाञ्छनध्वजम् । चतुरंगिण्या सेनया ॥ १२ ॥ बलिं करम् । '' बलिः पूजोपहारयोः'' इति विश्वः ॥ १३ ॥ तत्रतत्र वर्षेषु स्वपूर्वेषां पांडवानाम् ॥ १४ ॥ कथं माहात्म्यं सूच्यत इति । तत्किञ्चिदाह–आत्मानमिति । तेषामुभयेषाम् ॥ १५ ॥ क्वचित्पुस्तके–''यत्किंचिदस्य सैन्येषु वसुमात्रमनुत्तमम् । तत्सर्वमददात्प्रीतः कृष्णगाथाहृताशयः'' इति प्रक्षिप्तश्लोकोऽप्यस्ति । तेभ्य इत्यादिश्लोकात्परत्र तेभ्यो गायकेभ्यः ॥ १६ ॥ भक्तवात्सल्यमाह–किं चेति । शृण्वन्निति शेषः ॥ १७ ॥ तस्य परीक्षितः पूर्वेषां पित्रादीनां वृत्तिं वृत्तमाचरितमिति यावत् । नातिदूरेऽस्मद्दृष्टिगोचर एव । निबोध शृणु ॥ १८ ॥ धर्म इति । युगा

:धर्म उवाच ॥ कच्चिद्भद्रेऽनामयमात्मनस्ते विच्छायाऽसि म्लायतेषन्मुखेन ॥ आलक्षये भवतीमंतराधिं दूरे बंधुं शोचसि कंचनांब ॥ २० ॥ पादै न्यूर्नं शोचसि मैकपादमात्मानं वा वृषलैर्भोक्ष्यमाणम् ॥ अथोऽसुरादीन्हृतयज्ञभागान्प्रजा उतस्विन्मघवत्यवर्षति ॥ २१ ॥ अरक्ष्यमाणाः स्त्रिय उर्वि बालाञ्छोचस्यथो पुरुषादैरिवार्तान् ॥ वाचं देवीं ब्रह्मकुले कुकर्मण्यब्रह्मण्ये राजकुले कुलाग्र्यान् ॥ २२ ॥ किं क्षत्रबंधून्कलिनोपसृष्टान्राष्ट्रा णि वा तैरवरोपितानि ॥ इतस्ततो वाऽशनपानवासःस्नानव्यवायोन्मुखजीवलोकम् ॥ २३ ॥ यद्वांऽब ते भूरिभरावतारकृतावतारस्य हरेर्धरित्रि ॥ अंतर्हितस्य स्मरती विसृष्टा कर्माणि निर्वाणविलंबितानि ॥ २४ ॥ इदं ममाऽऽचक्ष्व तवाऽऽधिमूलं वसुंधरे येन विकर्शितासि ॥ कालेन वा ते बलिनां बलीयसा सुरार्चितं किं हृतमंब सौभगम् ॥ २५ ॥

ते आत्मनो देहस्य यद्यपि बहिरामयो न लक्ष्यते तथाप्यंतर्मध्ये आधिः पीडा यस्यास्तां त्वामालक्षये केन यतो विच्छायासि । अंत ईषन्म्लायता वैवर्ण्यं भजता मुखेन लिंगेन तत्र कारणानि कल्पयन्पृच्छति । दूरे बंधुमित्यादिपंचभिः । दूरे स्थितं बंधुम् ॥ २० ॥ त्रिभिः पादैर्न्यूनमत एवैकपादं मा मां मल्लक्षणं जनमित्यर्थः । वृषलैरित ऊर्ध्वं भोक्ष्य माणम् । पुंस्त्वमात्मपदविशेषणत्वात् । हता यज्ञभागा येषां तान् । यज्ञायकरणात् ॥ २१ ॥ हे उर्वि पृथ्वि भर्तृभिररक्ष्यमाणाः स्त्रियः पितृभिररक्ष्यमाणान्बालान्प्रत्युत तैरेव पुरुषादैरिव निर्दयैरार्तान् क्लिष्टान् । वाचं देवीं सरस्वतीं कुकर्मणि दुराचारे स्थिताम् । कुलाग्र्यान्ब्राह्मणोत्तमान्सेवकान् ॥ २२ ॥ उपसृष्टान् व्याप्तान् । अवरोपिता न्युद्वासितानि । व्यवायो मैथुनम् । इतस्ततो निषेधानादरेण सर्वतोऽशनादिषून्मुखं प्रवर्तमानं जीवलोकं वा ॥ २३ ॥ हे अंब मातर्हे धरित्रि ते तव यो भूरिभारस्तस्यावतार णार्थं कृतावतारस्य कर्माणि स्मरंती तेन विसृष्टा सती शोचसि । निर्वाणं विलंबितमाश्रितं येषु तानि । पाठांतरे निर्वाणं विडंबितमुपहसितं यैः । मोक्षादप्यधिकसुखानीत्यर्थः ॥ २४ ॥ हे अम्ब

रम्भक्षणत एव धर्मपृथ्वीकलयस्तथाभूती भवंतो लोकैरदृश्या अपि दिदृक्षणीयत्वादनध्यायतः परीक्षितो योगजनेत्राभ्यां दृष्टा ज्ञेयाः । यथा काश्चिन्नष्टापत्यां स्वमातरं पृच्छति तथाऽपृच्छदित्यन्वयः ॥ १९ ॥ हे भद्रे इति । "भद्रा गौर्गोमतल्लिका" इत्यभिधानात् । भद्ररूपायास्तवैतन्नोचितमधुना तव भद्रमेवाहं कारयिष्यामीति भावः । हे अंबेति "पुत्राणां हि परो धर्मो मातुराश्वासनं सदा" इत्युक्तेरहं तव पुत्रीभूतोऽस्म्यतो मदग्रे त्वया स्वदुः खमविद्यमिति भावः ॥ २० ॥ वृषं धर्मं लुनन्तीति वृषला राजाभासाः शूद्रम्लेच्छाद्याः ॥ २१ ॥ हे उर्वीति । दुष्टजनभराक्रांतात्वाद्बहुभारवती जाताधुनेति भावः । कुकर्मणीति । ब्रह्मकुलराजकुलयोर्द्वयोर्विशेषणम् । एकत्र दुष्प्रतिग्रहादानाभक्ष्याशनादिना दुष्कर्मत्वमन्यत्र ब्राह्मणापमानवेदापमानादिना दुष्कर्मत्वञ्च । सेवकानिति । "अज्ञानादथ वा प्रीत्या कैंकर्यं कारयेन्नरः । विप्रेण विप्रवर्जं यः स चिरं नरके वसेत् ॥" इति स्मृतेः । कुलाग्र्यामिति पाठे तु श्रेष्ठकुलार्हां देवीं द्योतमानां वाचं वेदवाणीमाचारकुलहीना अध्येष्यंतीति शोचसि किम् ॥ २२ ॥ २३ ॥ अंबेति । वर्णिताभिप्राया संबुद्धिः । धरित्रीत्याश्वासनम् । हरिकृपया पुनर्धारणसमर्था भविष्यसीति भावः । पाठान्तरे निर्वाणविडंबितानीति पाठे । इत्यर्थ इति । "या निर्वृतिस्तनुभृतां तव पादपद्मध्यानात्" इत्याद्युक्तेरयं भावः ॥ २४ ॥ हे वसुंधरे इति । त्वं हि वसुंधरासि न हि वसुंधराणामीदृक् कार्श्यं भवतीति । किं वा वसु ते हृतं

धरण्युवाच ॥ भवान्हि वेद तत्सर्वं यन्मां धर्मानुपृच्छसि ॥ चतुर्भिर्वर्तसे येन पादैर्लोकसुखावहैः ॥ २६ ॥ सत्यं शौचं दया क्षांतिस्त्यागः संतोष आर्जवम् ॥ शमो दमस्तपः साम्यं तितिक्षोपरतिः श्रुतम् ॥ २७ ॥ ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो बलं स्मृतिः ॥ स्वातंत्र्यं कौशलं कांतिर्धैर्यं मार्दवमेव च ॥ २८ ॥ प्रागल्भ्यं प्रश्रयः शीलं सह ओजो बलं भगः ॥ गांभीर्यं स्थैर्यमास्तिक्यं कीर्तिर्मानोऽनहंकृतिः ॥ २९ ॥ एते चान्ये च भगवन्नित्या यत्र महागुणाः ॥ प्रार्थ्या महत्त्वमिच्छद्भिर्न वियंति स्म कर्हिचित् ॥ ३० ॥

ते सौभाग्यं कालेन वा हृतम् ॥ २५ ॥ भवान् जानात्येव तथापि वक्ष्यामीत्याह । येन हेतुभूतेन त्वं चतुर्भिः पादैर्वर्तसे यत्र च सत्यादयो महागुणा न वियंति तेन श्रीनिवासेन रहितं लोकं शोचामीति षष्ठेनान्वयः ॥ २६ ॥ सत्यं यथार्थभाषणम् । शौचं शुद्धत्वं । दया परदुःखासहनम् । क्षांतिः क्रोधप्राप्तौ चित्तसंयमनम् । त्यागोऽर्थिषु मुक्तहस्तता । संतोषोऽलंबुद्धिः । आर्जवमवक्रता । शमो मनोनैश्चल्यम् । दमो बाह्येंद्रियनैश्चल्यम् । तपः स्वधर्मः । साम्यमरिमित्राद्यभावः । तितिक्षा परापराधसहनम् । उपरतिर्लाभप्राप्तावौदासीन्यम् । श्रुतं शास्त्रविचारः ॥ २७ ॥ ज्ञानमात्मविषयम् । विरक्तिर्वैतृष्ण्यम् । ऐश्वर्यं नियंतृत्वम् । शौर्यं संग्रामोत्साहः । तेजः प्रभावः। बलं दक्षत्वम् । स्मृतिः कर्तव्याकर्तव्यार्थानुसंधानम् । स्वातंत्र्यमपराधीनता । कौशलं क्रियानिपुणता । कांतिः सौंदर्यम् । धैर्यमव्याकुलता । मार्दवं चित्ताकाठिन्यम् ॥ २८ ॥ प्रागल्भ्यं प्रतिभातिशयः । प्रश्रयो विनयः । शीलं सुस्वभावः । सहओजोबलानि मनसो ज्ञानेंद्रियाणां कर्मेन्द्रियाणां च पाटवानि । भगो भोगास्पदत्वम् । गांभीर्यमक्षोभ्यत्वम् । स्थैर्यमचंचलता । आस्तिक्यं श्रद्धा । कीर्तिर्यशः । मानः पूज्यत्वम् । अनहंकृतिर्गर्वाभावः ॥ २९ ॥ एते एकोनचत्वारिंशदन्ये च ब्रह्मण्यशरण्यत्वादयो

केनाचिद्यत ईदृग्जातेति भावः ॥२५॥ हे धर्मेति । त्वमेव सर्वधर्त्ता यत ईदृग्जातस्तर्हि मे कार्स्न्ये किमद्भुतमिति भावः । यद्यप्यहं जानामि तथापि त्वन्मुखादेव श्रोतुमिच्छामीत्यत आह-चतुर्भिरिति ॥ २६ ॥ परदुःखासहनेन शरणागतपालकत्वं भक्तसुहृत्त्वं चोक्तम् । मनोनैश्चल्योक्त्यैव सुदृढव्रतत्वमपि । तपः क्षत्रियत्वादिलीलावतारानुरूपं स्वधर्मः ॥ २७ ॥ ज्ञानं पंचविधं बुद्धिमत्त्वकृतज्ञत्वदेशकालपात्रज्ञत्वसर्वज्ञत्वात्मज्ञत्वभेदात् । विरक्तिरसद्विषयवैतृष्ण्यम् ।प्रभावेनैव प्रतापश्च स च प्रभावविख्यातिः । दक्षत्वं च दुष्करक्षिप्रकारित्वम् । धृतिरिति पाठे क्षोभकारणे प्राप्तेप्यव्याकुलत्वम् । कौशलं हि त्रिविधं क्रियानिपुणता युगपद्भूरिसमाधानकारिता लक्षणचातुरीकलाविलासविद्वत्तालक्षणवैदग्धीभेदात् । कांतिः कमनीयता । एषा चतुर्धाऽवयवस्य हस्ताद्यंकादिलक्षणस्य वर्णरसगंधस्पर्शशब्दानाम् । तत्र रसश्चाधरचरणस्पृष्टवस्तुनिष्ठो ज्ञेयः । वयसश्चेति विवेकः। एतया नारीगणमनोहरत्वमप्युक्तम्। चित्ताकाठिन्यं प्रेमार्दचित्तत्वम् । तेन प्रेमवश्यमपि ॥२८॥ प्रतिमाशयेनैव वावदूकत्वम् । विनयेन ह्रीमत्त्वं यथोचितसर्वमानदातृत्वं चोक्तम् । सुखभावेन साधुसमाश्रयत्वं च । भगस्त्रिधा भोगास्पदत्वसुखित्वसर्वसमृद्धित्वभेदात् । गांभीर्यं दुर्बोधाभिप्रायत्वमपि । आस्तिक्यं शास्त्रचक्षुष्ट्वम् । यशः साद्गुण्यख्यातिः रक्तलोकत्वं च ॥ २९ ॥ चकाराद्ब्रह्मण्यत्वसर्वसिद्धिनिषेवितत्वसच्चिदानंदविग्रहत्वादयो ज्ञेयाः । अत्र संतोषादयः कतिचिद्गुणा भक्तसंबंधादन्यत्र ज्ञेयाः । महत्त्वमिच्छद्भिः प्रार्थ्या इति महागुणा इति च वरीस्त्वमपि गुणांतरम् । अनेन तेषां गुणानामन्यत्र स्वल्पत्वं चलत्वं च । अत्रैव पूर्णत्वमविनश्वरत्वं चोक्तम् । अत एव सूतवाक्यं " नित्यं निरीक्षमाणानां

तेनाहं गुणपात्रेण श्रीनिवासेन सांप्रतम् ॥ शोचामि रहितं लोकं पाप्मना कलिनेक्षितम् ॥ ३१ ॥ आत्मानं चानुशोचामि भवंतं चाऽमरोत्तमम्॥ देवान्पितॄनृषीन्साधून्सर्वान्वर्णांस्तथाऽऽश्रमान् ॥ ३२ ॥ ब्रह्मादयो बहुतिथं यदपांगमोक्षकामास्तपः समचरन्भगवत्प्रपन्नाः ॥ सा श्रीः स्ववासमरविंदवनं विहाय यत्पादसौभगमलं भजतेऽनुरक्ता ॥ ३३ ॥ तस्याऽहमब्जकुलिशांकुशकेतुकेतैः श्रीमत्पदैर्भगवतः समलंकृतांगी ॥ त्रीनऽत्यरोच उपलभ्य ततो विभूतिं लोकान्स मां व्यसृजदुत्स्मयतीं तदंते ॥ ३४ ॥ यो वै ममातिभरमासुरवंशराज्ञामक्षौहिणीशतमपानुददात्मतंत्रः ॥ त्वां दुःस्थमूनपदमात्मनि पौरुषेण संपादयन्यदुषु रम्यमबिभ्रदंगम् ॥ ३५ ॥

महांतो गुणा यस्मिन्नित्याः सहजा न वियंति न क्षीयंते स्म ॥ ३० ॥ तेन गुणपात्रेण गुणालयेन । पाप्मना पापहेतुना ॥ ३१ ॥ ३२ ॥ तस्य विरहो दुःसह इत्याह चतुर्भिः । ब्रह्मादयो यस्याः श्रियोऽपांगमोक्षः स्वस्मिन् दृष्टिपातस्तत्कामाः संतो बहुतिथं बहुकालं तपः समचरन्सम्यक् चरंति स्म । भगवद्भिरुत्तमैः प्रपन्ना आश्रितापि सा श्रीर्यस्य पादलावण्यमलमनुरक्ता सती सेवते ॥ ३३ ॥ तस्य भगवतः श्रीमद्भिः पदैः । केतुर्ध्वजः । अब्जादयः केताश्चिह्नानि येषां तैः । यद्वा । अब्जादीनामाश्रयैः । सम्यगलंकृतमंगं यस्याः साहं ततो भगवतो विभूतिं संपदमुपलभ्य प्राप्य त्रीन् लोकानतिक्रम्यारोचे शोभितवत्यस्मि । पश्चात्तस्या विभूतेरंते नाशकाले प्राप्ते सत्युत्स्मयंतीं गर्वं कुर्वाणां मां स व्यसृजत्त्यक्तवान् ॥ ३४ ॥ किं च । यो वै आसुरो वंशो येषां तेषां राज्ञामक्षौहिणीशतरूपं ममातिभरं भारमपनीतवान् । त्वां चोनपदत्वाद्दुःस्थं संतं पौरुषेण पुरुषकारेणात्मनि स्वस्मिन् संपूर्णपदं सुस्थं संपादयन् । "लक्षणहेत्वोः क्रियायाः" इति हेतौ शतृप्रत्ययः । संपादयितुमित्यर्थः । अबिभ्रत् धृतवानित्यर्थः ॥ ३५॥

यदपि द्वारकौ कसाम् । न वितृप्यंति हि दृशः श्रियो धामांगमच्युतम्' इति । तथा नित्या इति । न वियंतीति । सदा स्वरूपसंप्राप्तमपि गुणांतरम् । अन्ये च जीवा लभ्या यथा । तत्राविर्भावमात्रेऽपि सत्यसंकल्पत्वं वशीकृताचिंत्यमायत्वम् । आविर्भावविशेषत्वेप्यखंडसत्त्वे गुणस्य केवलस्वयमवलंबनत्वं जगत्पालकत्वं तथा हतारेर्गतिदातृत्वं तथात्मारामजनाकर्षित्वं ब्रह्मरुद्रादिसेवितत्वं परमाचिंत्यस्वरूपशक्तित्वम् । आनंत्येन नित्यनूतनसौंदर्याद्याविर्भाववत्वं पुरुषावतारत्वेऽपि मायानियन्तृत्वं जगत्सृष्ट्यादिकर्तृत्वं गुणावतारादिबीजत्वम् । अनंतब्रह्मांडाश्रयरोमविवरत्वं वासुदेवत्वनारायणत्वादिलक्षणभगवत्त्वाविर्भावेपि एवंभूतपरमाचिंत्याखिलमहाशक्तिमत्त्वं स्वयं भगवल्लक्षणत्वे तु हतारिमुक्तिदातृत्वं स्वरयापि विस्मापकस्वरूपमाधुर्यवत्त्वादि । तदित्थं दिङ्मात्रदर्शनमत एवोक्तं ब्रह्मणा "गुणात्मनस्तेपि गुणान्विमातुं हितावतीर्णस्य क ईशिरेस्य" इति ॥ ॥ ३० ॥ सांप्रतमधुना ॥ ३१ ॥ न केवलमात्मानमेव शोचाम्यपि तु देवादीनपीत्याह–देवानिति । कलियुगे देवपितृविप्रसाधुभक्तिरहिताः सर्वे भविष्यंतीति भावः ॥ ३२ ॥ यत्पादेति । यस्य पादयोः सर्वारविन्दजातेः शोभाधिक्यमसूचीति ॥३३॥ "केतश्चिह्ने निकेते च" इति कोशात् । द्वितीयार्थमाश्रित्याह–यद्वेति । गर्वं कुर्वाणां वैकुंठेपि मत्सदृशो नास्तीति गर्ववतीम् ॥३४॥ इत्यर्थ इति । संपादनार्थमिति भावः ।

का वा सहेत विरहं पुरुषोत्तमस्य प्रेमावलोकरुचिरस्मितवल्गुजल्पैः ॥ स्थैर्यं समानमहरन्मधुमानिनीनां रोमोत्सवो मम यदंघ्रिविटंकितायाः ॥ ॥३६॥ तयोरेवं कथयतोः पृथिवीधर्मयोस्तदा ॥ परीक्षिन्नाम राजर्षिः प्राप्तः प्राचीं सरस्वतीम् ॥ ३७ ॥ इति श्रीभा०महा०प्रथम०पृथिवीधर्मसंवादो नाम षोडशोऽध्यायः ॥ १६ ॥ ॥ छ ॥ सूत उवाच ॥ तत्र गोमिथुनं राजा हन्यमानमनाथवत् ॥ दंडहस्तं च वृषलं ददृशे नृपलांछनम् ॥ ॥ १ ॥ वृषं मृणालधवलं मेहंतमिव बिभ्यतम् ॥ वेपमानं पदैकेन सीदंतं शूद्रताडितम् ॥ २ ॥ गां च धर्मदुघां दीनां भृशं शूद्रपदाहताम् ॥ विवत्सामश्रुवदनां क्षामां यवसमिच्छतीम् ॥ ३ ॥ पप्रच्छ रथमारूढः कार्तस्वरपरिच्छदम् ॥ मेघगंभीरया वाचा समारोपितकार्मुकः ॥ ४ ॥ कस्त्वं मच्छरणे लोके बलाद्धंस्यबलान्बली ॥ नरदेवोऽसि वेषेण नटवत्कर्मणाऽद्विजः ॥ ५ ॥ कस्त्वं कृष्णे गते दूरं सह गांडीवधन्वना ॥ शोच्योऽस्यशोच्यान्रहसि प्रहरन्वधमर्हसि ॥ ६ ॥

तस्य विरहं का वा सहेत । प्रेमावलोकश्च रुचिरस्मितं च वल्गुजल्पश्च तैर्मधुमानिनीनां सत्यभामादीनां समानं गर्वसहितं स्थैर्यस्तब्धत्वं योऽहरत् । यस्यांघ्रिणा रजस्युत्थितेन विटंकिताया अलंकृतायाः सस्यादिमिषेण रोमोत्सवो भवति ॥ ३६ ॥ कथयतोः सतोः प्राचीं पूर्ववाहिनीं सरस्वतीं कुरुक्षेत्रे ॥ ३७ ॥ इति प्रथमे टीकायां षोडशोऽध्यायः ॥ १६ ॥ ततः सप्तदशे राज्ञः कलेर्निग्रह उच्यते ॥ तस्यैवं वीर्यभाजोऽपि वैराग्यं वक्तुमद्भुतम् ॥ १ ॥ हन्यमानं ताड्यमानम् ॥ १ ॥ मृणालं पद्मकंदस्तद्वद्धवलम् । भयान्मेहंतं मूत्रयंतम् । इवेत्यनेन पादावशेषो धर्मो भयान्मूत्रयान्निव प्रतिक्षणं क्षीयमाणांशस्तस्याप्यनिर्वाहात्कंपमान इवेति दर्शितम् ॥ २ ॥ धर्मदुघां हविर्दोग्ध्रीम् । क्षामां कृशाम् । यवसं तृणम् । अत्र सस्यादिप्रसवक्षयाद्विवत्सेव । यज्ञाद्यभावात्कृशा । अत एव यज्ञभागमिच्छंती पृथ्वीति सूचितम् ॥ ३ ॥ कार्तस्वरं सुवर्णं तन्मयः परिच्छदः परिकरो यस्य । स्वर्णनिबद्धमित्यर्थः । सज्जीकृतकार्मुकः ॥४॥ हंसि घातयसि । राजाहमिति चेत्तत्राह । नट इव वेषमात्रेण नरदेवोऽसि कर्मणा त्वद्विजः शूद्रः ॥५॥ अशोच्यान्नि

इत्यर्थ इति । आर्षत्वादत्र गुणाभावो दिपोऽडागमश्चेति भावः ॥ ३५ ॥ यद्वा मधु मद्यं तद्वन्मादको मानो यासां सौंदर्यादिगर्वितानामित्यर्थः । "अलंकारे विटंकस्स्यात्" इत्यभिधानात् ॥ ३६ ॥ तयोः पृथ्वीधर्मयोः ॥ ३७ ॥ इति श्रीभागवतभावार्थदीपिकाप्रकाशे प्रथमस्कंधे षोडशोऽध्यायः ॥ १६ ॥ ततः प्राचीसरस्वतीप्राप्त्यनंतरं तस्य परीक्षितः । एवं वीर्यभाजः कलिदंडनसमर्थस्यापि ॥ १ ॥ तत्र प्राचीतटे । सत्यत्रेताद्वापरयुगमर्यादाभंगे स्वातंत्र्यमाह–नृपलाञ्छनमिति । "मृणालं बिसम्" इत्यमरः ॥ २ ॥ ३ ॥ ४ ॥ नटो ह्यनुकार्यस्यैव कर्माभिनयन्भवतीति भावः ॥ ५ ॥ ननु यथा त्वं देशस्य राजा तथाहमपि संप्रति कालस्य राजेति मयि तव विक्रमो न भविष्यतीत्याह– कस्त्वमिपि । गाण्डिवधन्वनाऽर्जुनेन सह कृष्णे दूरं गते सतीति । एतावद्दिनं त्वं क्वासीरिति भावः । नन्वासमेव किं तु ता

१ दिबयं सारस्वतव्याकरणोक्तः ।

त्वं वा मृणालधवलः पादैर्न्यूनः पदा चरन् ॥ वृषरूपेण किं कश्चिद्देवो नः परिखेदयन् ॥ ७ ॥ न जातु कौरवेंद्राणां दोर्दंडपरिरंभिते ॥ भूतले नु पतंत्यस्मिन्विना ते प्राणिनां शुचः ॥ ८ ॥ मा सौरभेयाऽनुशुचो व्येतु ते वृषलाद्भयम् ॥ मा रोदीरंब भद्रं ते खलानां मयि शास्तरि ॥ ९ ॥ यस्य राष्ट्रे प्रजाः सर्वास्त्रस्यंते साध्व्यसाधुभिः ॥ तस्य मत्तस्य नश्यंति कीर्तिरायुर्भगो गतिः ॥ १० ॥ एष राज्ञां परो धर्मो ह्यार्तानामार्तिनिग्रहः ॥ अत एनं वधिष्यामि भूतद्रुहमसत्तमम् ॥ ११ ॥ कोऽवृश्चत्तव पादांस्त्रीन्सौरभेय चतुष्पद ॥ मा भूवंस्त्वादृशा राष्ट्रे राज्ञां कृष्णानुवर्तिनाम् ॥ ॥ १२ ॥ आख्याहि वृष भद्रं वः साधूनामकृतागसाम् ॥ आत्मवैरूप्यकर्तारं पार्थानां कीर्तिदूषणम् ॥ १३ ॥

रपराधान् रहसि यस्त्वं प्रहरन् प्रहरसि स शोच्यः सापराधोऽस्यतो वधमर्हसि ॥ ६ ॥ वृषं प्रत्याह । त्वं वा कः । स्वयमेव संभावयति । किं कश्चिद्देवो वृषरूपेणा स्मान् परिखेदयन् वर्तसे ॥ ७ ॥ दोर्दंडैः परिरंभिते परिरंभितवत्सुरक्षिते ते शुचोऽश्रूणि विनान्येषामश्रूणि नानुपतंतीति खेदहेतुत्वं दर्शितम् ॥ ८ ॥ एवमुक्त्वे पुनरपि शोचंतं प्रत्याह । भो सुरभेः पुत्र मा शुचः शोकं मा कुरु । व्येत्वपयातु । गां प्रत्याह । अंब मातः शास्तारि मयि जीवति सति ते भद्रमेवातो मा रोदीः ॥ ९ ॥ मद्धितार्थमेवैनं हनिष्यामि न तवोपकारायेत्याह यस्येति द्वाभ्याम् । हे साध्वि सर्वा याः काश्चिदपीत्यर्थः। असाधुभिस्त्रस्यंते पीडचंत इत्यर्थः। भगो भाग्यम् । गतिः परलोकः ॥ १० ॥ ॥ ११ ॥ पुनरपि शोचंतं वृषं प्रत्याह । कोऽवृश्चच्छिच्छेद । त्वादृशास्त्वद्विधा दुःखिताः ॥ १२ ॥ वो भद्रमस्तु । आत्मनस्तव पादच्छेदेन वैरूप्यं कृतवंतं कीर्तिं दूषयतीति

म्यां भयेन न प्राभूवमधुना तु कस्माद्बिभेमि । सत्यंसत्यं शोच्योसि । अधुना त्वं मर्तुमेवेच्छसीति भावः । संदर्भस्तु सह गांडिवधन्वनेति । अत एव तथैव प्रतिज्ञातं "मामेवैष्यति सत्यं ते प्रतिजाने प्रियोसि मे" इति । स्वर्गापवर्गाणिं तु तत्साक्षान्निर्दिष्टं "ददर्श तत्र गोविन्दं ब्राह्मेण वपुषान्वितम् । तेनैव दृष्टपूर्वेण सादृश्येनोपसूचितम् ॥ दीप्यमानं स्ववपुषा दिव्यैर्वस्त्रैरुपस्कृतम् । उपास्यमानं वीरेण फाल्गुनेन सुवर्चसा ॥ यथास्वरूपं कौंते यस्तथैव मधुसूदनम्" इति । अत्र कौंतेयो युधिष्ठिरः ॥ ६ ॥ खेदयन् वर्त्तसे नैतादृशो दुःखी कृशो मया स्वप्नेऽपि दृष्ट इति भावः ॥ ७ ॥ त्वय्येव राजनि सति वयमेव दुःखिनः सांप्रतमभूमेति चेत्तत्र सानुतापं साटोपं चाह—न जात्विति । परिरक्षिते परिरंभितवत्सुरक्षिते इति ॥ "शुक्छोकेश्रूणि शौचे च" इत्यभिधानात् ॥ ८ ॥ नन्वलीकमिदमिति स्वमिव रुदन्तीं गां दर्शयन्तं वृषं प्रत्याह-हे सौरभेयेति । अहो भूमिर्विष्णुपत्नीत्वेन स्वपती विष्णावंतर्हिते चेयं विधवा जाता । सा च गोरूपा तदात्मजस्त्वं विधवापुत्र इव दीनो रक्षितारं निरीक्षसे । रक्षिता चाधुनाऽहमेव स च दीनोपेक्षको नास्मि । ततस्त्वामधुनैनं दंडयित्वा रक्षामीति भावः । गां च विष्णु पत्नीत्वेनैव मातरं ज्ञात्वाश्वासयन्नाह-अंबेति । यत्र पुत्रे जीवति मातुर्दुष्टकृतार्तिर्भवेद्धिक्तं पुत्रमित्यतस्त्वामपि निर्दुःखां करिष्याम्येनं घातयित्वेति भावः ॥ ९ ॥ नन्वस्मत्संबंधेनैनं घातयन्नेतद्वधपापभागिनावावाम्माकुर्वित्यत आह-यस्येति । हे साध्वीति । साधुरक्षणं विना राज्ञो मम सर्वस्वहानिस्स्यादिति भावः ॥ १० ॥ अत आर्तार्त्तिनिग्रहस्य राजधर्मत्वात् । एवं कालिम् ॥ ११ ॥ कोऽवृश्चत्तं वद ततो ज्ञात्वाहं तं हनिष्यामीति भावः । :संबुद्धि रुक्तार्था ॥ १२ ॥ ननु मम किमपि न विवक्षितमस्तीति चेत्तत्राह-हे वृष वो युष्माकं साधूनां निरपराधानां भद्रं सुखेपि दुःखेपि सदा भद्रमेव । किं त्वस्माकं पार्थानां कीर्तिं दूषयति यस्तमाख्याहि । तमेव कम् । आत्मनस्तव

जनेऽनागस्यघंयुंजन्सर्वतोऽस्य च मद्भयम् ॥ साधूनां भद्रमेव स्यादसाधुदमने कृते ॥१४॥ अनागःस्विह भूतेषु य आगस्कृन्निरंकुशः॥ आहर्तास्मि भुजं साक्षादमर्त्यस्यापि सांगदम् ॥१५॥ राज्ञो हि परमो धर्मः स्वधर्मस्थानुपालनम् ॥ शासतोऽन्यान्यथाशास्त्रमनापद्युत्पथानिह ॥१६॥ धर्म उवाच॥एतद्वः पांडवेयानां युक्तमार्ताभयं वचः॥ येषां गुणगणैः कृष्णो दौत्यादौ भगवान्कृतः॥१७॥ न वयं क्लेशबीजानि यतः स्युः पुरुषर्षभ ॥ पुरुषं तं विजानीमो वाक्यभेदविमोहिताः ॥१८॥ केचिद्विकल्पवसना आहुरात्मानमात्मनः ॥ दैवमन्ये परे कर्म स्वभावमपरे प्रभुम् ॥ १९ ॥

तथा तमाख्याहि ॥ १३ ॥ ननु तदाख्याने कृते कथं भद्रं स्यादित्यत आह । यस्मादनागसि जने योऽघं दुःखं युंजन् कुर्वन् भवत्यस्यैवंभूतस्य मत्तः सकाशात्सर्वत्रापि भयं भवति ततः साधूनां भद्रं भवेदेवेति ॥ १४ ॥ एतस्य दंडेऽहमसमर्थ इति मा शंकीरित्याह । अनागःस्विति । आगस्कृदपराधकर्ता । तस्यामर्त्यस्य देवस्यापि भुजमाहर्तास्म्याहरिष्यामि । सांगदमित्यनेन मूलत उत्पाट्याहरिष्यामीति दर्शितम् ॥ १५ ॥ नन्वेकस्य निग्रहेणान्यस्यानुग्रहे तव किं प्रयोजनं तत्राह । राज्ञो हीति । अन्यानधर्मिष्ठान् । शासतो दंडयतः ॥ १६ ॥ आर्तानामभयं यस्मात्तद्वचो वो युष्माकं युक्तमुचितमेव ॥ १७ ॥ वयं तु यतः पुरुषात्प्राणिनां क्लेशहेतवो भवेयुस्तं पुरुषं न विजानीमः। यतो वादिनां वाक्यभेदैर्विमोहिताः ॥ १८ ॥ वाक्यभेदानेवाह । विकल्पं भेदं वसत आच्छादयंति ये योगिनस्ते आत्मानमेवात्मनः प्रभुं सुखदुःखप्रदमाहुः । तदुक्तम् ।

पादच्छेदेन वैरूप्यं कृतवंतम् । हे वृषेति । सर्वाभीष्टवर्षकत्वान्ममाभीष्टमपि वदेति भावः ॥१३॥ अत्राक्षिपति-नन्विति । अनागसि जनेऽघकर्त्तुः पुंसः सर्वत एव भयं न केवलं मत्त एवेति भावः ॥१४॥ ननु यदि त्वत्तोपि बली स्यात्तर्हि किं तव निवेदनेन तत्राह-साक्षादमर्त्यस्यापीति । तथा च देवासुरमनुष्येषु कोपि मत्तो बलिष्ठो नास्तीति भावः॥१५॥ पुनराक्षिपति-नन्विति । परम इति । परो मा यस्मात्स परम इत्यत उत्कृष्टधर्म एव राज्ञो नास्तीति भावः । उत्पथान् स्वधर्ममुत्सृज्यवर्तमानान् ॥ १६ ॥ पांडवेयानां पांडववंश्यानामेतत् । यथा मां प्रत्युक्तमीदृगित्यर्थः । येषां गुणगणैः प्रेमात्मकैरित्यर्थः । श्रीकृष्णस्य प्रेमैकवश्यत्वात् । तस्यार्जुनस्य पौत्रस्त्वं तत्तुल्य एवातस्तव गुणैरप्याधीन एव श्रीकृष्णो वर्तत इति तदशक्यं किमपि नास्तीति भावः ॥ १७ ॥ तत्र साक्षाद्धिंसाकर्तृगतः प्रश्नोयमिति ज्ञात्वापि सूचकता न युक्तेति मत्वा तत्प्रयोजककर्तृगतत्वेन सिद्धांतयन्नप्यनिर्द्धारितमिवाह-न वयमिति त्रिभिः । वयमीश्वरवादिनो ये च वाक्यभेदे विमोहितास्ते सर्वेऽपि तं पुरुषमीश्वरं न जानीमस्तस्य सर्वागोचरत्वात् । हे पुरुषर्षभेति । त्वं तु सूचकतादोषं पुरुषश्रेष्ठत्वाज्जानास्येव । यद्वा पुरुषो हरिः स ऋषभः प्रियो यस्येति हरिभक्तत्वात्त्वं तु जानन्नेव स्वप्रश्रयबोधनार्थं मां पृच्छसीति भावः । ननु कथमेवमपलपसि त्वत्क्लेशदायीं पुरुषोऽयं मया दृश्यत एव । सत्यम् । असौ मम क्लेशस्य बीजं किंचिद्भविष्यति यतोयं ममैव क्लेशदो नान्यस्येति । क्लेशबीजं यतो भवति तं पुरुषं न जातीम इत्यर्थः । ननु शास्त्रज्ञा यूयं कथं न जानीथ । सत्यम् । बहुशास्त्रज्ञानमेव तदनिर्द्धारणे कारणमित्याह-वादिनां वाक्यभेदैर्विमोहिता इति ॥ १८ ॥ वाक्यभेदविमोहितान् गणयति-केचिदित्येकेन । एते सर्वे वैदिका एव ग्राह्याः । वेदवाक्यस्यैव प्रामाण्यादिति संदर्भः । तदुक्तं श्रीगीतायामिति । यद्वा विकल्पं जीवेश्वरादिभेदं वसते आच्छादयति येऽद्वैतवादिनः सुखदुःखादेरात्माज्ञानविजृंभितस्य द्वैतस्य मिथ्यात्वान्नकोऽपि सुखदुःखप्रदो भवतीत्याहुः । संभवात्समासान्तरेणार्थांतरमाह-यद्वा केचित्तार्किकाः आत्मनः सुखदुःखबीजमात्मानमेवाहुः । एवं ते वदंतीति स्वामिचरणैरुक्तमेव । लोकायतिको नास्तिकावांतरविशेषः । तीर्थस्तु स्वस्य हरेर्भाव उत्पत्तिर्यस्य तं कालं प्रभुमाहुः । सर्वे "सर्वे निमिषा जज्ञिरे विद्युतः पुरुषात्" इति श्रुते

अप्रतर्क्यादनिर्देश्यादिति केष्वपि निश्चयः ॥ अत्रानुरूपं राजर्षे विमृश्य स्वमनीषया ॥२०॥ एवं धर्मे प्रवदति स सम्राड् द्विजसत्तम ॥ समाहितेन मनसा विखेदः पर्यचष्ट तम् ॥२१॥ राजोवाच ॥ धर्मं ब्रवीषि धर्मज्ञ धर्मोऽसि वृषरूपधृक् ॥ यदधर्मकृतः स्थानं सूचकस्यापि तद्भवेत् ॥२२॥ अथवा देवमायाया नूनं गतिरगोचरा ॥ चेतसो वचसश्चापि भूतानामिति निश्चयः ॥ २३ ॥

"आत्मैव ह्यात्मनो बंधुरात्मैव रिपुरात्मनः" इति । यद्वा । विकल्पैः कुतर्कैः प्रावृता नास्तिकाः । एवं हि ते वदंति । न तावद्देवतादीनां प्रभुत्वं कर्माधीनत्वात् । न च कर्मणः स्वाधीनत्वादचेतनत्वाच्च । अतः स्वयमेव प्रभुर्न चान्यः कश्चिदिति । अन्ये दैवज्ञा दैवं ग्रहादिरूपां देवताम् । परे तु मीमांसकाः कर्म । अपरे लौकायतिकाः स्वभावम् १९ केष्वपि सेश्वरेषु मध्ये । केष्वपीति दुर्लभत्वं दर्शितम् । निश्चय इति सिद्धांतत्वम् । अप्रतर्क्यान्मनोऽगोचरादनिर्देश्याद्वचनागोचरात्परमेश्वरात्सर्वं भवतीति विमृश विचारय स्वबुद्ध्या ॥ २० ॥ विखेदो गतमोहः पर्यचष्ट प्रत्यभाषत ज्ञातवानिति वा ॥ २१ ॥ अनिर्धारितमिव ब्रुवन्घातकं जानन्नपि न सूचयेदित्येवंरूपं धर्मं ब्रवीष्यतो धर्मोऽसि । ननु घातकस्य सूचने को दोष इत्यत आह । यदिति । स्थानं नरकादि ॥ २२ ॥ यद्वा । अज्ञानादप्यकथनं भवतीत्याह । अथ वेति । देवस्य मायाया गतिर्वे-

रित्याह । अत्र संदर्भस्तु अपर इत्यनेन सांख्यानाहुः । स्वस्माद्भावः स्वभावः परिणामः स च गुणनामेव गुणपरिणाम एव सुखदुःखहेतुरित्याह ॥ १९ ॥ सेश्वरेषु वैष्णवेषु । परमेश्वरात्सर्वं भवतीति निश्चयः । तद्वक्ष्यति वेदस्तुतौ "त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयोर्गुणविगुणान्वयान्" इति । तथा "सुखं दुःखं भवो भावो भयं चाभयमेव च । अहिंसा समता तुष्टिस्तपो दानं यशोयशः । भवंति भावा भूतानां मत्त एव पृथग्विधाः" इति भगवद्गीताभिश्च । ननु तर्हि कथं निर्देष्टुमनर्हत्वम् । सत्यम् । कालकर्मस्वभावग्रहभूतनृपसर्परोगादिभ्य एव लोके क्लेशस्य दर्शनात्तेषामेव निर्देश्यत्वात् । वस्तुतस्तु तेषामस्वातंत्र्याच्च भगवत एव सर्वं भवतीति सिद्धांतात् । भगवतः सकाशाद्दुःखं भवतीत्युपासकानां वक्तुमनौचित्याच्च । नन्वेवमपि तस्य वैषम्यनैर्घृण्ये दुर्वारे एवेत्यत आह—अप्रतर्क्यादिति । अस्मत्तर्कागोचरत्वात्तस्य तत्तदपि न वैषम्यनैर्घृण्ये इति भावः । तदुक्तं भीष्मेण "न ह्यस्य कर्हिचिद्राजन्पुमान्वेद विधित्सितम् । यद्विजिज्ञासया युक्ता मुह्यंते कवयोऽपि हि" इति । तदपि भक्ताभासस्य मम दैन्यवर्द्धनेन स्वविषयकस्मरणवृद्ध्यर्थं वा भक्तोत्तमस्य तव कलिनिग्रहादिकीर्त्तिख्यापनार्थं वेति हितायैव क्लेशदा न मूह्यत इति । नन्वेषां मतानां मध्ये कस्योपादेयत्वमित्यत्राह—अत्रानुरूपं समुचितं सिद्धांतं त्वमेव स्वमनीषया विचारय यतस्त्वं राजर्षिर्भवस्युक्तिभंग्या निश्चयशब्दात्सर्वांते कथनाच्च । वैष्णवमतस्य सिद्धांतत्वम् । अतः केष्वपीत्यनेन मतस्यास्य दुर्लभत्वञ्च सूचितम् । तत्र विमृशेत्ययं राज्ञो विमर्शः । न तावत्क्लेशानां मिथ्यात्वं प्रकटमनुभूयमानत्वात् । न चात्मनस्तत्कारणत्वं जीवात्मनः पारतन्त्र्यात् । न च ग्रहाणां तेषां कालाचक्राधीनत्वात् न च कर्मणः जाड्यात् । किञ्च साक्षाद्धर्मस्यास्य किं प्रारब्धमप्रारब्धं वा पापमस्ति । पापत्वे धर्मत्वस्यैवानुपपत्तेः । न च स्वभावस्य तस्यानैकांतिकत्वात् । तस्माद्भगवत एव कारणत्वं सूचितम् । तद्विधित्सितत्वं सर्वैर्दुर्ज्ञेयमेवेति भीष्मोक्तिरेव प्रमाणम् ॥ २० ॥ समाहितेन लब्धसमाधानेन ॥ २१ ॥ हे धर्मज्ञेति । स्वहंतृवृषलनामाग्रहणेन त्वमतीव सूक्ष्मं धर्मतत्त्वं जानासीति भावः । "असत्कृतम धर्मं तु वदन्नर्द्धमवाप्नुयात्" इति स्मृतिप्रोक्तधर्मग्राहित्वात् । अयं मां निरपराधमपि ताडयतीति मयि राजनि वक्तुमर्हन्नपि पृष्टोऽपि यन्न ब्रवीषि तद्धर्मं ब्रवीषि यतोऽधर्मकर्तुर्यत्स्थानं सूचकस्यापि तत्किं पुनरभिधायकस्यातः साक्षाद्धर्म एव मयानुमितस्त्वमिति ॥२२॥ अथ वेति । त्वया सर्वमुक्तमेवेत्यर्थः । देवमायेत्यादिना अप्रतर्क्यादिति तदुक्तमनुमोदिता देवस्य भगवतो मायायाः सर्वजगत्पालनसंहारकारिण्या गतिर्भूतानां चेतसोऽगोचरेति

तपः शौचं दया सत्यमिति पादाः प्रकीर्तिताः ॥ अधर्मांशैस्त्रयो भग्नाः स्मयसंगमदैस्तव ॥ २४ ॥ इदानीं धर्म पादस्ते सत्यं निर्वर्तयेद्यतः ॥ तं जिघृक्षत्यधर्मोऽयमनृतेनैधितः कलिः ॥ २५ ॥ इयं च भूर्भगवता न्यासितोरुभरा सती ॥ श्रीमद्भिस्तत्पदन्यासैः सर्वतः कृतकौतुका ॥ २६ ॥ शोचत्यश्रुकला साध्वी दुर्भगेवोज्झिताऽधुना ॥ अब्रह्मण्या नृपव्याजाः शूद्रा भोक्ष्यंति मामिति ॥ २७ ॥ इति धर्मं महीं चैव सांत्वयित्वा महारथः ॥ निशातमाददे खड्गं कलयेऽधर्महेतवे ॥ २८ ॥ तं जिघांसुमभिप्रेत्य विहाय नृपलांछनम् ॥ तत्पादमूलं शिरसा समगाद्भयविह्वलः ॥ ॥ २९ ॥ पतितं पादयोर्वीरः कृपया दीनवत्सलः ॥ शरण्यो नाऽवधीच्छ्लोक्य आह चेदं हसन्निव ॥ ३० ॥

ध्यघातकलक्षणा वृत्तिर्भूतानां चेतसो वचसश्चागोचरा सुज्ञेया न भवतीति निश्चयः ॥ २३ ॥ धर्मोऽसाविति ज्ञात्वा तस्य पादानुवादेन व्यवस्थामाह । तप इति द्वाभ्याम् । अधर्मपादैस्तव त्रयः पादास्त्रिभिरंशैर्भग्नाः । स्मयो विस्मयः ॥ २४ ॥ इदानीं कलौ हे धर्म ते पादश्चतुर्थोऽशस्तत्रापि सत्यमेवास्ति यतः सत्याद्भवानात्मानं निर्वर्तयेत्कथंचिद्धारयेत् । यद्वा । पुरुषस्त्वां साधयेत् । तमपि पादमनृतेन संवर्धितः कलिरूपोऽयमधर्मो ग्रहीतुमिच्छति । तत्रेयं स्थितिः । कृतयुगे प्रथमं संपूर्णश्चतुष्पाद्धर्मस्त्रेतायां चतुर्णामपि पादानां मध्ये स्मयेन तपः संगेन शौचं मदेन दया अनृतेन सत्यमित्येवं चतुर्थोऽशो हीयते । द्वापरे त्वर्धम् ।कलौ चतुर्थोऽशोऽवशिष्यते सोऽप्यंते नंक्ष्यतीति॥ २५॥ न्यासितोऽन्योन्यद्वारेणावतारित उरुर्भरो भारो यस्याः । कृतं कौतुकं मंगलं यस्याः सा ॥२६॥ अश्रूणि कलयति मुंचतीत्यश्रुकला तेन त्यक्ता सती शूद्रा भोक्ष्यंति मामिति शोचति ॥ २७॥ निशातं निशितम् । अधर्मस्य हेतुर्यः कलिस्तं हंतुमित्यर्थः ॥ २८ ॥ अभिप्रेत्य ज्ञात्वा ॥ २९ ॥ शरण्य आश्रयार्हः । श्लोक्यः सत्कीर्त्यर्हः ॥३०॥

अप्रतर्क्येत्यर्थः । वचेसोगोचेरेति अनिर्देश्येत्यर्थः । मायायास्तच्छक्तित्वात्स देवः पालनसंहारलक्षणे सुखदुःखे भूतेभ्यः कथं ददातीति ज्ञातुं वक्तुं च कः शक्नोतीत्यर्थः ॥२३॥ अहं तु त्वयाऽकथितमपि तव भद्राभद्रं सर्वं जानाम्येव तत्त्वं शृण्वित्याह—तप इति द्वाभ्याम् । स्मयो गर्वः । संगः स्त्रीभिः । मदो मधुपानादिजः । उपलक्षणमेतद्धिंसादेरपि । तत्र स्मयेन तपोभंगः । स्त्रीसंगेन शौचभंगः । मदेन दयाभंगः ॥ २४ ॥ हे धर्मेति । पादावशेषत्वादेव मया त्वं धर्मोयमिति ज्ञात एवेति भावः । तत्रापि चतुर्थांशेपि प्राधान्येन व्यपदेशो भवतीति न्यायेन सत्यस्यैव प्राधान्यमाह—यद्वेति ॥ २५ ॥ "आश्चर्ये मंगले प्रोक्तमुत्सवेऽपि च कौतुकम्" इत्यभिधानात् ॥ २६ ॥ अब्रह्मण्या ब्राह्मणभक्तिरहिताः ॥ २७ ॥ इत्यर्थ इति । "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति कर्मणि चतुर्थीति भावः । ननु जीवानामधर्म एव तत्तद्दोषहेतुरित्युक्तं कथं कालिं हन्यात्तत्राह—अधर्मस्य हेतवे सहायायेत्यर्थः । वक्ष्यते च "त्वमधर्मबंधुः" इति संदर्भः । खड्गादाने राज्ञोऽयमभिप्रायः—मत्पाणिस्थखड्गदर्शनादयमपि नृपचिह्नधारी मया सार्द्धं द्वंद्वशो योद्धुमायातु । ततश्चैनं शीघ्रमेव हनिष्यामीति ॥ २८ ॥ विहाय नृपलांछनमिति । कलिनाप्येवं विचारितमनेन सह योद्धुं न मे शक्तिरस्ति न च क्षत्रियस्य शरणापत्तिरुचिताऽतो नृपचिह्नं विहायैवास्य पादयोः पतिष्याम्यन्यथा वेषस्य लज्जा भविष्यति । अत्र नटयतिन्यायोनुसंधेयः । नाट्यं दर्शयता नटेन संन्यासवेषं विधाय नृपसदस्यागतं तं च राजा सत्कृत्य रजतस्थाले सहस्रदीनारं कृत्वा समर्पयामास । स चाह—नाहमेतत्स्पृशाम्यपसारय मदग्रत एतदिति । ततश्च तं वेषं विहाय किञ्चिन्नाट्यं कृत्वा तत्समाप्य राजानमाह—देहि मेऽश्वं काश्मीरकंबलञ्च ततो राजा तमाह—अहो सहस्रदीनारांस्त्यक्त्वाधुना किमल्पं याचसे तेनोक्तं तदा तद्ग्रहणे वेषो लज्जायितो भवेदतो वेषपूर्त्यर्थं न गृहीतमिति ॥ ॥ २९ ॥ नावधीच्छ्लोक्य इति । राज्ञापि विचारितं शरणागतोयं हंतुमनर्हस्तदपि दुष्टमेनं यदि हन्मि तर्हि शरणागतवधाज्जातमधर्ममवलंब्य मय्येवासौ प्रवेक्ष्यति न मारिष्यतीति हसन्निवेति कोपानपगमात् । ईश्वरेण तादृश

राजोवाच ॥ न ते गुडाकेशयशोधराणां बद्धांजलेर्वै भयमस्ति किंचित् ॥ न वर्तितव्यं भवता कथंचन क्षेत्रे मदीये त्वमधर्मबंधुः ॥ ३१ ॥
त्वां वर्तमानं नरदेवदेहेष्वऽनुप्रवृत्तो यमधर्मपूगः ॥ लोभोऽनृतं चौर्यमनार्यमंहो ज्येष्ठा च माया कलहश्च दंभः ॥ ३२ ॥ न वर्तितव्यं तदधर्म
बंधो धर्मेण सत्येन च वर्तितव्ये ॥ ब्रह्मावर्ते यत्र यजंति यज्ञैर्यज्ञेश्वरं यज्ञवितानविज्ञाः ॥ ३३ ॥ तस्मिन्हरिर्भगवानिज्यमान इज्यामूर्तिर्यजतां
शं तनोति ॥ कामानमोघान्स्थिरजंगमानामंतर्बहिर्वायुरिवैष आत्मा ॥ ३४ ॥ सूत उवाच ॥ परीक्षितैवमादिष्टः स कलिर्जातवेपथुः ॥ तमुद्यता
सिमाहेदं दंडपाणिमिवोद्यतम् ॥३५॥ कलिरुवाच ॥ यत्र क्वचन वत्स्यामि सार्वभौम तवाज्ञया ॥ लक्षये तत्रतत्रापि त्वामात्तेषुशरासनम् ॥३६॥

गुडाकेशोर्जुनस्तस्य यशोधरा ये वयं तेषां तान्प्रति बद्धोंजलिर्येन तस्य ते । किं तु कथंचन केनाप्यंशेन न वर्तितव्यम् । यस्मात्त्वमधर्मस्य बंधुः॥ ३१ ॥तदेवाह । राजदेहेषु
वर्तमानं त्वामनु सर्वतः प्रवृत्तः । अनार्यं दौर्जन्यम् । अंहः स्वधर्मत्यागः । ज्येष्ठा अलक्ष्मीः । माया कपटम् ॥ ३२ ॥तत्तस्माद्धर्मेण सत्येन च वर्तितव्ये वर्तितुमर्हे ब्रह्मावर्त्ते
देशे । यज्ञस्य वितानं विस्तारस्तत्र विज्ञा निपुणाः ॥ ३३ ॥ इज्या यागस्तद्रूपा मूर्तिर्यस्य शं क्षेमं कामांश्च । नन्विंद्रादयो देवा इज्यंते न तु हरिस्तत्राह । एष स्थावरादी
नामात्मेति । तथापि जीववन्न परिच्छिन्न इत्याह । अंतर्बहिरिति । यथा वायुः प्राणरूपेणांतःस्थोऽपि बहिरप्यस्ति तद्वत्सर्वांतर्यामीश्वरोऽपीति॥ ३४ ॥ उद्यतासिमुद्धृतखड्गम् ।
दंडपाणिं यमम्। उद्यतमुद्युक्तम्॥ ३५॥अत्र न वस्तव्यमिति या तवाज्ञा तया यत्र क्वापि वत्स्यामि किं तु तत्रतत्राप्यात्तो गृहीत इषुः शरासनं च येन तं त्वामेव लक्षये॥ ३६॥

एव विधिर्निर्मितो यज्जिघांसोरपि हस्तात्त्वमद्य रक्षितोभूदिति मनोनुलापाच्च॥ ३०॥स्वकार्यं विचार्याह—नेति । न वर्तितव्यं न स्थेयम् । देहमारभ्य राष्ट्रपर्यंतस्थानविवक्षया क्षेत्रमित्युक्तम् । श्लेषोत्रालंकारः । अधर्मस्य बन्धुः
सहकारी । यद्वाऽधर्मो बंधुरिवात्याज्यो यस्येति वा ॥ ३१ ॥ तदेवाधर्मबन्धुत्वमेव । त्वत्प्रवृत्तौ बहवो दोषाः सन्तीत्याह—नराणां देवानां च देहेष्विति देवा अपि त्वदाक्रांतदेहा लोभाद्यधर्मिष्ठा भवन्ति किं पुनर्नरा
इति भावः । लोभः परवित्ताभिलाषः । सद्व्यये प्राप्ते वित्तापरित्यागो वा ॥ ३२ ॥ यतस्त्वमधर्मबंधुस्तस्माद्धेतोः । ब्रह्मावर्त्ते आर्यावर्त्ते इत्यर्थः । ब्रह्मणो वेदस्यासमंताद्वर्त्तो वर्त्तनं यत्र तस्मिंस्तथा । अत एव जीव
गोस्वामिनाप्युक्तम् । ब्रह्मावर्त्त इति यज्ञियदेशोपलक्षणम् । "सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् । तं देवानिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते ॥" इति तल्लक्षणात् । धर्मेणेत्यनेनैव सिद्धे सत्येन चेति पृथगुक्तिः सत्यस्य
धर्ममूलत्वव्यंजिका । स्कंधशाखादिकं विना केवलेन मूलेनापि न प्रयोजनसिद्धिरित्यतो धर्मेणेति चोक्तम् ॥ ३३ ॥ इज्यानामिन्द्रादिदेवानामात्ममूर्त्तिरन्तर्यामिरूपः । त आत्ममूर्त्तयो यस्येति वा त्वयि वर्त्तमाने सति तथा
नैव स्यादिति भावः ॥ ३४ ॥ उद्यतासिमुच्चीकृतखड्गम् । जातवेपथुरिति । स्वरक्षणार्थं बहुतरं बुद्धिबलं प्रकाशितं तदपि मम वध एवोपस्थित इति भावः । राज्ञो ह्ययमभिप्रायः । यदिमां मदाज्ञां न पालयति
तदा यदभीष्टमस्य वधमधुनैव करिष्यामि । यदि च पालयते तदास्यावधेपि मम कापि क्षतिर्नास्तीति भावः ॥ ३५ ॥ हे सार्वभौमेति । सर्वस्या अपि भूमे राजन् । लक्षये साक्षादेवमेव त्वां पश्यामि । तेन सर्वेषां
स्थावरजंगमानां युष्मत्प्रजात्वात् । सर्वस्या अपि भूमेस्तवाधिकारात् । मम वस्तुं स्थानाभावात्संप्रति त्वदग्रे वर्त्तमानं त्वत्पादयोः पतितं मां प्रति स्वहस्तेनैव जहीति भावः । "राजा तु प्रणताशेषसामंतः स्यादधी

तन्मे धर्मभृतां श्रेष्ठ स्थानं निर्देष्टुमर्हसि ॥ यत्रैव नियतो वत्स्य आतिष्ठंस्तेऽनुशासनम् ॥ ३७ ॥ सूत उवाच ॥ अभ्यर्थितस्तदा तस्मै स्थानानि कलये ददौ ॥ द्यूतं पानं स्त्रियस्सूना यत्राधर्मश्चतुर्विधः ॥ ३८ ॥ पुनश्च याचमानाय जातरूपमदात्प्रभुः ॥ ततोऽनृतं मदं कामं रजो वैरं च पंचमम् ॥ ३९ ॥ अमूनि पंच स्थानानि ह्यधर्मप्रभवः कलिः ॥ औत्तरेयेण दत्तानि न्यवसत्तन्निदेशकृत् ॥४०॥ अथैतानि न सेवेत बुभूषुः पुरुषः क्वचित् ॥ विशेषतो धर्मशीलो राजा लोकपतिर्गुरुः ॥४१॥ वृषस्य नष्टांस्त्रीन्पादांस्तपः शौचं दयामिति ॥ प्रतिसंदध आश्वास्य महीं च समवर्धयत् ॥ ४२ ॥

तत्तस्मात् । नियतो निश्चलः । वत्स्ये वत्स्यामि ॥ ३७ ॥ पानं मद्यादेः । सूनाः प्राणिवधाः । द्युतेऽनृतम् । पाने मदः । पूर्वं मदो दयानाशकत्वेनोक्तोऽत्र तु गर्वद्वारा तपोनाशकत्वेन । स्त्रीषु संगः । हिंसायां क्रौर्यं दयानाशकमिति ज्ञेयम् । यद्यपि सर्वं सर्वत्र संभवति तथापि प्राधान्येनानृतादीनां द्युतादिषु यथासंख्यं ज्ञेयम् । द्वादशस्कंधे तु "सत्यं दया तपो दानमिति पादा विभोर्नृप" इत्यत्र दानशब्देन शौचमेवोक्तम्। मनःशुद्धिरूपत्वाद्भूताभयदानस्य । "त्रेतायां धर्मपादानां तुर्यांशो हीयते शनैः॥ अधर्मपादैरनृतहिंसासंतोषविग्रहैः" इत्यत्र चासंतोषशब्देन तस्य हेतुर्गर्वो लक्ष्यते विग्रहशब्देन च तद्धेतुः स्त्रीसंग इत्यविरोधः॥ ३८॥ चतुर्विधस्याप्येकत्रैवावस्थानं देहीति पुनर्याचमानाय जातरूपं सुवर्णं दत्तवान् । ततः सुवर्णदानादनृतं मदम् । काममिति स्त्रीषु संगम् । रज इति रजोमूलां हिंसाम्। एतानि चत्वारि पंचमं वैरं चाददादिति॥ ३९॥ औत्तरेयेण परीक्षिता अमून्यमीषु स्थानेषु न्यवसदित्यर्थः ॥४०॥ अथ इति हेतोः । बुभूषुरुद्भवितुमिच्छुः । स्त्रीसुवर्णयोरसेवनं नाम तयोरनासक्तिः ॥४१॥ एवं कलिं निगृह्य वृषस्य

श्वरः" इत्यमरः ॥ ३६ ॥ यतस्त्वं सार्वभौमः शरणागतं न हंसि तर्हि हे धर्मभृतां श्रेष्ठोऽसीति भावः । तथापि त्वदाज्ञया नियतस्थानमेव वत्स्यामीत्याह–स्थानं मे इति ॥ ३७ ॥ स्त्रियश्च विवाहितेतराः । प्राणिहिंसा यां तु चतुर्विध एवाधर्मः । न हि प्राणिहंतृषु तपः शौचं दया सत्यवचनं च सन्तीत्यर्थः । परमार्थस्तु सर्वथा त्याग एवेति ॥ ३८ ॥ भो राजन्नेतद्वृत्तांतं श्रुत्वा न कोपि द्यूतादिकमनुशीलयिष्यति । किञ्च प्रथमं मनसि मत्प्रवेशस्ततो लोकः प्रायो द्यूतादिकं भजते इति । ततश्च भवता दत्तमपि स्थानचतुष्कमदत्तमेवाभूत्तस्मात्किमपि स्थानमहं प्राप्नुयां यल्लोकैर्दुस्त्यजं स्यादिति याचमानाय कलये जातरूपं स्वर्णोपलक्षितं रजतादिकं द्रव्यमात्रमेव तद्वासत्वेनादात् । तत एव हेतोर्धनं वसु अनृतं मिथ्या । मदः पानादिजा मत्तता । कामः स्त्रीसंगः । रजो गर्व इति चतुर्विधोऽधर्मः तथा पञ्चमं वैरञ्च स्यात् । मदकामयोः क्लीबत्वमार्षम् । ततः स्थानपञ्चकप्राप्तेरनंतरम् । इत्यर्थ इति । "कालभावाध्वदेशानाम्" इत्यादिकारिकाबलादत्र कर्मत्वमिति भावः ॥ ३९॥ ४० ॥ गुरुः स्ववृत्तेन प्रजाशिक्षयिता धर्मोपदेष्टेत्यर्थः ॥ ४१ ॥ राजा तु तस्मिन्वंचनामेव कृतवान् यतो गते तस्मिंस्तत्तत्स्थानाभावमारचितवान् । जातरूपञ्च धर्मार्थं प्रयोजितवानित्यभिप्रेत्याह–वृषस्येति । पादस्य त्रिभिस्त्रिभिरंशैस्त्रीन्प्रति संदधे श्रीकृष्णभक्तिबलेनेति शेषः । साक्षात्तन्मूर्तेः संधानेन सर्वत्रापि प्रतिसंहितवान् तप आदि

स एष एतर्ह्यध्यास्त आसनं पार्थिवोचितम् ॥ पितामहेनोपन्यस्तं राज्ञाऽरण्यं विविक्षता॥४३॥आस्तेऽ धुना स राजर्षिः कौरवेंद्रः श्रियोल्लसन्॥
गजाह्वये महाभागश्चक्रवर्ती बृहच्छ्रवाः ॥ ४४ ॥ इत्थंभूतानुभावोऽयमभिमन्युसुतो नृपः ॥ यस्य पालयतः क्षोणीं यूयं सत्राय दीक्षिताः ॥ ४५ ॥
इति श्रीभा०महा०प्रथमस्कंधे कलिनिग्रहो नाम सप्तदशोऽध्यायः ॥१७॥ सूत उवाच ॥ यो वै द्रौण्यस्त्रविप्लुष्टो न मातुरुदरे मृतः ॥ अनुग्रहाद्भ
गवतः कृष्णस्याद्भुतकर्मणः ॥१॥ ब्रह्मकोपोत्थिताद्यस्तु तक्षकात्प्राणविप्लवात् ॥ न संमुमोहोरुभयाद्भगवत्यर्पिताशयः ॥२॥ उत्सृज्य सर्वतः संगं
विज्ञाताजितसंस्थितिः॥वैयासकेर्जहौ शिष्यो गंगायां स्वं कलेवरम् ॥ ३ ॥ नोत्तमश्लोकवार्तानां जुषतां तत्कथामृतम् ॥ स्यात्संभ्रमोऽतकालेऽ
पि स्मरतां तत्पदांबुजम् ॥ ४ ॥ तावत्कलिर्न प्रभवेत्प्रविष्टोपीह सर्वतः ॥ यावदीशो महानुर्व्यामाभिमन्यव एकराट् ॥ ५ ॥

पादान्प्रतिसंदधे तपआदीनि प्रवर्तितवानित्यर्थः ॥४२॥ युष्मदीयसत्रप्रवृत्तिरपि तत्प्रभावादेवेत्याह त्रिभिः । एतर्हीदानीं युधिष्ठिरेणारण्यं प्रवेष्टुमिच्छतोपन्यस्तं समर्पितमास
नमध्यास्ते । अधुना आस्ते पलायत इति वर्तमानसामीप्ये वर्तमानवन्निर्देशः स्मेत्यध्याहारो वा ॥४३॥४४॥ सत्राय सत्रं कर्तुं दीक्षिता दीक्षां कृतवंतः ॥४५॥ इति प्र०
टी० सप्तदशोऽध्यायः ॥ १७ ॥ राज्ञस्त्वष्टादशे तस्य ब्रह्मशापो निरूप्यते ॥ स चानुग्रह एवास्य जातो वैराग्यमावहन् ॥ १ ॥ परीक्षितो निर्याणमत्याश्चर्यं वक्तुं तत्संभाव
नाय जन्माश्चर्यमनुस्मारयति । यो वा इति । विप्लुष्टो निर्दग्धः सन् ॥ १ ॥ ब्रह्मकोपादुत्थितात्तक्षकाद्यः प्राणविप्लवः प्राणनाशस्तस्माद्यदुरुभयं तस्मान्न संमुमोह । तत्र हेतु
र्यस्तु भगवत्येवार्पिताशय इति ॥ २॥ किं तु । उत्सृज्येति । वैयासकेः शुकस्य शिष्यः सन् । विज्ञाताऽजितस्य हरेः संस्थितिस्तत्त्वं येन सः ॥ ३ ॥ न चैतच्चित्रमित्याह।
उत्तमश्लोकस्यैव वार्ता येष्वत एव नित्यं तत्कथारूपममृतं जुषतां संभ्रमो मोहो न स्यात् ॥ ४ ॥ तस्मिन् राज्ञि सुतरां तन्न चित्रमित्याशयेनाह । तावदिति । अभिमन्योः

प्रवर्त्तितवनिति भावः । सत्यं तत्प्रभावेण न तादृशं नष्टमिति तथोक्तम् ॥ ४२ ॥ अध्यास्त इति । आधिपूर्वाणां शीङ्स्थासामिति कर्मत्वम् । प्रभावेण वा स एष इति बुद्धिसन्निहितत्वात् ॥ ४३ ॥ ४४ ॥
सत्रमिदं बलदेवदृष्टादन्यज्ज्ञेयम् ॥ ४५ ॥ इति श्रीभागवतभावार्थदीपिकाप्रकाशे प्रथमस्कंधे सप्तदशोऽध्यायः ॥ १७ ॥ स च शापः अनुग्रहत्वे हेतुः वैराग्यमिति ( १ ) यः परीक्षित् मातुरुदरे: द्रौण्यस्त्रेण
विप्लुष्टोपि दग्धोपि श्रीकृष्णस्यानुग्रहान्नमृतः किं तु पुनर्जीवितं प्राप्त इत्यर्थः । सुभद्रादिप्रार्थनया श्रीकृष्णेन मृतो जीवित इति महाभारताविरोधः । श्रीकृष्णेन कथं जीवित इत्यत्राह–अद्भुतकर्मण
इति । अद्भुतकर्मत्वात्स मृतं जीवयेत् । जीवन्तं मारयेच्चेत्यर्थः ॥ १ ॥ अत्रासंमोहे भगवत्यर्पितचेतसामन्यवस्त्वनुसंधानं न भवति .। अनुसंधानहेतोश्चेतसोऽन्यत्र गमनाभावादित्यर्थः ॥ २ ॥
विज्ञातोऽनुभवगोचरीकृतोऽजितो विष्णुः संस्थितौ मरणकाले येन स तथेति वा ॥ ३ ॥ उत्तमश्लोकस्य वार्त्तैव वार्त्ता जीवनहेतुर्येषां मध्यमपदलोपी बहुव्रीहिर्वा । संभ्रमो भयं न । "संभ्रमः माध्वसेपि सात्संवेगा
दरयोरपि" इति मेदिनी । अत एवोत्तमश्लोकवार्त्तावत्त्वादेव । तच्छब्देन बुद्धिस्थ उत्तमश्लोक एव गृह्यत इत्याह–तत्कथामृतं श्रीकृष्णलीलामृतं सेवमानानाम् ॥ ४ ॥ मदीये राष्ट्रे न वर्त्तितव्यमित्यस्याभिप्रायः । कलेः
सामर्थ्यप्रकटनाभाव एव न तु प्रवेशनाभाव इति । किञ्च राज्ञा निगृहीतस्य कलेस्ततः परं कीदृक्स्थितिरभूदित्यपेक्षायामाह–तावदिति । एकराट् चक्रवर्त्ती पञ्चलक्षराजेंद्रशास्तेत्यर्थः । तदुक्तं ब्रह्मवैवर्त्ते "चतुर्योजनप

यस्मिन्नहनि यर्ह्येव भगवानुत्ससर्ज गाम् ॥ तदैवेहानुवृत्तोऽसावधर्मप्रभवः कलिः ॥६॥ नानुद्वेष्टि कलिं सम्राट् सारंग इव सारभुक् ॥ कुशलान्याशु सिध्यंति नेतराणि कृतानि यत् ॥७॥ किं नु बालेषु शूरेण कलिना धीरभीरुणा ॥ अप्रमत्तः प्रमत्तेषु यो वृको नृषु वर्तते॥८॥ उपवर्णितमेतद्वः पुण्यं पारीक्षितं मया ॥ वासुदेवकथोपेतमाख्यानं यदपृच्छत ॥९॥ यायाः कथा भगवतः कथनीयोरुकर्मणः ॥ गुणकर्माश्रयाः पुंभिः संसेव्यास्ता बुभूषुभिः ॥१०॥ ऋषय ऊचुः ॥ सूत जीव समाः सौम्य शाश्वतीर्विशदं यशः ॥ यस्त्वं शंससि कृष्णस्य मर्त्यानाममृतं हि नः ॥११॥ कर्मण्यस्मिन्ननाश्वासे धूमधूम्रात्मनां भवान् ॥ आपाययति गोविंदपादपद्मासवं मधु ॥ १२ ॥

पुत्र एकराट् चक्रवर्तीशः पतिर्यावत् ॥ ५ ॥ ननु तदा कलेरप्रवेश एवास्तु प्रविष्टोऽपि न प्राभवदिति कुतस्तत्राह । यस्मिन्नहनि यर्हि यस्मिन्नेव क्षणे गां पृथ्वीमनुवृत्तः प्रविष्टः । अधर्मस्य प्रभवो यस्मिन् ॥ ६ ॥ नन्वधर्महेतुं कलिं सर्वथा किं न हतवांस्तत्राह । नानुद्वेष्टीति । सारंगो भ्रमर इव सारग्राही । सारमाह । यद्यस्मिन्कुशलानि पुण्यान्याशु संकल्पमात्रेण फलंति इतराणि पापान्याशु न सिद्ध्यंति यतस्तानि कृतान्येव सिद्ध्यंति न तु संकल्पितमात्राणीति ॥ ७ ॥ ननु दोषाधिक्याद्द्वेष एव युक्तः । न धीरेषु तस्याकिंचित्करत्वादित्याह । किं न्विति । किं नु तेन भवेत् । बालेष्वधीरेषु अप्रमत्तोऽवहितः सन्यो वृक इव वर्तते ॥ ८ ॥ पारीक्षितमाख्यानमपृच्छत पृष्टवंतो यूयम् ॥ ९ ॥ किं बहुना नैरेतावदेव कर्तव्यमिति सर्वशास्त्रार्थसारं कथयति । याया इति । कथनीयान्युरूणि कर्माणि यस्य तस्य गुणकर्मविषयः बुभूषुभिः सद्भावमिच्छद्भिः ॥ १० ॥ पुनर्विस्तरेण कथनार्थं सूतोक्तिं तत्संगं चाभिनंदति । सूतेति त्रिभिः । शाश्वतीः समा अनंतान्वत्सरान् जीव । अत्यंतसंयोगे द्वितीया । विशुद्धं यशः कीर्तयसि । तच्चास्माकं मर्त्यानाममृतं मरणनिवर्तकम् ॥ ११ ॥ किं च । अस्मिन्कर्मणि सत्रेऽनाश्वासेऽविश्वनीये वैगुण्यबाहुल्येन फलनिश्चयाभावात् धूमेन धूम्रो विवर्ण आत्मा

यैतं शासिता नृप ईरितः । तस्माच्छतगुणो यो हि स ज्ञेयो मंडलेश्वरः ॥ तस्माद्दशगुणो यश्च राजेंद्रः स प्रकीर्त्तितः । राजेंद्राणां पंचलक्षं चक्रवर्ती प्रशास्ति यः ॥" इति । न प्रभवेदिति । दत्तानामपि स्थानानां तत्प्रभावेणानुद्भवात् ॥ ५ ॥ ६ ॥ अत्राक्षिपति–नन्विति । कुशलानीति । "लोको विकर्मनिरतः कुशले प्रमत्तः" इत्याद्यनुसारेण सर्वमंगलमयानि भगवत्कीर्त्तनादीनि सिद्ध्यंत्येव ।"कलिं सभाजयन्त्यार्याः" इत्यादेः "कृष्णचरितं कलिकल्मषघ्नम्" इत्यादेः "श्रुतोनुपाठितो ध्यातः" इत्यादेः "सद्यो हृद्यवरुध्यतेत्र कृतिभिः शुश्रूषुभिः" इत्यादेः "यस्यां वै श्रूयमाणायाम् " इत्यादेश्च । इतराणि तु कृतान्यपि न सिध्यंति "अतः कलौ तपोयोगविद्यायज्ञादिकाः क्रियाः । सांगा भवंति न कृताः कुशलैरपि देहिभिः " इति ब्रह्मवैवर्त्तात् । अतो महाफलानां तत्कीर्त्तनादीनां सिद्धिश्चेन्मा सिद्ध्यंतु नाम तुच्छफलान्यन्यानीति तदभिप्रायः ॥ ७ ॥ पुनराक्षिपति नन्विति । धीरेषु विवेकिषु "धीरः स्यात्रिषु पंडितः" इति मेदिनी । वृक इति । लुप्तोपमा ॥ ८ ॥ ९ ॥ बुभूषुभिः सद्भावं स्वसत्तामिच्छद्भिः । अन्यथा जीवन्मृतत्वं स्यादिति भावः ॥ १० ॥ सूत इति । सुवति प्रेरयति कथाश्रावणेन भगवद्धर्मे इति सूतपदस्यान्वर्थतां द्योतयंतस्तथा सौम्येति तस्य सुहृत्तां च तस्य कथाकथने उत्साहं वर्द्धयामासुरिति भावः । अमृतं मोक्षसाधनम् ॥ ११ ॥ फलानिश्चयेन कृषिवत्त्वम् । तेन भक्तेर्विश्वसनीयत्वं ध्वनितम् । अत्र सत्रवत्कर्मांतरं यशःश्रवणवद्भक्त्यंतरं च ज्ञेयम् । तदेवं भक्तिं विना कर्मादिभिरस्माकं दुःखमेवासीदिति व्यतिरेकित्वमत्र गम्यते । तदुक्तं "यशःश्रियामेव परिश्रमः परः" इत्यादि । "अतो वै

तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ॥ भगवत्संगिसंगस्य मर्त्यानां किमुताशिषः ॥ १३ ॥ को नाम तृप्येद्रसवित्कथायां महत्तमैकांतपरा
यणस्य ॥ नांऽतं गुणानामगुणस्य जग्मुर्योगेश्वरा ये भवपाद्ममुख्याः ॥ १४ ॥ तन्नो भवान्वै भगवत्प्रधानो महत्तमैकांतपरायणस्य ॥ हरेरुदारं
चरितं विशुद्धं शुश्रूषतां नो वितनोतु विद्वन् ॥ १५ ॥ स वै महाभा गवतः परीक्षिद्येनाऽपवर्गाख्यमदभ्रबुद्धिः ॥ ज्ञानेन वैयासकिशब्दितेन भेजे
खगेंद्रध्वजपादमूलम् ॥ १६ ॥

शरीरं येषां तानस्मान् । कर्मणि षष्ठी । आसवं मकरंदम् । मधु मधुरम् ॥ १२ ॥ भगवत्संगिनो विष्णुभक्तास्तेषां संगस्य यो लवोऽत्यल्पः कालस्तेनापि स्वर्गं न तुलयाम
समं न पश्याम न चापवर्गम् । संभावनायां लोट् । मर्त्यानां तुच्छा आशिषो राज्याद्या न तुलयामेति किमु वक्तव्यम् ॥ १३ ॥ एवं सत्संगमभिनंद्य श्रवणौत्सुक्यमावि
ष्कुर्वंति । को नामेति । रसविद्रसज्ञः । महत्तमानामेकांतेन परमयनमाश्रयो यस्तस्य कथायाम् । अगुणस्य प्राकृतगुणरहितस्य । कल्याणगुणानामंतं ये योगेश्वरास्तेऽपि
न जग्मुरेतावंत इति न परिगणयांचक्रुः । भवः शिवः पाद्मो ब्रह्मा च मुख्यौ येषां ते ॥ १४ ॥ नोऽस्माकं मध्ये भगवान्प्रधानं सेव्यो यस्य स भवान्नः शुश्रूषतां हरेश्च
रितं विस्तारयतु ॥ १५ ॥ तच्च शुकपरीक्षित्संवादेन कथयेत्याहुः । स वा इति द्वाभ्याम् । वैयासकिना श्रीशुकेन शब्दितेन कथितेन येन ज्ञानेन ज्ञानसाधनेनापवर्गं इत्या

कवयो नित्यम्'' इत्यादि च । ब्रह्मवैवर्त्ते च श्रीशिवं प्रति विष्णुवाक्यम् ''यदि मां प्राप्तुमिच्छंति प्राप्नुवंत्येव नान्यथा । कलौ कलुषचित्तानां वृथायुःप्रभृतीनि च ॥ भवंति वर्णाश्रमिणां न तु मच्छरणार्थिनाम् ।''
इति । भक्तेः साक्षात्फलदत्वमाह--मकरंदरूपं मधुमादकमिति । तदितरसर्वसुखदुःखाननुभवात् । प्रतिक्षणं तदीयस्वादुत्वानुभवाच्च ॥ १२ ॥ तस्मात्तादृशसाधुसंगमहानिधेर्माहात्म्यमस्मदनुभव
गोचरीकृतं कियद्ब्रूम इत्याहुः । स्वर्गं कर्मफलमपवर्गं ज्ञानफलं च । यतः साधुसंगेन परमदुर्लभाया भक्तेरंकुरो हृदि उद्भवतीति भावः । तत्र भक्तेः साधनस्यापि साधुसंगलवेनापि कर्मज्ञानादेः फलं संपूर्णमपि
न तुलयाम किमुत बहुकालव्यापिना साधुसंगेन किमुततरां तत्फलभूतया भक्त्या किमुततमां भक्तिफलेन प्रेम्णेति च कैमुत्यातिशयो द्योतितो भवति । तथात्र संभावनार्थलोटा तोलने संभावनामेव
न कुर्मः । न हि मेरुणा सर्षपं कश्चित्तुलयतीति द्योत्यते । बहुवचनेन बहूनां संमत्या नैषोर्थः केनचिदप्रमाणीकर्त्तुं शक्यत इति व्यज्यते । ''भगवत्संगिसंगस्य'' इत्यनेन ''न तथास्य भवेत्क्लेशो बन्धश्चान्यप्रसंगतः ।
योषित्संगाद्यथा पुंसस्तथा तत्संगिसंगतः'' इति योषित्संगादपि योषित्संगिनां यथा संगोऽतिनिंद्य उक्तस्तथैव भगवत्संगादपि भगवत्संगिनां संगोऽतिप्रशस्य इत्यभिलषणीय इति बोध्यते ॥ १३ ॥ ननु सत्यमेवं
प्रशस्यते साधुसंगो यतस्तं विना श्रीकृष्णकथास्वादो न लभ्यते स युष्माभिर्लब्ध एवेति किं पुनस्तस्यैव पौनःपुन्येनेत्यत आह—क इति । कः तृप्येदिति महामाधुर्यमुक्तम् । महैश्वर्यमाह—नान्तमिति । परायाः सर्वोत्कृष्ट
शक्तेर्वाऽयनस्य ''परास्य शक्तिर्विविधैव श्रूयते'' इत्यादिश्रुतेः । यद्वा को ब्रह्मा नामेतिप्रसिद्धम् । तृप्येन्नेत्यर्थः । यद्वा न कोपीत्यर्थः ॥ १४ ॥ यतोऽलंबुद्धिर्नास्ति तत्तस्माद्धेतोः । हे विद्वन्निति । सर्वथा ज्ञानवानसि
त्वं वक्तुं समर्थ एवेति भावः । भगवतां सौभाग्यवतां पुंसां मध्ये प्रधानो भवान् उदारं चतुर्वर्गप्रदं शुद्धं मायातीतम् । महतां ब्रह्मादीनामतिशयेन श्रेष्ठो महत्तमः एक एवान्ते प्रलये यः स एकांतः । यद्वांते एक एकांतः ।
राजदन्तादित्वत्समासः । पराणां मुक्तानामाश्रयो विचाराधारः महत्तमश्चासावेकांतश्चेति महत्तमैकांतः स चासौ परायणश्चेति तथा तस्य । शुश्रूषतामिति स्वेषां श्रवणौत्कंठ्यमुक्तम् ॥ १५ ॥ हरेरुदारचरितानामानंत्या

तन्नः परं पुण्यमसंवृतार्थमाख्यानमत्यद्भुतयोगनिष्ठम् ॥ आख्याह्यनंताचरितोपपन्नं पारीक्षितं भागवताभिरामम् ॥ १७ ॥ सूत उवाच ॥ अहो वयं जन्मभृतोऽद्य हास्मद्वृद्धानुवृत्त्याऽपि विलोमजाताः ॥ दौष्कुल्यमाधिं विधुनोति शीघ्रं महत्तमानामभिधानयोगः ॥ १८ ॥ कुतः पुनर्गृणतो नाम तस्य महत्तमैकांतपरायणस्य ॥ योनंतशक्तिर्भगवाननंतो महद्गुणत्वाद्यमनंतमाहुः ॥ १९ ॥

ख्या यस्य तत् । खगेंद्रध्वजस्य हरेः पादमूलं भेजे ॥ १६ ॥ तदसंवृतार्थं यथा तथा आख्याहि । तदेव निर्दिशंति । परीक्षिते कथितं पारीक्षितमाख्यानं श्रीभागवतं पुराणम् । परं पुण्यं सत्त्वशोधकम् । अत्यद्भुते योगे निष्ठा यस्य । अनंतास्यचरितैरुपपन्नं युक्तम् । अत एव भागवतानामभिरामं प्रियम् एतैर्विशेषणैः कर्मज्ञानभक्तियोगप्रकाशकत्वं दर्शितम् ॥ १७ ॥ श्रीभागवतव्याख्याने लब्धप्रसंगं महतामादरपात्रमात्मानं श्लाघते द्वाभ्याम् । अहो इत्याश्चर्ये । ह इति हर्षे । वयमिति । बहुवचनं श्लाघायाम् । प्रतिलोमजा अप्यद्य जन्मभृतः सफलजन्मान आजाताः । वृद्धानामनुवृत्त्या आदरेण । ज्ञानवृद्धः शुकस्तस्य सेवयेति वा । यतो दुष्कुलत्वं तन्निमित्तमाधिं च मनःपीडां महत्तमानामभिधानयोगो लौकिकोऽपि संभाषणलक्षणः संबंधो विधुनोत्यपनयति ॥ १८ ॥ कुतः पुनः किं पुनर्वक्तव्यं तस्यानंतस्य नाम गृणतः पुंसो महत्तमानामभिधानयोगो दौष्कुल्यं विधुनोतीति । यद्वा । नाम गृणतः पुनः कुतो दौष्कुल्यमिति । यद्वा । गृणतः पुंसस्तस्य नाम दौष्कुल्यं विधुनोतीति किं वक्तव्यमिति कैमुत्यन्या

तेषां मध्ये किं वक्ष्यामीति प्रश्नो माभूदिति स्वाभिलषितचरितमित्याहुः । तन्नेति । तीर्थेणेदमेव पद्यं पूर्वं पठितमित्याह—ननु ज्ञानादेव मोक्ष इति । ज्ञानाय तत्फलाय मोक्षाय च कथं न स्पृहयथेति चेदस्माकं भक्तानां भगवच्चरितास्वादनं ज्ञानं तत्फलं भगवत्पदप्राप्तिरेव मोक्ष इति परीक्षिद्दृष्टैवाहुः । तच्चरितं भवान्वितनोतु येन स वै परीक्षित्खगेंद्रध्वजस्य भगवतः पादमूलं प्राप । ननु द्वादशस्कंधे परीक्षिदपवर्गं प्रापेति प्रसिद्धेः सत्यम् । अपवर्ग इत्याख्या यस्य तद्भक्तैर्भगवत्पादमूलमेवापवर्ग इत्युच्यते । वक्ष्यते च पंचमस्कन्धे "यथावर्णविधानमपवर्गश्च भवति योऽसौ भगवति भक्तियोगः" इति । येन कथंभूतेन । वैयासकिशब्दितेन । यथैव तत्पादमूलमपवर्गशब्देनोच्यते तथैव तच्चरितमपि ज्ञानशब्देन वैयासकिनोच्यते । अतो ज्ञानेन परीक्षिदपवर्गं प्रापेति प्रसिद्धिर्नानृतेत्यर्थः । एतेन "स प्रेत्य गतवान्यथा" । इति प्रश्नस्योत्तरमुक्तम् ॥ १६ ॥ असंवृतार्थमनाच्छादितार्थं परमित्यत्रावांतरतात्पर्येण धर्मज्ञानप्रकाशकत्वेपि मुख्यतात्पर्येण भक्तेरेव प्रकाशकत्वमाह—भागवताभिराममिति । अत एव प्रागुक्तम् "स वै महाभागवतः" इत्यादि । यद्वा परं पुण्यं परमशोधकं यतोऽत्यद्भुतयोगे भक्तियोगे निष्ठा तात्पर्यं यस्य तत् । अनंतस्य हरेराचरितानि लीलास्तैरुपपन्नं युक्तम् ॥ १७ ॥ तादृशब्रह्मर्षीन्प्रति स्वयं तादृशमहापुराणमुपदेष्टुं संकुचंस्तत्र तन्महिमानमेवावलंबते । अहो इति युग्मेन । विलोमजाताः सूतशब्दप्रयोगात् । अनुवृत्त्या सेवया स्वीकारेण वा ॥ १८ ॥ महत्तमाभिधानयोगस्याधिक्यकथनेन नाम्नो न्यूनरतामाशंक्याह—यद्वेति । कर्मापेक्षया कर्तुरेव मुख्यत्वमतो नाम्नः कर्तृतामाह—यद्वेति । ननु दौष्कुल्यारंभकं पापं प्रारब्धमेव तस्य नाशं विना कथं दौष्कुल्यधूननम् । प्रारब्धस्य तु भोगेनैव नाश इति प्रसिद्धेः । नामतः कथं खण्डयतीत्यत आह—यो भगवाननंतशक्तिरिति । शक्तीनामानंत्याद्भक्तप्रारब्धखंडिन्यपि काचित्तस्य शक्तिरस्त्येवेति भावः । तथा च महत्सु स्वभक्तेषु गुणा यस्य स महद्गुणा यस्य तस्य भावस्तस्मात् । यमनंतमाहुरिति । तेन स्वभक्तेषु तदीयगुणसंक्रमात्तस्मिन्निव तद्भक्तेष्वपि प्रारब्धं न तिष्ठति महान्तोऽनंता गुणा अप्राकृता भक्तवात्सल्यादयो यस्य तस्य भावस्तत्त्वं तस्मादिति वा । अत्र महच्छब्दो ह्यानंत्ये वर्तते । "महती वल्लकीभेदे प्राज्ये तु स्यान्नपुंसकम्" इति मेदिनी । प्राज्यप्रभूताधिकबहलानंतशब्दाः

एतावताऽलं ननु सूचितेन गुणैरसाम्यानतिशायनस्य ॥ हित्वेतरान्प्रार्थयतो विभूतिर्यस्यांघ्रिरेणुं जुषतेऽनभीप्सोः ॥ २० ॥ अथापि यत्पादनखावसृष्टं जगद्विरिंचोपहृतार्हणांभः ॥ सेशं पुनात्यन्यतमो मुकुंदात्को नाम लोके भगवत्पदार्थः ॥२१॥ यत्रानुरक्ताः सहसैव धीरा व्यपोह्य देहादिषु संगमूढम् ॥ व्रजंति यत्पारमहंस्यमंत्यं यस्मिन्नहिंसोपशमः स्वधर्मः ॥ २२ ॥ अहं हि पृष्टोऽर्यमणो भवद्भिराचक्ष आत्मावगमोऽत्र यावान् ॥ नभः पतंत्यात्मसमं पतत्रिणस्तथा समं विष्णुगतिं विपश्चितः ॥ २३ ॥

यमेवाह । अनंताः शक्तयो यस्य । स्वतोऽप्यनंतः । किं च । महत्सु गुणा यस्य स महद्गुणस्तस्य भावस्तस्मात् । यं गुणतोऽप्यनंतमाहुः ॥१९॥ एतत्प्रपंचयति त्रिभिः । एतावतेति । तस्य यदसाम्यमनतिशायनं च गुणैस्तत्साम्यं तदाधिक्यं चान्यस्य नास्तीत्यस्यार्थस्य ज्ञानमेतावता सूचितेनालं पर्याप्तं कस्तद्विस्तरतो वक्तुं शक्नोति । तदेवाह। इतरान्ब्रह्मादीन्प्रार्थयमानान् हित्वा विभूतिर्लक्ष्मीरनभीप्सोरपि यस्यांघ्रिरेणुं सेवत इति ॥ २० ॥ अथेत्यर्थांतरे । यस्य पादनखादवसृष्टं निसृतमपि विरिंचेनोपहृतं समर्पितमर्हणांभोऽर्घोदकमीशसहितं जगत्पुनाति । विरिंचोपहृतं सेशमिति च तयोरप्युपासकत्वमुक्तम् । तस्मान्मुकुंदव्यतिरिक्तः को नाम भगवत्पदस्यार्थः स एव सर्वेश्वर इत्यर्थः ॥ २१ ॥ धीराः संतः । ऊढं धृतम् । अंत्यं परमकाष्ठापन्नम् । तदाह । यस्मिन्नहिंसोपशमश्च स्वाभाविको धर्मः ॥ २२ ॥ एवं स्वभाग्यमभिनंद्य पारीक्षितोपाख्यानं वक्तुमाह । अहं हीति । हे अर्यमणो हे सूर्यास्त्रयीमूर्तयोऽत्र यावानात्मावगमो मम ज्ञानं तावदाचक्षे प्रवक्ष्यामि । तथा हि । यथा पक्षिणो नभ आत्मसमं स्वशक्त्यनुरूपमेवो

पर्यायाः ॥ १९ ॥ एतन्महद्गुणत्वम् । ननु ते के गुणास्तत्र तान्वक्तुं कः शक्नोति किन्त्वेतावता सूचितेनालम् । तदेव सूचितमेव । अयं भावः—यद्गुणमाधुर्य्यमोहिता सती श्रीर्ब्रह्मादीन्महद्गुणानपीच्छतोपि त्यक्त्वा यमनिच्छन्तमपि स्वयमेव तत्पादरजो जुषते । एतेनैव विष्णुस्सर्वेभ्योधिकगुण इति ध्वनितम् ॥ २० ॥ अर्थांतरमाह—यस्य वामनावतारे पादनखाद्वामपादनखनिर्भेदनान्निःसृतं ब्रह्मद्रवं ब्रह्मणा स्वकमंडलौ धृत्वार्घीकृतं यज्जलं तदेव महादेवेन स्वशिरसि धृतं पुनर्भूम्यागतं गंगाभूदिति । तदुक्तं "आदावादिपितामहस्य नियमव्यापारपात्रे जलं पश्चात्पन्नगशायिनो भगवतः पादोदकं पावनम् । भूयः शंभुजटाविभूषणमणिर्जह्नोर्महर्षेरियं कन्या किल्बिषनाशिनी विजयते भागीरथी पावनी" इति भगवत्पूज्यपादैः वाल्मीकीयादौ च स्पष्टतरं प्रतिपादितमेतत् । इत्यर्थ इति । जगति सर्वोत्कृष्टा लक्ष्मी ब्रह्मशिवा एव तत्पदं सेवमानास्तस्य महोत्कर्षं सूचयंतीति वाक्यार्थः ॥ २१ ॥ अथ दृश्यमाना मनीषिणोप्यत्र प्रमाणमित्याह—यत्रेति । यत्र मुकुन्दे स्मरणादिना मुक्तिप्रदे यद्यस्य पारमहंस्यं भागवतपरमहंसत्वं "मुक्तानामपि सिद्धानां नारायणपरायणः । सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने" इत्युक्तेः । यस्मिन् यदर्थम् । अहिंसया मात्सर्यादिराहित्येनोपशमो भगवन्निष्ठा विधीयत इत्यर्थः । यस्मिन्यजने इति चक्रवर्ती । तीर्थस्तु धीराः विषयवार्त्तानिवृत्तायां धियि रताः संतो देहात्मजवित्तादिषूढं संगमासक्तिं सहसा विमर्शज्ञानेन निरस्य परमहंसाश्रमप्राप्यमन्त्यं सर्वावधिभूतं मुकुंदाख्यं ब्रह्म व्रजंति यस्मिन्परमहंसाश्रमेऽहिंसा विहितातिरिक्तहिंसावर्जनमुपरमः । उं रुद्रं पाति पिबति संहरति वेत्युपो विष्णुः सर्वाधिकस्तत्र हरौ रमो रमणं रतिर्विषयनिवृत्तिर्वा धर्मो विहित इति शेषः । एतेन मुक्तिदातृत्वेनापि सर्वोत्कर्षो हरेरेवासूचीति ॥ २२ ॥ आख्याहीति शौनकप्रश्नोत्तरं वक्ति—हे अर्यमण इति । अर्यं शुद्धधर्मं मीयते ज्ञायतेऽनेनेत्यर्यमा वेदः, अर्यं तमो मिनोति प्रक्षिपतीत्यर्यमा सूर्यो वा । "अर्यश्चंद्रे रवौ वैश्ये रजताम्नाययोरपि । तमसि स्वामिनि श्रेष्ठे पुंस्त्वाद्यस्य तु लोकतः" इति निरुक्तिः । यूयं साक्षात्सूर्यरूपा एव भवतामग्रेऽहं ज्योतिरिंगणवत्कि

एकदा धनुरुद्यम्य विचरन्मृगयां वने ॥ मृगाननुगतः श्रांतः क्षुधितस्तृषितो भृशम् ॥ २४ ॥ जलाशयमचक्षाणः प्रविवेश तमाश्रमम् ॥ ददर्श मुनिमासीनं शांतं मीलितलोचनम् ॥ २५ ॥ प्रतिरुद्धेंद्रियप्राणमनोबुद्धिमुपारतम् ॥ स्थानत्रयात्परं प्राप्तं ब्रह्मभूतमविक्रियम् ॥ २६ ॥ विप्रकीर्णजटाच्छन्नं रौरवेणाजिनेन च ॥ विशुष्यत्तालुरुदकं तथाभूतमयाचत ॥ २७ ॥ अलब्धतृणभूम्यादिरसंप्राप्ताऽर्घसूनृतः ॥ अवज्ञातमिवात्मानं मन्यमानश्चुकोप ह ॥ २८ ॥ अभूतपूर्वः सहसा क्षुत्तृड्भ्यामर्दितात्मनः ॥ ब्राह्मणं प्रत्यभूद्ब्रह्मन्मत्सरो मन्युरेव च ॥ २९ ॥

त्पतंति न कृत्स्नं तथा विपश्चितोऽपि विष्णोर्गतिं लीलां समम् स्वमत्यनुरूपमेव वदंतीत्यर्थः ॥ २३ ॥ संप्रति कथामुपक्षिपति । एकदेति ॥ २४ ॥ अचक्षाणोऽपश्यन् । तं प्रसिद्धमाश्रमम् । तस्मिंश्च मुनिं शमीकम् ॥ २५ ॥ प्रतिरुद्धाः प्रत्याहृता इंद्रियादयो येन तम् । अत एवोपरतम् । स्थानत्रयाज्जाग्रदादिलक्षणात्परं तुरीयं पदं प्राप्तम् । अत एव ब्रह्मभूतत्वादविक्रियम् ॥ २६ ॥ विप्रकीर्णाभिर्जटाभिराच्छन्नम् । रुरुर्मृगविशेषस्तस्य चर्मणा चाच्छन्नम् । विशेषेण शुष्यत्तालु यस्य सः । तथाभूतं मुनिमुदकमयाचत ॥२७॥ न लब्धं तृणं तृणासनं भूम्याद्युपवेशस्थानं च येन सः । न संप्राप्तोऽर्घः सूनृतं प्रियवचनं च येन सः ॥२८॥ मत्सरस्तदुत्कर्षासहनम् ॥२९॥

प्रकाशयितुं समर्थः । यद्वा सर्वदा वेदाभ्यासततपरत्वात्तद्रूपा यूयमहं तद्वक्तुं श्रोतुं वाप्यनधिकारित्वाद्भवदग्रे किं वदामि तथापि भवदाज्ञया गुरुप्रसादावाप्तं किंचिद्वदिष्याम्येवेति भावः । इत्यर्थ इति । भगवद्गुणानामानन्त्यात्स्वात्मना ज्ञातुं तु न कोपीशः । पक्षिणो हि स्वशक्त्यनुसारेण पतंति नभसि गच्छंति । शक्त्यभावादेवोपरमंति न नभोवसानात्तस्यानंतत्वात्तदंतं न तेऽवाप्नुवंति यथा तथा । ब्रह्मप्रभृतिज्ञानिनोपि स्वमत्यनुसारमेव विष्णुगुणगानं कुर्वंतः शक्त्यभावादुपरमंति न गुणावसानात्तेषामानंत्यादिति भावः ॥ २३ ॥ अथ भगवानेव स्वपार्श्वे नेतुं ब्रह्मशापद्वारा तं विरक्तं संपादितवांस्तत्र च श्रीभागवतं प्रकाशितवानिति वक्तुं तच्चरितांतरमाह—एकदेति । धनुरुद्यम्य सज्यं कृत्वा प्रगृह्य मृगयामुद्दिश्य वने विचरन् ॥ २४ ॥ स परीक्षित् आश्रममालस्यपरिहारकारणं स्थानं विवेशेत्यन्वयः । शांतमसंप्रज्ञातसमाधिस्थम् । समाधिर्हि द्विधा संप्रज्ञातासंप्रज्ञातभेदात् । एकरसवस्तुमात्रत्वेन चित्तस्य तदाकारवृत्तिविशेषावस्थानं संप्रज्ञानसमाधिः । स एव सविकल्पक इति चोच्यते । स च पुनर्दृश्यानुविद्धः शब्दानुविद्धश्चेति द्विविधः । दृश्यमिश्रो दृश्यानुविद्धः शब्दमिश्रः शब्दानुविद्धः । वृत्तिमप्यखंडैकरसमात्रत्वेनोपसंहृत्य वृत्तिमताश्चित्तस्य प्रयत्नपूर्वकं वस्तुमात्रत्वेनावस्थानमसंप्रसातसमाधिः । स एव निर्विकल्पक इति च गीयते । दृश्यानुविद्धशब्दानुविद्धनिर्विकल्पकसमाधय एव बाह्याभ्यंतरभेदेन षट् समाधय इति व्यवह्रियंते । सत्त्वरजस्तमोगुणात्मिकाः शांतघोरमूढवृत्तयः । तत्र शांतः सुखमौदार्यं वैराग्यञ्च, घोरस्तु कामः क्रोधो लोभस्तृष्णा मूढो मोहो भ्रांतिः । एतासां वृत्तीनां हृदये यत्स्फुरणं तद्दृश्यं तस्य द्रष्टा साक्षी अनुस्यूतोहमिति दृश्यानुविद्ध आंतरीयसविकल्पकसमाधिः १, वृत्तीनां त्रिगुणात्मकत्वादसंगोहमिति शब्दानुविद्धम् आंतरीयसविकल्पकसमाधिः २, हृदये एतयोर्विकल्पयोरस्फुरणमसंप्रज्ञातसमाधिः ३, स एव निर्विकल्प इति चोच्यते। अथ बाह्यसूर्यादिकस्य द्रष्टा साक्षी अनुस्यूतोहमिति दृश्यानुविद्धो बाह्यसविकल्पकसमाधिः ४, सूर्यादिकादसंगोहमिति शब्दानुविद्धो बाह्यसविकल्पकः ५, एतदुभयाविकल्पास्फुरणाद्बाह्यनिर्विकल्पकसमाधिरिति ६, ॥२५॥ अत एव तुरीयपदप्राप्तत्वादेव अविक्रियं निश्चेष्टम् ॥ २६ ॥ आच्छन्नमिति । सापेक्षत्वात्समासांतर्गतमप्याकृष्यते रौरवेणाच्छन्नमिति । पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति न्यायस्तु न नियतस्तदपवादभूतेन व्यक्तिन्यायेन तद्बाधात् । स्वीक्रियते हि जातिविशिष्टव्यक्तौ शब्दशक्तिमुपगच्छद्भिरपि तार्किकैर्गौरनित्येत्यादौ पदार्थैकदेशस्यापि व्यक्तेरनित्यत्वाद्यन्वयः । तत्सूत्रं च "जातिव्यक्त्याकृतयः पदार्थः" इह जात्यादित्रयस्यैव पदार्थत्वं विहितं न त्वेकैकस्येति । वस्तुतस्तु साकांक्षत्वनिराकांक्षत्वे एवान्वयानन्वयप्रयोजके न तु पदार्थतदेकदेशत्वे अपत्यिलं प्रसक्तानुप्रसक्त्या । तथाभूतं पूर्वोक्तशांतादिविशेषणविशिष्टम् ॥ २७ ॥ आदिना स्वागतादिग्रहः । "तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता । एतान्यपि सतां गेहे नोच्छिद्यंते कदाचन" इति स्मृतेः ॥ २८ ॥ अभूतपूर्व इतः पूर्वं कदापि नोत्पन्नः तदुत्कर्षासहनमहो मद्राज्यस्थापि मत्प्रजा भूत्वा मां न सत्करो

स तु ब्रह्मऋषेरंसे गतासुमुरगं रुषा ॥ विनिर्गच्छन्धनुष्कोट्या निधाय पुरमागमत् ॥३०॥ एष किं निभृताशेषकरणो मीलितेक्षणः ॥ मृषासमा
धिराहोस्वित्किं न स्यात्क्षत्रबंधुभिः ॥ ३१ ॥ तस्य पुत्रोऽतितेजस्वी विहरन्बालकोऽर्भकैः ॥ राज्ञाऽघं प्रापितं तातं श्रुत्वा तत्रेदमब्रवीत् ॥ ३२॥
अहो अधर्मः पालानां पीव्नां बलिभुजामिव ॥ स्वामिन्यघं यद्दासानां द्वारपानां शुनामिव ॥ ३३ ॥ ब्राह्मणैः क्षत्रबंधुर्हि द्वारपालो निरूपितः॥
स कथं तद्गृहे द्वाःस्थः सभांडं भोक्तुमर्हति ॥ ३४ ॥ कृष्णे गते भगवति शास्तर्युत्पथगामिनाम् ॥ तद्भिन्नसेतूनद्याहं शास्मि पश्यत मे बलम् ॥
॥ ३५ ॥ इत्युक्त्वा रोषताम्राक्षो वयस्यानृषिबालकान् ॥ कौशिक्याऽप उपस्पृश्य वाग्वज्रं विससर्ज ह ॥ ३६ ॥

गतासुं मृतम् ॥ धनुष्कोट्या चापाग्रेण ॥ ३०॥ सर्पनिधाने राज्ञोऽभिप्रायमाह । एष किं प्रत्याहृतसर्वेंद्रियः सन्मीलितेक्षणः स्थितो यद्वा क्षत्रबंधुभिरागतैर्गतैर्वा किं नु स्या
दित्यवज्ञया मृषासमाधिः सन्निति जिज्ञासयेत्यर्थः ॥ ३१ ॥ तस्य पुत्रः शृंगीनामा । अतितेजस्वी तपोबलसंपन्नः । अघं दुःखम् । तत्रार्भकमध्ये ॥ ३२ ॥ पालानां
राज्ञाम् । पीव्नां पुष्टानाम् । अधर्ममेव निर्दिशति स्वामिनि दासानां यदघं पापाचरणं बलिभुजां काकानामिव शुनामिव चेति ॥ ३३ ॥ दासत्वं दर्शयति । ब्राह्मणैरिति ।
सभांडं भांडे एव स्थितम् ॥ ३४ ॥ तत्तदनंतरम् । अहं शास्मि दंडयामि ॥ ३५ ॥ इति वयस्यानुक्त्वा रोषेण ताम्रे अक्षिणी यस्य सः । कौशिकी नदी तस्या अपः

त्ययमित्येवंलक्षणम् ॥ २९ ॥ निधायेति । भो ब्रह्मंस्त्वयाहमतिथिर्यथा साधु संमानितस्तथा त्वामप्यनया सुकुमारमालया संमानयामीति वदन्निति भावः ॥ ३० ॥ निर्गमनसमये राजापरामृशाति—एष इति । निभृताशेष
करणः प्रत्याहृतसर्वेंद्रियः । अतः सत्यसमाधिकः आहोस्विन्मृषासमाधिस्तत्र हेतुः—किं न्विति । अत्र राज्ञो विकर्मेदमभाग्योत्थं न ज्ञेयं किन्तु तं शीघ्रं स्वपार्श्वे नेतुं ब्रह्मशापद्वारा विरक्तं विधाय शुकदेवेन संगतं कृत्वा
तत्र श्रीभागवतस्वरूपेण स्वयमाविर्भूय जगदुद्धर्त्तुं च कलौ जनिष्यमाणानपि कांश्चन भक्तान्स्वकृतं राससलिाद्यास्वादायितुं च भगवत एवेयमिच्छेति मनीषिण आहुः :। तस्यैव मेघस्येत्यादिवक्ष्यमाणत्वात् । मच्छुद्धभक्तस्य
दैवाद्विकर्मापि शुभोदर्कमेवैति ज्ञापयितुम्।"यदायदा हि धर्मस्य ग्लानिर्भवति भारत।अभ्युत्थानप्रधर्मस्य तदात्मानं सृजाम्यहम्" इति श्रीभागवतरूपेण स्वाविर्भावे कारणाभासं चोत्थापयितुं भगवतैव तस्य तथा भाव उद्भावितः ।
न च तस्य स्वप्नेपि स स्वभावः संभवति । "अभूतपूर्वः"इत्युक्तेः।न च दैवादभाग्यविशेषोत्थोयं तात्कालिको भावस्तत्फलस्य शुकसमागममहाभाग्यस्यानुपपत्तेः । न च तस्य पिपासातिशय एव हेतुरिति वाच्यम् । तत्क्षणानं
तरमेव जलमपीतवत एवानुतापशतविदीर्णमानस्य गृहागतस्य सद्य एव प्रायोपवेशादित्येवं च जन्मनि मरणे च ब्रह्मतेजसो मध्ये वयसि कालस्य च निर्जयात्तस्य राज्ञो भगवत्कृपामहाबलवत्त्वमसाधारणमेव द्रष्टव्यम् ॥३१॥
तस्य शमीकस्य ब्रह्मर्षेः । तत्र तदा पुत्रः शृंगी नामाऽतितेजस्वी । तेजस्विवीर्योद्भूतशरीरत्वाद्बालको वयसैव न तु सामर्थ्येन । अर्भकैर्बालैः सह क्रीडन्निदं वक्ष्यमाणम् ॥ ३२ ॥ स्वामिनि ब्राह्मणे दासानां दासानामिव द्वारपा
लानां राज्ञाम् । अयमपराधस्तदहो महानधर्मः ॥ ३३ ॥ द्वारपालः श्वा श्ववद्द्वाररक्षकः गृहं प्रविश्य सभाण्डं भाण्डस्थितं वस्तु घृतादि । तेन राज्ञां मुनीनामाश्रमे सहसा प्रवेशे तत्र जलादिप्रार्थने च का योग्यतेति भावः ।
तथा च दण्डोऽयमिति भावः ॥३४॥ तर्हि को दण्डकर्त्ता तत्राह—कृष्ण इति । उत्पथगामिनामनापदि विहितमार्गं परित्यज्य वर्त्तमानानां मे बलं पश्यत हे बाला इति शेषः ॥३५॥ कौशिकी कुशस्येदं कौशिकं पवित्रं तत्
पाणौ विद्यतेऽस्येति कौशिकी प्रसिद्धम् अपो जलान्युपस्पृश्याचम्य वागेव वज्रं वज्रवन्नाशकं शापमित्यर्थः । यद्वा कौशिको विश्वामित्रो देवताऽस्या इति कौशिकी गायत्री तया उपस्पृश्य गायत्र्या विश्वामित्र ऋषिरिति

इति लंघितमर्यादं तक्षकः सप्तमेऽहनि ॥ दंक्ष्यति स्म कुलांगारं चोदितो मे ततद्रुहम् ॥३७॥ ततोऽभ्येत्याऽऽश्रमं बालो गले सर्पकलेवरम् ॥ पितरं वीक्ष्य दुःखार्तो मुक्तकंठो रुरोद ह ॥ ३८ ॥ स वा आंगिरसो ब्रह्मञ्छ्रुत्वा सुतविलापनम् ॥ उन्मील्य शनकैर्नेत्रे दृष्ट्वा स्वांसे मृतोरगम् ॥ ३९ ॥ विसृज्य पुत्रं पप्रच्छ वत्स कस्माद्धि रोदिषि ॥ केन वा ते प्रतिकृतमित्युक्तः स न्यवेदयत् ॥ ४० ॥ निशम्य शप्तमतदर्हं नरेंद्रं स ब्राह्मणो नात्मजमभ्यनंदत् ॥ अहो बतांहो महदद्य ते कृतं स्वल्पीयसि द्रोह उरुर्दमो धृतः ॥ ४१ ॥ न वै नृभिर्नरदेवं पराख्यं संमातुमर्हस्यविपक्वबुद्धे ॥ यत्तेजसा दुर्विषहेण गुप्ता विंदंति भद्राण्यकुतोभयाः प्रजाः ॥ ४२ ॥

संधिरार्षः । वाग्वज्रं शापम् ॥ ३६ ॥ इत्येवं सर्पनिक्षेपेण । दंक्ष्यति भक्षयिष्यति । पाठांतरे भस्मी करिष्यति । स्मेति पादपूरणे । कुलस्यांगारतुल्यं मे मया । ततेति ह्रस्वत्वमार्षम् ॥ ३७ ॥ गले सर्पकलेवरं यस्येत्यलुक्समासः । मुक्तकंठ उच्चैरित्यर्थः ॥ ३८ ॥ ३९ ॥ तं सर्पं विसृज्य केनापकारः कृतः ॥ ४० ॥ अनभिनंदन वाक्यमहो इत्यादि । बत कष्टम्।ते त्वया महत्पापं कृतम् । द्रोहेऽपराधे । दमो दंडः॥४१॥परो विष्णुरित्याख्या ख्यातिर्यस्य तं नरदेवं नृभिः संमातुं समं द्रष्टुम् ॥४२॥

संध्योपासनपद्धत्युक्तेः । तत्र कौशिकीनाम्नी नदी चाप्रसिद्धेति ॥ ३६ ॥ पाठांतरे धक्ष्यतीति पाठे । यतो मृतसर्पेनेन मत्पितुर्देहे निक्षिप्तस्ततो जीवन्नेव सर्पश्रेष्ठस्तक्षको दंशसमकालमेवायुस्तनूकरणसमर्थत्वेनान्वर्थ नामा तं दंक्ष्यतीति भावः । सप्तमेहनीति । ननु राजा हि मृगयां गतः क्षुत्तृडार्त्तो मध्याह्ने मुनिवराश्रमं गत्वाऽलब्धार्चः कुपितो मुनेर्गले मृतसर्पं निक्षिप्य पुनर्नगरमागतोऽनुतेपे । ततस्तदृषिपुत्रेणार्षिबालेभ्यो नृपकृतं पितृवृत्तं श्रुत्वा तं नृपं सप्तमेऽह्नि तक्षको दंक्ष्यतीति शेपे । पुनराश्रममागत्य पितरं तथाविधं दृष्ट्वा रुरोद । तच्छ्रुत्वा मुनिरात्मजं विनिंद्य स्वशिष्यं गौरमुखनामानं नृपपार्श्वे शापवृत्तांतं कथयितुं प्रेषयामास । तच्छ्रुत्वा नृपो मंत्रिभिः संमंत्र्य पुत्रं राज्येभिषिच्य गंगातटं नगरादागत्य भूशोधनपूर्वकमृषिसमाजं कृत्वा गृहीतानशन उपविवेश ततो देशांतराच्छ्रीशुक आगत्य तं श्रीभागवतं श्रावयामासेति । एतच्चैकेन दिनेन समस्तेनापि कर्तुं न शक्यते किमुत दिनार्द्धेन । किञ्च श्रीशुकेनाप्यागत्य "सप्ताहं जीविताबधिः । उपकल्पय तत्सर्वं तावद्यत्सांपरायिकम्" इत्युक्तम् । तथा कथाश्रवणविधिरपि "आसूर्योदयमारभ्य"इत्यादिना प्रातःकालत एव । प्रथम दिने हि मनुकर्दमसंवादांता कथा कार्या सापि न संभवतीति कथमत्र यथाश्रुतार्थग्रहणे निर्वाह इति चेत् । अत्रेदमवधेयम् । सप्त च मश्चैषां सप्तमं तास्मिंस्तथा । मशब्दो हि केरलमते पंचसंख्यापरो विहितस्तेन सर्वमनवद्यम् । यद्वा सप्तसु मिलितो मः सप्तमः द्वादशेत्यर्थः । मध्यमपदलोपी समासो वा कार्यः । "पाद्याः पञ्च प्रकीर्त्तिताः" इति केरलोक्तेः । तथा च पञ्चभिर्दिनैः सर्वं कार्यं कृत्वा षष्ठादिनमारभ्य द्वादशदिनपर्यंतं गाथा श्राविता श्रीशुकदेवेन एवञ्च "सप्ताहं जीविताबधिः" इति तदुक्तिरपि संगता स्यादिति प्रतीयते । यद्वाऽचिंत्यशक्तिमता श्रीकृष्णेन तदैकदिनभागेनैव सर्वं संपादितामित्यवधेयम् ॥ ३७ ॥ ततो बालसमूहे शापदानोत्तरम् ।इत्यर्थ इति । समाधिस्थो वाचा न बोधनीय इति विधेः कंठसंकोचे रोदनासंभवादिति भावः ॥ ३८ ॥ ३९ ॥ हे वत्सेति । त्वं वत्सलोसि मे केन तेऽपकारः कृत इति एकदेशन्यायेन वत्सपदं वत्सलार्थकमत्र ज्ञेयम् । स श्रृंगी स्वकृतं राजशापं निवेदयामास ॥ ४० ॥ हे अज्ञेति । कर्तव्याकर्तव्यानुसंधानहीनोऽसीति भावः । "दमो दंडे च ताडने" इति कोशात् ॥ ४१ ॥ हे अविपक्वबुद्धे इति । त्वमतीव बालिशोऽसि यतः

अलक्ष्यमाणे नरदे वनाग्निं रथांगपाणावयमंग लोकः ॥ तदा हि चौरप्रचुरो विनंक्ष्यत्यरक्ष्यमाणोऽविवरूथवत्क्षणात् ॥ ४३ ॥ तदद्य नः पापमुपै त्यनन्वयं यन्नष्टनाथस्य वसोर्विलुंपकात् ॥ परस्परं घ्नंति शपंति वृंजते पशूंन्स्त्रियोऽर्थान्पुरुदस्यवो जनाः ॥ ४४ ॥ तदार्यधर्मश्च विलीयते नृणां वर्णाश्रमाचारयुतस्त्रयीमयः ॥ ततोऽर्थकामाभिनिवेशितात्मनां शुनां कपीनामिव वर्णसंकरः ॥४५॥ धर्मपालो नरपतिः स तु सम्राट् बृहच्छ्रवाः ॥ साक्षान्महाभागवतो राजर्षिर्हयमेधयाट् ॥ क्षुत्तृट्श्रमयुतो दीनो नैवाऽस्मच्छापमर्हति ॥ ४६ ॥ अपापेषु स्वभृत्येषु बालेनाऽपक्वबुद्धिना ॥ पापं कृतं तद्भगवान्सर्वात्मा क्षंतुमर्हति ॥ ४७ ॥ तिरस्कृता विप्रलब्धाः शप्ताः क्षिप्ता हता अपि ॥ नास्य तत्प्रतिकुर्वंति तद्भक्ताः प्रभवोऽपि हि ॥४८॥

अलक्ष्यमाणेऽदृश्यमाने । अविवरूथवन्मेषसंघवत् ॥ ४३ ॥ नष्टो नाथो यस्य लोकस्य तस्य वसोर्वसुनो धनस्य विलुंपकादपहर्तुश्चोरादेर्हेतोर्यत्पापं भविष्यति तदस्मन्निमित्तत्वादस्मानुपैष्यति । अनन्वयं संबंधशून्यमेव । तदेव पापं दर्शयति । परस्परमिति । शपंति परुषं वदंति । पश्वादीन्वृंजतेऽपहरंति । पुरुदस्यवश्चोरबहुलाः ॥ ४४ ॥ आर्यधर्मः सदाचारः । शुनां कपीनामिवार्थकामयोरेवाभिनिवेशितचित्तानाम् ॥ ४५ ॥ एवं राजमात्रस्य शापानर्हत्वमुक्त्वा प्रस्तुते विशेषमाह धर्मपाल इति सार्धेन । हयमेधयाडश्वमेधयाजी । नन्वेवंभूतश्चेत्तत्कुतोऽपकृतवांस्तत्राह । क्षुत्तृडिति । स्वागतप्रश्नाद्यभावेनावज्ञातः प्रत्युत शापं कथमर्हतीत्यर्थः ॥ ४६ ॥ अस्य महापा पस्यान्यत्प्रायश्चित्तमदृष्ट्वा पापमावेदयन् भगवंतं प्रार्थयते । अपापेष्विति ॥ ४७ ॥ राजा चेत्प्रतिशापं दद्यात्तर्हि निष्कृतिर्भवेदपि तत्तु न संभवति तस्य महाभागवतत्वादि

सर्वदेवांशविशिष्टं साक्षाद्विष्णुमूर्तिं राजानं नरसामान्यदृष्ट्या शप्तवानसीति भावः । दुर्विषहेण सोढुमशक्येन । यद्यस्य प्रजाः स्थावरजंगमात्मिकाः भद्राणि सुखानि प्राप्नुवंति ॥ ४२ ॥ हे अंगेति । हे पुत्रेति । अत्राप्यं गपदमंगजपरमिति भावः ।“अविर्नाथे द्रुमे शैले रवौ मेषे च कंबले । मूषिकस्य” इति कोशात् । केचित्तु रक्षाहीनसेनावदित्याहुः । “सेनारक्षा वरूथः स्यादवरोधो निवेशनम्” इत्यभिधानात् । अकारप्रश्लेषाभावेऽयमर्थः तदा नरपत्यभावे ॥ ४३ ॥ ४४ ॥ “आर्यः शिष्टे वैश्यवर्गे” इत्यभिधानात् । सदाचारश्शिष्टाचारः । कर्त्तव्यतांशे भ्रांतिरहिता वेदविहितकर्मकर्तारः शिष्टाः । तदेवाह । त्रयीमयः त्रय्या वेदैर्मीयते ज्ञायते प्रतिपाद्यत इति त्रयीमय इति । अत एव वर्णाचारैराश्रमाचारैश्च युतः धर्मलयपरिपाकमाह । ततो वर्णाश्रमाचारयुतवैदिकार्यधर्मनाशानंतरमर्थेषु कनकादिषु कामेषु स्रक्चन्दनवनितादिभोगेषु चाभिनिवेशित आत्मा मनो यैस्ते तथोक्तास्तेषां पुंसां शुनां कपीनां च यथा भक्षणभोगादावव्यवस्था तथा हीनजातीनामुत्तमजातिभिरुत्तमजातीनां हीनजातिभिर्भोगसंभोगादिना वर्णानां संकरः कलुषीभावो भविष्यतीत्यर्थः ॥ ४५ ॥ अत्र धर्मपालादिविशेषणानि हेतुगर्भाणि । धर्मपालत्वान्महाभागवतत्वाद्राजर्षित्वाद्धयमेधयाजित्वाच्च सम्राट् न दुष्टः क्षुत्तृट्श्रमान्वितत्वेन बुभुक्षापिपासादिनास्मदाश्रमागतोर्घादिपूजायोग्यो नैवास्मत् अस्मत्तः शापमर्हति ।तस्मादनिर्वा र्यमघमापन्नमिति भावः । हयमेधैरिष्टवानिति हयमेधयाट् ॥४६॥ अस्य राजशापलक्षणस्य यत्पापं कृतं तत् सर्वात्मान्तर्यामी ॥४७॥ हिशब्देन “क्षमा बलमशक्तानां शक्तानां भूषणं क्षमा” इति प्रासिद्धिं द्योतयति ॥४८॥

इति पुत्रकृताघेन सोऽनुतप्तो महामुनिः ॥ स्वयं विप्रकृतो राज्ञा नैवाऽघं तदचिंतयत् ॥ ४९ ॥ प्रायशः साधवो लोके परैर्द्वंद्वेषु योजिताः ॥ न व्यथंति न हृष्यंति यत आत्माऽगुणाश्रयः ॥ ५० ॥ इति श्रीभा० महापु० प्रथमस्कंधे विप्रशापोपलंभनं नामाऽष्टादशोऽध्यायः ॥ १८ ॥ सूत उवाच ॥ महीपतिस्त्वथ तत्कर्म गर्ह्यं विचिंतयन्नात्मकृतं सुदुर्मनाः ॥ अहो मया नीचमनार्यवत्कृतं निरागसि ब्रह्मणि गूढतेजसि ॥ १ ॥ ध्रुवं ततो मे कृतदेवहेलनाद्दुरत्ययं व्यसनं नातिदीर्घात् ॥ तदस्तु कामं त्वघनिष्कृताय मे यथा न कुर्यां पुनरेवमद्धा ॥ २ ॥ अद्यैव राज्यं बलमृद्धकोशं प्रकोपितब्रह्मकुलानलो मे ॥ दहत्वभद्रस्य पुनर्न मेऽभूत्पापीयसी धीर्द्विजदेवगोभ्यः ॥ ३ ॥

त्याह । तिरस्कृता निंदिताः । विप्रलब्धा वंचिताः । क्षिप्ता अवज्ञाताः । हतास्ताडिताः । अस्य तिरस्कारादिकर्तुः । न तत्प्रतीकारं कुर्वंति । तद्भक्ता विष्णुभक्ताः । प्रभवः समर्था अपि ॥ ४८ ॥ विप्रकृतोऽपकृतः । अघमपराधम् ॥ ४९ ॥ युक्तं चैतदित्याह । प्रायश इति । द्वंद्वेषु सुखदुःखादिषु । अगुणाश्रयः सुखदुःखाद्याश्रयो न भवति ॥ ५० ॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे टीकायामष्टादशोऽध्यायः ॥१८॥ प्रायोपविष्टे गंगायां राज्ञि योगिजनावृते ॥ शुकस्यागमनं तत्र प्रोक्तमेकोनविंशके ॥ १ ॥ स्वकृतं तत्कर्म मुनिस्कंधे सर्पप्रक्षेपणं गर्ह्यं निंद्यं चिंतयन्सुदुर्मना जातः । चिंतामेवाह सार्धाभ्याम् । अहो इति । नीचं पापम् । अमीवमिति पाठे स एवार्थः । ब्रह्मणि ब्राह्मणे गूढं गुप्तं तेजो यस्य तस्मिन् ॥ १ ॥ कृतं यद्देवहेलनमीश्वरावज्ञापापमित्यर्थः । तस्मान्मे व्यसनं भविष्यति तत्तु नातिदीर्घात्कालाद चिरादेवास्तु तत्राप्यद्धा साक्षान्ममैव न पुत्रादिद्वारेणेति प्रार्थना । काममसंकोचतः । एवं प्रार्थनायाः प्रयोजनमघस्य निष्कृताय प्रायश्चित्ताय यथा पुनरेवं न कुर्यामिति च ॥२॥ एवं साक्षात्स्वस्यैव व्यसनं संप्रार्थ्य ततः प्रागेव किंचित्प्रार्थयते । अद्यैव मे राज्यादि दहतु प्रकोपितं ब्रह्मकुलमेवानलः । पुनर्द्विजादीन्पीडयितुं धीर्मे माभून्न

तदघं तेन राज्ञा कृतमपराधम् । महामुनिरिति हेतुगर्भं विशेषणम् । सर्वज्ञतमत्वाच्छरीराभिमानिन एव दुःखादिप्राप्त्या कोपोत्पत्तिर्न त्वसंप्रज्ञातसमाधेस्तस्य पद्मपत्रपानीयवदश्लिष्टदुरितत्वादित्यर्थः ॥ ४९ ॥ साधूनामयं स्वभाव एवेत्याह—युक्तं चैतदिति । योजिताः संगमिताः साधवो यथास्थितवस्तुदर्शिनः कुतो व्यथाद्यभावस्तत्राह—यत इति । अकाराप्रश्लेषप्रश्लेषाभ्यां गुणस्यागुणस्य दोषस्य चाश्रयो नेत्यर्थः । अत्र नेत्यध्याहर्त्तव्यम् ॥ ५० ॥ इति श्रीभागवतभावार्थदीपिकाप्रकाशे प्रथमस्कन्धेऽष्टादशोऽध्यायः ॥ १८ ॥ प्रायेण मरणांतानशनेनोपविष्टे । तत्र गंगातटे ( १ ) अथ गृहागमनोत्तरम् । निरागसि निरपराधे "ब्राह्मणो नावमंतव्यो निरागास्तु विशेषतः" इति स्मृतेः गूढतेजासि अप्रकाशिततेजोलक्षणमहिम्नि ब्राह्मणे "ब्रह्मवेदस्तपरतत्त्वं ब्रह्मा विप्रः प्रजापतिः"इत्यमरः । गूढतेजसीति । प्रतिक्रियासामर्थ्यद्योतनाय ॥ १ ॥ तच्च दुष्कृतमपरिहार्यविपत्तिकरमिति चिंतयन्नाह—ध्रुवमिति । इत्यर्थ इति । ब्राह्मणावज्ञासि "सदाहं विप्ररूपेण विचरामि महीतले" इत्याद्युक्तेर्विष्णोरवज्ञैवेति भावः । ततो देवस्य हरेर्हेलनादवज्ञानात् । ध्रुवमवश्यं दुरत्ययमत्येतुमशक्यं व्यसनं दुःखम् "व्यसनं विपदि ध्वंसे" इत्यादिकोशात् । तद्व्यसनं मनसाभ्युपगच्छन्नाह—तदिति ॥ २ ॥ ब्रह्मकुलमेवानलः बहुदाहेप्यलंबुद्धिर्नास्तीत्यनलः । मे मदीयत्वेनाभिमतम् । अद्यैव कालक्षेपमंतरेण अभूदिति । व्यत्ययो राज्ञो महानुतापसूचनायैवेति । द्विजा विप्राश्च देवताश्चेति द्वंद्वः । यद्वा । द्विजेषु सन्निहिता देवता द्विजदेवताः । "यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे संति"

स चिंतयन्नित्थमथाशृणोद्यथा मुनेः सुतोक्तो निर्ऋतिस्तक्षकाख्यः ॥ स साधु मेने न चिरेण तक्षकानलं प्रसक्तस्य विरक्तिकारणम् ॥ ४ ॥ अथो विहायेममसुं च लोकं विमर्शितो हेयतया पुरस्तात् ॥ कृष्णांघ्रिसेवामधिमन्यमान उपाविशत्प्रायममर्त्यनद्याम् ॥ ५ ॥ या वै लसच्छ्रीतुलसीविमिश्रकृष्णांघ्रिरेण्वभ्यधिकांबुनेत्री ॥ पुनातिलोकानुभयत्र सेशान्कस्तां न सेवेत मरिष्यमाणः ॥ ६ ॥

भवेदित्यर्थः ॥ ३ ॥ इत्थं चिंतयन्स राजा मुनेः सुतेनोक्तः सप्तमेहानि निर्ऋतिर्मृत्युर्यथा भविष्यति तथाशृणोत् । शमीकप्रेषितशिष्याच्छ्रुत्वा च स तक्षकस्य विषाग्निं साधु मेने । यतो विषयेषु प्रसक्तस्य विरक्तिकारणम् ॥ ४ ॥ अथोऽनंतरमुभौ लोकौ पुरस्ताद्राज्यमध्य एव हेयतया विचारितौ विहाय श्रीकृष्णांघ्रिसेवामेवाधिमन्यमानः सर्वपुरुषार्थाधिकां जानन्प्रायमनशनं तस्मिन्नित्यर्थः । तत्संकल्पेनोपाविशादिति यावत् । यद्वा । प्रायं प्रकृष्टमयनं शरणं यथा भवति तथा ॥ ५ ॥ अमर्त्यनद्यामिति विशेषणस्य फलमाह । या गंगा लसंती श्रीर्यस्यास्तुलस्यास्तया विमिश्रा ये कृष्णांघ्रिरेणवस्तैरभ्यधिकं सर्वोत्कृष्टं यदंबु तस्य नेत्री तद्वाहिनी उभयत्रांतर्बहिश्च सेशाँल्लोकपालैः

इति श्रुतेः । अत एव ब्राह्मणस्य तप्तमुद्राधारणनिषेधः कल्पितेतरग्रन्थेषु वर्ण्यते । न विद्यते भा दीप्तिर्येषां तेऽभा निर्बुद्धयस्तान् द्राति कुत्सयतीत्यभद्रस्तस्य । एतच्च स्वकर्मापेक्षयोक्तम् । इत्यर्थ इति 'क्रियार्थोपपद–इत्यादिना चतुर्थीति भावः ॥ ३ ॥ अथेत्थं शोकानंतरम् । शिष्याद्गौरमुखात् । यथा भो राजन् अज्ञानेन बालकेन दत्तमभिशापं श्रुत्वा मुहुरनुतप्तस्तं च संतर्ज्यास्मद्गुरुः प्रतीकारमपश्यन्खिद्यंस्त्वयि कारुण्यपूर्णो मां प्राहिणोत् राजा ज्ञात्वा परलोकार्थं किमपि यततामित्येतदर्थमित्युक्त्वा गते तस्मिन्राजा स्वापराधं क्षमयंस्तत्रजिगमिषुरपि मुनेर्जनिष्यमाणं लज्जासंकोचादिकं स्वस्य च शापान्तां निष्ठां विचार्य न जगामेति ॥ ४ ॥ इत्यर्थ इति । अनशनं निमित्तीकृत्योपविवेशेति भावः । "प्रायो मरणानशने मृत्यौ बाहुल्यतुल्ययोः" इति मेदिनी । अथो ब्रह्मशापाकर्णनसमनंतरमेव । ममायं शापो विरक्तिहेतुत्वात्साधुरिति मन्वानः पुरस्ताच्छापात्प्रागेव उभौ लोकौ चानित्यत्वदुःखमिश्रत्वाद्धेयतया निश्चितौ इमं भूलोकममुंस्वर्लोकं च विहायास्मिन्संसारे कृष्णांघ्रिसेवैवात्यंतिकदुःखनिवृत्तिसुखसाधनत्वात्कर्त्तव्येति सर्वसाधनेभ्योऽध्यधिकां मन्यमानः परीक्षिदमर्त्यनद्यां श्रीगंगायाम् । संभवत्वादर्थांतरमाह–यद्वेति ॥ ५ ॥ प्रायोपवेशश्चायं तस्याममर्त्यनद्यामेव युक्तः । यतस्तस्यां तदभीष्टस्य श्रीकृष्णस्य संबंधः । सर्वेषां पावनत्वं च स्फुटं दृश्यते इत्यास्ताम् । तस्य ब्राह्मणापराधकलुषभीतस्य श्रीकृष्णस्यांघ्रिसेवामेव च सर्वाधिकपुरुषार्थतया लिप्सोर्वार्त्ता सर्वस्यापि जीवस्य तत्राप्यासन्नमरणस्य सैवाश्रयितुं योग्येत्याह–या वा इति । या वैतादृशत्वेन स्वयं प्रसिद्धा पुनर्लसच्छ्रियस्तदानीं प्रचुरतया वृन्दावनजाता यास्तुलस्यस्ताभिर्विमिश्रा पूर्वं विमिश्रीकृता ऐक्यं प्राप्ता वा वृंदावनस्थिताः स्वयं भगवतः श्रीकृष्णस्यांघ्रिरेणवस्तैरभ्याधिकं यमुनारूपमंबु तस्यापि नेत्री वोढ्रीत्यर्थः । अभ्यधिकत्वं चोक्तमादिवाराहे "गंगाशतगुणा पुण्या माथुरे मम मंडले । यमुना विश्रुता देवि नात्र कार्या विचारणा" इति । जलप्रवाहरूपा गंगा ह्यत्र वोढ्री बाह्यं च तादृगंबु ततो भिन्नामेवोपपद्यत इति नेत्रीति । सदैवोन्नयनं लभ्यते इति च तथा व्याख्यातं कृष्णशब्दश्च रूढ्या श्रीगोपाल एवाधिकं प्रसिद्ध इति तथा व्याख्यातमेव । अभेदे हि तादृगंबुरूपेत्येवावक्ष्यदिति संदर्भः । तीर्थस्तु--गंगायामेव प्रायोपवेशोन्यत्रापि किमिति न स्यादिति तत्राह–येति । लसंती श्रीमती तुलसी ब्रह्मज्ञानेन तुलां सिनोति बध्नातीति तुलसी ब्रह्मज्ञानसदृशी । ब्रह्मज्ञानस्य संसारनिवर्त्तकत्वं यन्माहात्म्यं तदस्या अप्यस्तीति । "या दृष्टा निखिलाघसंघशमनी स्पृष्टा वपुःपावनी रोगाणामभिवंदिता निरसनी सिक्तांतकत्रासनी । प्रत्यासन्नविधायिनी भगवतः कृष्णस्य संरोपिता न्यस्ता तच्चरणे विमुक्तिफलदा तस्यै तुलस्यै नमः" इत्यादिपुराणोक्तेः । यद्वा । तनोति मोक्षादिपुरुषार्थमिति तुर्विष्णुस्तत्र लसतीति तुलसी तस्या मंजरीरजोभिर्विमिश्राः कृष्णस्यांघ्रिरेणवस्तैः सहाधिकानि यान्यम्बूनि जलानि तेषां नेत्री लसच्छ्रीतुलसीमंजरीरजोविमिश्रश्रीकृष्णचरणरेणुसमधिगतमाहात्म्याभ्यधिकसलिलप्रवाहाकुलेत्यर्थः । या चात एवाशेषाँल्लोकानुभयत्रांतर्बहिश्च पुनाति ।

इति व्यवच्छिद्य स पांडवेयः प्रायोपवेशं प्रति विष्णुपद्याम् ॥ दध्यौ मुकुंदांघ्रिमनन्यभावो मुनिव्रतो मुक्तसमस्तसंगः ॥ ७ ॥ तत्रोपजग्मुर्भुवनं पुनाना महानुभावा मुनयः सशिष्याः ॥ प्रायेण तीर्थाभिगमापदेशैः स्वयं हि तीर्थानि पुनंति संतः॥८॥ अत्रिर्वसिष्ठश्च्यवनः शरद्वानरिष्टनेमिर्भृगुरंगिराश्च ॥ पराशरो गाधिसुतोऽथ राम उतथ्य इंद्रप्रमदेध्मवाहौ ॥ ९ ॥ मेधातिथिर्देवल आर्ष्टिषेणो भारद्वाजो गौतमः पिप्पलादः ॥ मैत्रेय और्वः कवषः कुंभयोनिर्द्वैपायनो भगवान्नारदश्च ॥१०॥ अन्ये च देवर्षिब्रह्मर्षिवर्या राजर्षिवर्या अरुणादयश्च ॥ नानार्षेयप्रवरान्समेतानभ्यर्च्य राजा शिरसा ववंदे ॥ ११ ॥ सुखोपविष्टेष्वथ तेषु भूयः कृतप्रणामः स्वचिकीर्षितं यत् ॥ विज्ञापयामास विविक्तचेता उपस्थितोऽग्रेऽभिगृहीतपाणिः ॥ १२॥ राजोवाच ॥ अहो वयं धन्यतमा नृपाणां महत्तमानुग्रहणीयशीलाः ॥ राज्ञां कुलं ब्राह्मणपादशौचाद्दूराद्विसृष्टं बत गर्ह्यकर्म॥१३॥

सहितांल्लोकान्पुनाति । मरिष्यमाण आसन्नमरणः । मरणस्यानियतकालत्वात्सर्वोऽपि तथा । अतस्तां को न सेवेत ॥ ६ ॥ इत्येवं विष्णुपद्यां गंगयाम् । प्रायोपवेशं प्रति व्यवच्छिद्य निश्चित्य । पांडवेय इति तत्कुलौचित्यं दर्शयति । नास्त्यन्यस्मिन् भावो यस्य सः । कुतः मुनिव्रत उपशांतः । तत्कुतः । मुक्तः समस्तः संगो येन सः ॥ ७ ॥ तत्र तदा तद्दर्शनार्थं मुनय उपागता न तु तीर्थस्नानार्थं कृतार्थत्वात् । ननु तादृशानामपि तीर्थयात्रा दृश्यते तत्राह । प्रायेणेति । तीर्थयात्राव्याजैः ॥ ८ ॥ ९ ॥ १० ॥ अरुणादयः कांडर्षित्वविशेषेण पृथङ् निर्दिष्टाः । नाना यान्यार्षेयाणि ऋषीणां गोत्राणि तेषु प्रवरान् श्रेष्ठान् शिरसा भुजं स्पृष्ट्वा ववंदे ॥११॥ विज्ञापनार्थं पुनः कृतप्रणामः । विविक्तं शुद्धं चेतो यस्य । अभिगृहीतौ संयोजितौ पाणी येन सः । स्वचिकीर्षितं प्रायोपवेशनादि युक्तमयुक्तं वेति विज्ञापयामास ॥ १२ ॥ अनुमोदनेनानुग्रहमालक्ष्यात्मानं श्लाघते । अहो इति । नृपाणां मध्ये महत्तमैरनुग्रहणीयं शीलं वृत्तं येषां ते । एतच्च राज्ञामतिदुर्लभमित्याह । ब्राह्मणानां

यद्वोभयत्रेह लोके शिष्टव्यवहारयोग्यतालक्षणां शुद्धिं परलोके नरकप्राप्त्यादिनिवर्तनरूपां च शुद्धिं करोतीति मरणस्यानियतत्वात्मदैवतां सेवेतेति भावः ॥ ६ ॥ अतो मरिष्यमाणोहं तीर्थोत्तमत्वाद्विष्णुपद्यां गंगायामनशनव्रतं करिष्ये इति प्रायोपवेशं प्रति व्यवच्छिद्य निश्चित्यानन्यभावो राज्यभारादिचिंतारहितांतःकरणो विष्ण्वेकचेता मुनीनां निवृत्तानां ज्ञानिनां व्रतमिव व्रतं नियमो यस्य स तथा वाचालत्वरहितो वाऽत एव मुक्ताः समस्तेषु पुत्रधनादिषु संगा आसक्तयो येन । मुक्ते हरौ समस्तानां श्रोत्रादींद्रियाणां संगस्तत्कथनतच्छ्रवणतद्दर्शनादिष्वादरो यस्येति वा मुक्तसंगः ॥ ७ ॥ यत्र परीक्षित्तिष्ठति तत्रोपजग्मुः । प्रायेणेति । तीर्थयात्राव्याजैः तेन तीर्थेभ्योऽपि परीक्षिद्दर्शनं ते ह्यधिकं गूढं निरणैषुरिति भावः । अकस्मादुद्भूतप्रतिस्वानंदान्यथानुपपत्त्या सर्वज्ञतया भाविवृत्तांतं ज्ञात्वा श्रीभागवतामृतपानार्थमिति भावः ॥८ ॥ मुनीन्कांश्चिन्नामतो निर्दिशति । अत्रिरिति शरद्वान्कृपाचार्यपिता गाधिसुतो विश्वामित्रः रामः परशुरामः ॥ ९ ॥ १० ॥ कांडर्षित्वं काण्डं ज्ञानकाण्डं तत्प्रधाना ऋषयः काण्डर्षयस्तेषां भावस्तत्त्वं तदेव विशेषो भेदस्तेन हेतुना पृथङ्गि दिष्टाः कर्मोपास्तिप्रधानब्रह्मर्षिराजर्ष्यादिभ्यो भेदेन कथिताः ॥११॥ अथ प्रणत्युत्तरम् । विविक्तचेताः शुद्धमनाः ॥१२॥ धन्यतमा न जाने कस्य पुण्यस्य फलमेतदहो भाग्यंमम इत्यर्थः । एतच्च महत्तमानुग्रहणीयशीलत्वं च तीर्थैर्प्रैस्तद्राजकुलम् । ततोपि आश्रमादूरस्थपादशौचस्थलादपि आराद्दूरे तत्रापि पादशौचस्थले । इत्यर्थ इति । अननुज्ञानादितिभावः । यस्य राजकुलस्य । गर्ह्यं सर्वतोऽप्यपवित्रमित्यर्थः । अत्र संदर्भः । अहो आश्चर्यं किमाश्चर्यं तत्राह नृपाणां मध्ये वयं

तस्यैव मेऽघस्य परावरेशो व्यासक्तचित्तस्य गृहेष्वभीक्ष्णम् ॥ निर्वेदमूलो द्विजशापरूपो यत्र प्रसक्तो भयमाशु धत्ते ॥ १४ ॥ तं मोपयातं प्रति यंतु विप्रा गंगा च देवी धृतचित्तमीशे ॥ द्विजोपसृष्टः कुहकस्तक्षको वा दशत्वलं गायत विष्णुगाथाः ॥ १५ ॥ पुनश्च भूयाद्भगवत्यनंते रतिः प्रसंगश्च तदाश्रयेषु ॥ महत्सु यांयामुपयामि सृष्टिं मैत्र्यस्तु सर्वत्र नमो द्विजेभ्यः ॥ १६ ॥ इति स्म राजाऽध्यवसाययुक्तः प्राचीनमूलेषु कुशेषु धीरः ॥ उदङ्मुखो दक्षिणकूल आस्ते समुद्रपत्न्याः स्वसुतन्यस्तभारः ॥ १७ ॥

पादशौचात्पादक्षालनोदकात् ॥ दूरादुच्छिष्टविण्मूत्रपादांभांसि समुत्सृजेदिति स्मृतेर्दूरे हि तैस्तद्विसृज्यते ततोऽपि दूरादेव विसृष्टं क्षिप्तम् । तत्रापि स्थातुमयोग्यमित्यर्थः । गर्ह्यं कर्म यस्येत्यात्मानमुद्दिश्योक्तम् ॥ १३ ॥ आस्तां तावदनुग्रहो ब्रह्मशापोऽपि भगवत्प्रसादादेव जात इत्याह । तस्य गर्ह्यकर्मण एव । अतोऽघस्य पापात्मनो गृहेष्वासक्तचित्तस्य मे स्वप्राप्तये परावराणामीश एव द्विजशापतया बभूव । यत्र यस्मिन् शापे सति गृहेषु प्रसक्तो भयं धत्ते निर्विण्णो भवति । यतो निर्वेदमूलो निर्वेदो वैराग्यमूलं प्राप्तिकारणं यस्मिन् । स्वस्य वैराग्यप्राप्यत्वात्तस्य च भयमूलत्वात्तदर्थं द्विजशापं कारितवानित्यर्थः ॥ १४ ॥ तान्प्रार्थयते । तमिति द्वाभ्याम् । तं मामुपयातं शरणागतं प्रतियंतु जानंतु । देवी देवतारूपा गंगा च प्रत्येतु । वाशब्दः प्रतिक्रियानादरे । गाथाः कथाः ॥ १५ ॥ स आश्रयो येषां तेषु प्रकृष्टः संगो भूयात् । तस्यांतस्यां सृष्टौ जन्मनि ॥ १६ ॥ अध्यवसायो निश्चयः । प्राचीनानि प्रागग्राणि मूलानि येषां तेषु प्रागग्रेषु कुशेष्वास्ते स्म । स्वसुते जनमेजये न्यस्तो भारो राज्यं

पाण्डवाः महत्तमानां भवतामनुग्रहं शीलयंति ये स्वायंभुवादयस्तादृशाः सन्तो धन्यतमा जाता इतिशेषः । स्वतस्तु नृपाणां कुलमीदृशमित्याह—राज्ञामिति । यतो गर्ह्यं हिंसादिलक्षणं कर्म यस्य तादृशमित्यर्थः ॥ १३ ॥ अतो गर्ह्यकर्मत्वात् । अघस्य ब्राह्मणगले सर्पनिवेशेनावमाननात् । एवं पतितपावनत्वख्यापनार्थं द्विजशापरूपस्सन्मत्पार्श्वमागतः । मूलशब्दस्य पुंस्त्वमार्षम् । भवत्समागतादनुमीयते । यत्र भगवानायाति तत्रैव तद्भक्ताः स्वत एवायांतीत्यर्थः । यत्र परावरेशे प्रसक्त आसक्तो जन आशु शीघ्रमेवाभयं भयाभावं धत्ते इति वा । तस्य च । वैराग्यस्य च इत्यर्थ इति । स्वप्राप्तिसाधनवैराग्यकारणीभूतभयमुत्पादितवान्निजकृपयेति भावः । अत्र संदर्भः तत्रापीदमाश्चर्यमित्याह—तस्यैव भगवदनुग्रहशीलानां वंशे गणनीयस्यापि मे ममाभीक्ष्णं गृहेषु व्यासक्तचित्तस्य तत्राप्यघस्य तादृशब्राह्मणापराधकर्तुः परावरेशस्तु नूनं भगवदनुगृहीतवंशजोऽयमित्यामृश्य स्वयं द्विजशापरूपः तदपदेशः सन् निर्वेदोऽन्यत्रानासंग एव मूलमवष्टंभको यस्य स्वस्मिन्नासंगस्य तद्रूपोऽभवत् । तर्हि किं स्यात्तत्राह—यत्र परावरेशे प्रसक्तः शीघ्रमेवाभयं तच्चरणारविन्दप्राप्त्या भयाभावं धत्ते "मर्त्यो मृत्युव्यालभीतः पलायन्" इत्यादेः । अतोऽकस्माद्भव तामप्यागमनं तत्प्रेरणयैव जातमिति भावः । वक्ष्यते च श्रीशुकदेवमुपलक्ष्य 'अपि मे भगवान्प्रीतः' इत्यादिद्वाभ्याम् ॥१४॥ योहमेवमुत्तमानुग्रहणीयशीलस्तं मा मां द्विजोपसृष्टश्शृंगिणा प्रेरितः कुहकः वेषांतरधारी । यद्वा । सर्पजातिविशिष्टस्तक्षकः साक्षादेव दशतु भक्षयतु युष्माभिस्त्वेतत्कार्यमित्याह—अलमिति । अलं देहवियोगपर्यंतं गाथाः "गाथा श्लोके संस्कृतान्यभाषायां गेयवृत्तयोः" इति मेदिनी । श्लोके यशसीत्यर्थः । "श्लोकः पद्ये यशस्यपि" इत्यभिधानात् । तथाच विष्णुयशांसि गायत कथयत ॥१५॥ पुनरपि जन्मांतरेऽपि । यांयां सृष्टिं जन्म प्राप्नोमि तस्यांतस्यां भगवति रतिस्तद्भक्तेषु प्रकृष्टः संगः सर्वजीवेषु मैत्री इति मद्वाञ्छितत्रयं भूयादिति प्रार्थ्य प्रणमन्नाह—नम इति । यद्वा। ब्राह्मणानादरानुतापादाह—ब्राह्मणेभ्यो नमो भूयादिति । वाञ्छितचतुष्टयञ्च ॥१६॥ "आदावन्ते च मूलं स्यात्तथांतस्तत्र वर्तते"

एवं च तस्मिन्नरदेवदेवे प्रायोपविष्टे दिवि देवसंघाः ॥ प्रशस्य भूमौ व्यकिरन्प्रसूनैर्मुदा मुहुर्दुंदुभयश्च नेदुः॥१८॥महर्षयो वै समुपागता ये प्रशस्य साध्वित्यनुमोदमानाः ॥ ऊचुः प्रजानुग्रहशीलसारा यदुत्तमश्लोकगुणाभिरूपम् ॥ १९ ॥ न वा इदं राजर्षिवर्य चित्रं भवत्सु कृष्णं समनुव्रतेषु ॥ येऽध्यासनं राजकिरीटजुष्टं सद्यो जहुर्भगवत्पार्श्वकामाः ॥ २० ॥ सर्वे वयं तावदिहास्महेऽद्य कलेवरं यावदसौ विहाय ॥ लोकं परं विरजस्कं विशोकं यास्यत्ययं भागवतप्रधानः ॥२१॥ आश्रुत्य तदृषिगणवचः परीक्षित्समं मधुच्युद्गुरु चाव्यलीकम्॥ अभाषतैतानभिनंद्य युक्तं शुश्रूषमाणश्चरितानि विष्णोः ॥२२॥समागताः सर्वत एव सर्वे वेदा यथा मूर्तिधरास्त्रिपृष्ठे ॥ नेहाथ वाऽमुत्र च कश्चनाऽर्थ ऋते परानुग्रहमात्मशीलम् ॥२३॥ ततश्च वः पृच्छ्यमिमं विपृच्छे विश्रभ्य विप्रा इतिकृत्यतायाम् ॥ सर्वात्मना म्रियमाणैश्च कृत्यं शुद्धं च तत्रामृषताभियुक्ताः ॥२४॥

येन सः ॥ १७ ॥ मुदा व्यकिरन् । देवसंघैर्वादिता दुंदुभयो नेदुः ॥ १८ ॥ प्रजानुग्रहे शीलं स्वभावः सारो बलं च येषाम् । उत्तमश्लोकगुणैरभिरूपं सुंदरम् ॥ १९ ॥ भवत्सु पांडोर्वंश्येषु । ये जहुरिति युधिष्ठिराद्यभिप्रायेण ॥ २० ॥ परस्परं संमंत्रयंते । सर्वे इति । परं श्रेष्ठं लोकम् । तत्र हेतुः । विरजस्कं निर्मायं विशोकं च यास्यतीति कुतस्तत्राह । अयमिति ॥ २१ ॥ आश्रुत्याकर्ण्य । समं पक्षपातशून्यम् । मधुच्युदमृतस्रावि । गुरु गंभीरार्थम् । अव्यलीकं सत्यम् ॥२२॥ त्रयाणां लोकानां पृष्ठे उपरि सत्यलोके वेदा यथा मूर्तिधरा भवंति तत्तुल्याः । ज्ञानातिशयमुक्त्वा कृपालुतामाह । नेहेति । भवतां प्रयोजनं परानुग्रहं विना नास्ति । तर्हि स एवार्थः स्यात् । न । आत्मशीलं स्वस्वभावम् ॥ २३ ॥ पृच्छ्यं प्रष्टव्यम् । विश्रभ्य विश्वासं कृत्वा । एवं कर्तव्यमित्यस्य भाव इतिकृत्यता तस्मिन्विषये । सर्वात्मना सर्वावस्थासु यत्कृत्यं

इत्यभिधानान्मूलशब्दोग्रपरः॥१७॥ प्रसूनैः प्रसूनानि॥१८॥इवशब्दः स्वामिचरणैर्वावयालंकारे व्याख्यात उत्तमश्लोकस्य श्रीकृष्णस्य गुणैर्भक्तवात्सल्यादिभिराभिरूपं सुंदरं राजानमूचुः । यद्वा।यदुत्तमश्लोकस्य गुणानुरूपं भवेत्तदेवोचुः ॥१९॥ भगवत्पार्श्वकामा इत्यत्र तत्सामीप्यकामनापि व्याख्येया । तत्प्रीतिविशेषातिशयवतां हि तेषां तत्कृतार्त्तिभरेणैव तत्स्फूर्त्तावप्यतृप्तौ सत्यां तत्सामीप्यप्राप्तेश्च । तत्प्राप्तिविघातकसंसारबंधनत्रोटनस्य च प्रार्थनं दृश्यते पितृमातृप्रीत्येकसुखिनां विदूरबद्धानां बालकानामिव एवमेवोक्तं प्रह्लादेन"त्रस्तोस्म्यहं कृपणवत्सल तेंघ्रिमूलं प्रीतोऽपवर्गशरणं ह्वयसे कदा नु" इति॥२०॥विरजस्कं लोकं भगवल्लोकमेव"न तत्र माया किमुतापरे"इति द्वितीये वक्ष्यमाणत्वात् ॥ २१ ॥ एतान्पूर्वोक्तान्मुनीन् ॥ २२ ॥ स एव परानुग्रह एवार्थः प्रयोजनं स्यात् । परानुग्रहश्च न विचारपूर्वक इत्याह—आत्मशीलमिति ॥ २३ ॥ यतो यूयं परानुग्रहशीलाः स्थ ततो हेतोः हे विप्रा इति । यूयं विशेषेण प्रान्ति पूरयन्ति सेवकाभिलषितमित्यन्वर्थसंज्ञावन्त एवेत्यहं जानामीति भावः । इमं वो युष्माकं परानुग्रहं विपृच्छे किमाकारः स चिकीर्षितव्य इति पृच्छामि । पृच्छ्यं प्रष्टुमर्हं तत्रैवाध्यवसायार्थमिति भाव :। तत्रैव मे विश्वासो भावीति जानीतेति भावः । इतिकृत्या एवं कर्तव्यास्तपोयोगज्ञानादयस्तेषां भाव इति कृत्यता तस्यांसत्यां म्रियमाणैर्जनैस्तपोयोगादीनामेवं कर्तव्यत्वे सति मम यत्र शुद्धं कृत्यं तत्रामृशत विचारयत । सर्वैकवाक्यतया निश्चित्य कर्तुमाज्ञापयतेति भावः । संदर्भस्तु--विश्रभ्येति कृष्णांघ्रिसेवामेव त उपदेक्ष्यंतीत्यभिप्रायात् । शुद्धमिति । कनिष्ठमध्यमसाधनमिश्रतारहितं सर्वोत्तममित्यर्थः । तच्च कृष्णांघ्रिसेवारूपमेवेति

तत्राभवद्भगवान्व्यासपुत्रो यदृच्छया गामटमानोऽनपेक्षः ॥ अलक्ष्यलिंगो निजलाभतुष्टो वृतः स्त्रिबालैरवधूतवेषः ॥२५॥ तं व्यष्टवर्षं सुकुमारपादकरोरुबाह्वंसकपोलगात्रम् ॥ चार्वायताक्षोन्नसतुल्यकर्णसुभ्र्वाननं कंबुसुजातकंठम् ॥ २६ ॥ निगूढजत्रुं पृथुतुंगवक्षसमावर्तनाभिं वलिवल्गूदरं च ॥ दिगंबरं वक्त्रविकीर्णकेशं प्रलंबबाहुं स्वमरोत्तमाभम् ॥ २७ ॥

विशेषतश्च म्रियमाणैस्तच्च शुद्धं पापसंपर्करहितमामृशत विचारयत ॥२४॥तत्र तेषु यागयोगतपोदानादिभिर्विवदमानेषु सत्सु यदृच्छया गां पर्यटन्व्यासपुत्रस्तत्राभवत्प्राप्तः। न लक्ष्यमाश्रमादिलिंगं यस्य । अवधूतोऽवज्ञया जनैस्त्यक्तो यस्तस्येव वेषो यस्य सः॥२५॥तमित्यादीनां प्रत्युत्थिता इति तृतीयश्लोकेनान्वयः।द्विगुणान्यष्टौ वर्षाणि यस्य सुकुमारौ पादौ करावूरू बाहू अंसौ कपोलौ गात्रं च यस्य । चारुणी आयते अक्षिणी यस्मिन् उन्नता नासा यस्मिन् लंबह्रस्वादिवैषम्यं विना तुल्यौ कर्णौ यस्मिन् शोभने च भ्रुवौ यस्मिन् एवंभूतमाननं यस्य। कंबुवद्रेखात्रयांकितः सुष्ठु जातः कंठो यस्य॥२६॥कंठस्याधोभागयोः स्थिते अस्थिनी जत्रुणी, मांसेन निगूढे जत्रुणी यस्य । पृथु विस्तीर्णं तुंगमुन्नतं च वक्षो यस्य आवर्तवन्नाभिर्यस्य वलिभिस्तिर्यङ्निम्नरेखाभिर्वल्गु रम्यमुदरं यस्य । दिश एवांबरं यस्य । वक्रा विकीर्णाः केशा यस्य । प्रलंबौ बाहू यस्य स्वमरेषु

गूढोऽभिप्रायः हे अभियुक्ताः हे विद्वांसः "अभियुक्तः परे रुद्रे न्याय्यपंडितयोस्त्रिषु । हरिभक्ते तत्परे च निर्भये चान्यलिंगकः" इति निरुक्तिः॥२४॥तत्र तेषु सर्वेषु मुनिषु विवदमानेषु तदैव स्वस्य मनसा श्रीशुकागमनमीहमनेषु नेत्रैश्च तद्वर्त्म निरीक्षमाणेषु । यद्वा। यत्र परीक्षिता मुनिभिश्च स्थितं तत्र तस्यामवस्थायां वा व्यासपुत्रः शुको भगवान् यदृच्छया दैवेच्छयाऽभवदित्यन्वयः । पूर्वस्मात्कांतिविशेषद्योतनायाभवदित्युक्तम् । आगमनस्य तावता चरितार्थत्वात् । अटनस्य स्वाधीनताप्रकाशनायाटमान इति । शानच्प्रत्ययः । तर्ह्यर्थाभिलाषी किमटतीत्यत आह–अनपेक्ष इति । बाह्यविषयापेक्षारहितः तत्कुत इत्यस्याप्येतदेवोत्तरम् । अनिति चेष्टतेऽनेनेत्यनः प्राणस्तं पातीति अनपः प्राणनाथः श्रीविष्णुस्तस्येक्षा दर्शनं यस्य स तथा न हि करतलामलकवत्सततमपरोक्षीकुर्वाणस्य तस्य बाह्यविषयापेक्षास्तीति बाह्यपदार्थापेक्षाभावे शरीरयात्रा कथमित्यस्याप्येतदेवोत्तरम् । अनं प्राणं पिबतीत्यनपाः प्राणपदेन बाह्यवायुर्लक्ष्यते अत्र सैवेक्षा ज्ञानं यस्य स तथा। शरीरनिर्वाहार्थं बाह्यवायुपानमात्रस्यैव ज्ञानमस्ति नाधिकवस्तुग्रहणस्येत्यर्थः। श्रीप्रसादाभावादशनदारिद्र्यं किमस्येत्यस्यापीदमेवोत्तरम्। हरिपादाब्जतः शश्वदपगता न भवतीत्यनपा लक्ष्मीस्तस्या ईक्षणं यस्मिन्स तथा । तत्कटाक्षपात्रीभूत इत्यर्थः । सततगमनस्वभावेन वायुना तृप्तिः कथं स्यादिति तत्राह–निजेति । स्वरूपानंदेनालंबुद्धिमान् यदृच्छालाभेन तृप्तः किमाश्रमस्स इति तत्राह। न लक्ष्याण्याश्रमादिलिंगानि यस्य स तथा । तत्कुत इति तत्राह–अवधूत इति । अवधूतानां दिगंबराणां वेषो यस्यावधूतस्त्यक्तो वेषो ज्ञापकचिह्नं वा येन स तथाऽत एव स्त्रिबालैर्वृतः। स्त्रियो हि सौरूप्यात् स्त्रीणां मनोज्ञं रुचिरस्मितेन" इति वक्ष्यमाणत्वात् बालाश्चावधूतवेषत्वात्तेन साकं गच्छंतीति भावः। स्त्रीशब्दस्य ह्रस्वत्वं छांदसम्॥२५॥द्विगुणान्यष्टौ षोडश भवंतिगूढवर्चसमाच्छादितनिजतेजोलक्षणमहिमानमपि । सुकुमारौ कोमलौ॥२६॥२७॥

श्यामं सदाऽपीच्यवयोंऽगलक्ष्म्या स्त्रीणां मनोज्ञं रुचिरस्मितेन ॥ प्रत्युत्थितास्ते मुनयः स्वासनेभ्यस्तल्लक्षणज्ञा अपि गूढवर्चसम् ॥ २८ ॥ स विष्णुरातोऽतिथय आगताय तस्मै सपर्यां शिरसाऽऽजहार ॥ ततो निवृत्ता ह्यबुधाः स्त्रियोऽर्भका महासने सोपविवेश पूजितः ॥ २९ ॥ स संवृतस्तत्र महान्महीयसां ब्रह्मर्षिराजर्षिदेवर्षिसंघैः ॥ व्यरोचताऽलं भगवान्यथेंदुर्ग्रहर्क्षतारानिकरैः परीतः ॥ ३० ॥ प्रशांतमासीनमकुंठमेधसं मुनिं नृपो भागवतोऽभ्युपेत्य ॥ प्रणम्य मूर्ध्नाऽवहितः कृतांजलिर्नत्वागिरा सूनृतयाऽन्वपृच्छत् ॥३१॥ अहो अद्य वयं ब्रह्मन्सत्सेव्याः क्षत्रबंधवः॥ कृपयाऽतिथिरूपेण भवद्भिस्तीर्थकाः कृताः ॥ ३२॥ येषां संस्मरणात्पुंसां सद्यः शुध्यंति वै गृहाः ॥ किं पुनर्दर्शनस्पर्शपादशौचासनादिभिः ॥ ॥ ३३ ॥ सान्निध्यात्ते महायोगिन्पातकानि महांत्यपि ॥ सद्यो नश्यंति वै पुंसां विष्णोरिव सुरेतराः ॥ ३४ ॥ अपि मे भगवान्प्रीतः कृष्णः पांडुसुतप्रियः ॥ पैतृष्वसेयप्रीत्यर्थं तद्गोत्रस्यात्तबांधवः ॥ ३५ ॥

श्रेष्ठदेवैर्नूत्नमो हरिस्तद्वदाभा यस्य तम् ॥ २७ ॥ सदा अपीच्यमत्युत्तमं यद्वयो यौवनं तेन यांगलक्ष्मीर्देहकांतिस्तया रुचिरस्मितेन च । गूढवर्चसमपि प्रत्युत्थिता तं दृष्ट्वा प्रत्युद्गमं कृतवंत इत्यर्थः ॥ २८ ॥ शिरसैव सपर्यामाजहारात्मनिवेदनं कृतवान् । तेन सहागताः स्यादयो निवृत्ताः स चोपविवेश । संघैरार्षैः ॥२९॥ स भगवान्ब्रह्मर्ष्यादिसंघैः संवृतः सन्नलं व्यरोचत । ग्रहाः शुक्रादयः । ऋक्षाण्यश्विन्यादीनि । अन्यास्ताराः ॥ ३० ॥ न कुंठा सर्वार्थेषु मेधा यस्य तम् । प्रणम्य प्रश्नार्थं पुनर्नत्वा॥ ३१ ॥ सूनृतां गिरमाह । अहो इति पंचभिः । सतां सेव्या जाताः । यतोऽतिथिरूपेण हेतुना तीर्थकाः योग्याः कृताः ॥ ३२ ॥ ३३ ॥ विष्णोः सान्निध्यादसुरादय इव ॥ ३४ ॥ पांडुसुतानां प्रियोऽतस्तेषां पैतृष्वसेयानां प्रीत्यर्थं तद्गोत्रस्य मे आत्तं स्वीकृतं बांधवं बंधुकृत्यं येन सः ॥ ३५ ॥

" अपीच्यं सुंदरतरे " इत्यभिधानात् । तस्य शुकस्य यानि लक्षणानि चिह्नानि तानि जानंतीति तथा ॥ २८ ॥ न विद्यते तिथिरागमनसंकेतितदिनविशेषो यस्य तस्मै यदृच्छयागताय ततो राजकृतपूजादर्शनादनंतरं स्त्रियो युवतयस्साक्षात्स्मर एवायमिति अर्भका विक्षिप्तोयमित्यबुधा निवृत्ता मुनिभ्यस्तेभ्यो भीत्येत्यर्थः । स शुकः पूजा यथोचितप्रणामप्रश्रयप्रणयपरिष्वंगकुशलप्रश्नादिलक्षणा मुनिजनकर्तृका मुनिजन्मकर्मका च संजाता यस्येति । तारकादित्वादितच् । तेन सर्वे मुनयः प्रणेमुः । व्यासनारदाद्यास्तु सास्रं सगद्गदं प्रणयपरिष्वंगशिरोघ्राणकुशलप्रश्नादिकं चक्रुः । स च तान्प्रणनामेति द्योतितम् । महासन इति । " आज्ञा गुरूणां ह्यविचारणीया" इत्युक्तेः ॥२९॥ स शुकदेवः । अत्र व्यासनारदपरशुरामादिभ्यो भगवदवतारेभ्योऽपि तस्योत्कर्षो भक्त्युत्कर्षेणैवेति ज्ञेयम् । "वैयासकिश्च भगवान्वासुदेवपरायणः" इत्युक्तेः । तीर्थेन तु स परीक्षित् महीयसमहत्तराणां मध्ये महान् संवृतः गूढः महत्त्वप्रकाशनाय राजब्रह्मर्ष्यादिभिः परीतो व्यरोचतेत्युक्तम् । तक्षकान्मारिष्य इति मरणभिया मुखांगकांतिम्लानिर्नास्तीति यस्मात्तस्मादित्यर्थ इत्थं व्याख्यातम् ॥३०॥ सूनृतया प्रियवचसा ॥ ३१ ॥ संतः सेव्या येषां ते क्षत्रबन्धवोऽपि सत्सेवायामधिकारिणो जाता इत्यर्थः । तीर्थका इति । यद्भवन्त आयांति तन्निन्द्यस्थलमपि तीर्थं जनतापावनं भवतीति वयं निन्द्या अपि तीर्थकाः प्रशस्ततीर्थानि । स्वार्थिकाः । प्रकृतितो लिंगवचनान्यतिवर्त्तन्त इति पुंस्त्वम् । तत्र कृपैव कारणमित्याह–कृपयेति ॥ ३२ ॥ येषां स्मरणात् यत्कर्तृकात् यत्कर्मकाद्वा । गृहा अपि शुध्यंति किं पुनः कलत्रपुत्रदेहाः । येषां स्मरणात्किं पुनर्दर्शनादिनेत्यर्थः ॥ ३३ ॥ हे महायोगिन्निति । योगिदर्शनादेव महापातकक्षयो भवति किमुत महायोगिनस्तवेति कैमुत्यद्योतिकेयं संबुद्धिरिति भावः ॥ ३४ ॥ बंधुकृत्यं स्वयं दर्शनदानादि । तस्मात्तेनैव त्वं मन्नि

अन्यथा तेऽव्यक्तगतेर्दर्शनं नः कथं नृणाम् ॥ नितरां म्रियमाणानां संसिद्धस्य वनीयसः ॥३६॥ अतः पृच्छामि संसिद्धिं योगिनां परमं गुरुम् ॥ पुरुषस्येह यत्कार्यं म्रियमाणस्य सर्वथा ॥ ३७ ॥ यच्छ्रोतव्यमथो जाप्यं यत्कर्तव्यं नृभिः प्रभो ॥ स्मर्तव्यं भजनीयं वा ब्रूहि यद्वा विपर्ययम् ॥ ॥ ३८ ॥ नूनं भगवतो ब्रह्मन्गृहेषु गृहमेधिनाम् ॥ न लक्ष्यते ह्यवस्थानमपि गोदोहनं क्वचित् ॥ ३९ ॥ सूत उवाच ॥ एवमाभाषितः पृष्टः स राज्ञा श्लक्ष्णया गिरा ॥ प्रत्यभाषत धर्मज्ञो भगवान्बादरायणिः ॥ ४० ॥ इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां पारमहंस्यां संहितायां प्रथमस्कंधे शुकागमनं नामैकोनविंशोऽध्यायः ॥ १९ ॥ श्रीकृष्णार्पणमस्तु ॥ समाप्तोऽयं प्रथमः स्कंधः ॥ १ ॥

अन्यथा श्रीकृष्णप्रसादं विना अव्यक्ता गतिर्यस्य म्रियमाणानां नितरां कथं स्यात्।वनयिता याचयिता । वनयितृतमो वनीयांस्तस्य वनीयसः । अत्युदारतया मां याचेथा इति प्रवर्तकस्येत्यर्थः ॥ ३६ ॥ सम्यक्सिद्धिर्यस्मात्तम् । कार्यं कर्तुं योग्यम् । कर्तव्यं त्वावश्यकमिति भेदः । अत एव सर्वथा म्रियमाणस्य पुरुषस्य यस्मिन्कृते संसिद्धिर्मोक्षलक्षणा सिद्धिर्भवति तत्त्वां योगिनां गुरुं पृच्छामि ॥ ३७ ॥ यच्छ्रोतव्यं यज्जाप्यं यत्कर्तव्यं यत्स्मर्तव्यं यदाराध्यं तद्ब्रूहि । विपर्ययमश्रोतव्यादि ॥ ३८ ॥ तव दर्शनस्य पुनर्दुर्लभत्वादिदानीमेव कथनीयमित्याशयेनाह । नूनमिति । गोदोहनमात्रकालमपि । अस्माकं भाग्यवशात्त्वद्दर्शनं जातमिति भावः ॥ ३९ ॥ एवमहो इत्यादिकया श्लक्ष्णया मधुरया गिरा आभाषितोऽभिमुखीकृतः पृष्टश्च ॥ ४० ॥ आर्यं धर्मजमाहतारिमवनौ कृत्वा परीक्षिन्नृपं ब्रह्मास्त्रादभिरक्षितं कलिजयख्यातं च कृत्वा भुवि ॥ अंते यः शुकरूपतः स्वपरमज्ञानोपदेशेन तं शापादावदमुं नमामि परमानंदाकृतिं माधवम् ॥ १ ॥ ॥ इति श्रीमद्भागवतभावार्थदीपिकायां श्रीधरस्वामिविरचितायां प्रथमस्कंधटीकायामेकोनविंशोऽध्यायः ॥ १९ ॥ समाप्तोऽयं प्रथमः स्कधः ॥

स्तारार्थं प्रेषितोसीत्यनुमीयत इति भावः ॥ ३५ ॥ वनीयानिति । "तुरिष्ठेमेयस्सु" इति तृशब्दस्य लोपः ततो निमित्तापाये नैमित्तिकस्याप्यपायात् टेर्लोपाच्च सिध्यति । इत्यर्थ इति । "चतुरर्थान्प्रदास्यामि याचतेति मुहुर्मुहुः । प्रेरयेद्याचकान्यो वै वनीयान्स प्रकीर्तितः" इत्यभिधानचिंतामण्युक्तेरयं भावः ॥ ३६ ॥ यतो भवद्दर्शनं दुर्लभमतो दैवात्प्राप्तं योगिनां ज्ञानयागभक्तियोगवतां परमं गुरुम् । सम्यक्सिद्धिः का तां पृच्छामि इह संसिद्धौ यत्सर्वथा कर्त्तव्यं साधनं तत्पृच्छामीति चक्रवर्ती ॥ ३७ ॥ तदेव विशेष्याह—यच्छ्रोतव्यमिति । श्रवणरसनामनोविषयीकर्तव्यं पाण्यादीद्रियविषयं किं भजनीयं वेति देवेषु को देवः उपास्य इत्यर्थः । आदिनाऽजाप्यास्मर्तव्यग्रहः ॥ ३८ ॥ हे ब्रह्मन्निति । कथनसामर्थ्यमाह—साक्षाद्वेदरूपोसीति भावः ॥ ३९ ॥ धर्मज्ञो हरिभक्तिधर्मज्ञः तस्यैव सर्वश्रेष्ठधर्मत्वात् । "एष मे सर्वधर्माणां धर्मोधिकतमो मतः । यद्भक्त्या पुंडरीकाक्षं स्तवैरर्चेन्नरः सदा" इति शांतनवोक्तेः । भगवान्सर्वज्ञः आर्यं श्रेष्ठं धर्मजं युधिष्ठिरमाह । ना अरयो यस्य तादृशमवनौ भूमौ परीक्षिन्नृपश्च भुवि बलिजयेन प्रथितं कृत्वा स्वस्य परमं ज्ञानं श्रीभागवतं तदुपदेशेन शापाच्छापजन्यतक्षकदंशजनरकादावत् रक्षितवान् । अमुं परमानन्दाकृतिं मद्गुरुरूपं माधवमहं नमामीति योज्यम् । नन्वेतच्छ्रीपरीक्षितः शापोत्तरं श्रीशुकदेवकृतश्रीभागवतश्रावणं श्रीमहाभारतविरुद्धं तत्रैतद्वृत्तस्याश्रवणात् । तथाहि श्रीमहाभारतादिपर्वण्युक्तम् "शृंग्युवाच ॥ योऽसौ वृद्धस्य तातस्य तथा कृच्छ्रगतस्य च । स्कंधे मृतं समास्राक्षीत्पन्नगं राजकिल्बिषी ॥ तं पापमतिसंक्रुद्धस्तक्षकः पन्नगेश्वरः । आशीविषस्तिग्मतेजा

मद्वाक्यबलचोदितः ॥ सप्तरात्रादितो नेता यमस्य सदनं प्रति॥'' इत्यारम्याग्रिमैकचत्वारिंशाध्यायस्थशमीकप्रेषितगौरमुखात्स्वशापं श्रुत्वा तत्प्रतीकारार्थं सभ्यैर्मंत्रयामास । तथाहि।''तस्मिंश्च गतमात्रेऽथ राजा गौरमुखे तदा। मंत्रिभिर्मंत्रयामास सह संविग्नमानसः॥२८॥संमंत्र्य मंत्रिभिश्चैव सं तथा मंत्रतत्त्ववित् । प्रासादं कारयामास एकस्तंभं सुरक्षितम् ॥२९॥ रक्षां च विदधे तत्र भिषजश्चौषधानि च । ब्राह्मणान्मंत्रसिद्धांश्च सर्वतो वै न्ययोजयत् ॥ ॥३०॥राजकार्याणि तत्रस्थः सर्वाण्येवाकरोच्च सः । मंत्रिभिः सह धर्मज्ञः समंतात्परिरक्षितः॥३१॥न चैनं कश्चिदारूढं लभते राजसत्तमम् । वातोपि निश्चरंस्तत्र प्रवेशे विनिवार्य्यते॥३२॥'' इति।एषां पञ्चश्लोकानामयमर्थः । राजानं प्रति शृंगिदत्ततक्षकदंशलक्षणशापं कथयित्वा शमीकशिष्ये गौरमुखे गति सते राजा परीक्षिदथ मंत्रास्तत्तद्देवताराधनोपयुक्तात्र्यम्बकमित्याद्यास्तज्ज्ञातारो मंत्रिणः श्रोत्रियास्तैः सह संविग्नमानसो मृत्युभीतेराकुलः मंत्रयामास अधुना किं कर्त्तव्यं मयेति विचारयामास ॥ २८ ॥ स्वयमपि मंत्रेषु तत्त्वं हरिनाम ''मंत्रमुख्यं हरेर्नाम तीर्थमुख्यं च जाह्नवी'' इत्याद्युक्तेस्ताद्वित् तत्प्रभाववित् ''कलौ नामैव केवलम्'' इत्यादिशास्त्रज्ञः प्रांति पूरयत्यार्थिजनाभिलषितमिति प्राः अत्युदारः कारुणिकश्च स चात्र श्रीशुक एव 'संसिद्धस्य वनीयसः' इति श्रीभागवतोक्तेः । यद्वा 'नंदनंदनरूपोऽसौ श्रीशुको भगवान्मुनिः' इति स्कांदोक्तेस्तस्य श्रीनंदनंदनरूपत्वादुदारत्वकारुणिकत्वे साहजिके एवेति । प्रापूरणेऽस्मात्क्विबन्ताट्टाप्रत्यये तृतीयैकवचने ''आतो लोपः'' इत्यालोपे प्रा इति रूपं सिध्यति । सानां सतानां दीनां दिनानां समाहारः सदम् । समासांतोत्र डः । ''समाहारे नपुंसकम्'' इति क्लीबत्वम् । नामैकदेशोच्चारणेन सर्वनामग्रहणमिति न्यायेन सशब्देन सप्तानां दिशब्देन दिनानाञ्च ग्रहः । यद्वा यादयोष्टाविति केरलमतानुसारेण सशब्दः केवलोऽपि सप्तसंख्यां वदतीति । तथा च सदपदं सप्ताहं वक्ति सदमेव सादम् । स्वार्थिकोण् । तथा च सप्तभिर्दिनैरित्यर्थो लभ्यते । सुरक्षितं सुरेभ्यः क्षितमदत्तमर्थाच्छ्रीमद्भागवतमायाति । तदुक्तं पाद्मे ''परीक्षिते कथां वक्तुं सभायां संस्थिते शुके'' इत्यारभ्य ''श्रीमद्भागवती वार्ता सुराणामपि दुर्लभा'' इत्यंतेन श्लोकपंचकेन । यद्वा सुरा देवाः क्षियंति निवसंत्यत्रेति सुरक्षितं गंगातटं ''जाह्नव्यास्तु तटे सर्वे वसंति देवतागणाः'' इत्यादेः । द्वितीयेयं सप्तम्यर्थे । गंगातटे श्रीशुकेन सार्द्धं सप्ताहं यथा स्यात्तथा एकस्तंभं श्रीभागवतं कारयामास वाचयामासेति तात्पर्यम् । एकं सजातीयविजातीयस्वगतभेदशून्यं ब्रह्मार्थाच्छ्रीहरिः 'हरिरेव परं ब्रह्म'' इत्याद्युक्तेः । तत्स्तभ्नाति चित्ते रुणद्धीत्येक' स्तंभं श्रीमद्भागवतं ''सदा सेव्या सदा सेव्या श्रीमद्भागवती कथा । यस्याः श्रवणमात्रेण हरिश्चित्तं समाश्रयेत्'' इति पाद्मात् । ''सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात्'' इत्यत्रैवोक्तेश्च ॥ २९ ॥ तत्र तदा गंगातटे वा रक्षति प्रायश्चित्तोपदेशेनेति रक्षा ब्रह्मसभा तां विदधे चक्रे भिषजश्च विषवैद्यान् औषधानि सर्पविषहरान् मंत्रैः सिद्धान् सिद्धिमतो ब्राह्मणांश्च न्ययोजयत्स्थापयामासेत्यर्थः ॥ ३० ॥ राजकार्याणि राजभिः कर्त्तुं योग्यानि सांपरायिकमहादानादीनि सर्वाण्येव तत्रस्थः श्रोत्रियसमाजगतः सहधर्मज्ञः ''हेतुर्दामोदरः सहः'' इति सहस्रनामसु सहशब्दो विष्णुपरो दृश्यते । तद्धर्मज्ञः विष्णुभक्त इत्यर्थः । मंत्रिभिः श्रोत्रियैः । समं सार्द्धमकरोच्चकारेत्यर्थः ।''ब्राह्मणान्मंत्रसिद्धांश्च'' इत्युक्तेः । ''तदिति ब्रह्मणो नाम'' इति श्रुतेः । तद्ब्रह्म परं प्राप्यं येन स तत्परोऽध्यात्मविचारस्स एव तात्परः सोऽस्यास्तीति तात्परी श्रीशुकस्तेन रक्षितस्तत्त्वोपदेशेन संसाराद्रक्षितः ॥ ३१ ॥ कश्चित्प्राकृतो जन एनं श्रीमद्भागवतविचारमारूढं न लभते प्राप्तात्मतत्त्वोऽयमिति नाजानात् । तत्रात्मविचारप्रवेशे सति वातः प्राणोऽपि निश्चरन्बहिर्निर्गच्छन्विशेषेण वार्य्यते निषिध्यते । कर्मकर्त्तरि प्रयोगः । ''न तस्य प्राणा उत्क्रामंति अत्रैव समवनीयन्ते'' इति श्रुतेः । इत्थं व्याख्याने न कदाचिदपि विरोधः संभवेदिति तत्त्वम् ॥ ३२ ॥ किञ्च वाराहेप्येतद्वृत्तं वर्ण्यते परीक्षितः शापकथनप्रसंगे ''तत्राजग्मुर्महाभागा मुनयः संशितव्रताः ॥ शुकश्च व्यासतनयो महाभागवतो मुनिः ॥ संहितां श्रावयामास राज्ञे भागवती शुभाम्'' ॥ इत्यादिकं श्रीवाराहदेवेनोक्तम् । ब्रह्मांडेऽपि ''शुकवागमृताब्धीन्दुः परीक्षित्स्वांतगं तमः । निरस्यन्दिद्युते विप्र श्रीमद्भागवताख्यया ॥'' इति शेषदेवेनोक्तमतः श्रीमहाभारतेऽपि गोपयित्वा वर्णितमेवैतद्वृत्तमिति तत्त्वम् ॥ अथ प्रथमस्कंधश्रवणफलम् ॥ ''मातृसंगमने चैवं यत्पापं प्राप्यते नरैः । प्रथमस्कन्धश्रवणात्तस्मात्पापात्प्रमुच्यते ॥ पादादिजानुपर्यंतं ममांगं प्रथमो विधे ॥ ब्रह्मोवाच ॥ मातृगाम्यभवत्को वा कस्मिन्देशे स्थितश्च सः । प्रथमस्कंधश्रवणात्कथं मुक्तो वद प्रभो ॥ हरिरुवाच ॥ अवंतीनगरे रम्ये राजासीच्छ्रीकरो महान् । तस्य भार्याद्वयं चासीत्सिंधुसौवीरदेशजम् ॥ तयोर्मध्ये च या ज्येष्ठा नाम्ना केसरिणीति च । अजा नाम्ना कनिष्ठा तु सौवीराधिपतेः सुता ॥ पतिधर्मरता ज्येष्ठा कनिष्ठा न पतिप्रिया ॥ सर्वाङ्गसुंदरी सा हि शापदोषेण दुःखिता ॥ ब्रह्मोवाच ॥ ब्रूहि विष्णो कथं शापोऽभूत्तस्याः कीदृशोथ वा ॥ हरिरुवाच ॥ पुराघौघहरं नाम तीर्थं लोकमलापहम् । तत्र विप्रः सुधर्माख्यस्तपस्वी न्यवसत्पुरा ॥ ग्रीष्मे तपति पंचाग्नीन्वर्षास्वासारषाड् जले । आकंठमग्नः

शिशिरे वर्षाणामयुतायुतम् ॥ एकपाद ऊर्द्धपादः पादांगुष्ठाश्रितावनिः । वायुभक्षः पर्णभक्षो वर्षाणामयुतायुतम् ॥ एवंविधो द्विजस्तत्र तताप परमं तपः । दृष्ट्वा तस्य तपो जिष्णुर्भयमापेदिवान्बहु ॥ इंद्रासने स्पृहा ह्यस्य संचिंत्येत्यब्रवीत्तदा ॥ अप्सरसं पुष्पवंतीं समाहूय पितामह ॥ इंद्र उवाच ॥ भो भो पुष्पवति देवि मम कार्यं समाचर ॥ अत्रौवनाशने तीर्थे सुधर्मा नामतो द्विजः ॥ तत्तपोव्याकुलीभूतं त्रैलोक्यं सचराचरम् ॥ यथा मोहो भवेत्तस्य तथा कार्यं त्वया लघु ॥ हरिरुवाच ॥ इति वाक्यं समाकर्ण्य सहस्राक्षस्य धीमतः । ऋषेः शापात्त्रस्तमनाश्चिन्तयामास साप्सराः ॥ गमने विप्रशापः स्यादन्यथा दण्ड इंद्रतः ॥ सा जगाम ततो दिव्यं मुनेस्तस्य तपोवनम् ॥ नानाद्रुमैः पक्षिगणैर्वृतं दृष्ट्वाच तं मुनिम् ॥ तया नृत्यं समारेभे गीतवाद्यमनोहरम् ॥ तस्या नादेन रम्येण तत्रासीन्मधुसंभवः ॥ कामो रत्या समागत्य दध्रे पुष्पमयं धनुः ॥ तच्छुत्वा निनदं तस्याः प्रबुद्धो मुनिपुंगवः ॥ तां च दृष्ट्वा स धर्मात्मा वाक्यमाह वराननाम् ॥ का त्वं कस्यासि किं कार्यं ब्रूहि यन्मनसेप्सितम् ॥ पुष्पवत्युवाच ॥ देवकन्यां सुगीतज्ञां लीलया त्वत्समीपगाम् ॥ त्वं विद्धि मां च पत्नीत्वे मया सह सुखं भज ॥ विमानमिदमास्थाय देवानां पानभूमिषु ॥ एते मत्सहगा विप्र त्वां भजेयुः सुखं भज ॥ सुधर्मोवाच ॥ नाहं कामीह सुभगे सा कुरुष्व तपोव्ययम् ॥ पुनः सा प्रार्थयामास स्वां भजस्व सुमध्यमाम् ॥ विज्ञाय तद्धठं विप्रस्तस्यै शापद्वयं ददौ ॥ संसारार्णवमग्नानां प्रलोभयसि मां यतः ॥ अतस्त्वं मानुषेलोके भव स्वात्मजगामिनी ॥ सौवीराधिपतेः पुत्री सा जाता मुनिशापतः ॥ तामजासंज्ञिकां राज्ञे श्रीकराय ददौ पिता ॥ कदाचिच्छ्रीकरो राजा निर्जनं वनमध्यगात् ॥ ययौभ च तया सार्द्धं मृगयासक्तमानसः ॥ राज्ञी पुत्रं समालेभे नृपसंगान्मनोहरम् ॥ जाते पुत्रे मृतो राजा तत्पुत्रस्तु नृपोऽभवत् ॥ सपत्नीपुत्रराज्येन सा दुःखं प्राप्य दारुणम् ॥ जगाम वणिजा सार्द्धं रत्यासक्तमतिः सदा ॥ सोपि वैश्यो मृतिं प्राप ततः सातीव दुःखिता ॥ अहो कष्टमहो दुःखं मया प्राप्तमभाग्यया ॥ श्रीकरो हि मृतो राजा जारोपि निधनं गतः ॥ एतस्मिन्नंतरे दैवान्मृते केसरिणीसुते ॥ अजापुत्रोऽभवद्राजा कीर्तिमानिति विश्रुतः ॥ तदा संचिंत्य मनसा जीवनं मे कथं त्विह ॥ बभूव नर्तकी ब्रह्मन्सा संकेतोपजीविनी॥तत्सुतो दिग्जये व्यग्रो दैवात्तत्र जगाम ह॥ यत्र माता ह्यजा नाम नर्तकीभावमाश्रिता॥एकदा स वने राजा तया सार्द्धं ययाभ ह । कामार्तश्च निशापाये प्रातः स्वस्थानमाययौ॥ द्वौ द्विजौ ज्ञानसंपन्नौ तत्रस्थौ तं समूचतुः॥ समागतं नृपं दृष्ट्वा कृतं पापं महन्नृप ॥ राजोवाच ॥ किं कृतं हि मया पापं प्रायश्चित्तं च किं ततः॥ विप्रावूचतुः॥ न वक्तुं शक्यते तच्च यन्निशायां त्वया कृतम् । यया साकं कृतं पापं तामेव प्रष्टुमर्हसि ॥ त्वं तस्याः कोऽभवत्पूर्वं तव सा काभवत्पुरा ॥ इत्युक्त्वा तौ गतौ विप्रौ राजा वेश्यागृहं गतः ॥ विकोशमसिमादाय प्रोवाच गणिकां प्रति ॥ का त्वं दुष्टे कस्य पुत्री कस्य भार्याभवत्पुरा । सर्वमेतत्समाचक्ष्व यदि कल्याणमिच्छसि ॥ सौवीराधिपतेः पुत्री श्रीकरस्य प्रिया ह्यहम् ॥ पुत्रे जाते दशाहे तु श्रीकरः पञ्चतामितः ॥ राज्यं प्राप्तं सपत्न्याश्च पुत्रेण तेन दुःखिता । गताहं वणिजा सार्द्धं सोपि मद्दैवतो मृतः । महीपतेः पुरा चाहं पुत्ररत्नमवाप ह ॥ कीर्त्तिमंतमिति ख्यातं तं त्यक्त्वात्र समागता ॥ वैश्याभवं वैश्यमृतौ वृत्तमेतन्मम प्रभो ॥ राजोवाच ॥ श्रीकरो मे पिता चासीत्त्वं मे मातेति निश्चितम् ॥ धिक्त्वां मातृगमं मां धिगित्युक्त्वा निर्ययौ वनम् ॥ गते पुत्रेऽनुगा साभूत्तीर्थयात्रां प्रचक्रतुः ॥ एकदा यमुनातीरे स्नानार्थं तौ समागतौ ॥ ताभ्यां तत्र श्रुता गाथा प्रथमस्कंधसंभवा ॥ तत्पुण्येन गतौ तौ तु वैकुंठं योगिदुर्लभम्'' ॥ इति पाद्मोत्तरखंडत उद्धृतम् ॥ वन्देहं राधिकानाथं यशोदानन्दनं हरिम् ॥ यत्कृपालवसंलब्धधिया चैष प्रकाशकः ॥ श्रीभागवतभावार्थदीपिकायाः कृतो मया ॥ श्रीभागवतव्याख्यानरूपां मालां कृतां गुरोः ॥ कृपया लातु गोविंदः श्रीवंशीधरशर्मणा ॥ यद्यपि लोके बह्व्यः संति हि टीकाः पुरातन्यः ॥ तथापि चैनां कृपया पश्यंतु कामदां सुधियः ॥ ॥ ४० ॥ इति कौशिकगोत्रखरडनगरवासिवंशीधरशर्मकृते श्रीधरस्वामि कृतभावार्थदीपिकाप्रकाशे प्रथमस्कंधः समाप्तिमगात् ॥ श्रीकृष्णो मे मंगलं संददातु ॥

---

अयं श्रीमद्भागवतभावार्थदीपिकाप्रकाशसमलंकृतश्रीभागवतभावार्थदीपिकासमेतश्रीमद्भागवतप्रथमस्कन्धः मुम्बय्यां खेमराज श्रीकृष्णदास श्रेष्ठिनः स्वकीये "**श्रीवेंकटेश्वर**" मुद्रणालये मुद्रयित्वा प्रकाश्यमानयित ॥

---

१ वसंताविर्भावः । २ मिथुनी बभूव ।

॥ इति श्रीधरीयटीकया वंशीधरशर्मकृततद्भावार्थदीपिकाप्रकाश
टीकया चोपेते भागवते प्रथमस्कन्धः समाप्तः ॥ १ ॥

॥ अथ श्रीधरीयटीकया वंशीधरशर्मकृततद्भावार्थदीपिकाप्रकाश-
टीकया चोपेते श्रीमद्भागवते द्वितीयस्कन्धः प्रारभ्यते ॥

द्वितीयस्कंधः



वराह अवतार
विष्णु
गरुड
व्यास
सत्यवती
दत्तात्रेय
सनत्कुमार
नर
नारायण
ध्रुव
पृथु
ऋषभदेव
हयग्रीव
मत्स्यावतार
शंखासुर
ब्रह्मा
नारद
शुक
परीक्षित
कूर्म
दैत्य
प्रल्हाद
नृसिंह
हरि
गजेंद्र
बली
वामन
हंसावतार
नारद
स्वायंभु मनु
धन्वंतरी
परशुराम
लक्ष्मण
राम
राम
कृष्ण
कंस
बौद्ध
कलंकी

ॐ नमो भगवते वासुदेवाय ॥ श्रीशुक उवाच ॥ वरीयानेष ते प्रश्नः कृतो लोकहितं नृप ॥ आत्मवित्संमतः पुंसां श्रोतव्यादिषु यः परः ॥१॥

श्रीगणेशाय नमः ॥ ॥ द्वितीये तु दशाध्यायैः श्रीभागवतमादितः ॥ उद्देशलक्षणोक्तिभ्यां संक्षेपेणोपवर्ण्यते ॥ १ ॥ तत्र तु प्रथमेऽध्याये कीर्तनश्रवणादिभिः ॥ स्थविष्ठे भगवद्रूपे मनसो धारणोच्यते ॥ २ ॥ यन्नामकीर्तनं दानतपोयोगादिसत्फलम् ॥ तं नित्यं परमानंदं हरिं नर नम स्मर ॥ ३ ॥ उक्तः पूर्वमुपोद्घातः सप्रसंगः शुकागमः ॥ राज्ञा पृष्टं नृणां कृत्यमथाह शुकसन्मुनिः ॥ ४ ॥ राज्ञः प्रश्नमभिनंदति । वरीयानिति । ते त्वया पुंसां श्रोतव्यादिषु मध्ये यः परः श्रेष्ठगोचरः प्रश्नः कृत एष वरीयान् । यतो लोकहितमेतन्मोक्षहेतुत्वात् । आत्मविदां मुक्तानां च संमतो यतः ॥ १ ॥ तत्र तावत्स्वाभाविकक्रियाणामनर्थहेतुत्वं वदन् ब्रूहि । यद्वा विपर्ययमित्यस्यो

ॐ स्वस्ति श्रीगणेशाय नमः ॥ वन्देऽहं पार्वतीसूनुं सर्वविघ्नोपशांतये ॥ श्रीगुरून्सर्वतो नत्वाऽऽरंभे टीकां मनोहराम् ॥ १ ॥ ब्रह्मर्षीणां समाजे यो राजानं च परीक्षितम् ॥ गंगातटे समुद्धर्तुं शुकरूपेण केशवः ॥ ॥ २ ॥ समाजगाम सच्छास्त्रोपदेशेन स्वयं हरिः ॥ तं वंदेऽभीप्सितार्थाप्त्यै नंदसूनुं जगद्गुरुम् ॥ ३ ॥ अधुना द्वितीयस्कंधप्रकाशः क्रियतेतराम् ॥ गिरं गुरुं च संध्याय श्रीधरस्वामिनं तथा ॥ ४ ॥ अत्र श्रीशुकागमनाह्लादविस्मृतस्वेष्टप्रणतिः श्रीधराचार्योऽध्यायगणनापुरस्सरं व्याख्यातुमारभते । द्वितीये त्विति । नाममात्रेण वस्तुसंकीर्त्तनमुद्देशः संकीर्त्तनत्वमुद्देशत्वमित्युक्ते ताल्वोष्ठपुटव्यापारेणोच्चारणं संकीर्त्तनम् । इह वंशे पाट्यमाने दलद्वयविभागजन्यचटचटशब्देऽतिव्याप्तिवारणाय संपदम् । काकरवेऽतिव्याप्तिवारणाय नामपदम् । लक्षणवाक्येतिव्याप्तिवारणाय मात्रपदम् । वंध्यात्मजेऽतिव्याप्तिवारणाय पदार्थपदम् । असाधारणधर्मो लक्षणम् । असाधारणत्वं नाम लक्ष्यतावच्छेदकसमनियतत्वम्, लक्ष्यतावच्छेदकसमनियतत्वं नाम लक्ष्यतावच्छेदकव्याप्यत्वे सति लक्ष्यतावच्छेदकव्यापकत्वम् यथा—गंधवत्त्वं पृथिव्या लक्षणं लक्ष्या पृथिवी लक्ष्यता पृथिव्यां लक्ष्यतावच्छेदकं पृथिवीत्वं यत्रयत्र गंधवत्त्वं तत्रतत्र पृथिवीत्वमिति कृत्वा गंधे लक्ष्यतावच्छेदकव्याप्यत्वमस्ति एवं यत्रयत्र लक्ष्यतावच्छेदकं पृथिवीत्वं तत्रतत्र गंध इति कृत्वा गंधे लक्ष्यतावच्छेदकव्यापकत्वमप्यस्तीति व्याप्यस्य वचनं पूर्वं व्यापकस्य ततः परमित्युक्तेर्गंधवत्त्वपृथिवीत्वयोर्व्याप्यव्यापकत्वमनुसंधेयम् ॥ तथा च इदं श्रीभागवतमिति कथनमुद्देशः । असाधारणधर्मोत्र सर्गादिदशकमेव न ज्ञेयस्तस्यान्यत्रापि महापुराणे विद्यमानत्वात् । किं तु हयग्रीवब्रह्मविद्यादिरेव तस्यैवासाधारणधर्मत्वात् । यद्यप्यत्र तन्नोक्तं तथापि बीजभूतभगवदुपदिष्टचतुःश्लोक्यां तदस्त्येव वटकणिकायां वट इव तच्च श्रीगुरुप्रसादं विना दुर्ज्ञेयं "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः॥" इति श्वेताश्वतरोक्तेः । 'यथा हि भगवानेव वस्तुतः सदसच्च यत्' इत्यादि हयग्रीवब्रह्मविद्या 'अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम्' इत्यनेन यथाकथंचिदसूचि गायत्र्या ब्रह्मविद्यारूपत्वेन तेनारंभोप्यसूच्येव । तमःशब्देन वृत्रवधाद्यप्यसूचि "तमसा त्वाष्ट्रमूर्त्तिना" इत्यत्र तमःशब्दस्य वृत्रे प्रयुज्यमानत्वात् । तमो राहुर्यथास्त्यपि न प्रतीयेतेत्यनेन तद्वधो ध्वनितः । अप्रतीतिर्हि नष्टस्यैव वस्तुनो भवतीत्यलमपूर्वविचारेण । अल्पाक्षरैर्बह्वर्थाभिधानं संक्षेपः ॥ १ ॥ तत्र दशाध्यायेषु आदिनामननग्रहः ॥ २ ॥ पुनरागतस्मृतिः श्रीधरो मंगलं वस्तुनिर्देशात्मकमाचरति । यन्नामेति । दानं च तपश्च योग आदिर्यस्य तीर्थयात्रादेस्सयोगादिश्च तेभ्यः सच्छ्रेष्ठं फलं यस्य "तत्तथा—गोकोटिदानं ग्रहणेषु काशी मकरः प्रयागो यदि कल्पवासः । यज्ञायुतं मेरुसुवर्णदानं गोविंदनामस्मरणेन तुल्यम्" इति पाण्डवगीतोक्तेः । हे नरेति स्वात्मानमुद्दिश्योक्तं तं नम नमस्कुरु स्मर चेत्यन्वयः ॥ ३ ॥ वर्णनीयमर्थं मनसि निधाय तदर्थमर्थांतरकल्पनमुपोद्घातः उपोद्घातरूपः । अथ शुकश्चासौ सन्मुनिश्चेति तथा कृत्यमन्तकृत्यम् ॥ ४ ॥ आदिना मंतव्यादिग्रहः । श्रेष्ठः श्रीकृष्णः गोचरो विषयो यस्य स श्रेष्ठगोचरः । अत्र संदर्भः । "अपि मे भगवान्प्रीतः कृष्णः पांडुसुतप्रियः" इत्यादिना श्रीकृष्ण एव स्वरतिं राजा ध्रियमाणां श्रोतव्यादिप्रश्नेनैवांतकाले श्रीकृष्ण एव मय्युपदिश्यतामिति राजाभिप्रायानंतरं श्रीशुक उवाच—वरीयानिति ॥ ते त्वया पुंसां श्रोतव्यादिषु मध्ये यः परः श्रीकृष्णकथाश्रवणाभिप्रायेण परमः प्रश्नः कृत एव तु वरीयान् वर्णाश्रमसाधारणधर्मप्रश्नो हि वरः । स्वाश्रमधर्मप्रश्नो वरतरस्तत्रापि निष्कामेन तदाचरणप्रश्नो वरतमः श्रीभगवद्विषयकः प्रश्नस्तु वरीयानेवेति चतुर्थकोटी

श्रोतव्यादीनि राजेंद्र नृणां संति सहस्रशः ॥ अपश्यतामात्मतत्त्वं गृहेषु गृहमेधिनाम् ॥ २ ॥ निद्रया ह्रियते नक्तं व्यवायेन च वा वयः ॥ दिवा चार्थेहया राजन्कुटुंबभरणेन वा ॥३॥ देहापत्यकलत्रादिष्वात्मसैन्येष्वसत्स्वपि ॥ तेषां प्रमत्तो निधनं पश्यन्नपि न पश्यति ॥४॥

तत्रमाह श्रोतव्यादीनीति त्रिभिः । गृहेषु सक्तानामत एव गृहमेधिनां तद्गतपंचसूनापराणाम् । मेधतिर्हिंसार्थः ॥ २ ॥ तैश्च वृथैवायुर्व्ययो भवतीत्याह । नक्तं रात्रौ यद्वय आयुस्तन्निद्रया व्यवायेन रत्या वा ह्रियते । दिवा अह्नि यद्वयस्तत् अर्थेहया अर्थार्थमुद्यमेन सिद्धेऽर्थे कुटुंबपोषणेन वा चकारावनुक्तसमुच्चयार्थौ ॥ ३ ॥ ननु नश्वरकुटुंबायर्थं कथमायुर्व्ययं कुर्यात्तत्राह । देहादिषु आत्मनः सैन्येषु परिकरेषु असत्सु मिथ्याभूतेष्वपि प्रमत्तः प्रसक्तस्तेषां पित्रादिदृष्टांतेन नाशं पश्यंस्तदपि नानुसंधत्ते ॥ ४ ॥

हीयसुन्प्रत्ययः । यः प्रश्नोपि श्रोतव्यादिषु परः यस्य प्रश्नस्यापि श्रवणादौ परमपुरुषार्थः सिध्यतीत्यर्थः । सर्वावतारावतारिप्रश्नेभ्यः परममहान् । स च लोकहितं यथा स्यात्तथैव कृतः त्वं तु तथाभूतश्रीकृष्णैकनिर्वृद्धप्रेमत्वात्कृतार्थ एवेति भावः । तदुक्तम् । "वैयासकेरिति वचस्तत्त्वनिश्चयमात्मनः ॥ उपधार्य मतिं कृष्ण औत्तरेयः सतीं व्यधात्" इति सती विद्यमाना श्रीकृष्णे या मतिस्तामेव विशेषेण धृतवानित्यर्थः । एतदेव व्यक्तीकरिष्यते राजा "हरेरद्भुतवीर्यस्य कथा लोकसुमंगलाः । कथयस्व महाभाग यथाहमखिलात्मनि ॥ कृष्णे निवेश्य निःसंगं मनस्त्यक्ष्ये कलेवरम्" इति एवमेव "कथितो वंशविस्तारः" इत्यादि । अनंतरं "सम्यग्व्यवसिता बुद्धिः" इत्यादि । पूर्वं मया नानावतारादिकथाभिरभिनंदितस्यापि या श्रीमद्वसुदेवनंदनस्यैव कथायां नैष्ठिकी स्थायिरूपा रतिर्जाता एषा बुद्धिस्तु सम्यग्व्यवसिता परमरसविदग्धेत्यर्थः । यद्वा यः प्रश्नोपि श्रोतव्यादिषु परः यस्य प्रश्नस्य श्रवणादौ परमपुरुषार्थः । विश्वनाथः—पूर्वस्कंधांते "ततः पृच्छामि संसिद्धिम्" इति "पुरुषस्येह यत्कृत्यम्" इतिवाक्याभ्यां सम्यक्सिद्धिः काऽत्र साधनं च किमिति तत्रापि श्रव्यजप्यादिकं किन्तथैवा श्रव्याजप्यादिकं च किमिति राज्ञः प्रश्नमभिनंदति । वरीयान्श्रेष्ठस्ते त्वया कृतः एष प्रश्न एव लोकानां हितं न चायं प्राकृतः प्रश्न इत्याह । आत्मविदामेषां युष्मत्सभोपविष्टानां संमतः एतदर्थमेवैतेषामत्रागमनादिति भावः । यतः श्रोतव्यादिष्विति सतां प्रश्नोपि श्रूयते कीर्त्यते स्मर्य्यते इत्यतः श्रोतव्यादिषु प्रश्नेषु मध्ये यः प्रश्नः पर इतोन्यस्योत्कृष्टस्याभावात्सर्वोतिमः । इमं प्रश्नमेव श्रुत्वा कीर्तयित्वा स्मृत्वा पुमांसः सर्वतोप्यतिकृतार्था भवंति । पुनरेतत्प्रश्नस्योत्तरं मया दत्तं श्रुत्वा त्वं कृतार्थी भविष्यतीति भविष्यसीति भावः । इत्थमेवाग्रे वक्ष्यते "वासुदेवकथाप्रश्नः पुरुषांस्त्रीन्पुनाति हि ॥ वक्तारं पृच्छकं श्रोतॄंस्तत्पादसलिलं यथा" ॥ इति । नृपेति । लोकहितकरणेनैवं नृपत्वं सत्स्यतीति भावः ॥१॥ तत्र तावत् द्वितीयस्कंधे आदौ भगवच्चरणप्राप्तिरेव संसिद्धिस्तत्र कृत्यं तन्नामलीलाश्रवणकीर्त्तनाद्येव सर्वोत्कृष्टमित्यग्रे प्रतिपादयिष्यन्प्रथमं "ब्रूहि यद्वा विपर्ययम्" इत्यस्योत्तरत्वेन कर्मयोगमाह । श्रोतव्यादीनि" इति । अत्मनां तत्त्वं कवयः किं कुर्महे किमुदर्का भविष्यामः कथं निस्तारं प्राप्नुम इत्यपश्यतां किं तु गृहेषु सक्तानां 'मेधृ हिंसायाम्' । राजेन्द्रेति । राज्ञामेव बहुकार्याकुलत्वादात्मतत्त्वज्ञानं न भवति किमुत राजेंद्रस्येति भावः । पञ्चसूनास्तु । "कंडनी पेषणी चुल्ली उदकुंभी च मार्जनी ॥ पञ्चसूना गृहस्थस्य ताभिः स्वर्गं न विंदति ॥" इति स्मृतेः । सूना वधस्थानम् । यद्वात्मतत्त्वं भगवत्तत्त्वम् । तस्मादित्युपसंहारिष्यमाणत्वात् । तदपश्यतां परमश्रोतव्यत्वेनाजानतामित्यर्थः ॥ २ ॥ तैः श्रोतव्यादिभिः । रत्येति । कर्मिणां स्त्रीसंगस्यानिषिद्धत्वात् कर्मयोगे कुटुंबभरणस्य विहितत्वात् "अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्" इत्युक्तेः ॥ ३ ॥ अत्राक्षिपति । नन्विति । असत्सु जीवात्मनो देहादिसंबंधाभावान्मिथ्याभूतेष्वपि तेषु प्रमत्तः प्रसक्तः । यद्वाऽसत्स्वसाधुष्वपि वहिर्मुखत्वादसमर्थेष्वपीत्यर्थः नानुसंधत्ते । यद्वा मोहमद्यपानोन्मत्तत्वान्नानुसंधत्ते तदुक्तं भर्तृहरिणा । "आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं व्यापारैर्बहुकार्यभारगुरुभिः कालो न विज्ञायते । दृष्ट्वा रोगजराविपत्तिमरणं त्रासश्च नोत्पद्यते पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ।" इति । तेनायं कालेनैव ग्रस्यते भगवद्भक्तस्तु भगवदुन्मुखैर्देहादिभिरप्रमत्तः कालमपि जयतीति भावः ॥ ४ ॥

तस्माद्भारत सर्वात्मा भगवान्हरिरीश्वरः ॥ श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयम् ॥ ५॥ एतावान्सांख्ययोगाभ्यां स्वधर्मपरिनिष्ठया ॥
जन्मलाभः परः पुंसामंते नारायणस्मृतिः ॥ ६ ॥ प्रायेण मुनयो राजन्निवृत्ता विधिषेधतः ॥ नैर्गुण्यस्था रमंते स्म गुणानुकथने हरेः ॥ ७ ॥
इदं भागवतं नाम पुराणं ब्रह्मसंमितम् ॥ अधीतवान्द्वापरादौ पितुर्द्वैपायनादहम् ॥ ८ ॥

एवं विपर्ययप्रश्नोत्तरमुक्त्वा श्रोतव्यादिप्रश्नस्योत्तरमाह । तस्मादिति।हे भारत भरतवंश्य। सर्वात्मेति श्रेष्ठत्वमाह। भगवानिति सौंदर्यम्।ईश्वर इत्यावश्यकत्वम्। हरिरिति बंधहारित्वम्। अभयं मोक्षमिच्छता ॥५॥ अतः परमन्यच्छ्रेयो नास्तीत्याह। एतावानेव जन्मनो लाभः फलम्। तमाह नारायणस्मृतिरिति सांख्यादिभिः साध्य इति। स्वातंत्र्येण तेषां लाभत्वं वारयति। सांख्यमात्मानात्मविवेकः योगोऽष्टांगः अंते तु स्मृतिः परो लाभः न तन्महिमा वक्तुं शक्य इत्यर्थः ॥६॥ तत्र सदाचारं प्रमाणयति। प्रायेणेति। विधिषेधतः विधिनिषेधाभ्यां निवृत्ताः नैर्गुण्ये ब्रह्मणि स्थिता अपि। स्म प्रसिद्धम् ॥ ७ ॥ ननु किमिदमपूर्वं कथयसि सत्यमत्यपूर्वमेवेदमित्याह। इदं भगवत्प्रोक्तं तन्नामैकप्रधानं पुराणं ब्रह्मसंमितं सर्ववेदतुल्यम्। यद्वा ब्रह्म सम्यक् मितं येन। कुतस्त्वया प्राप्तमत आह। अधीतवानिति। द्वैपायनात्पितुः कदा द्वापरादौ द्वापर आदिर्यस्य

अतःकृतार्थी भवितुं कर्मादिकमकुर्वाणा भक्तिमेव कुर्वीरन्नित्याह—तस्मादिति।भारतेति।भरतवंशस्य हरिभक्तत्वेन त्वां प्रत्यहं भगवत्तत्त्वमवश्यं वदामीतिभावः।अभयं स्वपराभवाभावं यद्वाऽभयं सर्वभयनिवारकसर्वानंदमयपुरुषार्थम् "गतवानभयं हरिम्" इति वक्ष्यमाणत्वात् "मर्त्यो मृत्युव्यालभीतः पलायन्"इत्याद्युक्तेश्चाभयं श्रीकृष्णमित्यर्थः। अत्र हरिरिति विशेष्यपदं सर्वात्मेत्यादिविशेषणत्रयेण मोक्षाभिसंधिनी रागानुगा वैधी चेति भक्तिर्व्यञ्जिता। तत्र प्रथमायामभयं मोक्षमिच्छता सर्वेषामात्मा परमात्मा हरिः श्रोतव्य इति द्वितीयायामभयं निष्कृपं यथा स्यात्तथा इच्छता लोभवता पुंसा भगवानतिसुन्दरो नंदसूनुः श्रोतव्य इति। "भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु" इत्यमरः। तृतीयायां न विभेत्यस्मादित्यभयो हरिरेव "मुहूर्तात्सर्वमुत्सृज्य गतवानभयं हरिम्" इत्यग्रिमश्लोके वक्ष्यमाणत्वात्। इच्छताऽभयमात्मत्राणमिच्छता वा ईश्वरो हरिरीशितव्येन पुंसा श्रोतव्य इत्यादि कीर्त्तितव्यश्च स्मर्तव्यश्चेति चकाराभ्यां श्रवणानंतरं कीर्त्तनश्रवणयोरेव कालत्वं विहितमिति श्रोतव्यादिप्रश्नस्योत्तरमुक्तम् ॥ ५ ॥ अतो भगवच्छ्रवणादेः। इत्यर्थ इति। 'अंते या मतिः सा गतिः' इति न्यायेन साक्षाच्छ्रीहरिप्रापकत्वादिति भावः। विश्वनाथः—ज्ञानिकर्मिप्रभृतयोन्येपि साधुसंगवशाद्यदि भक्ता भवंति न पुनः कर्मादिकं कुर्वंति तदा तेपि कृतार्था इत्याह—एतावानिति। सांख्ययोगस्वधर्मनिष्ठाभिरेतावान् जन्मनो लाभः परः श्रेष्ठः कोसावन्ते प्रत्यासत्तिन्यायेन ज्ञानकर्मयोगानामवसाने सनकादिनवयोगेश्वरप्राचीनबर्हिःप्रभृतीनामिव नारायणस्मृतिः शुद्धा भक्तिर्यदि स्यात्। अंत इति। यदि पुनरपि भक्तिं त्यक्त्वा ज्ञानादिषु निष्ठिता न भवतीत्यर्थः। अत एवमेव वक्ष्यते। "एतावानेव यजतामिह निःश्रेयसोदयः ॥ भगवत्यचलो भावो यद्भागवतसंगतः" इति ॥६॥ संसिद्धिस्तु भगवद्रूपगुणमाधुर्यानुभव एव स च ब्रह्मसायुज्यादप्यतिश्रेष्ठ इति महदनुभवप्रमाणेनाह। प्रायेणेति नैर्गुण्ये स्थिता मुक्ता अपीत्यर्थः। गुणानुकथन एव रमंते न तु निर्विशेषब्रह्मसुखेपीत्यर्थः। प्रायेणान्ये जीवन्मुक्तास्ततो निकृष्टाः सायुज्यार्थं गुणानुकथनं कुर्वंति न तु तत्र रमंते ॥ ७ ॥ किमिदमश्रुतपूर्वं कथयसि सत्यमपूर्वमेवेदमित्याह—भागवतं भगवंतमधिकृत्य कृतं भगवता प्रोक्तं वा भगवत इदमिति वा शास्त्रमिदं युष्मदस्मत्प्रश्नोत्तरविराजि श्रीभगवल्लीलामयमंतर्भूतयुष्मदादिजन्मास्थितिसंस्थितिकथाप्रपञ्चमध्यात्मदीपं सर्वोपनिषत्साररसरूपमनादिसिद्धमेव मत्पित्रा बादरायणेनाविर्भावितम्। आधीतवानिति। शास्त्रस्यार्थो बुद्धिबलेन स्वयं प्राप्तुमशक्य इति भावः। कृष्णावतारादनतिपूर्वमेव सत्यवत्यां द्वैपायनस्य प्रादुर्भावात् द्वापरादाविति न संगच्छते। तस्माद्द्वापरशब्देनात्र द्वापरांत एव लक्ष्यते वृक्षशाखादिवत्तदग्रत्वव्यवहारेण द्वापरांते इत्यर्थः। यथा वृक्षाग्रे पक्षी खड्गाग्रं मास्पृशेत्यादावंतेऽप्यग्रव्यवहारस्तद्वदत्रापीति। यद्वा द्वापर आदिर्यस्य संध्यांशस्य स तथा ॥ ८ ॥

परिनिष्ठितोऽपि नैर्गुण्य उत्तमश्लोकलीलया ॥ गृहीतचेता राजर्षे आख्यानं यदधीतवान् ॥ ९ ॥ तदहं तेऽभिधास्यामि महापौरुषिको भवान् ॥ यस्य श्रद्दधतामाशु स्यान्मुकुंदे मतिः सती ॥१०॥ एतन्निर्विद्यमानानामिच्छतामकुतोभयम् ॥ योगिनां नृप निर्णीतं हरेर्नामानुकीर्तनम् ॥११॥

कालस्य तस्मिन्द्वापरांत इत्यर्थः । शंतनुसमकाले व्यासावतारप्रसिद्धेः ॥ ८ ॥ सिद्धस्य तव कुतोऽध्ययने प्रवृत्तिस्तत्राह । परिनिष्ठितोऽपीति गृहीतचेता आकृष्टचित्तः ॥ ९ ॥ महापुरुषो विष्णुस्तदीयः । यस्य यस्मिन् श्रद्धां कुर्वतां सती अहैतुकी ॥ १० ॥ साधकानां सिद्धानां च नातः परमन्यच्छ्रेयोऽस्तीत्याह । एतदिति । इच्छतां

ननुत्वमतिप्रसिद्धो जन्मत एव ब्रह्मानुभवी गृहात्परिव्रज्य गतोऽनुव्रजंतं पितरममि नैव पर्यचैषीः । संप्रति कथमेवं ब्रूष इत्यभिप्रायेण शंकते—सिद्धस्येति । आकृष्टचेता इति ब्रह्मानुभवादपि लीलाया माधुर्याधिक्येऽहमेव प्रमाणमिति भावः । राजर्षे इति । एतच्च ब्रह्मर्षय एव जानंति न तु प्रायो राजर्षय इति भावः ॥ ९ ॥ तर्हीदमपूर्वं वस्त्वहमपि लभेयेत्यत आमूलचूलमेव मामेनदास्वादयेत्यपेक्षायामाह । तदहमिति । महापुरुषं कृष्णं प्राप्तुमर्हसीति महापौरुषिकः । यद्वा विनयादित्वात्स्वार्थे ठक् । उत्तरपदवृद्धिश्च । यस्य यस्मिन् श्रीभागवते यद्वा श्रद्दधतां मध्ये यस्य तव मतिः सती ततश्च जन्माद्यस्येत्यारभ्य विष्णुरातममूमुचदित्यंतं सर्वमेव श्रीभागवतं श्रावयामासेति ज्ञेयमत एव प्रथमद्वादशयोरपि शुकप्रोक्तत्वे "अंबरीष शुकप्रोक्तं नित्यं भागवतं शृणु" इति वचनं सम्यगुपपद्यते ॥ १० ॥ नन्वत्र शास्त्रे भक्तिरभिधेयेत्यवगम्यत एव तत्रापि भक्त्यंगेषु मध्ये महाराजचक्रवर्तिवत्किमेकं मुख्यत्वेन निर्णीयते तत्राह—नामानुकीर्त्तनमिति । सर्वेषु भक्त्यंगेषु मध्ये श्रवणकीर्त्तनस्मरणानि त्रीणि मुख्यानि तस्माद्भारतेति श्लोके नोक्तानि तेषु त्रिष्वपि मध्ये कीर्त्तनं कीर्त्तनेपि नामलीलागुणादिसंबंधिनि तस्मिन्नामकीर्त्तनं तत्रानुकीर्त्तनं स्वभक्त्यनुरूपनामकीर्तनं निरंतरकीर्त्तनं वा निर्णीतं पूर्वाचार्यैरपि न केवलं मयैवाधुना निर्णीयत इति तेनात्र प्रमाणं न प्रष्टव्यमिति भावः । कीदृशमकुतोभयं कालदेशपात्रोपकरणादिशुद्ध्यशुद्धिगतभयाभावस्य का वार्त्ता भगवत्सेवादिकमसहमाना म्लेच्छा अपि यत्र नैव विप्रतिपद्यंते इति भावः । किञ्च । साधकानां सिद्धानां च मुमुक्षूणां मुक्तानां च नातः परमन्यच्छ्रेय इत्याह । निर्विद्यमानानामर्थान्मोक्षपर्यंतसर्वकामेभ्य इति इच्छतामित्यर्थात्तानेव कामानिति प्रविश पिंडीमितिवल्लभ्यते । ततश्च निर्विद्यमानानामेकांतभक्तानामिच्छतां स्वर्गमोक्षादिकामिनां योगिनामात्मारामाणां च एतदेव निर्णीतं यथायोगं साधनत्वेन फलत्वेन चेति भावः । अत्र संदर्भः 'परिनिष्ठितोपि नैर्गुण्ये' इत्यादौ 'तदहं तेभिधास्यामि'इत्यंतेन 'यस्य श्रद्दधतामाशु स्यान्मुकुंदे मतिः सती' इति श्रीभागवतस्य परममहिमानमुक्त्वा तदनंतरं श्रीभागवतमुपक्रममाण एव तस्य नानांगवतस्तन्नामकीर्त्तनमेवोपादिशति । तत्रापि सर्वेषामेव परमसाधनत्वेन परमसाध्यत्वेन चोपदिशति । 'एतन्निर्विद्यमानानाम्' इति टीका च साधकानां सिद्धानां च नातः परमन्यच्छ्रेयोस्तीत्याह । एतदिति । इच्छतां कामिनां तत्तत्फलसाधनमेतदेव,निर्विद्यमानानां मुमुक्षूणां मोक्षसाधनमेतदेव, योगिनां ज्ञानिनां फलं चैतदेव नात्र प्रमाणं वक्तव्यमित्यर्थ इत्येषा नामकीर्त्तनं चेदमुच्चैरेव प्रशस्तम् 'नामान्यनंतस्य हतत्रपः पठन्' इत्याद्युक्तेः । अत्र पाद्मोक्तदिशापराधाः परित्याज्याः यथा श्रीसनत्कुमारवाक्यम् "सर्वापराधकृदपि मुच्यते हरिसंश्रयः ॥ हरेरप्यपराधान्यः कुर्याद्द्विपदपांशुलः ॥ नामाश्रयः कदाचित्स्यात्तरत्येव स नामतः ॥ नाम्नोपि सर्वसुहृदो ह्यपराधात्पतत्यधः ॥" इति । अपराधाश्चैते । "सतां निंदा नाम्नः परममपराधं वितनुते यतः ख्यातिं यातं कथमु सहते तद्विगर्हणम् (१) ॥ शिवस्य श्रीविष्णोर्य इह गुणनामादि सकलं धिया भिन्नं पश्येत्स खलु हरिनामाहितकरः ( २ ) ॥ गुरोरवज्ञा ( ३ ) श्रुतिशास्त्रनिंदनम् ( ४ ) तथार्थवादो ( ५ ) हरिनाम्नि कल्पनम् ( ६ ) । नाम्नो बलाद्यस्य हि पापबुद्धिर्न विद्यते तस्य यमैर्हि शुद्धिः (७) ॥ धर्मव्रतत्यागहुतादिसर्वशुभक्रियासाम्यमपि प्रमादः ( ८ ) ॥ अश्रद्दधाने विमुखेप्यशृण्वति यश्चोपदेशः शिवनामापराधः ( ९ ) ॥ श्रुत्वापिनाममाहात्म्यं यः प्रीतिरहितोऽधमः । अहं ममापि परमो नाम्नि सोप्यपराधकृत् ॥" इति (१०) अत्र सर्वापराधकृदपीत्यादौ श्रीविष्णुयामलवाक्यमनुसंधेयम् । "मम नामानि लोकेऽस्मिञ्छ्रद्धया यस्तु कीर्तयेत् ॥ तस्यापराधकोटीस्तु क्षमाम्येव न संशयः"इति । सतां निन्देत्यनेन हिंसादीनां वचनागोचरत्वं दर्शितम् । निंदादयस्तु यथा स्कांदे मार्कंडेयभगीरथसंवादे "निंदां कुर्वंति ये मूढा वैष्णवानां महात्मनाम् ॥ पतंति पितृभिः सार्द्धं महारौरवसंज्ञिते ( १ ) ॥हंति निंदति यो द्वेष्टि वैष्णवान्नाभिनंदति । क्रुध्यते याति नो हर्षं दर्शने

**कामिनां तत्तत्फलसाधनमेतदेव । निर्विंद्यमानानां मुमुक्षूणां मोक्षसाधनमेतदेव । योगिनां ज्ञानिनां फलं चैतदेव निर्णीतम् । नात्र प्रमाणं प्रवक्तव्यमित्यर्थः ॥ ११ ॥**

पतनानि षट् ॥ इति । तन्निंदाश्रवणेपि दोष उक्तः । निंदां भगवतः शृण्वंस्तत्परस्य जनस्य वा ॥ ततो नापैति यः सोपि यात्यधः सुकृताच्च्युतः'' इति । ततोपगमश्चायमसमर्थस्यैव समर्थेन तु निंदकजिह्वा छेत्तव्या तत्रा
प्यसमर्थेन तु स्वप्राणपरित्यागः कर्त्तव्यः । यथोक्तं देव्या । ''कर्णौ पिधाय निरयाद्यदकल्प ईशे धर्मावितर्यसृणिभिर्नृभिरस्यमाने ॥ जिह्वां प्रसह्य रुशतीमसतां प्रभुश्चेच्छिंद्यादसूनपि ततो विसृजेत्स धर्मः'' इति । शिवस्य
श्रीविष्णोरित्यत्रैवमनुसंधेयं श्रूयते हि । ''यद्यद्विभूतिमत्सत्त्वं मम तेजोंशसंभवम्'' ॥ इति । ''ब्रह्मा भवोहमपि यस्य कलाः कलायाः' इति । ''यत्पादनिस्सृतसारित्प्रवरोदकेन तीर्थेन मूर्द्धनि कृतेन शिवः शिवोऽ
भूत्' । इति । ''सृजामि तन्नियुक्तोहं हरो हरति तद्वशः ॥ विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक् ॥'' इति । तथा माध्वभाष्यधृतानि वचनानि । ब्रह्मांडे । ''रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दनः ॥ ईशनादेव
चेशानो महादेवो महत्त्वतः ( १ ) पिबंति येन वा नाकं मुक्ताः संसारसागरात् ॥ तदाधारो यतो विष्णुः पिनाकीति ततः स्मृतः ( २ ) शिवः सुखात्मकत्वेन सर्वसंरोधनाद्धरः ॥ कृत्यात्मकमिमं देहं स्थितेरंते प्रवर्त्तयन् ॥
कृत्तिवासास्ततो देवो विरिञ्चिस्तु विरेचनात् ॥ बृंहणाद्ब्रह्मनामासावैश्वर्यादिन्द्र उच्यते ॥ एवं नानाविधैः शब्दैरेक एव त्रिविक्रमः॥ वेदेषु च पुराणेषु गीयते पुरुषोत्तमः'' इति । वामने ''न तु नारायणादीनां नाम्नामन्यत्र
संशयः ॥ अन्यनाम्नां किल गतिर्विष्णुरेव प्रकीर्त्तितः'' इति स्कांदे । ''ऋते नारायणादीनि नामानि पुरुषोत्तमः ॥ अदादन्यत्र भगवान् राजेवर्त्ते स्वकं वपुः'' इति ब्राह्मे । ''चतुर्मुखः सदानंदो ब्रह्मणः पद्मभूरिति ॥ उग्रो
भस्मधरो नग्नः कपालीति शिवस्य च ॥ विशेषनामानि ददौ स्वकीयान्यपि केशवः'' इति । तदेवं श्रीविष्णोः सर्वात्मकत्वेन प्रसिद्धात्तस्मात्सकाशाच्छिवस्य गुणनामादिकं भिन्नं शक्त्यंतरसिद्धमिति यो धियापि पश्येदित्यर्थः ।
द्वयोरभेदतात्पर्येण षष्ठ्यंतत्वे सति श्रीविष्णोश्चेत्यपेक्ष्य चशब्दः क्रियते तत्प्राधान्यविवक्षयैव श्रीशब्दश्च तत्रैव दत्तः । अत एव शिवनामापराध इति शिवशब्देन मुख्यतया श्रीविष्णुरेव प्रतिपादित इत्यभिप्रेतं सहस्रनामादौ
च स्थाणुशिवादिशब्दास्तथैव ॥ अथ गुरोरवज्ञाऽनादर इति । अथ श्रुतिशास्त्रनिंदनम् । यथा पाखंडमार्गेण दत्तात्रेयर्षभदेवोपासकानां पाखंडिनाम् । अथार्थवादः स्तुतिमात्रमिदमिति मननं कल्पनं तन्माहात्म्ये
गौण्यताकरणाय गत्यंतरचिंतनम् । यथोक्तं कौर्मे व्यासगीतायाम्—देवद्रोहाद्गुरुद्रोहः कोटिकोटिगुणाधिकः ॥ ज्ञानापवादो नास्तिक्यं तस्मात्कोटिगुणाधिकम्'' इति । यत्तु विष्णुपार्षदेभ्यः श्रुतनाममाहात्म्यस्याप्यजामिलस्य ।
''सोहं व्यक्तं पतिष्यामि नरके भृशदारुणे'' इति वाक्यं तत्खलु स्वदौरात्म्यमात्रदृष्ट्या नाममाहात्म्यदृष्ट्यात्वग्रे वक्ष्यते । 'तथापि मे दुर्भगस्य' इत्यादिद्वयम् । नाम्नो बलादिति । यद्यपि भगवन्नाम्नो बलेनापि कृतस्य पापस्य
तन्नाम्ना क्षयस्तथापि येन नाम्नो बलेन परमपुरुषार्थस्वरूपं सच्चिदानंदसांद्रं साक्षाच्छ्रीभगवच्चरणारविंदं साधयितुं प्रवृत्तस्तेनैव परमघृणास्पदं पापं विषयं साधयतीति परमदौरात्म्यम् । ततः कदर्थयत्येतन्नाम चेति ततः
पापकोटिमहत्तमस्यापराधस्यापातो बाढमेव ततो यमैर्बहुभिर्यमनियमादिभिः कृतप्रायश्चित्तस्य क्रमेण प्राप्ताधिकारैरनेकैरपि दंडधरैर्वा कृतदंडस्य तस्य शुद्धभावो युक्त एव । 'नामापराधयुक्तानाम्' इत्यादिवक्ष्यमाणानुसारेण
पुनरपि संततनामकीर्तनमात्रस्य तत्र प्रायश्चित्तत्वात् सर्वापराधकृदपीत्याद्युक्तानुसारेण नामापराधयुक्तस्य भगवद्भक्तिमतोप्यधःपातलक्षणभोगानियमाच्च तत्रेंद्रस्याश्वमेधाख्यभगवद्यजनबलेन वृत्रहत्या प्रवृत्तिस्तु लोकोपद्रव
शांतिं तदीयासुरतावखंडनं चेच्छूनामृषीणामाज्ञाकृतत्वान्न दोष इति मंतव्यम् । अथ धर्मव्रतत्यागेति । धर्मादिभिः साम्यमननमपि प्रमादोऽपराधो भवतीत्यर्थः । अत एव '' वेदाक्षराणि यावंति पठितानि द्विजातिभिः ॥
तावंति हरिनामानि कीर्त्तितानि न संशयः'' ॥ इत्यतिदेशेनापि नाम्न एव प्राधान्यमायाति । उक्तं हि । 'मधुरमधुरमेतत्' इत्यादौ 'सकलनिगमवल्ली सत्फलम्' इति । तथा श्रीविष्णुधर्मे ''ऋग्वेदो हि यजुर्वेदः सामवेदो
ह्यथर्वणः ॥ अधीतास्तेन येनोक्तं हरिरित्यक्षरद्वयम्'' स्कांदे पार्वत्युक्तौ । ''मा ऋचो मा यजुस्तात मा साम पठ किञ्चन ॥ गोविंदेति हरेर्नाम गेयं गायस्व नित्यशः । '' पाद्मे रामाष्टोत्तरशतनामस्तोत्रे 'विष्णोरेकैकनामा
पि सर्ववेदाधिकं स्मृतम्'' इति । अथाश्रद्दधाने इत्यादिनोपदेष्टुरपराधं दर्शयित्वोपदेशस्याह—श्रुत्वेतियतः अहंममादिपरमोऽहंताममताद्येकतात्पर्यत्वेन तस्मिन्ननादरवानित्यर्थः । 'नामैकं यस्य वाचि स्मरणपथगतम्'
इत्यादौ देहद्रविणादिनिमित्तकपाषंडशब्देन च दशापराधा लक्ष्यंते । पाषंडमयत्वात्तेषां तथा तद्विधानादेवापराधानंतरमुक्तं पाद्मे वैशाखमाहात्म्ये ''अवमन्य च ये यांति भगवत्कीर्त्तनं नराः ॥ ते यांति नरकं घोरं तेन
पापेन कर्मणा'' इति । एतेषां चापराधानामनन्यप्रायश्चित्तत्वमेवोक्तं तत्रैव ''नामापराधयुक्तानां नामान्येव हरंत्यघम् ॥ अविश्रांतिप्रयुक्तानि तान्येवार्थकराणि च'' इति । अत्र सत्प्रभृतिष्वपराधेषु तत्संतोषणार्थमेव संतत

किंप्रमत्तस्य बहुभिः परोक्षैर्हायनैरिह ॥ वरं मुहूर्तं विदितं घटेत श्रेयसे यतः ॥१२॥ खट्वांगो नाम राजर्षिर्ज्ञात्वेयत्तामिहायुषः ॥ मुहूर्तात्सर्वमुत्सृज्य गतवानभयं हरिम् ॥ १३ ॥ तवाप्येतर्हि कौरव्य सप्ताहं जीविताविधिः ॥ उपकल्पय तत्सर्वं तावद्यत्सांपरायिकम् ॥ १४ ॥ अंतकाले तु पुरुष आगते गतसाध्वसः ॥ छिंद्यादसंगशस्त्रेण स्पृहां देहेऽनु ये च तम् ॥ १५ ॥ गृहात्प्रव्रजितो धीरः पुण्यतीर्थजलाप्लुतः ॥ शुचौ विविक्त आसीनो विधिवत्कल्पितासने ॥ १६ ॥ अभ्यसेन्मनसा शुद्धं त्रिवृद्ब्रह्माक्षरं परम् ॥ मनो यच्छेज्जितश्वासो ब्रह्मबीजमविस्मरन् ॥ १७ ॥ नियच्छेद्विषयेभ्यो ऽक्षान्मनसा बुद्धिसारथिः ॥ मनः कर्मभिराक्षिप्तं शुभार्थे धारयेद्धिया ॥ १८ ॥ तत्रैकावयवं ध्यायेदव्युच्छिन्नेन चेतसा ॥ मनो निर्विषयं युंक्त्वा ततः किंचन न स्मरेत् ॥ पदं तत्परमं विष्णोर्मनो यत्र प्रसीदति ॥ १९ ॥

मेवायुरवशिष्टं किमहं साधयेयमिति मा शुच इत्याह किमिति त्रिभिः । परोक्षैरलक्षितैर्हायनैर्वर्षैर्विदितं वृथा यातीति ज्ञातम् । यतो येन ज्ञानेन घटेत यत्नं कुर्यात् ॥ १२॥ खट्वांगो हि देवपक्षे स्थित्वा दैत्यानजयत् । ततः प्रसन्नैर्देवैर्वरं वृणीष्वेत्युक्तोऽतस्तेनोक्तं प्रथमं तावन्ममायुः कथ्यतामिति । ततो देवैरुक्तं तत्तु मुहूर्तमात्रमस्तीति । ततोऽतिशीघ्रं विमानेन भुवमागत्य हरिं शरणं गत इति । यत इयं स्वर्गभूमी रजोधिका कर्मभूमिः पृथ्वी ॥ १३॥ तव तु एतर्ह्यपीदानीमपि । तावदिति । तावता कालेन सांपरायिकं पारलौकिकं साधनं संपादय ॥ १४ ॥ तत्र वैराग्यं तावदाह । अंतकाल इति । गतसाध्वसो मृत्युभयशून्यः असंगो नामानासक्तिः तेन शस्त्रेण स्पृहां सुखेच्छां तं देहमनु ये पुत्रकलत्रादयस्तेष्वपि स्पृहां छिंद्यात् ॥ १५ ॥ किं च गृहात्प्रव्रजितो निर्गतः गृहे स्थितस्य पुनरप्यासक्तिसंभवात् । तत्राष्टांगयोगमाह । धीर इति ब्रह्मचर्यादियमोपलक्षणम् । पुण्यतीर्थेति स्नानादिनियमोपलक्षणम् । आसनमाह । शुचाविति । विविक्ते एकांते विधिवत्कुशाजिनचैलैः क्रमेण निर्मिते ॥ १६ ॥ जपगर्भं प्राणायामं वक्तुं जप्यमाह । त्रिवृद्ब्रह्माक्षरं त्रिवृत् त्रिभिरकारादिभिर्वर्तितं ग्रथितं ब्रह्माक्षरं प्रणवं मनसाऽभ्यसेदावर्तयेत् । मनसेंद्रियप्रत्याहारं वक्तुं प्राणायामेन मनोनियमनमाह । मनोयच्छेद्वशी कुर्यात् । ब्रह्मबीजं प्रणवमविस्मरन्नेव जितश्वासः सन् ॥ १७ ॥ प्रत्याहारमाह । नियच्छेन्निगृह्णीयात् । अक्षानिंद्रियाणि निश्चयात्मिका बुद्धिः सारथिर्यस्य सः । धारणामाह । मन इति । पुनश्च कर्मभिस्तद्वासनाभिराक्षिप्तमाकृष्टं शुभार्थे भगवद्रूपे ॥ १८ ॥ ध्यानमाह । तत्रेति । एकमेकं पादाद्यवयवं अव्युच्छिन्नेन समग्ररूपादवियुक्तेन

नामकीर्तनादिकं समुचितम् । अंबरीषचरितादौ तदेकक्षम्यत्वेनापराधानां दर्शनात् । उक्तं च नामकौमुद्याम् "महदपराधस्य भोग एव निवर्तकस्तदनुग्रहो वा" इति । तस्माद्गत्यंतराभावात्साधूक्तमेतान्निर्विद्यमानानामिति ॥ ११॥ श्रेयसे नामकीर्तनादिरूपाय ॥ १२ ॥ अत्र खट्वांगचरितं प्रमाणयति । खट्वांग इति ॥ १३ ॥ कौरव्येति । तव तु राज्ञः सांपरायसाधनसंपादनं न दुष्करमाज्ञयैव सर्वव्यवहारसिद्धेरिति भावः । सप्तानामह्नां समाहारः सप्ताहम् । "रात्राह्नाहाः पुंसि" इति त्वार्षत्वान्न ॥ १४ ॥ तत्रांतकाले म्रियमाणेन किं कर्त्तव्यमिति प्रश्ने योगेनैव स्वेच्छया देहं परित्यज्य सुखेनैव ब्रह्मपदं प्रवेष्टुं योगाभ्यास एव कर्त्तव्य इत्याचिख्यासूनां तन्महासदःस्थानां केषांचिन्मतमष्टांगयोगं स्वमतस्य शुद्धभक्तियोगस्य पुनरपि द्वितीयाध्यायांते वक्तव्यस्योत्कर्षार्थमाह । अंतकाल इति ॥ १५ ॥ आसन्नमरणस्यान्यदपि कृत्यमाह किञ्चेति । तत्र गृहेतरे देशे ॥ १६ ॥ ब्रह्मणो वेदस्य बीजं कारणम् । 'ॐकारप्रथमा वेदाः' इत्युक्तेः ॥ १७ ॥ आकृष्टं प्राचीनकर्मणां प्राबल्यात्प्राणायामैरपि सम्याङ्निश्चली कर्त्तुमशक्यमित्यर्थः ॥ १८ ॥ तत्र भगवद्रूपे निर्विषयं

( मानसे पूजने सक्तास्ते यांति परमं पदम् ) ॥ रजस्तमोभ्यामाक्षिप्तं विमूढं मन आत्मनः ॥ यच्छेद्धारणया धीरो हंति या तत्कृतं मलम् ॥ २० ॥ यतः संधार्यमाणायां योगिनो भक्तिलक्षणः ॥ आशु संपद्यते योग आश्रयं भद्रमीक्षतः ॥ २१ ॥ राजोवाच ॥ यथा संधार्यते ब्रह्मन्धारणा यत्र संमता ॥ यादृशी वा हरेदाशु पुरुषस्य मनोमलम् ॥ २२ ॥ श्रीशुक उवाच ॥ जितासनो जितश्वासो जितसंगो जितेंद्रियः ॥ स्थूले भगवतो रूपे मनः संधारयेद्धिया ॥२३॥ विशेषस्तस्य देहोऽयं स्थविष्ठश्च स्थवीयसाम् ॥ यत्रेदं दृश्यते विश्वं भूतं भव्यं भवच्च सत् ॥२४॥ आंडकोशे शरीरेऽस्मिन्सप्तावरणसंयुते ॥ वैराजः पुरुषो योऽसौ भगवान्धारणाश्रयः ॥ २५ ॥

आश्रयविशेषेण सामान्यतश्चित्तस्थिरीकरणं धारणा अवयवविभावनया तद्दार्ढ्यं ध्यानमिति भेदः । समाधिमाह । निर्विषयं मनो युंक्त्वा समाधाय स्थिरीभूते मनसि स्फुरत्परमानंदमात्राकारं कृत्वेत्यर्थः । प्रसीदत्युपशाम्यति ॥ १९ ॥ गुणवशात्पुनरपि क्षोभे सति धारणामेव स्थिरी कुर्यादित्याह । रजसा आक्षिप्तं तमसा विमूढं स्वीयं मनो निरुंध्यात् । तत्कृतं रजस्तमोभ्यां कृतम् ॥ २० ॥ यतः यस्यां क्रियमाणायां भद्रं सुखात्मकमाश्रयं विषयं पश्यतस्तत्रैव प्रीतिर्भवति ॥ २१ ॥ यथा यत्र यादृशी चेति कर्तव्यताविषयतत्तद्विशेषाणां प्रश्नाः ॥ २२ ॥ यथेत्यस्योत्तरम् । जितासन इति ॥ विषयमाह स्थूल इति सार्धेन ॥ २३ ॥ विशेषो विराड्देहः अतिस्थूलानामपि स्थूलतरः सत्कार्यमात्रम् ॥ २४ ॥ अस्य चोपलक्षणत्वेन विषयत्वं वस्तुतस्तु विराट् जीवनियंता भगवानेव विषय इत्याह आंडकोशांतर्वर्तिनि कटाह एव पृथिव्यावरणं

विषयस्पर्शरहितं ततोऽन्यत्किञ्चन किमपि । इत्यर्थ इति । यन्मनसः परमानंदाकारता तदेव भगवतो विष्णोः परमं पदं ब्रह्मेति भावः । प्रसीदति उपशाम्यति । यत्र परमानंदे सति निजचाञ्चल्यं त्यक्त्वा स्थिरी भवतीत्यर्थः ॥ १९ ॥ या धारणा ॥ २० ॥ भक्तिरेव लक्षणं चिह्नं यस्य सः । भक्तिमिश्रस्यैव योगस्य मोक्षसाधकतोक्तेर्न तु भक्तिरहितस्येति भावः । सुखात्मकं भगवंतम् ॥ २१ ॥ राजोवाचेति भक्तिमिश्रयोगे राज्ञो जिज्ञासेव न तु चिकीर्षा शुकदेवशिष्यस्य तस्य शुकस्याभिमतायां शुद्धभक्तावेव प्रवृत्त्यौचित्यात् इति । कर्त्तव्यता तत्करणरीतिस्तस्या विषये तत्तद्भेदानां प्रश्नाः ॥ २२ ॥ यत्र संमतेत्यस्योत्तरं वदन् पूर्वोक्तस्यांतर्यामिणश्चिद्घनस्वरूपे धारणायामसमर्थानामशुद्धचित्तानां योगिनां रागद्वेषादिमालिन्यनिवृत्त्यर्थं वैराजधारणामाह स्थूल इति ॥ २३ ॥ यत्रेदं दृश्यत इत्यनेन दृश्यश्रव्यादिवस्तुमात्राणां भगवद्विभूतित्वाद्भगवद्रूपत्वेन ध्येयत्वे सति स्पर्द्धासूयादयो न क्वापि भवेयुरित्यतः स्पर्द्धाद्यभावे चित्तशुद्धिश्चित्तशुद्धौ च चिद्घनात्मकश्रीनारायणमूर्तौ धारणा सुकरा स्यादिति द्योतितम् ॥ २४ ॥ अस्य च विराड्देहस्य च आंडकोशस्यांतवर्ती कटाहस्तदाकारः पृथिवी देहो यत्र विश्वं स्थितं स एव पृथिव्यावरणं नं तु ततोन्यत्ततस्तेन सहाबादयः सप्त ज्ञेया इत्यर्थः । वैराजो हिरण्यगर्भस्य देहः भगवानिति हिरण्यगर्भा

पातालमेतस्य हि पादमूलं पठंति पार्ष्णिप्रपदेरसातलम् ॥ महातलं विश्वसृजोऽथ गुल्फौ तलातलं वै पुरुषस्य जंघे ॥ २६ ॥ द्वे जानुनी सुतलं विश्वमूर्तेरूरुद्वयं वितलं चातलं च ॥ महीतलं तज्जघनं महीपते नभस्तलं नाभिसरो गृणंति ॥२७॥ उरःस्थलं ज्योतिरनीकमस्य ग्रीवा महर्वदनं वै जनोऽस्य ॥ तपो रराटीं विदुरादिपुंसः सत्यं तु शीर्षाणि सहस्रशीर्ष्णः ॥ २८॥ इंद्रादयो बाहव आहुरुस्राः कर्णौ दिशः श्रोत्रममुष्य शब्दः॥ नासत्यदस्रौ परमस्य नासे घ्राणोऽस्यगंधो मुखमग्निरिद्धः॥२९॥द्यौरक्षिणी चक्षुरभूत्पतंगः पक्ष्माणि विष्णोरहनी उभे च ॥ तद्भ्रूविजृंभः परमेष्ठिधिष्ण्यमापोऽस्य तालू रस एव जिह्वा॥३०॥छंदांस्यनंतस्य शिरो गृणंति दंष्ट्रा यमः स्नेहकला द्विजानि ॥ हासो जनोन्मादकरी च माया दुरंतसर्गो यदपांगमोक्षः॥३१॥व्रीडोत्तरोष्ठोऽधर एव लोभो धर्मः स्तनोऽधर्मपथोऽस्य पृष्ठः॥कस्तस्य मेढ्रं वृषणौ च मित्रौ कुक्षिः समुद्रा गिरयोऽस्थिसंघाः॥३२॥

ततोऽग्नेजोवाय्वाकाशाहंकारमहत्तत्त्वानीति सप्त ॥२५॥ विराड्देहतज्जीवतदंतर्यामिणामभेदमारोप्योपासनं कर्तव्यमित्याशयेनाह । पातालं पादमूलं पादस्याधोभागं पातालादीनां तदवयवता विधीयते पातालादीन्यतलांतान्यधस्तनादारभ्य सप्त भूविवराणि पठंति गृणंतीत्यादिप्रमाणप्रदर्शनम् । पार्ष्णिप्रपदे पादस्य पश्चात्पुरोभागौ ॥ २६ ॥ ऊरुद्वयस्याधोभागे वितलमुत्तरभागे अतलमिति ज्ञेयम् । नाभिरेव सरः ॥२७॥ ज्योतिरनीकं ज्योतिषां समूहं स्वर्गं महर्लोकं ग्रीवेति गृणंति तपोलोकं रराटीं ललाटं सत्यं सत्यलोकम् ॥ २८ ॥ उस्रा देवाः तेजोमयशरीरत्वात्ते बाहव इत्याहुः । दिशोऽस्मदादिश्रोत्राधिष्ठात्र्यो देवताः । कर्णौ श्रोत्रस्याधिष्ठानं शब्दस्तु श्रोत्रविषयः सः तस्य श्रोत्रेंद्रियम् । एवं नासिकादिष्वपि नासत्यदस्रौ अश्विनौ नासे नासापुटे इद्धो दीप्तः ॥ २९ ॥ द्यौरंतरिक्षं अक्षिणी नेत्रगोलके चक्षुरिंद्रियं पतंगः सूर्यः अहनी रात्र्यहनी पक्ष्माणि नेत्ररोमाणि परमेष्ठिधिष्ण्यं ब्रह्मपदम् । तालु अधिष्ठानं जिह्वा इंद्रियम् ॥ ३० ॥ छंदांसि वेदाः शिरो ब्रह्मरंध्रं स्नेहकलाः पुत्रादिस्नेहलेशाः द्विजानि दंताः । षंढत्वमार्षम् । दुरंतोऽपारः सर्गः इति यत्स तस्य कटाक्षः ॥ ३१ ॥ अधर्ममार्गोऽस्य पृष्ठभागः । कः प्रजापतिः । मित्रौ मित्रावरुणौ ॥ ३२ ॥

तर्यामी गर्भोदशायी । द्वितीयः पुरुषस्तत्प्रतिमात्वेनोपास्यमानो वैराजोपि भगवच्छब्देनोच्यते ॥ २५ ॥ पठंति वेदा इति । न त्वहमेव वदामीति प्रमाणप्रदर्शनम् ॥ २६ ॥ महीतलं भूतलं तज्जघनं कटितटम् । महीपते इति । एतद्ध्यानं विशेषतस्त्वया कार्यमिति भावः । अगाधत्वाद्ब्रह्मजनकपद्मनिदानत्वाद्वा नाभिसर इत्युक्तम् ॥२७ ॥ २८॥ अत्र व्यष्टिसमष्टिविराजोर्यद्यपि तुल्य एवाध्यात्म्यादिविभागस्तथापि समष्टिविराडयं हिरण्यगर्भोपासकैर्योगिभिः परमेश्वरत्वेनोपास्य इति । परमेश्वरस्य चेंद्रियेभ्य एव विराजो विषया भवंति । तदीयेंद्रियाधिष्ठानेभ्यास्त्विंद्रियाणिं तदधिष्ठात्र्यो देवताश्च स्युरिति । कार्यकारणयोर्भेदोपचारादैक्येन दिक्शब्दादिभिः समष्टिविराजोऽस्य परमेश्वरत्वेन ध्येयत्वात्कर्णश्रोत्रादिकल्पना ज्ञेया ॥ २९ ॥ द्यौरंतरिक्षं तत्रत्यः सूर्यश्चाक्षिणी नेत्रगोलके । यद्वा । द्युपदेन मंचाः क्रोशंतीतिवत्सूर्यो लक्ष्यते । पतंगो रूपं चक्षुरिन्द्रियम् । अत्र पतंगपदेन तैजसं रूपं लक्ष्यते न तु सूर्य उच्यते । दिवः सूर्यस्य चाक्षिणी । इति । एतद्वै पौरुषं रूपम् । भूः पादौ । द्यौः शिरः । नभः नाभिः । सूर्योक्षिणी । नासे वायुः । कर्णौ दिशः । प्रभोरित्यग्रिमवाक्यविरोधात् अहनी रात्र्यहनी 'नपुंसकमनपुंसकेन' इति नपुंसकशेषः । लिंगसमवायन्यायेन वाहःपदेन रात्रेरपि ग्रहणम् । आपो वरुणः ॥ ३० ॥ षंढत्वं क्लीबत्वम् ॥ ३१ ॥ स्तनो दक्षिणः 'धर्मस्तनाद्दक्षिणतः' इत्युक्तेः । मेढ्रं शिश्नः ॥ ३२ ॥

नद्योऽस्य नाड्योऽथ तनूरुहाणि महीरुहा विश्वतनोर्नृपेंद्र ॥ अनंतवीर्यः श्वसितं मातरिश्वा गतिर्वयः कर्मगुणप्रवाहः ॥ ३३ ॥ ईशस्य केशान्विदुरंबुवाहान्वासस्तु संध्यां कुरुवर्य भूम्नः ॥ अव्यक्तमाहुर्हृदयं मनश्च स चंद्रमाः सर्वविकारकोशः ॥ ३४ ॥ विज्ञानशक्तिं महिमामनंति सर्वात्मनोंऽतःकरणं गिरित्रम् ॥ अश्वाश्वतर्युष्ट्रगजा नखानि सर्वे मृगाः पशवः श्रोणिदेशे ॥ ३५ ॥ वयांसि तद्व्याकरणं विचित्रं मनुर्मनीषा मनुजो निवासः ॥ गंधर्वविद्याधरचारणाप्सरः स्वरस्मृतीरसुरानीकवीर्यः ॥ ३६ ॥ ब्रह्माऽऽननं क्षत्रभुजो महात्मा विडूरुरंघ्रिश्रितकृष्णवर्णः ॥ नानाभिधाभीज्यगणोपपन्नो द्रव्यात्मकः कर्मवितानयोगः ॥३७॥ इयानसावीश्वरविग्रहस्य यः सन्निवेशः कथितो मया ते ॥ संधार्यतेऽस्मिन्वपुषि स्थविष्ठे मनः स्वबुद्ध्या न यतोऽस्ति किंचित् ॥ ३८ ॥

अनंतं वीर्यं स्यय वयः कालस्तस्य गमनम् । गुणप्रवाहः प्राणिनां संसारः कर्म तस्य क्रीडा ॥ ३३ ॥ भूम्नो विभोः अव्यक्तं प्रधानम् । स प्रसिद्धश्चंद्रमास्तदीयं मनः सर्वेषां विकाराणां कोश इवाश्रयभूतम् ॥ ३४ ॥ विज्ञानशक्तिं चित्तम्। महिं महत्तत्त्वम्। अंतःकरणमहंकारम्। गिरित्रं श्रीरुद्रम्। गर्दभाद्वडवायामुत्पन्नाश्वतरी॥ ३५॥ वयांसि पक्षिणस्तस्य व्याकरणं "नामरूपे व्याकरवाणि" ॥ इति श्रुत्युक्तं शिल्पनैपुण्यम् । यथाहुः। "येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः । मयूराश्चित्रिता येन स ते वृत्तिं विधास्यति ॥" इति । मनुः स्वायंभुवः मनीषा बुद्धिः मनुजः पुरुषः निवास आश्रयः । "पुरुषत्वे चाविस्तरामात्मा" इति श्रुतेः । गंधर्वादीनां द्वंद्वैक्यम् गंधर्वादयः । स्वरस्मृतीः षड्जादिस्वरस्मृतयः इत्यर्थः । असुरानीकं वीर्यं यस्य सः । स्वरः स्मृतिरसुरानीकवर्य इति पाठे गंधर्वादयः स्वरः असुरसमूहश्रेष्ठः प्रह्लादः स्मृतिस्तस्येति ॥ ३६ ॥ ब्रह्मा विप्रस्तस्याननं मुखम् । क्षत्रं क्षत्रियो भुजौ यस्य विट् वैश्यः ऊरू यस्य अंघ्रिश्रितः कृष्णवर्णः शूद्रो यस्य नानाभिधा नामानि येषां ते च तेऽभीज्या देवास्तेषां गणैर्वसुरुद्रादिभिरुपपन्नो युक्तः द्रव्यात्मको हविः साध्यः वितानयोगो यज्ञप्रयोगः तस्य कर्म कायमावश्यकोऽभिप्रेतः इत्यर्थः ॥ ३७ ॥ इयानेतावान्सन्निवेशोऽवयवसंस्थानम् । अस्मिन्स्व

अनंतः शेषो वा वीर्यं विक्रमो यस्य स तथा । हे नृपेन्द्रेति नरपालकेषु मुख्यस्य तवैतद्ध्यानमवश्यं कार्यमिति भावः ॥ ३३ ॥ हे कुरुवर्येति शुद्धकुलोद्भूतत्वात्तुभ्यमहं योगिध्येयरूपं वदामीति भावः ॥ ३४ ॥ गिरिः कैलासः । सर्वं गिरतीति गिरिः कालो वा । गृणाति तत्त्वमिति गिरिर्वेदो वा तं तस्मात्तेन वा त्रायते इति गिरित्रो महादेवः । मृगा हरिणादयः पशवो गवादयः श्रोणिदेशे नितंबप्रदेशे उपास्या इति शेषः ॥३५॥ तस्य शिल्पनैपुण्ये प्रमाणमाह । यथाहुरिति । पुरुषत्वे मनुष्यत्वेऽतिशयेन प्रकट आत्मास्तीति श्रुतिपदार्थः । इत्यर्थ इति । प्रथमार्थे द्वितीयेति भावः ॥ ३६ ॥ अंघ्रिश्रितः अंघ्री पादौ श्रितः ॥ कृष्णवर्णत्वं शूद्रस्य शुद्धतामसत्वात् । इत्यर्थ इति । आवश्यकं कृत्यमिति भावः॥ ३७॥ अत्रायमर्थः स्वचांचल्यवशाद्यत्रयत्र भ्रमति तत्रतत्रैव भगवत इदममुकमंगमिति स्वबुद्ध्या विचारयेत् । एवञ्च मनसः स्वाभाविकाः सर्वे एव विषया भगवदं

स सर्वधीवृत्त्यनुभूतसर्व आत्मा यथा स्वप्नजनेक्षितैकः ॥ तं सत्यमानंदनिधिं भजेत नान्यत्र सज्जेद्यत आत्मपातः ॥ ३९ ॥ इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वितीयस्कंधे महापुरुषसंस्थानुवर्णने विराड्रूपकथनं नाम प्रथमोऽध्यायः ॥ १ ॥ श्रीशुक उवाच ॥ एवं पुरा धारणयाऽऽत्मयोनिर्नष्टां स्मृतिं प्रत्यवरुध्य तुष्टात् ॥ तथा ससर्जेदममोघदृष्टिर्यथाऽप्ययात्प्राग्व्यवसायबुद्धिः ॥१॥ शाब्दस्य हि ब्रह्मण एष पंथा यन्नामभिर्ध्यायति धीरपार्थैः ॥ परिभ्रमंस्तत्र न विंदतेऽर्थान्मायामये वासनया शयानः ॥ २ ॥

बुद्ध्या मनः संधार्यते मुमुक्षुभिः यतो व्यतिरिक्तं किंचिन्नास्ति तस्मिन् ॥ ३८ ॥ तदेवं चित्तस्थैर्यार्थं विराड्देहजीवेश्वराणामभेदेनोपासनमुक्तम् । तत्र तु देहजीवावीश्वरे प्रविलाप्य स एव ध्येय इति निर्धारयति । स इति । सर्वेषां धीवृत्तिभिरनुभूतं सर्वं येन स एक एव सर्वांतर आत्मा तमेव सत्यं भजेत । अन्यत्रोपलक्षणेन सज्जेत । यत आसंगादात्मनः पातः संसारो भवति। एकस्य तत्तदिंद्रियैः सर्वानुभूतौ दृष्टांतः स्वप्नजनानामीक्षिता यथेति स्वप्ने हि कदाचिद्बहून् देहान् प्रकल्प्य जीवस्तत्तदिन्द्रियैः सर्वं पश्यति तद्वत् ईश्वरस्य तु विद्याशक्तित्वान्न बंधः ॥ ३९ ॥ इति श्रीम० भा० द्वि० स्कं० टीकायां प्रथमोऽध्यायः ॥ १ ॥ द्वितीये तु ततः स्थूलाधारणातो जितं मनः । सर्वसाक्षिणि सर्वेशे विष्णौ धार्यमितीर्यते॥ १ ॥ दृश्यालंबनरूपैवमुक्तवैराजधारणा॥ इहोच्यते तु तत्साध्या सर्वांतर्यामिधारणा ॥२॥ तत्र तावत्पूर्वोक्तधारणाया अवांतरफलमाह । एवं या धारणा तया तुष्टाद्धरेः पुरा प्रलयसमये नष्टां सृष्टिस्मृतिं प्रत्यवरुद्ध्य लब्ध्वा ब्रह्मा अप्ययात्प्रागिदं विश्वं यथाऽऽसीत्तथा ससर्ज । व्यवसायात्मिका बुद्धिर्यस्य सः । अत एवामोघा दृष्टिर्यस्येति । अतस्तया धारणया विश्वसृष्टिसामर्थ्यं भवति ॥ १ ॥ उपासनाफलादपि विरक्तस्य शुद्धात्मधारणायामधिकारोऽतो वैराग्यार्थं सर्वं कर्मफलं निंदति । शाब्दं शब्दमयं ब्रह्म वेदः तस्य एष पंथाः कर्मफलबोधप्रकारः । कोऽसौ अर्थशून्यैरेव स्वर्गादिनामभिः साधकस्य धीर्ध्या यति तत्तदिच्छां करोतीति यत् । अपार्थत्वमेवाह । तत्र मायामये पथि सुखमिति वासनया शयानः स्वप्नान्पश्यन्निव परिभ्रमन्नर्थान्न विंदति तत्तल्लोकं प्राप्तोऽपि निरवद्यं

गान्येवेति सर्वमपि चिंतनं भगवच्चिंतनत्वेन पर्यवस्येत् । तथा स्पर्धावज्ञादयो भावा नैवोत्पद्येरन् । स्पर्द्धादिविषयानां मनुष्यगंधर्वादीनामपि भगवदंगभूतत्वेन ध्यायेदेवेति॥ ३८॥नन्वेवं भगवद्धारणाभ्यासस्यानुषंगिकानि फलानि भोगैश्वर्यादीन्यवश्यमुत्पद्यंत एव । योगी तानि स्वतः प्राप्तान्युपभुंजीत न वेति । आद्ये शैथिल्यप्रसंगः । तदुक्तम् । "यदा न योगोपचितासु चेतो मायासु सिद्धस्य विषज्जतेंग॥अनन्यहेतुष्वथ मे गतिः स्यादात्यंतिकी यत्र न मृत्युहासः" इति । द्वितीये–उपस्थितभोगत्यागस्य दुष्करत्वमिति सत्यं विवेकेनैव सर्वं सुकरमिति । विवेकप्रकारं दर्शयति । स इति । स योगी सर्वाभिर्धियां वृत्तिभिरिंद्रियलक्षणाभिः प्राचीनसहस्रसहस्रजन्मवर्त्तिनीभिरनुभूतमेव सर्वं देवेंद्रत्वनरेंद्रत्वादिकं भोगैश्वर्यादिकं येन सः । किं पुनश्चर्वितचर्वणयेति भावः । न च तस्यापि स्थिरत्वमित्यत्र दृष्टांतः । आत्मा जीवो यथा स्वप्ने जनानां शत्रुमित्रसैन्यादीनां तदुपलक्षितराज्यादिभागोनां च स्वसृष्टानामेक एवेक्षिताऽनुभविता अतस्तं सत्यं सर्वकालदेशवर्त्तिनमानंदानां निधिं भगवंतमेव भजेत न त्वन्यत्रासार्वदिक्त्वादसत्येऽनानंदनिधौ विषयसुखे इत्यर्थ इति विश्वनाथः । तत्र तु त्रयाणां मध्ये तु उपलक्षणे देहादौ विद्यया च तथेतर इत्युक्तेरीशस्य बंधो नास्तीत्यर्थ इति स्वामिचरणाः ॥ ३९ ॥ इति श्रीभागवतभावार्थदीपिकाप्रकाशे द्वितीयस्कंधे प्रथमोऽध्यायः ॥ १ ॥ ततः पूर्वोक्तायाः ॥ ( १ ) ॥ तया वैराजधारणया साध्या ॥ २ ॥ तत्र धारणाद्वयमध्ये अवांतरमानुषंगिकम् । व्यवसाये भगवत्प्रेरणावशात्स्रक्ष्याम्येवेति निश्चये बुद्धिर्यस्य सः । यद्वा । व्यवसायो निश्चय एवमेतत्स्रष्टव्यमित्येवं तदात्मिका निश्चिता बुद्धिर्यस्य स तथा । अत एव व्यवसायबुद्धित्वादेव अमोघा सफला अतः सफलदृष्टित्वात् ॥ १ ॥ इत्यर्थ इति "एवं पुण्यचितो लोकः क्षीयते" इति श्रुतेः क्षयिष्णुत्वोक्तेरिति भावः । अत्र विश्वनाथोऽवतरणिकामाह अत्र म्रियमाणः

अतः कविर्नामसु यावदर्थः स्यादप्रमत्तो व्यवसायबुद्धिः ॥ सिद्धेऽन्य थार्थे न यतेत तत्र परिश्रमं तत्र समीक्षमाणः ॥ ३ ॥ सत्यां क्षितौ किं कशिपोः प्रयासैर्बाहौ स्वसिद्धे ह्युपबर्हणैः किम् ॥ सत्यंजलौ किं पुरुधाऽन्नपात्र्या दिग्वल्कलादौ सति किं दुकूलैः ॥ ४ ॥ चीराणि किं पथि न संति दिशंति भिक्षां नैवांघ्रिपाः परभृतः सरितोऽप्यशुष्यन् ॥ रुद्धा गुहाः किमजितोऽवति नोपसन्नान्कस्माद्भजंति कवयो धनदुर्मदांधान् ॥ ॥ ५ ॥ एवं स्वचित्ते स्वत एव सिद्ध आत्मा प्रियोऽर्थो भगवाननंतः ॥ तं निर्वृतो नियतार्थो भजेत संसारहेतूपरमश्च यत्र ॥ ६ ॥

सुखं न लभत इत्यर्थः ॥२॥ तर्हि सर्वथा कर्मफलत्यागे सद्य एव देहपातः स्यादित्याशंक्याह । अतः कविर्नामसु नाममात्रेषु भोग्येषु यावताऽर्थेनार्थो देहनिर्वाहो यस्य स तथाभूतः स्यात् । अप्रमत्तस्तावन्मात्रेप्यनासक्तः व्यवसायबुद्धिर्नेदं सुखमिति निश्चयवान् तदापि तत्र तस्मिन्नर्थेऽन्यथैव सिद्धे सति तत्र यत्ने परिश्रमं पश्यन्न यतेत ॥ ३॥ अन्यथासिद्धिमाह द्वाभ्याम् । सत्यामिति । कशिपोः शय्यायाः । स्वतःसिद्धबाहौ सति उपबर्हणैरुच्छीर्षकैः । पुरुधा बहुप्रकारयाऽन्नपात्र्या भोजनपात्रेण ॥ ४ ॥ ननु दिक्सद्भावो नाम नग्नत्वमेव वल्कलमन्नं तोयं वासः स्थानं तु याच्ञाप्रयत्नं विना कथं प्राप्येत तत्राह।चीराणि वस्त्रखंडानि। परान्बिभ्रति पुष्णंति फलादिभिर्ये ते भिक्षां फलादिरूपां न दिशंति किम्।किं वा सरितः स्यंदमाना नद्यः किमशुष्यन्।गुहाः गिरिदर्यः।ननु कदाचिदेषामलाभे किं कार्यं तत्राह । अजितो हरिरुपसन्नाञ्छरणागतान्किं नावति न रक्षति।किंशब्दस्य पूर्वत्रापि संबंधः।धनेन यो दुर्मदस्तेनांधान्नष्टविवेकान्॥५॥तदा तेन किं कर्तव्यं हरिस्तु सेव्य इत्याह । एवं विरक्तः संस्तं भजेत । भजनीयत्वे हेतवः । स्वचित्ते स्वत एव सिद्धः । यत आत्मा अत एव प्रियः प्रियस्य च सेवा सुखरूपैव । किंच अर्थः सत्यो न त्वनात्मवन्मिथ्या । भगवान् भजनीयगुणश्च अनंतश्च नित्यः य एवंभूतस्तं भजेत । नियतार्थः निश्चितस्वरूपः तदनुभवानंदेन निर्वृतः सन्निति स्वतः सुखात्मत्वं दर्शितम् । किंच । यत्र यस्मिन्भजने सति संसारहेतोरविद्याया

किं कुर्वीतेति प्रश्ने स्वर्गसाधकं यागादिकं कुर्वीतात्र सर्वो वेदः प्रमाणमित्याचिख्यासूंस्तत्रकांश्चन प्रत्याह । शाब्दस्येति ॥ २ ॥ अत्राक्षिपति तर्हीति । अर्थे देहनिर्वाहे अत्र विश्वनाथः—एवं योगप्रसंगं एव कार्मिणां मतमतिबहिरंगत्वेनं स्पष्टमेव विनिंद्य कर्मफलेषु वैराग्यं भक्तज्ञानिनोरपि साधारणम् । योगारूढानामवश्यकर्त्तव्यत्वेनाह । अतो बुद्धिमान्भोगार्थं न ध्यायेत् न यतेत च । किंतु । 'कामस्य नेंद्रियप्रीतिर्लाभो जीवेत यावता'इत्युक्तन्या येन नामसु भोग्यवस्तुषु यावताऽर्थेन स्वीकृतेनार्थः । स्वकृत्यनिष्पत्त्यर्थं देहनिर्वाहस्तावानर्थो ग्राह्यो यस्य तथाभूतः स्यात् । यतोऽयमप्रमत्तः स्वसाधनसिद्धौ सावधानः । किञ्च विघ्नबाहुल्यदर्शनेपि स्वयोगान्न परावर्त्ततेत्याह । व्यवसायबुद्धिः यद्भवेत्तद्भवतु मया तु यन्निश्चितं तन्निश्चितमेवेति दृढविचार इत्यर्थः । किञ्च । यावदर्थतापि सुकुमारस्यैवोक्ता न तु स्वतः समर्थस्येत्याह । अन्यथा प्रकारांतरेणार्थे स्वदेहनिर्वाहे सिद्धे सति तत्र पिष्टपेषणन्यायेन न यतेत । यतस्तत्र यत्ने परिश्रमं धनिकजनोपासनादिकम् ॥ ३ ॥ समर्थस्यान्यथासिद्धिमाह—सत्यामिति । देवनिर्मितायां क्षितौ सत्याम् । वाहौ भुजे । उच्छीर्षकैः शिरःपीठैः ॥ ४ ॥ अत्राक्षिपति । नन्विति । पुनराक्षिपति नन्विति । विश्वनाथस्तु—ननु शीतत्राणोपायः कस्तत्र साक्षेपं क्रुध्यन्निवाह—चीराणीति । ननु ततोपि जाठरानलो दुर्वारस्तत्र तथैवाह—अंघ्रिपा अपि किं नैव भिक्षां ददति मनुष्याः खलुमा ददतु नामेति भावः । तर्हि पानार्थं जलं तु मृग्यमेवेति चेद्धिक्त्व बुद्धिमित्याह—सरितोपीति । ननु शिलावर्षात्त्राणार्थं पर्णशाला काचिदपेक्षितैवेति चेत्तत्राह—रुद्धा इति । गुहां प्रविश्य व्याघ्रादयः खादंतीति चेत्तत्राह—किमजित इति । व्याघ्रादीनामपि स एवांतर्यामी भक्तवत्सलस्तान्कथं तत्र प्रेरयिष्यतीति भावः । न ह्यजितभक्तं कोप्यभिभवितुं शक्त्यादित्यर्थः ॥ ५ ॥ तदा वनाद्येकांतदेशप्राप्तिसमये तेन विरक्तेन न केवलं सुखात्मतै

कस्तां त्वनादृत्य परानुचिंतामृते पशूनसतीं नाम युंज्यात् ॥ पश्यञ्जनं पतितं वैतरण्यां स्वकर्मजान्परितापाञ्जुषाणम् ॥ ७ ॥ केचित्स्वदेहांतर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसंतम् ॥ चतुर्भुजं कंजरथांगशंखगदाधरं धारणया स्मरंति ॥ ८ ॥ प्रसन्नवक्त्रं नलिनायतेक्षणं कदंबकिंजल्कपिशंगवाससम् ॥ लसन्महारत्नहिरण्मयांगदं स्फुरन्महारत्नकिरीटकुंडलम् ॥ ९ ॥

उपरमो नाशो भवति ॥ ६ ॥ एतदेवान्यचिंतानिंदया द्रढयति । क इति । तां तथाभूतां परस्य हरेरनुचिंतां धारणामनादृत्य पशून्कर्मजडान्विना । "यथा पशुरेवायं स देवानाम्" इति श्रुतेः । असतीं विषयचिंतां को नाम कुर्यात् । यया चिंतया वैतरण्यां पतितम् । तत्र च स्वकर्मजानाध्यात्मिकादिक्लेशान्सेवमानं जनं पश्यन् । वैतरणी यमस्य द्वारस्था नदी तत्तुल्यत्वात्संसृतिर्वैतरणी ॥ ७ ॥ तामेव धारणां सविशेषणामाह केचिदिति षड्भिः । स्वदेहस्यांतर्मध्ये यद्धृदयं तत्र योऽवकाशस्तस्मिन्वसंतम् । प्रादेशस्तर्जन्यंगुष्ठयोर्विस्तारः स एव मात्रा प्रमाणं यस्येति हृदयपरिमाणं तत्रोपचर्यते । कंजं पद्मम् । रथांगं चक्रम् ॥ ८ ॥ नलिनं पद्मं तद्वत्प्रसन्ने आयते दीर्घे ईक्षणे यस्य । कदंबकुसुमस्य किंजल्काः केसरास्तद्वत्पिशंगे पीते वाससी यस्य । लसंति महारत्नानि येषु तानि सुवर्णमयान्यंगदानि यस्य । स्फुरंति च तानि महारत्नानि च

वान्यदप्याधिक्यमस्तीत्याह । किञ्चेति । विश्वनाथः—ननु तर्हि भजनीयेश्वरस्य तद्भजनोपकरणानाञ्चान्वेषणं तु कर्त्तव्यमेव योगिभिरिति चेत्तत्राह—स्वचित्ते स्वत एव सिद्धो यत आत्मा चित्ताधिष्ठाता वासुदेव इति । नाप्यावाहनादिश्रम इति भावः । किञ्च तस्य भजनं स्वत एव भवितुमुचितमित्याह—प्रिय इत्यादिचतुर्विशेषणैः । प्रियः स्वभावत एव प्रेमास्पदम् न च प्रेमास्पदत्वेपि पतिपुत्रादिरूपोऽनर्थः यतोर्थः परमवस्तुरूपः । वस्तुरूपत्वेपि न केवलमंतरात्मैव यतो भगवान्सौंदर्यादिगुणवत्त्वेन दृश्यः । न च तत्र देशनियम इत्याह । अनंतः । सर्वव्यापकत्वात्सर्वत्रैव देशे स्थितः । न च भजने श्रमः कोपीत्याह—निर्वृत्तः । भजनानंदमयः सन् नियतः प्रेमैव भक्तावनुसंहितोर्थः प्रयोजनं यस्य तथाभूतः सन् । यद्वा । नित्यमेतावंति नामानि ग्रहीतव्यानि एतावती कथा श्रोतव्या एतावत्यः प्रणतयः कार्या एतावत्कालं ध्यानं कर्त्तव्यमित्येवं नियमयुक्तानि कीर्तनश्रवणादीनि यस्य तथाभूतः सन्भजेत । यत्र भजने संसारहेतोरविद्याया उपरमश्च भवेदित्यनुसंहितं फलं भक्तमते ज्ञानियोगिनोर्मते तु संसारहेतूपरम एवानुसंहितं फलम् । चकारः पादपूरणे । नियतार्थो निश्चलरूप इत्यर्थः ॥ ६ ॥ एतदेव हरिभजनमेव । स कर्मजडः देवानां पशुरेव पशुर्यथा स्वामिव्यापारक्लिष्टः सर्वदा तिष्ठति तथा सोपीति श्रुतिपदार्थः तत्तुल्यत्वात् । वैतरणी यथा दुःखेन तीर्यते वितरणेन दानेन च तथा भवोपीति भावः ॥ ७ ॥ एवं च वैराग्यं भक्तेरन्वयव्यतिरेकौ च प्रदर्श्य पुनरपि योगिनां पूर्वोक्तधारणातोप्यतिश्रेष्ठामंतर्यामिणश्चिद्घनरूपस्य धारणामाह । केचिदिति । पूर्वोक्तवैराजधारणानिष्ठेभ्योप्यतिश्रेष्ठा इत्यर्थः । किम्वा वक्ष्यमाणवाक्यानुसारेण वैराजधारणाभ्यासेन शुद्धचित्ता एवं तदन्तर्यामिणश्चिद्घनरूपस्य धारणां कुर्युरित्यभिप्रायेणाह । केचिदिति । अत्र धारणायां चतुर्विधा योगिनः संभवंति । तत्र प्रथमा भगवद्रूपमनालंब्यमानाः प्राणमनोधारणावंतः श्रीभागवता संमता विगीता एव । द्वितीयाः पूर्वोक्तवैराजधारणया शुद्धचित्ताः 'मृणालगौरायतशेषभोग' इत्यादि तृतीयस्कंधोक्ततदंतर्यामिधारणावंतः । तृतीया वैराजधारणानंतरव्यष्टिविराडंतर्यामिचतुर्भुजरूपधारणावंतः चतुर्थाः । स्वत एव शुद्धचित्ताः । प्रथमत एव व्यष्टंतर्यामिचतुर्भुजधारणावंतस्त एवात्र केचिच्छब्देनोच्यंते । प्रादेशमात्रमिति । प्रादेशप्रमाणहृदयध्येयत्वात्पुरुषं तावन्मात्रप्रदेशेप्यचिंत्यशक्त्या पञ्चदशवर्षीयपुरुषाकारप्रमाणम् । 'संतं वयसि कैशोरे' इत्युक्तेः । अत एव स्वामिचरणैरुक्तं हृदयप्रमाणं तत्र भगवत्युपचर्यते' इति । वसंतं तत्रांतर्यामितया कृतवासम् ॥ ८ ॥ महारत्नानि पद्मरागादीनि ॥ ९ ॥

उन्निद्रहृत्पंकजकर्णिकालये योगेश्वरास्थापितपादपल्लवम् ॥ श्रीलक्ष्मणं कौस्तुभरत्नकंधरमम्लानलक्ष्म्या वनमालया चितम् ॥ १० ॥ विभूषितं मेखलयांऽगुलीयकैर्महाधनैर्नूपुरकंकणादिभिः ॥ स्निग्धामलाकुंचितनीलकुंतलैर्विरोचमानाननहासपेशलम् ॥ ११ ॥ अदीनलीलाहसितेक्षणोल्लसद्भ्रूभंगसंसूचितभूर्यनुग्रहम् ॥ ईक्षेत चिंतामयमेनमीश्वरं यावन्मनोधारणयाऽवतिष्ठते ॥ १२ ॥ एकैकशोंऽगानि धियाऽनुभावयेत्पादादि यावद्धसितं गदाभृतः ॥ जितंजितं स्थानमपोह्य धारयेत्परंपरं शुद्ध्यति धीर्यथा यथा ॥ १३ ॥ यावन्न जायेत परावरेऽस्मिन्विश्वेश्वरे द्रष्टरि भक्तियोगः ॥ तावत्स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरेत ॥ १४ ॥ स्थिरं सुखं चासनमास्थितो यतिर्यदा जिहासुरिममंग लोकम् ॥ काले च देशे च मनो न सज्जयेत्प्राणं नियच्छेन्मनसा जितासुः ॥ १५ ॥

तन्मयानि किरीटकुंडलानि यस्य ॥ ९ ॥ उन्निद्रं विकसितं यद्धृत्पंकजं तस्य कर्णिकैवालयः स्थानं तस्मिन् । योगेश्वरैरास्थापितौ पादपल्लवौ यस्य । श्रीरेव लक्ष्म चिह्नं तद्युक्तम् । पामादिविहितो मत्वर्थीयो नप्रत्ययः । कौस्तुभरत्नं कंधरायां यस्य । अम्लाना लक्ष्मीः शोभा यस्यास्तया वनमालया चितं व्याप्तम् ॥ १० ॥ स्निग्धत्वादिविशिष्टैः कुंतलैर्विरोचमाने आनने यो हासस्तेन पेशलं सुंदरम् ॥ ११ ॥ अदीनमुदारं यल्लीलाहसितं तेन यदीक्षणं तस्मिनुल्लसंतो ये भ्रूभंगा भ्रूविक्षेपास्तैः संसूचितो भूर्यनुग्रहो येन । चिंतामयं चिंतया आविर्भवंतम् । कियन्तं कालमित्यत्राह । यावत्समं मनोऽवतिष्ठते स्थिरी भवति तावत् ॥ १२ ॥ अस्यैव ध्यानमाह । एकैकश इति । अनुभावयेद्ध्यायेत् । यद्यज्जितमयत्नतः स्फुरितं पादगुल्फादि स्थानमवयवस्तत्तदपोह्य त्यक्त्वा परंपरं जंघाजान्वादि धारयेद्ध्यायेत् । शुद्ध्यति तस्मिन्निश्चला भवति ॥ १३ ॥ पूर्वोक्तवैराजधारणाया एतद्धारणांगत्वमाह । यावदिति । परे ब्रह्मादयोऽवरे यस्मात् । कुतः । विश्वेश्वरे द्रष्टरि, न तु दृश्ये चैतन्यघनत्वात् । भक्तियोगः प्रेमलक्षणः । क्रियावसाने आवश्यककर्मानुष्ठानानंतरम्, अनेन कर्मापि भक्तियोगपर्यंतमेवेत्युक्तम् । प्रयतो नियमतत्परः ॥ १४ ॥ एवं तावदासन्नमृत्योः पुंसः कृत्यमुक्तमिदानीं तस्यैव स्वयं देहं त्यक्तुमिच्छतः कृत्यमाह स्थिरमिति सार्धैश्चतुर्भिः । अंग हे राजन् एवंभूतो यतिर्यदेमं लोकं देहं जिहासुर्हातुमिच्छति तदा देशे पुण्यक्षेत्रे काले चोत्तरायणादौ मनो न सज्जयेत्संगं न प्रापयेत् ।

योगेश्वरेत्युक्तेस्तद्भक्तान्योगेश्वरानपिध्यायेदिति भावः । वामस्तनोर्द्ध्वलक्ष्मीरेखायुक्तमित्यर्थः । कौस्तुभरत्नं तद्ग्रथितहिरण्मयसूत्रसहितम् ॥ १० ॥ महाधनैर्बहुमूल्यैः ॥ ११ ॥ धारणया कृत्वा मनो यावदवतिष्ठते निश्चलं भवति तावदीक्षेतेत्यन्वयः ॥ १२ ॥ यद्वा यथायथा धीः शुध्यति विषयलांपट्यं त्यजति तथातथा धारयेदिति चित्तशुद्धितारतम्येनैव ध्यानतारतम्यमुक्तं तेनात्यंताशुद्धचित्तस्य नात्राधिकारः । किं तु वैराग्यधारणायामेवेति ध्वनितम् ॥ १३ ॥ अत एवाशुद्धचित्तत्वादेतद्रूपं ध्यातुं यावन्न शक्नुयात्तावद्वैराजरूपमेव ध्यायेदित्यभिप्रेत्याह । पूर्वोक्तेत्यादि । अवरेऽर्वाचीनाः । अनेन क्रियावसान इति कथनेन ॥ १४ ॥ अंगेति संबुद्ध्यर्थेऽव्ययम् । इत्यर्थ इति । प्राणायामं कुर्यादितिभावः । जितासुर्जितेंद्रियः 'असुः प्राणेंद्रियबले' इति कोशात् । अत्र विश्वनाथेन प्राणानिति पठित्वा व्याख्यातम् । तथा हि—प्राणानिंद्रियाणि मनसा

मनः स्वबुद्ध्याऽमलया नियम्य क्षेत्रज्ञ एतां निनयेत्तमात्मनि ॥ आत्मानमात्मन्यवरुध्य धीरो लब्धोपशांतिर्विरमेत कृत्यात् ॥ १६ ॥ न यत्र कालोऽनिमिषां परः प्रभुः कुतो नु देवा जगतां य ईशिरे ॥ न यत्र सत्त्वं न रजस्तमश्च न वै विकारो न महान्प्रधानम् ॥ १७ ॥ परं पदं वैष्णवमामनंति तद्यन्नेतिनेतीत्यतदुत्सिसृक्षवः ॥ विसृज्य दौरात्म्यमनन्यसौहृदा हृदोपगुह्याऽर्हपदं पदेपदे ॥ १८ ॥

न देशकालौ योगिनः सिद्धिहेतू किं तु योग एवेति दृढनिश्चयो भूत्वा स्थिरं सुखकरं चासनमास्थितः प्राणं नियच्छेदित्यर्थः ॥ १५॥ तत् गृहीतविषयं मनः बुद्ध्या निश्चयरूपया नियम्य तन्मात्रं कृत्वा एतां बुद्धिं क्षेत्रज्ञे बुद्ध्यादिद्रष्टरि निनयेत्प्रविलापयेत् । तं च क्षेत्रज्ञमात्मनि शुद्धे, तं च शुद्धमात्मानमात्मैवाहमित्यात्मनि शुद्धे ब्रह्मण्यवरुद्ध्यैकीकृत्य लब्धोपशांतिः प्राप्तनिर्वृतिः सन् कृत्याद्विरमेत् । ततः परं प्राप्याभावात् ॥ १६॥ तदेवाह । न यत्रेति । यत्रात्मस्वरूपे कालो न प्रभुः किमपि कर्तुं न समर्थः । अत एव देवा न प्रभव इत्याह । अनिमिषां देवानां परः प्रभुः कालोऽपि यत्र न प्रभुस्तत्र कुतो नु देवाः प्रभवेयुः । देवनियम्यानां तु जगतां प्राणिनां का वार्तेत्याह । जगतामिति । कुतो न प्रभवंतीत्यपेक्षायां निरुपाधित्वादित्याह । न यत्रेति । यद्वा जगत्कारणान्यपि न यस्य सृष्ट्यादौ प्रभवंतीत्याह । न यत्रेति । विकारोऽहंकारः ॥ १७ ॥ निरुपाधित्वं

नियच्छेत् प्राणान्मनोनियम्यान्कुर्यादित्यर्थः । तेन नियंतरि मनसींद्रियाणि प्रविलापयेदिति द्योतितम् ॥ १५ ॥ ततस्तन्मनः स्वबुद्ध्या नियम्येति मनो बुद्धौ प्रविलापयेदिति भावः । बुद्ध्यादिद्रष्टारि जीवे शुद्धे शुद्धजीवेंतर्यामिणि वा शुद्धे शोधितत्वंपदार्थे अग्रे शुद्धे ब्रह्मणि शोधिततत्पदार्थे इति केचित् । ततः शुद्धब्रह्मणः परमन्यत् प्राप्यं नास्ति तस्यैव परमावधित्वादिति ॥ १६ ॥ तदेव ब्रह्मस्वरूपमेव । अत एव कालस्याप्रभुत्वादेव । अनिमिषामिति षष्ठ्यतं क्विबंतमिषे रूपम् । जगतां प्राकृतजगत्स्वेवेशिरे ऐश्वर्यं चक्रिरे । देवा इंद्राद्याः। ननु देवास्तत्त्वाभिमानिनो जगत्कारणीभूतास्तत्र कथं न प्रभवेयुरिति तत्राह । यद्वेति । अत्र संदर्भः—पूर्वोक्तधारणाफलं द्विविधं ब्रह्मकैवल्यप्राप्तिर्वैकुंठप्राप्तिश्च भक्तिसिद्धज्ञाननिष्ठत्वाद्भक्तिमयज्ञाननिष्ठत्वाच्च। अत उत्तरावस्थामजामिलादिन्यायेन तत्रैव वैकुंठाभिव्यक्तिदर्शनार्थमाह । 'न यत्र' इति युग्मकेन।अत्र वैकुंठस्य सच्चिदानंदरूपत्वं श्रीभगवतैवोक्तम् तद्यथा । "एवमेतान्यथादिष्टाननुतिष्ठंति मे पथः । क्षेमं विंदंति मत्स्थानं यद्ब्रह्म परमं विदु ॥" मे पथः ज्ञानभक्तिकर्मलक्षणान् मत्प्राप्त्युपायान् ज्ञानकर्मणोरपि भक्तेषु भक्तेः प्रथमतः कचित् किंचित्साहाय्यकारित्वात् क्षेमं मद्भक्तिमंगलमयं मत्स्थानं परमं ब्रह्मेति जानंति । इत्थमेवोदाहरिष्यते च । " इति· संचित्य भगवान्महाकारुणिको हरिः । दर्शयामास लोकं स्वं गोपानां तमसः परम् ॥ सत्यं ज्ञानमनंतं यद्ब्रह्म ज्योतिः सनातनम् । यद्धि पश्यंति मुनयो गुणापाये समाहिताः ॥ " इति । उभयत्रापि चकाराद्ध्याहारादिना त्वर्थांतरं कष्टं भवति । तैरेव च व्याख्यातम् । तमसः प्रकृतेः परमिति । वैकुंठस्यापि विशेषणीकृत्येति ॥ १७ ॥ परं पदमिति । अतच्चिद्व्यतिरिक्तं नेतिनेतीत्येवमुत्स्रष्टुमिच्छवो दौरात्म्यं भगवदात्मनोरभेददृष्टिं विसृज्यार्हस्य श्रीभगवतः पदं चरणारविंदं पदेपदे प्रतिक्षणं हृदोपगुह्याश्लिष्य अनन्यसौहृदा नान्यस्मिन्सौहृदं येषां तथाभूताः संतो यदामनंति तदेव वैष्णवं पदं श्रीवैकुंठाख्यमिति ब्रह्मस्वरूपमेव तदिति तात्पर्यम् । अनेन भक्तिलक्षणसाधनलिंगेन निराकाररूपमर्थांतरं निरस्तम् । अत्र निराकारपरायणस्यापि मुक्ताफलटीकाकृतो दैवाद्व्यंजिता गीर्यथा तत्परं पदं वैष्णवमामनंति अधिकृताधिष्ठितराजाधिष्ठितत्ववत् । ब्रह्मादिपदानामपि विष्णुनाधिष्ठितत्वात्परमित्युक्तम् । विष्णुनैवाधिष्ठितामित्यर्थ इति । अत एव श्रुतावपि तस्य स्वमहिमैकप्रतिष्ठितत्वम् । "स भगवान्कस्मिन्प्रतिष्ठितः" इति । स्वे महिम्नीति ।विश्वनाथस्तु—सत्त्वादयः कथं न संतीत्यत आह—परं प्रधानात्परम् । अत एव वैष्णवं पदं विष्णोर्निर्विशेषस्वरूपं तत्प्रसिद्धमेव । तदपि भगवद्भक्ता नारदादय एव यथा जानंति न तथा ज्ञानिनोपीत्याह । यद्ब्रह्म नेतिनेतीत्येवमतत्तद्व्यतिरिक्तं वस्तु उत्सिसृक्षवः आ सम्यगेवामनंति जानंति । किं कृत्वा दौरात्म्यं केवलं ज्ञानिनामिव निर्बुद्धित्वं

इत्थं मुनिस्तूपरमेद्व्यवस्थितो विज्ञानदृग्वीर्यसुरंधिताशयः॥स्वपार्ष्णिनाऽऽपीड्य गुदं ततोऽनिलं स्थानेषु षट्सून्नमयेज्जितक्लमः॥१९॥नाभ्यांस्थितं
हृद्यधिरोप्य तस्मादुदानगत्योरसि तं नयेन्मुनिः॥ततोऽनुसंधाय धिया मनस्वी स्वतालुमूलं शनकैर्नयेत॥२०॥तस्माद्भ्रुवोरंतरमुन्नयेतनिरुद्धसप्ताऽऽ
यतनोऽनपेक्षः ॥ स्थित्वा मुहूर्तार्धमकुंठदृष्टिर्निर्भिद्य मूर्धन्विसृजेत्परं गतः॥२१॥यदि प्रयास्यन्नृप पारमेष्ठ्यं वैहायसानामुत यद्विहारम्॥ अष्टाधि
पत्यं गुणसन्निवाये सहैव गच्छेन्मनसेंद्रियैश्च॥२२॥योगेश्वराणां गतिमाहुरंतर्बहिस्त्रिलोक्याः पवनांतरात्मनाम्॥न कर्मभिस्तां गतिमाप्नुवंति विद्यात
पोयोगसमाधिभाजाम् ॥२३॥ वैश्वानरं याति विहायसा गतःसुषुम्नया ब्रह्मपथेन शोचिषा ॥ विधूतकल्कोऽथ हरेरुदस्तात्प्रयाति चक्रं नृपशैशुमारम्२४

कुत इत्यत आह । परमिति । यद्यस्मादेतत् आत्मव्यतिरिक्तं नेतिनेतीत्येवमुत्स्रष्टुमिच्छवो दौरात्म्यं देहाद्यात्मत्वं विसृज्यार्हस्य पूज्यस्य श्रीविष्णोः पदेपदे क्षणेक्षणे हृदा उप
गुह्य आश्लिष्य नान्यस्मिन्सौहृदं येषां तथाभूताः पदे संतस्तद्वैष्णवं पदमत एव परं सर्वतः श्रेष्ठमामनंतीत्यन्वयः ॥ १८ ॥ तस्मादित्थं ब्रह्मत्वेन व्यवस्थितो मुनिरुपरमेत् ।
तुशब्देन 'यदि प्रयास्यन्' इति वक्ष्यमाणात्सकामाद्विशेष उक्तः तमाह । विज्ञायतेऽनेनेति विज्ञानं शास्त्रं तेन जाता दृक् ज्ञानं तस्य वीर्यं बलं तेन सुरंधिताः विहिंसिता आश
या विषयवासना यस्य सः । इदानीं तस्य देहत्यागप्रकारमाह । स्वपार्ष्णिना पादमूलेन गुदमूलाधारमापीड्य निरुध्यानिलं प्राणमुन्नमयेदूर्ध्वं नयेत् । जितः क्लमो येन ।
षट्सु स्थानेषु नाभ्यादिषु ॥ १९ ॥ नाभ्यां मणिपूरके स्थितं हृद्यनाहतचक्रेऽधिरोप्य उरसि कंठादधोदेशे स्थिते विशुद्धिचक्रे मनस्वी जितचित्तः स्वतालुमूलं तस्यैव चक्र
स्याग्रदेशम् । ततो बहुधा गमनसंभवाच्छनकैरित्युक्तम् ॥ २० ॥ तस्माद्भ्रुवोरंतरमाज्ञाचक्रम् । निरुद्धानि श्रोत्रे नेत्रे नासिके मुखं चेत्येवं सप्तायतनानि प्राणमार्गा येन सः।
अनपेक्षश्चेत्परं ब्रह्म गतः सन् मूर्धन्मूर्धनि ब्रह्मरंध्रे निर्भिद्य देहमिंद्रियाणि च विसृजेत् ॥ २१ ॥ सद्योमुक्तिमुक्त्वा क्रममुक्तिप्रकारमाह यदीति दशभिः । यदि तु पारमेष्ठ्यं
पदं प्रयास्यन् भवति उत वैहायसानां खेचराणां सिद्धानां यद्विहारं क्रीडास्थानम् । कीदृशम् । अष्टावाधिपत्यान्यणिमाद्यैश्वर्याणि यस्मिंस्तदपि प्रयास्यन् । क्व । गुणसन्नि
वाये गुणसमुदायरूपे ब्रह्मांडे सर्वत्रेत्यर्थः । तर्हि देहत्यागावसरे मनश्चेंद्रियाणि च न त्यजेत् । किं तु तैः सहैव तत्तल्लोकभोगार्थं गच्छेत् ॥ २२ ॥ यतः कर्मगतिवन्न योग
गतिः परिच्छिन्नेत्याह । योगेश्वराणां त्रिलोक्या अंतर्बहिश्च महर्लोकादिषु ब्रह्मांडाद्बहिश्च गतिमाहुः । अत्र हेतुः । पवनस्यांतः आत्मा लिंगशरीरं येषामिति । विद्या उपासना
तपो भगवद्धर्मः योगोऽष्टांगः समाधिर्ज्ञानं तान्ये भजंति तेषां या गतिस्ताम् ॥ २३ ॥ तामाह वैश्वानरमित्यष्टभिः । विहायसा आकाशेन तत्र च ब्रह्मलोकपथेन गतः सन्प्रथमं

विसृज्य कीदृशा अनन्यसौहृदा विष्णुसंबंधव्यतिरिक्तवस्तुनि स्नेहाभाववंतः । अर्हस्य पूज्यस्य श्रीविष्णोः पदं चरणारविंदं पदेपदे क्षणेक्षणे हृदोपगुह्य इदमस्माकं सर्वस्वमित्यालिंग्य । अत्र तदुत्सृजंत इत्यनुक्ते यदा स्वप्रभो
र्ब्रह्मस्वरूपं केवलमनुबुभूषंति तदाऽतत्त्यक्तुमिच्छवो भवंति सर्वथा तु भगवत्सेवोपकरणत्वात् । दृश्यं जगन्न त्यजंतीत्यर्थाल्लभ्यते । दौरात्म्यमिति । विष्णोर्देहे मायिकत्वबुद्धिमतो दुरात्मान एव ज्ञेयाः ॥ १८ ॥ तं
विशेषम् । षट्सु नाभिहृदुरस्तालुमूलभ्रूमध्यब्रह्मरंध्रेषु ॥ १९ ॥ तत्र प्रथमं नाभेरधः स्वाधिष्ठानचक्रादुपरि नाभ्यां तस्यैव चक्रस्य विशुद्धिचक्रस्य ॥ २० ॥ अनपेक्षः क्रममुक्तवत्पारमेष्ठ्यादिपदभोगकौतुकानपेक्षः ॥ २१ ॥
इत्यर्थ इति । यस्मिँल्लोके गमनेच्छा भवेत्तत्र सर्वत्रेति भावः ॥ २२ ॥ अत्र बाह्याभ्यंतरगमने ॥ २३ ॥ तां गतिम् । इत्यर्थ इति । 'हृदये नारायणः' इत्युक्तेरिति भावः । इत्यर्थ इति । शिशुमारचक्रगतानि

तद्विश्वनाभिं त्वतिवर्त्य विष्णोरणीयसा विरजेनात्मनैकः ॥ नमस्कृतं ब्रह्मविदामुपैति कल्पायुषो यद्विबुधा रमंते॥२५॥अथो अनंतस्य मुखानलेन दंदह्यमानं स निरीक्ष्य विश्वम् ॥ निर्याति सिद्धेश्वरजुष्टधिष्ण्यं यद्द्वैपरार्ध्यं तदु पारमेष्ठ्यम् ॥ २६ ॥ न यत्र शोको न जरा न मृत्युर्नार्तिर्न चोद्वेग ऋते कुतश्चित् ॥ यच्चित्ततोऽदः कृपयाऽनिदंविदां दुरंतदुःखप्रभवानुदर्शनात् ॥ २७ ॥ ततो विशेषं प्रतिपद्य निर्भयस्तेनात्मनाऽपोनलमूर्तिरत्वरन् ॥ ज्योतिर्मयो वायुमुपेत्य काले वाय्वात्मना खं बृहदात्मलिंगम् ॥ २८ ॥

वैश्वानरमग्न्यभिमानिनीं देवतां याति । केनोपायेन सुषुम्नया नाड्या । सा च देहाद्बहिरपि विततास्तीत्याह । शोचिषा ज्योतिर्मय्या विधूतस्त्यक्तः कल्को मलो येन सः । क्वाप्यसज्जमान इत्यर्थः । उदस्तादुपरिष्टाद्वर्तमानं हरेः संबंधि तारारूपम् । नारायणाधिष्ठितमित्यर्थः । शैशुमारं चक्रं पंचमस्कंधे वक्ष्यमाणं शिशुमाराश्रयं ज्योतिश्चक्रम् । चक्रस्थान्यादित्यादिध्रुवांतानि पदानि प्रयातीत्यर्थः ॥२४॥ तद्विष्णोश्चक्रं विश्वस्य नाभिं सूर्याद्याश्रयभूतम् । आविष्टलिंगत्वान्नाभिशब्दस्य न षंढत्वम् । अतिवर्त्य अतिक्रम्य परतः स्वर्गिणां गत्यभावादेक एव निर्मलेन लिंगशरीरेण ब्रह्मविदां स्थानमन्यैर्नमस्कृतं महर्लोकमुपैति । यस्मिन्विबुधा महाकल्पायुषो भृग्वादयः ॥ २५ ॥ अथो अनंतरं कल्पांते स विश्वं त्रैलोक्यमतिशयेन दह्यमानं निरीक्ष्य तत्राप्यूष्मप्राप्तेः यत् द्विपरार्धस्थायि तत्पारमेष्ठ्यं पदं प्रति निर्याति । सिद्धेश्वरैर्जुष्टानि धिष्ण्यानि विमानानि यस्मिंस्तत् । उ इति श्रैष्ठ्यं सूचितम् ॥ २६ ॥ तदेवाह । न यत्रेति । आर्तिर्दुःखम् । उद्वेगो भयम् । किंतु चित्ततो हेतोः यद्दुःखमदं ऋते तदेकं विना तत्कुतो भवति अनिदंविदामिदं भगवतो ध्यानमजानतां प्राणिनां दुरंतदुःखो यः प्रभवो जन्म तस्यान्वनुदर्शनात् तेषां कृपया । यद्वा चित्ततोदो मनःपीडेति यत्तद्विना कुतश्चिदपि यत्र शोकादयो न संतीति । तत्र ब्रह्मलोकं गतानां त्रिविधा गतिः । ये पुण्योत्कर्षेण गतास्ते कल्पांतरे पुण्यतारतम्येनाधिकारिका भवंति ये तु हिरण्यगर्भाद्युपासनाबलेन गतास्ते ब्रह्मणा सह मुच्यंते, ये तु भगवदुपासकास्ते स्वेच्छया ब्रह्मांडं भित्त्वा वैष्णवं पदमारुहंति ॥ २७ ॥ तत्र प्रस्तुतस्य भगवद्भक्तस्य ब्रह्मांडभेदनप्रकारमाह तत इत्यादिना । तत्रेयं प्रक्रिया । ईश्वराधिष्ठितायाः प्रकृतेः केनचिदंशेन महत्तत्त्वं भवति, तस्यांशेनाहंकारः, तस्यांशेन शब्दतन्मात्रद्वारा नभः, तस्यांशेन स्पर्शतन्मात्रद्वारा वायुः, तस्यांशेन रूपतन्मात्रद्वारा तेजः, तस्यां

सूर्यादिस्थानानि गच्छति योगबलेनेति भावः ॥ २४ ॥ आविष्टलिंगत्वादजहल्लिंगत्वात् । षंढत्वं क्लीबत्वं नेत्यर्थः । "नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान्" इति मेदिनी ॥ २५ ॥ तत्रापि महर्लोकेपि ऊष्मा वह्न्युत्थमौष्ण्यम् । पारमेष्ठ्यं सत्तलोकं प्रति ॥२६॥ तदेव सत्यलोकमाहात्म्यमेव उत्तानार्थमाह । यद्वेति । तत्र व्याजस्तुतौ सत्यलोकस्था महाकृपालवो धन्या एवेति भावः ॥ २७ ॥ तत्र त्रिषु प्रस्तुतस्य ये तु भगवदुपासका इत्युक्तस्य । इत्यर्थ इति । तस्य लिंगदेह एव पृथिवीरूपो भूत्वा पृथिव्यां प्रविशतीति भावः । उत्तरत्रापि जलादिष्वपि । इत्यर्थ इति । घ्राणरसनादीद्रियैर्गंधरसादीन् विचित्रभोग्यविषयान् सेवमान एव यातीति भावः । 'खं ब्रह्मेत्युपासीत' इति श्रुतेरात्ममूर्तित्वम् । 'लिंगं मूर्त्तिलक्ष्मशेफज्ञापकेषु कारणे' इति कोशादर्थांतरमाह यद्वेति वेदशब्दात्मना सगुणीभूतशब्दरूपवेदरूपेण तस्य ब्रह्मणो प्रमापकं ज्ञापकमित्यर्थः ॥ २८ ॥

घ्राणेन गंधं रसनेन वै रसं रूपं तु दृष्ट्या श्वसनं त्वचैव ॥ श्रोत्रेण चोपेत्य नभोगुणत्वं प्राणेन चाकूतिमुपैति योगी ॥ २९ ॥ स भूतसूक्ष्मेंद्रियसन्निकर्षं मनोमयं देवमयं विकार्यम् ॥ संसाद्य गत्या सह तेन याति विज्ञानतत्त्वं गुणसंनिरोधम् ॥ ३० ॥ तेनाऽऽत्मनात्मानमुपैति शांतमानंदमानंदमयोऽवसाने ॥ एतां गतिं भागवतीं गतो यः स वै पुनर्नेह विषज्जतेऽग ॥ ३१ ॥ एते सृती ते नृप वेदगीते त्वयाऽभिपृष्टे ह सनातने च ॥ ये वै पुरा ब्रह्मण आह पृष्ट आराधितो भगवान्वासुदेवः ॥ ३२ ॥

शेन रसतन्मात्रद्वारा आपः,तदंशेन गंधतन्मात्रद्वारा पृथ्वी तैश्च मिलितैश्चतुर्दशभुवनात्मकं विराट्शरीरं तस्य पंचाशत्कोटियोजनविशालस्य पृथिव्येवांडकटाहविशेषशब्दवाच्या कोटियोजनविशालं प्रथमावरणम् । पंचाशत्कोटियोजनविशालमित्येके । ततश्चाबादीनां ये परिणता अंशास्तान्येवोत्तरोत्तरं दशगुणान्यावरणानि । अष्टमं तु प्रकृत्यावरणं व्यापकमेव तदेवं स्थिते पृथिव्याद्यावरणभेदप्रकारः कथ्यते । ततो विशेषं प्रतिपद्य लिंगदेहेन पृथिव्यात्मतां प्राप्येत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । निर्भयः कथं यास्यामीति शंकाशून्यः तेनात्मना पृथिवीरूपेण तन्निरंतरा आपः प्रतिपद्यात्वरंस्त्वरामकुर्वन् । तत्तदात्मत्वेन क्लेददाहादिशंकाभावाद्यथेष्टं भोगान्भुंजान इत्यर्थः । एवं ज्योतिर्मयः सन् काले भोगावसाने बृहदात्मलिंगं परमात्ममूर्तित्वेनोपासनेषूक्तम् । यद्वा । वेदशब्दात्मना तस्य प्रमापकमिति ॥ २८ ॥ इंद्रियार्थानां भूतसूक्ष्माणामऽतिक्रममाह । घ्राणेनाधिष्ठितेन गंधमुपेत्य श्वसनं स्पर्शं नभोगुणत्वं शब्दात्मतां प्राणेन तत्तत्कर्मेंद्रियेण आकूतिं तत्तत्क्रियाम् ॥ २९ ॥ तदेवं स्थूलसूक्ष्मभूतातिक्रममुक्त्वा तदावरणभूताहंकारप्राप्त्या महदादिप्राप्तिमाह । स योगी विकार्यं संसाद्य विज्ञानतत्त्वं याति विविधं कार्यमस्येति विकार्योऽहंकारः । स त्रिविधः तामसो राजसः सात्त्विक इति । तत्र तामसाज्जडानि भूतसूक्ष्माणि जायंते, राजसाद्बहिर्मुखानि दशेंद्रियाणि, सात्त्विकान्मन इंद्रियदेवताश्च, तेषां लयश्च तत्तदहंकारे तत्र भूतसूक्ष्माणामिंद्रियाणां च सन्निकर्षं लयस्थानम् । तामसं राजसं च मनोमयं देवमयं च सात्त्विकं प्राप्य गत्या एवं गमनेन तेनाहंकारेण सह विज्ञानतत्त्वं महत्तत्त्वं याति। ततः गुणानां सन्निरोधो लयो यस्मिंस्तत्प्रधानं याति॥ ३०॥ तेनात्मना प्रधानरूपेणानंदमयः सन्नुपाधीनामवसाने शांतमविकृतमानंदं परमात्मानमुपैति । न विषज्जते नावर्तत इत्यर्थः ॥ ३१ ॥ सृती मार्गौ प्रकारावित्यर्थः । हे नृप 'अन

पृथिव्याद्यावरणेषु गंधादयः संति तेषामतिक्रमं पूर्वमनुक्तं संप्रत्याह—घ्राणेनेति ॥२९॥ तदेवमित्थं तदावरणभूतः स्थूलसूक्ष्मभूतानामावरणभूतो योहंकारस्तस्य प्राप्त्या तत्तदहंकारे यतोयतो यस्योद्भवस्तत्रतत्राहंकारे ॥३०॥ ततस्तेन प्रधानेन सहात्मना स्वस्वरूपेणात्मानं परं ब्रह्म आदिपुरुषमानंदरूपमुपैति । प्रकृत्यावरणात्परत्र कारणार्णवशायिमहापुरुषस्य स्थितेः । ततोऽवसाने आनंदमय इति तस्मिन्नेव सायुज्यं प्राप्येत्यर्थः । इत्यर्थ इति । ''मां प्राप्य न निवर्त्तंते मृत्युसंसारवर्त्मनि'' इति भगवदुक्तेरयं भावः । अत्र संदर्भः । तेनात्मना शुद्धेन स्वरूपेण प्रधानभावेशितेन पुनस्तत उत्क्रमितेन आत्मानं परमात्मानं परमवैकुंठनाथमित्यर्थः । भागवतीं गतिमित्युक्तेः । ततो विशेषमित्यत्र टीकावतारिकायां ये तु भगवदुपासकास्ते स्वेच्छया ब्रह्मांडं भित्त्वा वैष्णवं पदमारोहंतीति । तस्मात्तन्मतेपि प्रकृत्यावरणाद्बहिर्महावैकुंठलोकः प्रकृत्यावरणस्य च व्यापकत्वं चापेक्षिकमिति ॥ ३१ ॥ इत्यर्थ इति । लक्षणया सृतिपदं प्रकारपरमिति भावः । प्रकारो भेदः । 'प्रकारस्तुल्यभेदयोः' इति मेदिनी'सृतिः स्त्री गमने मार्गे 'इति च ।हे नृपेति । नृपालनासक्तेन त्वयैतत्कालपर्यंतं नं ज्ञात इति भावः । तत्र द्वयोर्मध्ये

न ह्यतोऽन्यः शिवः पंथा विशतः संसृताविह ॥ वासुदेवे भगवति भक्तियोगो यतो भवेत् ॥ ३३ ॥ भगवान्ब्रह्म कात्स्न्येंन त्रिरन्वीक्ष्य मनीषया॥ तदध्यवस्यत्कूटस्थो रतिरात्मन्यतो भवेत् ॥ ३४ ॥ भगवान्सर्वभूतेषु लक्षितः स्वात्मना हरिः ॥ दृश्यैर्बुद्ध्यादिभिर्द्रष्टा लक्षणैरनुमापकैः ॥३५॥

पेक्षो निर्भिद्य मूर्धन्विसृजेत्परं गतः' इति या सद्योमुक्तिः सैका सृतिः । 'यदि प्रयास्यन्' इत्यादिना क्रममुक्तिश्च द्वितीया सृतिः । एते सृती वेदेन गीते उक्ते न तु स्वोत्प्रे क्षिते तत्र "यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि श्रिताः ॥ अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ " इति सद्योमुक्तिः । "तेऽर्चिरभिसंभवंति" इत्यादिना क्रममुक्तिश्च वेदेनोक्ता । यद्वा "न कर्मभिस्तां गतिमाप्नुवंति" इति दक्षिणमार्गस्यापि सूचितत्वादेते सृती इति द्विवचनम् । त्वयाऽभिपृष्टे 'यच्छ्रोतव्यम्' इत्यादिप्रश्नेनार्थान्मुक्तिविषये द्वे अपि सृती पृष्टे । 'ब्रूहि यद्वा विपर्ययम्' इति दक्षिणमार्गोऽप्यर्थात्पृष्टः एवं त्वया च ये पृष्टे एते सृती इत्यन्वयः ॥ ३२॥ संति संसरतः पुंसो बहवो मोक्षमार्गास्तपोयोगादय स्तत्र समीचीनस्त्वयमेवेत्याह । नहीति । यतोऽनुष्ठिताद्भक्तियोगो भवेदतोऽन्यः शिवः सुखरूपो निर्विघ्नश्च नास्त्येव ॥ ३३ ॥ कुत एतदत आह । भगवान्ब्रह्मा कूटस्थो निर्विकारः एकाग्रचित्तः सन्नित्यर्थः । त्रिस्त्रीन्वारान् कात्स्न्येंन साकल्येन ब्रह्म वेदमन्वीक्ष्य विचार्य यत आत्मनि हरौ रतिर्भवेत्तदेव मनीषयाऽध्यवस्यत् निश्चितवान् ॥ ३४ ॥ नन्वनुभूतेऽर्थे रतिर्भवति । अननुभूते तु भगवति कथं रतिः स्यात्तत्राह । भगवाँल्लक्षितः दृष्टः । कथं स्वात्मना क्षेत्रज्ञांतर्यामितया कैर्दृश्यैर्बुद्ध्यादिभिः । तदेव द्वेधा दर्शयति ।

अस्य पुंसो हृदि मनसि श्रिताः स्थिता ये ते यदा न त्वविचारेण प्रमुच्यंते नश्यंति । कर्मकर्त्तरि प्रयोगः । अथ तदनंतरमेव मर्त्यो मरणधर्माप्यमृतस्तद्धर्मरहितो भवति । अत्रैव देहे ब्रह्मावाप्नोति तद्रूपो भवतीति श्रुत्यर्थः । सृतिपदस्य प्रसिद्धार्थत्यागे कारणाभावमालक्ष्याह—यद्वेति । 'कार्मिणामेव ते धूममभिसंभवंति' इत्यादिश्रुत्या दक्षिणमार्गस्याभिहितत्वादार्चिरादिगतिस्तेषां नास्तीत्याह—न कर्मभिस्तां गतिमिति ॥ ३२ ॥ समीचीनः—सर्वसाध्यपरमसारप्रापकः । अयं क इति चेत्तत्राह—यत इति । भक्तियोगः प्रेमा यच्छब्देनात्र भगवत्संतोषार्थं कर्मोच्यते । 'स वै पुंसां परो धर्मः इत्युक्तेः । अत्र पूर्वमुक्तलक्षणं सृतिद्वयं यथा मोक्षप्रापकं तथाऽयं पंथा भक्तियोगप्रापक इति प्रापकस्यास्य पथः परमोत्कर्षप्रतिपादनादेतत्प्राप्यस्य भक्तियोगस्यापि सृतिद्वयप्राप्यान्मोक्षात्परमोत्कर्षो युक्तिसिद्धः । इति भक्तियोगस्यास्य प्रेमलक्षणस्य मोक्षसाधनत्वं न व्याख्यातुं शक्यमित्यवधेयम् ॥३३॥ इत्यर्थ इति । यावच्चेतो विकारवत्तावदैकाग्र्यं न जायते इति भावः । कूटस्तिष्ठतीति कूटस्थः । 'कूटोऽस्त्री निश्चले राशौ' इत्यादिकोशात् । विश्वनाथः—ननु त्वं मनीषया सर्वसारत्वेन स्वाभिमतत्वेन चेममेव पंथानं निश्चिनोष्यन्यं वा ? । तत्र सामान्यस्य वा का कथा भगवानेव स्वमनीषया प्रथममेव निरणैषीदेवेत्याह । भगवान्स्वप्रकाशसार्वज्ञ्यादिगुणः परमेश्वरोऽपि स्वनिःश्वासोद्भूतब्रह्म वेदं कात्स्न्येंन सामस्त्येन त्रिरन्वीक्ष्येति।यथाऽन्ये मुनयः शास्त्रं द्विस्त्रिरन्वीक्ष्यैव तत्तात्पर्यं पर्यालोचयंति तथैव 'स मुनिर्भूत्वा समचिंतयत्' इति श्रुतेर्भगवानपि मुनिलीलत्वेनैव सर्ववेदाभिधेयसाराकर्षणलीलया वेदानां दुर्ज्ञेयत्वं लोके व्यञ्जयंस्त्रिर्विचार्येत्यर्थः ॥ कर्मभक्तिज्ञानप्रतिपादकत्वाभिप्रायेण वा त्रिरन्वीक्ष्य अनंतवैकुंठवैभवादिमयानामनंतविरिञ्चिपाठ्यभेदानां वेदानां तथेक्षणं तेनैव संभवतीत्याह कूटस्थः । 'कालव्यापी स कूटस्थ एकरूपतयैव यः' इत्यमरः । अत एवोक्तं स्वयमेव । 'किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् । इत्यस्य हृदयं लोके नान्यो मद्वेद कश्चन ॥'' इति । स तद्वस्तु अध्यवस्यत्सर्ववेदप्रतिपाद्यत्वेन निश्चिकाय । यत आत्मनि स्वस्मिन्नतिः प्रेमा भवेत् । प्रेम्णो हि प्रथमावस्था रतिः । संदर्भस्तु—स हि भक्तियोगः सर्ववेदसिद्ध इत्याह—भगवानिति । भगवान् ब्रह्मेति स्वामिवत् । अत्राप्युपसंहारानुरोधेनात्मशब्दस्य हरिवाचकता । निरुक्तश्च । 'आततत्वाच्च मातृत्वादात्मा हि परमो हरिः' इति । अतोऽग्रे विश्वनाथवद्द्वितीयोर्थः । विशेषस्तु 'निगदकृदुपजह्रे भृंगवद्वेदसारम्' इति शुकोक्तिरेव ॥ ३४ ॥ अत्राक्षिपति—नन्विति । तदेव लक्षितत्वमेव । संदर्भः । अथ भगवानपि लक्षितः केन सर्वभूतेषु सर्वेषु तेषु द्रष्टृषु प्रविष्टेन स्वात्मना स्वांशरूपेणा

तस्मात्सर्वात्मना राजन्हरिः सर्वत्र सर्वदा ॥ श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यो भगवान्नृणाम् ॥ ३६ ॥

दृश्यानां जडानां दर्शनं स्वप्रकाशं द्रष्टारं विना न घटत इत्यनुपपत्तिमुखेन लक्षणैः स्वप्रकाश तर्यामिलक्षणैः तथा बुद्ध्यादीनि कर्तृप्रयोज्यानि करणत्वात् वास्यादिवदिति व्याप्तिमुखेनानुमापकैः स्वतंत्रश्च कर्तेत्येवमीश्वरसिद्धिः ॥ ३५ ॥ यच्छ्रोतव्यमित्यादिप्रश्नोत्तरमुपसंहरति । तस्मादिति ॥ ३६ ॥

तर्यामिणा आदौ सर्वैर्द्रष्टृभिरंतर्यामी लक्षितस्ततस्तेन भगवानपि लक्षित इत्यर्थः । स तु पूर्ववत् द्वेधैव लक्ष्यते । तथा हि कर्तृत्वभोक्तृत्वयोरस्वातंत्र्यादर्शनात् । कर्मणोपि जडत्वात्सर्वेषामपि जीवानां तत्रतत्र प्रवृत्तिरंतः प्रयोजकविशेषं विना न घटत इत्यनुपपत्तिद्वारान्तर्यामी लक्ष्यते । "एष ह्यनेन चक्षुषा दर्शयति, श्रोत्रेण श्रावयति, मनसा मानयति, बुद्ध्या बोधयति—तस्मादेतावाहुः सृतिरसृतिः" इति भाल्लविश्रुतिश्च । अतस्तस्मै चांतर्यामिरूपेण तस्यांशेन त्वैश्वर्याय तेषु यदि सर्वांशेनैव प्रविशति । कोपि परस्तदा स्वतः पूर्णत्वाभावादनीश्वरत्वमेव स्यादित्यनुपपत्तिद्वारांतर्यामिरूपेण तस्यांशेन भगवानपि लक्षितः । अत एव गीतोपनिषत्सु— "अथ वा बहुनैतेन किं ज्ञातेन तवार्जुन । विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्॥" इति । विष्णुपुराणे च 'स्वशक्तिलेशावृतभूतसर्गः' इति । तथा जीवाः प्रयोजककर्तृप्रेरितव्यापाराः, अस्वातंत्र्यात् । तक्षादिकर्मकरजनवदित्येवमंतर्यामिणि तद्वेधा व्याप्तिद्वारा सिद्धे पुनस्तेनैव भगवान्साध्यते तुच्छवैभवजीवांतर्यामिस्वरूपमीश्वरतत्त्वं निजांशितत्त्वाश्रयं तथैव पर्याप्तेः । राजप्रभुत्वाश्रिततक्षादिकर्मकरप्रयोजकप्रभुत्ववदिति । अथवात्र । "यथेंद्रियैः पृथग्द्वारैरर्थो बहुगुणाश्रयः । एको नानेयते तद्वद्भगवाञ्छास्त्रवर्त्मभिः" इत्येवोदाहरणयिम् । अनेनैवगतिसामान्यं च सिध्यतीति । विश्वनाथस्तु—सा च रतिः "येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टम्" इति भगवद्वाक्येनाग्रे प्रतिपादयिष्यमाणा शांतिप्रीतसख्यवात्सल्यप्रियताभिधाना पञ्चविधा भवति । तत्र प्रथमं शांत्याख्याया रतेरसाधारण्येन प्रकारं विषयालंबनं च दर्शयति—भगवानिति । स्वात्मना स्वस्य जीवस्यात्मनान्तर्यामिणैव स्वस्मिन्निव सर्वभूतेषु सर्वव्यापकत्वात्तदंशी भगवान्हरिर्लक्षितः । शांतभक्तैरनुभवगोचरीकृत इत्यर्थः । 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति भगवदुक्तेः । ननु जीव एव कथं लक्ष्यत तदंतर्यामी वा येन भगवान् कृष्णो लक्षयितव्यस्तत्राह । दृश्यैर्बुद्ध्यादिभिर्हेतुभिर्द्रष्टा जीवो लक्षितो दृश्यानां जडानां बुद्ध्यादीनां दर्शनं हि चेतनं द्रष्टारं विना न संभवेदित्यनुपपत्तिमुखेन तथा बुद्ध्यादीनि कर्तृप्रयोज्यानि करणत्वाद्वास्यादिवदिति व्याप्तिमुखेन चानुमितस्तथाऽनुमापयंति । यानि लक्षणानि चिह्नानि तैर्द्रष्टांतर्यामी च लक्षितः । तानि च सर्वस्यापि जीवस्य कर्तृत्वभोक्तृत्वयोरस्वातंत्र्यम् । 'केनापि देवेन हृदि स्थितेन यथा नियुक्तोस्मि तथा करोमि' इति दुर्योधनोक्तेर्भोक्तुश्च सुखदुःखानामस्वातंत्र्यञ्च लक्ष्यत इत्येकादशस्कंधोक्तेश्च । तथा कर्मसाम्येपि फलतारतम्यं क्वचित्फलाभावश्चेत्यादीनि समुद्रमथनादौ दृष्टानि ज्ञेयानि । तथा हि—जीवाः प्रयोजककर्तृस्वामिकाः अस्वातंत्र्यात् । यथायोग्यस्वामिदत्तकर्मफलतारतम्यतदभाववत्त्वाच्च तक्षादिकर्मकरजनवदिति ॥ ३५ ॥ 'भक्तियोगो भवेत्' इत्यत्र 'रतिरात्मन्यतो भवेत्' इत्यत्र च यत्पदवाच्यं साधनमाह—तस्मादिति । यस्मात् 'नह्यतोऽन्यः शिवः पंथाः' तस्मादित्यर्थः । यस्मात् । सर्वभूतेषु भगवाँल्लक्षितः तस्मादिति वा । सर्वत्र सर्वदेति । नात्र देशकालनियमोऽपेक्षितव्य इत्यर्थः । सर्वेणैवात्मना मनसा न च क्वचन मनोवृत्ती ज्ञानकर्माद्यपेक्षणीयामिति भावः ।

पिबंति ये भगवत आत्मनः सतां कथामृतं श्रवणपुटेषु संभृतम् ॥ पुनंति ते विषयविदूषिताशयं व्रजंति तच्चरणसरोरुहांतिकम् ॥ ३७ ॥ इति श्रीमद्भागवते महापुराणे द्वितीयस्कंधे पुरुषसंस्थानुवर्णनं नाम द्वितीयोऽध्यायः ॥ २ ॥ श्रीशुक उवाच ॥ एवमेतन्निगदितं पृष्टवान्यद्भवान्मम ॥ नृणां यन्म्रियमाणानां मनुष्येषु मनीषिणाम् ॥ १ ॥ ब्रह्मवर्चसकामस्तु यजेत ब्रह्मणस्पतिम् ॥ इंद्रमिन्द्रियकामस्तु प्रजाकामः प्रजापतीन् ॥ २ ॥ देवीं मायां तु श्रीकामस्तेजस्कामो विभावसुम् ॥ वसुकामो वसून्रुद्रान्वीर्यकामोऽथ वीर्यवान् ॥ ३ ॥

श्रवणादिफलमभिनयेनाह। पिबंतीति सतामात्मन आत्मत्वेन प्रकाशमानस्य कथैवामृतम् । विषयैर्विदूषितं मलिनीकृतमाशयं पुनंति शोधयंति तस्य चरणपद्मांतिकं श्रीविष्णुपदं व्रजंति ॥ ३७॥ इति श्रीभा०म० द्वितीयस्कंधे टीकायां द्वितीयोऽध्यायः ॥२॥ छ ॥ तृतीये विष्णुभक्तेस्तु वैशिष्ट्यं शृण्वतो मुनेः ॥ भक्त्युद्रेकेण तत्कर्मश्रवणादर ईर्यते॥ ॥ १ ॥ इदानीमन्यदेवताभजनस्यापि पुत्रादिभजनवदेव तुच्छफलत्वेन हेयत्वं वक्तुं पूर्वोक्तमनुवदति । एवमिति । ममेति माम् । कदाचिद्दैवयोगेन मनुष्यत्वं प्राप्तेषु जीवेषु ये मनीषिणस्तेषां तत्रापि ये म्रिय माणास्तेषां विशेषत एवमेतद्धरिकथाश्रवणादिकं निगदितं विहितमित्यर्थः॥ १ ॥ब्रह्मणस्पतिं वेदस्य पतिं ब्रह्माणं यजेत । इंद्रियपाटवकामास्त्विंद्रम् । प्रजाकामः प्रजापतीन्दक्षादीन् ॥ २ ॥ मायां दुर्गाम् । विभावसुमग्निम् । वसुकामो धनार्थी । वीर्यं प्रभावस्तत्कामो वीर्यवान्सन्रुद्रान् यजेत ॥ ३ ॥

''तस्मादेकेन मनसा भगवान्सात्वतां पतिः ॥ श्रोतव्यः कीर्त्तितव्यश्च '' इत्यनेनैकवाक्यत्वाच्छ्रोतव्य इति प्राधान्यात् श्रवणकीर्त्तनस्मरणान्युक्तानि पादसेवनादीन्यपि ज्ञेयानि ॥ ३६ ॥ प्रीतादिचतुर्विधाया रतेः साधारण्येनानुभावमेव प्रेम्णः साधनं वदंस्तत्फलमपि दर्शयति । आत्मनः स्वस्य यो भगवानुपास्यस्तस्य नारायणस्य रामस्य कृष्णस्य वा कृष्णस्यापि स्वीयभावानुरूपस्य बालस्य पौगंडस्य किशोरस्य वा कथामृतं तथा तादृशस्य तस्य सतां भक्तानां नारदादीनां हनुमदादीनां नंदादीनां श्रीदामादीनां गोपालादीनां च कथामृतं पिबंतीत्यनेन तत्कर्तॄणां जातरतित्वं व्यंजितं तथात्व एव माधुर्योपलंभेन पानपदप्रयोगासिद्धेः । अजातरतीनां तु 'तस्मात्सर्वात्मना' इत्यनेन श्रवणकीर्त्तनादीनि रतेः साधनान्युक्तान्येव । आशयमंतःकरणं पुनंति क्षालयंतीत्यननुसंहितं फलं व्रजंति साक्षात्सेवितुमित्यनुसंहितं फलमिति । 'अतःपृच्छामि संसिद्धिम्' इति प्रश्नस्योत्तरमुक्तम् । संदर्भस्तु—सतामिति व्यधिकरणषष्ठ्या सतां स्वस्य यो भगवांस्तस्येत्यर्थः । तेषां भगवति स्वामित्वेन ममतास्पदत्वात् । पुनंतीत्यनेन पूर्वोक्तस्थूलधारणमार्गश्च परिहृतः भक्तियोगस्य स्वतःपावनत्वादलं तत्प्रयासेनेति । अत्र कथामृतं प्रशस्यमानं श्रीभागवताख्यमेव मुख्यं ''यस्यां वै श्रूयमाणायाम्'' इत्यादिकं च तथैवोक्तम् ॥३७॥इति श्रीभागवतभावार्थदीपिकाप्रकाशे द्वितीयस्कंधे द्वितीयोऽध्यायः॥२॥मुनेः सकाशाद्विष्णुभक्तेराधिक्यं शृण्वतो राज्ञो विष्णुकर्मश्रवणादरो वर्ण्यते ॥ (१) ॥ म्रियमाणानां नृणां कृत्यं यत्पृष्टं तदेतत् योगिमते सृतिद्वयं निगदितम् । तथा तेष्वेव मनुष्येषु मध्ये ये मनीषिणो म्रियमाणा भवद्विधास्तेषामेतच्छ्रवणकीर्त्तनस्मरणकथामृतादि निगदितम् ॥ १ ॥ ये च तेष्वेव मनुष्येषु मंदधियस्तेषां च कृत्यं शृण्वित्याह।यद्वा । किं वा भजनीयमिति यत्पृष्टं तत्र प्रथमं मंदधियां भजनीयानाह 'ब्रह्मवर्चसा'इत्यादिना 'कामकामो यजेत्सोमम्' इत्यंतेन । प्रजाकामो जनकामः। 'प्रजा तु जनपुत्रयोः' इति यादवः॥२॥श्रीर्लक्ष्मीः शोभा च। 'तेजो बले प्रभावे च ज्योतिष्यर्चिषि रेतसि' इति कोशात् । प्रभावेच्छुः।वसु हिरण्यं गावश्चेति । वीर्यकामो बहुस्त्रिसंभोगार्थं शुक्रावृद्धिकामः।'वीर्यं पराक्रमे रेतस्यन्नमाहात्म्ययोरपि' इति च॥३॥

अन्नाद्यकामस्त्वदितिं स्वर्गकामोऽदितेःसुतान् ॥ विश्वान्देवान्राज्यकामः साध्यान्संसाधको विशाम् ॥४॥ आयुःकामोऽश्विनौ देवौ पुष्टिकाम इलां यजेत् ॥ प्रतिष्ठाकामः पुरुषो रोदसी लोकमातरौ ॥ ५ ॥ रूपाभिकामो गंधर्वान्स्त्रीकामोऽप्सरउर्वशीम् ॥ आधिपत्यकामः सर्वेषां यजेत परमेष्ठिनम्॥६॥यज्ञं यजेद्यशस्कामः कोशकामः प्रचेतसम् ॥ विद्याकामस्तु गिरिशं दांपत्यार्थ उमां सतीम् ॥ ७ ॥ धर्मार्थ उत्तमश्लोकं तंतुं तन्वन्पितॄन्यजेत् ॥ रक्षाकामः पुण्यजनानोजस्कामो मरुद्गणान् ॥८॥ राज्यकामो मनून्देवान्निर्ऋतिं त्वभिचरन्यजेत् ॥ कामकामो यजेत्सोममकामः पुरुषं परम् ॥ ९ ॥ अकामः सर्वकामो वा मोक्षकाम उदारधीः ॥ तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥ १० ॥

अन्नाद्यं भोज्यं भक्ष्यं च । अदितेः सुतान्द्वादशादित्यान्।विशां देशस्थप्रजानां स्वाधीनतामिच्छन् साध्यान् यजेत् ॥४॥ इलां पृथ्वीम् । प्रतिष्ठा स्थानादप्रच्युतिः । रोदसी द्यावाभूमी॥५॥अप्सराश्चासौ उर्वशी च ताम्॥६॥यज्ञं यज्ञोपाधिं विष्णुम् । कोशो वसुसंचयः वसुकाम इत्यत्र धनमात्रमिति भेदः । दांपत्यमन्योन्यप्रीतिस्तदेवार्थो यस्य सः ॥७॥ धर्मार्थो धर्मकामः । उत्तमश्लोकोपाधिं विष्णुम् । तंतुं तन्वन्संतानवृद्धिमन्विच्छन् । रक्षा बाधानिवृत्तिस्तत्कामः पुण्यजनान्यक्षान् । ओजो बलं तत्कामो मरुद्गणान् देवान् ॥८॥ राज्यं राजत्वं तत्कामो मनून् । देवान्मन्वंतरपालकान् । राज्ञः कर्म राज्यं तत्कामो विश्वान्देवानिति विशेषः । अभिचरञ्छत्रुमरणमिच्छन्निर्ऋतिं राक्षसम् । कामकामः भोगेच्छुः अकामो वैराग्यकामः पुरुषं परं प्रकृतिव्यतिरेकोपाधिमीश्वरम् ॥९॥ अकाम एकांतभक्तः उक्तानुक्तसर्वकामो वा । पुरुषं पूर्णं निरुपाधिम् ॥१०॥

यद्दन्तैरवखंड्यावखंड्य भक्ष्यतेऽपूपादि तद्भक्ष्यम् । यत्तु केवलं जिह्वया विलोड्य निगीर्यते संयावादि तद्भोज्यमिति विवेकः।साध्यान्साध्यसंज्ञान् ॥४॥ पुष्टिर्देहपुष्टिः ॥ ५ ॥ परमेष्ठिनं ब्रह्माणम्॥६॥यज्ञं तन्नामानमिंद्रं वा॥७॥ कोशकामो निधिकामः । प्रचेतसं वरुणम्॥ ८ ॥ उत्तमश्लोकाः पुण्यश्लोका धार्मिका नलादयस्तदुपाधिं तदधिष्ठानकं विष्णुमिति संदर्भः॥९॥सर्वकाम इत्यनेनैव सकामसामान्ये लब्धे मोक्षकाम इति पृथगुपादानं तदधिकारिणां वयं निष्कामा इत्यभिमानखंडनार्थम् । किं वा । सर्वकाम इत्यपि मोक्षकामस्य सकामत्वातिशयज्ञापनार्थम् । तथा च स्वस्य दुःखहानेच्छा सुखप्राप्तीच्छा च काम उच्यते सा सा च स्वस्य तात्कालिककिंचिन्मात्रदुःखखंडनार्थं नश्वरस्वर्गादिसुखार्थं च प्रवृत्तेभ्यः कर्मिभ्यो देवतांतरोपासकेभ्यश्च ज्ञानाधिकारिणां स्वीयसंसारदुःखखंडने प्रवृत्तानां ब्रह्मसुखमनुबुभूषूणामधिकैव दृश्यते भक्तानां तु भजनीयपरमेश्वरसुखार्थमेव प्रवृत्तानां निष्कामता तद्वचनैरेवावसीयते । तानि च यथा ।“नाथ योनिसहस्रेषु येषुयेषु व्रजाम्यहम् । तेषुतेष्वच्युता भक्तिरच्युतास्तु सदा त्वयि॥” इति “स्वकर्मफलनिर्दिष्टां यांयां योनिं व्रजाम्यहम् । तस्यांतस्यां हृषीकेश त्वयि भक्तिर्दृढास्तु मे॥” इति । “तन्नः समादिशोपायं येन ते चरणाब्जयोः । स्मृतिर्यथा न विरमेदपि संसरतामिह॥” इति । प्रायोपवेशारंभे राज्ञोपि वचनं यथा । “पुनश्च भूयाद्भगवत्यनंते रतिः प्रसंगश्च तदाश्रयेषु । महत्सु यांयामुपयामि सृष्टिं मैत्र्यस्तु सर्वत्र नमो द्विजेभ्यः॥” इति । उदारधीः सुबुद्धिः । कामराहित्ये साहित्ये वा भक्तेर्भगवद्विषयत्वमेव सुबुद्धित्वचिह्नं तदभाव एव मंदबुद्धित्वचिह्नमित्यर्थः । तीव्रेण ज्ञानकर्माद्यमिश्रेण मेघाद्यमिश्र एव सौरकिरणो यथा तीव्रः स्यात्तथेत्यर्थः । संदर्भस्तु—एवं प्राक्तनाध्यायाभ्यां कर्मयोगज्ञानेभ्यः श्रेष्ठत्वमुक्त्वा तदुत्तराध्यायेपि सर्वदेवोपासनेभ्यः श्रेष्ठत्ववचनेन भगवद्भक्तियोगस्यैवाभिधेयत्वमाह—अकाम इति । तीव्रेण दृढेन स्वभावत एवानुपघात्येनेति विघ्नानवकाशतोक्ता । कमना तु यादृच्छिकेनापि स्यात् । यथोक्तं भारते— “भक्तक्षणः क्षणो विष्णोः स्मृतिः सेवा स्ववेश्मनि । स्वभोज्यस्यार्पणं दानफलमिंद्रादिदुर्लभम्॥” इति । तदुक्तं श्रीकर्दमं प्रति श्रीक

एतावानेव यजतामिह निःश्रेयसोदयः ॥ भगवत्यचलो भावो यद्भागवतसंगतः ॥ ११ ॥ ज्ञानं यदा प्रतिनिवृत्तगुणोर्मिचक्रमात्मप्रसाद उत यत्र गुणेष्वसंगः ॥ कैवल्यसंमतपथस्त्वथ भक्तियोगः को निर्वृतो हरिकथासु रतिं न कुर्यात् ॥ १२ ॥

पूर्वोक्तनानादेवतायजनस्यापि संयोगपृथक्त्वेन भक्तियोगफलत्वमाह।एतावानिति । इंद्रादीनपि यजतामिह तत्तद्यजनेन भागवतानां संगतौ भगवत्यचलो भावो भक्तिर्भवतीति यदेतावानेव निःश्रेयसस्य परमपुरुषार्थस्योदयो लाभः । अन्यत्तु स्वर्गादि सर्वं तुच्छमित्यर्थः॥ ११ ॥भागवतसंगत इत्यनेन सूचितां हरिकथारतिं स्तौति । ज्ञानमिति । यत यासु कथासु ज्ञानं भवति । कीदृशम् । आ सर्वतः प्रतिनिवृत्तमुपरतं गुणोर्मीणां रागद्वेषादीनां चक्रं समूहो यस्मात्तत् । उत अनंतरं तद्धेतुरात्मप्रसादश्च यत्र यासु मनःप्रसाद

पिलेन । "न वै जातु मृषैव स्यात्प्रजाध्यक्ष मदर्हणम्" इति । अथ वा यत्तत्कामस्तीव्रेणैव यजेत । ततश्च शुद्धभक्तिसंपादनायैवांते पर्यवसिष्यत्यसांवित्यभिप्रायेण सविशेषणमुपदिष्टम् । तदनेनैकांतभक्ते मुमुक्षौ वा तद्भक्तियोगस्यैवाभिधेयत्वं किं वक्तव्यमपि तु सर्वकामेष्वपीति तदेव सर्वथापि निर्णीतम्।यद्वाऽकामत्वं भजनीयपरमपुरुषसुखमात्रस्वसुखत्वं भक्तिमात्रकामत्वे व्याख्याते धर्मपुरुषार्थिन्यातिव्याप्तिः स्यात्।तीव्रेण सर्वेषु साध्येषु परमसाधकतमत्वेन॥ १०॥किञ्च—एतावानिति इत्यर्थ इति।हरिभक्तिं विना फलांतरस्य क्षयिष्णुत्वात्तुच्छत्वमिति भावः। अत्र "इन्द्रमिंद्रियकामस्तु" इत्याद्युक्तमिंद्रियपाटवादिकं पृथक्त्वेन फलं भागवतसंयोगे तु भावः फलं खादिरयूपसंयोगे यागस्य फलवैशिष्ट्यवदिति संदर्भः ।"एकस्य तूभयत्वे संयोगपृथक्त्वम्" इति जैमिनिसूत्रम् । तदर्थस्तु एकस्य कर्मण उभयत्वेऽनेकफलसंबंधे संयोग उभयसंबंधबोधकवाक्यं तस्य पृथक्त्वे भेदः स हेतुः।यथा ज्योतिष्टोमादिकर्मणां "कर्मणा पितृलोकः"इत्यादिश्रुतेः स्वर्गादिहेतुत्वेपि "यज्ञेन"इत्यादिश्रुतेर्ज्ञानार्थत्वं तद्वदत्रेंद्रादियजनस्येंद्रियपाटवादिहेतुत्वेपि भागवतसंगतो भक्तिफलकत्वमपीत्यर्थः।'खादिरो यूपो भवति,खादिरं वीर्यकामस्य यूपं कुर्वीत' इत्युभयविधवाक्योपलब्धेः खादिरस्योभयार्थता यथा तथात्रापीत्यप्यत्रानुसंधेयम् । विश्वनाथस्तु—ननूक्तलक्षणानां देवतांतरभक्तानां लब्धं तत्तत्कामानामंते खलु का गतिः स्यादिति चेन्न कापि किन्तु याद्दच्छिकमहत्कृपा स्यात्तदैव भक्तिः स्यादित्याह—एतावानेव । यजतां देवतांतरयाजिनां निःश्रेयसोदयः कोऽसौ यद्यदि भागवतानां संगतो हेतोर्भगवति भावः सेव्यत्वकामना स्यादन्यथा न निःश्रेयसं तत्तद्देवतानामपि निःश्रेयसाभावादिति भावः । तदुक्तं भगवता "येप्यन्यदेवताभक्ता यजंते श्रद्धयान्विताः । तेपि मामेव कौंतेय यजंत्यविधिपूर्वकम् ॥ अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च । न तु मामभिजानंति तत्त्वेनातश्च्यवंति ते ॥ " इति देवतांतरस्य यजनं तु न हि भगवद्भावकारणं किं तु भागवतसंग एव स च यदृच्छयैव भवेदिति प्राक्प्रतिपादितम् ॥ ११ ॥ ननु यावज्जीवनपर्यंतं यो यमाश्रितस्तस्यांते खल्वाश्रयांतरानौचित्यमेव तस्मात्सर्वकालमेव तत्तद्देवोपासकस्यांते भागवतसंगादपि भगवति भावः कथं कर्त्तुमुचित इति चेद्देवतांतरोपासकः खलु को वराको यतो ब्रह्मोपासकोपि भगवति शुद्धां भक्तिं करोतीत्यत्र क्रमरीतिं दर्शयन्नाह । ज्ञानं यदा स्यात् कीदृशं प्रतिनिवृत्तमुपरतं गुणोर्मीणां रागादीनां चक्रं समूहो यस्मात्तत् । तदात्मप्रसादः स्यात् यत्रात्मप्रसादे सति गुणेष्वसंगो वैराग्यम् । कीदृशः कैवल्ये संमतः पंथा अथ तदनंतरं भक्तियोगः स्यात् । भक्तियोगस्य याद्दच्छिकतायाः प्राक् प्रतिपादितत्वादसंगकार्यत्वं नाशंकनीयम् । भगवत्कृपया सनकादीनामिव भागवतकृपया शुकस्येव कीर्त्तनादिरूपः । ततः कः खलु निर्वृतो भक्तिसुखे निमग्नः । रतिमासक्तिं यो रतिं न कुर्यात्स त्वनिर्वृत इति भावः । अत्र कर्मज्ञानयोगदेवतांतरोपासनेभ्यः शुद्धभक्तेरुत्कर्ष इति तथा तत्तत्साध्यं केवलया भक्त्यैव सिध्यतीति तथा तत्तत्साधनवतामप्यंते पुनर्भक्त्यैव निःश्रेयसमिति । कर्मज्ञानादिनिरपेक्षा स्मरणकीर्त्तनश्रवणप्रधाना शुद्धा भक्तिरेव प्रेमभक्तिसाधनमिति शुकदेवस्य स्वाभिमतम् । तत्रापि नामकीर्त्तनं सर्वोत्कृष्टतममिति वस्तुपंचकं निरूपितमिति प्रकरणार्थसंक्षेपः । संदर्भस्तु—प्रपंचातीतत्वात्कैवल्यरूप एव विद्वद्भिः संमतः पंथा भगवत्प्राप्त्युपायश्चेत्यर्थः । 'एको नारायणो देवः' इत्यादौ । 'परापराणाम्परम आस्ते कैवल्यसंज्ञितः' इत्युक्तदिशा कैवल्याय श्रीनारायणं लब्धुं संमतः पंथा उपायो यो भक्तियोगस्तत्प्रेमा स च यत्रेति वा ॥ १२ ॥

शौनक उवाच ॥ इत्यभिव्याहृतं राजा निशम्य भरतर्षभः ॥ किमन्यत्पृष्टवान्भूयो वैयासकिमृषिं कविम् ॥ १३ ॥ एतच्छुश्रूषतां विद्वन्सूत नोऽर्हसि भाषितुम् ॥ कथा हरिकथोदर्काः सतां स्युः सदसि ध्रुवम् ॥ १४ ॥ स वै भागवतो राजा पांडवेयो महारथः ॥ बालक्रीडनकैः क्रीडन्कृष्णक्रीडां य आददे ॥१५॥ वैयासकिश्च भगवान्वासुदेवपरायणः ॥ उरुगायगुणोदाराः सतां स्युर्हि समागमे ॥ १६॥ आयुर्हरति वै पुंसामुद्यन्नस्तं च यन्नसौ ॥ तस्यर्ते यत्क्षणो नीत उत्तमश्लोकवार्तया ॥ १७ ॥

हेतुर्गुणेषु विषयेष्वसंगो वैराग्यं च । उभयत्रेति पाठे इहामुत्र च गुणेष्वसंगः अथ कैवल्यमित्येव संमतः पंथा एतादृशो यो भक्तियोग निर्वृतः श्रवणसुखेन अन्यत्रानिर्वृत इति वा । तासु हरिकथासु को रतिं न कुर्यात् ॥ १२ ॥ अभिव्याहृतमुक्तम् । ऋषिं परब्रह्मदर्शिनम् । कविं शब्दब्रह्मनिष्णातम् ॥ १३ ॥ श्रवणेच्छायां हेतुः । हरिकथा एव उदर्क उत्तरफलं यासु ताः कथाः । सतां भागवतानां सदसि सभायां स्युः । अत एतच्छुश्रूषतां श्रोतुकामानां नः ॥ १४ ॥ एतत्प्रपंचयति स वा इति द्वाभ्याम् । कृष्ण पूजादिरूपां क्रीडां यः स्वीकृतवान् ॥ १५ ॥ उरुगायस्य गुणैरुदारा महत्यः कथाः स्युः ॥ ॥ १६ ॥ किं च । वृथैव क्षीयमाणमायुर्हरिकथया सफलं कुर्वित्याशयेनाह त्रिभिः । आयुरिति । असौ सूर्य उद्यन्नुद्गच्छन् अस्तमदर्शनं च यन्गच्छन् यत् येन क्षणो नीतस्तस्य आयुर्ऋते वर्जयित्वा अन्येषां वृथैव हरति ॥ १७ ॥

ऋषिं परब्रह्मदर्शिनम् । कविमृषिष्वपि मध्ये तद्वर्णनातिशयचतुरम् ॥ १३ ॥ श्रवणकीर्तनादीन्येव स्वकर्त्तव्यत्वेन ज्ञात्वापि राज्ञा यदन्यत्पृष्टं तस्मात्तेषामेव श्रवणादीनां विषयाः कृष्णकथा एव प्रष्टव्या भविष्यंतीत्याशयेनाह—एतदिति । न च सर्गविसर्गमन्वंतरनानाराजादिकथानामपि तदन्यकथात्वं वाच्यमित्याह । कथा अपि हरिकथा एवोदर्क उत्तरफलं यासु ताः सर्गादिकथानामपि कृष्णकथायामेव पर्यवसितत्वात्ता अपि श्रवणादिविषया इति भावः । सतां सदसि प्राचीनार्वाचीनेषु मध्ये हे सूतेति कथनात्सूतस्य तु राजवंशकथाज्ञत्वमस्ति न तु हरिकथाभिज्ञत्वमित्याक्षेपवारणायाह—हे विद्वन्निति । व्यासशिष्यत्वात्त्वं सर्वज्ञोसीति भावः ॥ १४ ॥ सा सभा सर्वतः श्रेष्ठा यत्र श्रोता वक्ता च सर्वतोपि विलक्षण इत्याह—स वा इति । य इति । याया श्रीकृष्णस्य वृंदावनादौ बालक्रीडा श्रुतास्ति तत्प्रेमावेशेन तत्सख्यादिभाववान् तांतामेव क्रीडां कृतवानित्यर्थः । बालानां क्रीडनकैः क्रीडासाधनैर्गोवत्सादिप्रतिकृतिभिः ॥ १५ ॥ भगवान्सर्वज्ञः सतां समागमे सति उरुभिर्वेदविद्भिर्गीयत इति उरुगायः श्रीकृष्णस्तस्य गुणा एवोदारा मनोरथप्रदातारः तत्रत्यानां जनिष्यमाणानां च जनानां ध्रुवं स्युरतस्तान् गुणानत्र प्रवर्त्तयेति । तेन कृष्णकथोदर्काः कथाश्च भक्तैरास्वादनीया इति भावः ॥ १६ ॥ नात्र विलंबः कार्य इत्याह—किं चेति । हरति वृथागामित्वाद्बलादाच्छिनत्तीव । यद्वा । क्षणोपि निमेषत्रयमपि तावतैव कालेन सर्वमायुः सफलं भवति । एकस्यामेव शाखायां फलितायां वृक्षोयं फलवानिति यथोच्यते । प्रतिशाखं फलवत्त्वे कैमुत्यमिव सर्वस्यायुषः कृष्णवार्त्तायुक्तत्वमपेक्ष्यम् । नन्वेवं चेदायुर्हरणाभावात्कृष्णवार्त्तयापि तत्क्षणे जनो न म्रियेत् । सत्यम् । सत्पात्रीकृतवित्तो जनोऽक्षयवित्तो यथोच्यते परत्र तद्भोगानंत्यप्राप्तेः "स मम ब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे । अधीते शतसाहस्रमनंतं वेदपारगे ॥" इति स्मृतेः । अब्राह्मणे ब्राह्मणेतरे सत्कर्मणि लिंगिजनादौ । ब्राह्मणब्रुवे कुत्सितविप्रे । अधीते शास्त्राध्येतारि । वेदपारगे वेदार्थज्ञानवति इति । तथैव कृष्णसात्कृतस्यायुर्जनः परत्र तत्पार्षदत्वप्राप्त्या ध्रुवमक्षयायुर्भवतीति । कृष्णभक्तस्यायुर्हरणाभावो ज्ञेयः । जरामरणरोगादिकं तु भक्त्युत्कर्षवृद्ध्यर्थं मतांतरोत्थानाभावार्थं च स्वभक्तेरहस्यत्वरक्षणार्थं च भगवदिच्छयैव भवति न तु तत्र कालकर्मादेर्वस्तुतः कारणतेत्यु

तरवः किं न जीवंति भस्त्राः किं न श्वसंत्युत ॥ न खादंति न मेहंति किं ग्रामपशवोऽपरे ॥ १८ ॥ श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः ॥ न यत्कर्णपथोपेतो जातु नाम गदाग्रजः ॥ १९ ॥ बिले बतोरुक्रमविक्रमान्ये न शृण्वतः कर्णपुटे नरस्य ॥ जिह्वाऽसती दार्दुरिकेव सूत न चोपगायत्युरुगायगाथाः ॥ २० ॥ भारः परं पट्टकिरीटजुष्टमप्युत्तमांगं न नमेन्मुकुंदम् ॥ शावौ करौ नो कुरुतः सपर्यां हरेर्लसत्कांचनकंकणौ वा ॥ २१ ॥ बर्हायिते ते नयने नराणां लिंगानि विष्णोर्न निरीक्षतो ये ॥ पादौ नृणां तौ द्रुमजन्मभाजौ क्षेत्राणि नानुव्रजतो हरेर्यौ ॥ २२ ॥ जीवञ्छवो भागवतांघ्रिरेणुं न जातु मर्त्योऽभिलभेत यस्तु ॥ श्रीविष्णुपद्या मनुजस्तुलस्याः श्वसञ्छवो यस्तु न वेद गंधम् ॥ २३ ॥

ननु जीवनमेव तेषामायुषःफलमस्ति तत्राह।तरव इति।ननु तेषां श्वासो नास्ति तर्हि भस्त्राश्चर्मकोशाः।ननु तासामहारादिकं नास्ति तत्राह।न खादंति नाश्नंति न मेहंति रेतःसेकं मैथुनं न कुर्वंति किम् । उत अपि नराकारं पशुं मत्वाऽऽह । अपर इति ॥ १८ ॥ तदेवाह । श्वादिभिः संस्तुतः सदृशो निरूपितः यस्य कर्णपथं कदाचिदपि नागतः सः अवज्ञास्पदत्वाच्छ्वभिः कश्मलविषयासक्तत्वाद्विड्वराहैर्ग्रामसूकरैः कंटकवद्दुःखदविषयासक्तत्वादुष्ट्रैर्भारवाहित्वात् खरैस्तुल्य इत्यर्थः ॥ १९ ॥ तस्यांगानि च निष्फलानी त्याह बिले इति पंचभिः । बतेति खेदे । न शृण्वतोऽशृण्वतो नरस्य ये कर्णपुटे ते बिले वृथा रंध्रे । न चेदुपगायति तस्य जिह्वा असती दुष्टा दर्दुरो भेकस्तदीया जिह्वेव॥ २०॥ पट्टवस्त्रोष्णीषेण किरीटेन च जुष्टमपि शिरो यदि न नमेत्तर्हि केवलं भार एव । शवो मृतकस्तत्करतुल्यौ लसती कांचनकंकणे ययोस्तौ । अप्यर्थे वाशब्दः ॥ २१ ॥ ये नयने विष्णोर्मूर्तीर्न निरीक्षेते ते बर्हायिते मयूरपिच्छनेत्रतुल्ये । द्रुमवज्जन्म भजत इति तथा वृक्षमूलतुल्यावित्यर्थः ॥ २२ ॥ नाभिलभेत अभितो न स्पृशेन्न

पपादितं भीष्मनिर्याणाध्याये ॥ १७॥ अत्राक्षिपति–नन्विति ॥ मनुष्येभ्योपि तेषां तरुभस्त्राग्रामपशूनां जीवनाधिक्यश्वासाधिक्यखादनाद्याधिक्यानि संतीत्यतस्ते नराकाराः पशव एवेतिभावः ॥ १८॥ तदेव नराकारपशुत्वमेव । तेषां पशुत्वेप्यतिगर्हणीयत्वमाह श्वादिभिः संस्तुतः सम्यक् स्तुतः । अस्माकं चतुर्णामपि धर्मानयमेक एव धत्ते । वयं तु परस्परधर्मग्रहणेप्यसमर्था इति । तथाऽयं मनुष्योपि भूत्वा वयं तु पशवो भूत्वा पश्वंतरस्यै कस्यापि धर्मं धर्त्तुं न शक्नुम इति । तथायं शास्त्रादिष्टं स्वधर्ममप्युल्लंघ्यातिरागेणैव धत्ते । वयं तु नियतिकृते स्वस्वधर्मे एव पतिता इति । तथायमसद्धर्मे जनिष्यमाणं नरकं ज्ञात्वा वयं तु मूढा एवेति चतुर्द्धा स्तुतिः । तेषां श्वादीनां धर्मा निर्हेतुरोषणत्वामेध्यभोजित्वमहाभारवाहित्वस्वस्त्रीपादताडितत्वादयः । यस्य कर्णपथे जातु कदाचिदपि नोपेतो गतः गदाग्रज इति । गदस्य रोगस्याग्रे प्रतियोद्धेव जायते प्रादुर्भवतीति श्लेषेण तदैव ते क्रोधादयः पुरुषस्य रोगा नश्यंतीति भावः ॥ १९ ॥ तस्यांगिनः पुरुषस्य निंदां कृत्वा प्रत्येकतदंगानि निंदति । बिले एव ग्राम्यवार्ताभुजगगृहतुल्ये । श्लेषेणासती स्त्रीव तस्य सुकृतसर्वस्वं विद्रावयति । अत्र यद्यपि पुरुषो भुजाद्येकांगकृतयापि भक्त्या कृतार्थ एव भवति तदपि तस्यांगांतराणि तु व्यर्थान्येव भवंतीत्याशयेनांगानां निंदा ज्ञेया ॥ २० ॥ भार एव संसारसिंधौ प्रविशंतं तमधिकं निमज्जयतीति भावः । मृतककरतुल्यत्वाद्देवपित्राद्योपि तद्दत्तं जलादिकं न गृह्णंतीति भावः ॥ २१ ॥ मयूरपिच्छनेत्रतुल्ये । ताभ्यामात्मन उद्धारपदवीमपश्यंतः संसारकंटकक्षेत्र एव पतंतीति भावः । इत्यर्थ इति । यमदूतैरत्र कुठारैश्छिद्यमानौ भविष्यत इति भावः ॥ २२ ॥ एकैकान्यंगानि निंदित्वा समुदितानि निंदति–जीवन्निति । जीवञ्छवः प्रेतशरीरविशेष इव चेष्टमानः । साधून्भीषयते । तत्प्राणिकृतसपर्यादिकमपि भगवान्न गृह्णातीति भावः ।

तदश्मसारं हृदयं बतेदं यद्गृह्यमाणैर्हरिनामधेयैः ॥ न विक्रियेताऽथ यदा विकारो नेत्रे जलं गात्ररुहेषु हर्षः ॥ २४ ॥ अथाभिधेह्यंग मनोनुकूलं प्रभाषसे भागवतप्रधानः ॥ यदाह वैयासकिरात्मविद्याविशारदो नृपतिं साधु पृष्टः ॥ २५ ॥ इति श्रीभागवते महापुराणे द्वितीयस्कंधे श्रोतृश्रद्धा निरूपणं नाम तृतीयोऽध्यायः ॥३॥ सूत उवाच ॥ वैयासकेरिति वचस्तत्त्वनिश्चयमात्मनः ॥ उपधार्य मतिं कृष्ण औत्तरेयः सतीं व्यधात् ॥१॥

धारयेत् । श्रीविष्णुपद्याः श्रीविष्णुपदलग्नायाः । न वेदेति अवघ्राय नाभिनंदेदित्यर्थः ॥ २३ ॥ अश्मवत्सारो बलं काठिन्यं यस्य । विक्रियालक्षणमाह । अथेति । गात्ररुहेषु रोमसु हर्ष उद्गमः ॥ २४ ॥ यस्मादभक्तस्य सर्वमेतद्व्यर्थम् । मनसोऽनुकूलं प्रियं च ब्रूषे । अथ अतःकारणान्नृपतिना साधु पृष्टः सन्वैयासकिर्नृपतिं प्रति यत्प्राह तद भिधेहीति ॥ २५ ॥ इति श्रीभा० म० द्वितीयस्कंधे टीकायां तृतीयोऽध्यायः ॥ ३ ॥ छ ॥ तुर्ये परीक्षिता पृष्टं सृष्ट्यादिहरिचेष्टितम् ॥ शुकेन ब्रह्मतत्पुत्रसंवादेनोपवर्ण्यते ॥ १ ॥ राज्ञः प्रश्नं कथयितुं तस्य प्राक्तनीं स्थितिमाह चतुर्भिः । वैयासकेः शुकस्य इति एवंभूतमात्मनस्तत्त्वस्य निश्चयो यस्मात्तद्वच उपधार्याकलय्य सतीं कृष्ण एव सेव्यो

इत्यर्थ इति । यथा शवो गंधादिभिरर्चितोपि तन्नाभिनंदति तद्वत्सोपीति भावः ॥ २३ ॥ तदेवं व्यस्तसमस्ततया बाह्यमंगं प्राधान्येन निंदित्वाभ्यंतरमपि निंदति–तदश्मसारं लोहमयमेव यत् खलु गृह्यमाणैः कीर्त्यमानैरपि बहुभिर्हरिनामधेयैर्न विक्रियते विक्रियालक्षणमाह–अथेत्यादि । गात्ररुहेषु रोमसु हर्षः रोमांचः बहुनामग्रहणेपि चित्तद्रवाभावो नामापराधलिंगमिति संदर्भः । किंच्चाश्रुपुलकावेव चित्तद्रवलिंगमित्यपि न शक्यते वक्तुम् । तदुक्तं श्रीमद्रूपगोस्वामिचरणैः "निसर्गपिच्छिलस्वांते तदभ्यासपरेपि च । सत्वाभासं विनापि स्युः काप्यश्रुपुलकादयः ॥" इति । तथातिगंभीरमहानुभावभक्तेषु हरिनामभिश्चित्तद्रवेपि बहिरश्रुपुलकादयो न दृश्यंते इति । तस्मादिदमेवं व्याख्येयम् । यद्धृदयं न विक्रियेत कदा ? यदा विकारस्तदापीत्यर्थः । विकार एव कस्तत्राह–नेत्रे जलमिति । ततश्च बहिरश्रुपुलकयोः सतोरपि यद्धृदयं न विक्रियेत तदश्मसारमिति वाक्यार्थः । ततश्च हृदयविक्रियालक्षणान्यसाधारणानि क्षांतिनामग्रहणासक्त्यादीन्येव ज्ञेयानि तदुक्तम् "क्षांतिरव्यर्थकालत्वं विरक्तिर्मानशून्यता । आशाबंधः समुत्कंठा नामगाने सदा रुचिः ॥ आसक्तिस्तद्गुणाख्याने प्रीतिस्तद्वसतिस्थले । इत्यादयोनुभावाः स्युर्जातभावांकुरे जने ॥" अश्रुपुलकादीनि तु साधारणान्येव । अयमर्थः । उत्तमाधिकारिणां निर्मत्सराणां नामग्रहणे सत्येव नाममाधुर्यस्यानुभवः स्यात्तस्मिंश्च सति हृदयविक्रिया च स्यात् । सत्यां च तस्यां तद्व्यंजकाः क्षांत्यादयोऽश्रुपुलकादयश्च भवंत्येव कनिष्ठाधिकारिणां समत्सराणान्तु सापराधचित्तत्वान्नामग्रहणबाहुल्येपि तन्माधुर्यानुभवाभावे चित्तं नैव विक्रियेत तद्व्यंजकाः क्षांत्यादयोपि न भवंति । तेषामेवाश्रुपुलकादिसत्त्वेप्यश्मसारहृदयतया निंदेषा । किंच तेषामपि साधुसंगेनानर्थ निवृत्तिनिष्ठारुच्यादिभूमिकारूढानां कालेन चित्तद्रवे सति चित्तस्याश्मसारत्वमपगच्छत्येव येषां तु चित्तद्रवे सति चित्तस्याश्मसारता तिष्ठेदेव ते तु दुश्चिकित्स्या एव ज्ञेयाः । तथा च वक्ष्यते तृतीये सबीजयोगध्याने "एवं हरौ भगवति प्रतिलब्धभावो भक्त्या द्रवद्धृदय उत्पुलकः प्रमोदात् । औत्कंठ्यबाष्पकलया मुहुरर्द्यमानस्तच्चापि चित्तवडिशं शनकैर्वियुंक्ते॥" इति । अत्र द्रवद्धृदय इति चित्तद्रवः । तच्च चित्तवडिशमिति चित्त स्याश्मसारता वडिशस्य लोहमयत्वात् । अश्मसारस्य लोहपर्य्यायत्वात् । प्रतिलब्धो भावो येनेति भावोयमाभासरूप एव चित्तद्रवोपि तादृश एव ज्ञेयः इति यथार्थत्वे शनकैर्वियुंक्त इति तस्य पुरुषार्थबुद्ध्या तत्त्यागानु पपत्तेः । अत एव तादृशध्यानभक्त्याप्ययं भक्तशब्देन नाभिधीयते । किं तु योगिशब्देनैव चित्तस्य वडिशत्वेन कठोरत्वकुटिलत्वाभ्यां तद्विषयस्य भगवदंगस्य दुःखदात एव पर्याप्तोरिति । एवं च "सा वाग्यया तस्य गुणान्गृणीते करौ च तत्कर्मकरौ" इत्यादिवक्ष्यमाणवाक्यैरन्वयेन बिले बतेत्यादिवाक्यैर्व्यतिरेकेण च भक्तेरेव शास्त्राभिधेयत्वं दृढीकृतम् ॥ २४ ॥ तदभिधेहीति । ततोधिकमन्यत्किं वक्तव्यमस्तीति भावः ॥ २५ ॥ इति श्रीभागवतभावार्थदीपिकाप्रकाशे द्वितीयस्कन्धे तृतीयोऽध्यायः ॥३॥ ब्रह्मपुत्रे । नारदः ॥ ( १ ) ॥ सतीं विद्यमानामेव मतिं विशेषेणाधात् । यत औत्तरेय उत्तराया गर्भे प्रविष्टं कृष्णं तदवधि सदा स्मरन्नित्यर्थः ।

आत्मजायासुतागारपशुद्रविणबंधुषु ॥ राज्ये चाविकले नित्यं विरूढां ममतां जहौ ॥ २ ॥ पप्रच्छ चेममेवार्थं यन्मां पृच्छथ सत्तमाः ॥ कृष्णानुभावश्रवणे श्रद्दधानो महामनाः ॥ ३ ॥ संस्थां विज्ञाय संन्यस्य कर्म त्रैवर्गिकं च यत् ॥ वासुदेवे भगवति आत्मभावं दृढं गतः ॥ ४ ॥ राजोवाच ॥ समीचीनं वचो ब्रह्मन्सर्वज्ञस्य तवाऽनघ ॥ तमो विशीर्यते मह्यं हरेः कथयतः कथाम् ॥५॥ भूय एव विवित्सामि भगवानात्ममायया ॥ यथेदं सृजते विश्वं दुर्विभाव्यमधीश्वरैः ॥ ६ ॥ यथा गोपायति विभुर्यथा संयच्छते पुनः ॥ यांयां शक्तिमुपाश्रित्य पुरुशक्तिः परः पुमान् ॥ [ आत्मानं क्रीडयन्क्रीडन्करोति विकरोति च ] ॥७॥ नूनं भगवतो ब्रह्मन्हरेरद्भुतकर्मणः ॥ दुर्विभाव्यमिवाभाति कविभिश्चापि चेष्टितम् ॥८॥ यथा गुणांस्तु प्रकृतेर्युगपत्क्रमशोऽपिवा ॥ बिभर्ति भूरिशस्त्वेकः कुर्वन्कर्माणि जन्मभिः ॥ ९ ॥ विचिकित्सितमेतन्मे ब्रवीतु भगवान्यथा ॥ शाब्दे ब्रह्मणि निष्णातः परस्मिंश्च भवान्खलु ॥ १० ॥

नान्य इत्येवंभूताम् ॥ १ ॥ आत्मा देहः । पशवो गजादयः ॥ २ ॥ इममेवार्थं हरिलीलालक्षणम् ॥ ३ ॥ संस्थां मृत्युं विज्ञाय । त्रैवर्गिकं धर्मार्थकामप्रधानम् । संन्यस्य त्यक्त्वा आत्मभावं परप्रेम्णा भगवदात्मत्वं गतः प्राप्तः सन्पप्रच्छ ॥४॥ मह्यं मम तमोऽज्ञानं विशीर्यते नश्यति । तव कथयतः सतः अतः समीचीनम् ॥५॥ पुनश्च वेदितुमिच्छामि । इदं दुर्विभाव्यमवितर्क्यं विश्वं यथा सृजति ॥ ६ ॥ गोपायति पालयति । संयच्छते संहरते । पुरुशक्तिर्बहुशक्तिमान् । क्रीडन् यथा करोति आत्मानं ब्रह्मादिरूपिणं क्रीडयन् विकरोति विविधं करोति ॥ ७ ॥ ८ ॥ एकः पुरुषरूपेण युगपत् जन्मभिर्ब्रह्माद्यवतारैः क्रमशो वा यथा प्रकृतेर्गुणान् गृह्णाति ॥ ९ ॥ विचिकित्सितं संदि

यद्वा सतीमव्यभिचारिणीम् ॥ १ ॥ जहौ यः पूर्वमेवेति ज्ञेयम् । विमार्शितौ हेयतया पुरस्तात्' इत्युक्तेः । निरूढां दृढीभूताम् ॥ २ ॥ यन्मां पृच्छथेति । 'आयुर्हरति वै पुंसाम्' इत्यादिवाक्यैर्व्यंजितां कृष्णकथां ब्रूहीति यत्पृच्छथेममेवार्थं राजा शुकं पप्रच्छेत्यन्वयः । हे सत्तमा इति । शुद्धव्यवहारप्रष्टारः संतः सामान्यतो धर्मकथाप्रष्टारः सत्तराः श्रीकृष्णकथाप्रष्टृत्वाद्यूयं सत्तमा इति भावः ॥ ३ ॥ पूर्वं सिद्धमपि तदा दृष्टं प्राप्तस्तद्यार्थं चकारेत्यर्थः ॥ ४ ॥ हे ब्रह्मन्निति । साक्षाद्ब्रह्मस्वरूप एव त्वमसीति भावः ॥ ५ ॥ भूय एवेत्यत्र राज्ञोयमभिप्रायः । म्रियमाणस्य मम कृत्यानि श्रवणकीर्त्तनस्मरणान्येवोक्तानि तेष च विषयाः कृष्णलीलारूपगुणाद्यास्तत्र प्रथमं मायाशक्तिमतस्तस्य सृष्ट्यादिलीला जिज्ञास्यास्ततश्च चिच्छक्तिमतो गोवर्द्धनोद्धरणाद्या इति भूय एव पुनरपि विवित्सामि । इडभाव आर्षः ॥ ६ ॥ पुरवो बह्व्यश्चिन्मया जीवा अंतरंगा बहिरंगाः तटस्थाभिधानाः शक्तयो यस्य सः इति विश्वनाथः । क्रीडन्मायाशक्त्या सह दीव्यन्नात्मानं करोति महदहंकारादिरूपत्वेन सृजतीति सर्गप्रश्नः । तथा क्रीडयन्ब्रह्ममरीच्यादीन्देवयन्विकरोति आत्मानं देवतिर्यङ्नरादिरूपत्वेन सृजतीति विसर्गप्रश्नः ॥ ७ ॥ नन्विदं त्वं प्रायः सर्वं जानास्येव तत्किं पृच्छसीति तत्राह । नूनं निश्चितमेव भगवतश्चेष्टितमिदं सृष्ट्यादिचरितं कविभिश्चापि न्यायादिशास्त्रकृद्भिरपि दुर्विभाव्यमिव विभाति तैरपि परमाण्वादिद्वारा सृष्ट्यादिकथनाद्भवदभिप्रायाज्ञानाद्दुर्विभाव्यं दुर्ज्ञेयं ममाज्ञस्यात्र का कथेति भावः ॥ ८ ॥ यथैकः पुरुषरूपेण युगपत्प्रकृतेर्गुणान्बिभर्त्ति तत्रालिप्त एवेक्षणादिभिर्धारयति पालयति च । तथा जन्मभिर्ब्रह्ममरीच्यादिप्रादुर्भावैर्भूरिशो बहुरूपं क्रमशोपि वा बिभर्ति । कीदृशः कर्माणि कुर्वन् ॥ ९ ॥ ननु कविभिश्चापि दुर्विभाव्यमिदं चेदहं जानामीति तत्त्वं कथं जानासि तत्राह । यथा भगवान् कृष्णस्तद्भक्तो भवानपि तथेत्यर्थः। तत्रापि शाब्दे ब्रह्मणि वेदे परस्मिन्ब्रह्मणि कृष्णे चानुभवेन अपरे शास्त्रकर्त्तारस्तु श्रीकृष्णं नैवानुभवंतीति ते न जानन्ति 'किं विधत्ते किमाचष्टे'इत्यादिभगवदुक्तेर्भगवानेव वेदार्थं जानाति तत्कृपया तद्भक्ताश्च नान्य इति

सूत उवाच ॥ इत्युपामंत्रितो राज्ञा गुणानुकथने हरेः ॥ हृषीकेशमनुस्मृत्य प्रतिवक्तुं प्रचक्रमे ॥ ११ ॥ श्रीशुक उवाच ॥ नमः परस्मै पुरुषाय भूयसे सदुद्भवस्थाननिरोधलीलया ॥ गृहीतशक्तित्रितयाय देहिनामंतर्भवायानुपलक्ष्यवर्त्मने ॥१२॥ भूयो नमः सद्वृजिनच्छिदेऽसतामसंभवायाऽखिलसत्त्वमूर्तये ॥ पुंसां पुनः पारमहंस्य आश्रमे व्यवस्थितानामनुमृग्यदाशुषे ॥ १३ ॥ नमोनमस्तेऽस्त्वृषभाय सात्वतां विदूरकाष्ठाय मुहुः कुयोगिनाम् ॥ निरस्तसाम्यातिशयेन राधसा स्वधामानि ब्रह्मणि रंस्यते नमः ॥ १४ ॥

ग्धम् । शाब्दे ब्रह्मणि विचारेण निष्णातः परस्मिन्ननुभवेन ॥ १० ॥ उपामंत्रितः प्रार्थितः । प्रचक्रमे देवतागुरुनमस्कारादिरूपमुपक्रमं कृतवानित्यर्थः ॥ ११ ॥ तदेवाह त्रयोदशभिः परस्मै । सर्वोत्तमाय । तत्र हेतुः भूयसेऽपरिमितमहिम्ने । तद्दर्शयति । सतः प्रपंचस्य उद्भवादिषु निमित्तभूता या लीला तया गृहीतं ब्रह्मादिरूपेण रजआदिशक्तित्रितयं येन तस्मै । अंतर्भवायांतर्यामिणे अत एव सर्वांतरत्वादनुपलक्ष्यं वर्त्म यस्य ॥ १२ ॥ विचित्रफलदातृत्वमनुस्मरन्प्रणमति । भूयः पुनश्च नमः सतां धर्मवर्तिनां वृजिनच्छिदे दुःखहंत्रे । असतामधर्मशीलानामसंभवायानुद्भवहेतवे । अखिलसत्त्वमूर्तये तत्तद्देवतादिरूपेण तत्तत्फलदात्र इत्यर्थः । समग्रसत्त्वमूर्तये इति वा । पुनरिति पूर्वोक्तोभयवैलक्षण्यमाह । पारमहंस्ये प्रत्यङ्निष्ठारूपे आश्रमे व्यवस्थितानां पुंसामनुमृग्यमतन्निरसनेन पुनः पुनर्मृग्यं यदात्मतत्त्वं तस्य दाशुषे दात्रे । दाशृ दाने इति धातुः ॥ १३ ॥ सात्वतां भक्तानामृषभाय पालकाय । कुयोगिनां भक्तिहीनानां विदूरा काष्ठा दिगपि यस्य दुर्ज्ञेयायेत्यर्थः । तदेवं वैषम्यप्रतीतावपि निर्दोषत्वायाचिंत्यमैश्वर्यमाह । निरस्तं

भावः । इह चिच्छक्तिप्राधान्येन कृष्णरासाद्यवतारलीला इव मायाशक्तिप्राधान्येन पुरुषाद्यवतारलीला ब्रह्मांडनिर्माणाद्या अपि वैष्णवैः श्रव्या एव नात्र कटाक्षः कार्य इति श्रोतृवक्त्रोः परीक्षिच्छुकयोरभिप्रायो वेदितव्यः॥ १०॥ हृषीकेशमिति । सर्वेंद्रियप्रवर्तकमिति । मद्वाचि स एव स्थित्वा प्रतिवदत्वित्यभिप्रायेण प्रचक्रमे इत्यर्थः इति । देवतैव गुरुरिति तन्नतिरूपं मंगलम् 'गुरुर्ब्रह्मा गुरुर्विष्णुः' इत्याद्युक्तेः । यद्वा गुरुर्व्यासो देवता परमात्मा तन्नतिरूपं वा मंगलं चकारेति भावः ॥ ११॥ तदेवं मंगलमेव । तत्र सर्वोत्तमत्वे । तत् अपरिमितमहिमत्वम् । अत एवांतर्यामित्वादेव । अत्र विश्वनाथः—परस्मै पुरुषाय पुरुषोत्तमाय श्रीकृष्णाय नमः । 'यस्मात्क्षरमतीतोहम्' इत्यादि तदुक्तेः । पुरुषोत्तमत्वं तत्रैव नान्यत्रेति 'हरिर्यथैकः पुरुषोत्तमः स्मृतः' इति महाकव्युक्तेश्च । प्रथमैश्वर्यमाह—भूयसे पुरुषाद्यवतारैरपरिमितमहिम्ने । तत्र पुरुषावतारलीलामाह । देहिनां ब्रह्मादीनां समष्टिव्यष्टीनामंतर्भवाय अनुपलक्ष्यं योगिभिरपि दुर्ज्ञेयं वर्त्म भक्तियोगलक्षणं यस्य तस्मै ॥ १२ ॥ इत्यर्थ इति । तत्तद्देवताभक्तरूपेणार्चयित्वा तत्तद्देवतारूपेण फलदातापि स एव 'योयो यांयां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।' इत्यारभ्य 'लभते च ततः कामान्मयैव विहितान्हितान्' इत्यंतश्रीमुखोक्तेः । श्लेषेण तमग्रसत्त्वमूर्तये शुद्धसत्त्वमूर्तय इति । विश्वनाथः—कृपामाधुर्यमाह । सद्वृजिनच्छिदे रामकृष्णाद्यवतारैः स्वभक्तदुःखच्छिदे असतां पापिनामभक्तराक्षसासुरादीनामपि स्वकर्तृकवधेनासम्यग्भवदुःखनिवर्तकाय व्यवस्थितानां विशेषतोवस्थितानां भक्तिमिश्रज्ञानिनां शुद्धभक्तानां चानुमृग्यो ब्रह्मानंदः प्रेमानंदश्च तस्य दात्रे । संदर्भः । सतां वेदानुवर्तिनामसतां तद्बहिर्मुखानां दैत्यादीनामप्यसंभवाय मुक्तिदाय पुंसां पुनरिति । तत्रानुमृग्यं भक्तियोगैकसाध्यं स्वचरणारविंदमेव ज्ञेयम् । तथा परमहंसानामिति—कुंतीवाक्यात् । परमहंसमहामुनीनाममलात्मनां भक्तियोगविधानार्थमिति ; प्रथमे 'परमहंसमहामुनीनामन्वेषणीयचरणौ चलयन्सहश्रीः' इति तृतीये च निरूपितत्वात्॥ १३॥ इत्यर्थ इति । 'दुराराध्यमसाधुभिः' इत्युक्तेरयं भावः । विश्वनाथः ऐश्वर्यमाधुर्ययोः परिपूर्णत्वमाह । नमोनम इति । वीप्सया निरन्तरमेव नम इत्यर्थः

यत्कीर्तनं यत्स्मरणं यदीक्षणं यद्वंदनं यच्छ्रवणं यदर्हणम् ॥ लोकस्य सद्यो विधुनोति कल्मषं तस्मै सुभद्रश्रवसे नमोनमः ॥ १५ ॥ विचक्षणा यच्चरणोपसादनात्संगं व्युदस्योभयतोंऽतरात्मनः ॥ विंदंति हि ब्रह्मगतिं गतक्लमास्तस्मै सुभद्रश्रवसे नमोनमः ॥१६॥ तपस्विनो दानपरा यशस्विनो मनस्विनो मंत्रविदः सुमंगलाः ॥ क्षेमं न विंदंति विना यदर्पणं तस्मै सुभद्रश्रवसे नमोनमः ॥ १७ ॥ किरातहूणांध्रपुलिंदपुल्कसा आभीरकंका यवनाः खसादयः ॥ येऽन्ये च पापा यदुपाश्रयाश्रयाः शुध्यंति तस्मै प्रभविष्णवे नमः ॥ १८ ॥

साम्यमतिशयश्च यस्य यदपेक्षयान्यस्य साम्यमतिशयश्च नास्ति तेन राधसा ऐश्वर्येण स्वधामनि स्वस्वरूपे ब्रह्मणि रममाणाय ॥ १४ ॥ सर्वसाधनेभ्यो भक्तेः श्रैष्ठ्यमनुस्मरन्प्रणमति यत्कीर्तनमिति द्वाभ्याम् । अर्हणं पूजनम् । सुभद्रं मंगलं श्रवो यशो यस्य तस्मै ॥ १५ ॥ विचक्षणा विवेकिनो यस्य चरणयोरुपसादनादुपसत्तेर्भजनात् । अंतरात्मनो मनसः उभयत्रेह च परत्र च संगं व्युदस्य निरस्य गतक्लमाः प्रयासरहिताः ॥ १६ ॥ भक्तिशून्यानां सर्वसाधनवैफल्यं दर्शयन्नमति । तपस्विन इति । मनस्विनो योगिनः । सुमंगलाः सदाचाराः यस्मिंस्तपआद्यर्पणं विना सुभद्रश्रवस इत्यस्यावृत्तिर्यशःश्रवणादेः प्राधान्यज्ञापनाय ॥ १७ ॥ भक्तेः परमशुद्धिहेतुत्वं दर्शयन्नाह । किरातादयो ये पापजातयः अन्ये च ये कर्मतः पापरूपास्ते यदुपाश्रया भागवतास्तदाश्रयाः संतः शुद्ध्यंति । असंभावनाशंकां परिहरति । प्रभविष्णवे प्रभवनशीलायेति ॥ १८ ॥

ते तुभ्यमिति । युष्मत्प्रयोगेण साक्षात्कारात्स्वेष्टदेवत्वं ध्वनितम् । सात्वतां यादवाविशेषाणामृषभाय देवकीनंदनाय सात्वतां भक्तानां पालकायेत्यर्थस्तु पूर्वश्लोके व्यंजित एव । कुयोगिनां भक्तिहीनानां विदूरकाष्ठाय तेषां दूरे वा गुप्तो वा त्वं न च वर्तस इत्यर्थः।स्वधामनि मथुरामंडले रंस्यते रममाणाय रमणोचिजतनैः सहेत्यर्थतो गम्यम् । स्वधामनि कीदृशे ब्रह्मणि ब्रह्मस्वरूपे 'तासां मध्ये साक्षाद्ब्रह्मगोपालपुरी' इति गोपालतापनीयश्रुतेः । अत्र राधसेऽत्यैश्वर्यं रंस्यत इति माधुर्यम् । यद्वा । स्वधामनि वृंदावने राधसा राधया सह रंस्यते क्रीडते कीदृशे स्वधामनि ब्रह्मणि सर्वोत्कृष्टे 'लोकेषु पृथिवी धन्या तत्र वृंदावनं महत्' इत्युक्तेः । किं भूतेन राधसा निरस्तौ साम्यातिशयौ तौल्याधिक्ये यस्य तेन "न राधासदृशी काचिद्देवताभ्यधिका कुतः । अनेककोटिब्रह्मांडपतिर्यस्या वशे हरिः॥" इत्यादिपुराणात् । सांतोपि राधधातुनिष्पन्नो राधःशब्दो राधावाचकः समानार्थप्रत्ययनिष्पन्नत्वात् ।द्विरूपकोशे अवर्णांतासंतयोः 'मनश्च मनसा सह' इत्यादिप्रयोगदर्शनात् । संदर्भस्तु । अंतरंगप्रयोजनमाह—सात्वतां यादवानामृषभाय तैः सह नानाविहारार्थमवतीर्णाय तथापि कुयोगिनां तद्बहिर्मुखयोगनिष्ठानाम् । पुनश्च यथावदेव स्थितिमेव दर्शयति । ब्रह्मणि ब्रह्मस्वरूपे। स्वधामनि वैकुंठे । रंस्यते तत्पश्चाद्रममाणाय ॥ १४ ॥ यदीक्षणं यत्प्रतिमादेरवलोकनम् । एतेन तत्प्राप्तिप्रतिबंधकं कल्मषं तत्कीर्त्तनादिभिरेव नश्यतीत्युक्तम् ॥ १५ ॥ गतक्लमा इत्युक्तेरन्ये त्वभजंतः श्रममेव लभंते । "श्रेयःसृतिं भक्तिमुदस्य ते विभो" इत्याद्युक्तेः । ब्रह्मरूपा चासौ गतिस्ताम् गतिर्गम्यो लोको वा ॥१६॥ किं बहुना भक्तिं विना महात्मनोपि विफलसाधना विगीता एव भवंतीत्याह । तपस्विनो ज्ञानिनः दानपराः कर्मिणः यशस्विनः कर्मिविशेषा अश्वमेधादिकर्त्तारः मंत्रविदः आगमीयाः ॥ १७ ॥ शुध्यंति निष्पापा भवंति न तु वस्तुतस्तज्जातित्यागो भवति यत्तु वैष्णवे जातिबुद्धिरिति विष्णुधर्मोक्तिः सा हि तस्यादराधिक्यम तिरस्कार्यत्वं वक्ति अन्यथा नारदविदुरादौ विप्रक्षत्तरित्यादिसंबुद्धिश्रवणाद्व्यासमैत्रेयादीनामपि पातकित्वं स्यादिति । किरातायुत्पत्तिस्तु मन्वादिभ्योऽवसेया विस्तरभियात्र नोक्ता । यद्वा किरातादयो विजयध्वजेनोक्ता ग्राह्याः शबरात्पराशव्यां जाताः किराताः आंध्रकाः । वैदेहात्पुष्कसीजाताः हूणाः । वैश्याद्ब्राह्मणजातो वैदेहस्तत्पुत्राश्चान्ध्राः । अज्ञातविप्रादिभवा मधुपायिनः । ततः किरातीजाताः पुलिंदाः । निषादाच्छूद्राजातः पुल्कसः

स एष आत्माऽऽत्मवतामधीश्वरस्त्रयीमयो धर्ममयस्तपोमयः ॥ गतव्यलीकैरजशंकरादिभिर्वितर्क्यलिंगो भगवान्प्रसीदताम् ॥ १९ ॥
श्रियः पतिर्यज्ञपतिः प्रजापतिर्धियां पतिर्लोकपतिर्धरापतिः ॥ पतिर्गतिश्चांधकवृष्णिसात्वतां प्रसीदतां मे भगवान्सतां पतिः ॥ २० ॥
यदंघ्र्यनुध्यानसमाधिधौतया धियाऽनुपश्यंति हि तत्त्वमात्मनः ॥ वदंति चैतत्कवयो यथारुचं स मे मुकुंदो भगवान्प्रसीदताम् ॥ २१ ॥
प्रचोदिता येन पुरा सरस्वती वितन्वताऽजस्य सतीं स्मृतिं हृदि ॥ स्वलक्षणा प्रादुरभूत्किलाऽऽस्यतः स मे ऋषीणामृषभः प्रसीदताम् ॥ २२ ॥
भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पूरुषः ॥ भुंक्ते गुणान्षोडश षोडशात्मकः सोऽलंकृषीष्ट भगवान्वचांसि मे ॥ २३ ॥

सर्वोपास्यत्वमनुस्मरन्प्रार्थयते । स एष आत्मवतां धीराणामात्मा आत्मत्वेनोपास्य इत्यर्थः । त्रयीमयत्वादिविशेषणैस्तत्तन्मार्गेणोपास्यत्वं विवक्षितम् । गतव्यलीकैर्निष्कपटै र्भक्तैर्वितर्क्यमत्याश्चर्येण वीक्षणीयं लिंगं मूर्तिर्यस्य सः प्रसीदतु ॥ १९ ॥ सर्वपालकत्वमनुस्मरन्नाह । श्रिय इति । गतिश्च सर्वापत्सु रक्षकः ॥ २० ॥ ज्ञानप्रदत्वमनुस्म रन्नाह यदंघ्रीति द्वाभ्याम् । यस्यांघ्र्योरनुध्यानमेव समाधिस्तेन धौतया शोधितया धिया यथारुचं रुच्यनुसारेण सगुणनिर्गुणादिभेदैः । यद्वा रुक् प्रतिभा यथामतीत्यर्थः ॥ २१ ॥ किंच । पुरा कल्पादावजस्य हृदि सतीं सृष्टिविषयां स्मृतिं वितन्वता येन प्रचोदिता सती सरस्वती वेदरूपा वाक् तस्य मुखतः किल प्रादुर्भूता । स्वानि लक्ष णानि शिक्षायुक्तानि यस्याः सा । ऋषीणां ज्ञानप्रदानामृषभः श्रेष्ठः ॥ २२ ॥ इदानीं स्ववाचं श्रोतृजनाह्लादिनीं शृंगारकरुणादिशोभां प्रार्थयते । भूतैरिति । स मे वचांसि

ब्राह्मणाद्वैश्याजातोंबष्ठः । ब्राह्मणादंबष्ठ्यां जाता आभीराः । कंका अपि नीचजातय एव यवनान्नृपाद्वैश्यां जाता यवनाः श्मश्रुलाः । एवं खसादयः । आदिना कुरुविंदडोंबादयः । इति तीर्थः । असंभावना शंका कथं ते शुध्यंति विना तपश्चर्यादिनेत्येवं रूपा शंका ताम् प्रभविष्णवे कर्तुमकर्तुमन्यथा कर्तुं समर्थायेत्यर्थः ॥ १८ ॥ इत्यर्थ इति । आत्मैव भगवान्हरिर्न तु भिन्न इत्येवमुपास्य इति भावः । निष्कपटैर्मोक्षपर्यंतकामनाशून्यैः परमभक्तैः ॥ १९ ॥ तदेवं निजोपास्यविशेषं रहस्यत्वेनाभिव्यज्य परमप्रेमावेशेनैव व्यंजयन्नाह । श्रियः सर्वसंपदाधिष्ठात्र्याः पतिः स्वामी । अतो यज्ञानां सर्वश्रेयःसाधनानां च पतिः फलदाताऽतः प्रजानां सर्वासा मेव पतिरीश्वरः । यतो धियां पतिस्तासामंतर्यामी च ततस्ततश्च तासां ये लोका भोग्यभुवनानि तेषामपि पतिर्भोक्ता च य एव च धरापतिः कृपयावतीर्य धरापतित्वं लीलां च व्यजितवानित्यर्थः । कोसावित्यपेक्षा यामाह । पतिः पालको गतिर्नित्याश्रयश्च तत्र प्रमाणमाह । सतां तदनुभविनां पतिराश्रय इति । वस्तुतस्तु लोकपतिरित्युक्तेरेव सर्वपतित्वमायाति सर्वस्य श्र्यादेर्लोकांतःपातित्वात्तदपि पार्थक्येन पतित्ववर्णनं प्रेमावेशा देव हेत्वंतरानुपलब्धेरिति ध्येयम् ॥ २० ॥ स कृष्ण एव मे ज्ञानप्रदो भवत्विति प्रार्थनां व्यंजयति । यदंघ्रीति । चस्त्वर्थे: कवयः स्वपांडित्यबलेनैव यथारुचं स्वरुच्यनुरोधेनैवैतत्परमात्मनस्तत्त्वं स्वरूपं साकारं निराकारं वा जीवात्मस्वरूपमणुप्रमाणं सर्वगतं वा यद्वैतद्विश्वं मिथ्यैव सत्यमेव नित्यमेवेत्येवं वदंति युक्त्या प्रमाणयंति । न तु तेषां धीर्धौताऽत एवात्मनस्तत्त्वं न पश्यंतीत्यर्थः । अत्र पक्षे तु स्थाने नेति पाठ्यम् । यथारुचि कथनं हि प्रमाणं न भवतीति चेदाह—स्वामी यद्वेति । इत्यर्थ इति । अनंतमहिमत्वेन स्वमत्यनुसारेणैव वदंतीति भावः ॥ २१ ॥ अथ तद्वर्णनसामग्री मम स एव यथा ब्रह्मणो मुखाद्वेदं प्रवर्त्तयामास तथा मन्मुखात्स्वलीलाकथां स एव प्रवर्त्तयत्वित्यभिप्रेत्याह—किं चेति । स्वान्यसाधारणानि शिक्षायुक्तानि पाणिन्यादिप्रणीतशिक्षादिग्रंथप्रोक्तान्युदात्तादिस्वरस्थानाद्युपेतानि स्वरस्थानप्रयत्नादि युक्तेति यावत् । यद्वा स्वं श्रीकृष्णं लक्षयत्युपास्यत्वेन दर्शयति या सा स्वलक्षणा । तदुक्तं भगवतैव—“मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः” इति ॥ २२ ॥ अत्रांतर्यामित्वे पुरुषरूमाख्यां पुरुषपदनिरुक्तिम् ।

नमस्तस्मै भगवते व्यासायामिततेजसे ॥ पपुर्ज्ञानमयं सौम्या यन्मुखांबुरुहासवम् ॥ २४ ॥ एतदेवात्मभू राजन्नारदाय विपृच्छते ॥ वेदगर्भोऽभ्यधात्साक्षाद्यदाह हरिरात्मनः ॥ २५ ॥ इति श्रीभागवते महापुराणे द्वितीयस्कंधे वक्तृश्रद्धानिरूपणं नाम चतुर्थोऽध्यायः ॥ ४ ॥ छ ॥ नारद उवाच ॥ देवदेव नमस्तेऽस्तु भूतभावन पूर्वज ॥ तद्विजानीहि यज्ज्ञानमात्मतत्त्वनिदर्शनम् ॥ १ ॥ यद्रूपं यदधिष्ठानं यतः सृष्टमिदं प्रभो ॥ यत्संस्थं यत्परं यच्च तत्तत्त्वं वद तत्त्वतः ॥ २ ॥

अलंकर्षीष्टालंकरोतु । अन्यस्य वचसामन्येनालंकारासंभवमाशंक्य तस्यांतर्यामितामाविष्करोति । यो महद्भिर्भूतैरिमाः पुरः शरीराणि सृष्ट्वाऽमुषु पूर्ष्वंतर्यामितया शेते वसति अत्र पुरुषसमाख्यां प्रमाणयति यद्यस्मात्पूरुष इति । अत एव य एकादशेंद्रियपंचभूतरूपान्षोडशगुणान्कला भुंक्ते प्रकाशयति पालयतीति वा । तदा त्वात्मनेपदमार्षम् । अत्र हेतुः । यतः षोडशानामात्मा चेतयिता । स्वार्थे कः नत्वत्र जीवत्वमुच्यते प्रार्थनाविरोधात् ॥ २३ ॥ श्रीव्यासं नमस्करोति । नम इति । सौम्याः वैशंपायनादयो भक्ताः यस्य मुखांबुरुहे आसवो मकरंदस्तम् ॥ २४ ॥ इदानीं प्रश्नोत्तरतया ब्रह्मनारदसंवादं प्रस्तौति । एतदिति । उत्पत्तिसमय एव वेदा गर्भे यस्य । साक्षाद्धारियदाह ॥ २५ ॥ इति श्रीभा० म० द्वितीयस्कंधे टीकायां चतुर्थोऽध्यायः ॥ ४ ॥ छ ॥ पंचमे नारदेनाथ पृष्टः सृष्टयादि वक्त्यजः ॥ हरेर्लीलां विराट्सृष्टिं कालकर्मादिशक्तिभिः ॥ १ ॥ नारदाय विपृच्छते वेदगर्भोऽभ्यधादित्युक्तं तत्र नारदप्रश्नमाह । देवदेवेति । हे भूतभावन अत एव सर्वेषां पूर्वज अनादे । ज्ञायतेऽनेनेति ज्ञानं तत्साधनं यत्तद्विजानीहि विशेषेण ज्ञापयेत्यर्थः । कथंभूतम् आत्मतत्त्वं नितरां दृश्यते येन तत् ॥ १ ॥ उपलक्षणभूतं विश्वमेवात्मज्ञानसाधनमतस्तद्विशेषं पृच्छति यद्रूपं येन रूप्यते प्रकाश्यते । यदधिष्ठानं

अत एव पुरुषत्वादेव । पूरुष इह दीर्घत्वमौणादिकत्वात् । तदा तु पालनार्थे "भुजोऽनवने" इति सूत्रात् । अत्र षोडशकलाप्रकाशकत्वे अत्र श्लेषेण मद्वचसामपि गुणानास्वादयन्प्रसीदत्विति । तेन शरीराणि निरात्मकानि वस्त्रालंकारादियुक्तान्यपि सद्भिरस्पृश्यानि यथा तथा मद्वचांसि तद्विनाभूतानि मा भवंत्विति भावः ॥ २३ ॥ ज्ञानमयं ज्ञायंते भक्तितत्त्वमनेनेति ज्ञानं भक्तियोगस्तत्प्रधानं यत्र तज्ज्ञानमयं भागवतशास्त्रमित्यर्थः ॥ २४ ॥ यज्ज्ञानमयं पुराणम् । हरिः श्रीनारायणः । आत्मन इति द्वितीयार्थे षष्ठी आत्मानं स्वं ब्रह्माणं प्रति चतुःश्लोकीरूपेणाह एतदेव वेदगर्भो ब्रह्मा आत्मनः परमात्मनः सकाशाद्भवतीति तथाभूतः पृच्छते नारदायाभ्यधादभ्यभाषत । हे राजन्निति । वैराग्येण दीप्यमानस्त्वमेवास्य श्रवणाधिकारीति तुभ्यमहं वर्णयामीति भावः ॥२५॥ इति श्रीभागवतभावार्थदीपिकाप्रकाशे द्वितीयस्कन्धे चतुर्थोऽध्यायः ॥४॥ सृष्टयादिरूपां हरेर्लीलां कालकर्मादिशक्तिभिर्विराट्सृष्टिञ्च प्रथमादिना स्थित्यादिग्रहः द्वितीयादिना स्वभावादिग्रहः ॥ (१) ॥ हे देवानामिंद्रादीनामपि देवः प्रकाशकस्त्वमसीति भावः । अतस्ते नमोस्तु भूतानि स्थावरजंगमानि भावयति सृजतीति हे तथाभूत अत एव भूतोत्पादकत्वादेव । हे पूर्वजेति । तत्साधनं ज्ञानसाधनम् । इत्यर्थ इति । धातूनामनेकार्थत्वाज्ज्ञानातेर्ज्ञापनार्थतापीति भावः ॥ १ ॥ यतो विश्वमेवात्मज्ञानसाधनमतो हेतोस्तद्विशेषं विश्वस्यैव विशेषं भेदं यद्रूपं यल्लक्षणं यत इति तृतीयार्थे तसिः । इत्यर्थ इति । स्वतो यत्स्वरूपं सतः कारणाद्वा यत्स्वरूपं यद्वेदं स्वत एव सत्त्वप्रतीतेः कारणतो वा कारणसत्तयावत्सदस्तीति भावः । तस्यास्य विश्वस्य तत्त्वतः परमार्थतः प्रभो

सर्वं ह्येतद्भवान्वेद भूतभव्यभवत्प्रभुः ॥ करामलकवद्विश्वं विज्ञानावसितं तव ॥ ३ ॥ यद्विज्ञानो यदाधारो यत्परस्त्वं यदात्मकः ॥ एकः सृजसि भूतानि भूतैरेवात्ममायया ॥ ४ ॥ आत्मन्भावयसे तानि न पराभावयन्स्वयम् ॥ आत्मशक्तिमवष्टभ्य ऊर्णनाभिरिवाक्लमः ॥ ५ ॥ नाहं वेद परं ह्यस्मिन्नापरं न समं विभो ॥ नामरूपगुणैर्भाव्यं सदसत्किंचिदन्यतः ॥ ६ ॥ स भवानचरद्घोरं यत्तपः सुसमाहितः ॥ तेन खेदयसे नस्त्वं पराशंकां प्रयच्छसि ॥ ७ ॥ एतन्मे पृच्छतः सर्वं सर्वज्ञ सकलेश्वर ॥ विजानीहि यथैवेदमहं बुध्येऽनुशासितः ॥ ८ ॥

यदाश्रयम् । यतो येन सृष्टं यत्संस्थं यस्मिन् लीयते यत्परं यदधीनं यच्चेति यदात्मकं स्वतः सत्कारणतो वेत्यर्थः । तस्य तत्त्वं याथार्थ्यं तत्त्वतो वद ॥ २ ॥ न जानामीति नच वक्तव्यमित्याह । सर्वमिति । भूतं जातं भव्यं जनिष्यमाणं भवत् जायमानं तेषा प्रभुर्यतोऽतोविशिष्टेन ज्ञानेनावसितं निश्चितम् ॥ ३ ॥ आस्तामिदं आदौ तावत्त्वामेव कथयेत्याह । यतो यस्य विज्ञानम् । कस्तव विज्ञानद इत्यर्थः । यदाधारः कस्तवाश्रयः यत्परो यदधीनः यदात्मको यत्स्वरूपः । मम तु त्वमेव स्वतंत्रः परमेश्वर इति बुद्धिः।तव तपश्चरणेन तु परशंकया पृच्छामीत्याह सार्धैश्चतुर्भिः । एकोऽसहायः ॥ ४ ॥ आत्मनि भावयसे पालयसि स्वयमेव पराभवमप्रापयन्नक्लमः श्रमरहितः यथोर्णनाभिरात्मन एव शक्तिमवष्टभ्य सृजति तद्वत् ॥ ५ ॥ तस्मादहं त्वस्मिन्विश्वस्मिन्परमुत्तममपरमधमं समं मध्यमं च तत्रापि नाम मनुष्यादि रूपं द्विपदत्वादि गुणः शुक्लत्वादि तैर्भाव्यं साध्यं तत्रापि सदसत्स्थूलं सूक्ष्मं च किंचिदप्यन्यतो न वेद किंतु त्वत्त एव सर्वं भवतीति मन्ये ॥ ६ ॥ स तथाविधोऽपि भवांस्तपोऽचरदिति यत्तेन नोऽस्मान्खेदयसे मोहयसि यतः पराशंकाम् ईश्वरान्तराशंकाम् प्रयच्छसि । त्वत्तपो दृष्ट्वा त्वदपेक्षयाऽन्यो महानस्तीति शंका भवतीत्यर्थः ॥ ७ ॥ यथैवाहं त्वयानुशासितः शिक्षितः सन्बुद्ध्ये बुद्ध्येयं

इति त्वं मत्संदेहापाकरणसमर्थोसीति भावः ॥ २ ॥ "हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्" इति श्रुतौ भूतपदं भवद्भविष्ययोरप्युपलक्षणमित्यभिप्रायेणाह । भूतभव्येति । करस्थितामलकफलबाह्याभ्यंतरावयवज्ञानवत्सर्वं भवान् वेदेति । नन्वामलकस्य स्थूलांतरावयवप्रतीतावपि सूक्ष्मतरावयवाप्रतीतेर्दृष्टांते वैषम्यमिति चेत्तत्र श्लेषेणाह । अमलं निर्मलं च तत्कं जलं चेत्यमलकं करेऽमलकं करामलकं तद्वत् । यथा करस्थनिर्मलजलेऽतिसूक्ष्मरेखादेर्ज्ञानं भवति तथातिसूक्ष्ममपि वस्तु विश्वस्मिंस्तवाज्ञातं नास्तीति भावः ॥ ३ ॥ इदं विश्ववृत्तमास्तां तिष्ठतु आत्मानं स्वमेव त्वं ब्रूहीति । इत्यर्थ इति । आर्थिकोयमर्थ इति भावः । एव मग्रेऽपि ॥ ४ ॥ आत्मनि भावयसे न पराभावयन्निति च स्ववैभवाधिक्येपि सतीति शेषः । सूर्यादौ विद्यमाने दीपादेः पराभवदर्शनात् । अत उपादानकारणत्वमेव भवत आयाति सूर्यादौ विद्यमाने रश्म्यादेस्तददर्शनादिति भाव इति संदर्भः । भावयसे पालयासि तानि न पराभावयन्नन्यतः पराभवमप्रापयन् ॥ ५ ॥ यस्मात्त्वमेव सर्वेश्वरस्तस्माद्धेतोः तत्रापि उत्तमाधमादिरूपत्वेपि हे विभो इति अहो सर्वेश्वरो भूत्वाऽयमपि कंचन ध्यायतीति तव विभुत्वेपि संदेहोस्तीति भावः ॥ ६ ॥ तेन तपश्चारणेन ॥ ७ ॥ सर्वज्ञेति । सर्वज्ञत्वा

ब्रह्मोवाच ॥ सम्यक्कारुणिकस्येदं वत्स ते विचिकित्सितम् ॥ यदहं चोदितो धर्मे भगवद्वीर्यदर्शने ॥९॥ नानृतं तव तच्चापि यथा मां प्रब्रवीषि भोः ॥ अविज्ञाय परं मत्त एतावत्त्वं यतो हि मे ॥ १० ॥ येन स्वरोचिषा विश्वं रोचितं रोचयाम्यहम् ॥ यथाऽर्कोऽग्निर्यथा सोमो यथर्क्षग्रहतारकाः॥११॥ तस्मै नमो भगवते वासुदेवाय धीमहि ॥ यन्मायया दुर्जयया मां ब्रुवंति जगद्गुरुम् ॥ १२ ॥ विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया ॥ विमोहिता विकत्थंते ममाहमिति दुर्धियः ॥ १३ ॥

तथा विजानीहि विशेषेण ज्ञापय ॥ ८ ॥ प्रश्नमभिनंदति । वत्स हे पुत्र तवेदं विचिकित्सितं संदेहः तत्पूर्वकः प्रश्नोऽयं सम्यगित्यर्थः । यतः कारुणिकस्य तवायं प्रश्नः । अत्र हेतुः। यद्यतो भगवद्वीर्यप्रकाशने धर्मे प्रवर्तितोऽस्मि अतस्त्वं जिज्ञासुरपि मयि कृपामेव कृतवानित्यर्थः ॥ ९ ॥ ननु त्वमेव भगवानित्युक्तं त्वया 'एकः सृजसि भूतानि' इत्यादिना । सत्यम् । यथा मामीश्वरत्वेन प्रभाषसे तदपि तव भाषणं नात्यंतमनृतं यतः कारणादेतावत्प्रभावस्य भाव एतावत्त्वं मेऽस्ति किंतु मत्तः परमीश्वरमविज्ञाय ब्रूषे अतः सादृश्यात्तवेयं भ्रांतिर्न तु बुद्धिपूर्वमनृतामित्यर्थः । यत ईश्वरान्ममैतावत्त्वं तमविज्ञायेति वान्वयः ॥ १० ॥ तर्हि कोऽसावीश्वर इत्यपेक्षायां भक्त्या नमस्कुर्वन्नेव तं कथयति त्रिभिः । येन स्वप्रकाशेन रोचितं प्रकाशितमेव प्रकाशयामि सृष्ट्याभिव्यक्तं करोमि । यथार्कादयश्चैतन्यप्रकाश्यमेव प्रकाशयंति । तथा च श्रुतिः । " न तत्र सूर्यो भाति न चंद्रतारकं नेमा विद्युतो भांति कुतोऽयमग्निः ॥ तमेव भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ " इति ॥ ११ ॥ तस्मै नमो धीमहि चिंतयेम मनसैव नमस्कुर्महे इत्यर्थः । यस्य मायया विमोहिताः संतो युष्मदादयो मां जगद्गुरुं जगत्कारणं वदंति तस्मै ॥ १२ ॥ यन्माययेति मायासंबंधोक्तेस्तस्य दुर्जयत्वोक्तेश्च तस्यापि किमस्ति संसारो

न्मम बुद्धिमपि जानास्येवेति भावः । सकलेश्वरेति । सकलजगतस्त्वमेव बुद्धिदाता सकलेश्वरत्वान्मम तु पुत्रस्य तद्दाने का वार्त्तेति भावः ॥ ८ ॥ हे वत्सेतिस्नेहाधिक्यद्योतनाय । तत्पूर्वकः संदेहपूर्वकः । इत्यर्थ इति । "प्रष्टव्या गुरवो नित्यं ज्ञातमर्थमपि स्वयम्" इत्युक्तेर्निःसंदेहार्थस्यापि प्रश्नविधेः संदिग्धस्य प्रश्नस्तु सर्वथैव शोभनो भवतीति भावः । कुतः सम्यगिति । तत्राह—यत इति । अत्र कारुणिकत्वे यतोहं परमधर्मे प्रवर्त्तितोस्मि अतो हेतोः इत्यर्थः इति । "वासुदेवकथाप्रश्नः पुरुषांस्त्रीन्पुनाति हि । वक्तारं पृच्छकं श्रोतॄंस्तत्पादसलिलं यथा ॥" इति श्रीदशमोक्तन्यायेन प्रश्नोत्तरदानेनाऽहमपि परमपावनो भविष्यामीति भावः । भगवद्वीर्यञ्च विश्वसृष्ट्यादिमयं तस्य दर्शने ॥९॥ अत्राशंकते । नन्विति । भोः पुत्र । इत्यर्थ इति । बुद्धिपूर्वकानृतसंभाषण एव दोषो न त्वबुद्धिपूर्वकेपि तस्य सत्यप्रायत्वादिति भावः । इत्यर्थ इति । एतावत्त्वमीश्वरोयं साक्षादिति भ्रांतिजनकवैभवं स्यात्तमज्ञात्वैवैतत्कथनोपपत्तेरिति भावः ॥ १० ॥ भगवानेव स्वप्रकाशस्तदितरत्सर्वं तत्प्रकाशितमेवेत्यत्र प्रमाणमाह--तथा चेति । तत्रात्मस्वरूपे तमात्मानं भ्रांतं स्वतः प्रकाशमानमनुपश्चात्सर्वं सूर्यादि विभातीति श्रुतिपदार्थः । ऋक्षाण्यश्विन्यादीनि । ग्रहा भौमादयः । तारका ध्रुवागस्त्याद्याः ॥११॥ ननु जगद्गुरुर्ब्रह्मा विश्वं सृजतीति सर्वत्र ख्यातिस्तवास्ति तत्र स विस्मयः । सोत्प्रासमाह । तस्मा इति । यद्वा बुभूषुणा दुर्मतश्रवणापराधो भगवन्नमनेन परिहर्त्तव्य इत्यभिप्रेत्य वा भगवन्तं नमति—नम इति । तस्मै नमो वयं तं धीमहीति योज्यम् । अनेन पद्येन "ओं नमो भगवते वासुदेवाय नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णुः प्रचोदयात् " इति द्वादशाक्षरी चतुर्विंशत्यक्षरी चेति द्वे विद्ये हिरण्यगर्भेण नित्यं सेव्ये इति दर्शितम् ॥ १२॥ अत्र विश्वनाथः--जगद्गुरुर्विश्वस्रष्टा त्वं भवस्येवेति तुभ्यमादरदायिनः

द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ॥ वासुदेवात्परो ब्रह्मन्न चान्योऽर्थोऽस्ति तत्त्वतः ॥ १४ ॥ नारायणपरा वेदा देवा नारायणांगजाः ॥
नारायणपरा लोका नारायणपरा मखाः ॥ १५ ॥ नारायणपरो योगो नारायणपरं तपः ॥ नारायणपरं ज्ञानं नारायणपरा गतिः ॥ १६ ॥
तस्यापि द्रष्टुरीशस्य कूटस्थस्याखिलात्मनः ॥ सृज्यं सृजामि सृष्टोऽहमीक्षयैवाभिचोदितः ॥ १७ ॥ सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः ॥
स्थितिसर्गनिरोधेषु गृहीता मायया विभोः ॥ १८ ॥

नैवेत्याह । मत्कपटमसौ जानातीति यस्य दृष्टिपथे स्थातुं विलज्जमानयैव तस्मिन्स्वकार्यमकुर्वत्याऽमुया मायया विमोहिता अस्मदादयो दुर्धियोऽविद्याऽऽवृतज्ञाना एव केवलं विकत्थंते श्लाघंते । अनेन यद्रूपमित्यस्य प्रश्नस्योत्तरमुक्तं भवति ॥ १३ ॥ तदेवं स्वस्मादन्यं परमेश्वरं निरूप्येदानीं यदधिष्ठानमित्यादिनवप्रश्नानां स एवाधिष्ठानादिकं सर्वमित्युत्तरं वक्तुं तद्व्यतिरेकेणान्यस्यासत्त्वमाह । द्रव्यमिति । द्रव्यं महाभूतान्युपादानरूपाणि कर्म जन्मनिमित्तं कालस्तत्क्षोभकः स्वभावस्तत्परिणामहेतुः जीवो भोक्ता वासुदेवात्परोऽधिकोऽन्योऽर्थो नास्ति कारणाव्यतिरेकात्कार्यस्य ॥१४॥ तत्प्रपंचयति द्वाभ्याम् । नारायणः परः कारणं येषां ते । नारायणः परः तात्पर्यविषयो येषामिति वा । अनेनैव शास्त्रयोनित्वप्रतिपादनेनेश्वरे प्रमाणं सर्वज्ञत्वादिकं चोक्तम् । देवाश्च तदंगाज्जाता अतो न तद्व्यतिरिक्ताः । लोकाः स्वर्गादयस्तदानंदांशाः मखास्तत्साधनभूताः ॥१५॥ योगः प्राणायामादिः तपस्तत्साध्यं चित्तैकाग्र्यं ज्ञानं तत्साध्यं गतिस्तत्फलम् । अनेनैव सर्वं यदधीनमित्युक्तम् ॥१६॥ तर्हि त्वं किं करोषीत्यपेक्षायामाह । तस्य सृज्यमपि तेन सृष्टोहं सृजामि ईक्षया कटाक्षेण तत्र हेतवो द्रष्टुरित्यादयः ॥ १७ ॥ ननु कुतोऽयं जीवेश्वरविभागो यतस्त्वं प्रेर्यः स च प्रेरकः स्यादित्यपेक्षायां जीवेश्वरवि

संतः किं मायामोहिताः सत्यं भगवत्संबंधं विना ये आदरदायिनो ये च तेभ्य आदरग्राहिणश्च ते उभयेपि बहिर्दर्शिनो भगवतः पृष्ठदेशस्थया मायया मोह्यंत एवेत्याह–विलज्जेति । अत्र तद्विमुखतैव तत्पृष्ठदेशो ज्ञेयः । तद्वैमुख्ये सत्येव तस्याः प्रभावो न सांमुख्य इति अनेन प्रबंधेन भगवतैवेदं प्रकाश्यत इत्युत्तरमुक्तम् ॥ १३ ॥ अनेन कारणस्यैव कार्याधिष्ठानत्वात्सर्वस्य भगवानेवाधिष्ठानमित्युक्तम् ॥१४॥ तत्कारणानन्यत्वम् । "तस्यैवानंदस्य सर्वे मात्रामुपजीवंति" इति श्रुतेः । स्वर्गादिलोकानंदस्यापि भगवदानंदांशत्वमेव ॥ १५ ॥ आदिना यमनियमादिसप्तांगग्रहः "चित्तैकाग्र्यं परंतपः" इति स्मृतेः । तत्साध्यं चित्तैकाग्र्यसाध्यम् तत्फलं ज्ञानफलम् ब्रह्मापि तत्परमतत्सामान्याकारप्रकाशत्वेन तदधीनाविर्भावत्वात् । तदुक्तं श्रीमत्स्यदेवेन सत्यव्रतं प्रति । "मदीयं महिमानं च परं ब्रह्मेति शब्दितम् ॥ वेत्स्यस्यनुगृहीतं मे संप्रश्नं विवृतं हृदि" इति । अनेनैव पद्यद्वयेन सर्वं वेदादिकं तदधीनमेवेत्युक्तमेवकारेण तदधिष्ठानत्वमप्युक्तम् ॥१६॥ तर्हीत्याक्षिपति–किं स्वेच्छया नहिनहि ईक्षया तस्याज्ञयैवेत्यर्थः।द्रष्टुरिति।मम तस्य साक्षित्वे ईश्वरत्वे सर्वांतर्यामित्वे कूटस्थत्वे सत्येव नान्यथेति स्वस्य जीवत्वं तस्य चेश्वरत्वं व्यंजितम् । तथा च श्रुतयः । "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतांतरात्मा ॥ सर्वाध्यक्षः सर्वभूताधिवासः साक्षी चेताः केवलो निर्गुणश्च" इति । "एष भूताधिपतिरेष लोकेश्वरो लोकपालः"इति । ब्रह्मादिपिपीलिकापर्यंतसर्वप्राणिबुद्धिष्ववशिष्टतयोपलभ्यमानः सर्वप्राणिबुद्धिस्थो यदा तदा कूटस्थ इत्युच्यते इति च॥१७॥ अत्राक्षिपति नन्विति–निर्गुणस्य सत्त्वादिगुणास्पृष्टस्यापि त्रयो गुणा भवन्ति केन प्रकारेणेत्यपेक्षायामाह । विभोर्मायया स्थित्याद्यर्थं गृहीता इति तच्छक्तिगुणत्वेन तद्गुणत्वमित्यर्थः । तत्र मायाया नित्यमेव तद्गुणरूपत्वेपि गृहीता इतिं प्रयोगो नित्यनरविग्रहत्वेपि कृष्णस्य "तस्येच्छयात्तवपुषः' इतिवत् ।

कार्यकारणकर्तृत्वे द्रव्यज्ञानक्रियाश्रयाः ॥ बध्नंति नित्यदा मुक्तं मायिनं पुरुषं गुणाः ॥ १९ ॥ स एष भगवाँल्लिंगैस्त्रिभिरेभिरधोक्षजः ॥ स्वल
क्षितगतिर्ब्रह्मन्सर्वेषां मम चेश्वरः ॥ २० ॥ कालं कर्म स्वभावं च मायेशो मायया स्वया ॥ आत्मन्यदृच्छया प्राप्तं विबुभूषुरुपाददे ॥ २१ ॥
कालाद्गुणव्यतिकरः परिणामः स्वभावतः ॥ कर्मणो जन्म महतः पुरुषाधिष्ठितादभूत् ॥ २२ ॥ महतस्तु विकुर्वाणाद्रजःसत्त्वोपबृंहितात् ॥ तमः
प्रधानस्त्वभवद्द्रव्यज्ञानक्रियात्मकः ॥ २३ ॥ सोऽहंकार इति प्रोक्तो विकुर्वन्समभूत्त्रिधा ॥ वैकारिकस्तैजसश्च तामसश्चेति यद्भिदा ॥ द्रव्यशक्तिः
क्रियाशक्तिर्ज्ञानशक्तिरिति प्रभो ॥ २४ ॥

भागहेतुमाह त्रिभिः । सत्त्वमिति । निर्गुणस्यापीश्वरस्यैते त्रयो गुणा बध्नंतीत्युत्तरेणान्वयः । कथंभूताः । तेनैव स्वातंत्र्येण स्थित्याद्यर्थं मायया गृहीताः ॥ १८ ॥ वस्तुतः
सर्वदा मुक्तमपि मायिनं मायाविषयं पुरुषं जीवं बध्नंति । क्व । कार्यमधिभूतं कारणमध्यात्मं कर्ताधिदैवतं तेषां भावस्तत्त्वं तस्मिन् । द्रव्यं महाभूतानि ज्ञानशब्देन देवताः
क्रिया इंद्रियाणि तदाश्रयास्तेषां कारणभूतास्तत्तदभिमानेन बध्नंति ॥ १९ ॥ अतः स एव वश्यमाय एभिर्गुणैर्लिंगैर्जीवानामावरकैरुपाधिभिः सुष्ठुलक्षिता गतिस्तत्त्वं यस्य
सः स्वैर्भक्तैरेव लक्षिता गतिस्तत्त्वं यस्येति वा ॥ २० ॥ तस्य सृष्टिप्रकारमाह । कालमिति । कालं क्षोभकं सृष्टिकाल इति व्यवहारहेतुम् । कर्म जीवादृष्टम् । स्वभावं तत्प
रिणामहेतुम् । आत्मन्नात्मनि यदृच्छया स्वैरितया प्राप्तम् । विबुभूषुर्विविधं भवितुमिच्छन् ॥ २१ ॥ गुणानां व्यतिकरः क्षोभः साम्यत्यागः स्वभावतः परिणामो रूपांतरा
पत्तिः महतो महत्तत्त्वस्य पुरुष ईश्वरस्तेनाधिष्ठितत्वं त्रयाणां विशेषणम् ॥ २२ ॥ महत्तत्त्वाद्विकुर्वाणाद्विक्रियमाणात् । तस्य च क्रियाज्ञानशक्तित्वात्त्रिगुणत्वेऽपि रजः
सत्त्वाभ्यामुपबृंहितत्वम् अहंकारस्य त्वावरकत्वात्तमःप्रधानत्वम् । अत एवाहंकारकार्येषु तामसमाकाशादिकं बहु राजसं सात्त्विकं चाल्पम् एवं तदुपाधिकेषु जीवेष्वपि तथैव
तामसयोन्याधिक्यम् । द्रव्यज्ञानक्रियात्मको महाभूताधिदैवतेन्द्रियात्मकः॥२३॥स च विकुर्वन्रूपांतरं गच्छन् । त्रैविध्यमेवाह । वैकारिकः सात्त्विकस्तैजसो राजसः यद्भिदा

प्राकृतलोकोक्त्यनुकारेण ज्ञेयः ॥ १८ ॥ नित्यमुक्तं बध्नंतीति विरुद्धमुक्तं तत्राह—मायिनमिति । मायात्र मायाकृतो मोह उच्यते स चानादित एवेशविमुखस्य तस्य मायापारवश्यादेव तेन गुणावेश एव बंधः साक्षाद्बं
धाभावान्नित्यमुक्तत्वमपि युज्यत इति भावः । चित्सुखस्तु—द्रव्यं स्थूलं कार्यं ज्ञानमंतःकरणं प्रमातृक्रिया इंद्रियाणि तदाश्रयाः संतो देहाध्यासेन कार्यत्वे इंद्रियाध्यासेन कारणत्वेंतःकरणाध्यासेन कर्तृत्वे निबध्नंति
निर्विकारस्यैव चितो मायाश्रयत्वेनेश्वरत्वं तथा तद्विषयत्वेनाध्यासाज्जीवत्वमिति भावः ॥ १९॥ एभिर्लिंगैः करणैः स्वैर्ज्ञानिभक्तैः कर्तृभिर्लक्षिता गतिर्यस्य । 'गुणप्रकाशैरनुमीयते भवान्' इत्याद्युक्तेः ॥२०॥ स्वमायाशक्तैर्गुणैर्जे
गत्कर्तृत्वं भगवतो वदन् यतः सृष्टमित्यस्योत्तरं प्रपंचयति—कालमिति । कालमात्मन्स्वस्मिन्प्राप्तं लीनत्वेन स्थितं स्वप्रयोजनाभावेपि स्वस्मिन्स्वमायाकल्पितं यदृच्छया स्वैरितयोपाददे सृष्ट्यर्थमंगीकृतवान् । तच्च न
स्वतः किन्तु माययैव विबुभूषुः ॥ २१ ॥ कालादीनां प्रयोजनमाह । कालादिति । अधिष्ठितत्वं तदिच्छया प्रवृत्तत्वम् ॥ २२ ॥ तमःप्रधानः पदार्थविशेषः । यद्वा य इत्यध्याहार्यं परेण स इत्यनेन योजयितव्य
त्वात् । तस्य च महत्तत्त्वस्य च अत एव तमःप्रधानत्वादेव तदुपाधिकेषु तमउपाधिकेषु ॥ २३ ॥ शक्तिरुत्पादनसामर्थ्यम् । हे प्रभो इति । ब्रह्मकर्तृका नारदं प्रति संबुद्धिस्तु त्वमेवात्र प्रभवसि विरक्तत्वान्न हि

तामसादपि भूतादेर्विकुर्वाणादभून्नभः ॥ तस्य मात्रा गुणः शब्दो लिंगं यद्द्रष्टृदृश्ययोः ॥ २५ ॥ नभसोऽथ विकुर्वाणादभूत्स्पर्शगुणोऽनिलः ॥
परान्वयाच्छब्दवांश्च प्राण ओजः सहो बलम् ॥ २६ ॥ वायोरपि विकुर्वाणात्कालकर्मस्वभावतः ॥ उदपद्यत तेजो वै रूपवत्स्पर्शशब्दवत् ॥
॥ २७ ॥ तेजसस्तु विकुर्वाणादासीदंभो रसात्मकम् ॥ रूपवत्स्पर्शवच्चांभो घोषवच्च परान्वयात् ॥२८ ॥ विशेषस्तु विकुर्वाणादंभसो गंधवानभू
त् ॥ परान्वयाद्रसस्पर्शशब्दरूपगुणान्वितः ॥ २९ ॥ वैकारिकान्मनो जज्ञे देवा वैकारिका दश ॥ दिग्वातार्कप्रचेतोऽश्विवह्नींद्रोपेंद्रमित्रकाः ॥३० ॥

यस्य भेदः द्रव्यशक्तिरित्यादीनि प्रातिलोम्येन त्रयाणां लक्षणानि। द्रव्ये महाभूताख्ये शक्तिर्यस्य क्रियास्विंद्रियेषु शक्तिर्यस्य ज्ञानेषु देवेषु शक्तिर्यस्येति विग्रहः । हे प्रभो बोद्धुं शक्त ॥ २४ ॥ भूतादेरिति तामसस्य विशेषणम् । ननु तामसात्प्रथमं शब्दो भवतीति प्रसिद्धम् सत्यम् । स तु तस्य नभसो मात्रा सूक्ष्मं रूपं गुणश्चासाधारणो व्यावर्तको धर्मः शब्दद्वारा नभ उत्पद्यत इत्यर्थः । एवमेव स्पर्शादिष्वपि द्रष्टव्यम् । शब्दस्य लक्षणं लिंगमिति । कुड्याद्यंतरितेन केनचिदुच्चैर्गजो गज इत्युक्ते यो गजद्रष्टा यश्च तेन दृश्यो गजस्तयोर्लिंगं बोधकम् । लिंगविशेषणत्वाद्यच्छब्दस्य क्लीबत्वम् ॥ २५ ॥ परस्य नभसः कारणत्वेनान्वयाच्छब्दवांश्च वायुस्तस्यैव लक्षणं प्राणो देहधारणम् । ओजः सहोबलानींद्रियमनःशरीराणां पाटवानि तेषां हेतुरित्यर्थः ॥ २६ ॥ उदपद्यत उत्पन्नं स्वभावतो विकुर्वाणात्स्वयं रूपवत्तेजो वायुनभसोः कारणभूतयोरन्वयात्स्पर्शवच्छब्दवच्च । एवमंभसः पृथिव्याश्च परान्वयाधिक्याद्गुणाधिक्यम् ॥ २७ ॥ घोषः शब्दः ॥ २८ ॥ विशेषः पृथ्वी । पृथिव्याश्च परान्वयाधिक्याद्गुणाधिक्यम् ॥ २९ ॥ मनःशब्देनैव तदधिष्ठाता चंद्रोऽपि द्रष्टव्यः । अन्ये च दश देवा वैकारिकाः सात्त्विकाहंकारकार्याः । तानाह । दिशश्च वातश्च अर्कश्च प्रचेताश्च अश्विनौ च एते पंच श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानामधिष्ठातारः । वह्निश्च इंद्रश्च उपेंद्रश्च मित्रश्च कश्च प्रजापतिः एते पंच वाक्पाणिपादपायूपस्थानामधिष्ठातारः ॥ ३० ॥ यतो ज्ञानशक्तिर्बुद्धिः क्रियाशक्तिः

गृहस्थाः प्रायस्तत्त्वविचारे प्रभवंतीप्यभिप्राया बोध्या । अत्र साम्यावस्थं गुणत्रयमेत्र प्रधानं तस्य कालेन सत्त्वांशस्योद्रेको महत्तत्त्वं रजोंशस्योद्रेको महत्तत्त्वभेदः सूत्रतत्त्वम् । तमोंशस्योद्रेकोहंकारतत्त्वम् अतः अहंकारकार्येषु तामसाधिक्यमस्तीत्युक्तं स्वामिचरणैः । करणं कारः कारकचेष्टाविक्षेप इति यावत् । विगतः कारो विक्षेपो यस्मात्तच्छांतस्वभावं सत्त्वं विकारस्तेन चरति प्रवर्त्तत इति वैकारिकः तेजःक्षोभकत्वाद्रजस्तत्रभवस्तैजसः । तामसस्तु स्पष्टार्थः किन्तु रजस एव विकारहेतुत्वात्सत्त्वे तमसि कार्योत्पत्तये तदंशसमवायो ज्ञेयः ॥ २४ ॥ अत्राक्षिपति । ः नन्विति । इत्यर्थ इति । शब्दादीनामाकाशादिसूक्ष्मरूपत्वेन कारणत्वं सत्येवाकाशे शब्दानुभवात्कार्यत्वमपीति भावः । विश्वनाथस्तुपुरावृत्तेषु परोक्षोपि यो वसुदेवदशरथादिर्द्रष्टा यश्च तेन दृश्यः कृष्णरामादिस्तयोर्द्वयोरपि यल्लिंगं य एवशब्दो ज्ञापक इत्याह ॥ २५ ॥ इत्यर्थ इति । प्राणस्य देहधारणे ओजआदीनां च कारणे लक्षणा कार्यार्थानुपपत्त्येति भावः । यद्वा प्राणादिरूपोऽनिल इत्यर्थः ॥ २६ ॥ २७॥२८॥ विशेषेण शेषाः स्वगुणगंधेतराः सर्वभूतगुणाः शब्दादयोपि यत्र सविशेषो विशिष्यते सर्वभूतगुणधारणेनोत्कर्षं प्राप्नोतीति वा विशेषः ॥ २९ ॥ वैकारिकात्सात्त्विकाहंकारात् ॥ ३० ॥ इत्यर्थ इति । अत्र तामसाहंकारकार्योप्यनिलः प्राणरू

तैजसात्तु विकुर्वाणादिंद्रियाणि दशाभवन् ॥ ज्ञानशक्तिः क्रियाशक्तिर्बुद्धिः प्राणस्तु तैजसौ ॥ श्रोत्रं त्वग्घ्राणदृग्जिह्वावाग्दोर्मेढ्रांघ्रिपायवः॥३१॥ यदैतेऽसंगता भावा भूतेंद्रियमनोगुणाः॥ यदाऽऽयतननिर्माणे न शेकुर्ब्रह्मवित्तम ॥ ३२ ॥ तदा संहत्य चान्योऽन्यं भगवच्छक्तिचोदिताः ॥ सदसत्त्व मुपादाय चोभयं ससृजुर्ह्यदः ॥३३॥ वर्षपूगसहस्रांते तदंडमुदकेशयम् ॥ कालकर्मस्वभावस्थो जीवो जीवमजीवयत् ॥ ३४॥ स एष पुरुषस्तस्मा दंडं निर्भिद्य निर्गतः ॥ सहस्रोर्वंघ्रिबाह्वक्षः सहस्राननशीर्षवान् ॥३५॥ यस्येहावयवैर्लोकान्कल्पयंति मनीषिणः ॥ कट्यादिभिरधः सप्त सप्तोर्ध्वं जघनादिभिः ॥३६॥ पुरुषस्य मुखं ब्रह्म क्षत्रमेतस्य बाहवः ॥ ऊर्वोर्वैश्यो भगवतः पद्भ्यां शूद्रोऽभ्यजायत ॥ ३७ ॥ भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः ॥ हृदा स्वर्लोक उरसा महर्लोको महात्मनः ॥ ३८ ॥ ग्रीवायां जनलोकश्च तपोलोकः स्तनद्वयात् ॥ मूर्धभिः सत्यलोकस्तु ब्रह्मलोकः सनातनः ॥ ३९ ॥

प्राणश्च तैजसाहंकारकार्यौ अतो ज्ञानक्रियाविशेषरूपाणींद्रियाण्यपि तैजसादभवन्नित्यर्थः । तान्याह । श्रोत्रमिति । दोः पाणिः मेढ्रमुपस्थः । क्रमस्त्वत्र न विवक्षितः ॥ ३१ ॥ एवं कारणसृष्टिमुक्त्वा कार्यसृष्टिमाह । यदा एते असंगता अमिलिता आसन् अत एव यदा आयतनस्य शरीरस्य निर्माणे न शेकुः ॥ ३२ ॥ तदा सदसत्त्वं प्रधानगुणभाव मुपादाय स्वीकृत्य उभयं समष्टिव्यष्ट्यात्मकं शरीरम् ॥ ३३ ॥ कालकर्मस्वभावानाधिष्ठाय स्थितो जीवयतीति जीवः परमात्माऽजीवमचेतनमजीवयच्चेतयति स्म ॥ ३४ ॥ निर्भिद्य पृथक्कृत्य स्थित इत्यर्थः ॥ ३५ ॥ तदवयवैर्लोकरचनामाह । यस्येति । कटिरित्यूरुमूलयोः पश्चाद्भागः जघनं तु पुरोभागः अधः सप्तलोकानतलादीन् । ऊर्ध्वं भूरा दीन्सप्त ॥ ३६ ॥ वर्णानां तत उत्पत्तिं दर्शयति । पुरुषस्येति । ब्रह्म ब्राह्मणो मुखमिति कार्यकारणयोरभेदविवक्षयोक्तम् । बाहव इति च क्षत्रं क्षत्रियः ॥ ३७ ॥ इदानी मुपासनार्थं लोककल्पनाभेदान्दर्शयन्सप्तलोकपक्षमाह द्वाभ्याम् । भूर्लोकः पातालमारभ्य पद्भ्यां कटिपर्यंताभ्याम् ॥ ३८ ॥ स्तनद्वयादित्युपासनार्थत्वादूर्ध्वाधोभाववैपरीत्यं

पेण तैजसाहंकारकार्योपि भवतीति भावः ॥ ३१ ॥ असंगता अमिलिताः ॥ ३२ ॥ सदसत्त्वं मुख्यगौणत्वं शरीरम् ब्रह्मांडाख्यं समष्टिः प्रतिजीवं व्यष्टिः भगवतस्तत्त्ववर्गप्रविष्टभगवदंशप्रथमपुरुषस्य शक्त्या संह ननकारिण्या चोदिताः यद्वा न्यूनाधिकभावमादाय अर्द्धमर्द्धमाकाशादेरात्मीयभागोऽर्द्धेर्द्धे त्वन्यभूतचतुष्टयाष्टमाष्टमभागमादायेति पञ्चीकरणं सूचितम् ॥ ३३ ॥ वर्षपूगैर्वर्षसमूहैर्यत्सहस्रं तदंते सहस्रवर्षांते इत्यर्थः । जीवो हिरण्यगर्भांतर्यामी पुरुषः जीवयतीति व्युत्पत्तेः । अजीवमनभिव्यक्तजीवत्वादचेतनं तदंडम् ॥ ३४ ॥ स एव हिरण्यगर्भांतर्यामी पुरुषस्तस्मादिति ल्यब्लोपे पञ्चमी । तं हिरण्यगर्भं प्रविश्य स्थितोप्यंडं निर्भिद्य निर्गतस्त द्बहिः स्थित इति भावः। इत्यर्थ इति। कीदृशः सन्नित्यपेक्षायां कारणार्णवस्थं तस्य स्वीयस्वरूपमाह । सहस्रेति । 'सहस्रशीर्षा' इति श्रुत्यंतरात् ॥ ३५ ॥ इह ब्रह्मांडाभ्यंतरे यस्य गुणमयरूपस्यावयवैर्लोकान्कल्पयंति स लोकमयः पुमान् विराट् पुरुष इति षष्ठश्लोकस्थेनान्वयः । कटिरिति ऊरुमूलयोः पश्चाद्भागो जघनं पुरोभागः ॥ ३६ ॥ "ब्राह्मणोस्य मुखमासीद्बाहू राजन्यः" इति श्रुतेरभेद एवेति ॥ ३७ ॥ ३८ ॥ सति गत्यंतरे

तत्कट्यां चातलं क्लृप्तमूरुभ्यां वितलं विभोः ॥ जानुभ्यां सुतलं शुद्धं जंघाभ्यां तु तलातलम् ॥ ४० ॥ महातलं तु गुल्फाभ्यां प्रपदाभ्यां रसातलम् ॥ पातालं पादतलत इति लोकमयः पुमान् ॥ ४१ ॥ भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः ॥ स्वर्लोकः कल्पितो मूर्ध्ना इति वा लोककल्पना ॥ ४२ ॥ इति श्रीभा० म० द्विती० जननिरूपणं नाम पंचमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ वाचां वह्नेर्मुखं क्षेत्रं छंदसां सप्त धातवः ॥ हव्यकव्यामृतान्नानां जिह्वा सर्वरसस्य च ॥ १ ॥ सर्वासूनां च वायोश्च तन्नासे परमायने ॥ अश्विनो रौषधीनां च घ्राणो मोदप्रमोदयोः ॥ २ ॥

न दोषः । यद्वा । स्तनच्छद्दं कुर्वयदोष्ठद्वयं तस्मादित्यर्थः । ब्रह्मलोको वैकुंठाख्यः स तु सनातनो नित्यः । न तु सृज्यप्रपंचांतर्वर्तीत्यर्थः ॥ ३९ ॥ इदानीं चतुर्दशलोकपक्षं दर्शयति । तत्र जघनादिभिर्भूरादयः पूर्वोक्ता एव सप्त । कट्यादिभिरधः सप्त लोकानाह तत्कट्यामिति द्वाभ्याम् । शुद्धं हरिभक्तनिवासत्वात् ॥ ४० ॥ ४१ ॥ त्रिलोकपक्षमाह । भूर्लोकः पातालादिसहितः॥४२॥ इति श्रीभा० म० द्वितीयस्कंधे टीकायां पंचमोऽध्यायः॥५॥छ॥ षष्ठे विराड्विभूतिश्च प्रोक्ताध्यात्मादिभेदतः। दृढीकृतं च पूर्वोक्तं सर्वं पुरुषसूक्ततः॥१॥इदानीं वैराजस्य विभूतिः सप्रपंचमनुवर्ण्यते। वाचामस्मदादिवागिंद्रियाणां तदधिष्ठातुर्वह्नेश्च तस्य मुखं क्षेत्रमुत्पत्तिस्थानम्। छंदसां गायत्र्यादीनां सप्तानां तस्य सप्त धातवस्त्वगादयः क्षेत्रम् । हव्यं देवानामन्नं कव्यं पितॄणाम् अमृतं तदुभयशेषो मनुष्याणां तेषामन्नानां तथा सर्वरसस्य मधुरादेः षड्विधस्य चकारादस्मदादिरसनेंद्रियस्य तदधिष्ठातुर्वरुणस्य चैतस्य जिह्वा क्षेत्रमुत्पत्तिस्थानम् । एवं सर्वत्रानुक्तमुन्नेयम् ॥ १ ॥ सर्वासूनामस्मदादिप्राणानां तस्य नासे नासारंध्रे परमायने उत्तम

वैपरीत्यं दोषायेति । तत्राह । यद्वेति । इत्यर्थ इति । अंडमध्यवर्त्तित्वेपि भगवानिव नित्य इति भावः । ब्रह्मणो भगवतो लोको ब्रह्मरूपो वा लोक इति ॥ ३९ ॥ तत्र चतुर्दशलोकपक्षे हरिभक्ताः प्रह्लादबल्यादयस्तेषां निवासत्वात् । यत्रयत्र च मद्भक्ताः स देशः श्रेयसां पदमित्युक्तत्वात् ॥ ४० ॥ स्वर्लोकोऽप्यत्र ब्रह्मलोकपर्य्यन्तो ज्ञेयः ॥ ४१ ॥ इति श्रीभागवतभावार्थदीपिकाप्रकाशे द्वितियस्कन्धे पंचमोऽध्यायः ॥ ५ ॥ पुरुषसूक्तत इति । पुरुषसूक्तं 'सहस्रशीर्षा' इत्यादिषोडशमंत्रात्मको वेदभागस्तद्व्याख्यानरूपत्वादस्याध्यायस्य व्याख्येयव्याख्यानयोरभेदोक्तिरौपचारिक्येव ॥ ( १ ) ॥ एवं मायाशक्तिसहितात्परमेश्वरात्समष्टिविराडजायतेति प्रतिपादितम् । तत्र "भूस्तोयमग्निः पवनः खमादिर्महानजादिर्मन इंद्रियाणि । सर्वेन्द्रियार्था विबुधाश्च सर्वे ये हेतवस्ते जगतोंगभूताः" इत्यक्रूरोक्तेः । परमेश्वरस्य कस्मात्कस्मादंगाद्विराजः किंकिमंगमभूदित्यपेक्षायामाह–वाचामिति । सप्तमश्लोकस्थेन हरेरित्यनेन मुखमित्यादेः संबंधः । मायिकाहंकारकार्यभूता अप्यमी वाग्वह्न्यादयः सच्चिदानंदमयस्य भगवतो मुखाद्यंगानां विभूतिरूपत्वात्तेभ्यो मुखादिभ्य एवामी उत्पद्यंते इत्युच्यते मायायास्तच्छक्तित्वाच्छक्तिशक्तिमतोरभेदाच्छक्तेः कार्यं शक्तिमतोपि भवतीति न्यायात् । यथाग्निशक्तिर्दाहस्तेन दग्धोग्निदग्ध इत्युच्यते तद्वदत्रापीति । वैकुंठस्था वाग्वह्न्यादयस्तत्तदंशभूताश्चिन्मया नित्या एव तेषां चिद्विलासत्वात् । जगद्वार्त्तिनस्त्वमी तत्तद्विभूतयो मायिका अनित्या एवेति व्यवस्थितिः । एतस्य हरेः ॥ १ ॥ वायोर्मुख्यवायोः घ्राण इति पुंस्त्वमार्षम् । 'क्लीबे घ्राणं गंधवहो घोणा नासा च नासिका"इत्यमरः ॥२॥

रूपाणां तेजसां चक्षुर्दिवः सूर्यस्य चाक्षिणी ॥ कर्णौ दिशां च तीर्थानां श्रोत्रमाकाशशब्दयोः ॥ तद्गात्रं वस्तुसाराणां सौभगस्य च भाजनम् ॥३॥ त्वगस्य स्पर्शवायोश्च सर्वमेधस्य चैव हि ॥ रोमाण्युद्भिज्जजातीनां यैर्वा यज्ञस्तु संभृतः ॥ ४ ॥ केशश्मश्रुनखान्यस्य शिलालोहाभ्रविद्युताम् ॥ बाहवो लोकपालानां प्रायशः क्षेमकर्मणाम् ॥ ५ ॥ विक्रमो भूर्भुवःस्वश्च क्षेमस्य शरणस्य च ॥ सर्वं कामवरस्यापि हरेश्चरण आस्पदम् ॥ ६ ॥ अपां वीर्यस्य सर्गस्य पर्जन्यस्य प्रजापतेः ॥ पुंसः शिश्न उपस्थस्तु प्रजात्यानंदनिर्वृतेः ॥ ७ ॥ पायुर्यमस्य मित्रस्य परिमोक्षस्य नारद ॥ हिंसाया निर्ऋतेर्मृत्योर्निरयस्य गुदः स्मृतः ॥ ८ ॥ पराभूतेरधर्मस्य तमसश्चापि पश्चिमः ॥ नाड्यो नदनदीनां तु गोत्राणामस्थिसंहतिः ॥ ९ ॥

क्षेत्रे । मोदप्रमोदयोश्च सामान्यविशेषगंधयोर्घ्राणो घ्राणेंद्रियं परमायनम् ॥२॥ रूपाणां तेजसां रूपप्रकाशकानां चक्षुरिंद्रियम् । अक्षिणी नेत्रगोलके सर्वत्र पष्ठ्यंतानां प्रथमांतं क्षेत्रं द्रष्टव्यम् । कर्णौ तस्य श्रोत्राधिष्ठाने श्रोत्रमिंद्रियं तस्य गात्रं शरीरं वस्तूनां ये सारांशास्तेषां भाजनं स्थानम् ॥ ३ ॥अस्य त्वक् स्पर्शस्य वायोश्चेत्यर्थः । सर्वस्य मेधस्य यज्ञस्य उद्भिज्जजातीनां सर्ववृक्षाणाम् । यैर्वृक्षैर्यज्ञः सम्यक् साधितस्तेषामेव वा ॥ ४ ॥ केशा मेघानां क्षेत्रं पूर्वं तथोक्तेः श्मश्रूणि विद्युतां पादकरनखानि शिलालोहाना मिति सादृश्याद्वाह्यम् क्षेमकर्मणां पालनकर्तॄणाम् ॥ ५ ॥ विक्रमः पादन्यासो भूरादिलोकानामास्पदमाश्रयः । भूरादिशब्दानामव्ययत्वात्षष्ठ्या लुक् । क्षेमो लब्धरक्षणं शरणं भयाद्रक्षणम् । सर्वेषां कामानां वरस्य वरणस्यापि हरेरंघ्रिरास्पदम् ॥ ६ ॥ वीर्यस्य शुक्रस्य शिश्नोऽधिष्ठानं उपस्थस्त्विंद्रियं प्रजापत्यानंदः संतानार्थः संभोगस्तेन या निर्वृतिस्तापहानिस्तस्याः ॥ ७ ॥ परिमोक्षस्य मलत्यागस्य पायुरिंद्रियं गुदस्थानम् । निर्ऋतेरलक्ष्म्याः ॥ ८ ॥ तमसोऽज्ञानस्य पश्चिमः पृष्ठभागः । गोत्राणां गिरीणाम

तीर्थानां पुष्करादीनामागमानां च "तीर्थं मंत्राद्युपाध्यायशास्त्रेष्वंभसि पावने" इत्यभिधानात् ॥ ३ ॥ इत्यर्थ इति । स्पर्शेण सहितो वायुः स्पर्शवायुस्तस्येति समासः कार्यः । आर्षत्वाश्रयणेन वलोपे तुं गौरवमेवेति भावः । त्वगिन्द्रियाधिष्ठातृवायुरत्र ज्ञेयः । पूर्वं तु सामान्यवायुरुक्त इत्यपौनरुक्त्यम् । वृक्षैः पालाशादिभिर्जुह्वादिपात्रनिर्माणेन यज्ञसंसिद्धेः तेषामेव यज्ञसाधकानामेव वृक्षाणां क्षेत्रं नान्येषामित्यर्थः । अन्यवृक्षाणामुत्पत्तिस्तेभ्य एव वर्णसंकरन्यायेन बोध्या । यद्वा । "याज्ञिका रोममूलस्था रोमांतस्थाश्च तत्परे"इत्यादि विजयध्वजोक्तेः । यैरुद्भिज्जजातीयैर्यज्ञः संभृतस्तेषां रोममूलत उत्पत्तिस्तदितरसर्ववृक्षाणां रोमप्रांतभागत इति ध्येयम् । वाशब्दस्य व्यवस्थार्थकत्वादिति पूर्वं तथोक्तेः । 'ईशस्य केशान्विदुरंबुवाहान्' इत्युक्तेः । क्षेमकर्मणां सर्वहितकर्तॄणाम् ॥४ ॥ यद्वा शरणं मोक्षः । 'मोक्षः शांतिश्च शरणं निर्वाणं निर्वृतिस्तथा' इत्यभिधानात् । 'भेजे खगेंद्रध्वजपादमूलम् ' इत्युक्तेर्मोक्षस्यापि पादमूलमेव क्षेत्रम् ॥ ५ ॥ ६ ॥ 'उपस्थो हि सर्वेषामानंदानामवधिः' इति श्रुतेः ॥ ७ ॥ नारदेति । एतत्कथनं मंदमतीनां सुबोधार्थमेव त्वं त्वन्येषामपि नारमज्ञानं द्यसीति भावः अत्र यद्यपि 'वह्नींद्रोपेंद्रमित्रकाः' इति क्रमप्राप्तेर्मित्रस्यैवाधिष्ठातृदेवत्वं लभ्यते तथापि 'गुदं मृत्युरपानेन नोदतिष्ठत्तदा विराट्' इति वक्ष्यमाणवाक्यप्रामाण्येन मृत्युरेवाधिष्ठातृत्वेन विवक्षितः । पायुर्यमस्य मित्रस्येत्ये

अव्यक्तरससिंधूनां भूतानां निधनस्य च ॥ उदरं विदितं पुंसो हृदयं मनसः पदम् ॥ १० ॥ धर्मस्य मम तुभ्यं च कुमाराणां भवस्य च ॥
विज्ञानस्य च सत्त्वस्य परस्यात्मा परायणम् ॥ ११ ॥ अहं भवान्भवश्चैव त इमे मुनयोऽग्रजाः ॥ सुरासुरनरा नागाः खगा मृगसरीसृपाः ॥
॥ १२ ॥ गंधर्वाप्सरसो यक्षा रक्षोभूतगणोरगाः ॥ पशवः पितरः सिद्धा विद्याध्राश्चारणा द्रुमाः ॥ १३ ॥ अन्ये च विविधा जीवा जलस्थलनभौ
कसः ॥ ग्रहर्क्षकेतवस्तारास्तडितः स्तनयित्नवः ॥ १४ ॥ सर्वं पुरुष एवेदं भूतं भव्यं भवच्च यत् ॥ तेनेदमावृतं विश्वं वितस्तिमधितिष्ठति ॥ १५ ॥
स्वधिष्ण्यं प्रतपन्प्राणो बहिश्च प्रतपत्यसौ ॥ एवं विराजं प्रतपंस्तपत्यंतर्बहिः पुमान् ॥ १६ ॥

स्थिसंघातः ॥ ९ ॥ अव्यक्तं प्रधानं रसोऽन्नादिसारः सिंधवः समुद्रास्तेषां निधनस्य लयस्य उदरं पदं स्थानं विदितं ज्ञानिभिः । मनसोऽस्मदादिलिंगशरीरस्य ॥ १० ॥ तुभ्यं तव कुमाराणां सनकादीनां भवस्य श्रीरुद्रस्य आत्मा चित्तं परमयनम् ॥ ११ ॥ एवं तावत्परमेश्वराज्जातं विश्वं ततो न भिन्नम् । यथा कुंडलं सुवर्णान्न पृथक् । स तु सर्वनियंता सर्वप्रकाशको नित्यमुक्त इत्यर्थादुक्तम् । एतदेव पुरुषसूक्तार्थकथनेन द्रढयति । तत्र सहस्रशीर्षेत्यर्धर्चस्य ब्राह्मणोऽस्य मुखमासीदित्यादेश्च ऋक्त्रयस्यार्थः पूर्वाध्याय एव दर्शितः । पुरुष एवेद ऽसर्वमित्यस्यार्थं दर्शयति अहं भवानिति सार्धैस्त्रिभिः । ते अग्रजा इमे सनकादयो मरीच्यादयश्च । नागा गजाः ॥ १२ ॥ १३ ॥ जलं च स्थलंच नभश्चौकांसि येषां ते । नभौकस इति संधिरार्षः । ऋक्षाणि अश्विन्यादीनि केतवो धूमकेतुप्रभृतय औत्पातिकाः ॥ १४ ॥ सर्वं पुरुष एव न ततः पृथगि त्यर्थः । प्रपंचेन तस्यापरिच्छेदं वक्तुं स भूमिमित्यस्यार्थमाह । तत्पदं विभक्तिव्यत्ययेन व्याचष्टे । तेनेति । तेन पुरुषेण विश्वमिति भूमिपदस्यार्थः । वितस्तिमिति दशांगुल पदस्य अधीत्यतिशब्दस्य आवृतमिति वृत्वेत्यस्य स च वितस्तिमधिकं व्याप्य तिष्ठतीत्याधिक्यमात्रं विवक्षितं न तु परिमाणम् । अनुपयोगादपरिच्छिन्नत्वाच्च ॥ १५ ॥ एतत् सदृष्टांतमाह । असौ प्राण आदित्यः । "असौ वा आदित्यः प्राणः" इति श्रुतेः । स्वधिष्ण्यं मंडलं प्रकाशयन्यथा बहिश्च प्रकाशयति एवं विराड्देहं प्रकाशयन्

तदुपकारकत्वमेवाभिप्रेतम् । अधिष्ठातुर्मित्रस्य पायुरिंद्रियं क्षेत्रमिति व्याख्यानं तु प्रक्रमभंगापत्तेरुपेक्षितम् । पराभूतेः पराभवस्य ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ 'नभश्च नभसा सार्द्धम्' इति द्विरूपकोशाद दंतोपि नभशब्दोस्तीति ज्ञेयम् ॥ १३ ॥ १४ ॥ संदर्भस्तु—दश दशगुणिता अंगुलिप्रमाणदेशा यस्तिंस्तत् दशोत्तरावरणकुलं तदभिप्रायेणात्यल्पत्वाद्दशांगुलशब्देन निर्देशः वितस्तिशब्दोपि तदभिप्रायकः । तदतिक्रम्य ति ष्ठतीत्यर्थः ॥ १५ ॥ विराजं प्रतपन् विराट्प्रकाशत्वेन प्रस्तूयमानः पुमान् श्रीभगवत्तत्त्वमध्येवांतरंगं त्रिपाद्विभूतिरूपं बहिर्बहिरंगं पादविभूतिरूपं प्रतपति तद्विभूतयः । पाद्मोत्तरखंडे—"त्रिपाद्विभूतेर्लोकास्तु असंख्याः परिकीर्तिताः ॥ शुद्धसत्त्वमयाः सर्वे ब्रह्मानंदसुखाह्वयाः ॥ सर्वे नित्या निर्विकारा हेयरागविवर्जिताः । सर्वे हिरण्मयाः शुद्धाः कोटिसूर्यसमप्रभाः । सर्ववेदमया दिव्याः कामक्रोधविवर्जिताः । नारायणपदांभोजभक्त्याकरसुसे विताः । निरंतरं सामगानपरिपूर्णसुखं श्रिताः । सर्वे पंचोपनिषदस्वरूपा वेदवर्चसः" इत्यादिना तत्र त्रिपाद्विभूतिशब्देन प्रपंचातीतलोकोऽभिधीयते पादविभूतिशब्देन तु प्रपञ्च इति यथोक्तं तत्रैव "त्रिपाद्व्याप्तिः परे धाम्नि पादस्येहाभवत्पुनः । त्रिपाद्विभूतिर्नित्यास्यादनित्यं पादमैश्वरम् ॥ नित्यं तद्रूपमीशस्य परे धाम्नि स्थितं शुभम् । अच्युतं शाश्वतं दिव्यं सदा यौवनमाश्रितम् ॥ नित्यं संभोग्यमीश्वर्य्या श्रिया भूम्या च संवृतम्" इति । अत

सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात् ॥ महिमैष ततो ब्रह्मन्पुरुषस्य दुरत्ययः ॥ १७ ॥
पादेषु सर्वभूतानि पुंसः स्थितिपदो विदुः ॥ अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्धसु ॥ १८ ॥

ब्रह्मांडमंतर्बहिश्च प्रकाशयति ॥ १६ ॥ नित्यमुक्तत्वं दर्शयितुमुतामृतत्वस्येत्यस्यार्थमाह । स इति । अभयस्येति मंत्रगतामृतपदव्याख्या । अन्नेनेतिपदं विभक्तिव्यत्ययेन व्याचष्टे । मर्त्यं मरणधर्मकमन्नं कर्मफलं यस्मादत्यगादतिक्रांतवान् । अतो न केवलं सर्वात्मकः किंतु अमृतत्वस्य निजानंदस्यापीश्वर इत्यर्थः । ननु प्रपंचात्मकस्य कुतो नित्यमुक्तत्वमित्याशंक्य तत्परिहाराय एतावानस्येत्यस्यार्थमाह । महिमेति प्रपंचात्मकस्याप्यमृतेशत्वमित्येष महिमा दुरत्ययोपारः प्रपंचानभिभूतत्वादिति भावः । मंत्रेण च एतावानस्य महिमा विभूतिः स तु ज्यायान् महत्तर इति वदताऽयमेवार्थ उक्तः ॥ १७ ॥ तदेवमीश्वरो नित्यमुक्त इत्युक्तं तदाश्रितानां भूतानां बंधमोक्षौ व्यवस्थयेति दर्शयन् पादोऽस्य विश्वा भूतानीत्यस्यार्थमाह । पादेष्विति । तिष्ठंत्यत्रेति स्थितयो भूरादिलोकास्ते पादा इव पादा अंशा यस्य स स्थितिपात्तस्य पादेष्वंशभूतेषु लोकेषु सर्वभूतानि जीवान् विदुः । मंत्रे तु पादोऽस्य विश्वा भूतानीति सामानाधिकरण्यमधिष्ठानाधिष्ठेयाभेदविवक्षया पाद इत्येकवचनं च सामान्याभिप्रायेणेति व्याख्यातं भवति ।

एव द्वितीयस्कंधेऽप्येवमेवोक्तम् । तथाहि सोऽमृतस्येति । अमृतादिद्वयं तु तृतीयत्वेन वक्ष्यमाणस्य क्षेमस्याप्युपलक्षणम् । श्रुतौ च"उतामृतत्वस्येशानः" इत्यत्रामृतत्वं तद्युगोपलक्षणम् । अत्र धर्मिप्रधाननिर्देशः । श्रुतौ तु तत्र धर्ममात्रनिर्देशस्यापि तत्रैव तात्पर्यं तत्रामृतम्–'स्वदृष्टवद्भिः पुरुषैरभिष्टुतम्' इति । परं न यत्परम् इत्याद्युक्तानुसारेण परमानंदः । अत एवामृतं विष्णुमंदिरमितितत्पर्यायः । 'अभयं न च कालविक्रमः' इत्याद्युक्तानुसारेण भयमात्राभावः । अत एव धर्मोऽकुतोभयमित्युक्तम् । 'क्षेमं न यत्र माया' इत्याद्युक्तानुसारेण भगवद्बहिर्मुखताकारगुणसंबंधाभावाद्भगवज्जनमंगलाश्रयत्वं ज्ञेयम् । तथा च नारदीये । "सर्वमंगलमूर्द्धन्या पूर्णानंदमयी सदा । द्विजेंद्र तव मय्यस्तु भक्तिरव्यभिचारिणी॥"इति । अत एव । 'क्षेमं विदंति मत्स्थानम्' इत्युक्तम् । तत्र तत्तच्छब्देन लक्षणामयकल्पनया जनलोकादिवाच्यता निषेधेनहेतुं न्यस्यति।मर्त्यम्–'ब्रह्मणोपि भयं मत्तोद्विपरार्द्धपरायुषः' इत्यादिन्यायेन मरणधर्म्मकमन्नं कर्मादिफलं विलोक्यादिकं यस्मादत्यगात् अतिक्रम्यैव तत्र विराजत इति । एषः अमृताद्यैश्वर्यरूपो दुरत्ययः ब्रह्मचर्यादिभिः केनचिन्मनसाप्यसर्वभूतानि रोद्धुं न शक्य इति संदर्भः । विश्वनाथस्तु–स्वधिष्ण्यमित्यादिपद्यद्वयमेव व्याचख्यौ तथा हि असौ प्राणः प्राणवायुः स्वधिष्ण्यं देहांतः प्रतपन् श्वासेन प्रतापयुक्तं कुर्वन् बहिश्च प्रतपति प्रभवति एवं विराजमंतर्यामित्वेन स्थित्या प्रतपन्प्रभावंतं ज्ञानक्रियादिशक्तिमंतं कुर्वन्नंतर्बहिश्च प्रतपति प्रभवति॥ १६॥स परमेश्वरोऽमृतस्येशः प्रभुर्भोक्ता भोजयिता दाता चेत्यर्थः । स्वर्गीयसुधाव्यावृत्त्यर्थमाह–अभयस्य संसारभयरहितस्यामृतस्येशत्वे हेतुः मर्त्त्यं मरणधर्मकमन्नं वैषयिकं सुखं यद्यतोऽत्यगादतिक्रांतवान् । नं ह्यमृतभोजिने चणकचर्वणं रोचते इत्यभिप्रायः । यदि च कौतुकवशात्कदाचिच्चर्वयति तदनासक्त्यैव एवंमेवांतर्यामिणोपि ।"अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इत्यादिदृष्टेः क्वचिद्भोक्तृत्वव्यपदेशोपि तदनतिक्रम एव द्रष्टव्यः । "एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोपि बलेन भूयान्' इति श्रुतौ निरन्नत्वं नामासक्तिराहित्यं व्याख्यातम्। एवञ्च "उतामृतत्वस्येशानो यदन्नेनातिरोहति"इत्यस्यार्थो विवृतः॥ अमृतत्वस्येति स्वार्थे त्वश्छांदसः ॥ "सुपां सुपो भवंति" इत्यन्नमित्यर्थेऽन्नेनेति पदम् अतिरोहति अत्यक्रामत्। ततो हेतोः पुरुषस्य परमेश्वरस्यैष महिमा दुरत्ययोऽपारः । एवञ्च "एतावानस्य महिमतो ज्यायांश्च पूरुषः" इत्यस्यार्थो विवृतः ॥ १७ ॥ तदेवममर्त्यमैश्वर्यं त्रिपात् मर्त्यमेकपादिति । तस्य चतुष्पादैश्वर्यं पुनर्विवृणोति । पादेषु सर्वभूतानी तिष्ठंत्यत्र सर्वभूतानीति स्थितयो मर्त्याद्यैश्वर्याणि तानि पदा इवाधिष्ठानभूतानि यस्य तस्य स्थितिपदश्चतुर्षु पादेष्वैश्वर्य्यभोगेषु सर्वभूतानि पार्षदपर्यंतानि पादा इवाधिष्ठानभूतानि पादान् दर्शयति । त्रयाणां सात्त्विकादिपदार्थानां मूर्द्धेव मूर्द्धा प्रकृतिस्तस्या मूर्द्धसु तदुपरि विराजमानेषु श्रीवैकुंठलोकेषु अमृतं क्षेममभयं चाधायि

पादास्त्रयो बहिश्चासन्नप्रजानां य आश्रमाः ॥ अंतस्त्रिलोक्यास्त्वपरो गृहमेधोऽबृहद्व्रतः ॥ १९ ॥

भूतेषु फलवैचित्र्यं दर्शयंस्त्रिपादस्यामृतं दिवीत्यस्यार्थमाह । अस्येश्वरस्य संबंधि त्रिपादमृतं नित्यसुखं दिव्यूर्ध्वलोकेषु न तु त्रिलोक्यामित्यर्थः । तदेव त्रिपाच्छब्दोक्तं त्रैविध्यं दर्शयन्नाह । त्रयाणां लोकानां मूर्धा महर्लोकस्तस्य मूर्धानस्तदुपरितनलोका जनस्तपः सत्यमिति तेषु यथाक्रममममृतादिकमधायि निहितम् । तत्र त्रिलोक्यां नश्वरमेव सुखम् महर्लोकस्य क्रममुक्तिस्थानत्वेऽपि कल्पांते तत्रत्यानां स्थानत्यागान्नाविनाशि सुखम् । जनलोके त्वमृतमविनाशि सुखं यावज्जीवं स्वस्थानापरित्यागात् । किंतु महर्लोकवासिनां कल्पांते त्रिलोकदाहोष्मपीडितानां तदा तत्र गमनादक्षेमदर्शनमस्ति तपोलोके तस्याभावात्क्षेममेव । वक्ष्यति हि । "त्रिलोक्यां दह्यमानायां शक्त्या संकर्षणाग्निना । यांत्यूष्मणा महर्लोकाज्जनं भृग्वादयोऽर्दिताः ॥" इति । सत्यलोके त्वभयं मोक्षः । तत्प्रत्यासत्तेः ॥ १८ ॥ एतदेव वैचित्र्यमधिकारिभेदेनोपपादयंस्त्रिपादूर्ध्व इत्यस्यार्थमाह । न प्रजायंते पुत्रादिरूपेणेत्यप्रजा नैष्ठिकब्रह्मचारिवानप्रस्थयतयस्तेषामाश्रमास्त्रिलोक्या बहिरासन् गृहमेधस्त्वंतः यस्मादबृहद्व्रतो ब्रह्मचर्यव्रतरहितः ॥ १९ ॥

नित्यं धृतमेव तिष्ठतीत्यर्थः । ततः पूर्वस्य मर्त्यान्नमात्रात्मकत्वादेकपात्त्वमुत्तरस्यामृतादित्रयात्मकत्वात्त्रिपात्त्वमिति भावः । तदनेन "पादोस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" इत्यस्यार्थो दर्शितः । अस्य पादस्तथैवास्यैव दिवि वैकुंठे यदमृतात्मकं त्रिपात् तच्च विश्वाभूतानीत्यर्थः । अत्राधिष्ठानाधिष्ठेययोरैक्योक्तिरिति संदर्भः । विश्वनाथस्तु—अथ तस्य मायिकी रमायिकी विभूतीर्विभज्य दर्शयति द्वाभ्याम् । स्थितिः सर्वलोकपालनं पादाचरणारविंदायस्य स स्थितिपात् तस्य पुंसः पादेष्वंशभूतेषु मायिकामायिकदेशेषु सर्वभूतानि बद्धमुक्तजीवान्विदुः । तत्र च त्रिमूर्ध्नः त्रिगुणमयस्थानानामुपरिष्टो भागो यत्प्रकृत्यावरणं तस्य मूर्ध्नसूपरितनस्थानेषु परमव्योमस्वित्यर्थः । अमृतं मरणाभावः क्षेमं रोगाभावोऽभयं परस्परहेतुकस्य भगवदपराधहेतुकस्य च भयस्याभावः । कालहेतुकभयस्यामृतशब्देनैव वारणं ज्ञेयम् । अधायि स्थापितम् । तेन त्रिगुणमयस्थानेषु तद्विपरीतं मृतमक्षेमं भयञ्च निहितमिति । त्रिगुणप्रपंचस्यानित्यत्वं त्रिगुणातीतस्य परव्योम्नो नित्यत्वं बोधितं वक्ष्यते चाग्रे तद्धामवर्णने 'न च कालविक्रमः''न यत्र माया' इत्यादि । एवं च पादोस्येत्यादेरर्थो विवृतः । अत्र "पादास्य विश्वाभूतानि" इति सामानाधिकरण्यमधिष्ठानाधिष्ठेययोरभेदविवक्षया पाद इत्येकवचनं सामान्याभिप्रायेण दिवि सर्वस्योर्द्ध्वप्रदेशेऽमृतमस्य त्रिपात्रिपादविभूतिस्थमित्यर्थः इत्यर्थ इति । त्रिगुणात्मकत्वात्तस्या इति भावः । तत्र सप्तलोकेषु तत्प्रत्यासत्तेः मोक्षस्य प्रत्यासत्तेः सन्निहितत्वात् । यथा गंगातटेप्यागतो गंगागतः कथ्यते तद्वदत्रापि मोक्षसन्निहितोपि मोक्ष इति कथ्यत इति सत्यलोकगतानां स्वयंप्रभातवेदविचारेण मोक्षोस्तीत्यर्थः । यद्वा "ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यांते कृतात्मानः प्रविशंति परं पदम्" इति स्मृतेरपि तेषां मोक्षश्रवणात् । अत्र संदर्भः ॥ १८ ॥ अथ चतुष्पात्त्वे त्रिलोकीव्यवस्थावत्पक्षांतरं दर्शयति । पादा इति । चशब्द उक्तसमुच्चयार्थः । प्रपञ्चाद्बहिः पादास्त्रय आसन्नेव प्रपञ्चात्मकस्यैव च चतुर्थपादस्य विभागविवक्षायां तु त्रिलोक्या बहिश्चान्ये पादास्त्रय आसन्नित्येवं मंत्रेपि तथैव पुनः शब्दः ते केऽप्रजानां ब्रह्मचारिवानप्रस्थयतीनामाश्रमाः प्राप्या ये लोकाः । अत एव धर्मत्रयप्राप्यत्वाच्चतुर्णामपि त्रिपात्त्वम् । अपरस्तु चतुर्थः पादस्त्रिलोक्या अंतरिति गृहमेधस्तत्प्राप्यः यस्मान्न बृहद्व्रतं यस्य स तथा ब्रह्मचर्यरहित इत्यर्थः । विश्वनाथः । "पादेषु सर्वा भूतानि" इत्यस्यार्थं विशिष्य दर्शयति । बहिस्त्रिमूर्द्धशब्दोक्तात्प्रकृत्यावरणात्परत्र त्रयः पादाः परमव्योमशब्देनाभिधीयमाना आसन् । चकारात्क्वचित्क्वचित्प्रपञ्चमध्यवर्त्तिनोपि मथुरायोध्यादिनामानः ये पादाः अप्रजानां न प्रकर्षेण जायंत इत्यप्रजाः संसारमुक्ता जीवास्तेषामाश्रमाः स्थानानीति । आश्रमणामाश्रमस्थानं च तेषां नित्यत्वं बोधितम् । "अमृतं क्षेममभयम्" इति पूर्वोक्तेः । त्रिलोक्यास्त्रिगुणलोकमय्याः प्रकृतेरंतस्तु अपरश्चतुर्थः पाद इत्यर्थः । यत्र गृहमेधः कर्मिजन इत्यर्थः । कीदृशोऽबृहद्व्रतः भगवद्व्रतरहितो भगवद्भक्तिरहित इत्यर्थः । तेन स चापि कदाचिद्भक्तः स्यात्तदा तस्यापि त्रिपाद्विभूतिरेव स्थानमिति भावः । एवं च

सृती विचक्रमे विष्वङ् साशनानशने उभे ॥ यदविद्या च विद्या च पुरुषस्तूभयाश्रयः ॥ २० ॥ यस्मादंडं विराड् जज्ञे भूतेंद्रियगुणात्मकः ॥ तद्द्रव्यमत्यगाद्विश्वं गोभिः सूर्य इवातपन् ॥ २१ ॥ यदाऽस्य नाभ्यान्नलिनादहमासं महात्मनः ॥ नाविदं यज्ञसंभारान्पुरुषावयवादृते ॥ २२ ॥ तेषु यज्ञस्य पशवः सवनस्पतयः कुशाः ॥ इदं च देवयजनं कालश्चोरुगुणान्वितः ॥ २३ ॥ वस्तून्योषधयः स्नेहा रसलोहमृदो जलम् ॥ ऋचो यजूंषि सामानि चातुर्होत्रं च सत्तम ॥ २४ ॥

अयं चाधिकारभेद एकस्यैवावस्थाभेदेन नत्वत्यंतभिन्नविषय इति दर्शयंस्ततो विष्वङ्ङित्यस्यार्थमाह । सृती इति । विविधं सुष्ठु अंचतीति विष्वङ् पुरुषः क्षेत्रज्ञः सृती मार्गौ दक्षिणोत्तरौ विचक्रमे चलति स्म । कथंभूते सृती । साशनानशने भोगापवर्गप्राप्तिसाधनभूते । अत्र हेतुत्वेन पुनर्विशेषणम् । यद्यतः अविद्याकर्मरूपा एका विद्या च तत्साधनोपासनारूपाऽन्या ॥ २० ॥ तदेवं विराडंतर्वर्तिनां फलवैचित्र्यमुक्त्वा तत्कारणस्येश्वरस्य तद्वैलक्षण्यं दर्शयितुं तस्माद्विराडजायतेत्यस्यार्थमाह । यस्मादंडं जज्ञे तत्र च भूतेंद्रियगुणात्मको विराट् च जज्ञे स ईश्वरस्तद्विश्वं विराड्देहं द्रव्यमंडं चातिक्रांतवान् । सूर्य इवेति पूर्वोक्त एव दृष्टांतः ॥ २१ ॥ नन्वेवं पुरुष एव चेत्सर्वं तर्हि यज्ञस्य तत्साधनानां चापृथग्भावाद्यज्ञैः पुरुषाराधनं न सिद्ध्येदित्याशंक्य तत्परिहाराय यत्पुरुषेण हविषेत्यादिमंत्रार्थं संगृह्य दर्शयति यदेत्यादिना।अस्येति विराडंतर्यामिणः तस्यैव प्रकृतत्वात् नाभौ भवं नाभ्यं तस्मात्कमलादहमासम् । यज्ञसंभारान् साधनानि पशुयूपादीनि पुरुषावयवं विना नापश्यम् ॥ २२ ॥ तदा तेषु संभारेषु साध्येषु सत्सु पुरुषावयवैरेते संभाराः संभृता इति चतुर्थेनान्वयः । वनस्पतयो यूपाः । देवयजनं यज्ञभूमिः । इदं चेति वचनाद्यज्ञार्हे स्थाने उपविष्टः कथयतीति गम्यते । बहुगुणान्वितो वसंतादिकालः ॥ २३ ॥ वस्तूनि पात्रादीनि ओषधयो व्रीह्यादयः । स्नेहा घृतादयः । रसा मधुरादयः । लोहानि सुवर्णादीनि । मृदश्च चातुर्होत्रं होत्रादिकं

"त्रिपादूर्द्ध्व उदैत्पुरुषः पादोस्येहाभवत्पुनः" इति श्रुत्यर्थो विवृतः । स्मृतिश्च 'त्रिपाद्विभूतेः' इत्यारभ्य 'श्रिया भूम्या च संवृतम् । इत्यंता संदर्भधृताऽत्रानुसंधेया ॥१९॥ उक्तलक्षणेनैकपादत्रिपाद्विभूतिर्जीव एव प्राप्नोतीत्याह विश्वमंचतीति विश्वङ् जीवः । सृती एकपादत्रिपादविभूत्योः पंथानौ विचक्रमे चलति लडर्थे लिट् । कीदृश्यौ साशनानशने भोगापवर्गप्राप्तिसाधनभूते तत्र योग्यतामाह । यद्यस्य जीवस्यैवाविद्या विद्या च अविद्यादशायामेकपादविभूतिं विद्यादशायां त्रिपाद्विभूतिं प्राप्नोति । किं तु विद्याया उपरमे लब्धया एकया भक्त्यैव 'भक्त्याहमेकया ग्राह्यः' इति भगवदुक्तेः । पुरुषः परमेश्वरस्तूभयस्याविद्याविद्यावृत्तिकमायाया आश्रय इति सृतिद्वयं तत्स्वामिकत्वात्तदधीनमेवेति भावः । एवं च "ततो विष्वङ् व्यक्रामत्साशनानशने अभि" इत्यस्यार्थो विवृतः ॥ २० ॥ तत्र त्रिपाद्विभूतिरंतरंगायाश्चिच्छक्तेर्विलास इति चिन्मय्यां तस्यमासक्त एव पादविभूतिस्तु बहिरंगाया मायाशक्तेर्विलास इति मायामय्यां तस्यामनासक्त एव परमेश्वरस्तां केवलमुपकरोतीत्याह । यस्मात्पुरुषादंडं विराट् च जज्ञे । कीदृशः भूतेन्द्रियगुणात्मकः स पुरुष ईश्वरः तदंडं द्रव्यं विराट् शरीरं चात्यगात् तत्प्रविशन्प्रकाशयन्नपि तत्रानासक्तत्वादतिक्रम्यागात् गत्वा च स्वांतरंगस्थाने त्रिपादविभूतावेव सदा स्थित इति भावः । तत्रानुरूपो दृष्टांतः गोभिः किरणैर्विश्वमातपन्प्रकाशयन्सूर्य इव स्वमंडले स्थितः ॥ २१ ॥ अत्राक्षिपतीत्थं पुरुष एव चेत्सर्वं तर्हि तदुपासकानां तत्पूजोपचारद्रव्याणां च ततः पृथक्त्वाभावात्तत्प्राप्तिसाधनं तत्परिचरणं कीदृगिति चेत्सत्यम् :। तं विना वस्तुतो वस्त्वंतराभावात्तस्य परिचरणस्यावश्यकत्वाच्च पार्थिवैर्गंधपुष्पादिभिः पृथिव्या आराधनमिव तदात्मकैरेव वस्तुभिस्तदाराधनं सिध्येदत्र तदाज्ञैव प्रमाणमिति प्रदर्शयन्स्वं दृष्टांतयति । यदास्येति ॥ २२ ॥ २३ ॥ सत्तमेति सत्पुरुषत्वात्तुभ्यमिदं

नामधेयानि मंत्राश्च दक्षिणाश्च व्रतानि च ॥ देवतानुक्रमः कल्पः संकल्पस्तंत्रमेव च ॥२५॥ गतयो मतयश्चैव प्रायश्चित्तं समर्पणम् ॥ पुरुषावयवैरेते संभाराः संभृतां मया ॥ २६ ॥ इति संभृतसंभारः पुरुषावयवैरहम् ॥ तमेव पुरुषं यज्ञं तेनैवायजमीश्वरम् ॥ २७ ॥ ततस्ते भ्रातर इमे प्रजानां पतयो नव ॥ अयजन्व्यक्तमव्यक्तं पुरुषं सुसमाहिताः ॥ २८ ॥ ततश्च मनवः काले ईजिरे ऋषयोऽपरे ॥ पितरो विबुधा दैत्या मनुष्याः क्रतुभिर्विभुम् ॥२९॥ नारायणे भगवति तदिदं विश्वमाहितम् ॥ गृहीतमायोरुगुणः सर्गादावगुणः स्वतः ॥३०॥ सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः ॥ विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक् ॥३१॥ इति तेऽभिहितं तात यथेदमनुपृच्छसि ॥ नान्यद्भगवतः किंचिद्भाव्यं सदसदात्मकम् ॥ ॥३२॥ न भारती मेंऽग मृषोपलक्ष्यते न वै क्वचिन्मे मनसो मृषा गतिः ॥ न मे हृषीकाणि पतंत्यसत्पथे यन्मे हृदौत्कण्ठचवता धृतो हरिः॥३३॥

कर्म ॥ २४ ॥ नामधेयानि ज्योतिष्टोमादीनि । ऋगादीनामुक्तत्वान्मंत्रा इति स्वाहाकारादयः । देवतानामनुक्रम उद्देशः कल्पो बौधायनादिकर्मपद्धतिग्रंथः । अनेनाहं यक्ष्य इति संकल्पः तंत्रमनुष्ठानप्रकारः ॥ २५ ॥ गतयो विष्णुक्रमाद्याः । मतयो देवताध्यानानि । प्रायश्चित्तम् । भूर्भुवः स्वरादिकृतस्य भगवति समर्पणम् ॥ २६ ॥ संभृताः संपादिताः संभारा येन सोऽहं तेनैव यज्ञेनैव । अनेन यज्ञेनं यज्ञमयजंतेति मंत्रार्थः सूचितः ॥ २७ ॥ तेन देवा अयजंतेत्यस्यार्थं सप्रपंचं दर्शयति तत इति द्वाभ्याम् । व्यक्तमिंद्रादिरूपेण अव्यक्तं स्वतः । अनेन पुरुषं जातमग्रत इत्यस्यार्थो दर्शितः ॥२८॥ काले स्वस्वावसरे॥२९ ॥ यदधिष्ठानमित्येतत्प्रश्नोत्तरार्थमुपसंहरति । नारायण इति । आहितमधिष्ठितम् । भगवत्त्वे हेतुः ॥ यः स्वतोऽगुणः सर्गादौ गृहीता मायया उरवो गुणा येन सः तस्मिन् ॥ ३० ॥ यत्परस्वमित्येतत्प्रश्नोत्तरं यदुक्तं स एष भगवान्सर्वेषां मम चेश्वर इति तदुपसंहरति । सृजामीति । पालनं तु स्वयमेव करोतीत्याह । विश्वमिति । पुरुषरूपेण विष्णुरूपेण त्रिशक्तिर्माया तां धारयतीति तथा सः ॥ ३१ ॥ यच्चेदं विश्वं यदात्मकश्च त्वमित्येवमादिसर्वप्रश्नानां सामान्योत्तरम् । यदुक्तम् । "वासुदेवात्परो ब्रह्मन्न चान्योऽर्थोऽस्ति तत्त्वतः" इति । पुरुष एवेदं सर्वमिति श्रुत्या च यद्दृढीकृतं तदुपसंहरति । इतीति । सदसदात्मकं कार्यकारणात्मकं भाव्यं सृज्यं भगवतः सकाशादन्यत् पृथक् न भवतीत्यभिहितम् ॥ ३२ ॥ यदुक्तं 'एतावत्त्वं यतो हि मे' तमविज्ञाय मामीश्वरं प्रब्रवीषि । इति तदुपपाद्योपसंहरति । न भारतीति । यद्यस्मान्मे मया औत्कंठचं भक्त्युद्रेकस्तद्युक्तेन हृदा हरिर्धृतो ध्यातः । अंग हे नारद

कथयामीति भावः ॥ २४ ॥ २५ ॥ २६ ॥ यज्ञं विष्णुम् । "यज्ञोवैविष्णुः"इति श्रुतेः । "यत्पुरुषेण हविषा" इत्यस्यार्थो ध्वनितः ॥ २७ ॥ २८ ॥ २९ ॥ गृहीता ब्रह्मादिरूपेण गुणा येन ॥ ३० ॥ ३१ ॥ प्रकरणमुपसंहरति । इतीति । सदसदात्मकं त्रिपादेकपादात्मकञ्च भगवतः सकाशादन्यत्त्वया न भाव्यं न चिंतनीयम् ॥ हे तातेति तनोतीति । तात इति व्युत्पत्तेस्त्वयैतद्विस्तार्यमिति भावः ॥ ३२ ॥ ननु त्वम् 'अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्ध्नसु'इत्यादिना त्रिगुणातीतायास्त्रिपाद्विभूतेर्नित्यत्वं ब्रूषे तथा पादविभूतेस्त्रिगुणमयप्रपञ्चस्यापि भगवतो विलज्जमानयेत्यादेर्बहिरंगमायाशक्तिकार्यत्वेनानित्यत्वेप्यमिथ्यात्वमेव प्रतिपादयसि तथा

सोऽहं समाम्नायमयस्तपोमयः प्रजापतीनामभिवंदितः पतिः ॥ आस्थाय योगं निपुणं समाहितस्तन्नाध्यगच्छं बत आत्मसंभवः ॥ ३४ ॥ नतोऽस्म्यहं तच्चरणं समीयुषां भवच्छिदं स्वस्त्ययनं सुमंगलम् ॥ यो ह्यात्ममायाविभवं स्म पर्यगाद्यथा नभः स्वांतमथापरे कुतः ॥ ३५ ॥

अतो मे वाङ्मनइंद्रियाणां वृत्तयः सत्यार्थो न तु मत्प्रभावेनेत्यर्थः ॥ ३३ ॥ अत्र स्वानुभवमेवान्वयव्यतिरेकाभ्यां प्रमाणयति द्वाभ्याम् । सोऽहं समाम्नायादिभिः सर्वोत्कृष्टोऽपि योगमाश्रित्यापि यत आत्मनो मम संभवो जन्म तमेव न ज्ञातवान् कुतोऽन्यस्य वार्ता । एतच्च तृतीयस्कंधे पद्मोद्भवे वक्ष्यते ॥ ३४ ॥ तदा समीयुषां शरणागतानां भवच्छिदं संसारनिवर्तकं स्वस्त्ययनं मंगलावहं सुमंगलं सुसेव्यं च तस्य चरणं नतोऽस्मि । ततोऽचिंत्यमहिमत्वेन ज्ञातवानस्मीति कैमुत्यन्यायेनाह । यो हीति स्वमायाविस्तारं यः स्वयमपि पर्यगात् । परिशब्दो निषेधे । एतावानिति न ज्ञातवानित्यर्थः । अपरे कुतो जानीयुः । तस्य चरणं नतोऽस्मीति पूर्वेण संबंधः । ननु सर्वज्ञः कथं न जानाति अंताभावादिति दृष्टांतेनाह । यथा स्वस्यांतं नभो नाप्नोति तद्वत् । नहि खपुष्पादर्शनं सार्वज्ञं विहंतीति भावः । तथाच वक्ष्यति "द्युपतय एव ते न ययुरंतमनं

मायिकवस्तूनां च तद्यागसाधनत्वेन सत्यत्वं व्यंजयसि । अन्ये शास्त्रविदस्तु सर्वमिदं मनोरथं विलसितत्वान्मिथ्यैव भगवतः खलु भगवत्त्वमपि तटस्थलक्षणत्वादनित्यमेव तद्धाम्नस्त्रिपाद्विभूतेः का वार्त्तेति व्याचक्षते तत्राहं कुत्र विश्वसिमि त्वद्वाचि तेषां वाचि वेत्यत आह । नभारतीति । ममेयं तुभ्यमुक्ता वाक् न मृषा तत्र हेतुः–न वा इति । सर्वत्र हेतुः औत्कंठ्ययुक्तेन मनसा मया हरिर्धृतं इति यत्र हरिस्तत्रैव सर्वं सत्यमिति मद्वाच्येव विश्वसिहि तैरन्यैः शास्त्रविद्भिरपि हरिर्मनसा न धृतोऽतोमनसस्तस्य मृषैव गतिरतस्तेषां वागपि मृषैव मिथ्यावादिनां तेषां मतं मांगीकुथा इति भावः । अत एव स्वामिचरणैरपत्यर्थ इत्यंतं व्याख्यातं मत्सामर्थ्यमत्प्रभावकृतं न किं तु हरिप्रभावकृतमिति भावः । हे अंगेति । अतीवप्रियत्वादेतद्गुह्यं मया प्रोक्तमितिभावः । वाण्यनुगमनावसरे त्वौत्कंठ्यवता हृदा हरिर्न धृतस्तत एवेंद्रियासत्पथानुगमनं जातमिति प्रतीयते "भगवद्ध्यानपूतेन मनसान्यांस्ततो सृजेत् इति" तत्रैव वक्ष्यमाणत्वात् ॥ ३३ ॥ अत्र वृत्तिसत्यार्थत्वे नमनादिना ध्यानस्य सत्त्वे सत्यार्थसत्त्वमन्वयः । ध्यानाभावे सत्यार्थाभावोत्र व्यतिरेकः । एतच्च भगवज्ज्ञानाभावश्च । अत्र विश्वनाथः–ननु ते वयमेव सर्ववेदशास्त्रतात्पर्यं विद्वांसः परमेश्वरस्वरूपं जानीमह इत्यभिमन्यंते तथैवान्यानपि युक्त्या बोधयंति चेति तत्राह–सोहं पूर्वश्लोकोक्तलक्षणः सोत्कंटहृदयदरीधृतहरिरप्यहम् । समाम्नायमय इति । प्रथममाम्नाया ममैव मुखेभ्यो निःसृता येषामर्थमन्यतेऽद्यापि जिज्ञासंत एवेति । तपोमय इति । "स्पर्शेषु यत्षोडशमेकविंशं निष्किंचनानां नृप यद्व्रनं विदुः" इति भगवदादिष्टं तपः प्रथमं मयैव तप्तमिति स्वस्य ज्ञानविज्ञाने दर्शिते भगवद्दत्तमैश्वर्यं चाह प्रजेत्यादि । तथा योगेश्वरत्वमपि मम नास्तीति न वक्तव्यमित्याह–आस्थायेति । समाहित एकाग्रीकृतचित्तोपि तं भगवंतं नाध्यगच्छं न ज्ञातवानस्मि तत्र हेतुर्यत आत्मनो मम संभवः सृष्टिरिति हंतहंत मत्सृष्टसृष्टसृष्टा अन्ये विज्ञंमन्यास्तं कथं जानीयुर्ये तु भगवत्त्वं तटस्थलक्षणं ब्रुवते ते त्वंधा एवेति भावः ॥ ३४ ॥ अहो अर्वाचीना वराका भगवत्त्वं वयं ब्रूमहे इति प्रलपंति यतो भगवानपि स्वयं स्वतत्त्वं वेदितुं न प्रभवतीति भक्त्युद्रेकेण तं प्रणमति–नत इति । समीयुषां भवच्छिदं संसारदुःखच्छेदकमित्यननुसंहितं फलं स्वस्त्ययनं स्वप्रेमसुखदायकमित्यनुसंहितम् । सुष्ठु मंगलं यस्मात्तं सुमंगलम् । अन्येषामपि कर्मिज्ञानियोगिनां तद्भक्तिमिश्रत्वं विना मांगल्याभावादिति भावः । यो हि आत्ममायाविभवं स्वयोगविस्तारं स्वयमपि पर्यगात् । परिशब्दो निषेधे एतावानिति न ज्ञातवानित्यर्थः । अपरेऽस्मदादयः कुतो जानीयुः । अत्राक्षिपति नन्विति । नभः कर्तृ इति । भाव इति । खपुष्पसत्त्वे तदज्ञानं तु सर्वज्ञत्वनाशकमस्तीत्याशयः । स्वस्यापि स्वाज्ञाने प्रमाणमाह । श्रुतिश्चेति । यः परमेश्वरोऽस्य जीवस्याध्यक्षः साक्षी

नाहं न यूयं यहतां गतिं विदुर्न वामदेवः किमुताऽपरे सुराः ॥ तन्मायया मोहितबुद्धयस्त्विदं विनिर्मितं चात्मसमं विचक्ष्महे॥३६॥ यस्यावतार कर्माणि गायंति ह्यस्मदादयः ॥ न यं विदंति तत्त्वेन तस्मै भगवते नमः ॥ ३७ ॥ स एष आद्य पुरुषः कल्पेकल्पे सृजत्यजः ॥ आत्माऽऽत्मन्यात्मनाऽऽत्मानं संयच्छति च पाति च ॥ ३८ ॥ विशुद्धं केवलं ज्ञानं प्रत्यक्सम्यगवस्थितम् ॥ सत्यं पूर्णमनाद्यंतं निर्गुणं नित्यमद्वयम् ॥३९॥

ततया त्वमपि यदंतरांडनिचया ननु सावरणाः" इत्यादि श्रुतिश्च । "यो अस्याध्यक्षः परमे व्योमन्त्सो अंग वेद यदि वा न वेद" इति ॥ ३५ ॥ एतत्प्रपंचयति नाहमिति द्वाभ्याम् । वामदेवो रुद्रः यस्य ऋतां गतिं परमार्थस्वरूपम् । किंतु इदं प्रपंचरूपं तस्य मायया विनिर्मितं विचक्ष्महे विद्मः । तदपि आत्मसमं स्वज्ञानानुरूपमेव न तु कृत्स्नम् । मोहितबुद्धय इत्ययं तदज्ञाने प्रपंचज्ञाने च हेतुः ॥ ३६ ॥ ननु सर्वेऽपि तं वर्णयंतो दृश्यंते तत्राह । यस्येति ॥ ३७ ॥ अवतारकर्माणि संक्षेपतो दर्शयंति । स एष आद्यो भगवान् यः पुरुषावतारः सन् सृष्ट्यादि करोति आत्मात्मन्यात्मनात्मानमिति कर्ता अधिकरणं साधनं कर्म च स्वयमेवेत्यर्थः । पुरुषावतारः सृष्ट्यादीनि च कर्माणीति संक्षेपोक्तिः ॥ ३८ ॥ न यं विदंति तत्त्वेनेत्युक्तं किं तत्तत्त्वमित्यपेक्षायामाह । ज्ञानं केवलं सत्यं तत्त्वम् । घटाद्याकारवृत्तिज्ञानव्यवच्छेदार्थं विशेषणानि। विशुद्धं विषयाकारशून्यम् । यतः प्रत्यक् सर्वांतरम् अत एव सम्यक् संदेहादिरहितम् अवस्थितम् स्थिरं यतो निर्गुणम् । गुणकार्यं हि गुणव्यतिकराच्चंचलं भवति । यद्यपि वृत्तिज्ञानमपि स्वरूपज्ञानमेवेति न चांचल्यादिदोषयुक्तं तथाप्यंतःकरणवृत्तिदोषैस्तथातथा भवतीति व्यवच्छिद्यते । एभिरेव विशेषणैः सत्यत्वमपि समर्थितम् । किंच यद्विकारवत्तदसत्यं दृष्टम् । न चास्य जन्मादयः षड्विकाराः संतीत्याह । अनाद्यंतं जन्मनाशरहितम् । अत एव जन्मानंतरास्तित्वलक्षणोऽपि विकारो नास्ति वृद्धिविपरि

परमे व्योमन् तिष्ठन् अंगेति संबुद्धिर्नाचिकेतं प्रति वेदात्मानमेतावानहमिति । तर्हि ज्ञानविषयत्वमागतमिति चेदाह यदिवेति ॥ ३५ ॥ ऋतां गतिं त्रिपादेकपाद्विभूतिमिति चक्रवर्ती ॥ ३६ ॥ अत्राक्षिपति—नन्विति । तत्त्वेन शक्तिस्वरूपाभ्यां याथार्थ्येन ॥ ३७ ॥ कल्पेकल्पे प्रतिमहाकल्पारंभे । इत्यर्थ इति । कर्त्ता ईश्वरः सृज्यं पाल्यं संहार्यं विश्वं तन्निमित्ता माया तदधिष्ठानं हरिरेव सर्वं तथातथा भवतीति भावः ॥ ३८ ॥ अत एव सर्वांतरत्वादेव । अत एव जन्मनाशरहितत्वादेव । अत्र संदर्भः । पुनश्च सर्वविलक्षणां शक्तिं लक्षयितुं तस्यैकस्यैव युगपत्कर्तृत्वादिकं योजयन्स्वरूपमपि तथैव लक्षयति । विशुद्धमिति—युग्मकम् । तत्र ज्ञानमिति विशेष्यं तच्च सुखस्वरूपमेव 'विज्ञानमानंदंब्रह्म' इति श्रुतेः।तस्य जीवस्वरूपविलक्षणताज्ञापकानि विशेषणान्याह—विशुद्धं केवलं विशेषेण शुद्धमेव नत्वाविद्यकमित्यर्थः।''अयमात्माऽपहतपाप्मा'' इतिश्रुतेः। ''यतः:प्रत्यक्ःसर्वतोप्यांतरं यः पृथिव्यां तिष्ठन्''इत्यारभ्य ''य आत्मानमंतरोयमयतीति श्रुतेः। अतःसम्यगक्षुभिततयैवासमंताद्व्याप्य स्थितं नत्वावृतविक्षिप्तं न वाणुपरिमाणमित्यर्थः। 'एको देवः' इत्यादिश्रुतेः । किश्च । सत्यं सर्वसत्ताप्रदस्वरूपत्वात्सत्यपदार्थानां मुख्यं न तु तदितरदित्यर्थः । ''सत्यं चामृतञ्च सत्यमेवाभवत्'' इति श्रुतेः । पूर्णं भगवत्तया संभृतं न तु तया हीनमित्यर्थः । अत एवानाद्यनंतस्वरूपवैभवं निर्गता गुणेभ्यस्सत्त्वादिभ्यो गुणा ऐश्वर्यादयः षट् यस्य तादृशं च मध्यमपदलोपी बहुव्रीहिः । 'नतस्य कार्यं करणं च विद्यते' इत्यादि श्रुतेः । अनेन तादृशस्वरूपवत्त्वं चायातम् । ''न संदृशे तिष्ठति रूपमस्य यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्'' इति श्रुतेः । सर्वसत्ताप्रदस्वरूपत्वान्नित्यमेवाद्वयं पृथग्वस्तुरहितत्वाद्द्वयरहितं चेत्यर्थः । 'एकमेवाद्वयं ब्रह्म' 'द्वितीयाद्वै भयं भवति' इति श्रुतेः । तदेवं सर्वेषां तं

ऋषे विदंति मुनयः प्रशांतात्मेंद्रियाशयाः ॥ यदा तवेवासत्तर्कैस्तिरो धीयेत विप्लुतम् ॥ ४० ॥ आद्योवतारः पुरुषः परस्य कालः स्वभावः सदसन्मनश्च ॥ द्रव्यं विकारो गुण इंद्रियाणि विराट् स्वराट् स्थास्नु चरिष्णु भूम्नः ॥४१॥ अहं भवो यज्ञ इमे प्रजेशा दक्षादयो ये भवदादयश्च ॥ स्वर्लोकपाला खगलोकपाला नृलोकपालास्तललोकपालाः ॥ ४२ ॥

णामापक्षयाश्च न संति । यतः पूर्णम् । सर्वत्र हेतुः नित्यमद्वयम् । नित्यं सर्वदा द्वैतप्रतीतिसमयेऽपि परमार्थतोऽद्वयमिति ॥ ३९ ॥ अत्र विद्वदनुभवं प्रमाणयति । हे ऋषे नारद प्रशांतात्मेंद्रियाशयाः प्रसन्नदेहेंद्रियमनसो यदा भवंति तदा विदंति । अन्यदा तदज्ञाने कारणमाह । यदा तु तदेव प्रकाशमानमेवासतां तर्कैर्विप्लुतं स्यात्तदा तिरो धीयेतेति ॥ ४० ॥ कल्पेकल्पे आत्मानं सृजतीत्युक्तं के तेऽस्य सृज्यमाना अवतारास्तानवतारान् विस्तरेणाह । आद्य इत्यादि यावत्समाप्ति । परस्य भूम्नः पुरुषः प्रकृति प्रवर्तकः यस्य सहस्रशीर्षेत्युक्तो लीलाविग्रहः स आद्योऽवतारः । वक्ष्यति हि । "भूतैर्यदा पंचभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन् । स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः" । यथोक्तम् । "विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः ॥ प्रथमं महतः स्रष्टृ द्वितीयं त्वंडसंस्थितम् ॥ तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते " ॥ इति । यद्यपि सर्वेषामविशेषेणावतारत्वमुच्यते तथापि कालश्च स्वभावश्च सदसदितिकार्यकारणात्मिका प्रकृतिश्चैताः शक्तयः मनआदीनि कार्याणि ब्रह्मादयो गुणावताराः दक्षादयो विभूतय इति विवेक्तव्यम् । मनो महत्तत्वं द्रव्यं महाभूतानि । क्रमोऽत्र न विवक्षितः । विकारोऽहंकारः । गुणः सत्त्वादिः । विराट् समष्टिशरीरं स्वराट् वैराजः स्थास्नु स्थावरं चारिष्णु जंगमं च व्यष्टिशरीरम् ॥ ४१ ॥ अहं ब्रह्मा भवो रुद्रः यज्ञो विष्णुः दक्षादयो य इमे प्रजेशाः तललोकपालाः पातालाधिपतयः॥ ४२॥

न्मूलत्वेप्यास्ति भिन्नं स्वरूपवैलक्षण्यमन्यथा न यं विदंति तत्त्वेनेति विशेषोक्तिर्व्यर्थी स्यात् अन्यपक्षपातितानामवेद्यत्वे हेतुमाह–प्रशांता भगवन्निष्ठा आत्मादयो येषां त एव तद्विदंति असत्तर्कैः । "योऽनादृतो नरकभाग्भिर सत्प्रसंगैः" इति वक्ष्यमाणतृतीयगतमदुक्तदिशा तादृशतद्रूपादिकुतर्कैश्च विप्लुतं सद्यत्तिरोधीयेतेति तदेवमनेन पद्यचतुष्केण तादृशस्वरूप एव भगवांस्तादृशशक्त्या तद्रूपः सन्नवतारादिकं करोति तत्र तत्तदज्ञास्तत्तद्धायंतोपि न सुखं प्राप्नुवंति यतस्तत्तद्विज्ञाने चाधिकृत्य 'परिनिष्ठितोपि नैर्गुण्ये' इत्यादिकं बहुतरं गीयत इति व्यंजितम् । विश्वनाथस्तु–ननु 'न यं विदंति तत्त्वेन' इति भगवंतं युष्मदादयो न विदंति किं तु तस्य यन्निर्विशेषस्वरूपं श्रूयते तद्विदंति न वेति जिज्ञासायामाह–विशुद्धमिति । तत्र ज्ञानमिति विशेष्यं तच्च सुखरूपमेवं 'विज्ञानमानंदं ब्रह्म' इति श्रुतेः । केवलमद्वितीयमत एवोपाध्यभावाद्विशुद्धं तत एव सर्वांतरत्वात्प्रत्यक् तदपि समंताद्व्याप्यैव स्थितत्वात्सम्यगवस्थितं, व्याप्तिरपि सर्वत्र सत्तारूपेणैवेति सत्यं, तारतम्याभावात्पूर्णं, जन्मादिविकाराभावादनाद्यनंतं, सत्त्वादिगुणसंसर्गाभावान्निर्गुणं, सर्वकालमेकरूपतयैव स्थायित्वान्नित्यं, द्वितीयाभावादद्वयम्। ऋषे हे नारदेति। एतादृग्ज्ञानवत एवर्षित्वं भवतीति भावः । मुनयो मननशीला यदा प्रशांतात्मेंद्रियाशया भवंति तदा तद्विदंति अन्यथाऽसत्तर्कैर्विप्लुतं तदेव वस्तु तिरोधीयेत एतेन तस्य निर्विशेषस्वरूपं यद्ब्रह्म तत्कथंचिदपि ज्ञातुं शक्यं न तु सविशेषस्वरूपमित्युक्तम्।एवमेव'त्रिबोद्धुमर्हत्यमलांतरात्मभिः'इत्यादिना दशमस्कंधेपि वक्ष्यते इति॥३९॥४०॥ 'स एष आद्यःपुरुषः'इत्येकेन श्लोकेनोक्तं पुरुषावतारं तत्कर्म च विवृणोति सार्द्धैश्चतुर्भिः।परस्य परव्योमाधिनाथस्य भगवत आद्यः प्रथमोऽवतारः पुरुषः प्रकृतीक्षणकर्त्ता कारणार्णवशायी।'जगृहे पौरुषं रूपं भगवान्' इति प्रथमोक्तेः । कालस्वभावादयश्च तस्य कर्मोच्यते 'कल्पेकल्पे सृजत्यजः।आत्मात्मन्यात्मनात्मानम्' इत्युक्तेः।स एकोपि मायाशक्त्या नाना

गंधर्वविद्याधरचारणेशा ये यक्षरक्षोरगनागनाथाः ॥ ये वा ऋषीणामृषभाः पितॄणां दैत्येंद्रसिद्धेश्वरदानवेंद्राः ॥ अन्ये च ये प्रेतपिशाचभूतकू
ष्मांडयादोमृगपक्ष्यधीशाः ॥ ४३ ॥ यत्किंच लोके भगवन्महस्वदोजःसहस्वद्बलवत्क्षमावत् ॥ श्रीह्रीविभूत्यात्मवदद्भुतार्णं तत्त्वं परं रूपवदस्व
रूपम् ॥ ४४ ॥ प्राधान्यतो यानृष आमनंति लीलावतारान्पुरुषस्य भूम्नः ॥ आपीयतां कर्णकषायशोषाननुक्रमिष्ये त इमान्सुपेशान् ॥४५॥
इति श्रीभा० म० द्वि० विराड्विभूतिपुरुषसूक्तार्थवर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥ ब्रह्मोवाच ॥ ॥ यत्रोद्यतः क्षितितलोद्धरणाय बिभ्र
त्क्रौडीं तनुं सकलयज्ञमयीमनंतः ॥ अंतर्महार्णव उपागतमादिदैत्यं तं दंष्ट्रयाऽद्रिमिव वज्रधरो ददार ॥ १ ॥

गंधर्वादीनामीशाः यक्षादीनां नाथाः । रक्षोरगेति संधिरार्षः । ऋषीणां पितॄणां च श्रेष्ठाः प्रेतादीनामधीशाः ॥ ४३ ॥ किं बहुना यत्किंचिद्भगवदादि तत्सर्वं परमेव तत्त्वमि
त्यन्वयः । भगवदैश्वर्ययुक्तं महस्वत्तेजोयुक्तम् ओजःसहसी इंद्रियमनःशक्ती तद्युक्तं बलं दाक्ष्यं श्रीः शोभा ह्रीरकर्मजुगुप्सा विभूतिः संपत्तिः आत्मा बुद्धिस्तद्युक्तमर्णो
वर्णः अद्भुतार्णमाश्चर्यवर्णमित्यर्थः । रूपमेव स्वरूपं रूपवत्प्रशस्तरूपयुक्तम् । स्वरूपं यत्तत्सर्वं परं च तत्त्वं तद्विभूतिरित्यर्थः ॥ ४४ ॥ शुद्धसत्त्वावतारान्वक्तुमाह । प्राधान्यत
इति । असत्कथाश्रवणैर्ये कर्णयोः कषाया मलास्तान् शोषयंतीति तथा तान् । सुपेशान् सुंदरान् । सकारलोपश्चार्षः । हे ऋषे ते तुभ्यमनुक्रमिष्ये तदनुक्रमेणामृतं त्वया
पीयतामित्यर्थः । यद्वा पीयतामिति शत्रंतम् । आपिबता कर्णकषायशोषानित्यर्थः ॥ ४५ ॥ इति श्रीमद्भागवते द्वितीयस्कंधे टीकायां षष्ठोऽध्यायः ॥ ६ ॥ छ ॥
सप्तमे भगवल्लीलावतारा ब्रह्मणोदिताः । नारदाय तु तत्कर्मप्रयोजनगुणैः सह ॥ १ ॥ यत्र यदा क्षितितलोद्धरणार्थं वाराहीं तनुं बिभ्रत्सन्नुद्यतोऽनंतः तदा तं सुप्रसिद्धं हिर

भत्रेदित्यर्थः । सदसत्कार्यकारणात्मकं सर्वं विश्वमेव तदेव विवृणोति मन इत्यादि । क्रमोऽत्र न विवक्षितः ॥ ४१॥ ४२ ॥ ४३ ॥ रूपवत्साकारमस्मदादिपरम् अरूपवन्निराकारं कालादिकं चेति द्विविधं भगवद्रूपमपि अस्व
रूपं न भगवतः स्वरूपं तस्य स्वरूपशक्तिविलासत्वाभावादित्यर्थः एवं कालादीनां पुरुषावतारस्य कर्मरूपत्वेपि ते शक्तयः ब्रह्मादयो गुणावताराः प्रजापत्यादयो विभूतयोन्ये केचिज्ज्ञानिनो योगिनः कर्मिणो मूढाश्च
स्थावरजंगमाश्च सर्वे पुरुषावतारस्य सृष्ट्यादिलीलापरिकरा ज्ञेया इति विश्वनाथः । परस्य भूम्नस्स्वरूपेण शक्त्या च सर्वातिशायिनः अवतारः प्राकृतवैभवे स्वेच्छयाविर्भावः कालादयः परमेव तत्त्वमिति सार्द्धै
श्चतुर्भिरन्वयः यज्ञस्य साक्षादवतारत्वेन ब्रह्मभवयोरावेशावतारत्वेनान्येषां शक्तितत्कार्यरूपत्वेन तदवतारतारत्वमिति संदर्भः ॥ ४४ ॥ सुपेशश्शब्दे सलोपश्चार्ष इत्यर्थः । केचित्तु ललोपमार्षमाहुस्तन्मते सुपेशलशब्दोस्ती
त्यर्थः । हे ऋष इति । तदर्षित्वसंपादनायैव तुभ्यं वदामि त्रिकालज्ञस्यैवार्षिशब्दवाच्यत्वप्रसिद्धेरिति भावः । इत्यर्थ इति । पा पाने इत्यस्मात्कर्मणि लोट् संभवत्वादन्यदप्याह । यद्वेति । पीङ् पाने इति दैवादिकाच्छतृप्रत्यय आर्ष
इत्यर्थ इत्यस्यायं भावः । संदर्भः किं बहुना एतदर्थमेवास्य महापुराणस्याविर्भाव इति। 'भवतानुदितप्रायं'यशो भगवतोमलम्'इत्यादौ'समाधिनानुस्मर तद्विचेष्टितम्'इत्यादौ च दर्शितम्।सा च भगवतो लीला द्विविधा सृष्ट्या
दिरूपा लीला विनोदरूपा च तयोरुत्तरा तु प्रशस्ततरेत्याशयेनाह। प्राधान्यतो यानृष इति । यद्यपि पूर्वम् 'आद्योवतारःपुरुषःपरस्य' इत्यादिग्रंथेन पुरुषं कालादितच्छक्तिं मनआदि तत्कार्यं ब्रह्मादि तद्गुणावतारान् दक्षादितद्वि
भूतीश्चोक्तवानस्मि तेन च सृष्ट्यादिलीलास्तथापि यान् हे ऋषे पुरुषस्य भूम्नो लीलावतारान् प्राधान्येनामनंति तानेव ते इमान्मम हृदयाधिरूढान् कर्णकषायशोषान् तदितरश्रवणरागहंतॄन् किंच सुपेशान् परममनोहरान्
अनुक्रमिष्ये तदनुक्रमणं सम्यक्पीयताम् ॥ ४५ ॥ इति श्रीभागवतभावार्थदीपिकाप्रकाशे द्वितीयस्कंधे षष्ठोऽध्यायः ॥६॥ तेषामवताराणां कर्मगुणप्रयोजनैः ॥ (१) ॥ विरोधपरिहाराय व्याख्यांतरमाह । यद्वेति । तत्र करेण

जातो रुचेरजनयत्सुयमान्सुयज्ञ आकूतिसूनुरमरानथ दक्षिणायाम् ॥ लोकत्रयस्य महतीमहरद्यदाऽऽर्तिं स्वायंभुवेन मनुना हरिरित्यनुक्तः ॥ २ ॥
जज्ञे च कर्दमगृहे द्विज देवहूत्यां स्त्रीभिः समं नवभिरात्मगतिं स्वमात्रे ॥ ऊचे ययाऽत्मशमलं गुणसंगपंकमस्मिन्विधूय कपिलस्य गतिं प्रपेदे ॥३॥
अत्रेरपत्यमभिकांक्षत आह तुष्टो दत्तो मयाहमिति यद्भगवान्स दत्तः ॥ यत्पादपंकजपरागपवित्रदेहा योगर्द्धिमापुरुभयीं यदुहैहयाद्याः ॥४॥ तप्तं
तपो विविधलोकसिसृक्षया मे आदौ सनात्स्वतपसः स चतुःसनोऽभूत् ॥ प्राक्कल्पसंप्लवविनष्टमिहात्मतत्त्वं सम्यग्जगाद मुनयो यदचक्षतात्मन् ॥५॥

ण्याक्षं दंष्ट्रया ददार ॥ १ ॥ यज्ञावतारमाह । रुचेः प्रजापतेः सकाशात्तद्भार्याया आकूतेः सूनुः सुतः सुयज्ञो नाम जातः स च स्वभार्यायां दक्षिणायां सुयमाख्यान्देवानज नयत् । स एवेंद्रः सन्यदार्तिमहरत्तदा पूर्वं सुयज्ञ इत्युक्तोऽप्यनु पश्चान्मनुना मातामहेन हरिरित्युक्तः । अनेन देवोत्पादनं लोकत्रयार्तिहरणं च तस्य कर्म दर्शितम् । एवं सर्वत्रावतारस्तत्कर्म च ज्ञेयम् ॥ २ ॥ कपिलावतारमाह । कर्दमस्य प्रजापतेर्गृहे च तद्भार्यायां देवहूत्यां जज्ञे नवभिः स्त्रीभिर्भगिनीभिः सह । स च स्वमात्रे आत्मगतिं ब्रह्मविद्यामुक्तवान् ययात्मगत्या साऽऽत्मनः शमलं मलिनीकरणं गुणसंगरूपं पंकमस्मिन्नेव जन्मनि विधूय कपिलस्य गतिं मुक्तिं प्राप्तवती ॥ ३ ॥ दत्तात्रेयावतारमाह । मया अहमेव तुभ्यं दत्त इति यद्यत आह ततः स नाम्ना दत्तो जातः । स्वभक्तेभ्यो योगैश्वर्यदानं तच्चरितं दर्शयति । यस्य पादपंकजयोः परागस्तेन पवित्रा देहा येषां ते उभयीं मैहिकीमामुष्मिकीं च भुक्तिमुक्तिरूपां वा ॥ ४ ॥ कुमारावतारमाह । मे मयादौ यत्तपस्तप्तं तस्मात्स्वतपसो मत्तपसो हेतोः स हरिश्चतुःसनोऽभूत् सनत्कुमारः सनकः सनंदनः सनातन इति चत्वारः सनशब्दा नाम्नि यस्य सः । कथंभूतात्स्वतपसः सनादखंडितात् । यद्वा । स्वतपसः सनाद्दानात् समर्पणादित्यर्थः । षणु दाने धातुः । स च पूर्वक ल्पस्य संप्लवे प्रलये विनष्टमुच्छिन्नसंप्रदायमात्मत्वमिहास्मिन्कल्पे सम्यग्जगादोक्तवान् । सम्यक्त्वं दर्शयति । यद्गदितमात्रमेव मुनय आत्मन् आत्मनि मनस्यचक्षत साक्षा

कर्णमूलेहन्नित्यत्र चक्रवर्ती तु प्रथमं करेण ततो दंष्ट्रया च ददारेति ज्ञेयम् । वराहावतारे प्रमाणमाह। "यस्य रूपं बिभ्रदिमामविंदद्गुहां प्रविष्टां शरीरस्य मध्यतः" इत्याधाने वराहसंभारेण विनियुक्तान्मंत्रतः प्रतीयते । यस्य व राहस्य रूपं बिभ्रदीश्वरः इमां पृथिवीं गुहां गूढस्थाने सलिलस्य मध्ये प्रविष्टामविन्दल्लब्धवानिति श्रुतेरर्थः ॥ १ ॥ २ ॥ यथाहमपि ब्रह्मोद्भूतत्वात्तादृशोस्म्यहो श्रीकपिलो हि क्षीरशंखन्यायेन ब्राह्मणत्वे सति भगवदवतारत्वाद तीवोत्कृष्टोस्तीति संभावयमानं नारदं प्रति ब्रह्माह त्वमपि तादृशएवेति द्विजपदेन ध्वनितं यद्यपि द्विजपदं त्रिवर्णे शक्तं तथापि 'द्विजराजश्शशधरः' इत्यत्र द्विजपदस्य ब्राह्मण एव मुख्या शक्तिरस्ति "सोमोऽस्माकं ब्राह्मणा नां राजा" इति श्रुतिबलात् ॥ ३ ॥ दत्तात्रेयावतारप्रतिपादिका श्रुतिरपि । "यं वै सूर्यं स्वर्भानुस्तमसाविध्यदासुरः अत्र यस्तमन्वविंदन्न ह्यन्येशक्नुवन्" इति । अस्या अर्थः सूर्यमात्मानं स्वर्भानुर्माया तमसा विपर्ययेणा विध्यत् जीवत्वमनयत् । अत्रेरपत्यान्यत्रयो दत्तात्रेयः बहुत्वं पूजार्थमग्रे स्पष्टम् । तेषां मध्ये हैहयं तु प्राप्तयोगर्द्धिकमपि महापराधत एव हेतोः कुप्यंच्छ्रीपरशुरामो जघानेति ज्ञेयम् ॥ ४ ॥ सनशब्दस्याखं डितार्थौ प्रसिद्धिं

धर्मस्य दक्षदुहितर्यजनिष्ट मूर्त्यां नारायणो नर इति स्वतपःप्रभावः ॥ दृष्ट्वात्मनो भगवतो नियमावलोपं देव्यस्त्वनंगपृतना घटितुं न शेकुः ॥ ॥ ६ ॥ कामं दहंति कृतिनो ननु रोषदृष्ट्या रोषं दहंतमपि ते न दहंत्यसह्यम् ॥ सोऽयं यदंतरमलं निविशन्बिभेति कामः कथं नु पुनरस्य मनः श्रयेत ॥७॥ विद्धः सपत्न्युदितपत्रिभिरंति राज्ञो बालोऽपि सन्नुपगतस्तपसे वनानि ॥ तस्मा अदाद्ध्रुवगतिं गृणते प्रसन्नो दिव्याः स्तुवंति मुनयो यदुपर्यधस्तात् ॥८॥ यद्वेनमुत्पथगतं द्विजवाक्यवज्रविप्लुष्टपौरुषभगं निरये पतंतम् ॥ त्रात्वाऽर्थितो जगति पुत्रपदं च लेभे दुग्धा वसूनि वसुधा सकलानि येन ॥ ९ ॥

दपश्यन् ॥ ५ ॥ नरनारायणावतारमाह । धर्मस्य पत्न्यां दक्षदुहितरि मूर्तिसंज्ञायां नारायणो नर इति मूर्तिद्वयेन जातः । कथंभूतः । स्वोऽसाधारणस्तपःप्रभावो यस्य । तदेवाह । अनंगस्य पृतना देव्योऽप्सरसो भगवतः सकाशादात्मनः स्वप्रतिरूपा उर्वश्याद्याः स्त्रीर्दृष्ट्वा तस्य नियमावलोपं व्रतभंगं घटितुं साधयितुं न शेकुः । यद्वा । आत्मनः स्वस्य यो नियमस्तपोनाशरूपस्तस्यावलोपं तत्र दृष्ट्वा भगवतस्तं घटयितुं न शेकुरिति । एतच्चाख्यानमेकादशे भविष्यति ॥ ६ ॥ यत्र कामविजयी क्रोधोपि बिभेति तत्र कामो न प्रभवतीति किं वक्तव्यमित्याह । काममिति । कृतिनः श्रीरुद्रप्रमुखा रोषयुक्तया दृष्ट्या कामं दहंति । रोषं त्वात्मानं दहंतमपि तेऽपि न दहंति क्रोधे नाभिभूयंत इत्यर्थः । नु अहो सोऽयं रोषो यदंतरं यन्मध्यं प्रविशन्नलं बिभेति । यद्वा । यस्यांतर्मनः । कथंभूतम् । अमलं निर्मलं शुद्धसत्त्वात्मकं प्रविशान्निति ॥ ७ ॥ चारित्रेणैव कमप्यवतारं सूचयति । मातुः सपत्न्याः उदितान्युक्तानि वाक्यान्येव पतत्रिणो बाणास्तैर्विद्धो ध्रुवो राज्ञ उत्तानपदोंऽति समीपे तपसे तपस्तस्मै ध्रुवगतिं ध्रुवपदम् । यत यामुपरि स्थितामधस्तात्स्थिताः दिवि भवा दिव्याः सप्तर्षयः स्तुवंति । यद्वा उपरि भृग्वादयः अधस्तात्सप्तर्षय इति ॥ ८ ॥ पृथ्ववतारमाह । यद्यदा ऋषिभिरर्थितः अवतरितुं प्रार्थितस्तदा वेनदेहादवतीर्णः तं त्रात्वा अन्वर्थं तत्पुत्र इति पदं नाम लेभे । "पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः॥तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा॥"

मत्वाह । यद्वेति । संदर्भस्तु—आदौ प्रथमं सनात् तन्नामाऽभवत् 'सनात्सनातनतमः' इति विष्णुसहस्रनामसु श्रवणात् ॥५॥ अवलोपमित्यत्र भागुरिमतेऽवेत्यस्याकारलोपे पुनर्नञा समासेऽवलोपमिति सिद्धम् । संभवत्वादर्थांतरमाह । यद्वेति । तत्र भगवति तं नियमावलोपम् ॥ ६ ॥ इत्यर्थ इति । क्रोधः कामाद्बलीयानिति भावः ॥ ७ ॥ अत्र विश्वनाथः—पृश्निगर्भावतारमाह । विद्ध इति । ध्रुवगतिं नित्यस्थलविशेषमित्यर्थः । मुनिशब्दो न केवलं सप्तर्षिपरमेवेति तत्राह—यद्वेति । वासुदेवावतारोयं पृश्निगर्भो ज्ञेयः । "त्वमेव पूर्वसर्गेभूः पृश्निः स्वायंभुवे सति । तदायं सुतपा नाम प्रजापतिरकल्मषः ॥ अहं सुतो वामभवं पृश्निगर्भ इति स्मृतः" इति दशमे कर्माश्रवणादत्र तु जन्माश्रवणात् जन्मकर्मणोः परस्परसापेक्षत्वादेकत्र संगतेरौचित्यात् तदुक्तं भागवतामृते "अस्यात्र चारितानुक्त्या नामानुक्त्या च तत्र वै ॥ परस्परमपेक्षित्वाद्युक्ता चैकत्र संगतिः" इति।न चात्र ध्रुवार्थं वैकुंठान्नारायण एवागतस्तेन पृथगेवायं ध्रुवप्रियोऽवतार इति वाच्यं, तदुक्तं तत्रैव—"तत्रागमनमात्रेण यदि स्यादवतारता । अन्यत्रापि प्रसज्जेत यथेष्टं तत्प्रकल्पना" इति । केचित्तु श्रीवासुदेवोयं ध्रुवार्थमवतीर्णः यः खलु ध्रुवलोकाधिष्ठातेति गम्यते तस्य तु द्वादशाक्षरविद्योपासनया तल्लोकप्राप्तेस्तद्भक्तत्वमेव "ययोत्तानपदः पुत्रो ध्रुवः कृष्णपरायणः" इत्याद्युक्तेरित्याहुः ॥ ८ ॥ पुन्नयः पुन्नामकेभ्यो नरकेभ्यो यतः पितरं

नाभेरसावृषभ आस सुदेविसूनुर्यो वै चचार समदृग्जडयोगचर्याम् ॥ यत्पारमहंस्यमृषयः पदमामनंति स्वस्थः प्रशांतकरणः परिमुक्तसंगः॥१०॥

इति हि पुत्रपदव्युत्पत्तिः । कथंभूतम् । द्विजानां शापवाक्यमेव वज्रं तेन विप्लुष्टं दग्धं पौरुषं भगमैश्वर्यं च यस्य तम् । चरित्रांतरमाह । येन च जगति जगदर्थे वसूनि अन्नादिद्रव्याणि दुग्धा ॥ ९ ॥ ऋषभावतारमाह । असौ हरिर्नाभेराग्नीध्रपुत्रात्सुदेव्याः सूनुरास । नाभेर्भार्याया मेरुदेव्याः एव सुदेवीत्यपि संज्ञा । जडवद्योगेन नित्यसमाधिना चर्याम् । यदिति । याम् चर्यां पारमहंस्यं परमहंसप्राप्यं पदम् । तत्र हेतुः। समदृक् । तत्रापि हेतुः । स्वस्थः स्वस्वरूपे स्थितः। यतः प्रशांतेंद्रियः। तत्कुतः।यतः परि

त्रायतेऽतः पुत्र इति । पुन्नामकानरकाविंशतिसंख्याका वामनपुराणे प्रोक्तास्तथाहि–परदाराभिगमनं पापिसंगः पारुष्यं सर्वत्रेति प्रथमो नरकः । अत्र नरकपदं नरकसाधनपरम् । परदाराभिगमादिजन्यनरकेभ्यस्तत्त सूर्यादिभ्यः पातीति पुत्र इति भावः । एवमग्रेपि एषां पवर्गमारभ्य मातृकास्थदीर्घौंकारपर्यंतगणनात्पुन्नामकत्वमिति । फलस्तेयफलहीनाटनवृक्षजातीयच्छेदनं द्वितायः ॥२॥ वर्ज्यादानावध्यावधबंधनबांधववादस्तृतीयः ॥३॥ भूतमात्रभयदानं भूतिनाशनं भ्रंशनं निजधर्मतश्चतुर्थः ॥ ४ ॥ मारणमित्रकौटिल्यमिथ्योक्तिमिष्टैकाशनानि पञ्चमः ॥ ५ ॥ योगनाशनयवादिफलहरणयानयुग्यहरणानि षष्ठः ॥ ६ ॥ राजभागहरण–राजस्त्रीसंग–गताहितार्चितनानि सप्तमः ॥ ७ ॥ लुब्धत्व–लोलुपत्व–लब्धधर्मार्थनाशनान्यष्टमः ॥ ८ ॥ वेदब्राह्मणानिंदन–ब्रह्महरण–विप्रोत्कर्षासहन–विरुद्धाचरणानि नवमः ॥ ९ ॥ शिष्टाचारविनाश–शिष्टद्वेष–शिशुवधशास्त्रस्तेयानि दशमः ॥ १० ॥ षडंगवेदानंगीकारं–षाड्गुण्यनीतिपरित्यागावेकादशः ॥ ११ ॥ सन्निन्दा–सदाचारलंघनपुरस्सरानाचारस्वीकार–संस्कारत्यागा द्वादशः ॥ १२ ॥ हानिश्चतुर्वर्गविधेर्हेयसंग्रहादिस्त्रयोदशः ॥ १३ ॥ क्षपणकसंग–तन्मतस्वीकारः–क्षयाहत्यागक्षेत्रहरणादिश्चतुर्दशः ॥ १४ ॥ अज्ञसंगासत्योक्त्यसूयाशौचाशुभावहप्रवृत्तयः पंचदशः ॥ १५ ॥ आलस्यासत्कर्मत्यागार्यावर्त्तीयधर्मानंगीकाराचार्यासेवननिंदाश्रमधर्मत्यागादिः षोडशः ॥१६॥ इच्छा परदारधनादेः सप्तदशः ॥१७॥ ईर्ष्या शास्त्रेष्वष्टादशः ॥१८॥ उद्धतत्वमेकोनविंशः ॥१९॥ ऊर्द्धं स्थितिर्गुरुपित्रादेरूतिवृद्धिर्विंशः ॥२०॥ एते पुन्नामकाः पुदित्यत्र तपरकरणमादिदुदित्यादिवत् ऊतिर्वासना सा चेह मंदा ज्ञेया "पुन्नामनरकं घोरं विनाशयति सर्वतः । एतस्मात्कारणात्साध्यस्ततः पुत्रेति गद्यते । "शेषेभ्यो रक्षणाच्छिष्यः पापेभ्यः परिकीर्त्तितः । घृतादिविक्रयो घोरश्चांडालादिपरिग्रहः ॥ स्वदोषाच्छादनं पापं परदोषप्रकाशनम् । इत्यादीनि च पापानि शेषसंज्ञानि वै विदुः ॥ यो गुरुं रक्षते तेभ्यः स शिष्यः परिकीर्त्तितः । तस्माच्छिष्यश्च पुत्रश्च विधातव्यौ प्रयत्नतः ॥ शिष्याच्छ्रेष्ठतरः पुत्रः सुमार्गनिरतो यदि । विमार्गगावुभौ त्याज्यौ यदुक्तनिरयप्रदौ ॥ विष्णुभक्तियुतौ कार्यौ प्रयत्नेन सुधीमता ॥" इति सर्वं वामनपुराणे विततमस्तीति । वाराहे तु "ऐहिकामुष्मिकं दुःखं पुदिति प्रोच्यते ततः । त्राति पुत्र इति ज्ञेयः पुद्दः प्रोक्तस्ततोन्यथा" ॥ ऐहिकं क्षुत्पिपासाशीतोष्णज्वरादि । आमुष्मिकं नरकपातादीति विवेकः । जगति भूलोके पुत्रपदं मथितवेनभुजोत्पन्नत्वात्पुत्रेण प्राप्यं राज्यं लेभे इति तीर्थः । जगतीति निमित्ते सप्तमी अत आह । जगदर्थमिति । संदर्भस्तु 'भगवन्निंदया वेनो द्विजैस्तमसि पातितः' इति सप्तमस्कधोक्तेर्वेनस्य पितुनारदात्कदाचिन्नरकभोगोत्तरं कुष्टिम्लेच्छत्वप्राप्तिं श्रुत्वा तमानीय कुरुक्षेत्रांतर्गतपृथूदकतीर्थे स्नपनादिना विशोध्य यातनाभोगादुद्धारेति वामनपुराणीयकथामप्याह ॥ ९ ॥ तत्र पारमहंस्यपदत्वे । तत्रापि समदृक्त्वेपि । तत्प्रशांतेंद्रियत्वम् ॥ १० ॥

सत्रे ममास भगवान्हयशीरषाऽथो साक्षात्स यज्ञपुरुषस्तपनीयवर्णः ॥ छंदोमयो मखमयोऽऽखिलदेवतात्मा वाचो बभूवुरुशतीः श्वसतोऽस्य नस्तः ॥११॥ मत्स्यो युगांतसमये मनुनोपलब्धः क्षोणीमयो निखिलजीवनिकायकेतः ॥ विस्रंसितानुरुभये सलिले मुखान्मे आदाय तत्र विजहार ह वेदमार्गान् ॥१२॥ क्षीरोदधावमरदानवयूथपानामुन्मथ्नताममृतलब्धय आदिदेवः ॥ पृष्ठेन कच्छपवपुर्विदधार गोत्रं निद्राक्षणोऽद्रिपरिवर्तकषाण कंडूः ॥१३॥ त्रैविष्टपोरुभयहा स नृसिंहरूपं कृत्वा भ्रमद्भ्रुकुटिदंष्ट्रकरालवक्त्रम् ॥ दैत्येंद्रमाशु गदया भिपतंतमारादूरौ निपात्य विददार नखैः स्फुरंतम्॥१४॥अंतःसरस्युरुबलेन पदे गृहीतो ग्राहेण यूथपतिरंबुजहस्त आर्तः॥आहेदमादिपुरुषाखिललोकनाथ तीर्थश्रवःश्रवणमंगलनामधेय॥१५॥

तो मुक्तसंगः ॥१०॥ हयग्रीवावतारमाह । सत्र इति । अथो इत्यर्थांतरे । स एव साक्षाद्भगवान्मम ब्रह्मणः सत्रे यज्ञे हयशीर्षा आस । तपनीयं सुवर्णं तद्वद्वर्णो यस्य । छंदोमयो वेदमयस्तद्विधेया ये मखास्तन्मयः अमृतमय इति वा पाठः । मखैर्यजनीया अखिला देवतास्तदात्मा च । अस्य श्वसतः श्वासं मुंचतो नस्तो नासापुटादुशतीरुशत्यः कमनीया वेदलक्षणा वाचो बभूवुः ॥ ११ ॥ मत्स्यावतारमाह । मत्स्यो भाविना वैवस्वतेन मनुना दृष्टः क्षोणीमयः पृथ्वीप्रधानः तदाश्रय इत्यर्थः । अत एव निखिलजीवनिकायानामाश्रयः मे मुखाद्विस्रंसितान् गलितान्वेदस्य मार्गान्वेदानादाय तत्र युगांतसलिले विजहार । ह हर्षेण ॥ १२ ॥ कूर्मावतारमाह । क्षीरोदधौ कच्छपवपुः सन्गोत्रं मंथनार्थं मंदरगिरिं पृष्ठेन विधृतवान् । कदा अमृतलब्धये क्षीराब्धिमुन्मथ्नतां सताम् । निद्रायाः क्षणोऽवसर उत्सवो वा यस्य सः । निद्रावसरः कुतस्त्राह । अद्रेः परिवर्तः परिभ्रम एव कषाणः कषणं घर्षणं सुखप्रदो यस्यां सा कंडूर्यस्य सः । यद्वा । अद्रिपरिवर्त एव कषः कषणं तेन अणति अपयातीति कषाणा कंडूर्यस्य ॥ १३ ॥ श्रीनृसिंहावतारमाह । त्रैविष्टपा देवास्तेषामुरुभयं हंतीति तथा स भगवान् । यद्वा । त्रैविष्टपा देवास्तेषामप्युरुभयं यस्मात्तादृशो हासो यस्य तन्नृसिंहरूपम् अथवा हिरण्यकशिपो राज्यकाले त्रैविष्टपा दैत्यास्तेषामुरुभयजनको हासो यस्मिंस्तत्त्रैविष्टपोरुभयहासं तच्च तन्नृसिंहरूपं कृत्वा । कथंभूतं भ्रमंत्यौ भ्रुकुट्यौ दंष्ट्राश्च यस्मिंस्तत् करालं वक्त्रं यस्मिंस्तत् दैत्येंद्रं स्फुरंतमारात्समीप एव गदयोपलक्षितमभिपतंतं तं नखैर्विददार ॥ १४ ॥ हरिसंज्ञकावतारमाह । अंतरिति युगलेन । गजयूथस्य

'तपनीयं रूप्यहेम्नोः' इत्यभिधानात् । तद्विधेया वेदविहिताः "अस्य वै महतो भूतस्य निश्वसितं यदृग्वेदः" इत्यादिश्रुतेः ॥ ११ ॥ इत्यर्थ इति । पृथ्वीरूपनौधारणात्तदाश्रयो "नाव्यारोप्य महीमय्याम्" इत्युक्तेरिति भावः । अत एव पृथिव्याश्रयत्वादेव मृग्यंते जलेऽन्विष्यंते श्रीहरिणा मुनिभिर्वेति मार्गाः । वेदाश्च ते मार्गाश्चेति वेदमार्गास्तान् । अत एव स्वामिचरणैर्वेदानिति व्याख्यातम् । मृग्यते परमात्मा येषु ते मार्गा वेदाः "यद्दर्शनं निगम आत्मरहःप्रकाशम्" इति मार्कंडेयोक्तेः ॥ १२ ॥ निद्रावसरे हेतुं पृच्छति—कुत इति । कषणशब्दस्य सुखप्रदत्वार्थेऽप्रसिद्धेराह—यद्वेति । अपयाति नश्यति ॥ १३ ॥ श्लेषेणार्थांतरमाह । यद्वेति । ननु देवास्तु जानंत्येवास्मत्प्रार्थनयैवैतादृग्रूपं धृतं तत्राह—अथ वेति ॥ १४ ॥ आदिपुरुषेति । त्वन्तु आदित एव पुरुषाकारोहं तु पुरुषोपि संप्रति पापाद्गजाकार एवेति भावः । अखिललोकनाथस्य ते ममापि नाथत्वान्मां पातुमर्ह

श्रुत्वा हरिस्तमरणार्थिनमप्रमेयश्चक्रायुधः पतगराजभुजाधिरूढः ॥ चक्रेण नक्रवदनं विनिपाट्य तस्माद्धस्ते प्रगृह्य भगवान्कृपयोज्जहार ॥१६॥ ज्यायान्गुणैरवरजोऽप्यदितेः सुतानां लोकान्विचक्रम इमान्यदथाधियज्ञः॥क्ष्मां वामनेन जगृहे त्रिपदच्छलेन याच्ञाभृते पथि चरन्प्रभुभिर्नचाल्यः ॥१७॥ नार्थो बलेरयमुरुक्रमपादशौचमापः शिखां धृतवतो विबुधाधिपत्यम् ॥ यो वै प्रतिश्रुतमृते न चिकीर्षदन्यदात्मानमंग शिरसाहरयेऽभिमेने॥१८॥ तुभ्यं च नारद भृशं भगवान्विवृद्धभावेन साधु परितुष्ट उवाच योगम्॥ज्ञानं च भागवतमात्मसतत्त्वदीपं यद्वासुदेवशरणा विदुरंजसैव॥१९॥

पतिः तीर्थरूपं श्रवो यशो यस्य स तीर्थश्रवाः हे तीर्थश्रवः । श्रवणेनैव मंगलं नामधेयं यस्य सः ॥ १५ ॥ तद्वचनं श्रुत्वा शरणार्थिनं तं हस्ते शुंडायां प्रगृह्य । किं कृत्वा नक्रस्य ग्राहस्य वदनं विनिपाव्य विदार्य तस्मात्तद्वदनात् ॥ १६ ॥ वामनावतारमाह । अदितेः सुतानां द्वादशादित्यानां मध्ये अधियज्ञः यज्ञाधिष्ठाता विष्णुः अवरजः कनीयानपि गुणैर्ज्यायाञ्ज्येष्ठः । गुणानेवाह । यद्यत इमाँल्लोकान्विचक्रमे पादन्यासैः क्रांतवान् । अथ प्रतिश्रुतानंतरमेव । तत्र हेतुः । बलेः क्ष्मां वामनरूपेण जगृहे । नन्वीश्वरः स्वयं किमिति दुर्बलवत्तथा चक्रे तत्राह । याच्ञां विना धर्ममार्गे वर्तमानो न चाल्यः ऐश्वर्यान्न भ्रंशनीय इति ॥ १७ ॥ ननु तर्हि याच्ञयापि चालनमनुचितमेवेत्याशंक्य ततोऽप्यधिकं स्वसालोक्यादि दास्यामीत्याशयेन हृतवानित्याह । नार्थ इति । यद्विबुधाधिपत्यमिदानीं बलात्प्राप्तमग्रे दीयमानं चायं बलेः पुरुषार्थो न भवति । कुत इत्यत आह । आप इति । आ अप इति छेदः । उरुक्रमस्य पादशौचं चरणक्षालनरूपाः अपः आ सर्वतो धृतवतः । क्व । शिखां शिखायां मूर्ध्नि इत्यर्थः । किं च शुक्रेण वारितः शप्तोऽपि अंग हे नारद यः प्रतिश्रुतं विनाऽन्यन्न चिकीर्षत् कर्तुं नैच्छत् । अडागमाभावस्त्वार्षः। किं तु प्रतिश्रुतं दातुमेवैच्छत् । यश्च तृतीयपादपूरणार्थं हरये आत्मानं देहमप्यभिमेनेंऽगीकृतवान् एवं सदेहं त्रैलोक्यं श्रद्धया दत्तवतो विबुधाधिपत्यमर्थो न भवतीत्यर्थः ॥१८॥ हंसावतारमाह । तुभ्यमिति । भृशं विवृद्धेन भावेनात्युद्रिक्तया भक्त्या परितुष्टः सन् भक्तियोगं साधु यथा तथोवाच । ज्ञानं चेति ज्ञानसाधनं किं तत् भागवतं नाम कथंभूतं तत्त्वमेव सतत्त्वमात्मतत्त्वदी

सीति भावः । तीर्थं पावनं यशो यस्येति दुर्जात्यारंभकात्पापान्मामपि पवित्री कर्तुमर्हसीति भावः । श्रवणमंगलेति । गुरुमुखात्त्वन्नाम मयापि श्रुतमेव तदप्येतदमंगलं कथमिति भावः । यद्वा। हे तीर्थश्रव इति । तीर्थस्नानादिना यथा निवृत्तावस्य दुःखं नोचितं तथा तव यशःश्रवणादिनापि तथा च तव यशो वर्णयितुर्ममापि तन्नोचितमिति भावः । एतत्समर्थकसंबुद्ध्यंतरमाह–श्रवणेन मंगलं यस्मात्ताढङ्नामधेयं यस्य ताढशोसि श्रवणापेक्षया वर्णनस्य प्राधान्यात्तत्कर्तुर्मम तु तत्सर्वथैव नोचितामिति भावः ॥ १९ ॥ शरणार्थिनं रक्षकं प्रार्थयंतं हरिशब्दस्यार्थांतरव्यावृत्तयेऽप्रमेयः इयत्तारहितः ताढगाकाशादिरप्यस्तीति तद्वारणाय चक्रायुधः ताढग्योद्धाप्यस्ति तद्वारणाय पतगेति भुजस्कंधयोरतीव सामीप्यादेवमुक्तिः॥१६॥"इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्"इत्यादिश्रुतेः"यस्योरुषु त्रिषु विक्रमेष्वधिक्षिपति भुवनानि विश्वा"इति श्रुतेश्चार्थमाह–त्रिपदच्छलेनेति।तत्र पादन्यासे अत्राक्षिपति । नन्विति ॥ १७॥ पुनराक्षिपति । ननु तर्हीति । इत्यर्थ इति । अत्राधेयेनाधारग्रहणं समासेन शिखायां धृतवान् शिखां धृतवांस्तस्य तथा अन्यन्महत्त्वमाह । किं चेति । अन्यत् ततः परावर्त्तनं न चिकीर्षत् अत्राडागमाभावस्त्वार्षः नाचिकीर्षदित्यर्थः । इत्यर्थ इति । न हि भगवद्भक्तानां कैवल्यमपि पुरुषार्थः कुतः स्वर्गादीति भावः । अंगेति । प्रियत्वात्तुभ्यं हरिभक्तचरितमुक्तमिति भावः ॥१८॥ तुभ्यं चेति । चकारात्स

चक्रं च दिक्ष्वऽविहतं दशसु स्वतेजो मन्वंतरेषु मनुवंशधरो बिभर्ति ॥ दुष्टेषु राजसु दमं व्यदधात्स्वकीर्तिं सत्ये त्रिपृष्ठ उशतीं प्रथयंश्चरित्रैः ॥ ॥२०॥ धन्वंतरिश्च भगवान्स्वयमेव कीर्तिर्नाम्ना नृणां पुरुरुजां रुज आशु हंति ॥ यज्ञे च भागममृतायुरवामरुन्ध आयुश्च वेदमनुशास्त्यवतीर्य लोके॥२१॥क्षत्रं क्षयाय विधिनोपभृतं महात्मा ब्रह्मध्रुगुज्झितपथं नरकार्तिलिप्सु॥उद्धंत्यसाववनिकंटकमुग्रवीर्यस्त्रिःसप्तकृत्व उरुधारपरश्वधेन॥२२॥

पकम् । विवृद्धभावेनेतिविशेषणस्य फलमाह । यदिति ॥ १९ ॥ तत्तन्मन्वंतरावतारमाह । चक्रमिति । स्वतेजो निजं प्रभावमेव चक्रं सुदर्शनं बिभर्ति । चक्रवदप्रतिहतं प्रभावं बिभर्तीत्यर्थः । तदेवाह । मनुवंशपालकः सन् त्रयाणां लोकानां पृष्ठे उपरि स्थिते सत्यलोकेऽपि कमनीयां स्वकीर्तिं विस्तारयन् राजसु दंडं विधत्ते ॥ २० ॥ धन्वं तर्यवतारमाह । लोकेऽवतीर्य धन्वंतरिः सन् पुरुरुजां महारोगिणां स्वनाम्नैव रुजो रोगान् हंति । स्वयमेव कीर्तिरिति कीर्त्यतिशयोक्तिः । अमृतं मरणशून्यमायुर्यस्मात्सः । अव अवसन्नं पूर्वं दैत्यैः प्रतिबद्धं यज्ञे भागमवरुंधे लभते । अवाप रुद्धमिति पाठेऽप्ययमेवार्थः आयुर्विषयं वेदं चानुशास्ति प्रवर्तयति ॥ २१ ॥ परशुरामावतारमाह । जगतः क्षयाय विधिना दैवेनोपभृतं संवर्धितं मृत्यवे समर्पितमिति वा । ब्राह्मणेभ्यो द्रुह्यतीति तथा अतः उज्झितः पंथाः वेदमार्गो येन । अत एव नरकार्तिं लिप्सतीव

नकादिभ्यश्च । यद्वा । सनकादिद्वारा तुभ्यमपि ज्ञानसाधनं श्रीभागवतं नामेत्यर्थः । स्वार्थेत्र तत्त्वशब्दात्सप्रत्ययो बहुच्प्रत्ययवत्प्रागेव जात इति ज्ञेयम् । अत एव स्वामिचरणैर्व्याख्यातं तत्त्वमेव सतत्त्वमिति । यद्वा। तत्त्वसतत्त्वशब्दौ पर्यायौ । नारदेति । तत एवोपदेशात्त्वं नारमज्ञानं तत् द्यतिच्छेदयतीत्यन्वर्थनामासीति भावः । अत्र विश्वनाथः—विवृद्धभावेन प्रेम्णा योगं भक्तियोगं ज्ञानञ्च भक्तिविषयस्य भक्त्याश्रयस्य द्विविधं विशेषणद्वयेनाह भागवतं भगवत्सौंदर्यसौरम्यसौस्वर्यमाधुर्यसाद्गुण्याद्यनुभवरूपं प्रेमगम्यमित्यर्थः । तथात्मनो भक्त्याश्रयस्य जीवस्य यत्सत्त्वं तत्त्वमेव ज्ञानानंदादिकं तस्य दीपमविद्यावरणनिवर्तकत्वात्प्रदीपं प्रकाशकं यदिदं द्विविधं ज्ञानं वासुदेवशरणा ऐकांतिकभक्ता अंजसा सुखेनैव विदुः सर्वत्रैव शास्त्रेषु ज्ञानादिशब्दा विशेषणविशेष्यविनाभूतत्वेन प्रयुक्ता ब्रह्मज्ञानादिष्वेवरूढा यथा पंकजादिशब्दाः पद्मादिषु, अन्यथा तु यथायोगमेव वर्त्तन्ते इति यौगिका एवं यथा "ज्ञानं परं तन्महिमावभासं यत्सूरयो भागवतं वदंति" इति ।"ज्ञानं च यदहैतुकम्" इति । "यन्मित्रं परमानंदं पूर्णं ब्रह्म सनातनम्" इति। यथा च "पंकजं वर्त्म. दुर्गमम्" इति। "मंडपं भोजये द्विजम्" इति विष्णुधर्मेपि हंसावतारेण नारदाय भक्तियोग एवोक्तः । यत्तु "यदा तु सनकादिभ्यो येन रूपेण केशव। योगमादिष्टवानेतद्रूपमिच्छामि वेदितुम्" इति सनकादिभ्यो ज्ञानोपदेष्टा हंसः स त्वन्य एव तुभ्यं चेति चकारेण तुभ्यमवतारायापि भक्तिमुवाच इत्युक्तिभंग्यैव नारदावतारोप्युक्त इति ॥ १९ ॥ इत्यर्थ इति । चक्रनाम्ना स्वासाधारणं तेज एव "त्वं तेजः पौरुषं परम्" इत्यंबरीषोक्तेर्धारयतीति भावः ॥ २० ॥ अमृतमिवायु र्लोके प्राकट्यं यस्य स तथा सर्वलोकनैरुज्यदानादिति विश्वनाथः । 'स्मृतमात्रार्त्तिनाशनः' इति वक्ष्यमाणत्वान्नाम्नैवं । 'ॐ श्रीधन्वंतरये नमः' इति नाममंत्रेणैवेत्यर्थः । अत एव स्वयमेव कीर्त्तिर्न तु केनचित्कृतेति भावः । आयुर्वेदमंगाष्टकयुतं तदुक्तं—"कायबालग्रहोद्र्ध्वांगशल्यदंष्ट्राजरावृषान् । अष्टावंगानि तस्याहुश्चिकित्सा येषु संश्रिता"इति हरिवंशे । तस्यायुर्वेदस्य कायचिकित्सा,बालचिकित्सा, ग्रहो भूतप्रेतादिः, ऊर्द्ध्वांगं शिरोनेत्रादि, शल्यं शस्त्रघातादि, दंष्ट्रा स्थावरजंगमात्मकं विषं तेषां चिकित्सा, जरा रसायनादिना जराया दूरीकरणं, वृषो वाजीकरणतंत्रमित्यर्थः ॥ २१ ॥ दैववर्द्धितस्य नाशाऽसम्भवादाह । मृत्यवे समर्पितमितिवेति । "ब्रह्म सत्यतपो

अस्मत्प्रसादसुमुखः कलया कलेश इक्ष्वाकुवंश अवतीर्य गुरोर्निदेशे ॥ तिष्ठन्वनं सदयितानुज आविवेश यस्मिन्विरुध्य दशकंधर आर्तिमार्च्छेत्॥२३॥यस्मा अदादुदधिरूढभयांगवेपो मार्गं सपद्यरिपुरं हरवद्दिधक्षोः॥दूरे सुहृन्मथितरोषसुशोणदृष्ट्या तातप्यमानमकरोरगनक्रचक्रः॥२४॥ वक्षःस्थलस्पर्शरुग्णमहेंद्रवाहदंतैर्विडंबितककुब्जुष ऊढहासम् ॥ सद्योऽसुभिःसह विनेष्यति दारहर्तुर्विस्फूर्जितैर्धनुष उच्चरतोऽधिसैन्ये ॥२५॥ भूमेः सुरेतरवरूथविमर्दितायाः क्लेशव्ययाय कलया सितकृष्णकेशः ॥ जातः करिष्यति जनानुपलक्ष्यमार्गः कर्माणि चात्ममहिमोपनिबंधनानि ॥२६॥

एवंभूतमवनेः कंटकतुल्यं क्षत्रमसौ महात्मा हरिरुद्धंत्युत्पाटयति । दीर्घतीक्ष्णधारेण परशुना ॥ २२ ॥ श्रीरामावतारमाह त्रिभिः । अस्मदिति । अस्माकं ब्रह्मादीनां प्रसादे सुमुखः कलया भरतादिरूपया सह कला माया तस्या ईशो गुरोर्दशरथस्याज्ञायां तिष्ठन् सीतालक्ष्मणाभ्यां सहितो वनमाविवेश । यस्मिन् विरोधं कृत्वा रावणो नाशं प्राप्तः ॥ २३ ॥ यस्मै रामायोदधिमार्गं ददौ । सपदि शीघ्रं हरो यथा त्रिपुरं दिधक्षुस्तद्वदरिपुरं लंकां दग्धुमिच्छोः । षष्ठी चतुर्थ्यर्थे । यद्वा पंचमीयम् । दिधक्षोः रामाद्भयं प्राप्तं तेनांगे कंपो यस्येति । कथंभूत उदधिः ऊढं प्राप्तं यद्भयं तेनांगेषु वेपः कंपो यस्य । अत्र हेतुः । दूरे वर्तमाना सुहृत्सीता तया निमित्तभूतया मथितः क्षुभितो रोषस्तेन सुशोणात्यरुणा दृष्टिस्तयात्यंतं तप्यमानं मकराणामुरगाणां नक्राणां च चक्रं यस्मिन् ॥ २४ ॥ किं च युद्धे रावणस्य वक्षःस्थलस्पर्शेन रुग्णा भग्ना ये महेंद्रवाहस्यैरावतस्य दंतास्तैर्विडंबिताः स्वधवलिम्ना धवलीकृताः । तत्तद्दिक्षु पतितैः प्रकाशिता इत्यर्थः । या एवंभूताः ककुभो दिशस्ताः जुषते सेवते पालयतीति वा । तथा तस्य दारहर्तू रावणस्य । अहो मत्समः कोऽन्योऽस्तीति महागर्वेणोढं प्राप्तं हासमसुभिः प्राणैः सह सद्यः शीघ्रं विनेष्यत्यपनेष्यति । कैः । धनुषो विस्फूर्जितैष्टंकारघोषैरेव । कथंभूतस्य । अधिसैन्ये स्वपरसैन्यमध्ये उच्चरत उत्कर्षेण विचरतः ककुब्जयरूढहासमिति पाठे दंतैरुज्ज्वलितानां ककुभां जयेन यो रूढहासः संजातगर्वस्तमपनेष्यतीत्यर्थः ॥ २५ ॥ श्रीकृष्णावतारमाह । भूमेरिति दशभिः । सुरेतरा असुरांशसंभूता राजानस्तेषां वरूथैः सैन्यैर्विमर्दितायाः भारेण पीडितायाः कलया रामेण सह

विप्रविधातृपरमात्मसु'' इति धरणिः । अतो वैदिकशुभमार्गप्रदर्शकब्राह्मणद्रोग्धृत्वात् । अत एव त्यक्तवेदमार्गत्वादेव । उग्रः शंकरस्तत्समवीर्यः ॥ २२ ॥ चक्रवर्ती तु–कलेशः परिपूर्णः ''चिन्मयेस्मिन्महाविष्णौ जाते दाशरथे हरौ'' इतिश्रुतेः । ''नृसिंहरामकृष्णेषु षाड्गुण्यं परिपूरितम्'' इति स्मृतेश्च ॥ २३॥ चतुर्थ्यर्थे षष्ठ्याः कल्पने गौरवादाह । यद्वेति । अत्रांगवेपे॥२४॥ अन्यत्प्रतापाधिक्यमाह । किंचेति । इत्यर्थ इति। एतेन दंतानामतिश्वैत्यं तेजोमयत्वं महत्त्वं चोक्तम् । इत्यर्थः इत्थं व्याख्येयः । ''हासः स्याद्धास्यगर्वयोः'' इति धरणिः ॥ २५॥ तयोर्द्वयोः केशयोर्मध्ये बलभद्रोस्त्याश्रयत्वेन यस्य श्वेतवर्णस्य स बलभद्रः एवं कृष्णोस्त्याश्रयत्वेन यस्य सं कृष्ण उभयत्र मत्वर्थीयोप्रत्ययः । केशौ केशवन्ताविति पूर्वार्द्धेपि व्याख्येयम् । अन्यथैतद्व्याख्यानंगीकारे । तत्रैव विष्णुपुराणे भारते चापि तथा हि विष्णुपुराणे ''एवं संस्तूयमानस्तु भगवान्परमेश्वरः । उज्जहारात्मनः केशौ सितकृष्णौ महामुने ॥ उवाच च सुरानेतौ मत्केशौ वसुधातले । अवतीर्य्य भुवो भारक्लेशहानिं करिष्यतः॥'' इत्यस्यायंभावः। 'सुरास्समस्ताः सुरनाथ कार्यमेभिर्मया यच्च तदीश सर्वम् । आज्ञापयाज्ञाः परिपालयंतः सदैव तिष्ठाम ह्यपास्तदोषाः॥'' इति सुरैरुक्तो भगवान्मम दुष्करं चेत्तदा साहाय्यं कार्यं स्यान्न त्वेवमस्ति भूभारहरणादौ कर्त्रंतरापेक्षया महत्यपि कार्य्ये मत्केशयोरपि शक्तत्वादिति । न तु केशमात्रावतार इति भ्रमितव्यम् ''ततः

जातः सन् । ननु कोऽसौ जातः । सितकृष्णौ केशौ यस्य भगवतः स एव साक्षात् । सितकृष्णकेशत्वं शोभैव न तु वयःपरिणामकृतं अविकारित्वात् । यत्तूक्तं विष्णुपुराणे । "उज्जहारात्मनः केशौ सितकृष्णौ महामुने ।" इति ॥ यच्च भारते । "स चापि केशौ हरिरुच्चजर्ह्रे शुक्लमेकमपरं चापि कृष्णम् ॥ तौ चापि केशावाविशेतां यदूनां कुले स्त्रियौ रोहिणीं देवकीं च ॥ तयोरेको बलभद्रो बभूव योऽसौ श्वेतस्तस्य देवस्य केशः ॥ कृष्णो द्वितीयः केशवः संबभूव केशो योऽसौ वर्णतः कृष्ण उक्तः ॥" इति

क्षयमशेषास्ते दैतेया धरणीतले । प्रयास्यंति न संदेहो मद्दृक्पातविचूर्णिताः॥ कृष्णाष्टम्यामहं भाद्र उत्पत्स्यामि न संशयः॥" इत्यादिषु तत्रैव स्वावतारोक्तेर्विरोधात् । भारतेपि "अहं ब्रह्म परं धाम" इति श्रीगीतायामर्जुनं प्रति स्वस्य स्वयमेव परब्रह्मत्वोक्तेर्विरोधात् । "कृष्णस्तु भगवान्स्वयम्" इति पूर्वोक्तिविरोधाच्च । अजरामरस्येशस्यार्द्धपलितत्वासंभवादेककेश ईशेच्छया रामस्य श्वेतरूपज्ञापनार्थं तदैव श्वेतोऽभूदिति गम्यते । एतेनैव भारतवाक्यमप्येतत्तुल्यं व्याख्यातं तथा श्रीगोपालतापिन्युपनिषद्यपि "मुनयो ह वै ब्रह्माणमूचुः कः परमो देवः" इत्यादिप्रश्नेषु । "तदुहोवाच ब्राह्मणः श्रीकृष्णो वै परमं दैवतम्" इत्याद्युत्तरश्रवणाच्छ्रीकृष्णोऽवतार्येव न त्ववतारोऽन्ये नृसिंहादयोऽवतारा एव 'जयंति कृष्णस्य दशावताराः' इति मुंकुटाचार्योक्तेः । यत्तु श्रीदशमे "कृष्णावतारोत्सवसंभ्रमोस्पृशत्" इति श्रीकृष्णेत्यवतारोक्तिः सा चाविर्भावपरेति ज्ञेयम् । किञ्च विष्णु नामान्युक्त्वा "वसुदेवोस्य जनकः" इत्यनेनामरसिंहेनावैदिकेनापि श्रीकृष्णस्यैव विष्णुपदवाच्यब्रह्मत्वं ध्वनितम् । अन्यथा कश्यपो ह्यस्य जनक इत्यादि वदेत् । तथा च "शत्रुश्लाघ्यो हियो योध स शूरः परिकीर्त्तितः" इति न्यायो प्यत्र मानमनुसंधेयम् । किञ्चाक्षराणां कामधेनुत्वादत्रार्थांतराश्रयणे विरोधः सर्वथैव नोदयते । तथाहि—हे कलयांशेन सित वृद्ध हे कलावतार नारद कृष्णकेशः जातः सन् कर्म्माणि करिष्यतीत्यन्वयः । को ब्रह्मा तस्येशः केशः कृष्णश्चासौ केशश्चेति तथा । यद्वा । कलया रक्षया हेतुना जात इति योज्यम् । सिता बद्धाः कृष्गाः केशा येन स तथा बद्धशिखंड इत्यर्थः । यद्वा। सितो बद्धः कृष्णो यया सा सितकृष्णका यशोदा तस्या ईश ऐश्वर्यं येन स सितकृष्णकेशः कृतयशोदानंद इत्यर्थः । यद्वाऽसितशब्दोपलक्षितोऽधर्मस्तस्य श्यामरूपत्वात्तं कर्षत्याकर्षतीत्यसितकृष्णो धर्मः स एवासितकृष्णकः स्वार्थे कः तस्येशः पालकः "संरक्षणाय धर्मस्य संभवामि युगेयुगे" इत्यादिपुराणात् । यद्वा । के जले लीयत इति कलया भूमिः "अप्सु प्रलीयते भूमिः" इति वक्ष्यमाणत्वात् । तस्यां सितो बद्धो भूषणे मणिरिव कलया सितो गोवर्द्धनस्तं कर्षत्युद्धरतीति कलयासितकृष्णः । के जले शेत इति केशः कलयासितकृष्णश्चासौ केशः कलयासितकृष्णकेशः गोवर्द्धनधरो विष्णुरित्यर्थः । यद्वा । कलया बलदेवेन सह सितकृष्णकेशः । यद्वा । कलयोपास्त्या सितोबद्धः कृष्णो येन स नारदसंबुद्धिः । कं मोक्षसुखं लाति ददातीति कला ब्राह्मणजातिः "भूत्वा द्विजवरस्त्वं वै मामुपैष्यसि केवलम्" इति मुचुकुंदं प्रति श्रीकृष्णोक्तेः । तया तद्धेतोः हेतौ तृतीयाऽसितो मुक्तः सत्यभामार्पितः कृष्णो येन स चासौ केशो मदीश इति हरिवंशे प्रसिद्धम् । यद्वा । सितः शिवः कृष्णो विष्णुः को ब्रह्मा तेषामीशः । कृष्णं कायंति गायंति "जयतु तेधिकम्" इत्यादिनेति कृष्णका गोप्यस्तासामीशः कृष्णकेशः । वा । कृष्णेन कं सुखं येषां ते कृष्णकाः पांडवादिभक्तास्तेषामीशः।न सितः स्वीकृतः कृष्णो यैस्तेऽसितकृष्गा दैत्यास्तान् क्लिश्नाति विबाधते इत्यसितकृष्णकेशः । 'क्लिशू विबाधने' लस्य लोपेनौणादिकःकेशशब्दः । यद्वा । सिता गंगा च कृष्णा यमुना चेति सितकृष्णे ते एव सितकृष्णके स्वार्थके पुंवद्भावः तयोरीशः सितकृष्णकेशः । सितं च कृष्णञ्च सितकृष्णे सितकृष्णे के जले ययोस्ते सितकृष्णके गंगायमुने तयोरीशः सितकृष्णकेशः । यद्वा । कलया चातुर्येण सिता बद्धाः कृष्णाया राधायाः केशा येन स तथेत्यलं पल्लवितेन । अन्यथानुपपत्तिर्विनेश्वरं तद्भवनम् । आत्ममहिमेश्वरत्वम् । संदर्भस्तु कोसौ कलयांशेन सितकृष्णकेशो यः "सितकृष्णकेशौ देवैर्दृष्टौ" इति शास्त्रांतरप्रसिद्धेः । सो ( ताव )पि यस्यांशेन स एव भगवान्स्वयमित्यर्थः । तदविनाभावाच्छ्रीबलदेवस्यापि ग्रहणं द्योतितम् । ननु पुरुषादपि पुराणोसौ भगवान्कथं भूभारहरणमात्रार्थं स्वयमवतरिष्यतीत्याशं क्याह—आत्मनो महिमानः परममाधुरीसंपदः उपनिबध्यंते निजभक्तैरधिकं वर्ण्यंते येषु तानि कर्माणि च करिष्यति च । यद्यपि निजांशेनैव निजेच्छाभासेनैव वा भूभारहरणमीषत्कृतं तथापि निजचरणारविंदजी वातुबन्दमानंदयन्नेव लीलाकादंबिनीनिजमाधुरीवर्षणाय विहरिष्यमाणोऽवतरिष्यतीत्यर्थः ॥ एतदेव व्यक्ती करिष्यते "तोकेन जीवहरणम्" इत्यादौ इतरथा स्वमाधुरीसंपत्प्रकाशनेच्छामंतरेण मधुरतरं लोकादिभावं

**तत्तु । न केशमात्रावताराभिप्रायं किं तु भूभारावतारणरूपं कार्यं कियदेतन्मत्केशावेवैतत्कर्तुं शक्ताविति द्योतनार्थं रामकृष्णयोर्वर्णसूचनार्थं च केशोद्धरणमिति गम्यते अन्यथा तत्रैव पूर्वापरविरोधापत्तेः । "कृष्णस्तु भगवान्स्वयम्" इत्येतद्विरोधाच्च । कथंभूतः । परमेश्वरतया जनैरनुपलक्ष्यो मार्गो यस्य । तर्हीश्वरत्वे किं प्रमाणम् । अतिमानुषकर्मा**

दधताऽनेन पूतनादीनां जीवहरणादिकं कर्म न भाव्यं न संभवनीयं तदंशतादिच्छाभासादिमात्रेणैव तत्सिद्धेरिति वाक्यार्थः । तथा च "तथायं चावतारस्ते भूभार–" इत्यादौ स्वामिचरणैरपि व्याख्यातम् । किं भूभारहरणं मदिच्छामात्रेण न संभवति तत्राह स्वानामिति । "जयति जननिवासः" इत्यत्र च इच्छामात्रेणं निरसने समर्थोपि क्रीडार्थे 'दोर्भिरस्यन्नधर्मम्' इति । एवमादिभिः श्रीकृष्णस्यैव सर्वाद्भुततावर्णनाभिनिवेशः प्रपंचो ब्रह्मणि स्पष्ट एव । अस्तु तावत्तद्भूरिभाग्यमित्यादि सितकृष्णकेश इत्यत्र तात्पर्यं श्रीस्वामिभिरेव विवृतम् । इदमप्यत्र तात्पर्यं संभवति । ननु देवाः किमर्थं मामेवावतारायितुं भवद्भिराग्रह्यते अनिरुद्धाख्यपुरुषप्रकाशविशेषस्य क्षीरोदश्वेतद्वीपधाम्नो मम यौ केशाविव शिरोधार्यभूतौ श्रीवासुदेवसंकर्षणौ स्वयमेवावतरिष्यतः ततश्च भूभारहरणं ताभ्यामपित्करमेवेति "अथोज्जहारात्मनः केशौ" इत्यस्यैव शब्दार्थोपि मुक्ताफलटीकायां केशौ सुखस्वामिनौ सितो रामः आत्मनः सकाशादुज्जहारोद्धृतवानित्यादि यैर्यथाश्रुतमेवेदं व्याख्यातं ते तु न सम्यक्परामृष्टवंतः यतः सुरमात्रस्यापि निर्जरत्वं प्रसिद्धम् । अकालकलिते भगवति जरानुदयने केशशौक्ल्यानुपपत्तिर्न चास्य केशस्य नैसर्गिकासितकृष्णतेति प्रमाणमस्ति अत एव नृसिंहपुराणे श्रीकृष्णावतारप्रसंगे शब्द एवं युज्यते न तु केशशब्दः "वसुदेवस्य देवक्यामवतर्यि यदोः कुले । सितकृष्णे च मच्छक्ती कंसाद्यान्घातयिष्यतः" इत्यादि । अस्तु तर्हि अंशोपलक्षणः केशशब्दः न अविप्लुतसर्वशक्तित्वेन साक्षादादिपुरुषस्यैव निश्चेतुं शक्यत्वात् । कृष्णविष्ण्वादिशब्दानामविशेषतः पर्यायप्रतीतेः । नैवमवतारांतरस्य जन्मदिनं जयंत्याख्ययाऽतिप्रसिद्धम् । अत एव महाभारते "भगवान्वासुदेवश्च कीर्त्यतेऽत्र सनातनः । शाश्वतं ब्रह्म परमं योगिध्येयं निरंजनम्" इति । तस्याकालकलितत्वं "योयं कालस्तस्य ते व्यक्तबंधो चेष्टामाहुः" इत्यादौ द्वारकावासिवाक्ये च प्रसिद्धं तस्मान्न केशावतारत्वेपि न तात्पर्यं, वैष्णवादिपद्यानां शब्दानामर्थं त्वेवं पश्यामः । "अंशवो ये प्रकाशंते मम ते केशसंज्ञिताः । सर्वज्ञाः केशवं तस्मान्मामाहुर्मुनिसत्तम ॥ " इति सहस्रनामभाष्यस्थापितभारतवचनात्केशशब्दे नांशुरुच्यते तत्र च सर्वत्र च । केशेतरशब्दाप्रयोगान्नानावर्णांशूनां श्रीनारददृष्टतया मोक्षधर्मप्रसिद्धेश्च । तथाचांशुत्वे लब्धे तौ चांशू वासुदेवसंकर्षणावतारसूचकतया निर्दिष्टाविति तयोरेतौ स्यातामिति गम्यते । तदीययोरपि तयोरनिरुद्धरूपत्वेऽभिव्यक्तिश्च युज्यत एव । अवतारितेजोंतर्भूतत्वादवतारस्य ततश्चोज्जहारेत्यस्यायमर्थः आत्मनः सकाशात् श्रीवासुदेवसंकर्षणांशभूतौ केशावंशू उज्जहारोद्धृतवान्प्रकटीकृत्य दर्शितवानित्यर्थः । अत्रायं सुमेरुरित्येकदेशदर्शनेनैवाखंडसुमेरुनिर्देशवत्तद्दर्शनेनापि पूर्णस्यैवाविर्भावनिर्देशो ज्ञेयः । अथ स चापिकेशावित्यादिकव्याख्या उद्ववर्ह योगबलेनात्मनः सकाशाद्विच्छिद्य दर्शयामास । स चापीति चशब्दः पूर्वमुक्तं देवकर्तृकं निवेदनरूपमर्थं समुपक्षिणोति । अतिशब्दस्तदुद्धरणे श्रीभगवत्संकर्षणयोरपि हेतुकर्तृत्वं सूचयति । तौ चापीति चशब्दोऽनुक्तसमुच्चयार्थत्वेन भगवत्संकर्षणौ स्वयमेव विविशतुः पश्चात्तौ तत्तादात्म्येनापि विविशतुरिति बोधयति अपिशब्दो यत्रानुस्यूतौ चामू सोपि तदंशेपीति गमयति । 'तयोरेको बलभद्रो बभूव' इत्यादिकं तु "नरो नारायणो भवेत्, हरिरेव भवेन्नरः" इत्यादिवत्तदैक्यावाप्त्यपेक्षया । केशवः केशवनाम्ना श्रीमथुरायां केशवस्थानाख्यमहायोगपीठाधिपत्वेन प्रसिद्धः स एव कृष्ण इति । नृसिंहपुराणे तु "सितकृष्णे च मच्छक्ती" इति तद्वर्णनिर्देशेनांशवाचक एव शक्तिशब्द इति । चक्रवर्त्ती तु " स तं वयसि कैशोरे" इत्याद्युक्तेर्नित्यकैशोरावस्थावतः सितकेशत्वं न युज्यते । विष्णुपुराणीयवाक्यस्थकेशाविति पदस्य तु केशौ सुखरूपावीश्वरौ सितकृष्णौ उज्जहार बहुस्तुतिभिः प्रसाद्य: बार्हिरप्युद्गमयामास हे महामुने इति । मननेनैवास्यार्थस्यावगम्यतेति भावः । "सुखशीर्षजलेषु कम्" इति नानार्थवर्गात् । सर्वत्र विष्णुपुराणादौ केशशब्दप्रयोगस्तु "परोक्षवादा ऋषयः परोक्षं मम च प्रियम्" इति भगवत्संमतौ स्थितानां शास्त्रकाराणामृषीणां तत्तद्वचनमाकूतमेवेति ज्ञापनार्थ एव । यद्वा । सितो रुद्रः कृष्णो विष्णुः को ब्रह्मा तेषामपीशः "स यावदुर्व्याभरमीश्वरेश्वरः स्वकालशक्त्या–" इत्युक्तेः । आत्मनः स्वस्य महिम्नि उपाधिक्येन नितरां बंधनं येभ्यस्तानि यत्कर्माणि सर्वलोकमनांसि माधुर्येण बध्नन्तीत्यर्थः । यद्वात्मनो महिमा महैश्वर्यं तस्याप्युपाधिक्येन निबंधनमावृतीकरणं येषु तानि यत्कर्मसु माधुर्य्येणावृतमेव महैश्वर्यं तिष्ठतीत्यर्थः । यद्वा । कलया नैपुण्येन

तोकेन जीवहरणं यदुलूकिकायास्त्रैमासिकस्य च पदा शकटोऽपवृत्तः ॥ यद्रिंगतांऽतरगतेन दिविस्पृशोर्वा उन्मूलनं त्वितरथाऽर्जुनयोर्न भाव्यम्॥ ॥२७॥यद्वै व्रजे व्रजपशून्विषतोयपीथान्पालांस्त्वजीवयदनुग्रहदृष्टिवृष्ट्या॥ तच्छुद्धयेऽतिविषवीर्यविलोलजिह्वमुच्चाटयिष्यदुरगं विहरन्ह्रदिन्याम्॥ ॥ २८ ॥ तत्कर्म दिव्यमिव यन्निशि निःशयानं दावाग्निना शुचिवने परिदह्यमाने ॥ उन्नेष्यति व्रजमतोऽवसितांतकालं नेत्रे पिधाय्य सबलोऽनधिगम्यवीर्यः ॥ २९ ॥

न्यथानुपपत्तिरेवेत्याह । आत्मनो महिमोपनिबद्ध्यतेऽभिव्यज्यते येषु तानि ॥ २६ ॥ एतदेव प्रपंचयति तोकेनेत्यादिना । बालेन पूतनाया जीवहरणं यत् रिंगता जानुभ्यां गच्छतांतरगेन मध्यं प्राप्तेन दिविस्पृशोरत्युच्चयोः इतरथानीश्वरत्वे तन्न भवितव्यम् ॥ २७ ॥ विषतोयपीथान् विषमयतोयस्य पीथं पानं येषां तान् पालान् गोपांश्च कृपादृष्टिसुधावृष्ट्या जीवयिष्यतीति यमुनायां क्रीडन्नुरगं कालियमुच्चाटयिष्यदुच्चाटयिष्यति । तच्छुद्धये तस्या ह्रदिन्या निर्विषत्वाय अतिविषवीर्येण विलोलातिचंचला जिह्वा यस्य ॥२८॥ दिव्यमलौकिकमिवेति लोकोक्तिः । उन्नेष्यत्युद्धरिष्यति । शुचिर्ग्रीष्मस्तत्संबंधिनि वने शुष्क इत्यर्थः । अतो दावाग्नेर्हेतोरवसितो निश्चितोंऽतकालो यस्यतम् । सबलः सरामः अनधिगम्यं दुर्ज्ञेयं वीर्यं यस्य । तत्र निशि निःशयानमिति कालियदमने रात्र्यां यमुनातीरे नेत्रे पिधाय्य पिहिते कारयित्वेति मुंजाटव्यामिति ज्ञेयम् ॥२९॥

सिता बद्धाः कृष्णाः श्यामा केशा येन स तथा । यद्वा । कलया वेदरक्षया हेतुना सितेन बलदेवेन सह कृष्णः केशः सुखरूप ईशः माधुर्यैश्वर्यमयः इति व्याचकार ॥ २६ ॥ एतदेव प्रपंचयति उलूकिकायाः पूतनाया यज्जीवहरणं तोकेनैव बालकेनैव रूपेण न त्वतिविकटाकाराया अतिविस्तृतस्वरूपाया अतिबलिष्ठायास्तस्या बधोपयोगिनी तादृशैश्वर्यमयी वामनावतारस्य त्रिविक्रममूर्त्तिरिव काचिन्मूर्त्तिराविष्कृतेति भावः । त्रैमासिकस्यैव पदाऽतिसुकोमलेनेत्यर्थः । यत् अपवृत्तः विपर्यस्ततया पातितः न तु हिरण्यकशिपुविदारणार्था नृसिंहमूर्त्तिरिव काचित्पदस्य विकटकठोरताविष्कृतेतिभावः। रिंगता जानुभ्यां गच्छतैवांतरं तेन तयोर्मध्यंगतेनैवोलूखलनिबंधेनैवार्जुनयोर्द्वयोर्यदुन्मूलनं न तु पृथिव्युद्धरणोपयोगिना वराहरूपेणेव कोपि प्रयत्नः कृत इति भावः । तत्सर्वमात्ममहिमोपनिबंधनमेव । निजबाल्यमहामाधुर्येण स्वमहैश्वर्यस्यावृतीकरणमेवेति पूर्वेणानुषंगः । इतरथा न भाव्यमन्यथा न भाव्यमेतान्त्रिकेणेदृशेन भवितव्यं नाभविष्यतेत्यर्थ इति विश्वनाथः।"तोकोल्पांगे शिशौ सुते" इत्यभिधानात् । ( शरीरोत्थानादिप्रवृत्तिहेतुत्वादवः प्राणस्ताँल्लुंपतीत्युलूपिका तस्या इति तीर्थः। ) उलूकिकात्वमत्र बक्या अपि तस्या अरिष्टकर्तृत्वसाधारण्यात्"अहो बकीयम्" इत्याद्युक्तेस्तस्या बकीत्वं प्रसिद्धमेव । जानुघर्षणपूर्वकं गमनं रिंगणं,दिविस्पृशोः सहस्रधनुषोप्यूर्द्ध्वदेशं स्पृशतोः सहस्रधनुषस्तूर्द्ध्वं द्युशब्देनापि भण्यत इति तीर्थः। त्रयो मासा वयोलक्षणा निर्वृता यस्य स त्रैमासिकस्तस्य॥२७॥विषेण सहितं तोयं विषतोयं तदेव पीथं येषांते विषतोयपीथास्तांस्तथा यद्व्रजपश्वादीनजीवयत्तदितरथा न भाव्यमिति योज्यम् ॥२८॥ इत्यर्थ इति।ग्रीष्मर्तौ हि स्वभावतएव सूर्यतापेन सार्द्रमपि निरार्द्रं भवतीति भावः । दावाग्नितो रक्षणं हि श्रीकृष्णेन द्विः कृतं तत्र द्वयोर्मध्ये मुंजाटव्यां तु दिवैव रक्षणं कृतमिति । इवोत्रैवार्थे बोध्यः लोकोक्तिरेव न शास्त्रोक्तिः।शास्त्रं तु"जन्म कर्म च मे दिव्यम्"

गृह्णीत यद्यदुपबंधममुष्य माता शुल्बं सुतस्य न तु तत्तदमुष्य माति ॥ यज्जृंभतोऽस्य वदने भुवनानि गोपी संवीक्ष्य शंकितमनाः प्रतिबोधिता ऽऽसीत् ॥ ३० ॥ नंदं च मोक्ष्यति भयाद्वरुणस्य पाशाद्गोपान्बिलेषु पिहितान्मयसूनुना च ॥ अह्न्यापृतं निशि शयानमतिश्रमेण लोकं विकुंठ उपनेष्यति गोकुलं स्म ॥ ३१ ॥ गोपैर्मखे प्रतिहते व्रजविप्लवाय देवेऽभिवर्षति पशून्कृपया रिरक्षुः ॥ धर्तोच्छिलींध्रमिव सप्त दिनानि सप्तवर्षो महीध्रमनघैककरे सलीलम् ॥ ३२ ॥ क्रीडन्वने निशि निशाकररश्मिगौर्यां रासोन्मुखः कलपदायतमूर्च्छितेन ॥ उद्दीपितस्मररुजां व्रजभृद्वधूनां हर्तुर्हरिष्यति शिरो धनदानुगस्य ॥ ३३ ॥ ये च प्रलंबखरदर्दुरकेश्यरिष्टमल्लेभकंसयवनाः कुजपौंड्रकाद्याः ॥ अन्ये च शाल्वकपिबल्वलदंतवक्रसप्तोक्षशंबरविदूरथरुक्मिमुख्याः ॥ ३४ ॥ ये वा मृधे समितिशालिन आत्तचापाः कांबोजमत्स्यकुरुकैकयसृंजयाद्याः ॥ यास्यंत्यदर्शनमलं बलभीमपार्थव्याजाह्वयेन हरिणा निलयं तदीयम् ॥ ३५ ॥

उपबद्ध्यतेऽनेनेत्युपबंधं तत्साधनम् । शुल्बं दाम अमुष्य माता यशोदाऽग्रहीत् अमुष्य उदरे न माति बंधनसंमितं न भवति न पूर्यत इत्यर्थः । गोपी यशोदा संवीक्ष्य दृष्ट्वा प्रतिबोधिता निजैश्वर्यं ज्ञापितासीदिति यत् तच्च कर्म दिव्यमिवेति सर्वत्र पूर्वेणैवान्वयः ॥ ३० ॥ वरुणस्य पाशाद्यद्भयं तस्मान्मोचयिष्यति मयसूनुना व्योमनाम्ना अह्नि आपृतं व्यापृतं व्यापारयुक्तं निशि शयानमिति च वैकुंठप्राप्तिसाधनानुष्ठानाभावो दर्शितः । उपनेष्यति प्रापयिष्यति गोकुलवासिनं जनम् । स्मेत्याश्चर्ये ॥ ३१ ॥ देवे इंद्रे पशून् रिरक्षुः रिरक्षिषुरित्यर्थः । अनघे श्रमरहिते एकस्मिन्नेव करे सलीलं यथा तथा महीध्रं गोवर्धनं धर्ता धारयिष्यति । उच्छिलींध्रमुद्गतं छत्राकमिव । सप्तवर्षाणि वयो यस्य सः ॥ ३२ ॥ निशि रात्रौ निशाकररश्मिभिर्गौर्यां धवलायाम् । वने क्रीडन् कलानि मंजुलानि पदानि यस्मिन् तच्च तदायतं दीर्घं मूर्च्छितमालापविशेषयुक्तं गीतं तेनोद्दीपितः स्मर एव रुक् यासां तासां गोपीनां हर्तुः शंखचूडस्य शिरो हरिष्यति ॥ ३३ ॥ ये च प्रलंबादयस्ते सर्वे हरिणा हेतुभूतेन तदीयं निलयमदर्शनं दर्शनायोग्यं वैकुंठमलं यास्यंतीत्युत्तरेणान्वयः । खरो धेनुकः । दर्दुर इव दर्दुरो बकः । इभः कुवलयापीडः । कुजो नरकः । कपिर्द्विविदः ॥ ३४ ॥ ये च मृधे आत्तचापाः

इत्याह ॥२९॥ इत्यर्थ इति । व्यापकस्य व्याप्येन बंधनं न भवतीति भावः । "शुल्बं स्याद्दामताम्रयोः" इत्यभिधानात् ॥३०॥ "ते तु ब्रह्महृदं नीताः" इति वक्ष्यमाणरीत्याऽक्रूरतीर्थे यद्वा नित्यमेव श्रीकृष्णप्रेमचेष्टत्वं तदर्थं नानाप्रयासानंतरं तदेकसमाधित्वं च "यद्धामार्थसुहृत्प्रियार्थतनयप्राणाशयास्त्वत्कृते" इति ब्रह्मवाक्यात्। "इति नंदादयो गोपाः कृष्णरामकथां मुदा। कुर्वंतो रममाणाश्च नाविंदन्भववेदनाम्॥" इति वाक्याच्च । ब्रह्मसमाधिपक्षे श्रीमन्नंदान्वेषणार्थ एव तद्दिने व्यापारश्रमेण निशि निद्रायामेव तद्दर्शनमिति भक्तेच्छादायित्वं दर्शितम् । अत्र सर्वांते यद्गोलोकप्रापणं तदप्यनेनैव सूचितं दावाग्निपानलीलावत् ॥ ३१ ॥ इत्यर्थ इति । वर्णलोपश्छांदसः । सर्वत्र यत्तदोरध्याहारेणान्वयः कार्यः ॥३२॥ ३३॥ बके दर्दुरसाम्यं हि नेत्रसंमीलनपूर्वकस्थितिरेव आद्यपदेन पीठादयो ग्राह्याः ॥ ३४ ॥ अत्राक्षिपति नन्विति । कालांतरे यास्यंतीति तेषां दमनमेव हरिणा कृतं न तु ते

कालेन मीलितधियामवमृश्य नृणां स्तोकायुषां स्वनिगमो बत दूरपारः ॥ आविर्हितस्त्वनुयुगं स हि सत्यवत्यां वेदद्रुमं विटपशो विभजिष्यति स्म ॥ ३६ ॥ देवद्विषां निगमवर्त्मनि निष्ठितानां पूर्भिर्मयेन विहिताभिरदृश्यतूर्भिः ॥ लोकान्घतां मतिविमोहमतिप्रलोभं वेषं विधाय बहु भाष्यत औपधर्म्यम् ॥ ३७ ॥ यर्ह्यालयेष्वपि सतां न हरेः कथाः स्युः पाखंडिनो द्विजजना वृषला नृदेवाः ॥ स्वाहास्वधावषडिति स्म गिरो नं यत्र शास्ता भविष्याति कलेर्भगवान्युगांते ॥ ३८ ॥

समितौ संग्रामे शालंते श्लाघंते ते समितिशालिनः । ननु प्रलंबखरकपिबल्वलरुक्मिप्रमुखा बलभद्रेण निहताः । कांबोजादयश्च भीमार्जुनादिभिः, शंबरः प्रद्युम्नेन यवनो मुचुकुंदेन न तु हरिणा तत्राह । बलो भीमः पार्थ इत्यादयो व्याजाह्वयाः कपटनामानि यस्य तेन सतोक्षाणस्तु दमिताः कालांतरे यास्यंतीति भावः । एतच्च सर्वमपि कर्म दिव्यमिव तच्चान्यथा न भाव्यमिति पूर्वेणैव संबंधः ॥ ३५ ॥ व्यासावतारमाह । अनुयुगं मीलिता संकुचिता धीर्येषाम् । स्तोकमल्पमायुर्येषां तेषां स्वनिगमः स्वकृतो वेदराशिः बताहो दूरे पारं यस्येति दुर्गम इत्यवमृश्य सत्यवत्यामाविर्हितः प्रादुर्भूतः सन् स एव हरिः विटपशः शाखाभेदेन ॥ ३६ ॥ बुद्धावतारमाह । देवद्विषां निगमवर्त्मनि वेदमार्गे निष्ठितानां नितरां स्थितानाम्।तद्बलेन च पूर्भिः पुरीभिः अदृश्यतूर्भिरलक्ष्यवेगाभिः मतेर्विमोहो योग्यतात्यागो यस्मात् मतेः प्रलोभश्चायुक्तस्वीकारो यस्मात्तं पाखंडवेषं विधाय तेनौपधर्म्यं पाखण्डधर्मम् । स्वार्थे ष्यञ् । बहु भाष्यत इत्यर्थः॥ ३७॥कल्क्यवतारमाह । यर्हि यदा सतामप्यालयेषु गृहेषु हरेः कथा न स्युस्त्रैवर्णिकाः पाखंडिनः स्युः शूद्राश्च राजानः स्युस्तदा कल्किरूपेण कलेः शास्ता भविष्यति । अत्र च ब्रह्मनारदसंवादात्प्राग्भाविनो वराहादयः । मन्वंतरावतारास्तु भूता भाविनश्च ।

मारिता अतो हरिस्पर्शप्रभावादेव कालांतरे देहपातेपि तेषां हरिपदप्राप्तिरेव भविष्यतीति तात्पर्य्यम् ॥ ३५ ॥ ३६ ॥ तद्बलेन वेदमार्गस्थितिबलेन । पाखण्डवेषं शास्त्राविहितवेषं वस्त्रखंडेन मुखपिधानादिलक्षणं तेन वेषेण उपधर्मस्तु पाखण्डस्स एवौपधर्म्यं वेदब्राह्मणदेवार्चनादिनिंदाप्रतिपादकं शास्त्रं तथाहि—सर्वं क्षणिकं क्षणिकं तत्र क्षणिकत्वं नीलादिक्षणानां सत्त्वेनानुमातव्यं यत्सत्तत्क्षणिकं यथा जलधरपटलं संतश्चामी भावा इत्यादि सर्वस्य संसारस्य दुःखात्मकत्वं सर्वतीर्थिकरसंमतमन्यथा तन्निवृत्त्युपाये तेषां प्रवृत्तिर्न स्यात्तस्मात्सर्वं दुःखं दुःखमिति भावनीयम् । ननु किंवदिति पृष्टे दृष्टांतः कथनयि इति चेन्मैवं स्वलक्षणानां क्षणानां क्षणिकतया सालक्षण्याभावान्नेतेन सदृशमपरमिति वक्तुमशक्यत्वात् । ततः स्वलक्षणं स्वलक्षणमिति भावनीयम् । एवं शून्यं शून्यमित्यपि भावनीयमित्थं बुद्धमुनिना स्वशिष्येभ्यश्चतुर्द्धोपदिष्टमत्र बहुवक्तव्यमस्तीत्युपरम्यते । किञ्च "स्वर्गः कुत्र च कुत्र दैवतकुलं कुत्राथ जन्मान्तरम्" इत्यादिना चिरंजीविभट्टेनापि तन्मतं प्रदर्शितं विद्वन्मोदतरंगिण्यां ततोन्यतश्च तदवसेयम् । इत्यर्थ इति । अत्रापि वर्णलोपश्छांदस इति भावः ॥ ३७ ॥ त्रैवर्णिकाः

सर्गे तपोऽहमृषयो नव ये प्रजेशाः स्थाने च धर्ममखमन्वमराऽवनीशाः ॥ अंते त्वधर्महरमन्युवशासुराद्या मायाविभूतय इमाः पुरुशक्तिभाजः ॥ ॥ ३९ ॥ विष्णोर्नु वीर्यगणनां कतमोऽर्हतीह यः पार्थिवान्यपि कविर्विममे रजांसि ॥ चस्कंभ यः स्वरहसाऽस्खलता त्रिपृष्ठं यस्मात्त्रिसाम्यसदनादुरुकंपयानम् ॥ ४०॥ नांतं विदाम्यहममी मुनयोऽग्रजास्ते मायाबलस्य पुरुषस्य कुतोऽपरे ये ॥ गायन्गुणान्दशशतानन आदिदेवः शेषोऽधुनापि समवस्यति नास्य पारम् ॥ ४१ ॥ येषां स एव भगवान्दययेदनंतः सर्वात्मनाऽऽश्रितपदो यदि निर्व्यलीकम् ॥ ते दुस्तरामतितरंति च देवमायां नैषां ममाहमिति धीः श्वशृगालभक्ष्ये ॥ ४२ ॥ वेदाऽहमंग परमस्य हि योगमायां यूयं भवश्च भगवानथ दैत्यवर्यः ॥ पत्नी मनोः स च मनुश्च तदात्मजाश्च प्राचीनबर्हिर्ऋभुरंग उत ध्रुवश्च ॥ ४३ ॥

धन्वंतरिपरशुरामौ तदा वर्तेते । श्रीरामादयस्तु भाविनः तत्र तु क्वचिद्भूतादिनिर्देशश्छांदस इति द्रष्टव्यम् ॥ ३८ ॥ सृष्ट्यादिकार्यभेदेन मायागुणावतारविभूतीराह । सर्ग इति । स्थाने स्थितौ मखो विष्णुः धर्मश्च मखश्च मनवश्चामराश्चावनीशाश्च अंते संहारे हरो रुद्रः मन्युवशाः सर्पाः बहुशक्तिधारिणो भगवत इमा मायाविभूतयः ॥ ३९ ॥ इदं मया संक्षेपेणोक्तं विस्तरेण वक्तुं न कोऽपि समर्थ इत्याह । पृथिव्याः परमाणूनपि यो विममे गणितवांस्तादृशोपि को नु विष्णोर्वीर्यगणनां कर्तुमर्हति । कथंभूतस्य यो विष्णुस्त्रिपृष्ठं सत्यलोकं चस्कंभ धृतवान् । किमिति चस्कंभ । यस्मात्त्रैविक्रमेऽस्खलता प्रतिघातशून्येन स्वरंहसा स्वपादवेगेन त्रिसाम्यरूपं सदनमधिष्ठानं प्रधानं तस्मादारभ्योरु अधिकं कंपयानं कंपमानम् । कंपेन यानं यस्येति वा । अतः कारणाच्चस्कंभ आत्रिपृष्ठमिति वा छेदः । सत्यलोकमभिव्याप्य यः सर्वं धृतवानित्यर्थः । तथा च मंत्रः । "विष्णोर्नु कम्०" इति । अस्यार्थः । विष्णोर्नु वीर्याणि कं प्रवोचं कः प्रवोचदित्यर्थः । यः पार्थिवानि रजांस्यपि विममे सोऽपि यो विष्णुस्त्रेधा विचक्रमाणस्त्रिविक्रमं कुर्वन्नुत्तरं लोकमस्कभायदवष्टब्धवान् । कथंभूतम् सधस्थम् । सहस्य सधादेशः । तिष्ठंतीति स्थाः तत्रस्थैर्देवैः सह वर्तमानमित्यर्थः ॥४०॥ एतत्प्रपंचयति । नांतमिति । पुरुषस्य यन्मायाबलं तस्यांतं न विदामि न वेद्मि दशशतान्याननानि यस्य स शेषोऽप्यस्य गुणान् गायन् पारं न समवस्यति न प्राप्नोति ॥ ४१ ॥ यदि न केऽपि विदंति तर्हि कथं मुच्येरन् तत्कृपयैवेत्याह । येषामिति । दययेद्दयां कुर्यात् । ते च यदि निष्कपटमाश्रितचरणा भवंति ते दुस्तरामपि देवमायामतितरंति चकारान्मायावैभवं विदंति च । अथेति वा पाठः । प्रत्यक्षमेव तेषां मायातितरणमित्याह । नैषामिति । श्वसृगालानां भक्ष्ये देहे ॥ ४२ ॥ अंतर्ज्ञानाभावेऽपि मायेयमिति ज्ञानं तत्कृ

विप्रक्षत्रविशः ॥ ३८ ॥ ३९ ॥ संभवत्वादाह कंपेनेति । यानं गमनं पतनमिति यावत् । अतः कंपनरूपात् । इत्यर्थ इति । प्रधानावरणादारभ्य सत्यलोकपर्यंतं कंपमानं ब्रह्मांडं यः स्वपादेनैव रुरोधेति भावः । अत्र प्रमाणमाह–तथा चेति । "विष्णोर्नुकं वीर्याणि प्रवोचं पार्थिवानि विममे रजांसि यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः" इति स्वामिचरणैरेवायं मंत्रो व्याख्यातः । छंदोभंगस्त्वार्षः । स्वरंहसेति पाठ एव "रह एकांतवेगयोः" इति कोशादननुस्वारपाठोपि प्रशस्त एव तथैव बहुपुस्तकेषु दृश्यते ॥ ४० ॥ ४१ ॥ अतितरंतीत्यत्रार्थे तरंतीति पाठः ॥ ४२ ॥ हे अंगेति ॥ ४३ ॥

इक्ष्वाकुरैलमुचुकुंदविदेहगाधिरघ्वंबरीषसगरा गयनाहुषाद्याः ॥ मांधात्रलर्कशतधन्वनुरंतिदेवा देवव्रतो बलिरमूर्तरयो दिलीपः ॥ ४४ ॥ सौभर्युतंकशिबिदेवलपिप्पलादसारस्वतोद्धवपराशरभूरिषेणाः ॥ येऽन्ये विभीषणहनूमदुपेंद्रदत्तपार्थार्ष्टिषेणविदुरश्रुतदेववर्याः ॥ ४५ ॥ ते वै विदंत्यतितरंति च देवमायां स्त्रीशूद्रहूणशबरा अपि पापजीवाः ॥ यद्यद्भुतक्रमपरायणशीलशिक्षास्तिर्यग्जना अपि किमु श्रुतधारणा ये ॥ ४६ ॥ शश्वत्प्रशांतमभयं प्रतिबोधमात्रं शुद्धं समं सदसतः परमात्मतत्त्वम् ॥ शब्दो न यत्र पुरुकारकवान्क्रियार्थो माया परैत्यभिमुखे च विलज्जमाना॥४७॥

पया बहूनामस्तीत्याह वेदाहमिति त्रिभिः । यूयमिति । सनकादीनंतर्भाव्य बहुत्वम् । दैत्यवर्यः प्रह्लादः मनुः स्वायंभुवः तस्य पत्नी शतरूपा च तदात्मजाः प्रियव्रतोत्तानपादौ पुत्रौ तिस्रः कन्याश्च । प्राचीनबर्हिषो विसर्गलोपश्छांदसः ॥ ४३ ॥ शतधनुः अनुश्च । संधिरार्षः । रंतिदेवा इति वा पाठः सुगमः । ऐकपद्ये एतैः सहितो देवव्रत इत्यर्थः ॥ ४४ ॥ उपेंद्रदत्तः शुकः । विभीषणादयो वर्या मुख्या येषां ते ॥ ४५ ॥ किं बहुना सत्संगेन तु सर्वेऽपि विदंतीत्याह । ते वा इति । अद्भुताः क्रमाः पादन्यासा यस्य हरेस्तत्परायणास्तद्भक्तास्तेषां शीले शिक्षा येषां ते । तथा यदि भवंति तर्हि ते स्त्रीशूद्रादयः पापजीवाः तेऽपि विदंतीत्यर्थः । तत्र श्रुते भगवतो रूपे धारणा मनोनियमनं येषां ते विदंतीति किमु वक्तव्यम् ॥ ॥ ४६ ॥ किं तद्भगवतः स्वरूपं यस्मिन्मनोधारणां विधाय मायां तरंति चेत्यपेक्षायामाह शश्वदिति द्वाभ्याम् । यद्ब्रह्मेति विदुर्मुनयस्तद्वै भगवतः पदं स्वरूपम् । किं तद्ब्रह्म तदाह । अजस्रं नित्यं च तत्सुखं च विशोकं चेति अजस्रसुखत्वे हेतुः । शश्वत्सदा प्रशांतमतो नित्यसुखरूपम् । विशोकत्वहेतु अभयम् । तत्कुतः । यतः समं भेदशून्यमतोऽभयम् "द्वितीयाद्वै भयं भवति" इति श्रुतेः । तत्कुतः । यतः प्रतिबोधमात्रं ज्ञानैकरसम् । ननु ज्ञानस्यापि नीलपीताद्याकारेण चक्षुरादिकरणभेदेन च भेदो दृश्यते । न । शुद्धं निर्मलम् । ननु दर्शितो विषयकरणोपरागरूपो मल इत्यत आह । सदसतः परं विषयकरणसंगशून्यम् । वृत्तेरेव तदुपरागो न ज्ञानस्येति भावः । ननु तथापि ज्ञात्रा सह भेदः स्यात् । न । आत्मतत्त्वमात्मनो ज्ञातुः स्वरूपमेव तन्न ततो भिन्नम् । ननु च "तं त्वौपनिषदं पुरुषं पृच्छामि"

इत्यर्थ इति । मांधातृत आरभ्य रंतिदेवदेवव्रत इत्यंतमैकपद्ये इति भावः ॥ ४४ ॥ उत्तंक इति वक्तव्ये उतंकेत्यार्षः । सारस्वतनामा कश्चिदृषिविशेषो वसिष्ठादिवत्स च सरस्वतीपुत्रस्तद्वृत्तं भारतादवसेयम् । यस्य गोत्रिणो हि सारस्वतगोत्रा एव न तु सारस्वत संज्ञा इति।सारस्वतसंज्ञका विप्रास्तु सारस्वतदेशवासिन एव "मत्स्यान्सारस्वतानथ" इति प्रथमस्कंधे सारस्वतदेशोपि पठितोस्ति क्वचित्पुस्तकेषु शारद्वतोद्धवेति पाठोप्यस्ति तत्र शारद्वतोऽपत्यं शारद्वतः कृपाचार्यः प्रतीयते "शारद्वतं गुरुं कृत्वा देवा यत्राक्षिगोचराः" इत्युक्तेः ॥४५॥ शीले शुचौ चरिते "शुचौ तु चरिते शीलम्" इत्यमरः ॥४६॥ मायातारकं भगवद्रूपं पृच्छति किं तदिति तत्समम् । ज्ञानैकत्व आक्षिपति नन्विति।पुनराक्षिपति नन्विति।विषयो घटादिः करणं चक्षुरादि तयोरुपरागः संबंधस्तद्रूपो मलः स एव मलः इति भावः।ज्ञानवृत्तेरुपरागोस्ति तरंगस्थानीयाया न तु समुद्रस्थानीयस्य ज्ञानस्येति तात्पर्यम् । पुनराक्षिपति तथापि ज्ञानस्यापरागाभावेपि ज्ञाता यो जीवस्तेन प्रहरति नेति पुनराक्षिपति नन्विति।औपनिषदमुपनिषत्प्रतिपाद्यम्।आरोपितो यस्तस्मिन्प्रपञ्चस्तन्निवृत्तौ तदपवादे इत्यर्थ इति "अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपंच्यते"

भा. द्वि.
श्री. टी.
॥ ३१ ॥

तद्वै पदं भगवतःपरमस्य पुंसो ब्रह्मेति यद्विदुरजस्रसुखं विशोकम् ॥ सध्र्यङ् नियम्य यतयो यमकर्तहेतिं जह्युः स्वराडिव निपानखनित्रमिंद्रः॥४८॥
इति शब्दबोध्यत्वप्रतीतेः कुतो बोधरूपत्वं तत्राह । शब्दो न यत्रेति । आरोपितनिवृत्तावेव शब्दस्य व्यापारो न तु तद्बोध इत्यर्थः । ननु च भवतु नाम निरस्तभेदज्ञानरूपत्वाद्विशोकत्वं सुखस्य तु नानाकारकसाध्यक्रियाफलत्वात्कथमजस्रसुखत्वं तस्येत्यत आह । यत्र बहुकारकसाध्यः क्रियार्थ उत्पाद्याप्यविकार्यसंस्कार्यरूपं चतुर्विधं क्रियाफलं च नास्ति इंद्रियैर्ज्ञानांशाभिव्यक्तिरिव क्रियाभिरानंदांशाभिव्यक्तिमात्रं क्रियते नोत्पत्त्यादिकमिति भावः । ननूत्पत्त्याद्यभावेऽपि मायामलापाकरणेन विकार्यत्वमेव स्याद्व्रीहीणामिव तुषापाकरणेनेत्याशंक्याह । माया अभिमुखे स्थातुं विलज्जमानेव यस्मात् परैति दूरतोऽपसरति ॥ ४७ ॥ तस्मादेवंभूते भगवति नियमितमनसां कृतार्थानां न किमपि कृत्यमस्तीत्याह । सध्र्यंचतीति सध्र्यक् सहचरं मनो यं प्रति नियम्य यस्मिन् स्थिरीकृत्य यतयो यत्नशीलाः कर्तौ भेदस्तन्निरासोऽकर्तस्तत्र हेतिं साधनं जह्युस्त्यजेयुः अनुपयोगात्तन्नाद्रियंत इत्यर्थः । उपयोगाभावेन साधनानादरे दृष्टांतः । निपीयतेऽस्मिन्निति निपानं कूपस्तस्य खनित्रं खननसाधनं यथा स्वराट् स्वयमेव पर्जन्यरूपेण विराजमान इंद्रो नादत्ते तद्वदिति यद्वा स्वेनैव राजत इति स्वराट् दरिद्रः स यथा इंद्रः समृद्धः सन् कर्मकारदशायां गृहीतं निपानखनित्रं जहाति तद्वदित्यर्थः ॥ ४८ ॥

इत्युक्तेरिति भावः । पुनराक्षिपति नन्विति।नानाकारकसाध्या क्रिया यागादिरूपा तस्याः फलत्वात् तस्यात्मनः यद्भूत्वा भावि तदुत्पाद्यम्।यत्सिद्धमेव प्राप्यते तदाप्यम् । यत्र पूर्वावस्थापरित्यागेनावस्थांतरप्राप्तिस्तद्विकार्य्यम् ।यत्र गुणाधानं मलापकर्षणं क्रियते तत्संस्कार्यम् । इति भाव इति । उत्पत्तिलक्षणस्याभूत्वाभवनरूपस्य तत्रासत्त्वादयमाशयः । पुनराक्षिपति—नन्विति । नन्वत्र "ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" इत्यधिकारिभेदादेक एव त्रिरूपतया भातीति अत्र "अपीयतां कर्णकषायशोषान्" इत्यादिना "शास्ता भविष्यति कलेर्भगवान्" इत्यनेन भगवानशेषविशेषतयोक्तः । तदुपासकांश्च 'येषां स एव भगवान्दययेदित्यादिना किमु शुभधारणाये' इत्यंतेनोक्ताः संप्रति परमात्मा ब्रह्म चोच्यतामित्याकाक्षयामाह सदसत उत्तमाधमस्य ब्रह्मादिस्तंबपर्यंतस्य जीववृंदस्य परमात्मतत्त्वं सममेकरसमेव तथा शश्वत्सदा प्रकर्षेण शांतं तस्य गुणवशाच्छांतघोरमूढस्यापीत्यर्थः । शश्वत्प्रशब्दाभ्यां सत्त्वगुणकार्यः शमो व्यावृत्तः तथाऽभयं तस्य सभयस्यापि प्रतिबोधमात्रं तस्याज्ञानस्य ज्ञानवतोपि प्रतिमात्रशब्दाभ्यां सत्त्वगुणकार्यबोधो व्यावृत्तः शुद्धं तस्याशुद्धस्यापि एवं परमात्मानमुक्त्वा ब्रह्माह यत्र नानाकारकवानपि तथा क्रियया सहार्था वाच्यलक्ष्यव्यंग्या यत्र तादृशोपि शब्दो न प्रभवति तद्ब्रह्म ननु ब्रह्मशब्देनैव तद् ब्रूषे अथ च शब्दो न यत्रेति निषिध्यसि च तत्राह-मायेति।यस्याभिमुखे माया परैति पृष्ठदेशमुपैति तस्य भगवतः पदमप्राकृतविचित्ररूपगुणादिविशेषवतोपि तस्य प्राथमिकसाक्षात्कारविषयो निर्विशेषं स्वरूपं 'मदीयं महिमानं च परं ब्रह्मेति शब्दितम् ' इति श्रीमत्स्योक्तेस्तदीयं व्यापकत्वलक्षणं बृहत्त्वमेव निश्चितं ब्रह्म । अयं भावः । शब्दस्याकाशगुणत्वेन मायिकत्वान्मायापि तदभिमुखे स्थातुमशक्तरमायिकरूपगुणादिमंतं भगवंतमपि शब्दोभिधातुं यद्यपि न प्रभवति तदपि " मेघश्यामः कनकपरिधिः पंकजाक्षोयमात्मा " इत्यादयः शब्दाः मेघकनकादिप्राकृतवस्तुसादृश्यारोपेणैव लोकचित्तं यथा कथंचित्तत्र प्रवेशयंति । लोकश्च चित्तैकाग्र्येणापि वस्तुतोऽस्पृष्टरूपतद्रूपाभासोपि भगवन्तं प्रभुमहं ध्यायामीत्यभिमन्यमानो हृष्यति भगवानप्यपारकृपातरंगवशादेवानेनाहं ध्यात एवेत्यभिमन्यतेऽभिमत्य च तं भक्तं स्वचरणांतिकं समानयतीति भगवत्स्वरूपस्य शब्दगम्यत्वं तत्कृपयैव सिद्धं ब्रह्मस्वरूपस्य तु प्राकृताप्राकृतविशेषराहित्यात्कथं शब्दगम्यत्वमस्त्विति शब्दो न यत्रेत्युक्तं प्रवृत्तिनिमित्तस्य वस्तुधर्मस्य जात्यादेरभावात् यत्र क्रियाकारकवान् शब्दो न प्रभवति तद्ब्रह्मेति ब्रह्मशब्दस्य पृथक्संकेत एवायं कृतः अतः शब्दगम्यत्वाभावेपि शब्दगम्यस्य भगवतो निर्विशेषं स्वरूपं तद्ब्रह्मेति भगवत्संबंधित्वेनैवोक्ते सति तत्र लोकचित्तप्रवेशो नान्यथेति भंग्या ब्रह्मणोपि शब्दगम्यत्वमुक्तमित्थमेव श्रुत्यध्यायादौ व्याख्यास्यते तथाऽजस्रमेव सुखं यतो विगतः शोको यतस्तादिति तस्य सुखरूपत्वे विशोकत्वे च कैमुत्यमानी तदिति विश्वनाथः ॥ ४७ ॥ इत्यर्थ इति । भेदनिरासायैव वेदांताभ्यासादिसाधनं क्रियते तत्सिद्धौ तत्त्यागो न्याय्य एव घटसिद्धौ दंडादित्यागवदिति भावः । इंद्रेण तु पूर्वमपि

भा.दी.प्र.
टीका.
अ० ८

॥ ३१ ॥

स श्रेयसामपि विभुर्भगवान्यतोऽस्य भावस्वभावविहितस्य सतः प्रसिद्धिः ॥ देहे स्वधातुविगमेऽनुविशीर्यमाणे व्योमेव तत्र पुरुषो न विशीर्यतेऽजः ॥ ४९ ॥ सोऽयं तेऽभिहितस्तात भगवान्विश्वभावनः ॥ समासेन हरेर्नान्यदन्यस्मात्सदसच्च यत् ॥ ५० ॥ इदं भागवतं नाम यन्मे भगवतोदितम् ॥ संग्रहोऽयं विभूतीनां त्वमेतद्विपुली कुरु ॥ ५१ ॥ यथा हरौ भगवति नृणां भक्तिर्भविष्यति ॥ सर्वात्मन्यखिलाधार इति संकल्प्य वर्णय ॥ ५२ ॥

एवं तावदजस्रसुखं विशोकं ब्रह्मैव भगवतः स्वरूपं तत्प्राप्तानां च न प्राप्यं कृत्यं वा किंचिदस्तीत्युक्तमिदानीं ततः प्राक् स एव सर्वफलदावा सर्वकर्मप्रवर्तकश्चेत्याह । स एव श्रेयसां फलानां विभुर्दाताऽपि । तत्र हेतुः । भावानां ब्राह्मणादीनां स्वभावैः शमदमादिभिर्विशेषणैर्विहितस्यास्य सतः शुभस्य कर्मणो यतः प्रवर्तकात्प्रसिद्धिः यद्वा भावानां महदादीनां स्वभावेन परिणामेन विहितस्य सतः कार्यस्य प्रसिद्धिः स एव स्वर्गादीनां दातेत्यर्थः । ननु कर्मकर्तुर्मृतस्य कथं स्वर्गादिफलं स्यात्तत्राह । स्वारंभकधातूना भूतानां विगमे वियोगे सत्यन्वनु विशीर्यमाणेऽपि देहे तत्रस्थं व्योमेव यस्तेन सह न विशीर्यते यतोऽजस्तेन सह न जातस्तस्य पुरुषस्य श्रेयसां प्रभुरित्यर्थः ॥ ४९ ॥ अध्यायत्रयस्यार्थमुपसंहरति । सोऽयं ते समासेन संक्षेपेणाभिहितः । तमेवाह । सदसत्कार्यं कारणं च हरेरन्यन्न भवति । ननु हरेस्तदव्यतिरेके तद्गतविकारप्रसंगः स्यात् । न । अन्यस्मात्कारणभूतो हरिः कार्याद्व्यतिरिक्त इत्यर्थः ॥५०॥ अयं च विभूतीनां संग्रह उदितः ॥ ५१ ॥ यथा वर्णितेन नृणां भक्तिर्भविष्यतीत्येवं संकल्प्य सांचिंत्य

साधनानि नात्तानि तत्र तु स्वत एव त्यागोऽतोऽनुपयुक्तोयमर्थ इति तत्राह—यद्वेति । स्वेनैव न तूपकरणादिनेत्यर्थः । इति इत्यर्थव्याख्या ॥४८॥ ततः प्राग्भगवत्प्राप्तेः पूर्वम् । तत्र कर्मफलदातृत्वे । ब्राह्मणादिस्वभावास्तु— शमो दमस्तपः शौचं तितिक्षा क्षांतिरार्जवम् । ज्ञानं दयाच्युतात्मत्वं सत्यं चेति ब्रह्मस्वभावाः । शौर्यं तेजो बलं धैर्यं दाक्ष्यं दानमीश्वरभावो युद्धेऽपलायनमिति क्षत्रस्वभावाः । कृषिगोरक्ष्यवाणिज्यमिति वैश्यस्वभावाः । त्रिवर्णसेवा शूद्रस्वभावः ॥ आचार्यसेवनं वेदाध्ययनं च ब्रह्मचारिस्वभावः । अतिथिसेवनादिर्गृहस्थस्य । तपो वनौकसः । विचारो यतेरिति विवेकेनाग्रे वर्ण्यते भावशब्दस्य वर्णाश्रमवाचकत्वाप्रसिद्धिमालोच्याह यद्वेति । महादादिवाचकत्वं भावशब्दस्य "यथेमे विकृता भावाः" इति वक्ष्यत्येव । इत्यर्थ इति । कर्मफलदानार्थमेव स्वर्गादि निर्मितवान्प्रयोजनांतराभावादिति भावः । अत्राक्षिपति नन्विति । तत्रस्थं देहस्थम् । इत्यर्थ इति । "न जायते म्रियते वा कदाचित्" इत्यादिस्मृतेः कर्मफलभोक्तुर्नाशो नास्तीति भावः ॥ ४९ ॥ हरावाक्षिपति नन्विति । इत्यर्थ इति । कार्यं तु कारणादनन्यद्भवति तद्विना तदसिद्धेः कारणं तु कार्यादन्यदेव तद्विनापि तस्य सिद्धेरिति भावः । संबुद्धिरुक्ताभिप्रायैव बहुशः ॥ ५० ॥ विभोरूतयो लीलास्तासां संग्रहः "को वेत्ति भूमन्भगवन्परात्मन्योगेश्वरोतीर्भवतास्त्रिलोक्याम्" इत्यत्रोतिशब्दो लीला वाचको दृश्यते कोशेपि "लीलावासनयोरूतिस्तंतुवापनकर्मणि" इति । संक्षेपस्तु "द्रव्यं कर्म च कालश्च" इत्यारभ्या "आद्योवतारः पुरुषः परस्येति, सर्गे तपोहमृषय इति, यत्रोद्यतः क्षितितलोद्धरणाय" इत्यादिरूपो बोध्यः । विपुली कुरु व्यासायोपदिष्टा विस्तारयेत्यर्थः ॥ ५१॥ इत्यर्थ इति यत्केवलतत्त्वज्ञानफलं मोक्षस्तदपि भक्त्यैव भविष्यतीति भावः । "यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् । तत्सर्वं मत्प्रसादेन मद्भक्तो लभतें

[ नृजन्मनि न तुष्येत कृतेन भगवान्यदि ॥ धर्मार्थकामैः किं तर्हि कार्यं सिध्यति नश्वरैः ॥१॥ कृष्णे न चोत्तमश्लोके चेद्भक्तिरनपायिनी ॥ किं स्याद्वर्णाश्रमाचारैः किं दानैः किं तपःश्रुतैः ॥२ ॥] मायां वर्णयतोऽमुष्य ईश्वरस्यानुमोदतः ॥ शृण्वतः श्रद्धया नित्यं माययाऽऽत्मा न मुह्यति ॥ ॥५३॥इति श्रीभागवते महापुराणे द्वितीयस्कंधे ब्रह्मनारदसंवादे सप्तमोऽध्यायः ॥७॥राजोवाच ॥ ब्रह्मणा चोदितो ब्रह्मन्गुणाख्यानेऽगुणस्य च ॥ यस्मैयस्मै यथा प्राह नारदो देवदर्शनः ॥ १ ॥ एतद्वेदितुमिच्छामि तत्त्वं वेदविदां वर ॥ हरेरद्भुतवीर्यस्य कथा लोकसुमंगलाः ॥ २ ॥ कथय स्व महाभाग यथाऽहमखिलात्मनि ॥ कृष्णे निवेश्य निःसंगं मनस्त्यक्ष्ये कलेवरम् ॥ ३ ॥ शृण्वतः श्रद्धया नित्यं गृणतश्च स्वचेष्टितम् ॥ कालेन नातिदीर्घेण भगवान्विशते हृदि ॥ ४ ॥ प्रविष्टः कर्णरंध्रेण स्वानां भावसरोरुहम् ॥ धुनोति शमलं कृष्णः सलिलस्य यथा शरत् ॥ ५ ॥

तथा हरिलीलाप्राधान्येन श्रीभागवतं वर्णय न तु भक्तिरसाविघातेन केवलं तत्त्वमित्यर्थः ॥ ५२ ॥ ननु लीला मायाश्रया किं तद्वर्णनेनेत्यत आह । मायामिति ॥५३॥ इति श्रीभा० म० द्वितीयस्कंधे टीकायां सप्तमोऽध्यायः ॥ ७ ॥ छ ॥ अष्टमे देहसंबंधमाक्षिपन्नीशजीवयोः ॥ बहून्परीक्षिदापृच्छत्पुराणार्थान्बुभुत्सितान् ॥ १ ॥ त्वमे तद्विपुलीकुर्वित्युक्तं तदेव विपुलीकरणं पृच्छति ब्रह्मणेति त्रिभिः । अगुणस्य च गुणातीतस्यापि । देववद्दर्शनं यस्य सः ॥ १ ॥ २ ॥ निःसंगं मनः श्रीकृष्णे निवेश्येति स्वप्रयत्नो दर्शितः ॥ ३ ॥ सोऽपि श्रद्धया शृण्वतो नावश्यक इत्याह । शृण्वत इति । स्वप्रयत्नं विनापि भगवान् स्वयमेव हृदि विशति ॥ ४ ॥ भावसरोरुहं हृदय कमलं प्रविष्टश्च तद्गतं सर्वं मलं धुनोति । सलिलस्येति । द्रव्यांतरव्यामिश्रणादिना कुंभस्थे जले शोधिते तदेव केवलं शुद्ध्यति न तु नदीतडागादिगतम् । स च मलः

जसा'' इति भगवदुक्तेर्भक्तिं प्रधानीकृत्यैवान्यद्वक्तव्यं नान्यथेति तात्पर्यम् ॥५२॥ अत्राक्षिपति नन्विति । अमुष्य ईश्वरस्येत्यसंधिरस्य वेदरूपतां द्योतयति ''छंदसि सर्वे विधयो विकल्पंते'' इत्युक्तेः । चेतःसन्निहितत्वाद मुष्येत्युक्तम्।मायया बंधकशक्त्या न मुह्यति बद्धो न भवतीत्यर्थः।स्ववर्णयितारं मायापि नापकुरुते स्वपालयितारमिव सिंहसर्पादिरिति भावः॥५३॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वितीयस्कन्धे सप्तमोऽध्यायः॥७॥ आक्षिपन्नीशस्य देहसंबंधः कथं कथं च जीवस्येत्यादिशंकां कुर्वन् । बुभुत्सितान् ज्ञातुमीप्सितान् ( १ ) हे ब्रह्मन्निति साक्षाद्वेदरूप एव त्वमतो मत्संदेहमपाकर्तुं समर्थोसीति भावः । देवं सर्वत्र द्योतमानं भगवंतं दर्शयति निजसेविनां तत्त्वोपदेशेनेति देवदर्शनः । यद्वा देवस्य हरेर्दर्शनं साक्षात्कारो यस्य स तथा देवैस्तपआदिना द्योतमानैर्दृश्यत इति वा तथा अकारो वासुदेवः स एव देव उपास्यो येषांतेऽदेवा भगवद्भक्ता स्तैर्दृश्यते इति वाऽकारप्रश्लेषेऽर्थः ॥१॥ हे वेदविदां पैलादीनां मध्ये वरेति यत्तत्त्वं त्वया ज्ञायते तद्वेदविद्भिरपि ज्ञातुमशक्यमिति भावः । एतत्तत्त्वं नारदव्याससंवादोत्तरव्यासास्यांबुजोद्भूतश्रीभागवतमकरन्दपानमेव मन्मनश्च ञ्चरीकाभिमतं तत्त्वं तदेव वेदितुं पातुमिच्छामीत्यर्थः । अतो हरेः कथाः कथयस्वेत्यग्रिमेणान्वयः । तत्र हेतुः अद्भुतं मनआल्हादकरं वीर्यं यस्य तस्य ॥ २ ॥ हे महाभागेति । भजनं भाग अस्य वासुदेवस्य भागो यस्य सोऽभागः महांश्चासावभागश्चेति महाभागस्तत्संबुद्धौ तथा ''वैयासकिश्च भगवान् वासुदेवपरायणः'' इत्युक्तेस्त्वं श्रीकृष्णभक्तत्वान्महाभागोसि त्वत्कृपयाहमपि चंदनतरुन्यायेन तथास्यामिति भावः ॥ ३ ॥ ४ ॥ कथा रूपेण भगवानेव प्रविष्टः सन्भावसरोरुहं हृदयकमलं तत्रांतर्यामी सदा स्थितोप्युदासीन एव कर्णप्रविष्टः । कृष्णश्च जीवमामज्जयति स्वस्मिन्निति ध्वनितं भावो दास्यसख्यादिस्तद्रूपमेव कमलमिति वा शमलं

धौतात्मा पुरुषः कृष्णपादमूलं न मुंचति ॥ मुक्तसर्वपरिक्लेशः पांथः स्वशरणं यथा ॥६॥ यदधातुमतो ब्रह्मन्देहारंभोऽस्य धातुभिः ॥ यदृच्छया हेतुना वा भवंतो जानते यथा ॥ ७ ॥ आसीद्यदुदरात्पद्मं लोकसंस्थानलक्षणम् ॥ यावानयं वै पुरुष इयत्ताऽवयवैः पृथक् ॥ तावानसाविति प्रोक्तः संस्थाऽवयववानिव ॥ ८ ॥ अजः सृजति भूतानि भूतात्मा यदनुग्रहात् ॥ ददृशे येन तद्रूपं नाभिपद्मसमुद्भवः ॥९ ॥ स चापि यत्र पुरुषो विश्वस्थित्युद्भवाप्ययः ॥ मुक्त्वाऽऽत्ममायां मायेशः शेते सर्वगुहाशयः ॥ १० ॥

कुंभस्यांतस्तिष्ठत्येव नतु सर्वथा विलीयते अत एव किंचिच्चलनेन पुनः क्षुभ्यति च एवं तपोदानादिप्रायश्चित्तं न सर्वथा सर्वेषां सर्वं पापं धुनोति किंतु सावशेषम् । तच्च कस्यचिदेव किंचिदेव हृदि प्रविष्टमात्रस्तु श्रीकृष्णः सर्वेषां सर्वं पापं निःशेषं हरतीत्यनेन दृष्टांतेनोक्तं सलिलस्य मलं यथा शरदिति ॥ ५ ॥ ततश्च कृतार्थो भवतीत्याह । धौतात्मा निष्पापः मुक्ताः सर्वे रागद्वेषादयः परिक्लेशा येन । पांथः प्रवासादागतः स्वशरणं गृहं यथा न मुंचति तद्वत् ॥ ६ ॥ तदेवं श्रवणौत्सुक्यमाविष्कृत्य संदिग्धानर्थान् पृच्छति । अधातुमतः धातवो महाभूतानि तत्संबंधशून्यस्यास्य लौकिकस्यात्मनो जीवस्य धातुभिर्देहारंभ इति यदेतत् किं यदृच्छया निर्निमित्तं हेतुना वा कर्मादिना भवंतो यथावज्जानते अतः कथयंत्विति शेषः ॥ ७ ॥ यश्चासावीश्वरः सोऽप्येतत्तुल्यदेहवान् प्रोक्तः अतस्तस्य को विशेष इत्याशयेन पृच्छति आसीदिति सार्धेन । लोकानां संस्थानं रचना तदेव लक्षणं स्वरूपं यस्य तत्रैलोक्यात्मकं पद्मं यस्योदरादासीत् । असावीश्वर इयत्तायुक्तैः स्वपरिमितैरवयवैरयं लौकिकः पुरुषो यावान् यत्संख्याकावयवयुक्तस्तावान्संस्थावान्प्रोक्तः अवयववानिव च प्रोक्तः अतः को विशेषस्तस्येति ॥ ८ ॥ अवश्यं च विशेषो वाच्य इत्याह । अजो ब्रह्मा भूतानां व्यष्ट्युपाधीनामात्मा नियंता समष्ट्युपाधित्वात् येन च अनुगृह्णता तस्य रूपं ददृशे दृष्टवान् । एतच्च "तस्यापि द्रष्टुरीशस्य कूटस्थस्याखिलात्मनः । सृज्यं सृजामि सृष्टोऽहमीक्षयैवाभिचोदितः ॥" इत्यादिनोक्तमनूद्यते । अग्रे तु स्पष्टं भविष्यति ॥ ९ ॥ प्रश्नांतरमाह । स चापीति । यत्र शेते येन रूपेणावतिष्ठते । विश्वस्य स्थित्यादयो यस्मात् एवमा

कामक्रोधादि धुनोति ननु नात्यद्भुतमिदं यतो ज्ञानयोगादयोप्येतत्कर्तुं प्रभवंतीत्यत आह सलिलस्येति । द्रव्यांतरमिश्रणादिना कुंभस्थे जले शोधिते तदेव केवलं शुध्यति न तु तडागादिगतं स च मलः कुंभस्यांतास्तिष्ठत्येव न तु सर्वथा विलीयतेऽत एव किंचिच्चलने क्षुभ्यति च एवमेव ज्ञानयोगतपआदयो न सर्वेषां किं तु कस्यचिदेव तस्यापि न सर्वथा किं तु किंचिदेव न तु सावशेषं कथंचिदेव हृदयमालिन्यं धुन्वंति तदुक्तं "यमादिभिर्योगपथैः कामलोभहतो मुहुः । मुकुंदसेवया यद्वत्तथाद्धात्मा न शाम्यति" इति हृदि प्रविष्टमात्रस्तु कृष्णः सर्वेषामपि सर्वमपि निःशेषमेवेति शरद्दृष्टांतः सर्वेषामेव सर्वमेव निःशेषमेव हरत्येवेत्यवधारणचतुष्टयमत्र बोध्यम् ॥ ५ ॥ ननु तस्यापि कियद्दिनानंतरं धनाद्युपार्जनाय गृहाद्गतं दृष्टमेव तत्राह मुक्तत्यक्तः सर्वधनाद्युपार्जनलक्षणः क्लेशो येन स तथा ततश्च श्रीकृष्णस्य हृदि प्रवेशाच्च "शरणं गृहरक्षित्रोः" इत्यमरः ॥ ६ ॥ दधति धारयंति सर्वमिति धातवः दधातेरौणादिकस्तु प्रत्ययः ॥ ७ ॥ अतो जीवतुल्यदेहवत्त्वात् तस्येशस्य ॥ ८ ॥ येन भगवताऽनुग्रहं कुर्वता तस्यैव भगवतः एतच्च भगवद्रूपदर्शनवृत्तं च अनूद्यतेऽनुवादः क्रियतेऽग्रे नवमाध्याये ॥ ९ ॥ १० ॥

पुरुषावयवैर्लोकाः सपालाः पूर्वकल्पिताः ॥ लोकैरमुष्यावयवाः सपालैरिति शुश्रुम ॥ ११ ॥ यावान्कल्पो विकल्पो वा यथा कालोऽनुमीयते ॥ भूतभव्यभवच्छब्द आयुर्मानं च यत्सतः ॥ १२ ॥ कालस्यानुगतिर्या तु लक्ष्यतेऽण्वी बृहत्यपि ॥ यावत्यः कर्मगतयो यादृशीर्द्विजसत्तम ॥ १३ ॥ यस्मिन्कर्मसमावायो यथा येनोपगृह्यते ॥ गुणानां गुणिनां चैव परिणाममभीप्सताम् ॥ १४ ॥ भूपातालककुब्व्योमग्रहनक्षत्रभूभृताम् ॥ सरित्समुद्रद्वीपानां संभवश्चैतदोकसाम् ॥ १५ ॥ प्रमाणमंडकोशस्य बाह्याभ्यंतरभेदतः ॥ महतां चानुचरितं वर्णाश्रमविनिश्चयः ॥ १६ ॥ अवतारानुचरितं यदाश्चर्यतमं हरेः ॥ युगानि युगमानंच धर्मो यश्च युगेयुगे ॥ १७ ॥ नृणां साधारणो धर्मः सविशेषश्च यादृशः ॥ श्रेणीनां राजर्षीणां च धर्मः कृच्छ्रेषु जीवताम् ॥ १८ ॥

दिप्रश्नानां तत्त्वतोऽर्हस्युदाहर्तुमिति सर्वांते क्रियायाः संबंधः ॥ १० ॥ प्रश्नांतरमाह । पुरुषस्यावयवैः पूर्वं कल्पिता 'यस्येहावयवैर्लोकान्कल्पयंति' इत्यादौ 'लोकैश्चामुष्यावयवाः' इति 'पातालमेतस्य हि पादमूलम्' इत्यादौ च त्वन्मुखाच्छ्रुतवंतो वयम् ॥ ११ ॥ एवं संदेहविपर्ययाभ्यां पृष्टम् । इदानीमज्ञातान्बहूनर्थान्पृच्छति यावानित्यादिना । कल्पो महान् विकल्पोऽवांतरः भूतादिः शब्दो यस्मात् यस्य वाचक इति वा । ततः स्थूलदेहाभिमानिनो मनुष्यपितृदेवादेरायुषः प्रमाणम् ॥ १२ ॥ अनुमानप्रकारः पृष्टः विशेषं पृच्छति । कालस्येति । अनुगतिः प्रवृत्तिः कर्मगतयः कर्मप्राप्याणि स्थानानि । यादृशीः यादृश्यः ॥ १३ ॥ गुणानां सत्त्वादीनां परिणामं देवादिरूपमिच्छतां गुणिनां जीवानां मध्ये यस्मिन् परिणामे कर्मणां पुण्यपापानां समवायः समुदायः केन कर्मसमुदायेन कथं कृतेन कोऽधिकारी देवादिभावं प्राप्नोतीत्यर्थः ॥ १४ ॥ भूपातालादीनां संभवः । एतान्योकांसि येषां प्राणिनां तेषां च संभवः । यथेति सर्वत्रानुषंगः ॥ १५ ॥ वर्णानामाश्रमाणां च विनिश्चयस्तत्तत्स्वभावैर्निर्धारः ॥ १६ ॥ युगेयुगे प्रतियुगं यो धर्मो यच्च हरेरवतारानुचरितम् ॥ १७ ॥ सविशेषो वर्णाश्रमनिबंधनः श्रेणीनां तत्तद्व्यवसायोपजीविनां व्यवहारनियमलक्षणो धर्मः राजर्षीणां प्रजापालनाधि

॥ ११ ॥ अनुमानप्रकारो भूतकालाद्यनुमानप्रकारः वस्तुतः कालस्यैकरूपत्वात्तत्र भूतादित्वं कथमनुमेयमिति पृष्टमत्रेति ॥ १२ ॥ हे द्विजसत्तमेति । ब्राह्मणेषु श्रेष्ठा विद्वांसस्तेष्वपि त्वमुत्कृष्टोसि तपोविद्यानिष्णातत्वान्मत्संदेहापाकरणे सर्वथैव समर्थोसीति । यद्वा । परोपकरणार्थायैव ब्राह्मणानां विधिनाविर्भावितत्वात्स्वाभाविकयुष्मद्धर्म इति भावः ॥ १३ ॥ इत्यर्थ इति । "सत्त्वसंगादृषीन्देवान्रजसाऽसुरमानुषान् । तमसा भूततिर्य्यक्त्वं भ्रामितो याति कर्मभिः" इत्यादिभगवदुक्तेः केन सात्त्विककर्मणा को देवो भवति कथं वा भवतीत्यादि मत्संदिग्धमज्ञातञ्च त्वं ब्रूहीति भावः ॥ १४ ॥ एतानि भूपातालादीन्योकांसि स्थानानि "ओकः स्थानं गृहं देहम्" इत्यभिधानात् ॥ १५ ॥ एतत्स्वभाववान्विप्रादिरेतत्स्वभाववान्ब्रह्मचार्यादिश्च ज्ञेयस्तथा च तेषां स्वाभाविकधर्मान् ब्रूहीति समागतम् ॥ १६ ॥ युगानीति । संख्याप्रश्नः युगमानं

तत्त्वानां परिसंख्यानं लक्षणं हेतुलक्षणम्॥ पुरुषाराधनविधिर्योगस्याऽऽध्यात्मिकस्य च॥१९॥योगेश्वरैश्वर्यगतिर्लिंगभंगस्तु योगिनाम् ॥ वेदोपवे
दधर्माणामितिहासपुराणयोः॥२०॥संप्लवः सर्वभूतानां विक्रमः प्रतिसंक्रमः ॥ इष्टापूर्तस्य काम्यानां त्रिवर्गस्य च यो विधिः॥२१॥यश्चानुशा यिनां
सर्गः पाखंडस्य च संभवः॥आत्मनो बंधमोक्षौ च व्यवस्थानं स्वरूपतः॥२२॥यथात्मतंत्रो भगवान्विक्रीडत्यात्ममायया॥विसृज्य वा यथा माया
मुदास्ते साक्षिवद्विभुः ॥२३॥ सर्वमेतच्च भगवन्पृच्छते मेऽनुपूर्वशः ॥ तत्त्वतोऽर्हस्युदाहर्तुं प्रपन्नाय महामुने ॥२४॥ अत्र प्रमाणं हि भवान्परमेष्ठी
यथात्मभूः ॥ परे चेहानुतिष्ठंति पूर्वेषां पूर्वजैः कृतम्॥२५॥न मेऽसवः परायंति ब्रह्मन्ननशनादमी ॥ पिबतोऽच्युतपीयूषमन्यत्र कुपिताद्विजात् ॥२६॥

कारिणां कृच्छ्रेषु आपत्सु जीवतां सर्वेषाम् ॥ १८ ॥ सर्वेषां तत्त्वानां प्रकृत्यादीनां परिसंख्यानं संख्यालक्षणं स्वरूपं हेतुतो लक्षणं तत्तत्कार्यहेतुत्वेन च लक्षणमित्यर्थः ।
पुरुषाराधनस्य विधिर्देवपूजाप्रकारः अष्टांगयोगस्य च विधिः ॥ १९ ॥ योगेश्वराणामैश्वर्येणाणिमादिनाऽर्चिरादिगतिः । लिंगशरीरस्य भंगः प्रलयः । वेदा ऋग्वेदादयः
उपवेदा आयुर्वेदादयः धर्मा धर्मशास्त्राणि तेषाम् इतिहासपुराणयोश्च गतिः स्वरूपम् ॥ २० ॥ संप्लवोऽवांतरप्रलयः । यद्वा सम्यक् प्लवनमुद्भवः । विक्रमः स्थितिः । प्रतिसं
क्रमो महाप्रलयः । इष्टं वैदिकं कर्म पूर्तं स्मार्तम् । "वापीकूपतडागादि देवतायतनानि च ॥ अन्नप्रदानमारामः पूर्तमित्यभिधीयते " इति ॥ तत्र च काम्यानामग्निहोत्रा
दीनां विधिः त्रिवर्गस्य धर्मार्थकामस्य विधिरविरोधप्रकारः ॥ २१ ॥ अनुशायिनां लीनोपाधीनां जीवानाम् । आत्मनो जीवस्य व्यवस्थानं बंधमोक्षातिरिक्तस्वरूपेणाव
स्थानम् ॥ २२ ॥ उदास्ते प्रलये ॥ २३ ॥ चशब्दादपृष्टमपि ॥ २४ ॥ प्रमाणं सम्यक् ज्ञाता यतस्तव ब्रह्मनारदव्यासक्रमेण संप्रदायोऽस्तीति सामान्यन्यायेनाह । परे
चेति । यद्वा त्वदन्ये प्रायशो गतानुगतिका एव न तत्त्वविद इत्याह । परे चेति ॥ २५ ॥ ननु तवानशनद्विजकोपाभ्यां व्याकुलस्य कुतः श्रवणं तत्राह । नेति । न परा

वर्षैरियत्तया परिच्छेदः ॥ १७ ॥ १८ ॥ संख्यालक्षणं स्वरूपं कति तत्त्वानीति । इत्यर्थ इति । यस्मादेतत्कार्यमुत्पद्यते तदेतन्नामकं तत्त्वमिति भावः । अष्टांगयोगस्य यमनियमासनप्राणायामप्रत्याहारधारणाध्यानस
माधिरूपस्य लक्षणम् ॥ १९ ॥ आर्चिरादिगतिं तृतीयस्कंधे वक्ष्यामः । आदिना यजुरादिग्रहः । द्वितीयादिना धनुर्वेदादिग्रहः । धर्मशास्त्राणि मन्वाद्यष्टादश स्मृतयः । इतिहासो भारतादिः । पुराणानि मात्स्यादीनि ॥
॥ २० ॥ संप्लवशब्दस्यावांतरप्रलयग्राहकत्वे नैयत्यं दृष्ट्वाह—यद्वेति । अग्निहोत्रादिकं वैदिकं कर्म स्मार्त्तं स्मृतिविहितम् । तत्रेष्टापूर्त्तयोर्मध्ये । "त्रिवर्गो धर्मकामार्थैः" इत्यमरः ॥ २१ ॥ २२ ॥ उदास्ते साक्षिवदुदासीन
इव तिष्ठति ॥ २३ ॥ उदाहर्त्तुमितिहासादिपुरस्कारेण तत्त्वतो याथार्थ्येन वक्तुम् । प्रपन्नाय शरणमाताय । हे महामुने इति प्रतिवचनसामर्थ्यं सूचयति ॥ २४ ॥ परेऽपरे च पूर्वेषां मरीच्यादीनामपि
पूर्वजैर्ब्रह्मवादिभिः कृतमनुष्ठितं शास्त्रार्थम् । त्वमपि तदाचरणमेवाश्रयेति चेदाह—यद्वेति । व्यवहारासक्तत्वात्तेषां तत्त्वविस्मृतिर्भविष्यति त्वं तु व्यवहारातीतत्वात्तत्त्ववित्तेभ्यः सर्वेभ्य उत्कृष्टोऽस्यतस्त्वदुक्तौ मे
सर्वथैव विश्वास इति भावः । ननु त्वं त्वन्यकविमुखतोऽवगततत्त्वोपि किं पुनर्मां पृच्छसीत्यत आह—अत्रेति । अन्येषां कवीनां मध्ये हि निश्चितमेव भवान्प्रमाणम् अतस्तत्तदर्थाभिज्ञोप्यहं भवन्मुखात्कीदृगुत्तरमाविर्भविष्य
तीत्याकांक्षायां पृच्छामि । परमेष्ठी यथात्मभूः परमेश्वरप्रसादात्स्वतः सिद्धज्ञानस्तथा भवानपि परेऽन्ये तु पूर्वेषां पूर्वजैर्वृद्धैरेव यद्यत्कृतं सर्वं दृष्ट्वा तेभ्योधीत्याधीत्यानुतिष्ठतीति विश्वनाथः ॥ २९ ॥ इत्यर्थ इति

सूत उवाच ॥ स उपामंत्रितो राज्ञा कथायामिति सत्पतेः ॥ ब्रह्मरातो भृशं प्रीतो विष्णुरातेन संसदि ॥ २७ ॥ प्राह भागवतं नाम पुराणं ब्रह्मसंमितम् ॥ ब्रह्मणे भगवत्प्रोक्तं ब्रह्मकल्प उपागते ॥ २८ ॥ यद्यत्परीक्षिदृषभः पांडूनामनुपृच्छति ॥ आनुपूर्व्येण तत्सर्वमाख्यातुमुपचक्रमे ॥ २९ ॥ इति श्रीभागवते महापुराणे द्वितीयस्कंधे प्रश्नविधिर्नामाऽष्टमोऽध्यायः ॥ ८ ॥

यंति नापगच्छंति न व्याकुलीभवंतीत्यर्थः । अच्युतकीर्तिपीयूषम् ॥ २६ ॥ उपामंत्रितः पृष्टः संश्वासौ पतिश्च तस्य ॥ २७ ॥ ब्रह्मकल्पे सृष्ट्युपक्रमकल्पे भागवताख्यानेनैव प्रश्नानामुत्तरं दातुमुपक्रांतवानित्यर्थः ॥ २८ ॥ पांडूनामृषभः श्रेष्ठः आनुपूर्व्येणेति प्रस्तावक्रमोऽत्र विवक्षितो न प्रश्नक्रमः ॥ २९ ॥ इति श्रीमद्भा० म० द्वितीयस्कंधे टीकायामष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥

अशनादप्यतिबलहेतुरसायनपानादिति भावः । कुपिताद्विजादित्यनेन द्विजकोपहेतुको मरणकालो लक्ष्यते । तथा च द्विजकोपहेतुकमरणाधिकरणसप्तमादिनरूपकालादन्यत्र कालेऽच्युतपीयूषं पिबतो मेऽसवोऽनशनान्न परायंतीत्यन्वयः । सप्तमदिने मरणस्य शापबलेनावश्यंभावित्वात्ततः पूर्वमच्युतपीयूषपानं कुर्वतोऽन्याननुसंधानाच्चोभयनिमित्तापि व्याकुलता नास्तीति भावः । यद्वाऽच्युतपीयूषं पिबतो मेऽसवोऽनशनाद्द्विजकोपाच्च न परायंति किं त्वन्यत्राच्युतपीयूषपानाभावे परायंतीत्यर्थः । बालबोधिन्यां तु—कुपितद्विजाद्धेतोर्यन्मरणं ततोन्यत्र तद्विना तस्य निवृत्तिस्तु नास्तीत्यर्थ इति व्याख्यातम् । चक्रवर्ती तु—कुपितद्विजात्सप्तमदिवसे तक्षकरूपो द्विज आयास्यति तस्मादन्यत्र तदागमने सत्यसवः परास्यंत्येवेति व्याचख्यौ ॥ २६ ॥ उपामंत्रितः सत्कृत्य व्यापारितोऽत एव भृशं प्रीतः सतां ब्रह्मादीनां पत्युः ब्रह्मणा श्रीकृष्णेन मुनये गर्भान्निष्कास्य रातो दत्त इति ब्रह्मरातः शुकः । “कृष्णेन ब्रह्मणा दत्तो व्यासाय मुनये स्वयम् ” निष्कास्य गर्भाद्वीटाया भूत्वाथ प्रतिभूर्यतः ॥ ब्रह्मरातो ह्यतः प्रोक्तः श्रीव्यासतनयो मुनिः” इति परमब्रह्मवैवर्तादवसेयम् । “सभा संसत्सदः स्त्रियाम्” इति धरणिः ॥ २७ ॥ इत्यर्थ इति राजप्रश्नोत्तरमिषेण श्रीभागवतं यत्संक्षेपतः सृष्ट्यादौ चतुःश्लोक्या ब्रह्मणे प्रोक्तं तदेव श्रीव्यासाविस्तारितं राज्ञे प्राहेति भावः ॥ २८ ॥ एवं स्वाभिमतशुद्धभक्तेः प्रथमांगीभूतकृष्णकथाश्रवणौत्सुक्यमाविष्कृत्य निर्गुणशुद्धभक्त्योर्यावत्स्वर्थेषु व्याप्तिस्संभवति तावंत एवार्थास्तत्तद्भक्त्यधिकारिणां जिज्ञासितार्थसिद्ध्यर्थं पृष्टाः । किञ्च यत्रयत्र भक्तेर्गंधोपि तत्रतत्र निरपराधतयैव स्थेयमन्यथा श्रीभक्तिदेव्या अप्रसाद एव स्वसाध्यभक्तेरभ्युदयार्थं शुद्धभक्तैरपि स्वाभीष्टश्रवणकीर्तनादिषु लब्धनिष्ठैरपि तानितानि भक्तेरुदाहरणप्रत्युदाहरणानि जिज्ञास्यान्येवेति ‘यदधातुमतः’ इत्यारभ्य ‘शेते सर्वगुहाशयः’ इत्यंतेन प्रश्नपंच कं शांतप्रीतिभक्तौ पर्याप्नोति जीवाद्विशेषब्रह्मदृष्टभगवद्रूपप्रश्नोपि प्रीतिभक्तौ पर्याप्नोति कर्मप्राप्यस्थानानि सूक्ष्मस्थूलविकल्पकल्पैरवश्यं ग्रस्यन्त इति कर्मनिर्वेदार्थं प्रश्नद्वयं शुद्धभक्तावेव पर्याप्नोति “जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु” इति भगवदुक्तेः । यस्मिन्कर्मसमावाय इत्यादिप्रश्नोपि कर्मज्ञानयोगमिश्रशुद्धभक्तिषु पर्याप्नोति । भुवादीनां बहुविधभक्तास्पदत्वात्तदौकसां च प्रायोधिकृतादिभक्तत्वात्प्रश्नोयं भक्तेषु पर्याप्नोति । प्रमाणमंडकोशस्येत्यैश्वर्यप्रधानायां भक्तौ कीदृशान्यंडानि हरिकुक्षौ संतीति जिज्ञासायां वर्णाश्रमधर्मा भक्तिमिश्रतयैव सिद्ध्यंति तदन्यथा वेति जिज्ञासायां च भक्तौ प्रश्नोयं पर्याप्नोति । युगानीति । युगावताराणां तत्प्रवर्तितभक्तिविशेषाणां च जिज्ञासायां नृणामंत्यजपर्यंतानामपि साधारणो धर्मो भक्तिरेव “सर्वेषां मदुपासनम्” इत्युक्तेः । विशेषधर्मस्तत्तज्जातिधर्म इति तद्धर्मवत्त्वेपि ते भक्ता भवंति किरातहूणांध्रेत्याद्युक्तेः । श्रेणिराजर्षिष्वपि भक्तिमत्सु निरपराधतयैव स्थेयमिति विवक्षायां कृच्छ्रेष्वित्यापद्धर्मप्रश्नः सर्वविधभक्तौ पर्याप्नोति। तत्त्वानामिति। पुरुषावतारलीलायां योगस्येति योगमिश्रायां योगेश्वराणां शंभुप्रभृतिमहानुभावभक्तानामैश्वर्यरूपा या गतिः लिंगभंग इति शांतभक्तौ वेदादीनां तात्पर्यमिति शेषः । तत्र भक्तिरेवेति भक्तौ संप्लवः सम्यक् प्लवः संसारसिंधोस्तरणसाधनं किं विक्रमस्तत्र शौर्यं किं प्रतिसंक्रमस्तु नाशः क इति भक्तेरनुकूलप्रतिकूलवस्तुजिज्ञासायाम् । यद्वा सृष्टिस्थितिप्रलयाः क्रमेण पृष्टाः काम्यकर्मेष्टापूर्तादीनां कर्ममिश्रायां भक्तौ अनुशायिनां महाप्रलये ईश्वरे लीनोपाधीनां सर्ग इति साधकभक्तानां साधनसिद्धिजिज्ञासायां पाषंडस्येति । भक्त्यसंभवजिज्ञासायामात्मनो मायास्पृष्ट

श्रीशुक उवाच ॥ आत्ममायामृते राजन्परस्यानुभवात्मनः ॥ न घटेतार्थसंबंधः स्वप्नद्रष्टुरिवांजसा ॥१॥ बहुरूप इवाभाति मायया बहुरूपया ॥ रममाणो गुणेष्वस्या ममाहमिति मन्यते ॥ २ ॥ यर्हि वाव महिम्नि स्वे परस्मिन्कालमाययोः ॥ रमेत गतसंमोहस्त्यक्त्वोदास्ते तदोभयम् ॥३॥ आत्मतत्त्वविशुद्ध्यर्थं यदाह भगवानृतम् ॥ ब्रह्मणे दर्शयन्रूपमव्यलीकव्रतादृतः ॥ ४ ॥ स आदिदेवो जगतां परो गुरुः स्वधिष्ण्यमास्थाय सिसृक्षयैक्षत ॥ तां नाध्यगच्छद्दृशमत्र संमतां प्रपंचनिर्माणविधिर्यया भवेत् ॥ ५ ॥

राजप्रश्नोत्तरं वक्ष्यन्ब्रह्मणे हरिणोदितम् ॥ कथयामास नवमे शुको भागवतं पुनः ॥ १ ॥ तत्र यत्तावदुक्तं यदधातुमत इत्यनेन जीवस्य कथं देहसंबंध इति तत्रोत्तरमाह । आत्ममायेति । आत्मनो हरेर्मायामंतरेण अनुभवरूपस्यात्मनोऽर्थेन दृश्येन देहादिना संबंधोंऽजसा तत्त्वतो न घटेत । अत्र हेतुः । परस्येति स्वप्नद्रष्टुर्य था स्वप्नदेहसंबंधो न घटते तद्वत् ॥ १ ॥ संसारोऽपि माययैवेत्याह । बहुरूपो बालयुवादिरूपो देवनरादिरूपश्चाभाति । गुणेषु देहादिषु ॥ २ ॥ अत एव भक्तियोगेन तन्निरासे सति मोक्षोऽपि घटत इत्याह । यर्हीति । वावशब्द एवार्थे । स्व एव महिम्नि यदा रमेत । तदेवाह । कालमाययोः पुरुषप्रकृत्योः परस्मिन् तदोभयमहंममेति च त्यक्त्वा उदास्ते पूर्णरूपेणावतिष्ठते । तदुक्तम् "यया संमोहितो जीव आत्मानं त्रिगुणात्मकम् ॥ परोऽपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते॥ अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे ॥ लोकस्याजानतो विद्वांश्चक्रे सात्वतसंहिताम् ॥" इति ॥ ३ ॥ यच्चोक्तम् परमेश्वरस्यापि देहसंबंधाविशेषात्कथं तद्भक्त्या मोक्षः स्यादिति 'आसीद्यदुदरात्पद्मम्' इत्यादिना तत्राह । आत्मनो जीवस्य तत्त्वविशुद्ध्यर्थं तद्भवत्येव । किं तत् । यत्तपआदिना भजनं स्वं भजते भगवान् ब्रह्मणे आह किं कुर्वन् । ऋतं सत्यं चिद्घनं रूपं दर्शयन् । दर्शने हेतुः । अव्यलीकेन व्रतेन तपसा आदृतः सेवितः सन् । अयं भावः । जीवस्याविद्यया मिथ्यारूपदेहसंबंधः । ईश्वरस्य तु योगमायया चिद्घनलीलाविग्रहाविर्भाव इति महान् विशेषः अतस्तद्भजनान्मोक्षोपपत्तिरिति ॥ ४ ॥ भगवद्भजनादेव तत्त्वज्ञानमित्येतत्प्रपंचयिष्यन् ब्रह्मणोऽपि तत्त्वज्ञानं तत्प्रसादादेवेति

जीवस्य बंधमोक्षाविति भक्तिमिश्रज्ञाने ज्ञानमिश्रायां वा भक्तौ स्वरूपतो व्यवस्थानम् । सदा मायास्पर्शशून्यस्य नित्यमुक्तस्य विष्वक्सेनादेर्जीवस्य नित्यभक्तौ विविधं क्रीडति । सृष्ट्यादिसमये विसृज्य महाप्रलये । त्यक्त्वा यद्वात्मतंत्रो भगवान्कृष्ण एवान्येषामवताराणामवतारिणश्चात्मतंत्रत्वेपि विप्रबालकहरणादौ कृष्णैकपारतंत्र्यदर्शनात् । आत्ममायया योगमायया पूतनावधादौ यथा वा [विसृज्य विशेषेण सृष्ट्वा मौशलादावुदास्ते साक्षिवन्नतु साक्षीति सर्वस्य प्रश्नजातस्य भक्त्युपयोगित्वम् ॥२९॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वितीयस्कन्धेऽष्टमोऽध्यायः ॥८॥ तत्र प्रश्नकदंबे अंतरेण विना अनुभवरूपस्य ज्ञानरूपस्यात्मनो जीवस्य । अत्र देहासंबंधे परस्य प्रकृत्या दिसंगरहितस्य स्वप्नदेहसंबंधो यथा निद्रारूपां मायां विना न घटते तथाऽशरीरस्य जीवस्य शरीरसंबंधो भगवदिच्छारूपमायाकार्यसत्त्वोद्गुणमयीं प्रकृतिं विना न घटते इति भावः ॥ १ ॥ मायया तत्तद्देहाध्यासेन तत्तद्देहिनमात्मानं मन्यते वस्तुतस्तथात्वाभावात् ॥ २ ॥ अत एव बहुरूपाहं ममत्वादेर्मायिकत्वादेव महिम्नि ब्रह्मभावे अत्र मानमाह—तदुक्तमिति । श्लोकाविमौ प्रथमस्कंधे व्याख्यातौ ॥ ३ ॥ अव्यलीकेन निष्कपटेन अत्राशयमाह—अयं भाव इति । अतो योगमायाविलसच्चिद्घनविग्रहवत्त्वात् ॥ ४ ॥ तस्य पद्मस्याधिष्ठानमाश्रयस्तस्यान्वेषणं मार्गणं तस्मै । इत्यर्थ इति । यदाऽधिष्ठानं नाप्तवांस्तदा परावृत्येति भावः ॥ ५ ॥

स चिंतयन्द्व्यक्षरमेकदांऽभस्युपाशृणोद्द्विर्गदितंवचो विभुः ॥ स्पर्शेषु यत्षोडशमेकविंशं निष्किंचनानां नृप यद्धनं विदुः ॥ ६ ॥ निशम्य तद्वक्तृदिदृक्षया दिशो विलोक्य तत्राऽन्यदपश्यमानः ॥ स्वधिष्ण्यमास्थाय विमृश्य तद्धितं तपस्युपादिष्ट इवाऽऽदधे मनः ॥ ७ ॥ दिव्यं सहस्राब्दममोघदर्शनो जितानिलात्मा विजितोभयेंद्रियः ॥ अतप्यत स्माऽखिललोकतापनं तपस्तपीयांस्तपतां समाहितः ॥ तस्मै स्वलोकं भगवान्सभाजितः संदर्शयामास परं न यत्परम् ॥ ८ ॥ व्यपेतसंक्लेशविमोहसाध्वसं स्वदृष्टवद्भिर्विबुधैरभिष्टुतम् ॥ प्रवर्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रं नच कालविक्रमः ॥ ९ ॥

दर्शयितुमितिहासमाह स इत्यादिना परो गुरुर्भक्तिरहस्योपदेष्टा स्वधिष्ण्यं पद्ममास्थाय अधिष्ठाय तस्याधिष्ठानान्वेषणाय पूर्वं जले निमग्नः परावृत्य स्वधिष्ण्ये स्थित्वेत्यर्थः । ऐक्षत तत्कथं स्रष्टव्यमित्यालोचितवान् । तां दृशं प्रज्ञाम् । अत्र सृष्टिविषये संमतामव्यभिचारिणीम् । विधिः प्रकारः ॥ ५ ॥ सृष्टिं चिंतयन्कदाचिद् द्व्यक्षरं वचोंऽभसि उपाशृणोत् उप समीपे श्रुतवान् । ते अक्षरे दर्शयति । कादयो मावसानाः स्पर्शास्तेषु यत्षोडशं तकारो यच्चैकविंशं पकारः वचसो निर्देशार्थं तदर्थमाह । हे नृप निष्किंचनानां त्यक्तधनानां धनं यद्विदुः येन तपोधना इति प्रसिद्धाः । तच्च द्विर्गदितं तपतपेति लोण्मध्यमपुरुषैकवचनम् । तस्य वीप्सां सादरविधिरूपामशृणोदित्यर्थः ॥ ६ ॥ एवं निशम्य तस्य वचसो वक्तुर्दिदृक्षया ततः प्रचलितः सन् दिशो विलोक्य पुनः स्वधिष्ण्यमास्थाय केनचित्प्रत्यक्षं नियुक्त इव तच्चात्मनो हितं विमृश्य तपसि मनो धृतवानित्यर्थः ॥ ७ ॥ ततश्च स ब्रह्माऽखिलानां लोकानां तापनं प्रकाशकं तपोऽतप्यत स्म कृतवान् । तपतपेत्येतस्य वचसोऽर्थे अमोघं दर्शनं यस्य । जितोऽनिल आत्मा मनश्च येन । विजितान्युभयेंद्रियाणि ज्ञानकर्मात्मकानि येन । तपतां तपश्चरतां मध्ये तपीयानतिशयेन तपस्वी । तस्मै ब्रह्मणे स्वलोकं वैकुंठाख्यं परं श्रेष्ठम् । न यत्परं यतः परमुत्कृष्टमन्यन्नास्ति ॥ ८ ॥ तमेव लोकमनुवर्णयति पंचभिः । व्यपेताः संक्लेशादयो यस्मात् । स्वदृष्टवद्भिः सत्पुण्यवद्भिः । यद्वा स्वस्य दृष्टं दर्शनमस्ति येषां तैः । आत्मविद्भिरि

हे नृपेति । नृपाणां तु पालनमेव धर्मस्तत्तु ब्राह्मणानामेवेति भावः। इत्यर्थ इति । द्विरुच्चारणं हि तपसो वैदिकत्वज्ञापनार्थमेव वैदिका हि मंत्रोच्चारणे प्रथमपदं द्विरुच्चरंति "सहस्रशीर्षा सहस्रशीर्षा पुरुषः" इति वदिति भावः ॥६ ॥ ततः कंजदेशात्प्रचलितः प्रचलितुं प्रवृत्तः स्थानांतरादर्शनात्पुनस्तत्रैव पद्मे स्थित्वा। इत्यर्थ इति। केनचिन्मद्धितैषिणा मह्यं हितमेवोपदिष्टमतस्तप एव करोमीति निश्चयंचकारेति भावः॥७॥ततस्तपतपेतिवाक्यश्रवणानंतरम् । ननु तपस्स्वरूपन्तु भगवता नोपदिष्टं स कथं तपः कृतवानिति चेत्तत्राह—अमोघं सर्वथा भगवदिच्छातः सफलं दर्शनं ज्ञानं यस्य स तथा परमेश्वरेच्छयैव तपसस्तदिति कृत्यताया ज्ञानमुपदेशसमकालमेव जातमिति भावः । "परांचिखानि व्यतृणत्स्वयंभूः" इति श्रुतेरुभयेंद्रियजयस्तस्य स्वाभाविक एव पराञ्चि पराङ्मुखानि खानीन्द्रियाणि व्यतृणाद्धिंसितवान् । विषयेभ्यः परावर्तनमेवेंद्रियाणां हिंसा स एव तज्जय इत्युच्यते । सभाजितो पूजितः ॥ ८ ॥ व्यपेता नष्टाः संक्लेशा अविद्यारागद्वेषाद्याः विमोहो मौढ्यमाकुलता वा साध्वसं कालादिभयं स्वो विष्णुः स एव लोक इति पक्षमाश्रित्याह—यद्वेति । इत्यर्थ इति । आत्मविद्भिरेव स्वरूपभूतो भगवान्दृश्यते

न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः ॥ श्यामावदाताः शतपत्रलोचनाः पिशंगवस्त्राः सुरुचः सुपेशसः ॥ १० ॥
सर्वे चतुर्बाहव उन्मिषन्मणिप्रवेकनिष्काभरणाः सुवर्चसः ॥ प्रवालवैडूर्यमृणालवर्चसः परिस्फुरत्कुंडलमौलिमालिनः ॥ ११ ॥

त्यर्थः । तयोस्ताभ्यां मिश्रं सत्त्वं च न प्रवर्तते । किंतु शुद्धमेव सत्त्वम् । कालविक्रमो नाशः ॥ ९ ॥ अपरे रागलोभादयो न संतीति किमु वक्तव्यम् । अनुव्रताः पार्षदाः । श्यामाश्च ते अवदाता उज्ज्वलाश्च पद्मनेत्राः पीतांबराः सुरुचोऽतिकमनीयाः सुपेशसोऽतिसुकुमाराः ॥ १० ॥ उन्मिषंत इव प्रभावंतो मणिप्रवेका मण्युत्तमा येषु तानि निष्कानि पदकान्याभरणानि च येषां ते । सुवर्चसोऽतितेजस्विनः । प्रवालादिवद्वर्चो वर्णो येषां ते । परितः स्फुरंति कुंडलानि मौलयो मालाश्च संति येषां ते ॥ ११ ॥

नान्यैरिति भावः ॥ स्वलोकं महावैकुंठं यद्यतो लोकात्परमन्यद्वैकुंठं परं श्रेष्ठं नास्तीति अत्राथैनं गार्गीवाचक्नवी पप्रच्छेत्यादिकोपनिषदुदाहार्याऽत्र द्यंतरिक्षलोकादिप्रजापतिलोकपर्यंतप्रश्नानामुत्तराणि गार्ग्यै याज्ञवल्क्यो दत्त्वा ब्रह्मलोकाख्यभगवल्लोकादप्युपरि पृष्टवत्यै तस्यै मातिप्राक्षीरित्यादिना शापं दातुमुद्यतः । सा च तच्छ्रुत्वा ज्ञातविज्ञेयत्वादुपररामेति। यद्वा यद्यतो वैकुंठात्परं ब्रह्माख्यं तत्त्वं परं भिन्नं नास्ति स्वरूपशक्तिविशेषाविष्कारेण मायानावृतं तदेव तद्रूपमित्यर्थः । इदमग्रे व्यक्ती करिष्यते तादृशत्वे हेतुः व्यपेतेति, स्वदृष्टेति च।स्वदृष्टेति"अथ ते मुनयो दृष्ट्वा नयनानंदभाजनम्"इत्यारभ्य"शंसतो वैष्णवीं श्रियम्" इत्यंतेन तृतीयस्कंधोक्तेः॥ ॥ ९ ॥ ताभ्यां रजसस्तमोभ्यामसुरैः प्रह्लादादिभिश्चार्चितः श्लाघिता यद्वा । दुष्टानामसनादसुर्हरिस्तत्र रमंत इत्यसुराः सुराश्च तेऽसुराश्चेति सुरासुराः "महद्वै देवानामेकमसुरत्वम्" इतिश्रुतेः । तैः स्तुत्याः तयोर्मिश्रं महत्तरं जडं यत्सत्त्वं तदपि न किंत्वन्यदेव सुष्ठु स्थापयिष्यमाणामायातः परा या भगवत्स्वरूपशक्तिस्तस्या वृत्तित्वेन चिद्रूपं शुद्धसत्त्वाख्यं सत्त्वमिति तदीयप्रकरण एव स्थापयिष्यते तदेव च यत्र प्रवर्तते तदुक्तं नारदपंचरात्रीयजितंतस्तोत्रे "लोकं वैकुंठनामानं दिव्यषड्गुणसंयुतम् । अवैष्णवानामप्राप्यं गुणत्रयविवर्जितम्" । पाद्मोत्तरखंडे तु यद् विभूतिवर्णनानंतरं "त्रिपाद्विभूतिरूपं तु शृणु भूधरनंदिनि । प्रधानपरमव्योम्नोरंतरेविरजा नदी । वेदांगस्वेदजनितैस्तोयैः प्रस्राविता शुभा । तस्याः पारे परव्योम त्रिपाद्भूतं सनातनम् । अमृतं शाश्वतं नित्यमनंतं परमं पदम् ॥ शुद्धसत्त्वमयं दिव्यमक्षरं ब्रह्मणः पदम् ॥"इत्यादिप्राकृतगुणानां परस्पराव्यभिचारित्वं तूक्तं सांख्यकौमुद्याम् । अन्योन्यमिथुनवृत्तय इति । तट्टीकायाञ्च अन्योन्यसहचरा अविनाभाववृत्तय इति यावत् । भवति चात्रागमः "अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्रगामिनः । रजसो मिथुनं सत्त्वम्" इत्याद्युपक्रम्य."नैषामादिश्च संयोगो वोपलभ्यते"इति। तस्मादत्र रजसोऽसंभवादसृज्यत्वं तमसोऽसंभवादनाश्यत्वं प्राकृतसत्त्वाभावाच्च सच्चिदानंदरूपत्वं तस्य दर्शितं तत्र 'हेतुर्न च कालविक्रमः' इति। कालविक्रमेण हि सत्त्वादयः प्रकृतिक्षोभात्पृथक् पृथक् क्रियंते तस्माद्यत्रासौ षड्भावविकारहेतुः कालविक्रम एव न प्रवर्तते तेषां तत्राभावः सुतरामेवेति भावः । किञ्च तेषां मूल एव कुठार इत्याह—न यत्र मायेति । मायात्र जगत्सृष्ट्यादिहेतुर्भगवच्छक्तिर्न तु कापट्यमात्रं रजआदिनिषेधेनैव तद्व्युदासात् । यथा वा यत्र तयोः संबंधिसत्त्वं प्राकृतं सत्त्वं यत्तदपि न प्रवर्तते मिश्रमपृथग्भूतगुणत्रयं प्रधानं चात एवेशितव्याभावात्कालमाये अपि न स्त इति मायाप्रधानयोर्भेदोऽग्रे विवेचनीयः।कैमुत्येनोक्तमेवार्थं द्रढयति—किमुतापर इति । किञ्चिद्रजस्तमोमिश्रं सत्त्वं नेति व्याख्यातं तु पिष्टपेषणमेव। सामान्यरजस्तमोनिषेधेनैव तत्प्रतिपत्तेः। ननु गुणाद्यभावान्निर्विशेष एवासौ लोक इत्याशंक्य तत्र विशेषस्तस्याः शुद्धसत्त्वात्मिकायाः स्वरूपशक्तेरेव विलासरूप इति द्योतयंस्तमेव विशेषं दर्शयति—हरेरिति । सुराः सत्त्वप्रभावा असुराः रजस्तमःप्रभावास्तैरार्चितास्तेभ्योऽर्हत्तमा इति गुणातीतत्वादिति भावः इति संदर्भः ॥ अवदाता निर्मलाः " अवदातः सिते गौरे शुद्धे " इति यादवः । इंद्रनीलमणिवन्निर्मलाः " दशदोषविनिर्मुक्तः श्याम इंद्रमणिः स्मृतः " इत्यभिधानात् "सुष्ठु मृदुश्च पेशः स्यात्" इति च ॥ १० ॥ उन्मिषंत इव चक्षुष्मंत इव पदकानि वक्षोभूषणानि "निष्कोऽस्त्री हेम्नि दीनारे साष्टे कर्षशते पले। वक्षोविभूषणे कर्षे" इति कोशात्। अनेन सारूप्यादिभाजो मुक्ता अपि तत्र संतीत्युक्तम् । प्रवाल

भ्राजिष्णुभिर्यः परितो विराजते लसद्विमानावलिभिर्महात्मना ॥ विद्योतमानः प्रमदोत्तमाद्युभिः स विद्युदभ्रावलिभिर्यथा नभः ॥ १२ ॥ श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभूतिभिः ॥ प्रेंखं श्रिता या कुसुमाकरानुगैर्विगीयमाना प्रियकर्म गायती ॥ १३ ॥ ददर्श तत्राखिल सात्वतां पतिं श्रियः पतिं यज्ञपतिं जगत्पतिम् ॥ सुनंदनंदप्रबलार्हणादिभिः स्वपार्षदमुख्यैः परिसेवितं विभुम् ॥ १४ ॥ भृत्यप्रसादाभिमुखं दृगासवं प्रसन्नहासारुणलोचनाननम् ॥ किरीटिनं कुंडलिनं चतुर्भुजं पीतांबरं वक्षसि लक्षितं श्रिया ॥ १५ ॥ अध्यर्हणीयासनमास्थितं परं वृत्तं चतुःषोडशपंचशक्तिभिः ॥ युक्तं भगैः स्वैरितरत्र चाध्रुवैः स्व एव धामन्रममाणमीश्वरम् ॥ १६ ॥ तद्दर्शनाल्हादपरिप्लुतांतरो हृष्यत्तनुः प्रेमभरा श्रुलोचनः ॥ ननाम पादांबुजमस्य विश्वसृग्यत्पारमहंस्येन पथाऽधिगम्यते ॥ १७ ॥

पार्षदाननुवर्ण्य पुनरपि लोकमनुवर्णयति । भ्राजिष्णुभिर्देदीप्यमानाभिः । प्रमदोत्तमानां दिवः कांतयस्ताभिर्विद्योतमानः सह विद्युद्भिर्वर्तमानाः सविद्युतस्ताभिरभ्रावलिभिः । तत्र विद्युत इव स्त्रियाः । अभ्रपंक्तय इव विमानावलयः । नभ इव लोकः ॥ १२ ॥ श्रीः संपत् । रूपिणी मूर्तिमती । मानं पूजाम् । विभूतिभिर्नानाविभवैः प्रेंखमांदोलं संश्रिता कुसुमाकरो वसंतस्तस्यानुगा भ्रमरास्तैर्विविधं गीयमाना स्वयं तु प्रियस्य हरेः कर्म गायंतीव भवति ॥ १३ ॥ य एवंभूतो लोकस्तत्र तस्मिन् ॥ १४ ॥ भृत्यानां प्रसादेऽभिमुखं दृगेव आसव इव द्रष्टॄणां हर्षकरी यस्य तं प्रसन्नहासमरुणलोचनं चाननं यस्य वक्षसि स्थितया च श्रिया लक्षितम् अलंकृतमित्यर्थः ॥ १५ ॥ अध्यर्हणीयं वरिष्ठं सिंहासनम् । चतस्रः प्रकृतिपुरुषमहदहंकाररूपाः षोडश एकादशेंद्रियपंचमहाभूताख्याः पंचतन्मात्ररूपा या शक्तयस्ताभिर्वृतम् । स्वैर्भगैः स्वाभाविकैरैश्वर्यादिभिः इतरत्र योगिष्वध्रुवैरागंतुकैः साधारणैरित्यर्थः । एवं सत्यपि स्व एव धामन्स्वस्वरूप एव रममाणम् अत एवेश्वरम् ॥ १६ ॥ तस्य दर्शनेन य आह्लादस्तेन परिप्लुतं व्याप्तमां

दयो मणिभेदाः ॥ ११ ॥ सिंहावलोकन्यायेन पुनर्लोकं वर्णयति भ्राजिष्णुभिरिति ॥ १२ ॥ "प्रेखमांदोलनम्" इति कोशात् । ब्रह्मादय एव भ्रमरीभूता ज्ञेयाः ॥ १३ ॥ तत्र वैकुंठे ॥ १४ ॥ इत्यर्थ इति । "लक्ष दर्शनांकनयोः" इति लक्षितमंकितमिति भावः ॥ १५ ॥ इत्यर्थ इति । आगंतुकत्वात्साधारणैरिति भावः । यद्वा द्रष्टा ज्ञानक्रियाबलाख्याभिः प्रह्वीसत्येशानानुग्रहाख्याभिर्वात्मांतरात्मपरमात्मज्ञानात्माख्याभिर्वा चतुःशक्तिभिर्वृतं मोचिका सूक्ष्माऽसूक्ष्मामृताज्ञानामृताव्यापिनीव्योमरूपिण्यनंताऽणिमा-माहिमा-गारिमा-लघिमा-प्राप्ति-प्राकाश्येशित्वप्राकाम्याख्याभिः षोडशशक्तिभिः पञ्चभिर्विमलोत्कर्षिणीज्ञानीक्रियायोगाख्याभिश्च वृतम् यद्वा चतस्रः शक्तयः पाद्मो त्तरखंडे योगपीठवर्णनोक्ता धर्माद्याः यथा "धर्मज्ञानबलैश्वर्यवैराग्यैः पादविग्रहैः । ऋग्यजुःसामाथर्वाणरूपैर्नित्यं वृतं क्रमात्" इति षोडशशक्तयश्चंडाद्याः यथा तत्रैव "चंडादिद्वारपालैश्च कुमदाद्यैश्च रक्षिता" नगरीति पूर्वेणान्वयः । ते च "चंडप्रचंडौ प्राग्द्वारे याम्ये भद्रसुभद्रकौ । वारुण्यां जयविजयौ सौम्ये धातृविधातरौ ॥ कुमुदः कुमुदाक्षश्च पुंडरीकोऽथवामनः । शंकुकर्णः सर्पनेत्रः सुमुखः सुप्रतिष्ठितः ॥ एते दिक्पतयः प्रोक्ताः पुर्यामत्र सुशोभने" ॥ इति कुमुदादयश्च द्वौद्वावाग्नेय्यादिदिक्पतय इत्यर्थः । पञ्चशक्तयस्तु "कूर्मश्च नागराजश्च वैनतेयस्त्रयीश्वरः । छंदांसि सर्वमंत्राश्च पीठरूपत्वमाश्रिताः" इति । त्रयीश्वर इति वैनतेयविशेषणमिति संदर्भचक्रवार्त्तिकारौ एवं सत्यपि ऐश्वर्यादियुक्तत्वेपि अत एव स्वरूपविस्मरणाभावादेव ॥ १६ ॥ ज्ञानमार्गेणाहिंसादिजन्येन ॥ १७ ॥

तं प्रीयमाणं समुपस्थितं तदा प्रजाविसर्गे निजशासनार्हणम् ॥ बभाष ईषत्स्मितशोचिषा गिरा प्रियः प्रियं प्रीतमनाः करे स्पृशन् ॥ १८ ॥ श्रीभगवानुवाच ॥ त्वयाऽहं तोषितः सम्यग्वेदगर्भ सिसृक्षया ॥ चिरं भृतेन तपसा दुस्तोषः कूटयोगिनाम् ॥ १९ ॥ वरं वरय भद्रं ते वरेशं माऽभिवांछितम् ॥ ब्रह्मञ्छ्रेयः परिश्रामः पुंसो मद्दर्शनावधिः ॥ २० ॥ मनीषितानुभावोऽयं मम लोकावलोकनम् ॥ यदुपश्रुत्य रहसि चकर्थ परमं तपः ॥ २१ ॥ प्रत्यादिष्टं मया तत्र त्वयि कर्मविमोहिते ॥ तपो मे हृदयं साक्षादात्माऽहं तपसोऽनघ ॥ २२ ॥ सृजामि तपसैवेदं ग्रसामि तपसा पुनः ॥ बिभर्मि तपसा विश्वं वीर्यं मे दुश्चरं तपः ॥ २३ ॥

तरमंतःकरणं यस्य । हृष्यंती रोमांचिता तनुर्यस्य । प्रेमभरेणाश्रूणि लोचनेषु यस्य । विश्वसृक् ब्रह्मा । पारमहंस्येन पथा ज्ञानमार्गेण ॥ १७ ॥ तं ब्रह्माणं भगवान् बभाषे । प्रजाविसर्गकार्ये । निजशासनार्हणं स्वनियोगार्हम् । प्रजाविसर्गे समुपस्थितमिति वान्वयः । ईषत्स्मितेन शोचिर्दीप्तिः शोभा यस्यास्तया गिरा ॥ १८ ॥ सिसृक्षया हेतुना चिरं संभृतेन तपसाऽहं सम्यक् तोषितः । दुस्तोषस्तोषयितुमशक्यः ॥ १९ ॥ मा इति माम् । श्रेयसां फलानां परिश्रामः परिश्रमः साधनप्रयासः मम दर्शनमवधिर्यस्य स तथा अतोऽधिकं तु पुनः फलं नास्तीत्यर्थः ॥ २० ॥ एतच्च मत्कृपयैव त्वया प्राप्तमित्याह । मनीषितमिच्छा तुभ्यमिदं दातव्यमिति या ममेच्छा तस्यानुभावोऽयम् । कोऽसौ तमाह । मम लोकस्यावलोकनं यत् । न चेदं मयैव तपोबलेन प्राप्तमिति स्वातंत्र्यं मन्यस्व तत्प्रवृत्तेरपि मत्कृतत्वादित्याह । रहसि तपतपेति यद्वच उपश्रुत्य परमं तपश्चकर्थ कृतवानसि ॥ २१ ॥ तदपि त्वां प्रति मयैवादिष्टमुपदिष्टम् । कदा । तत्र तदा सृष्ट्यारंभे त्वयि कर्मणि कार्येऽर्थे विमोहिते सति । किं च तपो नाम ममैव शक्तिरित्याह । तपो मे हृदयमंतरंगा शक्तिः । आत्मा स्वरूपम् । "यस्य ज्ञानमयं तपः" इति श्रुतेः ॥ २२ ॥ ग्रसामि संहरामि । बिभर्मि पालयामि । वीर्यं शक्तिः ॥ २३ ॥

प्रीयमाणं हृष्यंतम् । तदा नत्यवसरे । ईषद्बभाषे इति योज्यम् । " महांतो हि प्रकृत्या मितभाषिणः" इत्युक्तेः ॥ ईषद्धासस्यैव स्मितत्वात्तेनेषत्पदं न योज्यं पुनरुक्तेः । प्रजाविसर्गे निजशासनार्हणामिति संबंधे प्रजाविसर्गेतरनिजशासनानर्हमिति प्रतीतिः स्यादतः समुपस्थितमिति वेत्युक्तम् । करस्पर्शेण हि प्रीत्यतिशयो द्योत्यते ॥ १८ ॥ वेदगर्भेति । भावि वेदगर्भत्वं स्वामंत्रणेनाहेति भावः । कूटयोगिनां योगच्छद्मना लोकवचनपराणां कलियुगे प्रायेण कूटयोगिन एव भविष्यंति ते च स्वसंगिभिः सह नरके गमिष्यंति "कलौ पाखंडपंथानो मुंडाः केशादिधारिणः । बहवः प्रचारिष्यंति वेदविप्रामरद्रुहः ॥ स्वदम्भवाचा लोकांस्ते चालयिष्यंति धर्मतः ॥ ते च तदनुगाः सर्वे यम्यदंडेन ताडिताः ॥ कुंभीपाकादिषु चिरं वत्स्यंति नात्र संशयः" इत्यादिकौशिकसंहितोक्तेरलं प्रसक्तानुप्रसक्त्या ॥१९॥ वरेशं वरान् दातुं समर्थम् । ब्रह्मन्निति वरदानपात्रतोक्ता । इत्यर्थ इति मद्दर्शनादधिकं किञ्चिदपि जगति नास्ति वरेणैतावतैवालं "यद्भवान्मोक्षगोचरः' इत्यादिमार्कंडेयोक्तेः । त्वद्दर्शने सर्वे वराः प्राप्ताः स्युः "सर्वे पदा हस्तिपदे निमग्नाः" इति न्यायेनेति भावः ॥ २० ॥ एतच्च मद्दर्शनं च ॥२१॥ विमोहिते किं कर्त्तव्यं कथं कर्तव्यमित्यज्ञातवति सति न केवलं त्वय्येव तपसा सामर्थ्यं भविष्यति किं तु ममापि तदेव शक्तिरित्याह "किञ्चेति । तपसो भगवच्छक्तित्वे प्रमाणमाहयस्येति यस्य भगवतः ज्ञानमयं ज्ञानप्रचुरज्ञानस्वरूपं वा न तु कायक्लेशसाध्यं तप इति श्रुतिपदार्थः ॥ २२ ॥ तदेव स्फुटयति । पदार्थविषयाशेषज्ञानाभावे सर्जनाद्यनुपपत्तेस्तपसैव ज्ञानरूपेण ॥ २३ ॥

ब्रह्मोवाच ॥ भगवन्सर्वभूतानामध्यक्षोऽवस्थितो गुहाम् ॥ वेद ह्यप्रतिरुद्धेन प्रज्ञानेन चिकीर्षितम् ॥ २४ ॥ तथापि नाथमानस्य नाथ नाथय नाथितम् ॥ परावरे यथा रूपे जानीयां ते त्वरूपिणः ॥ २५ ॥ यथाऽऽत्ममायायोगेन नानाशक्त्युपबृंहितम् ॥ विलुपन्विसृजन्गृह्णन्बिभ्रदात्मानमात्मना ॥२६॥ क्रीडस्यमोघसंकल्प ऊर्णनाभिर्यथोर्णुते॥ तथा तद्विषयां धेहि मनीषां मयि माधव ॥२७॥ भगवच्छिक्षितमहं करवाणि ह्यतंद्रितः ॥ नेहमानः प्रजासर्गं वध्येयं यदनुग्रहात् ॥ २८ ॥ यावत्सखा सख्युरिवेश ते कृतः प्रजाविसर्गे विभजामि भोजनम् ॥ अविक्लवस्ते परिकर्मणि स्थितो मा मे समुन्नद्धमदोऽजमानिनः ॥ २९ ॥

अध्यक्षोऽधिष्ठाता गुहां गुहायां बुद्धाववस्थितः सन्यद्यपि वेद तथापीत्युत्तरेणान्वयः ॥ २४ ॥ नाथमानस्य याचमानस्य उपतप्यमानस्येति वा । हे नाथ नाथय आशंसय प्रयच्छ नाथितं याचितम् । नाथृनाधृयाच्ञोपतापैश्वर्याशीष्षु । नाथितमेवाह । परं सूक्ष्ममवरं स्थूलं च ते रूपं यथा जानीयाम् ॥ २५ ॥ यथा च त्वं क्रीडसि तद्विषया मनीषां मयि धेहीत्युत्तरेणान्वयः । नानाशक्त्युपबृंहितं नानाशक्तिभिरुपचितं विश्वं विलुंपन् संहरन् विविधं सृजन् बिभ्रत्पालयन् आत्मना स्वयमेवात्मानं ब्रह्मादिरूपं गृह्णन्नुगृह्णन् क्रीडसि ॥ २६ ॥ ऊर्णुते तंतुभिरात्मानमाच्छादयति ॥ २७ ॥ तत्किं सृष्टेरुद्विग्न एव तत्त्वज्ञानं प्रार्थयसे नेत्याह । भगवता त्वया शिक्षितमनुशिष्टमतंद्रितोऽनलसः सन् करिष्यामि । तर्हि किमनेन तत्त्वज्ञानेन तत्राह । यस्मादेवंभूतात्तवानुग्रहात्प्रजासर्गमीहमानः कुर्वन्नप्यहंकारादिभिर्बद्धो न भवेयमिति ॥ २८ ॥ अवश्यं च मदो भविता स तु कंचित्कालं माभूदिति प्रार्थयते । यावदिति । भो ईश ते त्वया लौकिकस्य सख्युः सखेवाहंकृतः करस्पर्शनादिना ममत्वेन संमानितः सन्प्रजासर्गरूपे तव परिकर्मणि सेवायां स्थितोऽविक्लवोऽव्याकुल एव । यावज्जनं विभजाम्युत्तममध्यमादिभेदेन सृजामि तावत्त्वत्संमाननादहमप्यजः स्वतंत्र इति मानिनो मे समुन्नद्ध उत्कटो मदो माभूत् ।

हे भगवन्निति । अप्रच्युतज्ञानत्वमाह तदेवाह अप्रतिरुद्धेनेति॥२४॥नाथेति।एतेन स्वस्य शिष्यत्वं हरेर्गुरुत्वञ्चोक्तम्।“द्वे वाव ब्रह्मणो रूपे”इति श्रुतेः॥२५॥यथेति युग्मकम्।आत्मनो मायायोगो योगमाया च तयोर्द्वैक्यं तेन मायया बहिरंगशक्त्या नानाशक्त्युपबृंहितं द्रव्यज्ञानक्रियाशक्तिसमेतं विश्वं विलुंपन्संहरन् विसृजन् विविधं सृजन् बिभ्रत्पालयन् आत्मना स्वयमेवात्मानं गृह्णन्स्वस्वरूपं प्रकटयन् क्रीडसि।ऊर्णुते तंतुसंतानं करोति।योगमायापक्षे गायिकप्रपंचांतर्वर्त्तिलोके तत्रैव नानाशक्त्युपबृंहितं ह्लादिन्यादिशक्तिगणपरिपूरितमात्मानं स्वं स्वीयं च वास्तवं वस्तु अनन्यसिद्धत्वादात्मनैव गृह्णन्योगमाययांतरंगशक्त्या तच्च किञ्चिद्विलुंपन्कमपि भक्तं प्रति आवृण्वन् किञ्चिद्विसृजन् विविधं प्रकाशयन् किञ्चिद्बिभ्रत्कमपि कालं भूयान् क्रीडसि ऊर्णनाभिदृष्टांतस्तु स्थूलत उभयत्राप्यात्मैककारणत्वमात्रांशेन ज्ञेयः । मयि धेहि अहं मायां योगमायां तत्तत्प्रकाशितं वस्तु च जानीयामित्यर्थः । तत्र पररूपजिज्ञासायामुत्तरं ज्ञानमित्यादिभिः अवररूपजिज्ञासायामुत्तरं तत्रैव “ऋतेर्थम्” इत्यादिना मायामायिकयोरेकात्मकत्वात् । यथात्ममायायोगेत्यस्य समाधानं यद्रूपगुणकर्मक इत्यनेन भविष्यति । हे माधवेति मायापा कर्तृत्वेन ज्ञानदाने समर्थमिमीति भावः ॥ २६ ॥ २७ ॥ भगवच्छिक्षितमित्यत्रोपदेश एतन्मतं समातिष्ठेत्यादिना भविष्यति ॥ २८ ॥ मनोवांछितं प्रार्थयते—यावदिति । हे ईश सर्वं कर्त्तुं समर्थेति भावः । सखेव कृत इति सख्यभक्तिमेव प्राप्नुयामिति । किञ्च स्रष्टृत्वावस्थानंतरं यावदधिकारमवस्थितिराधिकारिकाणामिति न्यायेन मुक्तिरेव भविष्यतीति भावः । संभवत्वादाह यद्वेति । इत्यर्थ इति । आत्मनेपदमार्षम् । नह

श्रीभगवानुवाच ॥ ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम् ॥ सरहस्यं तदंगं च गृहाण गदितं मया ॥ ३० ॥
यावानहं यथाभावो यद्रूपगुणकर्मकः तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात् ॥ ३१ ॥

यद्वा । मदो मा समुन्नद्ध मा समुन्नह्यताम् । कर्मणि लुङ् । उद्रिक्तो न भवेदित्यर्थः ॥२९॥ ज्ञानं शास्त्रोक्तम् । विज्ञानमनुभवः । रहस्यं भक्तिः । सुगोप्यमपि वक्ष्यामीत्यादिनिर्देशात् तस्यांगं साधनम् ॥ ३० ॥ ननु त्वद्दर्शनेऽप्यसमर्थोऽहं कथं ज्ञानाधिकारी स्यां तत्राह । यावानिति । यावान् । स्वरूपतः यथाभावो यादृक्सत्तावान् । यानि

धातोर्लुङि प्रथमपुरुषैकवचनं "न माङ्योगे"इत्यडभाव इति भावः ॥२९॥ अथ तत्र परमभागवताय ब्रह्मणे श्रीभागवताख्यं निजं शास्त्रमुपदेष्टुं तत्प्रतिपाद्यतमं वस्तुचतुष्टयं प्रतिजानीते ज्ञानमित्यादिषट्कम् मम भगवतो ज्ञानं शब्दद्वारा याथार्थ्यनिर्द्धारणं मया गदितं सद्गृहाणेत्यन्यो न जानातीति भावः । यतः परमगुह्यं ब्रह्मज्ञानादपि रहस्यतमं "मुक्तानामपि सिद्धानाम्" इत्याद्युक्तेः । तच्च विज्ञानेन तदनुभवेनापि युक्तं गृहाण न चैतावदेव किन्तु सुरहस्यं तत्रापि रहस्यं यत्किमप्यस्ति तेनापि सहितं तच्च प्रेमभक्तिरूपमित्यग्रे व्यंजयिष्यते तथा तदंगं च गृहाण तच्च सति त्वपराधाख्यविघ्ने नष्टे झटिति विज्ञानरहस्ये प्रकटयेत् । तस्मात्तस्य ज्ञानस्य सहायं च गृहाणेत्यर्थः । तच्च श्रवणादिभक्तिरूपमित्यग्रे व्यंजयिष्यते । यद्वा । सरहस्यमिति तदंगस्यैव विशेषणं ज्ञेयं सुहृदाविव मिथः संवर्द्धकयोरेकत्रावस्थानादिति संदर्भः । विश्वनाथः । तत्र परावरे यथारूपे जानीयामित्यनेन तवाप्राकृतं रूपं प्राकृतं च रूपं कीदृशमिति यथात्ममायायोगेनेत्यनेन तव माया योगमाया च कीदृशीति यथा क्रीडसीति मायाधिकृतेषु योगमायाधिकृतेषु च लोकेषु तव केन प्रकारेण क्रीडेति भगवच्छिक्षितमहं करवाणि ह्यतंद्रित इत्यनेन मदभीष्टसिद्ध्यर्थं तच्छिक्षितं किं मम कर्तव्यमिति ब्रह्मणा क्रमेण :दृष्टस्य वस्तुचतुष्टयस्थचतुःश्लोक्या क्रमेणैवोत्तरं दातुं भगवान्प्रतिजानीते—ज्ञानमिति । एतदेव भगवद्दत्तोत्तरचतुष्ट्यात्मकमेव श्रीभागवतं शास्त्रं भगवत्प्रोक्तत्वेन प्रसिद्धमित्याहुः । न केवलं मद्रूपस्य ज्ञानमेव तुभ्यं ददाम्यपि तु विज्ञानेनानुभवेन समन्वितं यत्तदपि । किञ्च परमगुह्यं निर्विशेषब्रह्मज्ञानादपि श्रेष्ठत्वादिति भावः । किञ्च रहस्यं प्रेमभक्तिश्च स प्रसिद्धस्त्वं गृहाण सुगोप्यमपि वक्ष्यामीत्यादिनिर्देशात्तस्य रहस्यत्वं ज्ञेयं तस्य रहस्यस्यांगं साधनभक्तियोगस्तं चेति त्वयाऽपृष्टमप्येतत्त्रयं कृपयैव वक्ष्यामि किं वा भगवच्छिक्षितमहं करवाणीत्यनेनैवैतत्त्रिकमपि त्वया पृष्टमेवेति चतुर्थश्लोक एव रहस्यत्वाद्बहिरंगलोकागम्यतयैव वक्ष्यामि अत्र रहस्यतदंगयोरेतयोर्नामाग्रहणं प्रथमोक्ताद्ब्रह्मज्ञानादप्यतिगोप्यत्वमुत्कृष्टत्वञ्च बोधयतीति ज्ञेयं मया निगदितं गृहाणेत्यवदधानमपि ब्रह्माणं विशेषतोऽवधापयति॥३०॥ अत्राक्षिपति—नन्विति । तत्र साध्ययोर्विज्ञानरहस्ययोराविर्भावार्थमाशिषं ददाति—यावानिति । यावान्स्वरूपतो यत्परिमाणकोहं यथा भावः सत्ता यस्येति यल्लक्षणोहमित्यर्थः । यानि स्वरूपांतरंगाणि रूपाणि श्यामचतुर्भुजत्वादीनि । गुणा भक्तवात्सल्याद्याः । कर्माणि तत्तल्लीला यस्य स यद्रूपगुणकर्मकोहं तथैव तेन सर्वेण प्रकारेणैव तत्त्वविज्ञानं याथार्थ्यानुभवो मदनुग्रहात्तवास्तु । एतेन चतुःश्लोकार्थस्य निर्विशेषपरत्वं स्वयमेव परास्तम् । वक्ष्यते च चतुःश्लोकीमेवोद्दिशता भगवता स्वयमुद्धवं प्रति "पुरामया"इत्यादौ "ज्ञानं परं मन्महिमावभासम्" इति तत्त्वविज्ञानपदेन रूपादीनामपि स्वरूपभूतत्वं व्यक्तम् । अत्र विज्ञानाशीः स्पष्टा रहस्याशीश्च परमानंदात्मकतत्तद्याथार्थ्यानुभवेनावश्यप्रेमोदयादिति संदर्भः । विश्वनाथः किञ्च ज्ञानं शब्दद्वारा याथार्थ्यनिर्द्धारणं परोक्षं तच्च किञ्चिच्छुद्धचित्तानामास्तिकानां संभवेदपि विज्ञानं त्वपरोक्षानुभवो मत्स्वरूपस्य याथार्थ्येन साक्षात्कारः । स च रहस्यतदंगशब्दाभ्यां प्रेमभक्तिसाधनभक्तिभ्यां विना नैव भवतीति बोधयंस्तदर्थमाशिषं ददाति यावान्यत्प्रमाणाकारः यादृशस्थौल्यकार्श्यदैर्घ्यतुंगतावृत्ततायौचित्यसंनिवेशविशिष्टावयव इत्यर्थः । यथाभावो यादृशाभिप्रायः यानि रूपाणि श्यामत्वद्विभुजत्वचतुर्भुजत्वकृष्णरामत्वनृसिंहत्वादीनि । गुणा भक्तवात्सल्याद्याः । कर्माणि लक्ष्मीपरिग्रहगोवर्द्धनोद्धरणादीनि यस्य सः तथैवेति । येन येन प्रकारेण मम परिमाणाभिप्रायरूपगुणकर्माण्याविर्भवंति तेनैव प्रकारेण तत्त्वविज्ञानं तेषां याथार्थ्यानुभवोस्तु तत्राशीर्वादेनैवानुग्रहे व्यंजितेपि:पुनर्मदनुग्रहपदोपादानं परमांतरंगमत्कृपाशक्तिवृत्तिविशेषसाधनभक्तिप्रेमभक्त्योर्वृद्धितारतम्येनैव तद्रूपगुणादिमाधुर्यानुभवतारतम्ये समुत्पत्स्यमानेप्येतस्मादपि मत्स्वरूपादधिकतममाधुर्यं परमदुर्लभं कृष्णस्वरूपं मां व्रज भूमौ त्वं साक्षादनुभविष्यसीति

अहमेवासमेवाऽग्रे नान्यद्यत्सदसत्परम् ॥ पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥ ३२ ॥

रूपाणि गुणाः कर्माणि च यस्य ॥ ३१ ॥ एतदेव सम्यगुपदिशन् यावानित्यस्यार्थं स्फुटयति । अहमिति । अहमेवाग्रे सृष्टेः पूर्वमासं स्थितः । नान्यत्किंचित् । यत सत्स्थूलमसत्सूक्ष्मं परं तयोः कारणं प्रधानम् । तस्याप्यंतर्मुखतया तदा मय्येव लीनत्वात् अहं च तदा आसमेव केवलं न चान्यदकरवम् । पश्चात्सृष्टेरनंतरमप्यहमेवास्मि यदेतद्विश्वं तदप्यहमस्मि । प्रलये योऽवशिष्येत सोऽप्यहमेव । अनेन चानाद्यनंतत्वादद्वितीयत्वाच्च परिपूर्णोऽहमित्युक्तं भवति ॥ ३२ ॥

सूचयति एतेन चतुःश्लोक्या निर्विशेषस्वरूपमात्रपरत्वेन व्याख्यानं परास्तम् ॥ ३१ ॥ स्वामिव्याख्यानं स्फुटार्थमेव एवं चतुःश्लोक्यादेयत्वेन ज्ञानादिकं प्रतिश्रुत्य तत्प्राप्तावाशिषैव योग्यतामापाद्य च प्रथमं ज्ञानमुपदिशन्नेव परावरे यथारूपे जानीयामिति प्रश्नस्योत्तरमाह– अहमेवाग्रे सृष्टेः पूर्वमासमिति तर्जन्या स्ववक्षः स्पृशति । एवकारेणान्ययोगव्यवच्छेदकेन मद्विजातीयं प्राकृतं वस्तु किमपि नासीदिति लभ्यते । अयमर्थः संप्रति भवंतं प्रति प्रादुर्भवन्नसौ परममनोहराकारो रूपगुणमाधुरीमहोदधिरहमेवाग्रे महाप्रलयकालेप्यासमेव "वासुदेवो वा इदमग्र आसीन्न ब्रह्मा न च शंकरः इति आत्मैवेदमग्र आसीत्पुरुषविधः इति, पुरुषो ह वै नारानायण इति, एको ह वै नारायण आसीदिति, पुरुषो ह वै नारायणोऽकामयत । अथ नारायणादजो अजायत यतः सर्वाणि भूतानि नारायणः परं ब्रह्म तत्त्वं नारायणः परम् ऋतं सत्यं परं ब्रह्म पुरुषः । कृष्णपिंगलमिति, एको नारायण आसीन्न ब्रह्मा नेशानः" इत्यादिश्रुतिभ्यः "भगवानेक आसेदम्" इत्यादिस्मृतेश्च । अत्र वैकुंठतत्पार्षदादीनामपि तदुपांगत्वादहंपदेनैव ग्रहणं राजासौ प्रयाती तिवत् । अतस्तेषाञ्च तद्वदेव स्थितिर्बोध्यते तथा च राजप्रश्नः "स चापि यत्र पुरुषो विश्वस्थित्युद्भवाप्ययः । मुक्त्वात्ममायां मायेशः शेते सर्वगुहाशयः" इति श्रीविदुरप्रश्नश्च "तत्त्वानां भगवंस्तेषां कतिधा प्रतिसंक्रमः । तत्रेमं क उपासीरन्क उस्विदनुशेरते" इति स्वामिचरणानां व्याख्या च तत्र प्रलये इमं परमेश्वरं शयानं राजानमिव चामरग्राहिणः के उपासीरन्के वानुशेरते शयानमनु स्वपंतीत्येषा । काशीखंडेप्युक्तं " न च्यवंतेपि यद्भक्ता महत्यां प्रलयापदि । अतोच्युतोखिले लोके स एकः सर्वगोव्ययः" इति । आसमेवेत्ययोगव्यवच्छेदः । अस्तेः सत्तार्थकत्वात् तदानींतदानीं मद्विद्यमानताया अभावः सर्वथा नाभूदित्येवार्थप्रतीतेः । अहमेवासमेव न किमप्यकरवमिति क्रियांतरव्यावृत्तिश्च वस्तुतो न घटेत अस्तेः सर्वधात्वर्थेष्वेवानुस्यूतत्वात् । पूर्वस्मिन्वर्षेऽस्मिन्ग्रामे चैत्र आसीदेवेत्युक्ते चैत्रस्य शयनाशनभोजनादिक्रिया नैव व्यावर्त्तते किंत्वभाव एवेति किं तूक्तपरिपाट्या घटते च यथा संदर्भे आसमेवेति ब्रह्मादिबहिर्जनज्ञानगोचरसृष्ट्यादिलक्षणक्रियांतरस्यैव व्यावृत्तिर्न तु स्वांतरंगलीलाया अपि यथाधुना राजासौ न किञ्चिदपि करोतीत्युक्ते राजसंबंधिकार्यमेव निषिध्यते न तु शयनभोजनादिकमपीति तत्त्वमिति दृष्टम् । ननु क्वचिन्निर्विशेषमेव ब्रह्मासीदिति श्रूयते तत्राह सत्कार्यमसत्कारणं ताभ्यां परं यद्ब्रह्म तन्न मत्तोन्यत् क्वचिदधिकारिणि शास्त्रे वा स्वरूपभूतनानाविशेषव्युत्पत्त्यसमर्थे सोयमहमेव निर्विशेषब्रह्मतया प्रतिभामीत्यर्थः । त्वं तु पूर्वश्लोकोक्तमाशीर्वादानुग्रहाभ्यां रूपगुणादिविशिष्टमेव मां जानीहीति भावः । ननु सृष्टेरनंतरं जगदेव न तु त्वमुपलभ्यसे तत्राह पश्चात्सृष्टेरनंतरमप्यहमेवास्म्येवेति वैकुंठेषु भगवदाद्याकारेण प्रपञ्चेष्वंतर्यामिरूपेण यथासमयं मत्स्याद्यवतारूपेण च ननु तर्हि पृथिव्यादिकं देवतिर्यगादिकञ्च त्वं न भवसीति तवापूर्णत्वप्रसक्तिस्तत्राह यदेतच्च व्यष्टि समष्टिविराण्मयं विश्वं तदप्यहमेव मच्छक्तिजन्यत्वान्ममैव प्राकृतं रूपं परावरे यथारूपे जानीयामिति त्वया यदपरं रूपं पृष्टं तदेवेदं त्वं जानीहीत्यर्थः । तथा योवशिष्यते"भवानेकः शिष्यते शेषसंज्ञः" इत्याद्युक्तः परमेश्वरः सोहमस्मि तत्राहमित्यस्य त्रिरावृत्त्या निर्द्धारणस्य सूचितत्वात् एतद्रूपगुणादिविशिष्टस्य मम त्रैकालिकनित्यस्थित्या पररूपत्वं सृष्टिसंहारयोर्मध्य एव दृश्यमिदं मायिकप्रपंचजातमपरं रूपमिति परावररूपयोर्ज्ञानमुक्तम् । विज्ञानं तु पररूपस्य प्रथमस्यैव तच्च तदैव स्याद्यदा श्रवणकीर्त्तनादिजन्यप्रेमभक्त्या तद्रूपगुणादिमाधुर्यमास्वाद्यमानः स्यादिति चतुर्थश्लोके व्यक्तं भावीति विश्वनाथः । संदर्भोप्येतादृशव्याख्यः ॥ ३२ ॥

**ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि ॥ तद्विद्यादात्मनो मायां यथा भासो यथातमः ॥ ३३ ॥**

'यथात्ममायायोगेन'इत्यनेन मायाया अपि पृष्टत्वाद्वक्ष्यमाणोपयोगित्वाच्च मायां निरूपयति। ऋतेऽर्थं विनापि वास्तवमर्थम्। यद्यतः किमप्यनिरुक्तमात्मन्यधिष्ठाने प्रतीयेत। सदपि च न किञ्च जीवस्य परमात्मज्ञानविज्ञाने प्रति माया खल्वंशेनानुकूला प्रतिकूला च भवति विज्ञाते च परमात्मनि मयि योगमायैवाधिकरोति सा खल्वनुकूलैवेति ते द्वे अवश्यनिरूपणीये इति ज्ञापयन् यथात्ममायायोगेनेत्यनेन व्यंजितस्य तव माया योगमाया च कीदृशीति प्रश्नस्योत्तरं तंत्रेणैव क्रमेणाह ऋतेर्थमिति यद्यतोऽर्थं सत्यं वस्तु विना न प्रतीयते किं त्वर्थसत्यं वस्त्वेव प्रतीयते इत्यर्थः। तथा यतः अर्थं विना प्रतीयते अर्थो न प्रतीयते किंत्वनर्थः प्रतीये तेत्यर्थः। तत्ताम् आत्मनि स्वस्मिन्मुक्तो बद्धश्च जीव आत्मनो मम मायां क्रमेण विद्याविद्येति वृत्तिद्वयां मायाख्यां शक्तिं विद्यात् जानीयात् विद्याया दृष्टांतः यथा भासो दीपादिप्रकाशः दीपादिप्रकाशाद्यथा गृहे विद्यमानो घटपटादिरर्थ एव प्रतीयते न तु दीपानयनात्पूर्वं संभावितो घटपटाद्यभावस्तथा सर्पवृश्चिकादिरागंतुकश्च भयकारणमनर्थः प्रतीयते एवमेव विद्याया हेतोर्मुक्तेन जीवेन स्वस्मिन्नित्यसंबद्धं ज्ञानादिकमेव प्रतीयते नत्वविद्यादशायामिव तदभावः नापि स्वस्मिन्नसंबद्धो देहदैहिकशोकमोहादिकश्च प्रतीयते अविद्याया दृष्टांतः यथा तमोंधकारः अंधकाराद्यथा स्वगृहे विद्यमानो घटपटादिरर्थो न प्रतीयते किं त्वविद्यमानोपि संभाव्यमानः सर्पचौरादिकोभयकारणमनर्थः प्रतीयते एवमेवाविद्याया हेतोरेव बद्धेन जीवेन स्वस्मिन्नित्यसंबंधितया वर्त्तमानमपि ज्ञानानंदादिकं न प्रतीयते किंतु स्वस्मिन्नसन्नपि स्वसंबंधित्वेन वर्त्तमानो देहदैहिकशोकमोहादिरेव प्रतीयते तेन कुसुमशृंगादीनां सत्यत्वेप्याकाशशशादीनां तत्संबंधाभावादेवाकाशकुसुममलीकं शशशृंगमलीकमिति यथोच्यते तथैव देहानां तद्धर्माणां शोकमोहसुखदुःखादीनां च प्राधानिकत्वात्सत्यत्वेपि जीवस्य तत्संबंधाभावादेव जीवस्य देहादयो मिथ्याभूता इति शास्त्रेषूच्यते जीवस्य मिथ्याभूतोपि देहसंबंधः खल्वविद्यया कल्पते विद्यया लुप्यत इति विद्याऽविद्ययोर्दृष्टांतावाभासतमसी इत्यत्र "छायातपौ यत्र न गृध्रपक्षौ" इत्यष्टमस्कंधे एव प्रमाणं ज्ञेयम् केचित्तु तमो दृष्टांतोयमावरणंश एव आवरणविक्षेपयोस्तु दृष्टांताः सर्पव्याघ्रभूतावेशाद्या ज्ञेया इत्याहुस्तेपि तामसत्वात्तमःशब्देनैव ग्राह्या इत्यपरे। एवं जीवे सार्वदिकविद्यमानवस्तुप्रत्यायनमविद्यमानवस्तुप्रत्यायनं चेत्यविद्याया धर्मावावरणविक्षेपशब्दाभ्यामुच्यते। अथार्थशब्दस्य धनवाचित्वाच्छ्लेषेण भाग्यप्राप्तस्वीयबहुधनो वणिगिव विद्यालब्धज्ञानानंदो मुक्तः संपन्नत्वेन रूप्यते। तथाऽभाग्यानधिगतस्वीयधनो वणिगिवाविद्यावृतज्ञानानंदो बद्धजीवो दरिद्रत्वेनेति ज्ञेयम्। एवं विद्यया त्वंपदार्थस्य जीवात्मनोऽनुभवो भवति न तु तत्पदार्थस्य परमात्मनः तस्य निर्गुणत्वान्निर्गुणया भक्त्यैवापरोक्षानुभवः संभवेत् "भक्त्याहमेकया ग्राह्यः" इति भगवदुक्तेः। किं च "कैवल्यं सात्त्विकं ज्ञानम्" इति भगवदुक्तेर्देहादिव्यतिरिक्तात्मज्ञानरूपा येयं विद्या तस्याः सत्त्वगुणत्वादनया गुणातीतस्य परमात्मनो नैवानुभवः प्रत्युतास्या अप्यभाव एव तदुक्तं भगवता "द्रव्यं देशः फलं कालो ज्ञानं कर्म च कारकः। श्रद्धावस्थाकृतिर्निष्ठा त्रैगुण्याः सर्व एव हि। येनेमे निर्जिताः सौम्य गुणा जीवेन चित्तजाः। भक्तियोगेन मन्निष्ठो मद्भावाय प्रपद्यते" इति। ननु तर्हि मुक्तजीवेन परमात्मनोऽपरोक्षानुभवार्थं भक्तिः कुतो लभ्यताम्। उच्यते। ज्ञानाधिकारिणः सांख्ययोगतपआदिभिर्भक्तिमिश्रैरेव जनितया विद्ययाऽविद्यानिवर्त्तिकया प्रथमं त्वं पदार्थानुभवः ततस्तस्या विद्यातो विमुक्तस्य निरिंधनाग्निन्यायेन विद्याया अप्युपरमतारतम्येन पूर्वसिद्धभक्तिचंद्रकलायास्तदुपरागविच्युतायास्तत उद्गमतारतम्यं तथैव भक्त्या पुनःपुनरभ्यस्तया तत्पदार्थस्य परमात्मनोऽनुभवतारतम्यं तदुक्तं भगवता गीतासु "ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्" इति परां पौर्वकालिकगुणीभावराहित्यात् श्रेष्ठां केवलां वा ततश्च "भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः" इत्युक्तेर्जातिप्रमाणाभ्यामल्पीयस्या तया भक्त्या निर्विशेषब्रह्मण एवानुभवः। न त्वनंतचिद्विशेषब्रह्मणो भगवतः यथाऽल्पतेजश्चक्षुष्केण जनेन मणिमयी मूर्त्तिः सामान्यतेजोमय्येव दृश्यते। न तु मुखनासिकानेत्रकर्णादिविशेषमयी। ततश्च विद्यायाः सामरूपेणैवोपरमे सत्यद्भुतनैर्गुण्यस्य तस्य तयैव भक्त्या ब्रह्मानुभवस्यापूर्णत्वमेतदेव निर्वाणशब्दवाच्यं जीवब्रह्मैक्यं तदुक्तं तत्रैव "अतो मां तत्त्वतो ज्ञात्वा विशते तदनंतरम्" इति। या तु चिच्छक्तिवृत्तीनां सारभूता कृपाविलासरूपा परमोत्तमा श्रद्धा भक्तिर्जातिप्रमाणाभ्यामत्यधिका सा प्रबला परमस्वतंत्रा गुणदोषादिकमप्यगणयंती बद्धेपि जीवे राक्षसपुलिंदपुल्कसादौ दुराचारोपि यदृच्छयैवोदयते। विप्रे संन्यासिनि मुक्तेपि

**प्रतीयेततदात्मनो मम मायां विद्यात्।यथा आभासो द्विचंद्रादिरित्यर्थं विना प्रतीतौ दृष्टांतः।यथा तम इति।सतोऽप्रतीतौ तमो राहुर्यथाग्रहमंडलेस्थितोऽपि न दृश्यते तथा॥ ३३॥**

नोदयते । तयैवाविद्यापर्यंतसमस्तक्लेशध्वंसस्तदुक्तं "जरयत्याशु या कोशं निगीर्णमनलो यथा" इति । तयैवानंतचिद्विशेषस्य भगवतोप्यपरोक्ष्यानुभवो भवेत्।यथा बहुतरतेजस्विचक्षुष्केण जनेन सामान्यतस्तेजोमयी विशेषतश्च मुखनासिकानेत्रकर्णादिसौंदर्यमयी च मूर्त्तिर्भद्रेणैव दृश्यते इति। तदेवं भक्तिर्द्विविधा निर्गुणा गुणमयी च । तत्राद्यया पाकदशायां प्रेमभक्तिसंज्ञया भगवद्वशीकारः सच्चिदानंदमयभगवद्रूपगुणलीलामाधुर्य्यानुभवश्च । द्वितीयया सात्विक्या सत्त्वगुणाद्विच्युतयैव निर्विशेषब्रह्मसुखानुभवमात्रमिति । तस्माद्ब्रह्मसुखानुभवदशातः पूर्वास्वेव दशासु जीवेषु मायाया अधिकार इति सिद्धम् "सत्यमेव प्रतीतं स्याद्यतोऽसत्यं तथा यतः । तद्विद्यादात्मनो मायां यथा भासो यथा तमः" इत्यनुक्तोरित्यन्यस्मिन्नर्थेध्याशय ईक्ष्यते । ऋतेर्थशब्दौ परिवृत्यसहावर्पितौ यतः स चार्थो यथा ब्रह्मानुभववत्स्वपि जनेषु नानाविधेषु या स्पष्टमधिकरोति भगवदिच्छावशात्तदीयस्वरूपगुणलीलाप्रकाशावरणधुरंधुरा स्वरूपभूता शक्तिस्तस्या योगमायाया अपि लक्षणं तंत्रेणैवाह–ऋत इति । आत्मनि परमात्मनि मयि ऋते ज्ञाते सति अर्तेर्गत्यर्थत्वेन ज्ञानार्थत्वात्साक्षादनुभूते सतीत्यर्थः । यदिति "इण् गतौ" इत्यस्य शत्रंतं तत्पदेनैव यत्पदस्याक्षेपात् । यतः अर्थं यत्प्रयोजनं प्राप्नुवद्वस्तु अप्राकृतं प्राकृतं च प्रतीयते । यया प्रकाशितसत्प्रयोजनं वस्तु परमात्मसाक्षात्कारवता जनेन साक्षादनुभूयेतेत्यर्थः । यतः सकाशान्न प्रतीयते ययाऽऽवृतं तदेव वा समयांतरे वा न प्रतीयेतेत्यर्थः । तामात्मनो भगवतो मम मायां योगमायाख्यामंतरंगां शक्तिं विद्याज्जानीयात् । मायया प्रयोजनं विनैवाद्रियते योगमायया तु प्रयोजनमुद्दिश्यैवेति विवेचनीयम् ।"यथा भासो यथा तमः" इति आभासेन दीपादिना प्रकाशितं घटपटादिकं यथा प्रतीयते तमसा वृतं तन्नानुभूयते च तथैव सा मदिच्छावशादाभासतमोधर्मवती योगमायेत्यर्थः । उदाहरणं तु यथा ऐश्वर्यदर्शनेपि प्रेमसंकोचाभावज्ञापनार्थं भगवत्कुक्षौ यया प्रकाशितं प्राकृतमप्राकृतं गोकुलयशोदाकृष्णादिस्वरूपं च यया मोहिता श्रीयशोदा साक्षादनुबभूव क्षणांतरे च ययावरणान्नानुबभूव च यथा चैश्वर्य्यानुभूत्या प्रेमसंकोचज्ञापनार्थं ययाप्रकाशितं विश्वरूपं परमात्मस्वरूपं चार्जुनः साक्षादनुबभूव तत्रैव वर्तमानमपि कृष्णस्वरूपं ययावरणान्नानुबभूव समयांतरे च ययाच्छादितं विश्वरूपादिकं नानुबभूव द्विभुजं श्रीकृष्णमेवानुबभूव अत्रैकदैवैकस्य स्वरूपस्य प्रकाशनमन्यस्यावरणामिति पूर्वतो विशेषः यथा मंजुमहिमदर्शनया ब्रह्मण ईश्वरत्वाभिमाननिवर्तनार्थं ययावरणाप्रकाशनाभ्यां लीलापरिकरवत्सबालाद्यदर्शनतददर्शनकृष्णस्वरूपसूतवत्सबालादिदर्शनचतुर्भुजत्वादिदर्शनतददर्शनश्रीकृष्णस्वरूपदर्शनानि प्राप । यया मोहितः परमेष्ठी अत्रैकस्मिन्नेव परमेष्ठिनि विविधस्वरूपावरणप्रकाशनयोः पौनःपुन्यमिति विशेषः । यथा च भगवद्वपुः स्वरूपत एव परिच्छिन्नमपरिच्छिन्नं चातर्क्यमिति ज्ञापनार्थं तथा केवलभजनश्रमस्तज्जन्या भगवत्कृपा चेत्युभाभ्यामेव भगवद्वशीकार इति ज्ञापनार्थश्च दामबंधनलीलायां युगपदेव यशोदाकृष्णयोरभीप्सितबंधनाबंधने विभुत्वस्य युगपदेवावरणप्रकाशनाभ्यां वेष्टयंत्या किंकिण्या द्व्यंगुलन्यूनदाम्ना चावेष्टयता सूचिते दर्शयंत्यापि वस्तुतः कृष्णस्यैवाभीप्सितमबंधनं साधयंत्या यया मोहिता व्रजेश्वरी विस्मयरसं क्षणमनुबभूव पश्चात्तस्या अप्यभीप्सितं कृष्णसंमत्या साधयितुं विभुत्वं यया खल्वावृतमेवेत्यतः सा कृष्णं बबंधैव तत्रैकदैवैकस्यैव विभुत्वस्यावरणप्रकाशने इति पूर्वपूर्वतो विशेषः।यथा च प्रतिस्वनिमंत्रणादिसिद्ध्यर्थं श्रुतदेवबहुलाश्वरुक्मिणीसत्यभामादिगृहस्थितस्य तस्य तत्तत्स्वरूपस्य ययैव युगपदेवावरणप्रकाशनाभ्यां तत्र तत्र लीलासिद्धिर्व्याख्यास्यते।अत्र श्रुतदेवबहुलाश्वादिव्यक्तिभेदमपेक्ष्यैवावरणप्रकाशनयोर्यौगपद्यं पूर्वत्रैकस्यां यशोदायामेवेति विशेषः।सा खलु योगमायैव न तु माया।तया मोहितानामपि तेषां परमात्मसाक्षात्कारदर्शनात्स च परमात्मसाक्षात्कारो भक्तिमिश्रज्ञानवतामविद्याविद्ययोरुपरामे सति तथैवावतारसमये कृष्णं प्रीत्या पश्यतां तत्कृपाविषयीभूतत्वादप्रेमवतामपि । अन्यदा तु प्रेमवतामेवं कृष्णरामादिसाक्षात्कारो भागवतमतेनोच्यते । तेषु योगमायैवाधिकरोति न तु माया । कृष्णं तदिच्छया पश्यतामपि कंसादीनां द्वेषलक्षणांतःकरणदोषादेव न परमात्मसाक्षात्कारो यथा मत्स्यंडिकां भुंजानानामपि पित्तदूषितरसनानां न मत्स्यंडिकास्वादानुभवस्तेषु मायेवाधिकरोति न तु योगमाया मायाशक्तिश्च योगमायोत्था तस्या विभूतिरेव यदुक्तं नारदपंचरात्रे श्रुतिविद्यासंवादे"अस्या आवरिका शक्तिर्महामायाखिलेश्वरी। यया मुग्धं जगत्सर्वं सर्वदेहाभिमानिनः"इति भगवता स्वस्वरूपत्वेनाभिमन्यमाना योगमाया शक्तिश्चिदेव सैवांशेन स्वेच्छावशात्स्वस्वरूपत्वेनाभिमन्यमाना स्वस्वरूपात्पृथग्भूता सती मायाशक्तिर्जडैव । यथा सर्पस्य स्वरूपभूतापि त्वक् तेन त्यक्ता चेत्ततः पृथग्भूतं कंचुकं जडी स्यात् तथा चोक्तं श्रुतिभिः ॥ "तमुत जहासि तामहिरिव त्वचमात्तभगः" इति सा च माया त्रिविधा प्रधानमविद्या विद्या च प्रधानस्य लक्षणं जायंतेयोपाख्याने वक्ष्यते प्रधानेनोपाधयः सृज्यंते ते च सत्या एव । अविद्यया जीवेषु तदध्यासः सृष्टः ।

## यथा महांति भूतानि भूतेषूच्चावचेष्वनु ॥ प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम् ॥ ३४ ॥

**यथाभाव इत्येतत्स्पष्टयति । यथा महाभूतानि भौतिकेष्वनु सृष्टेरंतरं प्रविष्टानि तेषूपलभ्यमानत्वात् अप्रविष्टानि च प्रागेव कारणतया तेषु विद्यमानत्वात । तथा तेषु भूतभौति**

स चासत्य एव विद्यया तदध्यासध्वंस इति तिसृणां शक्तीनां कार्यं तत्तन्मयं जगदिदमंशेनासत्यं तथा जीवानां नित्यत्वात् । भगवन्निकेतनादिभक्त्युपकरणानां निर्गुणत्वाच्चांशेन नित्यत्वमपि वादिभिर्यथा स्वमतं नानारूपतया निरूपितम् "कार्यं प्राधानिकं सत्यं कार्यमाविद्यकं मृषा । नित्यं तद्भक्तिसंबद्धमिदं तत्त्रितयात्मकम् १ प्राधानिकाः स्युर्देहास्तद्धर्मा आविद्यकाः पुनः । जीवेषु तत्तत्संबंधो भक्तिश्चेन्निर्गुणाश्च ते २ चिज्जीवमाया नित्यास्स्युस्तिस्रः कृष्णस्य शक्तयः । तद्वृत्तयश्च ताभिः स भात्येकः परमेश्वरः ३ कार्यकारणयोरैक्याच्छक्तिशक्तिमतोरपि । एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ४ भक्तानामेवसिद्धांतश्चतुःश्लोकीयमीलिता । शीलिता भवतादुक्तैस्तैरेव न किलापरैः ५ " इति विश्वनाथः । संदर्भस्तु अथ तादृशरूपादिविशिष्टस्यात्मनो व्यतिरेकमुखेन विज्ञापनार्थं मायालक्षणमाह—ऋतेर्थमिति । अर्थं परमार्थभूतं मां विना यत्प्रतीयते मत्प्रतीतौ तत्प्रतीत्यभावात् । मत्तो बहिरेव यस्य प्रतीतिरित्यर्थः । यच्चात्मनि न प्रतीयते यस्य च यदाश्रयत्वं विना स्वतः प्रतीतिर्नास्तीत्यर्थः । तथा लक्षणं वस्तु आत्मनो मम परमेश्वरस्य मायां जीवमायागुणमायेति द्वयात्मिकां मायाख्यशक्तिं विद्यात् । तत्र शुद्धजीवस्यापि चिद्रूपत्वाविशेषेण तदीयरश्मिस्थानीयत्वेन च स्वांतःपात एव विवक्षितः । तत्रास्याद्वयात्मकत्वेनाभिधानं दृष्टांतद्वैधेन लभ्यते तत्र जीवमायाख्यस्य प्रथमांशस्य तादृशत्वं दृष्टांतेन स्पष्टयन्नसंभावनां निरस्यति । यथा भास इति । आभासो ज्योतिर्बिम्बस्य स्वियप्रकाशाद्व्यवहितप्रदेशे कश्चिदुच्छलितप्रतिच्छविविशेषः स यथा तस्माद्बहिरेव प्रतीयते न च तं विना तस्य प्रतीतिस्तथा सापीत्यर्थः । अनेन प्रतिपर्यायाभासधर्मत्वेन तस्यामाभासाख्यत्वमपि ध्वनितम् । अतस्तत्कार्यस्याप्याभासाख्यत्वं क्वचित् "आभासश्च निरोधश्च" इत्यादौ स यथा क्वचिदत्यंतोद्भटात्मास्वचाकाचिक्यच्छटापातितनेत्राणां नेत्रप्रकाशमावृणोति तमावृत्य च स्वेनात्यंतोद्भटतेजस्त्वेनैव द्रष्टृनेत्रं व्याकुलयन्स्वोपकंठे वर्णशावल्यमुद्गिरति। कदाचित्तदेव पृथग्भावेन नानाकारतया परिणमयति । तथेयमपि जीवज्ञानमावृणोति सत्त्वादिगुणसाम्यरूपां गुणमायाख्यां जडां प्रकृतिमुद्गिरति कदाचित्पृथग्भूतान् सत्त्वादिगुणान्नानाकारतया परिणमयति चेत्याद्यपि ज्ञेयम् । तदुक्तम् "एकदेशस्थितस्याग्नेर्ज्योत्स्नाविस्तारिणी यथा । परस्य ब्रह्मणो माया तथेदमखिलं जगत् ॥" तथां चायुर्वेदविदः "जगद्योनेरनिच्छस्य चिदानंदैकरूपिणः । पुंसोस्ति प्रकृतिर्नित्या प्रतिच्छायेव भास्वतः ॥ अचेतनापि चैतन्ययोगेन परमात्मनः । अकरोद्विश्वमखिलमनित्यं नाटकाकृतिम्" इति । तदेवं निमित्तांशो जीवमाया उपादानांशो गुणमायेत्यग्रेपि विवेचनीयम् । अथैवं सिद्धं गुणमायाख्यं द्वितीयमप्यंशं दृष्टांतेन स्पष्टयति । यथा तम इति । तमःशब्देनात्र पूर्वत्रोक्तं तमःप्रायं वर्णशाबल्यमुच्यते तद्यथा—तन्मूलज्योतिष्यसदपि तदाश्रयत्वं विना न संभवति तद्वदियमपीति । अथ वा मायामात्रनिरूपण एव पृथग्दृष्टांतद्वयं तत्राभासदृष्टांतो व्याख्यातः । तमोदृष्टांतश्च यथांधकारोज्योतिषोऽन्यत्रैव प्रतीयते ज्योतिर्विना च न प्रतीयते ज्योतिरात्मना चक्षुषैव तत्प्रतीतेर्न पृष्ठादिनेति तथेयमपीति ज्ञेयं ततश्चांशद्वयं प्रवृत्तिभेदेनैवोत्यं न तु दृष्टांतभेदेन प्राक्तनदृष्टांतद्वैधाभिप्रायेण तु पूर्वस्या आभासपर्यायच्छायाशब्देन क्वचित्प्रयोगः उत्तरस्यास्तमःशब्देनैव चेति यथा "ससर्ज च्छायया विद्यां पञ्चपर्वाणमग्रतः" इत्यत्र । यथा च "क्वाहं तमो महदहम्" इत्यादौ पूर्वत्राविद्याख्यनिमित्तशक्तिवृत्तिकत्वाज्जीवविषयकत्वेन जीवमायात्वम् । उत्तरत्र स्वीयतत्तद्गुणमयमहदाद्युपादानशक्तिवृत्तिकत्वं तद्गुणमायात्वं तथा ससर्जेत्यादौ छायाशक्तिं मायामवलंब्य सृष्ट्यारंभे ब्रह्मा स्वयमविद्यामाविर्भावितवानित्यर्थः । "विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम् । बंधमोक्षकरी आद्ये मायया मे विनिर्मिते" इत्युक्तत्वात् । अनयोराविर्भावभेदश्च श्रूयते तत्र पूर्वस्याः पाद्मे श्रीकृष्णसत्यभामासंवादीयकार्त्तिकमाहात्म्ये देवगणकृतमायास्तुतौ "इति स्तुवंतस्ते देवास्तेजोमण्डलसंस्थितम् । ददृशुर्गगने तत्र तेजोव्याप्तदिगंतरम् ॥ तन्मध्याद्भारतीं सर्वे शुश्रुवुर्व्योमचारिणीम् । अहमेव त्रिधा भिन्ना तिष्ठामि त्रिविधैर्गुणैः" इत्यादि । उत्तरस्याः पाद्मोत्तरखंडे "असंख्यं प्रकृतिस्थानं निबिडध्वांतमव्ययम्" इति विद्यादिति प्रथमपुरुषनिर्देशस्यायं भावः अन्यान्प्रत्येव खल्वयमुपदेशः त्वं तु मद्दत्तशक्त्या साक्षादेवानुभवन्नसीति एवं मायिकदृष्टिमतीत्यैव रूपादिविशिष्टं मामनुभवेदिति व्यतिरेकमुखेनानुभावनस्यायं भावः शब्देन निर्द्धारितस्यापि मत्स्वरूपादेर्मायाकार्यविशेनैवानुभवो न भवति ततस्तदर्थं मायात्याजनमेव कर्त्तव्यमिति । एतेन तदविनाभावात्प्रेमाप्यनुभावित इति गम्यते ॥ ३३ ॥ इत्यर्थ इति अलौकिक्येव मम सत्तेति भावः । संदर्भः अथ तस्यैव प्रेम्णो रहस्यत्त्वं बोधयति यथेति यथा महांति भूतानि भूतेष्वप्र

**एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनाऽऽत्मनः ॥ अन्वयव्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदा ॥ ३५ ॥**

**केषु अहं न च तेष्वहम् । एवंभूता मम सत्तेत्यर्थः ॥ ३४ ॥ साधनमाह । आत्मनस्तत्त्वजिज्ञासुना एतावत्त्वमेव जिज्ञास्यं विचार्यम् । तदेवाह । अन्वयः कार्येषु कारण**

विष्टानि बहिःस्थितानामप्यनुप्रविष्टान्यंतःस्थितानि भांति तथा लोकातीतवैकुंठस्थितत्वेनाप्रविष्टोप्यहं तेषु तत्तद्गुणविख्यातेषु प्रणतजनेषु प्रविष्टो हृदि स्थितोहं भामि तत्र महाभूतानामंशभेदेन प्रवेशाप्रवेशौ तस्य तु प्रकाशभेदेनेति भेदोपि प्रवेशाप्रवेशमात्रसाम्येन दृष्टांतः तदेवं तेषां तादृगात्मवशकारिणी प्रेमभक्तिर्नाम रहस्यमिति सूचितं तथा च ब्रह्मसंहितायाम्। ''आनंदचिन्मयरसप्रतिभाविताभिस्ताभिर्य एव निजरूपतया कलाभिः।गोलोक एव निवसत्यखिलात्मभूतो गोविंदमादिपुरुषं तमहं भजामि॥प्रेमाञ्जनच्छुरितभक्तिविलोचनेन संतः सदैव हृदयेपि विलोकयंति।तं श्यामसुंदरमाचिंत्यगुणस्वरूपं गोविंदमादिपुरुषं तमहं भजामि'' इति। अचिंत्य गुणस्वरूपमपि प्रेमाख्यं यदंजनच्छुरितवदुच्चैः प्रकाशमानं भक्तिरूपं विलोचनं तेनेत्यर्थः । यद्वा यथा तेषु तानि बहिःस्थितानि च भांति तथा भक्तेष्वप्यहमंतर्मनोवृत्तिषु बहिरिंद्रियवृत्ति च विस्फुरामीति भक्तेषु सर्वथानन्यवृत्तिता हेतु र्नाम किमपि स्वप्रकाशं प्रेमाख्यमानंदात्मकं वस्तु मम रहस्यमिति भावः।तथैव श्रीब्रह्मणोक्तं''न भारती मेंग मृषोपलक्ष्यते न वै क्वचिन्मे मनसो मृषा गतिः।न मे हृषीकाणि पतंत्यसत्पथे यन्मे हृदौत्कंठ्यवता धृतो हरिः'' इति यद्यपि व्याख्यांतरानुसारेणायमर्थोपलपनीयः स्यात्तथाप्यस्मिन्नेवार्थे तात्पर्यं प्रतिज्ञाचतुष्टयसाधनायोपक्रांतत्वात्तदनुक्रमगतत्वाच्च। किञ्चार्थे न तेष्वति छिन्नपदं व्यर्थं स्यात् दृष्टांतस्यैव क्रियाभ्यामन्वयोपपत्तेः।अपि च रहस्यं नाम ह्येतदेव यत्परमदुर्लभं वस्तु इष्टोदासीनजनदृष्टिनिवारणार्थं साधारणवस्त्वंतरणाच्छाद्यते यथा चिंतामणेः संपुटादिना अत एव ''परोक्षवादा ऋषयः परोक्षं मम च प्रियम्'' इति भगवद्वाक्यं तदेव च परोक्षं क्रियते यददेयं विरलप्रचारं महद्वस्तु भवति तस्यैवादेयत्वं विरलप्रचारं महत्त्वं च 'मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम्' । इत्यादौ ''मुक्तानामपि सिद्धानाम्'' इत्यादौ ''भक्तिः सिद्धेर्गरीयसी'' इत्यादौ च बहुत्र व्यक्तं स्वयं चैतदेव श्रीभगवता परमभक्ताभ्यामर्जुनोद्धवाभ्यां कष्टोत्त्यैव कथितं ''सर्वं गुह्यतमं भूयः शृणु मे परमं वचः'' इत्यादिना ''सुगोप्यमपि वक्ष्यामि'' इत्यादिना च इदमेव रहस्यं श्रीनारदाय स्वयं ब्रह्मणैव प्रकटीकृतम् । ''इदं भागवतं नाम यन्मे भगवतोदितम् । संग्रहोयं विभूतीनां त्वमेतद्विपुली कुरु ॥ यथा हरौ भगवति नृणां भक्तिर्भविष्यति । सर्वात्मन्यखिलाधारे इति संकल्प्य वर्णय'' इति । तस्मात्साधु व्याख्यातं स्वामिचरणैरपि रहस्यं भक्तिरिति । विश्वनाथस्तु एवं च मायां योगमायाञ्च तंत्रेणैव लक्षयित्वा ताभ्यामधिकृतेषु सगुणनिर्गुणलोकेषु ब्रह्मणा पृष्टं स्वस्वप्रकारं तंत्रेणैवाह यथेति यथा महाभूतान्याकाशादीनि भूतेषु देवमनुष्यतिर्यगादिष्वनुप्रविष्टानि तेषूपलभ्यमानत्वात् । अप्रविष्टानि च पृथग्विद्यमानत्वात् । तथा तेषु भूतभौतिकेष्वहं प्रविष्टः सन्नपि पृथक्शुद्धसत्त्वात्मकस्वधामनि वर्तमानत्वादप्रविष्टश्चास्मि । किं तु महाभूतानामचेतनत्वादेव तेषु भूतेषु प्रवेश आसंगरहितः मम तु चेतनत्वेप्याकाश इवासौ स्वगृहेष्वलिप्त एव वसतीतिवत्तेषु सर्वेषु प्रवेशनियमनपालनादीन्यासंगरहितानीत्येवंभूताभूतेषु मायिकेष्वासंगरहितैव क्रीडेति भावः । तथा तेषु प्रसिद्धेषु नतेषु प्रणतभक्तजनेषु प्रविष्टोन्तःकरणेषु दर्शनं दातुं तथाऽप्रविष्टः बहिस्थितश्च तेषां नयनेषु स्वसौंदर्यमर्पयितुं नासासु स्वसौरभ्यं प्रवेशयितुं तैः सहोक्तिप्रत्युक्ती कुर्वंस्तेषां कर्णेषु स्वसौस्वर्यामृतं पूरयितुं स्पर्शनालिंगनादिदानैस्तेषामंगेषु स्वीयसौकुमार्यादिकं चानुभावयितुमिति तेषु गुणातीतभक्तेष्वंतर्बहिर्मयात्यक्तुमशक्येष्वासंगसहितैव मम क्रीडितिभावः ॥ ३४ ॥ अथ ''भगवच्छिक्षितमहं करवाणि ह्यतंद्रितः'' इति ब्रह्मणा प्रार्थितस्य स्वप्राप्तिसाधनस्यातिरहस्यत्वाद्बहिरंगजनागम्यतयैवाह एतावदेवेति । अत्र बहुतरशास्त्रानुसंधानमपि नापेक्षितव्यमिति भावः । तत्त्वजिज्ञासुना आत्मनः स्वस्य श्रेयः साधनत्वं ज्ञातुमिच्छुना जनेन जिज्ञास्यं श्रीगुरुचरणेभ्यः शिक्षणीयमित्यर्थः । त्वया तु मदनुग्रहादवगम्यत एवेति भावः । किं तत् यच्छ्रेयः साधनेषु कर्मज्ञानयोगभक्त्यादिषु मध्येऽन्वयव्यतिरेकाभ्यां स्यात् सिध्यति स्थिरीभवतीत्यर्थः । अत्र तावत्स्वर्गापवर्गादेः कर्मज्ञानयोगादिभिः केवलैरसिद्धेस्तैर्विनापि सिद्धेः । कर्मज्ञानयोगादयोऽन्वयव्यतिरेकाभ्यां नैव साधनानि स्युस्तथा हि ''कोवार्थ आप्तोऽभजतां स्वधर्मतः'' इति ''क्लिश्यंति ये केवलबोधलब्धये'' इति ''पुरेह भूमन्बहवोपि योगिनः'' इति ''यत्कर्मभिर्यत्तपसा'' इत्यादौ ''कर्मादिभिर्विनापि'' ''सर्वं मद्भक्तियोगेन मद्भक्तो लभतेंजसा । स्वर्गापवर्गं मद्धाम कथंचिद्यदि वाञ्छति'' इति। ''या वै साधनसंपत्तिः पुरुषार्थचतुष्टये । तया विना तदाप्नोति नरो नारायणा

त्वेनानुवृत्तिः कारणावस्थायां च तेभ्यो व्यतिरेकः तथा जाग्रदाद्यवस्थासु तत्तत्साक्षितयाऽन्वयः व्यतिरेकश्च साध्यादौ एवमन्वयव्यतिरेकाभ्यां यत्स्यात् सर्वत्र सर्वदा च श्रयः'' इति मोक्षधर्मीयवचनं च । भक्त्या तु केवलयैव सर्वाणि श्रेयांसि सिद्ध्यंति तया विना तु नैव सिद्ध्यंतीत्यन्वयव्यतिरेकाभ्यां भक्तिरेव सर्वश्रेयःसाधनत्वेन स्थिरीभवति तथाहि अन्वयेन यथा''अकामः सर्वकामो वा मोक्षकाम उदारधीः । तीव्रेण भक्तियोगेन यजेत पुरुषं परम्'' इति भक्तियोगस्य केवलस्यैव तीव्रत्वं निरभ्रसूर्यस्येवेति ज्ञेयम्।यथा वा 'यत्कर्मभिर्यत्तपसा' इत्यादिव्यतिरेकेण यथा''मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह। चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक् ॥ य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम् । न भजंत्यवजानन्ति स्थानाद्भ्रष्टाः पतंत्यधः'' इति। यथा वा''तपस्विनो दानपरा यशस्विनो मनस्विनो मंत्रविदः सुमंगलाः । क्षेमं न विंदंति विना यदर्पणं तस्मै सुभद्रश्रवसे नमोनमः'' इति । अत्र देशकालविशेषाभावमाह–सर्वत्र सर्वदेशेषु सर्वाधिकारिषु च सर्वदा सर्वेष्वेव कालेषु यत्स्यात्तथाहि–शुचावेव देशे शुची तत्कालजीवी कर्म कुर्यात्, शुद्धांतःकरण एव ज्ञानं लभते, ''शुचौ देशे प्रतिष्ठाप्य सुखमासनमात्मनः ॥ योगी योगं युंजीत'' इति कर्मज्ञानादीनां न सार्वत्रिकता तथा यत्कर्म तत्संन्यासभोगप्राप्तावधियोगः सिद्ध्यवधिः सांख्यमात्मज्ञानावधि ज्ञानं मोक्षावधीति नापि सार्वत्रिकता भक्तेश्च सार्वत्रिकतासार्वदिकते अतिप्रसिद्धे एव ''न देशनियमस्तत्र न कालनियमस्तथा । नोच्छिष्टादौ निषेधोस्ति श्रीहरेर्नाम्नि लुब्धका'' इति ''तस्मात्सर्वात्मना राजन्हरिः सर्वत्र सर्वदा । श्रोतव्यः कीर्त्तितव्यश्चः स्मर्तव्यो भगवान्नृणाम्'' इति कर्मिज्ञानिप्रभृतिषु सर्वेष्ववधिकारिषु भक्तेर्व्याप्तिरुक्तैव ''किरातहूणांध्रपुलिंदपुल्कसाः'' इत्यादिना जातिचांडालकर्मचांडालादिष्वपि दृष्टा।तथा सर्वावस्थास्वपि गर्भे प्रह्लादादेर्बाल्ये ध्रुवादेर्यौवनेंबरीषादेर्वार्द्धक्येद्धम्ये ययात्यादेर्मरणेऽजामिलादेर्नारकितायामपि यन्नाम्न्युदिते नारकोपीत्युक्तेः । ''यथायथा हरेर्नाम कीर्त्तयंति च नारकाः । तथातथा हरौ भक्तिमुद्वहंतो दिवं ययुः'' इति नृसिंहपुराणोक्तेश्चेति भक्तेरेव साधनत्वं निर्द्धारितम् । अथ प्रेमभक्तिरूपं रहस्यमपि तंत्रेणैवाह–एतावदिति । तत्त्वजिज्ञासुना पुंसा एतावदेव श्रेयस्सु स्वर्गापवर्गप्रेमसु मध्ये जिज्ञास्यं किं तत् यच्छ्रेय आत्मनः स्वस्यैवान्वयव्यतिरेकाभ्यां सर्वत्र सर्वदा स्यात् तत्र न तावत्स्वर्गापवर्गौ स्वान्वयव्यतिरेकाभ्यां सिद्ध्यतः प्रेमा तु स्वस्यैवान्वयव्यतिरेकाभ्यां सिद्ध्यति प्रेम्णोपि भक्तिशब्दवाच्यत्वात्साधनभक्त्यैव साध्यभक्तेः प्रेम्णः सिद्धिदर्शनात् । प्रेम्णः स्वेनैव सिद्धिः तदुक्तं ''भक्त्या संजातया भक्त्या बिभ्रत्युत्पुलकां तनुम्'' इत्यतो रहस्यतदंगशब्दाभ्यामुच्यमाने प्रेमभक्तिसाधनभक्ती तंत्रेणैवोक्ते ततश्च प्रेमभक्ति साधनत्वेनैव भक्तिः कर्त्तव्या न तु स्वर्गापवर्गादिसाधनत्वेनेति भगवतः शिक्षा व्यंजिता ''भगवच्छिक्षितमहं करवाणि ह्यतंद्रितः'' इति ब्रह्मणा प्रार्थितत्वात् शुद्धसाधनभक्तिसिद्धया प्रेमभक्त्यैव यद्रूपगुणादिमाधुर्यरसानुभवस्तस्य प्रेमभक्त्यनुभावरूपत्वादिति विज्ञानं स्वत एव लब्धमतो रहस्यतदंगविज्ञानानि श्लोकेनानेनैवोक्तानि । किंच 'रसो वै सः' इत्यनंतरं, 'सैषा रसस्यमीमांसा भवति'' इति श्रुतेः । सर्वश्रेयोत्रधिरूपो रस एव मूर्त एव रंगभूमौ ''मल्लानामशनिः'' इत्याद्याकार एव दर्शितस्तस्य च विज्ञानमत्रैव श्लोके तंत्रेणोक्तः । यथा जिज्ञास्येषु मध्ये एतावदेव जिज्ञास्यमनुबुभूषणीयं किं तत् अन्वयव्यतिरेकाभ्यां योगायोगाभ्यां संयोगविप्रलंभाभ्यां यत्स्यात्सर्वत्र सर्वब्रह्मांडवर्तिनि श्रीवृंदावनादौ दाससखिगुरुप्रेयसीषु सर्वदा नित्यमेव महाप्रलयसमयेपीति दास्यसख्यवात्सल्यश्रृंगाररसानामास्वादनं व्यंजितम् । एवमतिरहस्यप्रेमभक्तिरसव्यंजकः श्लोकोयं ज्ञानरूपार्थांतरेण भगवतैवाच्छादितश्चिंतामणिरिव कनकसंपुटेन बहिरंगजनाशक्योद्घाटनेन । तथा च श्रुतिः ''नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुधा श्रुतेन यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्'' इति । तच्च ज्ञानरूपमर्थांतरं यथा स्वामिचरणैर्व्याख्यातं तथैवेति विश्वनाथः । अत्र संदर्भः । अथ क्रमप्राप्तं रहस्यपर्यंतसाधकत्वात् रहस्यत्वेनैव तदंगमुपदिशति–एतावदेवेति । आत्मनो मम भगवतस्तत्त्वजिज्ञासुना याथार्थ्यमनुभवितुमिच्छुना एतावदेव जिज्ञास्यं श्रीगुरुचरणेभ्यः शिक्षणीयं किं तत् यदेकमेव वस्तु अन्वयव्यतिरेकाभ्यां विधिनिषेधाभ्यां सदा सर्वत्र स्यादित्युपपद्यते तत्रान्वयेन यथा 'एतावानेव लोकेस्मिन्' इत्यादि ''ईश्वरः सर्वभूतानाम्'' इत्यादि 'मन्मना भव मद्भक्तः' इत्यादि च व्यतिरेकेण यथा 'मुखबाहूरुपादेभ्यः' इत्यादि''ऋषयो देवयुष्मत्प्रसंगविमुखा इह संपतंति'' इत्यादि, 'न मां दुष्कृतिनो मूढाः' इत्यादि 'यावज्जनो भवति नो खलु विष्णुभक्तः' इत्यादि च कुत्रकुत्रोपपद्येत सर्वत्र शास्त्रकर्तृदेशाकारणद्रव्यक्रियाकार्यफलेषु समस्तेष्वेव तत्र समस्तशास्त्रेषु यथा स्कांदे ब्रह्मनारदसंवादे ''संसारेस्मिन्महाघोरे जन्ममृत्युसमाकुले । पूजनं वासुदेवस्य तारकं वादिभिः स्मृतम्'' इति । तत्रान्वयेन यथा ''भगवान्ब्रह्म कार्त्स्न्येन'' इत्यादि । तथा पाद्मे स्कांदे लैंगे च''आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा''इति व्यतिरेकोदाहरणं''पारंगतोपि वेदानां सर्वशास्त्रार्थविद्यदि । यो न सर्वेश्वरं

भक्तस्तं विद्यात्पुरुषाधमम्'' इत्यादिकं सर्वत्रांवगंतव्यम् । तच्चांते दर्शयिष्यते एकादशे ''शब्दब्रह्मणि निष्णातो न निष्णायात्परे यदि । श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षतः'' इति । सर्वकर्तृषु यथा ''ते वै विदंत्यतितरंति च देवमायां स्त्रीशूद्रहूणशबरा अपि पापजीवाः । यद्यद्भुतक्रमपरायणशीलशिक्षास्तिर्यग्जना अपि किमु शुभधारणा ये'' इति । गारुडे च ''कीटपक्षिमृगाणाञ्च हरौ संन्यस्तकर्मणाम् । ऊर्द्ध्वमेव गतिं मन्ये किं पुनर्ज्ञानिनां नृणाम्'' इति । तत्रैव सदाचारे दुराचोर ज्ञानिन्यज्ञानिनि विरक्ते रागिणि मुमुक्षौ मुक्ते भक्त्यसिद्धे भक्तिसिद्धे तस्मिन्भगवत्पार्षदतां प्राप्ते तस्मिन्नित्यपार्षदे च सामान्येन दर्शनादपि सार्वत्रिकता । तत्र सदाचारे दुराचोर च तथा ''अपि चेत्सुदुराचारो भजते मामनन्यभाक् । साधुरेव स मंतव्यः सम्यग्व्यवसितो हि सः'' इति । सदाचारस्तु किं वक्तव्य इत्यपेरर्थः 'ज्ञानिन्यज्ञानिनि च ज्ञात्वाऽज्ञात्वाथ ये वै माम्' इत्यादि ''हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः'' इति । विरक्ते रागिणि च ''बाध्यमानोपि मद्भक्तो विषयैरजितेंद्रियः । प्रायः प्रगल्भया भक्त्या विषयैर्नाभिभूयते'' इति अबाध्यमानस्तु सुतरां नाभिभूयत इत्यपेरर्थः मुमुक्षौ मुक्ते च 'मुमुक्षवो घोररूपान्' इत्यादि, 'आत्मारामाश्च मुनयः 'इत्यादि भक्त्यसिद्धे भक्तिसिद्धे च 'केचित्केवलया भक्त्या वासुदेवपरायणाः' इति 'न चलति भगवत्पदारविंदाल्लवनिमिषार्द्धमपि स वैष्णवाग्र्यः' इति भगवत्पार्षदतां प्राप्ते, मत्सेवया प्रतीतं च' इत्यादि । नित्यपार्षदे 'वापीषु विद्रुमतटास्वमलामृताप्सु' इत्यादिसर्वेषु वर्षेषु ब्रह्मांडेषु तेषां बहिश्च तैस्तैः श्रीभगवदुपासनायाः क्रियमाणायाः श्रीभागवतादिषु प्रसिद्धिः सिद्धैरेभिः सर्वदेशोदाहरणं ज्ञेयं सर्वेषु करणेषु यथा ''मानसेनोपचारेण परिचर्य्य हरिं मुदा । परे वाङ्मनसागम्ये तं साक्षात्प्रतिपेदिरे'' इति । एवंभूतवचेन हि अस्तु तावद्बाहिरिंद्रियेण मनसा वचसापि तत्सिद्धिरिति प्रासिद्धिः । सर्वद्रव्येषु यथा ''पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति'' इत्यादि । सर्वक्रियासु यथा ''श्रुतोनुपठितो ध्यात आदृतो वानुमोदितः । सद्यः पुनाति सद्धर्मौ देवविश्वद्रुहोपि हि'' इति, 'यत्करोषि यदश्नासि ' इत्यादि, एवं भक्तभासेषु भक्ताभासापराधेष्वप्यजामिलमूषिकादयो दृष्टान्ता गम्याः । सर्वेषु कार्येषु यथा ''यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतम्'' इति सर्वफलेषु यथा ''अकामः सर्वकामो वा'' इत्यादि । तथा 'यथा तरोर्मूलनिषेचनेन' इत्यादिवाक्येन हरिपरिचर्यायां क्रियमाणायां सर्वेषामन्येषामपि देवादीनामुपासना स्वत एव भवतीत्यतोपि सार्वत्रिकता यथोक्तं स्कांदे श्रीब्रह्मनारदसंवादे ''अर्चिते देवदेवशे शंखचक्रगदाधरे । अर्चिताः सर्ददेवाः स्युर्यतः सर्वगतो हरिः'' इति । एवं यो भक्तिं करोति यद्द्रवादिकं भगवते दीयते येन द्वारभूतेन भक्तिः क्रियेत यस्मै श्रीभगवते प्रीणनार्थं दीयते यस्माद्द्रवादिकात्पयआदिकमादाय भगवते निवेद्यते यस्मिन्देशादौ कुले वा कश्चिद्भक्तिमनुतिष्ठति तेषामपि कृतार्थत्वं पुराणेषु दृश्यत इति कारकगतापि एवं सार्वत्रिकत्त्वं साधितं सनातनत्वमप्याह–सर्वदेति । तत्र सर्गादौ यथा 'कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता' इत्यादि, सर्गमध्ये तु बहुत्रैव चतुर्विधप्रलयेपि 'तत्रेमं क उपासीरन्' इति विदुरप्रश्ने सर्वेषु युगेषु ''कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः । द्वापरे परिचर्यायां कलौ तद्धारिकीर्त्तनात्'' इति किं बहुना 'सा हानिस्तन्महच्छिद्रं स मोहः स च विभ्रमः । यन्मुहूर्त्तं क्षणं वापि वासुदेवो न चिंत्यते'' इत्यादि वैष्णवे । सर्वावस्थास्वपि गर्भे श्रीनारदकारितश्रवणेन श्रीप्रह्लादे प्रसिद्धं बाल्ये ध्रुवादिषु यौवने श्रीमदंबरीषादिषु वार्द्धक्ये धृतराष्ट्रादिषु मरणेऽजामिलादिषु स्वर्गितायां श्रीचित्रकेत्वादिषु नारकितायामपि ''यथायथा हरेर्नाम कीर्त्तयंति स्म नारकाः । तथातथा हरौ भक्तिमुद्वहंतो दिवं ययुः'' इति नृसिंहपुराणे । अत एवोक्तं दुर्वाससा ''मुच्येत यन्नाम्न्युदिते नारकोपि'' इति । तथा 'एतन्निर्विद्यमानानाम्' इत्यादावपि सर्वावस्थोदाहृतिः । अथ तत्रतत्र व्यतिरेकोदाहरणानि च कियंति दर्श्यंते ''पारंगतोपि वेदानां सर्वशास्त्रार्थवेद्यपि । यो न सर्वेश्वरे भक्तस्तं विद्यात्पुरुषाधमम्'' इति, ''किं वेदैः किमु शास्त्रैर्वा किं वा तीर्थनिषेवणैः । विष्णुभक्तिविहीनानां किं तपोभिः किमध्वरैः'' इति ''किं तस्य बहुभिः शास्त्रैः किं तपोभिः किमध्वरैः । वाजिपेयसहस्रैर्वा भक्तिर्यस्य जनार्दने'' इति गरुडबृहन्नारदीयपाद्मवचनानि । तथा ''तपस्विनो दानपरा यशस्विनो मनस्विनो मंत्रविदः सुमंगलाः । क्षेमं न विंदंति विना यदर्पणं तस्मै सुभद्रश्रवसे नमोनमः'' इति, ''न यत्र वैकुंठकथासुधापगा न साधवो भागवतास्तदाश्रयाः । न यत्र यज्ञेशमखा महोत्सवाः सुरेशलोकोपि न जातु सेव्यताम् ॥ यथा च आनम्य किरीटकोटिभिः'' इत्यादि, सायुज्यं सार्ष्टिसालोक्यसामीप्येत्यादि, 'न दानं न तपो नेज्या' इत्यादि, 'नैष्कर्म्यमप्यच्युतभाववर्जितम्' इत्यादि, 'नात्यंतिकं विगणयंत्यपि ते प्रसादम्' इत्यादयः । अथ सर्वत्र सर्वदा यदुपपद्यत इति योजनिकार्थोपयुगपद् यथा 'तस्मात्सर्वात्मना राजन्हरिः सर्वत्र सर्वदा' इत्यादि अन्वयव्यतिरेकाभ्यां सर्वत्र सर्वदा यदुपपद्यते इत्यत्र यथा ''स्मर्त्तव्यः सततं विष्णुः'' इत्यादि साकल्येपि यथा 'नह्यतोन्यः शिवः पंथाः' इत्युपसंहारे ''तस्मात्सर्वात्मना राजन्हरिः सर्वत्र सर्वदा । श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यो

एतन्मतं समातिष्ठ परमेण समाधिना ॥ भवान्कल्पविकल्पेषु न विमुह्यति कर्हिचित ॥ ३६ ॥
श्रीशुक उवाच ॥ संप्रदिश्यैवमजनो जनानां परमेष्ठिनम् ॥ पश्यतस्तस्य तद्रूपमात्मनो न्यरुणद्धरिः ॥ ३७ ॥

तदेवात्मेति ॥ ३५॥ यत्प्रार्थितं 'नेहमानः प्रजासर्गं' इति तत्प्रसादीकरोति । एतन्मतं सम्यगनुतिष्ठ समाधिना चित्तैकाग्र्येण कल्पेषु ये विकल्पा विविधाः सृष्टयस्तेषु विमोहं कर्तृत्वाभिनिवेशं न यास्यतीति ॥ ३६ ॥ एवं संप्रदिश्योपदिश्य । जनानां परमेष्ठिनं परमे आधिपत्ये स्थितं ब्रह्माणम् । आत्मनस्तद्रूपं न्यरुणदंतर्हितवान् ॥ ३७ ॥

भगवान्नृणाम् । जीवानामिति 'नृगतिं विवच्य कवयः इतिवत् एतदुक्तं भवति । यत्कर्म ' तत्संन्यासभोगशरीरप्राप्तावियोगः सिद्ध्यवधिः सांख्यमात्मज्ञानवधि ज्ञानमोक्षाविधि तथा तत्तद्योग्यतादिकानि च सर्वाणि एवंभूतेषु कर्मादिषु शास्त्रादिव्यभिचारिता च ज्ञेया हरिभक्तिस्तु अन्वयव्यतिरेकाभ्यां सदा सर्वत्र तत्तन्महिमाभिरुपपन्नत्वात्तथाभूतस्य रहस्यस्यांगत्वं युक्तम् । अतो रहस्यस्यांगत्वेन च ज्ञानरूपार्थांतराच्छन्नतयैवे दमुक्तमिति । तथाप्यात्मविषयैवान्यार्थसंगोपनादसौ साधनभक्तिरपि कचिद्बाह्यं ब्रह्मज्ञानादिसाधनं स्यादिति गम्यते । अत्रेयं प्रक्रिया साधनभक्तेः सार्वत्रिकत्वात्सदातनत्वाच्च प्रथमं सा गुरोर्ग्राह्या ततस्तदनुष्ठानाद्बाह्यसाधनं वैराग्यपुरस्सरताशीलमात्मज्ञानमानुषंगिकं भवति । ततो भूयश्च तथाभूतत्वाद्भक्तिरनुवर्त्तत एव 'ब्रह्मभूतः प्रसन्नात्मा' इत्यादिभ्यः 'आत्मारामाश्च मुनयः' इत्यादिभ्यश्च तदेव 'भगवज्ज्ञानविज्ञाने च' इति । तस्माज्ज्ञानवि ज्ञानरहस्यतदंगानामुपदेशेन चतुःश्लोक्या अपि स्वयं भगवानेवोपदेष्टा अत्र तस्मै स्वलोकं भगवान्सभाजित इति भगवच्छब्देन "ददर्श तत्राखिलसात्वतां पतिम्" इत्यत्र 'परार्द्धांते न सोऽबुध्यत गोपवेशोमे पुरस्तादाविर्बभूवे' इतितापनीश्रुतादनुकूलितश्रीकृष्णत्वालिंगेन चास्यवक्तुः श्रीभगवत्त्वमेव :स्पष्टं न जातु तदंशभूतनारायणाख्यगर्भोदशायिपुरुषत्म् । अत एवास्य महापुराणस्यापि श्रीभागवतमित्येव व्याख्या तथैवोक्तं 'कस्मै येन विभाषि तोयमतुलो ज्ञानप्रदीपः पुरा' इत्यादौ पुराशब्देन भगवद्वक्तृत्वमेवोक्तम् । 'अद्योऽवतारः पुरुषः परस्य' इति द्वितीयेऽभिधानात् । अत "इदं भगवता पूर्वं ब्रह्मणे नाभिपंकजे । स्थिताय भवभीताय कारुण्यात्संप्रकाशितम्" इत्यत्रापि भगवच्छब्दः प्रयुक्तः श्रीनाभिपंकजे स्थितं ब्रह्माणं प्रति स्वयं भगवता तत्रैव व्यापि महावैकुंठे प्रकाश्येदं पुराणं प्रकाशितमित्यर्थः । अनुगतं चैतद्द्वितीयस्कंधेतिहासस्येति ॥ ३९ ॥ नन्वतिगंभीरार्थं चतुःश्लोकीभागवतमिदं कथं मयावगंतुं शक्यं विवदमानानां मतवैविध्यादित्यतं आह—एतन्मतं मदीयं सम्यगनुतिष्ठ समाधिना चित्तैकाग्र्येण विमृशेत्यर्थः। कल्पविकल्पेषु महाकल्पानुकल्पेषु इयं विश्वजनी नातिरम्याभावार्थदर्शिनी भक्तिशास्त्रमधीयानैर्ज्ञैर्दृश्या न चापरैरिति ॥ ३६ ॥ अस्य महापुराणत्वे तु सर्गादिदशलक्षणवत्त्वेन भाव्यं तच्चात्र चतुःश्लोक्यां दुर्विज्ञेयं विना श्रीनन्दनन्दनकृपयेत्येतदर्थं तदपि सूक्ष्मधिया ज्ञेयमत्रासूच्येव तथाहि मे मत्संबंधि यज्ज्ञानं वेदांतप्रतिपादितत्वादगुह्यं प्रसिद्धमेव'विज्ञानमेतत्त्रियवस्थमंगे' इत्यादिनैकादशस्कंधे भगवदुक्तैर्विज्ञानं प्रधानं तत्सहितं मया श्रीगीतासु भारते'अहं ब्रह्म परं धाम' इत्यादिना 'दैवी ह्येषा गुणमयी' इत्यादिना च गदितमुक्तमेव स प्रार्थयिता त्वं रहस्यं रहस्येकान्ते स्थाप्यं रहस्यं सुरेभ्योपि गोपितत्वाद्वा रहस्यं पाद्म उक्तमेतत्' 'परीक्षिते कथां वक्तुं सभायां संस्थिते शुके' इत्यादिना "गुह्यं पुत्राय शांताय परं गुह्यमिदं जगौ" इति नवमस्कन्धे श्रीशुकोक्तेश्च परं रहस्यं श्रीभागवतमेव न वेदादि पैलादिभ्यो वेददानेप्येतददानात् "हित्वा स्वशिष्यान्पैलादीन्" इति तत्रैवोक्तेश्च गुह्याद्गुह्यतरं मुक्तिं ददाति"कार्हीचित्स्म न भक्तियोगम्"इत्युक्तेरति गुह्यस्यैवादानं भवति नत्वगुह्यस्यात एव भक्तिरेव रहस्यं न तु ज्ञानादीति रहस्यमस्त्यत्र प्रतिपाद्यत्वेनेति रहस्यं श्रीमद्भागवतमेव अत्र मत्वर्थीयोच् यद्वा प्रीतिपाद्यप्रतिपादकयोरभेदोपचारात् । तदंगं भक्त्यंगमेकत्वं सामान्यापेक्षं तदंगानीत्यर्थः । तानि च सत्संगादीन्येव श्रीभागवतप्राप्तिरपि सत्संगादीन्विना न भवत्यतस्तस्यापि तान्येवांगानीति ज्ञेयं सुधिया यथैव गुणकर्मकोहमस्मि तथैव तत्त्वविज्ञानं मदनुग्रहात्ते तवास्तु किं भूतोहं यच्छ त्युपरमयति संसारान्निजभक्तानिति वा मोक्षादप्युपरमयति वा या वा "मद्भक्तास्सर्वथा राजन्नैव वांछंति किंचन" इति पुराणांतरात् "गृहेषु दारेषु सुतेषु बंधुषु द्विपोत्तमस्यंदनवाजिवस्तुषु । अक्षय्यरत्नाभरणायुधादिष्वनंतकोशेष्वकरोदसन्मतिम्" इत्यंबरीषोपाख्यानोक्तेः "सालोक्यादिचतुष्टयम् । "दीयमानं न गृह्णंति विना मत्सेवनं जनाः" इति श्रीकपिलोक्तेश्च । यम उपरमे अस्मादंतर्भावितण्यर्थात्क्त्तरिविनिपि "यमस्यात्वम्" इति मस्यात्वे

राजवत्साधनम् । पुनः न विद्यतेस्ति कथंभूतं रहस्यं परं सर्वोत्कृष्टमेवाहंभावो यस्य सोनहंभावः " छन्दसि परेऽपि, व्यवहिताश्च " इति यथाशब्दव्यवधानमदोषो प्राकृतवस्तुष्वस्य साक्षाद्वेदस्यापि बीजत्वात् । अत एव चतुःश्लोक्योपदेशाद्वेदा अपि चत्वार एवोद्भूता अन्यथा त्रिभिः पंचभिर्वा कथं नोपदिष्टमिति तत्त्वं तदुक्तं "चतुः श्लोकी चतुर्वेदबीजभूता न संशयः" इति संहितोक्तेर्वर्णितं चैतदाद्यपद्यव्याख्याशतके । अप्राकृते तु 'अहमादिर्हि देवानां' अहं सर्वस्यप्रभव इत्यादिभगवदुक्तेरेवाहंभावोस्त्येवेति ज्ञेयम् । यत्प्रमाणमस्येति । यावानिति विवृतौ त्वप्रमेयत्वं भगवतो विदीर्येत "नां तो न चादिर्न च संप्रतिष्ठा" इति श्रीगीतोक्तेः । "अनंतं ब्रह्म" इति श्रुतेश्च भगवतः प्रमाणं नास्तीति गम्यते(३१)अथ सर्गादिनाह–'अहमेवासमे वाग्रे' इत्यनेन स्थानं ध्वनितम् यदेतच्चेत्यनेन विसर्गो ध्वनितः'। नान्यद्यत्सदसत्परमित्यनेन विरोधो ध्वनितः । योवशिष्यतेत्यनेनाश्रयो ध्वनितः (३२) ऋते सत्यस्वरूपे ब्रह्माणि अर्थं प्रति भूभारहर्तिं सन्मार्गप्रवृत्त्यादिप्रयोजनं प्रति यद्रामकृष्णादिरूपं 'प्रतीयेत कार्यांते न प्रतीयेत तदात्मनो मे मायां लीलां विद्यादित्यनेनावतारानुचारितरूपेशकथा ध्वनिता । अनेनैवोतयोपि ध्वनितास्तथाहि–ऋते शुद्धे आत्मन्यंतःकरणे यत्प्रतीयेतार्थमुद्दिश्य अन्यथा न प्रतीयेत तदात्मनो जीवस्य मीयते भावि शुभाशुभमनयेति मायावासना तां विद्यात् । सा च द्विधा । शुभाऽशुभा च प्रथमायां दृष्टांतो यथा भास इति । आभासस्सूर्यादिस्तद्वत्प्रकाशकर्त्रीत्यर्थः । द्वितीयायां यथा तम इति । तमोवद्दुःखहेतुरित्यर्थः(३३)यथा महांति भूतानि भूतेषु सर्वदेहेषु प्रविष्टानि देहरक्षणार्थं तत्र स्थितानि तेषां विनिर्गमे देहे स्वधातुविगमे तु विशीर्य्येंत इत्युक्तेर्देहनाशश्रवणात्।अनेन पोषणमुक्तम्।अप्रविष्टानीति । मुख्यप्रवेशासंभवादुक्तम्।अत्र भूतपदेन भौतिकमपि ज्ञेयं कारणस्य कार्यस्यापि लक्षकत्वात्।तेन मन्वंतरं लक्ष्यते सर्वेषां मन्वादीनां भौतिकत्वात् । तथा तेषु न तेष्वहमित्यनेनासंगत्वकथनेन स्वस्य नित्यमुक्तत्वं सूचितमिति मुक्तिरुक्ता । यद्वा जीवरूपेण प्रविष्टोपि स्वरूपेणाप्रविष्ट एवेत्यर्थः (३४) 'एतावदेव जिज्ञास्यम्' इत्यनेनाश्रयश्रवणजिज्ञासादाववश्यं यतितव्यमित्युक्तम्।अन्वयव्यतिरेकाभ्यामित्यादिनाप्याश्रय एवोक्तः।"अन्वयव्यतिरेकेण जाग्रत्स्वप्नसुषुप्तिषु । मायामयेषु तद्ब्रह्मजीववृत्तिष्वपाश्रयः"इति द्वादशे वक्ष्यमाणत्वात्(३५) एतत्फलमाह–एतन्मतामिति श्रीहरिं स्वेष्टदेवं च नत्वा तस्य कृपावशात् । मूलभागवतव्याख्यां कुर्वे गुर्वनुमोदितः (१) श्रीमन्नारायणो "वेदैश्च सर्वैरहमेव वेद्यो वेदांतकृद्वेदविदेव चाहम्" इत्यादिभिः सर्ववेदकृत्सर्ववेदांतसारं श्रीमद्भागवतं ब्रह्मणे उपदिशंस्तत्र वक्तव्यार्थसंग्रहं कुर्वंस्तं ग्राहयितुं ब्रह्माणं सम्मुखी करोति । ज्ञानमिति। न च भागवतस्य वेदांतसारत्वे प्रमाणाभाव इति वाच्यम् । "सर्ववेदांतसारं यद्ब्रह्मात्मैकत्वलक्षणम् । वस्त्वद्वितीयं तन्निष्ठं कैवल्यैकप्रयोजनम्" इति तत्रैव निर्देशात् । तत्र भागवतस्य सर्ववेदांतसारत्वं प्रतिज्ञाय तदापादनायैव हेतुगर्भितं विशेषणमाह–ब्रह्मात्मैकत्वलक्षणमिति ।। अत्र ब्रह्मशब्देन मायोपहितः सर्वज्ञत्वसर्वेश्वरत्वसर्वनियंतृत्वादिधर्मविशिष्टः परमात्मा तत्पदवाच्य आत्मशब्देन चाविद्याद्युपहितोऽल्पज्ञत्वादिगुणाविशिष्टो जीवात्मा त्वंपदवाच्यः तयोः श्रुतिसिद्धैक्यस्य विरोधेनानुपपत्तौ सोयं देवदत्तः इत्यादौ तद्देशकालच्छत्रचामरादिविशिष्टस्य तद्देशकालदंडकमंडल्वादिविशिष्टेनैक्यानुपपत्त्या विरुद्धांशपरित्यागेनाविरुद्धदेवादतांपिंडाभेदबोधवद्विरुद्धमायाऽविद्याद्युपाधिसर्वज्ञत्वाऽल्पज्ञत्वादिधर्मरूपांशौ विहाय सच्चिदानंदस्वरूपात्मकत्वलक्षणमैक्यं जहदजल्लक्षणया लक्षयतीति तथा । ननु जहदजहल्लक्षणात्मैक्यसिद्धावप्युपाध्यवंशेषान्नाद्वैतपर्य्यवसानं तत्रह–वस्त्वद्वितीयं तन्निष्ठमिति । नं हि लक्षणयैक्यं बोधयञ्शास्त्रमुपाधिं पृथगवस्थाप्यैक्यं बोधयति येनैवमाशंक्येत किं तु "नेह नानास्ति किंचन" इत्यादिनोपाधींस्तंदधीनतद्धर्मादिनिखिलद्वैतमपबाध्य यदद्वितीयं वस्तु तदेकनिष्ठं भवतीति च । तथा च वेदांतेषु श्रूयमाणसर्वोपास्तीनां चित्तैकाग्र्यद्वारा ब्रह्मविद्यैकपर्य्यवसायितया ब्रह्माद्वैतविद्यैकानिरूपकश्रीमद्भागवतस्य सर्ववेदांतसारत्वमुपपन्नं विषयतः सारत्वमुक्त्वा फलतोपि सारत्वमाह–कैवल्यैकप्रयोजनमिति । ननु ब्रह्मावबोधस्य "ब्रह्मविदाप्नोति परं, ब्रह्म वेद ब्रह्मैव भवति, यं एष वेद विष्णुरेव भवति" इत्यादिश्रुतौ ब्रह्मावाप्तिफलश्रवणात्कथं फलांतरोक्तिरिति चेन्न । नित्यमेव प्राप्तं ब्रह्म तस्य मायाऽविद्याद्युपाधिकल्पितभेदभ्रममंतरेणाप्राप्त्यसंभवाद्बोधेन भेदभ्रमबाधद्वारा कैवल्यमृते प्राप्त्यंतरासंभवात्कैवल्यस्यैव ब्रह्मावाप्तिशब्दोर्थत्वं यन्मे मत्स्वरूपविषयं परमगुह्यं ज्ञानं तदंगं साधनकलापं च मया गदितं गृहाणेत्यन्वयः । तत्र यज्ज्ञानं कर्मविषयं तद्वैदिकमपि न गुह्यं "ब्राह्मणो यजेत्" इत्यादौ बाह्याध्यस्तब्राह्मणत्वादिजातिमद्देहादिपुरस्कारेण तत्प्रवृत्तेः "वा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म"इत्यादिभिरदृढत्वश्रवणाच्च । उपाधिविविक्तिकेव प्रत्यक्स्वरूपविषयज्ञानमांतरत्वाद्गुह्यं ब्रह्माभेदज्ञानं तु परमगुह्यं तदप्युक्तं "कैवल्यं सात्त्विकं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम्" इति । तत्र सत्त्वस्याभानान्यथाभानप्रयोजकत्वाभावेनाध्यासानापादकत्वादुपाधिविविक्तज्ञानं सात्त्विकं ब्रह्मात्मावबोधं विना विवेकाज्ञानमात्रेण गुणबाधानुपपत्त्या न निर्गुणं मत्स्वरूपे आत्मत्वनिष्ठारूपं मन्निष्ठं तु मायागुणबाधकत्वान्निर्गुणमित्यर्थः ।

किं भूतं तज्ज्ञानं तत्राह—विज्ञानसमन्वितमिति विशेषेण प्रमेयगतसंशयनिरासेन ज्ञायते स्वरूपं येन तद्विज्ञानं मननं फलोपकार्य्यंगं तेन समन्वितं रहस्यं निदिध्यासनाख्यं ध्यानं तत् द्विविधं यत्नसाध्यमयत्नसाध्यं च । तत्राद्यं
साक्षात्कारात्पूर्वं स्मरणभक्त्यंतःपातितया साधनरूपम् । द्वितीयं तु ज्ञानिनस्तस्य कार्यं न विद्यते इत्यादिना कर्तव्यप्रवृत्त्यनुपपत्त्या यत्नं विनैव स्वाभाविकजीवन्मुक्तिदशायां स्वरूपानुसाधनं "ब्रह्मभूतः प्रसन्नात्मा न शोचति
न कांक्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्" इत्यादिवाक्यसिद्धं पराभक्तिरूपं तेन सहितं तदंगं साधनजातं च । ननु भगवदुदितज्ञानग्रहणाय नाहं समर्थस्तत्राह—यावानिति। यावान् विभुसच्चिदानंदैकरससर्वांगः
तथा यथाभावः परमार्थसद्रूपः । यद्वा यथा स्वभक्तेषु वात्सल्यादिभावो यस्य स तथा । यद्वा यथा नृत्यादौ नेत्रकरचालनादिभावो यस्य स तथा । ननु स्वरूपस्य भवतु वेद्यत्वं करचालनादिकर्म्मणां तदतिरिक्तत्वेन "अतो
न्यदार्तम्" इत्यादिश्रुत्या वेद्यत्वाभाव इत्याशंक्याह—'यद्रूपगुणकर्मकः' इति । यस्य रूपाणि स्वरूपाण्येव गुणाः कर्म्माणि च यस्य स तथा तथा । च भगवद्गुणानां कर्म्मणा च स्वरूपात्मकत्वेनावेद्यत्वाभाव
एवेति भावः । एवं यादृक् मत्स्वरूपं तथैव तत्त्वविज्ञानं परमार्थवस्त्वपरोक्षं ते मदनुग्रहादेवास्तु "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ" इत्यादिश्रुतौ गुर्वीश्वरभक्तानां तयोरनुग्रहाज्ज्ञानलाभाध्यवसायेपि
तव तु गुरुरिष्टदेवश्चाहमेवेति मदनुग्रहादेवास्तु एवमनुग्रहाधीनतत्त्वज्ञानोत्पत्त्युक्त्या "वासुदेवे भगवति भक्तियोगः प्रयोजितः । जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम् ॥ मद्भक्तिविमुखानां हि शास्त्रगर्तेषु
मुह्यताम् । न ज्ञानं न च मोक्षः स्यात्तेषां जन्मशतैरपि" इत्यादिवाक्यशतैः "यस्यास्ति भक्तिर्भगवत्यकिंचना सर्वैर्गुणैस्तत्र समासते सुराः" इत्यादिना स्वप्रभावलेशमात्रेण सर्वसाधनसंपादिका । "याया
साधनसंपत्तिः पुरुषार्थचतुष्टये । तया विना तदाप्नोति नरो नारायणश्रयः" इत्यादिना सर्वसाधनप्रतिरूपतयाऽभिषिक्ता साधनस्वरूपा नवधा भक्तिरनुग्रहाविर्भाविका मुख्यं ज्ञानोत्पत्तिसाधनमिति
ज्ञापितम् । "ज्ञानकारणसामग्र्यां भक्तिरेव गरीयसी" इति श्रीभगवत्पूज्यपादोक्तेः । "नियुज्यमानया भक्त्या भगवत्याखिलात्मनि । सदृशोस्ति शिवः पंथा योगिनां ब्रह्मसिद्धये" इति श्रीकपिलोक्तेश्च
एवं तत्त्वज्ञानाद्ब्रह्माणं संमुखीकृत्य स्वानुग्रहात् तत्प्राप्तिं संभाव्यास्त्विति वरदानेन तस्मिंस्तद्ग्रहणशक्तिमाधाय तत्त्वमेवाह—अहमेव सच्चिदानंदविग्रहः स्वरूपात्मकधामोपकरणपरिषदादिरूपः "सत्यात्म
प्राणारामम्" इत्यादिश्रुतिसिद्धस्तवापरोक्षः सत्त्वस्य मन्नियम्योपाधेरभानान्यथाभानाप्रयोजकतया शुद्धस्वरूपभूतः सर्वाधिष्ठानात्मक एवाग्रे सर्गात्पूर्वमासं श्रूयमाणमच्छब्दस्यानुपपत्तिमंतरेणार्थांतरकल्पनानुपपत्तेः सर्गादग्रे
कार्य्यस्य कारणाव्यतिरेकेण प्रतीतेरप्यभावान्ममैव सर्वकारणत्वादहमेवासमिति भावः । "आत्मा वा इदमेक एवाग्र आसीत्" इतिश्रुतेः । न चाग्रे इति पदेन कालसद्भावप्रतीतेरेवकारानुनुपयोग इति वाच्यम्
"कालोऽस्मि लोकक्षयकृत्प्रवृत्तः" इति भगवद्वचनात्तस्य तदनतिरेकात् । किं च सुषुप्तौ अज्ञानावृतस्वरूपातिरिक्तकालाभानेऽपि समुत्थितस्य कालवासनाविष्टतया 'तदा सुखमस्वाप्सं न किमप्यवेदिषम्' इति तदाशब्दे
न कालपरामर्शस्य दर्शनवत्तदुक्त्युपपत्तेः । उक्तं च वृद्धैः "कालाभावे पुरेत्युक्तिः कालवासनया युतम् । शिष्यं प्रत्येव तेनात्र द्वितीयं न हि शंक्यते" इति । किं चाग्रे इति पदस्य पूर्वत्ववाचित्वेपि कालवाचित्वाभाव
एवेति न तच्छंकावकाशः न च पूर्वत्वाभिधाने भूतत्वप्रतीतेः कथं कालं विना भूतत्वादिव्यवहार इति वाच्यम् । कालमस्वीकुर्वतामपि सांख्यानां भूतभविष्यदादिव्यवहाराबाधात् । ननु कथं सद्रूपविष्णोरेव पूर्वसत्त्वमुच्यते
यतः "असद्वा इदमग्र आसीत्, असदेवेदमग्र आसीत् । तत्सदासीत तद्धैक आहुः, असदेवेदमग्र आसीत्" इति श्रुतिषु असत्पूर्वकत्वश्रवणात् "तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियते" इत्यत्र चाक
र्तृकैव सृष्टिः श्रूयते तत्राह—आसमेवेति । न आसमिति न न चोदाहृतश्रुतिविरोधः । "समाकर्षात्" इति सूत्रे भगवद्व्यासेन तद्विरोधपरिहारस्य दर्शितत्वात् । तथाहि—"असद्वा इदमग्र आसीत्" इति नासत्कारण
त्वविवक्षा । "असन्नेव संभवति असद्ब्रह्मेतिवेदचेत् ॥ अस्ति ब्रह्मेति चेद्वेद संतमेनं ततो विदुः" इत्यसदपवादेन सत एव ब्रह्मणोऽन्नमयादिगुहांतःस्थत्वेन प्रत्यक्त्वमुक्त्वा "सोऽकामयत्" इति समाकृष्य ततः सृष्टिं निरूप्य
"तत्सत्यमित्याचक्षते" इत्युपसंहृत्य तत्रैवेमं श्लोकमाह—असद्वा इति अत्रासद्यद्यभिप्रेतं स्यात्तदान्यं समाकृष्यान्योक्तौ वाक्यमसंबद्धं स्यात्तस्मादव्यक्तनामरूपतया सूक्ष्मत्वेन दुर्लक्ष्यं असदित्युपचर्य्यते "असदेवेदमग्र आसीं
त्" इत्यत्रापि " तत्सदासीत्" इति समाकर्षादियमेव गतिः । "तद्धैक आहुरसदेवेदमग्र आसीत्" इत्यत्रापि न अत्यन्तासत्योक्तिर्भ्रान्तिकल्पनानुवादेन श्रौतसत्यक्षदार्ढ्यमेव "तद्धेदं तर्ह्यव्याकृतमासीत्" इत्यत्रापि नाहेतुव्या
कृतिः "सर्व एव इह प्रविष्टः" इति व्याकर्तुः प्रविष्टत्वेन समाकर्षात् । व्याकर्तुरभावे कमाकृष्येत चेतनस्यैवायं प्रवेशः 'पश्यंश्चक्षुः शृण्वञ्श्रोत्रम्' इति चेतनत्वोक्तेः । अनेन जीवेनात्मनाऽनुप्रविश्य "नामरूपे व्याकर

वाणि'' इति श्रुत्यंतरेपि व्याकृतेश्चेतनहेतुत्वदर्शनात् लूयते क्षेत्रं स्वयमेवेतिवद्व्याक्रियते इत्यत्रापि सत्येव कर्तर्य्युपपत्तेश्च। एवकारव्यावृत्तिमाह—नान्यदिति। ''नान्यत्किंचन मिषत्'' इति श्रुतेः । मिषादिति चलं नश्वरमित्यर्थः । अन्यच्छब्दार्थमेव विवृणोति यत्सदसत्परमिति । सत् स्थूलम् असत्सूक्ष्मं परं तयोः कारणं चेत्यर्थः । न च भवतु स्थूलसूक्ष्मयोरभावः ''नासदासीन्नो सदासीत्'' इति श्रुतेः । ''तम आसीत्'' इति श्रुतेः कथं कारणाभावोक्तिरिति वाच्यम् । 'नोसदासीत्तम आसीत्' इत्यत्र तमसः सत्त्वप्रतिषेधादासीदिति प्रयोगस्यैवानुपपत्तेः । ''सद्योगात्तमसः सत्त्वं न स्वतस्तन्निषेधनात्'' इति वृद्धोक्तेः सत्त्वानिषेधेन स्वतस्तत्प्रयोगानुपपत्तावपि सदधिष्ठानाध्यासिकसंबंधेनतत्सत्तयैवासीदिति प्रयोगसंभावनायामपि तच्छक्तित्वेनैव तदन्यत्वानन्यत्वाभ्यामनिर्वचनीयतया नान्यदितिभगवदुक्त्यनुपपत्त्यभावात् । न हि वह्नेः शक्तिस्तदन्या तात्पार्थक्येन तत्सत्तास्वरूपाभानात् । नापि वह्निरेव तच्छक्तिस्तथात्वे शक्तिशक्तिमद्भावानुपपत्तेरेकस्मिन्नाधाराधेयभावस्य वक्तुमशक्यत्वात्प्रतिबंधकमणिमंत्रादिसंनिधौ वह्निस्वरूपसमवधानेऽपि स्फोटाख्यकार्य्यादर्शनेन तत्प्रतिरोधदर्शनात् । न चान्यत्वानन्यत्व तदुभयात्मकत्वशक्तेर्विरोधात् मिथोभावः भावरूपयोस्तयोरेकाधिकरणत्वासंभवात्तस्मादन्यत्वानन्यत्वतदुभयात्मकत्वैर्निर्वक्तुमशक्यैव शक्तिः । तथैव तमोरूपासतः शक्तिरप्यनिर्वचनीयतया न तदन्यासीत् । किं च सतः शक्तेस्तदनन्यत्वासंभवेनैव न सत्त्वं कार्य्यदर्शनेन च नासत्यं विरोधाच्च । नोभयात्मत्वमिति सत्त्वासत्त्वान्यत्वानन्यत्वतदुभयात्मत्वेभ्योनिर्वचनीयतया शक्तेर्मिथ्यात्वेन तत्कार्य्यस्याप्यनिर्वचनीयतया मिथ्यात्वात्तदा तदनुद्भवाच्च नान्यदासीदित्यभिप्रायः । नन्वनिर्वचनीयत्वेन मायःया जगतश्चानिर्वचनीयत्वोक्तौ भवन्मते ब्रह्मणोप्यनिर्वचनीयतया मिथ्यात्वापत्तिस्तथा च ब्रह्मापि मिथ्या अनिर्वचनीयत्वादिति प्रयोगापत्तिरिति चेत् । न । अत्र ब्रह्मापीत्यपिशब्देन सर्वप्रपञ्चस्यापि पक्षांतःपातितया हेतोरनुपसंहारित्वापत्तेः । अन्वयव्यतिरेकदृष्टांतरहितो ह्यनुपसंहारी सर्वस्य पक्षत्वे तदितरदृष्टांतालाभात् । अपिशब्दानुक्तावपि शब्दब्रह्मादाय सिद्धसाधनता चेतनविशेषणेपि ब्राह्मणाद्यादाय सिद्धसाधनत्वम् । परत्वविशेषणेपि मायोपहितकारणब्रह्मादाय सिद्धसाधनम् । न च सिद्धसाधनताया अदूषकत्वम् । अनधिगतार्थगमकस्यैव प्रमाणत्वेन सिद्धस्यानधिगतत्वाभावात् । तत्साधकस्य प्रमाणत्वानुपपत्तेः । संदिग्धसाध्यवान्हिपक्षः साध्यस्य तत्र सिद्धत्वे निश्चितसाध्यवान् स पक्ष इति तल्लक्षणापत्त्या पक्षत्वानुपपत्तेस्तदसिद्धौ[1] च पक्षस्यैव हेत्वाश्रयतयाहेतोराश्रयासिद्ध्यापत्तिश्च । किंचात्र ब्रह्मशब्देनास्मदभिमतस्वरूपं प्रतीयते न वा ? । नांत्यः पक्षस्वरूपाभानेप्याश्रयासिद्ध्या हेतुसाध्यादिसमर्थनानुपपत्तेः । नाद्यः ब्रह्मशब्देन तत्प्रतीतौ ब्रह्मशब्दगोचरत्वेनैवानिर्वचनीयत्वहेतोरसिद्ध्या शब्दोऽनित्यश्चाक्षुषत्वाद्घटवदित्यादिवत्पक्षे हेत्ववर्तनलक्षणस्वरूपासिद्ध्यापत्तेः। किं च ब्रह्मणोऽपि मिथ्यात्वं वदता किंचित्स्वीक्रियते न वा स्वीक्रियते चेत्तज्जडं चिद्वा जडं चेत्तस्य स्वतः सिद्धत्वानुपपत्त्या तत्सिद्ध्यै चित्स्वीकारापत्तेः चिच्चेत्सिद्धं न समीहितं सच्चिदेकसिद्ध्यैवाद्वैतवादिनामिष्टसिद्धेः । नाम्न्येव विवादो न वस्तुनि न स्वीक्रियते चेन्निरधिष्ठानारोपासिद्ध्या ब्रह्मणो मिथ्यात्वासिद्धिः । किं च मिथ्यात्वशब्देनासत्यत्वमाभिप्रेयते सद्विलक्षणत्वं वा ? । सदसद्भ्यामानिर्वचनीयत्वं वा ? नाद्यद्वितीयौ । तथात्वे तुच्छत्वापत्त्या प्रत्यक्षेणावभासमानशुक्तिरूप्यस्वप्नप्रपंचादौ तदसंभवेन दृष्टांते साध्यवैकल्यं ततश्च व्याप्तासिद्धिः। हेतुसत्त्वे साध्यसत्त्वमन्वयव्याप्तिः । साध्यभावे हेत्वभावो व्यतिरेकव्याप्तिः । अत्र तु यत्रयत्र स्वप्नादौ अनिर्वचनीयत्वं हेतुस्तत्र प्रत्यक्षत्वेन तुच्छत्वाभाव इति नान्यव्याप्तिस्तथा तत्रैव स्वप्नादौ तुच्छत्वसाध्याभावेप्यनिर्वचनीयत्वहेतुसवाद्भावान्न व्यतिरेकव्याप्तिः । अत एव निश्चितसाध्याभाववद्विपक्षवृत्तित्वेन साध्याभाववद्वृत्तिर्हेतुः साधारणानैकांतिक इति । सव्यभिचारपर्य्यायसाधारणासाधारणानुपसंहारित्रिविधानैकांतिकांतःपातिसाधारण्यं च शश शृंगादौ निश्चिततुच्छत्वसाध्यवर्त्ति सपक्षे चानिर्वचनीयत्वहेतोरवृत्तेः विपक्षमात्रवृत्तितयासाध्याभावता हेतुर्विरुद्ध इति । साध्याभावोपादकत्वेन विरुद्धता च तृतीये तु सदसद्भ्यामनिर्वचनीयत्वस्यं साध्यत्वे तस्यैव हेतुत्वेन हेतोः साध्याविशेष्यं तथा च साध्यस्य पक्षे संदिग्धतया हेतोरपि: संदिग्धासिद्धतया स्वरूपासिद्धिरेव पक्षत्रयेऽपि तत्त्रिविधविकल्पितसाध्याभावस्य सत्यत्वस्य ब्रह्मणि पक्षे ''सत्यं ज्ञानमनंतं ब्रह्म, तदेवर्त्तं तदुसत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्'' इत्यादिश्रुतिभिर्बोधनात् यस्य साध्याभावः प्रमाणांतरेण बाधितः स बाधित इति बाधलक्षणसद्भावाद्बाधश्च । किंचानिर्वचनीयत्वं किं नाम सदसद्भ्यामनिर्वचनीयत्वं वा ? शब्दजन्यज्ञानाभास्यत्वं वा ? आद्ये उदाहृतश्रुत्यैव पक्षे ब्रह्मणि सत्यत्वाध्यवसायात्स्वरूपासिद्धिः । द्वितीये—सर्प्परूप्यादिशब्दजज्ञानभास्ये रज्जुसर्पशुक्तिरूप्यादौ घटप



---

१ पक्षत्वासिद्धौ ।

टादिशब्दजज्ञानभास्ये स्वप्नजाग्रद्घटादौ साध्यवति सपक्षे दृष्टांते साधनवैकल्यं तथा चोक्तरूपमिथ्यात्वसाध्याभाववति तुच्छे शशशृंगादौ विपक्षे तच्छब्दजज्ञानभास्ये चावर्तमानत्वे सति पक्षमात्रवृत्तित्वेन शब्दजज्ञानाभास्यत्वरू
पानिर्वचनीयत्वहेतोः सपक्षविपक्षव्यावृत्तः पक्षवृत्तिरसाधारण इति लंक्षणलक्षितासाधारण्यं च । न च शब्दजज्ञानाभास्यत्वे ब्रह्मणो वेदान्तवेद्यत्वानुपपत्तिः :। वेदांतानां तद्गताज्ञानावरणबाधकत्वेनैव तदभासकत्वेपि तत्र
प्रमाणत्वस्य तस्य च तज्जन्यज्ञानप्रयुक्ताज्ञानबाधफलभाक्त्वेनैव स्वप्रकाशत्वेनैव तदभास्यत्वेपि तद्वेद्यत्वस्य चोपपत्तेः । न च हेतौ विकल्पमनुद्भाव्यानिर्वचनीयत्वशब्दमात्रेण मिथ्यात्वापादनं तथात्वे स्वर्णे तु कुंडलादिभूषणो
पादानं कनकशब्दवाच्यत्वात् धत्तूरवत् । धत्तूरफलं कंटकादिबहुमूल्यभूषणोपादानं कनकत्वात् स्वर्णवत् । सूर्यगभस्तयो दुग्धदोहा गोत्वाद्धेनुवत् । धेनवो न दुग्धदोहा गोत्वाद्गभस्त्यादिवत् मंदारो जगदवभासकोऽर्कत्वात्सूर्य
वत् । सूर्यो नावभासकोऽर्कत्वान्मंदारवत् । विष्णुर्न संसारतारको हरित्वात्कप्यादिवत् । कप्यादिस्तत्तारको हरित्वाद्विष्णुवदित्याद्याभाससमत्वापातात् । जडत्वपरिच्छिन्नत्वादयश्चात्रोपाधयः । साध्यव्यापकत्वे सति साधना
व्यापको हि उपाधिः यत्रयत्र हेतुस्तत्रतत्र साध्यमिति व्याप्तौ व्याप्तिनिरूपकं व्यापकं साध्यं व्याप्त्याश्रयो व्याप्यो हेतुस्तदेव लिंगं साध्यव्यापकत्वं च सर्वसाध्यवत्सु नियमेन वर्तमानत्वं साधनाव्यापकत्वं क्वचित्साधनवति
वर्तमानत्वेपि सर्वत्र साधनवत्सु नियमेनावर्तमानत्वं जडत्वपरिच्छिन्नत्वादयश्च मिथ्यात्वसाध्यवति सर्वत्र व्यापकत्वेन साध्यव्यापकत्वेपि पक्षे वर्तमानत्वाऽभावात्साधनाव्यापकत्वादुपाधयः । न च स्वप्नाकाशादौ
तत्र स्वप्नपुरुषेषु चापरिच्छिन्नत्वचेतनत्वाभ्यां सति मिथ्यात्वे साध्ये परिच्छिन्नत्वजडत्वयोरभावात्साध्याव्यापकत्वमिति वाच्यम् । स्वप्नाकाशादौ देशपरिच्छेदासंप्रतिपत्तावपि वस्तुपरिच्छेदसंप्रतिपत्तेः सुप्तपुरुषदेहादौ जडत्व
संप्रतिपत्तेश्च । तदात्मनश्चेतनस्य जडत्वाभावेपि तत्र ब्रह्माभेदेन मिथ्यात्वासंप्रतिपत्त्यासाध्यासत्त्वेन तदव्यापकत्वाभावात् ब्रह्म परमार्थसत्यं चिद्रूपत्वाद्व्यतिरेके मिथ्यारूप्यादिवदिति प्रतिपक्षानुमानपराहतत्वं च । न चास्य
केवलव्यतिरेकिणः साध्यस्य पक्षे प्रसिद्धौ अनुमानी प्रवृत्तिरन्यत्र प्रसिद्धौ तत्र हेतुसत्त्वे अन्वयव्याप्तिसद्भावेन व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकीति लक्षणकवलव्यतिरेकित्वभंगः अप्रवृत्तौ सपक्षव्यावृत्तत्वेनासाधार
ण्यमिति सर्वथा साध्याप्रसिद्धिरेवेति वाच्यम् । सद्विलक्षणत्वं क्वचिदत्यंताभावप्रतियोगिधर्मत्वाद्रूपवदित्यनवधारितधर्मिकसत्यत्वसिद्धौ केवलव्यतिरेकिणा पक्षे स्थापनोपपत्तेः । न च प्रमेयत्वादिषु व्यभिचारस्तेषु धर्मत्वहेतु
सत्त्वेपि क्वचिदत्यंताभावप्रतियोगित्वाभावात् सर्वं प्रमेयं सर्वमभिधेयं सर्वं व्यावृत्तमित्यंगीकारादितिवाच्यम् । "अप्रमेयमनादिं च, यतो वाचो निवर्तंते, यद्वाचा नाभ्युदितम्" इत्यादिभिस्तेषामत्यंताभावस्य ब्रह्मणि श्रुत्यैवा
पादनात् । किं च प्रेमयत्वं प्रमयत्वे वर्तते न वा?। आद्ये आत्माश्रयो द्वितीये—स्वस्मिन्नेवात्यंताभावप्रतियोगित्वेन केवलान्वयित्वक्षतिः । अपि च प्रत्येकप्रमाविषयत्वं प्रमेयत्वं केवलान्वयि सर्वप्रमाविषयत्वं वा नोभयथापि
घटप्रमाविषयत्वस्य पटे पटप्रमाविषयत्वस्य घटे सर्वप्रमाविषयत्वस्य सर्वत्र घटपटादावत्यंताभावेन केवलान्वयित्वानुपपत्तेः । एवमभिधेयत्वादावप्यूह्यं तथा च प्रमेयत्वादिकेवलान्वयित्ववादिनां कुतार्किकाणामेव साध्याप्रसिद्ध्या
केवलव्यतिरेक्यसंभवो नोपनिषदानाम् । न च साध्यव्याप्तहेतोः पक्षधर्मताज्ञानलक्षणालिंगपरामर्शस्यैवानुमानत्वेनात्र केवलव्यतिरेकिणि हेतुसाध्यव्याप्तिस्थलाभावेन तद्व्याप्यसिद्ध्यापरामर्शासंभव इति वाच्यम् ।
अन्वयिन्यन्वयव्याप्तिवद्व्यतिरेकिणि व्यतिरेकव्याप्तहेतोरेव साध्यगमकत्वात् । न च हेतुना साध्यसिद्धौ साध्याभावहेत्वभावव्याप्तेरनुपयोग इति वाच्यम् । यत्र साध्याभावस्तत्र हेत्वभाव इति विपक्षे व्याप्तिमुदा
हृत्य न तथा चायं तस्मान्न तथेत्यत्र तदभावोक्त्या अभावाभावस्य भावत्वेन हेतुसाध्यव्याप्तावेव तत्पर्य्यवसानात् । न चैतादृक्स्थलेऽर्थापत्तिरेव मानमिति वाच्यम् । यथोपयोगयोरुभयोरपि :मानत्वोपपत्तेः ।
एवं सर्गात्पूर्वं स्वसत्त्वमुक्त्वा विसर्गोपि तदाह—पश्चादिति । पश्चाद्विसर्गावसरे ब्रह्मादिरूपेणापि अहमेव तदाप्युक्तं "त्वमेक एवास्य सतः प्रसूतिस्त्वं संनिधानं त्वमनुग्रहश्च । त्वन्मायया संवृतचेतसस्त्वां पश्यंति
नाना न विपश्चितो ये ॥ सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते । स्थित्यादये हरिविरिंचिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः" इत्यादिना यद्वा पश्चात् प्रपंचस्य
लयोत्तरमप्यहमेव "सर्वाणि च भूतानि नारायणादेव समुत्पद्यंते नारायणे प्रलीयंते" "नष्टे लोके द्विपरार्द्धावसाने महाभूतेष्वादिभूतं गतेषु व्यक्तंव्यक्तं कालवेगेन याते भवानेकः शिष्यते शेषसंज्ञः" इत्यादि
श्रुतिस्मृतिभ्यः यच्चैतन्मध्ये परिदृश्यमानं तदप्यहमेव कार्य्यस्य कारणाव्यतिरेकात् "एतदात्म्यमिदं सर्वं नारायण एवेदं सर्वं यद्भूतं यच्च भाव्यं पुरुष एवेदं विश्वं सर्वमिदं पुराणः यस्मिन्निदं संचविचैति सर्वे यस्मिन्देवा अधि
विश्वे निषेदुः तदेवभूतं तदुभव्यमाहु इदं तदक्षरे परमे व्योमन् यथा सौम्ये केन मृत्पिंडो नं सर्वं मृन्मयं विज्ञातं स्याद्वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्यादिश्रुतिभ्यः । "न यत्पुरस्तादुत्पन्नपश्चान्म

ध्येपि तन्न व्यपदेशमात्रम् । भूतं प्रसिद्धं च परेण यद्यत्तदेव तत्स्यादिति मे मनीषा ॥ सर्वेषामिह भावानां भावार्थो भवति स्थितः । तस्यापि भगवान्कृष्णः किमतद्वस्तु रूप्यताम् ॥ आत्मैकतदिदं विश्वं सृज्यते सृज ति प्रभुः । त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः ॥ यदिदं मनसा वाचा दृश्यतेऽन्यैरपींद्रियैः । अहमेव न मत्तोऽन्यदिति बुद्ध्यध्वमंजसा'' इत्यादिस्मृतिभ्यः । ''तदनन्यत्वमारंभणशब्दादिभ्यः'' इति सूत्राच्च । तथा सर्वस्वप्नप्रपंचबाधे तत्साक्षिमात्रावशेषवत् ''नेह नानास्ति किञ्चन, अथात आदेशोनेतिनेति'' इत्यादि श्रुतिभिः प्रतीतिमात्रसर्वप्रपञ्चबाधे योऽवशिष्येत सोऽहमेवास्मि ''अंतर्भवेऽनंत भवंतमेव ह्यतत्यजंतो मृगयंति संतः । असंतमप्यंत्यहिमंतरेण संतं गुणंतं किमु यंति संतः ॥ श्रुतयस्त्वयि हि फलं त्यतन्निरसेनन भवन्निधनाः । निषेधशेषो जयतादशेषः ॥ एतावान्सर्ववेदार्थः शब्द आस्थाय मां भिदा । मायामात्रमनूद्यांते प्रतिषिध्य प्रसादति'' इत्यादिस्मृतिभ्यः निषेधे कृते नेतिनेतीति वाक्यैः ''समाधिष्ठितानां यदाभाति पूर्णमवस्थात्रयातीतमद्वैतमेकम् । परंब्रह्म नित्यं तदेवाहमस्मि'' इत्यादिवचनाच्च ॥ ३ ॥ ननु त्वत्स्वरूपातिरिक्तं किं चिन्नास्ति चेत्किमिति प्रपंचो भाति न भाति चानंदविग्रहो भवानित्याशंक्याह– ऋतेऽर्थमिति । यद्विश्वमर्थम् । ऋते वस्तुतो नास्ति तद्यतः स्वरूपाज्ञानादात्मन्यधिष्ठाने प्रतीयेत यच्च सच्चिदानंदानंतविग्रहं मत्स्वरूपं तद्यतो न प्रतीयेत तदधिष्ठानस्यान्यथाभानहेतुविक्षेपशक्तिप्रधानमधिष्ठानमत्स्वरूपाभानहेतुभूतमावरणाशक्तिप्रधानमज्ञानमात्मनो मम मायां विद्यात् । तत्रार्थाभावेपि भाने दृष्टांतो यथा भासो द्विचंद्रादिः आवरणेनाधिष्ठानभगवत्स्वरूपाभाने दृष्टांतो यथा तमो राहुर्नक्षत्रमंडले वर्तमानोऽपि न प्रतीयते । यद्वा । तस्य स्वत एवाभानात्मकस्य: नावरणकृत्यमतो यथा अतमाः सूर्यो मेघाच्छन्नस्तन्मेघं विश्वं च भासयन्नपि स्वयं सामान्येन प्रकाशमानोऽपि न विशेषतो भाति पेचकादीनां स्वीयेनैव दिवांधत्वदोषेणावृत इव न भाति । यद्वा । यद्विश्वमर्थम् ऋते तद्यतोऽज्ञानवशादात्मनि विश्वाधिष्ठाने प्रतीयेत अथ च सुषुप्तिप्रलयादौ कारणे लयेन स्वप्ने च कारणाज्ञानस्य प्रपंचांतराकारपरिणामेन क्षणेक्षणे चाज्ञानस्य पूर्वपूर्वभ्रमदृष्टसंस्कारोद्बोधे तत्तद्विषयांतराकारपरिणामेन ब्रह्मावबोधे तु सकारणबाधेन यत् विश्वं न प्रतीयेत तदज्ञानं तत्कार्य्यं चात्मनो मम मायां विद्यात् । तत्र दृष्टांतो यथा भासो रज्जुसर्प्पशुक्तिरजतादि च यद्वदर्थम् ऋते प्रतीयेताथ चान्यत्र प्रवृत्तौ वा दंडमालाभ्रकरंगादिभ्रमांतरोद्बोधे वा बाधेन वा न प्रतीयेत यथा च तमोनभोनीलिमा ऋतेर्थं प्रतीयेत तत्तद्दिक्प्रांतेऽसंनिधाने प्रतीयमानोपि तत्तद्देशगमनेन प्रतीयेत तद्वत् । यद्वा । आत्मनि स्वप्नदृशि यथा भासः स्वप्नप्रपंचो यथा तमो निद्रा ज्ञानं चार्थम् । ऋते प्रतीयेताथ प्रबोधेन प्रतीयेत यश्च तदधिष्ठानमात्मा स न प्रतीयेत तथात्मनि मयि यद्विभुं यतोऽज्ञानतमसः प्रतीयेताथ च लयबाधादौ न प्रतीयेत तदधिष्ठानं मत्स्वरूपं च यद्यतो न प्रतीयेत तदज्ञानमात्मनो मम मायां विद्यात् । ''तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणं पुरु दुःखदुःखम् । त्वय्येव नित्यसुखबोधतनावनंते मायात उद्यदपि यत्सदिवात्रभाति ॥ ''आत्मानमेवात्मतयाऽविजानता तेनैव जातं निखिलं प्रपंचितम् । ज्ञानेन भूयोऽपि च संप्रलीयते रज्ज्वामहेर्भोगभवाभवौ यथा । अज्ञानसंज्ञौ भवबंधमोक्षौ द्वौ नाम नान्यौ स्त ऋतज्ञभावात् । अजस्य चित्यात्मनि केवले परे विचार्यमाणे तरणाविवाहनी'' न च कथं मायावादोऽत्र लिख्यते मायावादस्यासद्वादत्वप्रच्छन्नबौद्धत्वयोः स्मरणादिति वाच्यम् । तद्बोधकवाक्यस्य प्रमाण्यानिश्चयात् । मायाया वादः कथनं मायावादस्तथा च तद्वाक्येऽपि मायोक्तिदर्शनात् । स्वासद्वादत्वबौद्धत्वाऽपादकस्यात्मघातिनस्तस्यासद्वादत्वादेव शास्त्रांतरादूषकत्वापत्तेः । किं च ''मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्'' इत्यादिश्रुतौ ''दैवी ह्येषा गुणमयी मम माया दुरत्यया । संभवाम्यात्ममायया । नाहंप्रकाशः सर्वस्य योगमायासमावृतः'' इत्यादिगीतायाम् । ''एषा माया भगवतः सर्गस्थित्यंतकारिणी'' इत्यादौ श्रीमद्भागवते एवं सर्वत्र मायाशब्दप्रयोगदर्शनात्सर्वश्रुतिस्मृतिपुराणेतिहासादिशास्त्रस्यासद्वादत्वापादनाय प्रवृत्तं स्वयमपि मायाशब्दकथनेन मायावादात्मकं तदेवासद्वादतया ''त्यजेदेकं कुलस्यार्थे'' इति न्यायेन हेयम् । न च मायया जगत्कारणत्ववाद एव मायावाद इति वाच्यम् । उदाहृतश्रुतिस्मृत्यादौ सर्वत्र तथोपलंभात् । किं च तद्वाक्यस्य प्रामाण्येऽपि सर्वाविरुद्धोयमेव विचारो न्याय्यः । यथा ब्रह्मसत्यत्ववादिन एव ब्रह्मवादिनस्तथा मायाकारणत्वस्य सर्वत्र श्रूयमाणस्य तत्तच्छास्त्रेभ्यो निःसारणासंभवात्सर्वप्रामाण्यास्वीकारे च नास्तिकत्वापत्तेर्ये मायायाः सत्यत्ववादिनस्त एव तत्पक्षपातितया मायावादिनस्तेषां मतस्यैव पुनर्मिथ्याभूतमायायां सत्यत्वभ्रमेणासद्वादत्व मायातत्कार्य्यसत्यत्वापादनेन सर्ववेदांतप्रतिपाद्यस्य ''अथ नित्यो निष्कलो निराख्यातो निर्विकल्पो निरंजनः शुद्धोऽद्वितीयो नारायणो न द्वितीयोऽस्ति कश्चित्'' इत्यादि श्रुतिसिद्धाऽद्वैतस्य बाधनेनार्थात् बौद्धत्वेऽपि

वाङ्मात्रेण वेदप्रामाण्यस्वीकारोक्त्या प्रच्छन्नत्वं ''यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति । तस्याहं न प्रणश्यामि स च मे न प्रणश्यति''इति भगवतैवापरिच्छिन्नदृष्टीनां स्वनाशाभावोक्त्या परिच्छिन्नमतीनां ''विप्लव्याप्तौ'' इत्यस्मात्सर्वव्यापकस्य विष्णोः सर्वतो नाशेनैकत्र परिच्छेदाभिमत्या स्वद्वेष्यत्वबोधनादतो मायासत्यत्ववाद एव मायावादो न तन्मिथ्यात्ववादस्तेषां तन्मिथ्यात्वापादनेन तदपवादकत्वात् ॥ ४ ॥ ननु सर्वथा द्वैतप्रपंचस्य मायामात्रत्वेन मिथ्यात्वे ''यतो वा इमानि भूतानि जायंते येन जातानि जीवंति यत्प्रयंत्यभिसंविशाति, आनंदाद्ध्येव खल्विमानि भूतानि जायंते तस्माद्वा एतस्मादात्मन आकाशः संभूत आकाशाद्वायुः, अथ पुरुषोह वै नारायणोऽकामयत प्रजाः स्रजेय नारायणात्प्राणो जायते मनः सर्वेंद्रियाणि च खं.वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणी'' इत्यादिश्रुतिभिः ''जन्माद्यस्य यतः'' इति सूत्राच्च कथं तत्कारणत्वेनैव ब्रह्म निरूप्यते ''तत्सृष्ट्वा तदेवानुप्राविशत्'' इत्यादिना तत्प्रवेशोक्तिस्तत्राह–यथा महांति भूतानीति । यथा महांति भूतानि पंचीकृतमहाभूतानि उच्चावचेषु ब्रह्मादिस्तंबपर्य्यंतप्राणिदेहेषु ब्रह्माण्डादिघटांतेषु च पटादिषु तंत्वादिवत्तत्सृष्ट्वा तदनुप्रविष्टानि प्रतीयंते तथापि वस्तुतो यथासौम्यैकेन मृत्पिंडो न सर्वं मृन्मयं विज्ञातं ''स्याद्वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्'' इत्यादिश्रुतिभ्यः । पटादीनां तंत्वादिस्वरूपातिरेकेण पृथक्–सत्त्वाभावादेव कस्मिन् प्रविष्टानि स्वीक्रियेरन्निति तदप्रवेशवत् प्राणिदेहानां ब्रह्मांडादेश्च महाभूतात्ममात्रत्वेन वस्तुतस्तत्पृथक्–सत्त्वाभावात् स्पष्टं तथानुभवात् ''क्षित्यादीनामिहार्थानां छाया न कतमापि हि । न संघातो विकारो वा न पृथक् नान्वितो मृषा'' इत्यादिवचनाच्च । अतस्तदभावादेव कुत्र प्रविष्टाः स्युरित्यप्रविष्टान्येव तथा तेषु भूतेषु सच्चिदात्मनानुप्रविष्टतया भासमानोप्यहं सच्चिद्विवेचने तदसत्त्वाभानापत्त्या ''धातवोऽवयवित्वाच्च तन्मात्रावयवैर्विना । न स्युरसत्यवच्चविन्यसन्नवयवोंततः ॥''य आत्मनो दृश्यगुणेषु सन्निति व्यवस्यते स्वव्यतिरेकतोऽबुधः । विनानुवादं न च तन्मनीषितं सम्यग्यतस्त्यक्तमुपाददत्पुमान्'' इत्यादिवचनैश्च तत्पृथक्–स्वरूपानवस्थानादेव ''तेषु नाहं प्रविष्टः, 'तदनुत्वं ह्यप्रविष्टः प्रविष्ट इव भाव्यसे । व्याप्यव्यापकता मिथ्या सर्वात्मेति हि शासनात्'' इत्यादिवचनात् । कारणत्वादिना निरूपणं तु ''नैतन्मनो विशति वागुत चक्षुरात्मा प्राणेंद्रियाणि च यथानलमर्चिषः स्वाः । शब्दोपि बोधकनिषेधतयात्ममूलमर्थोक्तमाह यदृते न निषेधासिद्धिः ॥ यतो वाचो निवर्त्तंते अप्राप्य मनसा सह'' इत्यादिना मनोवागगोचरस्य ब्रह्मणः साक्षाद्वक्तुमशक्यतया ''अध्यारोपापवादाभ्यां निःप्रपंचं प्रपंच्यते।अज्ञातजनबोधार्थे विद्वद्भिः कल्पितः क्रमः'' इति न्यायमाश्रित्य कारणत्वानुवादप्रतिषेधाभ्यां तत्स्वरूपावबोधायैव ''इत्थंभावेन कथितो भगवान् भगवत्तमः । नेत्थंभावेन हि परं ज्ञातुमर्हंति सूरयः ॥ नास्य कर्मणि जन्मादौ परस्यानुविधीयते। कर्तृत्वप्रतिषेधार्थं माययारोपितं हि तत्। '' इत्यादिवचनात् । ''न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता'' । इत्यादि श्रुत्या परमार्थसृष्ट्यादिनिषेधाच्च ॥ ९ ॥ एवं ज्ञानं परमगुह्यं निरूप्यान्वयव्यतिरेकरूपयुक्त्या मननेन भेदभ्रमबाधपूर्वकं प्रत्यगभिन्नाद्वयब्रह्मैव जिज्ञास्यमित्याह– एतावदेवेति । आत्मनो यत्तत्त्वं परमार्थस्वरूपं तज्जिज्ञासुना पुरुषेण एतावदेव जिज्ञास्यम् । अतो ''अन्यदार्तम्'' इत्यादिश्रुत्या ततोन्यस्य मृषात्वेन जिज्ञास्यत्वाभावात् किं तदित्यपेक्षायामाह–''यत्स्यात्सर्वत्र सर्वदा'' सर्वत्राकाशवायुतेजोबन्नांडभुवनघटपटादिषु कारणतया सच्चिदानंदस्वरूपेण यदनुगतं तदुक्तं भगवत्पूज्यपादैः।''अस्ति भाति प्रियं रूपं नाम चेत्यंशपंचकम् । आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्'' ॥ इति । यदेव पुनः प्रत्यक् चैतन्यं सर्वदा जाग्रत्स्वप्नसुषुप्त्यवस्थासु तत्तत्साक्षितयाऽनुगतम् । तदन्वयव्यतिरेकाभ्यां जिज्ञास्यम्। अन्वयशब्देनात्रानुवृत्तिः । व्यतिरेकशब्देन व्यावृत्तिः । आकाशादिघटपटांतेषु सच्चिदानंदस्वरूपब्रह्मणः सर्वत्रान्वयस्तत्तन्नामरूपयोश्च मिथो व्यतिरेकः''आकाशोस्ति तथा भाति प्रियो वायुस्तथैव सन् । भाति प्रियस्तथा तेजोबन्नं सद्भाति तत्प्रियम् । ब्रह्मांडादिघटांतेषु सत्ताभानं प्रियं ततम् । ब्रह्मणो नाम रूपं च नान्यस्यान्यत्र दृश्यते ॥ अस्ति भाति प्रियं नामरूपाभ्यां व्यतिरिच्यते । अनुवृत्तेर्यथा सूत्रं मणिभ्यो भिद्यते तथा ॥ नाम रूपं च सद्भानप्रियाद्भिन्नं तथेष्यते । व्यावृतत्वेन मणयो यथा सूत्राद्दिति ध्रुवम् ॥ नामरूपात्मकं विश्वमसद्भिन्नं सतो यतः । अभानं भानभिन्नत्वादप्रियं प्रियभेदतः ॥ उक्तं भागवतेऽथापि असद्दुःखात्मकं जडम् । जगत्सच्चित्परानंदविग्रहो ब्रह्म श्रीहरिः । तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम् । त्वय्येव नित्यसुखबोधतनावनंते मायात उद्यदपि यत्सदिवावभाति। योहं नावेदिषं किंचिदस्वाप्सं सुखतस्तदा । दृष्टवान्विविधान्स्वप्नान्सोहं जागर्मि तत्स्मरन् । साक्षिप्रत्यक्चैतन्यानुवृत्तिरिति सर्वदा । सर्वावस्थासु तासां तु मिथो व्यावृत्तिरेवहि । स्वप्ने जागरणोऽलीकः स्वप्नो हि जागरे न हि । द्वयमेव लये नास्ति लयोपि ह्युभयोर्न च । सत्यं साक्ष्यनुवृत्तत्वात् त्रिष्ववस्थासु शुक्तिवत् । व्यावृत्तत्वान्मृषाव

स्था रूप्यरंगाभ्रकादिवत्॥ त्रय अवस ॥ थास्त्रयः स्वप्ना इति श्रुतीरणात् । जाग्रत्सुप्ती मृषा स्यातामवस्थात्वाद्धि स्वप्नवत् ॥जाग्रन्मृषैव जाग्रत्वासुप्तजाग्रद्यथा तथा । सुप्तिर्मृषैव सुप्तित्वात्स्वप्नदृष्टसुसुप्तिवत् ॥ जाग्रद्विश्वं मृषा सर्वे विश्वत्वात्स्वप्नविश्ववत् । बाध्यत्वं न ह्युपाधिः स्यात्पक्षे साधनव्याप्तितः ॥ 'नेह नानास्ति' श्रुतितो बाध्यत्वं तस्य निश्चितम् । स्वप्नत्वं न ह्युपाधिः स्यात्साधनव्यासितस्तथा ॥ त्रयः स्वप्ना इति श्रुतेस्तत्र स्वप्नत्वनिश्चयात् । तयोस्त द्व्यतिरेके वै ह्युपाधिश्चित्स्वरूपता ॥ ब्रह्मणि साध्यव्याप्तित्वात्पक्षे च तदसंभवात् । साक्षी तु सर्वदा सत्यं साक्षित्वात्स्वप्नसाक्षिवत् ॥ सर्वत्रानुगतं ब्रह्म सच्चिदानंदविग्रहम् । व्यावृत्तेभ्योनुवृत्तत्वाद्यन्मृषाभ्यो विवेचितम् ॥ तथा साक्ष्यनुवृत्तत्वाद्व्यावृताभ्यो विवेचितः । सर्वाभ्यो जाग्रदादिभ्यो मृषाभ्यः सर्वदैव सत् ॥ अन्वयव्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदा । ब्रह्म प्रत्यगभिन्नं तत्तत्वमस्यादिगोचरम् ॥ एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनात्मनः । इत्येवं भगवत्पक्षः श्रीद्भागवतामृते " ॥ ६ ॥ एवं निरूपितं स्वमतमुपसंहरंस्तदंगं निर्दिशति—एतन्मतमिति । एतन्मम मतं त्वं समातिष्ठ सम्यक् तत्र स्थिरो भव । तादृक्स्थित्यै तदंगमाह—परमेण समाधिनेति । समाधिशब्देनात्र योगः स च त्रिविधः कर्मयोगो भक्तियोगो ज्ञानयोगश्च । "योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया । ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योस्ति कर्हिचित्" इत्यादिवचनात् । युज्यते भगवत्स्वरूपे अनेनेति योग इति व्युत्पत्त्या सर्वापेक्षा हि विद्या यज्ञादिश्रुतेरश्ववदिति न्यायेन सर्वेषां तेषां विद्यांगतया योगत्वम् । तत्र कर्मयोगस्त्रिविधः तत्राद्यः—फलमनभिसंधाय स्ववर्णाश्रमविहितधर्मानुष्ठानरूपः "कर्मण्येवाधिकारस्ते मा फलेषु कदाचन । मा कर्मफलहेतुर्भूर्मा ते संगोऽस्त्वकर्मणि" इत्यादिवचनात् । द्वितीयः—सर्वकर्मणामीश्वरेऽर्पणं "यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणम् ॥ कायेन वाचा मनसेंद्रियैर्वा बुद्ध्यात्मना वानुसृतस्वभावात् । करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत् ॥ यदत्र क्रियते कर्म भगवत्परितोषणम् । ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम्" इत्यादिवचनात् । तृतीय—कर्तृत्वाद्यननुसंधायानुष्ठीयमानः "प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्वशः । अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥ तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः । गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते" ॥ इति वचनात् । सकामकर्मणस्तु स्वर्गादिफलपरत्वेन भगवत्स्वरूपे अयोजकत्वादेव वेदविहितकर्मत्वेपि न कर्मयोगत्वं "परोक्षवादो वेदोयं बालानामनुशासनम् । कर्म्ममोक्षाय कर्म्माणि विधत्ते ह्यगदं यथा" इति न्यायेन तद्वाक्यानां फलेन प्रलोभ्यवैदिकप्रवृत्त्या भगवत्पथसंमुखीकरणतात्पर्य्यवत्त्वे तु भवतु परंपरया संमुखीकारद्वारा कर्मयोगत्वं, भक्तियोगश्च द्विविधः पराऽपरभेदात् तत्र परा तु "सापरानुरक्तिरीश्वरे" इति भगवता शांडिल्येन सूत्रिता ईश्वरेयानुरक्तिः सा परा भक्तिस्तु फलरूपा "ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्" इत्यादिवचनान्न साधनत्वेन तस्याज्ञानोत्पत्त्यंगत्वं, द्वितिया नवधा "श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ॥ अर्चनं वंदनं दास्यं सख्यमात्मनिवेदनम्" इत्यादिवचनात् । सा तु निष्प्रत्यूहज्ञानसाधनं "वासुदेवे भगवति भक्तियोगः प्रयोजितः । जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम् ॥ पुरेह भूमन्बहवोपि योगिनस्त्वदर्पितेहा निजकर्मलब्धया । विबुद्ध्य भक्त्यैव कथोपनीतया प्रपेदिरेंऽजोऽच्युत ते गतिं पराम् ॥ भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनंतरम् ॥ यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः ॥ मद्भक्तिविमुखानां हि शास्त्रगर्तेषु मुह्यताम् । न ज्ञानं न च मोक्षः स्यात्तेषां जन्मशतैरपि" इत्यादिवचनात् । ज्ञानयोगोपि ज्ञानस्य बहिरंगांतरंगभावेन द्विविधो विवेकादिः श्रवणादिश्च । तत्राद्यश्चतुर्विधो नित्यानित्यवस्तुविवेको वैराग्यं शमादिषट्संपत्तिर्मुमुक्षुता च तत्रापि प्रथमं त्वात्मैव नित्यं तदितरत्सर्वमनित्यमिति "न जायते म्रियते वा विपश्चित्" अतोन्यदार्तं तद्यथेह "कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादिश्रुतेः । "नित्यमात्मस्वरूपं हि दृश्यं तद्विपरीतगम्" इति 'या निश्चिताबुद्धिर्विवेको वस्तुनः सवै' इत्याचार्योक्तेश्च । द्वितीयमैहिकामुष्मिकविषयविरागः "परीक्ष्य लोकान् कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" इत्यादिश्रुतेः "ब्रह्मादिस्थावरांतेषु वैराग्यं विषयेष्वनु । यथैव काकविष्ठायां वैराग्यं तद्धि निर्मलम्" इत्याचार्य्योक्तेश्च । शमादिसंपत्तु षोढा शमो दम उपरतिस्तितिक्षा श्रद्धा समाधानता च "शांतो दांतो उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्येत्" इति श्रुतेः । शाखांतरे 'श्रद्धान्वितोभूत्वा' इति पाठाच्च । तत्र श्रवणादीतरविषयेभ्यो मनो निरोधः शमः "सदैव वासनात्यागः शमोयमिति शब्दितः" इत्याचार्य्योक्तेः । बाह्येंद्रियाणामपि ततो निरोधो दमः 'निग्रहो बाह्यवृत्तीनां दम इत्यभिधीयते' इति तद्वचनात् । न च मनोनिग्रहेणैवालं किमिंद्रियनिग्रहेणेति वाच्यम् । "इंद्रियाणि प्रमाथीनि हरंति प्रसभं मनः । इंद्रियाणां हि चरतां यन्मनोऽनुविधीयते ॥ तदस्य हरति प्रज्ञां वायुर्नावमिवांभसि" इति भगवद्वचनात् । न च तर्हि दमेनैवालं "कर्मेंद्रियाणि संयम्य य आस्ते मनसा स्मरन् । इंद्रियार्थान्वि

मूढात्मा मिथ्याचारः स उच्यते''इतीश्वरोक्तेः ।निवर्तितानामिंद्रियमनसां श्रवणादीतरविषयेभ्यः स्वाभाविकापरमणमुपरतिः तदुक्तमाचार्य्यैः'विषयेभ्यः परावृत्तिः परमोपरतिर्हि सा' इति।परमेति परावृत्तेर्विशेषणं स्वभाविकीत्यर्थः।
केचिदुपरतिः संन्यास इत्याहुस्तस्य तु जनकादौ साक्षात्तदभावेपि बोधदर्शनाद्वर्णाश्रमधर्म्मादिवज्जन्मांतरीयस्यापि तस्य बोधेऽदृष्टद्वारोपकारकत्वसंभवाद्ब्राह्मणेतरेषु ''मुखजानामयं धर्मो यद्विष्णोर्लिंगधारणम् । बाहुजातोरुजातानां नायं धर्म्मः प्रशस्यते'' इत्यादिभिः तदनधिकारात्''अश्वमेधं गवालंभं संन्यासं पलपैतृकम् । देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत् ॥ चत्वार्य्यब्दसहस्राणि चत्वार्यब्दशतानि च । कलेर्यदा गमिष्यंति तदा त्रेतापरिग्रहः ॥ संन्यासश्च न कर्तव्यो ब्राह्मणेन विपश्चिता'' इत्यादिना सर्वकालिकत्वाभावाच्च । न ज्ञानांगचतुष्टयसाधनेष्वेवावश्यकांतर्भाव इत्यत्राचार्य्यैरुपेक्षितं ज्ञानसाधनप्रवृत्तौ प्रारब्धवशादागतदुःखैरनुद्वेगस्तितिक्षा 'सहनं सर्वदुःखानां तितिक्षा सा शुभा मता' इत्याचार्य्यवचनात् । गुरुवेदांतवाक्येषु विश्वासः श्रद्धा ''गुरुवेदांतवाक्येषु भक्तिः श्रद्धेतिविश्रुता''इत्याचार्य्योक्तेः । अनेनैव ''तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्'' इति श्रुतिसिद्धगुरुलक्षणं तदुपसदनं च सूचितं श्रोत्रियत्वञ्च याज्ञवल्क्यवाक्येन ब्राह्मण एव पर्यवसितमिति ध्येयं ''तद्विज्ञानार्थं स ब्राह्मणमेव गुरुमुपासीत''इति श्रुतेः 'जन्मना ब्राह्मणो गुरुः' इति श्रीनंदराजोक्तेर्ब्राह्मणाद्ब्राह्मण्युत्पन्नदेहस्यैव गुरुत्वं न ज्ञानवतः क्षत्रियादेरपीति तत्त्वम् । श्रवणादौ चित्तैकाग्र्यं समाधानता ''दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः'' इति श्रुतेः । 'सत्त्वात्संजायते ज्ञानम्' इति स्मृतेः । प्रमादादितमोधर्मस्थैर्यरजोधर्मचांचल्यरहितसूक्ष्मैकाग्रबुद्ध्यैव बोधसंभवात् । 'चित्तैकाग्र्यं तु संलक्ष्येत्समाधानमिति स्मृतम्'' इत्याचार्य्यवचनाच्च । प्रदीप्तशिरसो जलराशिं प्रति प्रवृत्तिवत्संसारदुःखतप्तस्य ततोऽनवरतमोक्षेच्छा मुमुक्षुता ''संसारबंधनिर्मुक्तिः कथं स्यान्मे कदा विधे ।इति या सुदृढा बुद्धिर्वक्तव्या सा मुमुक्षुता''॥ इत्याचार्य्यवचनात् । इति बहिरंगम्।द्वितीयस्तु--स्त्रिविधः श्रवणमनननिदिध्यासनभेदात् । ''आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यः'' इति श्रुतेः स श्रवणादिस्त्वंतरंगं श्रवणादेर्ज्ञानांगत्वेपि मिथोप्यंगांगित्वं तत्र सर्ववेदांतानां प्रत्यगभिन्नाद्वयब्रह्मणि तात्पर्यावधारणं श्रवणं कृत्यनधीनतया विध्यनर्हत्वादात्मदर्शनस्याहार्थकतव्यप्रत्ययेनात्मादर्शनार्हे इति साक्षात्तद्दर्शनमुद्दिश्य विधानात् वेदांतप्रमाणगोचरत्वाच्च । प्राधान्येन तस्य श्रवणस्यांगित्वं नानोपपत्तिभिस्तद्विचारात्मकमननस्य तत्प्रमेयगतासंभावना निरासकत्वात्तत्प्रमेयविषयकानवरतप्रत्ययप्रवाहात्मकनिदिध्यासनस्य च तत्प्रमेयगतविपरीतभावनानिरासकत्वात्तत्फलोपकार्य्यंगत्वं निदिध्यासनोपमर्द्याविपरीतभावना द्विविधा द्वैतप्रपंचस्य सत्यत्वरूपा तद्भानरूपा च । तत्र प्रथमा तु सादरनैरंतर्यकियत्कालाभ्यासेनापनीयते तदपनये एव जिज्ञासोर्विद्वद्व्यवहारः संशयविपर्य्ययाप्रतिबद्धज्ञानत्वात् । प्रपंचभानात्मकविपरीतभावनानिवृत्तौ तु तद्भानं विना भोगासंभवात्स्वफलभोगाय प्रारब्धं कर्म तत्प्रतिबध्नाति प्रारब्धकर्मणां विनश्यदवस्थायां तत्तद्क्षणे प्रयोजनाभावात्तत्प्रतिबंधक्षये निदिध्यासनोपकृततत्त्वज्ञानं सकारणलेशं तमपि भानाप्रयोजकं विपर्य्यासं निवर्त्तयति ''भूयश्चांते विश्वमायानिवृत्तिः'' इति श्रुतेः। तच्च निदिध्यासनं द्विविधं योगसाध्यं केवलं च विक्षिप्तचित्तानां चित्तदर्पोपशमपूर्वकत्वाभिमुख्याय योगसाध्यं हरिगुरुभक्त्या तत्कृपालवेन स्वत एव तत्त्वाभिमुखचित्तानां तु केवलं''तच्चिंतनं तत्कथनमन्योन्यं तत्प्रबोधनम् । एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः''। इत्यादिवचनात् । ''समाहितै कः करणैर्गुणात्मभिर्गुणो भवेन्मत्सुविविक्तधाम्नः । विक्षिप्यमाणैरुत किं नु दूषणं धनैरुपेतैर्विगतैरवेः किम्'' इत्यादिश्रीमद्भगवतोक्तेश्च । तदेतद्यावद्यत्रसाध्यं योगः समाधिरित्यादिशब्दाभिधेयं ततश्च स्वाभाविकं तु परमः समाधिः पराभक्तिरित्यादिशब्दाभिधेयं स्यात् ''देहाभिमाने गलिते विज्ञाते परमात्मनि । यत्रयत्र मनो याति तत्रतत्र समाधयः ॥ सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः । भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥'' इत्यादिवचनैः तत्र देहाभिमाने गलित इत्यत्र देहाभिमानशब्दो नामरूपमात्रोपलक्षणं प्रापंचिकनामरूपसत्यत्वभ्रमनिवृत्तौ परमात्मनि सर्वत्र सत्ताभानप्रियरूपेणानुगते सच्चिदानंदविग्रहे कृष्ण ब्रह्मणि विज्ञात इत्यर्थः। श्रीमद्भागवतवाक्येपि सर्वभूतेष्वात्मनो भगवद्भावं भूतानि भगवत्यात्मनीत्युक्त्या प्रपंचस्यात्मव्यतिरेकोक्त्या बाधेनात्मभगवच्छब्दयोर्मुख्यसामानाधिकरण्याच्च। प्रत्यगभेदेनाद्वैतमेव पर्य्यवसितं तथा चैवं विधेन परमेण समाधिनाऽऽतिष्ठत्सर्वस्यैतस्य''यस्यास्ति भक्तिर्भगवत्यकिंचना सर्वैर्गुणैस्तत्र समासते सुराः।हरावभक्तस्य कुतो महद्गुणा मनोरथेनासति धावतो बहिः॥'' इत्यादिवचनैः भगवद्भक्त्यधीनतया तस्याश्च''भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युतसत्समागमः । सत्संगमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जायते मतिः॥''इत्यादिना सत्संगाधीनतया ममापि साधूत्तमतया मत्संगलब्धया भक्त्यैवातिष्ठ । तत्फलमाह--भवानिति । तत्र स्थित्या भवान् कल्पविकल्पेषु कल्पस्य विविधसर्गेष्वपि मदैकात्मदृष्ट्या कर्हिचिन्न विमुह्यति तत्र ''को मोहः कः शोकः एकत्वमनुपश्यतः'' इति श्रुतेः । ''नारायणपरा राजन्न कुतश्चन बिभ्यति । ' स्वर्गापवर्गनिरयेष्वपि

अंतर्हितेंद्रियार्थाय हरये विहितांजलिः ॥ सर्वभूतमयो विश्वं ससर्जेदं स पूर्ववत् ॥ ३८ ॥ प्रजापतिर्धर्मपतिरेकदा नियमान्यमान् ॥ भद्रं प्रजानामन्विच्छन्नातिष्ठत्स्वार्थकाम्यया ॥ ३९ ॥ तं नारदः प्रियतमो रिक्थादानामनुव्रतः ॥ शुश्रूषमाणः शीलेन प्रश्रयेण दमेन च ॥ ४० ॥ मायां विविदिषन्विष्णोर्मायेशस्य महामुनिः ॥ महाभागवतो राजन्पितरं पर्यतोषयत् ॥ ४१ ॥ तुष्टं निशाम्य पितरं लोकानां प्रपितामहम् ॥ देवर्षिः परिपप्रच्छ भवान्यन्माऽनुपृच्छति ॥ ४२ ॥ तस्मा इदं भागवतं पुराणं दशलक्षणम् ॥ प्रोक्तं भगवता प्राह प्रीतः पुत्राय भूतकृत् ॥ ४३ ॥

अंतर्हितं इंद्रियार्थः प्रत्यक्षरूपं येन तस्मै । बद्धांजलिः सन् ॥ ३८ ॥ तदनंतरं पूर्वोक्तो ब्रह्मनारदसंवादः प्रवृत्त इत्याह प्रजापतिरिति पंचभिः । प्रजानां भद्रमन्विच्छन् विमृशन् सैव स्वार्थे काम्या स्वप्रयोजनेच्छा तया यमनियमानन्वतिष्ठत् ॥ ३९ ॥ रिक्थादानां पुत्राणां मध्ये प्रियतमस्तं पितरं सेवमानः शीलादिना परितोषयामासेत्युत्तरेणान्वयः ॥ ४० ॥ किमिच्छन् । विष्णोर्मायां विविदिषन् ॥ ४१ ॥ निशाम्य दृष्ट्वा ज्ञात्वेत्यर्थः । मा माम् ॥ ४२ ॥ भगवता चतुः श्लोक्या संक्षेपेण प्रोक्तं विस्त

तुल्यार्थदर्शिनः ॥'' इत्यादिवचनैर्निरयादिष्वपि नामरूपभेददृष्टेरेव दुःखमयहेतुतया तदपबाध्यः स्वर्गापवर्गनिरयेष्वपि तुल्योर्थः सत्ताभानाद्यात्मकनारायणस्वरूपं तद्दर्शिनोऽत एव नारायणपरास्तथा च ''द्वितीयाद्वै भयं भवति''।''भयं द्वितीयाभिनिवेशतः स्यात्'' इत्यादिश्रुतिस्मृतिवर्णितप्रत्यक्षानुभूतभयहेतुद्वितीयाभावान्न बिभेतीति भावः। ''यावत्स्याद्गुणवैषम्यं तावन्नानात्वमात्मनः । नानात्वमात्मनो यावदस्वातंत्र्यं तदैव हि ॥ यावदस्यास्वतंत्रत्वं तावदीश्वरतो भयम् । य एतत्समुपासीरंस्ते मुह्यंति शुचार्पिताः ॥'' इत्यादिभिश्च गुणवैषम्यनिमित्तनानात्वभाने एव भयशोकमोहनिर्देशात् ॥ ''भक्तिज्ञानोपदेशेन ब्रह्माणं विश्वमेव च ॥ योऽमूमुचद्धारिः स्वात्मा तं वंदे स्वात्मनो गुरुम् ॥ हृत्स्थो व्याख्यातवाञ्छ्रीशो मन्मुखात्स्वमुखोद्भवम् । वेदांबुध्यमृतं स्वेष्टं तं स्वात्मानं गुरुं भजे ७ ॥ ३६ ॥ जन्मनो रूपं न्यरुणत् अनेन वैकुंठस्याप्यात्मरूपत्वमेवांगीकृतमिति । अत्र संदर्भः तदेवं श्रीमद्भागवतं संक्षेपेणोपदेक्ष्यंतं श्रीनारदं ब्रह्मापि तथैव संकल्पं कारितवान् 'यथा हरौ भगवति नृणां भक्तिर्भविष्यति' इत्यादि श्रीनारदेनापि 'अथो महाभाग भवानमोघदृक्' इत्यादिना तन्महापुराणविभर्वावार्थं तथैवोपदिष्टम् ॥ ३७ ॥ अंतर्हितः स्वभक्तचक्षुरादीनामर्थः परमपुरुषार्थः स्वसौंदर्य्यसौस्वर्य्यसौरभ्यादिको येन तस्मै स ब्रह्मा पूर्ववत् पूर्वपूर्वस्मिन्व्यतीते कल्प इत्यर्थः । तेन ब्रह्मणः स्वकन्याभिगमरूपो मोहः पूर्वकल्पे तत्रैवाभूत् न तु चतुःश्लोकीभागवतोपदेशानंतरमपि 'भवान्कल्पविकल्पेषु न विमुह्यति' इति भगवदुक्तेः । यत्तु कृष्णावतारे ब्रह्ममोहनं तत् भगवत्कृपाविलसितमेवं ज्ञेयम् ॥ ३८ ॥ तदनंतरं च ब्रह्मनारदसंवादः प्रवृत्त इत्याह पंचभिः । यमनियमानातिष्ठत्स्वाचरणेन शिक्षयन् मत्प्रजा यमनियमानातिष्ठंत्वित्येव स्वार्थकाम्या तया ॥ ३९ ॥ रिक्थं धनं पैतृकं दायप्राप्तत्वेनाददत् इति रिक्थादाः पुत्रास्तेषां मध्ये प्रियतम इति कर्मयोगज्ञानयोगभक्तियोगानां पैतृकधनानां मध्ये दक्षादयः कर्मयोगमापुः, सनकादयो ज्ञानं, नारदो भक्तिं प्रापेति नारदस्योत्कर्षात् । अनुव्रतः पितृभक्तः ॥ ४० ॥ मायां बहिरंगशक्तिं कृपां वा तस्या वैचित्र्यं ज्ञातुमिच्छन्नित्यर्थः । मायेशस्य मायाभर्तुः मायया कृपया ईष्टे सर्वं वशी करोतीति मायेशस्तस्येति वा ॥ ४१ ॥ ''शाम्यतिर्दर्शने मित्र'' इति ह्रस्वाभावः । पिता कश्यपः पितामहो मरीचिः प्रपितामहो ब्रह्मेति विवेकः ॥ ४२ ॥ इदं बुद्धिस्थं भगवदुपदिष्टं दशलक्षणमिति जन्माद्यस्येतिवच्चतुःश्लोक्यामपि तत्तदंतर्भावयितुं शक्यत्वात् । तच्च यथा कथंचित्प्रदर्शितमपि न च पूर्णमिदमुपदिदेशेति व्याख्येयं 'त्वमेतद्विपुलीकुरु' इति ब्रह्मणः प्रागुक्तिविरोधात् । केचित्तु प्रथमं संक्षेपेण चतुःश्लोक्या प्रोच्य पुनर्दशलक्षणं द्वादशस्कंधात्मकं सपूर्णमेव भगवता प्रोक्तमित्याहुः । भूतानि चराचराणि करोत्युत्पादयति भगवत्सत्तयेति भूतकृद्ब्रह्मा ॥ ४३ ॥

नारदः प्राह मुनये सरस्वत्यास्तटे नृप ॥ ध्यायते ब्रह्म परमं व्यासायामिततेजसे ॥ ४४ ॥ यदुताहं त्वया पृष्टो वैराज्यात्पुरुशादिदम् ॥ यथाऽऽसी त्तदुपाख्यास्ये प्रश्नानन्यांश्च कृत्स्नशः ॥ ४६ ॥ इति श्रीभागवते म० द्वितीयस्कंधे नवमोऽध्यायः ॥ ९ ॥ श्रीशुक उवाच ॥ अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः ॥ मन्वंतरेशानुकथा निरोधो मुक्तिराश्रयः ॥ १ ॥ दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम् ॥ वर्णयंति महात्मानः श्रुते नार्थेन चांजसा ॥ २ ॥ भूतमात्रेंद्रियधियां जन्म सर्ग उदाहृतः ॥ ब्रह्मणो गुणवैषम्याद्विसर्गः पौरुषः स्मृतः ॥ ३ ॥ स्थितिर्वैकुंठविजयः पोषणं तदनुग्रहः ॥ मन्वंतराणि सद्धर्म ऊतयः कर्मवासनाः ॥ ४ ॥

रेण प्राह । दश लक्षणानि लक्षणीया अर्था विद्यंते यस्मिंस्तत् ॥ ४३ ॥ तत्संप्रदायतो भागवतं मया ज्ञातमित्याशयेनाह । नारद इति ॥ ४४ ॥ भागवतव्याख्यानेनैव त्वत्प्रश्नानामुत्तरं दास्यामीत्याह । यदुतेति । 'पुरुषावयवैर्लोकाः सपालाः पूर्वकल्पिताः' इत्यादिना वैराजात्पुरुषादिदं विश्वं कथमासीदिति यदहं त्वया पृष्टस्तद्यथावदुपा ख्यास्यामि शृण्विति ॥ ४५ ॥ इति श्रीभा० म० द्विती० टी० नवमोऽध्यायः ॥ ९ ॥ छ ॥ ततो भागवतव्याख्याद्वारैव दशमे स्फुटम् ॥ राजप्रश्नोत्तरं वक्तुमारेभे बाद रायणिः ॥ १ ॥ दशलक्षणं पुराणं प्राहेत्युक्तं तानि दश लक्षणानि दर्शयति । अत्रेति । मन्वंतराणि ईशानुकथाश्चेति द्वंद्वः । सर्गादयोऽत्र दशार्था लक्ष्यंते ॥ १ ॥ नेन्ववमर्थभेदाच्छास्त्रभेदः स्यात्तत्राह । दशमस्याश्रयस्य विशुद्ध्यर्थं तत्त्वज्ञानार्थं नवानां लक्षणं स्वरूपम् । एकस्यैव प्राधान्यान्नायं दोष इत्यर्थः ।नन्वत्र नैवं प्रतीयतेऽत आह। श्रुतेन श्रुत्यैव स्तुत्यादिस्थानेष्वंजसा साक्षाद्वर्णयंति । अर्थेन तात्पर्यवृत्त्या च तत्तदाख्यानेषु ॥ २ ॥ सर्गादीनां प्रत्येकं लक्षणमाह । भूतान्याकाशादीनि मात्राणि च शब्दादीनि इंद्रियाणि च धीशब्देन महदहंकारौ गुणानां वैषम्यात्परिणामाद्ब्रह्मणः परमेश्वरात्कर्तुर्भूतादीनां यद्विराड्रूपेण स्वरूपतश्च जन्म स सर्गः । विसर्गमाह । पुरुषो वैराजस्तत्कृतः पौरुषश्चराचरसर्गो विसर्ग इत्यर्थः ॥ ३ ॥ वैकुंठस्य भगवतो विजयः सृष्टानां तत्तन्मर्यादापालनेनोत्कर्षः स्थितिः स्थानम् । स्वभक्तेषु तस्यानुग्रहः पोष

एवं नारायणो ब्रह्मणे ब्रह्मा नारदाय नारदो व्यासाय व्यासो मह्यमहं तुभ्यमाख्यास्ये इति षट्संवादीया भागवतीया कथा प्रसिद्धेति नारदः प्राहेति च समाधिनानुस्मर तद्विचेष्टितमित्यनेनैवोपादिदेशेत्यर्थः । तेन ब्रह्महृदेतिवत् ब्रह्मपरमंनिर्विशेषरूपं ध्यायते इत्यनेन ततोत्युत्कृष्टता श्रीमद्भागवतस्य द्योतिता ॥ ४४ ॥ इति श्रीभागवतभावार्थदीपिकाप्रकाशे द्वितीयस्कन्धे नवमोऽध्यायः ॥ ९ ॥ ततो राजप्रश्नानंतरम् ( १ ) अत्र श्रीमद्भागवते ॥ १ ॥ अत्राक्षिपति—नन्विति । विशुद्धिवस्त्वंतरेणामिश्रितत्वं तदर्थं तत्त्वज्ञानार्थमित्यर्थः । वस्त्वंतरं चात्र सर्गादिनवकपरमेश्वरहेतुकं जीवगतमेव जीवस्यैव सृज्यत्वपाल्यत्वसंहार्यत्वदर्शनात् ॥ इत्यर्थ इति । अत एकस्यैव आश्रमस्य शास्त्रविषयत्वान्नायं दोष इति भावः । महात्मानो मैत्रेयादयः ॥२॥ पुरुषो ब्रह्मा तत्कृतश्चराचरसर्ग इति वा जीवानां यथायोगं भक्तिमुक्तिभुक्तिसाधनबुद्धींद्रियादिप्राप्तिस्तया सृष्टिरुक्ता ॥३ ॥ यतो वैकुंठस्य भगवतो विजयः सृष्टिकर्तुर्ब्रह्मणः संहर्तूरुद्राच्चोत्कर्षः । यद्वा । वैकुंठो हरिस्तत्कर्तृको जीवदुःखाभिभवः जयतेरभिभवार्थकत्वात् । एवं सृष्ट्यनंतरं स्थितिरुक्ता स्थितावेव केषुचित्साधकभक्तेषु दैवाद्विकर्मप रेष्वपि तस्यानुग्रहः पोषणं धर्मस्तत्तचारिते व्यक्त इति स्थितावेव केषांचित्कर्मिणां सात्त्विकजीवानामाचरणीयो धर्म उक्तः। धातूनामनेकार्थत्वमपेक्ष्याह—यद्वेति। यत्तु काचिदवतीरिति पाठस्तन्न सुष्ठु प्रतिभाति । तस्य संप्रसारण

अवतारानुचरितं हरेश्चास्यानुवर्तिनाम् ॥ पुंसामीशकथाः प्रोक्ता नानाख्यानोपबृंहिताः ॥ ५ ॥ निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः ॥ मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः ॥ ६ ॥ आभासश्च निरोधश्च यतश्चाऽध्यवसीयते ॥ स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते॥७॥ योऽध्यात्मिकोऽयं पुरुषः सोऽसावेवाधिदैविकः ॥ यस्तत्रोभयविच्छेदः पुरुषो ह्याधिभौतिकः ॥ ८ ॥

णम् । तदनुगृहीतानां सतां मन्वंतराधिपतीनां धर्मः सद्धर्मः कर्मणां वासनाः । वेञ् तंतुसंताने । ऊयंते कर्मभिः संतन्यंत इत्यूतयः । यद्वा । वृद्ध्यर्थात्संश्लेषार्थाद्वाऽवतेर्धातोरिदं रूपम् । ऊयंते कर्मभिर्बृंह्यंते संश्लिष्यंत इति वा ऊतय इत्यर्थः ॥ ४ ॥ हरेरवतारानुचरितमस्य हरेरनुवर्तिनां च सत्कथा ईशानुकथाः प्रोक्ता इत्यर्थः ॥ ५ ॥ निरोधमाह । अस्यात्मनो जीवस्य हरेर्योगनिद्रामनु पश्चाच्छंक्तिभिश्चोपाधिभिः सह शयनं लयो निरोधः अन्यथारूपमविद्ययाऽध्यस्तं कर्तृत्वादि हित्वा स्वरूपेण ब्रह्मतया व्यवस्थितिर्मुक्तिः ॥ ६ ॥ आभासः सृष्टिः निरोधो लयश्च यतो भवत्यध्यवसीयते प्रकाशते च स परं ब्रह्मेति परमात्मेति प्रसिद्धः आश्रयः कथ्यते ॥७॥ आश्रयस्वरूपमपरोक्षानुभावेन स्पष्टं दर्शयितुमध्यात्मादिविभागमाह । योऽयमाध्यात्मिकः पुरुषश्चक्षुरादिकरणाभिमानी द्रष्टा जीवः स एवाधिदैविकश्चक्षुराद्यधिष्ठाता सूर्यादिः तत्रैकस्मिन्नेवोभयो

भावाद्यकि प्रत्यये ऊयंत इति न साधुः । किंत्वव्यंत इति साधुः । अतो वृद्ध्यर्थात्संश्लेषार्थाद्वा वयत इत्येव पाठः प्रशस्तः । इत्यर्थ इति। प्राकृताप्राकृतकर्मोत्था वासनाः शुभा अशुभाश्च भाविनां सुकृतदुष्कृतानां कारणभूताः स्थितावेवोत्कृष्टापकृष्टजीवानां स्वभाव उक्त इति भावः ॥ ४ ॥ इत्यर्थ इति । स्थितावेवास्यानुवर्त्तिनामवतारपरिकररूपाणां भक्तानां च चारितम् । ईशकथास्तासां श्रवणीयत्वकीर्त्तनीयत्वादिभ्यः । केषाञ्चित्साधकभक्तानां श्रवणकीर्त्तनादीनि भक्त्यंगान्युक्तानि ॥ ५ ॥ ६ ॥ सर्गादीन्नवार्थानुक्त्वा दशममाश्रयमाह—आभास इति । चास्थितिपोषणादयः द्वितीयचान्मुक्तिश्च यतोऽध्यवसीयते निश्चीयते स आश्रयो भगवान्नारायण एव तस्मादेव सृष्ट्यादिदर्शनात्तस्यैवोपासकभेदेन संज्ञांतरमाह—परमिति । अस्य विवृतिरग्रे विधेया तथाहि-अत्र दशार्थाः प्रथमस्कन्धानुक्रमेण निरूप्यंते यथा सामान्यतो लक्षितमप्याश्रयत्वं श्रीकृष्ण एव तु वैशिष्ट्यं तदर्थमेव द्व्यखंड श्रीभागवतप्रकाशः अत्र प्रथमस्कंधे श्रीशौनकसूतयोः प्रश्नोत्तरे तत्परत्वेनैव प्रतिपादिते तदनुगतावेव प्रथमद्वितीयाध्यायौ तृतीयाध्यायस्तु स्फुट एव पुनर्विशेषतस्तत्प्रस्तावाय चतुर्थाद्यध्यायाः । अत्र तदेकपरयोः श्रीशुकपरीक्षितोः संवादघटना अतो द्वितीयस्कंधे च सामान्यतो भगवत्तत्त्वं प्रशंसन्नपि तत्रैव तात्पर्यं वहति यत्र ब्रह्मगश्चतुश्श्लोकीवक्तृश्रीभगवतश्च तात्पर्यं तत्रैव दर्शितं ब्रह्मकल्पकथारंभस्तु तदर्थ एव तृतीये पाद्मकल्पकथा च गतस्य पूर्वपरार्द्धस्याद्यंतवर्णने मध्यमानामपि कल्पानां तदनुसारेण ज्ञाने सति दशमैकादशयोः प्रस्ताव्यायास्तत्कथायाः सम्यगवगमात् । एवमेव गते स्वायंभुवचाक्षुषमन्वंतरेऽपि तृतीयचतुर्थपञ्चमषष्ठसप्तमेषु निरूपितेऽष्टमे प्राचीनमिश्रवैवस्वतं नवमस्तु तत्प्रादुर्भावास्पदकेवलवैवस्वतान्वय एव द्वादशः खलु समाधिमुद्रामयः तत्रतत्र तत्तदन्यकथा तु तत्पोषिकैव विशेषतस्तत्तदवतारकथेति । तस्मात्सर्गादीनां मध्ये क्वाचिदेकद्वारा क्वचिदनेकद्वारा य आश्रयो निरूप्यते स तु दशमादावीशानुकथाप्रधानतत्तद्वारा सर्वत उत्कृष्य श्रीकृष्णरूपो निरूप्यते इति स्थितम् ॥ ७ ॥ तत्रेत्यस्य विवरणमेकस्मिन्निति । तैत्तिरीयश्रुतौ देहेपि पुरुषपदप्रयोगो दृश्यते तथा हि "स वा" इत्यादिस्पष्टार्था श्रुतिः । अत्र संदर्भः । अथ स्वयं भगवल्लक्षणपरमरूपं तदेवाश्रयं स्तोतुं स्थितौ च तत्राश्रयस्वरूपमपरोक्षानुभवेन व्यष्टिद्वारा दर्शयितुं तदंशभूतस्य पुरुषस्य वैभवं तादृशत्वेन दर्शयन्नध्यात्मादिविभागमाह । देहसृष्टेः पूर्वं करणानामधिष्ठानाभावेनाक्षमतया करणप्रकाशकर्तृत्वाभिमानितत्सहाययोरपि तयोर्वृत्तिभेदानुदयेन जीवत्वमात्राविशेषात् । ततश्चोभयः करणाभिमानितदधिष्ठातृरूपद्विरूपो विच्छेदो यस्मादिति सर्वमन्यत्स्वामिवत् । चक्रवर्त्तिनात्वस्यावतरणिका प्रकारांतरेणोक्ता तथाहि अथ 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इत्युक्तेः प्रतिदेहमेवांतर्यामिरूपेण स्थितं तदेवाश्रयरूपमध्यात्मादिभ्यो विभागेन स्पष्टं दर्शयितुमाह द्वाभ्याम् ।

एकमेकतराभावे यदा नोपलभामहे ॥ त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः ॥ ९ ॥
पुरुषोऽण्डं विनिर्भिद्य यदासौ स विनिर्गतः ॥ आत्मनोऽयनमन्विच्छन्नपोऽस्राक्षीच्छुचिः शुचीः ॥ १० ॥

द्विरूपो विच्छेदो यस्मात्स आधिभौतिकश्चक्षुर्गोलकाद्युपलक्षितो दृश्यो देहः पुरुष इति पुरुषस्य जीवस्योपाधिः । " स वा एष पुरुषोऽन्नरसमयः " इत्यादिश्रुतेः ॥८॥ एक मेकतराभाव इत्येतेषामन्योऽन्यसापेक्षसिद्धित्वे नानात्मत्वं दर्शयति । तथाहि । दृश्यं विना तत्प्रतीत्यनुमेयं करणं न सिद्ध्यति नापि द्रष्टा नच तद्विना करणप्रवृत्त्यनुमेयस्तद धिष्ठाता सूर्यादिः न च तं विना करणं प्रवर्तते न च तद्विना दृश्यमित्येवमेकतरस्याभावे एकं नोपलभामहे तत्र तदा तत्रितयमालोचनात्मकेन प्रत्ययेन यो वेद साक्षितया पश्यति स परमात्मा आश्रयः तेषामपि परस्पराश्रयत्वमस्त्येवेति तद्यवच्छेदार्थं विशेषणम् । स्वाश्रयोऽनन्याश्रयः स चासावन्येषामाश्रयश्चेति । तथा च भगवान् वक्ष्यति । "दृग्रूपमार्कं वपुरत्र रंध्रे परस्परं सिद्ध्यति यः स्वतः खे ॥ आत्मा यदेषामपरो य आद्यः स्वयाऽनुभूत्याऽखिलसिद्धसिद्धिः" ॥ इति । एतेनैव व्यभिचारित्वात्तेषां मायामयत्वम प्युक्तम् । अत एव । "पुरुषावयवैर्लोकाः सपालाः पूर्वकल्पिताः ॥ लोकैरमुष्यावयवाः सपालैः" इत्यनेनोक्तो विरोधोऽपि परिहृतः ॥ ९ ॥ उक्तमेवाध्यात्मादिविभागं प्रपं चयन् "यदुताहं त्वया पृष्टो वैराजात्पुरुषादिदम् ॥ यथासीत्तदुपाख्यास्ये " इति यत्प्रतिज्ञातं तदुत्पत्तिप्रकारमाह पुरुष इत्यादिना । पुरुषो वैराजोऽण्डं विनिर्भिद्य पृथक्कृत्य

उभयो गोलकरूपः शब्दस्पर्शादिरूपश्च विच्छेदो यस्य सः पुरुषस्य जीवस्योपाधित्वात्सर्वत्र पुरुषपदप्रयोग इति विशेषः ॥ ८ ॥ एतेनैव श्लोकेन तेषामध्यात्मादीनां परस्परं व्यभिचारवत्त्वात् । अत एव मायामयत्वादेव विरोधो हि परमार्थयोस्तेजस्तिमिरयोरिव भवति न तु वंध्यात्मजशशशृंगयोरपरमार्थयोरपीति । अत्र संदर्भः । अत्रांशांशिनो शुद्धजीवपरमात्मनोरभेदांशस्वीकारेणैवाश्रय उक्तः अतः "परोपि मनुतेऽनर्थम् " इति । "जाग्रत्स्व प्रसुषुप्तञ्च गुणतो बुद्धिवृत्तयः । तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः" इति। शुद्धो विचष्टे ह्यविशुद्धकर्तुः" इत्याद्युक्तस्य साक्षिसंज्ञिनः शुद्धजीवस्याश्रयत्वं नाशंकनीयम् । अथ वा नन्वाध्यात्मिकादीनामन्याश्रयत्व मस्त्येव । सत्यम् तथापि परस्पराश्रयित्वान्न तत्राश्रयता कैवल्यमिति । ते त्वाश्रयशब्देन मुख्यतया नोच्यंते इत्याह—एकमिति । तर्हि साक्षिण एवास्तामाश्रयत्वं तत्राह—त्रितयमिति । स आत्मना साक्षी जीवः यः स्वाश्रयोऽ नन्याश्रयः परमात्मा स एवाश्रयो यस्य स तथाभूत इति वक्ष्यते च" सर्वं पुमान्वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनंतमीडयम्"इति तस्मादाभास इत्यादिनोक्तः।परमात्मैवाश्रय इति सर्वमेतत्त्रितयं पुमाञ्जीवो वेदेति तत्रार्थः । तथा चाध्यात्मादीनां परस्पराश्रयाणां जीव आश्रयः परमात्माश्रयः परमात्मनश्च परमात्मैवाश्रय इत्याश्रवत्त्वं परमात्मैव तथा "विष्टभ्याहमिदं कृत्स्नम्" इत्याद्युक्तेः स्वः कृष्ण एवाश्रयो यस्य स परमात्मेति व्याख्याने श्रीकृष्णस्य मुख्यमाश्रयत्वं तदंशत्वात्परमात्मनश्च निर्विशेषस्वरूपत्वाद्ब्रह्मणश्चेत्येकमाश्रयतत्त्वमुपासकस्य भेदात्त्रिधा भासत इति ॥ ९ ॥ इत्यर्थ इति । पृथक्स्थितिरेव निर्गमपदार्थ इति भावः । अत्र विश्वनाथः—एवं दश भिर्महापुराणलक्षणैर्जीवेश्वरविभागं निरूप्य जीवानामीश्वरभक्त्यैव निस्तारमभिव्यंज्य "यदुताहं त्वया दृष्टो वैराजात्पुरुषादिदम् । यथासीत्तदुपाख्यास्ये" इति प्रतिज्ञातमर्थं वक्तुं कथां प्रस्तौति—पुरुषोंडामिति । ननु कथं मुहुरपि वैराजस्याध्यात्मादिकथैव प्रपंच्यते । भगवतोऽतिमधुरलीलावताररूपगुणादिकथाः किमल्पांयस्यो दृष्टाः सत्यंताः कथा आस्वादनीयत्वेन केषु खलूपदेष्टव्याः ये तद्भक्तिसिद्धा नित्यसिद्धा वा महानुभावास्ते तत्सौंदर्यामृतसिंधौ स्वत एवाविरामं खेलंत्येव । ये पुनरन्ये विषयानंदतल्पे निद्रांति ये च कुकर्मफलदुःखतरंगे मूर्च्छंति ते ततः प्रबोधयितुमेवाशक्याः कथं भगवल्लीला उपदेश्यंतां यदुपदेशादेव ते साधकभक्ता भवेयुरिति महाकारुणिकः पुराणचूडामणिरयं ताः स्वतः प्रबोधयितुं भंग्या किमपि मुहुरपि यतते स्म । तत्र यथा वह्निना तप्तमंगं वह्निनैवोपशाम्यति यथा च भूताविष्टो भूतमंत्रेणैव प्रबुध्यते तथैव

तास्ववात्सीत्स्वसृष्टासु सहस्रपरिवत्सरान्॥ तेन नारायणो नाम यदापः पुरुषोद्भवाः ॥ ११ ॥ द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ॥ यदनुग्रहतः संति न संति यदुपेक्षया ॥ १२ ॥ एको नानात्वमन्विच्छन्योगतल्पात्समुत्थितः ॥ वीर्यं हिरण्मयं देवो मायया व्यसृजत्त्रिधा ॥ १३ ॥ अधिदैवमथाध्यात्ममधिभूतमिति प्रभुः ॥ यथैकं पौरुषं वीर्यं त्रिधाऽभिद्यत तच्छृणु ॥ १४ ॥

विनिर्गतः पृथक् स्थित इत्यर्थः । अयनं स्थानमन्विच्छन् विमृशन् यतः शुचिः स्वयमतः शुचीः शुद्धाः अपो गर्भोदकसंज्ञा असाक्षीत्ससर्ज ॥ १० ॥ अप्सु वासं नारायणनामनिरुक्त्या स्पष्टयति । तेन अप्सु वासेन यद्यस्मात् पुरुषो नरस्तस्मादुद्भवो यासां ता नारा आपोऽयनमस्येति नारायण इत्यर्थः । तदुक्तम् । " आपो नारा इति प्रोक्ता आपो वै नरसूनवः ॥ अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥ " इति ॥ ११ ॥ तस्य प्रभावमाह । द्रव्यमुपादानम् । कर्मादीनि निमित्तानि जीवो भोक्ता यस्यानुग्रहात्संति कार्यक्षमा भवंतीत्यर्थः ॥ १२ ॥ योग एव तल्पं शय्या तस्मात् वीर्यं गर्भरूपं देहं हिरण्मयमिव प्रकाशबहुलम्॥ १३ ॥तस्यैव प्रपंचः यथेत्यादिना ॥ १४ ॥

जीवानां मायानिद्रावेशो मायाकथयैवापयाति यदुक्तं "मायां वर्णयतो मुष्य ईश्वरस्यानुमोदतः । शृण्वतः श्रद्धया नित्यं माययात्मा न मुह्यति" इति । किंच । यद्यपि भागवतकृपालब्धभगवल्लीलामृतवृष्ट्यैव मायासुखनिद्राणोपि कर्मदुःखमूर्च्छितोपि जागर्ति अस्यति जीवति नृत्यत्यानंदेन माद्यति च तदपि तादृशमहत्कृपा यैरलभ्यते तैरेव कृतार्थी भूयते न तु सर्वैरेवातोध्यात्मकथयां मुहुः श्रुतया लब्धसंसारतितीर्षाणां गुरुपादाश्रयेण प्रोद्भूतयत्नानां निकृष्टजीवानामपि निस्तारो भवत्वित्येतदर्थमेवाध्यात्मकथापौनःपुन्यं भगवद्भक्तानामास्तिक्यवतां तु सर्वमेव श्रीभागवतममृतमिवास्वाद्यमेव । अपि च । शास्त्रस्यास्य न केवलं भगवंतमेवाधिकृत्य प्रवृत्तिरपि तु तन्निर्विशेषस्वरूपतदंशभूतौ ब्रह्मपरमात्मानावपि । तदुक्तं शास्त्रारंभे एव " ब्रह्मेति परमात्मेति भगवानिति शब्द्यते." इति । ब्रह्मपरमात्मोपासकानामध्यात्मादिकथाभ्यास उपयुक्त एव किंच शास्त्रस्यास्य महिम्ना ब्रह्मपरमात्मोपासकानामपि भक्तिप्रवर्त्तितत्वात् । अतः फलदशायामपि 'आत्मारामाश्च मुनयः' इत्यादेः प्रायो भक्तिरेव वरीवर्त्तीति तेन तत्साधनं तत्फलं च शुद्धभक्तैरपि न कटाक्षणीयमपि त्वनुमोदनीयमेव।तस्माद्यथा ब्रह्मत्वपरमात्मत्वमत्स्यकूर्माद्यनेकावतारत्वधर्मज्ञानबलैश्वर्यरूपगुणलीलामाधुर्यपरिपूर्णः श्रीकृष्णःसर्वविधभक्तैरेव परिचर्यते। एवमेव ब्रह्मत्वपरमात्मत्वमत्स्यकूर्माद्यवतारावतारितत्तत्सर्वमूलभूतश्रीकृष्णतदीयरूपगुणलीलामाधुर्यैश्वर्यतत्प्राप्तिसाधनभक्तिप्रेमधर्मज्ञानयोगवैराग्याद्याखिलतत्त्वप्रदर्शको ग्रंथोऽयमपि स्वरूपभूत इति सर्वं समंजसम् । संदर्भः । अथ स्वयं भगवल्लक्षणपरमरूपं तदेवाश्रयं स्थातुं तदंशभूतस्य पुरुषस्य वैभवं तादृशत्वेन दर्शयति यदासौ विनिर्गत 'आद्योऽवतारः पुरुषः परस्य' इत्युक्तरीत्या श्रीभगवत आविर्भूतस्तदा त्वंडमात्मनि लीनं तत्समूहं विनिर्भिद्यात्मनः पृथक्कर्तुमारभ्येत्यर्थः । अथवांडं निजाविर्भावस्थानं श्रीभगवंतं विनिर्भिद्य ततः पृथग्भूत्वा विनिर्गतः अपस्तत्पर्यतानि तत्त्वानीत्यर्थः । पृथिव्यपि तदंतर्भूतत्वेन ज्ञेयेत्याह ॥१०॥ इत्यर्थ इति । नारेषु स्थितत्वान्नारायण इति भावः । अत्र प्रमाणमाह–तदुक्तमिति।नरस्य भगवतः सूनवः पुत्राः ता आपः पूर्वं प्रलये यतोऽयनं वासस्थानं तेन हेतुनेति स्मृत्यर्थः ॥ ११ ॥ तस्य समष्टिविराडंतर्यामिनः उपादानं पृथिव्यादि जीवो हिरण्यगर्भः अनुग्रहादन्वयात् । इत्यर्थ इति । न हि परमात्मानं विना जीवो वा तिष्ठेदिति भावः ॥ १२ ॥ समष्टिविराडेव कथमभूदित्यपेक्षायामाह–एकः प्रलये स्वांशाज्जीवानात्मनि विलाप्यैकत्वेन स्थितः अनु अनंतरं सृष्टिकाले "एकोहं बहुस्याम्" इति श्रुतेर्नानात्वमिच्छंस्तानेव जीवानात्मनः सकाशाद्विभक्तान् कुर्वन् योगः स्वमहिमस्थितिलक्षण एव तल्पं शय्या तस्मान्महाप्रलये रात्रिस्थानीये शयित्वा सृष्टिकाले प्रातरुत्थितः सन् देवो दीव्यन् पुरुषः मायया स्वशक्त्या महत्तत्त्वादीनि कारणानि सृष्ट्वा तैः कार्यभूतं वीर्यं हिरण्मयं कनकवर्णं प्रकाशबहुलं ब्रह्मांडं सावरणमसृजदिति महासमष्टिसृष्टिः ततश्च तेषामेव महत्तत्त्वादीनां किंचित्किंचिदंशैर्भगवच्छक्त्यैव परस्परं मिलितैः समष्टिविराट्पञ्चाशत्कोटियोजनपरिमितांडकटाहमध्यगः सृष्टोभूत्।तदैवादिपुरुषस्तदेवांडकटाहं प्रविश्य तदर्द्धं स्वसृष्टजलेनापूर्य्य तत्रस्थं समष्टिविराजं स्वजठरमध्यगतं कृत्वा सहस्रवर्षाणि तस्मिन् गर्भोद एव सुष्वाप।तदन्ते योगतल्पात्समुत्थितः सन् हिरण्मयं वीर्यं समष्टिविराजं त्रिधा व्यसृजत् ॥१३॥ त्रिधैव किं तत्राह–अधिदैवमित्यादि एष एव समष्टिस्तस्य नाभिद्वारात्कमलनालात्मको भविष्यति स एव पुनश्चतुर्दशलोकात्मको वैराजसंज्ञः स्थूलो भावी सूक्ष्मं तु हिरण्यगर्भः

अंतः शरीर आकाशात्पुरुषस्य विचेष्टतः ॥ ओजः सहो बलं जज्ञे ततः प्राणो महानसुः ॥ १५ ॥ अनुप्राणंति यं प्राणाः प्राणंतं सर्वजंतुषु ॥
अपानंतमपानंति नरदेवमिवानुगाः ॥ १६ ॥ प्राणेन क्षिपता क्षुत्तृडंतराजायते प्रभोः ॥ पिपासतो जक्षतश्च प्राङ्मुखं निरभिद्यत ॥ १७ ॥
मुखतस्तालु निर्भिन्नं जिह्वा तत्रोपजायते ॥ ततो नानारसो जज्ञे जिह्वया योऽधिगम्यते ॥ १८ ॥ विवक्षोर्मुखतो भूम्नो वह्निर्वाग्व्याहृतं तयोः ॥
जले वै तस्य सुचिरं निरोधः समजायत ॥ १९ ॥ नासिके निरभिद्येतां दोधूयति नभस्वति ॥ तत्र वायुर्गंधवहो घ्राणो नसि जिघृक्षतः ॥ २० ॥
यदात्मनि निरालोकमात्मानं च दिदृक्षतः ॥ निर्भिन्ने ह्यक्षिणी तस्य ज्योतिश्चक्षुर्गुणग्रहः ॥ २१ ॥ बोध्यमानस्य ऋषिभिरात्मनस्तज्जिघृक्षतः ॥
कर्णौ च निरभिद्येतां दिशः श्रोत्रं गुणग्रहः ॥ २२ ॥

अंतः शरीरे य आकाशस्तस्मात्क्रियाशक्त्या तत्र विविधं चेष्टमानस्य सत ओज इंद्रियशक्तिः सहो मनःशक्तिर्बलं देहशक्तिः ततः शक्त्यात्मकात्सूक्ष्माद्रूपात्प्राणः सूत्राख्यः महान् मुख्यः असुः प्राणः सर्वेषाम् ॥ १५ ॥ महत्त्वं दर्शयति । प्राणा इंद्रियाणि यं प्राणंतं चेष्टां कुर्वंतमनु पश्चात् प्राणंति चेष्टां कुर्वंति अपानं तं चेष्टां त्यजंतमनु अपानंति चेष्टां त्यजंति राजानमनु भृत्या इव ॥ १६ ॥ क्षिपता चालयता निमित्तेन क्षुत्तृडादिकं प्रभोरिति विराड्जीवाभेदेनोपासनार्थमुक्तं आजायते स्म ततो जक्षतः भक्षयितुमिच्छत इत्यर्थः । प्राक् प्रथमं निरभिद्यत विभक्तमभूत् ॥ १७ ॥ तात्वधिष्ठानं जिह्वेंद्रियं नानारसो विषयः वरुणश्च देवता ज्ञातव्या । एवं सर्वत्राधिष्ठानमिंद्रियं देवता विषय इत्येतच्चतुष्टयमनुक्तमप्यूह्यम् ॥ १८ ॥ विवक्षोर्वक्तुमिच्छोः मुखत एव वह्निर्देवता वाक् इंद्रियं व्याहृतं भाषणम् । तयोरितींद्रियदेवताधीनत्वं कर्मणो दर्शयति॥ १९॥ नभस्वति प्राणवायौ दोधूयति दोधूयमानेऽत्यंतं प्रचलति सति तत्र च नासिकायां वायुर्देवता गंधं वहतीति तथा । अनेन गंधो विषयो दर्शितः । घ्राण इंद्रियं जिघृक्षतः गंधं ग्रहीतुमिच्छतः ॥ २० ॥ निरालोकं प्रकाशशून्यमासीदिति शेषः । निर्मक्षिकमितिवदव्ययीभावः । तदा आत्मानं देहं चकारादन्यच्च वस्तु दिदृक्षतः अक्षिणी स्थानम् । ज्योतिरादित्यो देवता चक्षुरिंद्रियम् । ततो गुणस्य रूपस्य ग्रहो ग्रहणम् । अनेन रूपं विषयो दर्शितः ॥ २१ ॥ ऋषिभिर्वेदैर्बोध्यमानस्य तदात्मनः प्रबोधनं ग्रहीतुमिच्छतः

समष्टिजीवो वैराज एव विसर्गाद्यर्थं चतुर्मुखो भावीति ब्रह्मणस्त्रैविध्यम् । अथ प्रकृतमनुसरामः । अथ इति । आधिदैवादिकाद्युक्त्वा त्रिविधादन्यदिदं त्रिविधमित्यर्थः ॥१४॥ असुर्जीवनव्यंजकः ॥ १९ ॥ जीवनव्यंजकत्वेन महत्त्वं दर्शयति अन्विति ॥ १६॥ पिपासतो जक्षतश्चेत्यनेन सुप्ततद्वासनामात्रमुच्यते यदेव स्वभावरूपं स तत्तत्कार्यं संपादयतीत्येवमुत्तरत्रापि ज्ञेयम् । मुखमिति । व्यष्टिमुखमेव तन्मुखत्वेनोपादिश्यते तत्तत्समुदायकारणमात्ररूपत्वात्तन्मुखस्य एवमुत्तरत्रापि एकत्वं समूहापेक्षया एकोपलक्षणत्वेन वा ज्ञेयम् । अंतरा उदरमध्ये प्रभोर्वैराजस्य ॥ १७ ॥ पूर्वमुपक्रांतमधिदैवादित्रैविध्यं विवृणोति मुखत इति । मुखतः मुखोत्पत्तेरनंतरमित्यर्थः । तत्राधिष्ठानविषयावधिभूतमिंद्रियमध्यात्मं देवताधिदैवमिति सर्वत्र चातुर्विध्येपि त्रैविध्यमेव द्रष्टव्यम् । तत्र तालुनि । ततो जिह्वोत्पत्तेरनंतरम् । यो नाना रसः । यद्वा मुखत इति सप्तम्यर्थे तसिः मुखे तालुनिर्भिन्नमित्यर्थः ॥ १८ ॥ भूम्न इति । भगवदभेदापेक्षयोक्तम् । तस्य विराजः यदा जले विराजो निरोधो जायत तदा श्वासचलनं विना निर्वाह इति श्वासचलनमार्गभूते नासिके अंभूतामिति भावः । तयोर्वह्निवाचोस्संबंधि तदधीनं व्याहृतमित्यर्थः । कर्मणो व्याहृतस्येति स्वामिपदविवृतिः । यद्वा । तस्य व्याहृतस्य ॥ १९ ॥२०॥ ततस्तेन चक्षुषा अनेन गुणग्रह इति वचनेन ॥ २१ ॥ २२ ॥

वस्तुनो मृदुकाठिन्यलघुगुर्वौष्णशीतताम् ॥ जिघृक्षतस्त्वङ्निर्भिन्ना तस्यां रोम महीरुहाः ॥ तत्र चांतर्बहिर्वातस्त्वचा लब्धगुणो वृतः ॥ २३ ॥ हस्तौ रुरुहतुस्तस्य नानाकर्मचिकीर्षया ॥ तयोस्तु बलमिंद्रश्च आदानमुभयाश्रयम् ॥२४॥ गतिं जिगीषतः पादौ रुरुहातेऽभिकामिकाम् ॥ पद्भ्यां यज्ञः स्वयं हव्यं कर्मभिः क्रियते नृभिः ॥२५॥ निरभिद्यत शिश्नो वै प्रजानंदामृतार्थिनः ॥ उपस्थ आसीत्कामानां प्रियं तदुभयाश्रयम् ॥२६॥

ततो गुणग्रहः शब्दस्य ग्रहणम् ॥२२॥ मृदुत्वं च काठिन्यं च लघुत्वं च गुरुत्वं च आ उष्णत्वमीषदुष्णत्वं च शीततां चेत्यर्थः । यद्यप्यत्युष्णत्वमपींद्रियाविषय एव तथापि तस्य जिघृक्षाभावादोष्णत्वमित्युक्तम् । गुर्वुष्णेति पाठे यणादेशश्छांदसः । वस्तुन एतान् धर्मान् जिघृक्षतस्त्वङ् निर्भिन्ना । त्वगिंद्रियाधिष्ठानं चर्मजातमित्यर्थः । तस्यां रोमाणींद्रियं महीरुहाश्च देवताः जाताः वस्तुनि हस्तेनातोलिते लघुत्वगुरुत्वयोर्ज्ञानात्तयोरपि त्वगिंद्रियविषयत्वमिति पौराणिकाः ॥ तत्र त्वच्यंतर्बहिश्च वातो वृत आवृत्य स्थितः कर्तरि निष्ठा । कथंभूतः । त्वचा लब्धो गुणः स्पर्शो येन । अयमर्थः त्वगिंद्रियमेव बहिः कंडूतिसहितं स्पर्शं गृह्णल्लोमशब्देनोच्यते तत्र महीरुहाणां देवत्वम् । अंतर्बहिश्च स्पर्शं गृह्णत्तदेव त्वक्शब्देनोच्यते । तत्र वातो देवता । तथा च तृतीये वक्ष्यति । "त्वचमस्य विनिर्भिन्नां विविशुर्धिष्ण्यमोषधीः ॥ अंशेन लोमभिः कंडूं यैरसौ प्रतिपद्यते ॥ निर्भिन्नान्यस्य चर्माणि लोकपालोऽनिलोऽविशत् ॥ प्राणेनांशेन संस्पर्शं येनासौ प्रतिपद्यते ॥ " इति । तत्र चर्माणीति चर्मोपलक्षिता त्वगित्यर्थः । प्राणेनांशेनेति प्राणवायुव्याप्तेन त्वगिंद्रियेणेत्यर्थः । बह्वृचश्रुतौ त्वेक एवांशो निर्दिष्टः । "त्वङ् निरभिद्यत त्वचो लोमानि लोमभ्य औषधिवनस्पतयः" इति ॥ २३॥ रुरुहतुर्निर्भिन्नौ बलमिंद्रियं इंद्रो देवता तदुभयाश्रयमादानं कर्म ॥ २४ ॥ अभिकामिकामभीष्टां विहितामित्यर्थः । पद्भ्यां सह यज्ञो विष्णुरेव स्वयं तदधिष्ठातृरूपेण स्थितः । कर्मभिरिति गत्याख्या कर्मशक्तिरिंद्रियमुक्तम् । हव्यं क्रियत इति गतिप्राप्यं यज्ञार्थं द्रव्यं विषय इत्युक्तम् । नृभिरिति व्यष्टिजीवेष्वपीयमेव रीतिरिति दर्शयन्नराधिकारित्वं यज्ञादीनां दर्शयति ॥२५॥ प्रजा अपत्यमानंदो रतिरमृतं स्वर्गादि तदर्थिनः । शिश्नोऽधिष्ठानमुपस्थ इंद्रियं प्रजापतिश्चासीदिति ज्ञेयम् । तदुभयाश्रयं कामानां संबंधि प्रियं सुखम् ॥ २६ ॥

इत्यर्थ इति । "ईषदर्थे क्रियायोगे मर्यादाभिविधौ तथा । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् । आकारस्तु निपातोयं ङिदङिद्भेदतो द्विधा । तत्रापि च ङिदाकारः संधिं प्राप्नोति न त्वङित्" इत्युक्तेरत्राकारस्य ङित्त्वात्संधिर्जात इति भावः । यणा देश इति । "अकः सवर्णे दीर्घः" इति दीर्घे प्राप्ते यणादेशोऽत्रार्षः । इत्यर्थ इति अत्राधिष्ठेयेनाधिष्ठानग्रहणमुपचारादिति भावः । निष्ठाक्तप्रत्ययः । अत्राशयं स्फोटयति । अयमर्थ इति । तत्र तृतीयस्कंधश्लोके इत्यर्थ इत्युभयत्रयं व्याख्येति एक एव त्वद्रूप एवेत्यर्थः ॥२३॥ उभयाश्रयमिन्द्रियदेवताधीनमित्यर्थः ॥२४॥ यज्ञो विष्णुशक्त्याविष्टो देवताविशेषः । स्वयमिति तस्याप्यन्यदेवापेक्षया प्राधान्यमाह—गतिं गमनं जिगीषत इति धात्वर्थस्याविवक्षितत्वादिच्छत इत्यर्थः । यद्यपि गुणः प्रकृत्यर्थोऽन्यत्र सात् इत्यनुभूतिना सन्नंते प्रकृत्यर्थस्यैव प्राधान्यमुक्तं तथाप्यस्य शास्त्रस्य छंदोरूपत्वात्प्रत्ययार्थस्यापि प्राधान्यमत्र न दोषायेति ॥२५॥ अत्रानंदशब्देन तद्धेतवः स्त्रिय एवोच्यंते तत्र च स्त्रीणां विषयत्वं साक्षात्तेन भोग्यत्वात् । अन्ययोस्तु तदुत्पाद्यतया भोगहेतुत्वात् । स्वर्गादिकं च गार्हस्थधर्ममयप्रजास्त्रीपरिकरतदुत्पाद्यं भवति तदुभयाश्रयं कामसुखमिन्द्रिय

उत्सिसृक्षोर्धातुमलं निरभिद्यत वै गुदम् ॥ ततः पायुस्ततो मित्र उत्सर्ग उभयाश्रयः ॥ २७ ॥ आसिसृप्सोः पुरः पुर्या नाभिद्वारमपानतः ॥ तत्रापानस्ततो मृत्युः पृथक्त्वमुभयाश्रयम् ॥ २८ ॥ आदित्सोरन्नपानानामासन्कुक्ष्यंत्रनाडयः ॥ नद्यः समुद्राश्च तयोस्तुष्टिः पुष्टिस्तदाश्रये ॥ ॥ २९ ॥ निदिध्यासोरात्ममायां हृदयं निरभिद्यत ॥ ततो मनस्ततश्चंद्रः संकल्पः काम एव च ॥ ३० ॥ त्वक्चर्ममांसरुधिरमेदोमज्जास्थिधातवः ॥ भूम्यप्तेजोमयाः सप्त प्राणो व्योमांऽबुवायुभिः ॥ ३१ ॥ गुणात्मकानींद्रियाणि भूतादिप्रभवा गुणाः ॥ मनः सर्वविकारात्मा बुद्धिर्विज्ञानरूपिणी ॥ ३२ ॥

धातुमलं भुक्तान्नादीनामसारांशं त्यक्तुमिच्छोः गुदपायुमित्रोत्सर्गा अधिष्ठानेंद्रियदेवताविषयाः । उभयाश्रयः पायुमित्राश्रयः ॥ २७ ॥ पुर्या देहात्पुरो देहांतराण्यासिसृप्सोः सर्वतो गंतुमिच्छोः नाभिद्वारं निरभिद्यतेत्यनुषंगः।अपानतोऽपगच्छतः पृथक्त्वं मरणम्। नाभ्यादीन्यधिष्ठादीनि नाभ्यां हि प्राणापानयोर्बंधविश्लेषे मृत्युरिति प्रसिद्धम्॥ २८॥ अन्नपानानामादित्सोः संग्रहेच्छोः कुक्षिश्चांत्राणि च नाडयश्चासन् । तत्र कुक्षिरधिष्ठानं अंत्राण्यन्नसंग्रहे करणमिंद्रियस्थानीयं नाडयस्तु पानसंग्रहे तयोर्नाड्यंत्रवर्गयोः क्रमेण नद्यः समुद्राश्च देवते तुष्टिरुदरभरणं पुष्टिस्तु रसपरिणामतः स्थौल्यं तदाश्रये तदुभयनिमित्ते । तत्रान्नसंग्रहेच्छोः कुक्ष्यंत्रसमुद्रतुष्टय इति चतुष्टयं पेयसंग्रहेच्छोः कुक्षिनाडिनदीपुष्टय इति विवेकः ॥ २९ ॥ निदिध्यासोर्नितरां चिंतयितुमिच्छोः कामोऽभिलाषः हृदयमनश्चंद्रसंकल्पा अधिष्ठानादयः ॥ ३० ॥ तदेवमधिदैवादिभेदं विभज्योक्त्वा तदंशभूतानां धात्वादीनां स्वरूपमाह त्वगिति द्वाभ्याम् । त्वक् स्थूलं चर्म तदुपरि स्थितं सूक्ष्मं त्वगादयोऽस्थ्यंता द्वंद्वैकवद्भावेन निर्दिष्टाः सप्त ये धातवस्ते भूम्यप्तेजोमयाः तेषां च पांचभौतिकत्वेऽपि वाय्वाकाशयोराहारादिरूपेण संवर्धकत्वाभावादेवमुक्तम् ॥ ३१ ॥ गुणात्मकानि गुणेषु शब्दादिष्वात्मा येषाम् । विषयाभिमुखस्वभावानीत्यर्थः । गुणाः शब्दादयः भूतादिरहंकारस्ततः प्रकर्षेण भवंतीति यथा अहंकारकल्पितशोभनस्वभावा नतु वस्तुतस्तथेति तात्पर्यम् । अत्र हेतुः । यतो मन एव सर्वविकाराणामात्मा स्व

देवताधीनम् ॥ २६ ॥ २७ ॥ ततोनंतरम् । अपानतोऽपानमार्गेण उपलक्षणमिदं प्राणमार्गेणोत्पन्नस्यापि नाभिद्वारमधिष्ठानमपान इंद्रियं मृत्युर्देवता मरणं विषयः ॥ २८ ॥ २९ ॥ मायां मायिकं वस्तु च संकल्पस्तत्तत्पदार्थचिंतनं कामस्तत्तद्विषयाभिलाषः हृदयमधिष्ठानं मन इंद्रियं चंद्रो देवता संकल्पो विषयः तत्र हृदयमेवाधिष्ठानं चित्ताहंकारबुद्धय इतींद्रियाणि तद्देवताश्च वासुदेवरुद्रब्रह्माणस्तृतीयस्कंधाज्ज्ञेयाः तदेवमष्टादशेंद्रियाणि प्रसिद्धान्येकादशैव ज्ञेयानि ॥ ३० ॥ व्योमांबुभ्यां पुष्टा वायव एव प्राण इत्यर्थः । तृतीयाबहुवचनमार्षम् ॥ ३१ ॥ इत्यर्थ इति वस्तुतः शब्दादीनां बंधकत्वाच्छोभनता नास्तीति भावः । अत्र गुणानामशोभनत्वे मन एव सर्वविकारान्संजीवयतीति भावः । तामसेष्वेव विषयेषु संकल्पविकल्पं करोति न तु हेयोपादेयाविवेकं बुद्धिस्तु तथाभूतार्थविज्ञानरूपिणी न तु परमार्थग्राहिणी अनेन बुद्धिमनसोः स्वरूपं

एतद्भगवतो रूपं स्थूलं ते व्याहृतं मया ॥ मह्यादिभिश्चावरणैरष्टभिर्बहिरावृतम् ॥ ३३ ॥ अतः परं सूक्ष्मतममव्यक्तं निर्विशेषणम् ॥ अनादि मध्यनिधनं नित्यं वाङ्मनसः परम् ॥ ३४ ॥ अमुनी भगवद्रूपे मया ते अनुवर्णिते ॥ उभे अपि न गृह्णंति मायासृष्टे विपश्चितः ॥ ३५ ॥ सवाच्यवाचकतया भगवान्ब्रह्मरूपधृक् ॥ नामरूपक्रिया धत्ते सकर्माऽकर्मकः परः ॥ ३६ ॥ प्रजापतीन्मनून्देवानृषीन्पितृगणान्पृथक् ॥ सिद्धचारणगंधर्वान्विद्याध्रासुरगुह्यकान् ॥ ३७ ॥ किन्नराप्सरसोनागान्सर्पान्किंपुरुषोरगान् ॥ मातृरक्षःपिशाचांश्च प्रेतभूतविनायकान् ॥३८॥

रूपं, बुद्धिस्तु तथाभूतार्थविज्ञानरूपिणी, नतु परमार्थग्राहिणीति वैराग्यार्थमुक्तम् । अनेनैव बुद्धिमनसोः स्वरूपं चोक्तम् ॥ ३२ ॥ उपसंहरति । एतदिति । प्रकृत्या सहा ष्टभिः ॥ ३३ ॥ स्थूलमुक्त्वा सूक्ष्मं समष्टिलिंगशरीरमाह । अतः परमस्य कारणभूतं सूक्ष्ममतींद्रियं यतोऽव्यक्तम् । तत्कुतः । यतो निर्विशेषणम् अनादिमध्यनिधनमुत्पत्ति स्थितिलयशून्यं नित्यं सदैकरूपं अपक्षयादिशून्यमित्यर्थः । अत एव वाक् च मनश्चेति द्वंद्वैक्यं तस्मात् परम् ॥ ३४ ॥ उपासनार्थं भगवत्यारोपितं रूपद्वयमपवदति । अमुनी इति । न गृह्णंति वस्तुतो नांगीकुर्वंति यतो मायासृष्टे ॥ ३५ ॥ यद्रूपगुणकर्मक इति यदुक्तं भगवता ब्रह्माणं प्रति तत्प्रपंचयितुं ब्रह्मादिरूपाणि तत्कर्माणि चाह स इत्यादिना इत्थंभावेनेत्यतः प्राक्तनेन ग्रंथेन । स भगवान् ब्रह्मरूपधृक् सन् वाच्यवाचकतया वाचकतया नामानि वाच्यतया रूपाणि क्रियाश्च धत्ते । सृजतीत्यर्थः । मायया सकर्मा सव्यापारः सन् वस्तुतस्त्वकर्मकः ॥ ३६ ॥ एतत्प्रपंचयति प्रजापतीनिति सार्धैस्त्रिभिः । द्वितीयांतानां धत्त इत्यनेनान्वयः । तत्र प्रजापत्यादीनि नामानि तत्तद्वा

चोक्तम् । संदर्भस्तु विकारा हर्षदुःखादयः । विज्ञानं विवेकशक्तिः । 'बुद्धींद्रियमनःप्राणान्' इत्याद्युक्तेः । पारमार्थिक्यपि सा भवतीति ज्ञेयम् ॥ ३२ ॥ मह्यादिभिः पृथिव्यप्तेजोवाय्वाकाशमहदहंकारप्रकृत्याख्यैः प्रत्येकं दशादशगुणोत्तरैः ॥ ३३ ॥ अतः स्थूलात् । अस्य स्थूलस्य । तदव्यक्तत्वम् । निर्विशेषणं वर्णाकारादिशून्यम् । यदेव स्थूलेन सह व्यष्टिभूतपत्त्यादियुक्तं न भवतीत्याह । अनादीति । अतस्तदपेक्षया नित्यमपि निर्विशेषणत्वादेव वाङ्मनसात्परमत एव सूक्ष्मतममत एव चाव्यक्तं सूक्ष्मतमामित्युक्त्या सूक्ष्ममतिसूक्ष्मं चेति द्वितयं लभ्यतेऽत्र सूक्ष्मं लिंगशरीरमतिसूक्ष्मं मायारूपं निर्विशेषणमित्यादिभिश्चतुर्भिर्विशेषणैरुक्तम् ॥ ३४ ॥ अमुनीति द्विवचनं स्थूलयोः समष्टिव्यष्टयोरैक्यात्सूक्ष्मयोरप्यैक्यात् न गृह्णंति प्राप्यत्वेन न स्वीकुर्वंति किंतूपासनार्थं प्रथमदशायामेव यतो मायासृष्टे तृतीयमतिसूक्ष्मं यत्तत्तु कारणं मायैव किन्तु विपश्चितः शुद्धिभक्तिमंतः प्रथमदशायामपि नैव गृह्णंति किंतु रामकृष्णनारायणनृसिंहादिरूपं शुद्धसत्त्वमेव साध्यसाधनदशायां गृह्णंतीति ॥ ३५ ॥ अथ व्यष्टीनां स्थितिसंहारानाह—स इत्यारभ्येत्थंभावेत्यंतेन स महदादिस्रष्टा पुरुषः परः परमेश्वरः अकर्मकः प्राकृतक्रियाहीनोपि ब्रह्मरूपधृक् सन्सकर्मा सव्यापारः वक्ष्यमाणानां व्यष्टिजीवानां धत्ते सृजतीत्यर्थ इति । धातूनामनेकार्थत्वात्सर्जनेपि दधातिः प्रयुक्त इति भावः । अत्र संदर्भेण अत एव तत्संबंधिसर्वमपि भगवद्रूपत्वेनैव कल्पितमित्यवतरणिकामुक्त्वा यद्रूपगुणकर्मक इत्यत्र त्वप्राकृतानि चतुःश्लोक्यां श्रीभगवता प्रतिज्ञातानि स्वयमेव दर्शितानीति व्याख्यातमेव ॥ ३६ ॥ एतद्बहुरूपगुणकर्मकत्वम् । सार्द्धत्रिकस्यान्वयः ॥ प्रजापतीन्दक्षादीन् । मनून्स्वायंभुवादीन् । देवानिंद्रादीन् । ऋषीन्मरीच्यादीन् । पितृगणानर्यमादीन् । सिद्धान्कपिलादीन् । चारणान्सुञ्चादीन् गंधर्वांश्चित्ररथादीन् । विद्याध्रान्सुदर्शनादीन् । असुरान्नमुच्या दीन् । गुह्यकान्कामुकादीन् ॥३७॥ किन्नरान्मर्कटादीन् । अप्सरसो मंजुघोषाद्याः । नागसर्पोरगाणामवांतरभेदो हि सर्पसिद्धांतग्रंथाज्ज्ञेयः । नागाश्शेषाद्याः । सर्पास्तक्षकाद्याः । उरगाः कुंडधाराद्याः । किंपुरुषाः वनचर

कूष्मांडोन्मादवेतालान्यातुधानान्ग्रहानपि ॥ खगान्मृगान्पशून्वृक्षान्गिरीन्नृप सरीसृपान् ॥ ३९ ॥ द्विविधाश्चतुर्विधा येऽन्ये जलस्थलनभौकसः ॥ कुशलाऽकुशला मिश्राः कर्मणां गतयस्त्विमाः ॥ ४० ॥ सत्त्वं रजस्तम इति तिस्रः सुरनृनारकाः ॥ तत्राप्येकैकशो राजन्भिद्यंते गतयस्त्रिधा ॥ यदैकैकतरोऽन्याभ्यां स्वभाव उपहन्यते ॥ ४१ ॥ स एवेदंजगद्धाताभगवान्धर्मरूपधृक् ॥ पुष्णाति स्थापयन्विश्वं तिर्यङ्नरसुरात्मभिः ॥ ॥४२ ॥ ततः कालाग्निरुद्रात्मा यत्सृष्टमिदमात्मनः ॥ संनियच्छति कालेन घनानीकमिवाऽनिलः ॥ ४३ ॥ इत्थंभावेन कथितो भगवान्भगवत्तमः ॥ नेत्थंभावेन हि परं द्रष्टुमर्हंति सूरयः ॥ ४४ ॥

च्यानि रूपाणित त्तत्कर्माणि च ज्ञेयानि पृथक् तत्तदवांतरभेदेन ॥ ३७॥ ३८॥ गिरीनित्यस्यानंतरं नृपेति संबोधनम् ॥ ३९॥ द्विविधाः स्थावरजंगमरूपेण । तत्र चतुर्विधाः जरायुजांडजस्वेदजोद्भिज्जरूपेण । जलस्थलनभांस्योकांसि येषां तानपि धत्त इति पूर्वेणान्वयः । यच्च राज्ञा पृष्टं "यावत्यः कर्मगतयो यादृशीर्द्विजसत्तम" इति तस्यापि प्रसंगादनेनैवोत्तरमाह । कुशला उत्तमाः, अकुशला नीचाः । मिश्रा इति पदांतरम् । मिश्रा मध्यमाः, कर्मणां पुण्यपापमिश्राणां गतयः फलानि ॥ ४० ॥ सत्त्वादिभेदेन कर्मगतिवैचित्र्यं प्रपंचयति सत्त्वमिति सार्धेन । सत्त्वादयस्तिस्रो गतयः सुरादिशब्दा ऋष्यादीनामुपलक्षणार्थाः । अन्याभ्यां गुणाभ्यां स्वभावो गुण उपहन्यतेऽनुविध्यते ॥ ४१ ॥ ब्रह्मरूपेण स्रष्टृत्वमुक्त्वा विष्णुरूपेण पालकत्वमाह । स एव भगवांस्तिर्यगाद्यवतारैरिदं विश्वं स्थापयन्पालयन्धर्मरूपेण पुष्णाति भोगैः संवर्धयति ॥ ४२ ॥ रुद्ररूपेण संहर्तृत्वमाह । तत इति । आत्मनः सकाशाद्यदिदं सृष्टं तत्संनियच्छति संहरति ॥ ४३ ॥ कर्तृत्वाद्यपवादेन दशमस्य शुद्धिमाह । इत्थंभावेन स्रष्टृत्वादिरूपेण । "तस्माद्वा एत

पुरुषाद्याः । मातरो ब्राह्म्याद्याः । रक्षांसि सुमाल्यादीनि । पिशाचा घंटाकर्णाद्याः प्रेता दुर्मरणमृताः । भूता भृंग्याद्या रुद्रगणाः । विनायका विघ्नविशेषाः॥ ३८ ॥ कूष्मांडाः खलंट्वादयः। उन्मादाः। कालकर्णादयः । वेतालाः सुवेगाद्या शिवगणविशेषाः। यातुधाना रक्षोभेदा मृगकर्णाद्याः। ग्रहा बालग्रहाः पूतनाद्या वृद्धग्रहा वैरूप्याद्यास्सूर्याद्याः वा। खगा गरुडाद्याः। मृगा हरिणाद्याः। पशवो गवाद्याः। वृक्षा अश्वत्थाद्याः। गिरयो मेर्वाद्याः । सरीसृपाः सहस्रपाद्याद्याः । हे नृपेति । राज्ञां हि नृपालनप्रसंगेन सर्वं ज्ञातप्रायं भवतीति भावः ॥ ३९ ॥ ननु कथमेवं विषयान्सृजति तत्राह–इमाः कर्मणां गतयः कुशलाः पुण्यफलभूताः अकुशलाः पापफलभूता मिश्रास्तदुभयरूपाः जीवाः प्रतिस्वकर्मानुरूपाः गतीः प्राप्नुवंति स्रष्टुः को दोष इति भावः॥ ४० ॥ तत्रापि तिसृषु गतिष्वपि एकैकशो गतयस्त्रिधा भिद्यंते नवसंख्याका भवंति। अन्याभ्यां स्वभावाभ्यां तथाहि शुद्धसत्त्वा रजोमिश्रसत्त्वा तमोमिश्रसत्त्वा च एवं शुद्धराजसी तमोमिश्रराजसी सत्त्वमिश्रराजसी च तथैव शुद्धतामसी रजोमिश्रतामसी सत्त्वमिश्रतामसी चेति । यथा रजः स्वभावोपि नरःसत्त्वस्वभावमिश्रणाधिक्याद्ब्राह्मणः, रजोधिक्यात्क्षत्रियः, रजस्तमसोराधिक्याद्वैश्यः, तमोधिक्याच्छूद्र इति ॥ ४१ ॥ धर्मो विष्णुः 'धर्मो धर्मविदुत्तमः' इति सहस्रनामसु पठितत्वात् । धर्मतो रक्षाऽधर्मतो नाशः धर्माधर्माभ्यां सृष्टिरिति द्योतयति । तिर्यगादीनां स्वभावैरिति पशुपक्षिणोपि स्वसुतमित्रकलत्रादीन्पालयंति ॥ ४२ ॥ ४३ ॥ सूरयः केचिच्छुद्धभक्तिमंतस्तु परं केवलं विश्वसृष्टत्वादिरूपेण द्रष्टुं नार्हंति किन्तु वैकुंठादौ स्वधामनि चिद्विभूतौ स्वप्रेयस्यादिभिर्विहरमाणत्वेनैवेत्यर्थः ॥ ४४ ॥

नास्य कर्मणि जन्मादौ परस्यानुविधीयते ॥ कर्तृत्वप्रतिषेधार्थं माययाऽऽरोपितं हि तत् ॥४५॥ अयं तु ब्रह्मणः कल्पः सविकल्प उदाहृतः ॥ विधिः साधारणो यत्र सर्गाः प्राकृतवैकृताः ॥४६॥ परिमाणं च कालस्य कल्पलक्षणविग्रहम् ॥ यथा पुरस्ताद्व्याख्यास्ये पाद्मं कल्पमथो शृणु ॥४७॥ शौनक उवाच ॥ यदाह नो भवान्सूत क्षत्ता भागवतोत्तमः ॥ चचार तीर्थानि भुवस्त्यक्त्वा बंधून्सुदुस्त्यजान् ॥ ४८ ॥

स्मादात्मन आकाशः संभूतः । सोऽकामयत बहु स्यां प्रजायेय” इत्यादिश्रुत्या प्रतिपादितः । सूरयस्तु परं केवलमेवंरूपेणैव द्रष्टुं नार्हंति ॥ ४४ ॥ तत् किं यतोऽस्य विश्वस्य जन्मादौ कर्माणि परस्येश्वरस्येत्थंभावः कर्तृत्वं नास्ति श्रुत्यापि तात्पर्येण न प्रतिपाद्यते किंतु अनुविधीयतेऽनुवर्ण्यते । किमर्थं कर्तृत्वप्रतिषेधार्थम् । हि यतो माययाऽऽरोपितं प्रकाशितम् । यथा च श्रुतयः । “निष्कलं निष्क्रियं शांतं निरवद्यं निरंजनम् ॥ इंद्रो मायाभिः पुरुरूप ईयते” इत्याद्याः ॥ ४५ ॥ उक्तमर्थमुपसंहरति अयं त्विति । ब्रह्मणः संबंधी कल्पो महाकल्पः विकल्पोऽवांतरस्तत्सहित उदाहरणत्वेन संक्षेपत उक्तः । कथंभूतः । यत्र महाकल्पे प्राकृता महदादिसर्गाः अवांतरकल्पे च वैकृताः स्थावरादिसर्गा इत्ययं विधिः प्रकारः । अन्यैर्महाकल्पादिभिः साधारणः ॥४६॥ वक्ष्यमाणं विस्तरं प्रतिजानीते । परिमाणं स्थूलं सूक्ष्मं च कल्पस्य लक्षणमियानेवंरूप इति तद्विग्रहमवांतरकल्पम् । मन्वंतरादिरूपं विभागं च यथावद्विस्तरेण पुरस्तात्तृतीयस्कंधे व्याख्यास्यामि।तत्र पाद्मं कल्पमथो इति कात्स्न्र्येन व्याख्यायमानं शृणु ॥४७॥ यदर्थं सृष्ट्यादिनिरूपणं तदेव साक्षाच्छ्रोतुकामः कथांतरं पृच्छति । यदाहेति । भुवः संनंधीनि तीर्थानि । यद्वा भुवः क्षेत्राणि चेति ॥ ४८ ॥

नैतद्भगवतो वस्तुतः कर्मेत्याह—अस्य विश्वजन्मादौ जन्मस्थितिसंहारे कर्मणि परस्य परमेश्वरस्येत्थंभावः कर्तृत्वं नास्ति किं त्वनुविधीयते श्रुतिस्मृत्यादिषु सर्वत्र वर्ण्यते किमर्थं कर्तृत्वप्रतिषेधार्थं हि यतो माययैवारोपितं सृष्ट्यादीनां गुणकार्यत्वाद्बहिरंगमायाया एव कर्तृत्वं परमपुरुषे आरोपितमिति मत्कृतमपीदं मत्स्वामित्वात्तेन परमेश्वरेणैव कृतं न तु वस्तुतः परमेश्वरः स्वस्वरूपेण कर्त्तेत्यर्थः । अत्र प्रमाणं तथा चेति । इंद्र आत्मा यद्यपि तत्प्रभावत एव तद्भवति तथाप्ययस्कांतवत्तत्र तस्य विकारो नास्तीतिभावः । अध्यारोपापवादावपि शुद्धस्वरूपावगत्यर्थमेव वर्णितमिति । ज्ञेयम् । “अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते” इति श्रुतेः ॥ ४५ ॥ कल्पो ब्रह्मदिनं “स कल्पो यत्र मनवश्चतुर्दश विशांपते” इति वक्ष्यमाणत्वात् । कल्पवर्णना हि स्कांदे प्रभासखंडे “प्रथमः श्वेतकल्पश्च द्वितीयो नीललोहितः । वामदेवस्तृतीयस्तु ततो गाथांतरोऽपरः १ रौरवः पञ्चमः प्रोक्तः षष्ठः प्राण इति स्मृतः । सप्तमोऽथ बृहत्कल्पः कंदर्पोऽष्टम उच्यते २ सद्योथनवमः कल्प ईशानो दशमः स्मृतः । ध्यान एकादशः प्रोक्तस्तथा सारस्वतोऽपरः ३ त्रयोदश उदानस्तु गरुडोऽथ चतुर्दशः । कौर्मः पञ्चदशो ज्ञेयः पौर्णमासी प्रजापतेः ४ षोडशो नारसिंहस्तु समाधिस्तु ततोऽपरः । आग्नेयो विष्णुजः सौरः सोमकल्पस्ततोऽपरः ५ द्वाविंशो भावनः प्रोक्तः सुपुमानिति चापरः ॥ वैकुंठश्चार्ष्टिषस्तद्वद्वल्मीकल्पस्ततोऽपरः ६ सप्तविंशोऽथं वैराजो गौरीकल्पस्ततोपरः । महेश्वरस्ततः प्रोक्तस्त्रिपुरो यत्र घातितः ७ पितृकल्पस्ततश्चांते यः कुहूर्ब्रह्मणः स्मृता । त्रिंशत्कल्पाः समाख्याता ब्रह्मणो दिवसैः सदा ८ अतीताश्च भविष्याश्च वाराहो वर्त्ततेऽधुना । प्रतिपद्ब्रह्मणः प्रोक्ता द्वितीयार्द्धस्य सांप्रतम् ९” अत्र श्वेतः श्वेतवाराहः स एव वाराहश्च अयमेव ब्रह्मोत्पत्तिसमये ब्राह्म उच्यते इति ज्ञेयम् । एवं पितृकल्प एव प्रथमपरार्द्धांते पद्मानिर्मितलोकत्वात्पाद्म इत्युच्यते अतः श्रीभागवतस्य सारस्वतकल्पमयत्वं तु प्रायिकमेव ॥ ४६ ॥ विस्तरेण तु यथाकालोनुमीयत इत्यस्य प्रश्नस्योत्तरं मध्य एव तस्योत्तरं दास्यमानं प्रतिजानीते परिमाणं कीदृशं कल्पानां लक्षणमेवं विग्रहो वपुर्यस्य तत् कल्पादिलक्षणं विना कालपरिमाणं न सिध्यतीत्यर्थः । पाद्मं कल्पं प्रथमपरार्द्धान्तभवम् ॥ ४७ ॥ तदेवं प्रस्तुतमपि पाद्मकल्पकथनं कथांतरश्रवणोत्कंठया स्थगितीकृत्य पृच्छतीत्याह । यदर्थमित्यादि यदाहेति

कुत्र कौषारवेस्तस्य संवादोऽध्यात्मसंश्रितः ॥ यद्वा स भगवांस्तस्मै पृष्टस्तत्त्वमुवाच ह ॥ ४९ ॥ ब्रूहि नस्तदिदं सौम्य विदुरस्य विचेष्टितम् ॥ बंधुत्यागनिमित्तं च तथैवागतवान्पुनः ॥ ५० ॥ सूत उवाच ॥ राज्ञा परीक्षिता पृष्टो यदवोचन्महामुनिः ॥ तद्वोऽभिधास्ये शृणुत राज्ञः प्रश्नानुसारतः ॥५१॥ इति श्रीमद्भागवते महापुराणे द्वितीयस्कंधे पुरुषसंस्थानुवर्णनं नाम दशमोऽध्यायः ॥१०॥ इति द्वितीयस्कंधः समाप्तः॥२॥

कौषारवेर्मैत्रेयस्य तस्य क्षत्तुश्च अध्यात्मज्ञानसंश्रितः संवादः॥४९॥पुनरागतवांस्तत्र च निमित्तं ब्रूहि॥५०॥राज्ञा पृष्ट इति । अयमर्थः । यद्यूयं पृच्छथेदमेव राजाऽपि शुकं पृष्टवान् । शुकोऽपि विदुरमैत्रेयसंवादं पुरस्कृत्य ये पूर्वं राज्ञा कृताः प्रश्नास्तदनुसारेणैव सर्वं पुराणार्थमवोचत्तदेवाहं वोऽभिधास्यामि । तथैव शृणुतेति ॥ ५१ ॥ श्रीमद्भागवतं येन स्वब्रह्ममुखतो मितम् ॥ ब्रह्मनारदयोः शोक्तं तं वंदे गुरुमीश्वरम् ॥ १ ॥ यत्सूत्रयंत्रितं विश्वं नरीनर्ति जगत्त्रयम् ॥ संतस्तमेव पृच्छंतु यदत्र स्खलितं मम ॥२॥ द्वितीयस्कंधसंबंधिपदभावार्थदीपिका॥उद्दीप्यतामियं सद्भिर्यथा स्यात्तत्त्वदीपिका॥३॥ईक्षंतामिच्छया संतः क्षमंतां मम साहसम्॥मया हि स्वीयबोधाय कृतमेतत्त्वसर्वतः॥४॥ इति श्रीमद्भागवतटीकायां श्रीधरस्वामिविरचितायां भावार्थदीपिकायां द्वितीयस्कंधे दशमोऽध्यायः ॥ १० ॥ इति द्वितीयस्कंधः समाप्तः ॥ २ ॥ श्रीकृष्णार्पणमस्तु ॥

"विदुरस्तीर्थयात्रायां मैत्रेयादात्मनो गतिम्" इत्यादिना यद्भवानवोचदित्यर्थः । भगवान्सर्वज्ञः ॥४८॥ कुत्रेति स्थानप्रश्नः । यद्वा पृष्टो यद्वा तत्त्वमुवाचेत्युभयत्र यच्छब्दान्वयत्वात्प्रश्नोत्तरयोः प्रश्नौ ॥ ४९ ॥ हे सौम्येति । श्रीव्यासदेवकृपया त्वयि सौम्यतास्तीति भावः । तव च पुनरागमने ॥ ५० ॥ अत्राशयमाह–अयमर्थ इति ॥ ५१ ॥ स्वब्रह्ममुखतः स्वश्च ब्रह्मा च स्वब्रह्माणौ तयोर्मुखं स्वब्रह्ममुखं तेन तृतीयार्थे तसिः स्वमुखेन ब्रह्मणे ब्रह्ममुखेन नारदायेत्यर्थः । मितं संक्षिप्तम् । तं परमात्मरूपं गुरुम् ॥ १॥ विश्वं सर्वं यस्य सूत्रं सूत्रमद्वेष्टनशीला माया तत्र यंत्रितं प्रोतम् । अत्र व्याख्याने स्खलितं च्युतं स एवांतर्यामी भूत्वा यथा प्रेरय्य व्याख्यापयति तथाहं व्याख्यामीति भावः ॥ २ ॥ यथातत्त्वस्य याथार्थस्य दीपिका प्रकाशिका भवेत् तथा सद्भिर्विद्वद्भिरियं लोके प्रकाश्यतां प्रकटीक्रियतामिति प्रार्थनायां लोट् ॥ ३ ॥ ईक्षंतां पश्यंतु । साहसमयथाव्याख्यानम् । स्वीयबोधाय स्वस्य स्वशिष्याणां च बोधाय विस्मृत्यलाभाय सर्वतः सर्वेषां बोधाय नन्वित्यर्थः ॥ ४ ॥ येन श्रीब्रह्मणे प्रोक्तं श्रीमद्भागवतं पुरा । संक्षेपेणैव कल्पादौ तं वंदे नंदनंदनम् ॥ १ ॥ द्वितीयस्कंधभावार्थदीपिकाविवृतिः कृता । वंशीधरेण विदुषागौडकौशिकगोत्रिणा ॥ २॥ इमां गृह्णन्तु विवृतिं परमानन्ददायिनीम् ॥ विदुषां कृष्णभक्तानां विद्वांसो गुणिवत्सलाः ॥ ३ ॥ इति श्रीवंशीधरशर्मकृतश्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वितीयस्कन्धे दशमोऽध्यायः ॥ १० ॥ समाप्तोऽयं द्वितीयस्कन्धः ॥

अयं श्रीमद्भागवतभावार्थदीपिकाप्रकाशसमलंकृतश्रीभागवतभावार्थदीपिकासमेतश्रीमद्भागवतद्वितियस्कन्धः मुम्बय्यां खेमराजश्रीकृष्णदासश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" मुद्रणालये मुद्रयित्वा प्रकाश्यमानीयत ॥

॥ इति श्रीधरीटीकया वंशीधरशर्मकृततद्भावार्थदीपिकाप्रकाश टीकया चोपेते भागवते द्वितीयस्कन्धः समाप्तः ॥ २ ॥

अथ श्रीधरीयटीकया वंशीधरशर्मकृततद्भावार्थदीपिकाप्रकाशटीकया
चोपेते श्रीमद्भागवते तृतीयस्कन्धः प्रारभ्यते ॥

## तृतीयस्कंधः


परीक्षिती.
शुक.
विदुर.
मैत्रेय.
शेष.
सनत्कुमार.
ब्रह्मा.
शेषशायी
लक्ष्मी.
स्वायंभु
शतरूपा.
कश्यप.
दिति.
जयविजय.
विष्णु.
सनत्कुमार
वराह.
हिरण्याक्ष.
कर्दमऋ.
कपिल.

श्रीगणेशाय नमः ॥ श्रीशुक उवाच ॥ एवमेतत्पुरा पृष्टो मैत्रेयो भगवान्किल ॥ क्षत्त्रा वनं प्रविष्टेन त्यक्त्वा स्वगृहमृद्धिमत् ॥ १ ॥ यद्वा अयं मंत्रकृद्वो भगवानखिलेश्वरः ॥ पौरवेंद्रगृहं हित्वा प्रविवेशात्मसात्कृतम् ॥ २ ॥ राजोवाच ॥ कुत्र क्षत्तुर्भगवता मैत्रेयेणाऽऽस संगमः ॥ कदा वा सहसंवाद एतद्वर्णय नः प्रभो ॥३॥ न ह्यल्पार्थोदयस्तस्य विदुरस्याऽमलात्मनः ॥ तस्मिन्वरीयसि प्रश्नः साधुवादोपबृंहितः ॥ ४ ॥

श्रीगणेशाय नमः ॥ नमो भगवते वासुदेवाय ॥ ॥ तृतीये तु त्रयस्त्रिंशदध्यायैः सर्गवर्णनम् ॥ ईशेक्षया गुणक्षोभात्सर्गो ब्रह्मांडसंभवः ॥ १ ॥ तत्र तु प्रथमेऽध्याये बंधून्हित्वा गतायुषः ॥ निर्गतस्योद्धवेनादौ संवादः क्षत्तुरुच्यते ॥ २ ॥ भगवद्ब्रह्मसंप्रोक्तं संक्षिप्तं वर्णितं पुरा ॥ प्राह भागवतं शेषप्रोक्तं विस्तरतः पुनः ॥ ३ ॥ द्वेधा हि श्रीमद्भागवतसंप्रदायप्रवृत्तिः एकतः संक्षेपतः श्रीनारायणब्रह्मनारदादिद्वारेण अन्यतस्तु विस्तरतः शेषसनत्कुमारसांख्यायनादिद्वारेण तत्र द्वितीये श्रीनारायणब्रह्मसंवादेन संक्षेपतोऽहमेवासमित्यादिचतुःश्लोक्या श्रीभागवतं निरूपितम् । तदेव ब्रह्मनारदसंवादेन दशलक्षणतया किंचिद्विस्तरेणोक्तम् । तदेव शेषोक्तमतिविस्तरतो वक्तुं तृतीयाद्यारंभः तत्र तृतीये प्रथमं क्षत्तुर्मैत्रेयसंगमश्चतुर्भिरध्यायैः ततोऽष्टभिः सविसर्गः सर्गप्रपंचः ततो विसर्गप्रस्तावेन सप्तभिर्वराहावतारः तत एकेन विसर्गसमाहारः तत्प्रसंगेन चतुर्भिः कपिलावतारः ततो नवभिः कपिलाख्यानमिति त्रयस्त्रिंशद्भिरध्यायैस्तृतीयस्कंधप्रवृत्तिः । तत्र । द्वितीयांते "परिमाणं च कालस्य कल्पलक्षणविग्रहम् ॥ यथा पुरस्ताद्व्याख्यास्ये पाद्मं कल्पमथो शृणु ।" इति प्रतिज्ञातमर्थं विस्तरेण निरूपयितुमितिहासं प्रस्तौति भगवान् शुकः । एवमिति द्वाभ्याम् । ऋद्धिमत्सर्वसंपद्भिः परिपूर्णम् ॥ १ ॥ किंच । अतिश्लाघ्यं त्यागानर्हमित्याह । यद्वै प्रसिद्धं गृहं वः पांडवानां मंत्रकृद्दौत्यकर्ता सन्नयं श्रीकृष्णः बुद्धिसन्निधानादयमिति निर्देशः पौरवेंद्रो दुर्योधनस्तस्य गृहं हित्वाऽनाहूत एव विदुरगृहं प्रविवेश । तत्र हेतुः । आत्मसात्कृतमात्मीयत्वेन गृहीतम् ॥ २ ॥ कुत्र संगम आस बभूव ॥ ३ ॥ वरीयसि श्रेष्ठेऽल्पस्यार्थस्योदयो यस्मात्त

ॐ स्वस्तिश्रीगणेशाय नमः । श्रीकृष्णं सच्चिदानन्दं बल्लवीजनवल्लभम् । वंदे स्वाज्ञानहतये ज्ञानावाप्त्यै सदोद्यतः ॥ १ ॥ इह प्रतिस्कंधकर्त्तव्यंश्रीरामचंद्रनतिरूपं मंगलमवश्यकर्त्तव्यताकत्वेन शास्त्रवर्णनीयसर्गादिदशलक्षणाद्यसर्गलक्षणास्यारब्धत्वात्प्राप्तं लेखकप्रमादादत्र नास्तीति । यद्वा । दुर्ज्ञेयसर्गविचाराकुलत्वात्तद्विस्मृतमितिज्ञेयम् । सर्गलक्षणमाह—ईशेच्छयेति ॥(१)॥ तत्र त्रयस्त्रिंशत्स्वाध्यायेषु गतायुषः नष्टायुर्दायान् (॥२॥३॥) एकतः एकाप्रथमार्थे तसिः । अन्यतोऽन्या द्वितीयेति तत्र द्वयोर्मध्ये द्वितीये स्कंधे तदेव संक्षेपनिरूपितमेव तृतीयादीनां स्कंधानामारंभस्तृतीयाद्यारंभः । तत्र तृतीयादिषु स्कंधेषु ततश्चतुरध्यायोत्तरं तत्रादौ द्वितीयस्कंधाष्टमाध्याये राज्ञा कृतेषु बहुषु प्रश्नेषु श्रीशुको द्वित्रिप्रश्नोत्तरं दत्वा चेतसीति विचारयामास एतत्प्रश्नजातं प्रति एवमेव पुरा भगवांस्त्रिकालदर्शी मैत्रेयः क्षत्त्रा विदुरेण पृष्टः तत्स्वगृहं त्यक्त्वा वनं प्रविष्टेन अग्रिमपद्ये यत्पददर्शनादत्र तदित्यानेयम् ॥ १ ॥ तद्गृहस्यातीव श्रैष्ठ्यमाह—किं चेति । तत्रानाहूतप्रवेशे ॥२॥ एतत्क्षत्तृमैत्रेयसंगमादि । प्रभो स्वामिन् ॥ ३ ॥ विदुरमैत्रेयसंगमेऽन्यसंगमाश्रवणादाह—यद्वेति । इत्यर्थ इति । श्लाघ्यप्रश्नत्वात्तदुत्तरं दत्त

सूत उवाच ॥ स एवमृषिवर्योऽयं पृष्टो राज्ञा परीक्षिता ॥ प्रत्याह तं स बहुवित्प्रीतात्मा श्रूयतामिति ॥ ५ ॥ श्रीशुक उवाच ॥ यदा तु राजा स्वसुतानसाधून् पुष्णन्नधर्मेण विनष्टदृष्टिः ॥ भ्रातुर्यविष्ठस्य सुतान्विबंधून्प्रवेश्य लाक्षाभवने ददाह ॥ ६ ॥ यदा सभायां कुरुदेवदेव्याः केशाभिमर्शं सुतकर्म गर्ह्यम् ॥ न वारयामास नृपः स्नुषायाः स्वास्रैर्हरंत्याः कुचकुंकुमानि ॥ ७॥ द्यूते त्वधर्मेण जितस्य साधोः सत्यावलंबस्य वनागतस्य ॥ न याचतोऽदात् समयेन दायं तमो जुषाणो यदजातशत्रोः ॥ ८ ॥ यदा च पार्थप्रहितः सभायां जगद्गुरुर्यानि जगाद कृष्णः ॥ न तानि पुंसाममृतायनानि राजोरु मेने क्षतपुण्यलेशः ॥ ९ ॥ यदोपहूतो भवनं प्रविष्टो मंत्राय पृष्टः किल पूर्वजेन ॥ अथाह तन्मंत्रदृशां वरीयान्यन्मंत्रिणो वैदुरिकं वदंति ॥ १० ॥

थाभूतो न भवति । साधुवादेन सतामनुमोदनेनोपबृंहितः संवर्धितः । यद्वा । साधोर्मैत्रेयस्य वादेनोत्तरेण श्लाघित इत्यर्थः ॥४॥५॥ त्यागानर्हस्यापि गृहस्य त्यागे हेतुत्वेन कौरवापराधानाह । यदेत्येकादशभिः । एतेषां च तदा स क्षत्ता अयादित्येकादशे क्रियासंबंधः । यविष्ठस्य कनिष्ठस्य पांडोः विबंधून् पितृहीनान् ॥ ६ ॥ कुरुदेवस्य युधिष्ठिरस्य देव्या द्रौपद्याः आत्मनः स्नुषायाः स्वीयैरस्रैरश्रुभिः स्वकुचकुंकुमानि रिपुस्त्रीणां वा तद्भर्तृवधेन हरंत्याः ॥ ७ ॥ सत्यावलंबस्य सत्याश्रयस्य समयेन पूर्वकृतेन दायमंशं याचमानस्य यद्यदा नादान्न ददौ । तमो मोहं जुषाणः पुत्रं सेवमानः अविवेकं वा ॥ ८ ॥ यानि वचनानि पुंसां भीष्मादीनाममृतायनान्यमृतस्राविणि । राजा धृतराष्ट्रो दुर्योधनो वा उरु बहु न मेने क्षतो नष्टः पुण्यलेशो यस्य सः न सुखकीर्तिर्धर्मादिहेतुः किंतु राज्यप्राप्तिमात्रहेतुः पुण्यलेश एवासीत् तस्यापि नष्टत्वादनादृतवानित्यर्थः ॥ ९ ॥ इदानीं विदुरस्यैव कृतं पराभवं दर्शयति । यदेत्यादिषड्भिः । यदा पूर्वजेन धृतराष्ट्रेण मंत्राय चोपहूतोंऽतर्गृहं प्रविष्टो मंत्रं पृष्टः सन्नथानंतरं तदाह । किम् मंत्रिणो

वानिति भावः । तस्मिन्मैत्रेये ॥ ४ ॥ स श्रीशुकः । तं परीक्षितम् । श्रूयतामित्यविवक्षितकर्मकत्वेनाकर्मकत्वाद्भावे लट् ॥ ५ ॥ विदुरस्य तीर्थयात्रानिमित्तमाह–यदा त्विति । एतेषां यदा त्वित्यादीनाम् । राजा धृतराष्ट्रः । स्वसुतान् दुर्योधनादीन् ।असाधूनन्यायवर्तिनः । लाक्षाभवने वारणावतनगरस्थे शणतृणतैलाढ्यलाक्षानिर्मिते । विबंधूनिति । विर्विष्णुर्विदुरो वा बंधुर्हितकर्त्ता येषां ते तान् एकदेशन्यायेन विपदमुभयार्थकम् । यद्वा । विशिष्टः सर्वोत्कृष्टः श्रीकृष्णो विदुरोपि कौरवपुण्यलब्ध इति वक्ष्यमाणत्वात्सर्वोत्कृष्ट एव वा बंधुर्येषां तान् अत्र तुशब्दोऽवधारणे यदातदाशब्दौ तु हेत्वर्थकौ 'यदा तदेति हेत्वर्थे कालार्थेपि च भण्यते' इति । विनष्टदृष्टिर्ज्ञानहीनः॥६॥निमित्तांतरमाह–नृपो धृतराष्ट्रः। देव्याः पट्टाभिषिक्तायाः'देवी कृताभिषेकायाम्' इत्यमरः । सुतस्य दुःशासनस्य कर्म केशाभिमर्शं कबरीभारपरामर्शं गर्ह्यं निंद्यं यदा यतः भ्रातृपुत्राणामपि स्वपुत्रत्वात्स्नुषाया इति द्रौपदीरोदनेन रोदनकारयितृवधूकुचकुंकुमान्यपि धौतानीत्युक्तं पुरस्तात्''पत्न्यास्तवाधिमखक्लृप्तमहाभिषेकश्लाघिष्टचारुकबरं कितवैः सभायाम् । स्पृष्टं विकीर्य पदयोः पतिताश्रुमुख्या यैस्तात्स्त्रियो कृतहतेशविमुक्तकेशाः'' इति ॥ ७ ॥ तृतीयं हेतुमाह–द्यूते त्विति तुरित्यवधारणेऽधर्मेणेत्यनेन संबध्यतेऽधर्मेणैवेत्यर्थः । साधोरिति पितृधनदाययोग्यत्वमाह । साधुत्वे हेतुः । अवलंब आधारयष्टिः दायं स्वप्राप्तियोग्यं पितृधनं मोहं यथार्थज्ञानग्लानिकारणं पुत्रवचः जुषमाणोंगीकुर्वाण इत्यर्थः ॥ ८ ॥ चतुर्थहेतुमाह–अमृतस्राविणि मोक्षादिसकलपुरुषार्थसाधनानि । पार्थेन युधिष्ठिरेण प्रहितः प्रेषितः यानि वचनानि गुरुमात्रस्यापि वचो ग्राह्यमस्ति किमुत जगद्गुरोरिति कैमुत्यसूचनायोक्तं जगद्गुरुरिति । तस्यापि पुण्यलेशस्यापि। इत्यर्थ इति।''वाक्यं शास्त्रगुरूणां न नष्टपुण्यस्य रोचते''इत्यादिपुराणादिति भावः॥९॥ विशेषहेतुं पंचममाह इदानीमिति।मंत्राय स्वकर्त्तव्यालोचनाय ।

अजातशत्रोः प्रतियच्छ दायं तितिक्षतो दुर्विषहं तवाऽऽगः ॥ सहानुजो यत्र वृकोदराहिः श्वसनुषा यत्त्वमलं बिभेषि ॥ ११ ॥ पार्थांस्तु देवो भगवान्मुकुंदो गृहीतवान्स क्षितिदेवदेवः ॥ आस्ते स्वपुर्यां यदुदेवदेवो विनिर्जिताशेषनृदेवदेवः ॥ १२ ॥ स एष दोषः पुरुषद्विडास्ते गृहान्प्रविष्टो ऽयमपत्यमत्या ॥ पुष्णासि कृष्णाद्विमुखो गतश्रीस्त्यजाश्वशैवं कुलकौशलाय ॥ १३ ॥ इत्यूचिवांस्तत्र सुयोधनेन प्रवृद्धकोपस्फुरिताधरेण ॥ असत्कृतः सत्स्पृहणीयशीलः क्षत्ता सकर्णानुजसौबलेन॥१४॥ क एनमत्रोपजुहाव जिह्मं दास्याः सुतं यद्बलिनैव पुष्टः ॥ तस्मिन् प्रतीपः परकृत्य आस्ते निर्वास्यतामाशु पुराच्छ्वसानः ॥ १५ ॥

ऽद्यापि यद्वैदुरिकं विदुरवाक्यँमिति प्रसिद्धं वदंति॥१०॥तदेवाह । अजातशत्रोरिति त्रिभिः । तवागोऽपराधं सहमानस्य दायं प्रति यच्छ देहि यत्रापराधेऽनुजैः सह वर्तमानो वृकोदररूपोऽहिः क्रोधेन श्वसन् वर्तते । यद्यस्मात्त्वमलमत्यर्थं बिभेषि ॥ ११ ॥ ननु मम तादृशाः पुत्रा बहवः संतीति गर्वं मा कुथा इत्याह । पार्थांस्तु मुकुंद आत्मीयत्वेन गृहीतवान् स च देवः तत्रापि भगवान्न तु प्राकृतः।किंच सह क्षितिदेवैर्विप्रैर्देवैश्चेंद्रादिभिर्वर्तमानः यतोऽसौ तत्रैव विप्रा देवाश्चेत्यर्थः ।स च स्वपुर्यामेव सुखमास्ते नत्वन्यत्र गतः । किंच यदुदेवानां देवः पूज्यः यतोऽसौ तत्रैव यदुप्रवीरा इत्यर्थः । किंच नृदेवेषु मंडलेश्वरेषु दीव्यंति प्रकाशंत इति नृदेवदेवा राजानो विनिर्जिता अशेषा नृदेवदेवा येन यतोऽसौ तत्रैव सर्वे राजानः अतः पार्थानां दायं देहीति ॥१२॥ दुर्योधनस्तन्न मन्यत इति चेदत आह। स एष मूर्तो दोष एव गृहान्प्रविष्ट आस्ते । दोषत्वे हेतुः । पुरुषद्विट् श्रीकृष्णद्वेष्टा कोऽसौ यं त्वमपत्यमत्या पुष्णासि न त्वपत्यमसा न पतत्यस्मादिति ह्यपत्यं प्राहुः । गता श्रीर्यस्मात्स त्वमित्याक्रोशति । अत एनमशैवममंगलमाशु त्यज कथं पुत्रस्त्याज्यस्तत्राह । कुलस्य कौशलाय । 'त्यजेदेकं कुलस्यार्थे 'इति हि न्यायः ॥१३॥ इत्यूचिवानेवमुक्तवान् असौ क्षत्ता विदुरः सतां स्पृहणीयं शीलं यस्य स कर्णदुःशासनशकुं निसहितेन दुर्योधनेनासत्कृतस्तिरस्कृतः ॥ १४ ॥ तिरस्कारमाह । क इति दासीसुतो ह्यत्राह्वाननार्हः । जिह्मश्च कुटिलः । जिह्मतामाह यस्य बलिनाऽन्नेन

किलेति । श्रीकृष्णे संधिकार्यमकृत्वैवोपप्लाव्यं गते सत्युपहूत इत्याह मंत्रिणो हिताहितविचारनिपुणाः ॥१० ॥ तदेव विदुरवाक्यमाह—वृकोदरो भीमः यस्माद्भीमात्॥११॥गर्वितं प्रत्याह—पार्थांस्त्विति । आत्मत्वेन मदीया एते इत्येवं स्वीकृतवान् । तत्रापि देवेष्वपि भगवान् सर्वशक्तियुतः प्राकृतः देवतांतरसमः कारणांतरमाह । किंचेति। क्षितिदेवा विप्राः यतो यत्रासौ कृष्णः । इत्यर्थ इति :। स्वस्वामित्वेन देवा विप्राश्चापि तमेवाश्रिता इति भावः । स कृष्णः स्वपुर्यां द्वारकायां कारणांतरमाह—किंचेति । यदुदेवानां यदुवीराणांम् । इत्यर्थ इति । यदुवंशनाथत्वादिति भावः । कारणांतरमाह । अतः सर्वथाबलित्वात् ॥ १२ ॥ तद्राज्यदानम् । अतः श्रीरक्षणाद्धेतोः । एनं दुर्योधनम् । ''श्वःश्रेयसं शिवं भद्रम्'' इत्यमरः । शिवमेव शैवं तद्भिन्नमशैवममंगलरूपम् । अत्राक्षिपति कथमिति :। न्यायप्रतिपादकं समग्रश्लोकं पठति ''त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्'' इति चाणक्यः ॥ १३ ॥ इति शब्दोत्र प्रकारवचनः एवं प्रकारं बहु । तत्र मंत्रप्रदानसमये । स्फुरणं संचलनम् ॥ १४ ॥ मंत्रे दासीसुतः सर्वथा नानेयस्तस्याशुचित्वात् । तदुक्तं मनुना

स इत्थमत्युल्बणकर्णबाणैर्भ्रातुः पुरो मर्मसु ताडितो ऽपि ॥ स्वयं धनुर्द्वारि निधाय मायां गतव्यथोऽयादुरु मानयानः ॥ १६ ॥ स निर्गतः कौरवपुण्यलब्धो गजाह्वयात्तीर्थपदः पदानि ॥ अन्वाक्रमत्पुण्यचिकीर्षयोर्व्यां स्वधिष्ठितो यानि सहस्रमूर्तिः ॥ १७ ॥ पुरेषु पुण्योपवनाद्रिकुंजेष्वपंकतोयेषु सरित्सरस्सु ॥ अनंतलिंगैः समलंकृतेषु चचार तीर्थायतनेष्वनन्यः ॥ १८ ॥ गां पर्यटन्मेध्यविविक्तवृत्तिः सदाप्लुतोऽधःशयनोऽवधूतः ॥ अलक्षितः स्वैरवधूतवेषो व्रतानि चेरे हरितोषणानि ॥ १९ ॥

पृष्टस्तस्मिन्नेव प्रतीपः प्रतिकूलः परेषां कार्ये वर्तते । अतः पुरान्निर्वास्यताम् । श्वसानः श्वसन् जीवमात्रशेष इत्यर्थः । पाठांतरे श्मशानवदमंगलः ॥ १५ ॥ अत्युल्बणैः कर्णयोर्बाणवत्प्रविशद्भिः परुषवाक्यैर्मर्मसु ताडितोऽपि गतव्यथः । तत्र हेतुः । मायामुरु बहु मानयन्नहो मायाया माहात्म्यमिति तामेव तत्र हेतुं मन्यमानस्तन्निःसारणात्पूर्वं स्वयमेवायान्निर्जगाम किं कृत्वा एते नूनं मरिष्यंति किं धनुषेति तस्य द्वारि धनुर्निधाय । यद्वा । भीमादिभिः संगत्यास्माभिर्योत्स्यतीति माशंकीति धनुर्निधानम् ॥ १६ ॥ ततो निर्गतस्य तीर्थाटनप्रकारमाह । स इत्यष्टभिः । स गजाह्वयान्निर्गतः सन् तीर्थं पादौ यस्य तस्य हरेः पदानि क्षेत्राणि पुण्यचिकीर्षयान्वाक्रमत् प्रत्यपद्यत । कौरवाणां पुण्येन लब्ध इति तेषां भाग्यमेव तेन रूपेण गतमिति सूचितम् । उर्व्यां सहस्रमूर्तिर्ब्रह्मरुद्राद्यनेकमूर्तिः संस्तीर्थपात् यानियान्यधिष्ठाय स्थितस्तानितानि जगामेत्यर्थः ॥ १७॥ पुण्यानि यान्युपवनादीनि तेषु कुंजं लतादिगूढस्थानं अपंकानि तोयानि येषां तेषु सरित्सरस्सु च तीर्थेष्वायतनेषु क्षेत्रेषु च कीदृशेषु अनंतस्य लिंगैर्मूर्तिभिः सम्यगलंकृतेषु । अनन्य एकाकी ॥ १८ ॥ किंच गां पर्यटन् व्रतानि चेरे आचरत् । मेध्या पवित्रा विविक्ताऽसंकीर्णा वृत्तिर्जीविका यस्य । सदाप्लुतः प्रतितीर्थं स्नातः ।

"सर्वेषां तु विशिष्टेन ब्राह्मणेन विपश्चिता । मंत्रयेत परं मंत्रं राजा षाड्गुण्यसंयुतम्" । किं च "अन्यानपि प्रकुर्वीत शुचीन्प्राज्ञानवस्थितान् । सम्यगर्थसमाहर्तॄनमात्यान्सुपरीक्षितान्" इति । बलिनाऽपवर्जितान्नेन परेषामस्मच्छत्रूणां पांडवानाम् । अतः परकार्यवर्तित्वात् । इत्यर्थ इति । सर्वस्वमस्यापहृत्य निष्कास्यतामयमिति भावः । पाठांतरे श्मशान इति पाठे ॥ १५ ॥ स विदुरः । अत्युल्बणैरतीव कठोरैः । तत्र गतव्यथत्वे । तामेव तत्र परुषोक्तौ तत्कृतनिस्सारणात् तस्य दुर्योधनस्य ननु तस्य द्वारे धनुः कुतो न्यस्तं तत्पातोऽन्यत्र कुतो न कृत इति तन्निरीक्षणेन तच्छंकापनोदार्थमेव तत्र न्यस्तवानित्याह–यद्वेति । अनेन मा शंकीति भ्रातुः पुर इत्यनेनाविक्षेपोत्कर्षः सूचितः ॥ १६ ॥ ततो हस्तिनापुरतः । स विदुरः । तानि जगामेत्यर्थः । यद्वा । यानीति वीप्सया व्याख्येयं यानियानि तत्तुल्ययोगक्षेमत्वात्तत्पदेपि तानितानीति ॥ १७ ॥ पुण्यानि पवित्राणि उपपदमत्र न स्वार्थपरं तेनोपवनानि वनानि वृंदावनादीनि । पुण्याद्रयो गोवर्द्धनादयः । पुण्यकुंजाश्च श्यामाकुंजादयो वृंदावनाद्यंतर्गताः कुंजाः अपंकानि अकर्दमानि सरितो नर्मदाद्याः सरांसि पंपासरोवरादीनि तीर्थेषु पुष्करादिषु क्षेत्रेषु कुरुक्षेत्रादिषु । अनंतस्य हरेः अनेन हरिमूर्तीनामनंतभेदाः संतीत्युक्तम् ॥१८॥ अन्यदाह किंचेति । हरितोषणानीति व्रतानामुद्देश्य देवतावशीकरणसमर्थत्वेन व्रतशब्दनिर्वचनसूचितं वृञ् वरणे इति धातोर्व्रियतेऽनेनैतदित्यस्मिन्नर्थे व्रतमिदं रूपं सिध्यति बाहुलकात्।अत एव वल्कलादिधारित्वादेव"यो विलंघ्याश्रमान्वर्णानात्मन्येव स्थितः पुमान्।अतिवर्णाश्रमो योगी अवधूतः स कथ्यते"इति शिष्टगतोक्तेः ॥१९॥

इत्थं व्रजन्भारतमेव वर्षं कालेन यावद्गतवान् प्रभासम् ॥ तावच्छशास क्षितिमेकचक्रामेकातपत्रामजितेन पार्थः ॥२०॥ तत्राथ शुश्राव सुहृद्विनष्टिं वनं यथा वेणुजवह्निसंश्रयम् ॥ संस्पर्धया दग्धमथानुशोचन्सरस्वतीं प्रत्यगियाय तूष्णीम् ॥२१॥ तस्यां त्रितस्योशनसो मनोश्च पृथोरथाग्नेरसितस्य वायोः ॥ तीर्थं सुदासस्य गवां गुहस्य यच्छ्राद्धदेवस्य स आसिषेवे ॥ २२ ॥ अन्यानि चेह द्विजदेवदेवैः कृतानि नानायतनानि विष्णोः ॥ प्रत्यंगमुख्यांकितमंदिराणि यद्दर्शनात् कृष्णमनुस्मरंति ॥ २३ ॥ ततस्त्वतिव्रज्य सुराष्ट्रमृद्धं सौवीरमत्स्यान्कुरुजांगलांश्च ॥ कालेन तावद्यमुनामुपेत्य तत्रोद्धवं भागवतं ददर्श ॥ २४ ॥ स वासुदेवानुचरं प्रशांतं बृहस्पतेः प्राक्तनयं प्रतीतम् ॥ आलिंग्य गाढं प्रणयेन भद्रं स्वानामपृच्छद्भगवत्प्रजानाम् ॥२५॥ कच्चित्पुराणौ पुरुषौ स्वनाभ्यपाद्मानुवृत्त्येह किलाऽवतीर्णौ ॥ आसात उर्व्याः कुशलं विधाय कृतक्षणौ कुशलं शूरगेहे ॥२६॥

अधः शयनं यस्य अवधूतोऽसंस्कृतदेहः अवधूतवेषो वल्कलादिधारी अत एव स्वैरलक्षितः ॥ १९ ॥ एकस्यैव चक्रं सैन्यं यस्याम्। एकमेव राजचिह्नं श्वेतातपत्रं यस्यां ताम् । अजितेन श्रीकृष्णेन सहायेन ॥ २० ॥ तत्र प्रभासे परस्परस्पर्धया निमित्तभूतया सुहृदां कौरवाणां विनाष्टिं विनाशमशृणोत् । परस्परनाशे दृष्टांतः । वेणुजं वह्निं संश्रयते यद्वनं तद्यथा दग्धं भवति तथा प्रत्यगुद्गमाभिमुखम् ॥ २१ ॥ त्रितादीनामेकादश तीर्थानि तत्तन्नाम्ना प्रसिद्धान्यासेवितवान् ॥ २२ ॥ द्विजदेवैर्ऋषिभिर्देवैश्च कृतानि अंगमंगं प्रति वर्तत इति प्रत्यंगान्यायुधानि तेषु मुख्यं चक्रं तेनांकितानि मूर्धनि हेमकुंभेषु चिह्नितानि मंदिराणि येषु तानि नानाविधानि विष्णोरायतनानि क्षेत्राणि तीर्थानि चासिषेवे । येषां चक्रांकितमंदिरवतां दर्शनाच्छ्रीकृष्णस्मरणं भवति ॥ २३ ॥ अतिव्रज्यातिक्रम्य यावदुद्धवः प्राप्तस्तावत्स्वयमपि यमुनामुपेत्य ॥ २४ ॥ स विदुरः प्राक्तनयं पूर्वशिष्यं नीतिशास्त्रे । पाठांतरे प्राप्तो नयो नीतिशास्त्रं येन तम् । प्रतीतं प्रख्यातं स्वानां ज्ञातीनां भद्रमपृच्छत् । प्रश्ने हेतुः । भगवतः प्रजानां पोष्याणाम् ॥ २५ ॥ प्रथमं तावद्रामकृष्णयोः कुशलं पृच्छति । कच्चिदिति प्रश्ने । स्वनाभौ भवः स्वनाभ्यः पाद्मो ब्रह्मा तस्यानुवृत्त्या प्रार्थनयेहावतीर्णौ कुशलमासाते वर्तेते । कृतक्षणौ

भारतमेवेति । कर्मभूमित्वादन्यत्र न गत इति सूचनायैवकारः ॥ २० ॥ अथ प्रभासगमनोत्तरम् । अथ सुहृद्विनष्ट्युत्तरम् । उद्गम आविर्भावस्तस्य संमुखं यस्मिंस्तद्यथा भवति तथा । यत्र सरस्वत्या आविर्भावो जातस्तत्र ययावित्यर्थः । तीर्थविश्वनाथौ तु प्रत्यक् सरस्वतीं पश्चिमवाहिनीं सरस्वतीमिति जगदतुः ॥२१॥ तस्यां सरस्वत्यां त्रितस्यर्षेः सुदासस्य राज्ञः । स विदुरः ॥२२॥ इह सरस्वतीतटे मूर्द्धन्यहेमकुंभेषु उपरिष्ठस्वर्णकलशेषु आयतनानां दर्शनात्॥२३॥ततः सरस्वतीतटात् प्रभासक्षेत्रमगात्। सुराष्ट्रो देशः ऋद्धदेशातिक्रमे तीर्थस्नेहाधिक्यहेतुः। सौवीरो देशविशेषः। यद्वा। सुवीराणां सत्पुरुषाणां समूहः सौवीरं तन्मुख्यं येषु तान्कुरुजांगलान् हरिभक्तिप्रधानपुरुषवत इत्यर्थः । तत्र यमुनातटे ॥ २४ ॥ तनोति वंशमिति तनयस्तं वंशो हि द्विधा विद्यया जन्मना च विद्यया शिष्यः जन्मना पुत्रः'शिष्ये पुंत्रे तथा वैश्ये तनयः परिकीर्तितः' इति निरुक्तिः । पाठांतरे प्राप्तनयमिति पाठे पोष्याणां पाल्यानाम् ॥ २५ ॥ तावद्वाक्यालंकारे पोष्यकुशलं पोषककुशलाधीनमतः प्रथमं तदेव प्रष्टव्यमित्याशयेन स्वामिचरणैरुक्तं प्रथमं तावदिति । दत्तावसरौ भूभारापाकरणेन दत्तसुखसमयौ लोकानां स्वस्वकार्यकुलत्वाद्दत्तावसरत्वासंभवमिव मन्वान आह । कृतोत्सवौ वेति तच्छत्रूणामपि वैकुंठाद्यवाप्तेः सर्वेषामित्युक्तं स्वामिना'क्षणः पर्वोत्सवव्यापारेषु मानेप्यनेहसः' इति मेदिनी । तयो रामकृष्णयोरीश्वरत्वात्सदा कुशलत्वेपि । उक्तवि

कच्चित् कुरूणां परमः सुहृन्नो भामः स आस्ते सुखमंग शौरिः ॥ यो वै स्वसॄणां पितृवद्ददाति वरान्वदान्यो वरतर्पणेन ॥ २७ ॥ कच्चिद्वरूथाधिपतिर्यदूनां प्रद्युम्न आस्ते सुखमंग वीरः ॥ यं रुक्मिणी भगवतोऽभिलेभे आराध्य विप्रान्स्मरमादिसर्गे ॥ २८ ॥ कच्चित्सुखं सात्वतवृष्णिभोजदाशार्हकाणामधिपः स आस्ते ॥ यमभ्यषिंचच्छतपत्रनेत्रो नृपासनाशां परिहृत्य दूरात् ॥ २९ ॥ कच्चिद्धरेः सौम्य सुतः सदृक्ष आस्तेऽग्रणी रथिनां साधु सांबः ॥ असूत यं जांबवती व्रताढ्या देवं गुहं योंऽबिकया धृतोऽग्रे ॥ ३० ॥ क्षेमं स कच्चिद्युयुधान आस्ते यः फाल्गुनाल्लब्धधनूरहस्यः ॥ लेभेंऽजसाऽधोक्षजसेवयैव गतिं तदीयां यतिभिर्दुरापाम् ॥ ३१ ॥

दत्तावसरौ सर्वेषां कृतोत्सवाविति वा । तयोर्नित्यकुशलत्वेऽप्युक्तविशेषणविशिष्टौ शूरसेनस्य गृहे कच्चिदासाते इति प्रश्नः ॥ २६ ॥ यदूनां कुशलं पृच्छति कच्चिदिति नवभिः । भामः पूज्यः शौरिर्वसुदेवः । यद्वा भामो भगिनीभर्ता कुंती वसुदेवस्य भगिनी अतो देवकी पांडोर्भगिनीति लोकव्यवहारः । वरानर्थान् वदान्योऽत्युदारः वराणां तत्पतीनां तर्पणेन संतर्पणेन सह ॥ २७ ॥ वरूथाधिपतिः सेनानीः आदिसर्गे पूर्वजन्मनि स्मरं कामं संतमभिलेभे पुत्रं लब्धवती ॥ २८ ॥ सात्वतादीनामधिप उग्रसेनः शतपत्रनेत्रः श्रीकृष्णः नृपासनाशां राज्याभिलाषं परिहृत्य प्राणभयेन दूरात्स्थितमित्यर्थः ॥ २९ ॥ हे सौम्य हरेः सुतस्तेन सदृशः साधु सुखमास्ते गुहं स्वामिकार्तिकेयं अग्रे पूर्वजन्मनि यो भवान्या गर्भे धृतस्तम् ॥ ३० ॥ युयुधानः सात्यकिः क्षेमं कुशलमास्ते । फाल्गुनादर्जुनाल्लब्धं धनुषो रहस्यं येन । तदीयामधोक्षजसंबंधिनीम् ॥ ३१ ॥

शेषणविशिष्टौ सर्वलोकदत्तोत्सवत्वविशिष्टरूपेण कुशलप्रश्नः । सौहार्देन वेति मां प्रतिभाति ॥ २६ ॥ "भामस्तु भगिनीभर्ता दीप्तः पूज्यश्च क्रोधनः" इति निरुक्तिः । पूज्यत्वमन्येषामप्यस्तीति चेदाह—यद्वेति । अतो लोकव्यवहारत्वात् । एतद्व्यवहारस्याप्रसिद्धत्वात्प्रसिद्धार्थमाह । वसुदेवस्य पौरव्या रोहिण्याः पतित्वाद्भामत्वं प्रसिद्धं तदुक्तं हरिवंशे "पौरवी रोहिणी नाम बाह्लीकस्यात्मजाभवत् । ज्येष्ठा पत्नी महाराज दयिताऽनकदुंदुभेः" इति।यद्यपि रोहिण्याश्शंतनुभ्रातृबाह्लीकपुत्रीत्वेन विचित्रवीर्यभगिनीत्वमायाति तथापि पितृपुत्रयोरभेदोपचाराद्विदुरस्यापि कथंचिद्भगिनीत्वं ज्ञेयमिति तत्पतीनां स्वसृपतीनां "वरो जामातरि श्रेष्ठे दक्षिणासहजापयोः" इति सहजां पातीति सहजापः ॥२७॥ विप्रानाराध्येति नरलीलाप्रदर्शितः । स्मरमिति । स्मरस्तस्मिन्प्रविष्टो ज्ञेयोऽन्यथा तस्य साक्षाद्भगवच्चतुर्थव्यूहता न सेत्स्यति एतच्च श्रीकृष्णे नारायणप्रवेशादेव वसुदेवगृहे नारायणोऽवतीर्ण इतिवद्ज्ञेयमन्यथा 'नारायणोंगं नरभूजलायनात्' इत्युक्तिर्न सेत्स्यतीति एवं शेषवसुगुहादिप्रवेशो बलदेवोद्धवसांबादिषु ज्ञेय इति । अंशांशिनोरभेदोक्त्युपचारात्॥२८॥इत्यर्थ इति । कंसो मम प्राणान्हरिष्यतीति भयेन राज्याशां परिहृत्य दूरास्थितं यमुग्रसेनं कृष्णोऽभ्यषिञ्चत्स इति भावः । यद्वा । शतपत्रनेत्र एव शापभयेन स्वयं नृपासनस्याशां दिशमपि त्यक्त्वा यमभ्यषिञ्चदित्यन्वयः ॥२९॥तेन हरिणा योंऽबिकया धृत एव न तु ततो जातस्तर्हि—रतिप्रवृत्तशिवयोस्तद्वारणाय देवप्रेषिताग्निना तद्रेतो गृहीत्वा तदसह्यंमत्वा गंगायै दत्तं तयापि तथा मत्वा शरवणे क्षिप्तं तत्र स बालको भूत्वा रुरोद तदा पतित्यक्तार्षिपत्नीभिस्तन्मुखस्तनदाने कृत्तिकारूपाभिर्मतो धृतं स तदैव षण्मुखोऽभूत्तद्वृत्तं नारदाद्यैरुमायै प्रोक्तं तच्छ्रुत्वा तमानाय्य धारयामासेति साधूक्तं धृतोंबिकयाग्रे विस्तृतमेतद्वृत्तं श्रीभारतादौ ॥ ३० ॥ यतिभिर्यत्नशीलैः प्रष्टव्ये ज्ञानाधिक्यं भगवत्प्रियत्वं च हेतुरेवमोपेग्रि

कच्चिद्बुधः स्वस्त्यनमीव आस्ते श्वफल्कपुत्रो भगवत्प्रपन्नः ॥ यः कृष्णपादांकितमार्गपांसुष्वचेष्टत प्रेमविभिन्नधैर्यः ॥ ३२ ॥ कच्चिच्छिवं देवकभोजपुत्र्या विष्णुप्रजाया इव देवमातुः ॥ या वै स्वगर्भेण दधार देवं त्रयी यथा यज्ञवितानमर्थम् ॥३३॥ अपिस्विदास्ते भगवान्सुखं वो यः सात्वतां कामदुघोऽनिरुद्धः ॥ यमामनंति स्म ह शब्दयोनिं मनोमयं सत्त्वतुरीयतत्त्वम् ॥ ३४ ॥ अपिस्विदन्ये च निजात्मदैवमनन्यवृत्त्या समनुव्रता ये ॥ हृदीकसत्यात्मजचारुदेष्णगदादयः स्वस्ति चरंति सौम्य ॥ ३५ ॥

श्वफल्कपुत्रोऽक्रूरः बुधो विद्वान् अतो भगवंतं प्रपन्नोऽनुसृतः अत एवानमीवो निष्पापः । भक्तौ लिंगं योऽचेष्टत व्यलुठत् । प्रेम्णा विभिन्नं विदीर्णं धैर्यं यस्य सः स्वस्ति क्षेममास्ते ॥ ३२ ॥ देवकनामा यो भोजस्तस्य पुत्र्याः । देवक्याः विष्णुः प्रजा पुत्रो यस्यास्तस्या देवमातुरदितेरिव कच्चित् शिवम् । यज्ञवितानरूपमर्थं त्रयी यथा प्रकाशकतःया बिभर्ति तथा दधार ॥ ३३ ॥ सात्वतानामुपासकानां कामान् दोग्धि पूरयतीति कामदुघः । भगवत्त्वे हेतुः । यं शब्दस्य शास्त्रस्य योनिं कारणमामनंति वेदाः । कुतः । मनोमयं मनसः प्रवर्तकम् । तत्कुतः । सत्त्वस्यांतःकरणस्य चतुर्विधस्य तुरीयं तत्त्वं चतुर्थमधिदैवम् । चित्ताहंकारबुद्धिमनसामंतःकरणभेदानां क्रमेण वासुदेवसंकर्षणप्रद्युम्नानिरुद्धा ह्यधिष्ठातारः । मनसश्च शब्दयोनित्वं प्रसिद्धम् । "मनः पूर्वरूपं वागुत्तररूपम्" इति । तथा । "अन्योंऽतर आत्मा मनोमयः" इति प्रस्तुत्य "तस्य यजुरेव शिरः ऋग् दक्षिणः पक्षः सामोत्तरः पक्षः" इत्यादिश्रुतेः । तथा च शिक्षायाम् । "आत्मा बुद्ध्या समेत्यार्थान्मनो युंक्ते विवक्षया ॥ मनः कायाग्निमाहंति स प्रेरयति मारुतम् ॥ मारुतस्तूरसि चरन्मंद्रं जनयति स्वरम् " इत्यादि ॥ ३४ ॥ अपिस्वित् किंस्वित् अन्ये च स्वस्ति चरंति निजस्य देहादिव्यतिरिक्त

ज्ञेयम् ॥ ३१ ॥ अतोविद्वत्वादेव अत एव भगवदनुसृतत्वादेव । धीरस्य भावो धैर्य्यं कृष्णपादाभ्यामंकिता ये मार्गपांशवस्तेषु ॥ ३२ ॥ भोजो भोजवंश्यः देवक्या गर्भधारणं कादाचित्कं त्रय्या अर्थधारणं च सनातनं कथं तन्निदर्शनं स्याद्वैषम्यादिति चेदाह—दृष्टांतदार्ष्टांतिकयोरेकदेशस्य साम्यं यदि स्यात्तन्न दोषाय 'सर्वसाम्ये ह्यसत्यपि' इत्युक्तेः । या देवकी यथा त्रयी यज्ञवितानार्थप्रकाशिकैव न तूत्पादिका तथा देवक्यपि भगवन्मूर्त्तेः प्रकाशिकैव न तूत्पादिका स्वगर्भेण सह वायुपूरितगर्भेण सह यं चेतसा दधार 'काष्ठा यथानंदकरं मनस्तः' इति श्रीदशमे वक्ष्यमाणत्वात् उत्तानार्थस्वीकारो नोचितो यतस्तत्पत्सेविनामपि गर्भवासो नास्ति तस्य तु किमुतात एव गर्भस्थजीवस्तुतौ वक्ष्यति ' भूयो यथा व्यसनमेतदनेकरंध्रं मा मे भविष्यदुपसादितविष्णुपादः'' इति ॥ ३३ ॥ तन्मनःप्रवर्त्तकत्वं मनसः शब्दयोनित्वे प्रमाणमाह—मन इति । श्रुत्यंतरं तथेति स्पष्टार्थत्वान्न व्याख्यातम् । यथा श्रुत्या मनसः शब्दकारणत्वमुक्तं तथा च तथैव । शिक्षायां पाणिनिशिक्षायां इत्यादिरित्यत्रोक्तादिपदेन ''प्रातःसवनयोगं तं छंदो गायत्रमाश्रितम् । कंठे माध्यंदिनयुजं मध्यमं त्रैष्टुभानुगम् । तारं तार्तीयसवनं शीर्षण्यं जागतानुगम् । सोदीर्णो मूर्द्धन्यभिहितो वक्त्रमापद्य मारुतः। वर्णान् जनयते तेषां विभागः पंचधा स्मृतः''इति।अस्यार्थः—आत्मा शरीरेन्द्रियमनोबुद्धिव्यतिरिक्तः बुद्ध्या सहार्थान्बाह्यान्समर्थ्य सम्यगवगम्यार्थप्रत्यायनाय यदि शब्दा उच्चार्य्यन्ते तदा नियुंक्ते मनः वक्तुमिच्छया तच्चात्मनि युक्तं मनः शरीराग्निमाभिमुख्येन हंति प्राप्नोति स च शरीराग्निर्वायुं प्रेरयति उरसि वक्षसि मंद्रं गंभीरं प्रातःसवनेन सह योगोऽस्येति तं तथा च सुयज्ञः मंद्रया वाचा प्रातःसवनमिति गायत्रं छन्दोऽस्य मंद्रस्वरस्याश्रय इति कंठे चरन्वायुर्मध्यमं स्वरं जनयति मध्यंदिनं युनक्तीति माध्यंदिनं सवनभाजं त्रिष्टुप्छंदोनुगामिनामिति । तार्तीयसवनभाजं तारं स्वरं मूर्द्धनि चरन्वायुर्जनयति जागतं छंदोऽनुगच्छतीति तथा तं शीर्षण्यं शिरसिभवं ''शीर्षश्छंदसि'' इति शिरसः शीर्षादेशः । स वायुरुदीर्ण ऊर्द्ध्वगतः मूर्द्धानं यावदुपरितनां गतिमलभमानः शिरःकपालेनावष्टब्धत्वात्पुनः प्रत्यावृत्य वक्त्रमेवाभिपद्य वर्णान् जनयति तेषां वर्णानां विभागो वक्ष्यमाणरीत्या पंचधेति ॥ ३४ ॥ आत्मनो देहादिव्यतिरिक्तत्वं तु द्रष्टा हि दृश्याद्व्यतिरिक्तो भवति प्रयोजकत्वात् । बुद्ध्यादीनि

अपि स्वदोर्भ्यां विजयाच्युताभ्यां धर्मेण धर्मः परिपाति सेतुम् ॥ दुर्योधनोऽतप्यत यत्सभायां साम्राज्यलक्ष्म्या विजयानुवृत्त्या ॥३६॥ किं वा कृताघेष्वघमत्यमर्षी भीमोऽहिवद्दीर्घतमं व्यमुंचत् ॥ यस्यांघ्रिपातं रणभूर्न सेहे मार्गं गदायाश्चरतो विचित्रम् ॥ ३७ ॥ कच्चिद्यशोधा रथयूथपानां गांडीवधन्वोपरतारिरास्ते ॥ अलक्षितो यच्छरकूटगूढो मायाकिरातो गिरिशस्तुतोष ॥ ३८ ॥ यमावुतस्वित्तनयौ पृथायाः पार्थैर्वृतौ पक्ष्मभिराक्षिणीव ॥ रेमात उद्दाय मृधे स्वरिक्थं परात्सुपर्णाविव वज्रिवक्त्रात् ॥ ३९ ॥

स्यात्मनो दैवं श्रीकृष्णमनन्यवृत्त्या एकांतभक्तिभावेन ये सम्यगनुव्रता अनुसृताः । हृदीकश्च सत्यभामाया आत्मजश्च चारुदेष्णश्च गदश्चादिर्येषां तेऽपि॥ ३५ ॥ इदानीं कुरूनपृच्छति षड्भिः । अपि किम् । स्वदोर्भ्यां स्वबाहुवद्वर्तमानाभ्यां विजयाच्युताभ्यामर्जुनकृष्णाभ्यां धर्ममार्गेण धर्मो युधिष्ठिरः सेतुं धर्ममर्यादां परिपाति । यस्य सभायां विजयानुवृत्त्या जयपरंपरयार्जुनस्य सेवयेति वा एवंभूतं यस्यैश्वर्यमित्यर्थः ॥ ३६ ॥ कृताघेषु स्वकर्तृकमघं दीर्घतमं बहुकालानु चिंतितमहिवदत्यमर्षी भीमः किं व्यमुंचन्नो वा । गदाया विचित्रं विविधं मार्गं चरतः ॥ ३७ ॥ रथयूथपानां मध्ये यशोधाः कीर्तिधारी यद्वा स्वीयानां तेषां कीर्तिप्रदः उपरता अरयो यस्मात् यस्य शरकूटेन बाणसमूहेन गूढ आच्छन्नः ॥ ३८ ॥ उतस्वित्किंस्वित् यमौ नकुलसहदेवौ रेमाते क्रीडात इत्यर्थः । माद्र्याः सुतावपि पृथायास्तनयौ पृथायाः पुत्रैर्वृतौ

कर्तृप्रयोज्यानि करणत्वात्कुठारवदिति प्रयोगात्।“अग्निहोत्रं जुहुयात्स्वर्गकामः” इत्यादिश्रुतेः स्वर्गादिफलसाधनानि कर्माणि श्रूयंते स्वर्गश्च । न च शरीरोपभोग्य इति तद्व्यतिरिक्त आत्मा शरीरादेः । “तस्य हैतस्य हृदयाग्रं प्रद्योतने तेन प्रद्योतते नैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः”।इति शरीरापक्रमणा च शरीरादिव्यतिरिक्त आत्मा छांदोग्येपि“एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिःस्वरूपं संपद्य स्वेन रूपेणाभिनिष्पद्यते” इति शरीराद्व्यतिरिक्त एवात्मेति बहुश उक्तं द्वितीयस्कंधेप्येतत्साधितमग्रेऽपि साधयिष्याम इति ॥ ३५ ॥ किमिति प्रश्ने महाभारते कर्णादिभ्यो युधिष्ठिरपराजयस्यापि श्रुतत्वादाह—अर्जुनस्येति । “विजयो वानरध्वजः” इत्यर्जुननामापि विजयः । इत्यर्थ इति । अहो साक्षान्नरनारायणौ यस्याज्ञाकारिणौ कस्तस्मादधिकैश्वर्यवान्न कोपीति भावः । यद्वेतरराजकर्तृकयाऽर्जुनस्य सेवयेत्यर्थः ॥३६॥ अघं रोषम् ‘अघो रोषेपि कीर्तितः’ इति तीर्थः । किमिति वितर्के अत्यमर्षी अतीवक्रोधी ॥ ३७॥ कीर्तिधारी बहुरथयूथपजेतृत्वात् । बहुरथयूथपजेतारोऽन्येप्यश्वत्थामादयस्संतीति चेदाह—यद्वेति । तेषां रथयूथपानां स्वयं जित्वा यूथपजयमुद्बोधयतीत्यर्थः ॥ ३८ ॥ सुपर्णाविवेति स्वातंत्र्यमाह इत्यर्थ इति । तयोः सौभ्रात्रमस्तीति भावः । गरुड इत्याध्याहारगौरवादाह।यद्वेति । दृष्टांते द्वित्वं दार्ष्टांतिकापेक्षम् । अभूतोपमालंकारः मुखोद्धृतस्योच्छिष्टत्वेन ग्रहणायोग्यत्वेपि सिंहास्यादुद्धृत वास्त्वातिवत् । वज्रीवक्त्रादितिप्रयोगस्तु लौकिकव्यवहारापेक्षः वस्तुतस्तु इंद्रसमीपात् । यद्वा वज्रीवक्त्रं प्रधानं यत्र स वज्रिवक्त्रो देवसमूहस्तस्मात् । ‘वक्त्रं मुख्यास्ययोरपि’ इति धरणिः तत्कथमानीतमित्याकांक्षोपशमनायात्र भारतीयं गाथानुसंधेया तथा हि—कद्रूविनता चैते दाक्षायिण्यौ कश्यपभार्ये कश्यपाद्गर्भं गृहीत्वांडानि सुषुवाते कद्रूर्हि पूर्वमेव स्वीयांडानि विभिद्यात्मजान्सर्पाल्लालयामास विनतां प्रति कश्यपेनोक्तं तव अंडे भविष्यतस्ते च सहस्रवर्षादर्वाक्तया न भेत्तव्ये सा चैवं जानंत्यपि कद्रूपुत्रान्वीक्ष्यैकमंडं विभेद पंचशतवर्षांते तन्मध्यतोऽनूरुर्जातः स च जातमात्रो मातरं शशाप यतस्त्वयाऽपूर्णांगस्य ममांडं विभिन्नमतस्त्वं दासी भविष्यसीति । किं च द्वितीयं मम भ्रातुरंडं त्वया न भेत्तव्यमवधेः प्राक् तया तथैव कृतं ततो वर्षसहस्रांते द्वितीयांडाद्गरुडो बभूव स च महाबल्यास । किञ्च कदाचित्कद्रूविनतयोर्विवादोऽभूत्—सूर्याश्वपुच्छा हरिद्वर्णाः कृष्ण

अहो पृथाऽपि ध्रियतेऽर्भकार्थे राजर्षिवर्येण विनाऽपि तेन ॥ यस्त्वेकवीरोऽधिरथो विजिग्ये धनुर्द्वितीयः ककुभश्चतस्रः ॥ ४० ॥ सौम्यानुशोचे तमधः पतंतं भ्रात्रे परेताय विदुद्रुहे यः ॥ निर्यापितो येन सुहृत्स्वपुर्या अहं स्वपुत्रान्समनुव्रतेन ॥ ४१ ॥ सोऽहं हरेर्मर्त्यविडंबनेन दृशो नृणां चालयतो विधातुः ॥ नान्योपलक्ष्यः पदवीं प्रसादाच्चरामि पश्यन्गतविस्मयोऽत्र ॥ ४२ ॥

सुपर्णाविव रेमाते । किं कृत्वा पराहुर्योधनात्स्वरिक्थं स्वीयं राज्यमुद्दाय आच्छिद्य वज्रिवक्त्रादिंद्रस्य मुखात्स्वरिक्थममृतं गरुड इवेति । यद्वा । सुपर्णाविवेति । यदि द्वौ गरुडावमृतमानयेतां तर्हि तद्वत् । अक्षिणीवेति मणीवादिगणत्वात्संधिः ॥ ३९ ॥ पृथायाः किं नु कुशलं पृच्छेयम् । यतस्तस्याः पांडुना विना प्राणधारणमेवाश्चर्यमित्याह। अहो इति । ध्रियते जीवति न चात्याश्चर्यम् । यतोऽर्भकार्थे ध्रियते न भोगार्थं तथापि त्वाश्चर्यमेवेत्याह । तेन तथाभूतेन विना । तदेवाह । यस्त्विति । धनुरेव द्वितीयं सहायो यस्य ॥ ४० ॥ पृथार्भकार्थे जीवतीति युक्तमेवेत्याह । हे सौम्य तं धृतराष्ट्रं जीवंतमनुशोचामि तत्किं अधः पतंतं तत्र हेतुः परेताय मृताय भ्रात्रे पांडवे तत्पुत्रद्रोहेण यो विदुद्रुहे द्रोहं कृतवान् । किंच जीवतोऽपि भ्रातुर्ममापकृतवानित्याह । येन सुहृद्भ्राताहं स्वपुर्याः सकाशान्निर्यापितो विवासितः ॥ ४१ ॥ अहो खलु विस्मयः जानतोपि तस्यैवं दुश्चेष्टितं यतस्त्वं साधुरपि दुःखं प्रापितोऽसीत्यत आह । सोऽहं हरेः प्रसादात्तस्य पदवीं माहात्म्यं पश्यन् गतविस्मयोऽत्र भूतले नान्योपलक्ष्यो गूढः सन् सुखं विच

वर्णा वेति तत्र विनतयोक्तं हरिद्वर्णाः।कद्र्वा चोक्तं कृष्णवर्णा इति।तच्छ्रुत्वा कद्रूरुवाच यदि कृष्णवर्णाः सूर्याश्वपुच्छास्तर्हि त्वं मे दासी भविष्यसि हरिद्वर्णाश्चेत्तर्हि तवाहं दासी भविष्यामीति ताभ्यां पणः कृतः पुनरन्योन्यं ताभ्यामुक्तं तत्र गत्वा द्रष्टव्यास्ते ततो गमनसमये कद्रूः स्वात्मजान्नागान्प्रोवाच हे पुत्रा यूयं रोमरूपा भूत्वा श्यामीभूय सूर्याश्वपुच्छेषु लग्ना भविष्यथान्यथा सर्वेऽग्नौ धक्ष्यंति मदाज्ञास्वीकारे चाहं विनतादासी न भविष्यामीति ते च तथैव चक्रुः ततस्ते उड्डीय कृष्णवर्णानेव ददृशतुः तदा च विनता कद्रूदासी जाता कदाचिद्गरुडः स्वमातरं नागान्वहंतीं स्वयं च मात्रा सह नागान्वहन् खिन्नः प्रोवाच मातस्त्वं कथं दासी जाता तया स्ववृत्तं यथावदुक्तं गरुडाय सूनवे स च श्रुत्वोवाच मातरेतां त्वमेव पृच्छ कथं मम दासीत्वं नंक्ष्यति सा च तथैव पप्रच्छ तयोक्तं यदि त्वदात्मजो गरुडः स्वर्गान्मदात्मजार्थममृतमानयेत्तदा ते दासीभावो नंक्ष्यत्यन्यथा नेति तया च तच्छ्रुत्वा गरुडायोक्तं स च स्वर्गं गत्वेंद्रादीन्निर्जित्यामृतकलशमानयामास इंद्रश्च गरुडं पप्रच्छ किमर्थं देवभोग्यममृतं मर्त्यलोकं नेष्यसि स उवाच नागार्थं तत इंद्रः प्रोवाच ते तु स्वभावत एव क्रूरा अमृताशनेन ते सर्वे निर्भया जगन्नाशयिष्यंतीति न देयमेतत्तेभ्य इति ततो गरुड आह मया तत्रामृतं नेतव्यमेव न तेभ्यो दाने हठः।किं तु मातृदासीत्वापनयन एव हठोऽतस्त्वया ततः कथंचिदानेयमित्युक्त्वाऽमृतकलशं गृहीत्वा कद्रूं प्रोवाचैतदमृतकलशमानीतं मया मन्मातुर्दासीत्वं गतं तया त्रिरुक्तं गतमिति।तत इंद्रो नागानमृतपाने प्रवृत्तान्विप्रो भूत्वा प्रोवाच नेदमस्नात्वा दानाद्यकृत्वा च पेयं ते च तच्छ्रुत्वा स्नानार्थं गता इंद्रोऽमृतकलशमादाय स्वर्गं ययाविति सर्वं महाभारते प्रथितम्॥ ॥३९॥ अत्राक्षिपति न चेति । तथापि भोगार्थं विनापि अर्भकार्थे युधिष्ठिरादिबालकपालनार्थं यदि युधिष्ठिरादयो नाभविष्यंस्तदा सा मरिष्यदेवेत्यर्थः।तथाभूतेन पांडुना तदेव तथाभूतत्वमेव।रथमधिरूढोऽधिरथः “ द्वितीया तिथिभित्पत्न्योः पूरणे तूभये त्रिषु” इति मेदिनी । ‘द्वितीया सहकारिणी’ इति च कोशांतरम् । ककुभो दिशः ‘दिशश्च ककुभः काष्ठाः’ इत्यमरः ॥ ४० ॥ धृतराष्ट्रं न शोचामि तदधःपतनं शोचामीति । यद्वा पांडुं न शोचामि सद्गत्यर्हत्वात् । धृतराष्ट्रं शोचामि तद्वैपरीत्यादित्याह–सौम्येति । तच्छोचनं किं कुतः तत्राधःपतनेन केवलं मृतमेव भ्रातरं दुद्रुहेऽपि तु जीवंतमपि मां द्रुग्धवानित्याह–किं चेति । येन धृतराष्ट्रेण

नूनं नृपाणां त्रिमदोत्पथानां महीं मुहुश्चालयतां चमूभिः ॥ वधात्प्रपन्नार्तिजिहीर्षयेशो व्युपैक्षताघं भगवान्कुरूणाम् ॥४३॥ अजस्य जन्मोत्पथनाशनाय कर्माण्यकर्तुर्ग्रहणाय पुंसाम् ॥ नन्वन्यथा कोऽर्हति देहयोगं परो गुणानामुत कर्मतंत्रम् ॥४४॥ तस्य प्रपन्नाखिललोकपानामवस्थितानामनुशासने स्वे ॥ अर्थाय जातस्य यदुष्वजस्य वार्तां सखे कीर्तय तीर्थकीर्तेः ॥४५॥ इति श्रीभागवते महापुराणे तृतीयस्कंधे विदुरोद्धवसंवादे प्रथमोऽध्यायः ॥ १ ॥

रामि। कथंभूतस्य मर्त्यविडंबनेनैश्वर्याच्छादकेन मानुष्यानुकरणेन नृणां दृशश्चित्तवृत्तीश्चालयतो भ्रामयतः ॥ ४२ ॥ ननु हरेः किमेवं लीलया येन स्वभक्तानां बनवासादिक्लेशा भवंति स्वस्य च दौत्ये बंधनोद्यमादिपराभवस्तद्वरं तेषामपराधानंतरमेव हननं नापराधोपेक्षेत्यत आह। नूनं निश्चितं त्रिभिर्मदैरुत्पथानामुद्धतानां वधाद्धेतोः प्रपन्नानामार्तिजिहीर्षयेशोघसमय एव हंतुं समर्थोऽपि कुरूणामघमुपैक्षत। तदानीमेव तेषां वधे सर्वदुष्टराजवधो न स्यादित्याशयेनेत्यर्थः। "विद्यामदो धनमदस्तथैवाभिजनो मदः ॥ एते मदा मदांधानां त एव हि सतां दमाः" इति त्रयो मदाः ॥ ४३ ॥ सर्वदुर्वृत्तवधार्थमेव भगवतो जन्मकर्माणि नान्यथेति कैमुत्यन्यायेनाह। अजस्यापि जन्म अकर्तुरपि कर्माणि पुंसां ग्रहणाय कर्मसु प्रवृत्तये अन्यथा न चेदेवं तर्हि भगवतो जन्मादिकथा तावदास्ताम्। को वाऽन्योऽपि गुणानां परो गुणातीतो देहयोगं कर्मविस्तारं वाऽर्हतीति ॥ ४४ ॥ तस्मादेवंभूताचिंत्यमायाविनोदस्य कथां कथयेत्याह। तस्य प्रपन्ना येऽखिललोकपालास्तेषामन्येषां च स्वीयेऽनुशासने स्थितानामर्थाय प्रयोजनाय यदुषु जातस्य तीर्थं संसारतारिणी कीर्तिर्यस्येति ॥ ४५ ॥ इति श्रीभागवते तृतीयस्कंधे टीकायां प्रथमोऽध्यायः ॥ १ ॥ ॥ द्वितीये कृष्णविश्लेषादनुशोचन्नथोद्धवः ॥

प्राचीनतरपुस्तकेषु 'कुपुत्रान्' इति पाठः। समनुव्रतेन अनुसृतेन सुहृत्—प्रत्युपकारमनपेक्ष्योपकारकर्त्ता भ्रात्र इति। "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" इति सम्प्रदानत्वाच्चतुर्थी ॥ ४१ ॥ तस्य धृतराष्ट्रस्यैवं दुश्चेष्टितम्। तिरस्कृतिनिष्कासनादिरूपं तस्य हरेः पदवीं चरणन्यासवर्त्मचरणौ च पश्यन्निति विश्वनाथः। हरेः पदवीं निवृत्तिमार्गमिति तीर्थः। पद्धयामवति यतः सा पदवी माया तां "मामेव ये प्रपद्यंते मायामेतां तरंति ते" इति॥ श्रीमुखोक्तेः। भगवता मम हस्तिनापुरतो निष्कासनं धृतराष्ट्रव्यवहारावेशानिवृत्तिपूर्वकं स्वस्मिन्नावेशाय कृतमिति पश्यन्। गतविस्मयो नष्टसंदेहः प्राप्ताश्चर्यो वा ॥ ४२ ॥ उपेक्षा औदासीन्यम्। इत्यर्थ इति। एते दुर्योधनादयः। स्वसदृशान्सर्वान्स्वेषु संगमयिष्यंति ततो वधार्थं पृथक्पृथगन्वेषणापेक्षयैकत्र संगतान् हनिष्यामीति भावः आभिजनः परिजनः पुत्रभ्रातृसुहृन्मित्रसैन्यादिरिति यावत् ॥ ४३ ॥ अन्यथा लोकसंग्रहाभावे परमानंदस्वरूपस्य भगवतः कर्मकरणं न संपद्यते "यदि ह्यहं न वर्त्तेयं जातुकर्मण्यतंद्रितः। मम वर्त्मानुवर्त्तंते मनुष्याः पार्थ सर्वशः" इति गीतासूक्तेः।मूले न नु इति च्छेदेन पदद्वयं बोध्यं नेत्यस्यान्यथेत्यनेनं संबंधः। वितर्कार्थस्य नुपदस्यार्थश्चेदेवं तर्हीति। यद्वा। पुंसां सर्वेषां ग्रहणाय स्वस्मिन्नाकर्षणाय "यल्लीलां मृगपतिराददेऽनवद्यामादातुं स्वजनमनांस्युदारवीर्यः" इति संदर्भकारः। विश्वनाथस्तु पुंसां मुक्तमुमुक्षुविषयिणां सर्वेषां ग्रहणाय 'निवृत्ततर्षैरुपगीयमानात्' इत्याद्युक्तेः। उत्पथानां वेदमार्गाननुयायिनां नाशनाय यद्वोत्पथो नरकादिस्तन्नाशनाय मोक्षाय गुणातीतो ब्रह्मनिष्ठः। यद्वा। न त्वन्यथेतियथा जीवानां स्वकर्माधीनो देहयोगस्तथा नेत्यर्थः।देहो उतेति वार्थे इत्यभिप्रेत्याह—कर्मविस्तारं वेति। कर्मतंत्रं देहयोगं नार्हतीत्युक्त्या वस्तुतः परमेश्वरस्य मायया योगासंभवात्। चिदानंदघनोकर्मतंत्रस्तस्य देहो युज्यत एवेति लक्ष्यते ॥ ४४ ॥ यतः श्रोतृवक्तृजनसंसारहरिणी

श्रीशुकउवाच ॥ इति भागवतः पृष्टः क्षत्त्रा वार्तां प्रियाश्रयाम् ॥ प्रतिवक्तुं न चोत्सेह औत्कंठ्यात्स्मारितेश्वरः ॥ १ ॥ यः पंचहायनो मात्रा
प्रातराशाय याचितः ॥ तन्नैच्छद्रचयन्यस्य सपर्यां बाललीलया ॥ २ ॥ स कथं सेवया तस्य कालेन जरसं गतः ॥ पृष्टो वार्तां प्रतिब्रूयाद्भर्तुः
पादावनुस्मरन् ॥ ३ ॥ स मुहूर्तमभूत्तूष्णीं कृष्णांघ्रिसुधया भृशम् ॥ तीव्रेण भक्तियोगेन निमग्नः साधुनिर्वृतः ॥ ४ ॥ पुलकोद्भिन्नसर्वांगो
मुंचन्मीलद्दृशा शुचः ॥ पूर्णार्थो लक्षितस्तेन स्नेहप्रसरसंप्लुतः ॥ ५ ॥ शनकैर्भगवल्लोकान्नृलोकं पुनरागतः ॥ विमृज्य नेत्रे विदुरं प्रत्याहोद्धव
उत्स्मयन् ॥ ६ ॥ उद्धव उवाच ॥ कृष्णद्युमणिनिम्लोचे गीर्णेष्वजगरेण ह ॥ किं पुनः कुशलं ब्रूयां गतश्रीषु गृहेष्वहम् ॥ ७ ॥

क्षत्त्रे बालचरित्राणि कृष्णस्यावर्णयच्छ्वसन् ॥ १ ॥ तदेवं प्रियवार्तां पृष्टस्योद्धवस्य श्रीकृष्णविरहौत्कंठ्यावेशेन प्रतिवचनासामर्थ्यमाह षड्भिः । इतीति । स्मारित ईश्वरो
यस्य ॥ १ ॥ एतदेव कैमुत्यन्यायेन प्रपंचयति । य इति द्वाभ्याम् । यः पंचवर्षोऽपि बाललीलयेति कृष्णं कंचित्परिकल्प्य कल्पितैरेव साधनैः परिचर्यां कुर्वन् प्रातर्भोज
नार्थं प्रार्थितोऽपि तद्भोजनं नैच्छत् ॥ २ ॥ जरसं वृद्धत्वं गतः प्राप्तः ॥ ३ ॥ श्रीकृष्णांघ्रिसुधया साधु निर्वृतस्तस्यामेव तीव्रेण विवशत्वापादकेन भक्तियोगेन भृशं निम
ग्नश्च ॥ ४ ॥ पुलकैरुद्भिन्नान्युज्जृम्भितानि सर्वाण्यंगानि यस्य । मीलंत्या दृशा शुचाऽश्रूणि मुंचंस्तेन विदुरेण पूर्णार्थः कृतार्थो लक्षितः । यतो भगवति यः स्नेहस्तस्य
प्रसरः पूरस्तस्मिन् संप्लुतो निमग्नः ॥५॥ भगवानेव लोकस्तस्मान्नृलोकं देहानुसंधानं प्रत्यागत उत्स्मयन् यदुकुलसंहारादि भगवच्चातुर्यस्मरणेन विस्मयं प्राप्नुवन् ॥ ६ ॥
श्रीकृष्णविरहेण संतप्यमानः प्रत्याह । श्रीकृष्ण एव द्युमणिः सूर्यस्तस्य निम्लोचेऽस्तमये सत्यजगरेण कालमहासर्पेण गीर्णेषु निगिलितेषु नो गृहेषु त्वत्पृष्टानां बंधूनां किं

तत्कथा तस्माद्धेतोः तस्याजस्य वस्तुतो जन्मरहितस्य तीर्थकीर्त्तेरिति भगवद्यशोरूपगंगाप्रवाहे मां स्नापयेति भावः ॥ ४५ ॥ इति श्रीभागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे प्रथमोऽध्यायः ॥ १ ॥
श्वसन् श्रीकृष्णविरहेण निश्वासं त्यजन् ॥ ( १ ) ॥ अधुनाऽध्यायत्रयेण विदुरानुयोगप्रतिवाक्याय संक्षिप्य कृष्णकथा वक्ष्यति । औत्कंठ्यावेशेन भक्त्युद्रेकेण यद्वा चित्तद्रवणहेतुः भूतौत्सुक्येन स्मारितं स्मरणविषयं प्रापितः
॥१॥एतदेव प्रतिवचनादानमेव य उद्धवः बाललीलया पञ्चालिकाभिः खेलन् कंचित्पंचालिकाविशेषम् ॥२ ॥ वृद्धत्वं चिरसेवित्वमित्यर्थः। "तत्र प्रवयसोप्यासन्युवानोतिबलीयसः" इत्युक्तिविरोधात् यद्वा काले समयेपि हरिसे
वाप्रभावेण जरसं न गत इत्यर्थः । भर्तुः प्रभोः॥३॥ विभक्तिविपरिणामेनावृत्त्या योजनादाह । तस्यामेवेति । स उद्धवः ॥४॥५॥ यद्वा भगवल्लोकात् भगवन्नित्यलीलामयद्वारकाख्यात् । नृलोकं विदुरादिमयं मनुष्यलोकम् ।
आगतोऽनुसंदधानः उत्स्मयन् तदनुभवेनोष्ठैरानंदित इत्यर्थमाह संदर्भकारः ॥६॥ अस्तमयेऽस्तं नित्यनिवासं श्रीगोलोकमये प्राप्ते सतीत्यर्थः ।"अस्तं क्षिप्तेप्यवसिते वासांतद्धर्यंतपर्वतः"इति धरणिः । अजं बस्तं गिरतीत्यजगरः ।
महाकालपक्षे अजं ब्रह्माणं द्विपरार्द्धांते गिरतीति तथा नु वितर्के हेत्यनेन कुशलप्रश्नप्रत्युत्तरारंभो न कार्यः । विप्रशापेन सन्निकृष्टनाशस्य प्रसिद्धत्वादिति दर्शयति 'प्रत्यारंभे प्रसिद्धेह' इति यादवः । विश्वनाथस्तु शोकव्याकुलं
विदुरमाश्वासयितुं सिद्धांतं ब्रुवन्बहिर्वृत्त्या तद्विरहसंतापलोकानां दुरवस्थानं च दर्शयति कृष्ण एव द्युमणिस्तस्य निम्लोचेऽस्तमये सति महासर्परूपशोकांधकारेण गीर्णेषु अनेनेति ध्वनितं यथा ज्योतिश्चक्रे स्थितस्यैव द्युमणेरश्व
रथस्य रथादिसपरिकरविशिष्टस्य यस्मिन्वर्षेऽस्तसमयो दृश्यते तदन्येषु वर्षेषु तदैव तस्योदयपूर्वाह्नमध्याह्नादयो दृश्यंते तथैव गोकुलमथुराद्वारकास्थस्य सपरिकरस्य तत्तल्लीलामृतमार्जितजगज्जनस्यैव कृष्णस्य यस्मिन्ब्रह्मांडेंतर्द्धानं

दुर्भगो बतलोकोऽयं यदवो नितरामपि ॥ ये संवसंतो न विदुर्हरिं मीना इवोडुपम् ॥ ८ ॥ इंगितज्ञाः पुरुप्रौढा एकारामाश्च सात्वताः ॥
सात्वतामृषभं सर्वे भूतावासममंसत ॥ ९ ॥ देवस्य मायया स्पृष्टा ये चान्यदसदाश्रिताः ॥ भ्राम्यते धीर्न तद्वाक्यैरात्मन्युप्तात्मनो हरौ ॥१०॥

नु कुशलं ब्रूयाम् ॥ ७ ॥ अनुशोचन्नाह । दुर्भगो भाग्यहीनः ये सह वसंतोऽपि श्रीहरिरयमिति न विदुः यथा क्षीरसमुद्रे जातमुडुपं चंद्रं तदा तत्रत्या मीनाः केवलं कम
नीयः कश्चिज्जलचर इत्येवं विदुर्न त्वमृतमय इति तद्वत् यद्वा जले प्रतिबिंबितं चंद्रं यथेति ॥ ८ ॥ भाग्यहीनत्वादेव न विदुर्न तु ज्ञानसामग्र्यभावादित्याह । इंगितं चित्तस्थं
जानंतीति तथा पुरु अतिशयेन प्रौढा निपुणा एकस्मिन्नेव स्थाने आरमंतीति तथा एवंभूता अपि भूतानामावासमीश्वरं संतं सात्वतामृषभं सात्वतश्रेष्ठममन्यत ॥९॥ येकेऽपि
भाग्यवंतस्तमिंगितादिनेश्वरतया जानंतोऽप्यतद्विदां प्रवृत्त्या वा मुह्येयुरिति । किं भाग्यवत्तयापि तत्राह । देवस्येति।ये यादवा देवस्य मायया स्पृष्टा व्याप्ता यादवोऽयमस्मद्बंधु
रिति वदंति । ये च शिशुपालादयोऽसदेवान्यद्वैरमाश्रिता निंदंति । तेषां वाक्यैरात्मनि हरौ उप्तात्मनो निक्षिप्तचित्तस्य मादृशस्य बुद्धिर्न भ्राम्यते मोहं न प्राप्यते । अन्ये तु

दृश्यते तदन्येषु ब्रह्मांडेषु जन्मोत्सवरासोत्सवकंसवधरुक्मिण्यादिपरिणयनोत्सवाद्या लीला दृश्यंते ज्योतिश्चक्रे सूर्यस्योदयपूर्वाह्नाद्याः प्रतीयमानत्वादवास्तवाः कृष्णस्य तु जन्माद्यास्तत्र नित्यत्वाद्वास्तवा एवेति विशेषः । सर्वासां
लीलानां नित्यत्वं प्रथमस्कंधे दर्शितं यथा सूर्यास्तमयसंबंधिनि वर्षे अंधकारेण कमलानि म्लायंति चक्रवाका विभिंदंति विलपंति च चोरदस्युराक्षसप्रेतोलूकाद्या हृष्यंति तथैव श्रीकृष्णांतर्द्धानसम्बन्धिनि ब्रह्मांडे दुःखाजगरग्रस्ते
साधवो म्लायंति धर्मसेतवो भिद्यंते कृष्णानुरागिणो विलपंति अधार्मिका भगवद्बहिर्मुखा हृष्यंतीति ॥ ७ ॥ उद्धवेन क्षीरसमुद्रे चंद्रवासस्यादृष्टचरत्वादाह–यद्वेति । यद्वा दक्षशापनष्टस्वकलावाप्तये प्रभासे समुद्रमग्नं तपं
तमुडुपं मीना यथा मधुरोज्ज्वलत्वेनैव विदुः । न तु देवोत्तमत्वेनेति संदर्भः । विश्वनाथस्तु–यथा समुद्रगा मीनाः कमनीय आस्माकीनो जलचरः कश्चिदित्येव विदुर्नतु सुधांशुर्निशापतिरिति तद्वद्यदवोपि कृष्णमाधुर्यमेव
जानंति न त्वैश्वर्यमिति दुःखेन ब्रवीमि दुर्भग इत्यादि । वस्तुतस्तु–दुर्ज्ञेयो भगो माहात्म्यं यस्य स तथा ऐश्वर्यज्ञाननिष्ठेभ्योपि माधुर्य्यज्ञाननिष्ठानामुत्कर्षस्य दशमे व्याख्यास्यमानत्वात् । अत्र न विदुरिति वर्त्तमाननिर्देशेनं
द्वारिकावासिनां यदूनां च भगवन्नित्यसंगित्वज्ञापनाय भो विदुर त्वत्पृष्टकुशला यादवादयः संप्रति श्रीभगवता सहैव सुखेन क्रीडंति केवलं प्रष्टा त्वं पृष्टश्चाहमित्यावामेव तत्संवासविरहितत्वादकुशलिनावत आवामेवावां शोचाव
इतिभावः । अत्र यदि तदानीं कृष्णेन सह तेषां संवासो नाभविष्यत्तदा नावेदिषुरित्येवावक्ष्यदिति ज्ञेयम् । केचित्तु यथा मीनास्तिमिंगिलादयो हरिं मत्स्यरूपिणमुडुपं संसारतारकं न विदुस्तथेत्याहुः । समुद्रमथनात्पूर्वं
मीनाः सह वसंतोप्युडुपं हरिं संतापहारिणं न विदुस्तथेत्यन्ये ॥ ८ ॥ सर्वभूताधिवास इति श्रुतिप्रसिद्धमविशेषेण सकलजगन्निवासमीति तीर्थः । चक्रवर्त्ती तु ननु शुद्धप्रेमैकमाधुर्यभुजो गोकुलवासिन इव द्वारिकावासिनो
नखल्वैश्वर्यज्ञानशून्याः संति तत्कथं न विदुरिति ब्रवीमि तत्राह–इङ्गितज्ञा इति । "इंगितो हृद्गतो भावः" इत्यभिधानात् । तदीयचित्तस्थमपि वस्तु जानंति किं पुनः शरीरस्थं सौंदर्य्यलावण्यादिकं तत्र हेतुः पुरुप्रौढा
सूक्ष्मधियः । तदप्यैश्वर्यज्ञानाभावमाह–एकस्मिन्नेवासनशयनादावारमंत इत्येकारामाः । सात्वतां स्वेषामेव ऋषभं नित्यकुलपतित्वेन वर्तमानं कृष्णं भूतावासं सर्वभूतेष्ववसंतमंतर्यामिणमेवामंसत 'एको देवः' इत्यादौ 'सर्व
भूताधिवासः' इत्यंतर्यामिश्रुतेः । न तु स्वयं भगवत्त्वेन साक्षान्नारायणस्याप्यंशिनमित्यतस्ते हरिं न विदुरित्यहमवोचमिह जगति समुचितं जानंतोऽजानंतश्च न निंद्यते निंद्यंते तु तन्मध्यवर्त्तिनोऽर्द्धमर्द्धं जानंत इति भावः ।
॥९॥ इत्यर्थ इति । शिशुपालप्रभृतयः सर्वे ज्ञानिन एव न तद्वाक्य श्रद्धेयमिति भावः । तद्वाक्यैः कृष्णः शरीरं त्यक्त्वा वैकुंठं गतस्तथा धृतराष्ट्रजरासंधादिमहाराजद्रोहेण सकुलमेव नाशं प्राप्त इत्येवंरूपैः हरौ सच्चिदानंदे

प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम् ॥ आदायांतरधाद्यस्तु स्वबिंबं लोकलोचनम् ॥ ११ ॥ यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतम् ॥ विस्मापनं स्वस्य च सौभगर्द्धेः परं पदं भूषणभूषणांगम् ॥ १२ ॥ यद्धर्मसूनोर्बत राजसूये निरीक्ष्य दृक्स्वस्त्ययनं त्रिलोकः ॥ कार्त्स्न्येन चाद्येह गतं विधातुरर्वाक्सृतौ कौशलमित्यमन्यत ॥ १३ ॥

मूढा एवेत्यर्थः ॥ १० ॥ कोऽसौ हरिरित्यपेक्षायामाह । प्रदर्श्येति । न तप्तं तपो यैरतोऽवितृप्ता दृशो येषां तेषां स्वबिंबं श्रीमूर्तिमेतावंतं कालं दर्शयित्वा योंऽतर्हितवान् । लोकस्य लोचनमादायाच्छिद्य तादृशस्यान्यस्य विलोकनीयस्याभावात् ॥ ११ ॥ तदेव बिंबं वर्णयति त्रिभिः । यन्मर्त्यलीलास्वौपयिकं योग्यं स्वस्यापि विस्मयजनकम् । यतः सौभगर्द्धेः सौभाग्यातिशयस्य परमं पदं परा काष्ठा भूषणानां भूषणान्यंगानि यस्मिन् ॥ १२ ॥ दृशां स्वस्त्ययनं परमानंदकरम् । त्रिभुवनस्थो लोकः प्राणिमात्रम् अद्येदानीमिह बिंबेऽर्वाक्सृतावर्वाचीनसंसारनिर्माणे मनुष्यनिर्माणे वा यत्कौशलं नैपुण्यं तत्कार्त्स्न्येन गतमुपक्षीणं नातः परं तस्य कौशलमस्तीत्येवं मेने । तन्मू

'ओहाङ् गतौ' धातोर्हानं इति ज्ञानं 'रमु' क्रीडायाम् अतो रीत्यतिशयितसुखम् । तेन हश्चासौरिश्चेति हारिः सच्चिदानंदलक्षणः कृष्ण इति ज्ञेयम् ॥ १० ॥ नेत्यव्ययमल्पार्थेत्र ज्ञेयम् । अल्पतपसामित्यर्थः । लोकस्य लोचनं यत्र तत्स्वरूपं गृहीत्वा योंतरधात् तदुक्तं मौशलपर्वणि "कृत्वा भारावतरणं पृथिव्याः पुरुलोचनः । त्याजयित्वा तनूः कृष्णः प्राप्तः स्वस्थानमुत्तमम्" इति । मोचयित्वा भारावतरणात्त्याजयित्वा न तु मुक्त्वेत्यर्थः ॥ ११ ॥ यद्बिंबमंतरधात्तदेवेत्यर्थः । स्वयोगमायाबलं स्वचिच्छक्तिर्वीर्यं न च किमप्यैश्वर्यं माधुर्यं वा निह्नुत्य स्थापितमपि तु सर्वस्वमेवात्र बिंबे निक्षिप्तं नापि वैकुंठेप्येवं बलं दर्शितमिति भावः । गृहीतमिति । "स्थितिसर्गनिरोधेषु गृहीता मायया विभोः" इत्यत्र मायया गुणगृहीता इति वदभेदेपि भेदोक्तिः बुद्धिर्हि भगवती अभेदेपि भेदं जनयतीति न्यायात् । गृहीतमाविष्कृतमिति संदर्भः । यद्वा । यद्बिंबं दर्शयता दर्शयितुं स्वयोगमायाबलं गृहीतं रासमहिषीविवाहादिषु तथा प्रसिद्धं बलं द्योतयति स्वस्य च वैकुंठस्थस्य श्रीनारायणस्वरूपस्यापि विस्मापनम् । अहोरूपमहो साद्गुण्यमिति चमत्कारप्रापकम् । अस्यावताररूपगुणलीलादिदर्शिनां वैकुंठपार्षदादीनां का वार्त्तेति भावः । अत एव सौभगर्द्धेः सौभाग्यसंपत्तेः । परं पदं परावधिस्थानम् अतो वैकुंठनाथस्यापि तद्दर्शनेच्छा भवति "द्विजात्मजा मे युवयोर्दिदृक्षुणा" इत्युक्तेः । ननु तस्य भूषणं त्वस्ति सौभाग्यजनकं तत्राह—भूषणेति । भूषणानि भूषयंतीति भूषणभूषणानि तादृशान्यंगानि यस्येति परमसौंदर्यमुक्तम् । मर्त्यलीला बाल्यकौमारपौगंडादिलीला उपयातीति मर्त्यलीलोपयिकं नराकृतीत्यर्थः । उपपूर्वाद्यातेरौणादिकिकप्रत्यये रूपमुपयिकमिति ॥ १२ ॥ अर्वाक्सृत्यंतर्ग तपश्चादिरचनकौशलमप्यस्तीति चेदाह—मनुष्येति । यद्यपि विधातृरचितत्वं तत्र नास्ति तथापीयमज्ञलोकदृष्टिरिति ज्ञेयम् । तीर्थस्तु—इह जीवराशौ त्रिषु वेदादिषु कालेषु वा लोको ज्ञानं यस्य स त्रिलोको वेदैकप्रमाणो जनः त्रिषु लोकेषु स्थितो जनस्त्रिलोकः त्रिभिर्ब्रह्मादिभिर्वा लोक्यते स्वहृदये चिंत्यते उत्पत्त्याद्यर्थ इति वा । त्रिभिर्दानयज्ञोपासनाभिर्लोकः स्वर्गादिर्यस्य स भूमिष्ठ इत्यर्थः । धर्मसूनो राजसूये उपगतं सर्वाधिकत्वेन स्थितं यद्वपुर्निरीक्ष्य सृतौ मनुष्यसृष्टिमार्गे प्रवर्त्तमानस्य विधातुर्यत्कार्त्स्न्येन कौशलं निर्माणपाटवं तदर्वाक् नचिमित्यमन्यत श्रीकृष्णसौंदर्यस्याकृत्रिमत्वादत्युत्कृष्टत्वमुक्तमत्रेत्याह ॥ १३ ॥

यस्यानुरागप्लुतहासरासलीलावलोकप्रतिलब्धमानाः ॥ व्रजस्त्रियो दृग्भिरनुप्रवृत्तधियोऽवतस्थुः किल कृत्यशेषाः ॥ १४ ॥ स्वशांतरूपेष्वितरैः स्वरूपैरभ्यर्द्यमानेष्वनुकंपितात्मा ॥ परावरेशो महदंशयुक्तो ह्यजोऽपि जातो भगवान् यथाऽग्निः ॥ १५ ॥ मां खेदयत्येतदजस्य जन्मविडंबनं यद्वसुदेवगेहे ॥ व्रजे च वासोऽरिभयादिव स्वयं पुराद्व्यवात्सीद्यदनंतवीर्यः ॥ १६ ॥ दुनोति चेतः स्मरतो ममैतद्यदाह पादावभिवंद्य पित्रोः ॥ तातांब कंसादुरुशंकितानां प्रसीदतं नोऽकृतनिष्कृतीनाम् ॥१७॥ को वा अमुष्यांघ्रिसरोजरेणुं विस्मर्तुमीशीत पुमान्विजिघ्रन् ॥ यो विस्फुरद्भ्रूविटपेन भूमेर्भारं कृतांतेन तिरश्चकार ॥ १८ ॥ दृष्टा भवद्भिर्ननु राजसूये चैद्यस्य कृष्णं द्विषतोऽपि सिद्धिः ॥ यां योगिनः संस्पृहयंति सम्यग्योगेन कस्तद्विरहं सहेत ॥ १९ ॥

तैर्विधातुः सृज्यत्वाभावेऽपि लोकदृष्टिरियमुक्ता ॥ १३ ॥ ॥ अनुरागेण प्लुतो व्याप्तो हासो रासो विनोदश्च लीलाऽवलोकश्च तैः स्वकृतहासाद्यनंतरं प्रतिलब्धो मानो याभिस्ताः । दृग्भिः सहानुप्रवृत्ता गच्छंतं तमेवानुगता धियो यासां ताः कृत्ये शेषो यासां ताः । असमापितकृत्या एव तस्थुः ॥ १४ ॥ एवंभूतबिंबप्रदर्शने कारणमाह । स्वीयान्येव शांतान्यशांतानि च रूपाणि तत्र शांतरूपेष्वितरैरशांतैर्दैत्यादिभिः पीड्यमानेष्वनुकंपितः कृतानुकंप आत्मा यस्य । अजोऽपि जात आविर्भूतः महाभूतरूपेण नित्यसिद्ध एवाग्निर्यथा काष्ठेष्वाविर्भवति तद्वत् । अजस्य जन्मनि हेतुः । महान्महत्तत्त्वमंशः कार्यलेशो यस्याव्यक्तस्य तन्महदंशं तद्युक्त इति ॥ १५ ॥ ननु कुतोऽसौ परावराणामीशः पारतंत्र्यप्रतीतेस्तत्राह । द्वाभ्याम् । मामप्येतद्दुर्वितर्क्यं दुर्घटं च खेदयति तदेवाह । वसुदेवगेहे बंधनागारे यज्जन्मनो विडंबनमनुकरणं न तु नृसिंहवदकस्मादाविर्भावः । कंसभयादिव निलीय व्रजे वासश्च कालयवनादिरिपुभयादिव पुरान्मथुराया व्यवात्सीत् पलायत ॥ १६ ॥ एतच्च हरेश्चरितं स्मरतो मम चेतः कर्मभूतं दुनोति व्यथयति । तदेव दर्शयति हे तात हे अंब युवां प्रसीदतं प्रसादं कुरुतम् । न कृता निष्कृतिः शुश्रूषणं यैस्तेषां नोऽस्माकमिति बहुवचनं तु रामाद्यभिप्रायम् ॥ १७ ॥ ननु तर्ह्यनीश्वर एव किं न स्यात्तव तु श्रद्धामात्रमेतत्तत्राह त्रिभिः । को वा अंघ्रिसरोजे यो रेणुस्तमपि विजिघ्रन् सेवमानः पुमान् विस्मर्तुमीशीत शक्नुयात् । विस्फुरन् भ्रूविटपो भ्रूलता एव कृतांतस्तेन ॥ १८ ॥ न च तस्येश्वरत्वं साधनीयं भवद्भिरपि दृष्टत्वादित्याह । दृष्टेति । यां सिद्धिं सम्यग्योगेन प्राप्तुमिच्छंति ॥ १९ ॥

यस्य कृष्णस्य ॥ १४ ॥ एवं भूतोऽतीवसौंदर्ययुक्तः तत्र तेषु शांतरूपेषु भक्तेषु इतरैरशांतरूपैरसुरादिभिरभ्यर्द्यमानेषु सत्सु अविर्भवति मथनादिना तद्वद्भगवानपि भक्तजनप्रार्थनादिना । यद्वा । महांश्चासावंशैर्मत्स्यकूर्मवराहाद्यैर्भगवदवतारसमये तत्रागत्य लीनैर्युक्तः । यद्वा । महदंशो ब्रह्मा तेन युक्तो विनियुक्तः प्रार्थित इति यावत् । यद्वा । महतः स्वस्यैवांशैर्युक्तः "महांतं विभुमात्मानम्" इति श्रुतेः । 'महद्वच' इति न्यायाच्च । यद्वा । महांतो ये पुरुषादयोंऽशास्तैर्युक्तः लोकनाथं महद्भूतामीतिवदात्वाभावः । अन्यथा महांशयुक्तः इति स्यात् ॥ १५ ॥ अत्राक्षिपति—नन्विति । तदेव दुर्वितर्क्यत्वमेव ॥ १६ ॥ रामो बलदेवः भत्रादिना गदादिग्रहः ॥ १७ ॥ पुनराशंकते नन्विति तवोद्धवस्यैतत् कृष्णेशत्वादि अयं वसुदेवनंदनः परमेश इत्येवं श्रद्धैवेत्यर्थः ॥ १८ ॥ तस्येश्वरत्वं दृष्टमेवेत्याह—योगिन उपक्रमादिना वेदतात्पर्यविदः । यां

तथैव चान्ये नरलोकवीरा य आहवे कृष्णमुखारविंदम् ॥ नेत्रैः पिबंतो नयनाभिरामं पार्थास्त्रपूताः पदमापुरस्य ॥ २० ॥ स्वयं त्वसाम्या तिशयस्त्र्यधीशः स्वाराज्यलक्ष्म्याऽऽप्तसमस्तकामः ॥ बलिं हरद्भिश्चिरलोकपालैः किरीटकोट्येडितपादपीठः ॥२१॥ तत्तस्य कैंकर्यमलं भृतान्नो विग्लापयत्यंग यदुग्रसेनम् ॥ तिष्ठन्निषण्णं परमेष्ठिधिष्ण्ये न्यबोधयद्देव निधारयेति ॥ २२॥ अहो बकीयं स्तनकालकूटं जिघांसयाऽपाययदप्य साध्वी ॥ लेभे गतिं धात्र्युचितां ततोऽन्यं कं वा दयालुं शरणं व्रजेम ॥ २३ ॥ मन्येऽसुरान्भागवतांस्त्र्यधीशे संरंभमार्गाभिनिविष्टचित्तान् ॥ ये संयुगेऽचक्षत तार्क्ष्यपुत्रमंसेसुना भायुधमापतंतम् ॥ २४ ॥

आहवे युद्धे पार्थस्यास्त्रैः पूता निष्पापाः संतः ॥ २० ॥ तदेवं परमैश्वर्ये सत्यपि यदुग्रसेनानुवर्तित्वं तत्पुनरस्मानत्यंतं व्यथयतीत्याह । स्वयं तु य एवंभूतस्तस्य तत्कैंकर्यं नोऽस्मान् विग्लापयतीत्युत्तरेणान्वयः । न साम्यातिशयौ यस्य यमपेक्ष्यान्यस्य साम्यमतिशयश्च नास्तीत्यर्थः। तत्र हेतवः त्र्यधीशस्त्रयाणां पुरुषाणां लोकानां गुणानां वा ईशः स्वाराज्यलक्ष्म्या परमानंदस्वरूपसंपत्त्यैव प्राप्तसमस्तभोगः बलिं करमर्हणं वा हरद्भिः समर्पयद्भिश्चिरकालीनैर्लोकपालैः किरीटाग्रेण ईडितं स्तुतं पादपीठं यस्य प्रणमतां किरीटसंघट्टध्वनिरेव स्तुतित्वेनोत्प्रेक्ष्यते ॥ २१ ॥ अंग विदुर भृतान् भृत्यान् उग्रसेने यत्किंकरत्वं तदेवाह । परमेष्ठिधिष्ण्ये राज्यासने निषण्णमासीनं स्वयं तिष्ठन् हे देव निधारयावधारयेति न्यबोधयद्विज्ञापितवान् ॥ २२ ॥ एवमनुवृत्तिः कृपयैवेति सूचयन्नपकारिष्वपि तस्य कृपालुतां दर्शयन्नाह । अहो आश्चर्यं कृपालुतायाः हंतुमिच्छयाऽपि स्तनयोः संभृतं कालकूटं विषं यमपाययत् । बकी पूतना साध्वी दुष्टाऽपि धात्र्या यशोदाया उचितां गतिं लेभे भक्तवेषमात्रेण यः सद्गतिं दत्तवानित्यर्थः । ततोऽन्यं कं वा भजेम ॥ २३ ॥ ननु भागवतानेव भगवाननुगृह्णातीति प्रसिद्धम् । सत्यम् । असुरानप्यहं भागवतानेव मन्ये । यतो भागवता इव तेऽपि भगवद्ध्यानाभिनिवेशेन भगवंतमपरोऽक्षं पश्यंतीत्याह । संरंभः क्रोधावेशस्तेन मार्गेणाभिनिविष्टं चित्तं येषां तान् । अत एव ये संग्रामे तार्क्ष्यः कश्यपस्तस्य पुत्रं गरुडमंसे स्कंधे सुनाभायुधश्चक्रायुधो हरिर्यस्य

सायुज्यलक्षणां सम्यग्योगेन भक्तिज्ञानान्यतरेण तस्य कृष्णस्य विरहाम् ॥ १९ ॥ अस्त्रैः पाशुपताद्यैः अस्य कृष्णस्य पिबंतः सादरमवलोकयंतः ॥ २० ॥ एवंभूतः साम्याधिक्यरहितस्तस्य कृष्णस्य तत्कैंकर्यमुग्रसेन भृत्यत्वं विग्लापयति माहात्म्यविषयेऽज्ञानलक्षणं ग्लानिमुत्पादयति । इत्यर्थ इति । 'न त्वत्समोस्त्यभ्यधिकः कुतोन्यः' इति गीतोक्तेरिति भावः॥२१॥तत्रासाम्यातिशयत्वे पुरुषाणां महत्स्रष्टादीनां ब्रह्मादीनां वा देव हेमहाराजाधिराज परमेष्ठिधिष्ण्ये महाराजासिंहासने अवधारय एतत्कृत्यं निश्चिन्विति ॥ २२ ॥ संभृतं पूरितम् इत्यर्थ इति । किंपुनर्भक्तानामिति भावः । ततः कृष्णात् कं विषदेभ्योप्यमृतदमन्यमेतादृशासाधारणदयावंतम् । शरणं रक्षितारं 'शरणं गृहरक्षित्रोः' इत्यमरः । 'अम्बिका च कलिंबा च धातृके स्तनदात्रिके' इति द्वे कृष्णस्य धात्र्यौ स्तस्तदुचितां तद्योग्याम् ॥ २३ ॥ अत्राक्षिपति—अत एव अभिनिविष्टचित्तत्वादेव । इत्यर्थ इति ।

वसुदेवस्य देवक्यां जातो भोजेंद्रबंधने ॥ चिकीर्षुर्भगवानस्याः शमजेनाभियाचितः ॥ २५ ॥ ततो नंदव्रजमितः पित्रा कंसाद्विबिभ्यता ॥ एकादश समास्तत्र गूढार्चिः सबलोऽवसत् ॥ २६ ॥ परीतो वत्सपैर्वत्सांश्चारयन् व्याहरद्विभुः ॥ यमुनोपवने कूजद्द्विजसंकुलितांघ्रिपे ॥ २७ ॥ कौमारीं दर्शयंश्चेष्टां प्रेक्षणीयां व्रजौकसाम् ॥ रुदन्निव हसन्मुग्धबालसिंहावलोकनः ॥ २८ ॥ स एव गोधनं लक्ष्म्या निकेतं सितगोवृषम् ॥ चारयन्ननुगान्गोपान्रणद्वेणुररीरमत् ॥ २९ ॥ प्रयुक्तान्भोजराजेन मायिनः कामरूपिणः ॥ लीलया व्यनुदत्तांस्तान्बालः क्रीडनकानिव ॥ ३० ॥ विपन्नान्विषपानेन निगृह्य भुजगाधिपम् ॥ उत्थाप्यापाययद्गावस्तत्तोयं प्रकृतिस्थितम् ॥ ३१ ॥

तम् । अचक्षतापश्यन् तस्मात्तेष्वप्यनुग्रहो युक्त एवेत्यर्थः । वक्ष्यति च । "तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत्" इति ॥ २४ ॥ इदानीं तस्य तद्दर्शनप्रकारं वक्तुमादित आरभ्य तच्चरितं संक्षेपतः कथयति । वसुदेवस्य भार्यायां जातो भोजेंद्रः कंसस्तस्य बंधनागारे अस्याः पृथिव्याः शं सुखं स्वयं चिकीर्षुः अजेन ब्रह्मणा च याचितः सन् ॥ २५ ॥ कंसाद्बिभ्यता पित्रा हेतुभूतेन नंदव्रजमितो गतः समाः संवत्सरान् गूढार्चिर्गुप्ततेजाः ॥ २६ ॥ व्याहरदाक्रीडत् । कूजद्भिर्द्विजैः पक्षिभिः संकुलिता व्याप्ता अंघ्रिपा यस्मिन् ॥ २७ ॥ रुदन्निवेतीवशब्दस्य यथायोगं सर्वत्राप्यन्वयः । मुग्धो बालश्च यः सिंहस्तद्वदवलोकनं यस्य सः ॥ २८ ॥ स एवाधिकं वयः प्राप्तः सन् गोधनं चारयन् कथंभूतं गोधनं लक्ष्म्याः शोभादिसंपदो निकेतनं सिता गावो वृषा यस्मिन्नानावर्णे गोसंघे रणन् शब्दं कुर्वन् वेणुर्यस्य अरीरमद्रमयामास ॥ २९ ॥ व्यनुदज्जघान क्रीडनकांस्तृणादिनिर्मितान् सिंहादीन्यथा ॥ ३० ॥ विपन्नान्मृतान् गोपान् गाव इति गाश्चोत्थाप्य तदेव तोयं प्रकृतिस्थितं निर्विषम् ॥ ३१ ॥

भगवति मन आवेशो भगवदनुग्रहे हेतुर्न जात्यादिरिति भावः॥२४॥ उपोद्घातकथामाह—इदानीमिति । बंधनागारे कारागृहे ॥२५॥ ततो मथुरापुरतः । गूढार्चिरिति । यथा गुप्ततेजा अग्निः कचित्काचित्प्राप्तं प्राप्तमिंधनं दहति तथा भगवानपि प्राप्तं प्राप्तमसुरं गोपाललीलया गुप्तप्रभावोऽदहदिति एकादश समाः इति बाल्यपौगंढानां तत्रैव समाप्तत्वात् । "बाल्यपौगंडकैशोराः पुत्राभ्यामभवन्क्वचित्" इति वसुदेवदेवकीं प्रति श्रीमुखोक्तेः ॥ २६ ॥ कूजद्भिरव्यक्तशब्दं कुर्वद्भिः " द्विजस्स्याद्ब्राह्मणक्षत्रवैश्यदंतांडजेषु ना " इति मेदिनी ॥ २७ ॥ यथायोगमिति । रुदन्निव हसन्निव कौमारीमिव मुग्धसुंदरः ' मुग्धः सुंदरमूढयोः ' इति विश्वः । 'बालानां रोदनं चास्त्रम् ' इति न्यायेन विनापि रोदनहेतुमदेयलोभ्यवस्तुप्रार्थनादौ रुदन्निव तत्प्राप्तौ च हसन्निव भीषणदैत्यागमे यथा बालोपि सिंहो घोरसत्त्वान्न बिभेति किं तु स्वपराक्रमदृष्ट्या द्योतयति तथा कृष्णोऽपीति भावः ॥२८॥ यः कौमारलीलादर्शयिता गाव एव धनं गोधनमिति व्यधिकरणकर्मधारयः । यद्वा । गवां धनं समूहो गोधनं "द्रव्ये द्वितीयभावे च धनं स्वीयसमूहयोः" । "धनिनि गोधनेपि"इति निरुक्तिः । लक्ष्म्या रमाया निकेतं गोशकृति लक्ष्मीर्वसतीति महाभारते प्रसिद्धं 'गोमये वसते लक्ष्मीः ' इति मंत्राच्च । गोमयस्य गोदेहस्थत्वेन तदावश्यं लक्ष्मीनिकेतमिति दुग्धघृताद्युत्पादकत्वेनापि संपद्धेतुत्वात्तान्निकेतमिति । वा यच्च तीर्थेणोक्तं सिता रज्जुतंतुभिर्नसि प्रोताः ककुद्मंतो यत्रेति तन्न शोभनं प्रतिककुद्मिनं कुत्रापि बद्धत्वादर्शनात्॥२९॥कामरूपिणः स्वाभिलषितरूपधारिणः तत्र हेतुःमायिनः भोजराजेन कंसेन प्रयुक्तान्प्रेषितान्॥३०॥अपाययत्पाययामास॥३१॥

अयाजयद्गोसवेन गोपराजं द्विजोत्तमैः ॥ वित्तस्य चोरुभारस्य चिकीर्षन्सद्व्ययं विभुः ॥ ३२ ॥ वर्षतींद्रे व्रजः कोपाद्भग्नमानेऽतिविह्वलः ॥ गोत्रलीलातपत्रेण त्रातो भद्रानुगृह्णता ॥ ३३ ॥ शरच्छशिकरैर्मृष्टं मानयन्रजनीमुखम् ॥ गायन्कलपदं रेमे स्त्रीणां मंडलमंडनः ॥ ३४ ॥ इति श्रीभा० तृतीय० द्वितीयोऽध्यायः ॥२॥ उद्धव उवाच ॥ ततः स आगत्य पुरं स्वपित्रोश्चिकीर्षया शं बलदेवसंयुतः ॥ निपात्य तुंगाद्रिपुयूथनाथं हतं व्यकर्षद्व्यसुमोजसोर्व्याम् ॥ १ ॥ सांदीपनेः सकृत्प्रोक्तं ब्रह्माधीत्य स विस्तरम् ॥ तस्मै प्रादाद्वरं पुत्रं मृतं पंचजनोदरात् ॥ २ ॥ समाहुता भीष्मककन्यया ये श्रियः सवर्णेन बुभूषयैषाम् ॥ गांधर्ववृत्त्या मिषतां स्वभागं जह्रे पदं मूर्ध्नि दधत्सुपर्णः ॥ ३ ॥

इंद्रपूजाभंगेन कृता गवांपूजैव गोसवस्तेन गोपराजं नंदं वित्तस्य चेति चकारादिंद्रस्य मानभंगं कुर्वन्नुरुभारस्यातिसमृद्धस्य॥ ३२॥कोपाद्वर्षति गोत्र पर्वत एव लीलातपत्रं तेन हे भद्र॥ ३३॥मृष्टमुज्ज्वलं स्त्रीणां मंडलं मंडयतीति तथा ॥ ३४ ॥ इति तृतीये टीकायां द्वितीयोऽध्यायः ॥२॥ तृतीये मथुरामेत्य व्रजात्कंसवधादिकम्॥यत्कृतं द्वारकायां च कृष्णेन तदवर्णयत् ॥ १ ॥ शमित्यव्ययम् । पित्रोः सुखस्य चिकीर्षयेत्यर्थः । तुंगाद्राजमंचात् रिपुयूथानां नाथं कंसं व्यसोरपि विकर्षणं पित्रोः सुखार्थम् ॥ १ ॥ ब्रह्म वेदं सविस्तरं षडंगादिसहितम् । पंचजनोदरविदारणद्वारा पुत्रमानीयेत्यर्थः ॥ २ ॥ भीष्मककन्यया रुक्मिण्या ये राजानः समाहूताः । ह्रस्वत्वमार्षम् । समाहुता इति

सद्व्ययामित्युक्त्या शक्रस्य समृद्धिसाभिमानत्वात्तादृशे दानव्ययस्यासद्व्ययत्वं सूचितमिति । तेन देयं शांताय विदुषे इति स्मृत्यर्थो व्याख्यातः ॥ ३२ ॥ गोत्रः शैले "गोत्रं कुलाख्ययोः" इति मेदिनी । लीलातपत्रोक्त्या परिश्रमाभावो ध्वनितस्तद्भूताविति कृष्णलीलाश्रवणचेतस्त्वाज्जन्मांतरकृतसुकृतोसीत्याह—हे भद्र कल्याणरूप ॥ ३३ ॥ 'प्रदोषो रजनीमुखम्' इत्यमरः । मानयन्स्तुवन् यद्वाऽहो स्वाधीनपतिकाया अस्या रजनीनायिकाया मुखं नायकस्य शशिनः करैरधुना मृष्टमतोऽहमप्येवं करोमीत्यभिनंदन्नित्यर्थः । कलौ ककारलकारौ पद्येते प्राप्येते यत्र तत्कलपदं कामबीजम् । मंडलं समूहं मंडयति भूषयतीति मंडलमंडनः । 'मडिभूषायाम्' ॥ ३४ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वितीयस्कन्धे द्वितीयोऽध्यायः ॥२॥ अत्र व्रजान्मथुरामेत्येत्युक्तेर्व्रजमथुरयोर्ब्राह्मणपरिव्राजकन्यायेन भेदाभेद एव यद्वा व्रजाद्गोव्रजात् नाममात्रैकदेशन्यायोत्रानुसंधेयः । यत्कर्म ॥१॥ शमित्यव्ययं सुखवाचकम् । इत्यर्थ इति । अव्ययानां सार्वविभक्तिकत्वेन षष्ठ्यंततात्र व्याख्येयेति भावः । ततो व्रजात् स कृष्णः। पुरं मथुराम् । तुंगादुच्चात् 'पुन्नागागोन्नते तुंगः' इति धरणिः । रिपवस्तृणावर्त्ता दयस्तेषां यूथानां स्वामिनं हतमुच्चपातात्प्राप्ताघातं व्यसुं गतप्राणं पित्रोर्मूर्छां संभावयतोर्देवकीवसुदेवयोः देवानां वा प्रीणनार्थं कर्षणम् । यद्वा स्वपित्रोः पुरमागत्य हतं व्यसुं रिपुनाथं प्रति शंचिकीर्षया जीवतानेन राज्ञा ब्रह्मादिप्रार्थ्यस्पर्शव्रजभूरजो न स्पृष्टमतोहमेनं मृतं व्रजभूरजोगंगायां देहप्लावनेन सद्गतिं प्रापयिष्य इत्यभिसंधाय व्यकर्षदित्यर्थः ॥ १ ॥ षडंगानि शिक्षादीनि आदिना पदक्रमजटाघनादिग्रहः इत्यर्थ इति । ल्यब्लोपेपञ्चमीत्वेन पंचजनोदरं विदार्येति व्याख्येयमिति भावः । तस्मै सांदीपनये मृतमानीयेति शेषः वरं दक्षिणं।"वरो जामातरि देवाद्वृते श्रेष्ठे त्रिषु क्षमे । दक्षिणायां तथा धेनौ स्त्रियामौषधदेवयोः" इति ॥२॥ इत्यर्थ इति । उपसर्गवशादाकर्षणेपि हरतिरिति भावः । मिषतां कृष्ण इहागत्य कन्यां न हरेदिति हेतोरितस्ततः पश्यता तया रुक्मिण्या परस्परसमयरूपयाऽन्योन्यकृतसंकेतरूपया लक्ष्म्यंशत्वात् । 'मानुषत्वे च मानुषी'' इति पराशरोक्तेः । तया रुक्मिण्याऽर्पितत्वाच्च । 'आत्मार्पितश्च भवतोत्र विभो विधेहि' इति दशमोत्तरार्द्धे वक्ष्यमाणत्वात् । सुपतनः शोभनागमनः सुपर्णपदस्य प्रसिद्धार्थत्यागमनर्हं मत्वाह—यद्वेति । इत्यर्थ इति । आर्षत्वादत्रोपमावाचके बलोप इति भावः । अक्षरेभ्योर्थलब्धौ क्लिष्टकल्पनया तत्साधनमयोग्यम् । "अक्के चेन्मधु विंदेत किमर्थं पर्वतं व्रजेत्" इतिन्यायमाश्रित्याह यद्वेति । वर्णद्वयं रुक्मीत्यक्षरद्वयं तत्र तेषु राजसु । शेषं गांधर्ववृत्त्येत्याद्यवशिष्टम् ॥३॥

ककुद्मतोऽविद्धनसो दमित्वा स्वयंवरे नाग्नजितीमुवाह ॥ तद्भग्नमानानपि गृध्यतो ऽज्ञाञ्जघ्नेऽक्षतः शस्त्रभृतः स्वशस्त्रैः ॥ ४ ॥ प्रियं प्रभुर्ग्राम्य इव प्रियाया विधित्सुराच्छैद्द्युतरुं यदर्थे ॥ वज्र्याऽऽद्रवत्तं सगणो रुषांऽधः क्रीडामृगो नूनमयं वधूनाम् ॥ ५ ॥ सुतं मृधे खं वपुषा ग्रसंतं दृष्ट्वा सुनाभोन्माथितं धरित्र्या ॥ आमंत्रितस्तत्तनयाय शेषं दत्वा तदंतःपुरमाविवेश ॥६॥ तत्राहृतास्ता नरदेवकन्याः कुजेन दृष्ट्वा हरिमार्तबंधुम् ॥ उत्थाय सद्यो जगृहुः प्रहर्षव्रीडाऽनुरागप्रहितावलोकैः ॥ ७ ॥ आसां मुहूर्त एकस्मिन्नानागारेषु योषिताम् ॥ सविधं जगृहे पाणीननुरूपः स्वमायया ॥८॥ तास्वपत्यान्यजनयदात्मतुल्यानि सर्वतः ॥ एकैकस्यां दशदश प्रकृतेर्विबुभूषया ॥ ९ ॥

पाठे आकृष्टा इत्यर्थः । केन साधनेन श्रियो लक्ष्म्याः सवर्णेन समानेन रूपेण यद्यपि तया केवलं श्रीकृष्ण एवाहूतो न सर्वे तथापि तस्या लावण्यं तेषामागमने हेतुरिति तयैवाहूता इत्युच्यते । एषां मिषतां पश्यतां मूर्ध्नि पदं दधत् तया सह गांधर्ववृत्त्या परस्परसमयरूपया बुभूषया भवितुमिच्छया जहार । कथंभूतां स्वभागं लक्ष्म्यंशत्वात्तया स्वात्मनोऽर्पितत्वाच्च सुपर्णः सुपतनः यद्वा सुपर्ण इव स्वभागं सुधामित्यर्थः । यद्वा श्रियो रुक्मिण्याः समानं वर्णद्वयं वाचकं यस्य सः श्रियः सवर्णो रुक्मी तेन समाहूताः शिशुपालादयः । किमर्थं भीष्मककन्यया सह तेषां बुभूषया भूतिर्भवत्वित्येतदर्थम् । तत्र शिशुपालस्याह्वानं वरत्वेन बुभूषया जरासंधादीनां तद्विवाहोत्सवेन शेषं पूर्ववत् ॥ ३ ॥ ककुद्मतो वृषभानविद्धनासिकान्विद्धनासिकान्कृत्वेति वा तैर्वृषभैस्तद्दमनेन च भग्नो मानो येषां तथापि तान् गृध्यतः कामयमानानत एवाज्ञान् शस्त्रभृतो राज्ञस्तच्छस्त्रैरक्षत एव जघान ॥ ४ ॥ यदादित्याः कुंडले दातुं स्वर्गं गतस्तदा प्रभुः स्वतंत्रोऽपि ग्राम्यः स्त्रीपरतंत्र इव प्रियायाः सत्यभामायाः प्रियं विधातुमिच्छुर्द्युतरुं पारिजातमानीतवान् । यदर्थे यन्निमित्तं तं कृष्णं वज्री स्त्रीप्रेरितो योद्धुमन्वधावत् । स्वकार्यसाधकेन तेन युद्धोद्यमस्तस्यायुक्त एवेत्याह । क्रीडामृग इति । अयं वज्री ॥ ५ ॥ सुनाभेन चक्रेणोन्मथितं हतं सुतं भौमं दृष्ट्वा तस्य मात्रा धरित्र्या भूम्या आमंत्रितः प्रार्थितः संस्तस्य तनयाय भगदत्ताय हृतशेषं राज्यं दत्वा ॥ ६ ॥ तत्रांतःपुरे कुजेन भौमेन या आहृतास्ताः प्रहर्षश्च व्रीडा चानुरागश्च तैः प्रहिताः प्रेरिता येऽवलोकास्तैर्जगृहुः स्वीकृतवत्यः ॥ ७ ॥ आसां योषितां पाणींस्तत्तदनुरूपः सन्सविधं विवाहोचितप्रकारसहितं यथा भवति ॥ ८ ॥ सर्वतः सर्वैर्गुणैः स्वतुल्यानि प्रकृतेर्मायाया विविधं भवनं विस्तारस्तदिच्छया यद्वा प्रकृतेर्हेतोर्विविधं भवितुमिच्छया ॥ ९ ॥

'ककुद्वृषांके' इत्यमरः । अविद्धनासिकानां दमनासंभवादाह—विद्धनासिकेति । अतो वृषभग्नमानत्वेपि कामयमानत्वात् । यद्वा । शस्त्रैर्भृत आच्छादित इति प्रथमा ॥ ४ ॥ यद्वा 'आत्मवन्मन्यते जगत्' इति न्यायेन अयं कृष्णो वधूनां सत्यभामादीनां क्रीडामृग इति निंदन्नेवाद्रवदित्यर्थः । सगणो मरुद्गणसहितः । रुषा धनमदजातक्रोधेनांध इति । परमेशेन युद्धार्थमाद्रवणे हेतुः ॥ ५ ॥ सुष्ठु नाभिर्मध्यं यस्य स सुनाभः "अच् प्रत्यन्ववपूर्वात्सामलोम्नः" इत्यत्राजितियोगविभागात्समासान्तोऽत्राच् । तस्य नरकस्य शेषपदेनैव किंचिद्राज्यहरणं ज्ञायत इति । शुद्धमातृपितृकस्यापि नरकस्य बाणासुरसंगात्कुबुद्धिरुत्पन्नेति पुराणांतरकथाज्ञेया । "दुष्टायाः संगदोषेण सत्याश्च मतिविभ्रमः । यथैकरात्रसंगेन काष्ठघंटा गवा धृता" इति नीतिग्रंथेप्युक्तम् ॥ ६ ॥ आहृता दिग्विजये नृपान्विजित्य तेषां कन्या आनीता यास्ता इत्यर्थः । स्वीकृतवत्यः पतित्वेन वव्रुः ॥ ७ ॥ आसां भौमगृहानीतानां पुरुरूप इति पाठे तु योगिवत्क्वचिच्छक्त्या कृतानेकरूपः ॥ ८ ॥ जडाया मायाया बहुधा भवने जाड्यबाधिक्यं प्रसज्येतेति चेदाह । यद्वेति । "प्रकृतिं स्वामधिष्ठाय बहुरूपो भवाम्य

कालमागधशाल्वादीननीकै रुंधतः पुरम् ॥ अजीघनत्स्वयं दिव्यं स्वपुंसां तेज आदिशत् ॥ १० ॥ शंबरं द्विविदं बाणं मुरं वल्व लमेव च ॥ अन्यांश्च दंतवक्रादीनवधीत्कांश्च घातयत् ॥ ११ ॥ अथ ते भ्रातृपुत्राणां पक्षयोः पतितान्नृपान् ॥ चचाल भूः कुरुक्षेत्रं येषामाप ततां बलैः ॥ १२ ॥ स कर्णदुःशासनसौबलानां कुमंत्रपाकेन हतश्रियायुषम् ॥ सुयोधनं सानुचरं शयानं भग्नोरुमुर्व्यां न ननंद पश्यन् ॥ १३ ॥ कियान्भुवोऽयं क्षपितोरुभारो यद्द्रोणभीष्मार्जुनभीममूलैः ॥ अष्टादशाक्षौहिणिको मदंशैरास्ते बलं दुर्विषहं यदूनाम् ॥ १४ ॥

कालः कालयवनः रुंधत आवृण्वतः मुचुकुंदभीमादिभिर्निमित्तमात्रैः स्वयमेवाजीघनद्घातितवान् । तेन च स्वपुंसां तेजःप्रभावं कीर्तिं वा दत्तवान् ॥ १० ॥ शंबरद्विविदबल्वला नन्यानपि कांश्चित्प्रद्युम्नरामादिभिर्निमित्तमात्रैर्घातयदघातयत । घातयन्निति वा पाठः । दंतवक्रादीन् स्वयमवधीत् ॥ ११ ॥ नृपानघातयदित्यनुषंगः । कथंभूतान् । कुरुक्षेत्रमापततां गच्छतां येषां बलैः सैन्यैर्भूः सर्वाऽपि चचाल चकंपे ॥ १२ ॥ स कृष्णः । हता श्रीरायुश्च यस्य भग्नावूरू यस्य तम् उर्व्यां शयानं पश्यन्नपि न ननंद संतोषं न प्राप ॥ १३ ॥ अनभिनंदनप्रकारमेवाह । कियानिति । द्रोणादिभिर्मूलैः कारणभूतैः । यदिति योऽष्टादशाक्षौहिणियुक्तः ह्रस्वत्वमार्षम् । क्षपितो य उरुभारो

हम्'' इत्युक्तेः ''इंद्रो मायाभिः पुरुरूप ईयते'' इति श्रुतेश्च । यद्वा । प्रकृतेः स्वरूपस्य विशेषेण बुभूषा तयेति ''प्रकृतिश्च स्वरूपं च स्वभावश्च'' इत्यमरः । पंचमे प्रकृतिं भजस्वेत्यस्य स्वरूपं भजस्वेति व्याख्या कृता प्राग्भिः । तासु भौमगृहानीतविवाहितासु ॥ ९ ॥ आदिना पौंड्रकग्रहः पौंड्रकेनापि कृष्णे कैलासं गते द्वारकाऽऽगत्य निरुद्धेति स्फुटं हरिवंशे । अत्र तु स काश्यां हतः इति विरोधः कल्पांतरविवक्षया परिहर्त्तव्य इति स्वीयशक्तिप्रवेशनेनाघातयत् । तेन तद्द्वारा घातनेन तेषां स्वपुंसां ''निमित्तं परमीशस्य विश्वसर्गनिरोधयोः । हिरण्यगर्भः शर्वश्च'' इति श्रीदशमे वक्ष्यमाणत्वान्मुचुकुंदादीनामन्येषां निमित्तमात्रतैव हनन इति भावः ॥ १० ॥ आदिना विदूरथादिग्रहः प्रद्युम्नादिभिः शंबरादीनघातयत् । मुरादीन्स्वयमवधीदिति यथासंभवं योज्यम् ॥ ११ ॥ अथ शंबरादिघातनानंतरं ते विदुरस्य भ्रात्रोः पांडुधृतराष्ट्र्योः पुत्राणां युधिष्ठिरदुर्योधनादीनां पक्षयोः पार्श्वग्रहयोर्बलयोस्सेनयोर्वा पतितान् प्राप्तान् ''पक्षो मासार्द्धके पार्श्वग्रहे साध्यविरोधयोः । केशादेः परतो वृंदे बले सखिसहाययोः'' इति मेदिनी ॥ १२ ॥ १३ ॥ यद्वा उरु यथा भवति तथा क्षपितो भुवो भार इति योज्यम् । संधिरत्रार्षः । इत्यर्थ इति । तदपेक्षयाऽधिकस्य यदुसैन्यस्य विद्यमानत्वादिति भावः । मदंशैरिति द्रोणादेरपि विशेषणं तेषामपि भगवदंशाविष्टत्वात् । ननु भूभारस्तावद्व्यक्तिबाहुल्येन न स्यात्पर्वत समुद्रादीनां प्राचुर्य्यात् किं त्वधार्मिकप्राचुर्य्येणैव ते चाधार्मिका भगवता संहृता एव । न च यदुकुलस्याधार्मिकत्वमितिवाच्यं भगवत्परिकररूपत्वात् । ''ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनाम् । विप्रशापः कथम भूद्वृष्णीनां कृष्णचेतसाम् । शय्यासनाटनालापक्रीडास्नानाशनादिषु । न विदुः संतमात्मानं वृष्णयः कृष्णचेतसः'' इत्याद्युक्तिभ्यश्च । अतोऽत्रोच्यते भारो हि द्विविधः दुःखरूपः सुखरूपश्च । आद्यो दुःसहो यथा ग्रीष्मर्त्तौ परिहितवस्त्रादेः । द्वितीयस्तु सुसह एव यथा युवत्याः स्वरमणस्य भारः । यथा च वत्सलतया मात्रांकीकृतस्वपोतस्य यथा च वणिजां स्वमूर्ध्न्यारोपितस्वधनस्य । किंचाल्पबलेन जनेन स्वस्मादतिबलः सुखक रोऽपि भारो वोढुं न शक्यते यथा परमधार्मिकस्य महाभागवतस्य तपोबलाधिक्यमाविष्कुर्वतो ध्रुवस्यापि भारः पृथिव्याः तदुक्तं ''यदैकपादेन स पार्थिवार्भकस्तस्थौ तदंगुष्ठनिपीडिता मही । ननाम तत्रार्द्धमिभेन्द्रधि ष्ठिता तरीव सव्येतरतः पदेपदे'' इति यदा च भगवताऽपि स्वबलमाविष्क्रियते तदा परमानंदरूपस्यापि भारो न वोढुं शक्यते यथा श्रीभीष्मस्तुतौ ''धृतरथचरणोऽभ्ययाच्चलद्गुः ।'' इति । नृसिंहावतारेऽपि ''प्रोत्सर्पत क्ष्मा च यदाभिपीडितः'' इति । अतोऽत्र यद्यपि यदुकुलस्य भारः पृथिव्या भारत्वेन न मन्यते। यथा सुकुमार्याऽपि स्त्रिया बहुस्वर्णरत्नाद्याभरणभारस्तदपि प्रेमवता तत्कांतेन तदंगेभ्यः कश्चनकश्चनोत्सवादागंतुक एवाभरणभारो निष्का स्यते स्थाप्यते च सर्वदोपयोगी तथैवांशावतरणसमये नित्यपरिकररूपेषु यादवादिषु ये देवादयोंऽशाः प्रविष्टास्त एव द्वारकातो निष्क्रमय्य प्रभासे नीत्वोपसंहृता इति सर्वमनवद्यम् । दुर्विषहमन्यैः सोढुमशक्यम् ॥ १४ ॥

मिथो यदैषां भविता विवादो मध्वामदाताम्रविलोचनानाम् ॥ नैषां वधोपाय इयानतोऽन्यो मय्युद्यतेऽन्तर्दधते स्वयं स्म ॥१५॥ एवं संचिंत्य भगवान्स्वराज्ये स्थाप्य धर्मजम् ॥ नंदयामास सुहृदः साधूनां वर्त्म दर्शयन्॥१६॥उत्तरायां धृतःपूरोर्वंशः साध्वभिमन्युना॥स वै द्रौण्यस्त्रसंछिन्नः पुनर्भगवता धृतः ॥ १७ ॥ अयाजयद्धर्मसुतमश्वमेधैस्त्रिभिर्विभुः ॥ सोऽपि क्ष्मामनुजै रक्षन्रेमे कृष्णमनुव्रतः ॥ १८ ॥ भगवानपि विश्वात्मा लोकवेदपथानुगः ॥ कामान्सिषेवे द्वार्वत्यामसक्तः सांख्यमास्थितः ॥ १९ ॥ स्निग्धस्मितावलोकेन वाचा पीयूषकल्पया ॥ चारित्रेणाऽनवद्येन श्रीनिकेतन चात्मना ॥ २० ॥ इमं लोकममुं चैव रमयन्सुतरां यदून् ॥ रेमे क्षणदया दत्तक्षणस्त्रीक्षणसौहृदः ॥ २१ ॥

भुवः अयं कियानत्यल्प इत्यर्थः । यस्मान्मदंशैः प्रद्युम्नादिभिर्हेतुभूतैर्दुर्विषहं बलमास्ते ॥ १४ ॥ न चात्रान्य उपायः प्रभवति । किंतु मधुना य आमदः सर्वतो मदस्तेनाताम्रविलोचनानामेषः विवादो यदा भविष्यति तदेयानेवैषां वधोपायोऽन्यो नास्ति । एकात्मानोऽपि मय्युद्यते सति स्वयमेव विवादेनांतर्दधीरन्नित्यर्थः ॥ १५ ॥ एवं श्लोकद्वयेनोक्तं क्रमेण संचिंत्य स्वराज्ये स्थापयित्वा ॥ १६ ॥ धृतो रक्षितः ॥ १७ ॥ अनुजैः सह ॥ १८ ॥ सांख्यं प्रकृतिपुरुषविवेकम् ॥ १९ ॥ स्निग्धो यः स्मितसहितोऽवलोकस्तेन । पीयूषकल्पया सुधातुल्यया पाठांतरे सुधाप्रवाहरूपया आत्मना देहेन ॥ २० ॥ क्षणदया रात्र्या दत्तः क्षणोऽवसर उत्सवो वा यासां स्त्रीणां

अत्र यदुकुलनाशे आताम्राणि सर्वतो रक्तानि विलोचनानि येषाम् तेषाम् अतो विवादात् इत्यर्थ इति।इमान्मयि संजिहीर्षौ सति मन्मायामोहपतिमद्यजाविवादेनांतर्धास्यंत एवेति भावः।इयानेतावान् १५॥स्थाप्य स्थापयित्वा आर्षत्वाद्विनापि समासं ल्यप् । साधूनां वेदानुयायिनाम्॥१६॥ सः गर्भः धृतो जीवयुतः कृतः।पुनरित्युक्त्या भारतविरोधः परिहृतः॥१७॥स धर्मसुतोऽनपत्योपि 'पुत्रहीनस्य किं राज्यैः' इत्युक्तेरतत उपरतोपि कृष्णाज्ञया पुत्रतुल्यैरनुजैः सह राज्यं चकारेत्यर्थोपि नोक्तः । त्रिभिरिति त्रिगुणदक्षिणादानेनैकस्यैव त्रित्वमभूत्तदुक्तं "सकृत्कृतकर्मणो या वे दक्षिणा विहितागमो यावंती वर्द्धयेत्तां वै तावत्कृतकर्मणः फलम्" इति नीलकण्ठाद्यैर्भारतटीकाकृद्भिरुक्तम् । नोक्तः ॥ १८ ॥ अपीत्यनेन लोकसंग्रहार्थं गृहस्थधर्मानुचरणं न तु स्वार्थं सत्यसंकल्पत्वादितीममर्थं सूचयति विषयसेवया तल्लेपो नास्तीत्याह । असक्त इति । तत्र हेतुः सांख्यं स्वात्मज्ञानं "केवलं स्वात्मविज्ञानं सांख्यमित्यभिधीयते" इति तीर्थः ।'तद्ब्रह्मावेदहं ब्रह्मास्मि' इति श्रुतेः । 'लोकवेदपथानुगः' इत्युक्तिर्लोकवेदाविरुद्धानेव कामान्सुखरूपानिंद्राद्यैरुपायनत्वेन प्रेषितानित्याह ॥१९॥ पाठांतरे 'पीयूषकुल्यया' इति पाठे । जीवगोस्वामिनस्तु मायाशक्तिविलास एव तस्यानासक्तिश्चिच्छक्तिविलासे त्वासक्तिरेवेत्याहुः । क्रमेणावलोकवचनलीलारूपैश्चतुर्भिर्माधुर्य्यैं रमयन्नित्यप्रेमेणान्वयः ॥ २० ॥ इमं लोकमत्रस्थं भक्तजनम् अमुं देवादिलोकगं तत्रापि यदून् तत्रापि स्त्रीषु रेमे अवसरदानं दिनस्याप्यस्ति तत्र स च निंद्य इत्यत आह–उत्सवो वेति । अनेन क्षणदापदार्थौ । ध्वनितः । यद्वा । क्षणेन कामोत्सवेन सौहृदं यस्य सः तीर्थस्तु पाठांतरमपि व्याख्यत् । त्रीक्षणो रुद्रस्तस्य सौहृदं

तस्यैवं रममाणस्य संवत्सरगणान् बहून् ॥ गृहमेधेषु योगेषु विरागः समजायत ॥ २२ ॥ दैवाधीनेषु कामेषु दैवाधीनः स्वयं पुमान् ॥ को विस्रंभेत योगेन योगेश्वरमनुव्रतः ॥ २३ ॥ पुर्यां कदाचित्क्रीडद्भिर्यदुभोजकुमारकैः ॥ कोपिता मुनयः शेपुर्भगवन्मतकोविदाः ॥ २४ ॥ ततः कति पयैर्मासैर्वृष्णिभोजांधकादयः ॥ ययुः प्रभासं संहृष्टा रथैर्देवविमोहिताः ॥ २५ ॥ तत्र स्नात्वा पितॄन्देवान्नृषींश्चैव तदंभसा ॥ तर्पयित्वाथ विप्रेभ्यो गावो बहुगुणा ददुः ॥ २६ ॥ हिरण्यं रजतं शय्यां वासांस्यजिनकंबलान् ॥ यानं रथानिभान्कन्यां धरां वृत्तिकरीमपि ॥ २७ ॥ अन्नं चोरुरसं तेभ्यो दत्वा भगवदर्पणम् ॥ गोविप्रार्थासवः शूराः प्रणेमुर्भुवि मूर्धभिः ॥ २८ ॥ इति श्रीभागवते तृ० तृतीयोऽध्यायः ॥ ३ ॥ उद्धव उवाच ॥ अथ ते तदनुज्ञाता भुक्त्वा पीत्वा च वारुणीम् ॥ तया विभ्रंशितज्ञाना दुरुक्तैर्मर्म पस्पृशुः ॥ १ ॥

तासु क्षणं सौहृदं यस्य सः ॥ २१ ॥ गृहमेधेषु गृहधर्मेषु योगेषु कामभोगोपायेषु विराग औदासीन्यं जातमित्यर्थः ॥ २२ ॥ यदा स्वाधीनेष्वपि भगवतो विरागस्तदा दैवाधीने को विस्रंभेत विश्वासं प्रीतिं वा कुर्यात् । योगेन चेद्योगेश्वरं श्रीकृष्णमनुव्रतः ॥ २३ ॥ शेपुः शापं ददुः । भगवतो मतेऽभिप्राये कोविदा अभिज्ञाः ॥ २४ ॥ ॥ २५ ॥ वयःशीलादिबहुगुणोपेता याः गावस्ताः ॥ २६ ॥ कन्याश्च । वृत्तिकरीं जीविकापर्याप्ताम् ॥ २७ ॥ भगवदर्पणं यथा भवति गोविप्रार्थाः असवो येषाम् ॥ २८ ॥ इति श्रीमद्भागवते महा० तृतीयस्कन्धे टीकायां तृतीयोऽध्यायः ॥ ३ ॥ चतुर्थे बंधुनिधनं श्रुत्वात्मज्ञानलब्धये ॥ उद्धवस्योपदेशेन क्षत्ता मैत्रेयमागमत ॥ १ ॥ तैर्ब्राह्मणै

यत्रेति त्रीक्षणसौहृद इति । अनेन रुद्रगणचरणसमये स्त्रीभिस्सह रमणं कथमिति चोद्यं परिहृतम् ॥ २१ ॥ तस्य श्रीकृष्णस्य कामभोगोपायेषु रजोगुणमयकर्ममार्गेषु तदुपलक्षितकार्मिजनोपनीतभोग्यवस्तुषु च । इत्यर्थ इति । सर्वदा विरक्तस्यापि भगवतस्तदानीं लोकशिक्षार्थं स्पष्टी बभूवेति भावः ॥ २२ ॥ सा च वैराग्यलीलैतद्बोधयितुमित्याह—यदेति । न कोपीत्यर्थतो ज्ञेयम् ॥ २३ ॥ भगवन्मतं 'मिथो यथैषां भविता विवादः' इत्युक्तोक्तब्राह्मणशापजमिथोविवादेनैते नश्यंत्वित्येवंलक्षणं तस्यां कोविदा ज्ञातारः । अनेन मुनिशब्दार्थो ध्वनितः ॥ २४ ॥ ततो द्वारकातः सुखासक्तत्वात्कतिपयैर्मासैः देवमोहिता एव ययुः नित्यभूतास्तु प्रद्युम्नादयस्तत्रैव प्रापंचिकलोका लक्ष्यतया तस्थुरिति देवाश्च ते मोहिताश्चेति देवमोहिता वा ॥ २५ ॥ तत्र प्रभासे तदंभसा प्रभासतीर्थोदकेन अथ तर्पणोत्तरं गावो गाः ॥ २६ ॥ न केवलं गा एव ददुः किं तु परलोकसुखदमन्यदपि द्रव्यजातं ददुरित्याह—हिरण्यमिति । हिनोति दुःखं राति सुखमिति हिरण्यं रज्यति रागं तनोतीति रजतम् शय्यतेऽत्रेति शय्या वस्यंत आच्छाद्यंत एभिरिति वासांसि अजिनं नयतीत्यजिनं कं सुखं बलयति धारयतीति कंबलम् । यानं यात्यनेनेति यानं हयः । क्वचिद्धयानिति पाठः । तत्र हयति गंतव्यमनेनेति हयः 'हयगतौ,' इष्टं भावयंतीतीभा हस्तिनः कनं दीप्तिं यापयतीति कन्या रमतेऽत्रेति रथः ध्रियते विश्वमनयेति धरा, वृत्तिकरीं यावज्जीवं जीवनहेतुभूतां यानलक्षणम् । दिवोदासीये ''देशांतरं स्वीयगत्या यद्याति यापयेच्च यत् । तद्यानं विबुधैः प्रोक्तं शकट्यादि न तद्भवेत् ''इति इभानां यानत्वेपि पृथग्ग्रहणं शोभार्थं मुख्यत्वाद्वेति ॥ २७ ॥ उरुरसं षड्रसं तेभ्यो विप्रेभ्यः । असवो जीवनम् । अनेन तेषां धार्मिकत्वं व्यंजितं भगवदिच्छाधीनसंहारत्वं च भगवदिच्छा च ब्राह्मणा न कोपनीया इति लोकप्रवर्त्तनानित्यभूतया देवेभ्यो देवाद्यंशाविभाजना तेषां तन्मिषेण तत्तत्पदप्रापणा स्वीयषडैश्वर्यद्योतना स्वभक्तिभक्तधामलीलापरिकरादिमाहात्म्यगोपने न बहिर्मुखलोकप्रतारणा स्वभक्तजनानुरागविस्तारणाद्या इति । प्रणामस्वरूपं हि भुवि मूर्द्धभिरिति ॥ २८ ॥ २९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥ ( १ ) तेन कृष्णेन वानुज्ञाता दिवं गंतुमित्येव तत्त्वं तया वारुण्या उपलक्षणभूतया भगवतैव विभ्रंशितं ज्ञानं येषां ते पैष्टीं यवादिपिष्टोद्भूतां दुर्वचोभिः परस्परमिति शेषः । मर्म

तेषां मैरेयदोषेण विषमीकृतचेतसाम् ॥ निम्लोचति रवावासीद्वेणूनामिव मर्दनम् ॥ २ ॥ भगवान् स्वात्ममायाया गतिं तामवलोक्य सः ॥ सरस्वतीमुपस्पृश्य वृक्षमूलमुपाविशत् ॥ ३ ॥ अहं चोक्तो भगवता प्रपन्नार्तिहरेण ह ॥ बदरीं त्वं प्रयाहीति स्वकुलं संजिहीर्षुणा ॥ ४ ॥ अथाऽपि तदभिप्रेतं जानन्नहमरिंदम ॥ पृष्ठतोऽन्वगमं भर्तुः पादविश्लेषणाक्षमः ॥ ५ ॥ अद्राक्षमेकमासीनं विचिन्वन्दयितं पतिम् ॥ श्रीनिकेतं सरस्वत्यां कृतकेतमकेतनम् ॥ ६ ॥ श्यामावदातं विरजं प्रशांतारुणलोचनम् ॥ दोर्भिश्चतुर्भिर्विदितं पीतकौशांबरेण च ॥ ७ ॥ वाम ऊरावधिश्रित्य दक्षिणांघ्रिसरोरुहम् ॥ अपाश्रितार्भकाश्वत्थमकृशं त्यक्तपिप्पलम् ॥ ८ ॥ तस्मिन्महाभागवतो द्वैपायनसुहृत्सखः ॥ लोकाननुचरन्सिद्ध आससाद यदृच्छया ॥ ९ ॥ तस्यानुरक्तस्य मुनेर्मुकुंदः प्रमोदभावाऽऽनतकंधरस्य ॥ आशृण्वतो मामनुरागहाससमीक्षया विश्रमयन्नुवाच ॥ १० ॥

रनुज्ञाताः वारुणीं पैष्टीं मदिराम् ॥ १ ॥ वारुण्येव मैरेयं तस्य दोषेण । रवौ निम्लोचत्यस्तं गच्छति सति मर्दनं कदनम् ॥ २ ॥ उपस्पृश्य सरस्वत्यामाचम्य ॥ ३ ॥ अहं चोक्तः पूर्वमेव द्वारकायाम् ॥ ४ ॥ तदभिप्रेतं कुलसंहारादिकम् ॥ ५ ॥ कृतकेतं कृतावासम् । अकेतनमनाश्रयम् ॥ ६ ॥ विरजं संशुद्धंसत्त्वमयम् । विदितं लक्षितम् । कौशं कौशेयम् ॥ ७ ॥ अधिश्रित्योपरि स्थापयित्वा । अपाश्रितः पृष्ठतोऽवष्टब्धोऽर्भको बालः कोमलोऽश्वत्थो येन तं त्यक्तं पिप्पलं विषयसुखं येन तं तथाऽप्यकृशमानंदपूर्णम् ॥ ८ ॥ द्वैपायनः सुहृत्सखा च यस्य सः । स्वगुरुपुत्रत्वात् पराशरशिष्यो मैत्रेय इत्यर्थः ॥ ९ ॥ प्रमोदेन भावेन चानता

पस्पृशुरतिपीडाकराणि दुर्वाक्यान्यूचुरित्यर्थः ॥ १ ॥ तेषां यदूनाम् ॥ २ ॥ स्वात्ममायाया इति मौशललीला भगवतेन्द्रजालवदेव दर्शिता तेन च नित्यभूता लीलापरिकराः प्रद्युम्नाद्या यादवास्तु—द्वारकायामेव स्थितास्तत्तत्प्रविष्टदेवाश्च तत्तदंगेभ्यः पृथक्कृत्य तत्तद्रूपेण प्रभासमानीय संहृताः । रामप्रद्युम्नानिरुद्धानां भगवद्व्यूहत्वात् । "एते हि यादवाः सर्वे मद्गणा एव भामिनि । सर्वदा मत्प्रिया देवि मत्तुल्यगुणशालिनः । यथा सौमित्रिभरतौ यथा संकर्षणादयः । तथा ते नैव जायंते निजलोकाद्यदृच्छया" इति पाद्मोक्तेः । 'देवानां च हितार्थाय वयं प्राप्ता मनुष्यताम्' इति हरिवंशेऽक्रूरोक्तेश्च । यादवानां नित्यलीलापरिकरत्वात् तेषु सांबादिषु प्रविष्टानां ग्रहादीनां देवानामप्यधिकारमध्य एव नाशानर्हत्वात् मौशललीलेयं मायिक्येव मायिक्यपि सर्वमायिकसृष्ट्यभावेपि श्रीकृष्णलीलांतर्वर्त्तित्वादचिंत्ययोगमायानुमोदिता नित्यैव ज्ञेया ॥ ३ ॥ प्रपन्नस्य ममार्त्तिहरेण संजिहीर्षुणां तद्दर्पयता ॥ ४ ॥ अथापि कुलसंजिहीर्षुत्वे यद्वा । प्रभुर्मां न त्यक्ष्यतीति तदाभिप्रेतम् ॥ ५ ॥ ६ ॥ कुशा जीवविशेषास्तदुद्भवं कौशम् ॥ ७ ॥ तथापि त्यक्तपिप्पलत्वेपि संदर्भस्तु—नश्वोपि तिष्ठतीति विश्वासानर्हं पांचभौतिकं ब्रह्मांडमश्वत्थपदेनाह अर्भकपदेन सर्वब्रह्मांडेष्वस्य ब्रह्माण्डस्य क्षुद्रत्वमुक्तं त्यक्तपिप्पलं समापितैतद्ब्रह्मांडलीलम् ॥ ८ ॥ यद्यपि सुहृत्सख इति पाठो बहुपुस्तकेष्वस्ति तथापि बहुव्रीहौ टचोऽसंभवादयुक्त इव प्रतिभाति। दृष्टश्च प्राचीनतमटीकासु सुहृत्सखेति पाठः । आर्षत्वाश्रयणे टचोपि न दुर्लभत्वमिति टजंतोपि श्रेयान् सिद्धो योगसिद्धः लोकान्भूरादिकान् यदृच्छया केनापि भाग्ययोगेन "यदृच्छा निर्निमित्ते स्याद्भाग्ययोगेऽपिचेष्यते" इति ॥ ९ ॥ तस्य मैत्रेयस्य आशृण्वतः सतो मामेवोवाचेति तस्मादपि स्वस्मिन्ननुग्रहाधिक्यमाह । विश्रमयन् विरहश्रममपाकुर्वन् संसारक्लेशमपहृत्यानंदं जनयन्निति यावत् समीक्षया दृष्ट्या पाठांतरे प्रमोदभारानतेति पाठे ॥ १० ॥

श्रीभगवानुवाच ॥ वेदाऽहमंतर्मनसीप्सितं ते ददामि यत्तद्दुरवापमन्यैः ॥ सत्रे पुरा विश्वसृजां वसूनां मत्सिद्धिकामेन वसो त्वयेष्टः ॥ ११ ॥
स एष भावश्चरमो भवानामासादितस्ते मदनुग्रहो यत् ॥ यन्मां नृलोकान्रह उत्सृजंतं दिष्ट्या ददृश्वान्विशदानुवृत्त्या ॥ १२ ॥ पुरा मया
प्रोक्तमजाय नाभ्ये पद्मे निषण्णाय ममादिसर्गे ॥ ज्ञानं परं मन्महिमावभासं यत्सूरयो भागवतं वदंति ॥१३॥ इत्यादृतोक्तः परमस्य पुंसः प्रती
क्षणानुग्रहभाजनोऽहम् ॥ स्नेहोत्थरोमास्खलिताक्षरस्तं मुंचञ्छुचः प्रांजलिराबभाषे ॥ १४ ॥

कंधरा यस्य । पाठांतरे प्रमोदस्य भारेण । अनुरागेण सह हासो यस्यां तया समीक्षया विश्रमयन् विगतश्रमं कुर्वन् ॥ १० ॥ हे उद्धव ते मनसीप्सितमहमंतःस्थितो वेद
वेद्मि । दाने हेतुः । विश्वसृजां वसूनां च मिलितानां सत्रे हे वसो इति पुरा पूर्वजन्मनि त्वं वसुरभूस्तदा मत्प्राप्तिकामेन त्वयाऽहमिष्टोऽतस्तत्साधनं ददामि दास्यामि अन्यै
र्मत्पराङ्मुखैर्दुष्प्रापम् ॥ ११ ॥ तस्य भाग्यमभिनंदति । स एष भावो जन्म ते भवानां मध्ये चरमः यद्यस्मिन् मदनुग्रह आसादितो लब्धः यत्पुनर्मां रह एकांते विशदा
नुवृत्त्या एकांतभक्त्या ददृश्वान्दृष्टवानसि एतद्दिष्ट्या भद्रं जातमित्यर्थः । नृलोकान् नृशब्देन जीवास्तेषां लोकानुत्सृजंतं वैकुंठं गच्छंतमित्यर्थः ॥ १२ ॥ ददामीति
यदुक्तं तदेव निर्दिशति । पुरा पूर्वस्मिन्पाद्मे कल्पे आदिसर्गे सर्गोपक्रमे मम महिमा लीलाऽवभास्यते येन तत् ॥ १३ ॥ इत्येवमादृतश्चासावुक्तश्चाहं प्रतीक्षणं कृपाऽ

चं विनापि विश्वसृग्भ्यो वसूनां भिन्नत्वप्रसिद्धेरेव स्वामिचरणैर्वसूनां वेत्युक्तम् । अत्र सिद्धिपदं प्राप्तिपरं प्राप्तेरेव सिद्धित्वात् यतः पुरेष्टः पूजितोऽहमतो हेतोः तत्साधनं मत्प्राप्तिसाधनं ज्ञानं मत्पराङ्मुखैः मद्भक्तिहीनैः तत्त्वमाह
नित्यलीलापरिकर उद्धवे वसोः प्रवेशान्नित्यसिद्धस्याप्युद्धवस्य साधनसिद्धत्वमेव मैत्रेयमुद्धवं च ज्ञापयामास नित्यलीलाया रहस्यत्वरक्षणार्थं केचित्तु लीलाकर उद्धवो द्वारकायामेवास्ते इत्याहुः ॥११॥ तस्योद्धवस्य । इत्यर्थ
इति । विभक्तिप्रतिरूपकाव्ययमिदं कल्याणार्थे न तृतीयांतशब्द इति भावः । इत्यर्थ इति । एतेन ब्रह्मादिप्रार्थनया तत्तल्लोकं मार्गप्राप्तमुत्सृज्य निजधाम यन्तीमिति भावः । यद्यपि "भूत्वा द्विजवरस्त्वं वै मामुपैष्यसि केवलम्"
इति मुचुकुंदं प्रति श्रीकृष्णोक्तेः "प्रज्ञां कुर्वीत ब्राह्मणः" इति श्रुतेश्च विप्रस्यैव ज्ञानसाधनीभूतप्रव्रज्याधिकारित्वेन चरमशरीरत्वं तथापि यस्मिञ्शरीरे भगवतोऽत्यंतानुग्रहो जायेत तच्छरीरमपि चरममेवेत्याशयेनोक्तं मदनु
ग्रहो यदिति । अत एवोक्तं प्राक्तनपद्ये 'दुरवापमन्यैः' इति । अन्यैर्मद्भक्तेतरैः क्षत्रादिजन्मभाग्भिर्दुरवापं विप्रदेहं विनैव तद्देहप्राप्यस्य प्राप्तत्वाद्दुर्लभमित्यर्थः । यद्वा । भवानामवताराणां मध्ये एष चरमः परमकाष्ठामापन्न
स्तदंशिरूप इत्यर्थः । "एते चांशकलाः सर्वे कृष्णस्तु भगवान्स्वयम्" इत्युक्तेः स एष भावश्चरम इति पाठे "भावः सत्ता स्वभावाभिप्रायचेष्टात्मजन्मसु" इत्यमरात् भावो जन्मेत्यर्थः । यद्वा । स एष चरमो भावः ।
प्रेमा यद्येन प्रेम्णा मदनुग्रह इत्यर्थः । विनानुग्रहमेकांतसंगो न भवतीति भावः । सदाचरणशीलत्वात्तव मद्दर्शनादि जातमित्यभिप्रेत्याह—साधो इति ॥ १२ ॥ मम नाभ्ये नाभिभवे ज्ञानं चतुःश्लोक्युपदेशरूपं परं केवलं
मन्महिमावभास्यते येन तत् शुद्धभगवद्भक्तिप्रतिपादकमित्याह— भागवतमिति । यद्वा । परमिति भागवतविशेषणं परं सर्वपुराणेषु श्रेष्ठं "क्षेत्राणां चैव सर्वेषां यथा काशी ह्यनुत्तमा । तथा पुराणव्रातानां श्रीमद्भागवतं
द्विजाः" इति द्वादशे सूतोक्तेः । ज्ञायतेऽनेनेति ज्ञानं भगवज्ज्ञानसाधनं भागवतमेवेत्यर्थः । 'वेद्यं वास्तवमत्र वस्तु शिवदम्' इत्युक्तेः ॥ १३ ॥ भाजन इति पुंस्त्वमार्षम् । 'भाजनं योग्यपात्रयोः' इति मेदिनी । पाठां

कोन्वीश ते पादसरोजभाजां सुदुर्लभोऽर्थेषु चतुर्ष्वपीह ॥ तथापि नाहं प्रवृणोमि भूमन्भवत्पदांभोजनिषेवणोत्सुकः ॥ १५ ॥ कर्माण्यनीहस्य भवोऽभवस्य ते दुर्गाश्रयोऽथारिभयात् पलायनम् ॥ कालात्मनो यत्प्रमदायुताश्रयः स्वात्मन्रतेः खिद्यति धीर्विदामिह ॥ १६ ॥ मंत्रेषु मां वा उपहूय यत्त्वमकुंठिताखंडसदात्मबोधः ॥ पृच्छेः प्रभो मुग्ध इवाऽप्रमत्तस्तन्नो मनो मोहयतीव देव ॥ १७ ॥

वलोक एवानुग्रहस्तस्य भाजनः पात्रभूतः पाठांतरे प्रतिक्षणमनुग्रहस्य पात्रमिति शुचोऽश्रूणि मुंचन्नाबभाषे उक्तवानस्मि ॥ १४ ॥ न हि स्वाज्ञाननिवृत्तिमात्रकामोऽहं किंतु त्वन्निषेवणोत्सुकस्त्वयि चाघटमानाचरणं दृष्ट्वा मे मोहो भवत्यतस्त्वं तत्त्वज्ञानं देहीति प्रार्थयितुमाह । को न्विति । चतुर्षु धर्मादिषु । तथापि हे भूमन् भवत्पदांभोजनिषेव णोत्सुकोऽहं तान्न प्रवृणोमि ॥ १५ ॥ अघटमानाचरणं दर्शयति । कर्माण्यनीहस्य निःस्पृहस्य निष्क्रियस्य वा । अभवस्याजन्मनो भवो जन्म कालात्मनस्तवारिभया दुर्गाश्रयः पलायनं च स्वात्मनि रतिर्यस्य तस्य बह्वीभिः स्त्रीभिर्गृहस्थाश्रम इति यदिहास्मिन् संसारे विदुषाममि धीः संशयेन खिद्यति ॥ १६ ॥ किं च । मंत्रेषु च

तरे प्रतिक्षणेति पाठे । आबभाष इति । परोक्षव्यपदेशः । सर्वेंद्रियाणां भगवदेकविषयत्वेन बाह्यप्रवृत्तिशून्यतामपेक्ष्येति ज्ञायते "सुप्तोहं किल विललाप" इत्यादौ तथा दृष्टत्वात् ॥ १४ ॥ ननु तवाज्ञाननिवृत्तिरपेक्षिता चेत्तर्हि तामप्यहं करोमीति चेदाह—न हीति । अघटमानाचरणमसंभवाचरणं मोहोऽज्ञानं यतो भवति अतो हेतोः हे ईश सर्वसंपादनसमर्थोसि त्वमित्यभिप्रायः यद्यपि त्वच्चरणारविंदसेविनां चतुर्षु धर्मार्थकाममोक्षरूपे ष्वर्थेषु वर्गेषु न कोप्यतिशयेन दुर्लभस्तथापीति तानहं न वांछामि तत्र हेतुः भवत्पदांभोजेति । भूमन्निति सर्वोत्कृष्टसेवया सर्वमयत्नेनैव प्राप्यत इत्याह ॥ १५ ॥ अस्माकं दासानां त्वद्गुणरूपलीलैव दर्शनश्रवणा दिभिरानंदहेतुरतो नातीव हठो ज्ञाने यत्किञ्चिज्ज्ञानस्य सत्त्वात्सामस्त्येन ज्ञानासंभवाच्च किं तु लीला अपि काश्चनकाश्चन विरुद्धाः संति तत्रैव मे जिज्ञासास्तीत्याह द्वाभ्याम् । अनहिस्य निष्क्रियस्य कर्माणि गोवर्द्धनोद्धरणादीनि न तु विश्वसृष्ट्यादीनि तेषां हि मायागुणकृतत्वेन त्वय्यारोपितत्वेन स्वरूपतस्तावकत्वाभावात् । 'निष्क्रियं निष्कलं शांतं निरवद्यं निरंजनम्' इति श्रुत्युक्तेन निष्क्रियत्वेन न विरोधः गोवर्द्धनो द्धरणादिकर्मणां तु त्वया स्वरूपेणैव कृतत्वात्तेषां निष्क्रियत्वेन विरोध एवेति संशयः । यद्वा । नराकृति परब्रह्म संभवः नराकृतित्वेऽप्राकृतानंतकर्मवत्त्वं ब्रह्मत्वे प्राकृताप्राकृतकर्मराहित्यं तत्रैव ब्रह्मशब्दस्य रूढेः । न च निर्विशेषस्वरूपमेव ब्रह्म सविशेषस्वरूपो भगवानिति स्वरूपभेदाद्व्यवस्थेयमिति वाच्यं स्वरूपद्वयाभावादिति षष्ठोक्तेः संशय एव यतस्ततस्तथाऽभवस्याजन्मनो जन्म तथा कालात्मनो जरासंधा दिभयात्पलायनं समुद्रदुर्गाश्रयश्च तथात्मन्येव रतिर्यस्य तस्य प्रमदानामयुतेन सहाश्रमप्रयुक्तपित्रादियोगे आत्मारामस्य तव रतिः रुक्मिण्यादिप्रमदाभी रमणे तु तवात्मारामता नापगच्छेत् । तासामात्मभूतत्वादित्यहं जानाम्येव अत एव मया आश्रमशब्दः प्रयुक्तः इहास्मिन् विरोधे विदां विदुषामपि धीः समाधानानुपलब्धेः खिद्यति । न च निष्क्रियत्वाजत्वकालात्मत्वात्मारामत्वादीनामेव सत्यत्वं सक्रियत्वजन्मवत्त्वभीरुत्व ग्रहाश्रमत्वानामनुकरणमात्रत्वमिति वाच्यं, तथात्वे विदुषां धीरत्र खिद्यतीति नोक्तं स्यात् । सक्रियत्वादीन्यनुकरणान्येव न तु वास्तवानीति ज्ञाने कुतः खेदः तथैवाक्रियत्वादिभिः प्राकृतक्रियादय एव निषिद्धा न त्वप्राकृत क्रियादय इति ज्ञाने कुतः खेदः । तथैव ब्रह्मत्वभगवत्वाभ्यामक्रियत्वशक्तिसक्रियत्वादिव्यवस्थेति ज्ञाने कुतः खेद इति च ततश्च सक्रियत्वादीन्यनुकरणमात्राणीति ब्रुवाणाः अक्रियत्वमप्राकृताक्रियत्वम् । अभ वत्वमप्राकृतजन्मवत्त्वमिति च ब्रुवाणा ब्रह्मत्वभगवत्त्वाभ्यामेवाक्रियत्वसाक्रियत्वादिव्यवस्थेति ब्रुवाणा अखिद्यद्बुद्धय एव विद्वांस इति ध्वनिः । यदुक्तं स्वयं भगवता "नमे विदुः सुरगणाः प्रभवं नो महर्षयः" इति सुरगणा ब्रह्माद्या महर्षयो व्यासाद्या अपि मे प्रकृष्टभवजन्म न विदुरित्यर्थः भीष्मेणत्युक्तं "न ह्यस्य कर्हिचिद्राजन्पुमान्वेद विधित्सितम् । यद्विजिज्ञासया युक्ता मुह्यंते:कवयोपि हि" इति ॥ १६॥ अन्यदाह किंचेति । प्रस्तुतेषु जरासंध

ज्ञानं परं स्वात्मरहःप्रकाशं प्रोवाच कस्मै भगवान्समग्रम् ॥ अपि क्षमं नो ग्रहणाय भर्तर्वदांऽजसा यद्वृजिनं तरेम ॥ १८ ॥ इत्यावेदितहार्दाय मह्यं स भगवान्परः ॥ आदिदेशाऽरविंदाक्ष आत्मनः परमां स्थितिम् ॥ १९ ॥ स एवमाराधितपादतीर्थादधीततत्त्वात्मविबोधमार्गः ॥ प्रणम्य पादौ परिवृत्य देवमिहागतोऽहं विरहातुरात्मा ॥२०॥ सोऽहं तद्दर्शनाह्लादवियोगार्तियुतः प्रभो ॥ गमिष्ये दयितं तस्य बदर्याश्रममंडलम् ॥२१॥ यत्र नारायणो देवो नरश्चभगवानृषिः ॥ मृदु तीव्रं तपो दीर्घं तेपाते लोकभावनौ ॥ २२ ॥ श्रीशुक उवाच ॥ इत्युद्धवादुपाकर्ण्य सुहृदां दुःसहं वधम् ॥ ज्ञानेनाऽशमयत् क्षत्ता शोकमुत्पतितं बुधः ॥२३॥ स तं महाभागवतं व्रजंतं कौरवर्षभ ॥ विश्रंभादभ्यधत्तेदं मुख्यं कृष्णपरिग्रहे ॥ २४॥ विदुर उवाच ॥ ज्ञानं परं स्वात्मरहःप्रकाशं यदाह योगेश्वर ईश्वरस्ते ॥ वक्तुं भवान्नोर्हति यद्धि विष्णोर्भृत्याः स्वभृत्यार्थकृतश्चरंति ॥ २५ ॥

प्रस्तुतेषु सत्सु मामाहूय वै अहो पृच्छेरपृच्छः । अकुंठितः कालादिनाऽखंडः संततः सदात्मा संशयादिरहितो बोधो विद्याशक्तिर्यस्य । मुग्धवदज्ञवत् । अप्रमत्तोऽवहितः सन् ॥ १७ ॥ स्वात्मनस्तव रहो रहस्यं तत्त्वं तस्य प्रकाशकम् । कस्मै ब्रह्मणे सर्वनामत्वमार्षम् । नोऽस्माकं ग्रहणायापि क्षमं यदि योग्यं तर्हि वद । भर्त्तः स्वामिन् । यद्यतो वृजिनं संसारदुःखमनायासेन तरिष्यामः ॥ १८ ॥ आवेदितो हार्दो हृदिस्थितोऽभिप्रायो येन तस्मै ॥ १९ ॥ आराधितपादो भगवान् स एव तीर्थं गुरुस्तस्मादधीतोऽधिगतस्तत्त्वात्मविबोधस्य परमार्थात्मज्ञानस्य मार्गो येन सोऽहं देवं परिवृत्य प्रदक्षिणीकृत्य ॥ २० ॥ तस्य दर्शनेनाह्लादो वियोगेनार्तिश्च ताभ्यां युतो बदर्याश्रमस्थानं गमिष्यामि ॥ २१ ॥ मृदु परोपद्रवशून्यं तीव्रं दुश्चरं दीर्घमाकल्पांतं तेपाते तपश्चरत इत्यर्थः । लोकभावनौ लोकानुग्रहकारकौ ॥ २२ ॥ ज्ञानेन विवेकेन॥ २३ ॥ कृष्णपरिग्रहे परिवारे मुख्यं विश्रंभाद्विश्वासात् । कौरवर्षभ हे परीक्षित् ॥ २४ ॥ यद्यस्माद्विष्णोर्भृत्याः स्वभृत्यप्रयोजनसाधकाः संतश्चरंति न हि

वधराजसूयाद्यर्थगमनादिविचारेषु अपृच्छः । उद्धव त्वमत्र कर्त्तव्यं ब्रूहीति पृष्टवान् अत्र मुग्ध इव त्वं न तु मुग्धः मोहयतीव न तु मोहयति सर्वज्ञसदादयालुनस्तथात्वानुपपत्तेरिति ॥ १७ ॥ स्वामिनो भृत्यदुःखहरणं योग्यमेवेत्याह-भर्तरिति यद्वा कस्मै प्रोवाच न कस्मा अपीत्यर्थः तेन यज्ज्ञानं कस्मैचिदपि नोक्तं तन्नोऽस्माकं ग्रहणाय क्षमं तव भृत्यत्वाद्वयं तवोपासका ज्ञानाधिकारिण एवेति भावः । "वृजिनं कल्मषे दुःखे" इति मेदिनी । "तरति शोकमात्मवित्" इति श्रुतेः । शोकं संसृतिक्लेशम् ॥ १८ ॥ मह्यमुद्धवाय परमां चतुःश्लोकीप्रोक्ताम् । यद्वा । या स्थितिः शुकदेवेन न विवृता नापि मैत्रेयेण विदुराय च तामलौकिकीमित्यर्थः ॥ १९ ॥ ॥ २० ॥ तस्य भगवतः दयितं प्रियम् ॥ २१ ॥ यत्र बदर्य्याश्रमे इत्यर्थ इति । संलापार्थतपतेश्चरणमप्यनेकार्थत्वादर्थ इति भावः । लोकानुग्रहेत्युक्तेर्लोकसंग्रह एवार्थः ॥ २२ ॥ उत्पतितं प्राप्तं ज्ञानेन तत्त्वज्ञानेन यतो बुधः ॥ २३ ॥ स विदुरः तमुद्धवं विश्वासादयमुद्धवो मदभीष्टं वक्ष्यतीत्येवंरूपात्प्रणयाद्वा 'विस्रंभः प्रणयेऽपि च' इत्यमरात् । कृष्णपरिग्रहे कृष्णपरिचारकजने तदुक्तं वररुचिना "महिषी च सुतो भ्राता मातुलः श्यालकस्तथा । मंत्री दलञ्च सेना च सर्वे एते परिग्रहाः" इत्यत्रोद्देश्यविधेयभावत्वान्न लिङ्गादिनियम इति "यत्रोद्देश्यविधेयत्वं तत्रायं नियमो न हि । रामदाराश्च सीतेयं करुणाभाजनं हरिः" इत्युक्तेः ॥ २४ ॥ स्वात्मरहः

उद्धव उवाच ॥ ननु ते तत्त्वसंराध्य ऋषिः कौषारवोंऽति मे ॥ साक्षाद्भगवताऽऽदिष्टो मर्त्यलोकं जिहासता ॥ २६ ॥ श्रीशुक उवाच ॥ इति सह विदुरेण विश्वमूर्तेर्गुणकथया सुधया प्लावितोरुतापः ॥ क्षणमिव पुलिने यमस्वसुस्तां समुषित औपगविर्निशां ततोऽगात् ॥ २७ ॥ राजोवाच ॥ निधनमुपगतेषु वृष्णिभोजेष्वधिरथयूथपयूथपेषु मुख्यः ॥ स तु कथमवशिष्ट उद्धवो यद्धरिरपि तत्यज आकृतिं त्र्यधीशः ॥ २८ ॥ श्रीशुक उवाच ॥ ब्रह्मशापापदेशेन कालेनाऽमोघवांछितः ॥ संहृत्य स्वकुलं नूनं त्यक्ष्यन्देहमचिंतयत् ॥ २९ ॥

कृतार्थानामन्यत्कृत्यमस्तीत्यर्थः ॥ २५ ॥ तत्त्वाय संराध्य इति । अयं भावः । भगवतैव स्मरणमात्रेण तवापि तत्त्वमुपदिष्टप्रायम् । अथ केवलमसंभावनादिनिवृत्तये ज्ञानी कश्चिदाराध्यः स च तवाराध्यो मैत्रेयो न त्वहं ममांतिक एव त्वदुपदेशे तस्यादिष्टत्वादिति ॥ २६ ॥ प्लावितोऽपनीत उरुस्तापो यस्य सः । यमस्वसुर्यमुनायाः पुलिने तीरे तां निशां क्षणमिव समुषितः । औपगविरुद्धवः ॥ २७ ॥ ब्रह्मशापेन निधनं प्राप्तेषु पयस्मात्त्रयाणां ब्रह्मादीनामीशो हरिरप्याकृतिं मनुष्याकारं त्यक्तवान् ॥ २८ ॥ ब्रह्म शापो

प्रकाशं चतुःश्लोकीरूपम् । यद्वा स्वोऽसाधारणो यो भृत्यस्यार्थः 'भवत्पदांभोजनिषेवणोत्सुकः' इत्यत्रोक्तस्तं कुर्वंतीति तथा इत्यर्थ इति "नैवेह नामुत्र च कश्चनार्थ ऋते परानुग्रहमात्मशीलम्" इत्युक्तेरिति भावः ॥ २५ ॥ तत्त्वाय ज्ञानाय संराध्यस्ते त्वया ननु निश्चये अत्राशयमाह अयं भाव इति कौषारवो मैत्रेयः मे ममातिसमीपे ॥ २६ ॥ वृत्तान्यथात्वमार्षम् । गाथा वा छंदः उपगुरप्युद्धवपितुर्नामांतरमस्ति हरिवंशे तु तस्य महाभाग इति नामोक्तम् । "उद्धवो देवभागस्य महाभागसुतोऽभवत्" इति । ततो रात्र्यंते ॥ २७ ॥ निश्चितं धनं भगवतो नित्यधाम उपगतेषु समीपं प्राप्तेषु सत्सु इति वास्तवोर्थः । अयोद्धत्वादवशिष्ट इति चेदाह । अधिरथेति । अधिरथाः प्रबलयोद्धारस्तेषां यूथपाः पुनस्तेषां यूथपास्तेष्वपि मुख्य एतेन न तत्सदृशोऽन्यो योद्धास्तीत्यर्थः यद्वेदं हरेर्विशेषणमेवं आकृतिं पृथिवीं 'भूमिस्त्वनिराकृतिः' इति कोशात् । मर्त्यलोकं जिहासता "अस्माल्लोकादुपरते मयि" इत्याद्युक्तेः । मर्त्यलोकपरित्यागो देहत्यागोऽत्र विवक्षित इति ॥ २८ ॥ त्यक्ष्यन्देहमिति । अत्र तत्त्वमाह । यद्यपि श्रीकृष्णस्य स्वयं भगवत्त्वेन नित्यस्थितिः सिद्धापि तथापि मंदधियां भ्रांत्यपनोदार्थमेवं व्याख्यायते । भगवदाराधनवाक्येन सा सिध्यति आराध्याभावे चाराधनस्यैवासिद्धेः । तस्य च परमाप्ते शास्त्रे विना तत्कथनं न संभवति असंभवकथनस्यापुरुषार्थत्वात् । आरोपश्च परिच्छिन्नगुणरूप एव वस्तुनि कल्प्यते नानंतगुणरूपे "एतच्च धारणाध्यानमंगलम्" इत्यत्रैकादशस्कंधे स्फुटतरं व्याख्यास्यामः । भगवदाकाराणां नित्यत्वं पंचमस्कंधेपि वर्णितं "नयस्वपि वर्षेषु भगवान्नारायणो महापुरुषः पुरुषाणां तदनुग्रहायात्मतत्त्वव्यूहेनात्मनाद्यापि सन्निधीयते सन्निधानं च साक्षाद्रूपेणैवात्मना" इत्युक्तेः । नित्यत्वांगीकार एव शालिग्रामशिलादिषु नृसिंहादिभेदश्च संगच्छते तत्तदवतारसान्निध्यादेव हि तत्तद्भेदः कृष्णमधिकृत्य गोपालतापिन्यां च "तदुहोवाच ब्रह्मणोसावनवरतं ध्यातः स्तुतः परार्द्धांते सोऽबुध्यत गोपालवेशो मे पुरस्तादाविर्बभूव" इति । "तथा गोविंदं सच्चिदानंदविग्रहं सुरभूरुहतलासीनं सततं समरुद्गणोहं तोषयामि" इति श्रुतेश्च । तथा माध्वभाष्येऽपि "श्रुतिश्च वासुदेवः संकर्षणः प्रद्युम्नोऽनिरुद्धोऽहं मत्स्यः कूर्मो वराहो नरसिंहो वामनो रामो रामो रामकृष्णौ बुद्धः कल्किरहं शतधाहं सहस्रधाहममितोहमनंतोहं नैवैते जायंते नैते म्रियंते नैषामज्ञानबंधो न मुक्तिः सर्व एवह्येते पूर्णा अजरा अमृताः परमाः परमानंदाः" इति चतुर्वेदशिखायाम् ॥ । तथा नृसिंहपुराणे "युगेयुगे विष्णुरनादिमूर्तिमास्थाय विश्वं परिपाति दुष्टहा" इति । तथा श्रीनृसिंहतापिन्यां "तद्वाप्यक्रद्भिर्व्याख्यातम्" एतदेव नृसिंहविग्रहं नित्यमिति श्रुतिश्च सेयं "ऋतं सत्यं परं ब्रह्म नृकेशरिविग्रहम्" इति एवं च श्रीमत्स्यादीनां पृथक्पृथक् वैकुंठलोकाः श्रूयंते पाद्मोत्तरखंडे एवमेव 'जलेषु मां

अस्माल्लोकादुपरते मयि ज्ञानं मदाश्रयम् ॥ अर्हत्युद्धव एवाऽद्धा संप्रत्यात्मवतां वरः ॥३०॥ नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुः ॥ अतो मद्वयुनं लोके ग्राहयन्निह तिष्ठतु ॥ ३१ ॥ एवं त्रिलोकगुरुणा संदिष्टः शब्दयोनिना ॥ बदर्याश्रममासाद्य हरिमीजे समाधिना ॥ ३२ ॥ विदुरोऽप्युद्धवाच्छ्रुत्वा कृष्णस्य परमात्मनः ॥ क्रीडयोपात्तदेहस्य कर्माणि श्लाघितानि च ॥ ३३ ॥ देहन्यासं च तस्यैवं धीराणां धैर्यवर्धनम् ॥ अन्येषां दुष्करतरं पशूनां विक्लवात्मनाम् ॥ ३४ ॥ आत्मानं च कुरुश्रेष्ठ कृष्णेन मनसेक्षितम् ॥ ध्यायन्गते भागवते रुरोद प्रेमविह्वलः ॥ ३५ ॥

ऽपदेशो मिषं यस्य तेन कालेन स्वशक्तिरूपेणामोघं वांछितं यस्य न ह्यत्र शापः प्रभुः किंतु भगवदिच्छैवेत्यर्थः ॥ २९ ॥ मय्युपरते सति ज्ञानमर्हति ज्ञानयोग्यो भवति ॥ ३० ॥ मत्तः सकाशादीषदपि न्यूनो न भवति यद्यस्माद्गुणैर्विषयैर्न क्षोभितः मद्वयुनं मद्विषयं ज्ञानं लोकस्योपदिशन्निह तिष्ठतु ॥ ३१ ॥ एवमनेनाभिप्रायेण शब्दयोनिना वेदकर्त्रा ईजे पूजयामास ॥ ३२ ॥ ३३ ॥ अन्येषां पशूनां पशुतुल्यानां विक्लवात्मनामधीरचित्तानाम् ॥ ३४ ॥ मनसेक्षितं चिंतितम् ॥ ३५ ॥

रक्षतु मत्स्यमूर्तिः' इति नारायणवर्माद्युक्तमपि संगच्छते अत एव श्रीशुकदेवेन प्रतिपादितं 'पतिर्गतिश्चांधकवृष्णिसात्वताम्' इति विशेषस्त्वत्र कृष्णसंदर्भे निरीक्षणीय इति ॥ २९ ॥ अस्मान्मर्त्यलोकात् उपरते गते सति ॥ ३० ॥ यद्वा गुणैरप्राकृतैर्बलबुद्धिवीर्यज्ञानवैराग्यादिभिर्नार्दितः तेषां वेगधारणसामर्थ्यमेव तैरनार्दितत्वमत्रबोध्यं यथा कामादिवेगधारणसामर्थ्यमेव कामाद्यनार्दितत्वमुच्यते उद्धवो हि अधिरथयूथपयूथपेषु मुख्य इत्युच्यते तदपि न क्वापि तादृशस्याप्राकृतबलस्याविष्कारः कृत इति बलवेगधारणमस्यास्तीत्येवं बुद्ध्यादिवेगधारणं ज्ञेयं तदेवाहाहमिवासाधारणः प्रभुर्वशीकृतमायः इत्यर्थः । मद्वयुनं "ज्ञाने मत्या च तंतूनां विस्तारे वयुनं स्मृतम्" इति निरुक्तिः । इह बदरिकाश्रमे मुनिद्वारा लोकं ग्राहयन् ॥ ३१ ॥ संदिष्टः संदेशपत्रं दत्त्वा प्रेषित इमं संदेशं नरनारायणौ ब्रूहीत्यर्थः । स च नोद्धवो एवापि इति पद्यमेव शब्दानां वेदलक्षणानामपि योनिनोत्पादकेन अनेन वेदेष्वप्यनुपलभ्यज्ञानं भगवत्यस्तीति ध्वनितं तच्चोद्धवे न्यस्तमित्यनुध्वनिः । उद्धवमुखान्नरनारायणौ तदेव प्रापताविति प्रत्यनुध्वनिः । संदेशपत्रं च स्वस्तिश्रीमन्नरनारायणौ प्रति विज्ञापनं चेदम्—सपादशतवर्षपर्यंतश्च मम प्रकाशगता लीला भवेत्तन्मर्यादा च संप्रति वृत्तेति द्वारकायां च मया सपरिकरेणांतर्धीयते प्रभासं च गत्वावतारिताधिकारिकदेवांस्तत्तपदे प्रस्थाप्य ब्रह्मप्रार्थितैनैकेनांशेन वैकुंठे साऽर्जुनेनांशेनालक्षित युष्मत्पदे च गम्यते । किञ्च मत्पूर्णस्वरूपदर्शनोत्कंठानां युष्माकं कृते मत्प्रियपार्षदमुख्येऽस्मिन्नुद्धवे स्वसारूप्यसाद्गुण्येऽर्पिते यतः "नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुः । अतो मद्वयुनं लोकं ग्राहयन्निह तिष्ठति" इदम् ॥ ३२ ॥ क्रीडया लीलाशक्त्या कर्त्र्या उपाधिरूपैर्नात्त उपात्तो गृहीतो देहो यस्य तस्य लीलाशक्तेरधीनावेव तस्याविर्भावतिरोभावाविति भावः ॥ ३३ ॥ देहस्य न्यासो निक्षेप इव गुप्तरक्षणं धीराणां योगिभक्तानां धैर्यवृद्धये एवान्यथा भगवद्देहत्यागं श्रुत्वा तेषामपि धैर्यं नश्यतेति भावः । यद्वा धीराणां यादवादीनां देहानां न्यासं द्वारकायामप्रकटप्रकाशेऽर्पणं प्रभासे च त्यागं श्रुत्वा कीदृशम् । धैर्यवर्द्धनं श्रुत्वैव विदुरो हृदि धैर्यमेतदानिवार्यमत्र शोको न कार्य इत्येवं धृतिं चकारेत्यर्थः । यद्वा वर्द्ध च्छेदनेपि । अहो एतादृशानां यदीत्थं गतिः किं पुनरन्येषां मादृशामिति धैर्यच्यावकमित्यर्थः । अन्येषामभक्तानां योगिनामपि एकत्र देशे देहस्यांतर्द्धापनमन्यत्र देशे त्यागत्वेन लोके ज्ञापनमिति योगिभिरपि दुष्करमतिशयेनेत्यर्थः । संदर्भस्तु । देहन्यासमप्रकटलीलावकाशे धाम्नि स्वविग्रहस्य विन्यासं प्रवेशनमित्याह—पशूनां केवलकर्ममार्गसक्तानां 'पशुर्वै स देवानाम्' इति श्रुतेः । अत एव विक्लवात्मनामेवं कर्तुं व्याकुलमनसाम् ॥ ३४ ॥ आत्मानं स्वं विदुरमिति यावत् । चिंतितं मैत्रेय त्वया मच्छ्रुतं विदुराय वाच्यमिति स्मृतं ध्यायन् अहो मद्भाग्यं श्रीकृष्णेन लोकं त्यक्तवताप्यहं स्मृत इति चिंतयन् । भागवते उद्धवे अहो

कालिंद्याः कतिभिः सिद्ध अहोभिर्भरतर्षभः ॥ प्रापद्यत स्वःसरितं यत्र मित्रासुतो मुनिः ॥ ३६ ॥ इति श्रीभा० तृतीय० चतुर्थोऽध्यायः ॥ ४॥
श्रीशुक उवाच ॥ द्वारि द्युनद्या ऋषभः कुरूणां मैत्रेयमासीनमगाधबोधम् ॥ क्षत्तोपसृत्याऽच्युतभावशुद्धः पप्रच्छ सौशील्यगुणाभितृप्तः ॥ १ ॥
विदुर उवाच ॥ सुखाय कर्माणि करोति लोको न तैः सुखं वाऽन्यदुपारमं वा ॥ विंदेत भूयस्तत एव दुःखं यदत्र युक्तं भगवान्वदेन्नः ॥ २ ॥
जनस्य कृष्णाद्विमुखस्य दैवादधर्मशीलस्य सुदुःखितस्य ॥ अनुग्रहायेह चरंति नूनं भूतानि भव्यानि जनार्दनस्य ॥ ३ ॥ तत् साधुवर्याऽऽदिश
वर्त्म शं नः संराधितो भगवान् येन पुंसाम् ॥ हृदि स्थितो यच्छति भक्तिपूते ज्ञानं सतत्त्वाधिगमं पुराणम् ॥ ४ ॥

कालिंद्याः सकाशात् सिद्ध एव विदुरः कतिपयैर्दिनैः स्वःसरितं गंगां प्रापद्यत प्राप्तः ॥ ३६ ॥ इति भागवततृतीयस्कंधे टीकायां चतुर्थोऽध्यायः ॥ ४ ॥ पंचमे भगव
ल्लीलां क्षत्रा पृष्टो महामुनिः ॥ प्रोवाच महदादीनां सर्गं तैश्च हरेः स्तुतिम् ॥ १ ॥ उक्तश्चतुर्भिरध्यायैः क्षत्तुर्मैत्रेयसंगमः ॥ संवादस्तु तयोः स्कंधद्वयेनाथ निगद्यते
॥ २ ॥ द्युनद्या गंगाया द्वारि हरिद्वारे आसीनं न तु कर्मव्यग्रम् । तत्र हेतुः । अगाधोऽपरिच्छिन्नो बोधो यस्येति मैत्रेयस्य सौशील्यमार्जवादिगुणाश्च करुणादय
स्तैरभितृप्तः । पाठांतरे क्षत्तुः सौशील्यादिभिरभितृप्तं संतुष्टं मैत्रेयम् ॥ १ ॥ प्रश्नानेवाह । सुखायेति पंचदशभिः । तैः कर्मभिः सुखं वान्यस्य दुःखस्योपशमं वेत्यर्थः ।
अथवाऽन्यद्वा न विंदेत किं तदित्यपेक्षायां तस्यैव निर्देशः उपारमं वेति ततस्तैः कर्मभिर्भूयः पुनःपुनर्दुःखमेव विंदेत । अत्रैवंविधे संसारे नोऽस्माकं यद्युक्तं कर्तुं योग्यं
तत्सर्वज्ञो भगवान्वदेन्निरूपयतु ॥ २ ॥ दैवात्प्राचीनकर्मणो निमित्तभूतात्कृष्णाद्विमुखस्वातोऽधर्मशीलस्यातः सुदुःखितस्य जनस्यानुग्रहाय भव्यानि मंगलानि भूतानि
चरंति भवंतः परोपकारस्वभावा एवेत्यर्थः ॥ ३ ॥ तत्तस्मात् हे साधुवर्य शं सुखरूपं वर्त्म न आदिश कथय येन वर्त्मना संराधितो हृदि स्थितः सन् तत्त्वाधिगम

विदुरो यो भगवता चिंतितः स धन्योहं तु मंदभाग्योस्मीति चिंतयानं श्रीशुकः प्रोत्साहयति त्वं तु मृत एव तेन जीवितोऽतस्तस्मादपि श्रेष्ठोसीत्याह—कुरुश्रेष्ठेति ॥ ३५ ॥ सिद्ध एव कृतकृत्य एव यत्र स्वःसारिति मित्रा
सुतो मैत्रेयः ॥ ३६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥ महामुनिर्मैत्रेयः तैर्महदाद्यधिष्ठातृदेवैः ॥ ( १ ) ॥ अथ संगमानंतरं तयोर्विदुरमैत्रेययोः ॥ ( २ ) ॥ तत्र कर्माव्यग्रत्वं
पाठांतरे द्वितीयांतपाठे ॥ १ ॥ इत्यर्थ इति । उपाङ्पूर्वाद्रमतेः शांतिरर्थ इति भावः । अत्रान्यशब्दस्य समासावस्थायां दुगागमविधायकशास्त्राभावादचारुतां समीक्ष्याह—यद्वेति । अन्यदित्यव्ययमेवान्यार्थे । तस्यैवान्यत्प
दनिर्दिष्टस्यैव तत इति तृतीयार्थे तसिरित्याह—तैरिति । एवंविधे बहुदुःखाढये भगवत्पदमत्र भवदर्थकं सर्वे सर्वार्थवाचका इति न्यायमाश्रित्य ॥ २ ॥ अहं न वदामीति त्वया न वाच्यं भवादृशां परोपकारस्वभावत्वादित्याह
जनस्येति । अतो कृष्णविमुखत्वात् "पापं नातः परतरं यद्वैमुख्यं जनार्दनात्" इत्युक्तेः । अतोऽधर्मशीलत्वात् सुपदमतीवार्थेत्र अतीवदुःखितस्येत्यर्थः । भावयंति चिंतयतीति भूतानि भक्ता इति यावत् । भू मिश्रीकरण
चिंतनयोरतो वर्तमान औणादिकः क्तो बोध्यः । 'भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम्' इत्यमरः । इत्यर्थ इति । "परोपकाराय सतां विभूतयः" इत्युक्तेरिति भावः ॥ ३ ॥ यद्यस्मात्साधूनामेष स्वभावस्तत्तस्मा

करोति कर्माणि कृतावतारो यान्यात्मतंत्रो भगवांस्त्र्यधीशः ॥ यथा ससर्जाऽग्र इदं निरीहः संस्थाप्य वृत्तिं जगतो विधत्ते ॥ ५ ॥ यथा पुनः स्वे ख इदं निवेश्य शेते गुहायां स निवृत्तवृत्तिः ॥ योगेश्वराधीश्वर एक एतदनुप्रविष्टो बहुधा यथाऽसीत् ॥ ६ ॥ क्रीडन्विधत्ते द्विजगोसुराणां क्षेमाय कर्माण्यवतारभेदैः ॥ मनो न तृप्यत्यपि शृण्वतां नः सुश्लोकमौलेश्चरितामृतानि ॥ ७ ॥ यैस्तत्त्वभेदैरधिलोकनाथो लोकानलोकान्सहलोकपालान् ॥ अचीक्लृपद् यत्र हि सर्वसत्त्वनिकायभेदोऽधिकृतः प्रतीतः ॥ ८ ॥ येन प्रजानामुत आत्मकर्मरूपाभिधानां च भिदां व्यधत्त ॥ नारायणो विश्वसृगात्मयोनिरेतच्च नो वर्णय विप्रवर्य ॥ ९ ॥ परावरेषां भगवन्व्रतानि श्रुतानि मे व्यासमुखादभीक्ष्णम् ॥ अतृप्नुम क्षुल्लसुखावहानां तेषामृते कृष्णकथाऽमृतौघात् ॥ १० ॥

आत्मापारोक्ष्यं तत्सहितं पुराणमनादिवेदप्रमाणकम् ॥ ४ ॥ करोति कर्माणीत्यादीनां वर्णयेति पंचमश्लोके क्रियासंबंधः । यथा येन प्रकारेण पुरुषरूपेण कृतावतारः त्र्यधीशः त्रिगुणमायानियंता अतः स्वतंत्र एव यानि कर्माणि करोति । कर्माण्येव विशेषतः पृच्छति । यथेत्यादिना । निरीहो निष्क्रियो निःस्पृहो वा संस्थाप्य सुस्थितं कृत्वा । वृत्तिं जीविकाम् ॥ ५ ॥ स्वे स्वीये खे हृदयाकाशे निवेश्य स्थापयित्वा । निवृत्ता वृत्तयो यस्य । गुहायां योगमायायाम् । बहुधा ब्रह्मादिरूपेण अधीश्वरः अतर्क्यैश्वर्यः ॥ ६ ॥ मत्स्याद्यवतारभेदैः क्रीडन्यानि कर्माणि विधत्ते यथा पुनर्विशेषं प्रष्टुमौत्सुक्यमाविष्करोति । मन इति सुश्लोकाः पुण्यकीर्तयस्तेषां मौलिरिवाधिक्येनोपरि विराजमानस्तस्येत्यर्थः ॥ ७ ॥ अधिलोकनाथो लोकनाथाधिपतिः अलोकाँल्लोकालोकपर्वताद्बहिर्भागान् अचीक्लृपत्कल्पयामास । यत्र येषु सर्वाणि यानि सत्त्वानि तेषां निकायास्तेषां भेदः अधिकृतस्तत्तत्कर्माधिकारी आश्रित इति वा ॥ ८ ॥ उतापि च येन प्रकारेण जीवानामात्मा स्वभावस्तत्कृतं कर्म तत्कृतं रूपं तत्कृता अभिधास्तासां भेदं कृतवान् । विश्वस्रष्टा स्वयमात्मयोनिः स्वतःसिद्धः ॥ ९ ॥ ननु महाभारते त्वया सर्वं श्रुतमेव किं पुनः प्रश्नैस्तत्राह । परे त्रैवर्णिका अवरे

द्वेतोः त्वं तु साधुवर्योसीत्यवश्यं वक्तव्यमेव त्वयेत्यर्थः । यच्छति ददाति ॥ ४ ॥ अतो मायानियंतृत्वात् ईहापदस्योभयार्थत्वाद्वेति ॥ ५ ॥ एकस्यानायासेन बहुधाभवने हेतुः 'योगेश्वराधीश्वरः' इति एतादृशं सृष्ट्वानुप्रविष्ट इति ॥ ६ ॥ पुण्यकीर्त्तयः शंकरादयः इत्यर्थ इति । पुण्यश्लोकेड्यकर्मणः इत्युक्तेरिति भावः । "सेशं पुनात्यन्यतमो मुकुन्दात्को नाम लोके भगवत्पदार्थः" इति न्यायेन सर्वोत्कृष्टत्वं हरेरेवेत्यर्थः ॥ ७ ॥ अधिश्रित इति पाठे आश्रित इति वार्थः प्रतीतः । प्रतीतिविषयः ॥८॥ तत्कृतं स्वभावकृतं पुनस्तत्कृतं कर्मकृतं तत्कृता रूपकृता अभिधा नाम स्वभावः सात्त्विकादिः कर्मयज्ञादिरूपस्वरूपं ब्राह्मणत्वादि अभिधा ब्राह्मणादि एतत्स्वभावादि भेदविधानप्रकारं कथने सामर्थ्यं द्योतयन्नाह विप्रवर्येति यद्यपि बहुपुस्तकेषु विश्वसृगात्मयोनिरिति पाठोस्ति तथापि "सृजिदृशोः" इति सूत्रस्थरज्जुसृड्भ्यामिति भाष्यप्रयोगाद्विश्वसृजः पदांते कुत्वाभावादयुक्तः प्रतिभातीति । यद्वा । कुत्वकल्पनार्षेति ॥ ९ ॥ तेषां परावरधर्माणां तत्र भारते इत्यर्थ इति । कृष्ण कथामृतौघस्य प्रतिक्षणं स्वादुतमत्वात्कृष्णकथायामलंबुद्धिर्नोदयत इति भावः । "अभीक्ष्णं मुहुरर्थेथ क्षुल्लं तुच्छे क्षुधाजिति ।

कस्तृप्नुयात्तीर्थपदोऽभिधानात्सत्रेषु वः सूरिभिरीड्यमानात ॥ यः कर्णनाडीं पुरुषस्य यातो भवप्रदां गेहरतिं छिनत्ति ॥ ११ ॥ मुनिर्विवक्षुर्भगवद्गुणानां सखाऽपि ते भारतमाह कृष्णः ॥ यस्मिन्नृणां ग्राम्यसुखानुवादैर्मतिर्गृहीता नु हरेः कथायाम् ॥ १२ ॥ सा श्रद्दधानस्य विवर्धमाना विरक्तिमन्यत्र करोति पुंसः ॥ हरेः पदानुस्मृतिनिर्वृतस्य समस्तदुःखात्ययमाशु धत्ते ॥ १३ ॥ तान्शोच्यशोच्यानविदोऽनुशोचे हरेः कथायां विमुखानघेन ॥ क्षिणोति देवोऽनिमिषस्तु येषामायुर्वृथावादगतिस्मृतीनाम् ॥ १४ ॥

शूद्रादयस्तेषां व्रतानि धर्माः मे मया अभीक्ष्णं पुनःपुनः तेषां श्रवणेनातृप्नुम तृप्ताः स्म तेषां तुच्छसुखावहत्वात् यस्तु तत्र कृष्णकथामृतौघः सूचितस्तस्माद्दते तत्र त्वलं बुद्धिर्नास्तीत्यर्थः ॥ १० ॥ तत्र हेतुः । क इति । तीर्थपदः कृष्णस्य अभिधानात्कथामृतौघात् सत्रेषु समाजेषु सूरिभिर्नारदादिभिः ॥ ११ ॥ महाभारतस्याप्यत्रैव तात्पर्यमित्याह । मुनिः श्रीकृष्णो वेदव्यासो भगवद्गुणान् मोक्षधर्मीते नारायणीयाख्याने वक्तुमिच्छुः सन्नर्थकामादिवर्णनं तु हरिकथायां मतिप्रवेशार्थमेवेत्याह । यस्मिन्निति नृणां मतिर्ग्राम्यसुखानुवादैर्द्वारभूतैर्नु निश्चितं हरेः कथायां गृहीता नीता । तदुक्तमितिहाससमुच्चये । "कामिनो वर्णयन् कामं लोभं लुब्धस्य वर्णयन् ॥ नरः किं फलमाप्नोति कूपेंऽधमिव पातयन् ॥ लोकचित्तावतारार्थं वर्णयित्वाऽत्र तेन तौ ॥ इतिहासैः पवित्रार्थैः पुनरत्रैव निंदितौ ॥ अन्यथा घोरसंसारबंधहेतू जनस्य तौ ॥ वर्णयेत्स कथं विद्वान्महाकारुणिको मुनिः" इति ॥ १२ ॥ श्रीहरिकथायां मतिप्रवेशस्य फलमाह । सा कथा मतिर्वा । अन्यत्र ग्राम्यसुखे । ततः किमत आह । हरेरिति ॥ १३ ॥ एवंभूतायां कथायां ये न रमंते तान् शोचति । शोच्या ये तेषामपि शोच्यांश्च तत्राविदो भारततात्पर्यानभिज्ञान् शोच्यान् ये तु ज्ञात्वापि हरेः कथायां विमुखास्तांस्तेषामपि शोच्यानिति योज्यम् । अनिमिषः कालो येषामायुः क्षिपति । अत्रैव हेतुः । वृथैव वादगतिस्मृतयो वाग्देहमनोव्यापारा येषाम् ॥ १४ ॥

छिकाकृति क्षुधाकर्तृहर्त्र्योः क्षोदयुते नरे" इति निरुक्तिः ॥ १० ॥ तत्रालंबुद्ध्यभावे 'सत्रं यज्ञे समाजे च च्छादनारण्यछद्मसु" इति निरुक्तिः । तद्धरिकथायां मत्यानयनम् । अत्र भारते तेन व्यासेन तौ कामार्थौ अत्रैव भारत एव अन्यथा कामार्थयोरेव वस्तुतस्तात्पर्ये तौ कामार्थौ विद्वदादिपदत्रयबोध्ये तस्मिन्व्यासे तद्वर्णनं न संगच्छत इति यः कृष्णकथामृतौघः कर्णरूपां नाडीं डलयोरैक्यान्नालीं प्रविश्य हृदयं गतः 'नाली कुल्याशाकभिदोः' इति कोशात् ॥ ११ ॥ यस्मिन्भारते ॥ १२ ॥ ततः ग्राम्यसुखनिवृत्तेः अतोत्र ॥ १३ ॥ शोच्या जडास्तेषामपि सर्वथा शोचनीयान् तत्रेति वाक्यालंकारे । अत्रैवायुःक्षपणे एवं यद्वा । त्रिविधा जनाः संति श्रद्दधाना अश्रद्दधाना विमुखाश्चेति । भक्तौ परमपुरुषार्थत्वेन ये विश्वसंतस्ते श्रद्दधानाः 'तावत्कर्माणि कुर्वीत न निर्विद्येत यावता ॥ मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते । जातश्रद्धो मत्कथासु" इत्यादौ परमपुरुषार्थत्वेनैव प्रतिपादयिष्यमाणत्वात् । पुरुषसाधनमात्रत्वेनैव विश्वसतोऽश्रद्दधानाः भक्त्या विनैव पुरुषार्थसाधनेच्छवो विमुखा इति तत्र प्रथमान् साभिनंदनमुक्त्वा द्वितीयानुल्लंघ्य तृतीयाञ्छोचति शुद्धभक्तैर्ये शोच्याः स्वर्गमोक्षादिसाधनरतास्तैरपि शोच्यान् भक्तिरहितकर्मज्ञानयोगादिमतोहं शोचामि । तत्र हेतुः शास्त्राण्यधीत्याधीत्यापि तत्तात्पर्यमविदुषः यतो हरेरित्यादि अघेन प्राचीनार्वाचीनमहापराधेनैव हेतुनेत्यर्थः ।

तदस्य कौषारव शर्मदातुर्हरेः कथामेव कथासु सारम् ॥ उद्धृत्य पुष्पेभ्य इवाऽऽर्तबंधो शिवाय नः कीर्तय तीर्थकीर्तेः ॥ १५ ॥ स विश्वजन्मस्थि
तिसंयमार्थे कृतावतारः प्रगृहीतशक्तिः ॥ चकार कर्माण्यतिपूरुषाणि यानीश्वरः कीर्तय तानि मह्यम् ॥ १६ ॥ श्रीशुकउवाच ॥ स एवं भगवान्
पृष्टः क्षत्रा कौषारविर्मुनिः ॥ पुंसां निःश्रेयसार्थेन तमाह बहु मानयन् ॥ १७ ॥ मैत्रेय उवाच ॥ साधु पृष्टं त्वया साधो लोकान्साध्वनुगृह्णता ॥
कीर्तिं वितन्वता लोक आत्मनोऽधोक्षजात्मनः ॥ १८ ॥ नैतच्चित्रं त्वयि क्षत्तर्बादरायणवीर्यजे ॥ गृहीतोऽनन्यभावेन यत्त्वया हरिरीश्वरः ॥१९॥
मांडव्यशापाद्भगवान्प्रजासंयमनो यमः ॥ भ्रातुः क्षेत्रे भुजिष्यायां जातः सत्यवतीसुतात् ॥ २० ॥ भवान्भगवतो नित्यं संमतः सानुगस्य
च ॥ यस्य ज्ञानोपदेशाय माऽऽदिशद्भगवान् व्रजन् ॥ २१ ॥ अथ ते भगवल्लीला योगमायोपबृंहिताः ॥ विश्वस्थित्युद्भवांतार्था वर्णयाम्यऽनुपू
र्वशः ॥ २२ ॥ भगवानेक आसेदमग्र आत्माऽऽत्मनां विभुः ॥ आत्मेच्छानुगतो वाऽऽत्माऽनानामत्युपलक्षणः ॥ २३ ॥

तत्तस्माद्धे कौषारवास्य विश्वस्य शिवाय कथासु सारभूतां हरेः कथामेवोद्धृत्य नः कीर्तय । यथा पुष्पेभ्यो मधु मधुप उद्धरति तद्वदुद्धृत्य॥ १५॥ विशेषतः श्रीकृष्णकथा
कथनीयेत्याशयेनाह । स इति । यो विश्वसर्गाद्यर्थं पूर्वं गृहीतशक्तिः स एव पुरुषेषु कृतावतारः सन् पुरुषानतिक्रम्य वर्तमानानि यानि कर्माणि चकार तानि विस्तराद्वद
॥१६॥ पुंसां निःश्रेयसमेवार्थः प्रयोजनं तेन हेतुना पृष्टः॥ १७॥बहुमानमेवाह । साध्विति पंचभिः । अधोक्षज एवात्मा मनो यस्य तस्यात्मनः स्वस्य कीर्तिं च प्रसंगाद्वि
तन्वता ॥ १८ ॥ हरिर्यद्गृहीत एतच्चित्रं न भवति । कुतः । बादरायणवीर्यजे ॥ १९ ॥ ननु तर्हि कथं शूद्रत्वं कथं च लोकानुग्राहकत्वं तत्राह । मांडव्यशापादिति ।
भ्रातुर्विचित्रवीर्यस्य क्षेत्रे क्षेत्रत्वेन स्वीकृतायां भुजिष्यायां दास्यां यम एव त्वं जातोऽसि ॥ २० ॥ किंच । भवानिति । कुतः यस्य तव ज्ञानोपदेशाय मामादिष्टवान् ।
चकारात्स्वयमपि स्मृत्यैवोपदिष्टवानिति ॥२१॥ विश्वस्थित्यादयोऽर्था विषया यासां ताः ॥२२॥ तत्र सृष्टिलीलां वर्णयितुं ततः पूर्वावस्थामाह । इदं विश्वमग्रे सृष्टेः पूर्वं

ननु तेपि स्वमतस्थापने नानावादनानागतिनानास्मृत्यादिमंतः सदासि प्रगल्भंते तत्र साधिकारमाह—वृथेति । वृथेत्युभयत्रान्वयि वा ॥ १४ ॥ यतो वृथैवायुःक्षयोऽन्यत्र तस्माद्धेतोः ॥ १५ ॥ 'मधुरेण समापयेत्' इति
न्यायमनुसंदधानो विस्तारेण कृष्णकथैव कीर्तनीया श्राव्या चेति तामेव पृच्छति प्रश्नांते स इति । प्रगृहीता शक्तिर्माया तद्गुणा वा येन सः । पिप्रति गाः पालयंति घृतादिविक्रयेण लोकं पूरयंति वेति पुरुषा
गोपास्तेषु यानि दावानलपानादीनि ॥ १६ ॥ यद्वा पुंसां निःश्रेयसो मुक्तिहेतुः "श्रेयः श्रुतिं भक्तिमुदस्य' इत्याद्युक्तेर्भक्तिः :स एवार्थो यस्य तेन भगवल्लीलाश्रवणजातभक्त्या पुमांसो मुच्यन्त इति हेतोः पृष्टव
तेत्यर्थः । तं विदुरम् ॥ १७ ॥ साध्नोति परकार्यमिति साधुपदार्थमन्वर्थवन्तं तेनैव पदेनामंत्रयन्नाह—साधो इति । साधु समीचीनं यथा स्यात्तथा "साधुर्वार्द्धुषिके चारौ सज्जने त्वभिधेयवत्" इति मेदिनी ॥ १८ ॥
ननु बादरायणवीर्यजो धृतराष्ट्रादिरपि सत्यं परं तु त्वयि ततो विशेषं इत्याह—गृहीत इति । यादृशो हरौ भावः प्रेमा न तादृशोऽन्यस्मिन्नित्यनन्यभावः ॥ १९ ॥ अत्राक्षिपति तर्हीति ॥ २० ॥ अन्यदाधिक्यमाह—किञ्चे
ति । संमतः श्रेष्ठत्वेन मतः अनुगैरुद्धवादिभिस्सहितस्य आदिष्टवान् आज्ञप्तवान् व्रजन्नंतर्दधत् ॥ २१ ॥ २२ ॥ तत्रादौ ततः सृष्टेः नन्वसत्पुनः कथमासीदिति चेदाह—कारणात्मनेति । 'इष्टस्यार्थस्य संसिद्धौ को विद्वान्य

स वा एष तदा द्रष्टा नापश्यद्दृश्यमेकराट् ॥ मेनेऽसंतमिवात्मानं सुप्तशक्तिरसुप्तदृक् ॥ २४ ॥ सा वा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका ॥ माया नाम महाभाग ययेदं निर्ममे विभुः ॥२५॥ कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः ॥ पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान् ॥ २६ ॥ ततोऽभवन्महत्तत्त्वमव्यक्तात्कालचोदितात् ॥ विज्ञानात्माऽऽत्मदेहस्थं विश्वं व्यंजंस्तमोनुदः ॥ २७ ॥

परमात्मा भगवानेक एवास आसीत् आत्मनां जीवानामात्मा स्वरूपं विभुः स्वामी च नान्यद्द्रष्टृदृश्यात्मकं किंचिदासीत् । कारणात्मना सत्त्वेऽपि पृथक्प्रतीत्यभावादित्याह । अनानामत्युपलक्षणो नानाद्रष्टृदृश्यादिमतिभिर्नोपलक्ष्यत इति । तथा । यद्वा । अकारप्रश्लेषं विनैवायमर्थः यः सृष्टौ नानामतिभिरुपलक्ष्यते स तदा एक एवासीदिति । कुतः । आत्मेच्छा माया तस्या अनुगतो लये सति । यद्वा आत्मन एकाकित्वेनावस्थानेच्छायामनुवृत्तायामित्यर्थः ॥ २३ ॥ तत्र प्रथमं मायोद्भवप्रकारमाह द्वाभ्याम् । स वै एष द्रष्टा सन् दृश्यं नापश्यत् । यतः स एकराडेक एव तदा प्रकाशते आत्मानमसंतमिव मेने दृश्याभावे द्रष्टृत्वाभावात् । तदाह । सुप्ता मायायाः शक्तयो यस्य सः न त्वसंतमेव मेने यतोऽसुप्ता दृक् चिच्छक्तिर्यस्येति ॥ २४ ॥ सा वै द्रष्टृदृश्यानुसंधानरूपा सदसदात्मिका कार्यकारणरूपा । यद्वा सद्दृश्यमसदृश्यमात्मस्वरूपं च तयो रात्मा यस्याः तदुभयानुसंधानरूपत्वात् ॥२५॥ कालवृत्त्या कालशक्त्या गुणमय्याम् क्षुभितगुणायाम् अधोक्षजः परमात्मा आत्मांशभूतेन पुरुषेण प्रकृत्यधिष्ठातृरूपेण वीर्यं चिदाभासमाधत्त । वीर्यवान् चिच्छक्तियुक्तः ॥ २६ ॥ कालप्रेरितादव्यक्तान्मायातः तत्त्वपदं परित्यज्य महतो लक्षणमतः पुँल्लिंगनिर्देशो विज्ञानात्मेति सत्त्वप्रधानत्वात् स्वदेहस्थं विश्वमुच्छूनबीजगतमंकुरादिरूपं वृक्षमिव व्यंजन् व्यंजयन् प्रकाशयन् यतोऽसौ तमोनुदतीति तमो नुदः । तदुक्तं सात्वततंत्रे । "विष्णोस्तु त्रीणि रूपाणि पुरुषा

त्नमाचरेत्'' इति न्यायमाश्रित्याह—यद्वेति । तदा सृष्टेः प्राक्काले अत्र हेतुमाशंकते कुत इति अधिष्ठानलयं विनाधिष्ठेयलयो न दृष्टचर इति चेदाह—यद्वेति । इत्यर्थ इति । सिसृक्षारिरक्षादिवदेवकाकितिष्ठासापि कदाचित्तत्र जीवादृष्टवशादुदयत इति भावः ॥ २३ ॥ तत्रेति वाक्यालंकारे । 'स वै नैवरेमे तस्मादेकाकी न रेमे'' इति श्रुतेः । तदसदिव मननं चिच्छक्तिः स्वरूपभूतांतरंगशाक्तिः ॥ २४ ॥ कार्यस्य प्रागभावात्सच्छब्दवाच्यत्वं कारणस्य पूर्वं सत्त्वादसच्छब्दवाच्यत्वं न घटते इति चेदाह—यद्वेति।तयोर्दृश्यादृश्ययोः स्थूलसूक्ष्मयोर्महाभूतमहदादिरूपयोरात्मा स्वरूपं विद्यते यस्या मायायाः सा सदसदात्मिका 'शैषिकः कप्' तयोरुभयोर्दृश्यादृश्ययोरनुसंधानमधिष्ठानं यत्तद्रूपत्वात् तयोस्तस्यानिर्गतत्वांदितिभावः ॥ २५ ॥ क्षुभितो विकारत्वेनोत्थितो गुणो रजो यस्यां तस्यां परमात्मा इंद्रियजज्ञानातीतः चिदाभासं चित्प्रतिबिंबं समाधत्त स्थापितवान् ॥ २६ ॥ कालप्रेरितात् तदुत्पत्त्युंचितकालप्रापितविकृतेः विज्ञानात्मा चित्तस्वरूपेण सर्वदेहेषु योऽस्तीत्यर्थः । उच्छूनं धरणिसलिलसंयोगात्किंचित्स्थूलतां प्राप्तं यद्बीजं तत्र गतं तमोनुदः प्रलयकालीनाज्ञानध्वंसकर्त्ता रजोंशरूपेण क्रियाशक्तिमान्महत्तत्त्वभेदः सूत्रतत्त्वमप्यभूदिति च ज्ञेयमत्र यन्महत्स्रष्टुः पुरुषस्य महदभेदेनोपासनस्य फलं तत्सात्वततंत्रे पंचरात्रे उक्तं 'विष्णोः' इत्यादिना । यद्वा । विज्ञानात्मा सृष्ट्यनुकूलविज्ञानरूपः श्रुतावीक्षणशब्दानिर्दिष्टः कुलालस्य कार्यानुकूलपूर्वज्ञानभासमानभाविष्यद्घटादिवत्स्वस्थं विश्वं व्यंजन्नित्यर्थः । अण्डसंस्थितं विराडंतर्यामिरूपं सर्वभूतस्थं सर्वांतर्यामिरूपम् । तानि त्रीणि रूपाणि ब्रह्माभिन्नानि ज्ञात्वा ॥ २७ ॥

सोऽप्यंशगुणकालात्मा भगवद्दृष्टिगोचरः ॥ आत्मानं व्यकरोदात्मा विश्वस्याऽस्य सिसृक्षया ॥ २८ ॥ महत्तत्त्वाद्विकुर्वाणादहंतत्त्वं व्यजायत ॥
कार्यकारणकर्त्रात्मा भूतेंद्रियमनोमयः ॥ २९ ॥ वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ॥ अहंतत्त्वाद्विकुर्वाणान्मनो वैकारिकादभूत् ॥ वैकारि
काश्च ये देवा अर्थाभिव्यंजनं यतः ॥ ३० ॥ तैजसानींद्रियाण्येव ज्ञानकर्ममयानि च ॥ तामसो भूतसूक्ष्मादिर्यतः खं लिंगमात्मनः ॥ ३१ ॥
कालमायांशयोगेन भगवद्वीक्षितं नभः ॥ नभसोऽनुसृतं स्पर्शं विकुर्वन्निर्ममेऽनिलम् ॥ ३२ ॥ अनिलोऽपि विकुर्वाणो नभसोरुबलान्वितः ॥
ससर्ज रूपतन्मात्रं ज्योतिर्लोकस्य लोचनम् ॥ ३३ ॥ अनिलेनान्वितं ज्योतिर्विकुर्वत्परवीक्षितम् ॥ आधत्तांऽभो रसमयं कालमायांऽशयो
गतः ॥३४॥ ज्योतिषांऽभोऽनुसंसृष्टं विकुर्वद्ब्रह्मवीक्षितम् ॥ महीं गंधगुणामाधात् कालमायांऽशयोगतः ॥ ३५ ॥ भूतानां नभआदीनां यद्यद्भव्या
वरावरम् ॥ तेषां परानुसंसर्गाद्यथासंख्यं गुणान्विदुः ॥ ३६ ॥

ख्यान्यथो विदुः ॥ प्रथमं महतः स्रष्टृ द्वितीयं त्वंडसंस्थितम् ॥ तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते” इति ॥ २७ ॥ अहंकारोत्पत्तिमाह सार्धाभ्याम् । सोऽपीति ।
अंशश्चिदाभासो निमित्तं गुणा उपादानं कालः क्षोभकस्तदात्मा तदधीनः भगवान् सर्वाध्यक्षस्तद्दृष्टिगोचरः सन् स्वयमात्मानं व्यकरोद्रूपांतरमनयत् ॥ २८ ॥ अहंकारस्य
लक्षणमाह । कार्यमधिभूतं कारणमध्यात्मं कर्तृ अधिदैवं तेषामात्मा आश्रयः । अत्र हेतुः । भूतेंद्रियमनोमयस्ताद्विकारवान् मन इति देवानामप्युपलक्षणम् ॥ २९ ॥
एतदेव विभागतः प्रपंचयति । वैकारिक इत्यादिना । वैकारिकः सात्त्विकस्तैजसो राजसः देवाश्च वैकारिका सात्त्विकाहंकारकार्यभूता इत्यर्थः । यतो येभ्य इंद्रियाधिष्ठा
तृभ्यो देवेभ्यो हेतुभूतेभ्योऽर्थाभिव्यंजनं शब्दादिप्रकाशो भवति ॥ ३० ॥ तैजसान्येवेत्यन्वयः । ज्ञानेंद्रियाणां ज्ञानमयानां सात्त्विकत्वशंका मा भूदित्येवकारः । तामसो
भूतसूक्ष्मस्य शब्दस्यादिः कारणम् । यतः शब्दात् खमाकाशो भवति आत्मनो लिंगं स्वगुणशब्दरूपेण प्रकाशकं हृदयाकाशतया वा । यद्वा लिंगं शरीरम् । “आका
शशरीरं ब्रह्म ” इति श्रुतेः ॥ ३१ ॥ नभसः स्वस्मादनुसृतमुद्भूतं स्पर्शं विकुर्वद्रूपांतरं नयदनिलं वायुम् । एवं सर्वत्र तन्मात्रद्वारा भूतोत्पत्तिरिति ज्ञातव्यम् ॥ ३२ ॥
नभसा सहितः स्वयं चोरुबलान्वितः ततो ज्योतिस्तेजः लोचनं प्रकाशकम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ हे भव्य विदुर पाठांतरे भाव्यं कार्यं यद्यदवरमवरं कार्यं तेषां

सोपि महानपि स्वयमित्यात्मेत्यस्यार्थः । यद्वा । विश्वस्य जनिष्यमाणस्यात्माऽऽश्रय इति महद्विशेषणमिदम् । “आश्रयाधीनयोरात्मा” इति स्वामिचरणाः ॥ २८ ॥ अत्र कार्याद्याश्रयत्वे तद्विकारवान् भूतेंद्रियमनांसि यत
उद्भूता इत्यर्थः ॥२९॥ एतदेव गुणभेदेन भूतेंद्रियादिविकारवत्त्वमेव ॥३०॥ इत्यर्थ इति । सत्त्वस्यैव ज्ञानहेतुत्वात्तत्कार्यभूता देवानामपि ज्ञानहेतुत्वात्सात्त्विकाहंकारकार्यत्वमिति भावः । शब्दरूपेणेति“तं त्वौपनिषदं पुरुषम्”
इत्यादिश्रुतेः । हृदयाकाशेहि ब्रह्मप्रकाशो भवति तस्य तत्रस्थत्वात् । ‘सर्वस्य चाहं हृदि संनिविष्टः’ इति श्रीमुखोक्तेः । यद्वा “तस्माद्वा एतस्मादात्मन आकाशः” इत्यादिश्रुतेरात्मकार्यत्वात्तज्ज्ञापकं लिंगशब्दस्य शरीरवाचकत्वं
विमृश्याह—यद्वेति। श्रुतिः स्पष्टार्था ॥३१॥ एवं यथाशब्दतन्मात्रद्वाराकाशोत्पत्तिरुक्ता तथा सर्वभूतोत्पत्तिर्ज्ञेयेति॥३२॥नभसाकाशेन उरुबलेन भगवद्वीक्षणरूपेणान्वितः ततो रूपतन्मात्रात् ज्योतिःतेजोऽभूदिति शेषः॥३३॥
रसमयं रसगुणम् । आधत्तासृजत् ॥ ३४ ॥ अनुसंसृष्टं संयुतमंभः ॥ ३५ ॥ पाठांतरे ‘भाव्यावरावरम्’ इति पाठे भाव्यं च तदवरावरं चेति कर्मधारयः । नभ आदीनां मध्ये भाव्यं कार्यं यद्यदवरमवरं बाह्यादिकं तेषां

एते देवाः कला विष्णोः कालमायांऽशयोगतः ॥ नानात्वात्स्वक्रियाऽनीशाः प्रोचुः प्रांजलयो विभुम् ॥ ३७ ॥ देवाऊचुः ॥ नमाम ते देव पदारविंदं प्रपन्नतापोपशमातपत्रम् ॥ यन्मूलकेता यतयोंऽजसोरु संसारदुःखं वहिरुत्क्षिपंति ॥ ३८ ॥ धातर्यदस्मिन्न भव ईश जीवास्तापत्रयेणोपहता न शर्म ॥ आत्मल्लँभंते भगवंस्तवांघ्रिच्छायां सविद्यामत आश्रयेम ॥ ३९ ॥

कार्याणां परैः कारणैरनुसंसर्गाद्यन्वयाद्यथासंख्यं यथाक्रममुत्तरोत्तरमधिकान् गुणान् विदुः । तथाहि । नभसः शब्द एव गुणोऽन्यान्वयाभावात् वायोस्तु स्पर्शः आकाशान्वयाच्छब्दश्च एवं तेजसस्तौ च रूपं च अंभसस्तानि रसश्च मह्याः सर्वे ॥ ३६ ॥ देवा महदाद्यभिमानिनः विष्णोः कला अंशाः काललिंगं विकृतिः मायालिंगं विक्षेपः अंशलिंगं चेतना तानि विद्यंते येषु अतः समत्वेन नानात्वात्परस्परासंबंधात्स्वक्रियायां ब्रह्मांडरचनायामनीशा अशक्ताः संतो विभुं परमेश्वरं प्रोचुः ॥ ३७ ॥ "मिथः स्पर्धिष्णवो देवा न मिलंतः परस्परम् ॥ विश्वकर्मण्यनीशाना निर्विण्णा हरिमीडिरे॥" नमामेति । प्रपन्नानां तापोपशमे आतपत्रं छत्रम् । तत्र हेतुः । यस्य पादारविंदस्य मूलं तलं केत आश्रयो येषां ते संसारदुःखं बहिर्दूरत उत्क्षिपंति पीरत्यजंति । पांथाः स्वगृहं प्राप्य मार्गश्रममिव ॥ ३८ ॥ श्रमं विनिवेदयंत आहुः । हे धातः पितः यद्यस्माद्भवे संसारे आत्मन्नात्मनि संबोधनं वा शर्म सुखम् ऋते यदिति पाठे यत्पादभजनं विना शर्म न लभंते । ननु ज्ञानादज्ञानकृतस्तापो निवर्तते किं मदंघ्रिच्छा

कार्याणां परैः कारणैरनुसंसर्गात्संबंधात् तौ शब्दस्पर्शौ तानि शब्दस्पर्शरूपाणि सर्वे शब्दस्पर्शरूपरसगंधा इत्यर्थः॥३६॥यतः कालादिलिंगिनोऽतो हेतोः समत्वेन तुल्यत्वेन तुल्यानां संध्यभावात्परस्परमसंबंधोऽस्त्येव "वर्णा अपि समाना ये अ-इ-उ-ऋ-लृ-पंचकाः।एतेऽपि यांति नो संधिं नरादीनां तु का कथा"इति न्यायेन विकृतिर्गुणक्षोभः कालाद् गुणव्यतिकरः विक्षेपः शोकहर्षादिरूपः महदादीनां भगवदिच्छयैव सहसा देहेंद्रियादिवत्त्वमिति ज्ञेयम्। निर्विण्णा निर्वेदमापन्नाः नन्वेते महदादय एव स्वगुणैर्जीवान्बद्ध्वा मुहुः स्वर्गनरकादिषु क्षिपन्तः संसारयंति तदमी निर्हेतुद्रोहिणः सर्वथा ध्वंसनीया एवेति मैवं वादीरेते हि निर्हेतूपकारिण एव तथा हि-मोक्षसाधनानि ज्ञानयोगनिष्कामकर्माणि एतैर्विना न सिध्यंति तथा प्रेमसाधनानि श्रवणकीर्त्तनस्मरणदास्यसख्यादीनि भगवत्कृपोपव्यंजितैरेभिरेव सिध्यंति । किं च । परदारपरद्रव्योपहरणगोब्राह्मणद्रोहादिविविधपातकानि नरकसाधनान्येतैरेव सिध्यंतीति नैते दूषणीयाः यथा भागीरथ्या जलं सज्जनानां स्नानपानादिभिः परमपावनममृतमेव कूलस्थेषु तृणगुल्मादिषु धान्यगोधूमादिषु पनसाम्रद्राक्षादिषु प्रविष्टं सर्वविधजनानां परमोपकारकं परमसुखदमेव विषवृक्षेषु प्रविष्टं मारकं मद्यादिप्रविष्टं पातकं च तेषामेव भवति तत्र भागीरथीजलस्य न दोषः किं तु तत्तत्पात्रस्यैव तथा"तानहं द्विषतः क्रूरान्संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु" इत्यादिभक्त्यनुसारेण तेषु तेषु दुर्जीवेषु स्थितानामेषामधिकृतभक्तानां को दोषः किन्तु तेषामेवेति। वस्तुतस्तु ते परमवैष्णवा एवेति तत्कृतया स्तुत्यैवाभिव्यंजयितुमाह-एते देवा इति ॥ ३७ ॥ 'प्रपन्नः शरणागतः'इत्यभिधानात् । तत्रातपत्रत्वे भक्ताभीष्टदानेन द्योतमानत्वादाह–देवेति ॥ ३८ ॥ आर्षत्वकल्पने गौरवं मत्वाह–संबोधनं वेति । अत्राक्षिपति नन्विति । तत्राक्षेपे इत्यर्थ इति । "श्रेयःश्रुतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये । तेषामसौ

मार्गंति यत्ते मुखपद्मनीडैश्छंदःसुपर्णैर्ऋषयो विविक्ते ॥यस्याऽघमर्षोदसरिद्वरायाः पदं पदं तीर्थपदः प्रपन्नाः॥४०॥यच्छ्रद्धया श्रुतवत्या च भक्त्या संमृज्यमाने हृदयेऽवधाय ॥ ज्ञानेन वैराग्यबलेन धीरा व्रजेम तत्तेंऽघ्रिसरोजपीठम् ॥४१॥ विश्वस्य जन्मस्थितिसंयमार्थे कृतावतारस्य पदांबुजं ते ॥ व्रजेम सर्वे शरणं यदीशस्मृतं प्रयच्छत्य भयं स्वपुंसाम् ॥ ४२ ॥ यत्सानुबंधेऽसति देहगेहे ममाहमित्यूढदुराग्रहाणाम् ॥ पुंसां सुदूरं वसतोऽपि पुर्यां भजेम तत्ते भगवन्पदाब्जम् ॥ ॥ ४३ ॥ तान्वा असद्वृत्तिभिरक्षिभिर्ये पराहृतांतर्मनसः परेश ॥ अथो न पश्यंत्युरुगाय नूनं ये ते पदन्यासविलासलक्ष्म्याः ॥ ४४ ॥

याश्रयणेन तत्राहुः । सवियां तदाश्रयणमेवविद्याप्रापकमित्यर्थः ॥ ३९ ॥ अज्ञातस्याश्रयणा योगात्तज्ज्ञानसाधनमाहुः । मार्गंत्यन्वेषयंति यत्तत्तीर्थपदस्ते पदं वयं प्रपन्नाः । कैर्मार्गंति । छंदःसुपर्णैर्वेदपक्षिभिः तवैव मुखपद्मं नीडं येषां यथा पक्षिणो नीडादुद्गतास्ततस्ततः परिभ्रम्य पुनस्तत्रैव विशंति तथा वेदा अपि त्वत्त उद्गतास्त्व य्येव पर्यवस्यंति अतो वेदानाश्रित्य त्वत्पदं मृगयंत इति । विविक्ते असंगे मनसि किंचाघमर्षमघनाशकमुदमुदकं यासां सरितां तासु वराया गंगायाः पदमुद्गमस्थानम् । अतो गंगामनुसेवमाना अपि तदुद्गमस्थानं त्वत्पदं प्राप्नुवंतीत्यर्थः ॥ ४० ॥ ननु विषयाकृष्टचित्तानां कुतस्तदन्वेषणं, तत्राहुः । यच्छ्रद्धयेति । यद्धृदयेऽवधाय ध्यात्वा वैराग्यं बलं यस्य तेन ज्ञानेन धीरा भवंति । सरागे चित्ते ध्यानमेव कुतस्तत्राहुः श्रद्धया श्रवणपूर्विकया भक्त्या च संमृज्यमाने संशोध्यमाने ॥ ४१ ॥ भक्तानुग्रहं स्मरंत आहुः । विश्वस्येति ॥ ४२ ॥ अंतर्यामितया नित्यं सन्निहितेऽनर्थकं व्रजनमित्याशंक्याहुः । यदिति । सानुबंधे सोपकरणे असति तुच्छे पुर्यां स्वदेहे एव वसतोऽपि यत्सुदूरं दुष्प्रापम् ॥ ४३ ॥ ननु यदि हृदिस्थस्यापि पदाब्जं केषांचित्सुदूरं तर्ह्यन्येषामपि तथैव स्यादविशेषादित्याशंक्याहुः । तानिति । असद्वृत्तिभिर्बहिर्मुखैरक्षिभि रिंद्रियैः पराहृतं दूरमपहृतमंतःस्थं मनो येषां ते । अथो अत एव ते नूनं तान्न पश्यंति । वै प्रसिद्धम् । कुतः पुनस्तेषां तत्संगः स्यात् । कान् । ते तव पदन्यासो गमनं

क्लेशल एव शिष्यत'' इत्युक्तेः ''वासुदेवे भगवति भक्तियोगः प्रयोजितः । जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम्' इत्याद्युक्तेश्चेति भावः ॥ ३९ ॥ अत्रायं भावः यथा निरास्पदे देशे विश्रामार्थं स्थलं पश्यंत इतस्ततश्च रद्भिः पक्षिभिर्धावमानास्सायं स्वनीडं विशद्भिः सहैव गता विश्रामार्थं तन्नीडाधिष्ठितवृक्षतलमाश्रयंति जनास्तत्र सुखं च प्राप्नुवंति तथा वेदमार्गमाश्रिता अप्यंते त्वामेव विशंतीत्याशयः । एकविधमन्वेषणप्रकारमुक्त्वा द्वितीय माह–किञ्चेति । यतो गंगोद्भवस्थानं त्वमसि अतो हेतोः । इत्यर्थ इति । गंगाप्रणालिकया गच्छंतस्त्वामेव तदाश्रयत्वेन प्राप्नुवंतीति भावः ॥ ४० ॥ पुनरत्राक्षिपति नन्विति । तदन्वेषणं मच्चरणारविंदान्वेषणम् । अवधा येति दधातेर्ल्यपीत्वाभावात् । उपसर्गवशाद्ध्यानार्थता चात्र पुनराक्षिपति–सराग इति ॥ ४१ ॥ अभयप्रदाने सामर्थ्यं द्योतयन्त आहुरीशेति ॥ ४२ ॥ पुनराक्षिप्य समाधत्ते अंतर्यामीति । विरक्तयैकलभ्यं त्वत्पदाब्ज मिति भावः ॥ ४३ ॥ पुनरत्राप्याक्षिपति–नन्विति । इत्यर्थ इति विषयाविष्टचेतसां हरिभक्तदर्शनमपि दुर्लभं तत्संगस्य तु का कथेति भावः । अथो इत्यस्य स्थाने पथ इति लक्ष्म्य इत्यस्य स्थाने च लक्ष्यानिति लक्ष्यो दर्शनीयः लक्षणास्वीकारे गौरवं मत्वाह–मार्गान्वेति । इत्यर्थ इति । विषयाविष्टचेतसां कुतः श्रवणाद्यवकाश इति भावः । प्रथमांतं लक्ष्या इत्येवं पाठं मत्वाह–यद्वेति । ये एवंभूतास्त्वत्पदन्यासविलासो लक्ष्यो येषां

पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये॥ वैराग्यसारं प्रतिलभ्य बोधं यथांऽजसाऽन्वीयुरकुंठधिष्ण्यम् ॥४५॥ तथाऽपरे चात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम् ॥ त्वामेव धीराः पुरुषं विशंति तेषां श्रमः स्यान्न तु सेवया ते ॥ ४६ ॥ तत्ते वयं लोकसिसृक्षयाऽऽद्य त्वयाऽनुसृष्टास्त्रिभिरात्मभिः स्म ॥ सर्वे वियुक्ताः स्वविहारतंत्रं न शक्नुमस्तत्प्रतिहर्तवे ते ॥ ४७ ॥ यावद्बलिं तेऽज हराम काले यथा वयं चान्नमदाम यत्र ॥ यथोभयेषां त इमे हि लोका बलिं हरंतोऽन्नमदंत्यनूहाः ॥ ४८ ॥

तस्य विलासो विभ्रमस्तस्य लक्ष्मीः शोभा तस्या ये । त्वल्लीलाकथादिभिः शोभमानांस्त्वद्भक्तानित्यर्थः । पथ इति लक्ष्यानीति च पाठे त्वत्पदन्यासविलासो लक्ष्यो येषां तान् पथस्त्वन्मार्गभूतान् सतो मार्गान् वा श्रवणादीन्न पश्यतीत्यर्थः । यद्वा । ये एवंभूता भागवतास्ते तानुन्मत्तान्नूनं नैव पश्यंतीत्यन्वयः । सत्संगाभावेन हरिकथाश्रवणाभावाद्धृदिस्थितमपि तेषां सुदूरमिति भावः ॥ ४४ ॥ एतदेव स्फुटयंति । पानेनेति द्वाभ्याम् । वैराग्यं सारो बलं यस्य बोधस्य तं लब्ध्वान्वीयुः प्रापुः । अकुंठधिष्ण्यं वैकुंठलोकम् ॥ ४५ ॥ आत्मनि समाधिर्मनःस्थैर्यं स एव योग उपायस्तस्य बलेन ज्ञानयोगतः श्रमेण मोक्षः सत्संगतस्त्वत्कथाश्रवणादिना त्वनायासेनैव अहंममताविष्टानां तु न कथंचिदिति भावः ॥ ४६ ॥ तदेवं स्तुत्वा प्रार्थयंते चतुर्भिः तत्तस्मात् हे आद्य ते त्वदीया वयं यस्माल्लोकानां सिसृक्षया त्वयाऽनुसृष्टाः क्रमेणोत्पादिताः । त्रिभिरात्मभिः सत्त्वादिस्वभावैरतएव विरुद्धस्वभावत्वाद्वियुक्ताः संतो यदर्थं सृष्टास्तत्स्वविहारतंत्रं त्वत्क्रीडोपकरणं ब्रह्मांडं ते तुभ्यं प्रतिहर्तवे प्रतिहर्तुं समर्पयितुं न शक्नुमोऽतस्त्वं नः स्वचक्षुः परिदेहीति त्रयाणां श्लोकानां चतुर्थेनान्वयः ॥ ४७ ॥ असामर्थ्यमेव प्रपंचयितुं कार्यस्यातिवैचित्र्यमाहुः । भो अज काले तत्तदवसरे बलिं भोगं

तादृशा इत्यर्थः । उन्मत्तान्विषयहृतेंद्रियमानसान् इति भाव इति । ''कथा हरिकथोदर्कास्सतां स्युर्हि समागमे'' इत्युक्तेः ''हृदिस्थोऽप्यतिदूरस्थः कर्मविक्षिप्तचेतसाम्'' इत्युक्तेश्चेदं तात्पर्यम्—ये तु सत्संगं हरिकथाश्रवणं च कुर्वंति तेषां हरिपदाब्जं सुंदरं नेत्यर्थतः सिद्धमत्रेति ॥ ४४ ॥ एतदेव कथाश्रवणेन भगवज्ज्ञानोद्भवनमेव यथापदं परपद्यस्थतथापदेनान्वेति स्तुतियोग्यतां द्योतयंतः प्राहुर्देवेति ॥ ४५ ॥ बलिष्ठां भगवच्छरणागतिं विना साधनशतैरपि जेतुमशक्यामित्यर्थः । ''मामेव ये प्रपद्यंते मायामेतां तरन्ति ते'' इत्यत्रोक्तैवकारात्—तेषां ज्ञानयोगिनां ''क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्'' इति श्रीमुखोक्तेः । इति भाव इति । सेवानंदमनुभवतामानुषंगिको मोक्षः श्रवणादिसाधनवतामतिक्लेशेन कथंचिन्मोक्ष उभयरहितानां न कथंचिदपीति तात्पर्यम् ॥ ४६ ॥ यस्माद्भवदाश्रयेणैव सर्वेषामुत्तमत्वं तत्तस्माद्धेतोः त्वमेवाद्योस्माकमतस्त्वमेव स्वार्थं प्रार्थयितुं योग्योसीत्याहाद्येति । अत एव त्रिभिरुत्पादितत्वादेव । प्रतिहर्त्तव इति आर्षत्वात्तुमर्थे ''तुमर्थे सेसेनसेऽसेन्—'' इत्यादिना छान्दसस्तवेन्प्रत्ययः । यतो वयमसमर्था अतो हेतोः तच्चक्षुस्तद्रचनज्ञानम् ॥ ४७ ॥ '' प्रत्यूहः प्रतितर्के च विघ्नशीघ्रविचारयोः'' इति निरुक्तेः 'स्यादूहः क्षोदतर्कयोः' इति चोक्तेरूहशब्दस्य विघ्नवाचकत्वाभावादाह—यद्वेति । इत्यर्थ इति तर्कस्याक्षेपार्थकत्वादिति भावः । तत्त्वाभिमानिदेवताभिरीशः प्रार्थित इत्यत्र प्रमाणमाह—तथा चेति । तास्तत्त्वाभिमानिदेवता एनं परमेशम् । आयतनं स्थानं नोऽस्मभ्यं प्रजानीहि आज्ञापय यस्मिन्नायतने प्रतिष्ठिताः स्थिताः स्पष्टमन्यच्छ्रुतिपदाविवरणम् ॥ ४८ ॥

त्वं नः सुराणामसि सान्वयानां कूटस्थ आद्यः पुरुषः पुराणः ॥ त्वं देवशक्त्या गुणकर्मयोनौ रेतस्त्वजायां कविमादधेऽजः ॥ ४९ ॥ ततो वयं सत्प्रमुखा यदर्थे बभूविमाऽऽत्मन्करवाम किं ते ॥ त्वं नः स्वचक्षुः परिदेहि शक्त्या देव क्रियार्थे यदनुग्रहाणाम् ॥ ५० ॥ इति श्रीभागवते म० तृतीयस्कंधे महदादिसर्गे सर्वदेवकृतस्तोत्रवर्णनं नाम पंचमोऽध्यायः ॥ ५ ॥ ऋषिरुवाच ॥ इति तासां स्वशक्तीनां सतीनामसमेत्य सः ॥ प्रसुप्तलोकतंत्राणां निशाम्य गतिमीश्वरः ॥ १ ॥

यावत्साकल्येन ते तुभ्यं हराम समर्पयाम यथा येन प्रकारेणान्नमदाम भक्षयामेत्यनेनान्नमात्रं चास्माकमैश्वर्येण तु भोगस्तवैवेत्युक्तम् । उभयेषां तव चास्माकं च यत्र स्थित्वा इमे जीवा अनूहा अप्रत्यूहा निर्विघ्नाः । यद्वा अनूहा अवितर्का निःसंशया इत्यर्थः । तथा च श्रुतिः । "ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन् प्रतिष्ठिता अन्नमदाम" इति ॥ ४८ ॥ अवश्यं च त्वयाऽस्माकमेषां च कार्योपाधीनां जीवानां वृत्तिः परिकल्पनीया जनकत्वादित्याहुः । नोऽस्माकं सान्वयानां सकार्याणां यद्वा अन्वेतीत्यन्वयः । कारणं तत्सहितानां त्वमेवाद्यः कारकम् । अत्र हेतवः । कूटस्थोऽविक्रियः पुरुषोऽधिष्ठाता पुराणः पुरातनः । एतदुपपादयंति त्वमिति । हे देव अज एव त्वं गुणानां सत्त्वादीनां कर्मणां जन्मादीनां च योनौ कारणभूतायां शक्त्यां मायायां प्रथमं रेत आदधे निहितवानसीत्यर्थः । कीदृशम् । कविं सर्वज्ञं महत्तत्त्वरूपम् ॥ ४९ ॥ तथा हे आत्मन् देव सत्प्रमुखा महदादयो वयं यदर्थं बभूविम तत् किं ते कार्यं करवाम । सृष्टिमिति चेत्तत्राहुः । तर्हि नोऽस्माकं त्वं स्वचक्षुः स्वीयं ज्ञानं शक्त्या सह परिदेहि प्रयच्छ । यस्मात्त्वत्त एवानुग्रहो येषां ते यदनुग्रहास्तेषामस्माकं क्रियार्थे इयानेव एतावाननुग्रहो येषामित्येकं वा पदम् । त्वदीयज्ञानक्रियाशक्तिभ्यामेव वयं सृष्टौ क्षमा नान्यथेत्यर्थः ॥ ५० ॥ इति तृतीये टीकायां पंचमोऽध्यायः ॥ ५ ॥ षष्ठे तैरीश्वराविष्टैः सृष्टिमाह विराट्तनोः ॥ अधिदैवादिभेदं च तत्रैव भगवत्कृतम् ॥ १ ॥ स्वशक्तीनां महदादीनामसमेत्यामिलित्वा सतीनां स्थितानाम् । प्रसुप्तं लोकतंत्रं विश्वरचना यासाम् । यद्वा । प्रसुप्तजीवोपकरणानां गतिं स्थितिं दृष्ट्वा

भगवतोत्रावश्यकतामाहुरव स्यमिति।अन्वयशब्दोत्र संतत्युपलक्षितकार्यवाचको यद्यप्यस्ति तथाप्यत्र प्रकृतेर्महदादिकार्यत्वाभावात्तद्ग्रहणं न संभवति तदर्थमाहुर्यद्वेति।कारणं प्रकृतिस्तस्याः सर्वत्रानुगतेः प्रकृतेरपि तदिच्छारूपत्वात्तस्या अपि कारणं त्वमेवेत्याहुः।अत्र सर्वकारणत्वे अविक्रियो निर्विकार एव चिन्तामणिरिव कारणम् अधिष्ठातुः प्रकृतिपतेस्तव सृष्टिसामर्थ्यमस्ति न तु स्थ्यादिसमानामस्माकमिति भावः।ननु ममापि कश्चित्कारणमस्त्विति चेदाह– पुरातनः कारणशून्य इत्यर्थः अन्यथानवस्थानात् । एतत्सर्वकारणत्वमज एव स्वयमजन्मैव इत्यर्थ इति । वीर्यधारकस्यैव कारणत्वमस्तीति भावः ॥ ४९ ॥ ततः प्रकृत्यां वीर्यनिक्षेपानंतरम् । अहं महान् प्रमुखे आदौ येषां ते मत्प्रमुखाः । सत्प्रमुखा इति पाठस्तु लेखकप्रमाद एवांधपरंपरया प्रतीयते तदर्थस्तु–स्वामिचरणैर्महदादय इति कृतस्तेन मत्प्रमुखा इत्येव शोभनः पाठः स्वामिसंमतः तत्रैवः हठे तु सति भगवतिः प्रकर्षेण मुखं येषां ते तथा त्वां निरीक्षमाणा इत्यर्थः । अंतर्यामित्वात्त्वं जानास्येवेत्याहुरात्मन्निति । प्रलयेऽपि द्योतमानत्वादाहुर्देवेति । यद्वा वरदानस्वभावत्वाद्देवेति । शक्त्या चिच्छक्त्या क्रियार्थे सर्जनक्रियानिमित्तम् । इयान् स्वीयशक्तिज्ञानदानरूपमात्र एव अर्थांतरे चमत्कृतिरेव हेतुरित्येकं पदमिति । इत्यर्थ इति । न हि जडानां चैतन्याश्रयमंतरेण किंचित्कर्तुं शक्तिरस्तीति भावः ॥ ५० ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥ तैर्महदादिभिः तत्रैव विराट्तनावेव ॥ ( १ ) ॥ जडासु रचनासामर्थ्यस्य चेतनधर्मस्यासत्त्वं मत्वाह–यद्वेति । जीवोपकरणानींद्रियादीनि ॥ १ ॥

कालसंज्ञां तदा देवीं बिभ्रच्छक्तिमुरुक्रमः ॥ त्रयोविंशतितत्त्वानां गणं युगपदाविशत् ॥ २ ॥ सोऽनुप्रविष्टो भगवांश्चेष्टारूपेण तं गणम् ॥ भिन्नं संयोजयामास सुप्तं कर्म प्रबोधयन् ॥ ३ ॥ प्रबुद्धकर्मा दैवेन त्रयोविंशतिको गणः ॥ प्रेरितोऽजनयत्स्वाभिर्मात्राभिरधिपूरुषम् ॥ ४ ॥ परेण विशता स्वस्मिन् मात्रया विश्वसृग्गणः ॥ चुक्षोभान्योऽन्यमासाद्य यस्मिँल्लोकाश्चराचराः ॥ ५ ॥ हिरण्मयः स पुरुषः सहस्रपरिवत्सरान् ॥ आंडकोश उवासाऽप्सु सर्वसत्त्वोपबृंहितः ॥६॥ स वै विश्वसृजां गर्भो देवकर्मात्मशक्तिमान् ॥ विबभाजात्मनात्मानमेकधा दशधा त्रिधा ॥ ७ ॥ एष ह्यशेषसत्त्वानामात्मांशः परमात्मनः ॥ आद्योऽवतारो यत्रासौ भूतग्रामो विभाव्यते ॥ ८ ॥

आविशदित्युत्तरेणान्वयः ॥ १ ॥ कालेन संज्ञा उद्बोधो यस्याः कालयति क्षोभयति स्वकार्याणीति वा कालसंज्ञा प्रकृतिस्तां शक्तिं प्रकृत्या सह प्रवेशात्त्रयोविंशतितत्त्वानामित्युक्तं अंतर्यामितया प्रविशत् ॥ २ ॥ चेष्टारूपेण क्रियाशक्त्या कर्म तेषां क्रियां जीवानामदृष्टं वा ॥ ३ ॥ प्रबुद्धं कर्म क्रियाशक्तिर्यस्य स त्रयोविंशतेर्गणः दैवेनेश्वरेण प्रेरितः । मात्राभिरंशैः अधिपूरुषं विराड्देहम् ॥ ४ ॥ जननमेवाह । परेणेश्वरेण । विश्वसृजां तत्त्वानां गणः मात्रया चुक्षोभ परिणतो न सर्वात्मना यस्मिँल्लोकाः स्थिताः ॥ ५ ॥ स पुरुषोऽधिपुरुष इत्युक्तः आंडकोशे ब्रह्मांडमध्ये सर्वैः सत्त्वैरनुशायिभिर्जीवैः सहितः ॥ ६ ॥ गर्भः कार्यरूपो विराट् देवशक्तिर्ज्ञानशक्तिस्तयैकधा । हृदयावच्छिन्नचैतन्यरूपेण कर्मशक्तिः क्रियाशक्तिस्तया दशधा । प्राणरूपेण प्राणादयः पंच । "नागः कूर्मश्च कृकलो देवदत्तो धनंजयः ।" इत्येते पंचैवं वृत्तिभेदेन दशविधः प्राणः आत्मशक्तिर्भोक्तृशक्तिस्तयाऽध्यात्मादिभेदेन त्रिधाऽऽत्मानं विभक्तं कृतवान् ॥ ७ ॥ एवं विभागसामर्थ्याय तस्योत्कर्षमाह । एष हीति । अशेषस

कालयति मेलयति सर्वमिति कालो वृत्तिविशेषः स एव संज्ञा यस्यास्सा तथा । महदादीनामेव परस्परमिलनात्प्रकृतेश्च सर्वानुगतेस्त्रयोविंशतीत्युक्तमिति संदर्भः । कालेनैव महदाद्या विविधा संज्ञा यस्याः सा प्रथमं संहननकारिण्यां शक्त्यैव ततो वर्षसहस्रांतर्यमितयेत्यर्थः । महदहंकारौ पञ्च तन्मात्राणि पंचमहाभूतानि एकादशेंद्रियाणीति त्रयोविंशतिः युगपदित्यव्ययमेककाले प्रमाणं चात्र "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतिः ॥ २ ॥ संदर्भस्तु चेष्टारूपेण कालाख्येन 'योयं कालस्तस्य ते व्यक्तबंधोश्चेष्टामाहुः' इत्युक्तेः तेषां तत्त्वानां क्रियां व्यापारं व्यापारस्यापि चेतनधर्मत्वात्तत्त्वेषु तदसंभवं मत्वाह—जीवानामदृष्टं वेति॥३॥४॥महदादीनां सर्वात्मना परिणामे तत्रतत्र कार्याणां स्वस्वकारणे लयोक्तिरसंगता स्यादिति भावः । यद्वा । मात्रया पुरुषरूपेणांशेन स्वस्मिन्—तत्त्वगणे अन्योन्यमासाद्य प्रधानगणभावं प्राप्य चुक्षोभ ब्रह्मांडरूपेण परिणतोऽभवत् यस्मिंस्तत्त्वगणे ॥ ५ ॥ हिरण्मयस्तेजोरूपः अप्सु परमेशगर्गजातोदकेषु य आंडकोशस्तत्रोवासेति ॥ ६ ॥ हृदयावच्छिन्नचैतन्यरूपेण जीवरूपेण प्राणः प्राक्क्रमणो नासाग्रवर्त्ती, अपानोऽवाक्क्रमणः पाय्वादिस्थानवर्त्ती, समानो भुक्तपीतान्नादिसमीकरणः शरीरमध्यवर्त्ती, उदान उत्क्रमणः कंठस्थानवर्त्ती, व्यानो विष्वक्क्रमणः सकलशरीरवर्त्ती, नाग उद्गारकरः, कूर्म उन्मीलनकरः, कृकलः, क्षुत्करः, देवदत्तो जृंभाकरः धनंजयः पोषणकर इति विवेकः ॥७॥ तस्य हिरण्मयपुरुषस्य । तस्मिन् विराजि । यत्र विराजि । असौ प्रत्यक्षसिद्धः । भूतानां देवतिर्यङ्मनुष्याणां समूहः विभाव्यते यतः सत्तां प्राप्य दृश्यत इत्यर्थः । योगिनो हि तदंतर्यामिणा सहैक्यभावनया

साध्यात्मः साधिदैवश्च साधिभूत इति त्रिधा ॥ विराट्प्राणो दशविध एकधा हृदयेन च ॥ ९ ॥ स्मरन्विश्वसृजामीशो विज्ञापितमधोक्षजः ॥ विराजमतपत्स्वेन तेजसैषां विवृत्तये ॥ १० ॥ अथ तस्याभितप्तस्य कति चायतनानि ह ॥ निरभिद्यंत देवानां तानि मे गदतः शृणु ॥ ११ ॥ तस्याग्निरास्यं निर्भिन्नं लोकपालोऽविशत्पदम् ॥ वाचा स्वांशेन वक्तव्यं ययाऽसौ प्रतिपद्यते ॥ १२ ॥ निर्भिन्नं तालु वरुणो लोकपालोऽविशद्धरेः ॥ जिह्वयांऽशेन च रसं ययाऽसौ प्रतिपद्यते ॥ ॥ १३ ॥ निर्भिन्ने अश्विनौ नासे विष्णोराविशतां पदम् ॥ घ्राणेनांऽशेन गंधस्य प्रतिपत्तिर्यतो भवेत् ॥ १४ ॥ निर्भिन्ने अक्षिणी त्वष्टा लोक पालोऽविशद्विभोः ॥ चक्षुषांऽशेन रूपाणां प्रतिपत्तिर्यतो भवेत् ॥ १५ ॥ निर्भिन्नान्यस्य चर्माणि लोकपालोऽनिलोऽविशत् ॥ प्राणेनांऽशेन संस्पर्शं येनाऽसौ प्रतिपद्यते ॥ १६ ॥ कर्णावस्य विनिर्भिन्नौ धिष्ण्यं स्वं विविशुर्दिशः ॥ श्रोत्रेणांशेन शब्दस्य सिद्धिं येन प्रपद्यते ॥ १७ ॥ त्वचमस्य विनिर्भिन्नां विविशुर्धिष्ण्यमौषधीः ॥ अंशेन रोमभिः कंडूं यैरसौ प्रतिपद्यते ॥ १८ ॥

त्वानां प्राणिनामात्मा व्यष्टीनां तदंशत्वात् अंशो जीवः अवतारत्वोक्तिस्तस्मिन्नारायणाविर्भावाभिप्रायेण ॥ ८ ॥ पूर्वश्लोकार्थं विवृणोति । साध्यात्मः अध्यात्मानींद्रियाणि तत्सहितः विराडिति सर्वत्र ॥९॥ अध्यात्मादिभेदं प्रपंचयितुमाह । स्मरन्निति । विज्ञापितम् 'यावद्बलिं तेऽज हराम' इत्यादि स्वेन तेजसा चिच्छक्त्या अतपत् एवं करिष्यामीत्यालोचितवान् । "यस्य ज्ञानमयं तपः" इति श्रुतेः । विवृत्तये विविधवृत्तिलाभाय ॥ १० ॥ मे मत्तः शृणु ॥ ११ ॥ आयतनान्येवाह । तस्याग्निरित्यादिचतुर्दशभिः । आस्यं निर्भिन्नं पृथक् जातं पदं स्वस्थानं स्वांशेन स्वशक्त्या वाचा सहाविशत् असौ जीवः वक्तव्यं प्रतिपद्यते शब्दमुच्चारयतीत्यर्थः । सर्वत्र यन्निर्भिन्नं तदधिष्ठानम् अग्न्यादि प्रथमांतमधिदैवम् । वागादींद्रियं तृतीयांतमध्यात्मम् । प्रतिपत्तव्यमधिभूतम् ॥ १२ ॥ हरेः विराजः ॥ १३ ॥ १४ ॥ त्वष्टा आदित्यः ॥ १५ ॥ प्राणेनेति । प्राणवद्देहव्यापिना त्वगिंद्रियेणेत्यर्थः ॥ १६ ॥ शब्दस्य सिद्धिं ज्ञानम् ॥ १७ ॥ त्वचं चर्म ओषधीरोषधयः त्वगिंद्रियस्यैव स्थानभेदेन विषयद्वयं कंडूः

तमपि पुरुषमवतारं विदुरिति ज्ञेयम् ॥८॥ अधिदैवानींद्रियदेवताः अधिभूतानि अधिष्ठानानि विषयाश्च हृदयेन हृदयावच्छिन्नचैतन्येन जीवेनेति यावत् । प्राणः प्राणरूपः॥९॥ अंतर्यामिरूपेण प्रविष्टस्येश्वरस्य कृत्यमाहयस्येश्वरस्य ज्ञानमयं ज्ञानस्वरूपमेव तप इति श्रुत्यर्थः । एषां महदादीनां "चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम्" इत्यादिश्रुतेः । कारणानुग्रहेणैव कार्यशक्तिरुद्भवतीति भावः ॥ १० ॥ अथ भगवत्कृततत्त्वविज्ञप्तिस्मृत्युत्तरं तस्य समष्टिविराजः अभितप्तस्य परमेशप्रकाशितस्य आयतनानि आस्यादिस्थानानि निरभिद्यंत पृथगभवन् देवानामग्न्यादीनाम् ॥११॥ इत्यर्थ इति । शब्दोच्चारणस्यैव वक्तव्यप्रतिपादनत्वादिति भावः । सर्वत्र वाक्येषु प्रतिपत्तव्यं प्राप्तव्यं विषय इति यावत् ॥ १२ ॥ हरेर्हरित्वेन ध्येयस्य विराज इत्यर्थः । एवमग्रे विष्ण्वादिपदेष्वपि ज्ञेयम् । यया वाचा ॥ १३ ॥ पदं स्थानम् उद्देश्यविधेयभावत्वान्नासे पदमिति योजना न दुष्टेति । विवेचितमन्यत्र । एवमग्रेऽपि यतो येन घ्राणेन ॥ १४ ॥ यतो येन चक्षुषा ॥ १५ ॥ चर्माणीति । चर्मोपलक्षिता त्वगित्यर्थस्तु द्वितीयस्कंधे उक्तः परं त्वत्र चर्माणि त्वगिंद्रियाधिष्ठानानीति ज्ञेयम् ॥ १६ ॥ अस्य विराजः येन श्रोत्रेण ॥ १७ ॥ तत्र त्वागिंद्रिये एकस्मिन्नपि स्पर्शग्राहके भेदद्वयमिदं लभ्यम् बहिरधिष्ठानं चर्म इंद्रियं लो म देवता ओषध्याधिष्ठात्र्य इत्येको भेदः । अंतर्बहिराधिष्ठानं तु त्वक् इंद्रियमपि त्वक् देवता च वायुरित्यन्यो भेदः इति

मेढ्रं तस्य विनिर्भिन्नं स्वधिष्ण्यं क उपाविशत् ॥ रेतसांऽशेन येनासावानंदं प्रतिपद्यते ॥ १९ ॥ गुदं पुंसो विनिर्भिन्नं मित्रो लोकेश आविशत् ॥ पायुनांशेन येनाऽसौ विसर्गं प्रतिपद्यते ॥ २० ॥ हस्तावस्य विनिर्भिन्नाविंद्रः स्वःपतिराविशत् ॥ वार्तयांशेन पुरुषो यया वृत्तिं प्रपद्यते ॥ २१ ॥ पादावस्य विनिर्भिन्नौ लोकेशो विष्णुराविशत् ॥ गत्या स्वांशेन पुरुषो यया प्राप्यं प्रपद्यते ॥२२॥ बुद्धिं चास्य विनिर्भिन्नां वागीशो धिष्ण्यमाविशत् ॥ बोधेनांशेन बोद्धव्यं प्रतिपत्तिर्यतो भवेत् ॥ २३ ॥ हृदयं चास्य निर्भिन्नं चंद्रमा धिष्ण्यमाविशत् ॥ मनसांशेन येनाऽसौ विक्रियां प्रतिपद्यते ॥ २४ ॥ आत्मानं चास्य निर्भिन्नमभिमानोऽविशत्पदम् ॥ कर्मणांशेन येनासौ कर्तव्यं प्रतिपद्यते ॥ २५ ॥ सत्त्वं चास्य विनिर्भिन्नं महान्धिष्ण्यमुपाविशत् ॥ चित्तेनांऽशेन येनाऽसौ विज्ञानं प्रतिपद्यते ॥ २६ ॥ शीर्ष्णोऽस्य द्यौर्धरा पद्भ्यां खं नाभेरुदपद्यत ॥ गुणानां वृत्तयो येषु प्रतीयंते सुरादयः ॥ २७ ॥ आत्यंतिकेन सत्त्वेन दिवं देवाः प्रपेदिरे ॥ धरां रजःस्वभावेन पणयो ये च तानतु ॥२८॥ तार्तीयेन स्वभावेन भगवन्नाभिमाश्रिताः ॥ उभयोरंतरं व्योम ये रुद्रपार्षदां गणाः ॥ २९ ॥ मुखतोऽवर्तत ब्रह्म पुरुषस्य कुरूद्वह ॥ यस्तून्मुखत्वाद्वर्णानां मुख्यो ऽभूद्ब्राह्मणो गुरुः ॥ ३० ॥

स्पर्शश्च । तत्र चायं नामभेदो देवताभेदश्चेति द्वितीयस्कंध एव व्याख्यातम् ॥ १८ ॥ कः प्रजापतिः ॥ १९ ॥ २० ॥ स्वःपतिः स्वर्गस्य पतिः । वार्तया क्रयविक्रयादिशक्त्या । वृत्तिं जीविकाम् ॥ २१ ॥ गत्या पादेंद्रियेण ॥ २२ ॥ २३ ॥ विक्रियां संकल्पादिरूपाम् ॥ २४ ॥ आत्मानमहंकारम् । अभिमन्यतेऽनेनेत्यभिमानो रुद्रः कर्मणाऽहंवृत्त्या कर्तव्यमिति क्रियाम् ॥ २५ ॥ सत्त्वमिति बुद्धिचित्तयोरभेदेन निर्देशः । महानिति ब्रह्मा । चित्तेन चेतनया ॥ २६ ॥ त्रिलोकोत्पत्तिमाह । शीर्ष्ण इति । वृत्तयः परिणामाः ॥ २७ ॥ एतदेव प्रपंचयति द्वाभ्याम् । आत्यंतिकेनोर्जितेन पणव्यवहारे पणंते यागादिना व्यवहरंतीति पणयो मनुष्यास्तानन्तु एतदुपकरणभूता ये गवादयस्तेऽपि धरां प्रपेदिरे ॥ २८ ॥ तृतीयं तमस्तदीयेन तामसेन उभयोर्द्यावापृथिव्योरंतरं मध्यं व्योमांतरिक्षं तदेव भगवतो नाभिस्तामाश्रिता रुद्रपार्षदां रुद्रस्य पार्षदां भूतादीनां गणाः ॥ २९ ॥ अवर्तत प्रवृत्तम् । ब्रह्म वेदः । यस्तून्मुखत्वान्मुखोद्भवत्वाद्वर्णानां मुख्यो मुख्य इव प्रथमो गुरुश्चाभूत् सोऽपि मुखतोऽवर्ततेत्यनुषंगः ।

संदर्भः । चक्रवर्त्ती तु—तथा त्वच्यधिष्ठाने त्वक् रोमाणि चेंद्रियंद्वयम् । ओषध्यो देवताः कंडूर्विषयः तत्र त्वागिंद्रियमनिलो देवता स्पर्शो विषय इत्याह ॥ १८॥ रेतसा रेतउपलक्षितेनोपस्थेनेत्यर्थः । "उपस्थो हि सर्वेषामानंदानां परमानंद इति श्रुतेः" येनोपस्थेन ॥ १९ ॥ विसर्गं मलोत्सर्गादि ॥ २० ॥ 'स्वर्पतिः' इति पाठेऽहरादित्वाद्रेफः ॥ २१ ॥ गत्या गतिसाधनपादेंद्रियेण प्राप्यं प्राप्तव्यदेशम् ॥ २२ ॥ २३ ॥ २४ ॥ अहंकार महंकारास्पदं गोलकं हृदयैकदेशम् ॥ २५ ॥ सत्त्वंबुद्धिचित्तास्पदं हृदयैकदेशम् । महानिति । विष्णुब्रह्मणोरभेदनिर्देशः । चेतनया बुद्ध्या च विज्ञानमध्यवसायं विशिष्टज्ञानञ्च क्वचिदत्र 'बुद्धिं चास्ये' इत्यधिकश्लोकोप्यस्ति स च न स्वामिचरणसंमतः तैस्तस्याग्निरित्यादिचतुर्दशभिरिति प्रतीकलेखनादत्र सत्त्वं चास्येति व्याख्याने बुद्धिचित्तयोरभेदनिर्देशकथनाच्च ॥ २६ ॥ द्यौः स्वर्लोकः येषु द्युप्रभृतिषु 'गुणानां वृत्तयस्तिस्रः सुरनृप्रमथादयः' इत्यादिपुराणात् । यद्वा । वृत्तयः सुखदुःखमोहात्मिकाः सुखादय इति पाठसत्त्वे ज्ञेयाः आदिना गंधर्वादिग्रहः ॥ २७ ॥ एतदेव गुणपरिणामत्वमेव ॥ २८ ॥ २९ ॥ मुखमिव यथा शरीरोत्पत्तौ प्रथमं मुखमुत्पद्यते तथा

बाहुभ्योऽवर्तत क्षत्त्रं क्षत्रियस्तदनुव्रतः ॥ यो जातस्त्रायते वर्णान्पौरुषः कंटकक्षतात् ॥ ३१ ॥ विशोऽवर्तत तस्योर्वोर्लोकवृत्तिकरीर्विभोः ॥ वै
श्यस्तदुद्भवो वार्तां नृणां यः समवर्तयत् ॥३२॥ पद्भ्यां भगवतो जज्ञे शुश्रूषाधर्मसिद्धये ॥ तस्यां जातः पुरा शूद्रो यद्वृत्त्या तुष्यते हरिः॥३३॥
एते वर्णाः स्वधर्मेण यजंति स्वगुरुं हरिम् ॥ श्रद्धयाऽऽत्मविशुद्ध्यर्थं यज्जाताः सह वृत्तिभिः ॥ ३४ ॥ एतत्क्षत्तर्भगवतो दैवकर्मात्मरूपिणः ॥ कः
श्रद्दध्यादुपाकर्तुं योगमायाबलोदयम् ॥ ३५ ॥ अथाऽपि कीर्तयाम्यंऽग यथामति यथाश्रुतम् ॥ कीर्तिं हरेः स्वां सत्कर्तुं गिरमन्याभिधां सतीम्॥
॥ ३६ ॥ एकांतलाभं वचसो नु पुंसां सुश्लोकमौलेर्गुणवादमाहुः ॥ श्रुतेश्च विद्वद्भिरुपाकृतायां कथासुधायामुपसंप्रयोगम् ॥ ३७ ॥

अध्यापनादिना ब्राह्मणस्य वेदो वृत्तिः तया वृत्त्या सह ब्राह्मणो मुखतो जात इत्यर्थः । एवमुत्तरत्र वर्णत्रयेऽपि ज्ञातव्यम् ॥ ३० ॥ क्षत्त्रं पालनरूपा वृत्तिस्तत्क्षत्त्रमनुव्र
तोऽनुसृतः क्षत्रियोऽपि बाहुभ्योऽवर्तत इत्यर्थः । तदनुव्रतत्वमेवाह । य इति । पौरुषः पुरुषस्य विष्णोरंशः कंटकाश्चोरादयस्तेभ्यो यत्क्षतमुपद्रवस्तस्मात्त्रायते रक्षति॥ ३१॥
विशः कृष्यादिव्यवसायाः लोकस्य वृत्तिकरीर्जीविकाहेतवः । तस्य विभोरूर्वोः प्रवृत्ताः तदुद्भव ऊरुजो वार्तां जीविकां यः स्ववृत्त्या संपादितवान् ॥ ३२ ॥ तस्यां निमि
त्तभूतायां यस्य वृत्त्या हरिः स्वयमेव तुष्यते ॥ ३३ ॥ यद्यस्माज्जाता गुरुत्वाज्जनकत्वाद्वृत्तिप्रदत्वाच्च हरेराराधनं तेषां परो धर्म इत्यर्थः ॥ ३४ ॥ भो क्षत्तः दैवकर्मा
त्मरूपिणः कालकर्मस्वभावशक्तिमतो भगवतो योगमायाबलेनोऽज्जृंभितमेतद्विराड्रूपमुपाकर्तुं साकल्येन निरूपयितुं कः श्रद्दध्यादिच्छेत् । इच्छाऽप्यशक्या निरूपणं तु
दूरत इत्यर्थः ॥ ३५ ॥ अंग विदुर । अथापि हरेः कीर्तिं कीर्तयामि । यथाश्रुतं गुरुमुखात्तदपि न सर्वात्मना किंतु यथामति स्वमत्यनुसारेण अन्याभिधा हरिव्यतिरिक्ता
र्थाभिधानं तयाऽसतीं मलिनां स्वीयां वाचं सत्कर्तुं पवित्रीकर्तुम् ॥ ३६ ॥ अज्ञात्वापि यथामति कीर्तने श्रवणे वाऽऽवश्यकं कैवल्यमित्याह । एकांततो लाभं नु निश्चित

वर्णोत्पत्तौ ब्राह्मणः मुखशब्दोऽत्र शीर्षोपलक्षकः । गुरुश्च तत्त्वोपदेशात् तत्त्वज्ञानदानेनाविद्यानिगरणाच्च । गृ—शब्दनिगरणयोरास्ति । एतेन "गिरति ह पाप्मानम्" इति श्रुत्युक्तगुरुशब्दार्थो ध्वनितः । ब्राह्मणेतरवर्ण
स्य गुरुत्वं चापास्तम् । वर्णानामित्युक्त्या वर्णसंकराणामुपदेशप्राप्तविद्यानाधिकारश्च सूचितः वर्णसंकरश्च 'ब्राह्मणेन शिष्यो न कार्यः' इत्यप्युक्तश्च एतच्चाग्रे प्रपंचयिष्यामः प्रपञ्चितमप्याद्यपद्यव्याख्याशतके इत्यर्थ इति ।
वृत्त्यर्थं नैव शोकः कार्यः सा तु जन्मतोप्यग्रे प्रादुर्भवति सहैव वेति भावः ॥ ३० ॥ इत्यर्थ इति । वृत्त्या सहैव जात इति भावः ॥ ३१ ॥ स्ववृत्त्या कृषिबाणिज्यादिरूपया "आजीवो जीविका वार्त्ता वृत्ति
र्वर्तनजीवने" इति "स्त्रियां कृषिः पाशुपाल्यं वाणिज्यं चेति वृत्तयः" इत्यमरः ॥ ३२ ॥ यस्य शूद्रस्य वृत्त्या शुश्रूषया एतेन न केवलं स्वधर्मेणैव भगवत्तोषः 'त्यक्त्वा स्वधर्मं चरणांबुजं हरेः' इत्यादिना भक्तिसहि
तस्यैव तस्य तत्तोषहेतुत्वश्रवणात् ॥ ३३ ॥ इत्यर्थ इति । "मातापित्रोः सेवनं च तथैवान्नप्रदस्य च । सर्वकल्याणहेतुत्वात्परो धर्मोऽयमीरितः" इत्याद्युक्तेरिति भावः । आत्मविशुद्ध्यर्थमन्तःकरणनैर्मल्याय ॥ ३४ ॥
इत्यर्थ इति । 'भोजने यत्र संदेहो धनाशा तत्र कीदृशी' इति न्यायेन कैमुत्यमप्यत्र सूचितमिति भावः ॥ ३५ ॥ यद्यपि वर्णयितुमशक्या हरेः कीर्त्तिरथापि तथापीत्यर्थः । तदपि गुरुमुखश्रुतमपि । सर्वात्मना साकल्येन ।
हरिव्यक्तिरिक्तार्था देहगेहादिविषयास्तेषामभिधानम् ॥ ३६ ॥ यथाकथंचिदपि हरिकीर्त्तनादि शुभफलमेवेत्याह । अज्ञात्वापीति एकांततोऽव्यभिचारेण सुश्लोकाः पुण्यश्लोकास्तेषां मौलेश्चूडामणेः श्रीहरेः विद्वद्भिरित्यनेन पद

आत्मनोऽवसितो वत्स महिमा कविनाऽऽदिना ॥ संवत्सरसहस्रांते धिया योगविपक्वया ॥ ३८ ॥ अतो भगवतो माया मायिनामपि मोहिनी ॥ यस्त्वयं चात्मवर्त्मात्मा न वेद किमुताऽपरे ॥ ३९ ॥ यतोऽप्राप्य निवर्तंते वाचश्च मनसा सह ॥ अहं चान्य इमे देवास्तस्मै भगवते नमः ॥ ॥ ४० ॥ इति श्रीभा० म० तृतीय० विराड्देहे ईश्वरप्रवेशवर्णनं नाम षष्ठोऽध्यायः ॥६ ॥

माहुः । श्रुतेः श्रोत्रस्य उपाकृतायां निरूपितायाम् । उपसंप्रयोगं सन्निधावर्पणम् ॥ ३७ ॥ न चातीव ज्ञाने निर्बंधः कर्तव्यो ब्रह्मणोऽपि दुर्ज्ञेयत्वादित्याह । आत्मनो हरे र्महिमा योगविपक्वयाऽपि धिया संवत्सरसहस्रांतेऽपि आदिकविना ब्रह्मणाऽपि किमवसितः किं ज्ञातः इति काकूक्त्या एतावानिति न ज्ञात एवेत्युक्तम् ॥ ३८ ॥ यद्यस्मा त्स्वयमप्यात्मा हरिरात्मवर्त्म स्वमायागतिमेतावदिति न वेद अनंतत्वात् ॥ ३९ ॥ अतो दुर्ज्ञेयत्वात्केवलं नमस्करोति । यत इति । यस्य ज्ञानाय प्रवृत्ता वाचोऽपि मनसा सह तमप्राप्यैव न्यवर्तंत दुर्ज्ञेयत्वात् । न केवलं वाङ्मनसी अहमहंकारस्याधिष्ठाता रुद्रोऽपि इमे इंद्रियाधिष्ठातारो देवा अन्ये च ॥ ४० ॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे टीकायां षष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥

पदार्थयथार्थबोधवद्भ्य एव कथा श्राव्याऽन्यतो नेति । अविद्वान्हि यथाश्रुतार्थकथनासमर्थत्वेन शास्त्रविप्लावकोस्ति तस्माच्छास्त्रमपि बिभेति । "बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति" इति महाभारतोक्तेः । पुराणेतिहासानामपि "इतिहासपुराणानि पंचमो वेद उच्यते" इत्युक्तिबलाद्वेदत्वमेवेति "सांगोपांगश्रुतिज्ञाद्वै पुराणं शृणुयाद्बुधः । न शास्त्रं घातयेत्प्रीत्या ब्रह्महा तेन जायते । सर्वदर्शनवेत्ता यो विप्रः शुद्धान्वयः सुधीः । विप्रादधीतशास्त्रश्च स्वाचारः कृष्णवल्लभः । स्वाकारः प्रियवादी च संगीतज्ञो गृहाश्रमः । सर्वांगपूर्णः कुशलः क्रोधलोभादिवार्जितः । इतिहासपुराणानां वक्ता कार्यो विमृश्य वै । अध्यापकः काव्यकर्त्ता शुद्धदेशोद्भवस्तथा ॥ बहुधा शब्दशास्त्रज्ञः प्रीणाति तेन वै हरिः । व्यंगादेः श्रवणाद्धानिः सर्वथा जायते ध्रुवम् । वैष्णवाच्छृणुयाच्छास्त्रं शुकशास्त्रं विशेषतः । वैष्णवो द्विविधः प्रोक्तो बाह्याभ्यंतरभेदतः । बाह्यस्तु शंखचक्राद्यैर्वीतरागस्तु चांतरः । वीतो विष्णुः समाख्यातस्तद्भक्तो वीतरागकः । विः प्रोक्तो मुख्यतस्तार्क्ष्यस्तेनैति स यतः सदा । तेन वीत इति ख्यातो निष्ठाकर्त्तरि चात्र वै । विपूर्वादिण्धातोर्वै गत्यर्थान्नात्र संशय" इति वारतांतविः । एतदभिप्रायेणैवाभियुक्तैरुक्तं "यद्यपि बहु नाधीषे तथाऽपि पठ पुत्र व्याकरणम् । स्वजनः श्वजनो मा भूत्सकलं शकलं सकृच्छकृत् ॥" इत्यलं प्रसक्तानुप्रसक्त्या ॥ ३७ ॥ ज्ञाने निर्बंधं वारयितुमाह । न चेति । काकूक्त्या उक्तार्थसाधनोक्त्या 'प्रतिषेधानुवादेनोक्तार्थसाधनोक्तिः काकूक्तिः' इति साहित्यार्णवोक्तेः ॥ ३८ ॥ अपरे ब्रह्माद्याः आत्मा परमेश्वरः ॥ ३९ ॥ यतः परमेशतः अन्ये कुबेरादयः ॥ ४० ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥

श्रीशुक उवाच ॥ एवं ब्रुवाणं मैत्रेयं द्वैपायनसुतो बुधः ॥ प्रीणयन्निव भारत्या विदुरः प्रत्यभाषत ॥ १ ॥ विदुर उवाच ॥ ब्रह्मन्कथं भगवतश्चिन्मात्रस्याऽविकारिणः ॥ लीलया चापि युज्येरन्निर्गुणस्य गुणाः क्रियाः ॥२॥ क्रीडायामुद्यमोऽर्भस्य कामश्चिक्रीडिषाऽन्यतः ॥ स्वतस्तृप्तस्य च कथं निवृत्तस्य सदाऽन्यतः ॥ ३ ॥ अस्राक्षीद्भगवान्विश्वं गुणमय्याऽऽत्ममायया ॥ तया संस्थापयत्येतद्भूयः प्रत्यभिधास्यति ॥ ४ ॥ देशतः कालतोयोऽसाववस्थातः स्वतोऽन्यतः ॥ अविलुप्तावबोधात्मा स युज्येताऽजया कथम् ॥ ५ ॥

सप्तमे संशयच्छेदि प्रतिनंध मुनेर्वचः ॥ पुनः क्षत्रा कृता नाना प्रश्नाः सम्यगुदीरिताः ॥ १ ॥ "अथ ते भगवल्लीला योगमायोपबृंहिताः" इत्यादिना मायागुणैर्लीलया भगवान् सृष्ट्यादि करोतीत्येवं ब्रुवाणं भारत्या प्रार्थनारूपया प्रीणयन्निवेत्यभिप्रायाज्ञानेनाक्षेपात् ॥ १ ॥ निर्विकारस्य क्रिया निर्गुणस्य च गुणाः कथं लीलयेत्युक्तिः प्रयोजनाभावं परिहरति न वस्तुविरोधमिति भावः ॥ २ ॥ अर्भकवल्लीलाऽपि न युज्यते वैषम्यादित्याह ॥ उद्यमयति प्रवर्तयतीत्युद्यमः प्रवर्तकः । अर्भकस्य क्रीडायां प्रवृत्तिहेतुः कामोऽस्ति अन्यतस्तु वस्त्वंतरेण बालांतरप्रवर्तनेन वा तस्य क्रीडेच्छा भवति ईश्वरस्य तु स्वतस्तृप्तस्य कथं कामोऽन्यतः सदा निवृत्तस्य चासंगाद्द्वितीयस्य कथमन्यतश्चिक्रीडिषेत्यर्थः ॥ ३ ॥ यच्चोक्तम् "स्मरन् विश्वसृजामीशो विज्ञापितमधोऽक्षजः" इत्यादिनाऽविद्योपाधेर्जीवस्य भोगार्थमीश्वरः सृष्ट्यादि करोतीति तदप्याक्षेप्तुमनुवदति । अस्राक्षीदिति । गुणमयी आत्मनो जीवस्य कर्तृत्वभोक्तृत्वादिमोहोत्पादिका या माया तया सृष्टवान् । तदुक्तं प्रथमे । "यया संमोहितो जीव आत्मानं त्रिगुणात्मकम् ॥ परोऽपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते" इत्यादिना । अत्र च । "अतो भगवतो माया मायिनामपि मोहिनी" इति । संस्थापयति पालयति प्रत्यभिधास्यति प्रातिलोम्येन तिरोहितं करिष्यति । पाठांतरे प्रातिलोम्येनात्मन्यभितो धारयिष्यति ॥ ४ ॥ एतच्च जीवस्याविद्याश्रयत्वे घटेत न तु तत्संभवतीत्याह । देशत इति ।

संशयमच्छिददिति संशयच्छेदि णिनिरतीते ॥ १ ॥ इति भाव इति । लीलया कथंचित्क्रियागुणयोगसत्त्वेपि निर्गुणत्वाविकारित्वे तु गुणक्रियायोगस्तु कदापि न संभवति तेजस्तिमिरवदिति तात्पर्य्यम् । वस्तुतो लीलायामपि न कंटकेषु पादो दीयते प्रत्युत तेभ्यो ह्रियते इति चेद्बालवत्सा ज्ञेया ॥ २ ॥ तत्राह अर्भकवदिति । इत्यर्थ इति । "आप्तकामः सत्यकामः" इत्यादिश्रुतेः कामाभावात्तथा "एकमेव द्वितियं ब्रह्म" इति श्रुतेः "असंगो ह्ययं पुरुषः" इति श्रुतेश्चासंगाद्द्वितियस्य सर्वदा तदन्यवस्त्वभावाच्च लीला न संगच्छते इति भावः ॥३ ॥ आक्षेपांतरं वक्तुमाह यच्चेत्यादि । तत् मायाया जीवमोहकत्वम् । अत्र चास्मिन्स्कंधे च पूर्वाध्याये पाठांतरे 'तया संस्थापयत्येतदात्मन्प्रत्यभिधास्यति' इति पाठे ॥ ४ ॥ एतच्च विश्वसृष्ट्यादि च । तदविद्याश्रयत्वम् । तत्रेति वाक्यालंकारे दीपप्रभा हि क्वचिद्देशेऽस्ति क्वचिन्न, विद्युच्च कदाचिद्भवति कदाचिन्न, स्मृतिर्हि क्वचिदवस्थायामस्ति क्वचिन्नेति एवं स्वप्नोऽपि घटाद्यपेक्षयाऽन्यो मुद्गरप्रहारादिरस्ति विरोधाभावं स्फुटयति मायासंपादितैव शास्त्रगुर्वादिरूपा ज्ञानसामग्री तया विना तदसंभवात् । यद्वा । मायायाज्ञान

भगवानेक एवैष सर्वक्षेत्रेष्ववस्थितः ॥ अमुष्य दुर्भगत्वं वा क्लेशो वा कर्मभिः कुतः ॥ ६ ॥ एतस्मिन्मे मनो विद्वान्खिद्यते ज्ञानसंकटे ॥ तन्नः पराणुद विभो कश्मलं मानसं महत् ॥ ७ ॥ श्रीशुक उवाच ॥ स इत्थं चोदितः क्षत्त्रा तत्त्वजिज्ञासुना मुनिः ॥ प्रत्याह भगवच्चित्तः स्मयन्निव गतस्मयः ॥ ८ ॥ मैत्रेय उवाच ॥ सेयं भगवतो माया यन्नयेन विरुध्यते ॥ ईश्वरस्य विमुक्तस्य कार्पण्यमुत बंधनम् ॥९॥ यदर्थेन विनाऽमुष्य पुंस आत्मा विपर्ययः ॥ प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिकः ॥१०॥ यथा जले चंद्रमसः कंपादिस्तत्कृतो गुणः ॥ दृश्यतेऽसन्नपि द्रष्टुरात्मनो नात्मनो गुणः ॥ ११ ॥

योऽसौ देशादिभिरविलुप्तावबोध आत्मा जीवः ब्रह्मस्वरूपत्वात् स कथमजयाऽविद्यया युज्येत । तत्र युज्येत । तत्र देशतो दीपप्रभाया इव लोपो नास्ति सर्वगतत्वात् । न कालतो विद्युत इव नित्यत्वात् । नावस्थातः स्मृतिवदविक्रियत्वात् । न स्वतः स्वप्नवत्सत्यत्वात् । नान्यतो घटादिवदद्वितीयत्वात् । एवमेतैर्यस्य बोधो न लुप्यते स कथमजया युज्येत अजा चात्राविद्यैव न माया तस्या अवबोधेन विरोधाभावात् ॥ ५ ॥ किंच ब्रह्मरूपत्वादेव जीवस्य संसारोऽपि न विद्युत इत्याक्षिपति । सर्वक्षेत्रेष्ववस्थितो भोक्ताऽपि वस्तुतो भगवानेव चिद्रूपत्वेन तद्व्यतिरेकाभावात् । एवं च सत्यमुष्य जीवस्य दुर्भगत्वमानंदादिभ्रंशः कर्मभिर्हेतुभूतैः क्लेशो वा कुतः कर्मसंबंधाभावात् । अन्यथा ईश्वरस्यापि तत्प्रसंगः स्यादिति भावः ॥ ६ ॥ अज्ञानमेव संकटं दुर्गं तस्मिन् तन्मानसं कश्मलं मोहं पराणुदापाकुरु ॥ ७ ॥ चोदित आक्षिप्तः । स्मयन्निव प्रौढिमा विष्कुर्वन्निव । वस्तुतस्तु गतस्मयः॥८॥भगवतोऽचिंत्यशक्तेरीश्वरस्य सेयं माया नयेन तर्केण विरुद्ध्यत इति यत् तर्कविरोधमेवानुवदति । विमुक्तस्यैव पुंसोऽविद्यया बंधनं कार्पण्यं चेति ॥९॥ अत्रोदाहरणमाह । यद्यथा अर्थेन शिरश्छेदादिना विनाऽप्युपद्रष्टुः स्वप्नसाक्षिणो ममेदं शिरश्छिन्नमित्यात्मविपर्ययः केवलं मृषैव प्रतीयते तद्वत्॥ १०॥ तर्हीश्वरस्यापि किं न प्रतीयेत तत्राह । यथा जले प्रतिबिंबितस्यैव चंद्रमसो जलोपाधिकृतः कंपादिधर्मो दृश्यते न त्वाकाशे स्थितस्य । तथाऽनात्मनो देहादेर्धर्मोऽसन्नपि

विरोधित्वस्वीकारे 'मायिनं तु महेश्वरम्' इति श्रुतेस्तदुपहितेश्वरस्यापि तन्न सेत्स्यतीति भावः ॥ ५ ॥ आक्षेपांतरमाह।किं चेति ।''ब्रह्मैवायमात्मा'' इति श्रुतेर्जीवस्यापि ब्रह्मत्वान्न संसारो घटत इति भोक्ता जीवोपि ''कर्त्ता भोक्ताहमेवास्मि देहेस्मिन्भरतर्षभ'' इति गीतोक्तेर्भगवानेवेति व्यतिरेको भेदः । 'नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः' इत्युक्तेः कर्मसंबंधाभावात् । अन्यथा जीवस्य संसारस्वीकारे।इति भाव इति चिद्रूपत्वाविशेषा ज्जीववत् । ''समानं वृक्षं परिषस्वजाते'' इति श्रुतेः । समानाधिकरणत्वादीश्वरस्य संसारः कथं न भवेदिति तात्पर्य्यम् ॥ ६ ॥ ७ ॥ प्रौढिराधिक्यं विस्मयं प्रकटयन्निवेत्यर्थः । अनुपदमेव गतस्मयोक्तेरिवोपादानम् । गतस्मयत्वे हेतुः भगवच्चित्त इति । अचिंत्यैश्वर्ये भगवति सर्वं संपद्यत इति ज्ञानवानित्यर्थः ॥ ८ ॥ ईश्वरस्य कार्पण्यं विमुक्तस्य बंधनं चेति वदतो व्याघातत्वाद्विरोधः परं तु मायाया अघटितघटनापटीयस्या नैतदयुक्तमिति ॥ ९ ॥ अत्राविद्यमानप्रतीतौ अर्थेन सत्येन कारणेन वा मृषैवेति न हि स्वशिरश्छेदः स्वेनानुभवितुमेकाधिकरणे शक्यः स्वस्य स्वस्कंधारोहणवत्तद्वन्मृषैव स्वरूपाज्ञानकृतं बंधनकार्पण्यादीत्यर्थः । अन्यगतमपि शिरश्छेदादिकं यथा स्वप्नमायया स्वस्मिन्नारोपयति तथात्मा ज्ञानगतं बंधकार्पण्यादिकं स्वस्मिन्नारोपयति भगवन्माययेतिभावः ॥ १० ॥ अत्राक्षिपति तर्हीति । इत्यर्थ इति । ईश्वरस्य स्वरूपज्ञानसत्त्वात्तन्न प्रतीयत इति भावः ।

स वै निवृत्तिधर्मेण वासुदेवाऽनुकंपया ॥ भगवद्भक्तियोगेन तिरोधत्ते शनैरिह ॥ १२ ॥ यदेंद्रियोपरामोऽथ द्रष्टात्मनि परे हरौ ॥ विलीयंते तदा क्लेशाः संसुप्तस्येव कृत्स्नशः॥१३॥ अशेषसंक्लेशशमं विधत्ते गुणानुवादश्रवणं मुरारेः ॥ कुतः पुनस्तच्चरणारविंदपरागसेवारतिरात्मलब्धा ॥१४॥ विदुर उवाच ॥ संछिन्नः संशयो मह्यं तव सूक्तासिना विभो ॥ उभयत्राऽपि भगवन्मनो मे संप्रधावति ॥१५॥ साध्वेतद्व्याहृतं विद्वन्नात्ममायाऽयनं हरेः ॥ आभात्य पार्थं निर्मूलं विश्वमूलं न यद्बहिः॥१६॥यश्च मूढतमो लोके यश्च बुद्धेः परं गतः॥तावुभौ सुखमेधेते क्लिश्यत्यंतरितो जनः॥१७॥

तदभिमानिनो द्रष्टुरात्मनो जीवस्यैव नत्वीश्वरस्येत्यर्थः ॥ ११ ॥ तन्निवृत्त्युपायमाह । स वै अनात्मनो गुणो निवृत्तिधर्मेण वासुदेवस्यानुकंपा तया च तस्मिन्भक्तियोगस्तेन तिरोधत्तेऽदृश्यो भवति । शनैरित्यनेन साधनानुसारेणेत्युक्तम् ॥ १२ ॥ तर्हि सर्वानर्थनिवृत्तिः कदेत्यपेक्षायामाह । यदेंद्रियाणामुपरामो नैश्चल्यं क्व द्रष्टर्यात्मन्यंतर्यामिरूपे । अथानंतरमेव । कृत्स्नक्लेशविलयमात्रे दृष्टांतः । संसुप्तस्येवेति । नतु पुनरुत्थाने ॥ १३ ॥ भक्तियोगेन क्लेशनिवृत्तिं दर्शयति । अशेषेति । गुणानामनुवादश्च श्रवणं च । आत्मनि मनसि लब्धा श्रवणकीर्तनापेक्षया सप्रेमध्याने किं पुनर्न्यायोक्तिः ॥ १४ ॥ उत्तरमाभिनंदन्नात्मनः कृतार्थतामाविष्करोति । संछिन्न इति षड्भिः । चिद्रूपत्वाविशेषेऽपि कथमीश्वरस्य जगत्कर्तृत्वादि कथं वा जीवस्य संसार इति यः संशयो ममासीत्स तव सूक्तं सोपपत्तिकं वाक्यमेवासिः खड्गस्तेन संछिन्नः। अत इदानीं मे मन उभयत्रापीश्वरस्वातंत्र्ये जीवपारतंत्र्ये च संप्रधावति सम्यक्प्रविशति । एवं वाऽविलुप्तावबोधरूपस्यात्मनः कथमविद्यया बंधः कुतो वा तन्निवृत्तिरिति संशयः । उभयत्रेति बंधे मोक्षे चेत्यर्थः ॥ १५ ॥ यस्मात्त्वया साधु व्याहृतं किं तत् हरेः शक्तिर्या आत्ममाया जीवविषया माया तदयनं तदाश्रयमेतद्दुर्भगत्वादिकं भातीति । यद्यस्मात्स्वशिरश्छेदादिवदपार्थमवस्तुभूतं निर्मूलं मूलशून्यं च । यस्मादस्य मूलं विश्वस्य मूलं स्वाज्ञानं बहिर्विना नास्ति ॥ १६ ॥ अल्पज्ञत्वात्पूर्वं मम संशयो जात इत्याह । यश्चेति ।

यथैकवृक्षारूढयोर्नृवानरयोरधःस्थितसिंहेन वानरदेहच्छाया हस्तेन ताडिता तामेवात्मानं मन्यमानो मूढो वानरः किलकिलेति स्वजातिशब्दं कृत्वाधः पपात तं च सिंहश्चखाद । पुनर्नृदेहछायामपि तथैव तताड ना च विवेकी छायात आत्मानं भिन्नं मत्वा न पपात जहास च सिंहः पुनः पुनस्ताडयित्वा नायं पतिष्यतीति ज्ञात्वा देशातरं जगाम । तथा नात्मदेहाभिमानेन मूढजीवस्यैव तत्प्रतीतिर्न त्वीशस्य सर्वज्ञस्येति ध्येयम् ॥ ११ ॥ निवृत्तिधर्मेण निष्कामकर्मणा दृश्यो भवति नश्यतीत्यर्थः ॥ १२ ॥ द्रष्टुर्जीवस्य क्लेशाः स्वाप्नव्याघ्रदंतक्षतजादिरूपाः ॥ १३॥ अशेषाः संक्लेशाः क्लेशा यस्मिन्सोऽशेषसंक्लेशः संसारोऽज्ञानं वा तस्य शमं शांतिम् । संक्लेश इह समुपसर्गस्तु धात्वर्थपर एव 'कश्चित्तमनुवर्तते' इत्युक्तेः' कुतः पुनारित्यस्य किंपुनारित्यर्थः । किं पुनर्न्यायः कैमुत्यन्यायः ॥ १४॥ सोपपत्तिकं सयुक्तिकं युक्तिश्च 'यदर्थेन विना' इत्यादिबोधिता सर्वज्ञत्वाल्पज्ञत्वादिरूपा ज्ञेया अतः संछिन्नसंशयत्वात् । प्रकारांतरमप्याह–संभवत्वात् एवं वेति । इत्यर्थ इति । ज्ञानाभावे बंधः सति च ज्ञान मोक्ष इति तात्पर्यम् ॥ १५ ॥ स्वाज्ञानं विनेति स्वाज्ञानमेव । विश्वमूलमित्यर्थः ॥ १६ ॥ 'यश्च मूढतमोऽतीव यो बुद्धेः प्ररतस्तु सः' इति श्रीगीतोक्तेः । इत्यर्थ इति । वर्द्धनमत्र जीवनमेवानेकार्थत्वादिति भावः । अंतरितपदार्थमाह । यस्त्विति । इत्यर्थ इति । निश्चयदार्ढ्याभावात्क्लेशमेवानुभवतीति भावः ॥ १७ ॥

अर्थाऽभावं विनिश्चित्य प्रतीतस्यापि नात्मनः ॥ तां चापि युष्मच्चरणसेवयाऽहं पराणुदे ॥ १८ ॥ यत्सेवया भगवतः कूटस्थस्य मधुद्विषः ॥ रतिरासो भवेत्तीव्रः पादयोर्व्यसनार्दनः ॥ १९ ॥ दुरापा ह्यल्पतपसः सेवा वैकुंठवर्त्मसु ॥ यत्रोपगीयते नित्यं देवदेवो जनार्दनः ॥ २० ॥ सृष्ट्वाऽग्रे महदादीनि सविकाराण्यनुक्रमात् ॥ तेभ्यो विराजमुद्धृत्य तमनुप्राविशाद्विभुः ॥ २१ ॥ यमाहुराद्यं पुरुषं सहस्रांघ्र्यूरुबाहुकम् ॥ यत्र विश्व इमे लोकाः सविकाशं समासते ॥ २२ ॥ यस्मिन्दशविधः प्राणः सेंद्रियार्थेंद्रियस्त्रिवृत् ॥ त्वयेरितो यतो वर्णास्तद्विभूतीर्वदस्व नः ॥ २३ ॥ यत्र पुत्रैश्च पौत्रैश्च नप्तृभिः सह गोत्रजैः ॥ प्रजा विचित्राकृतय आसन्याभिरिदं ततम् ॥ २४ ॥ प्रजापतीनां सपतिश्चक्लृपे कान्प्रजापतीन् ॥ सर्गांश्चैवानुसर्गांश्च मनून् मन्वंतराधिपान् ॥ २५ ॥

मूढतमो देहाद्यासक्तो यश्च बुद्धेः प्रकृतेः परमीश्वरं प्राप्तस्तौ सुखं यथा भवति तथा एधेते जीवत इत्यर्थः । संशयक्लेशाभावात । यस्तु दुःखानुसंधानेन प्रपंचं जिहासति स्वानंदसंवेदनाभावाद्धातुं न शक्नोति । स तु क्लिश्यतीत्यर्थः ॥ १७ ॥ इदानीं तु कृतार्थोऽस्मि यतस्त्वया संशयश्छिन्नः केवलं बाधितानुवृत्तिरेवावशिष्टा साऽपि युष्मत्प्रसादान्निवर्तिष्यत इत्याह । नात्मनः अनात्मनः प्रपंचस्य प्रतीतस्याप्यर्थाभावमर्थोऽत्र नास्ति किंतु प्रतीतिमात्रमिति युष्मच्चरणसेवया विनिश्चित्य तां प्रतीतिमप्यहं पराणुदेऽपनेष्यामीत्यर्थः ॥ १८ ॥ मधुद्विषः पादयोः रतिरासः प्रेमोत्सवस्तीवो दुर्वारः स्वाभाविकः व्यसनं संसारमर्दयति नाशयतीति तथा ॥ १९ ॥ अहो दुर्लभं प्राप्तं मयेत्याह । दुरापा दुर्लभा वैकुंठस्य विष्णोस्तल्लोकस्य वा वर्त्मसु मार्गभूतेषु महत्सु यत्र येषु महत्सेवया हरिकथाश्रवणं ततो हरौ प्रेम तेन च देहाद्यनुसंधानमपि निवर्तत इति तात्पर्यम् ॥ २० ॥ अर्थांतरं प्रष्टुं तदुक्तमनुवदति त्रिभिः । सृष्ट्वेति । विकारैरिंद्रियादिभिः सहितानि उद्धृत्य तदंशैर्विराजं सृष्ट्वा ॥ २१ ॥ प्रविष्टस्य स्वरूपमाह । यमिति । विराजं विशिनष्टि । यत्रेति । ते इमे विश्वे सर्वे लोकाः सविकाशमसंकोचेन ॥ २२ ॥ प्राणादयः पंच नागादयः पंचेत्येवं दशविधः इंद्रियाणि च अर्थाश्च । इंद्रियाणि चेति पुनरुक्तिस्तद्देवतालक्षणार्था तत्सहितः सर्वोपबृंहकत्वात्प्राणस्य तत्साहित्यम् । एवं त्रिविधः प्राणस्त्वयेरितः उक्तः तस्य विभूतीर्ब्रह्माद्या विसर्गशब्दवाच्याः ॥ २३ ॥ यत्र यासु इदं विश्वं ततं व्याप्तम् ॥ २४ ॥ एवमेतत्पुरा पृष्टो मैत्रेयो भगवान्किल इति परीक्षित्प्रश्नोत्तरतया विदुरमैत्रेयसंवादः प्रस्तावितोऽतस्तानेव विदुरेण कृतान्प्रश्नानाह यावत्समाप्ति । प्रजाप

इत्यर्थ इति श्रीमदाराधनबलेन मोक्षोऽपि न दुर्लभः किमु प्रपंचप्रतीत्यभाव इति भावः॥ १८ ॥नारायणांघ्रिसरोजसेवा संसारव्यथावारकत्वात्पुरुषार्थोपयोगिनी स्यात्किमस्मच्चरणसेवयेति चेदाह—येषां हारिस्वरूपद्रष्टॄणां युष्माकं सेवया मधुद्विषः लोकहितकर्त्तुः कूटस्थस्य निर्विकारस्य ॥ १९ ॥ स्वात्मभाग्यं श्लाघयन्नाह—दुरापेति ॥ २० ॥ तेभ्यो महदादिभ्यः तं विराजं विभुरिति मुख्यप्रवेशाभावमाह ॥ २१ ॥ यत्र पुरुषे ॥ २२ ॥सर्वोपबृंहकत्वात्प्राणस्य सर्वेषां वर्द्धकत्वात्तत्साहित्यं प्राणसाहित्यम् । एवं त्रिवृत् इंद्रियैरिंद्रियार्थैरिन्द्रियदेवतारूपेण त्रिविधः यतः पुरुषात् । वर्णा ब्राह्मणाद्याः । "ब्राह्मणोऽस्य मुखमासीत्" इत्यादिश्रुतेः । 'विसर्गः पौरुषः स्मृतः' इत्युक्तेः पौरुषः पुरुषाद्ब्रह्मादिरूपेण जातः ॥ २३ ॥ यासु विभूतिषु निमित्तभूतासु नप्ता दौहित्रः 'पौत्रः' विचित्राकृतयः परस्परव्यावृत्तलक्षणोपेताकाराः ॥ २४ ॥ तद्भेदान् नवसर्गावांतरभेदान् ॥ २५ ॥

एतेषामपि वंशांश्च वंश्यानुचरितानि च ॥ उपर्यधश्च ये लोका भूमेर्मित्रात्मजासते ॥ २६ ॥ तेषां संस्थां प्रमाणं च भूर्लोकस्य च वर्णय ॥
तिर्यङ्मानुषदेवानां सरीसृपपतत्रिणाम् ॥ वद नः सर्गसंव्यूहं गार्भस्वेदद्विजोद्भिदाम् ॥ २७ ॥ गुणावतारैर्विश्वस्य सर्गस्थित्यप्ययाश्रयम् ॥
सृजतः श्रीनिवासस्य व्याचक्ष्वोदारविक्रमम् ॥२८॥वर्णाश्रमविभागांश्च रूपशीलस्वभावतः ॥ ऋषीणां जन्मकर्मादि वेदस्य च विकर्षणम्॥२९॥
यज्ञस्य च वितानानि योगस्य च पथः प्रभो ॥ नैष्कर्म्यस्य च सांख्यस्य तंत्रं वा भगवत्स्मृतम् ॥३० ॥ पाखंडपथवैषम्यं प्रतिलोमनिवेशनम् ॥
जीवस्य गतयो याश्च यावतीर्गुणकर्मजाः ॥ ३१ ॥ धर्मार्थकाममोक्षाणां निमित्तान्य विरोधतः ॥ वार्ताया दंडनीतेश्च श्रुतस्य च विधिं पृथक् ॥
॥ ३२ ॥ श्राद्धस्य च विधिं ब्रह्मन्पितृणां सर्गमेव च ॥ ग्रहनक्षत्रताराणां कालावयवसंस्थितिम् ॥ ३३ ॥ दानस्य तपसो वाऽपि यच्चेष्टापूर्तयोः
फलम् ॥ प्रवासस्थस्य यो धर्मो यश्च पुंस उताऽपदि ॥ ३४ ॥ येन वा भगवांस्तुष्येद्धर्मयोनिर्जनार्दनः ॥ संप्रसीदति वा येषामेतदाख्याहि
चाऽनघ ॥ ३५ ॥

तीनां पतिर्ब्रह्मेत्यादीनां वर्णयेति वक्ष्यमाणेनान्वयः । चक्लृपेऽकल्पयत् सर्गान्नवविधाननुसर्गांस्तद्भेदान् ॥ २५ ॥ हे मित्राया आत्मज ॥ २६ ॥ संस्थां संनिवेशं सर्गाणां संव्यूहं संविभागम् । गार्भस्वेदद्विजोद्भिदां गार्भा जरायुजाः स्वेदाच्च द्वाभ्यां च जाताः स्वेदद्विजा उद्भिदश्च तेषाम् ॥ २७ ॥ सर्गादीनाश्रयं च सृजतः ॥ २८ ॥ रूपं लिंगं शीलमाचारः स्वभावः शमादिस्ततो विकर्षणं विभागम् ॥ २९ ॥ वितानानि विस्तारान् नैष्कर्म्यस्य च ज्ञानस्य तदुपायस्य च सांख्यस्य पथो मार्गान् तंत्रं चेत्यर्थः ॥ ॥ ३० ॥ पाखंडानां पंथाः प्रवृत्तिस्तदेव वैषम्यम् ॥ ३१ ॥ निमित्तान्युपायान् परस्पराविरोधेन ॥३२॥ ग्रहादीनां कालचक्रे संस्थितिम् ॥३३॥३४ ॥ येन मार्गेण

एतेषां मन्वादीनां वंशान्संतानान् ॥ २६ ॥ तेषां लोकानां द्वाभ्यां स्वेदांडाभ्यां च जाताः स्वेदजा अंडजाश्च यद्वा स्वेदात् द्वाभ्यां मात्रंडाभ्यां च जाता द्विजाः पक्षिणः क्वचित्तु 'गार्भः स्वेदांडजोद्भिदाम्' इति पाठः । स्वेदश्चांडश्च स्वेदांडौ ताभ्यां जातौ स्वेदांडजौ भूमिमुद्भिद्य जाता उद्भिदः वृक्षाद्याः तिर्यगादिविशेषणं तिर्यगादीत्यादिकार्यमन्यथा पुनरुक्तिः स्यात् सरीसृपाः सहस्रपद्यादयः ॥ २७ ॥ गुणावतारैर्ब्रह्मविष्णुरुद्रैः श्रीनिवासस्येति वाक्ये "सद्वावेतौ नित्ययुक्तौ" इति श्रुत्यर्थस्सूचितः । उदारविक्रमं महच्चरितम् "उदारो दातृमहतो"इत्यमरः ॥२८॥२९॥ सांख्यस्य वेदांतस्य । इत्यर्थ इति । वाशब्दोत्र चार्थे इति भावः । भगवता नारदेन कृतं पंचरात्रम् ॥ ३० ॥ यद्वा पाखंडस्याधर्मालिंगस्य सकाशाद्यद्बुद्धिवैषम्यम् । प्रातिलोम्येनोत्पत्तिवैपरीत्येन सर्वेषां ब्रह्मणि निवेशनं प्रवेशो लय इत्यर्थः । यद्वा । ब्राह्मणादिकन्यकानां क्षत्रियादिविवाहलक्षणं प्रातिलोम्यानिवेशनम् । या यादृशीः यावतीर्यावत्संख्याकाः सत्त्वादिगुणनिमित्तकर्मजाताः ॥३१॥ वार्त्ताया वाणिज्यादेः दंडनीतेरर्थशास्त्रोक्तराजधर्मस्य श्रुतस्य श्रुत्युक्तस्य विधिं प्रकारम् ॥३२॥ तारा ध्रुवाद्याः कालावयवानां परमाण्वादिकालावयवानाम् ॥३३॥ पुंसं इति मनुष्यमात्रस्य ॥३४॥ मेऽनघेति पाठे मे मह्यम् । धर्मस्य योनिः कारणं लोकसंग्राहकत्वेन कर्त्ता जनार्दन इति सकामभक्तान्कामान्याचयञ्शुद्धभक्तान्प्रेमोत्थानुतापेन पीडयंश्च येषां वेति

अनुव्रतानां शिष्याणां पुत्राणां च द्विजोत्तम ॥ अनापृष्टमपि ब्रूयुर्गुरवो दीनवत्सलाः ॥ ३६ ॥ तत्त्वानां भगवंस्तेषां कतिधा प्रतिसंक्रमः ॥ तत्रेमं क उपासीरन्क उ स्विदनुशेरते ॥ ३७ ॥ पुरुषस्य च संस्थानं स्वरूपं वा परस्य च ॥ ज्ञानं च नैगमं यत्तद्गुरुशिष्यप्रयोजनम् ॥ ३८ ॥ निमित्तानि च तस्येह प्रोक्तान्यनघ सूरिभिः ॥ स्वतो ज्ञानं कुतः पुंसां भक्तिर्वैराग्यमेव वा ॥ ३९ ॥ एतान्मे पृच्छतः प्रश्नान्हरेः कर्मविवित्सया ॥ ब्रूहि मेऽज्ञस्य मित्रत्वादजया नष्टचक्षुषः ॥ ४० ॥

संतुष्येत् । येषामिति यादृशानाम् ॥ ३५ ॥ अनापृष्टमप्यपृष्टमपि यद्योग्यं तद्वक्तव्यमिति भावः ॥ ३६ ॥ प्रतिसंक्रमः प्रलयः तत्र प्रलये इमं परमेश्वरं शयानं राजानमिव चामरग्राहिणः के वानुशेरते शयानमनुस्वपंति ॥ ३७ ॥ पुरुषस्य संस्थानं जीवस्य तत्त्वं परमेश्वरस्य स्वरूपं येनांशेन तयोरैक्यं तथा ज्ञानं च नैगममौपनिषदम् ॥ ३८ ॥ यानि सूरिभिः प्रोक्तानि तस्य ज्ञानस्य साधनानि च ब्रूहि गुरुं विनैतन्न भवतीत्याह । स्वत इति ॥ ३९ ॥ मे प्रश्नान् मे मित्रत्वात्स्निग्धत्वादित्यन्वयभेदान्न

क्रमेण तत्प्रसादस्य साधनं किं तत्राधिकारिणश्च कीदृशा इति कथयेत्यर्थः ॥३५॥ इति भाव इति । स्वाभीष्टमहं न जानाम्यतस्तत्र भवन्तः कृपया कथयंत्वित्याशयः । तदेवाह। अनुव्रतानामिति । चतुर्थ्यर्थे षष्ठी । द्विजोत्तमेति । ब्राह्मणा ह्यतीव दयाप्रकृतयो भवंतीत्याह ॥ ३६ ॥ क उपासीरन्नित्यनेन तत्पार्षदानां नित्यत्वमभिप्रेतं तदुक्तं काशीखंडे “ न च्यवंते हि यद्भक्ता महत्यां प्रलयापदि । अतोऽच्युतोऽखिले लोके स एक सर्वगोऽव्ययः” इति ॥ ३७ ॥ तयोर्जीवेशयोः गुरुशिष्यौ प्रयोजनं हेतुभूतौ यस्य तत्तथा ‘ प्रयोजनं कार्यहेत्वोः’ इति हैममेदिन्यौ । यद्वा । गुरुशिष्ययोर्व्याख्यानश्रवणाभ्यां प्रयोजनं निश्चायकत्वनिश्चयवत्त्वलक्षणम् । यद्वा । गुरुशिष्यौ । प्रयोजयतीति तथा । यद्वा । पुरुषस्योपासकस्य परस्योपास्यस्य च संस्थानं सम्यक्स्थितिं तत्त्वं वा । नैगममिति । स्वरूपविशेषणं वेदोक्तमित्यर्थः । यद्गुरुशिष्ययोः प्रयोजनं मत्तः शिष्योऽयं जानातु गुरुतोऽहं भक्तिज्ञानादि जानीयामित्येवंलक्षणं तस्य निमित्तानि सत्संगादीनि ॥ ३८ ॥ सूरिभिः शास्त्रतात्पर्यज्ञैः । अनघेति व्यसनांतरराहितत्वात्त्वं कथनयोग्योसीत्याह स्वयत्नेनैव तत्संपादयेति चेत्तत्राह–गुरुं विनेति ॥ ३९ ॥ नन्वेतावंतो नानाविधाः प्रश्नाः कुतः कृतास्तत्राह–हरेरिति । कर्मपारिचर्यादिकं तस्य विवित्सया प्राप्तीच्छयैवैतान्प्रश्नान् ब्रूहि सर्वजिज्ञासितसिद्धौ सत्यामेव भगवत्पारिचर्यायां मनोन्यानिरपेक्षमेकाग्रं भवति मनस ऐकाग्र्ये सत्येव तत्प्राप्तिरिति भावः । किञ्च ‘ आपत्सु मित्रं जानीयात्’ इत्युक्तेस्त्वं मित्रपुत्रत्वांन्मित्रमेवासि सर्वजगतामिति भावः । मित्रत्वाद्ब्रूहीति । ननु तव का विपदत आह–नष्टचक्षुष इति । नष्टज्ञानस्येत्यर्थः । यद्वाऽजया

सर्वे वेदाश्च यज्ञाश्च तपोदानानि चानघ ॥ जीवाभयप्रदानस्य न कुर्वीरन्कलामपि ॥ ४१ ॥ श्रीशुक उवाच ॥ स इत्थमापृष्टपुराणकल्पः कुरुप्रधानेन मुनिप्रधानः ॥ प्रवृद्धहर्षो भगवत्कथायां संचोदितस्तं प्रहसन्निवाऽऽह ॥ ४२ ॥ इति श्री भा॰ तृती॰ विदुरोक्तप्रश्नविधिवर्णनं नाम सप्तमोऽध्यायः ॥ ७ ॥ मैत्रेय उवाच ॥ सत्सेवनीयो बत पूरुवंशो यल्लोकपालो भगवत्प्रधानः ॥ बभूविथेहाजितकीर्तिमालां पदेपदे नूतनयस्यभीक्ष्णम् ॥ १ ॥ सोऽहं नृणां क्षुल्लसुखाय दुःखं महद्गतानां विरमाय तस्य ॥ प्रवर्तये भागवतं पुराणं यदाऽऽह साक्षाद्भगवानृषिभ्यः ॥ २ ॥ आसीनमुर्व्यां भगवंतमाद्यं संकर्षणं देवमकुंठसत्त्वम् ॥ विवित्सवस्तत्त्वमतः परस्य कुमारमुख्या मुनयोऽन्वपृच्छन् ॥ ३ ॥ स्वमेव धिष्ण्यं बहु मानयंतं यं वासुदेवाभिधमामनंति ॥ प्रत्यग्धृताक्षांबुजकोशमीषदुन्मीलयंतं विबुधोदयाय ॥ ४ ॥

मेपदस्य पौनरुक्त्यम् ॥ ॥ ४० ॥ तत्त्वोपदेशेन जीवाभयप्रदानस्य ॥ ४१ ॥ पुराणे कल्पते प्रकाशत इति पुराणकल्पो बुभुत्सितार्ऽर्थः आपृष्टः पुराणकल्पोऽयं स मुनिप्रधानः ॥ ४२ ॥ इति तृ॰ टी॰ सप्त॰ ॥ ७ ॥ अष्टमे समभूद्ब्रह्मा नाभेस्तु जलशायिनः ॥ तमजानन् जले बिभ्यत्तपसाऽतोषयद्विभुम् ॥ १ ॥ श्रोतारमभिनंदति । सतां सेवितुं योग्यः । बत अहो यद्यस्मादिहास्मिन्वंशे लोकपालो धर्मराजस्त्वं बभूविथ जातोऽसि । कथंभूतः । भगवानेन प्रधानभूतो यस्य सः । अत्र हेतुः । अजितेति । प्रतिक्षणं नूतनयसि नवीनां करोषि ॥ १ ॥ अल्पसुखाय महद्दुःखं प्राप्तानां तस्य दुःखस्य विरमाय प्रवर्तये प्रारभे ॥ २ ॥ कोऽसौ भगवान् केभ्यश्च ऋषिभ्य आह कथं च त्वया प्राप्तमित्यपेक्षायामाह । आसीनमिति सप्तभिः । उर्व्यां पातालतले अकुंठसत्त्वमप्रतिहतज्ञानम् । अतः संकर्षणात्परस्य श्रीवासुदेवस्य ॥ ३ ॥ तमेव विशिनष्टि । स्वमेव

रात्रितमोरूपया नष्टनेत्रशक्तेर्यथा मित्रः सूर्यः प्रत्युपकारकस्तथा ममाज्ञस्य ज्ञानप्रकाशेन त्वमपि मित्रमसीति भावः ॥ ४० ॥ न केवलं ममैवोद्धारो भवदुपदेशेनापि तु तवापि महत्पुण्यावाप्तिर्भविष्यतीत्याह—सर्वे इति । वेदा वेदपाठाः तपः कृच्छ्रादि । दानानि तुलापुरुषप्रभृतीनि । न भयं येन तदभयं ज्ञानं तस्य प्रदानमभयप्रदानं जीवेभ्योऽभयप्रदानं जीवाभयप्रदानं भयमत्र संसृतिरूपं ज्ञेयं तन्निवृत्तिस्तु भगवान्नामोच्चारणादिभिर्भवत्येव स्वतः किं पुनर्महदुपदिष्टैरिति "आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन् । ततः सद्यो विमुच्येत यद्बिभेति भयं स्वयम्" इत्युक्तेः । कलां षोडशभागं तथा च ज्ञानभक्त्याद्युपदेशजन्यपुण्यस्य वेदपाठादयोंशेनापि तुल्या न भवंतीति भावः ॥ ४१ ॥ यद्वा पुराणेषु पुराणतात्पर्येषु कल्पते व्याख्याने समर्थो भवतीति पुराणकल्पः आपृष्टश्चासौ पुराणकल्पश्चेति तथा । यद्वा । पुराणस्य पंचमवेदाख्यस्य कल्पः प्रश्नाविकल्पः पुराणकल्प आपृष्टः पुराणकल्पो यस्मात्स आपृष्टपुराणकल्पो मैत्रेयः तं विदुरम् । इवेनाहो सर्वज्ञोऽप्ययं मोक्षाद्धर्मावतारत्वाल्लोकसंग्रहार्थम् " आचार्यवान्पुरुषो वेद" इति श्रुत्युक्तमार्गबोधनार्थमेवैतान्प्रश्नान्कृतवानित्युक्तम् । ननु बालवद्वृद्धकथाप्रश्ना एव कृता इत्यज्ञशंकामपानुदन्नाह—भगवत्कथायामिति ॥ ४२ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे सप्तमोऽध्यायः ॥ ७॥ तं जलशायिनम् ॥ ( १ ) ॥ अत्र भगवत्प्रधानत्वे ॥ १ ॥ ॥ २ ॥ त्रिलोकीविवक्षयोर्वीशब्देन कथंचित्पातालस्यापि ग्रहणं भवत्येव पातालसप्तकसहितभूमेर्भूर्लोकवाच्यत्वात् तच्च 'भूर्लोकः कल्पितः पद्भ्याम्' इत्यत्र स्वामिचरणैर्व्याख्यातम् । पातालस्य तलेऽवस्तात् तथैव पञ्चमस्कंधे व्याख्यातत्वात् । उर्वीपदेन पातालार्थग्रहेऽपि तलबोधस्तु सामीपिकाधारसप्तम्यैवेति । मुनयः सनत्कुमारादयः ॥ ३ ॥ तमेव संकर्षणमेव । "आधार आश्रयो धिष्ण्यं निधानं चापि कथ्यते" इति तीर्थः ॥ ४ ॥

स्वर्धुन्युदार्द्रैः स्वजटाकलापैरुपस्पृशंतश्चरणोपधानम् ॥ पद्मं यदर्चंत्यहिराजकन्याः सप्रेमनानावलिभिर्वरार्थाः ॥ ५ ॥ मुहुर्गृणंतो वचसाऽनुराग स्खलत्पदेनाऽस्य कृतानि तज्ज्ञाः ॥ किरीटसाहस्रमणिप्रवेकप्रद्योतितोद्दामफणासहस्रम् ॥६॥ प्रोक्तं किलैतद्भगवत्तमेन निवृत्तिधर्माभिरताय तेन॥ सनत्कुमाराय स चाह पृष्टः सांख्यायनायांऽग धृतव्रताय ॥ ७ ॥ सांख्यायनः पारमहंस्यमुख्यो विवक्षमाणो भगवद्विभूतीः ॥ जगाद सोऽस्मद्गु रवेऽन्विताय पराशरायाऽथ बृहस्पतेश्च ॥ ८ ॥ प्रोवाच मह्यं स दयालुरुक्तो मुनिः पुलस्त्येन पुराणमाद्यम् ॥ सोहं तवैतत्कथयामि वत्स श्रद्धालवे नित्यमनुव्रताय ॥९॥ उदाप्लुतं विश्वमिदं तदाऽऽसीद्यन्निद्रयाऽमीलितदृग् न्यमीलयत्॥अहींद्रतल्पेऽधिशयान एकः कृतक्षणःस्वात्मरतौ निरीहः॥१०॥ सोंऽतःशरीरेऽर्पितभूतसूक्ष्मः कालात्मिकां शक्तिमुदीरयाणः ॥ उवास तस्मिन्सलिले पदे स्वे यथाऽनलो दारुणि रुद्धवीर्यः॥११॥

धिष्ण्यं स्वीयमाश्रयं वासुदेवसंज्ञं परमानंदरूपं ध्यानपथेऽनुभूय बहु मानयंतं सर्वोत्कर्षेण पूजयंतम् । प्रत्यग्धृतमंतर्मुखीकृतं नेत्रांबुजमुकुलं किंचिदुन्मीलयंतं कृपावलोकनेन सनत्कुमारादीनामभ्युदयार्थम् ॥ ४ ॥ मुनीनां विशेषणं सार्धेन स्वर्धुन्युदकेनार्द्रैरिति श्रीभागवतश्रवणार्थं सत्यलोकात्पातालं प्रत्यवतरंतो निरंतरं गंगामध्यत एवावतीर्णा इति भावः । चरणावुपधीयेते यस्मिन्पद्मे तदुपस्पृशंतो नमंतः । कथंभूतं तदाह । यत्पद्मं प्रेमसहितं यथाभवत्येवं नानोपहारैः पूजयंति वरार्थाः पतिकामाः ॥ ५ ॥ कृतानि कर्माणि गृणंतः । केन अनुरागेण स्खलंति पदानि यस्मिंस्तेन वचसा । तानि जानंतीति तज्ज्ञाः । सहस्रमेव साहस्रं किरीटानां साहस्रे ये मणिप्रवेका रत्नोत्तमास्तैः प्रद्योतितमुद्दामफणानां सहस्रं यस्य तम् । अपृच्छन्निति पूर्वेणान्वयः ॥ ६ ॥ तेन संकर्षणेन सनत्कुमाराय प्रोक्तम् ॥ ७ ॥ पारमहंस्ये धर्मे मुख्यः विवक्षमाण इत्यात्मनेपदं ब्रूञादेशस्य वचेरुभयपदित्वात् । अन्वितायानुगताय ॥ ८ ॥ पुलस्त्येनोक्त इत्यत्रैवमाख्यायिका । पितरं राक्षसभक्षितं श्रुत्वा पराशरो राक्षससत्रे प्रवृत्तो वसिष्ठवचनान्निवृ त्तस्ततः पुलस्त्येन स्वसंततिरक्षणात्तुष्टेन वरो दत्तः पुराणप्रवक्ता भविष्यसीति ॥ ९ ॥ तदेवं संकर्षणात्संप्रदायप्रवृत्तिं प्रदर्श्य विभूतिकथनाय पद्मोद्भवं वक्तुमाह । उदाप्लुतमे कार्णवोदकनिमग्नं यद्यदासीत्तदा अमीलितदृगतिरोहितचिच्छक्तिरेव श्रीनारायणो नेत्रे निमीलितवानित्यर्थः । मायाविनोदं परित्यज्य स्वात्मरतौ स्वरूपानंद एव कृतोत्सवः अत एव निरीहो निष्क्रियः सन् ॥ १० ॥ कालशक्तेः प्रेरणं पुनः सृष्ट्यवसरे प्रबोधनार्थम् । स्वे पदेऽधिष्ठाने । बहिर्वृत्त्यभावे दृष्टांतः । यथाऽनल इति ॥ ११ ॥

इति भाव इति । मार्गांतरेण गमने कस्यचित्संगाद्विलंबो भवेदतः प्रवाहमार्गेणागता इत्याशयः ॥ ५ ॥ "मुख्यवर्यवरेण्याश्च प्रवेकानुत्तमोत्तमाः" इत्यमरः । उद्दाममुत्कृष्टम् ॥ ६ ॥ किल प्रसिद्धम् एतद्भागवतं भगवत्तमेन भगवत्सूत्यादिज्ञानवत्सु श्रेष्ठेन यद्वा । भगवानेव भगवत्तमः स्वार्थे तमप् । यद्वा । भगवंतं वासुदेवं ताम्यति कांक्षतीति भगवत्तमस्तेन 'तमु कांक्षायाम्' ततोच् । 'स्वमेव धिष्ण्यं बहुमानयंतम्' इत्याद्युक्तेः । स च सनत्कुमारः । पृष्टः सन् 'नापृष्टः कस्यचिद्ब्रूयात्' इति स्मृतेः । निवृत्तिधर्माभिरतत्वादि पुराणश्रवणाधिकारप्रतिपादनायोक्तम् ॥ ७ ॥ बृहस्पतेर्बृहस्पतये च ॥ ८ ॥ उक्तो दत्तवरः । पितरं शक्तिं राक्षसेन कल्माषपादेन भक्षितम् ॥ ९ ॥ इत्यर्थ इति । योगनिद्रामुपाश्रितवानिति भावः । अहींद्रतल्पे शेषशय्यायाम् "अधिशीङ्स्थासांकर्म" इत्याधारस्य कर्मत्वाभावस्त्वार्षः ॥ १० ॥ स नारायणः अधिष्ठानेऽयने 'अयनं तस्य ताः पूर्वं तेन नारायणः

चतुर्युगानां च सहस्रमप्सु स्वपन्स्वयोदीरितया स्वशक्त्या ॥ कालाख्ययाऽऽसादितकर्मतंत्रो लोकानपीतान्ददृशे स्वदेहे ॥ १२ ॥ तस्याऽर्थसूक्ष्माभिनिविष्टदृष्टेरंतर्गतोऽर्थो रजसा तनीयान् ॥ गुणेन कालानुगतेन विद्धः सूष्यस्तदाऽभिद्यतनाभिदेशात् ॥ १३ ॥ स पद्मकोशः सहसोदतिष्ठत्कालेन कर्मप्रतिबोधनेन ॥ स्वरोचिषा तत्सलिलं विशालं विद्योतयन्नर्क इवात्मयोनिः ॥ १४ ॥ तल्लोकपद्मं स उ एव विष्णुः प्रावीविशत्सर्वगुणावभासम् ॥ तस्मिन्स्वयं वेदमयो विधाता स्वयंभुवं यं स्म वदंति सोऽभूत् ॥ १५ ॥ तस्यां स चांभोरुहकर्णिकायामवस्थितो लोकमपश्यमानः ॥ परिक्रमन्व्योम्नि विवृत्तनेत्रश्चत्वारि लेभेऽनुदिशं मुखानि ॥ १६ ॥ तस्माद्युगांतश्वसनावघूर्णजलोर्मिचक्रात्सलिलाद्विरूढम् ॥ उपाश्रितः कंजमु लोकतत्त्वं नात्मानमद्धाऽविददादिदेवः ॥ १७ ॥ क एष योऽसावहमब्जपृष्ठ एतत्कुतो वाऽब्जमनन्यदप्सु ॥ अस्ति ह्यधस्तादिह किंचनैतदधिष्ठितं यत्र सता नु भाव्यम् ॥ १८ ॥

स्वया चिच्छक्त्या सह वर्तमान एव योगनिद्रया स्वपन्पूर्वमेव प्रबोधनार्थं नियुक्तया स्वकालशक्त्याऽऽसादितं प्रापितं कर्मतंत्रं क्रियाकलापो यस्य सः । अपीतान् लीनान् ददर्श ॥१२॥ लोकसृष्ट्यर्थमर्थसूक्ष्मेऽभिनिविष्टा दृष्टिर्यस्य । कालानुसारिणा रजोगुणेन विद्धः संक्षोभितः संस्तनीयानतिसूक्ष्मोऽर्थः सूष्यन् प्रसोष्यन्नुद्भविष्यन् नाभिदेशादुद्भूत इत्यर्थः ॥ १३ ॥ स तनीयानर्थः पद्मकोशः सन्नुदतिष्ठत् । कर्माणि जीवादृष्टानि प्रतिबोधयति यः कालस्तेन आत्मा श्रीविष्णुर्योनिर्यस्य ॥ १४ ॥ तल्लोकात्मकं पद्मं सर्वान् गुणान् जीवभोग्यानर्थानवभासयतीति तथा तद्यस्माज्जातं स एव विष्णुः । उ इति संबोधने । प्रावीविशत्प्रकर्षेणालुप्तशक्तिरेवांतर्यामितया प्रविवेश । तस्मिन्विष्णुनाधिष्ठिते पद्मे विधाता ब्रह्माऽभूत् । कथंभूतः । स्वयमेव वेदमयो नत्वध्ययनेन प्राप्तवेदः । कोऽसौ अदृष्टपितृत्वेन यं स्वयंभुवं वदंति स प्राक्कल्पांते नारायणेन सह निद्रयैकीभूत आसीत् तस्मिंश्च प्रबुद्धे तत एव पाद्मे कल्पे पद्मद्वारेणाभिव्यक्तिं प्राप्त इत्यर्थः ॥ १५ ॥ स च तस्मिन्कल्पे चतुर्मुखोऽभूदित्याह । तस्यामिति परिक्रमंस्तत्रस्थ एव ग्रीवां चालयँल्लोकनिरीक्षणार्थं विवृत्ते विचलिते नेत्रे यस्य ॥ १६ ॥ तस्य च श्रीनारायणोपासनयैवाविर्भूतज्ञानक्रियाशक्तेर्लोककर्तृकत्वं न स्वत इति वक्तुं प्रथमं तस्य विमोहमाह । तस्मात्सलीलाद्विरूढमुद्गतं कंजमुपाश्रितोऽपि साकल्येन तत्कंजं लोकतत्त्वं चात्मानं च साक्षान्न ज्ञातवान् । उ इति विस्मये । कथंभूतात् । युगांतश्वसनः प्रलयवायुस्तेनावघूर्णं तत्र तत्र प्रकंपितं यज्जलं तस्मात्सर्वत ऊर्मिचक्रं यस्मिन् ॥ १७ ॥ अविदुषस्तस्य वितर्कमाह । योऽसावहमब्जपृष्ठे एष कः अनन्यदेकमेवैतदब्जं कुतो वा

स्मृतः' इति स्मृतेः । रुद्धवीर्यः प्रतिष्टब्धदाहकत्वशक्तिः । अनलोऽग्निः ॥ ११ ॥ १२ ॥ तस्य जलशायिनः । अर्थसूक्ष्मे भूतसूक्ष्मवर्गे सर्वजनलिंगदेहोत्थापनरूपं वा अर्थः भूतसूक्ष्मवर्गः इत्यर्थः इति । सूक्ष्मोर्थ एव कंजरूपेणाविर्बभूवेति भावः ॥ १३ ॥ तदेवाह–स इति ॥ १४ ॥ इत्यर्थ इति । ब्राह्मकल्पजात एव ब्रह्मा पाद्मकल्पे कमलद्वारा प्रादुरभूदिति भावः ॥ १५ ॥ स च ब्रह्मा तस्मिन्पाद्मे कल्पे अनुदिशं प्रतिदिशम् । ॥ १६ ॥ कंजं पद्मम् चक्रं मंडलम् ॥ १७ ॥ ब्रह्मवितर्के प्रमाणमाह–तथा चेति । स ब्रह्मा पुष्करपर्णे कमलपत्रे यस्मिन्नधिकरणे एतत्पद्ममधिष्ठितमिति श्रुतिपदार्थः ॥ १८ ॥

स इत्थमुद्वीक्ष्य तदब्जनालनाडीभिरंतर्जलमाविवेश ॥ नार्वाग्गतस्तत्खरनालनालनाभिं विचिन्वंस्तदविंदताऽजः ॥१९॥तमस्यपारे विदुरात्मसर्गं विचिन्वतोऽभूत्सुमहांस्त्रिणेमिः ॥ यो देहभाजां भयमीरयाणः परिक्षिणोत्यायुरजस्य हेतिः ॥ २० ॥ ततो निवृत्तोऽप्रतिलब्धकामः स्वधिष्ण्यमासाद्य पुनः स देवः ॥ शनैर्जितश्वासनिवृत्तचित्तो न्यषीददारूढसमाधियोगः ॥ २१ ॥ कालेन सोऽजः पुरुषायुषाऽभिप्रवृत्तयोगेन विरूढबोधः ॥ स्वयं तदंतर्हृदयेऽवभातमपश्यताऽपश्यत यं न पूर्वम् ॥२२॥ मृणालगौरायतशेषभोगपर्यंक एकं पुरुषं शयानम् ॥ फणातपत्रायुतमूर्धरत्नद्युभिर्हतध्वांतयुगांततोये॥२३॥प्रेक्षां क्षिपंतं हरितोपलाद्रेः संध्याभ्रनीवे रुरुरुक्ममूर्ध्नः॥रत्नोदधारौषधिसौमनस्य वनस्रजो वेणु भुजांघ्रिपांघ्रेः ॥२४॥

जातं यत्रैतदधिष्ठितं तेनाधस्तात्सता वर्तमानेन नु निश्चितं भाव्यं स इत्थमुद्वीक्ष्येत्युत्तरेणान्वयः । तथा च श्रुतिः । "सोऽपश्यत्पुष्करपर्णे तिष्ठन् सोऽमन्यत अस्ति वैतदस्मिन्निदमधितिष्ठति" इति ॥ १८ ॥ तस्य च बहिर्मुखप्रवृत्त्या महताऽपि कालेन तदप्राप्तिमाह । स इति द्वाभ्याम् । तस्याब्जस्य यन्नालं तस्य नाडीभिरंतश्छिद्रैः तस्य खरनालस्य पद्मस्य यन्नालं तस्य नाभिमधिष्ठानं विचिन्वन्नर्वाग्गतोऽपि तत्तदा नाविंदत ॥ १९ ॥ हे विदुर आत्मसर्गं स्वकारणं त्रिणेमिः कालः अजस्य विष्णोर्हेतिः सुदर्शनरूपं शस्त्रं देहभाजां नराणां भयमुत्पादयन्निति संवत्सरशतमतिक्रांतमित्युक्तं भवति ॥ २० ॥ अंतर्मुखतया तु भगवंतं दृष्टवानित्याह द्वाभ्याम् । ततोऽन्वेषणान्निवृत्तः न प्रतिलब्धः कामो मनोरथो येन । स्वधिष्ण्यं पद्मम् । जितेन श्वासेन निवृत्तं संयतं चित्तं यस्य । अत एवारूढ आश्रितः समाधियोगो येन तथाभूतः सन्न्यषीददुपविवेश॥२१॥ पुरुषायुषा संवत्सरशतेन कालेनाभिप्रवृत्तः सुनिष्पन्नो योगस्तेन विरूढ उत्पन्नो बोधो यस्य यत्पूर्वं विचिन्वन्नपि नापश्यत्तत्स्वयमेवांतर्हृदयेऽवभातमपश्यत् ॥ २२ ॥ यदपश्यत्तद्वर्णयति । मृणालेति नवभिः नवस्वप्यपश्यदित्यस्यैवानुषंगः । मृणालवद्गौरश्चासावायतश्च यः शेषस्तस्य भोगो देहः स एव पर्यंकस्तस्मिन् । कुत्र स्थिते पर्यंके । फणातपत्रैरायुताः सर्वतो युक्ता ये मूर्धानस्तेषां रत्नानि किरीटस्थानि तेषां द्युभिः प्रभाभिर्हतध्वांते युगांततोये ॥ २३ ॥ कथंभूतं पुरुषम् । हरितोपलाद्रेर्मरकतशिलामयपर्वतस्य

तस्य ब्रह्मणः तदप्राप्तिरधिष्ठानाप्राप्तिः । नालं दंडः 'नालं न ना पद्मदंडे' इति कोशात् । 'नाडी नाली सकुहरेऽम्ब्वादिनिर्गमनार्थेति' इति कोशांतरात् । "नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके स्यात्स्त्रियां कस्तूरिकामदे । आधारेऽपि क्वचिन्नाभिर्मध्यभागेऽपि युज्यते", इति धरण्यादयः । अर्वाक् समीपं तत्पद्माधिष्ठानं तदान्वेषणावसरे॥१९॥विचिन्वतो मृगयतः तमसि स्वरूपाच्छादकमायालक्षणांधकारे अपारे भगवत्प्रसादं विना पारयितुमशक्ये "शतायुर्वै पुरुषः" इति श्रुत्यपेक्षया स्वामिचरणैः संवत्सरशतमितिव्याख्यातम्॥२०॥मनोरथः पद्माधिष्ठानावाप्तिलक्षणः अत एव संयतचित्तत्वादेव स देवो ब्रह्मा॥२१॥संवत्सरशतेति। सामान्यत उक्तं भूयस्त्वं तप आतिष्ठेति भगवद्वाक्योत्तरं "विरिञ्चोपि ततश्चक्रे दिव्यं वर्षशतं तपः" इत्यग्रे वक्ष्यमाणत्वात्तत्रापि दिव्यप्रमाणकमेव तज्ज्ञेयमिति । यत्तु 'दिव्यं सहस्राब्दममोघदर्शनः' इति द्वितीयस्कंध उक्तं तद्ब्राह्मकल्पापेक्षमेतच्च पाद्मकल्पपरमिति न विरोधः । योगः समाधिः । विचिन्वन्नपि नालमार्गेण मृगयन्नपि ॥ २२ ॥ मृणालं बिसम् ॥ २३ ॥ 'प्रेक्षा धीक्षणशोभासु नृत्येपि क्वचिदुच्यते' इति । स्वलावण्यातिशयेन निजसौंदर्याधिक्येन स्वार्थिक—

आयामतो विस्तरतः स्वमानदेहेन लोकत्रयसंग्रहेण ॥ विचित्रदिव्याभरणांशुकानां कृतश्रियाऽपाश्रितवेषदेहम् ॥२५॥ पुंसां स्वकामाय विविक्तमार्गैरभ्यर्चतां कामदुघांघ्रिपद्मम् ॥ प्रदर्शयंतं कृपया नखेंदुमयूखभिन्नांगुलिचारुपत्रम् ॥२६॥ मुखेन लोकार्तिहरस्मितेन परिस्फुरत्कुंडलमंडितेन ॥ शोणायितेनाधरबिंबभासा प्रत्यर्हयंतं सुनसेन सुभ्र्वा ॥२७॥ कदंबकिंजल्कपिशंगवाससा स्वलंकृतं मेखलया नितंबे ॥ हारेण चानंतधनेन वत्स श्रीवत्सवक्षःस्थलवल्लभेन ॥२८॥ पराध्र्यकेयूरमणिप्रवेकपर्यस्तदोर्दंडसहस्रशाखम् ॥ अव्यक्तमूलं भुवनांघ्रिपेंद्रमहींद्रभोगैरधिवीतवल्शम् ॥ २९ ॥

प्रेक्षां शोभां क्षिपंतं स्वलावण्यातिशयेन तिरस्कुर्वंतं संध्याभ्रं नीवी परिधानं यस्य तस्य शोभां पीतांबरेण क्षिपंतं उरुरुक्ममूर्ध्नोऽनेकस्वर्णशिखरस्य तस्य स्वकिरीटैः रत्नानि च उदधाराश्च ओषधयश्च सौमनस्यानि च पुष्पसमूहाः सुमनस एव वा तेषां वनस्रजो वनमाला यस्य । वेणव एव भुजा यस्यांघ्रिपा एवांघ्रयो यस्य स चासौ स च तस्य । अयमर्थः । यदि तस्मिन्माला इव स्थिता रत्नादयो भवंति वेणवश्च भुजा इव वृक्षाश्च पादा इव तर्हि तस्य शोभां स्वीयरत्नमुक्तातुलसीपुष्पदामाभिर्भुजैरंघ्रिभिश्च क्षिपंतमिति ॥ २४ ॥ किंच । आयामतो दैर्घ्येण विस्तरतश्च स्वमानदेहेन मीयतेनेनेति मानमुपमा शोभनश्चासावमानो निरुपमो देहस्तेन । यद्वा । सुष्ठु अमानोऽपरिच्छिन्नस्तेन । यद्वा ताभ्यां स्वानुरूपप्रमाणेन अतएव लोकत्रयं संगृह्यते यस्मिंस्तथा विचित्राणि नानाविधानि दिव्यान्यपूर्वाणि चाभरणान्यंशुकानि च तेषां कृताऽऽसमंताच्छ्रीः शोभा येन तेन देहेन विशिष्टम् । एवं स्वत एवातिरम्यत्वेऽप्यपाश्रितवेषः स्वीकृतालंकारो देहो यस्य तमपश्यत् । यद्वा । केन प्रेक्षां क्षिपंतमित्यपेक्षायामेवंभूतेन देहेनेति संबंधः ॥ २५ ॥ स्वाभिलषितफलाय विविक्तैः शुद्धैर्वेदोक्तैर्मार्गैरभ्यर्चतां पुसां कामदुघमंघ्रिपद्मं प्रदर्शयंतं किंचिदुन्नमय्य समर्पयंतम् । नखा इव इंदवस्तेषां मयूखा रश्मयस्तैर्भिन्नाः संभिन्ना अंगुलय एव चारूणि पत्राणि यस्य तत् ॥ २६ ॥ लोकार्तिहरं स्मितं यस्मिंस्तेन परिस्फुरद्भ्यां कुंडलाभ्यां मंडितेन अधरबिंबदीप्त्या शोणवदाचरितेन शोभननासायुक्तेन सुभ्रुवा शोभनया भ्रुवा च प्रत्यर्हयंतं पूजकान्प्रतिपूजयंतं संमानयंतम् ॥२७॥ कदंबकिंजल्कवत्पिशंगं यद्वासस्ते मेखलया च नितंबे स्वलंकृतम् । हे वत्स श्रीवत्सयुक्तं यद्वक्षःस्थलं तस्य वल्लभेन वक्षस्यनर्घेण हारेण स्वलंकृतमित्यर्थः ॥ २८ ॥ महाचंदनवृक्षरूपकेण निरूपयितुं तं विशिनष्टि । पराध्र्याणि श्रेष्ठानि केयूराण्यंगदानि मणिप्रवेकाश्च

ण्यत्पक्षमाश्रित्याह—सुमनस एवेति । एतेन स्वीयरत्नमालामुक्तामालातुलसीमालापुष्पमालाभिस्सह वनस्रक्शब्देन मालामात्रत्वोक्तेः । अत्राशयमाह—अयमर्थ इति ॥ २४ ॥ अन्यदाह—किं चेति । ‘अतसीकुसमोपमेयकान्तिः’ इत्याद्युक्तेरनुपमत्वासंभवादाह—यद्वेति । अपरिच्छिन्नदेहस्य भूषणादिधारणासंभवं मत्वा पुनराह—यद्वेति । ताभ्यां दैर्घ्यविस्ताराभ्यां स्वस्येश्वरस्यानुरूपेण योग्येन प्रमाणेन “अल्पस्य ह्यल्पदेहः स्यान्महांश्च समहेशितुः” इत्याद्युक्तेः । अत एव स्वानुरूपप्रमाणदेहत्वादेव । विशिष्टमिति पदाध्याहारापेक्षया द्वयोः संबंधे लाघवं मत्वाह—यद्वेति ॥ २५ ॥ ‘संभेदः स्फुटने संगे’ इति मेदिनी । भिन्नपदस्य संभिन्नार्थताकथनमत्रोपसर्गस्य धात्वर्थद्योतकत्वाभिप्रायेणैव न हि केवलोपसर्गस्य वाचकतास्तीत्यन्यत् ॥ २६ ॥ सुभ्र्वेत्युवङ्भाव आर्षः ॥ २७ ॥ इत्यर्थ इति । बहुमूल्यहारालंकृतोरस्कमिति भावः ॥ २८ ॥ ‘प्रधानेव्यक्तमव्यक्तो ब्रह्मण्यस्पष्टमूर्खयोः’ इति यादवोक्तिमाश्रित्याह—यद्वेति । शास्त्रविद्भिरपि न व्यज्यत इदमित्थतया कथ्यते मूलं यस्य तत्तथा सर्वमूलत्वेन मूलांतररहितं यद्वाऽव्यक्तस्य प्रकृतेर्मूलं कारणं “तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम” इति भारतोक्तेः । यद्वा ‘अव्यक्तोयमचिंत्योयम्’ इत्याद्युक्तेः । स्वयं भगवान्मूलं यस्य तत्तथा । वल्शशब्दस्य स्कंधवाचकत्वे श्रुतिं प्रमाणयति “शतवल्शोनं तस्कंधो विरोहो वृक्षः’

चराचरौको भगवन् महीध्रमहींद्रबंधुं सलिलोपगूढम् ॥ किरीटसाहस्रहिरण्यशृंगमाविर्भवत्कौस्तुभरत्नगर्भम् ॥ ३० ॥ निवीतमाम्नायमधुव्रतश्रिया स्वकीर्तिमय्या वनमालया हरिम्॥सूर्येंदुवाय्वग्न्यगमं त्रिधामभिः परिक्रमत् प्राधनिकैर्दुरासदम्॥ ३१॥तर्ह्येव तन्नाभिसरःसरोजमात्मानमंभः श्वसनं वियच्च॥ददर्श देवो जगतो विधाता नातः परं लोकविसर्गदृष्टिः ॥ ३२ ॥

मण्युत्तमास्तैः पर्यस्ता व्याप्ता दोर्दंडा एव सहस्रमनंताः शाखा यस्य। चंदनवृक्षोऽपि केयूरादितुल्यैः फलपुष्पादिभिर्व्याप्तशाखो भवति। अव्यक्तं प्रधानं मूलमधो भागो यस्य। यद्वा। अव्यक्तं ब्रह्म मूलं यस्य ब्रह्माभिव्यक्तिरूपत्वात् वृक्षस्यापि मूलं न व्यक्तम्। भुवनात्मकमंघ्रिपेंद्रम्। अहींद्रस्यानंतस्य भोगैः फणैर्देहावयवैर्वाऽधिवीताः संवेष्टिताः स्पृष्टा वल्शाः स्कंधा यस्य। 'वनस्पते शतवल्शो विरोह' इति श्रुतेः। सोऽपि सर्पैर्वेष्टितो भवति ॥ २९ ॥ प्रेक्षां क्षिपंतमित्यत्रैव पर्वतरूपेण निरूपितमपि विशेषणांतरैः पुन र्निरूपयति। भगवानेव महीध्रस्तम्। चराचराणामोकः स्थानं सोऽपि तथा अहींद्रस्य बंधुं सोप्यहींद्राणां बंधुः।सलिलेनोपगूढमावृतं पर्वतोऽपि मैनाकादिस्तथा। किरीटसाहस्रमेव हिरण्यशृंगाणि यस्य सोऽपि मेर्वादिस्तथा यथा। पर्वतस्य गर्भे क्वचिद्रत्नमाविर्भवति तथाविर्भवत्स्पष्टं दृश्यमानं कौस्तुभरत्नं गर्भे मूर्तिमध्ये यस्य तम् ॥ ३० ॥ किंच। वनमालया निवीतं कंठलंबिन्या व्याप्तम्। आम्नाया वेदा एव मधुव्रतास्तैः श्रीर्यस्यास्तया। हरिमिति पर्वतादिरूपमपश्यत् हरिरसाविति ज्ञातवानित्यर्थः। सूर्यादिभिरगममगम्यं स्वव्यापारैराकलयितुमशक्यमित्यर्थः। किंच। त्रिष्वपि लोकेषु धाम स्फूर्तिर्येषां ते रक्षणार्थं परिक्रमद्भिः परितो धावद्भिः प्राधनिकैः प्रधनं संग्रामस्तत्प्रयोजनैः सुदर्शनादिभिर्हेतुभूतैर्दुरासदं दुष्प्रापम् ॥ ३१ ॥ यदैव हरिमपश्यत्तर्ह्येव तदैव लोकविसर्गदृष्टिः संस्तस्य नाभिसरसि सरोजं श्वसनं प्रलयवायुं वियदाकाशं च ददर्श ॥ ३२ ॥

इति श्रुतिपदार्थः। सोऽपि चंदनवृक्षोपि। 'भोगिवेष्टनमार्गेषु' इति महाकव्युक्तेः ॥ २९ ॥ सिंहावलोकनन्यायेन पुनराह—प्रेक्षामित्यादिना सोपि पर्वतोपि तथा चराचरवासस्थानम्। सोऽपि पर्वतोपि। तथा समुद्रजलगुप्तः सोपि मेर्वादिरादिना कैलासग्रहः तथा स्वर्णादिशृंगवान् तथा पर्वतवत् ॥ ३० ॥ पुनः पर्वतपार्थक्येन वर्णयति। किं चेति। 'निवीतं कंठलंबितम्' इत्यमरः। आम्नायंतेऽभीक्ष्णं वर्ण्यंते धर्मादयो यत्र यद्वा। आम्नायंतेऽभ्यस्यंते कल्याणार्थिभिरनिशमित्याम्नायाः। इत्यर्थ इति। यथा मणिप्रभायां मणिबुद्ध्या यावन्मणिं लभते तथा विसंवादिभ्रमन्यायेन पर्वतबुद्ध्यापि हरिं पश्यन्हरिमेव लब्धयवानिति भावः ॥ "दीपप्रभामणिभ्रांतिर्विसंवादिभ्रमस्मृतः। मणिप्रभा मणिभ्रांतिः संवादिभ्रम उच्यते" ॥ इति विद्यारण्योक्तेः। इत्यर्थ इति।"नतद्भासयते सूर्यो न चंद्रो न च पावकः" इति स्मृतेः। "न तत्र सूर्यो भाति" इत्यादिश्रुतेश्च। भक्तिं विना प्राप्तुमशक्यत्वमाह किं चेति। रक्षणार्थमभक्तजनासुरादीनां तत्रागमननिषेधार्थमिति सर्वरक्षकस्य "स्ववीर्यगुप्ताहि मनोः प्रसूतिः" इतिन्यायेन रक्षकांतरासंभवात् ॥ ३१ ॥ जलादिभूतत्रयमात्मानं सरोजं चेति पद्म

सकर्मबीजं रजसोपरक्तः प्रजाः सिसृक्षन्नियदेव दृष्ट्वा ॥ अस्तौद्विसर्गाभिमुखस्तमीड्यमव्यक्तवर्त्मन्यभिवेशितात्मा ॥ ३३॥ इति श्रीभागवते महापु
राणे तृतीयस्कंधे अष्टमोऽध्यायः ॥ ८ ॥ ब्रह्मोवाच ॥ ज्ञातोऽसि मेऽद्य सुचिरान्ननु देहभाजां न ज्ञायते भगवतो गतिरित्यवद्यम् ॥ नान्यत्त्वदस्ति
भगवन्नपि तन्न शुद्धं मायागुणव्यतिकराद्यदुरुर्विभासि ॥ १ ॥ रूपं यदेतदवबोधरसोदयेन शश्वन्निवृत्ततमसः सदनुग्रहाय ॥ आदौ गृहीतमव
तारशतैकबीजं यन्नाभिपद्मभवनादहमाविरासम् ॥ २ ॥ नातः परं परम यद्भवतः स्वरूपमानंदमात्रमविकल्पमविद्धवर्चः ॥ पश्यामि विश्वसृजमे
कमविश्वमात्मन् भूतेंद्रियात्मकमदस्त उपाश्रितोऽस्मि ॥ ३ ॥

कर्मबीजं लोकसृष्टेः कारणम् । रजसोपरक्तो रजोगुणयुक्तः अतः प्रजाः स्रष्टुमिच्छन्नियदेव नाभिसरोजादिपंचकमेव विसर्गेऽप्यभिमुखो दत्तचित्तः स्तुत्यंतं भगवंतमस्तौत् । कथंभूतः अव्यक्तवर्त्मनि भगवति निवेशितचित्तः ॥ ३३ ॥ इति तृतीये टीकायामष्टमोऽध्यायः ॥ ८ ॥ नवमे तपसा तुष्टं दृष्ट्वा नारायणं त्वजः ॥ अस्तौदेकार्णवे सीदँल्लोकसर्गचिकीर्षया ॥ १ ॥ भगवज्ज्ञानेनात्मनः कृतार्थतामाविष्कुर्वन्नज्ञांश्च शोचन्नाह । ज्ञातोऽसीति । सुचिराद्बहुकालोपासनेनाद्य मे मया ज्ञातोऽसि । नन्वहो देहभाजामेतदवद्यं दोषः । किं तत् । यद्भगवतस्तव गतिस्तत्त्वं न ज्ञायत इति । यतस्त्वमेव ज्ञातुं योग्यः सत्यत्वान्नान्यदसत्यत्वादित्याह । त्वत्त्वत्तोऽन्यन्नास्ति यद्यप्यस्तीति प्रतिभाति तदपि शुद्धं सत्त्वं न भवति । कथमसतः प्रतीतिस्तत्राह । यद्यतो मायागुणक्षोभात्त्वमेवोरुर्बहुरूपो विभासि ॥ १ ॥ ननु त्वमपि सम्यक् न जानासि यत्त्वया दृष्टं रूपमेतदपि गुणात्मकमेव निर्गुणं ब्रह्म वै तु सत्यं तत्राह । रूपमिति द्वाभ्याम् । अवबोधरसोदयेन चिच्छक्त्याविर्भावेन शश्वत्सदा निवृत्तं तमो यस्मात्तस्य तव यदेतद्रूपं त्वयैव स्वातंत्र्येण सतामुपासकानामनुग्रहाय गृहीतमाविष्कृतमवतारशतस्य शुद्धसत्त्वात्मकस्य यदेकं बीजं मूलं तत्प्रदर्शनार्थं गुणावतारबीजत्वं दर्शयति । यन्नाभीति ॥ २ ॥ हे परम अविद्धवर्चोऽनावृतप्रकाशं अतोऽविकल्पं निर्भेदम् अत एवानंदमात्रम् एवंभूतं यद्भवतः स्वरूपं तदतो रूपात्परं भिन्नं न पश्यामि किंत्विदमेव तत्।अतःकारणात्ते तवादः इदं रूपमुपाश्रितोऽस्मि योग्यत्वादपीत्याह । एकमुपास्येषु मुख्यं यतो विश्वसृजं विश्वं सृजतीत्यत एवाविश्वं विश्वस्मादन्यत् । किंच । भूतेंद्रियात्मकं भूतानामिंद्रियाणां चात्मानं कारणम्

कमेव ददर्श न पृथिव्यादीत्यर्थः ॥ ३२ ॥ स ब्रह्मा अतो रजोगुणोपयुक्तत्वात् दत्तचित्तः कथमहं विसर्गं कुर्यामिति भावयन् प्रभुमेव शरणं व्रजामीति विसर्गाभिनिवेशं परित्यज्य भगवन्तमेवास्तौदित्यर्थः ॥ ३३ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धेऽष्टमोऽध्यायः ॥ ८ ॥ सीदन्सृष्टिनिर्माणशक्त्यलाभेनाकुलीभवन् ॥ ( १ ) ॥ तदवद्यं किम् बहुरूपो विभासीति 'न हि सत्यस्य नानात्वम्' इत्युक्तेः । 'नानात्वभ्रम आत्मन्' इत्युक्तेश्च ॥ १ ॥ अत्राक्षिपति—नन्विति ॥ २ ॥ अतोऽनावृतप्रकाशत्वात् । अत एव निर्भेदत्वादेव 'भेदो दुःखस्य मूलं हि' इति वचनात् । एवंभूतमनावृतप्रकाशाभेदानंदमात्रं यत्स्वरूपम् । अतोऽस्माद्रूपात् । इदमेवास्मज्ज्ञातमेव तत्सच्चिदानंदरूपम् । यतो हेतोरिदं मज्ज्ञातमेव तत्—योग्यत्वाद्ध्यातुमर्हत्वादप्येतद्रूपमेवाहमुपाश्रितोस्मीति यतो हेतोर्विश्वस्रष्टा हि घटात्कुलालवद्भिन्न एव भवतीत्याह—अत एवेति विश्वसृक्त्वादेव न केवलं विश्वसृगेव किं तु विश्वसृजामवांतरकारणानामपि कारणमित्याह—किं चेति । इत्यर्थ इति ब्रह्मण एव तव सर्वकारणत्वं न तु भूतादीनामिति भावः । मा परो यस्मात्स परमः सर्वावधिभूतोसीत्याह परमेति ॥३॥

तद्वा इदं भुवनमंगल मंगलाय ध्याने स्म नो दर्शितं त उपासकानाम् ॥ तस्मै नमो भगवतेऽनुविधेम तुभ्यं योऽनादृतो नरकभाग्भिरसत्प्रसंगैः ॥ ४ ॥ ये तु त्वदीयचरणांबुजकोशगंधं जिघ्रंति कर्णविवरैः श्रुतिवातनीतम् ॥ भक्त्या गृहीतचरणः परया च तेषां नापैषि नाथ हृदयांबुरुहात्स्वपुंसाम् ॥ ५ ॥ तावद्भयं द्रविणगेहसुहृन्निमित्तं शोकः स्पृहा परिभवो विपुलश्च लोभः ॥ तावन्ममेत्यसदवग्रह आर्तिमूलं यावन्न तेंघ्रिमभयं प्रवृणीत लोकः ॥ ६ ॥ दैवेन ते हतधियो भवतः प्रसंगात्सर्वाशुभोपशमनाद्विमुखेंद्रिया ये ॥ कुर्वंति कामसुखलेशलवाय दीना लोभाभिभूतमनसोऽकुशलानि शश्वत् ॥ ७ ॥

मित्यर्थः ॥ ३ ॥ नन्वेवमपि सोपाधिकमेतदर्वाचीनमेवेत्याशंक्याह । तद्वै तदेवेदं हे भुवनमंगल यतस्ते त्वया नोऽस्माकमुपासकानां मंगलाय ध्याने दर्शितम् । न ह्यव्यक्तवर्त्माभिनिवेशितचित्तानामस्माकं सोपाधिकदर्शनं युक्तमिति भावः । अतस्तुभ्यं नमोऽनुविधेमानुवृत्त्या करवाम । तर्हि किमिति केचिन्मां नाद्रियंते तत्राह । योऽनादृत इति । असत्प्रसंगैर्निरीश्वरकुतर्कनिष्ठैः ॥ ४ ॥ आदरेण तु त्वां भजंतः कृतार्था इत्याह । ये त्विति । श्रुतिर्वेदः स एव वातस्तेन नीतं प्रापितं नापैषि नापयासि ये त्वत्कथाश्रवणमत्यादरेण कुर्वंति तेषां हृदि नित्यं प्रकाशसे इत्यर्थः ॥ ५ ॥ ततः किमत आह । तावदिति । द्रविणादौ विद्यमाने भयं गते शोकः पुनश्च स्पृहा ततः परिभवस्तथाऽपि विपुलो लोभस्तृष्णा पुनः कथंचित्प्राप्ते ममेत्यसदाग्रहः। आर्तिमूलं भयशोकादेः कारणं न प्रवृणीत नाश्रयेत् । त्वत्पादाश्रयमात्रेण भयादिनिवृत्तिः किंपुनस्त्वत्प्रकाशे सतीति भावः ॥ ६ ॥ ये निष्कामा अपि संतस्त्वां नाद्रियंते ते नरकभाज इत्युक्तं ये तु त्वत्कथाश्रवणादिविमुखाः संतः काम्यकर्मपरास्तेऽतिमंदा इत्याह । दैवेन ते हतधियो

पुनराक्षिपति–नन्विति । कारणकारणत्वेपि कारणत्वोपाधिना पुनरप्यर्वाचीनमेव शुद्धस्वरूपं योगिजनोपास्यं तु परमस्तीति चेदाह–तन्निरूपाधिस्वरूपमेतदेव लोकमंगलार्थं प्रकटितमित्याह–हेभुवनमंगलेति । इति भाव इति "ये यथा मां प्रपद्यंते तांस्तथैव भजाम्यहम्" इति गीतोक्तेः । "यद्यद्धिया त उरुगाय विभावयंति तत्तद्वपुः प्रणयसे सदनुग्रहाय" इति वक्ष्यमाणत्वाच्चेत्याशयः यतो भक्तमंगलार्थमाविर्भूतोसि अतो हेतोः यद्यहमीदृशस्तर्हि सर्वे मां किमिति न भजंतीत्याक्षेपपूर्वकं समाधत्ते तर्हीत्यादिना निरीश्वरकुतर्का निरीश्वरसांख्यमीमांसकास्तेषु निष्ठा स्थितिर्येषां तैः ॥ ४ ॥ श्रुतिः श्रवणं वा त्वदीयचरणांबुजकोशस्य क्षीराब्ध्यादिस्थितमूलरूपाख्यपद्ममुकुलस्य गंधं हृदि व्यक्तरूपं जिघ्रंति अपरोक्षीकृत्यानुभवंति "हृदि व्यक्तं तु यद्रूपं हरेर्गंधः स उच्यते । उत्तमानां हि पादेन सर्वरूपं च कथ्यते" इति तीर्थोक्तेः । चरणः पादपर्यायः । अयमर्थः सम्यक् प्रतीयतेऽन्यथाकर्णानां घ्राणनासंभवेन विषयविषयिसंबंधाभावाद्विरोधः स्यात् । यद्वा । गंधशब्दस्य यशसि जिघ्रंतीत्यस्य शृण्वंतीत्यस्यार्थे लक्षणा कार्य्येति आदरेण शृण्वंति यथा कर्णच्छिद्रैर्द्वारभूतैः श्रुतिवातेन प्रापितं गंधमित्यर्थः । इत्यर्थ इति कथाश्रवणसमोन्यः प्रकारो भगवज्ज्ञानस्य नास्तीति भावः ॥ ५ ॥ ततो नित्यं हृदि प्रकाशात् । किं स्यादतोत्र भयं राजचौरव्यसनादितः स्पृहा पुनर्मे धनं कथं स्यादितीच्छा । ततः स्पृहातः 'याचञानादप्रतिलब्धमानम् 'इत्याद्युक्तेः । तथापि सत्यपि पराभवे असदाग्रहो वृथा हठः मम त्वस्यैव भयशोकादेः कारणत्वादित्यर्थः । आर्त्तिमूलमित्याविष्टलिंगत्वात् । षंढत्वम् । इति भावः इति। "तावद्रागादयः स्तेनास्तावत्कारागृहं गृहम् । तावन्मोहोंघ्रिनिगडो यावत्कृष्ण न ते जनः" इति लोकेशोक्तेरित्याशयः ॥ ६ ॥ सकामनिष्कामजनानां भवत्सेवनमेव क्षेमहेतुरित्यभिप्रायेण स्वामिचरणा वदंति ये निष्कामा इति । दैवेन जन्मांतर

क्षुत्तृट्त्रिधातुभिरिमा मुहुरर्द्यमानाः शीतोष्णवातवर्षैरितरेतराच्च ॥ कामाग्निनाऽच्युतरुषा च सुदुर्भरेण संपश्यतो मन उरुक्रम सीदते मे ॥ ॥ ८ ॥ यावत्पृथक्त्वमिदमात्मन इंद्रियार्थमायाबलं भगवतो जन ईश पश्येत् ॥ तावन्न संसृतिरसौ प्रतिसंक्रमेत व्यर्थाऽपि दुःखनिवहं वहति क्रियार्था ॥ ९ ॥ अह्न्यापृतार्तकरणा निशि निःशयाना नानामनोरथधिया क्षणभग्ननिद्राः ॥ दैवाहतार्थरचना ऋषयोऽपि देव युष्मत्प्रसंगविमुखा इह संसरंति ॥ १० ॥ त्वं भावयोगपरिभासितहृत्सरोज आस्से श्रुतेक्षितपथो ननु नाथ पुंसाम् ॥ यद्यद्धिया त उरुगाय विभावयंति तत्तद्वपुः प्रणयसे सदनुग्रहाय ॥ ११ ॥

नष्टमतयः प्रसंगाच्छ्रवणकीर्तनादिरूपात्सर्वदुःखनिवर्तकाद्विमुखानींद्रियाणि येषाम् । अकुशलान्यक्षेमकराणि काम्यकर्माणि ॥ ७ ॥ अकुशलत्वमेव दर्शयति । क्षुच्च तृट् च त्रिधातवश्च वातपित्तश्लेष्माणस्तैः इमाः प्रजाः सुदुर्भरेण दुःसहेन कामाग्निनाऽच्युतया रुषाऽविच्छिन्नक्रोधेन च पीड्यमानाः संपश्यतो मे मनः सीदति ॥ ८ ॥ नन्वेवंभूतायाः संसृतेरपरमार्थत्वात्किमर्थं विषादः क्रियते तत्राह । यावदिति । आत्मन इदं पृथक्त्वं देहादिभावं भगवतस्तवेंद्रियार्थरूपा या माया तया बलमाधिक्यं यस्य तत् । न प्रतिसंक्रमेत् नोपरमेत् । दुःखसमूहं प्रापयतीति क्रियाणामर्थः फलं यस्यां सा । त्वदिदमिति पाठे इदं देहादि त्वत्त्वत्तः पृथक् पश्येद्यावत्तावदसौ व्यर्थापि नोपरमेत् ॥ ९ ॥ भवत्वेवमविवेकिनां विवेकिनस्तु मुक्ता एवेति किं तेषां भक्त्या कृत्यमत आह । अह्नि आपृतानि व्यापृतानि च तानि आर्तानि क्लिष्टानि करणानींद्रियाणि येषां रात्रौ विषयसुखलवोऽपि नास्ति यतो निशि निःशयानाः स्वप्नदर्शनेन च क्षणेक्षणे भग्ननिद्रा दैवेनाहताः सर्वतः प्रतिहता अर्थरचना अर्थार्थोद्यमा येषाम् ॥ १० ॥ तदेवमभक्तानां संसारान्निवृत्तिमुक्त्वा भक्तानां तन्निवृत्तिमाह । त्वमिति भक्तियोगेन शोधिते हृत्सरोजे आस्से तिष्ठसि । श्रुतेन श्रवणेनेक्षितः पंथा यस्य । किंच । श्रवणं

संपादिताकुशलकर्मणा अक्षेमकराणि चौर्यव्यभिचारादीनि । लोभेन जैह्वशैश्नादिभोगाभिलाषेणाभिभूतं शास्त्रीयमार्गतश्च्यावितं मनो येषां ते तथा ॥ ७ ॥ कामक्रोधाभ्यां क्षुत्तृट्त्रिधातुभिराध्यात्मिकैः । शीतोष्णमवातवर्षैराधिदैविकैः । इतरेतरादन्योन्यं स्त्रीपुत्रादित इत्याधिभौतिकैः संपश्यत इति कल्पांतरानुभूतापेक्षं तदा प्रजाया अभावादिति ज्ञेयम् । सीदति अहो कथमेषां निस्तारो भवेदिति खिद्यत इत्यर्थः ॥ ८ ॥ आक्षिपति—नन्विति । एवंभूतायास्तापत्रयपीडनादिरूपायाः आत्मनो जीवस्य इंद्रियार्थरूपा विषयरूपा "गोचरा इंद्रियार्थाश्च" इत्यमरः । क्रियाणां कर्मणाम् ॥ ९ ॥ प्रकारांतरेणाक्षिपति—भवत्विति । कृत्यं करणीयं संदर्भस्तु स्वभावाद्युष्मद्भजनविमुखाः संसरंति किं बहुना तत्तन्मार्गसिद्धा मुनयोऽपि युष्मत्प्रसंगविमुखाश्चेदिह जगति तद्वदेव संसरंति अथवा मुनयोऽपि त्वद्विमुखाश्चेत्तर्हि संसरंत्येव किं भूता 'अह्न्यापृते' इत्यादि "आरुह्य कृच्छ्रेण परं पदं ततः पतंत्यतो नादृतयुष्मदंघ्रयः" इत्युक्तेः । अत एव श्रीयमुनाभ्रात्राप्युक्तं "धर्मं तु साक्षाद्भगवत्प्रणीतं न वै विदुर्ऋषयो नापि देवाः । न सिद्धमुख्या असुरा मनुष्याः कुतो नु विद्याधरचारणाद्याः ॥ स्वयंभूर्नारदः शंभुः कुमारः कपिलो मनुः । प्रह्लादो जनको भीष्मो बलिर्वैयासकिर्वयम् ॥ द्वादशैते विजानीमो धर्मं भागवतं भटाः । गुह्यं विशुद्धं दुर्बोधं यं ज्ञात्वाऽमृतमश्नुते । एतावानेवलोकेस्मिन्पुंसां धर्मः परः स्मृतः" इत्यादि एते धर्मप्रवर्तका विजानीम एव न तु स्वस्मृत्यादिषु प्रायेणोपदिशाम इत्यर्थः । यतो गुह्यमप्रकाश्यं दुर्बोधमन्यैस्तथा ग्रहीतुमशक्यं च गुह्यत्वे हेतुः 'यं ज्ञात्वाऽमृतमश्नुते' इति अत एव वक्ष्यते च "प्रायेण वेद तदिदं न महाजनोऽयम्" इत्यादि महाजनो द्वादशभ्यस्तदनुगृहीतसंप्रदायिभ्योऽन्यो महागुणयुक्तोपीत्यर्थः । तस्मात्साधूक्तमह्न्यापृतार्तेत्यादि ॥ १० ॥ भक्तियोगोऽत्र प्रेमा परिभावितत्वं योग्य

नातिप्रसीदति तथोपचितोपचारैराराधितः सुरगणैर्हृदि बद्धकामैः ॥ यत्सर्वभूतदययाऽसदलभ्ययैको नानाजनेष्ववहितः सुहृदंतरात्मा ॥ १२ ॥
पुंसामतो विविधकर्मभिरध्वराद्यैर्दानेन चोग्रतपसा व्रतचर्यया च ॥ आराधनं भगवतस्तव सत्क्रियाऽर्थो धर्मोऽर्पितः कर्हिचिद्ध्रियते न यत्र ॥१३॥
शश्वत्स्वरूपमहसैव निपीतभेदमोहाय बोधधिषणाय नमः परस्मै ॥ विश्वोद्भवस्थितिलयेषु निमित्तलीलारासाय ते नम इदं चकृमेश्वराय ॥ १४ ॥

विनापि त्वद्भक्ता मनसा यद्यत्तव वपू रूपं स्वेच्छया ध्यायंति तत्तत्प्रणयसे प्रकटयसि । सतां भक्तानामनुग्रहाय ॥ ११ ॥ भक्तानां च निष्कामानां त्वमतिसुलभो नेतरेषा मित्याह । नेति । उपचितैरूर्जितैरुपचारैः पुष्पोपहारादिभिः । यद्यथा असतामभक्तानामलभ्यया सर्वभूतदयया । प्रसादे हेतुः एक इत्यादि ॥ १२ ॥ यतः सकामानां भवान्नातिप्रसीदत्यतः कामप्राप्तिः क्रियाणामुत्तमं फलं न भवति किंतु त्वत्प्रीणनमेव कामसंयोगस्त्ववांतरफलेन प्ररोचनार्थमित्याह । पुंसामिति । भगवतस्तवाराधनमेव संश्चासौ क्रियार्थश्च श्रेष्ठं क्रियाफलम् । श्रेष्ठत्वे हेतुः । यत्र त्वय्यर्पितो धर्मो न कदाचिद् ध्रियते न नश्यति कामार्थस्तु धर्मः कामं दत्त्वा नश्यतीत्यर्थः ॥ १३ ॥ अत स्त्वामेव वयं नता इत्याह । शश्वत्सर्वदा स्वरूपचैतन्येनैव निरस्तभेदभ्रमाय पुनश्च बोध एव धिषणा विद्याशक्तिर्यस्य यद्वा बोध एव धिषणमाश्रयः अत एव परस्मै । अत्र

तामापादितत्वं श्रुतेन भगवत्प्रतिपादकवैदिकशास्त्रश्रवणेन तर्हि मद्रूपविशेषाविर्भावे किं कारणं तत्राह—धिया श्रुतलब्धेन बुद्धिविशेषेण नत्वीश्वरोहं कथमेवं तेषां वशः स्यां तत्राह—सदनुग्रहायेति । सत्सु तेष्वनुग्रह एव तव वशत्वे कारणं नान्यदिति भावः । ननु श्रुतमात्रेण तेषां मम बहूनां रूपाणां कथं स्यात्तदभावे च कथमेकतरनिष्ठा स्यात्तत्राह—हे उरुगायेति । वेदेन त्वमुरुधैव गीयस इति स्वस्वमत्यनुसारेण तेषां सा स्यादिति भावः । भावयोगेन परिभावित सांचिंतितेति संबुद्धिर्वा ॥ ११ ॥ भवानिति शेषः सकामानां स्वार्थपरत्वात्सर्वभूतदया तेषां नास्ति निष्कामानां परार्थपरत्वात्सर्वभूतदया स्वाभाविक्येवातस्तत्र तवातिप्रसादो भवति अतिप्रसादत्वे हेतुः एक एव भवान् नानाजनेष्ववहितः कृतावधानः यतः सुहृत् मद्भक्तकृपया भक्तिप्राप्त्या एते विस्तरंत्विति तेषां हितैषी नन्वेवं चेदहमेव स्वयं कृपया तान् कथं नोद्धरामीति चेदाह—अंतरात्मा त्वं स्वभक्ताय यशोदानार्थं जगदुद्धारिणीं स्वकृपाभाक्तिं तेषु निधाय सर्वत्रांतर्यामिस्वरूपेण स्वयमौदास्यमेवावलंबस इत्यर्थः । न चैवं सर्वमुक्तिप्रसंग इति न च वाच्यं सर्वभूतदययेत्यत्र छत्रिणो गच्छंतीतिवत्सर्वशब्दस्य प्राचुर्य्यमात्रार्थपरत्वेनाभिधानात् । भगवद्भक्तकृपाया अपि प्रायः खल्वसार्वत्रिकत्वादर्शनात् । यद्वा । भक्तेन सर्व भूतेष्वेव दयाकार्य्यैव तदपि न सर्वमुक्तिर्द्रष्टव्या न हि सर्वत्रैवोप्तान्यपि बीजान्यूषरक्षारादिभूमिष्वपि प्ररोहं तीति नारदादीनामपि दक्षादिषु कृपायाः फलवत्त्वादृष्टेः ॥ १२ ॥ भक्तौ यतो निष्कामाः श्रेष्ठा अतः केवलं भक्त्यशक्तावपि प्रधानीभूता लौकिकवैदिककर्मार्पणरूपापि भक्तिर्निष्कामैव कार्येत्याह—विविधकर्मभिर्लौकिकै वैदिकैरध्वराद्यैश्च त्वदार्पितैराराधनं "यत्करोषि यदश्नासि" इति भगवता शिक्षितमित्यर्थः । अत्र प्रधानीभूतायां भक्तौ लौकिकवैदिकनिखिलकर्मार्पणं गुणीभूतायां वैदिकस्यैव न तु लौकिकस्य केवलायां लौकिकस्य कथा श्रवणकीर्त्तनादेश्चार्पितस्यैव कारणमिति भेदो द्रष्टव्यः हरतेः कर्मकर्त्तरि प्रयोगो ह्रियत इति । इत्यर्थ इति विनाशिधर्मसेवने न किमपि सिध्यतीति भावः ॥ १३ ॥ यतस्त्वदार्पितधर्मो न ह्रियतेऽतो हेतोः स्वरूपचैतन्ये नैवागस्त्येनेव निपीतो भेदे मोहसमुद्रो जीवादिभिः सह तव भेदो न संभवतीति भ्रमो येनेति विश्वनाथगोस्वामिनौ तीर्थश्च स्वरूपज्ञानेनैव "तद्ब्रह्मावेदहं ब्रह्मास्मि" इति श्रुतेर्निपीतभेदमोहाय सम्यङ्निरस्तेशापूर्णतादिष ड्विधभेदमोहाय "ईशस्यापूर्णताज्ञानं विष्णोरन्यस्य चेशता । भेदस्तस्यावतारेषु जीवस्येशत्वमेव च ॥ तथा जीवत्वमांशस्य जडाभेदस्तयोरपि । भेदमोह इति प्रोक्तः स सदा न हरेः क्वचित् ॥ अन्येषां तत्प्रसादेन शनैर्याति सतामपि" इति तन्मतग्रंथोक्तेः । विद्याशक्तिर्बुद्धिः धिषणाशब्दस्य लिंगांतरेऽर्थांतरमाश्रित्याह यद्वेति । धिषणो जीव 'आधारे धिषणा धियि योषिति' इति कोशात् । अत एव बोधाश्रयत्वादेव अत्र परत्वे क्रीडाऽवलो

यस्यावतारगुणकर्मविडंबनानि नामानि येऽसुविगमे विवशा गृणंति ॥ तेनैकजन्मशमलं सहसैव हित्वा संयांत्यऽपावृतमृतं तमजं प्रपद्ये॥१५॥यो वा अहं च गिरिशश्च विभुः स्वयं च स्थित्युद्भवप्रलयहेतव आत्ममूलम्॥ भित्त्वा त्रिपाद्ववृध एक उरुप्ररोहस्तस्मैनमो भगवते भुवनद्रुमाय ॥१६॥ लोको विकर्मनिरतः कुशले प्रमत्तः कर्मण्ययं त्वदुदिते भवदर्चने स्वे ॥ यस्तावदस्य बलवानिह जीविताशां सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै ॥ १७ ॥

हेतुः । विश्वोद्भवादिनिमित्तं या माया तस्या लीला विलासस्तथा रासः क्रीडा यस्य ते तुभ्यमिदं नमो नमनं चकृम कृतवंतो वयम् ॥ १४ ॥ नामग्रहणमात्रतः कैवल्यप्रदत्वेनैश्वर्यं व्यंजयन्नमस्करोति । यस्येति । अवतारादीनां विडंबनमनुकरणमस्ति येषु तत्रावतारविडंबनानि देवकीनंदन इत्यादीनि गुणविडंबनानि सर्वज्ञो भक्तवत्सल इत्यादीनि कर्मविडंबनानि गोवर्धनोद्धरणः कंसारातिरित्यादीनि । असुविगमेऽपि विवशा अपि गृणंत्युच्चारयंति केवलं शमलं पापम् अपावृतं निरस्तावरणम् ऋतं ब्रह्म प्राप्नुवंति ॥ १५ ॥ तत्र गुणावतारकर्माणि दर्शयन्प्रणमति । यो वै एकस्त्रिपात्त्रयो ब्रह्मादयः पादाः स्कंधा यस्य प्रत्येकं च उरवः प्ररोहाः शाखोपशाखा मरीच्यादिमन्वादिरूपा यस्य तथाभूतः सन्ववृधे । तस्मै भुवनाकाराय द्रुमाय नमः । किं कृत्वा ववृधे आत्मा स्वयमेव मूलमधिष्ठानं यस्य तत्प्रधानं भित्त्वा गुणत्रयरूपेण विभज्य त्रिपात्त्वमेवाह । अहं ब्रह्मा गिरीशश्च स्वयं विभुर्विष्णुश्चेति स्थित्युद्भवप्रलयहेतवो ये वयं एवं त्रिपाद्भूत्वा यो ववृध इत्यर्थः ॥ १६ ॥ एवं गुणावतारकर्मविडंबनमुक्त्वा तस्यैव

कनद्वारा ज्ञेया । यद्वा निमित्तेति संबुद्धिः हे कारणरूप लीलया रासो गोपीजनसंगतो लास्यविशेषो यस्य तस्मै "परार्द्धांते सोऽबुध्यत गोपवेशो मे पुरस्तदाविर्बभूव" इति श्रुतेः । 'कामदुघांघ्रिपद्मं प्रदर्शयंतम्" इति पूर्वोक्तेश्च । सविशेषस्वरूपेष्वपि श्रीकृष्णस्यैव परमपूर्णत्वात्परमाश्रयत्वं ज्ञापितम् । प्राचीनपुण्यराशेरिदानीमपि भगवद्दर्शनं प्राप्तमिति सूचयितुं चकृमेति लिट्प्रयोगः ॥ १४ ॥ आदिना यशोनंदनादिग्रहः । द्वितीयादिना दीनबंध्वादिग्रहः । तृतीयादिना सेतुकारीत्यादिग्रहः । असुविगमे प्राणोत्क्रमणसमये एतेनोपास्योपासनागंधाभावेपि पंगुतुल्येभ्योऽपि स्वपददानात्त्वत्समकृपालुताऽन्यत्र नास्तीति ध्वनितम् यद्वा अवतारादिसदृशानि तत्तुल्यशक्तीनीति भावः । यद्वाऽवतारादीनां विडंबनं नटादिष्वनुकरणमपि यैस्तानि । यद्वा । अवतारादिविडंबनानि स्वभ्रातृपुत्रादिजीवविशेषवाचकत्वादवताराद्यनुकरणानीत्यर्थः । तत्र कृष्णोऽयं रामोऽयं नारायणोयमित्यादीन्यवतारविडंबनातिदयालुर्दीनबंधुर्दामोदर इत्यादीनि गुणविडंबनानि गोविंदो गिरिधरो मधुसूदन इत्यादीनि कर्मविडंबनानि अजामिलादय इव केवलमुच्चारयंति न तु ध्यायंति । ऋतं सच्चिदानंदं भगवंतमेव "आत्मतत्त्वविशुद्ध्यर्थं यदाह भगवानृतम् । दर्शयन्ब्रह्मणे रूपम्" इत्यत्र तथैव व्याख्यानात् ॥ १५ ॥ तत्राधुना गुणावतारा ब्रह्मादयः । इत्यर्थ इति । 'य एक एव रूपंरूपं प्रतिरूपो बभूव' इत्यादिश्रुतेर्बहुरूपो भूत्वा जगदाकारतां प्राप तस्मै नम इति भावः । अत्र विभुविष्णुः । स्वयं चेति । विष्णौ स्वयंपदप्रयोगाद्ब्रह्मगिरिशयोरिव विष्णोर्गुणनिबंधनः स्वतो भेदो नास्तीति द्योतितम् । यद्वा यऽहमादयः य एवात्मनः स्वस्यापि मूलं कारणं तथा य एव भित्त्वा स्वशक्तिकृतं भेदं प्राप्य त्रिपात् प्रथमं त्रिलोकरूपस्तत उरुप्ररोहश्चतुर्दशलोकरूपस्तस्मै भुवनाकाराय द्रुमाय सर्वव्यापिने नम इति विश्वरूपत्वमुक्तम् ॥ १६ ॥ तस्यैव गुणावतारधर्तुरेव तत्प्रसिद्धं विरुद्धकर्मभक्तिराहितकर्म यः कालरूपः यद्वा । 'स्वकर्मणा तमभ्यर्च्य' इत्युक्तेः । 'ज्ञानिनो ज्ञानयज्ञेन यजंति ज्ञानविग्रहम्' इत्युक्तेश्च कर्मज्ञानयोगाभ्यामपि

यस्माद्बिभेम्यहमपि द्विपरार्ध्यधिष्ण्यमध्यासितः सकललोकनमस्कृतं यत् ॥ तेपे तपो बहुसवोऽवरुरुत्समानस्तस्मै नमो भगवतेधिमखाय तुभ्यम् ॥ १८ ॥ तिर्यङ्मनुष्यविबुधादिषु जीवयोनिष्वात्मेच्छयाऽऽत्मकृतसेतुपरीप्सया यः॥ रेमे निरस्तरतिरप्यवरुद्धदेहस्तस्मै नमो भगवते पुरुषोत्तमाय ॥ १९ ॥

तत्कालाख्यं रूपं तत्कर्म च दर्शयन्प्रणमति । लोक इति द्वाभ्याम् । विकर्मनिरतो विरुद्धकर्मनिष्ठः । कुशले हिते स्वे आत्मीये त्वदुदिते: त्वयैव साक्षादुक्ते भदर्चनरूपे कर्मणि उक्तं हि गीतासु । "यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ॥ यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणम्" इति । तस्मिन् प्रमत्तो दत्तचित्तो यावद्वर्तते तावदस्य लोकस्य अनिमिषाय कालाय ॥ १७ ॥ आस्तां तावल्लोकस्य कथा यस्मात्कालाख्यात्त्वत्तो यद्द्विपरार्धावस्थायि धिष्ण्यं स्थानं तदारूढोऽपि बिभेमि भीतश्च संस्त्वामेवावरुरुत्समानः प्राप्तुमिच्छंस्तपस्तप्तवान् । कथंभूतः । बहुसवो बहवः सवा यागाः संवत्सरा वा यस्य बहून् यागान्कृत्वाऽपि बहून्संवत्सरान् वा तपस्तप्तवानित्यर्थः । अधिमखाय मखाधिष्ठात्रे ॥ १८ ॥ इदानीं तत्तत्कालभाविलीलावतारकर्माणि दर्शयन्नाह । तिर्यगादिषु स्वेच्छया स्वीकृतमूर्तिः सन् स्वकृतधर्ममर्यादापालनेच्छया रेमे वस्तुतः स्वानंदानुभवेनैव निरस्तविषयसुखोऽपि यो अत एव पुरुषोत्तमः तत्तदुपाधिधर्मासंस्पर्शात् । तदुक्तं गीतासु । "यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥ अतोऽस्मि लोके

तदर्चनमेव स्यादिति केचिद्व्याचक्षते तत्राह–त्वदुदिते त्वयैव साक्षान्मदर्चनामिदमेवेत्युक्तेः । 'ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये' इत्येकादशे वक्ष्यमाणत्वात् । 'पंचरात्रस्य कृत्स्नस्य वक्ता तु भगवान्स्वयम्' इति मोक्षधर्माच्च तदेवं त्वद्भक्तलोकेभ्योन्यत्रैव कालस्याधिकार इति द्योतितम् । अभक्तलोकस्य तु जीवितस्याप्याशां छिनत्ति किमुत भोगाशामित्यर्थः । कालाधिकारो निरर्थकायुःक्षपणरूपो वा ज्ञेयस्तदुक्तम् "आयुर्हरति वै पुंसामुद्यन्नस्तं च यन्नसौ । तस्यते यत्क्षणो नीत उत्तमश्लोकवार्तया " इति द्वितीयस्कंधे तीर्थस्तु अपराधमंतरेण जीविताशाछेदनमतीव साहसमिति न मन्तव्यमेतदभिप्रेत्याह–विकर्मेति । विहिताकरणादिनात्महत्यादिदोषापत्तेरतोऽधिकोपराधो नास्तीत्यतो न वैषम्यनैर्घृण्ये हरेरित्याह ॥ १७ ॥ "सवो यज्ञे च संधाने काले च परमात्मनि" इति निरुक्तिः । अत्र च कालभीतोहं तद्वशीकरणार्थं यज्ञैर्यजनेन कालो मे वशी भविष्यतीति प्रवृत्तोपि प्रत्युत कालेनैवाहं वशीकृतोऽतस्त्वच्छुद्धभक्तिं विना "त्वत्पादाब्जं प्राप्य यदृच्छयाद्य स्वस्थः शेते मृत्युरस्मादपैति" इत्युक्तेः । कालजयो नास्तीत्यद्य ज्ञात्वा शुद्धभक्तिमेवाहं करवाणीति ध्वनिः ॥ :१८ ॥ आदिनार्षादिग्रहः। विश्वनाथस्तु "पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः"इति स्वकृतमर्यादापालनाय स्वभक्तोपनीतस्रक्चंदनशय्याद्युपभोगेष्वात्मारामोपि रेमे।'नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना" इत्यात्मारामत्वेप्यपूर्णकाम इव रेम इति भावः । यद्वात्मकृतसेतोः स्वभक्तकृतमर्यादायाः पारि सर्वतो भावेनेप्सया प्राप्तीच्छया श्रीयशोदया दाम्नैवान्यैरपि भक्तैः प्रणयरसनयाऽवरुद्धदेहः । अतः सर्वोत्कर्षात् महत्स्रष्ट्राद्यंतर्यामिपुरुषेभ्योप्युत्तमायेति कृष्णावतार एव तात्पर्यम् । अत एव त्यक्तविषयसुखत्वादेव तत्पुरुषोत्तमत्त्वम् । श्लोकार्थस्तु "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोक्षर उच्यते" इत्यस्मात्पूर्वमुक्तम् । वाक्यमादायैव भवतीत्यतो द्वावेव विवृणोति । इमौ द्वौ पृथग्राशीकृतौ पुरुषौ पुरुषोपाधित्वेन पुरुषशब्दव्यपदेश्यौ लोके संसारे तौ कावित्याह–क्षरोऽक्षरश्च क्षरतीति क्षरो विनाशी कार्यराशिरेकः पुरुषः ।

योऽविद्ययानुपहतोऽपि दशार्धवृत्त्या निद्रामुवाह जठरीकृतलोकयात्रः ॥ अंतर्जले हि कशिपुस्पर्शा नुकूला भीमोर्मिमालिनि जनस्य सुखं विवृण्व न्॥२०॥यन्नाभिपद्मभवनादहमासमीड्य लोकत्रयोपकरणो यदनुग्रहेण॥तस्मै नमस्त उदरस्थभवाय योगनिद्राऽवसानविकसन्नलिनेक्षणाय॥२१॥ सोयं समस्तजगतां सुहृदेक आत्मा सत्त्वेन यन्मृडयते भगवान्भगेन॥ तेनैव मे दृशमनुस्पृशताद्यथाहं स्रक्ष्यामि पूर्ववदिदं प्रणतप्रियोऽसौ ॥२२॥

वेदे च प्रथितः पुरुषोत्तमः" इति॥ १९ ॥इदानीं दृश्यमानामेव मूर्तिं प्रणमति । योऽविद्ययेति द्वाभ्याम् । दशार्धाः पंच वृत्तयो यस्यास्तयाऽविद्यया निद्राहेतुभूतयाऽनभितो ऽपि योगनिद्रामुवाह तस्मै ते नम इत्युत्तरेणान्वयः । जठरीकृतोदरे प्रविलापिता लोकयात्रा लोकस्थितिर्येन अहिरेव कशिपुः शय्या तस्याः स्पर्शोऽनुकूलो यस्यास्तां निद्राम् । भीमानामूर्मीणां माला विद्यंते यस्मिन्नंतर्जले निद्राणस्याविवेकिनो जनस्य निद्रासुखमीदृगिति विवृण्वन् प्रदर्शयन्नुपहसन्नित्यर्थः । अतएवांतर्जलादिविशेषणानि । यद्वा । पूर्वकल्पे श्रांतस्य जनस्य विश्रामसुखं विवृण्वन् स्फारयन् । तदा तु परोपकाराय स्वयं दुःसहमपि दुःखं सोढव्यमिति द्योतनार्थं विशेषणानि ॥ २० ॥ किं च । यस्य नाभिपद्ममेव भवनं तस्मात् । लोकत्रयमुपकरणं यस्य यद्वा लोकत्रयस्य सृष्ट्यादिद्वारेणोपकरोतीति तथा तादृशोऽहं यदनुग्रहेणासम् । उदरे स्थितो भवः संसारप्र पंचो यस्य । योगनिद्रावसाने किंचिद्विकसन्नलिनवदीक्षणं यस्य ॥ २१ ॥ एवं स्तुत्वा प्रार्थयते । सोऽयमिति चतुर्भिः । यद्येन सत्त्वेन ज्ञानेन भगेनैश्वर्येण च मृडयते

न क्षरतीत्यक्षरो विनाशरहितः क्षराख्यस्य पुरुषस्योत्पत्तिर्बीजं भगवतो मायाशक्तिर्द्वितीयः पुरुषः । तौ पुरुषौ स्वयमेव व्याचष्टे भगवान् क्षरः सर्वाणि भूतानि समस्तं कार्यजातमित्यर्थः । कूटस्थः कूटो यथार्थवस्त्वाच्छा दनेनायथार्थवस्तुप्रकाशनं वंचनं मायेत्यर्थांतरं तेनावरणविक्षेपशक्तिद्वयरूपेण स्थितः । कूटस्थोऽभगवन्मायाशक्तिरूपः कारणोपाधिः संसारबीजत्वेनानंत्यादक्षर उच्यते । द्वितीयं श्रीस्वामिचरणलिखितं व्याचष्टे । यस्मा द्धेतोः । क्षरं कार्यत्वेन विनाशिनं मायामयं संसारवृक्षमश्वत्थाख्यमतीतोऽतिक्रांतोहं परमेश्वरः अक्षरादपि मायाख्यात्'अव्याकृता दक्षरात्परतः परः'इति पंचम्यंताक्षरपदेन श्रुत्या प्रतिपादितात्संसारवृक्षबजिभूतात्सर्वकारणादपि चोत्तम उत्कृष्टतमः।अतः क्षराक्षराभ्यां पुरुषोपाधिभ्यामभ्यासेन पुरुषपदव्यपदेश्याभ्यामुत्तमत्वादस्मि भवामि 'लोके वेदे च प्रख्यातः पुरुषोत्तमः' इति । 'स उत्तमः पुरुषः' इति श्रुतेर्वेदे उदाहृतः लोके च कविकाव्यादौ " हारिर्यथैकः पुरुषोत्तमो मतः" इत्यादि प्रसिद्धमेव ॥ १९ ॥ इत्यर्थ इति । अहो क्षणिकसुखार्थमयं लोको वृथैव शय्यादिसंपादने क्लिश्यति 'सत्यां क्षितौ किं कशिपोः प्रयासैः' इत्युक्तन्यायेनाहं यावत्कल्पमपि शयिष्ये तदपीत्थं न सामग्रीसंपादने प्रयत इत्युपहसन्निति भावः । क्वचित् 'उपदिशन्' इति पाठोऽस्ति स सुबोध एव अत एव निद्रासुखवशगत्वादेव प्राकृतजनोपि जलमध्यकोमलशय्याशायी सुखमाप्नोतीत्येतदर्थमंतर्जलादिविशे षणानीति तदा प्राकृतजनाभावे उपदेशादेरसंभवं मत्वाह–यद्वेति।दुस्सहत्वं च जलमध्ये तथापि प्रलये जनांतराभावे पुनरपि भयदोर्मिमति समुद्रे तदपि सर्वलोकभयंकरसर्पशय्यायां शयनं महादुःखमेव तदंगीकरणं त्वती वार्द्रचेतसं परमोपकारिणं विना न घटते । यद्वा । निद्रालुर्देशकालवस्तुभयान्न गणयति । यथाहं प्रलयकालेपि जनमात्रभयदे समुद्रेपि सर्पशय्यायामपि निर्भय एव शये सुखेन तथान्योपि निद्रालुरिति द्योतयन्निति भावः॥२०॥ अन्यदुत्कर्षमाह–किंचेति । यस्य भगवतः भवनमुत्पत्तिक्षेत्रम् । आसमभवम् । सर्वलोकस्रष्टुर्ममाप्युत्पादकत्वात्त्वमेव स्तुत्यर्हो नान्य इत्याह–ईडयेति । उपकरणमाज्ञाकारि कृतिर्वा सामग्री वा मद्बोधने लोकत्रयरचनयैव रचकत्वेन मद्बोधो भवति "उपकरणमस्त्युपकारे सामग्र्यां वशवर्तिनि रचने" इति निरुक्तिः । 'अप्रसिद्धेः प्रसिद्धिर्हि बलीयसी' इति न्यायमाश्रित्य सर्वप्रसिद्धार्थमाह–यद्वेति । यद्वा भवो रुद्रो ज्ञेयः । एतेन रुद्रस्य संहारकत्वं तु गौणमेव "निमित्तं परमीशस्य विश्वसर्गनिरोधयोः । हिरण्यगर्भश्शर्वश्च" इत्युक्तेः ॥ २१ ॥ योजयतु तज्ज्ञानं ददात्विति यावत् । 'स्पर्शनं प्रतिपादनम्' इत्यमरः । असौ मे प्रत्यक्षतां प्राप्तः ।

एष प्रपन्नवरदो रमयात्मशक्त्या यद्यत्करिष्यति गृहीतगुणावतारः ॥ तस्मिन्स्वविक्रममिदं सृजतोऽपि चेतो युंजीत कर्मशमलं च यथाविजह्याम् ॥ ॥२३॥ नाभिह्रदादिह सतोंऽभसि यस्य पुंसो विज्ञानशक्तिरहमासमनंतशक्तेः ॥ रूपं विचित्रमिदमस्य विवृण्वतो मे मा रीरिषीष्ट निगमस्य गिरां विसर्गः ॥२४॥ सोऽसावदभ्रकरुणो भगवान् विवृद्धप्रेमस्मितेन नयनांबुरुहं विजृंभन् ॥ उत्थाय विश्वविजयाय च नो विषादं माध्व्या गिराऽपनय तात्पुरुषः पुराणः ॥ २५ ॥ मैत्रेय उवाच ॥ स्वसंभवं निशाम्यैवं तपोविद्यासमाधिभिः ॥ यावन्मनोवचः स्तुत्वा विरराम स खिन्नवत् ॥ २६ ॥

सुखयति विश्वं दृशं प्रज्ञामनुस्पृशतायोजयतु यथाऽहं स्रष्टुं क्षमो भविष्यामि यतः प्रणतप्रियोऽसावहं च प्रणतो न चान्यः प्रार्थनीयोऽस्ति यतो भगवान् स एव समस्तजगतां सुहृत् यतोऽसावेकोऽनुस्यूत आत्मांतर्यामी ॥ २२ ॥ आत्मशक्त्या रमया सह यद्यत्कर्म करिष्यति स्वविक्रमं स्वस्य विष्णोरेव विक्रमः प्रभावो यस्मिंस्तादिदं विश्वं तदाज्ञया सृजतोऽपि मे चेतः स एव युंजीत प्रवर्तयतु कर्मासक्तिं तत्कृतं शमलं च वैषम्यादिपापं यथा विजह्यां त्यक्ष्यामि ॥ २३ ॥ अंभसि सतो यस्य नाभिह्रदादिहासम् । विज्ञाने शक्तिर्यस्य महत्तत्त्वात्मकस्य चित्तस्य तदभिमानी अस्य रूपमिदं विस्तारयतो मे निगमस्यावयवभूतानां गिरां विसर्ग उच्चारणं मारीरिषीष्ट "हलांतं ब्रह्मवर्चसम्" इति न्यायेन मा लुप्यतामित्यर्थः ॥ २४ ॥ विवृद्धप्रेम्णा स्मितेन विजृंभयन् विश्वस्य विजयायोद्भवाय । चकारादस्मदनुग्रहाय चोत्थाय ॥ २५ ॥ स्वस्य संभवो यस्मात्तम्

सुहृत्पालकः । आत्मा निरुपाधिप्रेमास्पदम् ॥ २२ ॥ गृहीता गुणा वात्सल्यादयस्तद्युक्ताः अवतारा येन सः । तत्कृतं कर्मासक्तिकृतम् । तस्मिन्कर्मणि धरोद्धारादिलक्षणे । एतेन सृष्टौ मे चेतो मा मज्जतु किन्तु तल्लीलायामेवेत्युक्तम् । तथा लीलास्मरणादिनैव पापहानिर्नान्यथेति च ॥ २३ ॥ किञ्च भगवतस्तवैश्वर्यसिंधोः कणमात्रेप्यस्मिन्मे प्रवेशो वेदाभ्यासप्रसादादेव 'वेदश्चक्षुस्तवेश्वर' इत्युक्तेः । संप्रति सृष्ट्यर्थं विविधव्यापारासक्तस्य मे वेदविस्मृतिर्मा भवतु । यद्वाऽस्पृश्याभक्ष्यापेयाग्राह्यादिवस्तुरूपमिदं सृजतो वेदोच्चारणाद्यधिकारो मा नश्यत्विति प्रार्थयते नाभीति । निगमस्य वेदराशेरवयवभूतानामृग्यजुःसामाथर्वरूपाणां विशेषेण सर्गोऽध्ययनाध्यापनादिसंबंधः । रिष् हिंसायामित्यस्य यङ्लुगंतात्कर्मकर्त्तरि छांदसं रीरिषीष्टेति । श्रीमद्भागवतस्य 'पुराणं ब्रह्मसंमितम्' इत्युक्तेर्वेदरूपत्वादत्र प्रायश्छांदसप्रयोगोल्लेख एव श्रीव्यासदेवेन कृत इति ध्येयम् । केचित्तु 'काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्' इत्युक्तेः । पाणिनीयशास्त्रान्निष्पन्नप्रयोगं नाद्रियंते । किञ्च छांदसत्वाश्रयणमपि सत्रान्नग्रहणवत्पाणिनीयशास्त्राज्ञानमूलकमेवेति चाहुस्तथा च रीरिषीष्टेति प्रयोगस्याप्यपाणिनीयत्वेनाप्रमाणमाहुस्ते चेत्थं बोध्याः " विरुद्धः पाणिनिमतात्प्रयोगोऽसंगतः स्फुटः ॥ तल्लोके न पुराणादौ यतस्ते वेदरूपिणः" इत्युक्तेः "यान्युज्जहार भगवान्व्यासो व्याकरणार्णवात् ।: तानि किंपदरत्नानि संति पाणिनिगोष्पदे" इति टीकांतरोक्तेश्च भगवता व्यासेन श्रीशिवप्रणीतव्याकरणार्णवग्रंथादुद्धृत्यैव बहवः प्रयोगा लिखिता न ते पाणिनिग्रंथे सिध्यंतीति । अत एवोक्तमभियुक्तैः 'समुद्रवद्व्याकरणं महेश्वरे तत्कुंभतोयोपमितं बृहस्पतौ । तद्भागलेशः सततं पुरंदरे कुशाग्रबिन्दुप्रमितं च पाणिनौ" इति । हलांतं हलग्रहणेन कर्षणमत्र हलशब्देनोक्तं तदेवांतोऽवसानो यस्य तद्धलांतं ब्रह्मवर्चसं ब्राह्मणत्वमित्यर्थ इति । 'ऊर्ध्ववस्त्रादधोवस्त्राद्धूमपानात्तथैव च ॥ षड्भिर्विप्राः प्रणश्यंति हालाहलहलाहलैः" इति वात्स्योक्तेरिति भावः । ऊर्ध्ववस्त्रं यच्छिरोदेशेन धार्यते । तत् अधोवस्त्रं यत्पादद्वारा धार्यते । तत् धूमपानं गुडादिमिश्रितताम्रकूटौषधिपत्रवाटिकोतोरीत्यादियंत्रोत्थधूमस्य मुखद्वारोदरे प्रवेशनम् । हाला मद्यं हलं लांगलम् । हलाहलं तु स्थावरविषविशेषो यद्भक्षणेन झीटत्येव शरीराननुसंधानपूर्वकं प्राणवियोगः स्यात्तदित्यर्थः । एतैर्विप्राः प्रणश्यंति ब्राह्मणत्वच्युताः संतः श्रौतस्मार्तकर्मानधिकारिणो दानायोग्याश्च संतीत्यर्थः ॥ २४ ॥ अदभ्रकरुणो दयासमुद्रः । विजृंभयन्नुन्मीलयन् प्रकाशयन्निति यावत् । विश्वविजयाय सृष्ट्यादिषु पराभवाभावाय । माध्व्या विश्वसृजेति निदेशमय्या अपनय तात् दूरीकरोतु । 'विषादश्चेतसो भंगः' इति हैमः ॥ २५ ॥ शारीरं शरीरसाध्यं कृच्छ्रादि । 'आचार्यचैत्यवपुषा स्वगतिं व्यनक्ति' इति रीत्याकस्मिकस्फूर्त्तिप्राप्ततन्मंत्रोपासना समाधिश्चित्तैकाग्र्येण ध्यानं "ज्ञानोपासनयो

अथाऽभिप्रेतमन्वीक्ष्य ब्रह्मणो मधुसूदनः ॥ विषण्णचेतसं तेन कल्पव्यतिकरांभसा ॥२७॥ लोकसंस्थानविज्ञान आत्मनः परिखिद्यत ॥ तमाहाऽगाधया वाचा कश्मलं शमयन्निव ॥ २८ ॥ श्रीभगवानुवाच ॥ मा वेदगर्भ गास्तंद्रीं सर्ग उद्यममावह ॥ तन्मयाऽऽपादितं ह्यग्रे यन्मां प्रार्थयते भवान् ॥ २९ ॥ भूयस्त्वं तप आतिष्ठ विद्यां चैवमदाश्रयाम् ॥ ताभ्यामंतर्हृदि ब्रह्मँल्लोकान्द्रक्ष्यस्यपावृतान् ॥ ३० ॥ तत आत्मनि लोके च भक्तियुक्तः समाहितः ॥ द्रष्टासि मां ततं ब्रह्मन्मयि लोकांस्त्वमात्मनः ॥ ३१॥ यदा तु सर्वभूतेषु दारुष्वग्निमिव स्थितम् ॥ प्रतिचक्षीत मां लोको जह्यात्तर्ह्येव कश्मलम् ॥ ३२ ॥

तपः शारीरं विद्या उपासना समाधिरैकाग्र्यं तैर्निशाम्य दृष्ट्वा यथाशक्ति स्तुत्वा श्रांतवद्विरराम ॥ २६ ॥ आत्मनो लोकसंस्थानविज्ञाने परिखिद्यतो ब्रह्मणोभिप्रेतमालक्ष्य तमाहेति द्वयोरन्वयः । तेन प्रलयोदकेन विषण्णचेतसम् ॥ २७ ॥ कश्मलं मोहम् । वेति समस्तमोहशमनं दर्शयति ॥ २८ ॥ हे वेदगर्भ तंद्रीं विषादकृतमालस्यं मा गाः । तेनैव मे दृशमनुस्पृशतादित्यादि यत्प्रार्थयते तदग्रे पूर्वमेव संपादितम् ॥ २९ ॥ तर्हि कथमहं न जानामीत्यत आह । भूय इति ॥ ३० ॥ भक्तियुक्तः समाहितश्च सन्नात्मनि स्वस्मिँल्लोके च मां ततं व्याप्य स्थितं द्रष्टाऽसि द्रक्ष्यसि आत्मनो जीवांश्च॥ ३१ ॥सर्वत्र मद्दर्शने मोहो निर्वतत इत्याह । यदा त्विति । प्रतिचक्षीत पश्येत॥ ३२॥

विद्या सरस्वत्यां धियि गिरि'' इति कोशात् ॥ २६ ॥ अथ ब्रह्मस्तुतिश्रवणानंतरम् । कल्पस्य व्यतिकरो ध्वंसो यत्र स कल्पव्यतिकरः प्रलयः । ''अथ व्यतिकरः :पुंसि व्यसनव्यतिसंगयोः'' इति मेदिनी । व्यसनं चेह ध्वंसः । यद्वा । 'संवर्त्तः प्रलयः कल्पः' इत्यमरः । तत्र व्यतिकर आगंतुकजलसंयोगस्तेन लोकानां देवतिर्यगादीनां संस्थानं समुचितस्वभावतया निर्माणं स्थावरादिपरिपाटी तद्विज्ञाने । इवात्र निश्चये तेन सर्वाज्ञानोपशमनं दर्शितम् ॥ २७ ॥ २८ ॥ यद्वा । तंद्रीमज्ञानं वेदगर्भेति सर्वज्ञस्य तवाज्ञानं नोचितमिति भावः । ननु सृष्टौ स्वसामर्थ्ये संशयितोस्मीति चेत्तत्राह—सर्ग इति । उद्यमो निष्फलो भविष्यतीति मा शंकिष्ठा इत्याह—तन्मयेति । पूर्वमेव तपेतिद्व्यक्षरद्विरावृत्त्या कथनेन संपादितम् । तत्प्रार्थनमपि न स्वाधीनं किं तु मत्प्रेरणयैवेतीममर्थं हिना सूचयति ॥ २९ ॥ अत्राक्षिपति तर्हीति । नन्वेतत्कालीनोद्यमेन किं स्याद्ये मया भूरादयो लोकाः सृज्यास्ते एव न दृश्यंत इति चेदाह—भूय इति । तपः प्राणायामादीति संदर्भः । चित्तैकाग्र्यमिति चक्रवर्त्ती आलोचनमिति तीर्थः । विद्यां निष्ठां भक्तिलक्षणाम् । ''तप आलोचनं प्रोक्तं विद्या निष्ठा प्रकीर्त्तिता'' इति तदुक्तेः । ततः किमत्राह—ताभ्यामिति । अंतर्हृदि हृदय एव बहिष्ठानपि लोकान्भूरादीन् तत्रस्थांश्च मनुष्यादीन् अपावृतान् जलावरणशून्यानेव द्रक्ष्यति । ततश्च मयैव यथास्थिततया दर्शयिष्यमाणांस्तान्स्वहृदय एव दृष्ट्वा आदर्शदर्शी लेखक इव सुखेनैव बहिः स्थितान्द्रक्ष्यतीति भावः ॥ ३० ॥ सृष्ट्यावेशवशत्वेपि त्वामहं न विस्मरेयमिति यत्प्रार्थितं तत्राह—तत इति । सृष्टिसमयेपि भक्तियुक्तः समाहितश्च आत्मनि स्वमनसि बहिर्लोके च मां द्रष्टासि तथा मयि लोकान्भूरादीन् आत्मनो जीवांश्च मृद्भक्षणदशायां यशोदेव द्रष्टासि । यद्वा । कृष्णावतारे वत्सवत्सपाद्याकारैर्व्यापकं मां मयि लोकान् ब्रह्मांडानि आत्मनश्चतुर्भुजमूर्त्तीः यद्वाऽऽत्मनः स्वान्बहून्प:रमेष्ठिनो द्रक्ष्यसीत्यर्थः ॥ ३१ ॥ कर्मशमलं च यथा विजह्यामिति यत्प्रार्थितं तत्खल्वेतादृश्यां दशायां संभवेदित्याह—

यदा रहितमात्मानं भूतेंद्रियगुणाशयैः ॥ स्वरूपेण मयोपेतं पश्यन्स्वाराज्यमृच्छति ॥ ३३ ॥ नानाकर्मवितानेन प्रजा बह्वीः सिसृक्षतः ॥ नात्माऽवसीदत्यस्मिंस्ते वर्षीयान्मदनुग्रहः ॥ ३४ ॥ ऋषिमाद्यं न बध्नाति पापीयांस्त्वां रजोगुणः ॥ यन्मनो मयि निर्बद्धं प्रजाः संसृजतोऽपि ते ॥ ३५ ॥ ज्ञातोऽहं भवता त्वद्य दुर्विज्ञेयोऽपि देहिनाम् ॥ यन्मां त्वं मन्यसेऽयुक्तं भूतेंद्रियगुणात्मभिः ॥ ३६ ॥ तुभ्यं मद्विचिकित्सायामात्मा मे दर्शितोऽबहिः ॥ नालेन सलिले मूलं पुष्करस्य विचिन्वतः ॥ ३७ ॥ यच्चकर्थांऽग मत्स्तोत्रं मत्कथाऽभ्युदयांकितम् ॥ यद्वा तपसि ते निष्ठा स एष मदनुग्रहः ॥ ३८ ॥

तदा च मिथ्याज्ञाननिवृत्तौ मुच्यत इत्याह । यदेति । भूतादिभिर्विरहितमात्मानं जीवं शुद्धत्वंपदार्थस्वरूपेण स्वस्यात्मभूतेन मया तत्पदार्थेनोपेतमेकीभूतं पश्यन्भवति तदा स्वाराज्यं मोक्षं प्राप्नोति ॥ ३३ ॥ यतो वर्षीयान् वृद्धतरः अत्यधिकोऽस्तीत्यर्थः ॥ ३४ ॥ अनुग्रहमेवाह । ऋषिमिति चतुर्भिः । यद्यतस्ते मनो मयि निर्बद्धम् ॥ ३५ ॥ यद्यस्माद्भूतेरिंद्रियैर्गुणैः सत्त्वादिभिरात्मनाऽहंकारेण चायुक्तं मन्यसे ॥ ३६ ॥ तुभ्यं तव नालेन मार्गेण पुष्करस्य मूलमधिष्ठानं सलिले विचिन्वता मयि विचिकित्सायां भवितव्यमस्याश्रयेण न च दृश्यते ततोऽस्ति नास्तीति संदेहे सत्यात्मा स्वरूपं मे मयाऽबहिरंतर्हृदि दर्शितः ॥ ३७ ॥ अंग हे ब्रह्मन् चकर्थ कृतवा

यदेति ॥ ३२ ॥ कस्यां दशायां त्वां प्राप्नुयादित्यपेक्षायामाह—यदात्मानं स्वं भूतादिभी रहितं स्वरूपेण न तु स्वीयं जीवात्मत्वं परित्यज्येत्यर्थः । मया सेव्येन परमेश्वरेण सह उप समीप एव इतं सेवार्थं प्राप्तं पश्यन्भवति तदा स्वेन स्वीयेन प्रभुणा सह राजत इति स्वराट् दासस्तस्य भावः कर्म वा दास्यमृच्छति प्राप्नोति । केचित्तु निर्विशेषसविशेषस्वरूपयोरेव स्तुतौ प्रक्रांतत्वात्तदुपासकानां ज्ञानिनां भक्तानां च तंत्रेणैव चरमदशा व्यंजकतया पद्यमिदं व्याचक्षते ज्ञानिपक्षस्तु स्वामिचरणैरेव व्याख्यातः । द्वितीयमाह—भक्तः शांतादिपञ्चविधोपि स्वरूपेण शांतश्चिद्रूपत्वेन । दास्ये दास्यरूपत्वेन सख्ये सख्येनैव । पित्रादिर्वात्सल्येन । प्रिया प्रेम्णैव उपेतं युक्तमात्मानं स्वं तथा मयापि पञ्चविधभावविषयेण सह साक्षात्परब्रह्मणा प्रभुणा । सख्या पुत्रादिना कांतेन चोपेतमिति यथायथमेवार्थः । स्वाराज्यं स्वेन चिद्घनाकारेण स्वीयेन प्रभुणा सख्या पुत्रादिना कांतेन च सह राजत इति तस्य भावमृच्छति प्राप्नोति ॥ ३३ ॥ इत्यर्थ इति । अतिशयार्थे वृद्धशब्दस्य वर्षादेशत्वेनायमर्थोऽस्तीति भावः । अस्मिन्सिसृक्षासमयेपि ते आत्मा चित्तं यन्नावसीदति मोहं न प्राप्नोति स एव वर्षीयान्मदनुग्रह इत्यन्वयः । विश्वनाथस्तु तदेवं ज्ञानभक्तिरसत्वमुपदिश्य त्वयि ममानुग्रहो न केवलमद्यतन एव अपि तु सार्वकालिक एवेत्याह—नानेति ॥ ३४ ॥ त्वं रजोगुणात्माभैषीरिति सांत्वयन्नाह—ऋषिमिति । द्वितीयस्कंधेपि "एतन्मतं समातिष्ठ परमेण समाधिना । भवान्कल्पविकल्पेषु न विमुह्यति कर्हिचित्" इति । अतो "न भारती मेंग मृषोपलक्ष्यते" इत्यादिकमपि स्वयमुक्तम् । यत्तत्तस्यान्यावेशः क्वचिच्छ्रूयते स खलु न स्थिरः स्यादिति तदाभास एव ज्ञेयः । यत्तु दशमस्कंधेस्य मोहः श्रूयते स तु न रजसा किन्तु भगवदैश्वर्यविशेषदर्शनेन तद्विशेषदर्शनेच्छया च 'अंभोजन्मजनिः' इत्यादेस्तत्रैव श्रवणात् । एवमेकादशे च हंसस्वरूपेण सनकादिषु ज्ञानकथनात्स्वमहिमप्रकाशनायैव ब्रह्मज्ञानावरणं ज्ञेयम् ॥ ३५ ॥ यद्यस्मात् मां साकारमपि भूतादिभिरयुक्तं भूतादिभ्यः पृथग्भूतं तत्साक्षिणमित्यर्थः । "रूपं यदेतदवबोधरसोदयेन" इत्यादि ब्रुवाणस्त्वं मन्यसे तस्मान्ममायमाकारो न भूतानि पृथिव्यादीनि नापींद्रियाणि तैजसानि नापि गुणमाया नाप्यात्मा जीवः किन्तु साक्षाद्ब्रह्मैव त्वं जानासीत्यर्थः । तेन मद्रूपस्य सच्चिदानंदत्वमायात्वयोर्मननमेव मज्ज्ञानाज्ञानयोर्लिंगमिति भगवदभिप्रायोत्रगाह्यः ॥ ३६ ॥ यतो मद्रूपस्य मदिच्छयैवातर्क्ययादृश्यत्वं न तु वस्तुतो नेत्रादींद्रियग्राह्यत्वमित्यत्र त्वमेव प्रमाणमित्याह—तुभ्यं त्वां कृतार्थी कर्तुं आत्मा श्रीविग्रहः । यद्वा बहिरपि दर्शितं "गोपवेशो मे पुरस्तादाविर्बभूव" इति श्रुतेः आत्मदर्शनस्य देयत्वात्क्रियाग्रहणमपि कर्त्तव्यमिति संप्रदाने वा चतुर्थी।अत्र तपसः समाधेश्चानुल्लेखात्तावपि वस्तुतो दर्शनस्य न हेतू किंतु मदिच्छैवेति रहस्यं सिद्धांतमपि ब्रह्माणं ज्ञापयामासेति ज्ञेयम्॥३७॥ अत स्तव मत्स्तवादयोपि

**प्रीतोऽहमस्तु भद्रं ते लोकानां विजयेऽच्छया ॥ यदस्तौषीर्गुणमयं निर्गुणं मानुवर्णयन् ॥ ३९ ॥ य एतेन पुमान्नित्यं स्तुत्वा स्तोत्रेण मां भजेत्॥ तस्याऽऽशु संप्रसीदेयं सर्वकामवरेश्वरः ॥ ४० ॥ पूर्तेन तपसा यज्ञैर्दानैर्योगसमाधिना ॥ राद्धं निःश्रेयसं पुंसां मत्प्रीतिस्तत्त्वविन्मतम् ॥ ४१ ॥ अहमात्मात्मनां धातः प्रेष्ठः सन्प्रेयसामपि ॥ अतो मयि रतिं कुर्याद्देहादिर्यत्कृते प्रियः ॥४२॥ सर्ववेदमयेनेदमात्मनाऽऽत्मात्मयोनिना ॥ प्रजाः सृज यथापूर्वं याश्च मय्यनुशेरते ॥ ४३ ॥**

नसि मत्कथैवाभ्युदयस्तेनांकितं स एष बंधाभावो मयि मनोनिर्बंधो मज्ज्ञानं मद्रूपस्य हृदि दर्शनं मत्स्तुतिस्तपोनिष्ठा चेति यदेष सर्वोऽपि मदनुग्रहः ॥ ३८ ॥
गुणमयत्वेन प्रतीयमानमपि निर्गुणमेवानुवर्णयन् ॥ ३९ ॥ तव प्रीत इति किं वक्तव्यमित्याह । य इति ॥ ४० ॥ न च मत्प्रीतेरप्यधिकं किंचिदस्ती
त्याह । पूर्तादिभी राद्धं सिद्धं यन्निःश्रेयसं फलं तन्मत्प्रीतिरेवेति तत्त्वविदां मतम् ॥ ४१ ॥ अत्र हेतुमाह । अहमिति । आत्मनामहंकारोपाधीनां जीवानामात्मा
अतः प्रेयसामतिप्रियाणामपि मध्ये प्रेष्ठः प्रियतमः सन्निरवद्यः । यत्कृते यदर्थम् ॥ ४२ ॥ अतस्त्वं कृतार्थ एव तथाऽपि मत्प्रियार्थं सृष्टिं कुर्वित्याह । सर्वेति । आत्मा

पि मंदनुग्रहेणैवाभूवन्निति यच्चेति ॥ ३८ ॥ किञ्च मत्कृपोत्थयैव भक्त्या पुनरहं प्रीणामीत्यद्भुतां मत्पारिपाटीं पश्येत्याह–प्रीत इति । मत्सृज्यमाना लोका जयवंतः संत्वितीच्छया गणमयं कल्याणगुणसमुद्रं
साकारं मां निर्गुणं प्राकृतसत्त्वादिगुणरहितं प्रीतोहमतस्तेषां भद्रमस्तु ये तु गुणमयं मां श्रीनारायणं सत्त्वादिगुणत्वेनैव स्तुवंति न तु निर्गुणत्वेन तेषु न तु प्रीतोस्मीति न तेषां भद्रमस्तीति भावः ॥ ३९ ॥ तस्य नित्यं
स्तुवतः ॥ ४० ॥ न च मत्प्रीतेरभ्यधिकं किञ्चिदस्तीत्याह–पूर्तेति । मत्प्रीतिं विना राद्धं निःश्रेयसमनिःश्रेयसमेवेति हेतोर्मत्प्रीत्यर्थमेव ते पूर्त्तादिकं कुर्वंतीति भावः । ते मां प्रीणंतं कर्तुमिच्छंति न तु मां स्वप्रीतेर्विषयं
चिकीर्षंति अतस्तया सात्त्विक्या भक्त्या तान्प्रत्यहं प्रीतस्तेभ्यो मोक्षं ददामीति भावः ॥ ४१ ॥ निर्गुणभक्तिमतां तु प्रीतेरहं विषय इति व्यंजयन्सर्वेषां वस्तुतः प्रीतेरहमेव विषयी भवितुं योग्य इत्यतः स्वस्मिन्प्रीतिं विधत्ते
अहमिति । आत्मनां जीवानामहमात्मा परमात्मा यत्कृते देहादिः प्रिय इति कलत्रपुत्रादिषु प्रीतिर्देहसंबंधन देहे प्रीतिर्जीवात्मसंबंधेन जीवात्मनि प्रीतिस्तु परमात्मसंबंधेन परमात्मनि प्रीतिः स्वाभाविकी जीवात्मादिषु त्वौपचा
रिकीति तेषु क्रमेण प्रियत्वह्रासः । ननु मयि रतिं कुर्यादित्यस्य वाक्यस्य कथंविधित्वं रतेः प्राप्तत्वादेव तदुक्तं 'विधिरत्यंतमप्राप्तौ' इति अत्रोच्यते मायायाः खल्वधिकारो जीवात्मपर्यंतः एव न तु ततोपि परत्र परमात्मनीति
मायाबंधपतितानां मनुष्यादीनां मायिकेष्वेव वस्तुष्वनुभवोस्ति जीवस्याप्यारोपितं मायिकत्वमस्तीति तत्रापि परमात्मनि स्वाभाविक्याः प्रीतेर्वर्त्तमानत्वेप्यनुभवाभावादज्ञातस्वबहुवित्तस्य वणिजो दारिद्र्यमिव प्रीत्यभाव इति प्रीति
म्विधत्ते शास्त्रमिति । किञ्च वस्तुतः प्रेष्ठोपि परमात्मा ज्ञानिभिस्साक्षादनुभूतोपि रत्या विना प्रेमास्पदं न भवत्यतो भक्तानामेव स प्रेष्ठो भवति न तु ज्ञानिनां यथा शीताद्यार्त्तिहरे चक्षुःप्रकाशसुखदेपि सूर्ये साक्षादनुभूतेपि कोपि
यन्नानुरज्यति तत्र ममत्वाभाव एव हेतुः सूर्यश्च तत्तत्सुखप्रदोपि तेषूदास्त एव एवं ज्ञानिजनाः खल्वज्ञानतमोहंतारि स्वानुभवसुखप्रदेपि ब्रह्मणि ममत्वाभावान्नानुरज्यंति । ब्रह्मापि स्वन्निर्विशेषमेवानुभावयंस्तेषूदास्त
एव यदा च सूर्यभक्तो जनश्चक्षुष्मानंधो वा भक्त्या संभावितं सूर्यमिहैव करचरणादिमंतं सहाश्वरथसारथ्यादिकं पश्यति तं स प्रेमवशं करोति । तथैव मुक्तो बद्धो वा जीवो भक्त्यैव परमात्मानं सविशेषमनुभव
स्तत्रानुरज्यति तं च स प्रेमवशं करोतीत्यतः परमात्मनः सर्वतः प्रेष्ठत्वं भक्तानां केवलया प्रधानीभूतया वा भक्त्यैव न तु ज्ञानिनां गुणीभूतया भक्त्येत्यत उक्तं स्वयं परमात्मनैव 'अतो मयि रतिं कुर्यात्' इति विवेचनी
यम् । यद्वा । उक्तयुक्तेरेव हेतोर्मयि रतिं कुर्यात् । यस्या रतेः कृते देहादावप्रीतिमतोपि विवेकिनो देहादिः प्रियो भवति देहेंद्रियादिभिरेव परिचर्याकीर्त्तनादिभिर्भक्तिसिद्धिरिति नैव ते मोक्षाकांक्षिणः स्युरिति भावः ।
स्वामिचरणोक्तं व्याख्यास्यामः । अत्र तत्त्वविन्मते अतो जीवानामात्मत्वात् निरवद्यो निरुपाधिप्रेमास्पदम् । त्वं तु मत्कृपाकटाक्षेण सर्वधारणसमर्थोसीत्याह–धातरिति ॥ ४२ ॥ यतस्त्वं मयि प्रेमवानतो हेतोः तत्र

मैत्रेय उवाच ॥ तस्मा एवं जगत्स्रष्ट्रे प्रधानपुरुषेश्वरः ॥ व्यज्येदं स्वेन रूपेण कंजनाभस्तिरोदधे ॥ ४४ ॥ इति श्रीभा०म०तृ०भगवद्ब्रह्मसंवादे भगवदंतर्धानवर्णनं नाम नवमोऽध्यायः ॥ ९ ॥ विदुर उवाच ॥ अंतर्हिते भगवति ब्रह्मा लोकपि तामहः ॥ प्रजाः ससर्ज कतिधा दैहिकीर्मानसी र्विभुः ॥ १ ॥ ये च मे भगवन्पृष्टास्त्वय्यर्था बहुवित्तम ॥ तान्वदस्वाऽऽनुपूर्व्येण छिंधि नः सर्वसंशयान् ॥ २ ॥ सूत उवाच ॥ एवं संचोदितस्तेन क्षत्त्रा कौषारवो मुनिः ॥ प्रीतः प्रत्याह तान्प्रश्नान् हृदिस्थानथ भार्गव ॥३॥ मैत्रेय उवाच ॥ विरिंचोऽपि तथा चक्रे दिव्यं वर्षशतंतपः ॥ आत्मन्यात्मानमावेश्य यदाऽऽह भगवानजः ॥ ४ ॥ तद्विलोक्याऽब्जसंभूतो वायुना यद धिष्ठितः ॥ पद्ममंभश्च तत्कालकृतवीर्येण कंपितम् ॥५॥ तपसा ह्येधमानेन विद्यया चात्मसंस्थया ॥ विवृद्धविज्ञानबलो न्यपाद्वायुं सहांभसा ॥ ६ ॥ तद्विलोक्य वियद्व्यापि पुष्करं यदधिष्ठितम् ॥ अनेन लोकान्प्राग्लीनान्कल्पिताऽस्मीत्यचिंतयत् ॥ ७ ॥

त्वमिदं त्रैलोक्यं या मय्यनुशेरते ताः प्रजाश्च सृज । केनात्मनैवान्यनिरपेक्षेण तत्र ज्ञापकापेक्षाऽभावमाह । सर्ववेदमयेनेति । आत्माहं योनिः कारणं यस्येति ज्ञानक्रियाशक्त्यतिशयं सूचयति । यथापूर्वमिति । तवात्राभ्यासोऽप्यस्तीत्युक्तम् । मय्यनुशेरत इति स्थितानामभिव्यक्तिमात्रमेव कर्तव्यमित्यनायासत्वमुक्तम् ॥ ४३ ॥ इदं सृज्यं व्यज्य प्रकाश्य पद्मनाभः श्रीनारायणरूपेण तिरोदधेऽदृश्योऽभवत् ॥ ४४ ॥ इति तृ० टी० नवमोऽध्यायः ॥९॥ दशमे कालसंप्रश्नं प्रतिवक्तुं तदुद्भवः ॥ प्राकृतादिविभागेन सर्गस्तु दशधोच्यते ॥ १॥ १ ॥ मे मया वदस्व वद भासयस्वेति वा ॥ २॥ संचोदितः प्रार्थितः । हृदिस्थानेवाह । न तु ते प्रश्नास्ते न विस्मृता इत्यर्थः ॥ ३ ॥ आत्मनि श्रीनारायणे आत्मानं मन आवेश्य॥४॥ अब्जसंभूतो ब्रह्मा यदधिष्ठाय स्थितः कर्तरि क्तः तत्पद्ममंभश्च विलोक्य । कथंभूतं पद्ममंभश्च तेन प्रलयकालेन कृतं वीर्यं यस्य तेन वायुना कंपितं न्यपादित्युत्तरेणान्वयः॥५॥विवृद्धं विज्ञानं बलं च यस्य न्यपात्सर्वं पीतवान् ॥६॥ पुष्करं पद्मं प्राग्लीनाँस्त्रीँल्लोकान् कल्पिताऽस्मि स्रक्ष्यामि॥७॥

रचनाप्रकारे चक्रवर्ती तु मारीरिषीष्टेतियत्प्रार्थितं तत्राह सर्ववेदमयेनेति । त्वं तु 'वेदो नारायणः साक्षात्' इत्युक्तेर्वेदरूपात् मत्तः प्रादुर्भूतत्वाद्वेदस्वरूप एव यः पिता स सुतः साक्षात् 'स एष भगवान् द्रोणः प्रजारूपेण वर्त्तते' इत्युक्तन्यायेन तव वेदस्मरणं सर्वदैव स्थास्यति स्वरूपत्यागायोगादिति भावः ॥ ४३ ॥ अत्र ब्राह्मे कल्पे अहमेवासमेवाग्र इत्यादिचतुःश्लोकीभागवतमिव पाद्मे कल्पे यदा तु सर्वलोकेष्विति यदा रहितमिति पूर्त्तेनेति अहमात्मात्मनामिति चतुःश्लोकीभागवतमिदं भगवानुपदिदेशेति केचिदाहुः ॥ ४४ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कंधे नवमोऽध्यायः ॥ ९ ॥ तस्मात्कालादुद्भवतीति तदुद्भवः ॥ १ ॥ आर्षकल्पने गौरवादाह भासयस्वेति । "भासनोपसंभाषाज्ञानयत्नविमत्युपमंत्रणेषु वदः" इत्यात्मनेपदम् । बहुविदोपि तज्जानंति किं वक्तव्यं बहुवित्तमो भवाञ्जानातीत्याह-बहुवित्तमेति ॥ २ ॥ सूत उवाच । एवमित्यादिका संगतिः स्वयमेव सूतेन क्रियते न श्रीशुककृतानूद्यत इति बोधयति । मैत्रेय उवाचेत्यादिकं तु श्रीशुकवाक्यानुकरणम् । श्रीशुक उवाचेति भारतेति च पाठौ न सर्वसंमतौ इत्यर्थ इति मुनित्वादेव सर्वपदार्थज्ञानं सर्वदा तिष्ठत्यृषिष्विति भावः । भार्गवेति ज्ञाने सामर्थ्यमाह ॥ ३ ॥ 'भूयस्त्वं तप आतिष्ठ' इति यथा नारायणेनोक्तं तथेत्यर्थः । क्वचिद्यदाहेति पाठः । तत्रापि यद्यथेत्यर्थः । यद्वा । तथेत्युक्तेर्यथेति बोध्यं यत्तपोऽजो नारायण आहेति ॥४॥ यत्पद्मम् ॥५ ॥ आत्मसंस्थया चित्तगतयां विद्ययोपासनया यावत्प्रमाणं प्रलयेंभो वायुश्चावर्द्धत तावन्न्यपादित्यर्थः ॥६॥ स्वेनाधिष्ठितं यद्वियद्व्यापि व्योमवन्महत्परिमाणं पद्मं तद्विलोक्येति योज्यम् ।

**पद्मकोशं तदाऽऽविश्य भगवत्कर्मचोदितः ॥ एकं व्यभांक्षीदुरुधा त्रिधा भाव्यं द्विसप्तधा ॥ ८ ॥ एतावाञ्जीवलोकस्य संस्थाभेदः समाहृतः ॥ धर्मस्य ह्यनिमित्तस्य विपाकः परमेष्ठ्यसौ ॥ ९ ॥ विदुर उवाच ॥ यदाऽऽत्थ बहुरूपस्य हरेरद्भुतकर्मणः ॥ कालाख्यं लक्षणं ब्रह्मन्यथा वर्णय नः प्रभो ॥ १० ॥मैत्रेय उवाच ॥ गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठितः ॥ पुरुषस्तदुपादानमात्मानं लीलयाऽसृजत् ॥ ११ ॥**

भगवता स्वयं करणीये कर्मणि चोदितो नियुक्तः संस्तदा पद्मकोशं प्रविश्य तमेकमेव त्रिधा लोकत्रयरूपेण व्यभांक्षीद्विबभाज एकेन कमलमुकुलेन कथं लोकत्रय सृष्टिरित्यसंभावनां वारयितुं तस्य विशालतामाह। द्विसप्तधा चतुर्दशलोकरूपेण उरुधा ततोऽपि बहुप्रकारेण भाव्यं भावयितुं योग्यमतो न तेन त्रिलोकीकरणं चित्रमित्यर्थः । ॥ ८ ॥ त्रिलोकीरूपेणैव विभागे हेतुमाह । एतावांस्त्रिलोकीरूपो जीवलोकस्य जीवानां भोगस्थानस्य प्रत्यहं सृज्यस्य संस्थाभेदो रचनाविशेष उक्तः । ननु परमेष्ठिनोऽपि जीवत्वाविशेषाद्ब्रह्मलोकस्यापि किमिति प्रत्यहं सृष्टिर्न भवति तत्राह । हि यस्मादानिमित्तस्य निष्कामस्य धर्मस्य विपाकः फलरूपोऽसौ उपलक्षणमेतत् सत्यलोकस्य मह त्प्रभृतिलोकानां तद्वासिनां च त्रैलोक्यस्य काम्यकर्मफलत्वात्प्रतिकल्पमुत्पत्तिविनाशौ भवतः । महःप्रभृतीनामुपासनासमुचितनिष्कामधर्मफलत्वाद्द्विपरार्धपर्यंतं न नाशः तत्रस्थानां च ततःपरं प्रायेण मुक्तिरिति भावः ॥ ९॥ कालभेदेन लोकसृष्टिभेदं श्रुत्वा तमेव कालं जिज्ञासुः पृच्छति । यत्कालाख्यं लक्षणं स्वरूपमात्थ अब्रवीः कथं कालः कल्पते किं वा तस्य सूक्ष्मं स्थूलं च रूपमिति यथावद्वर्णयेत्यर्थः ॥ १० ॥ तत्र सामान्यतः कालस्य स्वरूपमत्रोच्यते उत्तराध्याये तु विशेषतः गुणानां व्यतिकरो महदादिपरिणामस्तेनैवाक्रियते यः स काल इति शेषः । वक्ष्यते चैकादशे । "गुणव्यतिकरः कालः स्वभावः सूत्रमेव च" इति । स्वतस्तु निर्विशेषः अप्रतिष्ठितः क्वाप्यप र्यवसितः आद्यंतशून्य इत्यर्थः । एतदेव दर्शयितुमीश्वरः सृष्ट्यादि तेन निमित्तभूतेन करोतीत्याह । पुरुष इति उपादीयते निमित्ततया स्वीक्रियत इत्युपादानम् । स काल उपादानं निमित्तं यस्मिंस्तमात्मानमेव विश्वरूपेणासृजत् । स्वव्यतिरेकेण सृज्यस्याभावात् एतच्च वस्तुकथनमात्रम्।कालेन निमित्तेन चासृजदित्येतावदेव विवक्षितम्॥ ११ ॥

प्रजाः सृजेति हरिणोपदिष्टो ब्रह्मा वाय्वादिपानरूपे संहारे कथं प्रवृत्त इति चेत्तत्र सर्वविरोधित्वात्तत्पानं कृतं सर्वविरोधित्वं च सर्वदेशव्यापकत्वेन प्रजासर्गार्थस्थाननिरोधादेवावसेयमिति ॥ ७ ॥ कर्मणि प्रजासृष्टिलक्षणे ततोपि चतुर्दशलोकतोपि बहुप्रकारेण सूर्यचंद्रादिलोकरचनारूपेण यतो भगवदिच्छया बहुधा भवनयोग्यमतो हेतोः इत्यर्थ इति । अनंतसरिदधिकरणार्णवतो यथा बहुधा कुल्याकल्पनं नानर्हं तथा तस्य पद्मस्याप्युरु धाभवनयोग्ये त्रिलोकीकरणं नाद्भुतमिति भावः ॥ ८ ॥ ब्रह्मणो जीवत्वसंभावनयाक्षिपति नन्विति । धर्मस्य तपोविद्यादेः विपाकः परकाष्ठाप्राप्तो मूर्त्तः परिणामः तपोबलेन न किमप्यशक्यं भवतीति भावः । इति भाव इति । प्रायेणेत्युक्तेर्निर्गुणनिष्ठानामेवेति बोध्यम् । भेददर्शिनां तु पुनर्जन्मादि श्रूयते "आद्यः स्थिरचराणां यो वेदगर्भः सहार्षिभिः ॥ कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभम् ॥ स संसृत्य पुनः काले कालेने श्वरमूर्त्तिना । जाते गुणव्यतिकरे यथापूर्वं प्रजायते" इति श्रीकपिलोक्तेः असावित्यनेन ब्रह्मांतरव्यवच्छेदः ॥ ९ ॥ कालभेदेन ब्राह्मपाद्मादिकल्परूपकालभेदेन इत्यर्थ इति । कालस्यारूपित्वेन तत्सौक्ष्म्यस्थौल्यादि ज्ञातुमशक्यमतस्तत्स्वरूपं वर्णयेति भावः । प्रभो इति । योगित्वान्मैत्रेयस्य कालस्वरूपवर्णनसामर्थ्यं द्योतयतीति हे सर्ववर्णनसमर्थेत्यर्थः॥ १०॥ तत्राधुना अत्रास्मिन्नध्याये उत्तरत्राग्रिमे । स्वतः स्वभावतो निजरूपेण निर्गतो

विश्वं वै ब्रह्मतन्मात्रं संस्थितं विष्णुमायया ॥ ईश्वरेण परिच्छिन्नं कालेनाऽव्यक्तमूर्तिना ॥ १२ ॥ यथेदानीं तथाऽग्रे च पश्चादप्येतदीदृशम् ॥ सर्गो नवविधस्तस्य प्राकृतो वैकृतस्तु यः ॥ १३॥ कालद्रव्यगुणैरस्य त्रिविधः प्रतिसंक्रमः ॥ आद्यस्तु महतः सर्गो गुणवैषम्यमात्मनः ॥ १४ ॥ द्वितीयस्त्वहमो यत्र द्रव्यज्ञानक्रियोदयः ॥ भूतसर्गस्तृतीयस्तु तन्मात्रो द्रव्यशक्तिमान् ॥ १५ ॥ चतुर्थ ऐंद्रियः सर्गो यस्तु ज्ञानक्रियात्मकः ॥ वैकारिको देवसर्गः पंचमो यन्मयं मनः ॥१६॥ षष्ठस्तु तमसः सर्गो यस्त्वबुद्धिकृतः प्रभो ॥ षडिमे प्राकृताः सर्गा वैकृतानपि मे शृणु ॥१७॥

स्वव्यतिरिक्तस्य सृज्याभावं दर्शयन् कालस्य सृष्टिनिमित्ततां दर्शयति । विश्वमिति । विष्णुमायया संस्थितं संहृतं ब्रह्म तन्मात्रं सद्विश्वं ईश्वरेण कर्त्रा कालेन निमित्तेन परिच्छिन्नं पृथक् प्रकाशितम् । अव्यक्ता मूर्तिः स्वरूपं यस्येति स्वतो निर्विशेषता दर्शिता ॥ १२ ॥ अप्रतिष्ठितत्वं दर्शयितुं तत्कार्यविश्वप्रवाहस्याप्रतिष्ठामाह । यथेदानीमस्ति तथाऽग्रे पूर्वमप्यासीत्पश्चादपि भविष्यति । एवं सामान्यतः कालं निरूप्य विशेषतो निरूपयिष्यन्तन्निमित्तस्य सर्गस्य पूर्वोक्तानेव भेदाननुवदति सर्ग इति । यस्तु प्राकृतो वैकृतश्च स दशमः ॥ १३ ॥ तन्निमित्तमेव त्रिविधं प्रलयमाह । कालेनैव केवलेन नित्यः प्रलयः । द्रव्येण संकर्षणाग्न्यादिना नैमित्तिकः । गुणैः स्वस्वकार्यं ग्रसद्भिः प्राकृतिकः तानेव सर्गान् प्रपंचयति आद्य इत्यादिना यावदध्यायसमाप्ति । महतो लक्षणमात्मनो हरेः सकाशाद्गुणानां वैषम्यमिति ॥ १४॥ अहमोऽहं कारस्य तस्य लक्षणम् । यत्रेति । द्रव्यादयो वक्ष्यमाणास्त्रयः सर्गाः तृतीयस्तन्मात्रो भूतसर्गः भूतसूक्ष्मसर्गः इत्यर्थः । द्रव्यशक्तिमान्महाभूतोत्पादकः॥ १५॥ ज्ञानकर्मेंद्रियात्मकश्च तुर्यः । पंचमो वैकारिकः इंद्रियाधिष्ठातारो देवा मनश्च ॥ १६॥ षष्ठस्तु तमसः पंचपर्वाऽविद्यायाः अबुद्धिर्जीवानामावरणं विक्षेपश्च तां करोतीत्यबुद्धिकृत्तस्य मे मत्तः शृणु ॥ १७ ॥

विशेषो भेदो यस्मात्स तथा । उपाधिकृतभेदं विना काले भेदो नास्ति भूतादिव्यवहारस्तत्रौपाधिक एव पर्वतादिवत्तथाहि यथा इमे पर्वता दाशरथिकाले तस्थुः कल्किकाले स्थास्यंतीदानींतनराजकाले तिष्ठंतीत्यत्र यथा पर्वतेषु भूतत्वादिकं नास्ति तथा कालेपीति भावः । न पर्यवसितिरवसानं यस्य सोऽपर्यवसितः । इत्यर्थ इति । नहि कालस्य काश्चिदुत्पादको नाशकश्चेति भावः । एतदेव आद्यंतशून्यत्वमेव यद्वात्मानमात्मशक्तिकार्यत्वादात्मशब्दवाच्यं विश्वमसृजदित्यर्थः । एतच्च आत्मनो विश्वरूपत्वेन संपादनं यत् तत् वस्तुनो विश्वस्वरूपस्य कथनमात्रं न तु पृष्टोत्तरत्वेन विवक्षितम् । तत्तु कालेनेत्यादिमात्रमेवेति ध्येयम् ॥ ११ ॥ व्यक्तस्यैव घटादेर्विशेषो दृश्यते लोके न त्वव्यक्तस्य कालादेरुपाधिं विनेत्यर्थः ॥ १२ ॥ तत्कार्यं कालकार्यम् । तन्निमित्तस्य कालनिमित्तकस्य पूर्वोक्तान्पंचमाध्यायोक्तान् महदादिसर्गान् । दशम इति शेषः । प्राकृतवैकृतोभयात्मकः कौमार इत्यर्थः ॥ १३ ॥ तन्निमित्तं कालनिमित्तकमेव । आदिना वृष्ट्यभावादिग्रहः ॥ १४ ॥ इत्यर्थ इति द्रव्यशक्तिमानित्यग्रिमोक्तेरिति भावः । तेषां भूतानां मात्राः सूक्ष्मावस्था यस्मिन्स तन्मात्रः । तु शब्दः पादपूरणे । 'तुहिचस्मह वैपादपूरणे' इत्यमरः ॥ १५ ॥ चतुर्थस्तैजसाहंकारकार्य इत्यर्थः वैकारिकः सात्त्विकाहंकारकार्यः । देवानामिन्द्रियाधिष्ठातॄणां सर्गः । यन्मयं सात्त्विकाहंकारकार्यरूपं मनोपि पंचमसर्गांतर्भूतमेवेत्यर्थः । एते पंच सर्गाः प्राधानिका उक्ताः ॥ १६ ॥ आविद्यकसर्गमाह—तुर्भिन्नोपक्रमे । " तमोमोहो महामोहस्तामिस्रो ह्यंधसंज्ञकः । अविद्या पञ्चपर्वेयं प्रादुर्भूता महात्मनः" इति वैष्णवे । यद्वा । प्रभोः परमेश्वरस्य :। शक्तिरबुद्धिर्जीवमोहिनी याऽविद्यानाम्नी तया कृत इत्यर्थः । अविद्यावशवर्त्तित्वाभावबोधनाय संबुद्धिर्वा । राजानं विदुरं वा । मुनिकृतेति । अत्राशयमाह—प्रधानमविद्या विद्या चेति मायायास्तिस्रो वृत्तयः । तत्र प्राधान्येन महदादिपृथि

रजोभाजो भगवतो लीलेयं हरिमेधसः ॥ सप्तमो मुख्यसर्गस्तु षड्विधस्तस्थुषां च यः ॥ १८ ॥ वनस्पत्यौषधिलतात्वक्सारा वीरुधो द्रुमाः ॥
उत्स्रोतसस्तमःप्राया अंतःस्पर्शा विशेषिणः ॥१९॥ तिरश्चामष्टमः सर्गः सोऽष्टाविंशतिधो मतः ॥ अविदो भूरितमसो घ्राणज्ञा हृद्यवेदिनः॥२०॥

अनुद्वेगेन श्रोतव्यतामाह । यद्विषया मेधा संसारं हरति तस्य हरेर्लीला यद्वा इयमिति तमआदिसर्गरूपा रजोभाज इति ब्रह्मरूपस्येत्यर्थः । अस्मिन्पक्षे अबुद्धिकृत इति प्रथमांतम् । अनवधानकृत इत्यर्थः । मुखमिव प्रथमं कृतो मुख्यः सर्गः । तस्थुषां स्थावराणाम् ॥ १८ ॥ षड्विधत्वमेवाह । ये पुष्पं विना फलंति ते वनस्पतयः ओषधयः फलपाकांताः लता आरोहणापेक्षाः त्वक्सारा वेण्वादयः लता एव काठिन्येनारोहणानपेक्षा वीरुधः ये पुष्पैः फलंति ते द्रुमाः तेषां साधारणं लक्षणमाह। ऊर्ध्वं स्रोत आहारसंचारो येषाम् । तमःप्राया अव्यक्तचैतन्याः अंतःस्पर्शाः स्पर्शमेव जानंति नान्यत् तदप्यंतरेव न बहिः। विशेषिणो व्यवस्थितपरिणामाद्यनेकभेदवंतः॥ १९॥ तिर्यक्स्रोतसां सर्गमाह । तिरश्चामिति । स चाष्टाविंशतिधः तिरश्चां लक्षणं अविदः श्वस्तनादिज्ञानशून्याः भूरितमसः आहारादिज्ञानमात्रनिष्ठाः घ्राणेनैवेष्टमर्थं जानंति हृदि

व्यंतानि तत्त्वानि सत्यान्येव सृष्टानि यैरेव समष्टिव्यष्टिरूपा जीवस्य स्थूलाः सूक्ष्माश्चोपाधयोऽभवन् । द्वितीययाऽविद्यया जीवं मोहयंत्या जीवसंबद्धमविद्याऽस्मितारागद्वेषाभिनिवेशात्मकं पंचविधं तमोऽज्ञानमसत्यमेव सृष्टम् । एवं सत्यमिथ्यात्मकं जगदिदं प्रधानाऽविद्यामेव सृष्टं तृतीयया विद्यया तु पंचविधाज्ञाननिवर्तकं ज्ञानं सृष्टं तच्चाग्रे विवृत्य व्याख्यास्यते । प्रकृतेर्मायाशक्तेः सकाशाज्जाता इमे प्राकृताः षट् । विकृतिस्समष्टिविराट् ब्रह्मा तस्माज्जातान् वक्ष्यमाणानपि ॥१७॥ ननु हरेर्लीला वर्णनीया कुतः प्रकृता संगता सृष्टिर्वर्णितेति चेदाह—लीलेयमिति इयमिति । सामान्यतः सर्गरूपा ननु न हि सात्त्विकस्य हरेरियमविद्या सर्गादिरूपा लीला नोपयुक्तेति चेदाह—यद्वेति । इत्यर्थ इति वर्जं उपाधिकब्रह्मणो हिरण्यगर्भस्येति भावः । अस्मिन्पक्षे ब्रह्मपक्षे इत्यर्थ इति । 'प्रमादोऽनवधानता'इत्यमरः । रजसः प्रमादजनकत्वं तु प्रसिद्धमेव तच्च श्रीदशमे स एव वक्ष्यति "अतः क्षमस्वाच्युत मे रजोभुवो ह्यजानतस्त्वत्पृथगीशमानिनः । अजावलेपांधतमोंधचक्षुषः" इति । अत्र पक्षे हरिमेधस इत्यस्य हरौ मेधा यस्य हरिर्मेधा यस्येति वार्थः । यद्वा । हरिरिव सूर्याग्निवन्मेधा यस्य जाज्वल्यमानबुद्धेरित्यर्थः । 'वह्निसूर्यौ हरी चंद्रः' इति कोशांतरात् । यथा प्रथमं शरीरोत्पत्तौ मुखमुत्पद्यते तद्वदित्यर्थः । यद्वा । सर्वथा स्वार्थराहित्येन परोपकारित्वान्मुख्यत्वं तच्च श्रीकृष्ण एव वक्ष्यति "अहो एषां वरं जन्म सर्वप्राण्युपजीवनम् । सुजनस्येव येषां वै विमुखा यांति नार्थिनः"—इत्यादिना दशमे । चयः समूहः "चयः समूहे प्राकारमूलबंधे समाहृतौ" इति मेदिनी कस्मिंश्चित्कल्पे प्रलयोदशायिनो मुखतो जलबिंदुपतनादामर्दकी वृक्षोभूत्ततो ब्रह्माणमसृजद्धारिर्ब्रह्मा च देवासुरमनुष्यांस्तत एव सर्वस्थावरांश्चासृजत्ते सर्वे ब्रह्माणं पप्रच्छुः किमिदं स चाहायमादिप्ररोहः सर्वेषां नो धात्री नाम वृक्ष इति विष्णुपुराणीयफाल्गुनसितैकादशीमाहात्म्ये उक्तम् वाक्यानि तु विस्तरभियेह नोक्तानीति मुख्यत्वं स्थावरचयस्य ॥ १८ ॥ वनस्पतयोऽश्वत्थादयः । ओषधयो व्रीह्यादयः । लता नागवल्ल्यादयः त्वच्येव सारो बलं येषां ते तथा आदिना नडादिग्रहः । वीरुधः कूष्मांडादयः द्रुमा आम्रादयः तेषां षण्णामेव साधारणं सर्वगतम् । प्रायःशब्दः कल्पवृक्षादिव्यावृत्त्यर्थः । यद्वा भारते वृक्षाणामपि सर्वज्ञानमस्तीति 'तस्मात्पश्यंति पादपाः' इत्याद्युक्तेः । वायुवृक्षसंवादश्रवणाच्च प्रायःपदम् । एतच्चाज्ञानप्रचुरा इति तीर्थकृतव्याख्यापेक्षम् । स्वामिचरणैस्तु अव्यक्तचैतन्या इति व्याख्यातम् । वस्तुतश्चैतन्यं ज्ञानमेवेति नान्यत्स्पर्शेतरन्न जानंतीति भारतवाक्यविरोधादत्र स्पर्शपदं ज्ञानपरतया व्याख्येयं तथा चांतर्ज्ञाना इत्यर्थः । परिणामादीत्यत्रादिना वृद्धिह्रासादिग्रहः ॥ १९ ॥ अष्टाविंशद्विध इह तकारेकारलोपस्त्वार्षः । क्वचिदष्टाविंशतिधा मत इत्यपि पाठः । तिरश्चां दीर्घानुसंधानशून्यत्वे प्रमाणमाह—तथा चेति । इतरेषां मनुष्येतराणां श्वस्तनमागामिदिन

गौरजो महिषः कृष्णः सूकरो गवयो रुरुः ॥ द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तम ॥ २१ ॥ खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा ॥ एते चैकशफाः क्षत्तः शृणु पंचनखान् पशून् ॥२२ ॥ श्वा सृगालो वृको व्याघ्रो मार्जारः शशशल्लकौ ॥ सिंहः कपिर्गजः कूर्मो गोधा च मकरादयः॥ ॥ २३ ॥ कंकगृध्रवटश्येनभासभल्लूकबर्हिणः ॥ हंससारसचक्राह्वकाकोलूकादयः खगाः ॥ २४ ॥ अर्वाक्स्रोतस्तु नवमः क्षत्तरेकविधो नृणाम् ॥ रजोऽधिकाः कर्मपरा दुःखे च सुखमानिनः ॥ २५ ॥ वैकृतास्त्रय एवैते देवसर्गश्च सत्तम ॥ वैकारिकस्तु यः प्रोक्तः कौमारस्तूभयात्मकः ॥ २६ ॥ देवसर्गश्चाष्टविधो विबुधाः पितरोऽसुराः ॥ गंधर्वाप्सरसः सिद्धा यक्षरक्षांसि चारणाः ॥ २७ ॥ भूतप्रेतपिशाचाश्च विद्याध्राः किन्नरादयः ॥ दशैते विदुराऽऽख्याताः सर्गास्ते विश्वसृक्कृताः ॥ २८ ॥

अवेदिनो दीर्घानुसंधानशून्याः । तथा च श्रुतिः । " अथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानं न विज्ञातं वदंति न विज्ञातं पश्यंति न विदुः श्वस्तनं न लोकालोकौ" इति ॥ २० ॥ अष्टाविंशतिभेदानेवाह । गवादयः उष्ट्रांता द्विशफा द्विखुरा नव ॥ २१ ॥ खरादयः एकशफाः षट् ॥ २२ ॥ श्वादयो गोधांताः पंचनखा द्वादश एवमेते भूचराः सप्तविंशतिः । मकरादयो जलचराः ॥ २३ ॥ कंकादयः खगा अभूचरत्वेनैकीकृत्य गृहीता तदेवमष्टाविंशतिभेदा भवंति तेषु कृष्णरुरुगौरा मृगविशेषाः अन्येषामपि तिर्यक्प्राणिनां यथायथमेतेष्वेवांतर्भावः ॥ २४ ॥ अथ आहारसंचारो यस्य सोऽर्वाक्स्रोताः ह्रस्वत्वमार्षम् । नृणां सर्गो नृणां लक्षणं रजोऽधिकं येषु ते ॥ २५॥ एते त्रयो वैकृता एव न कौमारवदुभयात्मकाः देवसर्गश्च वकृत इत्यनुषंगः । वैकारिकस्तु देवसर्गः प्राकृतेषु पूर्वमेव प्रोक्तः अयं तु ततो न्यूनत्वाद्वैकृतो देवसर्गत्वात्तदंतर्भूतश्च सनत्कुमारादीनां सर्गस्तु प्राकृतो वैकृतश्च देवत्वेन मनुष्यत्वेन च सृज्य इत्यर्थः ॥ २६ ॥ वैकृतश्च देवसर्गोऽष्टविधः तत्र विबुधादयस्त्रयो भेदाः गंधर्वाप्सरस एकः यक्षरक्षांस्येकः ॥ २७ ॥ भूतप्रेतपिशाचा एकः सिद्धचारणविद्याधरा एकः किन्नरादयः एकः आदिशब्दात्किंपुरुषाश्वमुखादयः एतद्विंशेऽध्याये स्पष्टं भविष्यति ॥ २८ ॥

कृत्यं लोकालोकौ प्रकाशांधकारौ स्वर्गनरकौ वेति श्रुतिपदार्थः । यद्वा भूरितमसो बहुरुषः हृद्यं स्वप्रियं वस्तु विंदंति भोजनशयनाद्यर्थं गृह्णंतीति तथा :॥ २० ॥ अजो मेषः कृष्णरुरुगवया मृगविशेषाः अविरोर्ढ्का ॥ २१ ॥ अश्वतरः खरादश्व्यां जातः । गौरोऽश्वतर्य्यामश्वाज्जातो मृगविशेषो वा शरभः सिंहविरोधी पदाष्टकवान्वन्यो जीवः चमरी गोसदृशो दीर्घपृष्ठो बहुश्वेतरोमपुच्छो मृगविशेषः ॥ २२ ॥ वृकश्चित्रको व्याघ्रस्य पृथग्ग्रहणात् । गोधा भूखननशीला गोह इति ख्याता । कूर्मो जलचरत्वेनाष्टाविंशतिष्वंतर्भूतोपि पंचनखत्वप्रदर्शनार्थं पृथगुक्तः। मकरादय इहादिना नक्रपाठीनादिग्रहः ॥ २३ ॥ आदिना गरुडादिग्रहः । तेष्वष्टाविंशतिभेदेषु अन्येषां सर्पादीना मेतेष्वेवाष्टाविंशतिष्वेव । यथांडजत्वेन सर्पा अपि खगेष्वंतर्भवंतीति भावः । एवमन्यत्रापि बोध्यम् ॥ २४ ॥ तुशब्दादन्येपि भेदाः संति "एकपादादिभेदैश्च दशभेदाश्च मानवाः" इति गरुडोक्तेः । ते च द्वीपांतरीयमनुष्या असुराद्या वा इति ध्येयम् । रजः राजसं गृहकोशादि संपादनमधिकं येषाम् । कर्मपराः " न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्" इति गीतोक्तेः । दुःखे दुःखरूपे व्यवहारे सुखबुद्धयः ॥ २५ ॥ वैकारिकः सात्त्विकाहंकारकार्यरूपो देवसर्ग इंद्रियाधिष्ठातृदेवसर्गः । अयं तु देवसर्गस्ततः प्राकृतसर्गात् न्यूनत्वं त्वस्य प्रकृतिकार्यकार्यत्वाज्ज्ञेयम् । तदंतर्भूतः प्राकृदंतर्भूतश्च देवसर्गत्वाद्देवसर्गत्वेन तुल्यत्वात् । इत्यर्थ इति । "भगवद्ध्यानपूतेन मनसान्यांस्ततोऽसृजत्" इत्यग्रे वक्ष्यमाणत्वाद्भगवद्ध्यानजन्यत्वेन भगवज्जन्यत्वाद्ब्रह्मजन्यत्वाच्च प्राकृतो वैकृतश्चेति भावः॥२६॥२७॥ विश्वसृग्हार्ब्रह्मा च तेन कृताः प्रकटिताः ॥२८॥

अतः परं प्रवक्ष्यामि वंशान्मन्वंतराणि च ॥ एवं रजःप्लुतः स्रष्टा कल्पादिष्वात्मभूर्हरिः ॥ २९ ॥ सृजत्यमोघसंकल्प आत्मैवात्मानमात्मना ॥
॥ ३० ॥ इति श्रीभा० महा० तृ० दशमोऽध्यायः ॥ १० ॥ मैत्रेय उवाच ॥ चरमः सद्विशेषाणामनेकोऽसंयुतः सदा ॥ परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः ॥ १ ॥ सत एव पदार्थस्य स्वरूपावस्थितस्य यत् ॥ कैवल्यं परममहानविशेषो निरंतरः ॥ २ ॥ एवं कालोऽप्यनुमितः सौक्ष्म्ये स्थौल्ये च सत्तम ॥ संस्थानभुक्त्या भगवानव्यक्तो व्यक्तभुग्विभुः ॥ ३ ॥

॥ २९ ॥ ३० ॥ इति श्री० भा० तृ० टी० दशमोऽध्यायः ॥ १० ॥ तत एकादशे कालपरमाण्वादिलक्षणैः ॥ युगमन्वंतरादिभ्यः कल्पमानादि वर्ण्यते ॥ १ ॥ तदेवं सामान्यतः कालस्योपलक्षणभूतं गुणव्यतिकरं दशविधं निरूप्येदानीं तस्यैव विशेषणं निरूपयितुं तत्परिच्छेद्यं वस्तु लक्षयति द्वाभ्याम् । सतः कार्यस्य विशेषाणामंशानां यश्चरमोंऽत्यो यस्यांशो नास्ति अनेकः कार्यावस्थामप्राप्तः असंयुतः समुदायावस्थां चाप्राप्तः । अत एव सदा कार्यसमुदायावस्थयोरपगमेऽप्यस्ति स परमाणुर्विज्ञेयः । किं तत्र प्रमाणमत आह यतो येभ्यः समुदितेभ्यो नृणां व्यवहर्तॄणामैक्यभ्रमोऽवयविबुद्धिः तथा च पंचमेवयविनिराकरणे वक्ष्यति । येषां समूहेन कृतो विशेष इति । कार्यानुपपत्त्या कल्प्यत इति भावः ॥ १ ॥ सूक्ष्ममुक्त्वा स्थूलमाह । सत एवेति । यस्य चरमोंऽशः परमाणुस्तस्यैव सतः कार्यमात्रस्य स्वरूपावस्थितस्य परिणामांतरमप्राप्तस्य यत्कैवल्यमैक्यं स परममहान् । पुंस्त्वं तु परमाणुप्रतियोगित्वात् । ननु नानाविशेषवान्परस्परं भिन्नश्च सर्वः पदार्थः कथमैक्यं तस्य तत्राह । अविशेषो विशेषविवक्षारहितो निरंतरो भेदविवक्षारहितश्च सर्वोऽपि प्रपंचः परममहानित्यर्थः ॥ २ ॥ यथा सूक्ष्मः स्थूलश्चायं पदार्थः एवं कालोऽप्यनुमितः चकारान्मध्यमावस्था गृह्यते संस्थानं परमाण्वाद्यवस्था तस्य

अतः दशविधसर्गवर्णनोत्तरं रजसा प्लुतो व्याप्तः कल्पादिष्विहादिना युगादिग्रहः ॥ २९ ॥ अमोघसंकल्पः संकल्पेनैव स्रष्टुं समर्थः । स्वेनैव साधनेन स्वमेव स्वयमेव स्वतंत्रो रचयति न तु कारकांतरापेक्षीत्यर्थः । "कर्त्ता कर्म च करणं स्वयमेव सदा हरिः" इति तीर्थोक्तेः ॥ ३० ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे दशमोऽध्यायः ॥ १० ॥ ततः सृष्टिवर्णनानंतरं युगमन्वंतरादिभ्य इति तृतीयार्थे पंचमी युगमन्वंतरादिभिरित्यर्थः । आदिना ब्रह्मदिनादिग्रहः । मानादीत्यत्रादिना भगवत्स्वरूपादिग्रहः ॥ ( १ ) ॥ तस्यैव कालस्यैव तत्परिच्छेद्यम् कालपरिच्छेद्यम् । अत एव कार्यावस्थासमुदायावस्थाप्राप्तत्वादेव । तत्र परिमाणौ । समुदितेभ्यः संयुतेभ्यः । कार्याणां द्व्यणुकत्रसरेण्वादीनामनुपपत्त्या परमाणुं विनाऽसिद्ध्या स कल्प्यतेऽनुमीयते । इति भाव इति । द्व्यणुकं सावयवं कार्यत्वात् घटवदित्यनुमाने द्व्यणुकावयवः परिमाणुरेव तस्याप्यवयवित्वकल्पनेऽनवस्था स्यादतः स एव चरमोंश इति तात्पर्यम् ॥ १ ॥ परमाणुः प्रतियोगी निरूपको यस्य स परमाणुप्रतियोगी तस्य भावस्तत्त्वं तस्मात् । परमाणुमपेक्ष्यैव परममहत्त्वमस्त्यतः परमाणुरेव तत्प्रतियोगीति।अत्राक्षिपति—नन्विति । इत्यर्थ इति । नानाविशेषा यथैकस्यैव घटपदार्थस्य घटांतरापेक्षया नानाविशेषाः पटापेक्षया भेदश्च तथा सर्वप्रपंचश्च पदार्थमात्रस्यैकीकरणाद्विशेषविवक्षारहितो भवति । प्रपंचांतरस्य विलक्षणस्याभावाद्भेदाविवक्षारहितो भवतीति भावः ॥ २ ॥ मध्यमावस्था स्थूलसूक्ष्मांतरालावस्था भगवच्छक्तित्वात्कालोऽपि भगवानेव शक्तिशक्तिमतोरभेदोपचारात् । कालस्य भ

स कालः परमाणुर्वै यो भुंक्ते परमाणुताम् ॥ सतोऽविशेषभुग्यस्तु स कालः परमो महान् ॥ ४ ॥ अणुर्द्वौ परमाणू स्यात्त्रसरेणुस्त्रयः स्मृतः ॥ जालार्करश्म्यवगतः खमेवानुपतन्नगात् ॥ ५ ॥ त्रसरेणुत्रिकं भुंक्ते यः कालः स त्रुटिः स्मृतः ॥ शतभागस्तु वेधः स्यात्तैस्त्रिभिस्तु लवः स्मृतः॥ ॥६॥ निमेषस्त्रिलवो ज्ञेय आम्नातस्ते त्रयः क्षणः ॥ क्षणान् पंच विदुः काष्ठां लघुता दश पंच च ॥७॥ लघूनि वै समाम्नाता दश पंच च नाडिका ते द्वे मुहूर्तः प्रहरः षड्यामः सप्त वा नृणाम् ॥ ८ ॥

भुक्तिर्व्याप्तिस्तया भगवानिति हरेः शक्तिः स्वतो व्यक्तोव्यक्तं भुंक्ते व्याप्नोति परिच्छिनत्तीति तथा विभुरुत्पत्त्यादिषु दक्षः ॥ ३ ॥ एतदेव प्रपंचयति । स इत्यादिना । सतः प्रपंचस्य परमाणुतां परमाण्ववस्थां यो भुंक्ते स कालः परमाणुः तस्यैवाविशेषं साकल्यं यो भुंक्ते स परममहान् । अयमर्थः । ग्रहर्क्षताराचक्रस्थ इत्यादिना । यत्सूर्यपर्यटनं वक्ष्यते तत्र सूर्यो यावता परमाणुदेशमतिक्रामति तावान्कालः परमाणुः यावता च द्वादशराश्यात्मकं सर्वं भुवनकोशमतिक्रामति स परममहान् संवत्सरात्मकः कालः तस्यैवावृत्त्या युगमन्वंतरादिक्रमेण द्विपरार्धान्तत्वमिति । तथा च पंचमे सूर्यगत्यैव कालादिविभागं वक्ष्यति ॥ ४ ॥ इदानीं द्व्यणुकादिलक्षणपूर्वकं मध्यमकालावस्थां कथयति । द्वौ परमाणू अणुः स्यात् त्रयोऽणवस्त्रसरेणुः । स तु प्रत्यक्ष इत्याह । जालार्केति । गवाक्षप्रविष्टेष्वर्करश्मिष्ववगतः कोसौ योऽतिलघुत्वेन खमेवानुपतन्नगाद्गतः । पाठांतरे खमेवानुपतन्नवगतो न तु गां पृथ्वीम् ॥ ५ ॥ शतं भागास्त्रुटिरूपा यस्मिन् स वेधस्तैर्वेधैः ॥ ६ ॥ ते निमेषास्त्रयः क्षण इत्याम्नातः काष्ठाः पंचदश एकं लघु ॥ ७ ॥ नाडिकाः षट् सप्त वा प्रहरः स एव यामो दिनस्य रात्रेश्चतुर्थो भागः । ह्रासे षट् वृद्धौ सप्त संध्यांशमुहूर्तद्वयं विनेति ज्ञातव्यम् । तत्राप्यनियमार्थो वा शब्दः ।

गवच्छक्तित्वं 'कालशक्त्या नु मायायाम्' इत्यत्र काले शक्तिशब्दप्रयोगाद्बोध्यम् । स्वतः स्वरूपेण विशेषेण भातीति विभुः दक्षो निपुणः "विभुः प्रभौ सर्वगते दक्षानंतस्वरूपयोः" इति कोशात् ॥ ३ ॥ एतदेव कालानुमननमेव उक्तमर्थं स्फोटयति—अयमर्थ इति । भुवनकोशं भूगोलं द्वादशराशिमितार्कभोग्यकाललंघ्यत्वाद्भूगोलस्यापि द्वादशराश्यात्मकत्वमुक्तम् । तस्यैव संवत्सरादिरूपकालस्यैव । पंचमे पंचमस्कंधे 'यदा चैन्द्राः प्रचलतः' इत्यादिना ॥ ४ ॥ स तु त्रसरेणुस्तु पाठांतरे "खमेवानुपतन्न गाम्" इति पाठे त्रसरणोः प्रत्यक्षत्वोक्त्याणुपरमाण्वोरप्रत्यक्षत्वं स्वत एवायातं प्राकृतमनुष्याणां योगिनां तु तावपि प्रत्यक्षाविति ज्ञेयम् । तथा च "जालांतरगते भानौ यत्सूक्ष्मं दृश्यते रजः । तस्य षष्ठस्तु यो भागः परमाणुः स उच्यते" इत्युक्तेरवगतयोरप्यणुपरमाण्वोः स्वरूपं स्फोटयति तथाहि अत्राणुपरमाण्वोः सत्त्वे किं प्रमाणमिति चेत्त्रसुरेणुरेव कथम् अवयवानां स्थौल्यप्रचुरत्वे विनाऽवयवी दृश्यो न भवतीति सर्वत्र नियमः । अत्र त्रसरेणोरवयविनस्त्रयः स्थूला अणवोऽवयवाः कल्प्या न तु परमाणवस्तेषां स्थौल्याभावात् । स्थौल्यमनेकवस्तुघटितत्वमित्यणोः स्थौल्यं परमाणुं विना न संभवतीति परमाणुसिद्धिः । त्रसरेणोर्दृश्यत्वमवयवस्थौल्यं विना न संभवतीत्यणुसिद्धिः । तथाणोः स्थौल्यार्थं परमाणोर्द्वित्वमेव कल्प्यते न तु त्रित्वं चतुष्कादिकं च 'प्रथमोपस्थितेस्तं[1]त्रत्वात्' इति न्यायात् । यथा 'कपिंजलानालभेत' इत्यत्र प्राचुर्यार्थमन्यैरपि प्रथमोपस्थितत्रित्वमेवांगीक्रियते तथात्रापीति ज्ञेयम् ॥५॥ त्रिभिस्त्रसरेणुभिस्त्रुटिरित्यर्थः । "सूच्या भिन्ने पद्मपत्रे त्रुटिरित्यभिधीयते" इति सूर्यसिद्धांतोक्तेः। यावता कालेन पद्मपुष्पपत्रं भिद्यते तावान् कालस्त्रुटिरित्यर्थः । त्रुटिशतेन वेधः स्यादित्यर्थः ॥६॥ त्रयो लवा यस्मिन्स त्रिलवः ॥७॥ नाडिका दंडः 'घटीदंडश्च नाडिका' इति कोशात् । ह्रासे दिनरात्र्योर्ह्रस्वत्वे चतुर्विंशा

१ तन्त्रं प्रधानम् ।

द्वादशाऽर्धपलोन्मानं चतुर्भिश्चतुरंगुलैः ॥ स्वर्णमाषैः कृतच्छिद्रं यावत् प्रस्थजलप्लुतम् ॥ ९ ॥ यामाश्चत्वारश्चत्वारो मर्त्यानामहनी उभे ॥
पक्षः पंचदशाहानि शुक्लः कृष्णश्च मानद ॥ १०॥ तयोः समुच्चयो मासः पितॄणां तदहर्निशम् ॥ द्वौ तावृतुः षडयनं दक्षिणं चोत्तरं दिवि ॥११॥
अयने चाहनी प्राहुर्वत्सरो द्वादश स्मृतः ॥ संवत्सरशतं नृणां परमायुर्निरूपितम् ॥ १२ ॥ ग्रहर्क्षताराचक्रस्थः परमाण्वादिना जगत् ॥
संवत्सरावसानेन पर्येत्यऽनिमिषो विभुः ॥ १३ ॥ संवत्सरः परिवत्सर इडावत्सर एव च ॥ अनुवत्सरो वत्सरश्च विदुरैवं प्रभाष्यते ॥ १४ ॥

प्रत्यहं तद्भेदानां गणयितुमशक्यत्वात् ॥ ८ ॥ नाडिकाया उन्मानमाह । उन्मीयतेऽनेनेत्युन्मानं पात्रम् षट्पलताम्रविरचितम् । पंचगुंजो माषस्तैश्चतुरंगुलायामशलाका रूपेण विरचितैः कृतमूलच्छिद्रं तेन छिद्रेण यावत्प्रस्थपरिमितं जलं प्रविशति तेन प्लुतं निमग्नं भवति तावान् कालो नाडिका । अत्र पलच्छिद्रयोराधिक्ये शीघ्रं निमज्जेद ल्पत्वे च विलंबेनेति पलशलाकयोर्नियमः ॥९॥ अहनी अहोरात्रः ॥ १० ॥ षण्मासा अयनं दिवीत्यस्योत्तरेणान्वयः ॥ ११ ॥ दिवीति देवानामहोरात्रे प्राहुः द्वादश मासाः ॥ १२ ॥ अनेन क्रमेणासौ सूर्यो नित्यमायुः क्षपयतीत्याह । ग्रहाश्चंद्रादयः ऋक्षाण्यश्विन्यादीनि तारा अन्यानि नक्षत्राणि तदुपलक्षितं यत्कालचक्रं तत्र स्थितो ऽनिमिषः कालात्मा विभुरीश्वरः सूर्यो जगद्द्वादशराश्यात्मकं भुवनकोशं पर्येति पर्यटति ॥ १३ ॥ संवत्सरादिभेदश्च सौरबार्हस्पत्यसावनचांद्रनाक्षत्रमासभेदेन द्रष्टव्यः । केचि

दिघटीपरिमाणवत्त्वे वृद्धावष्टाविंशादिपरिमाणवत्त्वे । संध्यांशमुहूर्त्तद्वयं मुहूर्त्तमेकं प्रातर्मुहूर्त्तमेकं सायं च परित्यज्य यामगणना कार्या तत्रापि मुहूर्त्तद्वयत्यागेपि । सप्तषण्नाडिकात्मकप्रहरस्य नियमो न किन्तु कदाचिन्न्यूनः कदाचिदधिकश्च स भवति कदा भवतीति चेत्तत्राह–तद्भेदानां प्रत्यहं गणनमशक्यमेवेत्युत्तरमाहेति भावः ॥ ८ ॥ नाडिकाया घट्याः रजतादिशलाकया छिद्रपुष्टिः स्यादिति सुवर्णस्यापि नियम एवेति ज्ञेयम् । प्रस्थ प्रमाणमप्युक्तं शार्ङ्गधरेण "गुंजाः पञ्चाद्यमाषकः, ते षोडशाक्षः कर्षोस्त्री पलं कर्षचतुष्टयम् । शरावोष्टपलं तद्द्वत्तद्वयं प्रस्थ उच्यते" इति ॥ ९ ॥ अहश्च रात्रिश्चाहनी "नपुंसकमनपुंसकेन–" इत्येकशेषः । मानं शिष्टोक्तं वस्तुपरिमाणं दयते पालयति धर्मावतारत्वाद्धर्मपालकत्वाद्वेति मानदस्तत्संबुद्धौ तथा श्रीमैत्रेयशुकदेवयोर्विदुरपरीक्षितौ प्रति संबुद्धिरियमिति ॥ १० ॥ तयोः शुक्लकृष्णयोः पक्षयोः समुच्चय ऐक्यं तदिति विधेया पेक्षं क्लीबत्वम् । "कृष्णपक्षस्त्वहस्तेषां शुक्लपक्षस्तु शर्वरी । कृष्णपक्षे त्वहःश्राद्धं पितॄणां वर्त्तते नृप" इति हरिवंशे । 'रात्रौ श्राद्धं न कुर्वीत' इति निषेधाच्च शुक्लपक्षस्य रात्रित्वे पितृशयनकालत्वात्स्वाभाविकश्राद्धं कृष्णपक्ष एव कार्यमित्युक्तमनेनोक्तम् । तौ मासौ ऋतवश्च षडेव ते च "हेमंतः शिशिरश्चैव वसंतो ग्रीष्म एव च । वर्षा शरच्च ऋतवो मार्गाद्या द्विद्विमासकाः" इति ज्योतिःशास्त्रे ॥ ११ ॥ दिवि देवलोके अयने दक्षिणोत्तरसं ज्ञे "देवानां तदहोरात्रं दिवा चैवोत्तरायणम् । शुभाशुभे तत्र कार्ये स्याद्रात्रिर्दक्षिणायनम्" इति शुभाशुभे कर्मणी तत्र तयोरुत्तरदक्षिणायनयोः कर्त्तव्ये इत्यर्थः । "मानुषेण तु मानेन यो वै संवत्सरः स्मृतः । देवानां तदहोरात्रम्" इति हरिवंशे । परमायुरिति । अल्पायुर्मध्यमायुः परमायुश्चेति त्रिधा ज्योतिःशास्त्रे नृणामायुरुक्तम् । आत्रिंशतमल्पायुराषाष्टिमध्यमायुस्ततः परमाष्टोत्तरशतमायुः परमायुरिति मतभेदेनाल्पाधिक्यकथनमपि "शतायुर्वै पुरुषः" इति श्रुत्या विरुद्धं न ज्ञेयम् । अत्रशतपदं न स्वार्थपरमानंत्ये तात्पर्यात् । वस्तुतस्त्वायुषोऽल्पाधिक्यं पापपुण्यापेक्षमेव पापेन क्षीयते पुण्येन वर्द्धते च पापं शास्त्रविरुद्धदिवामैथुनादि पुण्यं तद्विहितं रात्रिमैथुनादि तदुक्तं श्रुत्या "प्राणं वा एते प्रस्कंदंति ये दिवा रत्या संयुज्यंते ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या संयुज्यंते" इति प्रश्नोपनिषदि । एवमन्यत्राप्यूह्यम् ॥ १२ ॥ तारा ध्रुवादयः । अश्विन्यादिभिन्नान्यनक्षत्राभावात् । स्वामिचरणैरप्यर्क्षसाहचर्य्यात्तारार्थकनक्षत्रशब्देन ध्रुवादय एवाभिप्रेता इति ध्येयम् ॥ १३ ॥ सौरबार्हस्पत्येति । "दर्शावधिं मासमुशंति चांद्रं सौरं

यः सृज्यशक्तिमुरुधोच्छ्वसयन्स्वशक्त्या पुंसोऽभ्रमाय दिवि धावति भूतभेदः ॥ कालाख्यया गुणमयं क्रतुभिर्वितन्वंस्तस्मै बलिं हरत वत्सरपंचकाय ॥ १५ ॥ विदुर उवाच ॥ पितृदेवमनुष्याणामायुः परमिदं स्मृतम् ॥ परेषां गतिमाचक्ष्व ये स्युः कल्पाद्बहिर्विदः ॥ १६ ॥

त्पुनरेवमाहुः । यदा शुक्लपक्षप्रतिपदि संक्रांतिर्भवति तदा सौरचांद्रमासयोर्युगपदुपक्रमो भवति स संवत्सरः ततः सौरमानेन वर्षे षट् दिनानि वर्धंते चांद्रमानेन वर्षे षट् दिनानि ह्रसंतीति द्वादशदिनव्यवधानादुभयोरग्रपश्चाद्भावो भवति । एवं व्यवधानतारतम्येन पंच वर्षाणि गच्छंति तन्मध्ये द्वौ मलमासौ भवतः पुनः षष्ठः संवत्सरो भवतीति ॥ १४ ॥ एवंभूतः कालात्मा नित्यमप्रमत्तैः पूजनीय इत्याह । य इति । सृज्यं कार्यमंकुरादि तद्विषयां बीजादीनां शक्तिं कालरूपया स्वशक्त्या बहुधोच्छ्वसयन् कार्याभिमुखीं कुर्वन् दिव्यंतरिक्षे धावति । कोऽसौ भूतभेदो महाभूतविशेषस्तेजोमंडलरूपी सूर्यः । किमर्थं धावति । पुंसः पुरुषस्याभ्रमाय भ्रमो मोहस्तन्निवृत्तये आयुरादिव्ययेन विषयासक्तिं निवर्तयन्नित्यर्थः । सकामानां तु गुणमयं स्वर्गादिफलं क्रतुभिर्विस्तारयन् तस्मै संवत्सरपंचकप्रवर्तकाय पूजां कुरुत ॥ १५ ॥ इदं स्वस्वमानेन वर्षशतं गणितमायुर्मानं प्रत्यहं कल्प्यते

तथा भास्करराशिचारात् । त्रिंशद्दिनं सावनसंज्ञमाहुर्नाक्षत्रमिंदोर्भगणभ्रमाच्चा" इति ज्योतिःशास्त्रे मासभेदा उक्ताः । संवत्सर इति सौरगत्या । परिवत्सर इति बार्हस्पत्यगत्याऽनुवत्सर इति चांद्रगत्या । नक्षत्राणां ताराणां च स्वतोगत्यभावाच्चक्रगतिरेव गतिस्तत्रापि नक्षत्राणां सप्तविंशतिदिनमानैर्द्वादशमासैर्वत्सर इति ताराणां संख्याभावात्रिंशद्दिनघटितैः सावनसंज्ञैर्मासैरिडावत्सर इति विवेक इति मतांतरमाह—केचिदित्यादिना युगपदुपक्रम एककालावच्छेदेन प्रारंभः यस्मिन्वर्षे सौरचांद्रयोर्मासोस्समकाले प्रवृत्तिस्स वर्षः संवत्सरस्तदग्रिम परिवत्सर इडावत्सरस्तदग्रिमोऽनुवत्सरस्तदग्रिमो वत्सर इति । ततः पुनरित्थमेव संवत्सरादिप्रवृत्तिरितिज्ञेयम् किञ्च "शकाब्दात्पञ्चभिः शेषे समाद्यादिषु वत्सराः । संपरीदानुपूर्वाश्च तथोदापूर्वकाः स्मृताः ॥ माने गुरोरगाभिदः परिवत्सराणां षष्टिः स्मृता मुनिवरैः प्रभवादिकानाम् । स्यादेकवत्सरमितिर्गुरुमध्यमैकराशेस्तु भोगमितिरेव सदा तथाहि ॥ प्रभवो विभवः शुक्लः प्रमोदोऽथ प्रजापतिः । अंगिराः श्रीमुखो भावो युवा धातेश्वराभिधौ ॥ बहुधान्यः प्रमाथी च विक्रमो वृषसंज्ञकः । चित्रभानुः सुभानुश्च तारणः पार्थिवो व्ययः ॥ सर्वजित्सर्वधारी च विरोधो विकृतस्तथा । खरनन्दनसंज्ञौ च विजयो जयमन्मथौ ॥ दुर्मुखो हेमलंबश्च विलंबोऽथ विकारिकः । शर्वरीप्लवशुभकृच्छोभनाख्यास्ततः परः ॥ क्रोधो विश्वावसुस्तस्मात्पराभवप्लवंगकौ । कीलकः सौम्यसाधारणाख्यौ तस्माद्विरोधकृत् ॥ परिधावी प्रमाथी चानन्दो राक्षस एव च । अनलः पिंगलः कालयुक्तः सिद्धार्थरौद्रकौ ॥ दुर्मतिर्दुन्दुभिश्चैव रुधिरोद्गारिरक्तदृक् ॥ क्रोधनः क्षयकृच्चैषा षष्टिर्हि प्रभवादिका ॥" अथैतदानयनम् । "शकेन्द्रकालः पृथगाकृति २२ घ्नः शशांकनंदाश्वियुगैः ४२९१ समेतः । शराद्रिवस्विन्दु १८७५ हृतः स लब्धः षष्ट्या प्रशेषे प्रभवादयोब्दाः" । इष्टशकं द्विधा विन्यस्यैकत्र द्वाविंशतिगुणं कृत्वा ४२९१ युतं कृत्वा १८७५ विभज्य लब्धेनापरत्र स्थापितं शकं संयोज्य षष्ट्यात्तं गतवर्षवृंदं भवति प्रभवादितो गणनीयमिति सिद्धांतोक्तेः । दिनानां वृद्धिह्रासौ सूर्यसिद्धांतादितोऽवसेयौ पंचांगपत्रिकायां तौ प्रत्यक्षदृश्यौ उभयोश्चांद्रसौरमासयोश्चंद्रसूर्ययोर्वा तारतम्यंन्यूनाधिक्यभावः । तन्मध्ये पञ्चवर्षाणां मध्ये । मलमासावसंक्रांतिकमासौ " संक्रांतिरहितो मासो मलमासः प्रकीर्तितः" इत्युक्तेः ॥ १४ ॥ तत्तद्वर्षविहितधर्मादिसिद्ध्यर्थमेव वत्सरादिनिरूपणं कृतमतस्तत्प्रवर्तकः सूर्यरूपो हरिः सर्वदाऽर्चनीय इत्याह । एवंभूतो ग्रहर्क्षादिगत्याऽखिलजगत्परिक्रमकः अप्रमत्तैः सावधानैः । इत्यर्थ इति । सूर्य इति भावः । इत्यर्थ इति । स्वोदयातादिनायं रविरस्माकमायुः क्षिणोत्यतः सावधानैर्भाव्यमिति बोधयन्निति भावः । वत्सरादिविहितकर्मकालज्ञापनया क्रतुभिरनुष्ठेयैः 'बलिः पूजोपहारयोः' इति विश्वः । बलिमर्घ्यादिपूजोपहारम् । हरत प्रापयत कुरुतेति यावत् । ' हरणं प्रापणं स्तेयं नाशनं च' इत्युक्तेर्हृत्र प्रापणेस्तीति ॥ १९ ॥ पूर्वं 'संवत्सरशतं नृणाम्' इति निर्द्धारितत्वात्पितॄणां देवानाञ्चाधिकायुःप्राप्तेराह—इदमिति । कल्पात्त्रैलोक्यात्परेषां परत्र महर्लोकादिषु स्थितानां सनकादिप्रभृतीनां गतिं

भगवान् वेद कालस्य गतिं भगवतो ननु ॥ विश्वं विचक्षते धीरा योगराद्धेन चक्षुषा ॥ १७ ॥ मैत्रेय उवाच ॥ कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ॥ दिव्यैर्द्वादशभिर्वर्षैः सावधानं निरूपितम् ॥ १८ ॥ चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम् ॥ संख्यातानि सहस्राणि द्विगुणानि शतानि च ॥ १९ ॥ संध्यांऽशयोरंतरेण यः कालः शतसंख्ययोः ॥ तमेवाहुर्युगं तज्ज्ञा यत्र धर्मो विधीयते ॥ २० ॥ धर्मश्चतुष्पान्मनुजान् कृते समनुवर्तते ॥ स एवान्येष्वधर्मेण व्येति पादेन वर्धता ॥ २१ ॥

सृज्यत इति कल्पस्त्रैलोक्यं तस्माद्वाह्यतः । विदो ज्ञानिनः ॥ १६ ॥ योगराद्धेन योगसिद्धेन ॥ १७ ॥ द्वादशभिर्वर्षसहस्रैरित्युत्तरश्लोकसामर्थ्याज्ज्ञातव्यम् । अवधीयत इत्यवधानं संध्या चांशश्च तत्सहितम् ॥ १८ ॥ कृतयुगे चत्वारि सहस्राणि संध्यासंध्यांशयोश्चत्वारिचत्वारीत्यष्टौ शतानि च एवं त्रेतादिष्वपि योज्यम् ॥ १९ ॥ युगस्यादौ संध्या अंतेंऽशः तयोः । उक्तानि शतानि संख्या ययोस्तयोरंतरेण मध्ये युगम् । तस्य विशेषमाह । यत्रेति । गवालंभादिधर्मविशेषो यत्र विधीयत इत्यर्थः । साधारणधर्मस्तु संध्यांशयो रप्यस्त्येव ॥ २० ॥ चतुष्पात्संपूर्णस्त्रेतादिषु पादेनपादेन व्येति ह्रसति पादेनपादेन वर्धमानेनाधर्मेण हेतुना । एतच्च स्वरूपकथनमात्रं वैराग्यार्थं न तु धर्मसंकोचनार्थम् ॥ २१ ॥

दशां 'गतिः स्त्री मार्गदशयोः' इति मेदिनी । दशाया आयुरवयवत्वाल्लक्षितलक्षणया गतिमायुरित्यर्थः । स्युर्जीवंतीत्यर्थः । प्राणधारणानुकूलव्यापारस्यैव सत्तापदार्थत्वादिति ॥ १६ ॥ ननु ममात्रत्यस्य तत्रत्यायुर्ज्ञानं कथं संभवेदिति चेद्योगिनां सर्वज्ञानवत्त्वात्त्वं सर्वं जानासीत्याह—भगवानिति भगवान्भवान् । चक्षुषा ज्ञानेन धीरा ज्ञानिनः ॥ १७ ॥ कल्पबहिर्भूता हि भृग्वादयो ब्रह्मतुल्यायुष एवेति ब्रह्मण आयुर्वक्तुं प्रथमं युगादिमानमाह—कृतमिति । मनुष्याणां षष्ट्यधिकत्रिशतै ३६० वर्षैर्देवानां वर्षस्तैर्द्वादशभिस्सहस्रैस्तेषां चतुर्युगं तच्च मनुष्याणां विंशतिसहस्राधिकं त्रिचत्वारिंशल्लक्षगणितं ४३२०००० वर्षसंख्याकं भवति तावदेव सत्यादिचतुर्युग मष्टाविंशतिसहस्राधिकसप्तदशलक्षवर्षैर्मानुषेण प्रमाणेन सत्यम् । षण्णवतिसहस्राधिकद्वादशलक्षवर्षैस्त्रेता ॥ चतुःषष्टिसहस्राधिकाष्टलक्षवर्षैर्द्वापरं द्वात्रिंशत्सहस्राधिकचतुर्लक्षवर्षैः कलिर्भवतीति तदुक्तं सनत्कुमारसंहितायाम् । "लक्षाणां सप्तदशकमष्टविंशसहस्रकम् । कृतमानं ततस्त्रेतामानं द्वादशलक्षकम् ॥ सहस्राणां षण्णवतिर्द्वापरस्याष्टलक्षकम् । चतुःषष्टिः सहस्राणां कलेर्लक्षचतुष्टयम् ॥ द्वात्रिंशत्सहस्राणि नृमानेन चतुर्युगम् ॥" तत्र सत्यम् १७२८०००, त्रेता १२९६०००, द्वापरम् ८६४०००, कलिः ४३२०००, एवं देवानां युगसहस्रद्वयं ब्रह्मणोऽहोरात्रतस्स च मनुष्याणां पद्माष्टकं चतुःषष्टिकोट्याधिकम् ॥ ८००००६४०००००००० इति ॥ १८ ॥ एवमिति त्रेतायास्त्रीणि सहस्राणि प्रमाणम् । षट्शतानि संध्यासंध्यांशौ द्वापरस्य द्वे सहस्रे प्रमाणम् । चत्वारि शतानि संध्यासंध्यांशौ एवं कलेः सहस्रमेकं प्रमाणं द्वे शते संध्यासंध्यांशाविति विवेकः ॥ १९ ॥ संध्यासंध्यांशयोरंतर्य इति पाठः । प्रायो प्राक्तनबहुपुस्तकेष्वस्ति तदर्थस्तु अंतर्मध्यवर्ती यः काल इति विश्वनाथेन कृतः तस्य युगस्य यत्र येषु । इत्यर्थ इति । यस्य युगस्य योऽसाधारणो धर्मो गवालंभादिरादिना पलपैतृकादि ग्रहः स विधीयते इति भावः । तदुक्तम् "अश्वालंभं गवालंभं संन्यासं पलपैतृकम् । देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्" इति निर्णयसिंधौ यत्तु देवलेन "यावद्वर्णविभागोस्ति यावद्गंगा महीतले । अग्निहोत्रं च संन्यासं तावत्कुर्यात्कलौ युगे" इत्युक्तं तदतीव विरक्तपरमन्यथा वांताशित्वापत्तेर्नारकी स्यादिति ध्येयं सुधीभिः । "संन्यासी नरकं याति त्र्येषणासंयुतो यदि । त्रिवासनो महाघोरे कुंभीपाके वसेच्चिरम्" इत्याद्युक्तेः । यद्वा । यत्र येषु युगेषु ध्यानयज्ञपरिचर्याकीर्त्तनात्मको धर्मविशेषः "कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः । द्वापरे परिचर्य्यायां कलौ तद्धरिकीर्त्तनात्" इत्युक्तन्यायेन साधारणधर्मस्तु गुणकृतः । किञ्च । यस्य युगस्य यो धर्मः स एव तत्संध्यासंध्यांशयोरप्यस्त्येवेत्यपि ज्ञेयम् ॥ २० ॥ "तपः शौचं दया सत्यमिति पादाः प्रकीर्तिताः" इत्युक्तपादचतुष्टयसंबद्धो धर्मः मनुजानुद्दिश्येति शेषः । यथा पादेन पादेन ह्रसंति तथा

त्रिलोक्या युगसाहस्रं वहिराब्रह्मणो दिनम् ॥ तावत्येव निशा तात यन्निमीलति विश्वसृक् ॥ २२ ॥ निशाऽवसान आरब्धो लोककल्पोऽनुवर्तते ॥ यावद्दिनं भगवतो मनून्भुंजंश्चतुर्दश ॥ २३ ॥ स्वंस्वं कालं मनुर्भुंक्ते साधिकां ह्येकसप्ततिम् ॥ मन्वंतरेषु मनवस्तद्वंश्या ऋषयः सुराः ॥ भवंति चैव युगपत्सुरेशाश्चानु ये च तान् ॥ २४ ॥ एष दैनंदिनः सर्गो ब्राह्मस्त्रैलोक्यवर्तनः ॥ तिर्यङ्नृपितृदेवानां संभवो यत्र कर्मभिः ॥ २५ ॥ मन्वंतरेषु भगवान् बिभ्रत्सत्त्वं स्वमूर्तिभिः ॥ मन्वादिभिरिदं विश्वमवत्युदितपौरुषः ॥ २६ ॥ तमोमात्रामुपादाय प्रतिसंरुद्धविक्रमः ॥ कालेनाऽनुगताऽशेष आस्ते तूष्णीं दिनात्यये ॥ २७ ॥

त्रिलोक्या बहिर्महर्लोकप्रभृति ब्रह्मलोकमभिव्याप्य चतुर्युगसहस्रमेकं दिनम् । यद्यस्यां विश्वसृक् ब्रह्मा निमीलति स्वपिति ॥ २२ ॥ तत्र दिनस्थितिमाह निशाऽवसान इत्यादिसार्धैश्चतुर्भिः । चतुर्दश मनून् भुंजन् पालयन् व्याप्नुवन्नित्यर्थः ॥ २३ ॥ किंचिदधिकां युगानामेकसप्ततिम् । मनुवंश्याः पृथ्वीपालकाः क्रमेण भवंति सप्तर्षिप्रभृतयस्तु युगपत्समकालमेव भवंति । सुरेशा इंद्राःताननुवर्तंते ये गंधर्वादयस्तेऽपि ॥ २४ ॥ त्रैलोक्यं वर्तयतीति तथा ॥ २५ ॥ स्वमूर्तिभिर्मन्वंतरावतारैर्मन्वादिभिर्द्वारभूतैराविष्कृतपुरुषकारः सन्विश्वं रक्षति ॥ २६ ॥ रात्रिगतां स्थितिमाह पंचभिः । तमसो मात्रां लेशम् । प्रतिसंरुद्धः प्रत्याहृतो विक्रमो येन । अनुगत

प्रथमस्कंधे निरूपितं निरूपयिष्यति च द्वादशस्कंधे एतच्च धर्मह्रासादिस्वरूपस्य युगस्वरूपस्य कथनमात्रं धर्मह्रासं दृष्ट्वाऽहो प्रतिदिनं धर्मः क्षीयते किमत्र स्थित्येति प्रपंचजिहासार्थमेव. न तु धर्मसंकोचार्थं धर्मः संकोचस्तु कृते यथोक्तं कार्यं त्रेतायां पादोनमर्द्धं द्वापरे पादं कलौ कुर्यादित्येतदर्थं नेति ज्ञेयम् । स्वरूपकथनमात्रमित्यत्र कथनमत्रेति पाठः समीचीनो भातीति ॥ २१ ॥ 'ये स्युः कल्पाद्बहिर्विदः' इत्यस्योत्तरमाह—त्रिलोक्या इति । स्वपिति तदैव स्वपंतं गर्भोदशायिनमनुस्वपिति तथा च चतुःषष्टिकोटयधिकाष्टपद्मसंख्याकमनुष्यप्रमाणवर्षैरहोरात्रो ब्रह्मणो भवतीति सिद्धम् ॥ २२ ॥ तत्राहोरात्रयोर्मध्ये मनून्मन्वन्तराणि । इत्यर्थ इति । भगवतो ब्रह्मणो यावद्दिनं तावच्चतुर्दशमन्वंतराणि व्याप्नुवँल्लोकानां मनुष्याणां कल्पो भवतीति भावः । ब्रह्मणो दिनकल्पनेन गर्भोदशायिनोपि दिनकल्पना ज्ञेया तस्यापि तदंते योगनिद्रास्वीकारात् ॥ २३ ॥ साधिकामित्युक्तेः तत्राधिकभागस्य शतोत्तरपंचसहस्रवर्षाणि द्विचत्वारिंशत्संवत्सराधिकानि दशमासा अष्टौ दिवसाश्चत्वारो यामाश्चतस्रो नांडिकाश्चतस्रः कला अष्टौ काष्ठाः किञ्चिदधिकाः सार्द्धाष्टनिमेषा इति विवेकः । तान् इंद्रान् मनुभुक्तिर्हि देवमानेन द्विपञ्चाशत्सहस्राधिकाष्टलक्षाणि वर्षाणि भवंति मनुष्यमानेन तु त्रिंशत्कोटयः सप्तषष्टिलक्षाणि विंशतिसहस्राणि भवंति तथोक्तं विष्णुपुराणे "त्रिंशत्कोटयश्च संपूर्णाः संख्याताः संख्यया द्विज । सप्त षष्टिस्तथान्यानि नियुतानि महामुने ॥ विंशतिश्च सहस्राणि कालोयमधिकं विनां । मन्वंतरस्य संख्येयं मानुषैर्वत्सरैर्द्विज ॥" इति । हरिवंशे तु—मनूनामहोरात्रादिर्विलक्षणतयैवोक्तस्तथाहि "दिव्यमब्दं दशगुणमहोरात्रं मनोः स्मृतम् । अहोरात्रं दशगुणं मानवः पक्ष उच्यते ॥ पक्षो दशगुणो मासो मासैर्द्वादशभिर्गुणैः । ऋतुर्मनूनां संप्रोक्तः प्राज्ञैस्तंत्त्वार्थकोविदैः ॥ ऋतुत्रयेण त्वयनं तद्द्वयेनैव वत्सरः" इति द्वासप्ततिसहस्राणि दिव्याब्दा एकं मनोर्वर्षं स्यादिति भावः ॥ २४ ॥ ब्राह्मो ब्रह्मकृतः वर्तयति साधयति यत्र दैनंदिनसर्गे दिनेदिने भवतीति दैनंदिनः । अणिपूर्वपदस्य मुम् ॥ २५ ॥ २६ ॥ त्रैलोक्यमात्रसंहारार्थं तमोलेशस्यैवोपादानं युक्तं कालाग्निरुद्रसंकर्षणादिरूपेणोपादायं स्वीकृत्य विक्रमो भूर्भुवःस्वर्लोकरूपो येन स तथा । 'विक्रमो भूर्भुवः स्वश्च' इति द्वितीयस्कंधोक्तेः । अशेषं त्रैलोक्यस्थजीववृंदादि । तूष्णीमास्ते त्यक्तमायिकलीलाविनोद इत्यर्थः ।

तमेवान्वपिधीयंते लोका भूरादयस्त्रयः ॥ निशायामनुवृत्तायां निर्मुक्तशशिभास्करम् ॥ २८ ॥ त्रिलोक्यां दह्यमानायां शक्त्या संकर्षणाग्निना ॥ यांत्यूष्मणा महर्लोकाज्जनं भृग्वादयोऽर्दिताः ॥२९॥ तावत्त्रिभुवनं सद्यः कल्पांतैधितसिंधवः ॥ प्लावयंत्युत्कटाटोपचंडवातेरितोर्मयः ॥३०॥ अंतः स तस्मिन् सलिल आस्तेऽनंतासनो हरिः ॥ योगनिद्रानिमीलाक्षः स्तूयमानो जनालयैः ॥३१॥ एवंविधैरहोरात्रैः कालगत्योपलक्षितैः ॥ अपक्षितमिवाऽस्याऽपि परमायुर्वयःशतम् ॥ ३२ ॥ यदर्धमायुषस्तस्य परार्धमभिधीयते ॥ पूर्वः परार्धोऽपक्रांतो ह्यपरोऽद्य प्रवर्तते ॥ ३३ ॥ पूर्वस्यादौ परार्धस्य ब्राह्मो नाम महानभूत् ॥ कल्पो यत्राऽभवद्ब्रह्मा शब्दब्रह्मेति यं विदुः ॥ ३४ ॥

मनुप्रविष्टमशेषं यस्मिन् ॥ २७ ॥ तदेव स्पष्टयति । तमेवेति । अन्वपिधीयंत इति कर्मकर्तरि प्रयोगः । तिरोहिता भवंतीत्यर्थः । कथम् । निर्मुक्तो रहितः शशी भास्करश्च यथा भवति तथा ॥ २८ ॥ भगवच्छक्तिरूपो यः संकर्षणमुखाग्निस्तेनोष्मणार्दिताः संतो जनलोकं यांति ॥ २९ ॥ कल्पांतेनैधिताः सिंधवः समुद्राः । उत्कट आटोपः क्षोभो येषां ते च ते चंडवातैरीरितोर्मयश्च ॥ ३० ॥ जनलोके आलयो येषां महर्लोकगतानामन्येषां च तैः ॥ ३१ ॥ वैराग्यार्थमाह । एवंविधैरहोरात्रैर्वर्षशतं सर्वेषां प्राणिनामायुषः परमधिकमस्य ब्रह्मणो यदायुस्तदप्यपक्षितमिव क्षीणमिवेति लोकोक्तिः गतप्रायमित्यर्थः ॥ ३२॥ तदेवाह । यदिति ॥ ३३ ॥ पूर्वस्य परार्धस्यादाविति

दिनात्यये दिनांतप्रलये॥२७॥तदेव दिनांतलक्षणप्रलयस्वरूपमेव । इत्यर्थ इति ।"अपिधानतिरोधानपिधानाच्छादनानि च" इत्यमरोक्तेः । स्वयमेव लीयंत इति भावः । तिरोधानप्रकारं पृच्छति कथमिति । अनुवृत्तायां प्राप्तायां सत्याम्॥ २८ ॥ दाहोऽत्र शतवर्षपर्यन्तो ज्ञेयः । ऊष्मणा तापेन ॥ २९ ॥ "चंडो दैत्येऽम्लवृक्षे च तीक्ष्णे कोपे यमानुगे" इति निरुक्तिः । चंडवातैस्तद्विधपवनैः ॥ ३० ॥ योग एव निद्रा तया निमीले, निमीलिते अक्षिणी यस्य स तथा । तीर्थस्तु 'योगनिद्रामीलिताक्षः' इति पपाठ स च सुबोध इति । अन्येषां स्वतस्तत्रत्यानाम्॥ ३१॥ मूले आयुषः परमं परमायुरिति विग्रहः कार्यः । "वयो वर्षविबाल्यादियौवनेषु नपुंसकम्" इति निरुक्तिः । इत्यर्थ इति । अहो सर्वाधिकद्विपरार्द्धायुषो ब्रह्मणोपि यदि कालभयं "यस्माद्बिभेम्यहमपि द्विपरार्द्धधिष्ण्ये" इत्युक्तेस्तदा का वार्त्ताऽत्यल्पायुषः पुंसोऽतो हरिभक्तिवैराग्यादौ यतितव्यमवश्यमिति भावः । ॥ ३२ ॥ तदेव गतप्रायत्वमेव अपक्रांतोऽतीतः परार्द्धज्ञानार्थमादितः संख्यामनुवदति ग्रंथांतरात् । "एकं दश शतं चैव सहस्रमयुतं तथा । लक्षं च नियुतं चैव कोटिरर्बुदमेव च ॥ बृंदं खर्वो निखर्वश्च शंखः पद्मश्च सागरः । अंत्यं मध्यं परार्द्धश्च दशवृद्ध्या यथाक्रमम् ॥" इति गणितरत्नाकरे । अपरो द्वितियः अद्यास्मिन्कल्पे ॥३३॥ वस्तुनः कल्पस्य कथनमात्रम् । प्रभासखंडोक्तेः श्वेतवाराहादिभिः पितृकल्पांतैः त्रिंशत्कल्पैरेव शुक्लप्रतिपदाद्यमावस्यान्तानि त्रिंशद्दिनानि तेषामेव कल्पानां तिथिवारादिवत्पुनःपुनरावृत्त्या मासा मासैर्द्वादशभिर्वर्षम् । पंचाशता वर्षैरेकं परार्द्धं तत्र पूर्वस्य प्रथमस्यादौ ब्राह्म इति श्वेतवाराह एव ब्रह्मजन्मतिथित्वात् । ब्राह्मशब्देनोच्यते सा तिथिश्च चैत्रशुक्लप्रतिपदेव ज्योतिःशास्त्रोक्ता ज्ञेया "तिथीशा वह्निकौ गौरी" इत्यादिना तु तिथीश्वराः कथ्यंते न तु यत्तिथौ यस्य देवस्य जन्म स तस्य तिथेरीश्वर इति नियमो अत्र विहितस्तथादर्शनाभावादेवजन्मतिथयस्तु भिन्ना एव ज्योतिःशास्त्रे वर्णितास्तत्र ब्रह्मजन्मतिथिश्चैत्रशुक्लप्रतिपदुक्ता वाक्यानि तु विस्तरभियेह न लिखितानीति । यत्र ब्राह्मकल्पे । यं ब्रह्माणं शब्दब्रह्मा शब्दानां वेदशब्दानामाविर्भावको ब्रह्मा

तस्यैव चांते कल्पोऽभूद्यं पाद्ममभिचक्षते ॥ यद्धरेर्नाभिसरस आसील्लोकसरोरुहम् ॥ ३५ ॥ अयं ते कथितः कल्पो द्वितीयस्यापि भारत ॥ वाराह इति विख्यातो यत्रासीत्सूकरो हरिः ॥ ३६ ॥ कालोऽयं द्विपरार्धाख्यो निमेष उपचर्यते ॥ अव्याकृतस्याऽनंतस्य अनादेर्जगदात्मनः ॥ ॥ ३७ ॥ कालोऽयं परमाण्वादिर्द्विपरार्धांत ईश्वरः ॥ नैवेशितुं प्रभुर्भूम्न ईश्वरो धाम मानिनाम् ॥३८॥ विकारैः सहितो युक्तैर्विशेषादिभिरावृतः॥ आंडकोशो बहिरयं पंचाशत्कोटिविस्तृतः ॥ ३९ ॥ दशोत्तराधिकैर्यत्र प्रविष्टः परमाणुवत् ॥ लक्ष्यतेंऽतर्गताश्चान्ये कोटिशो ह्यंडराशयः॥४०॥

त्रिभिर्वस्तुकथनमात्रम् ॥ ३४ ॥ पाद्मत्वे हेतुः । यदिति ॥ ३५ ॥ अयं तु द्वितीयस्यादौ कथितः ॥ ३६ ॥ तदेवं कालेन निमित्तेन सृज्यानामायुःपरिमाणमुक्त्वा कालपरिच्छेदरहितं तत्त्वमाह । कालोऽयमिति पंचभिः । उपचर्यते केवलं न त्वनेनापि क्रमेणायुर्गणनं तस्येत्याह । अव्याकृतस्य कार्योपाधिशून्यस्यात एवानंतस्यानादेश्च जगदात्मनो जगत्कारणस्य ॥ ३७ ॥ तत्परिच्छेदे कालस्यासामर्थ्यादित्याह । कालोऽयमीश्वरः समर्थोऽपि भूम्नः परिपूर्णस्येशितुं नैव प्रभुः समर्थः । यतो धाममानिनां देहगेहाभिमानिनामेवेश्वरः ॥ ३८ ॥ भूम्नः इत्युक्तं तत्प्रपंचयन्नाह । विकारैः षोडशभिर्युक्तैरष्टप्रकृतिसंयुक्तैः सहितस्तदारब्ध इत्यर्थः । अयमांडकोशो यत्र प्रविष्टः परमाणुवल्लक्ष्यत इत्युत्तरेणान्वयः । कीदृशः अंतः पंचाशत्कोटियोजनविस्तृतो बहिश्च विशेषादिभिः पृथिव्यादिभिः सप्तभिरावृतः ॥ ३९ ॥ कीदृशैः आंडकोशप्रमाणाद्द

शब्दब्रह्म तदग्रे वक्ष्यते ''शब्दब्रह्मात्मनस्तात'' इत्यादिना द्वादशेऽध्याये स्कंधे च ॥ ३४ ॥ तस्यैव ब्राह्मकल्पस्यैव कल्पः पितृकल्पः तत्कल्पस्यैवांतिमं पितृकल्पमेव पाद्मं वदंति पाद्मत्वे हेतुः यदिति । तेन सर्वेष्वेव कल्पेषु लोकात्मकं पद्मं न संभवति किन्तु क्वापिक्वापीति ज्ञेयम् ॥ ३५ ॥ अयं तु संप्रति वर्त्तमानस्य द्वितीयपरार्द्धस्य एकपंचाशत्तमवर्षस्य प्रथमदिवस इत्यर्थः । अत्र 'पाद्मं कल्पमथो शृणु' इत्युपक्रांतायाम् 'उदाप्लुतं विश्वम्' इत्यादिपाद्मकल्पकथायामेकार्णवोदके एकस्य पद्मस्यैव श्रवणात्तत्रैकस्य ब्रह्मण एवोद्भवाद् 'विलोक्य तत्रान्यदपश्यमान' इत्याद्युक्तेर्महाकल्पायुषां सनकादीनाञ्च तत्रानुपलंभात् । केचित्प्रथमपरार्द्धांते महर्जनस्तपःसत्यानां द्विपरार्द्धांतपर्यंतस्थायिनामनष्टानामपि जलाप्लवनं तथा तत्रत्यानां सर्वेषामेव कल्पायुषां ब्रह्मसाहित्येनैव श्रीनारायणे प्रवेशमाख्याय प्रथमपरार्द्धसमाप्तौ द्वितीयपरार्द्धस्यादिमं श्वेतवाराहमेव पाद्ममाहुः । द्वादशाध्याये च सनकादिमरीच्यादीनां ब्राह्मकल्प इव ब्रह्मतं एवाविर्भावं वक्ष्यते स च तत्र ब्राह्मकल्पकथैवेति वाच्यं पाद्मकल्पकथायाः प्रक्रांतत्वात् । तस्मात् 'तस्यैव चांते' इत्यत्रांतेऽवसाने समाप्तावित्यर्थ इति । अयं त्विति । तुरेवार्थे अयमेव पाद्म एव वाराह इति ख्यातः तत्र हेतुः यत्रासीदिति । द्वितीयस्यापीत्यपिकारेण प्रथमपरार्द्धस्यादिमो ब्राह्मः कल्पोऽपि पाद्म उच्यते इति व्याचक्षते॥३६॥केचिदत्रावतरणिकामेवमाहुस्तथाहि-तदेवं सूक्ष्मं स्थूलं च कालमुक्त्वात्यंतिकं स्थूलं परममहांतं द्विपरार्द्धसंज्ञं कालमाह । यद्यपि कालस्य पर्यवसानासंभवस्तथापि शास्त्रे स एवात्यंतिकस्थूलत्वेन व्यवह्रियते सोऽपि जगदात्मनः परमात्मनो निमेषः। नन्वेवं निमेषादिक्रमेण तस्याप्यायुर्गण्यते किमिति चेन्नहि नहीति । सरसनादंशमाह—उपचर्यते क्वचिन्निमेष इति । ''तस्यैकनिश्वसितकालमथावलंब्य जीवंति लोमविलजा जगदंडनाथाः'' इति ब्रह्मसंहितादौ क्वचिन्निश्वास इत्युपचारमात्रं न तु वस्तुतो निमेषोस्तीत्यर्थः। यतोऽव्याकृतस्य कालकृतविकाररहितस्य अत एव कालकृतविकाररहितत्वादेव अनादेरनंतस्य च । कालपरिच्छेदातीत्यस्येत्यर्थः । तत्र हेतुः जगदात्मनः कालादिसर्वजगत्कारणस्य ॥३७॥ व्यंजितमेवार्थं पुनः स्पष्टयति तत्परिच्छेदेत्यादि । तस्य परमात्मनः परिच्छेदे ईशितुं वशीकर्त्तुम् ॥३८॥ तद्भूमत्वं सर्वजगत्परिछेदकत्वमिति यावत् षोडशभिरेकादशेंद्रियपञ्चभूतरूपैः प्रकृतिमहदहंकारपञ्चतन्मात्रारूपा अष्टौ प्रकृतयः । ''महदाद्याः प्रकृतिविकृतयः सप्त''इति न्यायेन

तदाहुरक्षरं ब्रह्म सर्वकारणकारणम् ॥ विष्णोर्धाम परं साक्षात् पुरुषस्य महात्मनः ॥ ४१ ॥ इति श्रीभागवते महापुराणेष्टादशसाहस्र्यां संहितायां तृतीयस्कंधे विदुरमैत्रेयसंवादे कल्पमानादिवर्णनं नामैकादशोऽध्यायः ॥ ११॥ मैत्रेय उवाच ॥ इति ते वर्णितः क्षत्तः कालाख्यः परमात्मनः॥ महिमा वेदगर्भोऽथ यथास्राक्षीन्निबोध मे ॥ १ ॥ ससर्जाग्रेऽधतामिस्रमथ तामिस्रमादिकृत् ॥ महामोहं च मोहं च तमश्चाऽज्ञानवृत्तयः ॥ २ ॥

शगुणमुत्तरोत्तरोऽधिको येषु तैः न केवलमयमेक एवापि त्वन्येऽपि अंतर्गताः परमाणुवल्लक्ष्यंते ॥ ४० ॥ सर्वेषां कारणानां कारणं विष्णोः धाम स्वरूपम् ॥ ४१ ॥ इति श्रीभागवते तृतीयस्कंधे टीकायामेकादशोऽध्यायः ॥ ११ ॥ द्वादशे तु कुमारादिमनःसर्गासमेधनात् ॥ कायद्वैधेन यौनस्तु मनुसर्गोऽनुवर्ण्यते ॥ १ ॥ १ ॥ अग्र इति ब्रह्मा स्वसृष्टौ प्रथममविद्यावृत्तीः ससर्ज तत्र तमो नाम स्वरूपाप्रकाशः मोहो देहाद्यहंबुद्धिः महामोहो भोगेच्छा तामिस्रं तत्प्रतिघाते क्रोधः अंधतामिस्रं तन्नाशेऽहमेव मृतोऽस्मीति बुद्धिः । तदेवोक्तं वैष्णवे । "तमोऽविवेको मोहः स्यादंतःकरणविभ्रमः ॥ महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणा ॥ मरणं ह्यंधतामिस्रं तामिस्रः क्रोध उच्यते ॥ अविद्या पंचपर्वैषा प्रादुर्भूता महात्मनः" इति ॥ पातंजलेऽप्येत एवोक्ताः । "अविद्यास्मितारागद्वेषाभिनिवेशाः पंच क्लेशाः" इति ॥ श्रीविष्णुस्वामिप्रोक्ता वा अज्ञानविपर्या

स्वकार्यं प्रति महदादीनामपि प्रकृतित्वमननात्‌ इत्यर्थ इति । चतुर्विंशतितत्त्वोत्पादित इति भावः॥३९ ॥४०॥यद्यपि पूर्वोक्तरीत्या महापुरुषोऽपि न कालाधीनस्तथाप्याविर्भावतिरोभावलीलत्वात्तस्याक्षरशब्दवाच्यत्वं नास्ति किं तु तस्य परं स्वरूपं स्वयं भगवानेव नित्याविर्भावत्वात्तद्वाच्य इत्याह तदाहुरिति । महात्मनो विष्णोर्महाविष्ण्वाख्यस्य साक्षात् यत् परं धाम स्वतःसिद्धं परमांशिस्वरूपं तत्त्वं तदेवाक्षरं नित्याविर्भावं ब्रह्मपारिपूर्णं भगवंतमाहुः । यतः सर्वकारणस्य पुरुषस्यापि कारणमिति । स च श्रीकृष्ण एव श्रीदशमे "काहं तमो महदहंखचराग्निवार्भूसंवेष्टिताण्डघटसप्तवितस्तिकायः । क्वेदृग्विधाविगणितांडपराणुचर्या वाताध्वरोमविवरस्य च ते महित्वम्" इति ब्रह्मोक्तेः "नारायणोंगं नरभूजलायनात्" इत्यादि तदुक्तेश्च ॥ ४१ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे एकादशोऽध्यायः ॥ ११ ॥ असमेधनमवृद्धिः । कायस्य ब्रह्मशरीरस्य द्वैधेने द्विधाभवनेन यौनो योनिसंभवः ॥(१)॥ ते तुभ्यं महिमा प्रभावः अथ दशविधसर्गारंभे तथा मे मत्तः निबोध शृणु ॥ १ ॥ अविद्यावृत्तयः पूर्वसिद्धा एव अथ सृष्ट्यारंभे ब्रह्मत आविर्बभूवुरित्याह । अग्रे ब्राह्मकल्पे या अज्ञानवृत्तयस्ताः ससर्ज प्रकटयामास तत्र तासु तत्प्रतिघाते भोगेच्छाप्रतिघाते । तन्नाशे भोगनाशे । स्पष्टमन्यत् । तदविद्यासर्जनं वैष्णवे विष्णुपुराणे महात्मनो ब्रह्मणः । पातंजले योगशास्त्रे एते तमआदय एव नामांतरैरुक्ताः वस्तुतस्त्वविद्याया आवरणविक्षेपावेव द्वौ धर्मौ तावेवाविद्याऽस्मिताशब्दाभ्यामज्ञानविपर्याससशब्दाभ्यां चोच्येते रागद्वेषाभिनिवेशास्त्वंतःकरणधर्मा अपि विक्षेपांशप्राधान्याद्विक्षेपप्रपंचतयैवोच्यंत इति । सूत्रार्थस्तु सूत्रैरेवं कृतस्तथा हि "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या १" सा मुख्या बंधहेतुः यथा "अमरा देवा" इति श्रुत्वाऽनित्येषु नित्यत्वभ्रांत्या देवत्वार्थं कर्म कृत्वा बध्यंते । एवमशुचौ स्त्रीकाये 'स्त्रियो मेध्यास्तु सर्वतः' इति श्रुत्वा तत्र शुचित्वभ्रांत्या बध्यंते । तथा परिणामदुःखे भोगे सुखत्वभ्रांत्या बध्यंते । अनात्मनि बुद्ध्यादावात्मत्वख्यात्यापि बध्यंते । एवं चतुर्विधैवाविद्याबंधमूलमित्यर्थः ॥ १ ॥ "दृग्दर्शनशक्त्योरेकात्मतेवास्मिता २" दृक् शक्तिः पुरुषो दर्शनशक्तिर्बुद्धिःशक्तिशब्दो योग्यतार्थकः भोक्तृभोग्यत्वयोग्ययोरत्यंतविविक्तयोर्दृग्दृश्ययोरविद्याकृता एकात्मता तादात्म्यमिव शब्देनाहमस्मीति भ्रांतिकृतत्वं तादात्म्यस्य द्योतयति साऽस्मितेत्यर्थः। ॥ २ ॥ "सुखानुशयी रागः ३ " अस्मिताकार्यं रागं निरूपयति सुखानुभवे सति स्मृत्या तज्जातीयसुखांतरे तत्साधने वा तृष्णा स रागः सुखमनुशेते विषयी करोतीति सुखानुशयीत्यर्थः ॥ ३ ॥ "दुःखानुशयी द्वेषः ४" दुःखानुभवितुः स्मृत्या दुःखतत्साधनयोर्यः क्रोधः स द्वेष इत्यर्थः ॥ ४ ॥ " स्वरसवाही विदुषोपि तथा रूढोऽभिनिवेशः ५" मूर्खस्य विदुषो वा जंतुमात्रस्य यो मरणत्रासः सोभिनिवेशः यथा मूर्ख

दृष्ट्वा पापीयसीं सृष्टिं नात्मानं बह्वमन्यत ॥ भगवद्ध्यानपूतेन मनसाऽन्यांस्ततोऽसृजत ॥ ३ ॥ सनकं च सनंदं च सनातनमथात्मभूः ॥ सनत्कुमारं च मुनीन्निष्क्रियानूर्ध्वरेतसः ॥ ४ ॥ तान् बभाषे स्वभूः पुत्रान् प्रजाः सृजत पुत्रकाः ॥ तन्नैच्छन् मोक्षधर्माणो वासुदेवपरायणाः ॥ ५ ॥ सोऽवध्यातः सुतैरेवं प्रत्याख्यातानुशासनैः ॥ क्रोधं दुर्विषहं जातं नियंतुमुपचक्रमे ॥ ६ ॥ धिया निगृह्यमाणोपि भ्रुवोर्मध्यात् प्रजापतेः॥ सद्योऽजायत तन्मन्युः कुमारो नीललोहितः ॥७॥ स वै रुरोद देवानां पूर्वजो भगवान् भवः ॥ नामानि कुरु मे धातः स्थानानि च जगद्गुरो ॥८॥ इति तस्य वचः पाद्मो भगवान् परिपालयन् ॥ अभ्यधाद्भद्रया वाचा मा रोदीस्तत् करोमि ते ॥९॥ यदरोदीः सुरश्रेष्ठ सोद्वेग इव बालकः॥ततस्त्वामभिधास्यंति नाम्ना रुद्र इति प्रजाः॥१०॥हृदिंद्रियाण्यसुर्व्योम वायुरग्निर्जलं मही॥सूर्यश्चंद्रस्तपश्चैव स्थानान्यग्रे कृतानि मे ११॥

सभेदभयशोकाः । तदुक्तम् । "स्वादृगुत्थविपर्यास" इत्यादि ॥ २ ॥ न बह्वमन्यत नाभ्यनंदत् ॥ ३ ॥ यद्यपि प्रतिकल्पं सनकादिसृष्टिर्नास्ति तथापि ब्राह्मसर्गत्वा दिहोच्यते । वस्तुतस्तु मुख्यसर्गादय एव प्रतिकल्पं भवंति सनकादयस्तु ब्राह्मकल्पसृष्टा एवानुवर्तंते ॥ ४ ॥ स्वभूर्ब्रह्मा ॥ ५ ॥ अवध्यातोऽवज्ञातः । प्रत्याख्यातमनंगीकृतमनुशासनं यैः ॥ ६ ॥ स चासौ मन्युश्च तन्मन्युः ॥ ७ ॥ ८॥ ९॥ बालक इव ॥ १० ॥ अग्रे पूर्वमेव मे मया कृतानि ॥ ११ ॥

स्याहं सदा भूयासमिति रूढत्रासस्तथा विदुषोऽपि दृश्यते यतः स्वरसवाही सः पूर्वजन्मसुकृतमरणदुःखानुभवजन्यवासनासंघः स्वरसस्तेन वहति प्रवहतीति स्वरसवाही । दृश्यते हि जातमात्रबालस्य मरणाद्भयं तच्च मरणस्मरणं विना नोपपद्यत इत्यर्थः ॥९॥ तदुक्तं प्रथमस्कंधे आदिना भवभेदजभीशुचः "यन्मायया जुषन्नास्ते तं नृसिंहमहं भजे" इति पादत्रयग्रहः॥२॥अविद्यानिवर्त्तिका विद्यैवेति द्योतयितुं विद्यावृत्तयोऽपि तस्मादेव सनकादिरूपेण प्रादुर्बभूवुरित्याह–दृष्ट्वेति । ततोऽज्ञानवृत्त्युत्पत्तेरुत्तरं नाभ्यनंददुत्कृष्टं नामन्यत ॥३॥ ब्राह्मसर्गत्वाद्ब्रह्मसंबंधिसर्गत्वात् । इह पाद्मे महाकल्पायुषां जीवतामेव ब्रह्मादीनां परमेश्वरे प्रवेशात्। पाद्मे कल्पे यथा ब्रह्मा पद्मादुदपद्यत तथा ब्रह्मापि सनकादीनुत्पादयामासेत्यभिप्रेत्यैव श्रीस्वामिनोक्तं यद्यपीत्यादि अतः परं ब्राह्मसर्गत्वादिति सांख्ययोगवैराग्यतपांसीति चत्वार्येव विद्यायाश्चतस्रो वृत्तयस्तासामेव सनकादिचतुष्टयरूपेणाविर्भावः । किं च भक्त्या विना विद्याया वैफल्यात्तद्वृत्तिषु तपआदिष्वपि भक्तिर्गुणीभूता सती तिष्ठेदिति सनकादयोऽपि भक्तिमंत एव दृष्टाः मुख्यभक्तेराविर्भावं तु नारदरूपेणाग्रे वक्ष्यते ॥ ४ ॥ तान्सनकादीन् । स्वशब्देनात्मा गृह्यते तेनात्मभूरित्यर्थः । आत्मा च परमेश्वर एव "तत्त्वमसि" इत्यादेः । तत् प्रज्ञोत्पादनम् । अनिच्छायां हेतुः मोक्षधर्माण इति ननु प्रजापतयोपि मोक्षधर्माणो दृश्यंते तत्राह वासुदेवेति । " देवर्षिभूताप्तनृणां पितॄणां न किंकरो नायमृणी च राजन् । सर्वात्मना यः शरणं शरण्यं गतो मुकुंदं परिहृत्य कर्त्रम्" इत्युक्तेः । ज्ञानयोगः खल्वाविद्यककर्मयोगनिरासक एवेति द्योतितम् ॥ ५ ॥ स ब्रह्मा सुतैः सनकाद्यैः नियंतुं निरोद्धुम् ॥ ६ ॥ अविद्याया निवर्त्तिका यथा विद्या तथा विद्याया अपि निवर्त्तिका क्वचिदविद्या स्यादिति दर्शयितुं विद्योदयवत्यपि ब्रह्माणि अविद्यावृत्तिमुख्यस्य तामिस्राभिधानस्य क्रोधस्य रुद्ररूपेणाविर्भावमाह धियेति । तस्य प्रजापतेर्मन्युरीरिति "मन्युर्दैन्ये युधि क्रुधि"इतिकोशात्।निगृह्यमाणो निरुध्यमानः । सद्यो नियमनात्पूर्वक्षणमेव क्रोधसमये भ्रुकुटी नीलशिरा नेत्रं च लोहितं स्यादित्यतो नीललोहित इति 'कारणगुणाः कार्ये समवयंति'इति न्यायात्। अनेन 'सद्यो जातो नीललोहित' इति श्रौतं नाम द्वयंनिरुक्तं "सद्योजातं प्रपद्यामि शंकरं नीललोहितम्" इति श्रुतेः ॥ ७ ॥ लोके बालस्वभावप्रवर्त्तनाय तस्य तं वक्ति–स वा इति । देवानामिंद्रादीनाम् । धातः पितः । न केवलं मम किं तु सर्वस्येत्याह जगद्गुरो इति । एतेन नामस्थानयोः करणे पितुरेवाधिकार इति ध्वनितम् ॥ ८ ॥ इति पूर्वोक्तं पाद्मः पद्मजः । भद्रया स्निग्धया । तत् नामादि ॥ ९ ॥ यद्यतः । सुरश्रेष्ठेति सर्वदेवपूर्वजत्वात् ॥ १० ॥ हृदीति।हृदादीनामहंकारकार्यत्वादहंकाराधिष्ठातृरुद्रस्य तत्तत्स्थानौचित्यात् । क्रोधपक्षे तु हृत्तु क्रोधस्य जन्मस्थानमेव स तत्र प्रवृद्धो नेत्रपाणिपादेंद्रियेष्वपि तिष्ठति तत्तद्व्यापारसूच्यः तथैवासुषु प्राणेष्वपि नासाश्वा

मन्युर्मनुर्महिनसो महाञ्छिवः क्रतुध्वजः ॥ उग्ररेता भवः कालो वामदेवो धृतव्रतः ॥ १२ ॥ धीर्वृत्तिरुशनोमा च नियुत्सर्पिरिलांऽबिका ॥ इरावती सुधा दीक्षा रुद्राण्यो रुद्र ते स्त्रियः॥१३॥गृहाणैतानि नामानि स्थानानि च सयोषणः ॥ एभिः सृज प्रजा बह्वीः प्रजानामसि यत्पतिः॥ ॥१४॥ इत्यादिष्टः स गुरुणा भगवान्नीललोहितः ॥ सत्त्वाकृतिस्वभावेन ससर्जात्मसमाः प्रजाः ॥१५॥ रुद्राणां रुद्रसृष्टानां समंताद्ग्रसतां जगत् ॥ निशम्याऽसंख्यशो यूथान् प्रजापतिरशंकत ॥१६॥ अलं प्रजाभिः सृष्टाभिरीदृशीभिः सुरोत्तम ॥ मया सह दहंतीभिर्दिशश्चक्षुर्भिरुल्बणैः ॥१७॥ तप आतिष्ठ भद्रं ते सर्वभूतसुखावहम् ॥ तपसैव यथापूर्वं स्रष्टा विश्वमिदं भवान् ॥ १८ ॥ तपसैव परं ज्योतिर्भगवंतमधोक्षजम् ॥ सर्वभूतगुहावासमंजसा विंदते पुमान् ॥ १९ ॥ ॥ मैत्रेय उवाच ॥ एवमात्मभुवादिष्टः परिक्रम्य गिरां पतिम् ॥ बाढमित्यमुमामंत्र्य विवेश तपसे वनम् ॥ २० ॥ अथाभिध्यायतः सर्गं दश पुत्राः प्रजज्ञिरे ॥ भगवच्छक्तियुक्तस्य लोकसंतानहेतवः ॥ २१ ॥

॥ १२ ॥ १३ ॥ सयोषणः सस्त्रीकः । एभिः स्थानैर्नामभिश्च युक्तः प्रजाः सृज ॥ १४ ॥ सत्त्वं बलम् । आकृतिर्नीललोहितता स्वभावस्तीव्रता तेन ॥१५॥ रुद्राणां यूथानि दृष्ट्वाऽशंकत तत्राशंकां प्राप्तः ॥ १६ ॥ १७ ॥ स्रष्टा स्रक्ष्यति ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

साधिक्यसूच्यस्तथा बहिराकाशस्य प्रचंडघोरासिंहादिशब्दैर्वाय्वग्निजलानां शोषकत्वदाहकत्वप्लावकत्वैर्मह्याः स्वविकारैर्मुद्‌ग्ररादिभिस्तथा तेषां संघातैः सिंहव्याघ्रसर्पादिभिः सूर्यचंद्रयोस्तापहिमाभ्यां मारकत्वमस्तीति तेष्वपि क्रोधास्तिष्ठति तप इत्युपलक्षकं सांख्ययोगवैराग्यानामपि तेषामपि भक्तिपाल्यत्वाभावे क्रोधस्थानत्वं दृष्टं 'तपोदीपितमन्यवः' इत्यादिवाक्यैरत एवोक्तम् "आरुह्य कृच्छ्रेण परं पदं ततः पतंत्यतोऽनादृतयुष्मदंघ्रयः" इति ॥ ॥ ११ ॥ ननु नामानीति नामबहुत्वस्य प्रार्थितत्वात्कथं रुद्र इत्येकमेव नाम कृतमिति चेदाह—मन्युरिति । महिनस इति । 'महेशान' इत्यपि पाठः क्वचित् । क्रतुध्वज इत्यत्र ऋतुध्वज इति च । उग्रमसह्यं रेतः कुमारलक्षणं यस्येति । तीर्थस्तु—ऊर्ध्वरेता इति पपाठ तच्च श्रुतिसिद्धं "चकार ऊर्ध्वरेतं विरूपाक्षम्" इति श्रुतेः । मरुरेता इति च पठित्वा "मरुरग्निः कृष्णवर्त्मा शुचिर्वह्निरुषर्बुधः" इति यादवकोशादाग्निवीर्य इति व्याचख्यौ ॥ १२ ॥ हे रुद्र एता रुद्राण्यस्ते स्त्रियः संति ॥ १३ ॥ तीर्थस्तु—सपोषण इति पठित्वा पुष्णात्यनया गार्हस्थधर्ममिति पोषणा भार्येति व्याचष्ट ॥ १४ ॥ गुरुणा पित्रा ब्रह्मणा ॥ १५ ॥ यूथानिति पुंस्त्वमार्षम् ॥ ॥ १६ ॥ उल्बणैर्भयंकरैः ॥ १७ ॥ केचित्तु सृष्टिस्थितिसमये रुद्रस्य लीला न भद्रायेति तपसि प्रवर्त्तना यथा पूर्वं स्रष्टेति विपरीतलक्षणया यथा पूर्वं कल्पांते विश्वं समहरस्तथा इत ऊर्ध्वमपि संहर्त्तासीत्यर्थः । क्वचित्कल्पे शिवोऽपि ब्रह्मेव प्रजाः ससर्जेति केचित् । 'सृजाम सर्वे यदनुग्रहादिदम्' इति वक्ष्यत्यपि पंचमस्कंधे शिव एव—"सृजामि तपसा विश्वं ग्रसामि तपसा पुनः । बिभर्मि तपसा विश्वं वीर्यंमे दुश्चरं तपः" इत्युक्तवता भगवतापि शिवस्यैक्यं स्वेन मत्वैवेदमुक्तमित्यपरे ॥ १८ ॥ किं च । "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः" इति न्यायेन त्वत्तस्तपः शिक्षित्वान्योऽपि निस्तारिष्यतीत्याह—तपसैवेति । तप एव भगवत्साक्षात्कारहेतुरित्युक्तमनेन ॥ १९ ॥ गिरां वेदवाचां पतिम्पालकम् । हरिं परिक्रम्य ध्यात्वा मनसा अमुं ब्रह्माणमामंत्र्य पृष्ट्वा वनमत्र जलं ज्ञेयं वृक्षसमूहस्य तदानीमसंभवात् । तदुक्तं वाराहे "रुद्र प्रजाः सृजस्वेति ब्रह्मणा नोदितो मुहुः । असमर्थ इति प्रोच्य जले रुद्रोऽन्यमज्यत ॥ तपसोऽर्थे तपोहीनः कथं स्रक्ष्याम्यहं प्रजाः" इति । 'जीवनं भुवनं वनम्' इत्यमरः ॥ २० ॥ तपस्तप्त्वा रुद्र एव सृष्टिशेषं करिष्यतीति मत्वा ब्रह्मणा किं तूष्णीं स्थित

मरीचिरत्र्यंगिरसौ पुलस्त्यः पुलहः क्रतुः । भृगुर्वसिष्ठो दक्षश्च दशमस्तत्र नारदः ॥ २२ ॥ उत्संगान्नारदो जज्ञे दक्षोंऽगुष्ठात् स्वयंभुवः ॥ प्राणाद्व सिष्ठः संजातो भृगुस्त्वचि करात्क्रतुः ॥ २३ ॥ पुलहो नाभितो जज्ञे पुलस्त्यः कर्णयोर्ऋषिः ॥ अंगिरा मुखतोऽक्ष्णोऽत्रिर्मरीचिर्मनसोऽभवत् ॥ ॥ २४ ॥ धर्मः स्तनाद्दक्षिणतो यत्र नारायणः स्वयम् ॥ अधर्मः पृष्ठतो यस्मान्मृत्युर्लोकभयंकरः ॥ २५ ॥ हृदि कामो भ्रुवः क्रोधो लोभश्चाधरद च्छदात् ॥ आस्याद्वाक् सिंधवो मेढ्रान्निर्ऋतिः पायोरघाश्रयः ॥ २६ ॥ छायायाः कर्दमो जज्ञे देवहूत्याः पतिः प्रभुः ॥ मनसो देहतश्चेदं जज्ञे विश्वकृतो जगत् ॥ २७ ॥ वाचं दुहितरं तन्वीं स्वयंभू हरतीं मनः ॥ अकामां चकमे क्षत्तः सकाम इति नः श्रुतम् ॥ २८ ॥

॥२२॥२३॥२४॥२५॥ अधरदच्छदादधरोष्ठात् ॥२६॥२७॥ देहांतरेण कृतं सर्गं वक्तुं तद्देहत्यागे कारणमाह । वाचमित्यादिना ॥२८॥

मिति चेदाह–अथेति । अथ तपोर्थे रुद्राज्ञापनानंतरं भगवतो हरेरजोमिश्रसत्त्वशत्त्या युक्तस्य ब्रह्मणः अंगेभ्य इति शेषः॥२१॥तन्नामकथनव्याजेन कर्मयोगस्यापि मरीच्यादिरूपेणाविर्भावमाह मरीचिरिति । ज्ञानवैराग्यतपोयो गकर्मणां साफल्यं भक्त्यैव तथा स्वयमपि निरपेक्षतयैव भक्तिः सर्वफलदात्री स्वयं फलरूपा चेति सर्वांते नारदरूपेण भक्तेराविर्भावमाह तत्र तेषुं पुत्रेषु दशम इति ॥ २२ ॥ उत्संगात्प्रकृतिस्थानात् । उत्कृष्टसंगात्साधुसं गाद्वा । 'आपो नारा इति प्रोक्ताः' इत्याद्युक्तेर्नरपदेन परमेश्वर उच्यते नरस्येदं नारं भगवद्दास्यसख्यादिकं ददातीति नारदो भक्तियोगः त्वाचि त्वचः ॥ २३ ॥ कर्णयोः कर्णाभ्याम् ॥ २४ ॥ भक्तियोगस्य कर्मयोगस्य च विहितस्यानुष्ठानाननुष्ठानाभ्यां धर्मोऽधर्मश्च भवतीति धर्मोत्पत्तिमाह–धर्मः स्तनादिति । सर्वोत्कृष्टस्थानस्य हृदयस्याप्युत्तमप्रदेशाददतिप्रियाद्धर्मस्यैव विहितस्याकरणे निषिद्धस्य करणेऽधर्मो भवतीत्यधर्मस्याप्युत्पत्तिमाह–अधर्म इति । पृष्टतोऽपकृष्टस्थानादनतिप्रियात् । यस्मादधर्मात् मृत्युर्देहवियोगकर्त्तृदेवता । यत्रेति पञ्चम्यर्थे त्रल् । तेन यस्माद्धर्मात्स्वयं नारायणः कृष्ण इत्यर्थः । "कृष्णो नारायणः स्वयम्" इति तंत्रात् ॥ २५ ॥ अधर्मः कथं स्यादिति तत्प्रवर्त्तकानां कामादीनामुत्पत्तिमाह–हृदीति । हृदि मनसि 'स्वांतं हृन्मानसं मनः' इत्यमरः । मनसः पुरुषानधीनत्वात्तत्प्रभवस्य कामस्योन्मूलनं दुःशकमिति द्योतयति । क्रोधादीनामपि मनस एवोत्पन्नानां भ्रूप्रभृति प्राकट्यस्थानमेवेति ध्येयम् । कामक्रोधादिमत्त्वेपि शास्त्रज्ञानमयं पांडित्यं भवत्येवेति दर्शयितुं सरस्वत्या उत्पत्तिमाह–आस्यादिति । पायोर्गुदेंद्रियात् । निर्ऋतिर्नरकाधिष्ठातृदेवविशेषो दक्षिणपश्चिमांतरालविदिगधिष्ठातृदेवो वा । अघानां दुःखानां पापानां रक्षसां वाश्रयः स्वामी ॥ २६ ॥ सदा राजसतामसस्वभाववतामपि कदाचित्किंचित्सात्त्विकभावोदयः स्यादिति दर्शयितुमाह-छायायाः कांतेः 'छाया कांतिर्द्युतिश्छविः' इत्यमरादेः। प्रभुर्योग बलसमर्थः ॥ २७ ॥ किं चात्र भगवन्महत्त्वविद्भिरसुरजनमोहनस्यापि शास्त्रविषयत्वात्तदवश्यं कार्यमिति नियममवेक्ष्यमाणस्य ब्रह्मणः कामिजनविडंबनमाह–वक्ति परबोधकवाक्यमिति वाक् मानुषी तां "जिह्वायां च सरस्वत्यां नार्या वाचि च वाग्ध्वनिः" इति निरुक्तेः । दुह्यते प्रार्थ्यते नरैति दुहिता तां 'दुहिरर्दने' अर्दनं प्रार्थनं पीडनं च । 'सुतानार्योरथ गवि दुहिता प्रोच्यते बुधैः' इति । आर्षत्वाद्दुहेः प्रपूरणार्थस्येटि रूपं वा तथा च शृंगाररस दोग्ध्रीं तन्वीं सूक्ष्मांगीम् अकामामकुत्सिताम् । कामयते सर्वमिति कामाऽसाध्वी तद्भिन्नाऽकामेति सकामः कामार्त्तःसन् इति नो वार्त्तामात्रं श्रुतं हे क्षत्तः न तु तथ्यमित्यर्थः । तथात्वे 'न मे हृषीकाणि पतंत्यसत्पथे' इति तदुक्ति विरुद्धा स्यात्सा च तदीयभार्यैवं "इतीरेशेऽतर्क्ये"इत्यत्र तथैव वक्ष्यमाणात्वात्पाद्मेपि स्वराशब्देन सरस्वत्येवोक्ता सावित्र्यास्तत्र पृथगुक्तेरतस्तयोः परस्परशापाद्यपि तत्र श्रूयते सप्तशतस्तोत्रपाठनिर्णये नागोजिभट्टेनोक्तं ब्रह्मणः सरस्वती विष्णोर्लक्ष्मी रुद्रस्य गौरी पत्नीत्यौसर्गिकीरीतिरिति । "स्वरया सह संभूय विरिंचोऽण्डमजीजनत्" इति प्राधानिकरहस्योक्तेश्च । "प्रजापतिः स्वां दुहितरमगमत्" इति श्रुतिरप्येवमेव व्याख्येया । विश्व नाथस्तु-अतिविदुषामतिविवेकिनामपि कामजयो न भवेदतः कन्याभगिन्यादिभिरपि सह रहसि न वसेदिति बोधयितुमाह–वाचमिति । इति नः श्रुतमित्यनेन तद्वक्तुमनर्हमपि तज्जयज्ञानार्थमपराधाद्बिभ्यदेवादोषदृगेव ब्रवी

तमधर्मे कृतमतिं विलोक्य पितरं सुताः ॥ मरीचिमुख्या मुनयो विश्रंभात्प्रत्यबोधयन् ॥ २९ ॥ नैतत्पूर्वैः कृतं त्वद्य न करिष्यंति चापरे ॥
यत्त्वं दुहितरं गच्छेरनिगृह्यांगजं प्रभुः ॥ ३० ॥ तेजीयसामपि ह्येतन्न सुश्लोक्यं जगद्गुरो ॥ यद्वृत्तमनुतिष्ठन्वै लोकः क्षेमाय कल्पते ॥ ३१ ॥
तस्मै नमो भगवते य इदं स्वेन रोचिषा ॥ आत्मस्थं व्यंजयामास स धर्मं पातुमर्हति ॥ ३२ ॥ स इत्थं गृणतः पुत्रान् पुरो दृष्ट्वा प्रजापतीन् ॥
प्रजापतिपतिस्तन्वं तत्याज व्रीडितस्तदा ॥ तां दिशो जगृहुर्घोरां नीहारं यद्विदुस्तमः ॥ ३३ ॥ कदाचिद्ध्यायतः स्रष्टुर्वेदा आसंश्चतुर्मुखात् ॥
कथं स्रक्ष्याम्यहं लोकान् समवेतान् यथा पुरा ॥ ३४ ॥

॥२९॥ तत्त्वतो ये पूर्वे ब्रह्मादयोऽन्ये वा तैरेतन्न कृतम् अपरे त्वत्तोऽर्वाचीनास्तेऽपि न करिष्यंति । अंगजं कामम् ॥ ३० ॥ तेजीयसामतितेजस्विनामपि सुश्लोक्यं सत्कीर्तिदं न भवति । येषां तेजीयसां वृत्तम् ॥३१॥ ३२ ॥ तन्वं तनुम् ॥ ३३ ॥ कथं स्रक्ष्यामीत्यभिध्यायतः स्रष्टुर्ब्रह्मणश्चतुःसंख्यायुक्तान्मुखात् समवेतान्सुसंगवान् । यथा पुरा प्राक्कल्पे ॥ ३४ ॥

मीति द्योतितम् । दोषदृष्ट्या तु मरीचिपुत्राणामिवाधःपातः स्यादिति भीषणा च ज्ञेया तथा नः श्रुतमित्येतत्कल्पभवानां केषांचिद्दृष्टमप्येतन्न भवेदिति प्रसंगात्पूर्वकल्पगतमेवैतत्कर्म संप्रत्युक्तमिति भावः । चतुश्श्लोकीभागवतोपदेशप्राप्त्यनंतरमेतदघटमानात् । यदुक्तं भगवता "एतन्मतं समातिष्ठ परमेण समाधिना । भवान्कल्पविकल्पेषु न विमुह्यति कर्हिचित्" इति व्याचख्यौ ॥ २८ ॥ अधर्मे कृतमतिं पुत्रादिसमक्षं निजस्त्र्यनुगमनमप्यधर्म एवेति भावः । विस्रंभात् जन्यजनकसंबंधोत्थसख्यात् न तु पापदर्शनोत्थकोपादित्यर्थः । यद्वा। महतां विकर्मापि नापकारकमिति विश्वासात् "विस्रंभः केलिकलहे विश्वासे प्रणयेऽपि च" इति मेदिनी । एतेन मरीच्यादीनां वस्तुतोऽपराधाभाव एवोक्तः ॥ २९ ॥ पूर्वैस्त्वत्प्राक्तनैर्ब्रह्मभिः । अपरे त्वदुत्तरकालीनाः एतत्पुत्रादिसमक्षं स्त्र्यनुगमनं दुहितरं भार्यां यथाश्रुतार्थस्त्वासुरजनानां शास्त्राप्रवृत्त्यर्थमेव अन्यथा "भवान्कल्पविकल्पेषु न विमुह्यति कर्हिचित्"इति भगवदुक्तिव्याकोपस्स्यादिति भावः । प्रभुर्निरोद्धुं समर्थः ॥ ३० ॥ नन्वेकस्यैवैतादृक्कर्माकीर्त्तिकरं न बहूनामिति चेदाह—तेजीयसामिति । बहुभिरनुष्ठितमपि सुरापानादि यथा निंद्यमेव तथेदमपीति । एतेन " तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा " इत्युक्तेर्दोषाभावेऽपि निंदा भवेदेवेत्युक्तम् । जगद्गुरो इति । यत्किञ्चिल्लोकगुरोरेतन्न शोभते किमुत जगद्गुरोरिति कैमुत्यमाह । " अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न हि" इत्युक्तेर्लोकविद्विष्टधर्मोपेतकर्मणोऽपि निषेधो यदि किमुताधर्मोपेतकर्मण इति कैमुत्यांतरं चोक्तम् ॥ ३१ ॥ एवं प्रबोधितोपि ब्रह्मा यदा न प्राबुध्यत तदा भगवत्कृपां विना कामशातिरशक्येति सिद्धांतमपेक्ष्य ते मुनयो भगवंतमेव प्रार्थयामासुरित्याह—तस्मा इति । इदं विश्वम् ॥ ३२ ॥ स ब्रह्मा पुरोऽग्रे । महापातकस्य प्राणांतमेव प्रायश्चित्तं मुख्यमिति ज्ञापयितुं तनुं तत्याजेत्युक्तम् । किं च । द्विपरार्द्धमध्ये तस्य तनुत्यागासंभवात् 'द्विपरार्द्धपरायुषः' इत्युक्तेर्भावत्याग एव तनुत्याग इति ध्येयं सुधीभिः । व्रीडितो लज्जितः तां तनुं घोरां दृष्टिनिरोधकत्वादंधकारसदृशत्वेन भयदां किं तदित्यपेक्षायामाह—यन्नीहारं धूमाकारं तम इति लोका विदुः ॥ ३३ ॥ ब्रह्मणः 'तेजीयसां न दोषाय' इत्यत्रोक्तं तेजीयस्त्वं दर्शयति कदाचिदिति । यथा पुराहमसृजं तथा कथं स्रक्ष्यामीति चिंतयतः वेदेषु सर्वसृष्टिप्रकारः स्थित एवानेनायं सर्वं

चातुर्होत्रं कर्मतंत्रमुपवेदनयैः सह ॥ धर्मस्य पादाश्चत्वारस्तथैवाऽऽश्रमवृत्तयः ॥ ३५ ॥ विदुर उवाच ॥ स वै विश्वसृजामीशो वेदादीन्मुखतोऽसृजत ॥ यद्यद्येनासृजद्देवस्तन्मे ब्रूहि तपोधन ॥ ३६ ॥ मैत्रेय उवाच ॥ ऋग्यजुःसामाथर्वाख्यान् वेदान् पूर्वादिभिर्मुखैः ॥ शस्त्रमिज्यां स्तुतिस्तोमं प्रायश्चित्तं व्यधात्क्रमात् ॥ ३७ ॥ आयुर्वेदं धनुर्वेदं गांधर्वं वेदमात्मनः ॥ स्थापत्यं चासृजद्वेदं क्रमात्पूर्वादिभिर्मुखैः ॥ ३८ ॥

चातुर्होत्रं होत्रादीनां चतुर्णां कर्म कर्मतंत्रं यज्ञविस्तारः उपवेदैर्न्यायैश्च सह आश्रमास्तद्वृत्तयश्चासन्॥ ३५॥ मुखतो मुखेभ्यः॥ ३६॥ चातुर्होत्रसृष्टिक्रममाह। शस्त्रमप्रगीतमंत्रस्तोत्रं होतुः कर्म इज्यामध्वर्योः कर्म स्तुतिस्तोमं स्तुतिः संगीतं स्तोमं तदर्थमृक्समुदायं त्रिवृत्स्तोमो भवतीत्यादिविहितमुद्गातृप्रयोज्यम्। प्रायश्चित्तं ब्राह्मम्॥ ३७॥ उपवेदक्रममाह।

लक्ष्यतीति भगवता तन्मुखाद्वेदाविर्भावः कारित इति ॥ ३४ ॥ होता उद्गाता अध्वर्युर्ब्रह्मेति चत्वारो होतारस्तेषां चतुर्णां न्यायैरुपोद्घातग्रंथैस्तर्कसांख्यपातंजलादिमतविधायकैः सूत्रैस्सहेत्यर्थः । ब्रह्मणैव सृष्ट्वा गौतमादिभ्यस्संक्षेपत उपदिष्टानि तैस्तानि विस्तारितान्यतस्तत्तन्नाम्ना प्रसिद्धिं गतानीति भावः ॥ ३५ ॥ तपोधनेति । तपोजन्यज्ञानबलेन सर्वं वक्तुं समर्थोसीत्याह—यद्यद्वस्तु येनयेनास्येन यद्यदितिद्विरुक्त्याग्रेपि द्विरुक्तिरेव ज्ञेयेति ॥ ३६ ॥ अप्रगीतमिति नाममंत्रात्मकं स्तोत्रम्। इज्या यजनम् । यद्वा । क्रियमाणकर्म पुरतः क्रियमाणस्तुतिविशेषः । स्तोमः अन्यदाक्रियमाणा स्तुतिरिति । आदिनाऽन्येऽपि मंत्रा ज्ञेयाः । उद्गात्रा प्रयोज्यं पाठ्यमित्यर्थः । ब्राह्मं ब्रह्मणः कर्म क्रमात्पूर्वादिमुखक्रमेण पूर्वमुखादृग्वेदं दक्षिणमुखाद्यजुर्वेदमेवमग्रेऽपि ज्ञेयम् । वेदादीनित्यनादिनोपवेदादिग्रहः ॥ ३७ ॥ आयुर्वेदं चिकित्साशास्त्रं तच्चाष्टस्थानात्मकं सूत्रशारीरैंद्रियचिकित्सानिदानकल्पप्रासिद्धिभेदात् । स्वरूपं च सूत्रादीनां तत एवावसेयम् । धनुर्वेदं शस्त्रशास्त्रं यद्यपि धनुःशब्दश्चापे रूढस्तथापि चतुर्विधायुधेषु वर्त्तते तच्चतुर्विधं मुक्तममुक्तं मुक्तामुक्तं मंत्रमुक्तं च तत्र मुक्तं चक्रादि अमुक्तं खड्गादि मुक्तामुक्तं शल्यावांतरभेदादि मंत्रमुक्तं शरादि तत्र मंत्रमुक्तमस्त्रमन्यत्सर्वं शस्त्रमिति । गांधर्वं—गीतनृत्यवाद्यप्रकारबोधकं शास्त्रं तल्लक्षणं तु "यदुक्तं ब्रह्मणः स्थानं ब्रह्मग्रंथिश्च यो मतः । तन्मध्ये संस्थितः प्राणः प्राणाद्वह्निसमुद्भवः ॥ वह्निमारुतसंयोगान्नादः समुपजायते । न नादेन विना गीतं न नादेन विना स्वरः ॥ न नादेन विना नृत्यं तस्मान्नादात्मकं जगत् ॥ पवनाज्जायते नादो नादतः स्वरसंभवः । स्वरात्संजायते रागः स रागो जनरंजकः॥१॥ पदस्य स्वरसघातस्तालेनानुमितस्तथा । प्रयुक्तश्चावधानेन गांधर्वमभिधीयते ॥ सप्त स्वरास्त्रयो ग्रामा मूर्छनाश्चैकविंशतिः । द्वाविंशतिश्च श्रुतय एतेभ्यो रागसंभवः ॥ षड्जर्षभकगांधारमध्यपंचमधैवताः । निषादश्चेत्यमी सप्त तंत्रीकंठोत्थिताः स्वराः ॥ षड्जादयः स्वराः सप्त ग्रामौ षड्जमध्यमौ । केचिद्गांधारमप्याहुः स तु नेहास्ति भूतले॥ चतुर्दशैव श्रुतयस्तावन्मानाश्च मूर्च्छनाः । गीयंते मानवैर्भूमावान्यास्तु त्रिदशालये ॥ स्वयं यो राजते नादः स स्वरः परिकीर्त्तितः।स्वरैश्च निखिलं व्याप्तं तद्विज्ञेयं पृथक्पृथक्॥ उच्चैर्निषादगांधारौ नीचैरृषभधैवतौ । शेषास्तु स्वरिता ज्ञेयाः षड्जमध्यमपञ्चमाः॥ षड्जं वदेन्मयूरो हि ऋषभं चातको वदेत्।अजा वदति गांधारं क्रौंचो वदति मध्यमम् ॥ पुष्पसाधारणे काले कोकिलः पञ्चमं वदेत् । दर्दुरो धैवतं चैव निषादञ्च वदेद्गजः ॥ हास्यशृंगारयोः कार्यौ स्वरौ पंचममध्यमौ । षड्जर्षभौ तथा ज्ञेयौ वीररौद्राद्भुते रसे ॥ गांधारश्च निषादश्च कर्त्तव्यौ करुणारसे । धैवतश्चैव कर्त्तव्यो बीभत्से च भयानके॥ चतुःश्रुतिस्त्रिश्रुतिश्च द्विश्रुतिश्च चतुःश्रुतिः । चतुःश्रुतिश्चत्रिश्रु द्विश्रुतिश्चेति ते स्वराः" रागास्तु "भैरवः पञ्चमो नाटो मल्लारो गौडमालवः।देशाख्यश्चेति षड्रागाः प्रोच्यंते रागवित्तमैः ॥ वंगपालो गुणकरी मध्यमादिर्वसंतकः।धन्याश्रीश्चेति पंचैते रागा भैरवसंश्रयाः॥ललिता गुर्जरी देशी वराटी रामकृत्तथा।मता रागार्णवे रागाः पञ्चैते पञ्चमाश्रयाः ॥ नटनारायणः पूर्वं गांधारः सालगस्तथा । ततः केदारकर्णाटी पञ्चैते नाटसंश्रयाः ॥ मेघमल्लारिका मालकौशिकः प्रतिमंजरी । आसावरी च पञ्चैते रागा मल्लारसंश्रयाः ॥ हिंदोलस्त्रिगुणावाली गौडी कोलाहलास्तथा । पञ्चैते गौडनामानं रागमाश्रित्य संस्थिताः ॥ भौपाली हारिपालश्च कामोदी धोरणिस्तथा । वेलीवली च पञ्चैते रागा देशाख्यसंश्रयाः ॥ अन्येऽपि बहवो रागा जाता देशविशेषतः । मारूप्रभृतयो लोके ते च भद्रेशिकास्स्मृताः ॥ न रागाणां न तालानांमंतः कुत्रापि विद्यते । संतोषाय

इति हासपुराणानि पंचमं वेदमीश्वरः ॥ सर्वेभ्य एव वक्रेभ्यः ससृजे सर्वदर्शनः ॥ ३९ ॥ षोडश्युक्थौ पूर्ववक्रात्पुरीष्यग्निष्टुतावथ ॥ आप्तोर्यामातिरात्रौ च वाजपेयं सगोसवम् ॥ ४० ॥ विद्या दानं तपः सत्यं धर्मस्येति पदानि च ॥ आश्रमांश्च यथासंख्यमसृजत्सह वृत्तिभिः ॥ ४१ ॥ सावित्रं प्राजापत्यं च ब्राह्मं चाथ बृहत्तथा ॥ वार्तासंचयशालीनशिलोंछ इति वै गृहे ॥ ४२ ॥ वैखानसा वालखिल्यौदुंबराः फेनपा वने ॥ न्यासे कुटीचकः पूर्वं बह्वोदो हंसनिष्क्रियौ ॥ ४३॥

आयुर्वेदमिति । आत्मनो मुखैः स्थापत्यं विश्वकर्मशास्त्रम् ॥ ३८ ॥ ३९ ॥ कर्मतंत्रक्रममाह । षोडश्युक्थाविति। पुरीषी चयनम्। अग्निष्टुदग्निष्टोमः ॥ ४० ॥ विद्येति शौचम्। "क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता" इति स्मृतेः दानमिति दया। "भूताभयप्रदानस्य कलां नार्हति षोडशीम्" इति वचनात्। एवं च। सत्यमिति "तपः शौचं दया सत्यमिति पादाः कृते कृताः" इति प्रथमस्कंधोक्तेरविरोधः॥ ४१ ॥ब्रह्मचर्याद्याश्रमेष्वेकैकस्य चातुर्विध्यमाह। सावित्रं ब्रह्मचर्यमुपनयनादारभ्य गायत्रीमधीयानस्य त्रिरात्रं प्राजापत्यं व्रतान्याचरतः संवत्सरं ब्राह्मं वेदग्रहणांतं बृहन्नैष्ठिकं वार्ता अनिषिद्धकृष्यादिवृत्तिः संचयो याजनादिवृत्तिः शालीनं अयाचितवृत्तिः शिलोंछः पतितकणिशकणवृत्तिः। एकवचनमार्षम्। इत्येता गृहे वृत्तय इति। यद्वा शिलोंछ इति द्वंद्वैक्ये सप्तमी एवं वृत्तिभेदे सति गृहे स्थिता भवंतीत्यर्थः॥ ४२॥ वने स्थिताश्चत्वारः तत्र वैखानसा अकृष्टपच्यवृत्तयः वालखिल्या नवेऽन्ने लब्धे पूर्वसंचितान्नत्यागिनः औदुंबराः प्रातरुत्थाय यां दिशं प्रथमं पश्यंति तत आहृतैः फलादिभिर्जीवंतः फेनपाः स्वयं

शिवस्यैते ज्ञेया बुधजनैः" इत्यलम्पल्लवितेन किञ्चिद्दशमस्कंधेप्येतदुपयोगि वर्णयिष्यामः । विश्वकर्मशास्त्रं हर्म्यादिनिर्माणकाष्ठविकारकल्पनास्वर्णादिभूषणरीतिकांस्यादिपात्रलोहकारकृत्यकुलालकर्मचित्रनिर्माणलेखनादिकर्मणां प्रकारबोधकं शास्त्रमित्यर्थः ॥ ३८ ॥ ईश्वरः समर्थः सर्वदर्शनः सर्वज्ञः सर्वेभ्यो मुखेभ्यः सर्ववेदाविवरणरूपत्वात्सर्वमुखानिस्सृतवेदानां व्याख्यानं सर्वमुखैरेव कर्तुमुचितमित्यर्थः ॥ ३९ ॥ षोडश्यादयो यज्ञविशेषसंज्ञाः तत्त्वं चैषां कल्पतोऽवसेयम्। गोसवेन सहितं सगोसवम्। क्रमात्पूर्वादिमुखेभ्यो द्वयोर्द्वयोराविर्भावो ज्ञेयः ॥ ४० ॥ विद्याशब्दस्य शौचार्थत्वे याज्ञवल्क्यस्मृतिं प्रमाणयति—क्षेत्रज्ञेति। क्षेत्रज्ञो जीव ईश्वरः। परमात्मा तयोस्तत्त्वमस्यादिमहावाक्यविचारोत्थाहं ब्रह्मास्मीति ज्ञानात्। परमा यतः पुनर्गर्भवासादेरशुचित्वापादकस्य समूलोन्मूलिनीति स्मृत्यर्थः। दानदयाशब्दयोरेकार्थत्वं जीवाभयप्रदानस्यैव दयापदार्थत्वात्। तदुक्तं 'भूताभय—' इति। इत्थं व्याख्याने पूर्वोक्तविरोधाभावमाह—एवं चेति। यथासंख्यं ब्रह्मचर्यादिक्रमेण वृत्तिभिर्भिक्षाकृष्यादिभिः सह ॥ ४१ ॥ यथासंख्यमित्यनेनाश्रमचतुष्टयभेदोपि विवक्षितस्तत्र ब्रह्मचर्य्यावांतरभेदमाह—सावित्रमिति। त्रिरात्रमिति स्वामी। तीर्थस्तु—गुरुकुले द्वादशवर्षपर्यंताध्ययनं सावित्रमाह—व्रतानि ब्रह्मचारिविहितानि कृच्छ्रादीनि गुरुसेवादीनि वा। तीर्थस्तु—एकभार्यर्तुगमनं प्राजापत्यमाह—ब्राह्मं यावद्विवाहं वेदाध्ययनं नैष्ठिकं यावज्जीवं यथोक्तधर्माचरणपूर्वकं स्त्रीसंगादित्यागरूपमेव। ब्रह्मचारिधर्मास्तु सप्तमैकादशस्कंधतोऽवसेयाः । अनिषिद्धकृषिस्तु सपत्रशाखाचालिताष्टगवकृष्टक्षेत्रे नीलीतिलादिव्यतिरिक्तशुद्धधान्योत्पादनं प्रपंचस्त्वस्य सप्तमस्कंधे भविष्यतीति। आदिनाऽनिषिद्धवाणिज्यग्रहस्तदपि तत्रैव प्रपंचयिष्यामः। याजनादीत्यत्रादिनाध्यापनादिग्रहः। कणिशो धान्यवल्ल्यादिशिलोंछा इति बहुवचनांतौचित्ये एकत्वमार्षमित्यर्थः। आर्षस्यागतिकगतित्वं मत्वाह। यद्वेति। इत्यर्थ इति—एता एव गृहस्थस्य वृत्तयः ब्रह्मणस्यैव प्रधानत्वात्तद्वृत्तिकथनमत्रान्येषां सप्तमादौ वक्ष्यति केचित्तु "वार्त्ता यायावरं ज्ञेयमैकाहित्वमसंचयः। शालीनं वत्सरान्नं स्वामित्यक्तं शिलोंछनम्" इत्याहुः। यायावरं भैक्ष्यचर्याविशेषः। ऐकाहिकं तत्र दिनार्जितव्रीह्यादेस्तत्तद्दिन एव व्ययः। शालीनं सकुटुंबस्य संवत्सरभोजनयोग्यं कुसूलादिस्थापितान्नम्। स्वामित्यक्तं छेदनाद्यवशिष्टं व्रीहिवल्ल्यादि तेन वर्त्तनमित्यर्थः ॥४२॥ वानप्रस्थभेदमाह—तत्र

आन्वीक्षिकी त्रयी वार्ता दंडनीतिस्तथैव च ॥ एवं व्याहृतयश्चासन् प्रणवो ह्यस्य दह्नतः ॥ ४४ ॥ तस्योष्णिगासील्लोमभ्यो गायत्री च त्वचो विभोः ॥ त्रिष्टुब्मांसात्स्नुतोऽनुष्टुप् जगत्यस्थ्नः प्रजापतेः ॥ ४५ ॥ मज्जायाः पंक्तिरुत्पन्ना बृहती प्राणतोऽभवत् ॥ स्पर्शस्तस्याऽभवज्जीवः स्वरो देह उदाहृतः ॥ ४६ ॥ ऊष्माणमिंद्रियाण्याहुरंतःस्था बलमात्मनः ॥ स्वराः सप्त विहारेण भवंति स्म प्रजापतेः ॥ ४७ ॥

पतितैः फलादिभिर्जीवंतः कुटीचकः स्वाश्रमकर्मप्रधानः बह्वोदः कर्मोपसर्जनीकृत्य ज्ञानप्रधानः हंसो ज्ञानाभ्यासनिष्ठः निष्क्रियः प्राप्ततत्त्वः एते च सर्वे यथोत्तरं श्रेष्ठाः ॥ ४३ ॥ न्यायादीनां पूर्वादिक्रमेणोत्पत्तिमाह। आन्वीक्षिकीति आन्वीक्षिक्याद्या मोक्षधर्मकामार्थविद्या भूर्भुवरिति व्यस्तास्तिस्रः समस्ता चतुर्थी । यथाहाश्वलायनः । एवं व्याहृतयः प्रोक्ता व्यस्ता समस्ता इति । यद्वा मह इति चतुर्थी । तथा च श्रुतिः । "भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयस्तासामु ह स्मैतां चतुर्थीमाह । वाचमस्य प्रवेदयते मह" इति । दह्नतः हृदयाकाशात ॥ ४४ ॥ स्नुतः स्नायुतः । "अनुष्टुप् स्नावानि" इति श्रुतेः ॥ ४५ ॥ महाकल्पे ब्रह्मा शब्दरूपोऽभवदित्युक्तं तदेव दर्शयन् वर्णानामुत्पत्तिमाह । स्पर्श इति सार्धेन । स्पर्शः कादिवर्गपंचकम् । स्वरोऽकारादिः ॥ ४६ ॥ ऊष्माणं शषसहचतुष्कम् । अंतस्था यरलवाः । सप्तस्वराः षड्जादयः । विहारेण क्रीडया ॥ ४७ ॥

चतुर्षु अकृष्टपच्यं हलानाकृष्टभूम्युद्भूतमन्नादि तेन वृत्तिर्येषां ते तथा आहृतैरानीतैः । तीर्थस्तु "वैखानसा मूलभक्षाः फलभक्षा उदुंबराः । वालखिल्याः सर्वभक्षाः फेनपा वत्सफेनपाः" इति व्याचष्ट । वत्समुखगलितपयः फेनपानेन जीवंत इत्यर्थः । एवं न्यासे संन्यासे चत्वारो भेदाः कुटीचक इति यस्तु यात्राद्यशक्त एकस्मिन्नेव तीर्थे वसन्प्रत्यहं द्वादशसहस्रप्रणवं जपन् यथोक्तकाले भैक्ष्यमाहरन् कुट्यां पर्णशालायां चकास्ति ब्रह्मध्यानेन स कुटीचकः । स्वामिचरणैरप्ययमेवार्थ उक्तः । स्वाश्रमकर्मेति । यस्तु तीर्थयात्रासु शक्तो ग्रामे एकरात्रं नगरे त्रिरात्रं तीर्थे सप्तरात्रं वसंस्त्रिकालस्नायी माधुकरीं वृत्तिमाश्रितो निजाश्रमधर्मरतः प्रणवमनुस्मरन्दंडादिकं परिगृह्य तीर्थात्तीर्थांतरं व्रजति बह्वन्युदकानि तीर्थजलानि यस्य स बह्वदकः । स्वामिचरणैरप्ययमर्थ एव सर्वत्रानासक्त्या प्रणवार्थस्मरणेन च ध्वनितः । कर्मोपसर्जनीत्यादिना उपसर्जनीकृत्य गुणीकृत्य । तृतीयमाह—यस्तु यथा जातस्तथा रूपधरो निर्द्वंद्वो निष्परिग्रहो ब्रह्मध्याननिष्ठश्चतुर्थभूमिकारूढो भवति स हंसः । तथैव स्वामिचरणैरप्युक्तं ज्ञानाभ्यासनिष्ठ इति । यस्तु दंडकौपीनविधिनिषेधहीनः सप्तमभूमिकारूढो ध्यातृध्येयविभागरहितो ब्रह्मानंदे लीनवृत्तित्वाच्छरीरमपि नानुसंधत्ते स परमहंसः एतदुक्तानुरोधेनैव स्वामिनोक्तः प्राप्ततत्त्व इति सप्तभूमिकास्तु नित्यानित्यवस्तुविवेकादिपुरःसराः । फलपर्यवसायिनी मोक्षेच्छाख्या प्रथमा १, ततो गुरुवाक्यतो वेदांतविचारः श्रवणमननात्मको द्वितीया विचारणाख्या २, ततो निदिध्यासनाभ्यासेन मनस एकाग्रतया सूक्ष्मवस्तुग्रहणयोग्यत्वं तनुमानसाख्या तृतीया ३, ततो वेदांतवाक्यान्निर्विकल्पको ब्रह्मात्मैक्यसाक्षात्काररूपश्चतुर्थी सत्वापत्याख्या ४ सविकल्पकसमाध्यभ्यासेन निरुद्धे मनसि या निर्विकल्पकसमाध्यवस्था संसक्त्याख्या पंचमी ५, तत्तदभ्यासपरिपाकेन चिरकालावस्थायिनी या सा पदार्थाभाविनी षष्ठी ६, गूढसुषुप्तिश्च सर्वदान्यैः पारिपोष्यमाणः सच्चिदानंदे कनिष्ठो यदा तिष्ठति तदा तुर्यगाख्या सप्तमीति सप्तज्ञानभूमिकाः ॥ ४३ ॥ व्यस्ता भिन्नाः व्याहृतिचतुष्के प्रमाणमाह यथाहेति । आश्वलायनऋषिर्वेदव्याख्याकर्त्ता चतुर्थ्या व्याहृतेर्वैलक्षण्याभावादर्थांतरमाह—यद्वेति । मह इत्यस्याश्चतुर्थीत्वे श्रुतिं प्रमाणयति तथा चेति । तासां तिसृणां मध्ये चतुर्थीमेतां वक्ष्यमाणां महेति वितर्केऽव्ययम् चमस्य ऋषिरित्याप्रवेदयते स्म वक्ति स्मेति किं मह इति। यद्वा। मह इत्येतामाप्रवेदयते स्मेति संबंधः 'सुरवर्त्मखम्' इत्यमरः ॥ ४४ ॥ तस्य ब्रह्मणः स्नायुतः सर्वांगव्यापिनाडीमंडलात् । स्नुतोऽनुष्टुबुत्पत्तौ श्रुतिमाह अनुष्टुबिति स्नुतो भवतीति स्नावान् आर्षत्वान्मतुपि वृद्धिरिति श्रुतिपदार्थः । गायत्री षडक्षरा छंदोजातिः उष्णिक्सप्ताक्षरा अनुष्टुबष्टाक्षरा त्रिष्टुप् एकादशाक्षरा जगती द्वादशाक्षरा अनुष्टुप् श्रुतिरुपलक्षणभूतान्यासामुष्णिगादिश्रुतीनां लोकेऽनुष्टुभोतिप्रसिद्धत्वात्तत्रैव सोक्तेति ॥ ४५ ॥ मज्जास्थ्यंतर्गतस्नेहविशेषः । पंक्तिर्दशाक्षरा छंदोजातिर्बृहती नवाक्षरा प्राणतः प्राणादिपंचकात् । शब्दरूपः शब्दात्मकदेहः महाकल्पे यावद्ब्रह्मस्थितिस्तावत्पर्यंतं सर्वदेत्यर्थ इत्युक्तं श्रुतौ तदेव श्रुत्युक्तशब्दरूपत्वमेव। केचित्तु महाकल्पे 'ब्रह्मा शब्दरूपोऽभवत' इदमेव वाक्यं श्रुतिमाहुः ।

**शब्दब्रह्मात्मनस्तात व्यक्ताव्यक्तात्मनः परः ॥ ब्रह्मावभाति विततो नानाशक्त्युपबृंहितः ॥ ४८ ॥ ततोऽपरामुपादाय संसर्गाय मनो दधे ॥ ऋषीणां भूरिवीर्याणामपि सर्गमविस्तृतम् ॥४९॥ ज्ञात्वा तद्धृद्ये भूर्यश्चिंतयामास कौरव ॥ अहो अद्भुतमेतन्मे व्यापृतस्यापि नित्यदा ॥ ॥ ५० ॥ न ह्येधंते प्रजा नूनं दैवमत्र विघातकम् ॥ एवं युक्तकृतस्तस्य दैवं चावेशतस्तदा ॥ ५१ ॥ कस्य रूपमभूद्द्वेधा यत्कायमभिचक्षते ॥ ताभ्यां रूपविभागाभ्यां मिथुनं समपद्यत ॥ ५२ ॥ यस्तु तत्र पुमान् सोऽभून्मनुः स्वायंभुवः स्वराट् ॥ स्त्री याऽऽसीच्छतरूपाख्या महिष्यस्य महात्मनः ॥ ५३ ॥ तदा मिथुनधर्मेण प्रजा ह्येधांबभूविरे ॥ स चापि शतरूपायां पंचापत्यान्यजीजनत् ॥ ५४ ॥ प्रियव्रतोत्तानपादौ तिस्रः कन्याश्च भारत ॥ आकूतिर्देवहूतिश्च प्रसूतिरिति सत्तम ॥ ५५ ॥**

अत एव शब्दतनुत्वाद्ब्रह्मणः परमेश्वरो नित्यं प्रकाशत इत्याह । व्यक्ता वैखरी अव्यक्तः प्रणवः तदात्मनस्तस्य ब्रह्मणः परः परमेश्वरः अवभाति । कीदृशः । ब्रह्मपरिपूर्णः तत्राव्यक्तात्मनो ब्रह्मरूपो विततोऽवभाति व्यक्तात्मनो नानाशक्त्युपबृंहित इंद्रादिरूपोऽवभाति ॥ ४८ ॥ या पूर्वं विसृष्टा सती नीहारं ततोऽभवत् ततोऽपरामनिषिद्धकामासक्तां तनुम् । शब्दब्रह्मतनुस्तु सदाऽस्त्येव । तन्वंतरग्रहणे कारणमाह । ऋषीणामित्यादिना ॥ ४९ ॥ ५० ॥ युक्तकृतः यथोचितं कुर्वतः ॥ ५१ ॥ अत एव कस्य ब्रह्मण इदं द्विधाभूतमित्याश्चर्यात्कायमद्याप्यभिचक्षते ॥ ५२ ॥ मिथुनं स्त्री पुंसौ या स्त्री साऽस्य महिष्यासीत् ॥ ५३ ॥ एधांबभूविरे वृद्धिं प्राप्ताः । तदेवाह । स चापीति

क आदिर्यस्य चटतपवर्णचतुष्टस्य तत्कादिवर्गाणां पंचकं वर्गपंचकं कादि च तद्वर्गपंचकं कादिवर्गपंचकम् । वर्गसंज्ञा तु कुचुटुतुपुवर्ग इति व्याकरणे विहिता ज्ञेया । सूत्रेपिकादिस्थोकारः पञ्चवर्णग्रहणार्थ एव तस्यैव योग्यत्वात्तदुक्तं भर्तृहरिणा "अकारात्पञ्चमो वर्णस्तमाहुः पंचकग्रहम् । उकारस्तत्र विख्यातो नान्यो भवितुमर्हति॥" इति । अन्यथा कचटतपावर्ग इति ब्रूयादित्यलम् । अकारादिः षोडशसंख्याको मातृकोक्तः ॥ ४६ ॥ ४७ ॥ अत एव सर्ववर्णादुद्भवस्थानत्वादेव । तत्रोभयरूपयोर्मध्ये । अव्यक्तात्मनः प्रणवरूपस्य ब्रह्मणः स्वरूपत्वात्प्रणवस्य विस्तारेण भानमुचितमेव तच्च प्रणवशब्दवाच्यं 'ब्रह्माहमस्मि' इत्येवं रूपमेवेति । व्यक्तात्मनो वैखरीरूपस्य वर्णसमुदायरूपत्वाद्वैखर्यास्तत्रत्यतत्तद्वर्णवाच्यतत्तदिंद्रादिदेवरूपेणाभातीत्यर्थः । एतेन प्रणववैखरीरूपाद्वेदाद्ब्रह्मणः परमेश्वर एवोपास्यत्वेन ज्ञेयत्वेन च प्रतीयते न त्वन्यदिति । स च स्वरूपत एकोपि परमात्मा शक्त्या नानात्मको जात इत्येवं रूपेति भावः ॥ ४८ ॥ ततस्तस्याः । ननु तेन पूर्वं सृष्टा मरीच्यादय एव बहुतराः प्रजाः सृजंति तत्र तत्प्रयत्नेनालमिति चेत्तत्राह—ऋषीणमिति।तपोयोगाद्याविष्टचेतस्त्वात्ततः सृष्टिवृद्धिर्न जातेति भावः ॥४९॥ तद्वृद्धये सर्गवृद्धये । कौरवेति।शुद्धवंशोद्भूतत्वात्तुभ्यमेतदाख्यानं ब्रवीमीत्यभिप्राया संबुद्धिः।व्यापृतस्य प्रयतमानस्यापि ॥ ५० ॥ अत्र प्रजाया अवृद्धौ दैवं जविादृष्टम् ॥५१॥ यतो द्विधा भूतमत एव अत्र प्रमाणं च ।"स इममेवात्मानं द्विधाऽपातयत्ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्द्धयुगलमिव स्व"इति श्रुतेः । कसंबंधित्वात्कायमिति कशब्दाण्ण्यप्रत्यये 'लोपाद्वृद्धिर्बलीयसी'इति न्यायेन लोपं बाधित्वा वृद्धौ सत्यां रूपसिद्धेः । तदेव स्फुटयति रूपस्य देहस्य विभागाभ्यां "रूपं देहे स्वभावे च सौंदर्यपशुवृंदयोः" । इति कोशात् । मिथुनं श्मश्रुयुक्तमेकं कुचद्वययुक्तमेकमेतं द्वंद्वमभूत् ॥ ५२ ॥ तत्र मिथुने स्वराट् चक्रवर्ती अस्य स्वायंभुवस्य ॥५३॥ तदा तत्प्रभृति मिथुनयोः स्त्रीपुंसयोर्धर्मेण सुरतेन । तदेव प्रजावर्द्धनमेव । कन्याया अपि दौहित्रद्वारा नरकपातनिरोधकत्वादपत्यत्वमित्याह—पंचापत्यानीति॥५४॥ प्रियं व्रतं भगवदुपासनालक्षणं यस्य स

आकूतिं रुचये प्रादात्कर्दमाय तु मध्यमाम् ॥ दक्षायादात्प्रसूतिं च यत आपूरितं जगत् ॥ ५६ ॥ इति श्रीभा० तृती० मनुसर्गवर्णनं नाम द्वादशोऽध्यायः ॥ १२ ॥ श्रीशुक उवाच ॥ निशम्य वाचं वदतो मुनेः पुण्यतमां नृप ॥ भूयः पप्रच्छ कौरव्यो वासुदेवकथादृतः ॥ १ ॥ विदुर उवाच ॥ स वै स्वायंभुवः सम्राट् प्रियः पुत्रः स्वयंभुवः ॥ प्रतिलभ्य प्रियां पत्नीं किं चकार ततो मुने ॥ २ ॥ चरितं तस्य राजर्षेरादिराजस्य सत्तम ॥ ब्रूहि मे श्रद्दधानाय विष्वक्सेनाश्रयो ह्यसौ ॥ ३ ॥ श्रुतस्य पुंसां सुचिरश्रमस्य नन्वंजसा सूरिभिरीडितोऽर्थः ॥ यत्तद्गुणानुश्रवणं मुकुंदपादारविंदं हृदयेषु येषाम् ॥ ४ ॥ श्रीशुक उवाच ॥ इति ब्रुवाणं विदुरं विनीतं सहस्रशीर्ष्णश्चरणोपधानम् ॥ प्रहृष्टरोमा भगवत्कथायां प्रणीयमानो मुनिरभ्यचष्ट ॥ ५ ॥

सः मनुः ॥ ५४ ॥ ५५ ॥ यतः यासां संततिभिः ॥ ५६ ॥ इति तृतीये टीकायां द्वादशोऽध्यायः ॥ १२ ॥ त्रयोदशे सिसृक्षायां मनोराकस्मिकाप्लुताम् ॥ धरामुद्धर्तुमुद्भूतात्क्रोडाद्दैत्यानुसूदनम् ॥ १ ॥ १ ॥ स्वयंभुवः पुत्रस्तद्देहांशत्वात् सः ॥ २ ॥ विष्वक्सेनो हरिरेवाश्रयो यस्य सः ॥ ३ ॥ अतस्तस्य चरितं श्रोतव्यमित्याह । सुचिरं श्रमो यस्मिंस्तस्य पुंसां श्रुतस्यांजसा मुख्यत्वेनायमेवार्थ ईडितः स्तुतः । ननु मुकुंदपादारविंदं येषां हृदयेष्वस्ति तेषां भागवतानां गुणानुश्रवणम् ॥४॥ सहस्रशीर्षा श्रीकृष्णस्तस्य चरणावुपधीयेते यस्मिन् । श्रीकृष्णः प्रीत्या यस्योत्संगे चरणौ प्रसारयतीत्यर्थः । तमभ्यचष्ट अभ्यभाषत । मुनिर्मैत्रेयः प्रणीयमानस्तेन प्रवर्त्यमानः ॥ ५ ॥

प्रियव्रतः । पद्यते स्वर्गमनेनेति पादः संततिः उत्तान उत्कृष्टविस्तारवान्पादः संततिर्ध्रुवरूपो यस्य स तथा। यद्वा । उदग्रतस्तानो याम्यां तावुत्तानौ ह्रस्वौ पादौ यस्य स तथा "ह्रस्वौ पादौ महासौख्यसंपत्संतानदायकौ" इत्यंगशास्त्रात् । भारतेति श्रवणार्हतामाह । आसमंतात्कूयते कथ्यते प्रदानकाले जामाता यस्याः साऽऽकूतिः । "अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति" इत्युक्तेः। देवेन विष्णुना हूयते दीयते तत्त्वज्ञानमस्या इति देवहूतिः। यद्वा देवेन ब्रह्मणा हूयते बोध्यते या सा तथा "एष मानवि ते गर्भे प्रविष्टः कैटभार्दनः" इत्युक्तेः। प्रकृष्टा सूतिः संततिर्यस्याः सा प्रसूतिः। रुचये ब्रह्मपुत्राय "मानसश्च रुचिर्नाम विज्ञेयो ब्रह्मणः सुतः" इति वायुपुराणे नवमाध्यायोक्तेः ॥ ९९ ॥ मध्यमां देवहूतिम् । यतो याभिः ॥ ९६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे द्वादशोऽध्यायः ॥१२॥ आकस्मिकाप्लुतां विनैव मज्जनकारणं बुडिताम् । क्रोडाद्वराहात् । "क्रोडः शनौ शूकरे ना न पुमानंकरक्षसोः" इति मेदिनी (॥१॥) कौरव्यो विदुरः आदृतिरस्यास्तीत्यादृतः सादरः अर्शआदित्वादच् । वासुदेवकथायामादृतस्तथा । यद्वा । कथयैव कर्त्र्याऽऽदृतः मन्माधुर्यमेतत्कर्तृकास्वादात्सार्थकं भवत्वित्यादृतः । यद्वा कथायां श्रोतृभिर्वक्तृभिश्चादृत इत्यर्थः ॥१॥ स्वयंभुवो ब्रह्मणः पुत्रस्य स्वभावतः प्रियत्वेपि पुनः प्रियपदोपादानं तस्य साक्षात्स्वदेहभागत्वादातिप्रियत्वबोधनार्थम् । मुने इति त्रिकालदर्शितामाह ॥२॥ तस्य स्वायंभुवस्य राज्ञामादिरादिराजो राजदंतादिवत्समासः। यद्वादिश्चासौ राजा चेत्यादिराजः।हि यतोऽसौ स्वायंभुवः विष्वक्सेनाश्रयोस्तीति स्वायंभुवकथाया विष्वक्सेनकथाऽविनाभूतत्वात्तत्कथायां विष्वक्सेनकथैव श्रुता स्यादिति भावः विष्वक् चतुर्दशभुवनेषु सेना भक्तलक्षणा यस्येति तथा ॥३॥ यतोसौ विष्वक्सेनाश्रयोऽतो हेतोः तस्य मनोः श्रुतस्य गुरुमुखादधीतशास्त्रादेः अर्थो मुख्यप्रयोजनं स च क इत्यपेक्षायामाह।ननु निश्चयेन विष्णुभक्तजनकथाश्रवणं विना विदुषामपि विद्यानिष्फलेति भावः॥४॥सहस्राणामनंतसंख्याकप्रादुर्भावानां शीर्ष्णः श्रेष्ठतमस्य श्रीकृष्णस्येत्यर्थः। विदुरशंकापनोदार्थं विदुरगृहे श्रीकृष्णःसहस्रशीर्षाऽभूदिति।

मैत्रेय उवाच ॥ यदा स्वभार्यया साकं जातः स्वायंभुवो मनुः ॥ प्रांजलिः प्रणतश्चेदं वेदगर्भमभाषत ॥६ ॥ त्वमेकः सर्वभूतानां जन्मकृद्वृत्तिदः पिता ॥ अथाऽपि नः प्रजानां ते शुश्रूषा केन वा भवेत् ॥ ७ ॥ तद्विधेहि नमस्तुभ्यं कर्मस्वीड्यात्मशक्तिषु ॥ यत्कृत्वेह यशो विष्वगमुत्र च भवेद्गतिः ॥ ८ ॥ ब्रह्मोवाच ॥ प्रीतस्तुभ्यमहं तात स्वस्ति स्ताद्वां क्षितीश्वर ॥ यन्निर्व्यलीकेन हृदा शाधि मेत्यात्मनाऽर्पितम् ॥ ९ ॥ एतावत्याऽऽत्मजैर्वीर कार्या ह्यपचितिर्गुरौ ॥ शक्त्याऽप्रमत्तैर्गृह्येत सादरं गतमत्सरैः ॥ १० ॥ स त्वमस्यामपत्यानि सदृशान्यात्मनो गुणैः ॥ उत्पाद्य शास धर्मेण गां यज्ञैः पुरुषं यज ॥ ११ ॥ परं शुश्रूषणं मह्यं स्यात्प्रजारक्षया नृप ॥ भगवांस्ते प्रजाभर्तुर्हृषीकेशोऽनुतुष्यति ॥ १२ ॥ येषां न तुष्टो भगवान् यज्ञलिंगो जनार्दनः ॥ तेषां श्रमो ह्यपार्थाय यदात्मा नादृतः स्वयम् ॥ १३ ॥ मनुरुवाच ॥ आदेशेऽहं भगवतो वर्तेयाऽमीवसूदन॥ स्थानं त्विहानुजानीहि प्रजानां मम च प्रभो॥१४॥यदोकः सर्वसत्त्वानां मही मग्ना महांभसि ॥ अस्या उद्धरणे यत्नो देव देव्या विधीयताम्॥१५॥

वेदगर्भं ब्रह्माणम् ॥ ६ ॥ त्वमेवैकः पिता सर्वेषां यतो जन्मकृत् वृत्तिदः पोषकश्च त्वमेव अतस्तव यद्यप्यन्यापेक्षा नास्त्यथाप्यस्माकं ते शुश्रूषा केन कर्मणा भवेत्तद्विधेहीत्युत्तरेणान्वयः ॥ ७ ॥ हे ईड्य आत्मशक्तिष्वस्मच्छक्येषु कर्मसु मध्ये केन कर्मणा भवेत्तद्विधेहीदं कर्तव्यमिति कथय । यत्कृत्वा यस्मिन् कृते सति । विष्वक् सर्वतः । अमुत्र परलोके ॥ ८ ॥ वां युवाभ्यां स्वस्ति भद्रं स्तात् भूयात् । यद्यतो मा मां शाध्यनुशिक्षयेति आत्मना स्वयमेवार्पितं निवेदितमतः प्रीतोऽस्मि ॥ ९ ॥ अपचितिः पूजा गृह्येत आज्ञेति शेषः । सनकादयो न कुर्वंति वयं किमिति करिष्याम इत्येवंभूतो गतो मत्सरो येभ्यः ॥ १० ॥ गां शास शाधि पालयेत्यर्थः । पुरुषं हरिम् ॥ ११ ॥ प्रजापालकस्य ते तुष्टो भविष्यति ॥ १२ ॥ यज्ञलिंगो यज्ञमूर्तिः । अपगतोऽर्थो यस्मात् केवलं श्रमायैवेत्यर्थः । यद्यस्मादात्मैव स्वयं नादृतः तस्मिन्नतुष्टे स्वार्थस्यैवासिद्धेः सर्वात्मत्वाच्च तस्य ॥ १३ ॥ वर्तेय वर्तिष्ये । अमीवसूदन पापनाशन । अनुजानीह्यत्र स्थातव्यमित्यनुज्ञां देहि ॥ १४ ॥ महीति चेदत आह । यदोकः

तत्र च भोजनं कृत्वा विदुरोत्संगे चरणौ कृत्वा सुष्वापेति महाभारतादवसेयम् । इत्यर्थ इति । अतिप्रियत्वबोधनार्थं तदुत्संगे पादौ प्रसारितवानिति भावः । मुनिर्मैत्रेयः ॥ ९ ॥ इदं वक्ष्यमाणं वचः ॥ ६ ॥ अतो जन्मवृत्तिकृत्त्वात् ॥ ७ ॥ ममेति शेषः । गतिः स्वर्गादिरूपा । तदकरणे पुत्रस्येह निंदा परत्र नरकादिश्च भवेदित्यर्थः । अत एव । ''सर्वार्थसंभवो देहो जनितः पोषितो यतः । तयोर्न याति निर्वेशं पित्रोर्मर्त्यः शतायुषा'' इति । श्रीकृष्णबलदेवौ वक्ष्यतो दशमे ॥ ८ ॥ क्षितीश्वरेत्यामंत्रणेन तत्र वासार्थं भुव उद्धारो भविष्यतीति सूचितम् । स्वयमेव परप्रेरणां विनैव । विशेष्यपदानुक्त्याऽहंतास्पदममतास्पदादिकं सर्वमेवनिवेदितमित्यर्थः । निर्व्यलीकेन निष्कपटेन ॥ ९ ॥ ''भवेदपचितिः पूजा व्ययनिष्कृतिहानिषु'' इति मेदिनी ॥ १० ॥ गां भुवम् । 'भूमौ पशौ च गोशब्दः' इत्यनेकार्थमंजर्युक्तेः । इत्यर्थ इति । पालनस्यैव शासनपदार्थत्वादिति भावः ॥ ११ ॥ मह्यं मम नृपेति रक्षाधिकारसूचनायोक्तम् ॥ १२ ॥ यद्वा । यज्ञैर्यजनैरर्चनश्रवणकीर्तनाद्यैरेव लिंग्यते ज्ञायत इति परमात्मानादरे स्वस्यैवानादृतत्वात् । ''यद्यज्जनो भगवते विदधीत मानं तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः'' इत्युक्तेः ॥ १३ ॥ 'अमीवं पापरोगयोः' इति हलधरः । अत्र स्थातव्यमित्थमनुज्ञां देहीति । तथा च प्रजाः सृजेत्याज्ञप्तो मनुः प्रजाः ससर्ज यदा धराप्लावेन सर्गविघ्नो जातस्तदागत्यो वाचेति ज्ञेयम् । तात्कालिकतदुक्तिस्वीकारे मनुकन्यादेवहूतिसुतायां मरीचेर्जातात्कश्यपाज्जातस्य दैत्यस्य धरोद्धारे वराहकृतसंहारो न घटेतेति ॥ १४ ॥ ननु पूर्वपूर्वकल्पे मनवः सप्रजाः कुत्रासन्निति त्वं शास्त्रज्ञत्वाज्जानासि

मैत्रेय उवाच ॥ परमेष्ठी त्वपां मध्ये तथाऽऽसन्नामवेक्ष्य गाम् ॥ कथमेनां समुन्नेष्य इति दध्यौ धिया चिरम् ॥ १६ ॥ सृजतो मे क्षितिर्वार्भिः प्लाव्यमाना रसां गता ॥ अथाऽत्र किमनुष्ठेयमस्माभिः सर्गयोजितैः ॥ १७ ॥ यस्याऽहं हृदयादासं स ईशो विदधातु मे ॥ इत्यभिध्यायतो नासाविवरात्सहसाऽनघ ॥ वराहतोको निरगादंगुष्ठपरिमाणकः ॥ १८ ॥ तस्याभिपश्यतः खस्थः क्षणेन किल भारत ॥ गजमात्रः प्रववृधे तदद्भुतमभून्महत् ॥१९॥ मरीचिप्रमुखैर्विप्रैः कुमारैर्मनुना सह ॥ दृष्ट्वा तत्सौकरं रूपं तर्कयामास चित्रधा ॥ २० ॥ किमेतत्सौकरव्याजं सत्त्वं दिव्यमवस्थितम् ॥ अहो बताश्चर्यमिदं नासाया मे विनिःसृतम् ॥ २१ ॥ दृष्टोऽङ्गुष्ठशिरोमात्रः क्षणाद्गंडशिलासमः ॥ अपि स्विद्भगवानेष यज्ञो मे खेदयन्मनः ॥ २२ ॥ इति मीमांसतस्तस्य ब्रह्मणः सह सूनुभिः ॥ भगवान्यज्ञपुरुषो जगर्जागेंद्रसन्निभः ॥ २३ ॥ ब्रह्माणं हर्षयामास हरिस्तांश्च द्विजोत्तमान् ॥ स्वगर्जितेन ककुभः प्रतिस्वनयता विभुः ॥२४॥ निशम्य ते घर्घरितं स्वखेदक्षयिष्णु मायामयसूकरस्य ॥ जनस्तपःसत्यनिवासिनस्ते त्रिभिः पवित्रैर्मुनयोऽगृणन्स्म ॥ २५ ॥

स्थानं सा मही । हे देव । अस्या देव्याः ॥ १५ ॥ पूर्वं पाने कृतेऽपि पुनरकांडे एवोद्धतानामपां मध्ये सन्नामवसन्नां निमग्नाम् । समुन्नेष्ये उद्धरिष्यामि ॥ १६ ॥ चिंतामेवाह । सृजतः सतः । वार्भिरद्भिः रसां रसातलम् । ईश्वरेण सर्गे नियुक्तैः मेऽनुष्ठेयं स एव विदधातु संपादयतु ॥ १७ ॥ वराहतोकः सूक्ष्मो वराहः ॥१८॥ खस्थ आकाशे स्थितः सन् ॥ १९ ॥ चित्रधा अनेकधा ॥ २० ॥ २१ ॥ पूर्वमंगुष्ठाग्रप्रमाणो दृष्टः । गंडशिला स्थूलपाषाणस्तत्समः । यज्ञो विष्णुः । निजरूपतिरोधानेन मे मनः खेदयन् ॥ २२ ॥ इति मीमांसमानस्य सतः । जगर्जागर्जत् । गिरींद्रतुल्यः ॥ २३ ॥ गर्जनप्रयोजनमाह । ब्रह्माणमिति ॥ २४ ॥ घर्घरितं तज्जात्यनुकरणध्वनिम् । अनिश्चयेन यः स्वखेदस्तस्य क्षयिष्णु क्षपयिष्णु नाशकम् । ते इति पुनरुक्तिः प्रसिद्धिख्यापनार्था । त्रिभिः पवित्रैर्ऋग्यजुःसाममंत्रैरगृणन्नस्तुवन् ॥ २५ ॥

न वेति चेत्सत्यं जानाम्येवेत्याह—यदोक इति । यदोक इत्यादिकं पाद्मप्रसंगे ब्राह्मकथासूचनवत् वर्तमानकल्पजश्वेतवाराहकथासूचनं ज्ञेयम् । यत्रैव स्वायंभुवप्रसंगे प्राचेतसदक्षदौहित्रहिरण्याक्षवधरूपा चाक्षुषकथापि भविष्यति । अत्र तु श्यामतयाऽविर्भूत इति वक्ष्यति 'तमालनीलम्' इति महांभसि गर्भोदके । अस्या मह्याः ॥ १५ ॥ अकांडेऽनवसरे ॥ १६ ॥ प्लाव्यमाना चंचली क्रियमाणा । रसातलं रसातलोपलक्षितं गर्भोदं गतेत्यर्थः । रसातलस्य भूविवरत्वात्तत्र भुवो मज्जनानुपपत्तेः ॥ १७ ॥ 'तोकं पुत्राल्पयोरपि' इति कोशात् । निरगादित्युक्तेर्न पुत्रत्वादिव्यवहारस्तत्त्वे तु प्रासूताभवदित्यादि ब्रूयादिति भावः । परिमाणत इति । प्रथमार्थे तसिः वराहचरितस्य सर्वाघहारित्वेन तदाकर्णनेच्छुं नृपमाहानघेति ॥ १८ ॥ तस्य ब्रह्मणः तत्तस्य वर्द्धनम् ॥ १९ ॥ तर्कयामास विचारयामास ॥ २० ॥ सूकर एव सौकरस्तस्य व्याजोऽपदेशो यस्येति तत्सौकरव्याजं सत्त्वं जीवः । ''सत्त्वं जीवे गुणे धैर्ये' इति धरणिः ॥ २१ ॥ ''गलिताः स्थूलपाषाणा गंडशैला इति स्मृताः'' इति । ''यज्ञो वै विष्णुः'' इति श्रुतेः ॥ २२ ॥ अगेंद्रो महागिरिर्वा नीलपर्वतः । सूनुभिर्मरीच्यादिभिः ॥ २३ ॥ प्रतिस्वनयता प्रतिध्वनिमतीः कुर्वता ॥ २४ ॥ मायामयः कृपामयो ज्ञानमयो वा मायाया अविद्याया आमयो रोगो यस्मादिति वा स चासौ सूकरस्तस्य ॥ २५ ॥

तेषां सतां वेदवितानमूर्तिर्ब्रह्माऽवधार्यात्मगुणानुवादम् ॥ विनद्य भूयो विबुधोदयाय गजेंद्रलीलो जलमाविवेश ॥ २६ ॥ उत्क्षिप्तवालः खचरः कठोरः सटा विधुन्वन् खररोमशत्वक् ॥ खुराहताभ्रः सितदंष्ट्र ईक्षाज्योतिर्बभासे भगवान्महीध्रः ॥ २७ ॥ घ्राणेन पृथ्व्याः पदवीं विजिघ्रन्क्रोडापदेशः स्वयमध्वरांगः ॥ करालदंष्ट्रोऽप्यकरालदृग्भ्यामुद्वीक्ष्य विप्रान्गृणतोऽविशत्कम् ॥ २८ ॥ स वज्रकूटांगनिपातवेगविशीर्णकुक्षिः स्तनयन्नुदन्वान् ॥ उत्सृष्टदीर्घोर्मिभुजैरिवार्तश्चुक्रोश यज्ञेश्वर पाहि मेति ॥ २९ ॥ खुरैः क्षुरप्रैर्दरयंस्तदाऽप उत्पारपारं त्रिपरू रसायाम् ॥ ददर्श गां तत्र सुषुप्सुरग्रे यां जीवधानीं स्वयमभ्यधत्त ॥ ३० ॥

वेदैर्वितन्यते स्तूयते मूर्तिर्यस्य सः अत एवात्मनो गुणाननुवदति तथा तत्तेषां ब्रह्म उच्चारितं वेदमवधार्य ज्ञात्वा॥ २६॥कथंभूतः सन्नाविवेशेत्यपेक्षायामाह । द्वाभ्याम् । उच्चैः क्षिप्तो वालः पुच्छं येन । खचर आकाशचारी । कठोरः कठिनः । सटाः स्कंधवालान् खराणि तीक्ष्णानि रोमाणि यस्याः सा त्वग्यस्य । खुरैराहतान्यभ्राणि येन । सितदंष्ट्रोऽतिशुक्लदंष्ट्रः ईक्षा निरीक्षणमेव ज्योतिरालोको यस्य । तदा प्रकाशांतराभावात् बभासेऽशोभत महीध्रः पृथिव्या उद्धर्ता ॥ २७ ॥ क्रोडापदेशो वराहच्छद्मा अतः स्वयमध्वरांगोऽपि पशुरिव घ्राणेन विजिघ्रन् गृणतः स्तोतॄन्विप्रानुद्वीक्ष्योर्ध्वं वीक्ष्य कं जलमाविशत् ॥ २८ ॥ तदानींतनसमुद्रध्वनिमुत्प्रेक्षते । स उदन्वान्समुद्र आर्त इव स्तनयन् शब्दं कुर्वन्भो यज्ञेश्वर मा मां पाहि मामवेत्येवं चुक्रोश । आर्तसादृश्यमाह । उत्सृष्टाः प्रसारिता दीर्घा ऊर्मय एव भुजास्तैर्विशिष्टः । आर्तत्वे हेतुः । वज्रकूटो वज्रमयः पर्वतस्तद्वदंगं यद्भगवतस्तस्य निपातवेगेन विशीर्णा कुक्षिर्यस्य ॥ २९ ॥ तदा रसायां रसातले गां पृथ्वीं ददर्श । कः त्रिपरुस्त्रीणि परूंषि सवनात्मकानि पर्वाणि यस्य । यज्ञमूर्तिरित्यर्थः । किं कुर्वन् । क्षुरप्रा आयताग्राः शरास्तत्सदृशैः खुरैरपो दरयन् । कथम् । उत्पारपारं उत्पाराणां पारशून्यानामप्यपां पारमवसानं यथा भवति तथा विदारयन् । कथंभतः । अग्रे प्रलयसमये तत्र तास्वप्सु सुषुप्सुः शिशयिषुः सन् जीवा धीयंते यस्यां सर्वजीवाधारभूतां यां स्वयमभ्यधत्ताभिमुख्येन दधार । जठरे धृतवानित्यर्थः ।

। यद्वा । वेदानां भगवन्निःश्वासरूपत्वात् भगवन्निःश्वासस्यैव लीलया ब्रह्मनासाप्रविष्टस्यसूकररूपत्वेनाविर्भावः । वस्तुतो ब्रह्मापि विष्णुरेव "तल्लोकपद्मं स उ एव विष्णुः प्रावीविशत्सर्वगुणावभासम्" इत्युक्तेस्तन्निःश्वासोऽपि विष्णुनिःश्वास एवेत्यर्थः । अत एव वेदस्तुतमूर्तित्वादेव ॥२६॥२७॥ वराहच्छद्मेति । "स्तनापदेशं फलयुग्ममेव धत्ते मुहुः कांचनवल्लरीव" इतिवदपह्नुत्यलंकारेण क्रोडापदेशस्यैव वास्तवत्वं प्रत्याय्यते "प्रकृतं यन्निषिध्यान्यत्स्थाप्यते स्यादपह्नुतिः" इति लक्षणात्॥२८॥आर्त्तो यथा करौ प्रसार्य क्रोशति तद्वदित्यर्थः॥२९॥तदा समुद्रप्रार्थनावसरे । रसातले तदुपलक्षिते गर्भोदके अतलादीनां सप्तानामेव भूविवरत्वेन पृथिवीत्वाद्रसातले तस्याः स्थित्यसंभवात् । तदुक्तं विष्णुधर्मे "पातालमूलेश्वरभोगसंहतौ विन्यस्य पादौ पृथिवीञ्च बिभ्रतः । यस्योपमानं न बभूव सोऽच्युतो ममास्तु मांगल्यविवृद्धये हरिः" इति । वक्ष्यत्यपि 'सलिले स्वखुराक्रांते' इत्यर्थ

स्वदंष्ट्रयोद्धृत्य महीं निमग्नां स उत्थितः संरुरुचे रसायाः ॥ तत्रापि दैत्यं गदया पतंतं सुनाभसं दीपिततीव्रमन्युः ॥ ३१ ॥ जघान रुंधानमसह्य विक्रमं सलीलयेभं मृगराडिवांऽभसि ॥ तद्रक्तपंकांकितगंडतुंडो यथा गजेंद्रो जगतीं विभिंदन् ॥ ३२ ॥ तमालनीलं सितदंतकोट्या क्ष्मामुत्क्षिपंतं गजलीलयांग ॥ प्रज्ञाय बद्धांजलयोऽनुवाकैर्विरिंचिमुख्या उपतस्थुरीशम् ॥ ३३ ॥ ऋषय ऊचुः॥जितंजितं तेऽजित यज्ञभावन त्रयीं तनूं स्वां परिधुन्वते नमः ॥ यद्रोमगर्तेषु निलिल्युरध्वरास्तस्मै नमः कारणसूकराय ते ॥ ३४ ॥

अनेन तदुद्धरणेऽनायासं द्योतयति ।। ३० ।। रसायाः सकाशादुत्थितः संरुरुचे सम्यगशोभत । तत्राप्यंभसि गदामुद्यम्यागच्छंतं रुंधानं प्रतिघ्नंतम् असह्यः सहनानर्हो विक्रमो यस्य तं दैत्यम् । सुनाभं चक्रं तद्वत्संदीपितस्तीव्रो मन्युर्यस्य । यद्वा । मयि विद्यमाने किमिति पारिभवं सहस इति सुनाभेन संदीपितस्तीव्रमन्युः स भगवान् सिंहो गजमिव लीलया जघानेत्युत्तरेणान्वयः ।। ३१ ।। गजेंद्रो जगतीं क्रीडया विदारयन् गैरिकया यथा अरुणगंडतुंडो भवति तथा । तस्य रक्तमेव पंकस्तेनांकितौ गंडौ तुंडं च यस्य सः ।। ३२ ।। प्रज्ञायालक्ष्य । अनुवाको वैदिकं सूक्तं तत्सदृशैर्वाक्यैस्तुष्टुवुः ।। ३३ ।। भो अजित ते त्वया जितंजितमिति संभ्रमे वीप्सा । यज्ञैर्भाव्यते आक्रियत इति

इति । प्रलयकाले सर्वस्योदरे ग्रहणादिति भावः । यद्वा । वेदरूपेण जलादुद्धृतवानित्यर्थः । यद्वाऽग्रे जलोपरि यां स्वयमभ्यधत्त स्थापितवानित्यर्थः । अनेनोदरप्रवेशकथनेन ।। ३० ।। चक्रस्य सत्यग्र्यादावुपमानमनुचितं मत्वाह–यद्वेति । मयि सुदर्शनाख्ये सर्वदलनसमर्थे । क्वचित्तु तत्रादिदैत्यमिति पाठः॥३१॥रुंधानं रोद्धुं चतुर्दिक्षु भ्रमंतं गजेंद्रः त्रिकूटपर्वतस्थः सिंहशरभादीनामपि हंता जगतीं तत्रत्यां भूमिं यथा तथेति वराहोपमा । "जगती जगतिच्छन्दोविशेषेपि क्षितावपि" इत्यमरः । तुंडं मुखाग्रम् ।। ३२।। किं च । अत्र श्वेतवाराहकल्पे स्वायंभुवमन्वंतरारंभे ब्रह्मनासात एव श्वेतवाराह आविर्भूय केवलं पृथ्वीमुद्धृत्यैवांतरधात्ततः षष्ठे चाक्षुषमन्वंतरे पुनराकस्मिकप्रलये जलादेवाविर्भूय नीलो वाराहः पृथ्वीमुद्धरन्हिरण्याक्षं जघानेति वाराहद्वयलीलामेकीकृत्यैव मैत्रेयः प्राह स्मेति भागवतामृतकारिकाभ्योऽवगंतव्यम् । ताश्च यथा–"द्विधाऽविरासीत्कल्पेऽस्मिन्नादौ स्वायंभुवांतरे । घ्राणाद्विधेर्धरोद्धृत्यै चाक्षुषीये तु नीरतः ॥ हिरण्याक्षं धरोद्धारे निहंतुं दंष्ट्रिपुंगवः । चतुष्पाच्छ्रीवराहोऽसौ नृवराहः क्वचिन्मतः ॥ कदाचिज्जलदश्यामः कदाचिच्चंद्रपांडुरः । यज्ञमूर्त्तिः स्थाविष्टोयं वर्णद्वययुतः स्मृतः ॥ दक्षात्प्राचेतसात्सृष्टिः श्रूयते चाक्षुषांतरे । स्वतस्तत्रैव जन्मास्य हिरण्याक्षस्य युज्यते ॥ उत्तानपादवंश्यानां तनयस्य प्रचेतसाम् । दक्षस्यैव दितिः पुत्री हिरण्याक्षो दितेः सुतः॥ कल्पारंभे तदा नास्ति सुतोत्पत्तिर्मनोरपि । क्वासौ प्राचेतसो दक्षः क्व दितिः क्व दितेः सुतः ॥ अतः कालद्वयोद्भूतं श्रीवराहस्य चेष्टितम् । एकत्रैवाह मैत्रेयः क्षत्तुः प्रश्नानुसारतः ॥ मध्ये मन्वंतरस्यैव मुनेः शापान्मनुं प्रति । प्रलयोऽसौ बभूवेति पुराणे क्वचिदीर्य्यते ॥ अयमाकस्मिको जातश्चाक्षुषस्यांतरे मनोः । प्रलयः पद्मनाभस्य लीलयेति तु कुत्रचित्" इति विश्वनाथः । विजयध्वजस्तुहिरण्याक्षौ द्वावित्युक्त्वा कारकद्वयमाह । "ब्रह्मजस्तु हिरण्याक्षः प्रथमं दंष्ट्रया हतः । स एव पार्षदाविष्टो द्वितीयः कर्णताडनात् ॥ पूर्वं लयोदके मग्नां द्वितीयं तेन मज्जिताम् । भुवमुद्धरते.वासौ हरिणा क्रोडमूर्त्तिना" इति ।अविविच्य कथनं तु दुष्टमोहार्थं देवप्रियार्थं वेति ज्ञेयम् । "व्यत्यासेनापि चोच्यंते त्वविविच्यैव कुत्रचित् । दुष्टानां मोहनार्थाय देवानां च प्रियाय वै ॥ यत्र तत्र कथाः काश्चिद्व्यासे साक्षाद्धरेस्तनौ । भ्रांतिर्न युज्यते तेन ज्ञात्वैवेत्थं प्रवर्णितम्" इत्यलम् । तमालस्तापिच्छस्तद्वन्नीलं श्यामवपुषम् । संप्लवादिसाधारण्येनैवेयं मन्वंतरद्वयकथाया अभेदोक्तिरिति । वस्तुतस्तु– चाक्षुषांतरसंप्लव एवायं प्रसंग इति संदर्भः ।। ३३ ।। यद्वा ।यज्ञान्भावयत्युत्पादयतीति तथा हे सर्वयज्ञकारणेत्यर्थः ।हे अजित जयजयेत्यर्थो जितंजितमित्यस्य । कारणेति

रूपं तवैतन्ननु दुष्कृतात्मनां दुर्दर्शनं देव यदध्वरात्मकम् ॥ छंदांसि यस्य त्वचि बर्हिरोमस्वाऽऽज्यं दृशि त्वंघ्रिषु चातुर्होत्रम् ॥ ३५ ॥ स्रुक् तुंड आसीत्स्रुव ईश नासयोरिडोदरं चमसाः कर्णरंध्रे ॥ प्राशित्रमास्ये ग्रसने ग्रहास्तु ते यच्चर्वणं ते भगवन्नग्निहोत्रम् ॥ ३६ ॥ दीक्षाऽनुजन्मोपसदः शिरोधरं त्वं प्रायणीयोदयनीयदंष्ट्रः ॥ जिह्वाप्रवर्ग्यस्तव शीर्षकं क्रतोः सभ्यावसथ्यं चितयोऽसवो हि ते ॥ ३७ ॥ सोमस्तु रेतः सवनान्यवस्थितिः संस्थाविभेदास्तव देव धातवः ॥ सत्राणि सर्वाणि शरीरसंधिस्त्वं सर्वयज्ञक्रतुरिष्टिबंधनः ॥ ३८ ॥ नमोनमस्तेऽखिलमंत्रदेवताद्रव्याय सर्वक्रतवे क्रियात्मने ॥ वैराग्यभक्त्यात्मजयाऽनुभावितज्ञानाय विद्यागुरवे नमोनमः ॥ ३९ ॥

तथा । त्रयीं वेदमयीम् । निलिल्युर्लीनप्रायाः । कारणं पृथिव्युद्धरणं तेन सूकराय ।। ३४ ।। यज्ञात्मतां प्रपंचयंतः स्तुवंति । रूपमित्यादिचतुर्भिः छंदांसि गायत्र्यादीनि । यज्ञांगभूतच्छंदआद्यनुवादेन भगवदवयवता विधीयते बार्हिःशब्दे दीर्घाभाव आर्षः । दृशि चक्षुषि चातुर्होत्रं होत्रादिकर्मचतुष्टयम् अंघ्रिषु ।। ३५ ।। स्रुक् जुहूस्तुंडे मुखाग्रे । स्रुवो नासिकयोः । इडा भक्षणपात्री । चमसा ग्रहाश्च सोमपात्राणि । प्राशित्रं ब्रह्मभागपात्रम् । ग्रस्यतेऽनेनेति ग्रसनं मुखांतर्वर्ति च्छिद्रम् । चर्वणं भक्षणम् ।। ३६ ।। दीक्षा दीक्षणीयेष्टिः । अनुजन्म वारंवारमभिव्यक्तिः । उपसदस्तिस्र इष्टयः । शिरोधरं ग्रीवा प्रायणीया दीक्षाऽनंतरेष्टिः । उदयनीयं समाप्तीष्टिः ते एव दंष्ट्रे यस्य प्रवर्ग्यो महावीरः प्रत्युपसदं पूर्वं क्रियते । सभ्यो होमरहितोग्निः । आवसथ्यमौपासनाग्निः तयोर्द्वैक्यम् । तत्त्व क्रतुरूपस्य शीर्षं शिरः चितय इष्टकाचयनानि पंचासवः प्राणाः ।। ३७ ।। सोमो लताविशेषस्तव वीर्यं प्रातःसवनादीन्यवस्थितिरासनं बाल्याद्यवस्था वा । अग्निष्टोमोऽत्यग्निष्टोम उक्थः षोडशी वाजपेयोऽतिरात्र आप्तोर्याम इति सप्तसंस्था विभेदास्त्वङ्मांसादिसप्तधातवः । सत्राणि द्वादशाहादीनि बहुयागसंघातरूपाणि असोमाः यज्ञाः ससोमाः क्रतवस्तद्रूपस्त्वम् । इष्टिर्यजनमनुष्ठानं तदेव बंधनं यस्य सः ।।३८।। पूर्वोक्तमेव सपरिकरं कीर्तयंतः प्रणमंति । नमोनम इति । अखिलमंत्रादिरूपाय क्रियात्मने सामान्यव्यापाररूपाय । किं च । वैराग्ययुक्तकर्मसाध्या सत्त्वशुद्धिस्ततो भक्ति

संबुद्धिर्वा ।। ३४ ।। ३५ ।। जुहूः पालाशमयी । स्रुवः खादिरः । 'चर्वणं चूर्वणं दंतैः' इति यादवः ।। ३६ ।। महावीरः संतप्तघृतपूर्णे क्षीरप्रक्षारणम् ।। ३७ ।। आदिना मज्जास्थ्यादिग्रहः । आदिनाष्टादशाहादिग्रहः । सोमोऽमृतवल्लीरसः । बंधनं संधिसंधानम् ।। ३८ ।। यद्यप्येवं त्वं लीलया सर्वकर्मप्रवर्त्तकत्वेन सर्वकर्मकारणमूर्त्तिरासि तदपि कर्मफलस्पृहारहितया भक्त्यैव तवानुभवो भवेदित्याहुः । वैराग्यं दृष्टादृष्टकर्मफलस्पृहाराहित्यं तद्युक्ता या भक्तिस्तयैवात्मनो मनसो जयस्तेनानुभावितं ज्ञानं स्वविषयकं येन तस्मै । अत एव विद्यागुरवे ''ददामि बुद्धियोगं तं येन मामुपयांति ते'' इति त्वदुक्तेस्त्वत्प्रापकं ज्ञानं त्वमेव दातुमर्हसीति भावः ।। ३९ ।।

दंष्ट्राऽग्रकोट्या भगवंस्त्वया धृता विराजते भूधर भूः सभूधरा ॥ यथा वनान्निःसरतो दता धृता मतंगजेंद्रस्य सपत्रपद्मिनी ॥ ४० ॥ त्रयीमयं रूपमिदं च सौकरं भूमंडले नाथ दता धृतेन ते ॥ चकास्ति शृंगोढघनेन भूयसा कुलाचलेंद्रस्य यथैव विभ्रमः ॥ ४१ ॥ संस्थापयैनां जगतां सतस्थुषां लोकाय पत्नीमसि मातरं पिता ॥ विधेम चास्यै नमसा सह त्वया यस्यां स्वतेजोऽग्निमिवारणावधाः ॥४२॥ कः श्रद्दधीताऽन्यतमस्तव प्रभो रसां गताया भुव उद्विबर्हणम् ॥ न विस्मयोऽसौ त्वयि विश्वविस्मये यो माययेदं ससृजेऽतिविस्मयम् ॥ ४३ ॥ विधुन्वता वेदमयं निजं वपुर्जनस्तपःसत्यनिवासिनो वयम् ॥ सटाशिखोद्धूतशिवांबुबिंदुभिर्विमृज्यमाना भृशमीश पाविताः ॥ ४४ ॥ स वै बत भ्रष्टमतिस्तवैष ते यः कर्मणां पारमपारकर्मणः ॥ यद्योगमायागुणयोगमोहितं विश्वं समस्तं भगवन्विधेहि शम् ॥ ४५ ॥

स्तत आत्मजयश्चित्तस्थैर्यं तेनानुभावितं साक्षात्कृतं यज्ज्ञानं तस्मै । एवंभूतज्ञानप्रदाय गुरवे च ॥ ३९ ॥ हे भूधर । सभूधरा सपर्वता । वनादुदकान्निर्गच्छतो गजेंद्रस्य । दता दंतेन ॥ ४० ॥ त्वया धृता भूर्विराजत इत्युक्तमिदानीं भूमंडलेन त्वद्रूपं विराजत इत्याहुः । त्रयीति । अथेत्यर्थांतरे । ते इदं रूपं दंतेन धृतं यद्भूमंडलं तेन चकास्ति शोभते । शृंगेणोढो धृतो यो घनस्तेन भूयसाऽतिमहता । विभ्रमो विलासः ॥ ४१ ॥ लोकाय वासस्थानार्थम् । ते पत्नीं सस्थावराणां जगतां मातरम् । यतस्त्वं पिताऽसि एवं सति तत्र स्थिताः संतस्त्वया पित्रा सहास्यै मात्रे नमसा विधेम नमनं करिष्यामः । नमस्कारेण परिचरेमेति वा । स्वतेजोधारणशक्तिं याज्ञिका मंत्रतोऽग्निमरणाविवाधाः निहितवानसि ॥ ४२ ॥ इदं च त्वयाऽतिदुष्करं कृतमित्याहुः । क इति । हे प्रभो तव त्वया कृतं भुव उद्विबर्हणमुद्धरणं त्वदन्यः कः श्रद्दधीत स्पृहयेत अध्यवस्येदित्यर्थः । त्वयि पुनरसौ विस्मयो न भवति यतो विश्वे सवे विस्मया यस्मिन् । कुतः । यो भवान् अतिविस्मयमत्यद्भुतमिदं विश्वं क्रियाविशेषणं वा । ससृजे सृष्टवान् ॥ ४३ ॥ विस्मयं दर्शयंतः प्रार्थयंते । विधुन्वतेति द्वाभ्याम्—सटानां शिखाभिरग्रैरुद्धूता उच्छलिता ये शिवा अंबुबिंदवस्तैः सिच्यमाना वयं पवित्रीकृताः ॥ ४४ ॥ तव अपारकर्मणः कर्मणां पारं य एष तेऽवलोकयति ज्ञातुमिच्छतीत्यर्थः । यस्य तव योगमाया यो गुणैः सह योगस्तेन मोहितम् । अतो विश्वस्य शं मंगलं विधेहि यथा त्वाम

अहो पृथिव्या भाग्यं यां त्वं धत्से इति तां वर्णयति दंष्ट्रेति । सपत्रपद्मिनीति । तस्याः कोरककुड्मलादिभिरुच्चनीचपर्वता उपमिताः ॥४०॥ कुलाचलानां मलयादीनामिंद्रो महापर्वतस्तस्य यथा विलासः शोभातिशय इति । "महेंद्रो मलयः सह्यः शुक्तिमानृक्षवांस्तथा । विंध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः" इति भारते ॥४१॥ किं युष्माकमभीप्सितं तद्ब्रूहीति चेत्तत्राहुः-संस्थापयेति । एवं सति त्वयि पितारि सति॥४२॥उद्विबर्हणमुद्धरणम् । इत्यर्थ इति । प्रभुत्वात्त्वय्येवैतद्घटेत नान्येत्रेति भावः । विश्वस्मिंस्तु विस्मयो न संभवति तस्य जडत्वादत आह—क्रियाविशेषणं वेति ॥ ४३ ॥ शिवा मंगलरूपा अत्यंतपवित्राः । ईशेति सर्वसमर्थः ॥४४ ॥ इत्यर्थ इति । 'इष—गतौ' भौवादिकः गत्यर्थानां ज्ञानार्थत्वेन ज्ञानेच्छापि तदर्थ इति भावः । ननु मायामोहितो जीवो मा जानातु मायातीतो मद्भक्तो नारदादिस्तु जानात्येवेति तत्राह—यस्य तव योगमायाचिच्छक्तिवृत्तिभेदः गुणयोगो

मैत्रेय उवाच ॥ इत्युपस्थीयमानस्तैर्मुनिभिर्ब्रह्मवादिभिः ॥ सलिले स्वखुराक्रांत उपाधत्ताऽविताऽवनिम् ॥४६॥ स इत्थं भगवानुर्वीं विष्वक्सेनः पिजपतिः ॥ रसायां लीलयोन्नीतामप्सु न्यस्य ययौ हरिः ॥४७॥ य एवमेतां हरिमेधसो हरेः कथां सुभद्रां कथनीयमायिनः ॥ शृण्वीत भक्त्या श्रवयेत वोशतीं जनार्दनोऽस्याऽऽशु हृदि प्रसीदति ॥४८॥ तस्मिन्प्रसन्ने सकलाशिषां प्रभौ किं दुर्लभं ताभिरलं लवात्मभिः ॥ अनन्यदृष्ट्या भजतां गुहाशयः स्वयं विधत्ते स्वगतिं परः पराम् ॥ ४९ ॥ को नाम लोके पुरुषार्थसारवित्पुरा कथानां भगवत्कथासुधाम् ॥ आपीय कर्णांजलिभिर्भवापहामहो विरज्येत विना नरेतरम् ॥ ५० ॥ इति श्रीभा० तृ० श्रीवराहप्रादुर्भावं० त्रयोदशः ॥ १३ ॥ श्रीशुक उवाच ॥ निशम्य कौषारविणोपवर्णितां हरेः कथां कारणसूकरात्मनः ॥ पुनः स पप्रच्छ तमुद्यतांजलिर्न चातितृप्तो विदुरो धृतव्रतः ॥ १ ॥

चिंत्यानंतशक्तिं ज्ञात्वा भजेत्तथाऽनुगृहाणेत्यर्थः ॥ ४५ ॥ उपस्थीयमानः स्तूयमानः । स्वखुराक्रांत इति जलेऽपि धारणशक्त्याधानं दर्शयति । अविता रक्षकः ॥४६॥ ॥ ४७ ॥ कथनीयानि मायीनि मायावंति चरित्राणि यस्य । श्रवयेत श्रावयेत ह्रस्वत्वमार्षम् । उशतीं कमनीयाम् । हृदि प्रसीदति स्वमनसि संतुष्यतीत्यर्थः ॥ ४८ ॥ आशिषो यद्यपि सुलभास्तथापि न प्रार्थनीया इत्याह । ताभिराशीभिरलम् । लवात्मभिस्तुच्छाभिः । न च तदा भजनस्य वैफल्यं शंकनीयमित्याह । भगवद्भजनव्यतिरेकेण फलांतरदृष्टिं विना भजतां स्वपदप्राप्तिं स्वयमेव विधत्ते । गुहाशयत्वादहैतुकीं भक्तिं जानन् ॥ ४९ ॥ अतः को नाम पुराकथानां पूर्ववृत्तानां मध्ये । कथंचिदापीय विरज्येत विरमेत् । नरेतरं पशुं विना ॥ ५० ॥ इति श्रीमद्भागवते तृतीयस्कंधे टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥ चतुर्दशे निदानं तु तद्वधे वक्तुमुच्यते ॥ संध्यायां

गुणमेलनरूपा विद्या च ताभ्यां मोहितश्च को जानातीत्यर्थः । यतः सर्वो मोहितोऽतो हेतोः । इत्यर्थ इति । येऽप्राकृतास्त्वद्भक्तास्ते योगमायया त्वन्माधुर्येषु निमज्य मोह्यंते "ज्ञानिनामपि चेतांसि देवी भगवती हि सा । बलादाकृष्य मोहाय महामाया प्रयच्छति" इत्युक्तेः । ये च प्राकृतास्ते मायया विषयसुखेषु निमज्य मुह्यंते इति । अतस्त्वदनुग्रहेणैव मिथ्याज्ञाननिवृत्त्या कल्याणं भवतीति भावः ॥ ४५ ॥ ४६ ॥ ततो हरिः किं चकारेति चेत्तत्राह—स इति । अप्सु जलेषु स्वशक्त्या स्थापयित्वा स्वलोकमिति शेषः अंतर्दधे वा ॥ ४७ ॥ हरति भक्तसंसारं नाशयतीति हरिः "कृदिकारादक्तिनः" इति वाङीष् । हरति मेधा बुद्धिर्यत्रेति हरिमेधास्तस्य ।यद्वा। हरति निजजनक्लेशमिति हरिः । मेधति हिनस्ति दुष्टदैत्यान् भक्तैर्युनाक्ति वेति मेधाः "मेधृसंगमहिंसयोः" इत्यसुन्प्रत्ययः । हरिश्चासौ मेधाश्चेति तथा । पुनरुक्तिभयात् न ह्रियते प्राप्यते भक्तिं विनेत्यहरिस्तस्य भक्तियोगगम्यस्येत्यर्थः । इत्यर्थ इति । जनार्दनः सर्वजनप्रार्थ्योऽप्यस्य वक्तुश्श्रोतुश्चोपरि स्वयं स्वचित्ते निजचरितश्रवणादिना तुष्यतीति भावः ॥४८ ॥ तास्मिन् जनार्दने ॥४९॥ यो विरज्येत स पशुरेवेत्यर्थः ॥५०॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥ तद्वधे हिरण्याक्षवधे । निदानं कारणं कामतो निषिद्धकामतः ॥ (१)॥ कारणेनं पृथ्व्युद्धारहेतुना सूकरस्यात्मा देहो यस्य स तथा ।तस्य न चातितृप्त इति

विदुर उवाच ॥ तेनैव तु मुनिश्रेष्ठ हरिणा यज्ञमूर्तिना ॥ आदिदैत्यो हिरण्याक्षो हत इत्यनुशुश्रुम ॥ २ ॥ तस्य चोद्धरतः क्षोणीं स्वदंष्ट्राऽग्रेण लीलया ॥ दैत्यराजस्य च ब्रह्मन्कस्माद्धेतोरभून्मृधः ॥ ३ ॥ मैत्रेय उवाच ॥ साधु धीर त्वया पृष्टमवतारकथां हरेः ॥ यत्त्वं पृच्छसि मर्त्यानां मृत्युपाशविशातनीम् ॥ ४ ॥ ययोत्तानपदः पुत्रो मुनिना गीतयाऽर्भकः ॥ मृत्योः कृत्वैव मूर्ध्न्यंघ्रिमारुरोह हरेः पदम् ॥ ५ ॥ अथात्रापीतिहासोऽयं श्रुतो मे वर्णितः पुरा ॥ ब्रह्मणा देवदेवेन देवानामनुपृच्छताम् ॥ ६ ॥ दितिर्दाक्षायणी क्षत्तर्मारीचं कश्यपं पतिम् ॥ अपत्यकामा चकमे संध्यायां हृच्छयार्दिता ॥ ७ ॥ इष्ट्वाऽग्निजिह्वं पयसा पुरुषं यजुषां पतिम् ॥ निम्लोचत्यर्क आसीनमग्न्यागारे समाहितम् ॥ ८ ॥ दितिरुवाच ॥ एष मां त्वत्कृते विद्वन्काम आत्तशरासनः ॥ दुनोति दीनां विक्रम्य रंभामिव मतंगजः ॥ ९ ॥

कश्यपाद्गर्भसंभवः कामतो दितेः ॥ १ ॥ १ ॥ तेनैव येन भूमिरुद्धृता । अनुशुश्रुम त्वन्मुखात् ॥ २ ॥ मृधो युद्धम् ॥ ३ ॥ साधुत्वे हेतुः । यद्यस्मात्त्वं हरेरवतारकथां पृच्छसीति मृत्योः पाशं विशातयति मोचयतीति तथा ॥ ४ ॥ तदेव दर्शयति । यया कथया । उत्तानपदः पुत्रो ध्रुवः । मुनिना नारदेन । अर्भक एव यदा ध्रुवाय सुनंदादिभिर्विमानमानीतं तदाऽस्य देहत्यागोऽपेक्षितः स्यादिति मत्वा मृत्यावासन्नेऽपि देहं न तत्याज किं तु सोपान इव तस्य मूर्ध्नि पदं दत्त्वा विमानमारुह्य विष्णुपदमारूढः । वक्ष्यति हि । "परीत्याभ्यर्च्य धिष्ण्याग्र्यं कृतस्वस्त्ययनो द्विजैः ॥ इयेष तदधिष्ठातुं बिभ्रद्रूपं हिरण्मयम्" इति ॥ ५ ॥ तयोः संग्रामे हेतुं वक्तुमितिहासं प्रस्तौति । अथेति । अनुपृच्छतां देवानां ब्रह्मणा वर्णित इतिहासो मया श्रुतः ॥ ६ ॥ देवप्रश्नप्रस्तावाय प्रथमं हिरण्याक्षहिरण्यकशिपूत्पत्तिप्रसंगमाह । दितिरित्यादिना यावदध्यायपरिसमाप्ति । मरीचेः पुत्रं कश्यपम् । हृच्छयः कामस्तेनार्दिता अतः संध्यायामेव कामितवती ॥ ७ ॥ तदप्यग्निहोत्रशालायां तत्रापि समाहितम् । अग्निर्जिह्वा यस्य यजुषां यज्ञानां पतिं पुरुषं श्रीविष्णुम् ॥ ८ ॥ कृपणां बहुभाषिणीमिति वक्ष्यति तत्र एष मामिति द्वाभ्यां कार्पण्यं भर्तरीति चतुर्भिश्च बहुभाषणं वर्ण्यते दुनोति पीडयति । विक्रम्य शौर्यमाविर्भा

"कस्तृप्येतामृतं जुषन्" इत्युक्तेः ॥ १ ॥ येन स्वायंभुवे पृथ्वी समुद्धृता चाक्षुषेपि तेनैवेत्यर्थः इति संदर्भः ॥ २ ॥ तस्य हरेः ॥ ३ ॥ यद्यपि युद्धप्रश्नो न शुभस्तथापि साधु पृष्टं युद्धमिषेण वराहावतारकथां मे पृच्छसीति भावः ॥ ४ ॥ तदेव मृत्युपाशविशातनत्वमेव । अर्भक इत्यनेन किशोरत्वं विवक्षितं तत्सान्निध्यात् । अन्यथा राज्यपालनयक्षयुद्धपुत्रोत्पत्त्यादिकं न संगच्छेतेति भावः । मूर्ध्नि पदं दत्त्वा तं विनमय्य मृत्युरपि तं ननामेत्यर्थः ॥ ॥ ५ ॥ तयोर्वराहहिरण्याक्षयोः । अथेति मंगले अत्रापि वराहहिरण्याक्षयुद्धेपि ॥ ६ ॥ देवप्रश्नप्रस्तावाय यथा देवाः प्रश्नं करिष्यंति तत्प्रसंगायेत्यर्थः । यतः कामपीडिताऽतो हेतोः ॥ ७ ॥ तदपि संध्यायामपि । तत्राप्यग्निहोत्रशालायामपि । समाहितं समाधिष्ठम् । अग्निजिह्वं "ब्राह्मणोऽग्निश्च वै विष्णोः सर्वदेवात्मनो मुखम्" इति वक्ष्यमाणत्वात् । निम्लोचति अस्तंगतवति । पयसेति पयोविकारेण 'घृतेन गोभिः श्रिणीतम्' इति वत्प्रयोगो बोध्यो यथाश्रुतार्थस्वीकारे त्वग्न्युच्छेदः स्यादिति ॥ ८ ॥ वक्ष्यमाणपूर्त्यर्थमाह—कृपणमित्यादि । तत्र कार्पण्यबहुभाषणयोर्मध्ये एव प्रत्यक्षमिव दृश्यमानः । त्वत्कृते इति । यद्यहमेकाकिन्यस्थास्यं तदा मम किमभ

तद्भवान्दह्यमानायां सपत्नीनां समृद्धिभिः ॥ प्रजावतीनां भद्रं ते मय्याऽऽयुंक्तामनुग्रहम् ॥१०॥ भर्तर्याऽऽप्तोरुमानानां लोकानाविशते यशः ॥ पतिर्भवद्विधो यासां प्रजया ननु जायते ॥ ११ ॥ पुरा पिता नो भगवान्दक्षो दुहितृवत्सलः ॥ कं वृणीत वरं वत्सा इत्यपृच्छत नः पृथक्॥१२॥ स विदित्वाऽऽत्मजानां नो भावं संतानभावनः ॥ त्रयोदशाऽददात्तासां यास्ते शीलमनुव्रताः ॥ १३ ॥ अथ मे कुरु कल्याण कामं कंजविलोचन ॥ आर्तोपसर्पणं भूमन्नमोघं हि महीयसि ॥ १४ ॥ इति तां वीर मारीचः कृपणां बहुभाषिणीम् ॥ प्रत्याहाऽनुनयन्वाचा प्रवृद्धानंगकश्मलाम् ॥ १५ ॥ एष तेऽहं विधास्यामि प्रियं भीरु यदिच्छसि ॥ तस्याः कामं न कः कुर्यात्सिद्धिस्त्रैवर्गिकी यतः ॥ १६ ॥ सर्वाश्रमानुपादाय स्वाश्रमेण कलत्रवान् ॥ व्यसनार्णवमत्येति जलयानैर्यथाऽर्णवम् ॥ १७ ॥ यामाहुरात्मनो ह्यर्धं श्रेयस्कामस्य मानिनि ॥ यस्यां स्वधुरमध्यस्य पुमांश्चरति विज्वरः ॥ १८ ॥

व्य । रंभां कदलीम् ॥ ९ ॥ आयुंक्तां सर्वतो युनक्तु सम्यक्करोतु ॥ १० ॥ भर्तरि प्राप्तबहुमानानां स्त्रीणां यशो लोकानाविशते व्याप्नोति । प्रजया पुत्ररूपेण । "तज्जाया जाया भवति यदस्यां जायते पुनः" इति श्रुतेः ॥ ११ ॥ नोऽस्माकं पिता नोऽस्मान्पृथगपृच्छत । अयं भावः त्रयोदशानामप्यस्माकं त्वयि भावसाम्ये वैषम्याचरणं तवानुचितमिति ॥ १२ ॥ १३ ॥ मोघं न भवति हि । महीयसि त्वादृशे महत्तमे ॥ १४ ॥ प्रवृद्धानंगेन कश्मलं मोहो यस्यास्ताम् ॥ १५ ॥ संध्याकालवंचनाय भार्याप्रशंसा । एष इति पंचभिः । यतो यस्याः सकाशात् ॥ १६ ॥ सर्वाश्रमानुपादायेति तानप्यन्नादिदानेन कृच्छ्रतस्तारयन्स्वयं तरतीत्यर्थः ॥ १७ ॥ आत्मनो देहस्यार्धं कर्मसु

विष्यदिति पत्यौ तस्मिन्नेव दोषो न्यस्तः । दीनां दुनोति त्वं पतिः कथं मां न रक्षसीति भावः । ननु कथं सहसैव लज्जामहासीस्तत्राह—रंभामिवेति । यदि प्राणा नश्यंति तदा किं लज्जयेति भावः ॥ ९ ॥ न च केवलमहं कामातुरैव रतिं याचे किं तु पुत्रार्थिन्यपीत्याह—तदिति । यतोहमेकैवापुत्रा तत्ततः समृद्धिभिः पुत्रलक्षणार्द्धिभिः ते भद्रमिति स्वीयार्थसिद्ध्यर्थमाशीर्ददातीति भावः ॥ १० ॥ त्वत्प्रसादाद्यशस्विनी पुत्रवती च स्यामित्याह—भर्त्तरीति भर्त्तुः सकाशादित्यर्थः । तत्तदा यद्यदेति श्रुतिपदार्थः । यद्वा । भवद्विधः पतिः प्रजया हेतुनैव जायतेऽतोहं कथं न पुत्रवती स्यामिति भावः ॥ ११ ॥ किं च विवाहात्प्रागेवाहं त्वय्यनुरागिणी स्यामित्यतः प्रत्याख्येयवाक्यो भवितुं नार्हसीत्याह—पुरेति । भगवान् सर्वचित्ताभिप्रायज्ञः । हे वत्साः ॥ १२ ॥ स दक्षः नोस्माकं लज्जया त्वन्नामागृह्णतीनामिंगितेनैव जनांतरद्वारा भावमभिप्रायं सहसा ज्ञात्वेत्यर्थः । अस्माकं त्रयोदशानां मध्ये कथमहमेवाऽपुत्रिणीत्यन्यासां पुत्रप्रदानं मम नेति वैषम्यं तव नोचितमिति भावः ॥ १३ ॥ अथातः कंजविलोचनेति श्लाघ्यसंबोधनं तु स्वस्यां दयोत्पत्त्यर्थं सौंदर्यद्योतनार्थं वा ननु सायं स्वरमणार्थं मत्समाधिभंगे यतमाना त्वं कथं मत्समशीलेत्यत आह—आर्तोपसर्पणमिति संप्रत्यहमार्त्ता किं करोमि 'नार्त्तः कालं प्रतीक्षते' इति शास्त्रं परमदयालुस्त्वं जानास्येवेति भावः । महांतस्त्वन्येषामकार्यमपि क्षमंत इत्याह भूमन्निति ॥ १४ ॥ हे वीरेति । यथा भवद्विधा धर्मवीरास्तथा न कश्यप इति यतोऽनुनयन्नेवाह—न सकोपकटाक्षं तर्ज्जयन्निति यद्यहं कृत्रिममपि कोपं दर्शयिष्ये तदा तस्या भीत्या कामपीडाप्यंतरधास्यतैवेति भावः । प्रवृद्धेति न ह्यनंगघूर्णिता ह्यनुनयं सहत इति भावः ॥ १५ ॥ एषोहम् । भीरु भयशीले त्रैवर्गिकी धर्मार्थकामरूपा ॥ १६ ॥ इत्यर्थ इति । गृहस्थ एव सर्वेषामाश्रमाणां परायणं वानप्रस्थाश्रमस्योत्पत्तिद्वारा न त्वन्नदानादिनेति ज्ञेयमिति कृच्छ्रतः क्षुधादिरूपात् वानप्रस्थं तु सिंहव्याघ्रादिकृच्छ्रत इति ज्ञेयं स्वयं च तेषामुपकृत्या कृच्छ्रतः संसारात्तरतीति भावः ॥ १७ ॥ कर्मस्वग्निसाध्येषु द्वयोः स्त्रीपुंसयोः "पाणिग्रहणाद्धि सहत्वं कर्मसु" इति श्रुतेः । दष्टं गृहरक्षावस्तुसंचयनादिलक्षण

यामाश्रित्येंद्रियारातीन्दुर्जयानितराश्रमैः ॥ वयं जयेम हेलाभिर्दस्यून्दुर्गपतिर्यथा ॥१९॥न वयं प्रभवस्तां त्वामनुकर्तुं गृहेश्वरि ॥ अप्यायुषा वा कात्स्न्येंन ये चान्ये गुणगृध्नवः ॥२०॥अथापि काममेतं ते प्रजात्यै करवाण्यलम् ॥ यथा मां नातिवोचंति मुहूर्तं प्रतिपालय॥२१॥एषा घोरतमा वेला घोराणां घोरदर्शना ॥ चरंति यस्यां भूतानि भूतेशानुचराणि ह ॥ २२ ॥ एतस्यां साध्वि संध्यायां भगवान्भूतभावनः ॥ परीतो भूतपर्षद्भिर्वृषेणाऽटति भूतराट्॥२३॥श्मशानचक्रानिलधूलिधूम्रविकीर्णविद्योतजटाकलापः॥भस्मावगुंठामलरुक्मदेहो देवस्त्रिभिः पश्यति देवरस्ते॥२४॥

द्वयोः सहाधिकारात् । यच्छब्दानां तां त्वामिति तृतीयश्लोकेन संबंधः । स्वधुरं दृष्टादृष्टकर्मभारम् । विज्वरो निश्चिन्तः ॥१८॥ हेलाभिर्लीलाभिः जयेमेति सभार्यस्येंद्रियाणि प्रायेणेतरस्ततो न सर्पंतीति भावः ॥ १९ ॥ तामनेकोपकारकर्त्रीं त्वां कात्स्न्येंनानुकर्तुं प्रत्युपकारैस्त्वत्सदृशा भवितुं न प्रभवो समर्थाः । ये चान्ये गुणगृध्नवो गुणप्रियास्तेऽपि न समर्थाः । संपूर्णेनाप्यायुषा । वाशब्दाज्जन्मांतरैरपि न प्रभव इत्युक्तम् ॥ २० ॥ यद्यपि त्वदनुकरणमशक्यम् । प्रजात्यै पुत्रोत्पत्त्यै । नातिवोचंति न निंदंति । प्रतिपालय प्रतीक्षस्व ॥ २१ ॥ स्वनिंदामगणयंतीं भीषयन् श्रीरुद्रमनुवर्णयति । एषेति सप्तभिः । घोराणामेषा वेला स्वयं च घोरदर्शना ॥ २२ ॥ भूतपर्षद्भिर्भूतगणैः॥२३॥तर्हि तत्संमुखत्वमात्रं वर्जनीयमिति चेत्तत्राह श्मशाने यश्चक्रानिलो वातमंडली तस्मिन् या धूलिस्तया धूम्रो विकीर्णो विक्षिप्तो विद्योतो द्युतिमान् जटाकलापो यस्य । भस्मनाऽवगुंठः प्रावृतोऽमलो रुक्मवद्देहो यस्य । स देवस्त्रिभिः सोमार्काग्निनेत्रैः पश्यतीत्यस्योत्तरश्लोकत्रयेऽप्यनुषंगः। एकस्य जामातरः परस्परं भ्रातरो

मदृष्टं दैवपित्र्यतिथिसेवनादि स्वर्गादिहेतुः अध्यस्य निक्षिप्य ॥१८॥ इति भाव इति ।गृहस्थेतराः कामार्त्ता अगम्यागमनादिना नरकांश्चिरमनुभवंति । वस्तुतः स्त्रीमात्रस्यैव तेषामगम्यत्वादवश्यं तेषां तप्तसूर्म्याख्यनिरये वासः गृहस्थस्य तु स्वाधीनकस्तत्रत्वेन व्यभिचारासंभवान्नरको न संभवति यस्तु तत्रापि व्यभिचारादिनिष्ठः स न गृहस्थः किं तु पतित एव सुतस्याप्यवश्यं नरके वासः “कुपूयाचरणाः कुपूयामेव योनिमाप्नुवंति” इति श्रुतेः। तथा चेतराश्रमापेक्षया गृहस्थाश्रम एव श्रेयानिति तात्पर्यम् । दस्यवो हि दुर्गमाश्रित्यैव जनान् लुंठंति यस्तु दुर्गपतिस्तत्र कथं तेषां प्रभाव इति दुर्गोत्र विषयभोगस्तत्र पतितान्ब्रह्मचार्यादीनेव भ्रंशयंतींद्रियदस्यवो न तु गृहस्थांस्तेषां विषयभोगस्य शास्त्रविहितत्वेन दुरदृष्टानुत्पत्तेः । यद्वेंद्रियाणामरातयो विषयास्तान् वक्ष्यति च “यः षट् सपत्नान्विजिगीषमाणो गृहेषु निर्विश्य यतेत पूर्वम् ॥ ” इत्यादिना पञ्चमस्कंधे इममेवार्थं प्रियव्रतं प्रति ब्रह्मा ॥ १९ ॥ तदेवं स्त्रियमाश्रित्यैव गृहस्थ एव सुखेन विषयमपि भुंक्ते नरकेपि न पतति न तु विरक्त इत्यत आह–नेति । या पतिं नरकाद्रक्षेत्तां त्वां त्वादृशीं वयं मत्सदृशाः गुणगृध्नवः स्त्रीगुणास्तु गृहशोधनसंतत्युत्पादनागम्यागमनरक्षणप्रियसंभाषणपाकादिनैपुण्यादयस्तेषु दृष्टिवंतो ये तेपि स्त्रीं प्रत्युपकर्तुमक्षमाः संतस्तदनुकूल्यमेव जुषन्त इति भावः ॥ २० ॥ नन्वलं वाग्विलासैः कालविलंबस्य दुःसहत्वात्तूर्णं तल्पगृहं प्रविशेति चेत्तत्राह यथा मामिति । अत्यत्रोपसर्गपूर्वाद्वचेश्छांदसं रूपमतिवोचंतीति कचिच्छोचंतीति पाठः । तर्हीदं वाक्यं गुडजिह्विकातुल्यमेवेत्यत आह–मुहूर्त्तं संध्यामुहूर्त्तं प्रदोषमित्यर्थः ॥२१॥ घोराणां भूतप्रेतादीनां वेला समयस्तेषां विहारकाल इत्यर्थः । घोराणां दर्शनं यस्यां सा तथा । यद्वा । घोरं भयंकरं दर्शनं यस्यास्सा तथा अत एव घोरतमाऽतिशयेन भयंकरेति तदेवाह–चरंतीति । भूतेशस्य रुद्रस्यानुचराणि भूतानि प्रमथादीनि ॥२२॥ भवत्सामर्थ्येन भूतान्यपि किं करिष्यंतीति भूतान्यप्यगणयंतीं पुनराह–एतस्यामिति । न हि साध्वीनां सदाचाराणामयं धर्म इति बोधयन्नाह–साध्वीति । भगवानतीव समर्थः । यश्चाधुना विकर्मनिरतस्तं भूतैर्नाशयतीत्याह–भूतराडिति । अत एव भूतानि सांसारिकाणि स्वगमनेन विकर्म निवर्त्तयन्भावयति पालयतीति तथा ॥२३॥ समाधत्ते तर्हीति । जटाकलापेन सर्वं प्रकाशयित्वा देदीप्यमानदेहेन च सोमसूर्याग्निनेत्रैश्च नः पश्यति । तथा च न ततः किंचिदपि

न यस्य लोके स्वजनः परो वा नात्यादृतो नोत कश्चिद्विगर्ह्यः ॥ वयं व्रतैर्यच्चरणापविद्धामाशास्महेऽजां बत भुक्तभोगाम् ॥ २५ ॥ यस्याऽनवद्याचरितं मनीषिणो गृणंत्यविद्यापटलं बिभित्सवः ॥ निरस्तसाम्यातिशयोऽपि यत्स्वयं पिशाचचर्यामचरद्गतिः सताम् ॥ २६ ॥ हसंति यस्याचरितं हि दुर्भगाः स्वात्मन् रतस्याऽविदुषः समीहितम् ॥ यैर्वस्त्रमाल्याभरणानुलेपनैः श्वभोजनं स्वात्मतयोपलालितम् ॥ २७ ॥ ब्रह्मादयो यत्कृतसेतुपाला यत्कारणं विश्वमिदं च माया ॥ आज्ञाकरी तस्य पिशाचचर्या अहो विभूम्नश्चरितं विडंबनम् ॥ २८ ॥

व्यवह्रियंते अतो मम भ्राता असौ तव देवर इति लज्जार्थमुक्तम् ॥ २४ ॥ ननु तथापि महत्त्वेनादरणीयस्य स्वजनस्य च तव स सर्वं क्षमेतैव तत्राह । यस्य स्वजनादिर्नास्ति समत्वात् । ईश्वरस्य ऐश्वर्यमेवाह । येन चरणेनापविद्धां निर्माल्यवद्दूरतस्त्यक्तां तेन भुक्तभोगामजां मायां तन्मयीं विभूतिं महाप्रसाद इत्याशास्महे । व्रतैस्तमाराध्य ॥ २५ ॥ अनिषिद्धसुखत्यागादसौ पिशाच इत्युपहासो न कार्य इत्याह द्वाभ्याम् । यस्यानवद्यं विषयासक्तिशून्यमाचारितम् । बिभित्सवो भेत्तुमिच्छवः ॥ २६ ॥ समीहितमभिप्रेतं लोकशिक्षारूपमविदुषोऽविद्वांसः । यद्वा । न विद्वानन्यो यस्मादिति तस्य सर्वज्ञस्येत्यर्थः । दुर्भगानेवाह । यैरिति । श्वभोजनं शुनां भोज्यं शरीरं स्वात्मतया यमेवात्मेति बुद्ध्या ॥ २७ ॥ अहो अतर्क्यं तस्याचरणमित्याह । ब्रह्मादयो येन कृतान्सेतून्स्वस्वाधिकारान्पालयंति यः कारणं यस्य येन कृतमिदं विश्वम् । माया च यस्या

स्थलं गुप्तमस्तीति ॥२४॥अत्राशंकते नन्विति । यद्यपि पश्यति तथापीति संदर्भकारस्तस्य श्लोकस्यावतरणिकामित्थमाह—ननु श्मशानादिसंबंधः कथमस्मै रोचते यदि रोचते तर्ह्यस्माकं दुर्वृत्तमपि रोचेत किञ्च यदि देवरस्तर्ह्यस्मत्संदृश एव कथमेतादृशस्यादरः स्यात्तत्राह—नेति । महानुभावत्वादस्मभ्यं सर्वसंपत्प्रदत्वात्तस्यानादरे दोष एव स्यादिति भावः ॥२५॥ ननु तस्यापि दिगंबरतया सदैव स्त्रिया सह मिथुनीभूय तिष्ठतः सर्वं सच्चरितमहं जानामीति तत्राह—हे कुमनीषिणि दिते मत्तः सकाशात्तच्चरितं शृण्विति यस्यानवद्यमनिंद्यमेव चरितं मनीषिण एवादरेण गृणंति ते संसारान्मुक्ता भवंतीत्यर्थः । पटलो दर्शनप्रतिबंधको नेत्ररोगविशेषः । इह चाविद्यैव पटलं भगवद्दर्शनप्रतिबंधकत्वात् । निरस्तावपगतौ साम्यातिशयौ तुल्याधिक्ये यस्मात्स तथा पिशाचो देवयोनिविशेषो भूतभेदस्तादृशीं चर्यां तैः सह चरणं वा सतां सदाचारनिरतानां गतिराश्रयः स्वयमचरन्न तु कस्यचिदाज्ञयेति । तच्च देहानुशयत्यागार्थमेवेति तत्त्वम् ॥२६॥ ये तु तच्चरितं निंदंति ते संसारिणो भवंतीत्याह—हसंतीति । लोकशिक्षेति । देहस्य कुत्सितत्वं दर्शयित्वा स्वात्मनिष्ठा कर्त्तव्येति लोकशिक्षारूपम् आर्षत्वापेक्षया सुगमपंथानमाह—यद्वेति । इत्यर्थः इति । नञा पञ्चमीबहुव्रीहिणायमर्थो लभ्यत इति भावः । दुर्भगा न कस्याप्यनुकंप्या इत्यर्थः । यद्वा । स्वात्मनः स्वस्यात्मनि श्रीकृष्णे रतस्य समीहितमभिप्रायम् । तच्च समीचीनगंधपुष्पवस्त्राभरणादीनि मत्प्रभोः श्रीकृष्णस्यैवार्हाणीति तस्मै यान्यतो नाहमुपभुंज इत्येवरूपम् । दुर्भगलक्षणमाह—यैरित्यादि ॥२७॥ तस्य हरस्य अतर्क्यं तर्कागोचरम् । "यस्याज्ञया जगत्स्रष्टा विरिञ्चिः पालको हरिः । रुद्रः संहारकर्त्ता च नमस्तस्मै पिनाकिने" इति श्रुतेः । इत्यर्थ इति । न हि तर्कागोचरे किंचिद्वक्तव्यमस्तीति भावः । अत एवोक्तं गंधर्वराजेनापि "अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः" इति महिम्नाख्यस्तवे । यद्वा । तत्र विश्वेश्वरे के वयं वराका इत्याह—ब्रह्मादयो मन्त्रादि

मैत्रेय उवाच ॥ सैवं संविदिते भर्त्रा मन्मथोन्मथितेंद्रिया ॥ जग्राह वासो ब्रह्मर्षेर्वृषलीव गतत्रपा ॥ २९ ॥ स विदित्वाऽथ भार्यायास्तं निर्बंधं विकर्मणि ॥ नत्वा दिष्टाय रहसि तयाऽथोपविवेश ह ॥ ३० ॥ अथोपस्पृश्य सलिलं प्राणानायम्य वाग्यतः ॥ ध्यायञ्जजाप विरजं ब्रह्म ज्योतिः सनातनम् ॥ ३१ ॥ दितिस्तु व्रीडिता तेन कर्मावद्येन भारत ॥ उपसंगम्य विप्रर्षिमधोमुख्यभ्यभाषत ॥ ३२ ॥ दितिरुवाच ॥ मा मे गर्भमिमं ब्रह्मन्भूतानामृषभो वधीत् ॥ रुद्रः पतिर्हि भूतानां यस्याऽकरवमंहसम् ॥३३॥ नमो रुद्राय महते देवायोग्राय मीढुषे ॥ शिवाय न्यस्तदंडाय धृतदंडाय मन्यवे ॥ ॥ ३४ ॥ स नः प्रसीदतां भामो भगवानुर्वनुग्रहः ॥ व्याधस्याप्यनुकंप्यानां स्त्रीणां देवः सतीपतिः ॥ ३५ ॥ मैत्रेय उवाच ॥ स्वसर्गस्याशिषं लोक्यामाशासानां प्रवेपतीम् ॥ निवृत्तसंध्यानियमो भार्यामाह प्रजापतिः ॥ ३६ ॥

ज्ञाकरी । विभुम्नः परमेश्वरस्य विडंबनमतर्क्यमित्यर्थः ॥ २८ ॥ भर्त्रा निरूपकेणैवं संविदिते ज्ञापितेऽपि सति वृषलीव वेश्येव ॥ २९ ॥ विकर्मणि निषिद्धे कर्मणि दिष्टाय देवरूपायेश्वराय । उपविवेशेति मैथुनं लक्ष्यते ॥ ३० ॥ उपस्पृश्य स्नात्वा भर्गशब्दवाच्यं विरजं ज्योतिर्ध्यायन्सनातनं ब्रह्म गायत्रीं प्रणवं वा जजाप ॥ ३१ ॥ कर्मावद्येन कर्मदोषेण॥ ३२॥मा वधीन्मा हंत्वित्यर्थः । वधशंकाबीजमाह । रुद्र इति । यस्य रुद्रस्य अंहसमंहोऽपराधमकरवं कृतवत्यस्मि ॥३३॥ रुत् दुःखं तद्द्रावयतीति रुद्रस्तस्मै उग्रायानतिलंघ्याय मीढुषे सकामेषु फलसेचनकर्त्रे निष्कामेषु शिवाय वस्तुतो न्यस्तदंडाय दुष्टेषु धृतदंडाय संहारे मन्यवे ॥ ३४ ॥ भामो भगिनीभर्ता उरुरनुग्रहो यस्य व्याधस्य निर्दयस्यापि सतीपतिरित्यनेन स्त्रीणां स्वभावं स्वयमपि वेत्तीति सूचयति ॥ ३५ ॥ स्वसर्गस्य स्वसंतानस्याशिषं शुभं लोक्यां लोकद्वयार्हां संध्यायां यो

रूपेण यत्कृतान्सेतून् । सायं स्त्रीसंगभोजनस्वापत्यागादिरूपा मर्यादाः पालयंति "चत्वारीमानि कर्माणि संध्यायां परिवर्जयेत् । आहरं मैथुनं निद्रां स्वाध्यायञ्च चतुर्थकम्" इति स्मृतेः ॥ २८ ॥ सा दितिः एवमुक्त रीत्या महादेवविभीषिकाप्रदर्शनेन वासः कटिवस्त्रं "कामो विवेकं ग्रसति स्वीयमन्यैश्च दर्शितम् । अत्र प्रमाणं ब्रह्मैव पुंसु स्त्रीषूच्यते दितिः" इत्यभियुक्तोक्तेः ॥ २९ ॥ स कश्यपः अथ ज्ञापनानंतरं तं सुरतलक्षणं निर्बंधं दुराग्रहं तया दित्या अथेश्वरनत्युत्तरं "निवेश उपभोगः स्यादुपवेशस्तु मैथुनम्" इत्यभिधानात् । हेति प्रत्यारंभे ॥ ३० ॥ अथ मैथुनोत्तरं भर्गशब्दवाच्यं सूर्याभिन्नं ब्रह्म विरजं वरेण्यम्, एतेनाकालमैथुने स्नात्वा तत्प्रायश्चित्तरूपेण गायत्रीजपो विधेयः कार्यःशैघ्र्ये तु प्रणवजपो वा कार्य इत्युक्तम् । "अनुक्ते त्वष्टसाहस्रं सहस्रं वा जपेदृचम्" इति स्मृतेः । "स्यादुपस्पर्शनं स्पर्शे स्नानाचमनयोरपि" इतिमेदिनी ॥३१॥ अधोमुखी व्रीडयाऽवाङ्मुखी ॥ ३२ ॥ इत्यर्थ इति । भूतानां श्लेषेण जीवजातानामृषभत्वादिति भावः बीजं हनने कारणम् ॥ ३३ ॥ द्रावयति दूरी करोति । यद्वा । रोदयत्यपराधिनमिति रुद्रस्तस्मै अपराधक्षम णार्थमाह–महते महत्त्वादपराधमगणयते । यद्वा । मद्गर्भं हनिष्यते स इत्यत आहोग्राय । तन्निवृत्तये पुनराह–मीढुषे मन्मनोरथशाखिनं कृपामृतेनाभिषेक्ष्यते यतो वस्तुतः परमार्थतः । यद्वा । मां दंडयिष्यतेतो मन्यवे मन्युस्वरूपाय ॥ ३४ ॥ एवं संशयानैव स्तुवाना स्वदैन्यं दर्शयंती तस्मादभयं प्रार्थयते । यद्वा । सत्या अप्यनुरोधेन तद्भगिनी मां सा दंडयत्विति सा सती मदपराधं मार्जयत्विति वा भावः ॥ ३५ ॥ ३६ ॥

कश्यप उवाच ॥ अप्रायत्यादात्मनस्ते दोषान्मौहूर्तिकादुत ॥ मन्निदेशातिचारेण देवानां चातिहेलनात् ॥ ३७ ॥ भविष्यतस्तवाभद्रावभद्रे जाठराधमौ ॥ लोकान्सपालांस्त्रींश्चंडि मुहुराक्रंदयिष्यतः ॥ ३८ ॥ प्राणिनां हन्यमानानां दीनानामकृतागसाम् ॥ स्त्रीणां निगृह्यमाणानां कोपितेषु महात्मसु ॥ ३९ ॥ तदा विश्वेश्वरः क्रुद्धो भगवान् लोकभावनः ॥ हनिष्यत्यवतीर्योऽसौ यथाऽद्रीञ्छतपर्वधृक् ॥ ४० ॥ दितिरुवाच ॥ वधं भगवता साक्षात्सुनाभोदारबाहुना ॥ आशासे पुत्रयोर्मह्यं मा क्रुद्धाद् ब्राह्मणाद्विभो ॥ ४१ ॥ न ब्रह्मदंडदग्धस्य न भूतभयदस्य च ॥ नारकाश्चानुगृह्णंति यां यांयोनिमसौ गतः ॥ ४२ ॥

नियमः स निवृत्तो यस्य ॥ ३६ ॥ ते आत्मनश्चित्तस्याप्रायत्यादशुचित्वात् मौहूर्तिकात्संध्यारूपात उत अपि मम निदेशस्याज्ञाया अतिचारेणातिक्रमेण देवानां रुद्रानुचराणाम् ॥ ३७ ॥ एतैश्चतुर्भिर्हेतुभिर्जाठराधमौ पुत्रापसदौ भविष्यत इत्यन्वयः । हे चंडि कोपने ॥ ३८ ॥ हन्यमानानां सताम् ॥ ३९ ॥ शतपर्वधृक् वज्रधर इंद्रः ॥ ४० ॥ सुनाभेनोदारो बाहुर्यस्य । मह्यं मम । कोपितेष्वित्युक्तत्वाच्छंकितचित्ता सती प्रार्थयते ब्राह्मणान्मा भूदिति ॥ ४१ ॥ नारका अपि तथा यांयां योनिमसौ गतो भवति

"प्रयतः सावधानपवित्रयोरस्ति" इति नाममाला । मौहूर्तिकात्संध्यामुहूर्तजात् । अवहेलनमवज्ञानम् । चावहेलनादिति पाठानुरोधात् ॥ ३७ ॥ अभद्रे निषिद्धरतिकरणात्वस्य स्वपुत्राणां च भद्रमपहृतमित्याशयेनाह—हे अभद्रे अभद्राविति च जाठरौ जठरभवौ च तावधमौ जाठराधमौ अधमत्वमाह—लोकानिति । देवकोपनकर्त्रीत्वाचंडीत्याह । यद्वा । अकारवाच्याद्वासुदेवाद्भद्रं ययोस्तावभद्राविति । तवापि पुत्रद्वारा तत एव भद्रं भविष्यतीत्याहाभद्रे इति वा ॥ ३८ ॥ अकृतागसां निरपराधानां निगृह्यमाणानां प्रसह्याहृतानां सतीनां महति परमेश्वरे आत्मा मनो येषां तेषु विप्रादिषु "यत्रयत्र द्विजा गावः" इत्यग्रे वक्ष्यमाणत्वात् ॥ ३९ ॥ शतपर्व वज्रम् ॥ ४० ॥ " ब्रह्मकोपहतानां च न गतिर्विद्यते क्वचित्" इत्युक्तेः । यद्वा ब्राह्मणाद्रुद्रात् । तदुक्तं पराशरपुराणे "पितामहस्तु वैश्यश्च क्षत्रियः परमो हरिः । ब्राह्मणो भगवान्रुद्रः सर्वेषामुत्तमोत्तमः" इति । प्रपदाख्यसाम्न्यपि "त्वं देवेषु ब्राह्मणोऽस्यहं मनुष्येषु ब्राह्मणो वै ब्राह्मणमुपधावति" इति श्रुतेश्च । शिवो ब्राह्मण एवेति तत्त्वम् । उपधावति सेवत इत्यर्थः । श्रुत्या ब्राह्मणस्य देवतांतरोपासनापि निषिद्धा । यतः स्वोत्कृष्ट एवोपास्यते न तु स्वनिकृष्टः । उत्कृष्टाभावे स्वसमोऽप्युपास्य इति शिवापेक्षया देवतांतरस्य जातिहीनत्वात्तस्यैव महत्त्वमत एव तत्र महेश्वरमहादेवशब्दौ प्रयुज्येते हारिवंशेऽपि विष्णुपर्वसप्तविंशशताध्याये पारिजातोपाख्याने रुद्रस्तुतौ कश्यपेनाप्युक्तम् । "हविर्भुजं भुवनानां सदैवं ज्येष्ठं द्विजं धर्मभृतां प्रपद्ये" इत्युक्तं नीलकंठेन ज्येष्ठं द्विजं ब्राह्मणमिति व्याख्यातमित्ययमर्थः प्रपंचित इति । किं चात एव मंत्रशास्त्रेपि मनुष्यगुरौ श्रद्धाद्यभावे यथोचितगुरोरलाभे वा महादेवादीक्षा ग्राह्या तस्यैव सर्वदेवेषु गृहस्थत्वे सति ब्राह्मणत्वात् । दीक्षा च "तत्त्वज्ञो मंत्रयंत्राणां ब्राह्मणो वीतमत्सरः । गृहस्थः सत्यवादी च गुरुः कार्यः प्रयत्नतः" इत्याद्यगस्त्यसंहितोक्तेर्गृहस्थविप्रादेव ग्राह्या तादृशो रुद्रं विना नान्यदेवोऽस्तीति " गुरोरभावे विप्रेंद्र मंत्रग्रहणमुच्यते । कृष्णपक्षे त्रयोदश्यां दक्षिणा मूर्त्तिसन्निधौ" इत्यादिना तंत्रसारामृदावे । तत्प्रपंचितएकादशे प्रपंचयिष्यामो वयमप्यत उपरम्यतेऽत्र । किं च विष्णूपासना शिवोपासनातो न भिन्नास्ति । "यो वै रुद्रः स नारायणः" इति श्रुतेस्तदभिन्नत्वादिति ध्येयं सुज्ञैः । किञ्च । विष्णोरुपासनापि ब्राह्मणस्य श्रुत्यैव बोधिता "यस्त्वेवं ब्राह्मणो विद्यात्तस्य देवा असन्वशे" इत्युत्तरनारायणसूक्तोक्तेरित्यलं प्रसक्तानुप्रसक्त्येति । तमतिसुंदरं बाहुं पुत्रौ मे द्रक्ष्यत इति भाग्यवंतावेव पुत्रौ मे भविष्यतस्तथा मरणस्यावश्यकत्वेऽपि तद्धस्ततस्तयोर्मृतौ सर्वपापनिस्तारश्च भावीत्यत आशासे वांछाम्यहं मह्यं तावपि निस्तारयितुं तादृक्पुत्रयोर्माताहमपि जन्ममध्येप्यदृष्टभगवद्रूपापि पुत्रसंबंधेन भगवद्दर्शिनीबाभिमंस्ये क्रुद्धाद्विप्राद्वधं मा आशास्स इति ब्राह्मणान्मे पुत्रौ मरिष्यत इति शंकितचित्ता व्याकुलैवाहमखिद्यं संप्रति भगवद्धस्ततो वधं श्रुत्वा स्थिरचित्तैवाभूवमिति भावः ॥ ४१ ॥ ब्रह्महतस्य न कुत्रापि सुखमित्याह-नेति । नारका नरकस्थाः । असौ ब्रह्मदंडहतो भूतभयदश्च । कृपां न कुर्वंति स्वसमीपे

कश्यप उवाच ॥ कृतशोकानुतापेन सद्यः प्रत्यवमर्शनात् ॥ भगवत्युरुमानाच्च भवे मय्यपि चादरात् ॥ ४३ ॥ पुत्रस्यैव तु पुत्राणां भवितैकः सतां मतः ॥ गास्यंति यद्यशः शुद्धं भगवद्यशसा समम् ॥ ४४ ॥ योगैर्हेमेव दुर्वर्णं भावयिष्यंति साधवः ॥ निर्वैरादिभिरात्मानं यच्छीलमनुवर्तितुम् ॥ ४५ ॥ यत्प्रसादादिदं विश्वं प्रसीदति यदात्मकम् ॥ स स्वदृग्भगवान्यस्य तोष्यतेऽनन्यया दृशा ॥४६॥ स वै महाभागवतो महात्मा महाऽनुभावो महतां महिष्ठः ॥ प्रवृद्धभक्त्या ह्यनुभाविताशये निवेश्य वैकुंठमिमं विहास्यति ॥ ४७ ॥ अलं पटुः शीलधरो गुणाकरो हृष्टः परर्द्धचा व्यथितो दुःखितेषु ॥ अभूतशत्रुर्जगतः शोकहर्ता नैदाघिकं तापमिवोडुराजः ॥ ४८ ॥

तत्रस्थाश्च नानुगृह्णंति कृपां न कुर्वंति ॥ ४२ ॥ कृतो योऽपराधस्तेन शोकस्ततोऽनुतापस्तेन प्रत्यवमर्शनाद्युक्तायुक्तविचारात् भगवति हरौ भवे श्रीरुद्रे एतैः कारणैः॥ ४३॥ पुत्रस्य हिरण्यकशिपोः पुत्राणां मध्ये एक सतां मतो भविष्यति । तमेव वर्णयति गास्यंतीति साधः पंचभिः । समं सह सदृशं वा ॥ ४४ ॥ हीनवर्णं हेम यथा योगैर्दाहादिभिरुपायैः शोध्यते तथा यस्य शीलं स्वभावमनुवर्तितुमनुगंतुं प्राप्तुं निर्वैरादिभिर्योगैरात्मानं भावयिष्यंति शोधयिष्यंति ॥ ४५ ॥ विश्वप्रसादे हेतुर्यदात्मकं स्वदृगात्मसाक्षी यस्यानन्यया भगवानेव सत्य इत्येवंभूतया दृशा तोष्यते तोषं प्राप्स्यते ॥ ४६ ॥ तत्र हेतुः । स वा इति । महात्माऽपरिच्छिन्नदृष्टिः महानुभावो महाप्रभावः महतामपि मध्ये महिष्ठोऽतिशयेन महान् प्रवृद्धया भक्त्यानुभाविते शोधिते चित्ते वैकुंठं हरिं निवेश्य देहाद्यभिमानं त्यक्ष्यति॥ ४७॥महाभागवतत्वमाह । अलंपट इति । शीलधरः सुस्व भावः गुणानां धैर्यादीनामाकरो जन्मभूमिः परेषां समृद्धया हृष्टः । परेषु दुःखितेषु सत्सु । न भूतो जातः शत्रुर्यस्य निदाघे भवं तापं चंद्रो यथा हरत्येवं जगतः शोकहर्ता भविष्यति॥ ४८॥

तदागमनसंभाषणादिकं च नानुमन्यंत इत्यर्थः ॥ ४२ ॥ ४३ ॥ मतः माननीयः यशसः सह गाने भगवत इदं भक्तस्य वेति भ्रांतिवारणायाह-सदृशं वेति ॥ ४४ ॥ हीनवर्णमष्टादशदोषयुतम् । शोध्यते दोषान्निरस्य निर्दोषं क्रियते सुवर्णाष्टादशदोषास्तु रत्नपरीक्षाशास्त्रतोऽवसेयाः ॥ ४५ ॥ यस्य भगवतः प्रसादात् । यदात्मकं यत्स्वरूपम् । यद्वा । यस्य भगवतः प्रसादात् यस्य यस्मै प्रह्लादाय इदं विश्वमेव प्रसीदति कीदृशं यत् यो भगवानेवात्मांतर्यामी यस्य तत् अंतर्यामिरूपेण तथा प्रेरयति यथा तत्पितृविरोधिन इंद्राद्या अपि प्रह्लादाय प्रसीदंतीत्यर्थः । स्वान्स्वीयान्भक्तानेव प्रीत्या पश्यतीति स्वदृक् । न विद्यतेऽन्यो यस्यां तादृश्या दृशा बुद्ध्या यद्बुद्धावन्यः प्रवेष्टुं न शक्नोतीति भावः ॥ ४६ ॥ तत्र भगवत्तोषे । यद्वा । महात्मा महाबुद्धिर्महाधृतिर्वा महांत एव स्तंभस्वेदाद्याः प्रेमानुभावा यस्य स तथा । तत्र हेतु-प्रवृद्धया भक्त्याऽनुभावं प्रापिते आशये मनसि वैकुंठं श्रीकृष्णं निवेश्येमं मायिकलोकं त्यक्ष्यतीत्यर्थः । अतद्विहास्यतीति पाठे तस्माद्धरेरन्यदतत् सर्वमनित्यमसारं चेति निरूप्य विहास्यतीत्यर्थः ॥ ४७ ॥ तस्य भक्तिं भक्त्युत्थान्महागुणांश्चावोचमन्यानपि भक्त्यनुकूलान्महाभागवतत्वसंपादकान्स्वाभाविकान्निवैरादिभिरित्यत्रोक्तादिपदग्राह्यान्शृण्वित्याह—अलंपट इति । लंपटो विषयासक्तस्तदन्यो विरक्त इत्यर्थः। 'शीलसमाधौ' समाधिं कुर्वाण इत्यर्थः। वक्तुमशक्या एवं तस्य गुणा इत्याह

अंतर्बहिश्चामलमब्जनेत्रं स्वपूरुषेच्छाऽनुगृहीतरूपम् ॥ पौत्रस्तव श्रीललनाललामं द्रष्टा स्फुरत्कुंडलमंडिताननम् ॥ ४९ ॥ मैत्रेय उवाच ॥ श्रुत्वा भागवतं पौत्रममोदत दितिर्भृशम् ॥ पुत्रयोश्च वधं कृष्णाद्विदित्वाऽऽसीन्महामनाः ॥ ५० ॥ इति श्रीभा० महापु० तृती० दिति कश्यपसंवादवर्णनं नाम चतुर्दशोऽध्यायः ॥ १४ ॥ मैत्रेय उवाच ॥ प्राजापत्यं तु तत्तेजः परतेजोहनं दितिः ॥ दधार वर्षाणि शतं शंकमाना सुरार्दनात् ॥ १ ॥ लोके तेन हतालोके लोकपाला हतौजसः ॥ न्यवेदयन्विश्वसृजे ध्वांतव्यतिकरं दिशाम् ॥ २ ॥ देवा ऊचुः ॥ तम एतद्विभो वेत्थ संविग्ना यद्वयं भृशम् ॥ न ह्यव्यक्तं भगवतः कालेनास्पृष्टवर्त्मनः ॥ ३ ॥ देवदेव जगद्धातर्लोकनाथशिखामणे ॥ परेषामपरेषां त्वं भूतानामसि भाववित् ॥ ४ ॥ नमो विज्ञानवीर्याय माययेदमुपेयुषे ॥ गृहीतगुणभेदाय नमस्तेऽव्यक्तयोनये ॥ ५ ॥

अपरिच्छिन्नदृष्टित्वमाह । अंतरिति । स्वपुरुषाणामिच्छया पुनःपुनर्गृहीतानि रूपाणि येन । श्रीरेव ललना सुंदरी तस्या ललामं मंडनम् । द्रष्टा द्रक्ष्यति ॥ ४९ ॥ महामनाः सोत्साहचित्ता हरिणा सह युद्धेन मरणे पुत्रयोः कीर्तिः सद्गतिश्च भवेदिति ॥ ५० ॥ इति तृतीयस्कंधे टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥ हतप्रभैः सुरैः पृष्टः प्राह पंचदशे विधिः ॥ तद्बीजविप्रशापादि वैकुंठे विष्णुभृत्ययोः ॥ १ ॥ तदेवं देवानां ब्रह्मणश्च संवादप्रस्तावमुक्त्वेदानीं तं संवादं वक्तुमाह । प्राजापत्यं काश्यपं तेजो वीर्यं परेषां तेजो हंतीति तथा आर्षः । स्वपुत्राभ्यां करिष्यते यत्सुराणामर्दनं पीडनं तस्माच्छंकमाना ॥ १ ॥ तेन गर्भतेजसा हतालोके निरस्तसूर्यादिप्रकाशे हतौजसो हतप्रभावाः ध्वांतेन व्यतिकरं संकरम् ॥ २ ॥ वेत्थ जानासि किं विचारयसि यद्यतो वयं संविग्नाः भीताः अव्यक्तमज्ञातम् । न स्पृष्टं वर्त्म ज्ञानप्रचारो यस्य ॥ ३ ॥ ब्रह्माणं परमेश्वरत्वेन स्तुवंतः प्रार्थयंते । देवदेवेति सप्तभिः । लोकनाथानां शिखामणे भावविदभिप्रायज्ञोऽसि । केनाभिप्रायेण दितेर्गर्भो वर्धत इति जानासीत्यर्थः ॥ ४ ॥ विज्ञानं वीर्यं बलं यस्य । इदं ब्रह्मदेहमुपेयुषे प्राप्तवते गृहीतो गुणभेदो रजोगुणो येन । व्यक्तस्य प्रपंचस्य । योनये कारणाय । न व्यक्ता केनापि प्रमाणेन विज्ञाता योनिर्यस्ये

गुणाकर इति । व्यथितस्तद्दुःखमात्मीयं करोतीत्यर्थः । निदाघे उष्णकाले ॥ ४८ ॥ अंतरंतःकरणे ध्यानेन । बहिर्नेत्राभ्यां साक्षात् । पौत्रः प्रह्लादः ॥ ४९ ॥ भृशममोदत अहो मद्विकर्मापि सत्कर्मशिरोमणिर्दुर्लभं फलं दास्यतीत्याहाहो मे भाग्यम् । पुत्रयोर्मे सत्कीर्त्तिसद्गती भविष्यतः । पौत्रश्च मे हरिभक्तो भविष्यतीति सोत्साहचित्ता "कुलं पवित्रं जननी कृतार्था वसुंधरा भागवती च धन्या । स्वर्गं गता वै पितरो हि तेषां येषां कुले वैष्णवनामधेयम्" इति विष्णुधर्मे । किञ्च । "येये हताश्चक्रधरेण विष्णुना त्रैलोक्यनाथेन जनार्दनेन । तेते गता विष्णुपुरीं नरेंद्राः क्रोधोऽपि देवस्य वरेण तुल्यः" इति च ॥ ५० ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे चतुर्दशोऽध्यायः ॥१४॥ विधिर्ब्रह्मा (१) "अमनुष्यकर्तृके च" इति टकि तेजोघ्नमिति वक्तव्ये तेजोहनमित्यत्रोपधालोपाभाव आर्षः । यद्वा पचाद्यच् । यद्वाऽसुरार्दनाद्विष्णोः शंकमाना जातौ विष्णुर्मारयिष्यतीत्यर्थः ॥ १ ॥ "व्यतिकरः पुंसि व्यसनव्यतिषंगयोः" इति मेदिनी ॥ २ ॥ स्पृष्टं नाशितम् ॥ ३ ॥ लोकनाथानामिन्द्रादीनां शिखामणे मुख्यतम परेषामुत्तमानामपरेषामधमानां यद्वातीतानामनागतानां च इत्यर्थ इति । अतीतानागतज्ञस्य तव न किञ्चिदगोचरमिति भावः ॥ ४ ॥ प्रपञ्चकारणत्वं त्वन्येषामप्यस्ति किं तत्साम्यमेवेति चेदाह—न व्यक्तेत्यादि । यद्वाऽव्यक्तस्य प्रधानस्य योनये कारणाय प्रवर्तकाय वा । यद्वाऽव्यक्तो

ये त्वाऽनन्येन भावेन भावयंत्यात्मभावनम् ॥ आत्मनि प्रोतभुवनं परं सदसदात्मकम् ॥ ६ ॥ तेषां सुपक्वयोगानां जितश्वासेंद्रियात्मनाम् ॥ लब्धयुष्मत्प्रसादानां न कुतश्चित्पराभवः ॥ ७ ॥ यस्य वाचा प्रजाः सर्वा गावस्तंत्येव यंत्रिताः ॥ हरंति बलिमायत्तास्तस्मै मुख्याय ते नमः ॥ ॥ ८ ॥ स त्वं विधत्स्व शं भूमंस्तमसा लुप्तकर्मणाम् ॥ अदभ्रदयया दृष्ट्या आपन्नानर्हसीक्षितुम् ॥ ९ ॥ एष देव दितेर्गर्भ ओजः काश्यपमार्पितम् ॥ दिशस्तिमिरयन्सर्वा वर्धतेऽग्निरिवैधसि ॥ १० ॥ मैत्रेय उवाच ॥ स प्रहस्य महाबाहो भगवाञ्छब्दगोचरः ॥ प्रत्याचष्टाऽऽत्मभूर्देवान्प्रीणन्रुचिरया गिरा ॥ ११ ॥ ब्रह्मोवाच ॥ मानसा मे सुता युष्मत्पूर्वजाः सनकादयः ॥ चेरुर्विहायसा लोकाँल्लोकेषु विगतस्पृहाः ॥ १२ ॥

ति वा ॥ ५ ॥ सकामतया प्रतिक्षणं दुःखमनुभवंतो निष्कामभक्तान् स्तुवंत आहुर्द्वाभ्याम् । ये त्वा त्वामनन्येन भावेन भक्त्या ध्यायंति आत्मनो जीवान्भावयंतीति तथा । स्वस्मिन्प्रोतानि ग्रथितानि भुवनानि येन । चेतनाचेतनप्रपंचकारणमित्यर्थः । तत्र हेतुः सदसदात्मकं कार्यकारणरूपं वस्तुतस्ताभ्यां परम् ॥ ६ ॥ जितः श्वास इंद्रियाण्यात्मा मनश्च यैः अतः सुपक्वयोगाः अत एव प्राप्तो युष्मत्प्रसादो यैस्तेषाम् ॥ ७ ॥ अन्ये तु नित्यं कर्मक्लेशिन इत्याहुः । यस्येति । तंत्या दामन्या आयत्ता अधीनाः । मुख्याय नियंत्रे प्राणरूपायेति वा । तथा च श्रुतिः । "तस्य वाक्तंतिर्नामानि दामानि" इत्यादिः ॥ ८ ॥ तमसा अहोरात्रविभागाभावेन लुप्तानि कर्माणि येषाम् । आपन्नानापद्ग्रतानस्मान् ॥ ९ ॥ आपत्कारणमाहुः । एष गर्भः तस्य विशेषणम् ॥ अर्पितं निक्षिप्तं काश्यपमोजो वीर्यं दिशस्तिमिरयंस्तमोव्याप्ताः कुर्वन् ॥ १० ॥ दितेः कुचेष्टितं ज्ञात्वा प्रहस्य देवानां ये शब्दा विज्ञप्तिवाक्यानि तेषां गोचरो विषयभूतः प्रत्यभाषत ॥ ११ ॥ युष्मत्सकाशात्पूर्वे जाताः ॥ १२ ॥

विष्णुर्योनिः कारणं यस्य तस्मै । यद्वा व्यक्तो लोके प्रसिद्धः कंजो योनिर्यस्य तस्मै ॥ ५ ॥ भावयति सृजति इत्यर्थ इति । "यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरंति तथैवास्मादात्मनः सर्वं चराचरं भवति" इत्यादिश्रुतेरिति भावः । तत्र चेतनाचेतनप्रपंचकारणत्वे ताभ्यां कार्यकारणाभ्यां परमसंगम् ॥ ६ ॥ अतः जितेन्द्रियादित्वात् । अत एव सुपक्वयोगत्वादेव ॥ ७ ॥ अन्ये त्वद्विमुखाः । "प्राणो मुख्यः" इति श्रुतेराह प्राणरूपायेति तदधीनत्वे प्रमाणमाहुः तथाचेति । व्याख्यातचरेयम् ॥ ८ ॥ भवतां महता संरंभेण स्तवनाभिप्रायः क इत्यत आहुः—स त्वमिति।स इति तच्छब्देन पूर्वोक्तवैशिष्ट्यं स्मारयति कर्माणि संध्यावंदनादीनि महतामल्पेष्ववश्यं दयादृष्टिर्भवतीत्याहुर्भूमन्निति । अदभ्रा पूर्णा दया यस्यां तया ॥९॥ देवानां सर्वज्ञत्वात्त्वं तु जानास्येवेत्याहुर्देवेति।तस्य गर्भस्याजहल्लिंगत्वाद्वेनुराहुतिसाधनमितिवद्विशेषणम्॥१०॥ यद्वाऽहो भक्ता मामेव स्तुवंति एतद्विपद्धरणे कोऽहं वराक इति वृद्धो बालकानिव प्रहस्येत्यर्थः। स ब्रह्मा आत्मभूः परमेश्वरोद्भूतः महाबाहो इति सनकादिभ्योऽपि त्वं क्रोधजयेन शूरोऽसीत्याह॥११॥मम कथने एषां प्रश्नो

त एकदा भगवतो वैकुंठस्यामलात्मनः ॥ ययुर्वैकुंठनिलयं सर्वलोकनमस्कृतम् ॥ १३ ॥ वसंति यत्र पुरुषाः सर्वे वैकुंठमूर्तयः ॥ येऽनिमित्तनिमि त्तेन धर्मेणाऽऽराधयन्हरिम् ॥१४॥ यत्र चाऽऽद्यः पुमानास्ते भगवाञ्छब्दगोचरः ॥ सत्त्वं विष्टभ्य विरजं स्वानां नो मृडयन् वृषः ॥१५॥ यत्र नैः श्रेयसं नाम वनं कामदुघैर्द्रुमैः ॥ सर्वर्तुश्रीभिर्विभ्राजत्कैवल्यमिव मूर्तिमत् ॥१६॥ वैमानिकाः सललनाश्चरितानि यत्र गायंति लोकशमलक्षपणा नि भर्तुः ॥ अंतर्जलेऽनुविकसन्मधुमाधवीनां गंधेन खंडितधियोऽप्यनिलं क्षिपंतः ॥१७॥ पारावताऽन्यभृतसारसचक्रवाकदात्यूहहंसशुकतित्तिरि बर्हिणां यः ॥ कोलाहलो विरमतेऽचिरमात्रमुच्चैर्भृंगाधिपे हरिकथामिव गायमाने ॥ १८ ॥

वैकुंठस्य विष्णोः वैकुंठाख्यं लोकं ययुः ॥ १३ ॥ तं वर्णयति । वसंतीत्यादिद्वादशभिः । वैकुंठस्य हरेरिव मूर्तिर्येषां ते । निमित्तं फलं प्रवर्तकं यस्मिन् । निष्कामेन धर्मेणेत्यर्थः । आराधयन्नाराधितवंतः ॥१४॥ यत्रेति । शब्दगोचरो वेदांतैकवेद्यः विरजं सत्त्वमूर्तिं विष्टभ्य धृत्वा वृषो धर्ममूर्तिः स्वानां स्वान् ॥१५॥ तत्रत्यं वनं विशिनष्टि । यत्रेति चतुर्भिः । सर्वेष्वप्यृतुषु श्रीः पुष्पादिसंपद्येषां तैः॥१६॥ चरितानि चरित्राणि भर्तुः प्रभोः अनुविकसंत्यो मधु मकरंदस्तद्युक्ता माधव्यो वासंत्यो लताः । यद्वा अनुविक सन्मधवः प्रसरन्मकरंदा माधव्यो मधुकालीनाः सुमनसस्तासां गंधेन खंडिता विघ्निता धीर्येषां तेऽपि तद्गंधप्रापकमनिलं क्षिपंतास्तिरस्कुर्वंतो गायंति । अनेन भगवत्पार्षदानां निरतिशयविषयसुखेऽपि भगवद्भजनानंदासक्तिर्दर्शिता ॥ १७ ॥ अन्यभृताः कोकिलाः दात्यूहश्चातकः अचिरमात्रं क्षणमात्रं विरमति अनेन तत्रत्यपक्षिणामपि हरिकथा

मा भूदित्यादित एव वक्तुमारभते—मानसा मनसो जाताः । विहायसाकाशपथा किंप्रयोजनवंतश्चरंतीति चेदाह—लोकेष्विति ॥ १२ ॥ १३ ॥ निलीयते सर्वमत्रेति निलयमिति निरुक्त्या किं शून्या गारमिति चेदाह वसंतीति इत्यर्थ इति । निष्कामकर्मणामेव तत्र गतिरिति भावः । यद्वा । न विद्यते निमित्तं कारणं यस्य सोऽनिमित्तो विष्णुस्स एव निमित्तं फलं यस्मिंस्तेन भागवताख्येनेत्यर्थः । ये पूर्वमाराधितवंतः ते तत्र वसंति 'हरिपदानतिमात्रदृष्टैः' इति 'यत्र व्रजंति' इत्यादिवक्ष्यमाणत्वात् ॥ १४ ॥ विरजं शुद्धं यस्य नामरूपलीलादिकं सर्वं शुद्धसत्त्वमेवेत्यर्थः ॥ १५ ॥ तत्रत्यं वैकुंठस्थं मूर्तिमत्कैवल्यमिवेति वनस्पतिसमूहस्य नित्य सिद्धत्वमेकरसपरमानंदमयत्वमात्मारामविहंगमस्पृहणीयत्वं चोक्तम् ॥ १६ ॥ वसन्तेऽनंतपुष्पसमृद्धेस्सत्त्वान्न केवलं वासंत्य एव लतास्तदा संतीति चेदाह—यद्वेति । लोकशमलेति । ब्रह्मांडवर्तिजीवमालिन्यक्षपणानि स्वेषां तु तद्वियोगदुःखक्षपणानि । वैमानिकाः स्वरविशेषोद्भावनार्थं विमानादवतीर्य सरोवरस्यांतर्जले कंठदघ्नजले । यद्वा । तदवर्त्तिनीनामेव जलसंलग्नवृक्षशाखामारुह्य ताः स्वपत्रादिभिराच्छादयंतीनामंतर्जल एव विकसंतीनां मधुयुक्त माधवीनां गंधेन खंडिता भगवच्चरितास्वादनैकतानत्वे सविघ्नी कृता धीर्येषां तथा भूता अपि गायंत्येव न तु गानाद्विरमंतीत्यर्थः । किन्त्वनिलं क्षिपन्तः अरे माधवीपुष्पामोदतुंदिल सुमंदशीतानिल भक्तलीलामाधुर्येषु निमज्जिता अस्माकं धियो वृत्तीः कथमाक्रष्टुं यतसे किं त्वं तेभ्योप्यात्मानं मधुरं मन्यसे धिक् त्वां मूढेति निन्दन्तस्तेन कैवल्यमिव मूर्तिमदिति पूर्वोक्तेस्तद्वनस्थपुष्पादीनां ब्रह्मानंदरूपत्वेप्याक्षेपाद्ब्रह्मानंदादपि भजनानंदोऽ त्यधिक इति द्योतितम् ॥ १७ ॥ वैमानिका इव तत्रत्याः पक्षिणोऽपि परमभक्ता निर्मत्सराश्चेत्याह—पारावताः कपोताः। हंहो संप्रति हरिकथा प्रवर्तते वयमपि तूष्णीमेव शृणुम इत्येवं कोलाहलो विरमति कदा भृंगाधिपे वनमालाधिकारिणि हरिकथामिव हरिकथातुल्यमेव किमपि घुणाक्षरन्यायेन गायति सति 'हरिहरि' इत्याकारकस्वपक्षशब्दं कुर्वतीत्यर्थः। नजाने तस्मिन्साक्षाद्धरिकथां गायमाने पक्षिणां कीदृगादरो भवेदिति भावः।संदर्भस्तु भृंगाधिपो

मंदारकुंदकुरवोत्पलचंपकार्णपुन्नागनागबकुलांबुजपारिजाताः ॥ गंधेऽर्चिते तुलसिकाभरणेन तस्या यस्मिंस्तपः सुमनसो बहु मानयंति ॥१९॥ यत्संकुलं हरिपदानतिमात्रदृष्टैर्वैदूर्यमारकतहेममयैर्विमानैः ॥ येषां बृहत्कटितटाः स्मितशोभिमुख्यः कृष्णात्मनां न रज आदधुरुत्स्मयाद्यैः ॥ ॥ २० ॥ श्री रूपिणी क्वणयती चरणारविंदं लीलांबुजेन हरिसद्मनि मुक्तदोषा ॥ संलक्ष्यते स्फटिककुड्य उपेतहेम्नि संमार्जतीव यदनुग्रहणेऽन्ययत्नः ॥ २१ ॥

श्रवणादिपरमानंदो दर्शितः ॥ १८ ॥ मंदारपारिजातौ सुरतरुविशेषौ कुरवस्तिलकवृक्षः उत्पलं रात्रिविकासि अंबुजं दिनविकासि नागो नागकेसरः एताः सुमनसः पुष्पजातयः सुगंधा अपि तुलसिकाभरणेन श्रीहरिणा तुलस्या गंधेर्चिते सति यस्मिन्वने तस्यास्तपो बहु मानयंति । अनेन तत्रत्या गुणग्राहिण एव न मत्सरिण इत्युक्तम् । एवंभूतं यत्र तद्वैकुंठं ययुरिति पूर्वेणान्वयः ॥ १९ ॥ पुनर्वैकुंठमेव विशिनष्टि । यत्संकुलं व्याप्तं भवति कैः हरिपदयोरानतिः प्रणामस्तावन्मात्रेण दृष्टैर्भक्तानां विमानैर्न कर्मादिप्राप्यैर्वैदूर्यमारकतैर्हेममयैश्च विमानैः बृहंति कटितटानि यासाम् । स्मितशोभीनि मुखानि यासां ता अपि कृष्णे आत्मा येषां रजःकाममुत्स्मयाद्यैः परिहासादिभिर्न आदधुर्न जनयामासुः ॥ २० ॥ श्रीर्लक्ष्मीः रूपिणी मनोहरमूर्तिधारिणी सती श्रीहरेः सद्मनि संमार्जनं कुर्वतीव यस्मिन् लोके संलक्ष्यते चरणारविंदं क्वणयती नूपुरेण शब्दयंती मुक्तो दोषश्चांचल्यं यया यद्वा मुक्तेन दोषा प्रसारितेन बाहुना । कीदृशे सद्मनि । स्फटिकमयानि कुड्यानि यस्मिन् मध्येमध्ये च शोभार्थमुपेतं संयुक्तं हेम यस्मिन् यस्या अनुग्रहणे श्रीरनुग्रहं करोत्वित्येतदर्थमन्येषां ब्रह्मादीनां यत्नः सा । अयं भावः । यद्यपि तत्र रजो नास्त्येव तथाऽपि स्वर्णपट्टिकाऽवच्छिन्नभित्तिभागेषु बहुधा प्रतिबिंबिता

वनमालाधिकारी मुख्यो भृंगस्तु स्वातिशयेन भगवत्प्रियत्वाच्छ्रीगरुडवत्स्वभावत एव तत्तदक्षरमयपक्षशब्दात्मकं गानमेव तेषु हरिकथेति ज्ञेयम् । इवेति तत्पार्षदादिकर्तृकहरिकथासादृश्यं ज्ञापयति वीणादिवत् ॥ १८ ॥ अर्णः करवीरं पुन्नागस्सुरकर्णिकारः । अर्चिते आदृते अहो धन्या त्वं तुलसि यद्गंधेन भगवान्प्रीयते इति तस्या एव तपो बहु मानयंति न तु स्वेषां तेन यदास्यास्तपो वयं जानीमस्तदेव वयमितो भारतभूमिं गत्वा चराम इति तेषां मनोनुतापो ध्वन्यते । ततश्च वैकुंठवासिनोऽपि भारतभूमौ जन्म वांछंतीति वैकुंठादपि भारतभूमेरुत्कर्षोऽनुध्वन्यते इत्थं बहुमानयंति न त्वसूयंतीत्यर्थः । यतः सुमनसः शोभनचित्ताः पक्षे पुष्पतरवः । तेन वैमानिका इति पारावतेति मंदारेत्यादिभिर्जरायुजांडजोद्भिदस्त्रय एव तत्र हरिं भजंतो वर्त्तंते न तु चतुर्थः स्वेदजोऽवर्णनादिति ज्ञेयम् । किञ्च । वैकुंठे शोभार्थं पक्षिणो वृक्षादयश्च भगवदिच्छाकल्पिता एव न कर्मवशतः "वैकुंठः कल्पितो येन लोको लोकनमस्कृतः । रमया प्रार्थ्यमानेन" इत्यष्टमस्कंधे वक्ष्यमाणत्वात् ॥ १९ ॥ अभितो वर्त्तिनीमुद्यानशोभां वर्णयित्वा मध्यवर्त्तिनीं वैकुंठशोभां वर्णयति तदिति । किञ्च । यत्र भजनानंदयुक्तेषु ब्रह्मानंदोऽपि न प्रभवति किं पुनर्विषयानंद इत्याह—येषामिति । ता अप्यतिसुंदर्योपि आत्मा चेतः उत्स्मयाद्यैरुत्कृष्टस्मितावलोकैरादिना गत्यालापादिव्यापारैः तैश्च संकुलमिति ॥ २० ॥ मुक्तदोषेति । 'अयमात्मापहतपाप्मा' इतिवन्नित्यमेव दोषरहितैव सेति चेत्तत्राह—यद्वेति । अत्राशयमाह अयं भाव इति । विश्वनाथस्तु-सर्वे हरिभजनानंदवंत इति किं वक्तव्यं साक्षाच्छ्रीरपि यत्र सदा भजंती वर्त्तत इत्याह-यद्वा ।

वापीषु विद्रुमतटास्वऽमलामृताप्सु प्रेष्यान्विता निजवने तुलसीभिरीशम् ॥ अभ्यर्चती स्वलकमुन्नसमीक्ष्य वक्त्रमुच्छेषितं भगवतेत्यमतां ऽग यच्छ्रीः ॥ २२ ॥ यत्र व्रजंत्यघभिदो रचनाऽनुवादाच्छृण्वंति येऽन्यविषयाः कुकथा मतिघ्नीः ॥ यास्तु श्रुता हतभगैर्नृभिरात्तसारास्तांस्ता न्क्षिपंत्यशरणेषु तमस्सु हंत ॥ २३ ॥ येऽभ्यर्थितामपि च नो नृगतिं प्रपन्ना ज्ञानं च तत्त्वविषयं सहधर्म यत्र ॥ नाराधनं भगवतो वितरंत्य मुष्य संमोहिता विततया बत मायया ते ॥ २४ ॥

सती लीलांऽबुजं भ्रामयंती विनयभक्तिभ्यां तथा लक्ष्यत इति ॥ २१ ॥ अंग हे देवाः यस्मिंल्लोके श्रीरेवं अमत अमंस्त मेने किं कुर्वती विद्रुममयानि तटानि यासां अमला अमृततुल्या आपो यासां तासु वापीसु निजवने लक्ष्मीवने परिचारिकाभिरन्विता तुलसीभिः श्रीविष्णुं पूजयंती तदोदके प्रतिबिंबितं शोभनालकयुक्तमुत्कृष्टनासिकायुक्तं च स्ववक्त्रं वीक्ष्य भगवता उच्छेषितं चुंबितमित्यमन्यत अनेन लक्ष्म्या अपि सौभाग्यसुखं भगवदनुग्रहेणैवेति द्योतितम् ॥ २२ ॥ पुनः कथंभूतं तत् । यद्वैकुंठं न व्रजंति के ये कुकथाः शृण्वंति कास्ताः अघं भिनत्तीत्यघभित्तस्य हरेः रचना सृष्ट्यादिलीला तस्या अनुवादादन्यविषया अर्थकामादिवार्ता मतिभ्रंशिकाः तेषामव्रजने हेतुः । यास्तु हत भाग्यैर्नरैः श्रुताः सत्यस्तांस्तान् श्रोतॄनशरणेषु निराश्रयेषु तमःसु नरकेषु क्षिपंति । हंत खेदे कथंभूता आत्तः सारः श्रोतॄणां पुण्यं याभिस्ताः ॥ २३ ॥ प्रसंगात्तान् शोचंति नोऽ स्माभिर्ब्रह्मादिभिरप्यभ्यर्थितां नृगतिं मनुष्यजातिं प्रपन्नाः प्राप्ताः संतोऽपि हरेराराधनं च कुर्वंति कीदृशीं नृगतिम्—यत्र यस्यां धर्मसहितं तत्त्वज्ञानं भवति । तदुभयसाधकत्वा

संमार्जनकारिण्यन्या दासीव यदुक्तं कुरुक्षेत्रयात्रायां "साहं तद्गृहमार्जनी" इति न चैतावता तन्माहात्म्यहानिरिति मंतव्यमित्याह-यदनुग्रहण इति ॥ २१ ॥ परिचरणभक्तिमुक्त्वा साधकभक्तानामिव तस्या अर्चनभक्तिमाह । वापीषु दीर्घिकासु निजवने निःश्रेयसवनैकदेशस्थे लक्ष्मीवने पूजयंती अर्चयितुं प्रातःस्नानं करिष्यंती प्रथमं मुखक्षालनार्थं सोपानतटमध्यासीना स्वमुखं निरीक्ष्य भगवता उच्छेषितमुच्छिष्टीकृतं चुंबनाधरपानाभ्या मित्यमन्यत । यद्वा । तत्र जले नीलोत्पलप्रतिबिंबे मिलितं स्ववक्त्रप्रतिबिंबं वीक्ष्य भगवता उन्मुखं चुंबितं जातमिति भावोदयो जातः पत्युरेव परमदेवरूपत्वात्ततः सौभाग्यलाभार्थं स एव पूज्य इत्यभिप्रायेण तत्र जले ध्यानेन तत्स्फूर्त्तेस्तत्र स्वप्रतिबिंबदृष्ट्या स्वमूर्त्तेश्च सहयोगाच्चुंबितत्वज्ञानमपि संगतम् । यद्वा । उच्छेषितमुपभुक्तमित्यमन्यत पूर्वपूर्वानुभूततया स्मृतवतीत्यर्थः । भगवत्कृतचुंबनप्रभावादिदं मदीयं सौंदर्यमित्यमन्यतेति वार्थः "पतिरेव हि नारीणां दैवतं परमं मतम्" । किं च । "स्त्रिया भर्त्तरि सुप्रीते कः क्लम इह चागमः" इति वक्ष्यमाणत्वात् । पतिव्रत्या स्त्रिया पतिं विहाय देवतांतरपूजा न कार्या स एव तत्तद्देवतारूपेणार्च्यः "स एव देवतालिंगैरर्चनीयः प्रयत्नतः" इत्युक्तेः । शैवेऽपि "पुत्रस्य पितरौ देवौ स्त्रिया भर्त्ता उदाहृतः" पत्युरेव देवत्वं विहितमिति ॥ २२ ॥ तत्र गंतुं केऽधिकारिण इत्यपेक्षायां प्रथममनधिकारिण आह अघभिदोऽघासुरहंतुः । "अघोऽपि यत्स्पर्शनधौतपातकः" इत्यत्र तथा प्रसिद्धस्यैवानुवादं परित्यज्यान्यदन्यदीयं यद्वचनं तदेव विषयो यासां ताःकथा इति कृष्णकथाः कदाचिदपि ये न शृण्वंतीत्यर्थ इति संदर्भः । यद्वा श्रीकृष्णस्य रचना लीला कथा तस्या अ नुवादादनुकीर्त्तनादन्यविषया एव कथा न्यायादिशास्त्रविषया अपि कथाः कुकथा एव वस्तुतस्तु मनुष्यवाङ्निर्मितपुराणेतिहासाप्रसिद्धाधुनिककथा एव कुकथा ज्ञेयास्ता ये शृण्वंति ते तद्वैकुंठं न व्रजंति तर्हि किं व्रजन्ति तत्राह याः कुकथाः हतभगा मन्दभाग्या एव तत्राधिकारिण इति सारोऽत्र विवेकादिः ताः कथा एव बलात्कारेण पातयंति वक्ष्यति च "नूनं दैवेन विहता ये चाच्युतकथासुधाम् । हित्वा शृण्वंत्यसद्गाथाः पुरीषमिव विड्भुजः" इति ॥ २३ ॥ तानसत्कथाश्रोतॄन् हंतहंत यद्यपि तत्र गंतुं नृजातय एवाधिकारिणो न तु देवादिजातयस्तदपि भक्तिरहितशास्त्रतात्पर्याद्भ्रंशितबुद्धयो नृजातय एव केचिद्वंचितास्तान्शोचंतीत्यर्थः । हा हंत भारतभूमौ कदा नृजनुषो

यच्च व्रजंत्यऽनिमिषामृषभानुवृत्त्या दूरेयमा ह्युपरि नः स्पृहणीयशीलाः॥भर्तुर्मिथः सुयशसःकथनानुरागवैक्लव्यबाष्पकलया पुलकीकृतांगाः॥२५॥
तद्विश्वगुर्वधिकृतं भुवनैकवंद्यं दिव्यं विचित्रविबुधाग्र्यविमानशोचिः ॥ आपुः परां मुदमपूर्वमुपेत्य योगमायाबलेन मुनयस्तदथो विकुंठम् ॥२६॥

त्स्याः तेऽमुष्य भगवतो विस्तृततया मायया ननु संमोहिताः। बतेति खेदे यदि वैवं संबंधः। केवलं त एव न व्रजंति किं तु ये भगवदाराधनं न कुर्वंति तेऽपि तेषां मायामोहितत्वा दिति॥२४॥पुनः कथंभूतम्। यच्च न उपरिस्थितं व्रजंति। के अनिमिषां देवानामृषभः श्रेष्ठो हरिस्तस्यानुवृत्त्या दूरे यमो येषाम्। यद्वा। दूरीकृतयमनियमाः पाठांतरे दूरीकृताहंकारा इत्यर्थः। स्पृहणीयं करुणादि शीलं येषाम्। किं च भर्तुर्हरेर्यत्सुयशस्तस्य मिथः कथने योऽनुरागस्तेन वैक्लव्यं वैवश्यं तेन बाष्पकला तया सह पुलकीकृतमंगं येषाम्। यद्वा नः उपरीति व्रजतां विशेषणम्। निरहंकारत्वादस्मत्तोऽपि येऽधिकास्ते यद्व्रजंतीत्यर्थः ॥ २५ ॥ तत्तदा तदपूर्वं विकुंठमथो अनंतरमुपेत्य मुनयः परामुत्कृष्टां

भूत्वा कृष्णं भजंतः क्षणमात्रेण वैकुंठं प्राप्नुयामेति नोऽस्माभिः प्रार्थितां "गायंति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे। स्वर्गापवर्गस्य फलार्जनाय भवंति भूयः पुरुषाः सुरत्वात्" इति गारुडोक्तेः। यस्यां नृजातौ भगवद्धर्मपर्यंतो धर्मो भवति भगवद्धर्मपर्यंतस्य तत्त्वस्य ज्ञानं च भवति तां प्राप्ताः सर्वेषां धर्माणां मूलं भगवदाराधनं न कुर्वंति ते मोहिताः। तदुक्तं 'बिले बतोरुक्रमविक्रम—' इत्यादि। ब्रह्मवैवर्त्तेऽपि "प्राप्यापि दुर्लभतरं मानुष्यं विबुधेप्सितम्। यैराश्रितो न गोविंदस्तैरात्मा वंचितो ध्रुवम्॥ अशीतिचतुरश्चैव लक्षास्ताञ्जीवजातिषु। भ्रमद्भिः पुरुषैः प्राप्यं मानुष्यं जन्म पर्ययात्॥ तदप्यफलतां जातं तेषामात्माभिमानिनाम्। वराकाणामनाश्रित्य गोविंदचरणद्वयम्" इति। पञ्चमे वक्ष्यति "अहो अमूषां किमकारि शोभनं प्रसन्न एषां स्विदुत स्वयं हरिः। यैर्जन्म लब्धं नृषु भारताजिरे मुकुंदसेवोपयिकं स्पृहा हि नः॥" इत्यादिना 'यजतां शं तनोति' इत्यंतेन ग्रंथेन। विश्वनाथस्तु—तत्त्वविषयं ब्रह्मविषयं धर्मसहितं भवति तदप्याराधनं न कुर्वंति चेत्तेऽमुष्य हरेर्मायामोहिता एव धर्मज्ञानयोरपि भक्तिं विना फलासिद्धेरिति भावः। यद्वा। यत्र धर्मसहितं ज्ञानं कुर्वंति न त्वाराधनं ते मोहिताः। यद्वा। भगवत एवाराधनं भगवते न ददति नार्पयंति तत्सुखतात्पर्येतया न कल्पयंति ते सकामभक्ता अपि मोहिता इत्यर्थः। "मानुष्यं यः समासाद्य स्वर्गमोक्षप्रसाधकम्। द्वयोर्न साधयत्येकं तेनात्मा वंचितो ध्रुवम्" इति वाक्यं सकामपरं भागवतैर्नाद्रियत इति सह धर्मेण वर्त्तते इति सहधर्मेति "धर्मादनिच् केवलात्" इत्यनिच्। सादेशस्तु पाक्षिकत्वान्नेति॥ २४ ॥ निश्चयेन मिषंति पश्यंतीति निमिषो मनुष्याः 'मिषदर्शने'ऽस्मात्क्विपि नञ्समासे च षष्ठ्या बहुवचनम्। देवानां श्रेष्ठो हरिस्तस्य निरंतरसेवया यमो यमराजः। ननु विष्णुभक्तदर्शनार्थं यमोप्यायात्येव तच्च बृहन्नारदीये प्रसिद्धं भगीरथयमसंवादेऽतआह यद्वेति। यमा अहिंसादयस्ते च नियमादीनामप्युपलक्षकाः पाठांतरे दूरेऽहम इति पाठे। इत्यर्थ इति। निवृत्ताहंकारा अत्राप्यहं पदं ममत्वाद्युपलक्षकमिति भावः। ननु ब्रह्मलोकादुपरि ब्रह्मांडकटाहावरणान्यपि तिष्ठंति किं तत्र व्रजंतीत्याशंकानिवृत्त्यर्थमाह—यद्वेति। इत्यर्थ इति।ममापि ते वंद्या इति भावः।किञ्च। क्वचित्पुराणादावसुराणामपि कदाचित्तत्र क्षणिकगमनादिकं श्रूयते तत्तु तत्रत्यचिद्विभूतिसुखानुभवाभावाद्गमनमप्यगमनाय मानमेव यथा विविधसौरम्यादिगुणयुक्तेषु मणिमयराजसदनेषु व्याघ्रभल्लूकादीनां प्रवेशः स्वपुरस्थपरिजनवृंदान्येव कौतुकविशेषवशाद्दर्शयितुमिच्छो राज्ञ एवाज्ञया भवति तथैव स्वीयाप्राकृतनित्यधामनिवासिनः स्वजनान् कौतुकवशाद्दर्शयितुं प्राकृतपदार्थान्कदाचित् घोरसत्त्वान सुरान् कदाचित्सात्त्विकान्भृग्वादीन् कदाचित्त्रिगुणातिक्रमिणः सनकादींश्च स्वेच्छयैव भगवानानयति पुनः शीघ्रमेव तदयोग्यत्वात्ततो निःसारयति च स्वैकांतिकभक्तिसिद्धांस्तु स्वपार्षदद्वारा विमानेन वैकुंठमानयति तत्र सदा निवासयति स्वधाममाधुर्य्यं स्वसेवामाधुर्यं स्वलीलादिमाधुर्यं च तानेवास्वादयतीति विवेचनीयम् ॥ २५ ॥ तत्रतत्र सनकादीनां गमनं वर्णयति यदा भगवत इच्छा जाता तदेत्यर्थः। अपूर्वमदृष्टपूर्वम्। अनंतरमेव भगवदिच्छासमकालमेव। उत्कृष्टां तदीयब्रह्मानंदजमुदोऽप्यधिकां विश्वगुर्वधिष्ठितत्वान्नात्र मायाशक्तेरधिकारः कृपया स्वीय

तस्मिन्नतीत्य मुनयः षडसज्जमानाः कक्षाः समानवयसावथ सप्तमायाम् ॥ देवावचक्षत गृहीतगदौ पराध्यंकेयूरकुंडलकिरीटविटंकवेषौ ॥ ॥ २७ ॥ मत्तद्विरेफवनमालिकया निवीतौ विन्यस्तयासितचतुष्टयबाहुमध्ये ॥ वक्त्रं भ्रुवा कुटिलया स्फुटनिर्गमाभ्यां रक्तेक्षणेन च मनाग्रभसं दधानौ ॥ २८ ॥ द्वार्येतयोर्निविविशुर्मिषतोरपृष्ट्वा पूर्वा यथा पुरटवज्रकपाटिकायाः ॥ सर्वत्र तेऽविषमया मुनयः स्वदृष्ट्या ये संचरंत्यविहता विगताभिशंकाः ॥ २९ ॥ तान्वीक्ष्य वातरशनांश्चतुरः कुमारान्वृद्धान्दशार्धवयसो विदितात्मतत्त्वान् ॥ वेत्रेण चास्खलयतामतदर्हणांस्तौ तेजो विहस्य भगवत्प्रतिकूलशीलौ ॥ ३० ॥

मुदमापुः अपूर्वत्वे हेतवः विश्वगुरुणा हरिणाऽधिकृतमधिष्ठितम् । भुवनानामेकमेव वंद्यम् । दिव्यमलौकिकम् । विचित्राणि विबुधाग्र्याणां विमानानि तेषां शोचिर्दीप्तिर्यस्मिन् । योगमायाबलेनेति अष्टांगयोगप्रभावेणोपेत्य परमेश्वरे तु योगमायेति चिच्छक्तिविलास इति द्रष्टव्यम् ॥ २६ ॥ तस्मिन्वैकुंठे षट् कक्षाः प्राकारद्वाराणि असज्जमानाः भगवद्दर्शनोत्कंठया तत्तदद्भुतदर्शन आसक्तिमकुर्वाणाः द्वारपालौ देवावपश्यन् । समानं वयो ययोः गृहीते गदे याभ्याम् । पराध्यैंः केयूरादिभिर्विटंकः सुंदरो वेषो ययोः ॥ ॥ २७ ॥ तावेव वर्णयति मत्ता द्विरेफा यस्यां तया वनमालया निवीतौ कंठलंबिन्या अलंकृतौ असिता नीलाश्चतुष्टयं चतुःसंख्याका बाहवस्तेषां मध्ये विन्यस्तया वक्त्रं च मनाग्रभसं किंचित्क्षुब्धं दधानौ स्फुटावुत्फुल्लौ निर्गमौ श्वासमार्गौ नासापुटे ताभ्याम् ॥ २८ ॥ एतयोर्मिषतोः पश्यतोस्तावनादृत्यापृष्ट्वैव याः पूर्वाः षट् द्वारः पुरटालंकृतवज्रमय्यः कपाटिका यासु ता यथा विविशुस्तथा सप्तमायामपि द्वारि ते निविविशुः । अप्रश्ने हेतुः सर्वत्र ये अविहता अनिवारिताः संचरंति निःशंकत्वे हेतुः अविषमया स्वदृष्ट्येति ॥ २९ ॥ वातरशनान्नग्नान्वृद्धानपि पंचवर्षबालकवत्प्रतीयमानान् चकारादाज्ञया च अस्खलयतां निवारितवंतौ न तत्स्खलनमर्हतीति तथा तान् । अहो अत्रापि

भक्तिमुपदेष्टुमेव मुनीनप्यानिनायेति विश्वगुरुपदव्यंग्यं वस्त्विति । संदर्भचक्रवर्त्तिनौ तु—योगमायाया भगवदिच्छानुवर्त्तिन्या भगवच्छक्तेर्बलेन न तु स्वबलेन ''मनीषितानुभावोऽयं मम लोकावलोकनाम्'' इति भगवदुक्तन्यायेनेत्याहतुः ॥ २६ ॥ यद्वा । जन्मतो ब्रह्मानंदमग्नत्वात् तत्रतत्र द्वारप्राकारादौ सौरभ्यसौगंध्यसौंदर्ययुक्तेषु विषयबुद्धिमकुर्वाणाः देवौ जयविजयौ ''कक्षा बृहतिकायां स्यात्कांच्यां मध्येभबन्धने । हर्म्यादीनां प्रकोष्ठे च'' इति मेदिनी । ''प्रकोष्ठो मणिबंधस्य कूर्परस्यांतरेऽपि च । भूपकक्ष्यांतरेऽपि स्यात्'' इतिच । ''टंकः पाषाणभिच्छस्त्रे विटंकः सुंदरे स्मृतः । भूषितेऽपिविटंकः स्यात्'' इति स्वामी ॥ २७ ॥ ''निवीतं कंठलंबितम्'' इत्यमरः । ॥ २८ ॥ पुरटालंकृतवज्रमय्यः सुवर्णालंकृतहीरककीलवत्यः कपाटिका अरराणि यासु द्वार्षु ''पुरटं कार्त्तस्वरे हेमकलधौते च'' इति नाममाला । 'कपाटमररं तुल्ये' इत्यमरः । 'वज्रं हीरकशंवयोः इति' यादवः ॥ २९ ॥ तान्मुनीन् । वातस्य रसना क्षुद्रघंटिकोपलक्षिता वस्त्रालंकारादीनि येषां तान्नग्नानित्यर्थः । वृद्धान्ब्रह्मसमवयस्कानपि वेत्रेण तिर्यग्वेत्रधारणेन आज्ञया सहसा भगवदंतःपुरं मा विशतेति वाचा च धार्ष्ट्यं ब्रह्मजत्वादहंकारेणान्याग

ताभ्यां मिषत्स्वनिमिषेषु निषिध्यमानाः स्वर्हत्तमा ह्यपि हरेः प्रतिहारपाभ्याम् ॥ ऊचुः सुहृत्तमदिदृक्षितभंग ईषत्कामानुजेन सहसा त उपप्लुताक्षाः ॥ ३१ ॥ मुनय ऊचुः ॥ को वामिहैत्य भगवत्परिचर्ययोच्चैस्तद्धर्मिणां निवसतां विषमः स्वभावः ॥ तस्मिन् प्रशांतपुरुषे गतविग्रहे वां को वात्मवत्कुहकयोः परिशंकनीयः ॥ ३२ ॥ न ह्यंतरं भगवतीह समस्तकुक्षावात्मानमात्मनि नभो नभसीव धीराः ॥ पश्यंति यत्र युवयोः सुरलिंगिनोः किं व्युत्पादितं ह्युदरभेदि भयं यतोस्य ॥ ३३ ॥



धाष्टर्यमित्येवं तेषां तेजो विहस्य भगवतो ब्रह्मण्यदेवस्य प्रतिकूलं शीलं ययोः ॥ ३० ॥ हरेर्द्वारपालपतिभ्यां देवेषु पश्यत्सु वार्यमाणास्ते मुनयः को वामित्यादिश्लोकत्रयीमूचुः । सुहृत्तमः श्रीहरिस्तस्य दिदृक्षितं दर्शनेच्छा तस्य भंगे सति कामस्यानुजः क्रोधस्तेन सहसाऽकस्मादेवोपप्लुतानि क्षुभितान्यक्षीणि येषां ते सुष्ठु पूज्यतमा अपीति निषेधानर्हत्वे क्रोधानर्हत्वे वा हेतुः ॥ ३१ ॥ उच्चैर्महत्या भगवत्परिचर्यया एत्य प्राप्य इह वैकुंठे निवसतां तद्धर्मिणां भगवद्धर्मिणां समदर्शिनां मध्ये वां युवयोरेव कोऽयं विषमः स्वभावः कैश्चित्प्रवेष्टव्यं कैश्चिन्नेत्येवंभूतः । ननु स्वामिनो रक्षार्थं द्वारपालयोरेष स्वभावो गुण एवेति चेदत आहुः । तस्मिन्निति । कुहकयोः कपटयोः आत्मवत्स्वदृष्टांतेन यथा आवां कपटौ तथान्योऽपि कश्चित्कपटः प्रवेक्ष्यतीति । अयं भावः । न ह्यत्र भगवद्भक्तं विना कश्चिदागच्छति न चेश्वरे प्रशांतत्वादविद्यमानविरोधे भयशंका अतो युवां केवलं धूर्तावेवेति ॥ ३२ ॥ भयशंकाबीजं च भेदः स च कस्याप्यस्मिन्नास्तीत्याहुः । न हीति । समस्तं विश्वं कुक्षौ यस्य यत्र यदेह भगवति धीरा विद्वांस आत्मनोंऽतरं भेदं न पश्यंति किं त्वस्मिन्परमात्मन्यात्मानमंतर्भूतं पश्यंति महाकाशे घटाकाशमिव तदा यथाऽन्यस्य राजादेरुदरभेद्युदरभेदयुक्तं भयं भवति तथाऽस्य श्रीहरेस्तादृग्भयं यतो

णनमिति दासद्वारापि स्वब्रह्मण्यताविघातो नोचितो यतः प्रभोर्मनोऽनुसारिलीला एव भृत्या अदंडयाः कुशलिना भवंतीति भावः ॥ ३० ॥ देवेषु वैकुंठीयदेवेषु ताभ्यां जयविजयाभ्यां निर्गमागमार्थं प्रतिह्रियते प्राप्यते इति प्रतिहारो द्वारं तत्पात इति प्रतिहारपौ ताभ्यां "प्रतिहारो द्वारि द्वाःस्थे द्वास्थितायां तु योषिति" इति मेदिनी ॥ ३१ ॥ क्रोधोपरक्तत्वात्प्रथमं निंदति को वा इति । तद्धर्मिणां भगवत्तुल्यधर्माणां तत्रापि इह समीप एव वसतां विषमो ब्राह्मणैर्न प्रवेष्टव्यमिति भगवत्स्वभावपरिपंथी कः स्वभावः । ननु ब्राह्मणवेषेण भगवद्द्वेषिणोऽपि कपटेन प्रविशंत्यतः प्रथमं ब्राह्मणा अपि जिज्ञास्या एव ततः प्रवेशनीया इति चेत्तर्हि युवामेव भगवद्भक्तवेषेण कपटिनौ तदीयब्रह्मण्यत्वप्रशांतत्वगतविग्रहत्वादिमहागुणलोपे प्रवृत्तौ तद्द्वेषिणावत्रत्यौ न त्वन्यः कोपि तस्य शंकनीय इत्याहुः—तस्मिन्नित्यादि आत्मवदिति "आत्मवन्मन्यते जगत्" इति न्यायेन वां युवयोः कपटिनोरपि को वा शंकनीय इति काका युवामेव शंकनीयाविति भावः ॥ ३२ ॥ उदरोपलक्षितदेहभेदयुक्तं तादृग्भयमुदरोपलक्षितदेहभेदभयम् इत्यर्थ इति । रे मूर्खाः शृणुत ये शंकनीयास्तेप्यस्य कुक्षौ वसंतीति भावः । यद्वा । कश्चिच्छत्रुर्वेषांतरेण प्रविश्य प्रभोरस्योदरं भेत्स्यतीति भयमित्यर्थः । अत्र यद्यपि सर्वज्ञादिस्वरूपभूतानंतकल्याणगुणादीश्वरचैतन्यादल्पज्ञादिस्वभावं जीवचैतन्यं सूर्यात्तदातप इव जात्यैव भिद्यते तदाप्यत्र वक्तृणां सनकादीनां ज्ञानित्वात् ज्ञानिनां च पद्वतावद्वैतज्ञानलभ्यनिर्वाणसिद्ध्यर्थं चित्सामान्यग्रहणस्यैव विधीयमानत्वाच्चिद्विशेषभूतानामीश्वरजीवयोर्गुणानां मायायाश्च ग्रहणस्य निषिद्धत्वादीश्वरजीवयोर्महाकाशदृष्टांतो नानुपपन्नो ज्ञेय

तद्धाममुष्य परमस्य विकुंठभर्तुः कर्तुं प्रकृष्टमिह धीमहि मंदधीभ्याम् ॥ लोकानितो व्रजतमंतरभावदृष्ट्या पापीयसस्त्रय इमे रिपवोऽस्य यत्र ॥ ३४ ॥ तेषामितीरितमुभाववधार्य घोरं तं ब्रह्मदंडमनिवारणमस्त्रपूगैः ॥ सद्यो हरेरनुचरावुरु बिभ्यतस्तत्पादग्रहावपततामतिकातरेण ॥ ३५ ॥ भूयादघोनि भगवद्भिरकारि दंडो यो नौ हरेत सुरहेलनमप्यशेषम् ॥ मा वोऽनुतापकलया भगवत्स्मृतिघ्नो मोहो भवेदिह तु नौ व्रजतोरधोऽधः ॥ ३६ ॥

येन कारणेन सुरवेषधारिणोर्युवयोर्विशेषेणोत्पादितं तत्किम् । न किंचिदित्यर्थः ॥ ३३ ॥ तत्तस्मादमुष्य वैकुंठनाथस्य भृत्याभ्यां युवाभ्यां प्रकृष्टं भद्रमेव कर्तुमिहास्मिन्नपराधे यद्युक्तं तद्धीमहि चिंतयेम । तदेवाहुः । अंतरस्य भेदस्य भावः सत्ता तद्दर्शनेन इतो वैकुंठलोकाद्व्रजतम् । यत्र येषु लोकेष्वस्य पापीयसोंऽतरभावद्रष्टुरिमे "कामः क्रोधस्तथा लोभ" इति गीतोक्तास्त्रयो रिपवो भवंति । इतो वैकुंठात्पापीयसो लोकानिति वा ॥ ३४ ॥ इति तेषामीरितं भाषणं घोरमवधार्य तं च ब्रह्मदंडं ब्रह्मशापमवधार्य तं चास्त्रसमूहैरप्यनिवार्यमवधार्य हरेरनुचरावतिकातरेणातिकातर्येण भयेन तत्पादग्रहणं कुर्वंतौ संतौ दंडवदपतताम् । कथंभूतस्य हरेः—एवंभूतेभ्यो मुनिभ्यस्ताभ्यामप्युरु अधिकं बिभ्यतो भयं भावयतः ॥ ३५ ॥ अहो अपराद्धमस्माभिरित्यनुतप्यमानान्प्रत्यूचतुः । अघोन्यघवति य उचितो दंडः स एव भगवद्भिरकारि नात्र भवतामपराधः कश्चित् । अतोऽसौ नौ आवयोर्भूयात् । योऽशेषमपि सुरहेलनमीश्वराज्ञातिक्रमरूपं पापं हरेत किंतु युष्माकं यः कृपानिमित्तोऽनुतापस्तस्य लेशेन नौ अधोऽधो मूढयोनी

इति विश्वनाथः ॥ ३३ ॥ एवं निंदित्वाप्यशांतक्रोधाः पुनराहुः यतो युवाभ्यामस्य विष्णोर्भेददर्शनेन विशेषतो ब्रह्मण्यदेवस्य ब्राह्मणद्वारेण चापकर्षः कृतस्तत्तस्माद्धेतोरस्यांतरंगत्वाद्द्वयमेव ध्यायेमेत्यर्थः । तदेव प्रकृष्टकरणमेव । अंतरस्य भेदस्य सत्ताभवनं "भावः सत्ताजन्मनोः स्यात्" इति कोशात् । अस्य इम इत्याभ्यां बुद्धिस्थपरामर्शस्त्यदादीनां तथात्वोक्तेः । विश्वनाथस्तु—अत्रापरोक्षार्थवाचिनेदंशब्दप्रयोगेणैते संप्रत्यस्मा देहादुद्भूताः क्रोधादय इति सरस्वत्याभिमता इत्यर्थमाह । संभवत्वादर्थांतरमाह पापीयसो लोकानिति वेति। गोस्वामिनस्तु—लोकान् जनसमूहान् व्रजतं तत्र जायेतां यत्र व्रजने इमेस्मान्निर्दिष्टा लोका दैत्यराक्षसराजन्यजनसमूहास्त्रयोऽस्य भगवतोऽपि रिपवो भविष्यंतीत्याहुः ॥ ३४ ॥ अहो अपराद्धमावाभ्यां यद्ब्राह्मणाः कोपिता इति घोरं भयजनकम् । अस्त्रसमूहैर्ब्रह्मपाशुपताद्यस्त्रसंघातैः । एवंभूतेभ्यः क्रोधयुक्ततपस्विभ्यः । ताभ्यां जयविजयाभ्यामपि सकाशादात्मनोऽधिकं भयं भावयतश्चिंतयतः । विश्वनाथस्तु—हरेः सकाशात्प्रथमं बिभ्यतुर्भीतौ । अतुस उकारस्याकारश्छांदसः । ततश्च तत्पादग्रहणं कुर्वंतौ दंडवदपततामित्याह । किञ्च ब्रह्मदंडमवधार्येत्यनेन तेषां शापात्पूर्वं ब्राह्मणत्वज्ञानं नासीदिति गम्यते ॥ ३५ ॥ तौ तु स्वस्य जन्म तद्रिपुषु बुद्ध्वा रिपुत्वं च बुद्ध्वा तत्स्मरणमात्रं प्रार्थयेते । यद्वा । अहो अपराद्धमस्माभिरेव यद्युवां भगवद्भक्तौ शप्तौ हंतहंताताः परं किं कुर्मः क्रोधाद्या जिता इत्यस्माकीनः सार्वकालिकोऽभिमानोऽत्र वैकुंठे चूर्णी बभूवेत्यनुतप्तान्प्रत्येकमाहतुः अघवत्यपराधिनि मयि भगवद्भिर्युष्माभिः । असौ भूयादित्याशीर्लिङ्ग तमहमाशिषमेव भावयामीति न तु दंडम् । अत्र हेतुं

एवं तदैव भगवानरविंदनाभः स्वानां विबुध्य सदतिक्रममार्यहृद्यः ॥ तस्मिन्ययौ परमहंसमहामुनीनामन्वेषणीयचरणौ चलयन्सहश्रीः ॥ ३७ ॥ तं त्वागतं प्रतिहृतौपयिकं स्वपुंभिस्तेऽचक्षताऽक्षविषयं स्वसमाधिभाग्यम् ॥ हंसश्रियोर्व्यजनयोः शिववायुलोलच्छुभ्रातपत्रशशिकेसरशीकरांबुम् ॥ ३८ ॥

व्रजतोरपि भगवत्स्मृतिप्रतिघातको मोहो मा भवेत्किं तु मोहोऽपि स्मृतिमेव प्रवहतादिति प्रार्थना ॥ ३६ ॥ एवं स्वानां महत्स्वतिक्रममपराधं तत्क्षणमेव विबुध्य तस्मिन्यत्र ते रुद्धास्तं देशं ययौ आर्याणां हृद्यो मनोज्ञः । चरणौ चलयन्निति । अयं भावः । मच्चरणदर्शनप्रतिघातजं क्रोधं तौ दर्शयन् शमयिष्यामीति त्वराव्याजेन पद्भ्यामेव ययौ श्रीसाहित्यं च निष्कामानपि विभूतिभिः पूरयित्वा क्षमापयितुम् ॥ ३७ ॥ तत्र तैर्दृष्टं देवमनुवर्णयति पंचभिः । तं त्वागतं तेऽचक्षत अपश्यन् आपंचमादिदमेव क्रियापदम् । स्वपुंभिः शीघ्रं प्रतिहृतमानीतमौपयिकं गमनोचितं छत्रपादुकादि यस्य । कथंभूतम् । स्वसमाधिना भाग्यं भजनीयं फलं यद्ब्रह्म तदेवाक्षविषयम् । हंसवच्छ्रीर्ययोस्तयोरुभयतश्चलतोर्व्यजनयोर्यः शिवोऽनुकूलो वायुस्तेन लोलंतश्चलंतः शुभ्रातपत्रशशिकेसराः शुभ्रं यदातपत्रं तदेव शशिसादृश्याच्छशी तस्य केसरा मुक्ताहारविलंबास्तेभ्यो गलंति सीकरां

पुनर्द्वौ संहतावेवाहतुः य इति नावाघयोः युष्मदवज्ञानाद्भगवदनभिप्रेताचरणाच्च वैकुंठदेशानुचितक्रोधकरणाच्च युष्मासु भगवति वैकुंठे धाम्नि च जनितोऽपराधः सर्वं हरेत नाशयेत् ॥ ३६ ॥ तात्पर्यमाह—अयं भाव इति । विश्वनाथस्तु एवं परस्परापराधभावनोद्भूतांतर्दैन्यसमुद्रपृषद्भिरेवाश्रुमिषेण बहिर्निस्सरद्भिः स्नपयित्वेव दोषाच्छुद्धीकृतेषु सनकादिजयविजयेषु विप्रत्वभक्तत्वयोर्याथार्थ्यमनुभावितेषु तत्रत्यसभ्येष्वात्मधिक्कारेणैव भक्तिः समुद्योतते समुद्योतिनी च भक्तिर्भगवंतमाकर्षतीममर्थं प्रमाणी कुर्वन्निव ब्रह्मण्यदेवो भक्तवत्सलो भगवांस्तदा तत्रैवाजगामेत्याह—एवमिति । स्वानां सदतिक्रमं स्वभक्तकर्तृकब्राह्मणातिक्रमम् । आर्याणां वेदानुयायिनां हृदि प्रादुर्भवतीत्यार्यहृद्यः सोऽपि तेषां नेत्रेष्वपि प्रादुर्भवितुमिति भावः । तस्मिन्सप्तमद्वारप्रदेशे महामुनीनामप्यन्वेषणीयावन्वेष्टुं योग्याविति यथा निर्विकल्पकज्ञानानंतरं सविकल्पकज्ञानमपेक्षितव्यं भवति । तथा ब्रह्मस्वरूपानुभवानंतरं भगवत्स्वरूपमनुभवितुमर्हमित्यत एव चरणौ चलयन्निति । मच्चरणमाधुर्य्यमननुभूतचरमेताननुभाव्य महानिर्वृतिचमत्कारसिंधौ निमज्जयामीत्यभिप्रायेणैव सहश्रीरिति । बहिरंगाया मायायां एव मच्छक्तित्वमेते जानंति न त्वस्याः श्रियः स्वरूपभूताया इत्येतामप्याल्हादिनीं शक्तिमनुभावयामीत्यभिप्रायेण । गोस्वामिनस्तु—अत्र तेषामात्मारामाणामप्यानंददानार्थं चरणदर्शनेन तस्य सच्चिदानंदघनत्वं श्रीसाहित्येन तच्छक्तिविलासस्यापि स्वरूपानतिरिक्तत्वं विवक्षितं स्वानामिति बहुवचनेन द्वयोरप्यपराधः, सर्वेष्वेव परिवारेष्वापततीत्यपेक्षया तयोर्बहुमानाद्वा । स्वशब्देन मुनीनां न तादृशं तदा स्वीयत्वमिति विवक्षितं यद्वा । चरणौ चलयन्निति पादुके अप्यस्वीकुर्वन्निति मुनिष्वादरविशेषो दर्शितः । सहश्रीरिति । तेषु तस्या अप्यगोपनं दर्शयित्वा तयोरपराध एव दृढीकृत इत्याहुः । मम त्वित्थं प्रतिभाति ते नैष्ठिकाः स्त्रीदर्शनात्संकुचिता मां न किंचिद्वादिष्यंतीत्येतदर्थं सहश्रीरिति । यद्वा । कुपितः पुत्रः पित्रोपायशतेनापि बोधितो न शाम्यति मात्रा त्वल्पप्रार्थितोऽपि शाम्यतीति तत्कोपशमनार्थमेव सहश्रीरिति यद्वा । भगवान्किं तेभ्यो वदिष्यतीति कौतुकावलोकार्थं स्वयमेव सहागता श्रीरिति ॥ ३७ ॥ तत्र तदा । तैः सनकादिभिः । तं भगवंतम् । आपञ्चमात्पंचमपद्यपर्यंतम् । इदमेवाचक्षतेत्येवंरूपं योज्यमित्यर्थः । तत्र तैरननुभूतचरं तन्माधुर्यं वर्णयति प्रतिहृतेति । अहो भगवच्चरणाः संप्रति बहिश्चत्वरमलं कुर्वंत इति तात्कालिक्या प्रथया तमवलोकितुमत्युत्कृष्टया । द्वारपुरनगरविमानकाननस्था भक्तजना आगत्य विविधरंगवस्त्रालंकारफलगंधपुष्पमालारात्रिकादीन्युपकल्पयाञ्चक्रुरित्यर्थः । अक्षविषयं तेषामिंद्रियगोचरीभूतम् । ननु तर्हि विषयत्वं प्रसक्तं तत्र सद्धुंकारभूतर्जनमाह—स्वसमाधेस्तेषां हृदि ब्रह्माकारे ब्रह्मानंदानुभवस्यापि भाग्यं मूर्तिमदित्यर्थः । अहो एतद्दर्शनेनैवास्माकं समाधिरपि सफलो बभूवेति तेऽमन्यंत तदापि तद्रूपादेर्विषयत्वं को मूढः संभावयेदिति भावः । अत्रातिशयोक्त्या मुक्तावलंबेन केसरत्वेन च्छत्रस्याधोमुखसहस्रदलकमलाकारत्वमारोपितं तेन च छत्रस्य शैत्यसौगन्ध्यमार्द

कृत्स्नप्रसादसुमुखं स्पृहणीयधाम स्नेहावलोककलया हृदि संस्पृशंतम् ॥ श्यामे पृथावुरसि शोभितया श्रिया स्वश्चूडामणिं सुभगयंत मिवात्मधिष्ण्यम् ॥ ३९ ॥ पीतांशुके पृथुनितंबिनि विस्फुरंत्या कांच्याऽलिभिर्विरुतया बनमालया च ॥ वल्गुप्रकोष्ठवलयं विनतासुतांसे विन्यस्तहस्तमितरेण धुनानमब्जम् ॥ ४० ॥ विद्युत्क्षिपन्मकरकुंडलमंडनार्हगंडस्थलोन्नसमुखं मणिमत्किरीटम् ॥ दोर्दंडषंडविवरे हरता परार्ध्यहारेण कंधरगतेन च कौस्तुभेन ॥ ४१ ॥

बूनि यस्मिंस्तम् । सीकरोंऽबुकणः ॥ ३८ ॥ कृत्स्नस्य द्वारपालमुनिबृंदस्य प्रसादे सुमुखम् । स्पृहणीयानां गुणानां धाम स्थानम् । स्नेहावलोककलया सप्रेमकटाक्षेण हृदि संस्पृशंतं सुखयंतम् । त्रैलोक्यविवक्षापक्षे सत्यलोकपर्यंतः स्वर्गस्तस्य चूडामणिवत्स्थितं स्वधिष्ण्यं वैकुंठं सुभगयंतं शोभयंतम् ॥ ३९ ॥ पृथुर्नितंब आश्रयत्वेन विद्यते यस्य तस्मिन्पीतांशुके अलिभिर्नादितया वनमालया च युक्तम् । सुभगयंतमिति पूर्वेणैव वा संबंधः । वल्गुषु प्रकोष्ठेषु वलयानि यस्य गरुडस्य स्कंधे विन्यस्त एको हस्तो येन इतरेणान्येनाब्जं लीलाकमलं धुनानं भ्रामयंतम् । विन्यस्येति पाठे च वल्गिवत्यादि हस्तस्य विशेषणम् ॥४०॥ स्वकांत्या विद्युतः क्षिपती ये मकराकारे कुंडले तयो मंडनस्यार्हे गंडस्थले यस्मिंस्तच्च तदुन्नसं च मुखं यस्य मणियुक्तकिरीटं यस्य दोर्दंडानां षंडं समूहस्तस्य विवरे मध्ये स्थितेन हरता मनोहरेण विहरतेति वा परार्ध्य उत्कृष्ट

वानि व्यंजितानि तथा शीकरांबूनां शशिसंबंधित्वेनामृतत्वं च व्यज्यत इति । “निगीर्याध्यवसानं तु प्रकृतस्य परेण यत् । प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ॥ कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः । विज्ञेयातिशयोक्तिः सा” इति काव्यप्रकाशे बहुधातिशयोक्तिरुक्ता प्रकृतस्योपमेयस्य परेणोपमानेन निगीर्य कवलीकृत्याध्यवसानं तादात्म्यमभेद इत्यर्थः । प्रस्तुतस्योपमेयस्याभिन्नस्य यदन्यत्वं सा द्वितीया । यदि शब्दार्थस्यासंभविनोर्थस्य यदिशब्देन नचेच्छब्देन चोक्तौ यदर्थकल्पनं कार्यकारणयोः पौर्वापर्यत्वेन वर्णनं चेति अत्र च तस्याः प्रथमो भेदो ज्ञेय इति ॥ ३८ ॥ स्वभक्ताभ्यामपि शापदायिष्वस्मासु न जानीमो भगवानंतः कुप्यति न वेति संशयसिन्धुनिमग्नेषु कृत्स्न आभ्यंतरो बाह्यश्च यः प्रसादस्तेन सुमुखम् अत एव हंतहंतास्मासु प्रत्युत प्रसाद एव पूर्ण उपलभ्यत इत्यंतरुल्लसन्मुनिबृंदस्य नेत्रादींद्रियैः स्पृहणीयानां सौंदर्यसौस्वर्यसौरभ्यसौकुमार्यौक्रौधौदार्य्यकारुण्यादीनां गुणानां धाम पूर्णास्पदं हा हंतावयोर्ब्रह्मशापानलदग्धयोरधः पततोरीदृग्दर्शनमाधुरीपुनर्न घटिष्यत इति खेदार्णवनिमग्नौ रुदंतौ जयविजयौ प्रति यः स्नेहावलोकस्तस्य कलया कौशलेन तत्रत्यजनानां सर्वेषामेव हृदि संस्पृशंतमहो भक्तवात्सल्यमिति मनोलोभयंतं श्रिया वामस्तनोऽर्द्धे स्वर्णरेखारूपत्वेन स्थितया स्वश्चूडामणिं सत्यलोकस्थानां स्वर्गाणां चूडाया मणिमिव स्वधिष्ण्यं स्वस्वरूपस्थानं वैकुंठं सुभगयंतं धन्यस्स वैकुंठलोको यत्रत्यास्स्वर्णरेखामयीं लक्ष्मीं भगवद्वक्षसि विलोकयंतीत्येवं सौभाग्यवंतं कुर्वंतमिति । अत्र कृत्स्नस्य द्वारपालमुनिवृंदस्येत्युक्तौ वक्ष्यमाणेन “एतौ तौ पार्षदौ मह्यं जयो विजय एव च” इत्यादिना विरोधात्पूर्वोक्त एवार्थः श्रेयान् ॥ ३९ ॥ “तुलसीकुंदमंदारव रवीरसरोरुहैः ॥ पञ्चभी रचिता माला वनमाला प्रकीर्त्तिता” इति गोपाऽभूषणे । इतरेण दक्षिणहस्तेन कमलं भ्रामयंतमिति लीलाकमलभ्रामणेमिषेण मुनीनां हृदयकमलं ब्रह्मास्वादसुस्थिरमपि स्वमाधुर्यदर्शनेन चपलीकुर्वन्तं तेन च हे मुनयो यन्निर्विशेषस्वरूपानंदात्सर्वोत्तमत्वेन निश्चितात्संप्रति कथंचित्तं चालयथ तत्रैव किं न स्थिरीकुरुध्वे मा स्वनिष्ठां त्यजतेति मुनिषु नर्म द्योतितम् ॥ ४० ॥ ह्रजो मनोहरत्वार्थाभावाद्व्युपसर्गयोगेन घटितार्थत्वमाह विहरतेति यद्वानेकार्थत्वाद्धातूनां विहरणेऽपि हृत्स्तीति द्योतितम् । यद्वा । हरता मुनीनां चित्तं हरता चोरयता अत

अत्रोपसृष्टमिति चोत्स्मितमिंदिरायाः स्वानां धियां विरचितं बहुसौष्ठवाढ्यम् ॥ मह्यं भवस्य भवतां च भजंतमंगं नेमुर्निरीक्ष्य न वितृप्तदृशो मुदा कैः ॥ ४२ ॥ तस्यारविंदनयनस्य पदारविंदकिंजल्कमिश्रतुलसीमकरंदवायुः ॥ अंतर्गतः स्वविवरेण चकार तेषां संक्षोभमक्षरजुषामपि चित्ततन्वोः ॥ ४३ ॥

स्तेन हारेण कंधरायां स्थितेन ॥ ४१ ॥ किं बहुना इंदिराया उत्स्मितमहमेव सर्वसौंदर्यनिधिरित्यहंकरणमत्र भगवत्सौंदर्ये उपसृष्टमस्तंगतमिति स्वानां भक्तानां धिया विरचितम् । भृत्यैः स्वमनस्येवं वितर्कितमित्यर्थः । कुतः । बहुसौष्ठवेन सौंदर्येणाढ्यं युक्तम् । किं च । मह्यं मम भवस्येश्वरस्य भवतां च कृतेऽंगं भजंतं मूर्तिं प्रकटयंतमचक्षत । निरीक्ष्य च कैः शिरोभिर्मुदा नेमुर्नमश्चक्रुः । न विशेषेण तृप्ता दृशो नेत्राणि येषां ते ॥ ४२ ॥ स्वरूपानंदादपि तेषां भजनानंदाधिक्यमाह । तस्य पदारविंदयोः किंज

एव चौर्यहेतुकभयेनैव भुजच्छिद्रं प्रविशतेत्यर्थः । कंधरशब्देनात्र वक्षसोऽभिधानं तस्यापि परंपरया शिरोधारित्वात् । यद्वा । कंधरायाः सकाशात्स्वर्णसूत्रद्वारा वक्षःपर्यंतं गतेन लंबितेनेत्यर्थः ॥ ४१ ॥ संदर्भस्तु परमसौंदर्यादिगुणशालिनः कांतस्य लाभेन तस्या उत्स्मितं गर्वं उपाधिक्येन सृष्टमाविर्भावयंतमिति । यद्वाऽत्र भगवति उपसृष्टं ब्रह्मादिभिराराध्ययापि रूपगुणमाधुर्यैः सर्वतः श्रेष्ठयापि मया उपसर्जनीभूतमप्रधानीभूतमित्यर्थः । इति हेतुना । चकारात्प्रेम्णा चेंदिराया लक्ष्म्या उत्कृष्टं स्मितं धन्याहं यस्या ईदृशः प्रेयानित्यानंदोत्थ उल्लासो यस्मात्तथाभूतमंगं भजंतं समुचितवस्त्रालंकारादिभिः शोभयंतं न तु शंभुमिव सुन्दरमप्यंगं भस्मादिभिर्विरूपयंतमित्यर्थः । दृश्यते च स्वांगपरिस्कारेऽपि पूजादिशब्दप्रयोगः । "पादयोरल्पपूजा' इति सामुद्रिकादौ तच्च परःसहस्रकिङ्करद्वारैवेत्याह—स्वानां स्वाङ्गपरिचारकाणां धिया नित्यानित्यविविधवस्त्रादिशृङ्गारवैलक्षण्यविधायिन्या सूक्ष्मबुद्ध्यैव बहुसौष्ठवाढ्यं विरचितं सौष्ठवं सौंदर्यं तच्च "अंगप्रत्यंगकानाञ्च सन्निवेशो यथोचितम् । सुश्लिष्टसंधिबंधोयस्तत्सौंदर्यमिहोच्यते" इति लक्षितम् । पुनरंगं कीदृशं भवस्य शंभोर्भवतामस्मदादीनां च मह्यं महनीयं 'मह पूजायां' धातुः । गंधपुष्पादिभिर्ध्यानेन देशांतरे पूजनीयमेव न तु तेषामिव वैकुंठे साक्षात्परिचरणीयमित्यर्थः । एवम्भूतं तमचक्षत । ततो निरीक्ष्य चातृप्तनेत्राः संतः कैर्नेमुः 'कं शिरोंबुनोः' इति विश्वः । स्वामिव्याख्याने इत्यर्थ इति । विचारितमिति भावः । तत्र हेतुमाशंकते कुत इति । एतादृग्मूर्त्तिस्वीकारे कारणांतरमाह किं चेति । अस्मदादिध्यानायैव मूर्त्तिमाविश्चकारेति भावः ॥ ४२ ॥ किञ्च । तानि भगवदंगमाधुर्याणि तान् ब्रह्मानंदतोऽपि परमचमत्कारं प्रापयित्वा स्वेषु मज्जयामासुरिति किं वक्तव्यं तदेकांगसंबंधिवस्तुसंबंधी मारुतोऽपि तान्स्वनिष्ठातश्च्यावयित्वा क्षोभयन्विजिग्य इत्याह—तस्येति । पदारविंदयोर्ये किंजल्काश्श्वेतारुणकांतिमन्नखरास्तैर्मिश्रा या तुलसी । गोस्वामी तु अरविंदकिञ्जल्कतुलस्यौ च तदानीं वनमालास्थिते एव ज्ञेये तन्मकरंदसंबंधी वायुस्तेषामंतरंतःकरणं गतः तत्र स्वाधिकारं कर्तुमिव प्रविष्टः नन्वाज्ञां विना परकीयांतःपुरप्रवेशः सनकादीनामिव सहसानुचित इति चेत्तत्र सन्यायमाह—स्वविवरेणेति । नासाछिद्रेण नासाछिद्रं खलु वायोरेव विवरमस्ति तत्र प्रवेष्टुं कस्याज्ञां गृह्णीयादिति भावः तत्र गत्वा किमकरोत्तत्राह—चित्ततन्वोरिति । आदौ बलाच्चित्तं सानंदविवर्त्ते निपात्य क्षोभयामास ततस्तनुमपि कंपाश्रुरोमांचस्वेदादिभिः लोके ह्यन्योपि परकीयदेशेषु स्वाधिकारं चिकीर्षुः पूर्वं तद्देशाध्यक्षं निबध्य विलुठ्य प्रक्षोभयति ततस्तद्देशमपि स्वसैन्यसंमर्दितं करोतीति । ननु ब्रह्मानंदजुषां तेषां चित्तं ब्रह्मानंदमयमेव कथं भगवदानंदस्तत्स्वमयं करोतु तत्राह—अक्षरजुषामपीति । एवमेवास्यमाधुर्याधिक्येन बलवत्त्वमिति भावः ॥ ४३ ॥

ते वा अमुष्य वदनासितपद्मकोशमुद्वीक्ष्य सुंदरतराधरकुंदहासम् ॥ लब्धाशिषः पुनरवेक्ष्य तदीयमंघ्रिद्वंद्वं नखारुणम णिश्रयणं निदध्युः ॥ ४४ ॥ पुंसां गतिं मृगयतामिह योगमार्गैर्ध्यानास्पदं बहुमतं नयनाभिरामम् ॥ पौंस्नं वपुर्दर्शयानमनन्यसिद्धैरौत्पत्तिकैः समगृणन्युतमष्टभोगैः ॥ ४५ ॥ कुमारा ऊचुः ॥ योंऽतर्हितो हृदि गतोऽपि दुरात्मनां त्वं सोऽद्यैव नो नयनमूलमनंतराद्धः ॥ यर्ह्येव कर्णविवरेण गुहां गतो नः पित्राऽनुवर्णितरहा भवदुद्भवेन ॥ ४६ ॥

ल्कैः केसरैर्मिश्रा या तुलसी तस्या मकरंदेन युक्तो वायुः स्वविवरेण नासाछिद्रेण अक्षरजुषां ब्रह्मानंदसेविनामपि संक्षोभं चित्तेऽतिहर्षं तनौ रोमांचम् ॥ ४३ ॥ हर्षकारितं संभ्रममाह ।· द्वाभ्याम् । ते वै किलामुष्य वदनमेवासितपद्मस्य कोशोंऽतर्भागस्तम् । असितपद्मकोशमित्यभूतोपमा । सुंदरतरे अरुणे अधरोष्ठे कुंदवद्धासो यस्मिंस्तम् । उत् ऊर्ध्वं वीक्ष्य लब्धमनोरथाः संतो नखा एवारुणमणयस्तेषां श्रयणमाश्रयभूतमंघ्रिद्वंद्वं पुनरवेक्ष्याधोदृष्ट्या वीक्ष्य पुनःपुनरेवं निरीक्ष्य युगपत्सर्वांगलावण्यग्रहणाशक्तेः पश्चा न्निदध्युर्ध्यातवंतः ॥ ४४ ॥ योगमार्गैर्गतिं मृगयतां पुंसां ध्यानस्य विषयभूतम् । बहुमतमत्यादरास्पदम् । बहूनां तत्त्वदृशां संमतमिति वा।पौंस्नं पौरुषं वपुर्दर्शयंतम् । अन्ये ष्वसिद्धैरसाधारणैरौत्पत्तिकैर्नित्यैरणिमाद्यष्टैश्वर्यैर्युतम् । समगृणन्सम्यगस्तुवन् ॥ ४५ ॥ नित्यं ब्रह्मरूपेण प्रकाशसे नैतच्चित्रम् । इदानीं तु परममंगलविशुद्धसत्त्वश्रीमूर्त्या

ते मुनयः सुंदरतरे अतिसुंदरे चक्रवर्ती तु—एवं तुलसीगंधेन शोधितप्राणानां तेषामिंद्रियाणां च प्राणाधीनत्वात्प्रथमं चक्षुर्भ्यां रूपमाधुर्य्यग्रहणे लब्धाधिकाराणां रूपमाधुर्यस्य च प्रत्यंगगतवैविध्यानंत्यादेककाले जिघृ क्षायामावेगसंचारितमानन्दवैवश्यमाह—ते वेति । वै निश्चितं कोशो बाह्यरूक्षदलपटलरहितोंऽतर्भागस्तमुद्वीक्ष्योत्कृष्टमाधुर्यत्त्वेनास्वाद्य तत्रापि सुंदरतरेति । अधरमाधुर्यमुत्कृष्टतरं तदुपरि च हासपरिहासमाधुर्यमुत्कृष्टतममिति भावः । लब्धाशिष इति पित्रा ब्रह्मणा भ्रात्रा नारदेन च भक्त्यर्थं पूर्वं या आशिषो दत्तास्तत्फललाभात्ता लब्धा इत्यर्थः । अहो चरणमाधुर्यं कीदृशमिति मुखमाधुर्यमीषदेव गृहीत्वा तत्रातृप्ता एव ते चरणमाधुर्यदत्तेक्ष णा बभूवुरित्याह—पुनरिति । नखा एवारुणमणयस्तेषां श्रयणमाश्रयभूतमंघ्रिद्वंद्वं पुनरेवाधःप्रदेशे ईक्षित्वा ईषद्वीक्ष्य निदध्युः पुनरपि मुखं वीक्ष्य पुनःपुनरप्येवं दध्युरित्यर्थः । "निर्वर्णनं सुनिध्यानं दर्शनालोकनेक्षणम्" इत्यमरः ॥ ४४ ॥ किञ्च मुमुक्षूणामपि शुद्धभक्त्यभावात्तन्माधुर्यमजिघृक्षूणामपि तद्ध्यानं विना मुक्तिर्नेत्याह—पुंसामिति । गतिं मुक्तिं योगमार्गैरष्टांगयोगैः बहुमतं ध्यानास्पदमिति सविशेषरूपस्यावश्यध्येयत्वे नारायण स्वरूपमेव बहूनां संमतमित्यर्थः । पौंस्नं पौरुषं पुरुषस्य गर्भोदशायिनो गुणावताररूपं यद्विराडाख्यं वपुस्तदाभिन्नतः स्वं वपुर्दर्शयंतं न तु ब्रह्मादिवदन्यथात्वेनेति संदर्भः । चक्रवर्ती तु—पौंस्नं पुरुषसंबंधीति तेनान्या न्यपि मोहिन्यादीनि तस्य वपूंषि संतीति ध्वनितम् । अनन्येन स्वेनैव सिद्धिः स्वरूपभूतैरित्यर्थः । अत एवौत्पात्तिकैः स्वाभाविकैर्नित्यैरष्टभिः शब्दस्पर्शरूपरसगंधक्रपाकमैश्वर्यैर्भोगैर्नानाविधभक्तैर्भक्त्या युज्यमानत्वादास्वा द्यमानत्वाद्भोगैः तत्र शब्दादीनि सौस्वर्यसौकुमार्यसौंदर्यमाधुर्यसौरभ्यवात्सल्यलीलाशब्दवाच्यानि । सप्त माधुर्याणि भक्तानां प्रेमाकारषडिंद्रियभोग्यानि अष्टमं भगशब्दवाच्यैश्वर्य्यषट्कं भक्तैर्मुमुक्षुभिर्मुक्तैश्च यथाशक्ति स्वाद्यंत इति ज्ञेयं स्वामिचरणास्त्वणिमाद्यष्टैश्वर्यैरित्याहुः ॥ ४५ ॥ अहो महत्कृपाया अपारो महिमा यतो भगवतेदृशसाक्षात्कारानंदमनुभाविताः स्म इत्यहो अस्माकं भाग्यमिति । अनुवर्णितरह इति पाठे रहशब्दोऽ दंतोपि 'तन्मातरो यदभजन्रहरूढभावाः । इत्यादिषु दर्शनात् । पित्रेति । भो ब्रह्मानंदानुभविनो मत्तनया ब्रह्मसाक्षात्कारादपि कोटिगुणितानंदो भगवत्साक्षात्कारे सोऽपि भगवान्नीलोत्पलदलश्यामलः पीताम्बरश्चतुर्बाहुः

तं त्वा विदाम भगवन् परमात्मतत्त्वं सत्त्वेन संप्रति रतिं रचयंतमेषाम्॥यत्तेऽनुतापविदितैर्दृढभक्तियोगैरुद्ग्रंथयो हृदि विदुर्मुनयो विरागाः ॥४७॥ नात्यंतिकं विगणयंत्यपि ते प्रसादं किं त्वन्यदर्पितभयं भ्रुव उन्नयैस्ते ॥ येंऽग त्वदंघ्रिशरणा भवतः कथायाः कीर्तन्यतीर्थयशसः कुशला रसज्ञाः ॥ ४८ ॥ कामं भवः स्ववृजिनैर्निरयेषु नः स्ताच्चेतोऽलिवद्यदि नु ते पदयो रमेत ॥ वाचश्च नस्तुलसिवद्यदि तेंऽघ्रिशोभाः पूर्येंत ते गुणगणैर्यदि कर्णरन्ध्रः ॥ ४९ ॥

प्रत्यक्षोऽसि अहो भाग्यमस्माकमित्याहुः । हे अनंत यस्त्वं हृद्गतोऽपि दुरात्मनामंतर्हितो न स्फुरसि स नोऽस्माकमंतर्हितो न भवसि नयनमूलं त्वयैव राद्धः प्राप्तोऽसि । अंतर्धानाभावे हेतुः । भवतः सकाशादुद्भवो यस्य तेनास्मत्पित्रा यर्हि यदैवानुवर्णितरहा उपदिष्टरहस्यस्तदैव नः कर्णमार्गेण गुहां बुद्धिं गतः प्राप्तोऽसीति ॥ ४६॥ ननु पित्रोपदिष्टं भवतामन्यादृशमदृश्यमात्मतत्त्वमहं त्वन्य एव स्यां दृश्यत्वात् । नैवम् । अस्मत्प्रत्यभिज्ञया भेदनिरासादित्याहुः । तमिति । हे भगवन्नात्मतत्त्वमेव परं तं त्वां विदाम विद्मः प्रत्यभिजानीमः । ननु निरुपाधेरात्मतत्त्वस्य कथमीदृशमैश्वर्यं स्यादत आहुः । सत्त्वेन विशुद्धसत्त्वमूर्त्या एषां भक्तानां सम्यक् प्रतिक्षणं संप्रति रतिः प्रीतिस्तां रचयंतम् । आत्मतत्त्वमेवाहुः । तेऽनुतापः कृपा तेन विदितैर्ज्ञातैर्दृढैर्भक्तियोगैः श्रवणादिभिर्मुनयो हृदि यद्विदुः । कीदृशाः । उद्ग्रंथयो निरहंमाना अत एव विगतरागाः॥ ४७॥ स्वयमपि भक्तिं प्रार्थयितुं भक्तानां सुखातिशयमाहुः । आत्यंतिकं मोक्षाख्यमपि तव प्रसादं ते न गणयंति नाद्रियंते । किं तु किमुतान्यदिंद्रादिपदम् । ते भ्रुव उन्नयैरुज्जृंभैः कालात्मकैरर्पितं निहितं भयं यस्मिंस्तत् । ते के । अंग हे भगवन् ये भवतः कथाया रसज्ञाः । कथंभूतस्य । रमणीयत्वेन पावनत्वेन च कीर्तन्यं कीर्तनार्हं तीर्थं पवित्रं च यशो यस्य ॥ ४८ ॥ इदानीं स्वीयापराधं द्योतयंतो भक्तिं प्रार्थयंते । काममिति । हे भगवन्नितः पूर्वमस्माकं वृजिनं नाभवत् इदानीं सर्वाण्यपि जातानि यतस्त्वद्भक्तो

कटककुंडलादिमंडितश्चंद्रवदनो वैकुंठे विराजमानो भक्त्या लभ्यत इति त्वद्भक्तस्यास्मत्पितुः कृपाशीर्वचनं यदैवाश्रौषं तदैव कारणे लब्धे तत्फललब्धेरावश्यकत्वात् भगवन्न त्वं स्वतंत्रोऽस्मान्कृपयसि किं तु स्वभक्ताधीन एवेति त्वद्भक्तकृपामाहात्म्यमनिर्वचनीयमेवेति ॥ ४६ ॥ किञ्च एतावंतं कालं वयं ज्ञानिन एवास्म संप्रति तु त्वद्भक्ता अभूमेत्यहो भाग्यमस्माकमित्याहुः । तं पित्रानुवर्णितरहस्यमेव ननु पित्रोपदिष्टं भवतामदृश्यमात्मतत्त्वमहं त्वन्य एव स्यां दृश्यत्वादिति चेत्तत्राह–संप्रतीति । सत्त्वेन साधुत्वेन कृपयेत्यर्थः । 'सद्भावे साधुभावे च सत्' इति श्रीगीतोक्तेः । रतिं प्रीतिं किंभूतं परं "ब्रह्मणो हि प्रतिष्ठाहम्" इति गीतोक्ते रदृश्यतत्त्वापेक्षयोत्कृष्टम् । ननु चित्तं ब्रह्मसुखस्पृष्टं 'नैवोत्तिष्ठेत्तु कर्हिचित्' इति चेत्तर्हि पूर्वोक्तेन "आत्मारामाश्च मुनयो निर्ग्रंथा अप्युरुक्रमे । कुर्वंत्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः" इति वाक्येन "प्रायेण मुनयो राज न्निवृत्ताविधिषेधतः । नैर्गुण्यस्था रमंते स्म गुणानुकथने हरेः" इति वाक्येन च समाधेयम् । अत एव निरहंकारत्वादेव ॥४७॥ अधुना त्वत्साक्षात्कारस्य का कथा त्वत्परोक्षेऽपि त्वत्कथाकीर्तनानंदोऽपि ब्रह्मानंदादधिक इति प्रोचुर्नेति । नाद्रियंत इति "सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णंति विना मत्सेवनं जनाः" इत्यग्रे कपिलोक्तेः । दर्शनानंदजातप्रेमाण ऊचुरंगेति कथारसज्ञा एव कुशलिनस्तदितरेऽकुशलिन इति भावः ॥ ४८ ॥ स्ववृजिनैः स्वापराधैर्निरयेषु नारकियोनिषु अनेन तद्गुणवर्णनाकर्णनस्य तत्साक्षात्कारहेतुत्वेन तदधिगमे 'पूर्वोत्तराघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति न्यायेन वस्तुतः पापयोनावपि पापिसंबंधो

प्रादुश्चकर्थ यदिदं पुरुहूतरूपं तेनेश निर्वृतिमवापुरलं दृशो नः ॥ तस्मा इदं भगवते नम इद्विधेम योऽनात्मनां दुरुदयो भगवान् प्रतीतः ॥५०॥
इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे पंचदशोऽध्यायः ॥ १५ ॥ ब्रह्मोवाच ॥ इति तद्गृणतां तेषां मुनीनां योगधर्मिणाम्॥ प्रतिनंद्य जगादेदं
विकुंठनिलयो विभुः ॥ १ ॥ श्रीभगवानुवाच ॥ एतौ तौ पार्षदौ मह्यं जयो विजय एव च ॥ कदर्थीकृत्य मां यद्वो बह्वक्रांतामतिक्रमम् ॥ २ ॥

शप्तौ अतस्तैः स्ववृजिनैर्निरयेषु कामं नोऽस्माकं भवो जन्म स्तात्स्यात्। नु वितर्के। यदि तु नश्चेतस्ते तव पदयो रमेत। अलिर्यथा कंटकैराविध्यमानोऽपि पुष्पेषु रमते तद्वद्विघ्नान् विगणय्य यदि रमेत। अंघ्रिभ्यां शोभा यासाम्। यथा च तुलसी गुणैर्नैरपेक्ष्येण त्वदंघ्रिसंबंधेनैव शोभते तथा यदि नो वाचः शोभेरन्। यदि च ते गुणगणैरापूर्येत कर्णरंध्र इत्यल्पस्य पूरणमेव याचकरीत्या प्रार्थयंते। अयं तु गूढोऽभिप्रायः। कर्णरंध्रस्याकाशत्वाद्गुणगणानां चामूर्तत्वान्न कदाचित्पूरणमतो नित्यमेव श्रवणं फलिष्य तीति ॥ ४९ ॥ अद्य वयं कृतार्थाः स्मेत्याहुः। हे पुरुहूत विपुलकीर्ते यदिदं प्रादुश्चकर्थ प्रकटितवानसि। दृशो नेत्राणि। अनात्मनामजितेंद्रियाणां दुरुदयोऽप्रकटोऽपि इत इत्थं यः प्रतीतोऽसि तस्मै तुभ्यमिदं नमो विधेम ॥ ५० ॥ इति तृतीयस्कंधे टीकायां पंचदशोऽध्यायः ॥ १५ ॥ हरिणा सांत्वितैर्विप्रैरनुतप्तैस्तु षोडशे ॥ तयोरसु रभावेऽपि कृतोनुग्रह ईर्यते ॥ १ ॥ इति गृणतां तेषां तद्वाक्यं प्रतिनंद्येदं जगाद एतावित्येकादशभिः ॥ १ ॥ यद्यस्मान्मां कदर्थीकृत्य तुच्छीकृत्य बहु यथा भवति तथा

न भवति भगवद्गुणवर्णनादिना स्वत एव मोक्षो भवेत्किंतदर्थनेनेति गूढोऽभिप्रायः। किं च श्रवणकीर्त्तनस्मरणानीत्यानंदत्रयं मोक्षे न भवति भवे तु संभवेदेवेति भव एव तदर्थं प्रार्थनीय इति भावः ॥ ४९ ॥ एवं त्वदीयश्रवणादिकलोभेन त्वत्परोक्षमयो भवोऽपि प्रार्थ्यते त्वया तु स्वसाक्षात्कारामृतं वयं त्वद्भक्तपराधीनोपि पायिताः स्म इत्याहुः ते कृपाया एतावती सीमा कारुण्यं त्वपारमित्याहुः। प्रादुरिति। पुरु यथा स्यात्तथा यद्वा। पुरुभिर्बहुभिर्भक्तैराहूत हे नारायण गोविंद विष्णो कृपय दर्शनं देहीत्याहूत तेन स्वभक्ताह्वानोत्थकृपापरवशेनैव भवता स्वरूपमाविष्कुर्वता वयमपि कृतार्थीकृता इति भावः। दृशो नेत्राणि बुद्धिवृत्तयो वा इदं नम इति। मूर्द्धसु धृतानंजलीन्दर्शयंति। यद्वा। इति—नम इत्यस्य विशेषणम्। एति श्रीचरणारविंदं प्रति गच्छतीतीदित्यर्थः। यद्वा। येषां त्वं दुरुदयस्तेऽनात्मान आत्मशून्या मृतका एवेति भावः। प्रतीत उलूकान सूर्य इव दर्श एव निश्चित इत्यर्थः। अत्र समस्तात्मारामचूडामणीनां लब्धनिरंतरब्रह्मानुभवानां श्रुतावपि तस्मै मृदितकषायाय तमसा पारं दर्शयति भगवांन्सनत्कुमार इत्यादिना प्रसिद्धानां भक्तावीदृशप्रार्थनालिंगेनैव ब्रह्मानन्दादपि भजनानन्दस्याधिक्येऽवगते भगवन्नामरूपगुणपरिच्छदभक्तधाम्नां चिद्घनाकारत्वं स्वत एव लब्धं तथाभूतत्वं विना भक्तेरसिद्धेः "मुक्तानामपि भक्तिर्हि नित्यानन्दस्वरूपिणी" इति भारततात्पर्ये प्रमाणिता श्रुतिश्च तथा 'आप्राणायनात्तत्रापि हि दृष्टम्' इत्यत्र माध्वभाष्यप्रमाणिता सौपर्णश्रुतिः "सर्वदैनमुपासीत यावन्मुक्तिर्मुक्ता ह्येनमुपासते" इति अत एव प्रह्लादबलिप्रभृतिमहाभागवतसंबंधमभिप्रेत्य श्रीविष्णुपुराणेऽप्युक्तं "पाताले कस्य न प्रीतिर्विमुक्तस्यापि जायते" इति। अत्र संदर्भकारैर्बहूक्तं तत्तत्रैव लोकनीयमित्युपरम्यते ॥ ५० ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥ तयोर्जयविजययोः ॥ १ ॥ गृणतां स्तुवतां योगो भक्तियोगः स एव धर्मोस्ति येषां तेषाम्। इदं वक्ष्यमाणम् विकुंठनिलय इत्यनेन प्रतीतं परिच्छिन्नत्वं वारयति विभुरिति 'विभुः सर्वगते पत्यौ' इति यादवः ॥ १ ॥ अपराधाशंकया

यस्त्वेतयोर्धृतो दंडो भवद्भिर्मामनुव्रतैः ॥ स एवानुमतोऽस्माभिर्मुनयो देवहेलनात् ॥३॥ तद्वः प्रसादयाम्यद्य ब्रह्म दैवं परं हि मे ॥ तद्धीत्यात्मकृतं मन्ये यत्स्वपुंभिरसत्कृताः ॥ ४ ॥ यन्नामानि च गृह्णाति लोको भृत्ये कृतागसि ॥ सोऽसाधुवादस्तत्कीर्तिं हंति त्वचमिवामयः ॥५॥ यस्यामृतामलयशःश्रवणावगाहः सद्यः पुनाति जगदाश्वपचाद्विकुंठः ॥ सोऽहं भवद्भ्य उपलब्धसुतीर्थकीर्तिश्छिंद्यां स्वबाहुमपि वः प्रतिकूलवृत्तिम् ॥६॥ यत्सेवया चरणपद्मपवित्ररेणुं सद्यः क्षताखिलमलं प्रतिलब्धशीलम् ॥ न श्रीर्विरक्तमपि मां विजहाति यस्याः प्रेक्षालवार्थमितरे नियमान्वहंति ॥७॥

अतिक्रमं वः कृतवंतौ ॥ २ ॥ तस्मात्स एव दंडोंऽगीकृतः ॥ ३ ॥ हि यस्माद्ब्रह्म ब्राह्मणा एव मे परमं दैवं दैवतं तत्तस्मादद्य वः प्रसादयामि । तव कोऽपराध इति चेत्तत्राह । तद्धीति मदीयैः पुंभिरसत्कृतास्तिरस्कृता इति यत्तदात्मकृतमेव मन्ये ॥ ४ ॥ किं च । ममैवैताभ्यामनिष्टं कृतमित्याह । यस्य स्वामिनो नामानि तस्य कीर्तिम् । आमयोऽत्र श्वेतकुष्ठम् ॥ ५ ॥ यस्य मेऽमृतरूपेऽमले यशसि श्रवणेनावगाहः प्रवेशः । श्वपचमभिव्याप्य जगत्सद्यस्तत्क्षणमेव पुनाति सोऽहं विकुंठो भवद्भ्यो हेतुभूतेभ्य उपलब्धा प्राप्ता सुशोभना तीर्थभूता कीर्तिर्येन सः स्वबाहुस्थानीयं लोकेश्वरमपि हन्यां काऽन्यस्य कथेत्यर्थः । स्वगुणानुवर्णनं तु ब्राह्मणोत्कर्षार्थमेव ॥ ६ ॥ चरणपद्मयोः स्थितः पवित्रो रेणुर्यस्य अत एव क्षतो निरस्तोऽखिलस्य लोकस्य मलो येन । यद्वा । चरणपद्माल्लग्नः पवित्रो रेणुर्यस्मिन्निति क्षतोऽखिलो मलो यस्येति च विग्रहः । प्रति

युष्माभिर्न भेतव्यमित्याहं एताविति । ताविति सर्वप्राधान्यद्योतनायोक्तम् । यद्वा यौ वोतिक्रमं कृतवंतावेतौ ताविति मदनभिप्रेताचरणमेव मत्तुच्छीकरणम् ॥ २ ॥ अतो मया कर्त्तव्य एव दंडो भवद्भिः कृत इत्याह-मामनुलक्षीकृत्य व्रतानि तपश्चरणादीनि येषां तैः देवा मदीया ब्राह्मणास्तेषां हेलनमवज्ञा तस्मात् । "नन्वस्य ब्राह्मणा राजन्कृष्णस्य जगदात्मनः । पुनंतः पादरजसा त्रिलोकीं दैवतं महत्" इति युधिष्ठिरं प्रति नारदोक्तेः "ब्रह्मण्यस्य परं दैवं ब्राह्मणाः किल ते प्रभो" इत्यग्रे इहैव वक्ष्यमाणत्वाच्च ॥ ३ ॥ तदेवाह परमं सर्वोत्कृष्टम् । किञ्च युष्मासु ममैवापराध इति चेत्तत्राह-तद्धीति । यदि जयविजयौ मद्भृत्यौ न स्यातामहं च तयोः प्रीतिमान्न स्यां तदा मेऽपराधो न स्यादिति भावः । स्वस्य मम पुंभिः 'मन्युंभिः' इति पाठोपि क्वचिदस्ति स एव स्वामिसंमतः प्रतिभाति ॥ ४ ॥ ननु परमेश्वरस्य तव कथमपराधस्तथात्वेऽपि तव को दंडयितेति किं संकुचसीति चेत्तत्राह-मास्तु दंडयिता दुष्कीर्त्तिस्तु स्यादेवेत्याह-किञ्चेति । एताभ्यां जयविजयाभ्याम् । अमुकस्य भृत्योऽयं कुकर्मकृदिति स्वामिन एव दुष्कीर्त्तिरिति यस्य त्वक् तस्यैवायं पुमान्कुष्ठीति निंदामुत्पादयतीति ॥ ५ ॥ नन्वस्मदपराधात्तव दुष्कीर्त्तिरस्मत्प्रसादनाच्च तव कीर्तिरिति चित्रं यतोऽस्मादृशा जीवास्त्वत्सृष्टास्तर्ह्यधिका एव त्वत्त इति चेदत्र कः संशय इत्याह-यस्येति । भवद्भ्यो विप्रेभ्यः "इंद्रादयो बाहव आहुरुस्राः" इत्युक्तेराह लोकेश्वरमिति । इत्यर्थ इति यद्यहन्तास्पदं स्वांगमपि छिंद्यां तर्हि ममतास्पदयोर्जयविजयोस्तु कावार्तेति तदसमर्थो युष्मासु सापराध एवाहमिति भावः । ननु 'यस्यामल' इत्याद्युक्तेः स्वोत्कर्षप्रतीतेः स्वगुणाविष्क्रियादोष इति दंडयुक्तेर्भगवता तत्कथं कृतमिति चेदाह-स्वगणेति एतेन स्वोत्कर्षार्थे स्वगुणवर्णनस्यैव दोषत्वं न त्वन्योत्कर्षार्थमित्युक्तम् ॥ ६ ॥ नन्वस्मद्वैकुंठागमनस्येदमेवफलं वृत्तं यद्भवानस्मदभीष्टदैवतमस्मान्प्रत्येवं ब्रूत इति चेत्तत्राह नैतद्विपरीतमिति यदिति अत एव चरणपद्मस्थितपवित्ररेणुत्वादेव नन्वेतेन स्वोत्कर्ष एवोक्तः स च परकीयस्तुत्यवसरे नोचित इति चेदाह यद्वेति । अत एव युष्मच्चरणरजःसंबंधादेव

नाहं तथाऽद्मि यजमानहविर्विताने श्च्योतद्घृतप्लुतमदन्हुतभुङ्मुखेन ॥ यद्ब्राह्मणस्य मुखतश्चरतोऽनुघासं तुष्टस्य मय्यवहितैर्निजकर्मपाकैः ॥८॥ एषां बिभर्म्यहमखंडविकुंठयोगमायाविभूतिरमलांघ्रिरजः किरीटैः ॥ विप्रांस्तु को न विषहेत यदर्हणांभः सद्यः पुनाति सहचंद्रललामलोकान् ॥ ॥ ९ ॥ ये मे तनूर्द्विजवरान् दुहतीर्मदीया भूतान्यलब्धशरणानि च भेदबुद्ध्या ॥ द्रक्ष्यंत्यघक्षतदृशो ह्यहिमन्यवस्तान् गृध्रा रुषा मम कुषंत्यधिदंडनेतुः ॥ १० ॥

लब्धं प्राप्तं शीलं येन येषां सेवया एते गुणा ममात एव श्रीर्मां न विजहाति प्रेक्षालवार्थेऽवलोकनलेशार्थम् । इतरे ब्रह्मादयः तेषां वः प्रतिकूलवृत्तिं छिंद्यामिति पूर्वेणैव संबंधः ॥ ७ ॥ किं च ब्राह्मणो ममैव श्रेष्ठं मुखमतो युष्मदवज्ञया मन्मुखतिरस्कार एव कृत इत्याह । नाहमिति । विताने यज्ञे यजमानस्य हविश्चरुपुरोडाशादि हुतभुगग्निस्तेन मुखेनादन्नश्नन्नपि तथा नाद्मि नाश्नामि । यद्यथा श्च्योतता क्षरता घृतेन प्लुतं विलोडितं पायसादि प्रतिग्रासं रसास्वादपूर्वकं चरतो भुंजानस्य ज्ञानिनो ब्राह्मणस्य मुखतो श्नामि । मयि समर्पितैः कर्मफलैस्तुष्टस्य निष्कामस्येत्यर्थः ॥ ८ ॥ किं च येषाममलमंघ्रिरजोऽहं किरीटैर्बिभर्मि तान्विप्रानपकुर्वतोऽपि कोऽन्यो न विषहेत । कथंभूतोऽहम् । अखंडाऽनवच्छिन्ना विकुंठाऽप्रतिहता च योगमाया विलासभूता विभूतिर्यस्य सः । तथा यस्य ममार्हणांभः पादोदकं चंद्रललामेनेश्वरेण सहिताँल्लोकान्सद्यः पुनाति एवं परमेश्वरः परमपावनोऽपि सन्नहं बिभर्मीति ॥ ९ ॥ किं च । मे तनूरधिष्ठानानि कास्ताः द्विजवरान्दुहतीर्दोग्ध्रीः गा इत्यर्थः । दुहितॄरिति पाठेऽपि गा एव विष्णुरूपात्सूर्यादुत्पन्नत्वात् । "सूर्यसुताश्च गावः" इति वचनात् । अलब्धशरणानि रक्षकहीनानि भेदबुद्ध्या मदधिष्ठानं न भवंतीति पृथग्दृष्ट्या ये द्रक्ष्यंति अघेन क्षता नष्टा दृष्टि

शीलं सुचरितम् । किंच यद्भवद्भिर्मह्यं नमस्कारादि क्रियते तदपि भवदिच्छातिक्रमभयादेव न निवार्य्यत इति ॥ ७ ॥ एवमहं ब्राह्मणानेव सेवे मद्दृष्ट्या च ये ब्राह्मणान्सेवंते त एव मत्सेवका नान्ये इत्याह-किं चेति । यतो यूयं मम मुखमतो हेतोः ब्राह्मणावज्ञानं मम मुखे चपेटाप्रदानमिव तिरस्कारहेतुरित्यर्थः । आदिना सांनाय्यादिग्रहः । तेन मुखेन "ब्राह्मणोऽग्निश्च वै विष्णोः सर्वदेवात्मनो मुखम्" इतित्यष्टमे कश्यपोक्तेरग्निरूपेण मुखेनेत्यर्थः । इत्यर्थ इति । मन्निष्टब्राह्मण एव मत्तृप्तिकरत्वादर्चनीय इति भावः ॥ ८ ॥ ब्राह्मणातिक्रमोपि सोढव्य एव न तु प्रतिकर्तव्य इत्याह । किं चेति । अन्यो मदन्यः को ने ति अपि तु सर्व एव तत्र कारण जिज्ञासायां तर्ज्जन्या स्वकिरीटं दर्शयन्नाह-किरीटैरिति बहुत्वं सर्वावताररूपग्रहणार्थम् । यद्चारणप्रसादात् अकुंठयोगमायासंपत्तिरहमभूवं तथा यस्य ममार्हणांभो ब्रह्मणा वामनावतारे स्वलोकगतस्य मच्चरणस्य यत्क्षालनं कृतं तज्जलं श्रीगंगारूपम् एतेन यो विप्ररजो मूर्द्ध्नी धत्ते तस्यैव चरणामृतं ग्राह्यं नान्यस्येति ध्वनितम् । किं च किरीटैरिति सर्वेश्वरस्य मम शिरस उपर्युष्णीषवस्त्रं तदुपरि किरीटं तदुपरि विप्रांघ्रिरज इत्यत्युत्कर्ष उक्तो रजसः॥९॥ब्राह्मणकृतातिक्रममसहिष्णूनां का वार्त्ता ब्राह्मणेषु मद्भेदबुद्धिमंत एव नारकिन इत्याह-किं चेति । अधिष्ठानानि पूजास्थानानि । इत्यर्थ इति । विशेषतः पयोदात्रीरिति भावः । विष्णुरूपात् 'अस्तमानः स्वयं विष्णुः' आदित्यं ये प्रपश्यंति मां पश्यंति न संशयः' इति भविष्येऽर्जुनं प्रति श्रीकृष्णोक्तेः । इति वचनादिति । पराशरस्मृतेः । यद्वा ओ वासुदेवस्तस्मात्स एव लब्धः शरणं रक्षणं यैस्तान्यलब्धशरणानि भगवद्भक्तानित्यर्थः ॥१०॥

ये ब्राह्मणान् मयि धिया क्षिपतोऽर्चयंतस्तुष्यद्धृदः स्मितसुधोक्षितपद्मवक्त्राः ॥ वाण्याऽनुरागकलयाऽऽत्मजवद्गृणंतः संबोधयंत्यहमिवाहमुपाहृतस्तैः ॥ ११ ॥ तन्मे स्वभर्तुरवसायमलक्षमाणौ युष्मद्व्यतिक्रमगतिं प्रतिपद्य सद्यः ॥ भूयो ममांतिकमितां तदनुग्रहो मे यत् कल्पतामचिरतो भृतयोर्विवासः ॥१२॥ ब्रह्मोवाच ॥ अथ तस्योशतीं देवीमृषिकुल्यां सरस्वतीम् ॥ नास्वाद्य मन्युदष्टानां तेषामात्माऽप्यतृप्यत ॥ ॥ १३ ॥ सतीं व्यादाय शृण्वंतो लघ्वीं गुर्वर्थगह्वराम् ॥ विगाह्याऽगाधगंभीरां न विदुस्तच्चिकीर्षितम् ॥ १४ ॥

येषां तान् । मदीयोऽधिकृतो दंडनेता यो यमस्तस्य गृध्राकारा ये दूताः अहिवन्मन्युर्येषाम् । रुषा क्रोधेन कुषंति चंचुभिश्छिंदंति ॥ १० ॥ एवंभूतास्तु मां वशीकुर्वंतीत्याह । ये क्षिपतः परुषं भाषमाणानपि ब्राह्मणान्संबोधयंति मयि या धीस्तया वासुदेवदृष्ट्याऽर्चयंतः संतः तुष्यद्धृदः प्रीयमाणचित्ताः स्मितमेव सुधा तयोक्षितं सिक्तं पद्मतुल्यं वक्त्रं येषामनुरागकलया प्रेमशोभया वाचा गृणंतः स्तुवंतः यथा कुपितमात्मजं स्निग्धः पिता सत्पुत्रो वा पितरम् । अहमिव भृगुं युष्मान्वा तैरहमुपाहृतो वशीकृतः ॥ ११ ॥ तत्तस्मान्मेऽवसायमभिप्रायमलक्षमाणावजानंतौ युष्मदपराधोचितां गतिं सद्यः प्राप्य मत्समीप इतां प्राप्नुताम् । तदिति स मेऽनुग्रहः । तमेवाह । यत् भृतयोर्विवासोऽचिरतः शीघ्रं कल्पतां संपद्यतां समाप्यतामिति ॥ १२ ॥ उशतीं कमनीयां प्रियां देवीं द्योतमानामृषिकुल्यां ऋषयो मंत्रास्तत्प्रवाहरूपमृषिकुलयोग्यामिति वा । सरस्वतीं वाचमास्वाद्य तन्माधुर्यमनुभूय सर्पप्रायेण मन्युना दष्टानामपि क्रोधविषव्याप्तानां हि मनो रसानुभवाभावात्प्रियभाषणमपि न सहते तेषां त्वात्मा मनो नातृप्यदलमिति नामन्यत ॥ १३ ॥ सतीं श्रेष्ठां व्यादाय प्रसार्य कर्णं दत्त्वेत्यर्थः लघ्वीं मिताक्षरां गुरुभिरर्थैर्गह्वरां दुष्प्रवेशाम् अगाधामभिप्रायतः गंभीरामर्थतः विगाह्य विचार्यापि किमस्मा

एवं भूता वक्ष्यमाणलक्षणाः संबोधयंति भो दयासिंधवः हे स्वामिन् इत्यादि कोमलामंत्रणेन प्रीणयंति ॥ ११ ॥ अभिप्रायं ब्राह्मणानुरागलक्षणम् । अजानंतौ दैवादपश्यंतौ ननु ब्राह्मणातिक्रमिणो मद्द्वेषिण एवेति स्वयं श्रीमुखेन ब्रूषे तत्कथं तयोः पुनरेवं स्निह्यतीति सर्वैवश्यमाह म इति । यद्यस्मात्तत्र जयविजययोर्ममानुग्रह एव न तु निग्रह इति । न हि स्वाभाविको धर्मस्त्यक्तुं शक्यत इति भावः । भृतयोर्भृत्ययोर्विवासः विशिष्टो मया सह वासः॥१२॥सरस्वतीं वाणीं नदीं च पक्षे स्वच्छां देवीं मुनीनां बुद्ध्या विविधवितर्कादिमय्या सह क्रीडंतीं पक्ष्ये पूज्याम् । ऋषीणां कुल्यां जलाशयरूपाम् अत्र तेषां महानुतापत्वेपि यन्मन्युसर्पविषानपगमस्तद्भक्तापराधस्य दुर्वारत्वमेव ज्ञापयति सत्यपि तादृशे भक्तापराधे यो भगवच्चरणतुलसीगंधादिमाधुर्यानुभवः स खलु ब्राह्मणातिक्रमानंतमनुतस्योर्जयविजययोर्या तेषु कृपा तदनुगामिन्या भगवत्कृपायाः प्रभावमेव ज्ञापयति अतो यद्येषां भक्तापराधो नाभविष्यत्तदा भक्तभगवतोः कृपापात्रीभूतानामेषां शुद्धदास्यप्रेमैवाजनिष्यत तस्मादपराधसद्भावाद्वाचातद्भक्तत्वमेवैषामभूत् । यदुक्तं ''भावोऽप्यभावमायाति कृष्णप्रेष्ठापराधतः । आभासतां च शनकैर्न्यूनजातीयतामपि'' इति ॥ १३ ॥ इत्यर्थ इति व्यासंगांतरत्यागपूर्वकं शुश्रुवुरित्यभिप्रायः अत्राभिनंदनपक्षो व्याख्यात एव निंदापक्षस्तु भगवदनभिप्रेतोऽपि बिभ्यद्भिर्मुनिभिरात्मनि संभावितत्वात् सरस्वत्या च दत्तावकाशत्वादेवं व्याख्येयः तथा हि–''एतौ द्वौ पार्षदौ मह्यम्'' इति सर्वज्ञानपि मुनीन् यत्परिचाययति स्म तेन रेरे मूढा मत्पार्षदावपि शपथ एतावदपि बलं धद्ध्वे इति व्यंजितम् । कदर्थीकृत्य मामित्यत्र सनकाद्यवज्ञानात्पूर्वं भगवत्कदर्थना भावादियं तेषु भगवतो वक्रोक्तिः कोपव्यंजिकैव । वस्तुतस्तु–चतुर्थ्यतिशयोक्त्या प्रथमं कदर्थनं न ततो युष्मदतिक्रम इति कारणकार्ययोः पौर्वापर्यविपर्ययो भगवता प्रयुक्तः स एवानुमत इति । अस्मदननुमतिर्यद

ते योगमाययारब्धपारमेष्ठ्यमहोदयम् ॥ प्रोचुः प्रांजलयो विप्राः प्रहृष्टाः क्षुभितत्वचः ॥ १५ ॥ ऋषय ऊचुः ॥ न वयं भगवन् विद्मस्तव देव चिकीर्षितम् ॥ कृतो मेऽनुग्रहश्चेति यदध्यक्षः प्रभाषसे ॥१६॥ ब्रह्मण्यस्य परं दैवं ब्राह्मणाः किल ते प्रभो ॥ विप्राणां देवदेवानां भगवानात्मदैवतम् ॥ १७ ॥ त्वत्तः सनातनो धर्मो रक्ष्यते तनुभिस्तव ॥ धर्मस्य परमो गुह्यो निर्विकल्पो भवान्मतः ॥ १८ ॥

नंभिनंदति निंदति वाऽस्मत्कृतं दंडं वा संकोचयतीति न विदुः ॥ १४ ॥ ततश्चाभिनंदतीति ज्ञात्वा ते प्रहृष्टाः संतः प्रोचुः । क्षुभिता रोमांचिता त्वग्येषाम् । कूपितेति पाठे संजातरोमकूपोक्त्या रोमांचितत्वमेवोक्तम् आरब्ध आविष्कृतः पारमेष्ठ्यस्य परमैश्वर्यस्य महोदयः परमोत्कर्षो येन तम् । अधिराजत्वमाविष्कृत्य राजशिक्षार्थं ब्राह्मणान्मानयतीति ज्ञात्वेत्यर्थः ॥ १५ ॥ अध्यक्षः सर्वेश्वरः संस्तद्धीत्यात्मकृतं मन्य इत्युक्त्या मयापराधः कृत इति तथा तदनुग्रहो मे इत्यादिवचनेन ममानुग्रहश्चेति यत्प्रभाषसे तेन तव यच्चिकीर्षितं तन्न विद्मः ॥ १६ ॥ किलेति लोकशिक्षार्थं सूचितम् । परमार्थमाहुः । विप्राणामिति । देवदेवानां देवपूज्यानामपि भगवांस्त्वमात्मा च दैवतं च ॥ १७ ॥ लोकशिक्षार्थताप्रपंचस्त्वत्त इत्यष्टभिः । धर्मस्त्वत्त एव भवति रक्ष्यते च त्वदवतारैः परमः फलरूपोऽत एव गुह्यो गोप्यः न च स्वर्गादिफलवद्विकारी भवान्किं तु

भविष्यतदा युष्मत्कृतो दंडोऽपि नाभविष्यत् । "ब्रह्मतेजः समर्थोपि हंतुं नेच्छे मतं तु मे" इति वक्ष्यमाणोक्तेः । ततश्च यूयं च वराटिकार्द्धमूल्या अभविष्यतेति मद्ब्रह्मण्यतैव युष्मानुन्मादयतीति भावः ॥ तद्धि ह्यात्मकृतं मन्य इति । जयविजययोरात्मत्वेन स्वीकारात्प्रेमाधिक्यम् 'सोऽहं भवद्भ्य' इत्यादिमुनिष्वादरमात्रम् । छिंद्यां स्वबाहुमपीति तेषां प्रेमास्पदता । यत्सेवयेति मुनिषु पुनरप्यादरः सोऽपि बाह्य एव ब्राह्मणसेवयैव किम् तस्य चरणरेणुः पवित्रोऽभूत् तयैव किं तस्याखिलामलाः क्षताः तयैव किं लक्ष्मीस्तं न त्यजतीति हेत्वसत्त्वादिति नाहं तथाद्मीत्यादौ यूयं ब्राह्मणा भोजनप्रियाः केवलं भोजनीया एवेति ब्राह्मणमुखेनाहं भुंजे इति ख्यातिं लोकेषु विस्तारयितुम् घासं चरत इति श्लेषेण ब्राह्मणः खलु गौरिवादनीयश्चारणीयः पशुबुद्धित्वादेव मद्दत्तेन गौरवेण हृष्यंति न तु युष्माभिर्मत्सुखतात्पर्यिका काचिन्मदीयपरिचर्या संभवेदिति । येषां बिभर्मीति किरीटेषु ब्राह्मणपदरजोधारणादेव योगमायैश्वर्यं तथा तस्मादेव हेतोर्मच्चरणोदकं सर्वजगत्पावनी गंगेति गौरवमुपहास एव फलितम् । दुहर्तीर्मदीया इति । गोब्राह्मणयोर्भेदो नास्ति द्वयोरेव मत्तुल्यादिति । पुनरपि हास एव ये ब्राह्मणानिति । ब्राह्मणानां खलु क्रोध औत्पत्तिक एव धर्मस्तु—क्वाहं मद्भक्ताश्च हसंत एवेति सहिष्णुता सुधा मद्भक्तेभ्य एव मया दत्तेति तयैवाहं वशीकृतः स्यामिति । जयविजययोश्च सहिष्णुतायाः संप्रत्यनुदयान्मम तत्रौदासीन्यं जातमतः शापोऽपि वः प्राभूदन्यथा तु नैव प्राभविष्यदत एवांबरीषे ममौदासीन्याभावाद्दुर्वाससः कोपात्क्षिप्तजटाया अपि वैफल्यं प्रत्युत मत्स्वरूपचक्रकृतः संतापः साक्षान्मया ब्रह्मण्येन कारितमंबरीषपादपतनादिकमिति "यं वानयोर्दममधीश भवान्विधत्ते वृत्तिं नु वा तदनु मन्महि निर्व्यलीकम् । अस्मासु वा य उचितो ध्रियतां स दंडो येऽनागसौ वयमयुंक्ष्महि किल्बिषेण॥" इत्यग्रिमवाक्यदृष्ट्या निंदनपक्षो व्याख्यातः॥ ॥ १४ ॥ एवं निंदनाभिनंदनयोर्द्वयोरपि पक्षयोः पर्यवसाने कतरस्मिन्भगवदभिमता विश्रांतिरिति चिरं विमृश्याभिनंदनमेव निश्चित्य हृष्यंत आहुः ते इति । इत्यर्थ इति । पारमेष्ठ्यमहोदययुक्तैरपि कृतापराधा अपि ब्राह्मणाः पूजनीया एव न दंड्या इति भावः । कूपा जाताः अस्या इति कूपिता तादृक् त्वक् येषां ते तथा एकदेशोच्चारणन्यायेन रोमकूपोपस्थितिः 'निशाम्य भानुनंदिनी' इतिवद्यथा भानुनंदिनीति पदं वृषभानुनंदिन्युपस्थापकं तत्र तद्वदत्रापीत्यर्थः । "सर्वोत्कृष्टे पारमेष्ठ्यं साम्राज्ये ब्रह्मणः पदे" इति निरुक्तिः ॥ १९ ॥ तदेवं ज्ञाततत्त्वा अपि तदभिप्रायं तन्मुखादेव श्रोतुं पुनः प्रश्नगर्भमाहुः । नेति । चिकीर्षितमनुग्रहं निग्रहं वेति यद्यतः ॥ १६ ॥ १७ ॥ अत एव परमफलत्वादेव "यदायदा हि धर्मस्य" इत्याद्युक्तेः । यतो धर्मस्य प्रवर्तको रक्षकश्च त्वमतो हेतोः । इति भाव इति । " यदि ह्यहं न वर्त्तेयं जातु कर्मण्यतंद्रितः । मम वर्त्मानु

तरंति ह्यंजसा मृत्युं निवृत्ता यदनुग्रहात् ॥ योगिनः स भवान्किं स्विदनुगृह्येत यत् परैः ॥ १९ ॥ यं वै विभूतिरुपयात्यनुवेलमन्यैरर्थार्थिभिः स्वशिरसा धृतपादरेणुः ॥ धन्यार्पितांघ्रितुलसीनवदामधाम्नो लोकं मधुव्रतपतेरिव कामयाना ॥ २० ॥ यस्तां विविक्तचरितैरनुवर्तमानां नात्याद्रियत्परमभागवतप्रसंगः ॥ स त्वं द्विजानुपथपुण्यरजः पुनीतः श्रीवत्सलक्ष्म किमगा भगभाजनस्त्वम् ॥ २१ ॥

निर्विकारो मतः अत एवंभूतस्य तदेवं लोकशिक्षामात्रमिति भावः ॥ १८ ॥ विपरीतं चेदमित्याहुः । तरंतीति । यस्यानुग्रहादेव निवृत्ता विरक्ता योगिनश्च संतो मृत्युं तरंति स भवान्परैरनुगृह्येतेति किं स्वित् न किंचिदित्यर्थः॥ १९॥ यच्चोक्तं "यत्सेवया चरणपद्मपवित्ररेणुं सद्यः क्षताखिलमलं प्रतिलब्धशीलम्" इत्यादि तदत्यंतमसंभावितमित्याहु र्द्वाभ्याम् । यं वै विभूतिर्लक्ष्मीरनुवेलमवसरेऽवसरे उपयाति सेवते धृतः पादरेणुर्यस्याः धन्यैः सुकृतिभिरर्पितमंघ्रौ यत्तुलस्या नवं दाम माला तद्धाम स्थानं यस्य तस्य मधुव्रतपतेर्भ्रमरमुख्यस्य लोकं स्थानमंघ्रिं कामयमानेव ॥ २० ॥ विविक्तचरितैर्विशुद्धैः परिचरणैरनुवर्तमानां सेवमानामपि यो नात्याद्रियन्नातीवादृतवान् । स एवंभूत स्त्वम् । अयं भावः । इत्थं नामातिलंपटतया लक्ष्मीस्त्वां सेवते । कथम् । एवं हि सा मेने । अयं हि सारग्राही मधुव्रतश्चंचलश्च स चांघ्रिगतायां तुलस्यां सपरिवारो निश्चलः सन् रमतेऽतोंघ्रिलावण्यमत्यधिकं स्यात्ततोऽहं वक्षसि स्थितापि योगिजनादिबहुसेवकसंघर्षमंगीकृत्यापि तुलस्या सह सापत्न्येनापि चरणौ सेविष्ये इति तदेवमत्यौत्सुक्ये नानुवर्तमानामपि तां त्वं नातीवाद्रियसे । यतः परमभगावतेष्वेव प्रकृष्टसंगवान् । स एवं परमसौभाग्यनिधिस्त्वम् । अतो ब्राह्मणप्रसादान्मां श्रीर्न विजहातीत्यलभ्यलाभ त्वेन निर्देशो न समंजस इति । किं च स्वत एव त्वं भगभाजनो भजनीयानां गुणानामाश्रयः परमशुद्धश्च तं त्वां द्विजानामनुपथं पथिपथि लग्नं यत्पुण्यं रजस्तथा श्रीवत्स लक्ष्म च किं पुनीतः पवित्री कुरुतः । किं किमर्थं च ते उभे अगाः प्राप्तो भूषणत्वेन स्वीकृतवानसि । अतो "यत्सेवया चरणपद्मपवित्ररेणुम्" इत्यादिवचनं लोकसंग्रहमात्र

वर्तंते मनुष्याः पार्थ सर्वशः" इत्यादिगीतोक्तेरत्रायमाशयः ॥ १८ ॥ भगवदुक्तौ वैपरीत्यमाहुः । इत्यर्थ इति । न घटत इति भावः ॥ १९ ॥ यं त्वाम् ॥ २० ॥ अत्राशयमाह-अयं भाव इति । यतों रमतेऽत इति । ततोऽत्यधिकत्वात् । अन्यदघटनीयत्वमाहुः । किं चेति । श्रीवत्सलक्ष्मात्र भृगुपादताडनजातचिह्नं ज्ञेयं "भृग्वंघ्रेर्लक्ष्म श्रीवत्सं रोमावर्त्तमथापरे" इति संहितोक्तेः । श्रीर्वसत्यनेनेति श्रीवत्सः इह वसतेः साधने सप्रत्यय औणादिकस्सस्य तश्च । स्वार्थेच्छाद्यर्थाभावाद्वित्वाभावः । 'प्रयोगमनुसृत्त्य प्रयोक्तव्यः' इत्युक्तेः । स च श्रीवत्सो विप्रपादसंबंध एव तदुक्तं "विप्रपादाङ्कितस्थाने पद्मवैकुंठयोः सदा । निवसामि हरेः प्रीत्यै दुर्नीते न कदाचन" इति लक्ष्म्या उक्तं नारदं प्रति पुराणांतरेऽत एव श्रीवैकुण्ठेशेन त्रिदेवीपरीक्षायां भृगुं प्रत्युक्तम् । "अद्याहं भगवंल्लक्ष्म्या आसमेकांतभाजनम् । वत्स्यत्युरसि मे भूतिर्भवत्पादहतांहसः" इति । इत्यर्थ इति । सर्वमेतल्लोक

धर्मस्य ते भगवतस्त्रियुगस्त्रिभिः स्वैः पद्भिश्चराचरमिदं द्विजदेवतार्थम् ॥ नूनं भृतं तदभिघातिरजस्तमश्च सत्त्वेन नो वरदया तनुवा निरस्य॥२२॥
न त्वं द्विजोत्तमकुलं यदिहात्मगोपं गोप्ता वृषः स्वर्हणेन ससूनृतेन॥तर्ह्येव नंक्ष्यति शिवस्तव देव पंथा लोकोऽग्रहीष्यदृषभस्य हि तत्प्रमाणम् ॥
॥ २३ ॥ तत्तेऽनभीष्टमिव सत्त्वनिधेर्विधित्सोः क्षेमं जनाय निजशक्तिभिरुद्धृतारेः ॥ नैतावता अधिपतेर्बत विश्वभर्तुस्तेजः क्षतं त्ववनतस्य स
ते विनोदः ॥ २४ ॥

मित्यर्थः ॥ २१ ॥ धर्ममूर्तेश्च तवेदमुचितमेवेत्याहुः । धर्मस्येति त्रिभिः । त्रिष्वेव युगेष्वाविर्भवतीति त्रियुगः । यद्वा त्रीणि युगानि युगलानि त्रियुगाः षड्गुणा भगशब्दवाच्याः संत्यस्येति त्रियुगः । हे त्रियुग धर्मरूपस्य तव त्रिभिः पद्भिः स्वैरसाधारणैस्तपःशौचदयाभिः सत्यस्य धर्मविप्लवेऽपि कलावनुवर्तमानत्वात्त्रिभिरित्युक्तम् । भृतं पालितम् । किं कृत्वा नोऽस्माकं वरदया सत्त्वेन तनुवा तन्वा तत्त्वमूर्त्या तदभिघाति तेषां पादानामभिघातकं रजश्च तमश्च निरस्य निराकृत्य द्विजानां देवतानां च प्रयोजनाय नूनं भृतम् । यद्वा । हिलोपे रूपं निरस्येति । अस्माकं तन्निवर्तयेत्यर्थः ॥ २२ ॥ आत्मगोपं त्वयैव रक्षणीयं द्विजोत्तमानां कुलम् । यदिह स्फुटं त्वं न गोप्ता न रक्षिता तृन्प्रत्ययांतत्वान्न षष्ठीप्रयोगः । वृषः श्रेष्ठः हे देव पंथा वेदमार्गो नंक्ष्यति नाशं यास्यति ऋषभस्य श्रेष्ठस्य हि यस्मात्तदनर्हणमसूनृतं चाग्रहीष्यत् । तदुक्तं गीतासु । "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ॥ स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते" इति ॥ २३ ॥ नश्यत्विति चेत्तत्राहुः । तद्वेदमार्गनाशनम् । इवेति लोकोक्तिः सत्त्वनिधित्वाज्जनाय क्षेमं शं विधातुमिच्छोरत एव निजशक्तिभी राजादिभिरुत्पाटितधर्मप्रतिपक्षस्य अतस्तव ब्रह्मकुलेऽवनतिर्युक्तैव । ननु महतोऽन्येष्ववनतिस्तेजोहानिकरी तत्राहुः ।

शिक्षैवेति भावः ॥ २१ ॥ औचित्यमाहुः–धर्मेति । इदं लोकसंग्रहणम् आविर्भवति स्वचिह्नैः स्पष्टमाविर्भवतीत्यर्थः । अनन्यलभ्यत्वादर्थस्यात्र त्रियुगेत्युक्तेस्त्रियुगाविर्भाववानित्यर्थो यत्नलभ्योऽतोऽक्षरार्थमाह–यद्वेति । सद्गुणाः "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतींगना" इति वाक्योक्ता भगशब्दस्यार्थभूताः । सत्यरूपचतुर्थपदानुपादानं त्रियुगापेक्षयेत्याह सत्यस्येति । धर्मस्य विप्लवो यत्र तस्मिन्कलाविति । "तन्वादीनां वेयङुवङौ" तनुं पुषेम तनुवं पुषेम, विषुं पश्य विषुवं पश्य, स्वर्गो लोकः सुवर्गो लोकः त्र्यंबकं, त्रियंबकं वरेण्यं वरेणियमिति वैदिक्याम् । पादानां तपःशौचदयानां "तपः शौचदयाहीनो जायते सर्वदा नरः । रजस्तमोभ्यामाविष्टचेता धर्मबहिष्कृतः" इत्यादिपुराणात् । संभवत्वादर्थांतरमाह–यद्वेति । निरुपपदाद्दैवादिकात् 'असु क्षेपणे' इत्यस्मादेतद्रूपम् । इत्यर्थ इति । वयमपि द्विजा अतोऽस्माकं रजस्तमसी नाशयेति भावः ॥ २२ ॥ अतिप्रियत्वात् " न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम् " इत्युक्तेः । स्वदेहतोऽपि प्रियस्य ब्राह्मणकुलस्य रक्षणं तव नातीवाश्चर्यं, वृषः सर्वेप्सितवर्षणाच्छ्रेष्ठः सूनृतं सत्यप्रियवचनं तद्रहितमसूनृतम् । तदृषभाचरितग्रहणम् अतोऽस्मास्वघटमानमपि यत्सेवयेत्यादि त्वद्वचः केवलं लोकशिक्षार्थमेव तदिति भावः ॥ २३ ॥ स्वयमाक्षिप्य समाधत्ते नश्यत्विति इवेति । नात्रेवशब्द उपमाने किं त्ववधारणेऽनभीष्टमेवेत्यर्थः । लोकोक्तिरज्ञोक्तिः । 'लोकोऽज्ञे भुवने जने' इति धरिणिः । अत एव जनक्षेमविधानेच्छुत्वादेव । अतो धर्मप्रतिपक्षहंतृत्वात् । अत्राक्षिपति नन्विति । विनोदो विलासः कौतुक

यं वाऽनयोर्दममधीश भवान्विधत्ते वृत्तिं नु वा तदनुमन्महि निर्व्यलीकम् ॥ अस्मासु वा य उचितो ध्रियतां स दंडो येऽनागसौ वयमयुंक्ष्महि किल्बिषेण ॥ २५ ॥ श्रीभगवानुवाच ॥ एतौ सुरेतरगतिं प्रतिपद्य सद्यः संरंभसंभृतसमाध्यनुबद्धयोगौ ॥ भूयः सकाशमुपयास्यत आशु यो वः शापो मयैव निमितस्तदवैत विप्राः ॥ २६ ॥ ब्रह्मोवाच ॥ अथ ते मुनयो दृष्ट्वा नयनानंदभाजनम् ॥ वैकुंठं तदधिष्ठानं विकुंठं च स्वयंप्रभम् ॥ २७ ॥ भगवंतं परिक्रम्य प्रणिपत्यानुमान्य च ॥ प्रतिजग्मुः प्रमुदिताः शंसंतो वैष्णवीं श्रियम् ॥ २८ ॥ भगवाननुगावाह यातं मा भैष्टमस्तु शम् ॥ ब्रह्मतेजः समर्थोऽपि हंतुं नेच्छे मतं तु मे ॥ २९ ॥

एतावता तु धर्मत्राणप्रयोजनेनावनतस्य नमनं कृतवतस्तव तेजः प्रभावो न क्षतं न क्षीणं यतः स नमनादिस्ते विनोदः ॥ २४ ॥ शापाग्रहं परित्यज्य विज्ञापयंति यं वाऽन्यं दंडं विधास्यति भवान्वृत्तिं तु अधिकजीविकां वा तत्सर्वमनुमन्यामहे ये वयं निरपराधावेतौ किल्बिषेण शापेनायुंक्ष्महि योजितवंतः ॥ २५ ॥ मत्कारितत्वाच्छापस्य युष्माकं नापराध इत्याश्वासयन्नाह । एतौ सद्य एवासुरयोनिं प्राप्य भूयोऽप्याशु मत्समीपमागमिष्यतः । संरंभेण क्रोधावेशेन संभृतः संवृद्धो यः समाधिरेकाग्रता तेनानुबद्धो दृढी कृतो योगो ययोः । हे विप्रा यो वः शापो युष्मत्कृतः शापस्तदिति स मयैव निमितो निर्मित इत्यवैत जानीत॥ २६॥ नेत्रोत्सवजनकं विकुंठं हरिं तन्निवासं च वैकुंठलोकम् । स्वयंप्रकाशं प्रकाशांतरानपेक्षम् । सत्त्वपरिणामत्वात्॥ २७॥ अनुमान्यानुज्ञाप्य परिक्रम्य प्रदक्षिणीकृत्य वैष्णवीं श्रियं वैकुंठे वर्णिताम्॥ २८॥ ममैव तु मतं संमतम् । इदमत्र

विशेष एवेत्यर्थः ॥ २४ ॥ वस्तुतस्तु-दुरवगाहाभिप्रायं त्वां कायवाङ्मनोभिरवनता वयमिदं निवेदयामो नास्माकं शापाद्याग्रह इत्याह-शापाग्रहमिति । अनुमन्यामहे स्वच्छंदेनैवैतौ तां विधेहि अस्मद्दत्तशापस्तु रसातलं गच्छत्विति भावः । पुनश्च सभयाश्रुकंपमाहुः-अस्मास्विति ॥ २५ ॥ आश्वासयन्मा भैष्टेति सांत्वयन् । योगो मत्संयोगः । निमितः निरत्र निरर्थेऽनेकार्थत्वादुपसर्गाणाम् छांदसत्वाद्रोपसर्गरेफलोपः । अनयोर्मत्परमभक्तयोरसुरभावसिद्ध्यर्थं युष्मान्वैकुंठमानीय द्वारपालाविमौ शुद्धसत्त्वस्वरूपावपि ब्राह्मणमात्रपरमभक्तावपि युष्मत्प्रातिकूल्ये प्रवर्त्य युष्माकमात्मारामचूडामणीनामपि क्रोधमुत्पाद्य शापमुपगमितौ मयैव न तु मत्पार्षदयोर्नापि युष्माकं कोऽप्यपराध इति भावः । ननु भक्तवत्सलस्यापि तव भक्ताभ्यामीदृशदुःखदाने प्रवृत्तौ किं कारणं तत्राह-हे विप्रास्तत्कारणमवैत परामृश्य सर्वज्ञत्वेनैवावगच्छत किं मत्कथनेन तत्र कारणं जयविजययोरेव प्रेमविजृंभिता काचिदिच्छा सा च भोः प्रभुवर देवाधिदेव वैकुंठनाथ अन्यत्राल्पबलत्वादस्मासु प्रातिकूल्याभावाद्यदि तत्र भवतो युयुत्सासुखं न संपद्यते तदावामेव केनापि प्रकारेण प्रतिकूलीकृत्य तद्युद्धसुखमनुभूयतामित्यावयोस्त्वत्सर्वसुखपारिपूर्णतायामणुमात्रमपि न्यूनत्वमसहमानयोः किंकरयोः प्रार्थनाहठः स्वभक्तवात्सल्यगुणमपि लघूकृत्य निष्पाद्यतामिति "मनोऽनुलापमयी रसो वै सरस" इति । "आनंदमयः" इति "सैषा नंदमयस्य मीमांसा भवति" इत्यादिश्रुतिविवृतिषु भगवतः श्रृंगारादिसर्वरसपरिपूर्त्तिविवेचनप्रसंगभवा ज्ञेया ततश्च स्वेच्छामयस्येति "मद्भक्तानां विनोदाय करोमि विविधाः क्रियाः" इति तत्प्रकारसंपादने भगवतोऽपीच्छाजनीति रहस्यस्य प्रकटानुक्तिरहो महदपराधाद्वैकुंठादपि परमसिद्धानामप्यधःपातो भवेत्किं पुनर्मर्त्यलोकात्साधकाभासानामस्माकमिति सावकभक्तान्महदपराधेषु सावधानीकर्तुं ज्ञेया । प्रकृतमनुसरामः सकाशं "समीपे सप्रकाशे च सकाशः ससुखेऽपि च" इति निरुक्तिः । समीपं कृष्णसायुज्यं प्राप्य तदंतर्द्धानावसरे उपयास्यतेति । अत्रोपयोगिवृत्तं शैवेऽपि तौ प्रति कुमारोक्तिः । "भक्तिभावं समाश्रित्य सप्तभिर्जन्मभिस्त्विह । वैरभावे त्रिभिः स्थानं जन्मभिरिदमाप्स्यथः" इति । पुनर्हरिं प्रति "यथेच्छा ते हरे चाद्य तथैव नियतां त्वया" इति ॥२६॥ अथ भगवदाश्वासनोत्तरम् ॥२७॥ वैष्णवीं वैकुंठगां श्रियं संपत्तिं श्लाघयंतः ॥ २८॥ युवां यातमित्युपस्थितजयविजयौ प्रत्युक्तिः । तदैव विरहव्या

एतत्पुरैव निर्दिष्टं रमया क्रुद्धया यदा ॥ पुराऽपवारिता द्वारि विशंती मय्युपारते ॥ ३० ॥ मयि संरंभयोगेन निस्तीर्य ब्रह्महेलनम् ॥ प्रत्येष्यतं निकाशं मे कालेनाल्पीयसा पुनः ॥ ३१ ॥ द्वास्थावादिश्य भगवान् विमानश्रेणिभूषणम् ॥ सर्वातिशयया लक्ष्म्या जुष्टं स्वं धिष्ण्यमाविशत् ॥३२॥ तौ तु गीर्वाणऋषभौ दुस्तराद्धरिलोकतः ॥ हतश्रियौ ब्रह्मशापादभूतां विगतस्मयौ ॥ ३३ ॥ तदा वैकुंठधिषणात्तयोर्निपतमानयोः ॥ हाहाकारो महानासीद्विमानाग्र्येषु पुत्रकाः ॥ ३४ ॥ तावेव ह्यधुना प्राप्तौ पार्षदप्रवरौ हरेः ॥ दितेर्जठरनिर्विष्टं काश्यपं तेज उल्बणम् ॥ ३५ ॥ तयोरसुरयोरद्य तेजसा यमयोर्हि वः ॥ आक्षिप्तं तेज एतर्हि भगवांस्तद्विधित्सति ॥ ३६ ॥

तत्त्वम् । यद्यपि सनकादीनां क्रोधो न संभवति न च भगवत्पार्षदयोर्ब्राह्मणप्रातिकूल्यं न च भगवतः स्वभक्तोपेक्षा न च वैकुंठगतानां पुनर्जन्म तथापि भगवतः सिसृक्षादिवत्कदाचिद्युयुत्सा समजनि तदाऽन्येषामल्पबलत्वात्स्वपार्षदानां तुल्यबलत्वेऽपि प्रातिपक्ष्यानुपपत्तेरेतावेव ब्राह्मणनिवारणे प्रवर्त्य तेषु च क्रोधमुद्दीप्य तच्छापव्याजेन प्रतिपक्षौ विधाय युद्धकौतुकं संपादनीयमिति भगवतैव व्यवसितमतः सर्वं संगच्छते । तदिदमुक्तं शापो मयैव निमित इति मा भैष्टमिति अस्तु शमिति हंतुं नेच्छे मतं तु मे इत्यादि च ॥ २९ ॥ यदा मयि उपारते योगनिद्रां गतवति सति द्वारि विशंती युवाभ्यां पुराऽपवारिता तदा क्रुद्धया रमया एतद्यद्ब्राह्मणैरिदानीमुक्तं तत्पुरैव निर्दिष्टम् ॥ ३० ॥ प्रत्येष्यतं प्रत्येष्यथः । निकाशं समीपम् ॥ ३१ ॥ ३२ ॥ दुस्तराद्ब्रह्मशापात् हरिलोकतः पतताविति शेषः । हरिलोकत एव हतश्रियाव भूतामिति वा विगतस्मयौ नष्टगर्वौ च ॥ ३३ ॥ विकुंठस्य धिषणात्स्थानात् । पुत्रका हे देवाः ॥ ३४ ॥ काश्यपं तेजो वीर्यं प्राप्तौ ॥ ३५ ॥ सहैव गर्भे प्रविष्टौ यमौ

कुलौ कूत्कृत्य रुदंतौ वीक्ष्य पुनः कृपाद्रवच्चित्तनवनीत आह मा भैष्टं शं कल्याणं युवयोरस्तु इतो वैकुंठान्मा यातम् अत्रैव मां सेवमानौ सदा तिष्ठतमिति मा पदमुभयत्रान्वयि । पुनरानंदितौ तौ वीक्ष्याह-ब्रह्मतेजः ब्रह्मशापं हंतुं समर्थोऽप्यहम् । मे तु मम तु मतं नेच्छामि ब्रह्मशापस्यामोघत्वमर्यादाया मयैव कृतत्वात् । अतो वज्रस्यामोघत्वरक्षणार्थं गरुडो यथा पक्षांशमेकं तत्याज तथैवैकांशेनैकैकप्रकारेणासुरभावं गच्छतं वैकुंठेऽपि स्वरूपेण तिष्ठतमित्यतो वामनचरिते "तानभिद्रवतो दृष्ट्वादितिजानीकयूथपान् । प्रहस्यानुचरा विष्णोः प्रत्यषेधन्नुदायुधाः ॥ नंदः सुनंदोऽथ जयो विजयः प्रबलो बलः॥" इत्यादीनां युध्यमानानां भगवत्पार्षदानां मध्ये जयविजययोरप्युल्लेखः श्रूयते तदा च तयोर्हिरण्याक्षहिरण्यकशिपुत्वानंतरं रावणकुंभकर्णत्वप्राप्त्युन्मुखता च लक्ष्यते इति तयोर्युगपदेव पार्षदत्वासुरत्वान्यथानुपपत्तेरेवमवश्यं व्याख्येयम् ॥ २९ ॥ ३० ॥ न चैकांशेनासुरभावेऽपि चिंता कार्या यतोऽहमप्यवतारत्रयेण युवाभ्यां सह वीररसमयं युद्धसुखमनुभविष्यामीत्यासुरभावेऽपि मत्सेवैव भवद्भ्यां संपादयिष्यते । तृतीये तु जन्मनि साक्षादेव वां स्वीकरिष्य इत्याह मयीति । संरंभेण क्रोधावेशेन योगः युद्धेषु मयि संयोगो ध्यानं वा । ब्रह्महेलनम् ब्रह्मशापम् । अल्पीयसेति । शैववाक्यानुरोधेन सप्तजन्मापेक्षया त्रिजन्मलक्षणेनेत्यर्थः ॥ ३१ ॥ धिष्ण्यं मंदिरम् ॥ ३२ ॥ पूर्वव्याख्यानुसारेणाह । पक्षांतरमाह-हरिलोक एव हतश्रियौ जातौ सप्तम्यर्थेऽत्र तसिः । अंशेन श्रियोऽसुरभावत्वोक्तेः पूर्णश्रिया हीनावभूतामिति भावः ॥ ३३ ॥ तदा भगवद्वाक्योत्तरम् । तयोर्जयविजययोः । विमानाग्रेषु सत्यादिलोकगतविमानश्रेष्ठेषु । पुत्रका इति । देवान्प्रति ब्रह्मण आमंत्रणम् ॥ ३४ ॥ प्राप्तौ अणिमाद्यसिद्ध्या प्रविष्टौ स्वदेहत्वेन स्वीकृतवंतावित्यर्थः । उल्बणमुग्रम् ॥ ३५ ॥ यमयोः श्लेषेणांतकतुल्ययोः । तर्हि किमप्युपशमनं कुर्वीति चेत्तत्र के वराकाः शापदष्टयोरपि

विश्वस्य यः स्थितिलयोद्भवहेतुराद्यो योगेश्वरैरपि दुरत्यययोगमायः ॥ क्षेमं विधास्यति स नो भगवांस्त्र्यधीशस्तत्रास्मदीयविमृशेन कियानिहार्थः ॥ ३७ ॥ इति श्रीभा० तृतीय० वैकुंठनाथेन वैकुंठे ब्राह्मणमाहात्म्यवर्णनं नाम षोडशोऽध्यायः ॥ १६ ॥ मैत्रेय उवाच ॥ निशम्यात्मभुवा गीतं कारणं शंकयोज्झिताः ॥ ततः सर्वे न्यवर्तंत त्रिदिवाय दिवौकसः ॥ १ ॥ दितिस्तु भर्तुरादेशादपत्यपरिशंकिनी ॥ पूर्णे वर्षशते साध्वी पुत्रौ प्रसुषुवे यमौ ॥ २ ॥ उत्पाता बहवस्तत्र निपेतुर्जायमानयोः ॥ दिवि भुव्यंतरिक्षे च लोकस्योरुभयावहाः ॥ ३ ॥

तयोस्तेजसा वस्तेज आक्षिप्तं तिरस्कृतम् । न चात्र प्रतिविधिः शक्यः यतः एतर्हीदानीं भगवानेव तदेवं विधातुमिच्छति ॥ ३६ ॥ तथापि कोऽप्युपायो विचार्यतामिति चेत्तत्राह । विश्वस्येति । त्रयाणां गुणानामीशः स एव सत्त्वोत्कर्षकाले नः क्षेमं विधास्यति विमृशेन विमर्शनेन ॥ ३७ ॥ इति श्रीमद्भा० टीकायां षोडशोऽध्यायः ॥ १६ ॥ ततः सप्तदशे जन्म तयोर्लोकभयंकरम् ॥ हिरण्याक्षप्रभावश्च वर्ण्यते दिग्जयेऽद्भुतः ॥ १ ॥ क्षेमं विधास्यतीति ब्रह्मवचनानंतरं शंकया त्यक्ताः ॥ १ ॥ भर्तुरादेशात् । "लोकान्सपालांस्त्रींश्चंडि मुहुराक्रंदयिष्यतः" इति वाक्यात् । स्वापत्याभ्यां परिशंकिनी देवोपद्रवं शंकमाना ॥ २ ॥ तत्र तदा निपेतुरुद्बभूवुः उरुभयमा

भगवत्पार्षदयोरुपरि नास्माकं प्रभुतेत्याह तत्खलूपशमनं स एव भगवान् विधातुमिच्छति ॥ ३६ ॥ ननु वयं संप्रति म्रियामहे स कदोपशमनं विधास्यतीति चेत्तत्र भवंतो म्रियन्तां जीवंतु वा तस्यैवेच्छा कारणम् । किं तु । संप्रति पालनसमये स पालयिष्यत्येवेत्याह । विश्वस्येति । तत्र प्रकारं तु वयं नैव जानीम इत्याह-योगेश्वरैरिति । तत्र सर्वज्ञानमिति भावः । ननु तदप्यत्र विपत्तावस्मदाश्वासनार्थं किमपि विमृशेति चेत्तत्राह तत्रास्मदीयेति । तत्र विपत्त्युपशमने । अस्मदीयविमृशेन अस्मत्कर्तृकविचारेण । कियानर्थो न कियदपीति । अस्मद्विमृश्यमन्यथा कर्तुमपि स प्रभुरिति भावः ॥ ३७ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे षोडशोऽध्यायः ॥ १६ ॥ तयोर्जयविजययोर्हिरण्याक्षहिरण्यकशिपुरूपेण जन्मेत्यर्थः । दिशां जये दिग्विजये ॥ ( १ ) ॥ कारणं तस्योपद्रवस्योत्पत्तौ प्रतीकारे च हेतुम् । ततः ब्रह्मवाक्यश्रुतेरनंतरं वैकुंठाद्वा त्यक्ता रहिता भगवति विश्वासेनेति भावः ॥ १ ॥ अपत्याभ्यां शंकावती सर्वलोकोपद्रवमपत्यं प्रति हरिहेतुकवधाद्वा शंकमानेत्यर्थः ॥ २ ॥ तदा तयोरुत्पत्तिकाले ( ३ ) भुवः प्रदेशा इति । भूम्यवयवा इत्यर्थः । तदुक्तं ज्यैतिषकल्पतरौ "चलयति पवनः शतद्वयं शतमनलो दशयोजनान्वितम् । सलिलमशीतियुतं शतं कुलिशधरो ह्यधिषष्टिकं शतं च" इति मिहिराचार्योक्तेः । सर्वभूकंपो न भवति किन्तु तत्प्रदेशा एव कंपन्ते पवनादिमंडलवशादिति मंडलानि तु "प्राग्द्वित्रिचतुर्भागेषु द्युनिशोरद्भुतेषु सर्वेषु । अनिलाग्निशक्रवरुणा मंडलपतयः शुभाशुभं भैः स्यात् ॥ १ ॥ अर्यम्णादिचतुष्कचन्द्रेतुरगादित्येषु वायुर्भवेद्देवेज्यार्जविशाखयाम्ययुगले पित्र्यद्वये चानलः । विश्वादित्रयधातृमैत्रयुगलेष्विन्द्रो भवेन्मंडलः सार्पाप्पार्त्यशतांत्यमूलयुगलेशेनेष्वपामीश्वरः ॥" इति । एवं केतव इति । बहुत्वेन केतवोऽपि बहव एव ते षष्ठस्कंधे नारायणवर्मव्याख्याने वर्णयिष्यंते सहस्रसंख्याका

१ उत्तराफाल्गुनी । २ मृगशिराः । ३ अश्विनी । ४ पुनर्वसुः । ५ पुष्यः । ६ पूर्वभाद्रपदा । ७ भरणी । ८ मघा । ९ उत्तराषाढा । १० रोहिणी । ११ अनुराधा । १२ आश्लेषा । १३ उत्तर भाद्रपदा । १४ रेवती । १५ आर्द्रा ।

सहाचला भुवश्चेलुर्दिशः सर्वाः प्रजज्वलुः ॥ सोल्काश्चाशनयः पेतुः केतवश्चार्तिहेतवः ॥ ४ ॥ ववौ वायुः सुदुःस्पर्शः फूत्कारानीरयन्मुहुः ॥
उन्मूलयन्नगपतीन्वात्याऽनीको रजोध्वजः ॥५॥ उद्घसत्तडिदंभोदघटया नष्टभागणे ॥ व्योम्नि प्रविष्टतमसा न स्म व्यादृश्यते पदम् ॥६॥ चुक्रोश
विमना वार्धिरुदूर्मिः क्षुभितोदरः ॥ सोदपानाश्च सरितश्चुक्षुभुः शुष्कपंकजाः॥७॥मुहुः परिधयोऽभूवन्सराह्वोः शशिसूर्ययोः॥ निर्घाता रथनिर्ह्रादा
विवरेभ्यः प्रजज्ञिरे॥८॥ अंतर्ग्रामेषु मुखतो वमंत्यो वह्निमुल्बणम् ॥ सृगालोलूकटंकारैः प्रणेदुरशिवं शिवाः ॥ ९ ॥ संगीतवद्रोदनवदुन्नमय्य शिरो
धराम् ॥ व्यमुंचन्विविधा वाचो ग्रामसिंहास्ततस्ततः ॥१०॥ खराश्च कर्कशैः क्षत्तःखुरैर्घ्नंतो धरातलम् ॥ खार्कारारभसा मत्ताःपर्यधावन्वरूथशः॥
॥ ११ ॥ रुदंतो रासभत्रस्ता नीडादुदपतन्खगाः ॥ घोषेऽरण्ये च पशवः शकृन्मूत्रमकुर्वत ॥ १२ ॥ गावोऽत्रसन्नसृग्दोहास्तोयदाः पूयवर्षिणः ॥
व्यरुदन्देवलिंगानि द्रुमाः पेतुर्विनाऽनिलम् ॥ १३ ॥ ग्रहान्पुण्यतमानन्ये भगणांश्चापि दीपिताः ॥ अतिचेरुर्वक्रगत्या युयुधुश्च परस्परम् ॥१४॥

समंताद्वहंतीति ॥ ३ ॥ अचलैः सहिता भुवः प्रदेशाः केतवश्चोदयं चक्रुरिति शेषः ॥ ४ ॥ सुदुस्पर्शः खरस्पर्शः फूत्कारानिति तीव्रवायुशब्दानुकरणम् । नगपतीन्महावृक्षान् वात्या वातसमूह एवानीकं यस्य रज एव ध्वजो यस्य ॥ ५ ॥ उच्चैर्हसंत्य इव तडितो येषु तेषामंबुदानां घटया समूहेन नष्टो भागणः सूर्यादिप्रभासमूहो यस्मिन् । पदं स्थानं न व्यादृश्यते स्म ईषदपि नादृश्यत ॥ ६ ॥ वार्धिः समुद्रो विमना इव उद्गता ऊर्मयो यस्मात् क्षुभिता उदरस्था मकरादयो यस्मिन् उदपानैर्वापीकूपादिभिः सहिताः शुष्काणि पंकजानि यासु ॥ ७ ॥ परिधयः परिवेषाः सराह्वो राहुग्रस्तयोः निर्घाता निरभ्रगर्जितानि रथनिर्ह्रादतुल्या ध्वनयः विवरेभ्यो गिरिगुहाभ्यः ॥ ८ ॥ सृगालानामुलूकानां च टंकारैर्ध्वनिभिः सह शिवाः सृगाल्यः ॥ ९ ॥ ग्रामसिंहाः श्वानः ॥ १० ॥ कर्कशैस्तीक्ष्णैः । हे क्षतः खार्कारो गर्दभजातिशब्दस्तस्मिन् रभसः संभ्रमो येषाम् । वरूथशः संघशः ॥ ११ ॥ रासभशब्दात्त्रस्ताः सर्वतः क्रोशंतः ॥ १२ ॥ गावोऽत्रसन् त्रस्ताः असृग्दोहाश्च बभूवुः देवलिंगानि व्यरुदन् प्रतिमा नामश्रुस्राव आसीदित्यर्थः॥ १३॥पुण्यतमान्गुरुबुधादीन्भगणान् बहूनि नक्षत्राणि चान्ये क्रूरग्रहा मंगलादयोऽतिचेरुरतिक्रम्य जग्मुर्वक्रगत्या प्रत्यावृत्य युयुधुश्च ॥१४॥

ब्रह्मपुत्रादिभेदेन ॥ ३ ॥ ४ ॥ सुदुःस्पर्शः अतीव दुःखदस्पर्शत्वात् । वात्या मंडलवायुः । अनीकं सेना ॥ ५ ॥ ६ ॥ उदरशब्देनोदरस्थोपादानं 'तात्स्थ्यात्ताच्छब्द्यम्' इति न्यायात् । चुक्षुभुरुच्छृंखला बभूवुः ॥ ७॥८॥ शिवाः शृगालस्त्रियः । अशिवा नाशबोधिका वाच इति शेषः । प्रणेदुर्जगदुः ॥ ९ ॥ शिरोधरां ग्रीवाम् । उन्नमय्योर्ध्वं कृत्वा । ततस्ततस्तत्रतत्र देशे ॥ १० ॥ धराया भूमेस्तलमुपरिभागम् ॥ ११ ॥ रासभो गर्दभः नीडं पक्षिगृहम् । घोष आभीरपल्ली । शकृत्पुरीषम् ॥ १२ ॥ गावः सौरभेय्यः । असृग्रुधिरम् । दोहो दुग्धस्थानीयं यासां तास्तथा "पूयं स्यादामरुधिरे पवित्रे गमनेऽपि च" इति निरुक्तिः । इत्यर्थ इति । पाषाणादिमय्योऽपि देवता रुरुदुरिति भावः ॥ १३ ॥ आदिना शुक्रग्रहः । दीपिताः क्रुद्धाः । अतिचारवक्रत्वयुद्धादीनि ग्रहाणां सूर्यसिद्धान्तादिभ्योऽवसेयानि । स्थूलरीतिस्तु—"सूर्यात्पञ्चमगः खेटो वक्रो मार्गी चतुर्थगः ॥

दृष्ट्वाऽन्यांश्च महोत्पातानतत्तत्त्वविदः प्रजाः ॥ ब्रह्मपुत्रानृते भीता मेनिरे विश्वसंप्लवम् ॥ १५ ॥ तावादिदैत्यौ सहसा व्यज्यमानात्मपौरुषौ ॥ ववृधातेऽश्मसारेण कायेनाद्रिपती इव ॥ १६ ॥ दिविस्पृशौ हेमकिरीटकोटिभिर्निरुद्धकाष्ठौ स्फुरदंगदाभुजौ ॥ गां कंपयंतौ चरणैः पदेपदे कट्या सुकांच्याऽर्कमतीत्य तस्थतुः ॥ १७ ॥ प्रजापतिर्नाम तयोरकार्षीद्यः प्राक् स्वदेहाद्यमयोरजायत ॥ तं वै हिरण्यकशिपुं विदुः प्रजा यं तं हिरण्याक्षमसूत साग्रतः ॥ १८ ॥ चक्रे हिरण्यकशिपुर्दोर्भ्यां ब्रह्मवरेण च ॥ वशे सपालाँल्लोकांस्त्रीनकुतोमृत्युरुद्धतः ॥ १९ ॥ हिरण्याक्षोऽनुजस्तस्य प्रियः प्रीतिकृदन्वहम् ॥ गदापाणिर्दिवं यातो युयुत्सुर्मृगयन्रणम् ॥ २० ॥ तं वीक्ष्य दुःसहजवं रणत्कांचननूपुरम् ॥ वैजयंत्या स्रजा जुष्टमंसन्यस्तमहागदम् ॥ २१ ॥

ब्रह्मपुत्रानृते विना तेषां स्वशापादिज्ञानात् ॥ १५ ॥ व्यज्यमानमात्मपौरुषं पूर्वसिद्धं स्वपौरुषं ययोः ॥ १६ ॥ निरुद्धाः व्याप्ताः काष्ठा दिशो याभ्याम् । स्फुरंत्यंगदानि येषु ते भुजा ययोः अंगदेति टाबंतत्वमार्षम् । शोभना कांची यस्यां तया कट्या ॥ १७ ॥ यमयोर्मध्ये यः स्वदेहात्प्रथममजायत तं यथा हिरण्यकशिपुं विदुः सा दितिः प्रथमं यमसूत तं हिरण्याक्षं यथा विदुस्तथा नाम कृतवानित्यर्थः । अयं भावः । यदा हि गर्भाधानसमये योनिपुष्पं विशद्वीर्यं द्विधा विभक्तमादिपश्चाद्भावेन प्रविशति तदा यमौ भवतस्तयोश्च पितृतः प्रवेशक्रमविपर्ययेण मातृतः प्रसूतिः । "यदा विशेद्द्विधाभूतं बीजं पुष्पं परिक्षरत् ॥ द्वौ तदा भवतो गर्भौ सूतिर्वेशविपर्ययात" ॥ इति पिंडसिद्धिस्मरणात् अतः स्वदेहात्पूर्वं यो जातस्तस्य हिरण्यकशिपुरिति दितिः प्रथमं यमसूत तस्य हिरण्याक्ष इति नाम कृतवानिति ॥ १८ ॥ दोर्भ्यामुद्धतो ब्रह्मवरेणाकुतोमृत्युः ॥ १९ ॥ रणं युद्धम् ॥ २० ॥ दुःसहो जवो वेगो यस्य । रणंतौ कांचनमयौ नूपुरौ यस्य । अंसे न्यस्ता महती गदा येन ॥ २१ ॥

सूर्येण युक्तोऽस्तमयं प्रयाति रविप्रमुक्तो ह्युदयं प्रयाति । द्वितीयरामाब्धिषु सूर्यतश्चेच्छीघ्रः समो मंदगतिर्भवेद् ग्रहः॥" इत्यस्मत्कृतपञ्चाङ्गदर्शनादवसेयेति ॥१४॥ अन्यानुक्तेतरानुल्कापातादीन् । तेषामुत्पातानां तत्त्वं कारणं सनकाद्युत्सृष्टजयविजयशापलक्षणं विदंतीति तथा पुनर्नञा समासे तथा सत्यः ॥ १५ ॥ ब्रह्मशापेऽपि भगवत्पार्षदयोरकृतैरपि सुकृतैस्त्रैलोक्याधिपत्यादिकृतैरप्यनंतदुष्कृतैर्नरकाभावादीत्याधिक्यमाह—ताविति । अश्मसारेण दृढेन अद्रिपती महापर्वतौ । व्यज्यमानं व्यक्तिं प्राप्तं सहसा झटिति ॥ १६ ॥ यद्वांगदेति सोमपावत् । कट्या कटिभागेन ॥ १७ ॥ प्रजापतिः कश्यपः यथातथयोरत्राध्याहारेणान्वयः । इत्यर्थ इति । स्वस्मात्प्राग् जातं ज्येष्ठं दितेः प्राग्जातं कनिष्ठं नामाक्षरतारतम्येन बोधितवानिति भावः। यद्वोक्तरीत्या क्रमद्वैविध्येन द्वयोरेव ज्येष्ठत्वे पितुः प्राधान्याद्धिरण्यकशिपुरेव ज्येष्ठ इति ध्वनितम् 'हिरण्याक्षोऽनुजस्तस्य' इति वक्ष्यमाणत्वात् अत्राशयं स्वामिचरणा आहुः अयं भाव इति । योनिपुष्पं योन्यंतर्गतं पुष्पाकारं वीर्याशयं यमौ द्वौ तयोर्यमयोः । क्रमविपर्ययेणेति । यद्वस्तु पात्रे प्रथमं निक्षिप्यते तत्पश्चान्निस्सरति यच्च पश्चान्निक्षिप्यते तत्पूर्वं निःसरतीत्यर्थः । अत्र पिंडसिद्ध्याख्यग्रंथसंमतिमाह-यदेति । वेशविपर्ययात् प्रवेशक्रमवैपरीत्यत इत्यर्थः । अतः प्रवेशवैपरीत्येन सूतित्वात् ॥ १८ ॥ न कुतोऽपि बहिरंतः शुष्कार्द्रादिभिर्मृत्युर्यस्य स तथा दोर्भ्यां भुजाभ्याम् ॥ १९ ॥ तस्य हिरण्यकशिपोः । मृगयन्नन्वेषयन् । युयुत्सुर्योद्धुकामः ॥ २० ॥ तं हिरण्याक्षं वीक्ष्य देवा निलिल्यिरे इत्यग्रिमेणान्वयः । "वैजयंती भवेन्मालाष्टधा मौक्तिकनिर्मिता" इति लक्षणादष्टप्रकारमौक्तिकमालया

मनोवीर्यवरोत्सिक्तमसृण्यमकुतोभयम् ॥ भीता निलिल्यिरे देवास्ताक्ष्यत्रस्ता इवाहयः ॥ २२ ॥ स वै तिरोहितान्दृष्ट्वा महसा स्वेन दैत्यराट् ॥ सेंद्रान्देवगणान्क्षीबानपश्यन्व्यनदद्भृशम् ॥ २३ ॥ ततो निवृत्तः क्रीडिष्यन्गंभीरं भीमनिस्वनम् ॥ विजगाहे महासत्त्वो वार्धिं मत्त इव द्विपः ॥ २४ ॥ तस्मिन्प्रविष्टे वरुणस्य सैनिका यादोगणाः सन्नधियः ससाध्वसाः ॥ अहन्यमाना अपि तस्य वर्चसा प्रधर्षिता दूरतरं प्रदुद्रुवुः ॥२५॥ स वर्षपूगानुदधौ महाबलश्चरन्महोर्मीञ्श्वसनेरितान्मुहुः ॥ मौर्व्याऽभिजघ्ने गदया विभावरीमासेदिवांस्तात पुरीं प्रचेतसः ॥ २६ ॥ तत्रोपलभ्यासुरलोकपालकं यादोगणानामृषभं प्रचेतसम् ॥ स्मयन्प्रलब्धुं प्रणिपत्य नीचवज्जगाद मे देह्यधिराज संयुगम् ॥ २७ ॥ त्वं लोकपालोऽधिपतिर्बृहच्छ्रवा वीर्यापहो दुर्मदवीरमानिनाम् ॥ विजित्य लोकेऽखिलदैत्यदानवान्यद्राजसूये न पुराऽयजत्प्रभो ॥ २८ ॥ स एवमुत्सिक्तमदेन विद्विषा दृढं प्रलब्धो भगवानपां पतिः ॥ रोषं समुत्थं शमयन्स्वया धिया व्यवोचदंगोपशमं गता वयम् ॥ २९ ॥ पश्यामि नान्यं पुरुषात्पुरातनाद्यः संयुगे त्वां रणमार्गकोविदम् ॥ आराधयिष्यत्यसुरर्षभेहि तं मनस्विनो यं गृणते भवादृशाः ॥ ३० ॥

मनसा शौर्येण वीर्येण बलेन वरेण चोत्सिक्तं गर्वितम् । असृण्यं निरंकुशम् । निलिल्यिरे लीना बभूवुः ॥ २२ ॥ स्वेन महसा तेजसा तिरोहितान्स दृष्ट्वा ज्ञात्वा क्षीबान्मत्तानपश्यन्सन् क्लीबानिति पाठे पौरुषहीनान् ॥ २३॥ २४॥ सन्ना अवसन्ना धीर्येषाम् । वर्चसा तेजसा प्रधर्षिता अभिभूताः संतः॥ २५॥ महोर्मीनभिजघ्ने मौर्व्या मारयति इति मौर्वे कार्ष्णायसं तन्मय्या । यद्वा मूर्वा नाम तृणविशेषः तन्मयरज्ज्वा दृढनिबद्धयेत्यर्थः । विभावरीसंज्ञाम् । आसेदिवान् प्राप्तः ॥ २६ ॥ असुराणां लोकः पातालं तत्पालकम् । प्रलब्धुमुपहसितुं प्रणिपत्य ॥ २७ ॥ यद्यस्माद्राजसूयेन भवानयजत् ॥ २८ ॥ उपशमं युद्धादिकौतुकादुपरमम् ॥ २९ ॥ युद्धमार्गनिपुणं त्वां यस्तोषयि

युतमित्यर्थः । अष्टधामुक्ताश्च "जीमूतकरिमत्स्याहिवेणुशंखवराहजाः । शुक्त्युद्भवाश्च शास्त्रेषु मौक्तिका ह्यष्टधा मताः" इति रत्नपरीक्षार्णव उक्ताः । तीर्थस्तु—"पुष्पैश्चतुर्गुणां मालां वैजयन्तीं विदुर्बुधाः" इत्याह ॥ २१॥ वरेण देवप्रसादेन । तेनापि तपसा वरो लब्ध इत्यन्यत्रोक्तेः । सृणिनांकुशेन विनेयः सृण्यो न सृण्योऽसृण्यस्तम् "सृणिः स्यादंकुशेऽध्वनि' इति निरुक्तिः ॥ २२ ॥ स दैत्यः ॥ २३ ॥ स्वप्रतियोद्धारं दशदिक्षु क्वापि कमप्यदृष्ट्वा स्वीयमहाबलस्योष्मणानुतप्तो वारिधिमध्ये कथंचित्कश्चिद्वा तिष्ठेत्तेन सह युद्धापेक्षया वार्द्धिं जगाहे इत्याह तत इति । ततो देवतिरोधानानंतरम् ॥२४॥ अवसन्नाः त्रस्ताः सभयाः तस्मिन्दैत्ये प्रविष्टे सति ॥ २५ ॥ स दैत्यः वर्षपूगान् वर्षसमूहान्व्याप्य गदायाः कार्ष्णायसमयत्वं तु प्रसिद्धमेव किं पुनस्तत्कथनेनेति चेदाह—यद्वेति । इत्यर्थ इति । मूर्वातृणानामतिनम्रत्वेन त्रोटितुमशक्यत्वादिति भावः । हे तातेति । प्रियत्वात्त्वैतच्चरितं श्रावयामीति संबुद्ध्यभिप्रायः ॥२६॥ तत्र विभावर्याम् । असुरलोका दानवप्रायजनाः । "तं गृहीत्वानयद्भृत्यो वरुणस्यासुरोंऽतिकम्" इति दशमे वक्ष्यमाणत्वात् ॥ २७ ॥ भवानयजदिति पृथग्वाक्यम् । विजित्येति विपरीतलक्षणा तेन दैत्यानां तदानीमभावात्सर्वैरपि राजसूयः कर्तुं शक्यते स्म तथा चाधुना मां विजित्य पुनरपि राजसूयं कुर्विति भावः। यद्वा । कृतोऽपि राजसूयस्तदैव ते सिध्यति यदा मां जयसीति भावः। ॥२८॥स वरुणः । उत्सिक्तोऽत्यधिको मदो यस्य तेन प्रलब्ध उपहसितः । शमयन्निति । अत्र मे रोषो न किञ्चित्कर्तुं शक्त इति विमर्शेनेत्यर्थः । उपशमं गताः संप्रति प्रवयसो जाता इत्यर्थः । तेन यौवनावस्थायां यदि त्वां प्राप्स्यं तदा त्वादृशसहस्रमप्यजेष्यमिति भावः । यद्वा । उपशमं संन्यासं तेन संन्यासं चेन्नाकरिष्यं तदाधुनापि त्वामजेष्यमिति भावः ॥ २९ ॥ तर्हि मे रणकंडूयानिवृत्तिः कथं स्यात्तत्राह—पश्यामीति । यस्तोषयिष्यति

तं वीरमारादभिपद्य विस्मयः शयिष्यसे वीरशये श्वभिर्वृतः ॥ यस्त्वद्विधानामसतां प्रशांतये रूपाणि धत्ते सदनुग्रहेच्छया ॥३१॥ इति श्रीभा० तृती० हिरण्याक्षदिग्विजये सप्तदशोऽध्यायः ॥ १७ ॥ मैत्रेय उवाच ॥ तदेवमाकर्ण्य जलेशभाषितं महामनास्तद्विगणय्य दुर्मदः ॥ हरेर्विदित्वा गतिमंग नारदाद्रसातलं निर्विविशे त्वरान्वितः ॥ १ ॥ ददर्श तत्राभिजितं धराधरं प्रोन्नीयमानावनिमग्रदंष्ट्रया ॥ मुष्णंतमक्ष्णा स्वरुचोऽरुणश्रिया जहास चाहो वनगोचरो मृगः ॥२॥ आहैनमेह्यज्ञ महीं विमुंच नो रसौकसां विश्वसृजेयमर्पिता ॥ न स्वस्ति यास्यस्यनया ममेक्षतः सुराधमासादितसूकराकृते ॥ ३ ॥

ष्यति तमिहि गच्छ । गृणते स्तुवंति ॥ ३० ॥ आराच्छीघ्रम् । विस्मयो नष्टगर्वः वीरशये रणांगणे रूपाणि वराहाद्यवतारान् ॥ ३१ ॥ इति श्री० भागवते तृतीयस्कंधे टीकायां सप्तदशोध्यायः ॥ १७ ॥ अष्टादशे हिरण्याक्षधरोद्धर्तृवराहयोः ॥ निर्विशेषं महायुद्धं देवक्षोभि निरूप्यते ॥ १ ॥ प्रतियोद्धारं श्रुत्वा महामनाः शयिष्यस इति यदुक्तं तद्विगणय्यागणयित्वा यतो दुर्मदः ॥ १ ॥ अभितो जयतीत्यभिजित्तं श्रीहरिम् । प्रकर्षेणोर्ध्वं नीयमाना अवनिर्येन अग्रदंष्ट्रया दंष्ट्राग्रेण स्वरुचो हिरण्याक्षतेजो स्वरुणश्रिया युक्तं यत्तेनाक्ष्णा नेत्रेण मुष्णंतं तिरस्कुर्वंतम् । अहो चित्रं वनगोचरो मृगो वारिचरो वराहः ॥२॥ एह्यागच्छ रसौकसां पातालवासिनां नोऽस्माकं समर्पिता अन्यथा पातालावतरणमस्या न घटत इति भावः । हिरण्याक्षेणाधिक्षेपार्थं प्रयुक्ताऽपि भारती वस्तुतो भगवंतं स्तौति । तथा हि । वनगोचरो जले शयानः श्रीनारायणः स एव योगिभिर्मृग्यते दुष्टान्वा हंतुं मृगयत इति मृगः । अज्ञ नास्ति ज्ञो यस्मात्सर्वज्ञेत्यर्थः । सुरा अधमा यस्मात् हे सुरोत्तम ममेक्षमाणस्यापि सतो मामनादृत्यापि त्व

तस्मादित्यर्थः । मनस्विनः शूराः गृणते रणकंडूयापहर्तृत्वेन स्तुवंति ॥ ३० ॥ ननु तं कतिभिर्दिनैर्लप्स्य इति चेत्तत्राह–तमिति । आरात्पंचषैरेव दिनैरित्यर्थः । संप्रति तु गर्वरोगपीडितो रणकंडूयोद्वेगेन त्वं संशेष इति भावः । वीराः शेरते यत्र स वीरशयो रणांगणम् । तत्र तव शय्यापि समुचिता भविष्यतीत्यर्थः । तदा चरणाद्यंगपरिचारका अपि बहवो भविष्यंतीत्याह–श्वभिरिति । नन्वेवं चेत्तस्याकारं ज्ञापय यथाधुनैव ब्रह्मांडस्यांतर्बहिश्चान्विष्य तं निष्कास्य तेन सहाहं योत्स्ये । कथं स मां हन्यादिति यूयं पश्यथेति तत्राह–त्वद्विधानां त्वादृशानां प्रशांतये नाशाय । आदिना नृसिंहादिग्रहः । सामान्यतोऽहं जानामि त्वां तु केन रूपेण वधिष्यतीति विशेषं न जानामीति भावः ॥ ३१ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे सप्तदशोऽध्यायः ॥ १७ ॥ धराया उद्धर्त्ता धरोद्धर्त्ता स चासौ वराहश्चेति तथा निर्गतो विशेष उपमानभेदो यस्मात्तत्तथा अनुपममित्यर्थः । देवस्य हरेः क्षोभः प्रकृतिविपर्यासो यत्र तत्तथा ॥ (१) ॥ तदेवमित्थं महामनाः सोत्साहचित्तः गतिं गमनं रसातलं गर्भोदमेव ॥ १ ॥ पूर्वोक्तवराहचरिते युद्धलीला विशेषतो नोक्तेति तां वर्णयितुमाह–ददर्शेति । तत्र गर्भोदे । अभिजितं तन्नामकर्क्षाधिदैवतं वा । वने एव विविक्तारण्ये स्थित्वा तपश्चर्यादिना मुनिजनदृश्यत्वाद्वनगोचरो वा । यद्वा । रामावतारे पित्राज्ञया वनगोचरो यः सोऽयमित्यर्थः । अवताराणामनादित्वादियमुक्तिरपि नासंगतेति । यद्वा । वनगोऽपि संसारवनप्रासोप्यचरो ध्रुव एव, संसारधर्मैरुत्पत्त्यादिभिर्न चाल्य इति भावः ॥२॥ रसौकसामिति पंचम्यर्थे षष्ठी रसौकोभ्य इत्यर्थः । पातालेऽवतरणं गमनमस्या भुवः।इति भाव इति । अस्मदी

त्वं नः सपत्नैरभवाय किं भृतो यो मायया हंत्यसुरान्परोक्षजित् ॥ त्वां योगमायाबलमल्पपौरुषं संस्थाप्य मूढ प्रमृजे सुहृच्छुचः ॥ ४ ॥
त्वयि संस्थिते गदयाशीर्णशीर्षण्यस्मद्भुजच्युतया ये च तुभ्यम् ॥ बलिं हरंत्यृषयो ये च देवाः स्वयं सर्वे न भविष्यंत्यमूलाः ॥ ५ ॥
स तुद्यमानोरिदुरुक्ततोमरैर्दंष्ट्राग्रगां गामुपलक्ष्य भीताम् ॥ तोदं मृषन्निरगादंबुमध्याद्ग्राहाहतः सकरेणुर्यथेभः ॥ ६ ॥ तं निःसरंतं सलिलादनु
द्रुतो हिरण्यकेशो द्विरदं यथा झषः ॥ करालदंष्ट्रोऽशनिनिःस्वनोऽब्रवीद्गतह्रियां किं त्वसतां विगर्हितम् ॥ ७ ॥

मनया सह वर्तमानो नोऽस्मदीयं स्वस्ति समस्तं मंगलं राज्यं यास्यसि प्राप्स्यसि नात्र संदेहस्तथाप्यस्मत्कृपया विमुंचेत्यर्थः । आसादिता लीलया स्वीकृता सूकराकृतिर्येन ॥ ३ ॥ अभवाय नाशाय भृतः पुष्टः वस्तुतस्तु मोक्षाय भृतो धृत आश्रित इत्यर्थः । यो भवान्परोक्षेण चौर्येण जयतीति तथा । वस्तुतस्तु दूरत एव स्थित्वा जयतीति संस्थाप्य हत्वा वस्तुतस्तु योगमायारूपमचिंत्यं बलं यस्य अल्पं पौरुषं यस्मात् तं त्वां सम्यक् स्थापयित्वा भक्त्या हृदि स्थिरीकृत्येत्यर्थः । हे मूढ प्रमूढान्प्रात्याप्याययतीति तथा । प्रा पूर्ताविति धातुः । सुहृदां शुचः संसारदुःखानि मृजे नाशयामि यतस्त्वं स्मर्तुर्बांधवानपि मोचयसीति भावः ॥४॥ अस्मद्भुजच्युतयापि गदयाऽशीर्णे शीर्षे यस्य तथाभूते त्वयि सुखं स्थिते सति ये तुभ्यमधुना बलिं हरंति नवीना भक्ता ये च पूर्वे भक्ता ऋषयो देवाश्च ते सर्वे स्वयमेवोद्यमं विनैवामूला न भविष्यंति । किं तु दृढमूला एव भविष्यंतीत्यर्थः ॥ ५ ॥ स हरिररेर्दुरुक्तान्येव तोमराः शस्त्रविशेषास्तैस्तुद्यमानो व्यथ्यमानो दंष्ट्राग्रगतां पृथ्वीं भीतामालक्ष्य तोदं दुरुक्तव्यथां मृषन्सहमान एव निर्गतः करेणुर्हस्तिनी वस्तुतस्त्वरिदुरुक्ततोमरैर्निमित्तभूतैस्तुद्यमानः यथाश्रुतार्थग्राहिणां ब्रह्मादीनां व्यथां दृष्ट्वाऽनुकंपया पीड्यमान इत्यर्थः । तोदं मृषन्नित्यस्याप्ययमेवार्थः ॥६॥ सलिलान्निर्गच्छंतमनुगतः सन् हिरण्यवत्कपिशाः केशा यस्य दैत्यस्य झषो मकरः करालास्तुंगा दंष्ट्रा यस्य अशनिवन्निःस्वनो यस्य निर्लज्जानामसतां किं विगर्हितमस्ति

यत्वादेवास्मल्लोकमातेत्याशयः । 'विधाता विश्वसृड्विधिः' इत्यमरः । यद्वा । हे विश्वसृज॥इगुपधत्वात्कः । मही नो निषेवे मा विमुंच, इयं मही अर्पिता तुभ्यमुपहारीकृता न केवलमियमेव नोऽस्माकं स्वस्तिराज्याद्यप्यनया सहैव प्राप्स्यसि । न स्वस्तीति—"अनचि च" "वा शारि" इति सकारद्वयसिद्धेर्व्याख्याद्वयम्।ननु कुतो मह्यं महीं ददासि तत्राह—मम ईक्ष ईक्षणं तस्मात् मत्कर्मकात्कृपावलोकादिदशाद्धेतोरित्यर्थः॥३॥यद्वा। अक्षाणीन्द्रियाणि जयती त्यक्षजित् एव पर इंद्रियानाकृष्ट इत्यर्थः । यद्वा । मायया कृपयाऽसुरानपि हंति स्वकर्तृकहननेन सद्गतिं ददातीत्यर्थः । "लोकान्प्रयांतु रियवोऽपि हि शस्त्रपूता" इति मार्कंडेयोक्तेः । "येये हताश्चक्रधरेण विष्णुना" इत्याद्युक्तेश्च । अत एव कृपाधिक्यादेव । परोक्षोप्यप्रत्यक्षीभूतोऽपि जयसि देवतांतरेभ्योऽल्पसाधनेनैव प्रत्यक्षीभूतेभ्योऽपि बहुसाधनैरप्यसाक्षाद्भूतस्त्वं तेभ्यः सर्वेभ्य उत्कर्षेण वर्तस इत्यर्थः । पौरुषं पुरुषस्य महत्स्रष्टुः कर्म विश्वसृष्ट्यादि तदपि अल्पमननुरूपं यस्य तं त्वामिति वा । स्वामिचरणैस्तु पौरुषपदेन बलमुक्तमत एव पंचमीसमासः कृतः । इति भाव इति । 'कुरुं पवित्रम्' इत्याद्युक्तेरिति तात्पर्यम् ॥ ४ ॥ इत्यर्थ इति । स्वामिसुखेन भृत्यसुखस्यापि संभवादिति भावः॥५॥इत्यर्थ इति । तोदं पाक्षिकदुरुक्तिव्यथां मृषन् पाक्षिकसूक्तसुखापेक्षया सहमान इति वार्थः ॥६॥ कपिशाः किंचित्पीताः इत्यर्थ इति । किमकार्यमसाधूनामिति भावः । इत्यर्थ इति ।

स गामुदस्तात्सलिलस्य गोचरे विन्यस्य तस्यामदधात्स्वसत्त्वम् ॥ अभिष्टुतो विश्वसृजा प्रसूनैरापूर्यमाणो विबुधैः पश्यतोऽरेः ॥ ८ ॥ परानुषक्तं तपनीयोपकल्पं महागदं कांचनचित्रदंशम् ॥ मर्माण्यभीक्ष्णं प्रतुदंतं दुरुक्तैः प्रचंडमन्युः प्रहसंस्तं बभाषे ॥ ९ ॥ श्री भगवानुवाच ॥ सत्यं वयं भो वनगोचरा मृगा युष्मद्विधान्मृगये ग्रामसिंहान् ॥ न मृत्युपाशैः प्रतिमुक्तस्य वीरा विकत्थनं तव गृह्णंत्यभद्र ॥ १० ॥ एते वयं न्यासहरा रसौकसां गतह्रियो गदया द्राविताश्ते ॥ तिष्ठामहेऽथापि कथंचिदाजौ स्थेयं क्व यामो बलिनोत्पाद्य वैरम् ॥ ११ ॥

निंदाभयाभावात्पलायनमपि नायुक्तमित्यर्थः । वस्तुतस्तु गतह्रियः प्राप्तह्रियः न संतो येभ्यस्तेषां कृपालूनां किं विगर्हितं न किंचित् । अतः कृपालुत्वाद्दंष्ट्राश्रितभूरक्षणार्थं किंचित्पलायनमपि न निंदितमित्यर्थः । यद्वा । लोकोपकाराय भुवमुद्धरतोऽनुद्रवणमनुचितं मन्वानो दैत्य आत्मानमेवाधिक्षिपति । गतह्रियां स्वार्थैकपराणामसतामस्माकं किं विगर्हितगणनास्त्यपि तु नास्त्येव धिगस्मानित्यब्रवीदित्यर्थः ॥ ७ ॥ स भगवान्विश्वसृजाऽभिष्टुतो विबुधैश्च प्रसूनैरापूर्यमाणः पाठांतरे विश्वसृजां प्रसूनैर्विबुधैरभिष्टुत इति सलिलस्योदस्तादुपरि व्यवहारगोचरे देशे गां पृथ्वीं विन्यस्य तस्यां स्वसत्त्वमाधारशक्तिं निहितवान् अरेस्तस्य पश्यत एव ॥ ८ ॥ परा पराक् पृष्ठतोऽनुषक्तं लग्नम् । तपनीयोपकल्पं सुवर्णाभरणम् । कांचनमयश्चित्रो दंशः कवचं यस्य तं दैत्यम् । प्रचंडमन्युत्वमधिक्षेपादिकं चानुकरणमात्रं दैत्यवाक्यभीतानां देवानां भयनिवृत्तये वस्तुतस्तेन तथाऽनुक्तत्वेन कोपादिहेत्वभावात् ॥ ९ ॥ ग्रामसिंहान् शुनः प्रतिमुक्तस्य बद्धस्य विकत्थनं श्लाघाम् ॥ १० ॥ न्यासहरा निक्षेपहराः द्राविताः पलायनं कारिताः

परोपकृतयेऽकार्यकरणेऽपि न दोष इति भावः । वस्तुतस्तु—भगवति निंदा न संभवतीति तेनैव विचारितमित्याह । यद्वेति । इत्यर्थ इति । उपकारिष्वपकारस्मरणाद्वयमेव निन्दिता इति भावः॥७॥ व्यवहारगोचरे नेत्रव्यवहारदेशे आधारशक्तिं यथा जले न मज्जेदिति भावः । पाठांतरे 'विश्वसृजां प्रसूनैः' इति पाठे । प्रजापतिभिर्वृष्यमाणैः पुष्पैरित्यर्थः । तस्य दैत्यस्य । यद्वा । विश्वसृजां प्रसूनैः पुष्पतुल्यैः संततिभिर्विबुधैरभिष्टुतः । अत्र पक्षे आपूर्यमाण इह करणाकांक्षायां प्रसूनैरिहापि योज्यम्॥८॥ तेन दैत्येन । तथानुक्तत्वादधिक्षेपवाक्यानुक्तेः । कोपादीहादिना क्लेशादिग्रहः । यद्वा । दुरुक्तैः प्रचंडमन्युः, पाक्षिकसूक्तैः प्रहसन्निति हिरण्याक्षवाक्ये सरस्वतीकृतस्य स्तुतिवचनस्य प्रतिवचनमवश्यमपेक्ष्यत इत्यतो भगवद्वाक्येऽपि द्वितीयार्थो व्याख्येयः ॥ ९ ॥ वनगोचराः वनस्थैस्त्यक्तविषयभोगैर्भक्तैरेव दृश्यास्तदपि कृपयैव । ग्रामसिंहान् ग्रामस्थान् विषयासक्तांस्तन्मुख्यानपि मृगयेऽन्वेषयामि स्वपदं दातुम् । नन्वात्मश्लाघिनो दुर्विनीतान्कथं कृपयसीति तत्राह-धीरा अस्मद्विधा दयावीरास्तव विकत्थनं दोषं न गृह्णंति ।अत एव तव कथंभूतस्य मृत्युपाशैः प्रतिमुक्तस्यातिशयेन त्यक्तस्य ममानुकंपितजने मृत्योरनधिकारात् । हे अभद्र न विद्यते भद्रं यस्मात्सः ॥ १० ॥ तत्स्थानं किं कुतः पुनस्तत्स्थेयत्वं, काकूत्त्योपहास एवायम् । पक्षे रसौकसामसुराणामपि न्यासहरा भक्त्या समर्पितपूजोपहारग्राहिणः । गतह्रियः भक्तवात्सल्यादेव हेतोर्न लज्जामहे इत्यर्थः । यतो गदया तव स्तुतिवाचा द्राविता द्रुतचित्तीकृता । गदेर्भिदादित्वादङ् । अथापि तदपि त्वया सह आजौ युद्धेऽपि तिष्ठामहे स्वबलोद्रेकं प्रकाशयाम इत्यर्थः "प्रकाशनस्थेयाख्ययोश्च" इति प्रकाशने

त्वं पद्रथानां किल यूथपाधिपो घटस्व नोऽस्वस्तय आश्वनूहः ॥ संस्थाप्य चास्मान् प्रमृजाऽश्रु स्वकानां यः स्वां प्रतिज्ञां नातिपिपर्त्यसभ्यः ॥ ॥ १२ ॥ मैत्रेय उवाच ॥ सोऽधिक्षिप्तो भगवता प्रलब्धश्च रुषा भृशम् ॥ आजहारोल्बणं क्रोधं क्रीडमानोऽहिराडिव ॥ १३ ॥ सृजन्नमर्षितः श्वासान्मन्युप्रचलितेंद्रियः ॥ आसाद्य तरसा दैत्यो गदयाऽभ्यहनद्धरिम् ॥ १४ ॥ भगवांस्तु गदावेगं विसृष्टं रिपुणोरसि ॥ अवंचयत्तिरश्चीनो योगारूढ इवांतकम् ॥ १५ ॥ पुनर्गदां स्वामादाय भ्रामयंतमभीक्ष्णशः ॥ अभ्यधावद्धरिः क्रुद्धः संरंभाद्दष्टदच्छदम् ॥ १६ ॥ ततश्च गदयाराति दक्षिणस्यां भुवि प्रभुः ॥ आजघ्ने स तु तां सौम्य गदया कोविदोऽहनत् ॥ १७ ॥ एवं गदाभ्यां गुर्वीभ्यां हर्यक्षो हरिरेव च ॥ जिगीषया सुसंरब्धावन्योन्यमभिजघ्नतुः ॥ १८ ॥ तयोः स्पृधोस्तिग्मगदाहतांगयोः क्षतास्रवघ्राणविवृद्धमन्व्योः ॥ विचित्रमार्गांश्चरतोर्जिगीषया व्यभादिलायामिव शुष्मिणोर्मृधः ॥ १९ ॥

अथाप्यसमर्था अपि तिष्ठामः । तत्किम् । यतः स्थैर्यं स्थातव्यमेवास्माभिः तत्किमित्यत आह क्व यामः गंतव्यदेशाभावात् ॥ ११ ॥ पद्रथानां पदातीनां ये यूथपास्तेषामधिपः मुख्य इत्यर्थः । अस्वस्तये पराभवार्थमाशु घटस्व यतस्त्व अनूहो निर्वितर्कः यो नातिपिपर्ति न पूरयति पालयति वा असावसभ्यः सभायामनर्हः ॥ १२ ॥ सोऽधिक्षिप्तः सत्यं वयमिति श्लोकेन रुषा प्रलब्ध उपहसितश्च एते वयमिति द्वाभ्याम् । क्रीडां कार्यमाणोऽहिराण्महासर्प इव ॥ १३॥ मन्युना प्रचलितानि क्षुभितानींद्रियाणि यस्य ॥ १४ ॥ अंतकं मृत्युम् ॥ १५ ॥ १६ ॥ सौम्य विदुर तां गदामप्राप्तामेवाहनत् ॥ १७ ॥ हर्यक्षो हिरण्याक्षः ॥ १८ ॥ स्पृधोः स्पर्धमानयोः तिग्माभ्यां गदाभ्यामाहतान्यंगानि ययोः क्षतादास्रवतीति क्षतास्रवं रुधिरं तस्य घ्राणमवघ्राणं तेन विवृद्धो मन्युर्ययोः विचित्रान्मार्गान्गदायुद्धभ्रमणभेदान् इला गौस्तस्यां निमित्तभूतायां

आत्मने पदम् । ननु हे प्रभवः वैकुंठं गत्वा सुखेन विराजध्वं किं युद्धक्लेशेन तत्राह-स्थेयमिति । सनकादिद्वारा शापेन वैरमुत्पाद्य युद्धसुखार्थं बलिना त्वया सहाजौ स्थेयमेव क्व यामः ॥ ११ ॥ इत्यर्थ इति । पद्रथेत्युपलक्षणं सेनामात्रस्य त्वमेवाधुना राजासीति भावः । पक्षे त्वयैव प्रेयोमद्युद्धसुखोत्पादनार्थं प्रतिज्ञायासुरभावोंऽगीकृतः । अतो यः स्वामित्यादि । अत एव त्वमित्यादि । नोस्मान्सुखयितुं घटस्वेति "क्रियार्थोपपदस्य–" इति चतुर्थी । असूनामस्तये स्वप्राणत्यागार्थं किं कृत्वा संस्थाप्य हृदये सम्यक् स्थिरीकृत्य स्वीयानां कामानंदानां संबंधि अश्रु प्रमृज ॥ १२ ॥ पक्षे अधिक्षिप्तः अधिकारात्पार्षदत्वलक्षणात्क्षिप्तः पातितः । अत एव रुषा कर्त्र्या प्रकर्षेण लब्धश्च भगवदिच्छाप्रयुक्तशापवशाच्छुद्धसत्त्वमयोऽपि तमोमयोभूऽदित्यर्थः । तदा तु युद्धकाले आ सम्यक्प्रकारेणैवोल्बणमत्युद्रिक्तं क्रोधं जहार जग्राह॥१३॥तरसा बलेन अहनत् शब्लुगभावोऽत्रार्षः॥१४॥तिरश्चीनः तिर्यक् सन् अवंचयत् तत्सांमुख्यमत्यजत् । यथा कालमासन्नं वीक्ष्य योगी प्राणायामसमाधिना वंचयति तद्वदित्यर्थः ॥ १५ ॥ दष्टो दच्छदोऽधरोष्ठो येन तम् ॥ १६ ॥ ततो गदाभ्रामणोत्तरं भुवि भूदेशे । सौम्येति । त्वया तु सौम्यत्वात्स्वगदा दुर्योधनद्वार्येव न्यस्तेत्यभिप्रायः । "सौम्यो ज्ञे ना त्रिष्वनुग्रे मनोज्ञे सोमदैवते" इति मेदिनी । भगवद्भक्तिमनोज्ञत्वात्त्वाहमेतद्वदामीति वा । सुसंरब्धावतिकुपितौ ॥ १८ ॥ तयोर्हरिहिरण्याक्षयोः ।

दैत्यस्य यज्ञावयवस्य मायागृहीतवाराहतनोर्महात्मनः ॥ कौरव्य मह्यां द्विषतोर्विमर्दनं दिदृक्षुरागादृषिभिर्वृतः स्वराट् ॥ २० ॥ आसन्नशौंडीरमपेतसाध्वसं कृतप्रतीकारमहार्यविक्रमम् ॥ विलक्ष्य दैत्यं भगवान्सहस्रणीर्जगाद नारायणमादिसूकरम् ॥ २१ ॥ ब्रह्मोवाच ॥ एष ते देवदेवानामंघ्रिमूलमुपेयुषाम् ॥ विप्राणां सौरभेयीणां भूतानामप्यनागसाम् ॥ २२ ॥ आगस्कृद्भयकृद्दुष्कृदस्मद्राद्धवरोऽसुरः ॥ अन्वेषन्नप्रतिरथो लोकानटति कंटकः ॥ २३ ॥ मैनं मायाविनं दृप्तं निरंकुशमसत्तमम् ॥ आक्रीड बालवद्देव यथाऽऽशीविषमुत्थितम् ॥ २४ ॥ न यावदेष वर्धेत स्वां वेलां प्राप्य दारुणः ॥ स्वां देवमायामास्थाय तावज्जह्यघमच्युत ॥ २५ ॥ एषा घोरतमा संध्या लोकच्छंबट्करी प्रभो ॥ उपसर्पति सर्वात्मन् सुराणां जयमावह ॥ २६ ॥ अधुनैषोऽभिजिन्नाम योगो मौहूर्तिको ह्यगात ॥ शिवाय नस्त्वं सुहृदामाशु निस्तर दुस्तरम् ॥ २७ ॥

शुष्मिणोर्मत्तयोर्वृषभयोः प्रस्तुतेऽपि इला पृथ्वी तदर्थम् । वृषभौ हि खलु बहूनि दिनानि संग्रथितोत्तुंगशृंगसंघर्षविदीर्णांगगलद्रुधिरौ परस्परोपमर्दव्यग्रोग्रसंरंभौ चमत्कारितगजयूथपौ युध्यमानौ तिष्ठत इति प्रसिद्धम् ॥ १९ ॥ यज्ञा एवावयवा यस्य तस्य च मह्यां महीनिमित्तं द्विषतोः एवंविधं विमर्दनं युद्धं दिदृक्षुः स्वराट् ब्रह्मा तत्रागात् ॥ २० ॥ आगत्य च नारायणमाह । किं कृत्वा दैत्यं विलक्ष्य । कथंभूतम् । आसन्नं प्राप्तं शौंडीरं शौर्यं मदो वा येन अपेतं साध्वसं यस्मात् कृतः प्रतीकारो येन अहार्योऽप्रतीकार्यो विक्रमो यस्य सहस्रणीः सहस्राणामृषिसहस्राणां नेता ॥ २१ ॥ हे देव तेंऽघ्रिमूलं प्राप्तानां देवादीनाम् । एषोऽसुरः ॥ २२ ॥ आगस्कृद्दृथैवापराधारोपकः तत्परिहाराय प्रवृत्तौ भयकृत् भीतं ज्ञात्वा दुष्कृदर्थप्राणादिहर्ता अस्मत्तो राद्धो लब्धो वरो येन अन्वेषन्प्रतिरथमवलोकयन् अप्रतिरथः प्रतिपक्षशून्यः ॥ २३ ॥ यद्यस्मादेवंभूतोऽयं तस्मादेनं मा क्रीड मा क्रीडय । हे देव यथोत्थितं क्षुभितमाशीविषं सर्पं बालः पुच्छाकर्षणादिना क्रीडयति तद्वत् ॥ २४ ॥ स्वामासुरीम् । हे देव स्वां मायाम् । अघं पापरूपम् ॥ २५ ॥ वेलामेवाह । एष इति । लोकानां छंबट्करी विनाशकरी छंबडित्यव्ययं विनाशे वर्तते ॥ २६ ॥ अभिजिन्मध्याह्नः स एव मौहूर्तिको योगः

संग्रथिते मिलिते ये उत्तङ्गशृंगे तयोः संघर्षेण विदीर्णगलाद्भिन्नकंठप्रदेशाद्गलत्स्रवद्रुधिरं ययोस्तौ तथा । परस्परोपमर्देऽन्योन्ययुद्धे व्यग्रौ संलग्नौ उग्रस्संरंभः कोपो ययोस्तावुग्रसंरंभौ परस्परोपमर्दव्यग्रौ च तावुग्रसंरंभौ परस्परोपमर्दव्यग्रोग्रसंरंभौ । चमत्कारितौ विडंबितौ गजयूथपौ याभ्यां तौ तथा इति लोके प्रसिद्धं 'भूगोवाचस्त्विडा इलाः' इत्यमरः ॥ १९ ॥ कौरव्येति । युद्धोत्कंठा-कौरवाणां धर्म एवातस्तव तच्छ्रवणोत्कंठेति भावः । मायया भक्तकृपया गृहीता वराहसंबंधिनी तनुर्येन तस्य वराहवपुषैव तन्नाशस्य पुराणांतरे प्रतिपादितत्वात् । अत्रापि " दिष्ट्या त्वां विहितं मृत्युमयमासादितः स्वयम् " इति वक्ष्यमाणब्रह्मोक्तेश्च । द्विषतोर्द्वेषं कुर्वतोर्विमर्दनं युद्धम् । तत्र युद्धदेशे ॥ २० ॥ " शौंडीरं शौर्यमदयोश्चातुर्ये मद्यकारके " इति निरुक्तिः ॥ २१ ॥ एष इति युग्मकम् ॥ २२ ॥ कंटकः कंटकवद्दुःखदः ॥ २३ ॥ एवंभूतो देवद्विजादिदुःखदः । बालवदज्ञवत् । त्वं तु विज्ञचूडामणिरेवासीति भावः । यथाशीविषं कृष्णसर्पं गरुड इति शेषः । यद्वा । यथोत्थितं द्रष्टुमुद्युक्तं सर्पं लोको मन्यते तथेमं मन्य इति शेषः ॥ २४ ॥ न वर्द्धेतेति । तेनासुरवेलायां विवृद्धबलमेनं हंतुं त्वं न प्रभविष्यसीत्यैश्वर्यज्ञानवतोऽपि ब्रह्मणः प्रेम्णैवानिष्टोपशंकित्वं ज्ञेयं यथैश्वर्यज्ञानवंतोरपि वसुदेवदेवक्योः "समुद्विजे भवद्धेतोः कंसादहमधीरधीः" इत्यादिकथनम् । मायां सामर्थ्यम् ॥ २५ ॥ भयेन निकटत्वप्रतीतेरेषेति ॥ २६ ॥ अभिजिदर्थमाह-"मध्याह्नस्त्वभिजित्प्रोक्त आषाढोत्तर एव च । श्रवणस्यापि पूर्वार्द्धो विषुवद्वाभिजित्स्मृतः ॥" इति । काशिनाथस्तु-"अंगुल्यो विंशतिः सूर्ये शंकोः सोमे च षोडश । कुजे

दिष्ट्या त्वां विहितं मृत्युमयमासादितः स्वयम् ॥ विक्रम्यैनं मृधे हत्वा लोकानाऽऽधेहि शर्मणि ॥ २८ ॥ इति श्रीभा० तृतीय० हिरण्याक्षश्री वराहयुद्धवर्णनं नामाऽष्टादशोऽध्यायः ॥ १८ ॥ मैत्रेय उवाच ॥ अवधार्य विरिंचस्य निर्व्यलीकामृतं वचः ॥ प्रहस्य प्रेमगर्भेण तदपांगेन सोऽग्रहीत् ॥ १ ॥ ततः सपत्नं मुखतश्चरंतमकुतोभयम् ॥ जघानोत्पत्य गदया हनावसुरमक्षजः ॥ २ ॥ सा हता तेन गदया विहता भगवत्क रात् । विघूर्णिताऽपतद्रेजे तदद्भुतमिवाऽभवत् ॥ ३ ॥

सन् मुहूर्तः शुभदः कालः अगाद्गतप्रायः अतो यावन्मुहूर्तशेषोऽस्ति तावदेव सुदुस्तरमेनं निस्तर जहि ॥ २७ ॥ त्वां मृत्युं त्वयैव शापानुग्रहकाले विहितं निर्मितम् । आसा दितः प्राप्तः शर्मणि सुखे आधेहि स्थापय ॥ २८ ॥ इति श्रीमद्भागवते महापुराणे तृतीये टीकायामष्टादशोऽध्यायः ॥ १८ ॥ ॥ ऊनविंशे विरिंच्यादिप्रार्थितेन महामृधे ॥ वराहेण हिरण्याक्षवधः श्लाघ्योऽनुवर्ण्यते ॥ १ ॥ निर्व्यलीकं च तदमृतं च पाठांतरे निष्कपटाभिप्रायं च तद्वतं च कालात्मनोऽपि मम मुहूर्तबलमुपदिशतीति प्रहस्यापांगालोकनेन स्वीकृतत्वात् ॥ १ ॥ मुखतः अभिमुखे हनौ कपोलस्याधोभागे अक्षजो ब्रह्मणो घ्राणेंद्रियादाविर्भूतः ॥ २ ॥ सा स्वगदया तेन हता ततो विहता

पञ्चदशांगुल्यो बुधवारे चतुर्दश । त्रयोदश गुरोर्वारे द्वादशार्कजशुक्रयोः । शंकोर्मूले यदा छाया मध्याह्ने च प्रजायते ॥ सा तदाभिजिदाख्या हि घटिकैका स्मृता बुधैः । अत्र कार्याणि सर्वाणि सिद्धिं यां ति कृतानि च । जातोभिजिति राजा स्याद्व्यापारे सिद्धिरुत्तमा" । अस्यार्थः—अत्र शंकुर्द्वादशांगुलो ग्राह्यः सूर्यसिद्धांतादिषु तथैवोक्तत्वात् "मूले द्व्यंगुलविस्तारः सूच्यग्रो द्वादशांगुलः । भवेच्छंकुः" इति तल्लक्षणात् । अंगुलिमानमपि लीलावत्यां 'यवोदरैरंगुलमष्टसंख्यैः' इति । यदा मध्याह्ने सति तच्छंकोर्मूले छाया प्रजायते तदा बुधैरेका घटिकाऽभिजिदाख्या स्मृताऽह्नो मध्यात्परतो घटिकैका यावदित्यर्थः । सार्वत्रिकोयं विधिरिति मध्याह्ने चेति । चशब्देन पुनरभिजित्कालः कथ्यते च पुनः सूर्ये रविवारे यदा तच्छंकुच्छायांगुल्यो विंशतिप्रमिता भवंति सोमवारे च षोडशांगुलिमिता छाया भवति तदा तत्कालमारभ्यैका घटिकाभिजिदाख्या स्मृता परश्चेयमभिजिद्घटी पूर्वाह्णेऽपराह्णे चेति कालद्वये जायते इति विज्ञेयं सुधिया । एवं कुजादिवारेष्वपि स्वस्वांगुलच्छायामानेन वारद्वयमभिजिद्भवतीति । देवानांप्रियास्तु—रविवारे विंशत्यंगुलं शंकुं कृत्वा मध्याह्ने तच्छंकोर्मूले यदा च्छाया जायते तदाभिजिदाख्या घटिका स्मृता । एवं चंद्रादिषु स्वस्वांगुलमानशंकुं विधाय तन्मूले छायातोऽभिजिद्भवतीति व्याख्यानं चक्रुस्तदसत् । यतो यावदंगुलमितः शंकुस्स्यात्तावदङ्गुलमितशंकोर्मूले छाया मध्याह्ने सदा भवेत् यद्येवं तर्हि रव्यादिवारेषु पृथगंगुलशंकुना किं न ह्यन्यशास्त्रवज्ज्योतिःशास्त्रं पारोक्ष्यपादकमिति किं तु प्रत्यक्षतापादकमेव "प्रत्यक्षं ज्यौतिषं शास्त्रं साक्षिणौ चंद्रभास्करौ" इति सिद्धांतोक्तेरित्यलं शास्त्रां तरविचारेण प्रकृतमनुसरामः अतो मुहूर्त्तस्य गतप्रायत्वात् ॥ २७ ॥ त्वयेति । अहमेव युवां दैत्यभावे वराहनृसिंहरूपाभ्यां राक्षसत्वे नृपतिरूपत्वे च नररूपेण हनिष्यामीति प्रतिज्ञातमिति पुराणांतरादवसेयम् । यद्वा । तपो नंतरवरदानावसरे मया निर्मितमिति ॥ २८ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धेऽष्टादशोऽध्यायः ॥ १८ ॥ ॥ (१) ॥ निष्कपटं स्वादु च वचः । पाठांतरे निर्व्यलीककृतं वच इति पाठे । अत्र सन्धिस "कृत्यकः" इति प्रकृतिभावः निर्व्यलीकं तु 'अस्मद्राद्धवरोऽसुरः' इत्युक्तेः । अमृतं 'न यावदेष वर्द्धेत' इत्यादिप्रेममयत्वादमृततुल्यं वचस्तु भगवताप्यादरेणास्वादितं तदिति अहो प्रेम्णः सर्वविस्मारकतासामर्थ्यं यत्कालात्मनो मुहूर्त्तबलमुपदिशतीति । तद्वचः प्रेमगर्भेण प्रीतियुक्तेन रात्रावेवैनं हनिष्यामीति ज्ञापयामासेत्यर्थः ॥ १ ॥ नन्वल्पशरीरेण वराहेणात्युच्चांगदैत्यहनौ हननं कथमिति चेत्तत्राह—उत्पत्येति उत्प्लुत्येत्यर्थः ॥ २ ॥ तेनाऽसुरेण

स तदा लब्धतीर्थोऽपि न बबाधे निरायुधम् ॥ मानयन् स मृधे धर्मं विष्वक्सेनं प्रकोपयन् ॥ ४ ॥ गदायामपविद्धायां हाहाकारे विनिर्गते ॥ मानयामास तद्धर्मं सुनाभं चास्मरद्विभुः ॥ ५ ॥ तं व्यग्रचक्रं दितिपुत्राधमेन स्वपार्षदमुख्येन विषज्जमानम् ॥ चित्रा वाचोऽतद्विदां खेचराणां तत्रास्माऽऽसन् स्वस्ति तेऽमुं जहीति ॥६ ॥ स तं निशाम्यात्तरथांगमग्रतो व्यवस्थितं पद्मपलाशलोचनम् ॥ विलोक्य चामर्षपरिप्लुतेंद्रियो रुषा स्वदंतच्छदमादशच्छ्वसन् ॥७॥ करालदंष्ट्रश्चक्षुर्भ्यां संचक्षाणो दहन्निव ॥ अभिप्लुत्य स्वगदया हतोऽसीत्याहनद्धरिम् ॥८॥ पदा सव्येन तां साधो भगवान् यज्ञसूकरः ॥ लीलया मिषतः शत्रोः प्राहरद्वातरंहसम् ॥९॥ आह चायुधमाधत्स्व घटस्व त्वं जिगीषसि ॥ इत्युक्तः स तदा भूयस्ताडयन्व्यनदद्भृशम् ॥१०॥तां स आपततीं वीक्ष्य भगवान्समवस्थितः ॥ जग्राह लीलया प्राप्तां गरुत्मानिव पन्नगीम् ॥११॥स्वपौरुषे प्रतिहते हतमानो महासुरः ॥नैच्छद्गदां दीयमानां हरिणा विगतप्रभः ॥१२॥जग्राह त्रिशिखं शूलं ज्वलज्ज्वलनलोलुपम् ॥यज्ञाय धृतरूपाय विप्रायाभिचरन्यथा ॥१३॥

विच्युता सती विघूर्णिता भूत्वाऽपतद्रेजे च । तद्भगवत्करात्पतनम् । यद्वा तत्पदस्यावृत्त्या रेज इत्यनेनापि संबंधः तद्दैत्यपौरुषं रेज इति ॥ ३ ॥ लब्धतीर्थो लब्धावसरः स च न बबाधे न प्राहरत् स मानयन्बभूवेति वाक्यभेदात्स इत्यस्यापौनरुक्त्यम् ॥ ४ ॥ ५ ॥ व्यग्रं ससंभ्रमं चक्रं यस्य विषज्जमानं विशेषेण संगं प्राप्नुवंतं प्रति अतद्विदां तत्प्रभावमजानताम् । आसमंतादासन्स्म ॥ ६ ॥ स दैत्यस्तमात्तचक्रं निशम्य दृष्ट्वाऽग्रतो व्यवस्थितं च विलोक्यामर्षेण क्रोधेन परिप्लुतानि क्षुभितानींद्रियाणि यस्य सः आदशद्दष्टवान् ॥ ७ ॥ चक्षुर्भ्यां दहन्निव संचक्षाणः पश्यन् इवेति । वस्तुतः क्रोधाभावमाह । हतोऽसि ज्ञातोऽसीति वास्तवोऽर्थः ॥ ८ ॥ वातरंहसं वायुवेगाम् ॥ ९ ॥ घटस्वोद्यमं कुरु यतस्त्वं जेतुमिच्छसि ॥ १० ॥ ११ ॥ हतो मानो गर्वो यस्य ॥ १२ ॥ ज्वलन्यो ज्वलनस्तद्वल्लोलुपं ग्रसनव्यग्रम् । यज्ञाय विष्णुमालक्ष्य

ततो हरिकरात् । औचित्यादन्वयांतरमाह–यद्वेति ॥ ३ ॥ स दैत्यः । तदा गदापतनावसरे । "तीर्थं क्षेत्रावकाशस्त्रीरजश्शास्त्राध्वरेषु च" इति कोशात् । धर्मं निरायुद्धेऽप्रहरणरूपम् । यद्वा । समृधे सयुद्धे जने यो धर्मस्तमिति । चक्रवर्ती तु–न बबाधे न प्राहरत् तत्र हेतुः–मानयन्निति । तेन च प्रकोपयन्निति किमरे मामपि स्वबाहुबलादेव पतितगदं व्याकुलं जानासि यत्स्वधार्मिकत्वं प्रथयन्न प्रहरसि पश्य रे पश्य क्षणमात्रेणैव त्वत्प्राणानेवापहरामीति भगवांश्चुकोपेत्यर्थः । अपविद्धायां पतितायां न चैतत्सौभयुद्धे शार्ङ्गधनुःपतनमिव परमतमाशंकनीयं हिरण्याक्षस्य पार्षदत्वात् । पार्षदस्य च भगवत्तुल्यबलत्वात् । तुल्यबलत्वे च गदापतनस्यासंभवत्वाभावात् । तुल्यबलत्वम् विना च युद्धसुखानुत्पत्तेर्गदापतनमिदं भगवदुत्साहवर्द्धकत्वाद्भूषणमेव न दूषणं भक्तस्थाने भगवता प्रेमांबुधिना स्वपराभवस्य शतशोंगीकृतत्वादितो तदर्थव्यंजकमुत्तरश्लोके स्वपार्षदमुख्येनेति पदमनुसंधेयं, सुनाभं चेति चकाराद्गदामपि पूर्वं सस्मारैवेति गम्यते ॥ ४ ॥ सुनाभं सुदर्शनचक्रम् । अपविद्धायुधसंग्रहस्य सत्यं त्वं यथा दिशसि तथैव कुर्वन्निमं हन्मि किं तु ममास्य च युयुत्सासुखं पूर्यतामतो योधानामनुचितत्वाच्चक्रस्मरणम् ॥ ५ ॥ महानपीतरप्रेरित एव कार्यं करोति न तु स्वयमिति भावनातः खेचरा अस्य वधाय प्रेरयंतीत्याह तमिति । व्यग्रं संभ्रमयुक्तं हंतहंत भगवान्मां स्मरति स्मेति स्वयमेवागत्य हस्ते लग्नं चक्रं दितिपुत्राभिधेनेत्यपि पाठमाह चक्रवर्ती, दितिजाभिधेनेति संदर्भः । नाममात्रतत्तद्रूपेणेत्यर्थः । तत्प्रभावमैश्वरं तेजः प्रेमवैवश्यतयैव खेचराणां सिद्धानां देवविशेषाणाम् ॥ ६ ॥ ७ ॥ ८ ॥ साधो इति । भगवल्लीलाश्रवणव्यग्रत्वात्साधुरसीत्यभिप्रायः ॥ ९ ॥ सोसुरः । तयेति तीर्थः ॥ १० ॥ तां गदाम् । गरुत्मान् गरुडः पद्भ्यां न गच्छतीति पन्नगीं सर्पस्त्रीम् ॥ ११ ॥ १२ ॥ ज्वलन् ज्वालायुक्तः अभिचारं कुर्वन्

तदोजसा दैत्यमहाभटार्पितं चकासदंतःख उदीर्णदीधितिम् ॥ चक्रेण चिच्छेद निशातनेमिना हरिर्यथा तार्क्ष्यपतत्रमुज्झितम् ॥ १४ ॥ वृक्णे स्वशूले बहुधाऽरिणा हरेः प्रत्येत्य विस्तीर्णमुरो विभूतिमत् ॥ प्रवृद्धरोषः स कठोरमुष्टिना नदन्प्रहृत्यांतरधीयतासुरः ॥१५॥ तेनेत्थमाहतः क्षत्तर्भगवानादिसूकरः॥नाकंपत मनाक् क्वापि स्रजा हत इव द्विपः॥१६॥अथोरुधा सृजन्मायां योगमायेश्वरे हरौ॥यां विलोक्य प्रजास्त्रस्ता मेनिरेऽस्योपसंयमम् ॥१७॥ प्रववुर्वायवश्चंडास्तमः पांसवमैरयन् ॥ दिग्भ्यो निपेतुर्ग्रावाणः क्षेपणैः प्रहिता इव ॥ १८ ॥ द्यौर्नष्टभगणाऽभ्रौघैः सविद्युत्स्तनयित्नुभिः ॥ वर्षद्भिः पूयकेशासृग्विण्मूत्रास्थीनि चासकृत् ॥ १९ ॥ गिरयः प्रत्यदृश्यंत नानायुधमुचोऽनघ ॥ दिग्वाससो यातुधान्यः शूलिन्यो मुक्तमूर्धजाः ॥ २० ॥ बहुभिर्यक्षरक्षोभिः पत्त्यश्वरथकुंजरैः ॥ आततायिभिरुत्सृष्टा हिंस्रा वाचोऽतिवैशसाः ॥ २१ ॥ प्रादुष्कृतानां मायानां मासुरीणां विनाशयत् ॥ सुदर्शनास्त्रं भगवान् प्रायुंक्त दयितं त्रिपात् ॥ २२ ॥

अकार्यकरत्वे दृष्टांतः । विप्रमुद्दिश्याभिचारं कुर्वन्यथा ॥ १३ ॥ अंतःखे आकाशमध्ये चकासत्प्रकाशमानम् । उदीर्णोत्कटा दीधितिर्दीप्तिर्यस्य निशातनेमिना शितधारेण हरिरिंद्रो यथा तार्क्ष्यस्य पतत्रमुज्झितं चिच्छेद देवान्विनिर्जित्यामृतकलशं नयता गरुडेनेंद्रप्रयुक्तवज्रस्यामोघस्य मानं दातुं पिच्छमेकं त्यक्तं तद्यथेंद्रश्चिच्छेद छिन्नं च तद्यथा खे प्रचकाशे तद्वत्प्रकाशमानमित्यभिसंधिः ॥ १४ ॥ अराः संत्यस्येत्यरि चक्रं तेन बहुधा वृक्णे छिन्ने सति प्रत्येत्याभिमुखमागत्य हरेरुरो वक्षः प्रहृत्य ॥ १५ ॥ मनागीषदपि क्वाप्यंशे ॥ १६ ॥ अस्य जगतः उपसंयमं प्रलयम् ॥ १७ ॥ पांसुकृतं तमश्च प्रेरितवंतः क्षेपणैर्यंत्रैः ॥ १८ ॥ नष्टो भगणो नक्षत्रसमूहो यस्याम् । अनेन दैत्यबलातिरेकाद्ब्रह्मदत्तमुहूर्तातिक्रमो गम्यते अह्नि नक्षत्राणामसंभवात् ॥ १९ ॥ नाना आयुधानि मुंचंतीति तथा यातुधान्यश्च प्रत्यदृश्यंत ॥ २० ॥ हिंस्राश्छिंधिभिंधीत्येवंभूता अतिवैशसा अत्युग्रा वाच उत्सृष्टा इत्यत्रैव वाक्यसमाप्तिः ॥ २१ ॥ प्रादुष्कृतानामिति प्रकटिता माया विनाशयत् । विनाशनमिति पाठे यथा श्रुतैव षष्ठी ।

कृत्यां प्रयुंजन् "यज्ञो वै विष्णुः" इति श्रुतेः ॥ १३ ॥ स्मरणादागतं मामरिवधाय किमिति न प्रायुंक्त भगवानिति सुदर्शनचैत्तं जानन्निव तेन त्रिशूलमच्छिनदित्याह—तदिति । तत्त्रिशूलं निशातनेमिनेति । तादृशसहस्रच्छेदेऽपि यन्नैशित्यं न नश्यतीत्यर्थः । हरिरित्युभयत्रान्वेति । एकत्र विष्णुरन्यत्रेन्द्र इत्यर्थः ॥ १४ ॥ प्रहृत्य ताडयित्वा सोसुरः साक्षाद्युद्धे स्वासामर्थ्यं वीक्ष्य मायाः स्रक्ष्यन्नंतर्दध इत्यर्थः ॥ १५ ॥ तन्मुष्टिप्रहारेण भगवतः किं पतनादिजातमिति मा शंकीरित्याह—तेनेति । 'स्रजमालापुष्पयोर्मता' इति कोशात् ॥१६॥ अथांतर्द्धानोत्तरं यां मायाम् ॥१७॥ यंत्रैर्भिन्दिपालैः प्रहिताः प्रेरिताः ॥१८॥ विद्युतस्तडितः स्तनयित्नवो गर्जितानि तत्सहितैः । "स्तनयित्नुः पुमान्वारिधरेपि स्तनितेपि च" इति मेदिनी । नष्टोऽदृश्यो भगणः ॥ १९ ॥२०॥ आसन्नित्यादिक्रियापदाध्याहारनिवृत्त्यर्थमुक्तमत्रैवेत्यादि ॥२१॥ अत्र षष्ठी द्वितीयार्थे । श्रुतिस्त्वष्टमस्कंधे व्याख्या

तदा दितेः समभवत् सहसा हृदि वेपथुः ॥ स्मरंत्या भर्तुरादेशं स्तनाच्चासृक् प्रसुस्रुवे ॥ २३ ॥ विनष्टासु स्वमायासु भूयश्चाव्रज्य केशवम् ॥ रुषोपगूहमानोऽमुं ददृशेऽवस्थितं बहिः ॥ २४ ॥ तं मुष्टिभिर्विनिघ्नंतं वज्रसारैरधोऽक्षजः ॥ करेण कर्णमूलेऽहन् यथा त्वाष्ट्रं मरुत्पतिः ॥ २५ ॥ स आहतो विश्वजिता ह्यवज्ञया परिभ्रमद्गात्र उदस्तलोचनः ॥ विशीर्णबाह्वंघ्रिशिरोरुहोऽपतद्यथा नगेंद्रो लुलितो नभस्वता ॥ २६ ॥ क्षितौ शयानं तमकुंठवर्चसं करालदंष्ट्रं परिदष्टदच्छदम् ॥ अजादयो वीक्ष्य शशंसुरागता अहो इमां कोनुलभेत संस्थितिम् ॥ २७ ॥ यं योगिनो योगसमाधिना रहो ध्यायंति लिंगादसतो मुमुक्षया ॥ तस्यैष दैत्यापसदः पदा हतो मुखं प्रपश्यंस्तनुमुत्ससर्ज ह ॥ २८ ॥ एतौ तौ पार्षदावस्य शापाद्यातावसद्गतिम् ॥ पुनः कतिपयैः स्थानं प्रपत्स्येते ह जन्मभिः ॥ २९ ॥ देवा ऊचुः ॥ नमो नमस्तेऽखिलयज्ञतंतवे स्थितौ गृहीतामलसत्त्वमूर्तये ॥ दिष्ट्या हतोऽयं जगतामरुंतुदस्त्वत्पादभक्त्या वयमीश निर्वृताः ॥ ३० ॥

त्रीणि सवनानि पादा यस्य यज्ञमूर्तिरित्यर्थः "त्रयो अस्य पादाः" इति श्रुतेः ॥ २२ ॥ भर्तुरादेशं त्वत्पुत्रो भगवान् हनिष्यतीत्येवंभूतम् ॥ २३ ॥ आव्रज्याऽभिमुखमागत्य उपगूहमानो बाह्वोरंतर्निधाय संघट्टयन् ॥ २४ ॥ अहन् जघान त्वाष्ट्रं वत्रम् । मरुत्पतिरिंद्रः ॥ २५ ॥ परितो भ्रमद्गात्रं शरीरं यस्य उदस्ते बहिर्निर्गते लोचने यस्य विशीर्णा बाह्वादयो यस्य नगेंद्रो महाद्रुमः लुलित उन्मूलितः नभस्वता वायुना ॥ २६ ॥ संस्थितिं मृत्युम् ॥ २७ ॥ असत आरोपिताल्लिंगाल्लिंगशरीरान्मोक्तुमिच्छया वराहस्य पूर्वपादयोरेव करत्वात्करेणाहन्निति पदाहत इति चाविरुद्धम् ॥ २८ ॥२९॥ अखिलयज्ञानां तंतवे विस्ताराय कारणायेति वा अरुंतुदो मर्मभेत्ता ॥ ३० ॥

स्यतेपि—अस्य यज्ञरूपस्य विष्णोस्त्रयः सवनत्रयं पादा इत्यर्थः ॥ २२ ॥ यदा भगवता सुदर्शनास्त्रं प्रयुक्तं तदेत्यर्थः ॥ २३ ॥ बहिः स्वभुजांतराद्बहिः स्थितं ददर्शेत्यर्थः । तद्गार्षः । आव्रज्य समीपं प्राप्य ॥ २४ ॥ करेण करवत्साधनभूतेन पादेनेत्यर्थः । अग्रे पदाहत इति वक्ष्यमाणत्वात् ॥ २५ ॥ २६ ॥ आदिना ऋष्यादिग्रहः । अहो अद्भुतम् । इमां भगवद्धस्तताडनजाम् । भगवदनुग्रहं विना न कोपि लभत इत्यर्थः । ॥ २७ ॥ इतरमरणादस्य मरणस्य वैशिष्ट्यमाह इयमिति । हेति । पुनर्देहारंभसूचनाय ॥ २८ ॥ तौ जयविजयौ । कतिपयैस्त्रिभि स्त्रिभिर्लोकाय कल्पतामिति वक्ष्यमाणत्वात् । शैवोक्तेश्च ॥ २९ ॥ "तंतुर्विस्तारसं

मैत्रेय उवाच ॥ एवं हिरण्याक्षमसह्यविक्रमं स सादयित्वा हरिरादिसूकरः ॥ जगाम लोकं स्वमखंडितोत्सवं समीडितः पुष्करविष्टरादिभिः ॥ ३१ ॥ मया यथाऽनूक्तमवादि ते हरेः कृतावतारस्य सुमित्र चेष्टितम् ॥ यथा हिरण्याक्ष उदारविक्रमो महामृधे क्रीडनवन्निराकृतः ॥ ३२ ॥ सूत उवाच ॥ इति कौषारवाख्यातामाश्रुत्य भगवत्कथाम् ॥ क्षत्तानंदं परं लेभे महाभागवतो द्विज ॥ ३३ ॥ अन्येषां पुण्यश्लोकानामुद्दामयशसः सताम् ॥ उप श्रुत्य भवेन्मोदः श्रीवत्सांकस्य किं पुनः ॥ ३४ ॥ यो गजेंद्रं झषग्रस्तं ध्यायंतं चरणांबुजम् ॥ क्रोशंतीनां करेणूनां कृच्छ्रतोऽमोचयद्द्रुतम् ॥ ॥ ३५ ॥ तं सुखाराध्यमृजुभिरनन्यशरणैर्नृभिः ॥ कृतज्ञः को न सेवेत दुराराध्यमसाधुभिः ॥ ३६ ॥ यो वै हिरण्याक्षवधे महाऽद्भुतं विक्रीडितं कारणसूकरात्मनः ॥ शृणोति गायत्यनुमोदतेंऽजसा विमुच्यते ब्रह्मवधादपि द्विजाः ॥ ३७ ॥ एतन्महापुण्यमलं पवित्रं धन्यं यशस्यं पदमायुराशि षाम् ॥ प्राणेंद्रियाणां युधि शौर्यवर्धनं नारायणोंऽते गतिरंग शृण्वताम् ॥ ३८ ॥ इति श्रीभा० तृती० हिरण्याक्षवधवर्णनं नामैकोनविंशोऽध्यायः ॥ १९ ॥

सादयित्वा हत्वेत्यर्थः । पुष्करविष्टरादिभिर्ब्रह्मादिभिः संस्तुतः ॥ ३१ ॥ यथाऽनूक्तं गुरूक्तिमनतिक्रम्य मयाऽवादि तव कथितम् । हे सुमित्र यथा येन प्रका रेण ॥ ३२ ॥ हे द्विज शौनक ॥ ३३ ॥ कथामुपश्रुत्य ॥ ३४ ॥ भक्तिमात्रेण पशूनामपि सुलभोऽन्यथा देवानामपि दुर्लभ इति तत्कथाश्रवणे कस्यानंदो न स्यादि त्याह । य इति द्वाभ्याम् । झषो ग्राहः क्रोशंतीनां सतीनामिति कृपालुत्वमुक्तम् । संकटादमोचयत् ॥ ३५ ॥ ३६ ॥ कारणेन पृथिव्युद्धरणादिना सूकररूपस्य हरेः ॥ ३७ ॥ एतद्धरेर्विक्रीडितं शृण्वतामंते श्रीनारायणो गतिर्भवति । महापुण्यं स्वर्गादिप्रदम् अलं पवित्रमतिशयेन शोधकम् । धन्यं धनावहम् । यशस्यं कीर्तिकरम् । आयुष श्चाशिषां च पदं स्थानं परित्राणं वा प्राणानामिंद्रियाणां च पदम् । अंग हे विदुर ॥ ३८ ॥ इति तृतीये टीकायामेकोनविंशोऽध्यायः ॥ १९ ॥

तानकारणेषु निगद्यते'' इति निरुक्तिः । निर्वृताः संजातानंदाः '॥ ३० ॥ इत्यर्थ इति । स्वार्थण्यन्तात्सदेः क्त्वाप्रत्ययविधानादयमर्थो लब्ध इति भावः । पुष्करं पद्मं विष्टरमासनं यस्य स पुष्करविष्टरो ब्रह्मा स आदिर्मुख्यो येषामिन्द्रादीनां ते तथा तैः ॥ ३१ ॥ ते तुभ्यं सुष्टु श्रीकृष्णो मित्रं यस्य स सुमित्र विदुर कृष्णभक्तत्वात्त्वैतदुक्तं न चाभक्ताय मेजात्वित्युक्तन्यायेनेति भावः ॥ ३२ ॥ द्विजेति । ब्राह्मणत्वाद्दानरूपेण प्रोक्तमिति । किं च । एतत्कथनस्य महादानत्वात्स्वस्य भूरिदत्वज्ञापनाय च । ''तव कथामृतं तप्तजीवनम्'' इत्यारभ्य ''भुवि गृणंति ये भूरिदा जनाः'' इति श्रीदशमे साक्षाच्छ्रुत्यवतारभूताभिर्गोपीभिर्वक्ष्यमाणत्वात् ॥ ॥ ३३ ॥ पुण्यश्लोकानां नलयुधिष्ठिरादीनां ''पुण्यश्लोको नलो राजा'' इत्याद्युक्तेः । कथामिति प्रसंगलब्धम् ॥ ३४ ॥ अन्यथा भक्त्यभावे यो हारिः ' करेणुरिभ्यां स्त्री नेभे' इत्यमरः । कृच्छ्रत आसन्नमरणात् ॥ ॥ ३५ ॥ ऋजुभिरकुटिलैः असाधुभिः कुटिलैः ॥ ३६ ॥ फलश्रवणस्य क्षिप्रं प्रवर्तकत्वात्तदाह । ब्रह्मज्ञानं ''सत्यज्ञानमनंतं ब्रह्म'' इति श्रुतेः । '' विप्रज्ञानात्मसु ब्रह्म'' इति कोशाच्च । तेन वध्यते नश्यत इति ब्रह्मवधः संसारो वा तस्मादपि अनुमोदते । वराहचरितं वक्तव्यमिति वक्त्रे प्रेरणमनुमोदनं श्रुतस्य श्लाघनं वा ॥ ३७ ॥ अंते इति । श्रवणाभ्यासेन मननसंभवात् । ततोऽपरोक्षज्ञानेन लिंगदेहनाशान्नारायणैकस्वरूपतां प्राप्नोतीत्यर्थः । ''पदं व्यवसितत्राण-'' इत्यादिकोशमाश्रित्याह-परित्राणं वेति । भगवद्भक्तत्वान्मे प्रियोसीत्याह-अंगेति ॥ ३८ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे एकोनविंशोऽध्यायः ॥ १९ ॥

शौनक उवाच ॥ महीं प्रतिष्ठामध्यस्य सौते स्वायंभुवो मनुः ॥ कान्यऽन्वतिष्ठद्द्वाराणि मार्गायावरजन्मनाम् ॥ १ ॥ क्षत्ता महाभागवतः कृष्णस्यै कांतिकः सुहृत् ॥ यस्तत्याजाग्रजं कृष्णे सापत्यमघवानिति ॥२॥ द्वैपायनादनवरो महित्वे तस्य देहजः ॥ सर्वात्मना श्रितः कृष्णं तत्परांश्चाप्य नुव्रतः ॥ ३ ॥ किमन्वपृच्छन्मैत्रेयं विरजास्तीर्थसेवया ॥ उपगम्य कुशावर्त आसीनं तत्त्ववित्तमम् ॥ ४ ॥ तयोः संवदतोः सूत प्रवृत्ता ह्यमलाः कथाः ॥ आपो गांगा इवाघघ्नीर्हरेः पादांबुजाश्रयाः ॥ ५ ॥ ता नः कीर्तय भद्रं ते कीर्तन्योदारकर्मणः ॥ रसज्ञः को नु तृप्येत हरिलीलामृतं पिबन् ॥ ६ ॥ एवमुग्रश्रवाः पृष्ट ऋषिभिर्नैमिशायनैः ॥ भगवत्यर्पिताध्यात्मस्तानाह श्रूयतामिति ॥ ७ ॥ सूत उवाच ॥ हरेर्धृतक्रोडतनोः स्वमा यया निशम्य गोरुद्धरणं रसातलात् ॥ लीलां हिरण्याक्षमवज्ञया हतं संजातहर्षो मुनिमाह नारदः ॥ ८ ॥

विंशे वराहजन्मादिव्यवधानादथादितः ॥सर्गोऽनुस्मार्यते वक्तुमन्वयं प्रस्तुतं मनोः॥ १ ॥प्रतिष्ठां स्थानम् । अध्यस्य प्राप्य सौते सूतस्य रोमहर्षणस्य पुत्र अवरमर्वाचीनं जन्म येषां तेषामीश्वरे लीनानां मार्गाय निर्गमाय कानि द्वाराणि कृतवान् । अर्वाचीनान् प्राणिनः कैरुपायैः सृष्टवानित्यर्थः ॥ १ ॥ विदुरमैत्रेयसंवादेनैवैतज्ज्ञास्यत इति तमेव संवादं प्रष्टुमाह। क्षत्तेति पंचभिः । श्रीकृष्णसुहृत्त्वे हेतुः । य इति । दुर्योधनादिभिरपत्यैः सहितमग्रजं धृतराष्ट्रमघवान्कृतापराध इति हेतोः श्रीकृष्णोक्तमंत्रानादराद्यस्तत्याज॥ २॥ अनवरो न्यूनः महित्वे महिम्नि ॥ ३॥ कुशावर्ते गंगाद्वारे ॥ ४॥ यत्किमपि पृच्छतु किं तवेति चेत्तत्राह । तयोरिति । अघघ्नीरघघ्न्यो नूनं कथाः प्रवृत्ताः ॥ ५ ॥ कीर्तन्यानि कीर्तनार्हाण्युदाराणि कर्माणि यस्य हरेः॥६॥एवमिति व्यासवाक्यम् । उग्रश्रवा रोमहर्षणपुत्रः नैमिषमयनमाश्रयो येषाम् । आर्पितमध्यात्मं मनो येन ॥७॥गोरुद्धरणं

आदिना युद्धादिग्रहः । अथ पुनः । प्रस्तुतं प्रकृतम् ॥(१)॥ प्रासंगिकीं वाराहलीलां श्रुत्वा प्रकृतं पृच्छति महीमिति । अवरं सनकादिभ्यः । इत्यर्थ इति । कथमेते सृष्टा इति भावः ॥ १॥तत् अर्वाचीनप्राण्युत्पत्तिद्वारं ज्ञास्यते बोधिष्यते तथा च विदुरकथाप्रश्ने स्वातंत्र्येण मम प्रश्नोऽनुचित इति विमृश्य तत्प्रश्नमेव पृच्छति । क्षत्तेति । ऐकान्तिकः अनन्यः॥२॥तस्य द्वैपायनस्य सर्वात्मना सर्वभावेन । यद्वा । सर्वेषामात्मा सर्वात्मा तेन हेतुना तत्परान्कृष्णभक्तान् अनुव्रतः अनुगतः ॥३॥ विगतं रजो यस्मात्स विरजा तीर्थसेवयेति हेतूक्तेः । प्रत्यासत्त्या च तीर्थानामिव मालिन्यं विगतमित्यर्थः । "तीर्थी कुर्वंति तीर्थानि" इति युधिष्ठिरोक्तेः ॥४॥ स्वयमाक्षिप्य समाधत्ते यत्किमपीति । तयोर्विदुरमैत्रेययोः प्रवृत्ता इत्यनेनादित एव शुश्रूषा स्पष्टीकृता गांगा गंगासंबंधिन्यः उभयोः श्रीकृष्णभक्तत्वेन श्रीकृष्णकथेतरकथास्तत्र न संजाता इत्यतस्तत्संवादं ब्रूहीति भावः ॥ ५ ॥ कीर्त्तन्योदारकर्मणः श्रीकृष्णस्य ताः कथाः नोऽस्मभ्यम् ॥ ६ ॥ ऋषिभिश्शौनकादिभिः ॥ ७ ॥ सुष्ठु अमायया धृता नित्यास्थिता क्रोडतनुर्यस्य तस्य तौदादिकस्य 'धृङ्-अवस्थाने' इति धातोः क्तप्रत्यये रूपम् । यस्यां लीलायां गोरुद्धरण

विदुर उवाच ॥ प्रजापतिपतिः सृष्ट्वा प्रजासर्गे प्रजापतीन् ॥ किमारभत मे ब्रह्मंस्तद् ब्रूह्यऽव्यक्तमार्गवित् ॥ ९ ॥ ये मरीच्यादयो विप्रा यस्तु स्वायंभुवो मनुः॥ ते वै ब्रह्मण आदेशात्कथमेतदभावयन् ॥ १० ॥ सद्वितीयाः किमसृजन्स्वतंत्रा उत कर्मसु ॥ आहोस्वित्संहताः सर्व इदं स्म समकल्पयन् ॥ ११ ॥ मैत्रेय उवाच ॥ दैवेन दुर्वितर्क्येण परेणाऽनिमिषेण च ॥ जातक्षोभाद्भगवतो महानासीद्गुणत्रयात् ॥ १२ ॥ रजःप्रधानान्महतस्त्रिलिंगो देवचोदितात् ॥ जातः ससर्ज भूतादिर्वियदादीनि पंचशः ॥ १३ ॥ तानि चैकैकशः स्रष्टुमसमर्थानि भौतिकम् ॥ संहत्य दैवयोगेन हैममंडमवासृजन् ॥ १४ ॥

लीलां हिरण्याक्षं चावज्ञया हतं निशम्य । भारतो विदुरः ॥ ८ ॥ यस्मात्त्वमव्यक्तमार्गवित् । ब्रह्मणो वा विशेषणम् ॥ ९ ॥ एतज्जगत् । अभावयन्नुत्पादयामासुः ॥ १० ॥ सद्वितीयाः सभार्याः स्वतंत्रा भार्यानपेक्षाः कर्मसु प्रजासर्गादिषु संहताः परस्परापेक्षाः । इदं जगत् ॥ ११ ॥ ब्रह्मा किमारभतेति प्रश्नस्य यक्षादीन्सृष्टवानित्युत्तरं वक्तुं पूर्वोक्तां सृष्टिमनुस्मारयति । दैवेनेति सप्तभिः । मन्वादिप्रश्नानां तूत्तराध्यायमारभ्योत्तरं भविष्यति दुर्वितर्क्येण दैवेन जीवादृष्टेन परेण प्रकृत्यधिष्ठात्रा महापुरुषेणानिमिषेण कालेन च हेतुना भगवतो निर्विकाराज्जातक्षोभं यद्गुणत्रयं प्रधानं तस्मान्महानासीत् । तदुक्तं तंत्रे । "विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः ॥ प्रथमं महतः स्रष्टृ द्वितीयं त्वंडसंस्थितम् ॥ तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते" इति ॥ १२ ॥ महतो जातो भूतादिरहंकारस्त्रिलिंगस्त्रिगुणः रजःप्रधानादिति स्वतः सत्त्वप्रधानस्यापि महतोऽहंकारोत्पत्तिकाले कार्यानुरूपं रजःप्रधानत्वं भवतीति भावः । पंचशस्तन्मात्राणि महाभूतानि ज्ञानेंद्रियाणि कर्मेंद्रियाणि तत्तद्देवताश्चेति पंचपंच ससर्जेत्यर्थः ॥ १३ ॥ भौतिकं हैममंडमेकैकशः प्रत्येकं स्रष्टुमसमर्थानि संति संहत्य ससृजः ॥ १४ ॥

मस्ति तां लीलां तत्रैवावज्ञया हेतुना हतं च निशम्य ॥ ८ ॥ प्रजापतयो मरीच्यादयस्तेषां पतिर्ब्रह्मा । प्रजासर्ग इति । निमित्ते सप्तमी । अव्यक्तमार्गवित् । अस्मदाद्यगोचरवस्तुवेत्ता ॥ ९ ॥ १० ॥ ११ ॥ प्राप्तसर्गं वक्तुं संगतये पूर्वप्रवृत्तब्राह्मीयसर्गं स्मारयति दैवेनेति । दुर्वितर्क्येण दुर्ज्ञेयमूलकेन भगवतः सकाशात्तदीक्षितादित्यर्थः ॥ १२ ॥ इति भाव इति । भगवत्सिसृक्षावशादिति तात्पर्य्यम् । इत्यर्थ इति । पंचन्शब्दात् "संख्यैकवचनाच्च वीप्सायाम्" इति वीप्सायां शस् । "तद्धितश्चाऽसर्वविभक्तिः" इत्यत्र परिगणितान्तर्गतत्वादव्ययत्वमिति भावः ॥ १३ ॥ दैवयोगेन भगवच्छक्तियोगेन भूतानामुत्पादने प्रधानत्वाद्भौतिकं भगवत्तेजोयुक्तत्वेन हेमवद्देदीप्यमानत्वाद्धैमम् । यद्वा । केवलपंचभूतात्मकमेव ब्रह्मांडं न तु तार्किकाभिमतनवद्रव्यात्मकं सप्तपदार्थात्मकं वा तच्च श्रीमहाभारते श्रीबादरायणेनोक्तं शांतिपर्वान्तर्गतमोक्षधर्मे तथैव व्याख्यातं नीलकंठाचार्य्यैः तथा हि-"आकाशं मारुतो ज्योतिरापः पृथ्वी च पंचमी । भावाभावौ च कालश्च सर्वभूतेषु पञ्चसु" इति अस्यार्थः-भूतेषु जरायुजादिषु पञ्चसु पञ्चात्मकेषु एतेन भावाभावकालानामपि भौतिकत्वमुक्तं ननु पञ्चभ्यो भूतेभ्योऽधिकानि कालदिगात्ममनांसि चत्वारि द्रव्याणि गुणाश्च चतुर्विंशतिः कर्मसामान्यविशेषसमवायाश्च भावपदार्थाः सप्तमोऽभावपदार्थश्चेति काणादा मन्यंते तत्कथं सर्वस्य पञ्चात्मकत्वं प्रतिज्ञायते इति चेत् अत्रोच्यते न कालो नाम पदार्थांतरमतीतानागतादिव्यवहारहेतुः कश्चिदस्ति नूतनत्वपुराणत्वादिवद्द्रव्यगताभिरेवातीताद्यवस्थाभिस्तादृग्व्यवहारोपपत्तेः । नापि दिक् आकाश एव सूर्योपाधिकी प्राच्यादिकल्पनेत्युपगमात् । नापि मनस्त

सोऽशयिष्टाब्धिसलिले आंडकोशो निरात्मकः ॥ साग्रं वै वर्षसाहस्रमन्ववात्सीत्तमीश्वरः ॥ १५ ॥ तस्य नाभेरभूत्पद्मं सहस्रार्कोरुदीधिति ॥ सर्वजीवनिकायौको यत्र स्वयमभूत्स्वराट् ॥ १६ ॥ सोऽनुविष्टो भगवता यः शेते सलिलाशये ॥ लोकसंस्थां यथापूर्वं निर्ममे संस्थया स्वया ॥ ॥ १७ ॥ ससर्ज छायया विद्यां पंचपर्वाणमग्रतः ॥ तामिस्रमंधतामिस्रं तमो मोहो महातमः ॥१८॥ विससर्जात्मनः कायं नाभिनंदंस्तमोमयम् ॥ जगृहुर्यक्षरक्षांसि रात्रिं क्षुत्तृट्समुद्भवाम् ॥ १९ ॥

अन्ववात्सीदधिष्ठितवान् ॥ १५ ॥ सहस्रार्काणामिवोरुर्दीधितिः यस्य तत् । सर्वजीवनिकायानामोकः स्थानं पद्मम् । स्वराट् ब्रह्मा ॥ १६ ॥ यः सलिलाशये गर्भोदकस्यांतः शेते तेन भगवताऽनुविष्टोऽधिष्ठितः सन् स स्वराट् स्वया संस्थया नामरूपादिक्रमेण ॥ १७ ॥ छाया प्रभाप्रतियोगिनी तया अबुद्ध्येत्यर्थः । "यस्त्वबुद्धिकृतः प्रभोः" इत्युक्तत्वात् । महातम इति महामोहः स्वरूपनिर्देशमात्रविवक्षया मोह इति प्रथमाप्रयोगः ॥ १८ ॥ तदेवं प्रथमोक्तां साधारणां सृष्टिमनूद्य केनचिद्विशेषेणासाधारणां सृष्टिमाह । विससर्जेत्यादिना यावत्समाप्ति । तद्विसृष्टं कायं रात्रिरूपं तत एव जातानि यक्षरक्षांसि जगृहुः क्षुत्तृषोः समुद्भवो यस्यां ताम् । अत्र च "या अस्य सा तनूरासीत्तामपाहत सा तमिस्राऽभवत्" इत्यादिश्रुतिरनुसंधेया ॥ १९ ॥

स्येंद्रियत्वेन श्रोत्रादिवद्ग्राह्यसजातयिगुणाश्रयत्वस्यावश्यं वक्तव्यत्वेन पाञ्चभौतिकत्वात् । पराभिमतमनसस्तु ग्राह्यसजातीयगुणानाश्रयत्वेन दिक्कालवन्नेंद्रियत्वं युज्यते गुणा अपि आश्रयान्नातिरिच्यंते इति न पृथक्पदार्थः । तथा द्रव्यस्यैव स्वास्थ्यप्रच्युतिः परिस्पंदात्मावस्थाविशेषः कर्मेति तदपि न पृथक्पदार्थः । तथा सत्सदिति व्यवहारविषयत्वस्य स्वकल्पितस्य सामान्यादिषु सद्भावेप्यनवस्थादिदोषभयात्तेभ्यो व्यावृत्तं द्रव्यगुणकर्मस्वेवानुगतं सामान्यमित्यसत् । अधिष्ठानसत्त्वेनैव सत्सदिति व्यवहारस्योपपत्तौ सत्यामननुगतस्य तस्य कल्पनाया अनौचित्यात् । 'नित्यद्रव्यवृत्तयोऽनंता विशेषा' इत्युपगमस्त्वैकात्म्ये नित्यद्रव्याणामेवाभावान्निरालंबनो मानांतरासिद्धश्च समवायवद्रूपादिकमपि समवायं विनैव द्रव्ये स्थास्यतीति समवायकल्पनाप्यनर्थिकैव । यथा घटे पटान्योन्याभावः एवं भूतलं घटसंसर्गाभावोपि भविष्यति तथा चोक्तं "भावांतरमभावो हि कयाचित्तु व्यपेक्षया" इति प्रागभावप्रध्वंसाभावयोस्त्वसत्प्रतियोगिकत्वादेवासिद्धिः सद्ग्रामभावो निरूप्यते इति न्यायेन तन्निरूपकाभावात् । तस्मादभौतिकः पदार्थ एव नास्तीति युक्तमुक्तं भावाभावकालानामपि पंचात्मकत्वमिति दिक् ॥ १४ ॥ निरात्मकः तदानीं जीवानामनुद्बोधात् । तमंडकोशम् । ईश्वरो महत्स्रष्टा गर्भोदशायिना द्वितीयरूपेण साग्रं किंचिदधिकम् ॥ १५ ॥ य एव ब्राह्मे कल्पे सृष्टवांस्तस्य प्रविष्टस्य सतः पाद्मे कल्पे नाभेः सकाशात्पद्ममभूत् यत्र पद्मे स्वयं विष्णुरेव स्वराडभूत् ॥ १६ ॥ लोकानां संस्थां रचनां यथापूर्वं "धाता यथापूर्वमकल्पयत्" इति श्रुतेः ॥ १७ ॥ ब्रह्मसृष्टेषु यक्षराक्षसदेवमनुष्येष्वहंकारोऽविद्यां विना न संभवेदतः प्रथममविद्यावृत्तीः स्वयमेवाविर्भवंतीस्ता ब्रह्मद्वारेति हेतौस्ता ब्रह्मा ससर्जेत्याह-इत्यर्थ इति । तस्या आवरणस्वभावत्वादविद्योपलक्षिततमोरूपया तन्वेति भावः । अत्र हेतुत्वेन पूर्वोक्तं स्मारयति यस्त्विति । ननु सृजेः सकर्मत्वात्कर्त्तरि प्रत्ययविधानात्कर्मणि द्वितीयया भाव्यं कथं मोह इति प्रथमेति चेदत्राह—स्वरूपेति आर्षत्वाद्वा सेति ॥ १८ ॥ नाभिनंदन् हंतहंत सृष्ट्यारंभे तमसैवावृतोऽभूवमिति विनिंद्य तत्याजेत्यर्थः । तत एव तमस एव । तदानीमेव जातानि अत्र च तमस्तनुत्यागे तस्या रात्रिरूपत्वे च प्रमाणरूपा श्रुतिः अस्य ब्रह्मणः सा तनूस्तामसी तनूर्यासीत्तां तनूमपाहत अजहात्सा तमिस्रा तामसी रात्रिरभवदिति श्रुतिपदार्थः । अत्र च द्विपरार्द्धायुषो ब्रह्मणः कायत्यागो नाम

क्षुत्तृड्भ्यामुपसृष्टास्ते तं जग्धुमभिदुद्रुवुः ॥ मा रक्षतैनं जक्षध्वमित्यूचुः क्षुत्तृडर्दिताः ॥ २० ॥ देवस्तानाह संविग्नो मा मां जक्षत रक्षत ॥ अहो मे यक्षरक्षांसि प्रजा यूयं बभूविथ ॥ २१ ॥ देवताः प्रभया याया दीव्यन्प्रमुखतोऽसृजत् ॥ ते अहार्षुर्देवयंतो विसृष्टां तां प्रभामहः ॥ २२ ॥ देवो ऽदेवाञ्जघनतः सृजति स्मातिलोलुपान् ॥ त एनं लोलुपतया मैथुनायाभिपेदिरे ॥ २३ ॥ ततोऽहसन्स भगवानसुरैर्निरपत्रपैः ॥ अन्वीयमान स्तरसा क्रुद्धो भीतः पराऽपतत् ॥२४॥ स उपव्रज्य वरदं प्रपन्नार्तिहरं हरिम् ॥ अनुग्रहाय भक्तानामनुरूपात्मदर्शनम् ॥ २५ ॥

उपसृष्टा अभिभूताः जग्धुमत्तुं भक्षयितुं यतो वयं क्षुत्तृड्भ्यामर्दिता अत एनं पितेति कृपया मा रक्षतेत्येके अन्ये तु जक्षध्वं भक्षयतेति ब्रुवंतः "जक्षभक्षहसनयोः" इति धातुः ॥ २० ॥ देवो ब्रह्मा संविग्नो भीतः सन्मां मा जक्षत मा भक्षयत किं तु रक्षत अहो हे यक्षरक्षांसि यूयं मे प्रजाः सुता बभूविथ जाताः स्थ । एवमुग्रस्वभावा यक्षराक्षसा जाता इत्यर्थः । तत्र ये जक्षध्वमित्यूचुस्ते यक्षा ये तु मा रक्षतेति राक्षसा इति ज्ञेयम् । एतच्च तिर्यगादितामससर्गस्याप्युपलक्षणम् ॥ २१ ॥ प्रभया दीव्यन् द्योतमानो याया देवता द्युतिमत्यः सात्त्विक्यस्तास्ताः प्रमुखतः प्राधान्येनासृजत् । ते देवाः । देवता इति स्त्रीत्वेन निर्दिष्टानामप्यर्थमात्रविवक्षया त इति पुंस्त्वेन प्रतिनिर्देशः । एवं यक्षरक्षांसीत्यत्रापि ज्ञेयम् । तेन विसृष्टां त्यक्तां प्रभामहः दिवसरूपां सतीं देवयंतः क्रीडयंतोऽहार्षुर्जगृहुः ॥ २२ ॥ अदेवानिति छेदः । "स जघनादसुरानसृजत" इति श्रुतेः । अतिलोलुपान्स्त्रीलंपटान् अभिपेदिरे प्राप्ताः॥ २३ ॥पराऽपतत् पलायत॥ २४ ॥भक्तेच्छानुरूपमात्मानं दर्शयतीति तथा तमुपव्रज्य ॥ २५॥

भावत्याग एव विवक्षितः । ततश्च मनसि क्रोधादिस्तामसो भाव आविर्बभूव तस्माद्यक्षरक्षांसि बभूवुः । स च तामसो भावो रात्रिरभूत्तां च यक्षरक्षांस्येव जगृहुरित्येतावानेवार्थः सृष्ट्यर्थं योगबलेन पृथक्पृथक्कायग्रहणवत्त्वे द्विपरार्द्धायुष्टं तस्य न व्याहन्येत विषयभोगार्थमपीन्द्रादिदेवानां नानारूपग्रहणत्यागदर्शनादित्यपि केचिदाहुः ॥ १९ ॥ २० ॥ इत्यर्थ इति । एवं कारणानुरूपत्वात्कार्यस्येति भावः । तत्र तेषु । एतद्यक्षराक्षसादिस्वभावकथनम् ॥ २१ ॥ प्रभया प्रभारूपया सत्त्वमय्या तन्वा देवयंतो याचमाना इत्यर्थः । 'दिवु अर्दने' इत्यस्य चौरादिकस्य रूपमिति संदर्भः । तथा चात्र ब्रह्मणो मनसि प्रसादः सात्त्विकभाव आविर्बभूव तस्माद्देवा बभूवुः । स च प्रसादो दिनं बभूव तच्च त एव जगृहुरित्येतावानेवात्रार्थः । अहारिषुरिहेडार्षः ॥ २२ ॥ एवं च तस्य मनसि कामो राजसो भावोऽभूत्तस्मादसुरा बभूवुः स च भावः संध्याऽभूत्तां चासुरा जगृहुरित्याह—देव इति । अत्र प्रमाणमाह—स इति। जघनात् श्रोणिपुरोभागात् । यद्यपि जघनशब्दो नार्य्यवयवे प्रयुज्यते तथापि तत्सादृश्यात्पुरुषावयवेऽपीत्यनेनैव ज्ञाप्यते "पश्चान्नितंबः स्त्रीकट्याः क्लीबे तु जघनं पुरः" इत्यमरः । कामस्यानर्थहेतुतामाह—त इति । तेऽसुरा एनं ब्रह्माणं, लंपटलोलुपौ पर्यायौ स्त्रीपरायणे वर्त्तेते । लोलुपतया स्त्रीपरायणतया । मैथुनाय मैथुनं कर्त्तुम् ॥२३॥ ततस्तैः निरपत्रपैः स्वकरात्तशिश्नैरन्वीयमानोऽनुग

पाहि मां परमात्मंस्ते प्रेषणेनाऽसृजं प्रजाः ॥ ता इमा यभितुं पापा उपक्रामंति मां प्रभो ॥२६॥ त्वमेकः किल लोकानां क्लिष्टानां क्लेशनाशनः॥ त्वमेकः क्लेशदस्तेषामनासन्नपदां तव ॥२७॥ सोऽवधार्यास्य कार्पण्यं विविक्ताध्यात्मदर्शनः ॥ विमुंचात्मतनुं घोरामित्युक्तो विमुमोच ह ॥ २८ ॥ तां क्वणच्चरणांभोजां मदविह्वललोचनाम् ॥ कांचीकलापविलसद्दुकूलच्छन्नरोधसम् ॥ २९ ॥ अन्योऽन्याश्लेषयोत्तुंगनिरंतरपयोधराम् ॥ सुनासां सुद्विजां स्निग्धहासलीलाऽवलोकनाम् ॥ ३० ॥ गूहंतीं व्रीडयात्मानं नीलालकवरूथिनीम् ॥ उपलभ्यासुरा धर्म सर्वे संमुमुहुः स्त्रियम् ॥ ३१॥

पाहीति द्वाभ्यां प्रार्थितवान् । यभितुं मैथुनेन धर्षयितुम् ॥ २६ ॥ लोकानां जनानाम् । तवानासन्नावनाश्रितौ पादौ यैस्तेषाम् ॥ २७ ॥ विविक्तमसंदिग्धमध्यात्मदर्शनं परचित्तज्ञानं यस्य हरेः घोरां कामकश्मलां स्वतनुं विमुंचेति उक्तवानिति शेषः । इत्युक्तश्च ब्रह्मा तां तनुं विमुमोच सर्वत्र तनुत्यागो नाम तत्तन्मनोभावत्यागो विवक्षितः । ग्रहणं च तत्तद्भावापत्तिरिति द्रष्टव्यम् ॥ २८ ॥ "साऽहोरात्रयोः संधिरभवत्" इति श्रुतेः सा तेन विसृष्टा तनुः सायंतनी संध्या बभूव । सा च कामोद्रेकवेला असुराश्च राजसत्वात्स्त्रीलंपटा अतस्तां संध्यामेव स्त्रियं कल्पयित्वा ते संमोहं प्राप्ता इत्याह । तामिति त्रिभिः । नूपुराभ्यां क्वणती चरणांभोजे यस्याः मदेन विह्वले लोचने यस्याः कांचीकलापेन विलसद्दुकूलं तेन छन्नं रोधः कटितटं यस्यास्ताम् ॥ २९ ॥ अन्योन्यमाश्लेषयोपमर्देन हेतुनोत्तुंगौ निरंतरौ पयोधरौ यस्याः सुद्विजां सुदतीम् । स्निग्धो हासो लीलाऽवलोकनं च यस्याः॥ ३०॥गूहंतीं वस्त्रांचलेनावृण्वानाम्।नीलानामलकानां वरूथः स्तोमो विद्यते यस्याः हेधर्म विदुर तां स्त्रियमुपलभ्य मत्वा॥ ३१॥

म्यमानः । तरसा वेगेन । स ब्रह्मा ॥ २४ ॥ २५ ॥ परमात्मन्निति । निवेदनाभावेऽपि त्वं जानास्येवेत्याह—प्रेषणेन प्रेरणया । इमा इति । शृंगग्राहिकया वदति । धर्षयितुं पातयितुम् । उपाक्रामंति समीपमायांति । प्रभो इति । त्वमेवैषां वारणे शक्त इत्याह ॥ २६ ॥ त्वत्पादावाश्रितवतां भक्तानां क्लिष्टानामपि क्लेशनाशनस्त्वमसीति गम्यते । एक इत्युक्तेस्त्वामृते कोऽपि भक्तवत्सलो नास्तीति भावः । क्लेशद इति । स्वं प्रत्युन्मुखी कर्त्तुमिति भावः । तथा च त्वच्चरणमनाश्रितवतां कालकर्मग्रहादिरूपेण त्वमेवैकः क्लेशदः तेषामेवाकस्माच्चरणाश्रितत्वे सति साक्षात्त्वमेव तत्तत्क्लेशनाशनः, त्वद्भक्तेषु कालकर्मादीनामनधिकारोऽस्तीत्याशयः "प्रेताश्च राहौ पितरः सुरेज्ये चंद्रे च देव्यस्तपने खदेव्यः । शाकिन्य आरे भृगुजेंबुदेव्यस्स्वगोत्रदेव्यः क्षितिजे शनौ वा ॥ बुधे च भूता व्ययरंध्रसंस्थे गृह्णंति मर्त्यं विमुखं मुकुंदात् ॥" इति ज्योतिःशास्त्रात् । "देवर्षिभूताप्तनृणां पितॄणां न किंकरो नायमृणी च राजन् । सर्वात्मना यः शरणं शरण्यं गतो मुकुंदं परिहृत्य कर्त्तम् ॥" इत्येकादशे वक्ष्यमाणत्वाच्च । त्वयि वैषम्याभावश्च कल्पतरुदृष्टांतेन ज्ञेयः ॥२७॥ स विष्णुः । अस्य ब्रह्मणः । कार्पण्यं दैन्यम् । भावो नाम सूक्ष्यावेश एव ज्ञेयः भावत्वमननं च तदायुषो द्विपरार्द्धमितत्वात् ॥ २८ ॥ अतः स्त्रीलंपटत्वात् । क्वणदिति । अत्र स्तनीडं प्रति गंतुं सशब्दमुड्डीनांश्चटकसारसादीनेव नूपुरकांच्यादीन्कल्पयंति स्म । तत्तदाकारान्मेघखंडानेव चरणनयननितंबस्तनादीन् । अत एवैकत्र श्लेषेण पयोधरशब्द उपन्यस्तः । संध्याया आरुण्यमेवारुणदुकूलं, रोधः कटितटम् ॥ २९ ॥ श्लेषयेति । भिदाद्यङंताट्टाप्प्रत्ययः । क्ङित्वेऽपि गुण आर्षः । यद्वा । "सुपां सुलुक्" इत्यादिना टाप्प्रत्ययस्य यादेश इति ज्ञेयम् । अंतराच्छिद्रोत्थौ यत्किंचित्सूर्यप्रकाशावेव । हासावलोकने कदाचित्तत्तन्मेघखंडांतर्द्धानमेव, लज्जया निगूहनम् । ऊर्द्ध्वतस्तलपर्यंतपतितानि दीर्घश्याममेघखंडान्येव

अहो धैर्यमहो रूपमहो अस्या नवं वयः ॥ मध्ये कामयमानानामकामेव विसर्पति ॥ ३२ ॥ वितर्कयंतो बहुधा तां संध्यां प्रमदाकृतिम् ॥ अभिसंभाव्य विश्रंभात्पर्यपृच्छन्कुमेधसः ॥ ३३ ॥ कासि कस्यासि रंभोरु को वाऽर्थस्तेऽत्र भामिनि ॥ रूपद्रविणपण्येन दुर्भगान्नो विबाधसे ॥ ॥ ३४ ॥ या वा काचित्त्वमबले दिष्ट्या संदर्शनं तव ॥ उत्सुनोषीक्षमाणानां कंदुकक्रीडया मनः ॥ ३५ ॥ नैकत्र ते जयति शालिनि पादपद्मं घ्नंत्या मुहुः करतलेन पतत्पतंगम् ॥ मध्यं विषीदति बृहत्स्तनभारभीतं शांतेव दृष्टिरमला सुशिखासमूहः ॥ ३६॥ इति सायंतनीं संध्यामसुराः प्रमदायतीम् ॥ प्रलोभयंतीं जगृहुर्मत्वा मूढधियः स्त्रियम् ॥ ३७ ॥ प्रहस्य भावगंभीरं जिघ्रंत्यात्मानमात्मना ॥ कांत्या ससर्ज भगवान् गंधर्वाप्सरसां गणान् ॥ ३८ ॥

संमूढानां विभावनाक्रममाह । अहो इति ॥ ३२ ॥ अभिसंभाव्य सत्कृत्य । विश्रंभात्प्रणयात् । कुबुद्धयस्ते तां पप्रच्छुः ॥ ३३ ॥ काऽसीति त्रिभिः । काऽसि जात्या कस्य वा कन्या । हे भामिनि कोपने रूपमेव द्रविणमनर्घ्यं वस्तु तदेव पण्यं क्रयार्हं तेन तदसमर्पणेन नो विबाधसे ॥ ३४॥ किं जातिकुलादिप्रश्नेन या वा काचिद्भव दिष्ट्येदं तावद्भद्रं जातं यत्तव दर्शनं किं तु केवलं नो मन उत्सुनोषि विमथ्नासि ॥३५॥ क्षुभितचित्तानां वाक्यं नैकत्रेति । हे शालिनि श्लाघ्ये एकत्र न जयति न स्थिरी भवति यद्वा नैकत्रानेकगतिविलासेषु जयति सर्वोत्कर्षेण वर्तते । पतत्पतंगमुच्चलंतं कंदुकम् । बृहतोः स्तनयोर्भाराद्भीतं तव कृशं मध्यं विषीदति श्राम्यति शांता मंथरेव प्रसरति सुशिखासमूहः शोभनः केशकलापस्ते पाठांतरे सुशिखाः शोभनान्केशानवकीर्यमाणान्समूह बधानेति । अत्र चास्तं गच्छन्सूर्य एव पतत्पतंगः मेघविच्छेदो मध्यविषादः तारका रूपा दृष्टिः तम एव केशा इत्यायूह्यम् ॥ ३६ ॥ प्रमदेवाचरंतीं स्त्रियं मत्वा जगृहुः ॥ ३७ ॥ प्रहस्यात्मानमात्मना जिघ्रंत्या कांत्या सौंदर्येण प्रहसनमात्मावघ्राणं

नीलालकवरूथं समूहः धर्मावतारत्वाच्छिङ्गाररसमग्नो मा भवेत्यभिप्रायः ॥ ३० ॥ ३१ ॥ विभावना विशिष्टभावना काममोहप्रलापः । इवेन वस्तुतः सकामेत्युक्तम् ॥ ३२ ॥ वितर्कयंतः किमियमस्मास्वेवानुरागिणी अन्यत्र वा देवी मानुषी वा वृषस्यंती ब्रह्मचारिणी वेत्येवं विमृशंतः ॥ ३३ ॥ यद्वा । दुर्भगान् त्वद्दास्यानर्हानपि विबाधसे बद्ध्वा स्वसंग एव जिघृक्षसि । यद्वा । विबाधसे न क्रीणासि धिगस्मान्दुर्भगानिति भावः ॥ ३४ ॥ तद्दर्शनमेव परं मन्यमाना आहुः–किं जातीत्यादि । अबल इति । विपरीतलक्षणया प्रबल इत्यर्थः ॥ ३५ ॥ जयतेः स्थिरार्थाप्रसिद्धेराह–यद्वेति । पाठांतरे 'सुशिखाः समूह' इत्येवं पाठे उक्तार्थं गमयितुमाह । अत्र च संध्यापक्षे ॥ ३६ ॥ संध्या हि कामिनां स्त्रीस्फूर्त्तिं करोति ततश्च तेषां तस्यां स्फुरंती स्त्री तदभेदेन तैरवगता मुनींद्रेणापि वर्णितेति ज्ञेयमित्याह–इतीति ॥ ३७ ॥ यदा ब्रह्मणः सौंदर्यं स्मृतिपथमागतं तदा ततो गंधर्वाद्या बभूवुस्तच्च सौंदर्यं ज्योत्स्नीभूतं त एव जगृहुरित्याह-प्रहस्येति । सौंदर्यविषयको योऽनुभावः सूचनं

विससर्ज तनुं तां वै ज्योत्स्नां कांतिमतीं प्रियाम् ॥ त एव चाददुः प्रीत्या विश्वावसुपुरोगमाः ॥ ३९ ॥ सृष्ट्वा भूतपिशाचांश्च भगवानात्मतंद्रिणा ॥ दिग्वाससो मुक्तकेशान्वीक्ष्य चामीलयद् दृशौ ॥४०॥ जगृहुस्तद्विसृष्टां तां जृम्भणाख्यां तनुं प्रभोः ॥ निद्रामिंद्रियविक्लेदो यया भूतेषु दृश्यते ॥ येनोच्छिष्टान्धर्षयंति तमुन्मादं प्रचक्षते ॥ ४१ ॥ ऊर्जस्वंतं मन्यमान आत्मानं भगवानजः ॥ साध्यान्गणान्पितृगणान्परोक्षेणाऽसृजत्प्रभुः ॥ ॥ ४२ ॥ त आत्मसर्गं तं कायं पितरः प्रतिपेदिरे ॥ साध्येभ्यश्च पितृभ्यश्च कवयो यद्वितन्वते ॥ ४३ ॥ सिद्धान्विद्याधरांश्चैव तिरोधानेन सोऽसृजत् ॥ तेभ्योऽददात्तमात्मानमंतर्धानाख्यमद्भुतम् ॥ ४४ ॥ स किन्नरान्किंपुरुषान्प्रत्यात्म्येनासृजत्प्रभुः ॥ मानयन्नात्मनाऽऽत्मानमात्माभासं विलोकयन् ॥ ४५ ॥ ते तु तज्जगृहू रूपं त्यक्तं यत्परमेष्ठिना ॥ मिथुनीभूय गायंतस्तमेवोषसि कर्मभिः॥४६॥देहेन वै भोगवता शयानो बहुचिंतया ॥ सर्गेऽनुपाचिते क्रोधादुत्ससर्ज ह तद्वपुः ॥४७॥ येऽहीयंताऽमुतः केशा अहयस्तेंग जज्ञिरे ॥ सर्पाः प्रसर्पत क्रूरा नागा भोगोरुकंधराः ॥४८॥

च सौंदर्यानुभावचातुर्यविकारः ॥ ३८ ॥ ज्योत्स्नां चंद्रिकारूपाम् । त एव गंधर्वादिगणाः विश्वावसुः पुरोगमो मुख्यो येषु ॥ ३९ ॥ आत्मनस्तंद्रिणा आलस्येन तांश्च मुक्तकेशान्वीक्ष्य नेत्रे निमीलितवान् ॥ ४० ॥ इंद्रियाणां विक्लेदः स्रावो यया तां निद्रां प्रचक्षते येनेंद्रियविक्लेदेन हेतुनोच्छिष्टांश्च सतो धर्षयंति भ्रांतान्कुर्वंति तं भूतादिगणमुन्मादं प्रचक्षते तंद्रा जृंभिका निद्रोन्मादहेतुत्वेन भूतादीनां तनूनां च चातुर्विध्यमुक्तम् ॥४१॥ ऊर्जस्वंतं बलवंतम् परोक्षेणादृश्यरूपेण ॥४२॥ आत्मनः सर्गो यस्मात्तम् येन कायेन संप्रदानत्वनिमित्तेन कवयः कर्मकोविदाः साध्येभ्यः पितृभ्यश्च स्वपितृरूपेभ्यः वितन्वते श्राद्धादिना हव्यं कव्यं च ददति ॥ ४३ ॥ तिरोधानेन दृश्यत्वे सत्यप्यंतर्धानशक्त्या ॥ ४४ ॥ प्रत्यात्म्येन प्रतिबिंबेन देहेन आत्माभासं प्रतिबिंबमात्मनाऽऽत्मनो मानः प्रतिबिंबदर्शिनः सुंदरस्य शिरः कंपादिचेष्टा अत एव तत्सृष्टानां मिथः संमाननेन नित्यं मिथुनीभावः ॥ ४५ ॥ तत्प्रतिबिंबरूपम् । कर्मभिस्तत्पराक्रमानुवर्णनैः ॥ ४६ ॥ भोग आभोगो विस्तारः पादादिप्रसरणं तद्वता देहेन अनुपचिते वृद्धिमप्राप्ते तद्भोगक्रोधादियुक्तम् ॥ ४७ ॥ अमुतोऽमुष्माद्देहाद्ये केशा अहीयंत प्रच्युतास्तेऽहयो जाताः प्रसर्पतः पादाद्याकुंचनैः प्रचलतोऽमुष्मात्सर्पाः

तद्विषयकं यच्चातुर्यं तत्सूचको विकारः सौंदर्यानुभावचातुर्यविकारः सौंदर्यास्वादचिह्नानीत्यर्थः । भावगंभीरं व्यंजिताभियोगं यथा स्यात्तथा प्रहस्य । कांत्या कांतिमत्या कांतिकांतिमतोरभेदोपचारात् ॥ ३८ ॥ ३९ ॥ कदाचिद्ब्रह्मण आलस्यमभूत्ततो भूतप्रेताद्या बभूवुः तच्चालस्यं जृंभानिद्रारूपतां प्राप्तं त एव जगृहुरित्याह-सृष्ट्वेति । दिग्वाससो नग्नान् ॥ ४० ॥ उन्मादमित्युक्तेः भूतप्रेतादिधर्षिता जनाः उन्मत्ता इत्युच्यंते ॥ ४१ ॥ कदाचिद्धातात्मनो बलिष्ठत्वं पारोक्ष्यं च भावयामास ताभ्यां च साध्याः पितरश्च बभूवुरित्याह—द्वाभ्यामूर्जस्वंतमिति ॥ ४२ ॥ ४३ ॥ ४४ ॥ अत एवात्ममाननादेव । तत्सृष्टानां प्रतिबिंबसृष्टानाम् ॥ ४५ ॥ तमेव स्रष्टारमेव। उषसि प्रत्यूषे ॥ ४६ ॥ बहुचिंतयेति । कथं मे सृष्टिस्सिध्येदिति भावनया ततश्च चिंतामध्य एव कश्चिदविवेकोऽभूत् यतो महान् क्रोधो बभूव क्रोधानंतरं तद्वपुरुत्ससर्जेति ॥ ४७ ॥ अत एव पादाद्याकुञ्चनैः

स आत्मानं मन्यमानः कृतकृत्यमिवात्मभूः ॥ तदा मनून्ससर्जांते मनसा लोकभावनान् ॥ ४९ ॥ तेभ्यः सोऽत्यसृजत्स्वीयं पुरं पुरुषमात्मवान् ॥ तान्दृष्ट्वा ये पुरा सृष्टाः प्रशशंसुः प्रजापतिम् ॥५०॥ अहो एतज्जगत्स्रष्टः सुकृतं बत ते कृतम् ॥ प्रतिष्ठिताः क्रिया यस्मिन्साकमन्नमदाम हे ॥ ५१ ॥ तपसा विद्यया युक्तो योगेन सुसमाधिना ॥ ऋषीनृषिर्हृषीकेशः ससर्जाभिमताः प्रजाः ॥ ५२ ॥ तेभ्यश्चैकैकशः स्वस्य देहस्यांशमदादजः ॥ यद्यत्समाधियोगर्द्धितपोविद्याविरक्तिमत् ॥ ५३ ॥ इति श्रीमद्भागवते तृतीयस्कंधे विंशतितमोऽध्यायः ॥ २० ॥ विदुर उवाच ॥ स्वायंभुवस्य च मनोर्वंशः परमसंमतः ॥ कथ्यतां भगवन्यत्र मैथुनेनैधिरे प्रजाः ॥ १ ॥ प्रियव्रतोत्तानपादौ सुतौ स्वायंभुवस्य वै ॥ यथाधर्मं जुगुपतुः सप्तद्वीपवतीं महीम् ॥ २ ॥ तस्य वै दुहिता ब्रह्मन्देवहूतीति विश्रुता ॥ पत्नी प्रजापतेरुक्ता कर्दमस्य त्वयाऽनघ ॥ ३ ॥

अत एव अगा न भवंतीति नागाः अतिवेगवंत इत्यर्थः । भोगवतो जातत्वाद्भोगेन फणेनोरुर्विस्तीर्णा कंधरा येषाम् । सर्वे चैते तत्क्रोधयोगात्क्रूराः तेषामवांतरजातिभेदः सर्पसिद्धांते प्रसिद्धः ॥ ४८ ॥ यदा मन्यमानोऽभूत्तदा मनून्ससर्ज ॥ ४९ ॥ तेभ्यः स्वीयं पुरुषं पुरुषाकारं पुरं देहमत्यसृजद्ददौ तान्मनून् ॥ ५० ॥ ते त्वया यत्कृतं तत्सुकृतम् । सुकृतत्वमाहुः । यस्मिन्मनुसर्गे क्रिया अग्निहोत्राद्याः । अतोऽस्मिन्सर्वे वयं साकं सहान्नं हविर्भागायदाम भक्षयाम हे ब्रह्मन् ॥ ५१ ॥ कायसृष्टिमुक्त्वा ऋषीणां सृष्टिमाह । तपसेति । विद्या उपासना योगोऽत्रासनादिः सुसमाधिर्वैराग्यैश्वर्यादियुक्तः समाधिः तेन च युक्तः हृषीकेशः स्ववशेंद्रियः सन् ऋषिर्ब्रह्मा ऋषीन्प्रजाः ससर्ज ॥ ५२ ॥ किं तद्देहं यस्यांशमदादित्यत आह । यदिति । समाधिश्च योगश्च ऋद्धिश्च ऐश्वर्यं तपश्च विद्या च विरक्तिश्च विद्यंते यस्मिंस्तत् ॥ ५३ ॥ इति तृतीयस्कंधे टीकायां विंशोऽध्यायः ॥ २० ॥ एकविंशे तपोविद्यातोषितेन तु विष्णुना ॥ कर्दमस्य मनोः पुत्र्या विवाहघटनोच्यते ॥ १ ॥ एधिरे एधांचक्रिरे ॥ १ ॥ धर्मं महीं च यथा जुगुपतुः ररक्षतुस्तन्मे वदेति तृतीयेनान्वयः ॥ २ ॥ तस्य मनोः ॥ ३ ॥

प्रचलनादेव । इत्यर्थ इति । न गच्छन्तीत्यगाः । न अगा नागा नञर्थेन नशब्देन 'सुप्सुपा' इति समासे रूपसिद्धेरयमर्थो लब्धः इति भावः । सर्पसिद्धांताख्यग्रंथे ॥ ४८ ॥ चिंतानंतरं सृष्टिर्मे पूर्णैव समपद्यतेति मनसि मिथुनं सिसृक्षतस्तस्य यदानंदो जातस्तस्मान्मनवो बभूवुस्ते च सृष्टिमूर्तिमयीं पुरुषाकारतां जगृहुरित्याह—स इति । मनूनिति तेषु तदा स्वायंभुवो मनुः प्रकटः सर्वैर्दृश्यतान्ये च यथासमयं सर्वे दृश्या इति ज्ञेयम् । अत्रांतेति पदोपन्यासान्मनुसर्गोऽयं सर्वांतिमो ज्ञेयः । अत एतदनंतरं वक्ष्यमाणोऽप्यृषिसर्ग एतत्पूर्व एव ज्ञेयः । अत्र दशमद्वादशविंशाध्यायेषु कचित्क्रमेण कचिन्मंडूकप्लुतिसिंहावलोकादिन्यायात्क्रमातिक्रमेणाप्युक्तानां सर्गाणामयं क्रमो ज्ञेयः । प्रथमं पञ्चपर्वाविद्यासर्गस्ततो वनस्पतिवृक्षादिसर्गस्ततस्सर्पादिसर्गस्ततो गोमहिष्यादिसर्गस्ततो यक्षराक्षसासुरकिन्नरकिंपुरुषादिसर्गस्ततश्च सनकादिमरीच्यादिसर्गस्ततो मनुष्यसर्गः सर्वांते मनुसर्गस्ततः पूर्वसृष्टोऽपि स्त्रीपुंसरूपेण वर्द्धते स्मेति ॥ ४९ ॥ ५० ॥ एतन्मनुसृष्टिरूपं ते कृतं कर्म सुकृतं शोभनमस्ति प्रतिष्ठिता भवेयुस्तैर्मनुभिः पालनादिति भावः । यत एतत्सर्गोऽग्निहोत्रादिपालकोऽस्ति अतो हेतोः अस्मिन्मनुसर्गे। हे इति पृथक्पदम् ॥ ५१ ॥ ततो विद्यया युक्तस्य ब्रह्मणो मानुषीं सृष्टिमाह तपसेति । ऋषीन्सनकादीन्मरीच्यादींश्च ॥५२॥ तेभ्य ऋषिभ्यः यत्समाध्यादिमत्तददादित्यन्वयः ॥ ५३ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे विंशोऽध्यायः ॥ २० ॥ घटना रचना ॥ (१) ॥ परमसंमतोऽतीवश्रेष्ठः । एधिरे एधांचक्रिरे आर्षत्वादाम्न ॥ १ ॥ २ ॥ तस्य मनोः । देवहूती देवहूतिरत्र ङीबार्षः । कचित् 'देवहूतिरिति

तस्यां स वै महायोगी युक्तायां योगलक्षणैः ॥ ससर्ज कतिधा वीर्य तन्मे शुश्रूषवे वद॥४॥रुचिर्यो भगवान्ब्रह्मन् दक्षो वा ब्रह्मणः सुतः॥यथा ससर्ज भूतानि लब्ध्वा भार्यां च मानवीम् ॥५॥ मैत्रेय उवाच ॥ प्रजाः सृजेति भगवान्कर्दमो ब्रह्मणोदितः॥सरस्वत्यां तपस्तेपे सहस्राणां समा दश॥६॥ ततः समाधियुक्तेन क्रियायोगेन कर्दमः ॥ संप्रपेदे हरिं भक्त्या प्रपन्नवरदाशुषम् ॥ ७ ॥ तावत्प्रसन्नो भगवान्पुष्कराक्षः कृते युगे ॥ दर्शयामास तं क्षत्तः शाब्दं ब्रह्म दधद्वपुः ॥ ८ ॥ स तं विरजमर्काभं सितपद्मोत्पलस्रजम् ॥ स्निग्धनीलालकव्रातवक्त्राब्जं विरजांबरम् ॥ ९ ॥ किरीटिनं कुण्डलिनं शंखचक्रगदाधरम् ॥ श्वेतोत्पलक्रीडनकं मनःस्पर्शस्मितेक्षणम् ॥ १० ॥ विन्यस्तचरणांभोजमंसदेशे गरुत्मतः ॥ दृष्ट्वा खेऽवस्थितं वक्षःश्रियं कौस्तुभकंधरम् ॥ ११ ॥ जातहर्षोऽपतन्मूर्ध्ना क्षितौ लब्धमनोरथः ॥ गीर्भिस्त्वभ्यगृणात्प्रीतिस्वभावात्मा कृतांजलिः ॥ १२ ॥

योगलक्षणैर्यमादिभिर्युक्तायाम् । कतिधा वीर्यं ससर्ज कति पुत्रानुत्पादयामासेत्यर्थः ॥ ४ ॥ मानवीं मनोः कन्यामाकूतिं च प्रसूतिं च भार्यां लब्ध्वा यथा भूतानि ससर्ज तच्च वदेति चकारस्यार्थः ॥ ५ ॥ सहस्राणां समा दश दशसहस्राणि संवत्सरानित्यर्थः ॥ ६ ॥ ततस्तस्मिंस्तपसि क्रियायोगेन पूजाप्रकारेण संप्रपेदे सिषेवे प्रपन्नेभ्यो भक्तेभ्यो वरदातारम् ॥ ७ ॥ शब्दैकवेद्यं यद्ब्रह्म तन्मयं वपुर्दधत्त प्रत्यात्मानं दर्शयामास ॥ ८ ॥ स कर्दमस्तं खेऽवस्थितं दृष्ट्वा मूर्ध्ना क्षितावपतत् । गीर्भिश्चाभ्यगृणादिति चतुर्णामन्वयः । पद्मोत्पले दिनरात्रिविकासे सितानां पद्मानामुत्पलानां च स्रक् यस्य तम् । स्निग्धा नीलाश्च येऽलकास्तेषां व्रातो वक्त्राब्जे यस्य ॥ ९ ॥ श्वेतोत्पलं क्रीडनकं यस्य मनःस्पर्शि मनस्यानंदजनकं स्मितमीक्षणं च यस्य तम् ॥ १० ॥ वक्षसि श्रीर्यस्य कौस्तुभः कंधरायां यस्य ॥ ११ ॥ प्रीतिरेव स्वभावः स्वतः सिद्धोधर्मो यस्य तथाविध आत्मा मनो यस्य ॥ १२ ॥

श्रुता, इत्यपि पाठः । अनघेति । दर्शनादिना पापनिवर्त्तकोऽसीत्याह॥३॥तस्यां देवहूत्याम् । स कर्दमः । इत्यर्थ इति । पुत्रानपत्यानीति भावः । पुत्रपदं स्वामिचरणैरुपलक्षणत्वेनोपन्यस्तमत्रेति ज्ञेयम् ॥४॥५॥ अत्र मनुपुत्रयो श्चरितस्यादौ वक्तव्यत्वेऽपि सूचीकटाहन्यायेन देवहूतिचरिताविनाभूतं कर्दमचरितं वक्तुमुपक्रमते-प्रजा इति । इत्यर्थ इति । समा दशेति ''कालाध्वनोरत्यंतसंयोगे'' इति द्वितीयेति भावः । बहुत्वमार्षं 'विंशत्याद्याः सदैकत्वे' इत्युक्तेः॥६॥तत इति सप्तम्यर्थे तसिल् । अत उक्तं तस्मिंस्तपसीति स्वामिचरणैः॥७॥तावदिति । यावत्संप्रपेदे तावदिति । सति पूजने तत्प्रसादोऽविलंबेनैवास्तीति सूचितम् । तन्मयं चिद्घनं न तु मायिकभौतिकमिति॥८॥ स कर्दमः । विगतं रजो भक्तानां यैः कर्मभिस्तानि विरजानि अदन्तत्वमार्षम् । तादृशानि कर्माणि यस्य तम् ॥९॥ शंखादित्रयोक्तेश्चतुर्थे हस्ते श्वेतोत्पलमेव धृतं कंजस्थान इति ज्ञेयम्॥१०॥ गरुत्मतं इत्युक्तेर्विनतापुत्रत्वं

ऋषिरुवाच ॥ जुष्टं बताऽद्याऽखिलसत्त्वराशेः सांसिद्ध्यमक्ष्णोस्तव दर्शनान्नः॥ यद्दर्शनं जन्मभिरीड्य सद्भिराशासते योगिनो रूढयोगाः॥१३॥ ये मायया ते हतमेधसस्त्वत्पादारविंदं भवसिंधुपोतम् ॥ उपासते कामलवाय तेषां रासीश कामान्निरयेऽपि ये स्युः ॥ १४ ॥ तथा स चाहं परिवोढुकामः समानशीलां गृहमेधधेनुम् ॥ उपेयिवान्मूलमशेषमूलं दुराशयः कामदुघांघ्रिपस्य ॥ १५ ॥ प्रजापतेस्ते वचसाऽधीश तंत्या लोकः किलाऽयं कामहताऽनुबद्धः ॥ अहं च लोकानुगतो वहामि बलिं च शुक्लाऽनिमिषाय तुभ्यम् ॥ १६ ॥

त्वामृते परमानंदं धिगन्यवरकामुकम् ॥ अथापि कृपणं मानुगृहाण वरदानतः ॥ १ ॥ बतेति हर्षे । हे ईड्य नोऽस्माभिः समग्रसत्त्वनिधेस्तव दर्शनादद्याक्ष्णोः सांसिध्यं साफल्यं जुष्टं सेवितम् । त्वद्दर्शनमेव महाफलमित्युपपादयति । यस्य तव दर्शनं सद्भिरुत्तरोत्तरमापादितप्रकर्षैर्जन्मभी रूढो विरूढो योगो यैस्तेऽपि ॥ १३ ॥ सकामभक्तान्विगर्हयन्नाह य इति । हे ईश ये निरयेऽपि स्युस्तेषां कामानां लवाय ये त्वन्मायया नष्टबुद्धयस्त एवोपासते त्वं तु तेषां तान्कामानपि रासि ददासि ॥ १४ ॥ यः सकामान्निंदामि सोऽहमपि तादृश एवेत्याह । तथेति । गृहमेधो गृहाश्रमस्तत्र धेनुं त्रिवर्गदोग्ध्रीं भार्यां परिवोढुकामः परिणेतुमिच्छन्कामदुघांघ्रिपस्य कल्पद्रुमस्य तव मूलमंघ्रिमुपेयिवानुपगतोऽस्मि । ननु कामाद्यर्थमन्यत्किमप्युपास्यतां न यतोऽशेषस्य पुरुषार्थस्य मूलमेतदेव ॥ १५ ॥ ननु तर्हि मुक्त्यर्थमेव किं न भजसि अनधिकारादित्याह । हे अधीश यस्त्वं प्रजापतिस्तस्य तव वचसा तंत्या अयं कामहतो लोकः पशुवद्बद्धः हे शुक्ल शुद्धधर्ममूर्तेऽहं च किल लोकानुगतोऽतस्तुभ्यं बलिं वहामि कममर्थी त्वदाज्ञामनुवर्ते आनिमिषाय कालात्मने तदर्थं भार्यां चेच्छामीति चकारस्यार्थः । न केवलं लोकानुगतो

गरुडस्य निरस्तं तदानीं विनताजन्माभावादिति संदर्भः ॥ ११ ॥ १२ ॥ सकामत्वं विनिंद्यापि कृपणत्वात्तदेवाशास्त इत्याह-त्वामिति । अथापि त्वदन्यकामस्यायोग्यत्वे पि ( १ ) इतः पूर्वमक्षिणी अप्यनक्षिणी एवास्तामिति भावः । तेऽपीति । आशासत इच्छंत्येव न तु लब्धमिति भावः । ईड्येति । मत्तस्त्वद्दर्शनोपयोगि किञ्चिदपि नो जातं तथापि दर्शनं दत्तमतो धन्योसीत्यभिप्रायः॥ १३ ॥ हे ईश सर्वसंपादनसमर्थ हंतहंत एवं कृपासमुद्रमपि त्वां सकामतया भजंत्यहो लोकानां मौढ्यमित्याह । ये तव मायया हतबुद्धयो भवंति त एव नान्ये । कामलवाय कामलेशं प्राप्तुमुपासते त्वं तु तेषां कामान् बहूनेवाकामितानपि रासि ददासि अन्यथा भक्तिसुखानभिज्ञाने त्वद्भक्तिमपि त्यक्तुं नैव विलंबेरन्निति भावः । भक्तेस्त्यागे तु काले तेऽपि निष्कामा भवेयुरेवेत्याशयेन ददासि न तु तद्दान एव तात्पर्यं यतस्ते कलत्रपुत्रकुटुंबैश्वर्याद्याः कामा निरये नारक्यामपि योनौ स्युः । किन्तु स्वर्गनरकयोः कर्मजन्यत्वनियमनात् । त्वद्भक्तानां तु-तादृशानामपि भोगानां कर्मजन्यत्वाभावेन बंधकत्वाभावात् । नैव वस्तुतः स्वर्गनरकशब्दव्यपदेशस्तदपि तत्तुल्यत्वात्तथोक्तिरिति ज्ञेयम् ॥ १४ ॥ धेनुपदेन स्वस्य निर्बुद्धित्वाद्वृषत्वमुक्तम् । किञ्च । सकामेष्वप्यहं दुराशयः दुरभिप्रायत्वादतिदुर्बुद्धिरिति । अत्राक्षिपति-नन्विति।अशेषाः सर्वे पदार्था मूले तले यस्य तत् । "स्वर्गापवर्गयोः पुंसां रसायां भुवि संपदाम् । सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम्" ॥ इत्युक्तेः ॥ १५ ॥ पुनराक्षिपति—नन्विति । एवं विवेकश्चेत्तर्हि निष्काम एव कथं न भजसीत्यत आह—प्रजापतेर्ब्रह्मणस्तव त्वदीयस्य । प्रजाः सृजेति वचसा तंत्या लोको मरीच्यादिः "सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः । अनेन प्रसविष्यध्वम्" इति श्रीगीतोक्तेश्च । सोपि त्वदाज्ञानुसारेणैव वक्ति न तस्यापि दोष इति ते पदध्वनिः । ननु कामहतो लोकोऽनुरक्तो भवतु नाम

लोकांश्च लोकानुगतान्पशूंश्च हित्वा श्रितास्ते चरणातपत्रम् ॥ परस्परं त्वद्गुणवादशीधुपीयूषनिर्यापितदेहधर्माः ॥ १७ ॥ न तेजराक्षभ्रमिरायुरेषां त्रयोदशारं त्रिशतं षष्टिपर्व ॥ षण्नेम्यनंतच्छदि यत्रिणाभि करालस्रोतो जगदाच्छिद्य धावत् ॥ १८ ॥ एकः स्वयं सञ्जगतः सिसृक्षया द्वितीययात्मन्नधियोगमायया ॥ सृजस्यदः पासि पुनर्ग्रसिष्यसे यथोर्णनाभिर्भगवान्स्वशक्तिभिः ॥ १९ ॥

बलिं वहामि किं तु ऋणत्रयापाकरणार्थमिति किलेत्युक्तम् ॥ १६ ॥ अनिमिषायेत्यनेन कालात्मकात्त्वत्तो भीतः कर्म करोमीत्युक्तमेतत्तु भयं त्वद्भक्तानां नास्तीत्याह द्वाभ्याम् । लोकान्कामाभिभूतांस्ताननुसृतान्पशूंश्च विवेके सत्यपि पुनः कर्मजडान्मादृशान्हित्वा अनादृत्य ये तव चरणरूपमातपत्रं श्रिताः । तानेवाह । त्वद्गुणानां वादः कथा तदेव सीधु मदिरा संसारविस्मारकत्वात् । पीयूषं रुचिकरत्वात् । तेन निर्यापिता विलापिता देहधर्माः क्षुत्पिपासादयो यैः । एषामित्युत्तरेणान्वयः ॥ १७ ॥ तव यत्रिणाभि कालचक्रं तज्जगदाच्छिद्याकृष्य धावदपि एषां त्वद्भक्तानामायुराच्छिद्य धावन्न भवति । कथंभूतम् । अजरं ब्रह्म तस्मिन्नक्षरूपे भ्रमिर्भ्रमणम् । भ्रमदिति वक्तव्येऽतिभ्रमणशीलत्वादुपचारेण भ्रमिरित्यभेदनिर्देशः । अधिकमासेन सह त्रयोदशमासा अरा यस्य । त्रिशतं षष्टिश्चाहोरात्राः पर्वाणि यस्य । शतशब्दे विभक्ते रलुगार्षः । षड् ऋतवो नेमयो यस्य । अनंताः क्षणलवादयश्छदाः पत्राणि पत्राकारा धाराः. संति यस्य । त्रीणि चातुर्मास्यानि नाभय आधारभूतानि वलयानि यस्य । करालस्रोतस्तीव्रवेगम् । एतैर्विशेषणैरेव संवत्सरात्मकं चक्रमुक्तमिति द्रष्टव्यम् ॥ १८ ॥ ननु निरुपाधिमुदासीनं मां किं याचसे तथाऽपि मायया विश्वसृष्ट्यादिकतृत्वात्त्वमेव याच्य इत्याह । स्वयमेक एव सन्नप्यात्मन्यधिकृतया योगमायया हेतुभूतया याः

त्वं त्वकामहतः कथं सनकादिवत्तन्नातिक्रामसि तत्राह—अहं च लोकानुगतस्तदनुसारिबुद्धिर्न तु नारदादिसदृशो भवितुं समर्थ इत्यर्थः । अतस्तंत्या बद्धो वृष इव बलिं वहामि कर्ममयीं त्वदाज्ञामनुवर्त्ते तदर्थमेकां भार्यामिच्छामीत्यर्थः । चकारात्त्वद्भक्तिश्च करोम्यायत्यां त्वत्प्राप्त्यर्थमिति भावः । हे शुक्ल सर्वदोषविनिर्मुक्तत्वात्त्वं मादृशमपि शुक्लीकर्त्तुं समर्थोऽसीत्यभिप्रायः । अनिमिषाय कालरूपं त्वां प्रसादयितुमित्यर्थमाह विश्वनाथः । ॥ १६ ॥ ननु लोकाः पित्रादयस्तदाज्ञानुवर्त्तिनः पुत्रभ्रात्रादयश्च लोकतो धर्मतश्च यशस्विनः सुखिनश्च दृश्यंते किमिति तान्सकामत्वान्निन्दसि, पित्रादीन्दुःखयतां निष्कामभक्तानां निष्परिग्रहाणां कि सुखं किं वा यशो यतस्तानभिनंदसीति तत्राह-द्वाभ्याम् । लोकानिति । पशूनिति । तेषां पशुत्वात्तत्त्यागे दोषो नास्तीति भावः । यद्वा । लोकान्न्यायमीमासादिशास्त्राभिज्ञान् तदनुगतांस्तदुपदेशवाक्येषु विश्वसतः शास्त्रानभिज्ञान् । तेषामुभयेषामपि पशुत्वं भक्तिराहित्यात् । चरणमेवातपत्रमाश्रिता इति । निरातपत्राः पशवस्तु जाज्वलंत एवेति भावः । तेषां सुखमपरमप्याह—त्वद्गुणानां वादः कथनमेव संसारविस्मारकत्वाच्छीधु मृत्युदूरीकरणादतिस्वादुत्वाच्च पीयूषं तेनैव तत्पानेनव निर्यापिता देहधर्मा बाल्यपौगंडादयः क्षुत्पिपासादयो वा यैस्ते भवंतीति क्रिययान्वयः ॥ १७ ॥ उपचारेण गौण्या वृत्त्या ॥ १८ ॥ नन्वेवं निष्कामभक्तानेव धन्यान्ब्रूषे अथ च निष्कामो भवितुं न शक्नोसि तर्ह्यन्यस्मादेवतांतराच्छीघ्रफलप्रदात्कथं स्वकामं न साधयसीति चेत्त्वां विना जगत्यन्यं कमप्यहं न पश्यामीत्याह । स्वामिचरणैरप्येतदभिप्रायेणैवोक्तम् 'निरुपाधिमुदासीनं मां कथम्' इत्यादि । इच्छाया द्वितीयत्वाभावादद्वितीयया सिसृक्षया "एकोऽहं बहु स्याम्" इति श्रुत्युक्तया आत्मनि अधिगतः प्राप्तो योग ईक्षणयोगाद्यस्यास्तया मायया । यद्वा । योगमायया चिच्छक्त्या । यथेति । अतस्त्व

**नैतद्धताऽधीश पदं तवेप्सितं यन्मायया नस्तनुषे भूतसूक्ष्मम् ॥ अनुग्रहायाऽस्त्वपि यर्हि मायया लसत्तुलस्या तनुवा विलक्षितः ॥ २० ॥**

स्वीकृताः शक्तयः सत्त्वाद्यास्ताभिः । अदो विश्वम् । स्वव्यतिरिक्तसाधनानपेक्षत्वे दृष्टांतः । यथेति ॥ १९ ॥ यद्यपि मायिकत्वाद्भक्तेभ्यो विषयसुखं दातुं नेच्छसि तथाऽप्यस्मदभिप्रायानुसारेण तत्संपादयेत्याह । नैतदिति । हे अधीश नोऽस्माकं भजतां भूतसूक्ष्मरूपं पदं शब्दादिविषयसुखं मायया तनुषे विस्तारयसीति यदेतत्तव यद्यपीप्सितं न भवति तथाऽप्यस्मदनुग्रहायास्तु ऋणत्रयापाकरणानंतरमेवापवर्गाय भवत्वित्यर्थः । यर्हि यतो मायया परिच्छिन्नमिव लसंत्या तुलस्या

द्भिन्नदेवतांतराभावात्सकामेनापि मया त्वमेव सेव्यस इति भावः ॥ १९ ॥ एवं चेत्तर्हि मत्प्रसादात्तव कलत्रापत्यभोगैश्वर्याणि परमोत्तमानि भवंत्विति वरं ददानं भगवंतं सप्रणाममाह—नैतदिति द्वाभ्यां-हे अधीश एतत्पदं मत्काम्यमानं वस्तु तव स्वभक्तमात्रहितकारिणे दातुमीप्सितं न भवति "न राति रोगिणोऽपथ्यं वाञ्छतोऽपि भिषक्तमः" इति त्वदुक्तेरवसीयते इति भावः । कथं तर्हि ददासीति तत्राह—यद्यस्मान्नोऽस्मभ्यं भूत सूक्ष्मं शब्दादींद्रियभोग्यं विषयसुखं तनुषे ददासि तत्खलु माययैव न त्वमायया अनभिज्ञभक्तोयमन्यथा विमनस्को भविष्यतीति मदनुरोधेनैवेत्यर्थः । वासनामयं विषयसुखमंतःकरणे वर्त्तत एव तदेव वरदानेन विस्ता रयसीति तनुधात्वर्थः । नन्वेवं चेत्तर्हि न ददासीति तत्राह—अनुग्रहायास्तु दीयमानमेतदस्तु । किं त्वनुग्रहायापि हंतहंत मयैव दत्तेन विषयसुखवरेण भक्तोऽयमंधे तमसि पातितस्तादिममुद्धरामीत्यायत्यां त्वत्कृपाप्राप्त्यर्थ मप्यस्त्वित्यर्थः । तत्र लिंगं तर्हि बरदानसमये संप्रति विलक्षितो विशेषेण त्वं दृष्टस्तर्हि मायया कृपया 'मनःस्पर्शस्मितेक्षणम्' इत्युक्तेः स्मितद्योतितकृपाकटाक्षेण विशिष्ट एव दृष्टस्तत्रापि लसंत्या भक्तजनैः सपर्यायां सम र्पितया दृष्टः परमसुखदया तुलस्या उपलक्षिता चिदानंदमयी या तनुस्तया युक्त इति भक्तपरिचरणीयत्वमेव तनोरमायिकत्वे लिंगम् । अमायिकतनुदर्शनप्रदानमेव कृपायां लिंगम् । 'भगवान्विलक्षित' इति पाठ एव श्रीध रसंमतः प्रतिभाति । तैस्तथैव तनूपदानुल्लेखेन लसंत्या तुलस्या युक्त इति व्याख्यातत्वात् । इत्यर्थ इति । "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः॥" इत्युक्तेरयं भावः । अत एव भगवता गौतमेनाप्युक्तम् । "ऋणक्लेशप्रवृत्त्यनुबंधादपवर्गाभावः" इति । सूत्रार्थस्तु-ऋणानुबन्धान्नास्त्यपवर्गः । जायमानो हि वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् जायते, ब्रह्मयज्ञेन ऋषिभ्यो, यज्ञेन देवेभ्यः, प्रजया पितृभ्य इति ऋणानि तेषामनुबन्धः स्वकर्मभिस्सम्बन्धः कर्मसम्बन्धवचनात् । "जरामर्यं वै एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ च" इति । "जरया ह एष तस्मात्सत्राद्विमुच्यते मृत्युना ह च" इति ऋणानुबंधादपवर्गा नुष्ठानकालो नास्तीत्यपवर्गाभावः । क्लेशानुबन्धान्नास्त्यपवर्गः क्लेशानुबद्धश्च जायते नास्य क्लेशानुबंधविच्छेदो गृह्यते । प्रवृत्त्यनुबंधान्नास्त्यपवर्गः जन्मप्रभृत्ययं यावत्प्रायणं वाग्बुद्धिशरीरारंभेणाविमुक्तो गृह्यते तत्र यदुक्तं "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनंतराभावादपवर्गः" इति तदनुपपन्नम् । अत्राभिधीयते यत्तावदृणानुबंधादिति ऋणैरिव ऋणैरिति सूत्रान्तरमाह । "प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादो निंदा प्रशंसोपपत्तेः" अस्यार्थः ऋणैरिति नायं प्रधानशब्दः यत्र स्वल्वेकः प्रत्यादेयं ददाति द्वितीयश्च प्रतिज्ञेयं गृह्णाति तत्रास्य दृष्टत्वात् प्रधानमृणशब्दः न चैतदिहोपपद्यते प्रधानशब्दानुपपत्तेर्गुणशब्देनायमनुवादः । ऋणैरिव ऋणैरिति प्रलुप्तोपमं चैतत् । अग्निर्माणवक इति । अन्यत्र दृष्टश्चायमृणशब्द इह प्रयुज्यते यथाऽग्निशब्दो माणवके कथं गुणशब्देनानुवादः निंदाप्रशंसोपपत्तेः । कर्मलोपे ऋणीव ऋणादानान्निन्द्यते । कर्मानुष्ठाने च ऋणीव ऋणदानात्प्रशस्यते । जायमान इति । गुणशब्दो विपर्ययेऽनधिकारात् । जायमानो ह वै ब्राह्मण इति च शब्दः । गृहस्थः संपद्यमानो जायमान इति यदा गृहस्थो जायते तदा कर्मभिरधिक्रियते मातृतो जायमानस्यानधिका रात् । यदा तु मातृतो जायते कुमारो न तदा कर्मभिरधिक्रियते "अर्थितः शक्तस्य चार्थी समर्थी विद्वान्यजेत्" इति श्रुतेः "अधिकारोर्थिन एव कर्मभिः" इति कर्मविधौ कामसंयोगस्मृतेः । "अग्निहोत्रं जुहुयात्स्वर्ग कामः" इत्येवमादिशक्तस्य च प्रवृत्तिसंभवात् । शक्तस्य कर्मभिरधिकारः प्रवृत्तिसंभवात् । शक्तः खलु विहिते कर्मणि प्रवर्त्तते नेतर इति । उत्तमाभावस्तु प्रधानपदार्थे मातृतो जायमाने कुमारे उभयमार्थिता शक्तिश्च न

---

१ मातृतो जाते ।

भवतीति । न भिद्यते लौकिकवाक्याद्वैदिकवाक्यं प्रेक्षापूर्वकारिपुरुषप्रणीतत्वेन तत्र लौकिकस्तावदपरीक्षकोपि न जायमानं कुमारमेवं ब्रूयादधीष्व यजस्व ब्रह्मचर्य्यं चरेति कुत एव ऋषिरुपपन्नानवद्यवादी उपदेशार्थेन प्रयुंक्त उपदिशति । न खलु वै नर्त्तकोंधेषु प्रवर्त्तते न गायनो बधिरेष्विति । उपदिष्टार्थविज्ञानं चोपदेशविषयः । यश्चोपदिष्टमर्थं जानाति तं प्रत्युपदेशः क्रियते न चैतदस्ति जायमानकुमारके इति । गार्हस्थ्यलिङ्गञ्च मंत्रब्राह्मणं कर्मा भिवदति । यच्च मंत्रब्राह्मणं कर्माभिवदति तत्पत्नीसम्बन्धिना गार्हस्थ्यलिङ्गेनोपपन्नं तस्माद्गृहस्थोयं जायमानोऽभिधीयते इति अर्थित्वस्य चाविपरिणामे जरामर्य्यवादोपपत्तिः । यावच्चास्य फलेनार्थित्वं न विपरिणमते न निव र्त्तते तावदनेन कर्मानुष्ठेयमित्युपपद्यते जरामर्य्यवादस्तं प्रतीति जरया हवेत्यायुषस्तुरीयस्य चतुर्थस्य प्रव्रज्यायुक्तस्य वचनं 'जरया ह वा एष एतस्माद्विमुच्यते' इति आयुषस्तुरीयं चतुर्थं प्रव्रज्यायुक्तं जरेत्युच्यते । तत्र हि प्रव्रज्या विधीयतेऽत्यंतजरासंयोगे जरया ह वेत्यनर्थकम् । अशक्तो विमुच्यते इत्येतदपि नोपपद्यते । स्वयमशक्तस्य बाह्यशक्तिमाह-अंतेवासी वा जुहुयाद्ब्रह्मणा सपरिक्रीतः क्षीरहोता वा जुहुयाद्ब्रनेन स परिक्रीत इति अथापि विहितं वानूद्येत कस्माद्वार्थः परिकल्प्येत विहितानुवचनं न्याय्यमिति ऋणवानिवास्वतंत्रो गृहस्थः कर्मसु वर्तत इत्युपपन्नं वाक्यस्य सामर्थ्यं फलस्य हि साधनानि प्रयत्नविषयो न तु फलं तानि संपन्नानि फलाय कल्प्यते विहितञ्च जायमानं विधीयते च जायमानं तेन यः संबध्यते सोऽयं जायमान इति प्रत्यक्षविधानाभावादिति प्रत्यक्षतो विधीयते गार्हस्थ्यं ब्राह्मणेन । यदि चाश्रमांतरमभविष्यत्तदपि व्यधास्यत प्रत्यक्षतः प्रत्यक्षविधानाभावान्नास्त्याश्रमांतरमिति न प्रतिषेधस्य प्रत्यक्षविधानाभावात् । न प्रतिषेधोपि ब्राह्मणेन प्रत्यक्षतो विधीयते न सन्त्याश्रमान्तराणि एक एव गृहस्थाश्रम इति प्रतिषेधस्य प्रत्यक्षतोऽश्रवणादयुक्तमेतदिति । अत्र सूत्रांतरमाह-"अधिकाराच्च विधानं विद्यांतरवत्" अस्यार्थः-यथा शास्त्रांतराणि स्वेस्वेऽधिकारे प्रत्यक्षतो विधायकानि नार्थांतराभावात् । एवमिदं ब्राह्मणं गृहस्थशास्त्रं स्वेधिकारे प्रत्यक्षतो विधायकं नाश्रमांतराणामभावा दिति । ऋग्ब्राह्मणं चापवर्गाभिधाय्यभिधीयते ऋचश्च ब्राह्मणानि चापवर्गाभिवादीनि भवन्ति ऋचश्च तावत्-"कर्मभिर्मृत्युमृषयो निषेदुः प्रजावंतो द्रविणमिच्छमानाः । अथापरे ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्व मानशुः ॥ न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः । परेण नाकं विहितं गुहायां विभ्राजते यद्यतयो विशंति ॥ वेदाहमेतं पुरुषं महांतमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वातिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय ॥" इति ॥ अथ ब्राह्मणानि-"त्रयो धर्मस्कंधा यज्ञोऽध्ययनं दानमिति । प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोत्यंतमात्मानमाचार्यकुलेऽवसादयत् सर्व एवैते पुण्यलोका भवंति ब्रह्मसंस्थोऽमृतत्व मेति एवमेव प्रव्राजितो लोकमभीप्संतः प्रव्रजंतीति अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तथा क्रतुर्भवति तथा तत्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते" इति कर्मभिस्संसरणमुक्त्वा प्रकृतमन्य दुपादेशति "इति तु कामयमानो योऽकामो निष्काम आत्मकामो भवति न तस्य प्राणा उत्क्रामन्ति इहैव समवलीयन्ते ब्रह्मैव सन्ब्रह्माप्येति" इति । तत्र यदुक्तमृणानुबन्धादपवर्गाभाव इत्येतदयुक्तमिति ये चत्वारः पथ यो देवयाना इति चातुराश्रम्यश्रुतेरैकाश्रम्यानुपपत्तिः फलार्थितश्चेदम् ब्राह्मणं "जरामर्य्यं ह वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ च" इति । कथमत्र सूत्रांतरमाह-"समारोपणादात्मन्यप्रतिषेधः" अस्यार्थः-प्राजापत्या मिष्टिं निरूप्य तस्यां सार्ववेदसं हुत्वात्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेदिति श्रूयते तेन विजानीमः प्रजावित्तलोकैषणायाश्च व्युत्थायाथ भिक्षाचर्य्यांचरंतीति एषणाभ्यो व्युत्थितस्य पात्रचयांतानि कर्माणि नोपपद्यन्त इति नाविशेषेण कर्त्तुः प्रयोजकफलं भवतीति चातुराश्रम्यविधानाच्च इतिहासपुराणधर्मशास्त्रेष्वैकाश्रम्यानुपपत्तिः तदप्रमाणमिति चेन्न, प्रमाणेन खलु ब्राह्मणेनेतिहासपुराणस्य प्रामाण्यमभ्यनुज्ञायते । ते वा खल्वेते अथर्वांगिरस एतदितिहासपुराणमभ्यवदत् इतिहासपुराणं पञ्चमो वेदानां वेद इति तस्मादयुक्तमेतदप्रामाण्यमिति । अप्रामाण्ये च धर्मशास्त्रस्य प्राणभृतां व्यवहारलोपाल्लोकोच्छेदप्रसंगः । द्रष्टृप्रवक्तृसामा न्याच्चाप्रामाण्यानुपपत्तिः । य एव मंत्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च त एव खल्वितिहासपुराणस्य धर्मशास्त्रस्य चेति विषयव्यवस्थानाच्च यथाविषयं प्रामाण्यम् । अन्यो मंत्रब्राह्मणस्य विषयोऽन्यश्चेतिहासपुराणधर्म शास्त्राणाम्, यज्ञो मंत्रब्राह्मणस्य, लोकवृत्तमितिहासपुराणस्य, लोकव्यवहारव्यवस्थानं धर्मशास्त्रस्य विषयः तत्रैकेन सर्वं व्यवस्थाप्यते इति यथाविषयमेतानि प्रमाणानि इंद्रियादिवदिति । यत्पुनरेतत्क्लेशानुबंधस्याऽनुच्छे दादिति तत्र सूत्रांतरमाह-"सुषुप्तस्य स्वप्नादर्शने क्लेशा भावादपवर्गः" । अस्यार्थस्तु-यथा प्रसुप्तस्य खलु रागानुबंधः सुखदुःखानुबंधश्च विच्छिद्यते तथाऽपवर्गेपीति । एतच्च ब्रह्मविदो मुक्तस्यात्मनो रूपमुदाहरंतीति ।

तं त्वाऽनुभूत्योपरतक्रियार्थं स्वमायया वर्तितलोकतंत्रम् ॥ नमाम्यभीक्ष्णं नमनीयपादसरोजमल्पीयसि कामवर्षम् ॥ २१ ॥ ऋषिरुवाच ॥ इत्यव्यलीकं प्रणतोऽब्जनाभस्तमाबभाषे वचसाऽमृतेन ॥ सुपर्णपक्षोपरि रोचमानः प्रेमस्मितोद्वीक्षणविभ्रमद्भ्रूः ॥ २२ ॥ श्रीभगवानुवाच ॥ विदित्वा तव चैत्यं मे पुरैव समयोजि तत् ॥ यदर्थमात्मनियमैस्त्वयैवाहं समर्चितः ॥ २३ ॥ न वै जातु मृषैव स्यात्प्रजाध्यक्ष मदर्हणम् ॥ भवद्विधेष्वतितरां मयि संगृभितात्मनाम् ॥ २४ ॥

युक्तस्त्वं विलक्षितोऽसि एवंभूतस्य तव दर्शनं यतो भुक्तिमुक्तिप्रदमित्यर्थः ॥ २० ॥ तं त्वा त्वां भुक्तिमुक्तिप्रदं नमामि । मुक्तिदत्वे हेतुः । अनुभूत्या ज्ञानेनोपरतः क्रियार्थः कर्मफलभोगो यस्मिन् । भोगदत्वे हेतुः । स्वमायया आवर्तितं लोकतंत्रं विश्वोपकरणं येन अतः सकामैर्निष्कामैश्च नमनीयं पादसरोजं यस्य तम् । तत्राल्पीयसि सकामे पुंसि भजने वा कामान्वर्षतीति तथा तम् ॥ २१ ॥ अमृतेन सुखकरेण प्रेमस्मिताभ्यामीक्षणेन विभ्रमंती भ्रूर्यस्य ॥ २२ ॥ चैत्यं हार्दं भावम् । मे मया समयोजि संघटितम् । यदर्थमेवाहं समर्चितस्त्वत ॥ २३ ॥ मयि संगृभितः संगृहीत एकाग्रीकृत आत्मा चित्तं यैस्तेषां यन्मदर्हणम् । त्वादृशेष्वति

यदपि प्रवृत्त्यनुबंधादिति तत्र सूत्रांतरेण परिहरति “न प्रवृत्तिः प्रतिसंधानाय हीनक्लेशस्य” अस्यार्थस्तु-प्रक्षीणेषु रागद्वेषमोहेषु प्रवृत्तिर्न प्रतिसंधानाय पूर्वसंधिस्तु पूर्वजन्मनि वृत्तौ पुनर्जन्म तच्चादृष्टकारितम् । तस्यां प्रहीणायां पूर्वजन्माभावे जन्मांतराभावोऽप्रतिसंधानमपवर्गः । कर्मवैफल्यप्रसंग इति चेन्न कर्मविपाकसंवेदनस्याप्रत्याख्यानात् पूर्वजन्मनिवृत्तौ पुनर्जन्म न भवतीत्युच्यते न तु कर्मविपाकप्रतिसंवेदनं प्रत्याख्यायते “सर्वाणि पूर्वकर्माणि ह्यंते जन्मनि विपच्यंते” इति सूत्रान्तरम् । “न क्लेशसंततेः स्वाभाविकत्वात्” । अस्यार्थः-नोपपद्यते क्लेशानुबंधविच्छेदः कस्मात् क्लेशसंततेः स्वाभाविकत्वात् । अनादिरियं क्लेशसंततिः न चानादिः शक्य उच्छेत्तुमिति । अत्र कश्चित्परिहारमाह-सूत्रांतरेण “प्रागुत्पत्तेरभावानित्यत्ववत्स्वाभाविकेप्यनित्यत्वम्” । अस्यार्थः-यथानादिः प्रागुत्पत्तेरभाव उत्पन्नेन भावेन निवर्त्यते एवं स्वाभाविकी संततिरनित्येति । किं च । “अणुश्यामताभावेऽनित्यत्ववद्वा” अस्यार्थः-अपर आह यथाऽनादिरप्यणुश्यामताऽग्निसंयोगादनित्या तथा क्लेशसंततिरपीति । एवंभूतस्य लसत्तुलसीयुक्तस्य । इत्यर्थ इति । तव दर्शनादखिलपापक्षये प्रतिबंधकाभावाद्भोगमोक्षौ भवत एवेति भावः ॥ २० ॥ उपरतो विनष्टः कर्मफलभोक्तृणामस्मत्सादृश्येन मोक्षदाने सामर्थ्यं नास्तीति भावः । आवर्त्तितं संपादितम् । अतो भोगमोक्षप्रदत्वात् । विश्वनाथस्तु-न त्वेतत्त्वय्यसंभवमित्याह । तं त्वाम् । अनुभूत्या उपरतः क्रियार्थः कर्मफलभोगो यस्मात्त्वं कृपया यदा स्वमाधुर्यानुभवं दास्यसि तदैव भोगेच्छा स्वयमेवापयास्यतीति । स्वमायया स्वीयमायाशक्तिप्रेरणया वर्तितं जनितं लोकानां देवतिर्यगादीनां तंत्रं कर्मफलसुखदुःखसंबंधिपरिच्छेदो येन तं, यावदविद्यां प्रेरयसि तावद्भोगेच्छा भवत्येवेति भावः । तेन संप्रति सृष्टिं विवर्द्धयिषुरस्मान्कामसंबलितान्करोषीति सत्यपि विवेके कामांस्त्यक्तुं न शक्नुम इत्याह—अल्पीयसीति । निकृष्टेपि मद्विधे जने कामान्वर्षसीति तम् ॥ २१ ॥ अव्यलीकं निष्कपटम् ॥ २२ ॥ चैत्यं चित्ताभिप्रायम् । दिगादियदंतात्स्वार्थेण् । अहमेव नान्य इत्यर्थः ॥ २३ ॥ न च मद्भजनं कामं दत्त्वैव केवलमुपक्षीयतेऽपि तु मत्पदमपि ददातीति समाश्वसिहीत्याह । ‘सत्यं दिशत्यर्थितमर्थितो नृणाम्’ इत्यादिन्यायेन मदर्हणमात्रं मृषैव तुच्छफलदमेव न स्यात्किंत्वंते मत्पद

प्रजापतिसुतः सम्राट् मनुर्विख्यातमंगलः ॥ ब्रह्मावर्तं योऽधिवसञ्छास्ति सप्तार्णवां महीम् ॥ २५ ॥ स चेह विप्र राजर्षिर्महिष्या शतरूपया ॥ आयास्यति दिदृक्षुस्त्वां परश्वो धर्मकोविदः ॥ २६ ॥ आत्मजामसितापांगीं वयःशीलगुणान्विताम् ॥ मृगयंतीं पतिं दास्यत्यऽनुरूपाय ते प्रभो ॥ २७ ॥ समाहितं ते हृदयं यत्रेमान्परिवत्सरान् ॥ सा त्वां ब्रह्मन्नृपवधूः काममाशु भजिष्यति ॥ २८ ॥ या त आत्मभृतं वीर्यं नवधा प्रसविष्यति ॥ वीर्ये त्वदीये ऋषय आधास्यंत्यंऽजसाऽऽत्मनः ॥ २९ ॥ त्वं च सम्यगनुष्ठाय निदेशं म उशत्तमः ॥ मयि तीर्थीकृताशेषक्रियाऽर्थो मां प्रपत्स्यसे ॥ ३० ॥ कृत्वा दयां च जीवेषु दत्त्वा चाभयमात्मवान् ॥ मय्यात्मानं सहजगद्द्रक्ष्यस्यात्मनि चापि माम् ॥ ३१ ॥ सहाऽहं स्वांशकलया त्वद्वीर्येण महामुने ॥ तव क्षेत्रे देवहूत्यां प्रणेष्ये तत्त्वसंहिताम् ॥ ३२ ॥

तितरां सर्वथा मृषा निष्फलं न स्यात् ॥ २४ ॥ विख्यातं मंगलमभ्युदयः सदाचारादिलक्षणं यस्य ॥ २५ ॥ हे विप्र महिष्या सह ॥ २६ ॥ २७ ॥ यत्र यस्यां भार्यायाम् । समाहितमभिसंधानेन स्थितम् । नृपवधू राजकन्या ॥ २८ ॥ ते वीर्यमात्मनि भृतं धृतं या प्रसविस्यति सा भजिष्यति वीर्ये वीर्यप्रसूतासु कन्यासु अंजसा आत्मनः पुत्रानाधास्यंति ॥ २९ ॥ निदेशमाज्ञाम् । उशत्तमः शुद्धसत्त्वः । तीर्थं पात्रं तेन दानं लक्ष्यते । मयि समर्पितसर्वकर्मफल इत्यर्थः ॥ ३० ॥ गार्हस्थ्येन दयां कृत्वा संन्यासेनाभयं दत्त्वा मय्यात्मानं जगच्च सहैकीभूतं द्रक्ष्यसि ॥ ३१ ॥ त्वद्वीर्येण सह देवहूत्यामवतीर्येति शेषः ॥ ३२ ॥

प्रदमेव स्यात् । तत्रापि संगृभितात्मनां निहितमनसां भक्तानां मध्ये त्वादृशेष्वतितरां मृषा न स्यादित्यर्थः । "हृग्रहोर्भश्छंदसि" इति भकारः । ह्रस्वत्वमार्षम् ॥ २४ ॥ प्रकृतमनुसरति प्रजाः मरीच्यादयस्तेषां पतिः "उपान्वध्याङ्वसः" इत्याधारस्य कर्मत्वं—ब्रह्मावर्त्तमिति सप्तार्णवामिति । भाविनि भूतवदुपचारः । प्रियव्रताद्युत्तदात्मजरथखातत्वात्तेषाम् । अनेन सम्राट्त्वं तस्योक्तम् ॥ २५ ॥ विप्रेति । तस्य दानपात्रत्वमाह—महिष्या पट्टराज्ञा ॥ २६ ॥ वनवासिनो मम किं सम्राजा तत्राह—आत्मजामिति असितापांगीं नीलद्युतिनेत्रां कियद्वयस्तस्या इति प्रश्नमंतरेणैव वयो लक्षयति । मृगयंतीमिति । आसन्नरजस्कां पाणिग्रहणयोग्यामित्यर्थः ॥ २७ ॥ राजपुत्र्यास्तापसोऽहं कथमनुरूपः स्यामिति तत्राह—इमानतीतान्वत्सरान्व्याप्य यस्यां वध्वां राजपुत्र्यादिविशेषणमंतरेण ते हृदयं समाहितं ममानुकूला भार्या स्यादिति सधर्मचारिणित्वयोग्यं चेतः संक्लृप्तम् । सा नृपवधू राजकन्या "वधूर्जायास्नुषा कन्या नवोढा सारिवासु च" इति धरणिः ॥ २८ ॥ नवधा नवप्रकारापत्यरूपेण वीर्ये इति कारणे कार्यप्रयोगः । गोभिः श्रिणी तु मत्सरमितिवत् । "आत्मा वै पुत्रनामासि" इति श्रुतेः ॥ २९ ॥ मे निदेशं वैदिकं नित्यनैमित्तिककर्मानुष्ठानलक्षणम् ।"अहरहः सन्ध्यामुपासीत" इत्यादिश्रुतिविहितम् । इत्यर्थ इति । सर्वकर्मणां मयि समर्पणेनाकर्मत्वान्मोक्षमेव प्राप्स्यसीति भावः ॥ ३० ॥ यद्वा । वैराग्ये मद्भक्त्युपदेशेनाभयं दत्त्वेत्यर्थः । मय्यधिष्ठानतत्त्वे परमेश्वरे सर्वं जगदात्मसहितमस्तीति यच्छास्त्रदृष्ट्या सांप्रतं जानासि तदेव तदा साक्षादेव द्रक्ष्यसि प्रथमादिपुरुषं कारणार्णवशायिनं सहस्रशीर्षादिस्वरूपं मां द्रक्ष्यसि । ततश्च तस्यैव मम रोमकूपेषु अनंतकोटिब्रह्मांडान्यात्मसहितानि साक्षाद् द्रक्ष्यसीत्यर्थः । तथात्मनि स्वस्मिन्नंतर्यामिणं मां संतमधुना जानास्येव तदा तु "केचित्स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसंतम्" इति द्वितीयस्कंधोक्त तृतीयपुरुषं क्षीरोदनाथं मामेव साक्षाद्द्रक्ष्यसीति सूज्यासूज्यं सर्वं वस्तु त्वामहं दर्शयिष्यामीति फलितार्थः । यद्वा । मयि पुत्ररूपे श्रीयशोदेव जगदात्मानं द्रक्ष्यसि तथात्मनि चापि मां श्रीगोपीव "तं काचिन्नेत्ररंध्रेण हृदिकृत्य निमील्य च । पुलकांग्युपगूह्यास्ते योगीवानंदसंप्लुता" इत्युक्तरीत्या द्रक्ष्यसीति ॥३१॥ किञ्चान्याञ्च काञ्चनानंदस्य वार्त्तां शृण्वित्याह-त्वद्वीर्येण त्वत्कन्यापत्यवृन्देन सहाविर्भूयेति शेषः । तव क्षेत्रे

मैत्रेय उवाच ॥ एवं तमनुभाष्याऽथ भगवान्प्रत्यगक्षजः ॥ जगाम बिंदुसरसः सरस्वत्या परिश्रितात् ॥३३॥ निरीक्षतस्तस्य ययावऽशेषसिद्धेश्वराभिष्टुतसिद्धमार्गः ॥ आकर्णयन्पत्ररथेंद्रपक्षैरुच्चारितं स्तोममुदीर्णसाम ॥ ३४ ॥ अथ संप्रस्थिते शुक्ले कर्दमो भगवानृषिः ॥ आस्ते स्म बिंदुसरसि तं कालं प्रतिपालयन् ॥३५॥ मनुः स्यंदनमास्थाय शातकौंभपरिच्छदम् ॥ आरोप्य स्वां दुहितरं सभार्यः पर्यटन्महीम् ॥३६॥ तस्मिन्सुधन्वन्नहनि भगवान्यत्समादिशत् ॥ उपायादाश्रमपदं मुनेः शांतव्रतस्य तत् ॥३७॥ यस्मिन्भगवतो नेत्रान्न्यपतन्नश्रुबिंदवः ॥ कृपया संपरीतस्य प्रपन्नेऽर्पितया भृशम् ॥३८॥ तद्वै बिंदुसरो नाम सरस्वत्या परिप्लुतम् ॥ पुण्यं शिवामृतजलं महर्षिगणसेवितम् ॥३९॥ पुण्यद्रुमलताजालैः कूजत्पुण्यमृगद्विजैः ॥ सर्वर्तुफलपुष्पाढ्यं वनराजिश्रियाऽन्वितम् ॥ ४० ॥ मत्तद्विजगणैर्घुष्टं मत्तभ्रमरविभ्रमम् ॥ मत्तबर्हिनटाटोपमाह्वयन्मत्तकोकिलम् ॥ ४१ ॥

प्रत्यग्भूतेष्वक्षेषु जायते आविर्भवतीति प्रत्यगक्षजः सरस्वत्या नद्या परिश्रितात्परिवेष्टितात् ॥ ३३ ॥ अशेषैस्तपोमंत्रादिसिद्धेश्वरैरभिष्टुतः सिद्धमार्गो वैकुंठमार्गो यस्य । यद्वा । अशेषसिद्धेश्वराभिष्टुतश्चासौ सिद्धैर्मृग्यत इति सिद्धमार्गश्च स ययौ पत्ररथेंद्रो गरुडस्तस्य पक्षैरुदीर्णमभिव्यक्तं सामाकर्णयन् । "बृहद्रथंतरे पक्षौ" इति श्रुतेः । उच्चारितं स्तोमं च सामाधारभूतानामृचां समुदायं शृण्वन् । "स्तोम आत्मा" इति श्रुतेः । समासपाठे उच्चारितः स्तोमः स्तोत्रीयसमुदायो यस्य साम्न इति ॥ ३४ ॥ तं कालं परश्व इत्युक्तं प्रतीक्षमाणः ॥ ३५ ॥ शातकौंभाः सौवर्णाः परिकरा यस्मिंस्तं रथमास्थाय दुहितरं चारोप्य वरान्वेषणार्थं पर्यटन् ॥ ३६ ॥ हे सुधन्वन्विदुर यदहः ॥ ३७ ॥ तत्प्रवेशमात्रेण परमानंदं प्राप्त इति दर्शयितुमाश्रमं वर्णयति । यस्मिन्नित्यादिभिः सप्तभिः श्लोकैः । प्रपन्ने कर्दमे ॥ ३८ ॥ शिवमारोग्यममृतवत्स्वादु जलं यस्मिन् ॥ ३९ ॥ कूजंतः पुण्या मृगा द्विजाश्च येषु तैः पुण्यद्रुमलतानां जालैः समूहैर्युक्तम् ॥ ४० ॥ घुष्टं नादितम् । मत्तभ्रमराणां विभ्रमो विनोदो यस्मिन् । मत्ता

भार्यायां "क्षेत्रं पुरे गृहे देहे केदारे योनिभार्ययोः । पुण्यक्षेत्रे समूहे च" इति यादवः । तत्त्वसंहितां तत्त्वसंख्यानलक्षणं सांख्यशास्त्रं प्रणेष्ये करिष्ये ॥ ३२ ॥ तं कर्दमम् । अथ प्रथमभाषणोत्तरम् । परिप्लुतादिति पाठेप्ययमेवार्थः ॥ ३३ ॥ सिद्धमार्गशब्दस्य वैकुंठेऽप्रसिद्धेराह—यद्वेति । साम सामवेदावयवम् । पक्षाभ्यां सामाभिव्यक्तौ प्रमाणमाह—बृहेति । स्पष्टार्थो श्रुतिः । स्तोमः स्तोमाख्यो वेदावयवः । आत्मा आधार इति श्रुतिपदार्थः । समासपाठे उच्चारितस्तोममिति पाठे ॥ ३४ ॥ अथ शुक्लप्रस्थानानंतरं भगवान् योगैश्वर्यवान् ॥ ३५ ॥ यदहो भगवान्समादिशत्तस्मिन्नहनि महीं पर्यटन्मुनेराश्रमपदमुपायादिति द्वयोरन्वयः ॥ ३६ ॥ सुधन्वन्निति । शूरास्त्वद्वत्सैन्याद्याश्रयणं विनैव निर्भया विचरंतीति मा शंकीः । सभार्यो विना बलं कथं विचरतीति? । "स्वसैन्यचरणक्षुण्णम्" इति वक्ष्यमाणोक्तिस्तु राज्ञां गमनबोधनपरेति न तया विरोधः । तत् प्रसिद्धम् । शांतमुपरतम् । व्रतं ब्रह्मचर्यलक्षणं यस्य भार्याभिलाषुकत्वात् ॥३७॥ यस्मिन्स्थले तत्स्थानं बिंदुसरो नामेति द्वयोरन्वयः ॥३८॥ बिंदूनां सरणं यत्र तद्बिंदुसर इति । आरोग्यमारोग्यवर्द्धकम् । 'आयुर्घृतम्' इतिवत्प्रयोगः ॥ ३९ ॥ पुण्यद्रुमा अश्वत्थामलक्यादयः । पुण्यलता विष्णुक्रांतामाधव्याद्याः । पुण्यमृगाः कृष्णसारादयः । पुण्यद्विजा जरितार्यादिपक्षिणः ॥ ४० ॥ "आटोपः संभ्रमे कोपे" इति धरणिः ॥ ४१ ॥

कदंबचंपकाशोककरंजबकुलासनैः ॥ कुंदमंदारकुटजैश्चूतपोतैरलंकृतम् ॥ ४२ ॥ कारंडवैः प्लवैर्हंसैः कुररैर्जलकुक्कुटैः ॥ सारसैश्चक्रवाकैश्च चकोरैर्वल्गुकूजितम् ॥ ४३ ॥ तथैव हरिणैः क्रोडैः श्वाविद्गवयकुंजरैः ॥ गोपुच्छैर्हरिभिर्मर्कैर्नकुलैर्नाभिभिर्वृतम् ॥ ४४ ॥ प्रविश्य तत्तीर्थवरमादिराजः सहानुगः ॥ ददर्श मुनिमासीनं तस्मिन्हुतहुताशनम् ॥ ४५ ॥ विद्योतमानं वपुषा तपस्युग्रयुजा चिरम् ॥ नातिक्षामं भगवतः स्निग्धापांगावलोकनात् ॥ तद्व्याहृतामृतकलापीयूषश्रवणेन च ॥ ४६ ॥ प्रांशुं पद्मपलाशाक्षं जटिलं चीरवाससम् ॥ उपसंसृत्य मलिनं यथाऽर्हणमसंस्कृतम् ॥ ४७ ॥ अथोटजमुपायातं नृदेवं प्रणतं पुरः ॥ सपर्यया प्रत्यगृह्णात्प्रतिनंद्यानुरूपया ॥ ४८ ॥ गृहीतार्हणमासीनं संयतं प्रीणयन्मुनिः ॥ स्मरन्भगवदादेशमित्याह श्लक्ष्णया गिरा ॥ ४९ ॥ नूनं चंक्रमणं देव सतां संरक्षणाय ते ॥ वधाय चासतां यस्त्वं हरेः शक्तिर्हि पालनी ॥ ५० ॥ योऽर्केंद्वग्नींद्रवायूनां यमधर्मप्रचेतसाम् ॥ रूपाणि स्थान आधत्से तस्मै शुक्लाय ते नमः ॥ ५१ ॥

बर्हिण एव नटास्तेषामाटोपो नृत्यसंभ्रमो यस्मिन् । आह्वयंतो मिथो मत्ताः कोकिला यस्मिन् ॥ ४१ ॥ कदंबादिभिर्वृक्षैरलंकृतम् ॥ ४२ ॥ कारंडवादिभिः पक्षिभिर्वल्गु यथा तथा कूजितम् ॥ ४३ ॥ हरिणादिभिर्वृतम् । तत्र क्रोडः सूकरः श्वाविच्छल्लकः मर्को मर्कटः तद्विशेषा गोपुच्छाः हरिर्वानरः सिंहो वा नाभिः कस्तूरीमृगः ॥ ४४ ॥ हुतो हुताशनो ब्रह्मचारियोग्यो येन ॥ ४५ ॥ उग्रा युक् योगो यस्य तेन वपुषा विद्योतमानं तस्य भगवता व्याहृतं भाषणमेवामृतकला अमृतमयस्य चंद्रस्य कला तन्मयं पीयूषं तस्य श्रवणेन च नातिक्षामं तपसा कृशं संतमप्यकृशम् ॥ ४६ ॥ प्रांशुमुन्नतं उपसंसृत्य समीपं गत्वा मलिनं ददर्शेति पूर्वेण क्रिया अर्ह्यते अनेनेत्यर्हणं महारत्नं तदसंस्कृतमनिर्णिक्तं यथा मलिनं दृश्यते तद्वत् ॥ ४७ ॥ उटजं पर्णशालां प्राप्तं पुरः पादसमीपे प्रणतमाशीर्भिरभिनंद्य सपर्यया पूजया प्रत्यगृह्णात्सत्कृतवान् ॥ ४८ ॥ ४९ ॥ ते चंक्रमणं पर्यटनम् । हि यस्मात् ॥ ५० ॥ मनस्थं विष्णुं प्रणमति य इति । स्थाने तत्तत्कार्यावसरे । शुक्लाय विष्णवे ॥ ५१ ॥

॥४२॥४३॥ यथैव पूर्वोक्तैः पक्ष्यादिभिस्तथैवेत्यर्थः । क्वचित्तु 'शशकैर्हरिणैः' इति पाठः । तद्विशेषा मर्कटभेदाः वानराणां मर्कपदेनोक्तत्वादाह–सिंहो वेति । नकुलो रक्तमुखः सर्पविरोधी वन्यजीवः ॥४४॥ तद्वर्णितं तीर्थं बिंदुसरो यत्रेति तत्तीर्थवराश्रमम् । आदिराजः स्वायंभुवः । अनुगच्छतीत्यनुगा भार्या तत्सहितः, कतिपयानुचरयुतो वा । तस्मिन्नाश्रमे ॥४५॥ अनतिक्षामत्वे हेतुद्वयं–स्निग्धापांगेति, तद्व्याहृतेति । अमृतमयी कला यस्य सोऽमृतकलस्तस्याऽसम्यक्पीयूषममृतं तस्य श्रवणेनास्वादनेनेत्यर्थः । पीयूषस्य पानमेव युक्तं तच्छ्रवणस्य तृप्त्यजनकत्वात् ॥ ४६ ॥ उन्नतमष्टवितस्तिप्रमाणम् । अनिर्णिक्तमशोधितम् ॥ ४७ ॥ अथ दर्शनोत्तरं "पर्णशालोटजोस्त्रियाम्" इत्यमरः । सत्कृतवानुत्थाप्य भुजाभ्यामालिलिंगेत्यर्थः । प्रतिनंद्य अद्य मूर्त्तमेव तपोमयं तेजः साक्षात्कृत्य कृतार्थोऽस्मीत्यभिनंदस्तं राजानं 'राजन्नद्य भागवती विश्वपालिनी शक्तिस्त्वमेवावलोक्यस' इति प्रत्यभिष्टुत्येत्यर्थः ॥ ४८ ॥ क्षालितचरणमुचितदर्भाद्यासन आसीनं, गृहीतान्यर्हणानि गंधपुष्पदूर्वादलादीनि येन तं, संयतं तूष्णींभूतम् । श्लक्ष्णया शोभनया ॥ ४९ ॥ हे देव यस्य ते चंक्रमणं सम्यक्पर्यटनं सतां मादृशानां तपस्विनामसतामस्मद्विरोधिनाम् । स त्वं हरेः पालिनी शक्तिर्भवसीत्यर्थः ॥ ५० ॥ तत्र प्रतापेन त्वमर्कः यशसाऽऽह्लादकत्वेन च चंद्रः, अधृष्यत्वेनाग्निः, ऐश्वर्यवत्त्वेन कामप्रवर्षकत्वेन चेंद्रः, सर्वप्रवेशवत्त्वेन वायुः, दुष्टनिग्रहत्वेन यमः, शिष्टपालकत्वेन धर्मः, गांभीर्येण गुप्तवित्तत्वेन च प्रचेताः । अत एव तस्मै मदभीष्टदेवाय त्वद्रूपेण पुनरपि ममोटजगताय शुक्लाय शुद्धसत्त्वाय तुभ्यं नमः ॥ ५१ ॥

न यदा रथमास्थाय जैत्रं मणिगणार्पितम् ॥ विस्फूर्जच्चंडकोदंडो रथेन त्रासयन्नघान् ॥ ५२ ॥ स्वसैन्यचरणक्षुण्णं वेपयन्मंडलं भुवः ॥ विकर्षन्बृहतीं सेनां पर्यटस्यंऽशुमानिव ॥ ५३ ॥ तदैव सेतवः सर्वे वर्णाश्रमनिबंधनाः ॥ भगवद्रचिता राजन् भिद्येरन् बत दस्युभिः ॥ ५४ ॥ अधर्मश्च समेधेत लोलुपैर्व्यंकुशैर्नृभिः ॥ शयाने त्वयि लोकोऽयं दस्युग्रस्तो विनंक्ष्यति ॥ ५५ ॥ अथापि पृच्छे त्वां वीर यदर्थं त्वमिहागतः ॥ तद्वयं निर्व्यलीकेन प्रतिपद्यामहे हृदा ॥५६॥ इति श्रीमद्भागवते तृतीयस्कन्धे स्वायंभुवमनुकर्दमसमागमवर्णनं नाम एकविंशतितमोऽध्यायः २१

मैत्रेय उवाच॥एवमाविष्कृताशेषगुणकर्मोदयो मुनिम्॥सव्रीड इव तं सम्राडुपारतमुवाच ह॥१॥मनुरुवाच ॥ ब्रह्माऽसृजत्स्वमुखतो युष्मानात्मपरीप्सया ॥ छंदोमयाँस्तपोविद्यायोगयुक्तानलंपटान्॥२॥तत्त्राणायासृजच्चास्मान् दोःसहस्रात् सहस्रपात् ॥ हृदयं तस्य हि ब्रह्म क्षत्त्रमंगं प्रचक्षते ॥३॥

नयदेति पंचानामयमर्थः यद्यपि धर्मरक्षार्थं सर्वतः पर्यटतस्तव प्रसंगादप्यागमनं भवति तथापि विशेषकार्यं चेदस्ति तत्कथ्यतामिति जैत्रं जयप्रदं मणिगणा अर्पिता यस्मिंस्तं रथमारुह्य त्वं यदा भुवो मंडलं न पर्यटसि तदा सेतवो भिद्येरन्निति त्रयाणामन्वयः । विस्फूर्जन्नादं कुर्वंश्चंडं कोदंडं धनुर्यस्य ॥ ५२ ॥ स्वसैन्यस्य चरणैः क्षुण्णं संघट्टितम् ॥ ५३ ॥ वर्णाश्रमाणां निबंधनं यैः । बत अहो ॥ ५४ ॥ निरंकुशैर्नृभिर्निर्निमित्तभूतैः शयाने निश्चिन्ते ॥ ५५ ॥ निर्व्यलीकेन सहर्षेण प्रतिपद्यामहे स्वीकुर्महे ॥ ५६ ॥ इति श्रीमद्भागवते तृतीयस्कंधे टीकायामेकविंशतितमोऽध्यायः ॥ २१ ॥ द्वाविंशे कर्दमायादाद्यथादिष्टं हि विष्णुना ॥ मनुर्दुहितरं देवहूतिमित्युपवर्ण्यते ॥ १ ॥ एवमाविष्कृतोऽभिष्टुतोऽशेषाणां गुणानां कर्मणां चोदय उत्कर्षो यस्य स सम्राण्मनुः सव्रीड इव स्वकीर्तिश्रवणात् प्रत्याख्यानशंकया वा तं मुनिमुवाच उपारतं निवृत्तिनिरतम् ॥ १ ॥ मदीया कन्या त्वया परिणेयेति विज्ञापयिष्यन्युष्मदस्मत्संबंधस्तावदीश्वरेण पूर्वमेव घटित इत्याह । ब्रह्मेति सार्द्धाभ्याम् । आत्मनः परीप्सया पर्याप्तुमिच्छया छंदोमयस्यात्मनः पर्याप्तिः पालनं वेदप्रवर्तनं तस्येच्छया युष्मान्ब्राह्मणान् ॥ २ ॥ तत्त्राणाय ब्राह्मणपालनाय ब्रह्म ब्राह्मणजातिः क्षत्रं क्षत्रियजातिः ॥ ३ ॥

पञ्चानां श्लोकानाम् । हे राजन् किमर्थमागतोसीति कथं पृच्छामि यतस्तत्कारणं जानामीत्यभिप्रायेणाह–यद्यपीति ॥ ५२ ॥ संघट्टितं चूर्णितम् ॥ ५३ ॥ निबंधनं स्थितिः दस्युभिर्हिंसाशीलैश्चौरैर्वा "दस्युश्चौर रिपौ दुष्टे हिंसके क्षीणरिक्थके" इति निरुक्तिः ॥ ५४ ॥ लोलुपैर्विषयानुरागिभिः निश्चिंते नीतिविचारशून्ये सति ॥ ५५ ॥ अथापि यद्यपि सामान्यतो जानामि तदपि विशेषतः पृच्छे । इह मत्पर्णशालायां, यदर्थमिति । न हि दुष्टनिग्रहार्थं पर्यटनं मत्पर्णशालायां सफलं भवतीति भावः । "व्यलीकं छद्मदुःखयोः" इति यादवः ॥ ५६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे एकविंशोऽध्यायः ॥२१॥ यथा विष्णुनादिष्टम् "आत्मजामसितापांगीम्" इत्यादिना कथितं तथादादित्यर्थः ॥ (१) ॥ निवृत्तिपरे व्यवहारवार्ता न वक्तव्या तदप्रियत्वात्तत्कथनप्रवृत्तः सम्राड् लज्जित इव जात इति वार्थः । यद्वा । उं दुर्वासोरूपं रुद्रं पाति निजाश्रत इत्युपो विष्णुस्तत्रासमंताद्रतं तत्परमित्यर्थः ॥ १ ॥ सहसा प्रदानप्रसंगस्य तत्प्रत्याख्यानशंकया ब्राह्मणक्षत्रिययोः कमपि संबंधं सन्यायमाह । एतदभिप्रायेणैव स्वामिचरणैरप्युक्तं मदीयेत्यादि-ब्रह्मेति ॥ २ ॥ ब्राह्मणान्के पालयेयुस्तत्राह-तदिति । परमेश्वरेणैक्यं ब्रह्मणो मत्वाह-दोःसहस्रादीति । ननु क्षत्रियानपि कः पालयेत्तत्राह-ब्रह्म ब्राह्मणः हृदयं ज्ञानशक्तिप्रधानत्वात्, अंगं भुजः क्रियाशक्तिप्रधानत्वात् । अत्रायं भावः-लोके

अतो ह्यन्योऽन्यमात्मानं ब्रह्म क्षत्रं च रक्षतः ॥ रक्षति स्माव्ययो देवः स यः सदसदात्मकः॥४॥तव संदर्शनादेव छिन्ना मे सर्वसंशयाः ॥ यत्स्वयं भगवान्प्रीत्या धर्ममाह रिरक्षिषोः ॥ ५ ॥ दिष्ट्या मे भगवान्दृष्टो दुर्दर्शो योऽकृतात्मनाम् ॥ दिष्ट्या पादरजःस्पृष्टं शीर्ष्णा मे भवतः शिवम् ॥ ॥ ६॥ दिष्ट्या त्वयाऽनुशिष्टोऽहं कृतश्चानुग्रहो महान् ॥ अपावृतैः कर्णरंध्रैर्जुष्टा दिष्ट्योशतीर्गिरः ॥७॥ स भवान्दुहितृस्नेहपरिक्लिष्टात्मनो मम ॥ श्रोतुमर्हसि दीनस्य श्रावितं कृपया मुने ॥ ८ ॥ प्रियव्रतोत्तानपदोः स्वसेयं दुहिता मम ॥ अन्विच्छति पतिं युक्तं वयःशीलगुणादिभिः ॥ ९ ॥ यदा तु भवतः शीलश्रुतरूपवयोगुणान् ॥ अशृणो न्नारदादेषा त्वय्यासीत्कृतनिश्चया ॥ १० ॥ तत्प्रतीच्छ द्विजाग्र्येमां श्रद्धयोपाहृतां मया ॥ सर्वात्मनाऽनुरूपां ते गृहमेधिषु कर्मसु ॥ ११ ॥

एवं स देव एव रक्षति स्म । कोऽसौ । सदसदात्मकः सर्वात्मकः तथाऽप्यव्ययो निर्विकारः ।।४।। विज्ञापयितुमेव तद्दर्शनादिकमभिनंदति । तवेति त्रिभिः॥५॥अकृतात्मना मवशीकृतचित्तानाम् ॥ ६ ॥ अनुग्रहोऽनुशासनादिरूप एव । उशतीरुशत्यः ॥ ७ ॥ विज्ञापयति । स भवानिति सप्तभिः । दुहितुः स्नेहेन परिक्लिष्ट आत्मा यस्य श्रावितं विज्ञापनम् ॥ ८ ॥ प्रियव्रतोत्तानपदोः स्वसेति पुत्रिकाकरणशंका निरस्ता मम सुतेति क्षत्रकन्या तव योग्येति दर्शितम् ।।९।। एषा देवहूतिः ॥ १०॥ प्रतीच्छ

हि हृदये प्रहारे आपतिते भुजाभ्यां हृदयस्य गोपनं दृश्यते भुजे च प्रहारे प्राप्ते देहं कुंचितीकृत्य हृदयमध्य एव भुजो गोप्यते इति हृदयस्य पालको भुजो भुजस्य पालकं हृदयम् । अत एव महाभारतेपि शांतिपर्वणि ''ब्रह्म वर्द्धयति क्षत्रं क्षत्रतो ब्रह्म वर्द्धते । यत्रादृष्टं भयं ब्रह्म प्रजानां शमयत्युत ॥ दृष्टं च राजा बाहुभ्यां यद्राज्यं सुखमेधते ॥'' इति । किञ्च । ''मिथोभेदाद्ब्राह्मणक्षात्रियाणां प्रजादुःखं दुःसहञ्चाविशंति । एवं ज्ञात्वा कार्य एवेह नित्यं पुरोहितो नैकविद्यो नृपेण ॥'' इति ॥ ३ ॥ यतो ब्रह्मक्षत्त्रे भगवदवयवभूते अतो हेतोः । एवं पूर्वोक्तरीत्या ब्रह्म ब्राह्मणस्तपोबलेन क्षत्त्रियं पालयति क्षत्त्रञ्च बाहुबलेन ब्राह्मणमिति । वस्तुतस्तु-स देवः परमेश्वर एवोभयं रक्षति तथापि सर्वात्मकत्वेपि निर्विकार एकरसः ॥ ४ ॥ अतोऽहं स्वपालकं त्वामागतस्त्वया चाहं दर्शनेनैव पालित इत्याह-तवेति । संशयोत्र तत्कारणं चित्तमलं कन्याप्रत्याख्यानादिरूपो वा बहुत्वमेषामनं तत्वात् । सर्वपदेनान्येप्यात्मानात्मविषयास्ते गृह्यंत इति । यद्यतः स्वयं मत्प्रेरणां विनैव भगवान् भवानेव रिरक्षिषोर्मे क्षत्रियस्य धर्ममाह-'न यदा रथमास्थाय' इत्यादिश्लोकचतुष्केनेत्यर्थः । यद्वा । यद्यस्मै स्वयं भगवान् शुक्लरूपो विष्णुः रिरक्षिषोर्हेतोर्धर्ममाह-'कृत्वा दयाञ्च जीवेषु' इत्यादिना धर्मरक्षार्थं गृहस्थादिधर्मं संक्षेपेणोक्तवानित्यर्थः । यद्वाऽऽह वक्ष्यति 'गच्छ कामं मयादिष्टो मयि संन्यस्तकर्मणा' इत्यादिना । आहेति वर्तमानसमीपे भविष्यति लडस्तीति । वेदमार्गप्रवर्त्तकत्वेन ब्राह्मणा एव धर्मरक्षका इत्यभिप्रेत्याऽऽह । रिरक्षिषोस्तवेति वा योज्यम् ॥ ५ ॥ भगवान्भवान् दिष्ट्या भद्रम् । अकृतात्मनां पुण्यहीनानाम् ॥ ६ ॥ अनुशिष्टः दत्तशिक्षः । अपावृतैर्व्याधिना कार्यादिना वानवधानदोषरहितैः ॥ ७ ॥ एवं च त्वद्दर्शनान्मे सर्वे क्लेशा गता एव परं त्वेकः क्लेशो दुर्वारो हृदि वर्तते तमपि त्वत्कृपया दत्ताश्वासो विगतभीरेवोद्घाटयामीत्याह-स कृपासिंधुः । दीनस्येति । पुत्रीप्रदमहाराजेनापि अतिनिस्स्वसंप्रदानाग्रेपि दैन्यमेवाश्रयणीयमित्याह-मुने इति । मत्कथनं विनापि त्वं मदभिप्रायं ज्ञातुं समर्थ इत्याह-स्नेहाकुलचेतस्त्वाद्ब्रवीम्येवेत्यर्थः ॥ ८ ॥ वयआदिकथनं तादृशां धर्मसाचिव्यप्राधान्येनैवेति न लज्जाकरमिति । अन्विच्छंतीति शत्रंतपाठः सम्यक् प्रतिभाति (द्वयोरन्वयः कार्यः)। तथा च इयं मम कन्या यदा तु नारदाद्भवतः शीलादीनशृणोत्तदा त्वय्येव कृतनिश्चयासीत् । किंभूता । पतिमन्विच्छंती पत्यन्वेषणां कुर्वन्तीत्यर्थः ॥९॥ १० ॥ हे द्विजाग्र्येति । दानपात्रतामाह । श्रद्धादत्तं ग्राह्यमेवेत्याह-श्रद्धयेति । सर्वात्मना सर्वप्रकारेण गृहमेधेषु गृहस्थोचितेषु कर्मस्वग्निहोत्रसंतत्युत्पादनादिष्वनुरूपां योग्याम् ॥ ११ ॥

उद्यतस्य हि कामस्य प्रतिवादो न शस्यते ॥ अपि निर्मुक्तसंगस्य कामरक्तस्य किं पुनः ॥१२॥ य उद्यतमनादृत्य कीनाशमभियाचते ॥ क्षीयते तद्यशः स्फीतं मानश्चावज्ञया हतः ॥ १३ ॥ अहं त्वाऽशृणवं विद्वन्विवाहार्थं समुद्यतम् ॥ अतस्त्वमुपकुर्वाणः प्रत्तां प्रतिगृहाण मे ॥ १४ ॥ ऋषिरुवाच ॥ बाढमुद्वोढुकामोऽहमप्रत्ता च तवात्मजा ॥ अवयोरनुरूपोऽसावाद्यो वैवाहिको विधिः ॥ १५ ॥ कामः स भूयान्नरदेव तस्याः पुत्र्याः समाम्नायविधौ प्रतीतः ॥ क एव ते तनयां नाद्रियेत स्वयैव कांत्या क्षिपतीमिव श्रियम् ॥ १६ ॥

स्वी कुरु ॥ ११ ॥ उद्यतस्य स्वतः प्राप्तस्य विषयस्य प्रतिवादः प्रत्याख्यानम् ॥ १२ ॥ कीनाशं कृपणम् । अवज्ञया परापमानेन ॥ १३ ॥ यस्य सावधि ब्रह्मचर्यं स उपकुर्वाणः मे प्रत्तां मया दत्ताम् ॥ १४ ॥ अप्रत्ता चेति मय्येव कृतनिश्चयत्वात्कस्मै चित्प्रतिश्रुता च न भवतीत्यर्थः । आद्यः प्रथमः ततः पूर्वं विवाहाभावात् । मुख्य इति वा ॥ १५ ॥ भूयाद्भवेत् प्रतीतः "गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या"

न चाहं विरक्तस्तपस्वी तव कन्यां कथं स्वीकरोमीति वाच्यम् । स्वतः प्राप्तस्य धात्रा समुत्पादितस्य निर्मुक्तसंगस्य केवलं धर्मार्थं विषयोपार्जनमिति मनस्यासक्तिरहितस्य कामरक्तस्येति । तवांतर्गतं कामं ज्ञात्वैवाहमिहागममिति कामो नापलपनीय इति भावः ॥ १२ ॥ अत्र व्यावहारिकीं नीतिमाह-य इति । अनादृत्य प्रतिष्ठानुरोधाल्लज्जया प्रत्याख्याय पुनः कृपणमदातारमपि जनं तमेव कामं याचते । कामेनैवाचिरादेव प्राबल्यवता लज्जाप्रतिष्ठयोर्ग्रस्यमानत्वादिति भावः । मानश्च हतो भवतीत्यर्थः । तेन परिणामदर्शिना विदुषा वर्तमानमपि वैराग्यं स्वमनोमध्यवर्तिना कामेनाग्रतो ग्रसिष्यमाणमनुमाय प्रथममेव दैवादयाचित एवायातोऽनिषिद्धो विषयोंगीकर्तव्य एवेति ध्वनिः । स्फीतं प्रवृद्धम् । "कीनाशः कर्षकक्षुद्रोपांशुघातियमेषु च" इति धरणिः ॥ १३ ॥ ननु मन्मनोमध्यवर्त्तिनं कामं त्वं कथमज्ञासीरिति चेच्छ्रुतत्वादित्याह-अहमिति । त्वा त्वाम् । अश्रृणवम् । श्रवणमपि स्फूर्तिप्राप्तस्य भगवत एव मुखादवगंतव्यम् । यतस्त्वं न नैष्ठिकः । किं तूपकुर्वाणोऽस्यतो हेतोः ॥ १४ ॥ इत्यर्थ इति । "अश्रृणोन्नारदादेषा त्वय्येव कृतनिश्चया" इति तदुक्तेरिति भावः । 'आकूतिं रुचये प्रादात्' इत्युक्तेर्दानमात्रमेवेतः पूर्वमासीत्पद्धत्योद्वाहो ममैव भवत्वित्यर्थः । यत आदिना वेदेन विहितः ॥ आद्यो वेदविहितोऽतोऽसौ वैवाहिको विवाहसंबंधी विधिः प्रकार आवयोर्मद्देवहूत्योरनुरूपो योग्योऽस्ति द्वयोस्साभिलाषत्वात् । 'भार्याश्चतस्रो विप्रस्य' इत्युक्तेः क्षत्रियकन्याया ग्राह्यात्वाच्चेति भावः । इतः पूर्वं गौणविवाहस्य दानरूपस्य सत्त्वेपि विधिविहितत्वादयमेव मुख्य इति स्वामिचरणैरुक्तम् । मुख्यो वेति । एतेन सम्यग्दानविधिना दत्ताया एव कन्याया भार्यात्वं भवति नान्यथा तथा चोक्तं भारतेऽनुशासनपर्वणि-"पाणिग्रहणमंत्राणां निष्ठा स्यात्सप्तमे पदे । पाणिग्रहस्य भार्या स्याद्यस्य चाद्भिः प्रदीयते" इति । किं च-"बंधुभिः समनुज्ञाते मंत्रहोमौ प्रयोजयेत् । तथा सिद्ध्यंति ते मंत्रा नादत्तायाः कथंचन" इति च वाल्मीकीयायोध्याकाण्डेपि श्रीरामं प्रति सीतावाक्यम् । "इह लोके च पितृभिर्या स्त्री यस्य महाबल । अद्भिर्दत्ता स्वधर्मेण प्रेत्यभावेपि तस्य सा" इति । एतेन श्रीमनुना यदुक्तम् "अद्भिरेव द्विजाग्र्याणां कन्यादानं प्रशस्यते । इतरेषां तु वर्णानामितरेतरकाम्यया" इत्यत्राप्यन्यवर्णानां जलपूर्वकप्रदानस्य निषेधो न कृतः । किन्तु ब्राह्मणैरद्भिरेवान्यवर्णैस्त्वद्भिरन्यथा वेति । न ह्यत्रैवकारो द्विजाग्र्यपदसमभिव्याहृतोऽस्ति येन ब्राह्मणैरेवाद्भिः प्रदानमितरैर्नेत्यर्थो लभ्येत । तथा सति पंचमवेदश्रीमहाभारतसाक्षाद्वेदरूपश्रीमद्वाल्मीयवाक्याभ्यां 'यस्य चाद्भिः प्रदीयते' इति "या स्त्री यस्य महाबल । अद्भिर्दत्ता" इत्येवंरूपाभ्यां या यस्येति निर्देशेनागृहीतविप्रपदाभ्यां विरोधोऽवश्यं भविष्यतीति । किं च । "वाचा दत्ता तु या कन्या न दत्ता वारिणा च या । सा कन्या पितुरेव स्यात्" इति दिवोदासीयाशौचनिर्णयप्रकरणे मरीचिवाक्येपि विप्रपदानिर्देशात्सर्वेषां कन्यादानं जलदर्भैरेव शोभनमत एव लोके प्रवृत्तिरेषेति ॥ १६ ॥ "कामः स भूयात्" इत्यादित्रयस्यायमर्थः । तादृशीयं मां तपस्विनमपि प्रार्थयते तत एनां शुद्धभक्तां कथं त्यजेय

यां हर्म्यपृष्ठे क्वणदंघ्रिशोभां विक्रीडतीं कंदुकविह्वलाक्षीम् ॥ विश्वावसुर्न्यपतत्स्वाद्विमानाद्विलोक्य संमोहविमूढचेताः ॥ १७ ॥ तां प्रार्थयंतीं ललनाललाममसेवितश्रीचरणैरदृष्टाम् ॥ वत्सां मनोरुच्चपदः स्वसारं को नानुमन्येत बुधोऽभियाताम् ॥ १८ ॥ अतो भजिष्ये समयेन साध्वीं यावत्तेजो विभृयादात्मनो मे ॥ अतो धर्मान्पारमहंस्यमुख्याञ्छुक्लप्रोक्तान्बहु मन्येऽविहिंस्रान् ॥ १९ ॥ यतोऽभवद्विश्वमिदं विचित्रं संस्थास्यते यत्र च वाऽवतिष्ठते ॥ प्रजापतीनां पतिरेष मह्यं परं प्रमाणं भगवाननंतः ॥ २० ॥

इत्यादिमंत्रप्रसिद्धः । स्वयांगकांत्यैवं श्रियं भूषणादिशोभाम् ॥ १६ ॥ यां विलोक्य न्यपतत संमोहेन विमूढं व्याकुलं चेतो यस्य क्वणद्भ्यामंघ्रिभ्यां शोभा यस्याः ॥ ॥ १७ ॥ तां ललनानां ललामं भूषणभूताम् असेवितौ श्रियश्चरणौ यैस्तैरदृष्टां द्रष्टुमप्ययोग्याम् उच्चपदः उत्तानपादस्य अभियातां स्वयं प्राप्ताम् ॥ १८ ॥ भजिष्ये स्त्री करिष्ये यावदपत्योत्पत्तिस्तावद्गार्हस्थ्यं ततः परं संन्यास इति । भाषाबंधः समयः तमेवाह । यावदात्मनो मम तेजो गर्भं बिभृयात् । यद्वा ममात्मनो देहाच्च्युतं तेजो वीर्यं बिभृयादिति । अतः परं पारमहंस्यं ज्ञानं तस्मिन्मुख्यान् शुक्लेन विष्णुना साक्षात्प्रकर्षेणोक्तानविहिंस्रान्हिंसारहितान् शमादीन्बहु यथा भवत्येवमनुष्ठेयान्मन्ये ॥ १९ ॥ ननु तव पितुः प्रजापतेराज्ञा सृष्टावेव न संन्यासे तत्राह । यत इति । संस्थास्यते च लयं यास्यति । वावेति एवार्थे । ऋणत्रयापाकरणानंतरं संन्यास एव मादृशानां भगव

मिति । शुद्धभक्तित्वं चास्याः ''पितृभ्यां प्रस्थिते साध्वी'' इत्यादिना वक्ष्यति । यः समाम्नायविधौ वेदविहितविवाहविधौ प्रसिद्धः ते हस्तं सौभगत्वाय सौभाग्यवृद्धयेऽहं गृह्णामि मया पत्या सह जरदष्टिर्वृद्धा यथा भवसीति श्रुतिपदार्थः । छांदसत्वाद्ध्रस्व भः । स्वयाऽसाधारणया क्षिपतीमिव श्रियमिति व्यतिरेकालंकारेण तस्याः सौन्दर्यसाद्गुण्यादिकं निरुपममुक्तम् । ''व्यतिरेको विशेषश्चेदुपमानोपमेययोः ॥ शैला इवोन्नताः संतः किं तु प्रकृतिकोमलाः'' इति तल्लक्षणात् । अस्यार्थः-उपमानापेक्षयोपमेयस्योपमेयापेक्षयोपमानस्य च विशेषे व्यतिरेकालंकारः । यथा शैला इवेत्यत्रोन्नतत्वेन साम्येपि कोमलत्वेन विशेषोपपादनादिति । एवमत्रापि शोभात्वेन साम्येप्यंगशोभाभूषणादिशोभयोरतिशयत्वेन विशेष इति ध्येयम् ॥ १६ ॥ तामेवाह स्वाभाविकीम् यामिति । नितरामपतत् संमोहेन तद्दर्शनजेन सौंदर्यानुभवपारवश्येन भावपूर्वकतदवलोकनमहापराधफलं सद्य एव प्रापेत्यर्थः ॥ १७ ॥ ननु विलोक्येति क्त्वाप्रत्ययोक्तेर्विश्वावसुना सा दृष्टैवेति न हि न हीत्याह-असेवितश्रीति । मदभीष्टदेवश्रीमन्नारायणकान्तायाः श्रियाश्चरणौ मयैव सेवितावतो मयैव सा दृश्या भवेन्नान्येषां केषामपीति भावः। तेन चाकाशचारिण्यास्तस्याः कान्तिरेव विश्वावसुना विलोकिता न सेत्यायातम् । आभिजात्येत्युत्कर्षमाह-मनोस्तव वत्सां वात्सल्यपात्राम् । प्रियव्रतस्य तदा विरज्य गतत्वादुच्चपद इत्युक्तम् । ''ललामं लांछने ध्वजे । शृंगे प्रधाने भूषायां रम्ये बालधिपुंड्रयोः । तुरंगे च प्रभावे'' इति मेदिनी ॥ १८ ॥ यत इयं सर्वथा योग्याऽतो हेतोः समयः संकेतः ''समयौ कालसंकेतौ'' इति कोशात् । तमेव समयमेव आत्मनो ममेति द्विरुक्तिप्रतीतेराह-यद्वेति । अत्रापि च्युतपदापेक्षणाद्वास्तवार्थमाह-आत्मनः परमात्मनस्तेजः कपिलाख्यं मे मत्तो बिभृयात् । मे ममात्मनोभीष्टस्येति विश्वनाथः । अतः परं कपिलाख्यतेजोधारणोत्तरं पारमहंस्याज्ज्ञानादपि मुख्या न्निष्परिग्रहभक्तिधर्मानिति चक्रवर्ती।अविहिंस्रान्यश्वाद्यालंभविधुरान् ॥ १९॥ अत्राक्षिपति-नन्विति।यद्वात्रार्थे मम तव च स्मृत्यारूढो भगवानेव प्रमाणमित्याह-यत इति । इत्यर्थ इति । भगवता मन्वादिरूपेण ''ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्'' इत्युक्तेरिति भावः । यद्वा । भगवान्वेदो ''वेदो नारायणः साक्षात्'' इति याम्योक्तेः । ''जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वासीत्स प्रव्रजेत्'' इत्यादिश्रुतिरूपो नारायणो मम पित्रादिभ्यः परं प्रमाणं तदाज्ञा च पित्राद्याज्ञातोपि परं प्रमाणमित्यर्थः । वस्तुतः शास्त्रस्यैव मुख्यं पितृत्वं रक्षणार्थकपाधातुनिष्पन्नपितृशब्दस्यै

मैत्रेय उवाच ॥ स उग्रधन्वन्नियदेवाबभाष आसीच्च तूष्णीमरविंदनाभम् ॥ धियोपगृह्णन्स्मितशोभितेन मुखेन चेतो लुलुभे देवहूत्याः ॥ २१ ॥ सोऽनुज्ञात्वा व्यवसितं महिष्या दुहितुः स्फुटम् ॥ तस्मै गुणगणाढ्याय ददौ तुल्यां प्रहर्षितः ॥२२॥ शतरूपा महाराज्ञी पारिबर्हान्महाधनान् ॥ दंपत्योः पर्यदात्प्रीत्या भूषावासःपरिच्छदान् ॥ २३॥ प्रत्तां दुहितरं सम्राट् सदृक्षाय गतव्यथः ॥उपगुह्य च बाहुभ्यामौत्कंठचोन्मथिताशयः॥२४॥ अशक्नुवंस्तद्विरहं मुंचन्बाष्पकला मुहुः ॥ आसिंचदम्ब वत्सेति नेत्रोदैर्दुहितुः शिखाः ॥ २५॥ आमंत्र्य तं मुनिवरमनुज्ञातः सहानुगः ॥ प्रतस्थे रथमारुह्य सभार्यः स्वपुरं नृपः ॥ २६ ॥ उभयोर्ऋषिकुल्यायाः सरस्वत्याः सुरोधसोः ॥ ऋषीणामुपशांतानां पश्यन्नाश्रमसंपदः ॥ २७ ॥

तोक्त इत्यर्थः ॥ २० ॥ हे उग्रधन्वन् विदुर लुलुभे मुनेर्मुखेन प्रलोभ्यते स्म यद्वा मुखेन प्रलोभितवान् ॥ २१ ॥ स मनुः अन्वनंतरं महिष्याश्च व्यवसितं निश्चयं ज्ञात्वा ॥ २२ ॥ पारिबर्हान्विवाहकाले प्रदेयान् भूषाः भषणानि वासांसि परिच्छदान्गृहोपकरणानि च ॥ २३ ॥ प्रत्तां दत्ताम् । सदृक्षाय सदृशाय गता व्यथा चिंता यस्य औत्कंठयेनोन्मथितः क्षुभित आशयो यस्य॥२४॥तस्या विरहं सोढुं हे अंब हे वत्से इति ब्रुवन् । संधिरार्षः शिखाः केशानासिंचत॥२५॥२६॥ ऋषिकुलहितायाः

वार्थस्यै हिकामुष्मिकहितोपदेष्टृत्वेन पालनस्य तत्रैव चरितार्थत्वात् । वक्ष्यत्यपि । "शास्त्रस्य पितुरादेशं यो न वेद निवर्त्तकम् । कथं स पितुरादेशं गुणविस्रंभ्युपक्रमेत्" इति नारदो दक्षोपाख्याने॥२०॥हे उग्रधन्वन्निति । यथा त्वं वीरो युद्धान्न निवर्त्तसे तथायमपि भगवद्धर्मादित्यभिप्रायः । मुखेन कर्त्रा । मुखदर्शनलोभितत्वान्मुखेनेत्युक्तिः । मुखस्य जडत्वेन साक्षात्कर्तृत्त्वं न युक्तं किं तु करणत्वमित्याह-यद्वेति । अरविंदनाभानुभवजातप्रसादरूपेण स्मितेन यच्छोभितं शोभाविशेषं प्राप्तं तेन मुखेन लुलुभेऽयमेव महाभागवतो मद्योग्यः पतिरिति लोभं चकारेति भावः । सस्मितेक्षणभाषणादियुतमुखत्वं कन्याकर्षणमंत्रोऽयं पत्युरन्यथेदानीमेवांगारलिप्तमिवोत्तरत्र किमुत वैमुख्या दिकं स्यादित्यतस्तादृशावसरे सस्मितेनैव भाव्यम् । यद्वा । देवहूत्या मुखेन स्मितशोभितेन चेतो लुलुभे । अर्थात्कर्दमस्य चेतस्तस्यां साकांक्षं बभूव । 'लुभ आकांक्षायां' धातुः तेन च हंतहंतातिविरक्ते कन्यार्पितेति मनुशतरूपयोरनुतापो माभूदिति व्यंजितम् ॥ २१ ॥ अनु अनंतरम् । दुहितुर्देवहूतेरयं मद्योग्यः पतिरित्येवंरूपं महिष्यास्तन्मातुरवश्यमस्मै तपस्विने दानेन मत्पुत्र्याः सुखं भावीत्ययमेवास्या अनुरूप इत्येवंरूपं च निश्चयम् । गुणाः शीलरूपादयस्तेषां गणेन परिवारेण युताय । तुल्यां गुणगणाढ्याम् । समयोगेन प्रहर्षितो जातानन्दः ॥२२॥ "पारिबर्हं राजयोग्यद्रव्ये देयपरिच्छदे । वरवध्वोर्विवाहादौ सर्वतो हिंसितेऽपि च" इति निरुक्तिः । "सामग्र्यां परितश्छन्ने गृहोपकरणे गृहे । परिच्छदपरिच्छादौ मेघसंघातवस्त्रयोः" इति च ॥ २३ ॥ औत्कंठ्येन प्रेमविशेषेण । सदृशाय गुणशीलादिभिस्तुल्याय ॥२४॥ "अंबा मातरि पुत्र्यां च काशीराजहि मालयोः । रक्षितायां सुतायां च" इति निरुक्तिः।सोढुमिति शेषः । तद्विरहं सुतावियोगम् ॥२५॥२६॥ आश्रमसंपदोऽग्निहोत्रादिसाधनस्रुक्स्रुवादिलक्षणा वेदध्वनिलक्षणा वा । "ऋचो यजूंषि सामानि सा हि श्रीरमृता

तमायांतमभिप्रेत्य ब्रह्मावर्तात्प्रजापतिम् ॥ गीतसंस्तुतिवादित्रैः प्रत्युदीयुः प्रहर्षिताः ॥ २८ ॥ बार्हिष्मती नाम पुरी सर्वसंपत्समन्विता ॥ न्यपतन् यत्र रोमाणि यज्ञस्यांगं विधुन्वतः ॥ २९ ॥ कुशाः काशास्त एवासन्शश्वद्धरितवर्चसः ॥ ऋषयो यैः पराभाव्य यज्ञघ्नान् यज्ञमीजिरे ॥ ३० ॥ कुशकाशमयं बर्हिरास्तीर्य भगवान्मनुः ॥ अयजद्यज्ञपुरुषं लब्धा स्थानं यतो भुवम् ॥ ३१ ॥ बर्हिष्मतीं नाम विभुर्यां निर्विश्य समावसत् ॥ तस्यां प्रविष्टो भवनं तापत्रयविनाशनम् ॥ सभार्यः सप्रजः कामान्बुभुजेऽन्याविरोधतः ॥ ३२ ॥ संगीयमानसत्कीर्तिः सस्त्रीभिः सुरगायकैः ॥ प्रत्यूषेष्वनुबद्धेन हृदा शृण्वन्हरेः कथाः ॥३३॥ निष्णातं योगमायासु मुनिं स्वायंभुवं मनुम् ॥ यदा भ्रंशयितुं भोगा न शेकुर्भगवत्परम् ॥३४॥

उभयोः सुरोधसोः शोभनतटयोः ॥ २७ ॥ अभिप्रेत्य ज्ञात्वा ब्रह्मावर्तादेशात्प्रजाः पतिं प्रत्युज्जग्मुः ॥ २८ ॥ कोऽसौ ब्रह्मावर्त इत्यपेक्षायामाह । यत्र बर्हिष्मती नाम पुरीति । साऽपि कुत्र यत्र यज्ञस्य यज्ञवराहस्य रोमाणि न्यपतन्निति यत्रेति सर्वत्र संबध्यते ॥ २९ ॥ बर्हिष्मतीनामनिरुक्तिं ब्रुवन्प्रसंगादेशस्य श्रैष्ठ्यमाह । द्वाभ्याम् । कुशाः काशाश्चासन् शश्वन्नित्यं हरितं वर्चो वर्णो येषाम् । यज्ञघ्नान् राक्षसादीन् पराभवं नीत्वा यज्ञं विष्णुम् ॥ ३० ॥ यज्ञपुरुषं विष्णुं यत इति यत्रायजत् भुवं स्थानं लब्धेति तृन्प्रत्ययांतम् । लब्धवान्सन्नित्यर्थः । यतो लब्धवांस्तं यज्ञपुरुषमिति वा एतेन स्वर्गादपि भूमिः श्रेष्ठा तत्रापि तत्स्थानं श्रेष्ठमित्युक्तं भवति ॥ ३१ ॥ प्रस्तुतमाह । यां बर्हिष्मतीं नाम पुरीं समावसत् पूर्वं यस्यामुषितस्तस्यां निर्विश्य भवनं प्रविष्टः सन्भोगान्बुभुजे इत्यन्वयः ॥ ३२ ॥ अन्येषां धर्मादीनामविरोधेन प्रत्यूषेषु उषःसु संगीयमाना सत्कीर्तिर्यस्य तथापि स्वयं हरेरेव कथाः शृण्वन्भोगान्बुभुजे ॥ ३३ ॥ योगमायासु ऐच्छिकभोगरचनासु

सताम्'' इत्यादिश्रुतेः ॥ २७ ॥ ''सरस्वतीदृषद्वत्योर्देवनद्योर्यदंतरम् । तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते'' इत्यादिपुराणात् । तं स्वायंभुवम् ॥ २८ ॥ सापि बर्हिष्मत्यपि॥२९॥आदिनाऽसुरग्रहः । यैः कुशैः ''अपहता असुरा रक्षांसि वेदिषदः'' इति श्रुतेः ॥ ३० ॥ बर्हिःशब्द उभयार्थकः । यद्वा । कुशकाशरूपं बर्हिर्हरितामितं तदित्यर्थः । ''हस्तमात्रं भवेद्बर्हिरत ऊर्द्ध्वं तृणं स्मृतम् ।'' एतेनासनं हस्तमितकुशकाशनिर्मितं जपयज्ञादौ कार्यमिति ध्वनितम् । यद्वास्तीर्यास्तरणं परिस्तरणं विधाय होमवेलायामित्यर्थः । यत इति सप्तम्यर्थे तासिः । इत्यथ इति । तृन्प्रत्ययस्य शीलेऽर्थे विहितत्वाच्छीलार्थातीतार्थयोः '' तृन् '' इत्यादिसूत्रेषु समनिर्दिष्टत्वात्तृन्प्रत्ययस्याप्यतीतार्थकत्वमिति भावः । यत्तदोर्नित्यसम्बन्धमपेक्ष्याह–यतो लब्धवानिति । स्वर्गादपि भूमिः श्रेष्ठेति खटांगोपाख्याने स्फुटतरं स्वर्गाद्भूतलागमनेनावसीयते । तत्रापि भूमितलेऽपि तत्स्थानं भारतांतर्गतार्यावर्त्तमध्यवर्त्ति ब्रह्मावर्त्तमित्यर्थः ॥ ३१ ॥ अविरोधेन यथा कामभोगैर्धर्मार्थमोक्षा न नश्येयुस्तथा बुभुज इत्यर्थः ॥ ३२ ॥ सस्त्रीभिः साप्सरोभिः सुरगायकैर्गंधर्वादिभिः ॥ ३३ ॥ निष्णातं निपुणम् ॥ ३४ ॥

अयातयामास्तस्यासन् यामाः स्वांतरयापनाः ॥ शृण्वतो ध्यायतो विष्णोः कुर्वतो ब्रुवतः कथाः ॥ ३५ ॥ स एव स्वांतरं निन्ये युगानामेकसप्ततिम् ॥ वासुदेवप्रसंगेन परिभूतगतित्रयः ॥ ३६॥ शारीरा मानसा दिव्या वैयासे ये च मानुषाः ॥ भौतिकाश्च कथं क्लेशा बाधंते हरिसंश्रयम् ॥ ३७ ॥ यः पृष्टो मुनिभिः प्राह धर्मान् नानाविधाञ्छुभान् ॥ नृणां वर्णाश्रमाणां च सर्वभूतहितः सदा ॥ ३८ ॥ एतत्तु आदिराजस्य मनोश्चरितमद्भुतम् ॥ वर्णितं वर्णनीयस्य तदपत्योदयं शृणु ॥ ३९ ॥ इति श्रीमद्भागवते तृतीयस्कंधे सपत्नीकस्वायंभुवमनोः बर्हिष्मतीं प्रत्यागमनं नाम द्वाविंशतितमोऽध्यायः ॥ २२ ॥ मैत्रेय उवाच ॥ पितृभ्यां प्रस्थिते साध्वी पतिमिंगितकोविदा ॥ नित्यं पर्यचरत् प्रीत्या भवानीव भवं प्रभुम् ॥ १ ॥ विश्रंभेणात्मशौचेन गौरवेण दमेन च ॥ शुश्रूषया सौहृदेन वाचा मधुरया च भोः ॥२॥ विसृज्य कामं दंभं च द्वेषं लोभमघं मदम् ॥ अप्रमत्तोद्यता नित्यं तेजीयांसमतोषयत् ॥ ३ ॥

यद्यतः आभ्रंशयितुम् आ ईषदपि भ्रंशयितुमभिभवितुम् ॥ ३४ ॥ अतो यातो यामो यस्य पक्वस्यान्नस्य तद्गतसारं भवत्यतोऽन्यदपि गतसारं यातयाममुच्यते । अयातयामा अगतसारा आसन् । स्वांतरं तदीयं मन्वंतरं यापयंति ते यामाः कालावयवाः कुर्वतः स्ववाक्यैरुपनिबध्नतः ॥ ३५ ॥ परिभूतगतित्रयं जाग्रदादि सात्त्विकादि वा येन ॥ ३६ ॥ दिव्यास्त्वांतारिक्षाः मानुषाः शत्रुप्रभावाः भौतिकाः शीतोष्णादिप्रभावाः । वैयासे हे विदुर ॥ ३७ ॥ तस्य ज्ञानातिशयमाह । य इति । नृणां साधारणधर्मान् ॥ ३८ ॥ तस्य यदपत्यं देवहूतिस्तस्योदयं प्रभावम् ॥ ३९ ॥ इति तृतीये टीकायां द्वाविंशोऽध्यायः ॥ २२ ॥ ॥ त्रयोविंशे ततो योगनिर्मिते सर्वसंपदि ॥ विमाने कामगे चित्रा तयो रतिरुदीर्यते ॥ १ ॥ प्रस्थिते गमने कृते सति ॥ १ ॥ २ ॥ दंभं कपटम् । अघं निषिद्धाचरणं तेजीयांसमतितेजस्वि

यतः पूर्वमुक्तेरत इति । "जीर्णं च परिभुक्तं च यातयाममिदं द्वयम्" इत्यमरः ॥३५॥ स मनुः ॥३६॥ शारीरा व्याधयः । मानसाः कामादिजाः । शारीरा मानसा आध्यात्मिकाः । दिव्या आधिदैविकाः । मानुष भौतिकाश्चाधिभौतिकास्तत्तदवांतरभेदविवक्षया तु द्वयोर्भेदः ॥ ३७ ॥ तस्य मनोः । स यच्च स्मृतिं चकार तदप्यधिकारानुसारेण भक्तौ तान्प्रवेशयितुमेव । ननु भक्तानेवानुगृह्णातु किमन्यैरत आह सर्वभूतेति ॥ ३८ ॥ तस्य मनोः ॥ ३९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे द्वाविंशोऽध्यायः ॥ २२ ॥ सर्वाः संपदो यस्मिंस्तत्तथा तस्मिन् । तयोर्देवहूतिकर्दमयोः । चित्राऽनेकप्रकारा ॥ १ ॥ पतिरेव स्त्रीणामभीष्टद इति । विश्वासो विस्रंभः । आत्मशौचं मनःशुद्धिः । शुश्रूषया हितश्रवणेच्छया सेवया वा । सौहृदेनानिमित्तस्नेहेन ॥ २ ॥ कामं विषयेच्छाम् । दंभ आत्मन्यविद्यमानमाहात्म्यप्रकटनम् । अघं व्यसनं वा । अतितेज

स वै देवर्षिवर्यस्तां मानवीं समनुव्रताम् ॥ दैवाद्गरीयसः पत्युराशासानां महाशिषः ॥ ४ ॥ कालेन भूयसा क्षामां कर्शितां व्रतचर्यया ॥ प्रेमगद्गदया वाचा पीडितः कृपयाऽब्रवीत् ॥५॥ कर्दम उवाच ॥ तुष्टोऽहमद्य तव मानवि मानदायाः शुश्रूषया परमया परया च भक्त्या ॥ यो देहिनामयम तीव सुहृत् स्वदेहो नावेक्षितः समुचितः क्षपितुं मदर्थे ॥ ६ ॥ ये मे स्वधर्मनिरतस्य तपःसमाधिविद्यात्मयोगविजिता भगवत्प्रसादाः ॥ तानेव ते मदनुसेवनयाऽवरुद्धान् दृष्टिं प्रपश्य वितराम्यभयानशोकान् ॥ ७ ॥ अन्ये पुनर्भगवतो भ्रुव उद्विजृंभविभ्रंशितार्थरचनाः किमुरुक्रमस्य ॥ सिद्धाऽसि भुंक्ष्व विभवान्निजधर्मदोहान् दिव्यान्नरैर्दुरधिगान्नृपविक्रियाभिः ॥ ८ ॥ एवं ब्रुवाणमबलाऽखिलयोगमायाविद्याविचक्षणमवेक्ष्य गताधिरासीत् ॥ संप्रश्रयप्रणयविह्वलया गिरेषद्व्रीडाऽवलोकविलसद्धसिताननाह ॥ ९ ॥

नम् ॥ ३ ॥ दैवाद्गरीयसो दैवादपि गुरुतरात् । दैवमप्यन्यथा कर्तुं समर्थादित्यर्थः ॥ ४ ॥ व्रतचर्यया कर्शितां तत्रापि भूयसा कालेनातिक्षामामित्यर्थः ॥ ५ ॥ सुहृत्प्रियः मदर्थे क्षपयितुं नावेक्षितो न गणितः समुचितः श्लाघ्योऽपि मत्सेवासक्त्योपेक्षित इत्यर्थः ॥ ६ ॥ तपश्च समाधिश्च विद्या च उपासना तासु य आत्मयोगश्चित्तैकाग्र्यं तेन विजिताः प्राप्ता भगवत्प्रसादा दिव्यभोगास्तानेव तेऽवरुद्धांस्त्वयापि वशीकृतान्प्रपश्य ते दिव्यां दृष्टिं वितरामि यया दृष्ट्या द्रक्ष्यसि ॥ ७ ॥ अन्ये पुनर्भोगाः किं न किमपि अतितुच्छा इत्यर्थः । तत्र हेतुः । भगवत उरुक्रमस्य या भ्रूस्तस्या उद्विजृंभो वक्रीभावस्तेन विभ्रंशिता अर्थरचना मनोरथा येषु निजधर्मेण पातिव्रत्येन दुह्यंत इति तथा तान् दुरधिगान्दुष्प्रापान् नृपा वयमिति या विक्रियास्तत्तद्भोगविकृतयस्ताभिः ॥ ८ ॥ अखिला योगमायाश्च विद्याश्च तत्तदुपासनास्तासु विचक्षणं निपुणमेवं ब्रुवाणं पतिमवेक्ष्य गताधिर्निश्चिंता जाता संप्रश्रयो विनयः प्रणयः प्रेम ताभ्यां विह्वला गद्गदा तया गिरा ईषद्व्रीडासहितो

स्विनमतींद्रियकरणशक्तिमंतम् ॥ ३ ॥ ब्रह्मदेहोद्भवा मरीच्यादयो देवर्षयः । देवत्वे सति तपोविद्यादिनिष्ठत्वात् तेष्वपि वर्य्यः श्रेष्ठः कर्दमः मानवीं मनुपुत्रीं समनुव्रतां स्वानुकूलाम् । इत्यर्थ इति । तपोयोगबलेनाभवितव्यमपि भवितव्यं, भवितव्यं चाभवितव्यं कर्तुं समर्थादिति भावः ॥ ४ ॥ तत्रापि कार्शत्वेऽपि । इत्यर्थ इति । बहुकालव्रतादिनातिस्थूलोप्यतिकृशो भवतीति भावः ॥ ५ ॥ इत्यर्थ इति । तिष्ठतु नश्यतु वेत्येवं न गणितः इति भावः । पतिव्रताया युक्तं तवैतदित्याह मदर्थे मत्सेवार्थे एव क्षपितुं क्षीणी कर्तुं समुचित इति देहविशेषणम् ॥ ६ ॥ तस्मादेतन्निरुपाधिसेवा ऋणपरिशोधनार्थमन्यात्किञ्चन पूजां दातुं नोपयुज्यते । किं त्वेतदेव परमदुर्लभं वस्त्वित्याह-य इति । पूर्वं स्वधर्मः । ततः प्रधानपूजा ततस्तपस्ततः समाधिरेकाग्रता ततो विद्यानुभवः तत आत्मना भगवता शुक्लेन योगः संयोगः तैर्निर्जिता इति धर्मादीनामपि तत्परत्वेन कृतिर्गम्यत इति संदर्भः । अत्र स्वधर्मतपोमिश्रभगवद्ध्यानादिभिर्ये भगवत्प्रसादास्तेभ्यो भोगमोक्षाववाधितावेव स्यातामित्यभिप्रायेणाह-अभयानशोकानिति ॥ ७ ॥ अन्ये स्वर्गादिलोकीयाः । इत्यर्थ इति । सभयत्वादिति भावः । तत्र तुच्छत्वे उरुक्रमस्य विष्णोः । ताभिर्हेतुभूताभिरित्यर्थः । यद्वा । नृपाणां विशिष्टाः क्रिया अश्वमेधादिरूपास्ताभिरित्यर्थः । विभवान् ऐश्वर्याणि । "विभवो रैमोक्षैश्वर्ये" इति मेदिनी । सिद्धासि कृतार्थासि । "स्यात्सिद्धस्त्रिषु निष्पन्नः" इति धरणिः । निजधर्मप्राप्तान् ॥ ८ ॥ एवमुपदिष्टाया देवहूत्या मनसि किमभूदिति चेत्तत्राह-एवमिति । अवेक्ष्य विचार्य मद्भर्त्ता मत्पारलौकिकीर्भोगमोक्षसंपदो ददाति न त्वैहि

देवहूतिरुवाच ॥ राद्धं बत द्विजवृषैतदमोघयोगमायाऽधिपे त्वयि विभो तदवैमि भर्तः ॥ यस्तेऽभ्यधायि समयः सकृदंगसंगो भूयाद्गरीयसि गुणः प्रसवः सतीनाम् ॥ १० ॥ तत्रेति कृत्यमुपशिक्ष यथोपदेशं येनैष मे कर्शितोऽतिरिंरंसयात्मा ॥ सिध्येत ते कृतमनोभवधर्षिताया दीनस्तदीश भवनं सदृशं विचक्ष्व ॥११॥ मैत्रेय उवाच ॥ प्रियायाः प्रियमन्विच्छन्कर्दमो यागमास्थितः ॥ विमानं कामगं क्षत्तस्तर्ह्येवाविरचीकरत् ॥१२॥ सर्वकामदुघं दिव्यं सर्वरत्नसमन्वितम् ॥ सर्वर्द्ध्युपचयोदर्कं मणिस्तंभैरुपस्कृतम् ॥ १३ ॥

योऽवलोकस्तेन विलसद्विकसितं हसितं जातहासं चाननं यस्याः सा आह जगाद ॥ ९ ॥ बतेति हर्षे । द्विजवृष द्विजश्रेष्ठ हे भर्तस्त्वय्येतत्सर्वं राद्धं सिद्धमेव तदहमवैमि जानामि किं तु यस्ते त्वया समयोऽभिहितः स तावद्भूयात् सकृदिति गर्भसंभवमात्रपर्यंत इत्यर्थः । यस्माद्गरीयसि श्रेष्ठे भर्तरि हेतुभूते स्त्रीणां प्रसवो गुणो महान् लाभः । समासपाठे गरीयसि सतीनां यतो गुणविस्तारो भवति । अतः पुत्रोत्पत्त्या मम गुणविस्तारे जाते पश्चात्त्वदुक्तं सर्वं भवत्विति भावः ॥ १० ॥ अंगसंगार्थं च प्रथम मिति कर्तव्यतां संपादयेत्याह । हे ईश तत्रांगसंगे इति कृत्यं साधनं यथोपदेशं कामशास्त्रानुसारेणोपशिक्ष संजानीहि उपकल्पयेत्यर्थः । येन साधनेनाभ्यंगभोजनपानादिनाऽतीव रंतुमिच्छया कर्शितो दीनश्च ममैष आत्मा देहः सिध्येत रतिसमर्थो भवेत् । कथंभूतायाः । ते त्वयैव कृतः क्षोभितो यो मनोभवस्तेन धर्षितायाः । तत्ततोऽनुरूपं भवनं विचक्ष्व वितर्कय विचारयेति यावत् ॥ ११ ॥ तत्क्षणमेव आविरचीकरदाविर्भावयांबभूव ॥ १२ ॥ तदेव विशिनष्टि । सर्वकामदुघमिति नवभिः सर्वैश्च

कीरिति मनसि विमृशंती । संप्रश्रयो विनयः प्रणयः प्रेमविशेषस्तावेव विह्वलं यथा स्यात्तथा यांती कर्दमं प्रति गच्छंती या गीस्तया विह्वलयेति सोमपाशब्दवदिति चक्रवर्त्ती । पत्यौ प्रकटं संभोगप्रार्थनाया रसाभासत्वात् । तस्या देवहूतेश्चोत्तमांगनामुकुटमणित्वात् । राद्धमित्यादिपद्यद्वयस्य मुखेन वक्तुमशक्यत्वात् तद्वाचनार्थं लज्जा हसितमवेक्षितमवलोकमेव मुखं चकार । तत्र व्यज्यमानौ विनयप्रणयावेव गद्गदवाणीं चक्रतुः तथा यथा राद्धमित्यादिपद्यद्वयं स्पष्टमुच्यमानं बभूव । मुखेन तु सा तूष्णीमेव तदा तस्थावित्यर्थः ॥९॥ एतत्सर्वमपूर्वैश्वर्योत्पादनादि । तत्सर्वमहं जानामि त्वत्सेवाप्रभावेण । इत्यर्थ इति । यावत्तेजो बिभृयादात्मनो मे इत्युक्तः । संकेतस्संपादनीय इति भावः । प्रसवोऽपत्योत्पत्तिः । यदभावाद्वंध्येयमिति स्त्रीणां निंदैवेति भावः । समासपाठे गुणप्रसव इति पाठे । इति भाव इति । मत्पुत्रोत्पत्त्यनंतरं यत्त्वयाभीप्सितं संन्यासकरणं तदप्यृणत्रयस्य शोधितत्वाद्भवत्वित्यहमप्यनुजानामीति तात्पर्यम् । गुणविस्तारस्तु धन्यौ मातापितरौ ययोरीदृशः पुत्र इत्येवंलक्षणः कीर्त्तिप्रसर एवेत्यर्थः ॥ १० ॥ ननु तर्हि प्रविश पर्णशालां तत्ते वांछितं करवाणीति चेन्न तदीदृशमलिनशरीरेणैतादृशपर्णशालायां नैतादृशपरिच्छदेन सिद्ध्येदित्याह-तत्रेति । कामशास्त्रानुसारेण वात्स्यायनादिशास्त्रोपदेशानतिक्रमेण उपशिक्ष । स्वस्मादेव जानीहि कामक्रियायाः स्वैकगम्यत्वात् ज्ञात्वा च तत्तत्समुचितवस्तुजातं रसोद्दीपनादिकमभ्यंगभोजनपानादिकं च साधु संपादयेत्यर्थः । धर्षिताया अभिभूतायाः भवनं गृहम् । ईशेति । योगबलेन सर्वं कर्तुं समर्थोसीत्याह ॥ ११ ॥ तूष्णीं स्थितया देवहूत्या नेत्रेङ्गितेनैव यदुक्तं कर्दमोपि तूष्णीं स्थित एव तदैव तत्सर्वं संपादयामासैव । न तु प्रत्युत्तरं ददावित्याह प्रियाया इत्यादिना । योगं योगबलमास्थितः । विमानं सार्वभौमसंपद्युतं सप्तभूमिकं खगामि गृहम् । "सम्राट्संपद्युतं गेहं खगामि सप्तभूमिकम् ॥ विमानं प्रोच्यते पोताश्वामरवाहनेष्वपि" इति धरणिः ॥ १२ ॥ तदेव विमानमेव । दिव्यं सुंदरम् । "दिव्यं वल्गौ दिवि भवे लवंगामलकीफले" इति धरणिः । संघवृद्ध्योरुपचय इति च अत्रोपचयः

दिव्योपकरणोपेतं सर्वकालसुखावहम् ॥ पाट्टिकाभिः पताकाभिर्विचित्राभिरलंकृतम् ॥ १४ ॥ स्रग्भिर्विचित्रमाल्याभिर्मंजुसिंजत्षडंघ्रिभिः ॥ दुकूलक्षौमकौशेयैर्नानावस्त्रैर्विराजितम् ॥ १५ ॥ उपर्युपरिविन्यस्तनिलयेषु पृथक्पृथक् ॥ क्षिप्तैः कशिपुभिः कांतं पर्यंकव्यजनासनैः ॥ १६ ॥ तत्रतत्र विनिक्षिप्तनानाशिल्पोपशोभितम् ॥ महामरकतस्थल्या जुष्टं विद्रुमवेदिभिः ॥ १७ ॥ द्वास्सु विद्रुमदेहल्या भातं वज्रकपाटवत् ॥ शिखरेष्विंद्रनीलेषु हेमकुंभैरधिश्रितम् ॥ १८ ॥ चक्षुष्मत्पद्मरागाग्र्यैर्वज्रभित्तिषु निर्मितैः ॥ जुष्टं विचित्रवैतानैर्महार्हैर्हेमतोरणैः ॥१९॥ हंसपारावतव्रातैस्तत्रतत्र निकूजितम् ॥ कृत्रिमान्मन्यमानैः स्वानधिरुह्याधिरुह्य च ॥ २० ॥ विहारस्थानविश्रामसंवेशप्रांगणाजिरैः ॥ यथोपजोषं रचितैर्विस्मापनमिवात्मनः ॥ २१ ॥

रत्नादिभिः समन्वितम् । सर्वर्धीनां सर्वसंपदां य उपचयस्तस्योदर्के उत्तरोत्तराभिवृद्धिर्यस्मिन् उपस्कृतं शोभितम् ॥ १३ ॥ उपकरणं परिकरः । पट्टिका अल्पविस्तारपट्टवस्त्रविशेषाः पताका विस्तृतास्ताभिः ॥ १४ ॥ विचित्राणि माल्यानि पुष्पाणि यासु मंजु यथा भवत्येवं सिंजंतः कूजंतः षडंघ्रयो यासु ताभिः स्रग्भिः ॥ १५ ॥ उपर्युपरिविरचितगृहेषु कशिपुभिः शय्याभिः कांतं कमनीयम् । पर्यंकादिभिश्च कांतम् ॥ १६ ॥ १७ ॥ द्वास्सु द्वारेषु विद्रुमनिर्मिता देहली उदुंबरस्तया भातं शोभितम् । वज्रखचितकपाटयुक्तम् । इंद्रनीलमयेषु शिखरेषु प्रासादाग्रभागेषु ॥ १८ ॥ चक्षुष्मंत इव ये पद्मरागाग्र्यास्तैः । यद्वा । चक्षुष्मदिव कैः पद्मरागाग्र्यैः विचित्रैर्वैतानैर्वितानसमूहैः ॥ १९ ॥ कृत्रिमानपि हंसादीन्स्वान्सजातीयान्मन्यमानैस्तत्रतत्राधिरुह्याधिरुह्य निकूजितम् ॥ २० ॥ विहारस्थानं क्रीडाप्रदेशः विश्रामः शयनगृहम् । संवेश

संवः ॥ १३ ॥ परिकरः सामग्री सर्वकालेषु शीतोष्णवर्षासमयेषु तत्तत्कालोचितस्थानद्रव्यादिभिः सुखदम् । पट्टिकाल्पपताका । "पताका विस्तृतध्वजे पट्टिकाल्पध्वजे स्मृता" इति स्वामी ॥ १४ ॥ सिंजंतः शब्दं कुर्वंतः स्रग्भिर्मालाभिः । सिंजितशब्दो यद्यपि भूषणशब्देऽस्ति तथाप्यत्र भ्रमराणामपि मालाभूषणत्वादत्र न विरुद्ध इति । "दुकूलं क्षौममस्त्रियाम्" इत्यमरोक्तेर्दुकूलक्षौमयोरेकार्थत्वेप्यवांतरभेदो ज्ञेयः । यद्वा । दुकूलैः श्लक्ष्णैः क्षौमैः कौशेयैश्च । क्षुमी अतसी तज्जैः क्षौमैः । कोशो जंतुविशेषस्तज्जैः कौशेयैः । "दुकूलं श्लक्ष्णवस्त्रे क्षौमे च" इति मेदिनी ॥ १५ ॥ शय्या चोक्ता शिल्पिशास्त्रे । "चतुरशीतिपर्वाणि दैर्घ्येण परिकल्पयेत् । षष्ट्यंगुलानि विस्तारं मंचकं हस्तसंमितम् । एवं शय्या विधातव्या सर्वेषां शयनोचिता । मानाधिक्ये दरिद्रः स्यान्मानहीने सुखक्षयः ॥" वाराहे तु "एकद्रुमेण धन्या वृक्षद्वयनिर्मिता तु धन्यतरा । त्रिभिरात्मजवृद्धिकरा चतुर्भिरर्थो यशश्चाग्र्यम् ॥ पंचवनस्पतिरचिता पंचत्वं याति तत्र यः शेते । षट्सप्ताष्टतरूणां काष्ठैर्घटिता कुलं हंति" इति । काष्ठविचारोप्युक्तः । पर्यंकलक्षणमपि तत्रैवोक्तम् । "आयामः सप्ततालः स्याच्चतुस्तालश्च विस्तृतम् । द्वितालमुन्नतं ज्ञेयमिति पर्यंकलक्षणम् ॥" तालादिप्रमाणश्च । "अंगुष्ठादिकनिष्ठांतं भवेन्मानचतुष्टयम् । प्रादेशस्तालगोकर्णं वितस्तिस्तु यथाक्रमम्" इति प्रयोगरत्नात् । व्यजनं तालवृन्तम् । आसनमौर्णादि ॥ १६ ॥ तत्रतत्र तासुतासु भूमिकासु महामरकतो मणिभेदस्तद्राचितया स्थल्या प्रासादाधस्तनभूम्या । विद्रुमोपि मणिभेदः । वेदिश्चतुष्का ॥ १७ ॥ शिखरेषु सर्वोर्द्धप्रासादचूडासु । हेमकुंभैः स्वर्णकलशैः ॥ १८ ॥ पद्मरागो मणिभेदः । अचक्षुष्मतश्चक्षुष्मत्त्वोपमानं सौभाग्याय समासापेक्षयाऽसमस्तस्य झटिति बुद्ध्यारोहणादाह-यद्वेति ॥ १९ ॥ २० ॥ यद्वात्मनो विमानस्यापि विस्मापनमिवेत्युत्प्रेक्षामात्रमिति

१ पादः ।

ईदृग्गृहं तत्पश्यंतीं नातिप्रीतेन चेतसा ॥ सर्वभूताशयाभिज्ञः प्रावोचत्कर्दमः स्वयम् ॥ २२ ॥ निमज्ज्यास्मिन्ह्रदे भीरु विमानमिदमारुह ॥ इदं शुक्लकृतं तीर्थमाशिषां यापकं नृणाम् ॥ २३ ॥ सा तद्भर्तुः समादाय वचः कुवलयेक्षणा ॥ सरजं बिभ्रती वासो वेणीभूतांश्च मूर्धजान् ॥ २४ ॥ अंगं च मलपंकेन संछन्नं शबलस्तनम् ॥ आविवेश सरस्वत्याः सरः शिवजलाशयम् ॥२५॥ सांऽतःसरसि वेश्मस्था शतानि दश कन्यकाः ॥ सर्वाः किशोरवयसो ददर्शोत्पलगंधयः॥२६॥तां दृष्ट्वा सहसोत्थाय प्रोचुः प्रांजलयः स्त्रियः ॥वयं कर्मकरीस्तुभ्यं शाधि नः करवाम किम् ॥२७॥ स्नानेन तां महार्हेण स्नापयित्वा मनस्विनीम् ॥ दुकूले निर्मले नूत्ने ददुरस्यै च मानद ॥ २८ ॥ भूषणानि पराध्यर्यानि वरीयांसि द्युमंति च ॥ अन्नं सर्वगुणोपेतं पानं चैवामृतासवम् ॥ २९ ॥ अथादर्शे स्वमात्मानं स्रग्विणं विरजांबरम् ॥ विरजं कृतस्वस्त्ययनं कन्याभिर्बहु मानितम् ॥ ॥ ३० ॥ स्नातं कृतशिरःस्नानं सर्वाभरणभूषितम् ॥ निष्कग्रीवं वलयिनं कूजत्कांचननूपुरम् ॥ ३१ ॥

उपभोगस्थानम् । प्रांगणं गृहाद्बहिः अजिरं प्राकाराद्बहिः यथोपजोषं यथासुखमात्मनः स्वस्य मायाविनोऽपि विस्मयजनकमिव ॥ २१ ॥ नातिप्रीतेन मलिनदेहत्वात्परिचारिकाभावाच्च ॥ २२ ॥ अस्मिन् ह्रदे बिंदुसरसि आरुहाधिरोह शुक्लेन विष्णुना कृतमानंदबिंदुनिपातनेन, तीर्थं यापकं प्रापकम् ॥ २३ ॥ समादायाहृत्य सरजं मलिनम् । वेणीभूताञ्जटिलान् ॥ २४ ॥ शबलौ विवर्णौ स्तनौ यस्मिंस्तत् । सरस्वत्याः शिवानि जलान्याशेरते यस्मिन् । शिवा जलाशया जलचरा यस्मिन्निति वा ॥ ॥ २५ ॥ सा तत्र निमग्ना सती विस्मयं ददर्श । तमाह । सांऽतःसरसीति दशभिः । उत्पलगंधयः कमलगंधीः ॥ २६ ॥ तुभ्यं तव कर्मकरीः परिचारिका वयमस्मानाज्ञापयेति स्त्रियः प्रोचुः ॥ २७ ॥ ततश्च स्नानेन स्नानयोग्यतैलादिना ॥ २८ ॥ पराध्यर्यान्युत्कृष्टानि वरीयांसि तत्प्रियाणि द्युमंति दीप्तिमंति च । पानं पेयम् । अमृतं स्वादु आसवं मादकम् ॥ २९ ॥ आदर्शे स्वमात्मानं ददर्शेति शेषः । आत्मानं विशिनष्टि चतुर्भिः । कृतं स्वस्त्ययनं मंगलं यस्य पुंस्त्वमात्मशब्दसामानाधिकरण्यात् ॥ ३० ॥ विरजमित्यस्य प्रपंचः स्नातमुद्वर्त्य क्षालितम् । कृतं शिरःस्नानमभ्यंगो येन भूषितत्वमेवाह । निष्कं पदकं ग्रीवायां यस्य ॥ ३१ ॥

संदर्भः ॥ २१ ॥ २२ ॥ आशिषामभीप्सितानाम् ॥ २३ ॥ सा देवहूतिः ॥ २४ ॥ मलपंकेन दृढकिट्टेन । शिवानि कल्याणदानि । यद्वा । सरस्वत्याः सरस्तत्संबंधिकासारः तन्निकटमिति यावत् । सरस्वत्या परिश्रितम् । इत्युक्तेः ॥ २५ ॥ तत्र बिंदुसरसि तं विस्मयं विस्मापकम् । प्रथमा द्वितीयार्थेत्र । यद्वोत्तरश्लोकस्थस्त्रिय इत्यस्य विशेषणम् ॥ २६ ॥ परिचारिका दास्यः ॥ २७ ॥ परिचारिकत्वमाह-ततश्च प्रार्थनोत्तरं महतां राजकलत्राणामर्हेण सुगंधिद्रव्याद्युद्वर्त्तनपूर्वकेण मनस्विनीमुदारमनसम् । दुकूले धौतवस्त्रे । निर्मले शुक्लोत्तरीये इत्यर्थः ॥ २८ ॥ सर्वगुणोपेतं सर्वरसयुतम् ॥ २९ ॥ अथ वस्त्रालंकारधृत्युत्तरपानभोजनानंतरम् । आदर्शे मुकुरे । "आदर्शो दर्पणे टीकाप्रतिपुस्तकयोरपि" इति मेदिनी ॥ ३० ॥ केचित्तु सुभगायाः शिरस्स्नानं काचित्कमाहुः । "कुलस्त्री तु शिरःस्नानमुत्सवे पुण्यतीर्थके । तैलादिना

श्रोण्योरध्यस्तया कांच्या कांचन्या बहुरत्नया ॥ हारेण च महार्हेण रुचकेन च भूषितम् ॥ ३२ ॥ सुदता सुभ्रुवा श्लक्ष्णस्निग्धापांगेन चक्षुषा ॥ पद्मकोशस्पृधा नीलैरलकैश्च लसन्मुखम् ॥ ३३ ॥ यदा सस्मार ऋषभमृषीणां दयितं पतिम् ॥ तत्र चास्ते सह स्त्रीभिर्यत्रास्ते स प्रजापतिः ॥ ३४ ॥ भर्तुः पुरस्तादात्मानं स्त्रीसहस्रवृतं तदा ॥ निशाम्य तद्योगगतिं संशयं प्रत्यपद्यत ॥ ३५ ॥ स तां कृतमलस्नानां विभ्राजंतीमपूर्ववत् ॥ आत्मनो बिभ्रतीं रूपं संवीतरुचिरस्तनीम् ॥ ३६ ॥ विद्याधरीसहस्रेण सेव्यमानां सुवाससम् ॥ जातभावो विमानं तदारोहयदमित्रहन् ॥ ३७ ॥ तस्मिन्नलुप्तमहिमा प्रिययाऽनुरक्तो विद्याधरीभिरुपचीर्णवपुर्विमाने ॥ बभ्राज उत्कचकुमुद्गणवानपीच्यस्ताराभिरावृत इवोडुपतिर्नभस्थः ॥ ३८ ॥ तेनाष्टलोकपविहारकुलाचलेंद्रद्रोणीष्वनंगसखमारुतसौभगासु ॥ सिद्धैर्नुतो द्युधुनिपातशिवस्वनासु रेमे चिरं धनदवल्ललनावरूथी ॥ ३९ ॥

बहूनि रत्नानि यस्यां तथा रुचकन मंगलद्रव्येण कुंकुमादिना तदुक्तं विश्वप्रकाशे । "रुचकं मंगलद्रव्ये ग्रीवाभरणदंतयोः" इति॥ ३२॥ सुदता सुभ्रुवा चक्षुषेति च जातावेकवचनानि एतैर्लसच्छोभमानं मुखं यस्य कथंभूतेन चक्षुषा श्लक्ष्णो मनोहरः स्निग्धोऽपांगो नेत्रप्रांतो यस्य पद्मकोशेन स्पर्धत इति पद्मकोशस्पृत्तेन ॥ ३३॥ दृष्ट्वा च यदा पतिं सस्मार तदा यत्रासौ तत्रैव स्वयमप्यास्ते॥ ३४॥ आत्मानं निशाम्य दृष्ट्वा तां च तस्य योगगतिं योगप्रभावं दृष्ट्वा संशयं किमिदमिति विस्मयम्॥ ३५॥ स मुनिर्विवाहात्प्राग्यदात्मनो रूपं तदेव पुनर्बिभ्रतीम् । संवीतौ प्रावृतौ रुचिरौ स्तनौ यस्याः पाठांतरे तु रूपविशेषणम् ॥ ३६ ॥ शोभने वाससी यस्याः । जातो भावः प्रेम यस्य । हे अमित्रहन् जितकाम ॥ ३७ ॥ तस्मिन्विमाने मुनिर्बभ्राजे । न लुप्तो महिमा स्वातंत्र्यं यस्य उपचीर्णं शुश्रूषितं वपुर्यस्य विकसितकुमुद्गणवानपीच्योऽतिसुंदरः पूर्णचन्द्र इव मुनिर्नभ इव विमानं तारा इव ताः स्त्रियः कुमुदानीव तासां नेत्राणीति ज्ञेयम् ॥ ३८ ॥ तेन विमानेन अष्टलोकपालानां विहारो यस्मिन्कुलाचलेंद्रे मेरौ तस्य द्रो

पैतृके च सर्वदा कंठसंप्लवा ॥ वारुणर्क्षे न कुत्रापि स्नायात्स्त्री विधवां विना ॥" इति स्मार्त्ताः । बिंदुसरोवरस्य श्रीभगवन्नेत्रांबुसंभूतत्वादतीव पुण्यतीर्थत्वमस्त्यतोत्र शिरःस्नानेपि न दोषः । स्वामिचरणैः सशिरःस्नानस्य काचित्कत्वाभिप्रायेणैव शिरःस्नानपदेनाभ्यंगो गृहीतः । पदकमलंकारभेदः । "वक्षोलंकरणे निष्कम्" इति मेदिनी । वलयाः करकंकणास्तद्युक्तम् । "पादालंकृतिनूपुरम्" इति । "न धार्यं हेम पादयोः" इति निषेधस्य मनुष्यविषयत्वेन तस्या देवर्षिशिरोमणिकर्दमपत्नीत्वात्सर्वदेवतोत्तमत्वमतो न दोषः ॥ ३१॥ रुचकं वृत्ताकारं कंठाभरणं वा आदिना मुक्तादिग्रहः । "मंगलानि समस्पृशत्" इत्यत्र श्रीदशमे मंगलद्रव्याणि वक्ष्यामः॥ ३२॥ "श्लक्ष्णं हृद्ये परिष्वंगे" इति निरुक्तिः ॥ ३३ ॥ सस्मार एतत्सर्वं पतिपार्श्वे एव शोभत इति यदा चिचिन्त । अत्रात्मानं पत्युरेकासने आसीनमेव विवेद न तु जलहृदात्पदव्यापारेण यान्तमिति तस्याद्भुतैव योगगतिः ॥ ३४ ॥ संशयं विस्मयं न तु कोटिद्वयावलंबिविकल्पं प्रागेव योगित्वनिश्चायकधर्मदर्शनादित्यर्थः । "सुशय्यायां विस्मये च विकल्पेपि च संशयः" इति निरुक्तिः ॥ ३५ ॥ मलनिवर्तकं स्नानं मलस्नानं मध्यपदलोपी समासः । कृतं मलस्नानं यया ताम् । पाठांतरे संवीतरुचिरस्तनमिति पाठे ॥ ३६ ॥ विद्याधरो देवयोनिभेदस्तस्य भार्यासहस्रेण दासीरूपेण ॥ ३७ ॥ ३८ ॥ कुलाचला मलयादयस्तेषामिन्द्रः । "वरूथो रथगुप्तौ

वैश्रंभके सुरसने नंदने पुष्पभद्रके ॥ मानसे चैत्ररथ्ये च स रेमे रामया रतः ॥४०॥ भ्राजिष्णुन विमानेन कामगेन महीयसा ॥ वैमानिकान त्यशेत चरँल्लोकान्यथाऽनिलः ॥ ४१ ॥ किं दुरापादनं तेषां पुंसामुद्दामचेतसाम् ॥ यैराश्रितस्तीर्थपदश्चरणो व्यसनात्ययः ॥ ४२ ॥ प्रेक्षयि त्वा भुवो गोलं पत्न्यै यावान् स्वसंस्थया ॥ बह्वाश्चर्यं महायोगी स्वाश्रमाय न्यवर्तत ॥ ४३ ॥ विभज्य नवधाऽऽत्मानं मानवीं सुरतोत्सुकाम् ॥ रामां निरमयन् रेमे वर्षपूगान् मुहूर्तवत् ॥ ४४ ॥ तस्मिन् विमान उत्कृष्टां शय्यां रतिकरीं श्रिता ॥ न चाबुध्यत तं कालं पत्याऽपीच्येन संग ता ॥ ४५ ॥ एवं योगानुभावेन दंपत्यो रममाणयोः ॥ शतं व्यतीयुः शरदः कामलालसयोर्मनाक् ॥ ४६ ॥ तस्यामाधत्त रेतस्तां भावयन्नात्म नात्मवित् ॥ नोधा विधाय रूपं स्वं सर्वसंकल्पविद्विभुः ॥ ४७ ॥

णीषु दरीषु अनंगस्य सखा यो मारुतः शीतसुगंधमंदानिलस्तेन सौभगं सौंदर्यं यासु सिद्धैर्नुतः स्तुतः सन् घुधुनिर्गंगा तस्याः पातेन शिवः स्वनो यासु तासु रेमे । ललना वरूथी स्त्रीरत्नसमूहवान् ॥ ३९ ॥ वैश्रंभकादिषु देवोद्यानेषु मानसे च सरसि रतः प्रीतः सन् ॥ ४० ॥ अत्यशेतातिक्रम्य स्थितः ॥ ४१ ॥ उद्दामचेतसां धीरा णाम् । व्यसनं संसारस्तस्यात्ययो यस्मात् ॥ ४२ ॥ प्रेक्षयित्वा दर्शयित्वा गोलं मंडलम् । स्वसंस्थया द्वीपवर्षादिरचनया यावांस्तावंतम् । बहून्याश्चर्याणि यस्मिंस्तम् ॥ ४३ ॥ नवधा विभज्य नवप्रभेदमात्मानं कृत्वा ॥ ४४ ॥ ४५ ॥ शरदः संवत्सराः मनागीषदिव व्यतीयुः ॥ ४६ ॥ आत्मना स्वदेहार्धरूपेणातिप्रीत्या भावयन् तथा सति सदपत्यं भवेदिति नोधा नवधा सर्वसंकल्पविदिति तस्या बह्वपत्यसंकल्पं जानन्नित्यर्थः । विभुस्तथाकर्तुं समर्थश्च आत्मविदिति च तस्यामनासक्त

ना समूहेपि च कथ्यते'' इति ॥ ३९ ॥ स मुनिः ॥ ४० ॥ वैमानिकान्विमानगामिनो देवान् ॥ ४१ ॥ उद्दतं दाम बंधनं यस्मात्स तथा यद्वोत्कृष्टं दाम यस्य स तथा । दामोदरो नंदनंदनस्तत्र चेतो येषां कृष्णभक्तानामित्यर्थः । तदेव स्फुटयति–यैरिति । तीर्थपदो गंगादितीर्थाश्रयस्य ॥ ४२ ॥ स्वाश्रमाय स्वाश्रमं प्राप्तुम् ॥ ४३ ॥ आत्मानमात्मा शरीरं तेन तत्कारणं वीर्यं लक्ष्यते ॥ ४४ ॥ तं कालं भोगकालं न चाबुध्यत कियान्कालो गत इति नाज्ञासीत् । तत्र हेतुः पत्येति । अपीच्येनाल्पकालचरमधातुस्खलनवर्जितेन । 'पीच स्खलने' धातुः॥४५॥ इवोत्रार्थलभ्य इत्याह–ईषदिवेति ॥ ४६ ॥ तथा सति शुक्रशोणितसंगमे उभयोः सौमनस्ये सत्संततिर्वैपरीत्ये तु कुसंततिरित्युक्तं गारुडे–''दंपत्योः शुक्रसंयोगे सौमनस्ये सुसंततिः । वैमनस्ये तयोस्तत्र निश्चितं स्यात्कुसंततिः'' इति । इति भाव इति । अनासक्तत्वात्कामालपत्वं ततश्च वीर्या ल्पत्वमतो देवहूत्याश्चासक्तिमत्त्वाच्छोणिताधिक्यात्स्त्रीप्रजाधिक्यमित्याशयः । प्रमाणं चात्राह–पुमान् इति । नवशब्दस्य नवादेशश्छांदसः । यद्वा सर्वेषां ब्रह्मणो मरीच्यादिप्रजापतीनां च सृष्टिकामनया यः संकल्पस्त द्वित् । तथात्मानं भगवन्तं निजोपदेशकं वेत्तीति तथा । 'या तु आत्मभृतं वीर्यं नवधा प्रसविष्यति । वीर्ये त्वदीये ऋषय आधास्यंत्यंजसात्मनः ॥ सहाहं स्वांशकलया त्वद्वीर्येण महामुने । तत्र क्षेत्रे देवहूत्यां प्रणेष्ये तत्त्वसंहिताम् ॥'' इति हि तदुपदेशो यद्यपीत्थं तथापि तदसमाप्तौ प्रव्रजिष्यंतमिति ततोप्यधिमतत्प्रार्थनान्तरमाशंक्येति गम्यते । श्रीदेवहूत्यास्तु ''यावत्तेजो बिभृयादात्मनो मे'' इत्यत्रार्थविशेषो नावगत इति संदर्भः ॥४७॥

अतः सा सुषुवे सद्यो देवहूतिः स्त्रियः प्रजाः ॥ सर्वास्ताश्चारुसर्वांग्यो लोहितोत्पलगंधयः ॥ ४८ ॥ पतिं सा प्रव्रजिष्यंतं तदालक्ष्योशती सती ॥ स्मयमाना विक्लवेन हृदयेन विदूयता ॥४९॥ लिखंत्यधोमुखी भूमिं पदा नखमणिश्रिया ॥ उवाच ललितां वाचं निरुध्याश्रुकलां शनैः ॥ ५०॥ देवहूतिरुवाच ॥ सर्वं तद्भगवान् मह्यमुपोवाह प्रतिश्रुतम् ॥ अथापि मे प्रपन्नाया अभयं दातुमर्हसि ॥५१॥ ब्रह्मन्दुहितृभिस्तुभ्यं विमृग्याः पतयः समाः ॥ कश्चित्स्यान्मे विशोकाय त्वयि प्रव्रजिते वनम् ॥ ५२ ॥ एतावताऽलं कालेन व्यतिक्रांतेन मे प्रभो ॥ इंद्रियार्थप्रसंगेन परित्यक्तपरात्मनः ॥५३॥ इंद्रियार्थेषु सज्जंत्या प्रसंगस्त्वयि मे कृतः ॥ अजानंत्या परं भावं तथाऽप्यस्त्वभयाय मे ॥ ५४ ॥ संगो यः संसृतेर्हेतुरसत्सु विहितो धिया ॥ स एव साधुषु कृतो निःसंगत्वाय कल्पते ॥ ५५ ॥

त्वात्स्त्रियो जाता इति भावः । "पुमान्पुंसोऽधिके शुक्रे स्त्रीभवत्यधिके स्त्रियाः" इति स्मृतेः ॥ ४७ ॥ अतोऽनंतरमेव सद्य एकस्मिन्नेवाहनि चारूणि सर्वाण्यंगानि यासाम् ॥ ४८ ॥ प्रव्रजिष्यंतमालक्ष्य वितर्क्य स्मयमाना बहिरंतस्तु विप्लवेन व्याकुलेन विदूयता संतप्यमानेन हृदा उवाचेत्युत्तरेणान्वयः ॥ ४९ ॥ नखा एव मणयस्तैः श्रीः शोभा यस्य तेन पदा भुवं लिखंतीति दुरंतचिंतालक्षणम् ॥५०॥ उपोवाह संपादितवान् ! अभयमिति भाविनो दैन्यात्संसाराच्च यद्भयं तन्निवर्तयेत्यर्थः॥५१॥ तत्र दैन्यं निवेदयति । तुभ्यं तव दुहितृभिः स्वयमेवात्मनः समा योग्याः पतयो विमृग्या इति दैन्यं प्राप्तम् । संसारभयमुररीकृत्याह । कश्चिदिति । विशोकाय ज्ञानोपदेशाय स्त्रीभिर्ऋणानपाकरणात्कंचित्कालं त्वदवस्थानेन ब्रह्मवित्पुत्रः कश्चित्किं स्यादित्यर्थः ॥ ५२ ॥ विषयान् भुंक्ष्व किं ब्रह्मविद्ययेति चेत्तत्राह । एतावताऽलं पूर्यताम् । परित्यक्तः पर आत्मा यया तस्या मम ॥ ५३ ॥ स्वकृतमनुशोचंत्याह । इंद्रियार्थेष्विति चतुर्भिः । मे मया परं भावं त्वं ब्रह्मविदिति ॥ ५४ ॥ प्रसंगः कथमभयाया

अतो वीर्यसेकोत्तरमेव ता देवहूत्यात्मजाः आसन्निति शेषः ॥ ४८ ॥ तदा कन्याप्रसूत्युत्तरप्रव्रज्योद्योगावसरे वितर्क्यविषयोपरत्यादिना ज्ञात्वा उशती पुत्रमिच्छंती ॥ ४९ ॥ पदनखेन भूविलेखनमपारचिन्ताचिह्नम् । वात्स्यायनेन तु कामार्त्ताचिह्नमुक्तं, तदित्यतः पुत्रोत्पत्तये सुरताभिलाषिणी सेत्यर्थः । ललितां प्रार्थनागर्भितत्वेन मनोज्ञाम् ॥ ५० ॥ यत्प्रतिश्रुतं यावत्तेज इत्याद्युक्तं प्रतिज्ञातं तत्सर्वमिति । इत्यर्थ इति । 'अप्रजदुस्तरम् ' इत्यग्रे वक्ष्यमाणत्वात् "अपुत्रस्य गतिर्नास्ति" इत्यन्योक्तेश्च । संसारभयनिवर्त्तकं पुत्रं तद्द्वारा ज्ञानं देहीति भावः ॥५१॥ तत्र द्वयोर्मध्ये स्त्रीणां कन्यावरान्वेषणार्थं पतिं विना पुरुषांतराग्रे दैन्यमेव कर्त्तव्यं भवतीत्यतस्तन्निवृत्तये स्वयमेवेति । किञ्च स्त्रीभिः कन्याभिः । पैतृकर्णानिवृत्तेः । "पुत्री प्रव्रजेत्" इति स्मरणाच्च । इत्यर्थ इति । मत्कृपया कतिचिद्दिनान्यत्रैव तिष्ठ पुत्रोत्पत्तिनिमित्तमिति भावः । शोकोऽज्ञानलक्षणः संसारस्तस्य तरणं "ज्ञानेनैव तरति शोकमात्मवित्" इति श्रुतेः ॥ ५२ ॥ एतावता कालेन यः इंद्रियार्थप्रसङ्गस्तेनालं यतः पर आत्मा परमेश्वरः । एतेनैतावान्कालो व्यर्थो गत इति भावः ॥ ५३ ॥ महाभागवतस्य तव क्षणिकेनापि संगेन लोका निस्तरंति मम त्वेतावद्वार्षिकेणापि यन्निस्तारो नाभूत्तत्र हेतुद्वयमित्येवं स्वकृतं शोचंत्याह–इंद्रियार्थेष्विति । परं भावं तवैवं वैराग्यं महाभागवतत्वं यत्क्षणमात्रेणैव सर्वं ममतास्पदं त्यक्तुं प्रवृत्तोसीति भावः । त्वत्परभावाज्ञानमिंद्रियार्थप्रसंगश्चेति हेतुद्वयं मदनिस्तारे यद्यप्यस्ति तथापि मय्यपराधिन्यां कृपां कुर्विति भावः ॥५४॥ अत्राक्षिपति–प्रसंग इति । किं च 'वस्तुशक्तिर्बुद्धिन्नापेक्षते' इति न्यायेन

नेह यत्कर्म धर्माय न विरागाय कल्पते ॥ न तीर्थपादसेवायै जीवन्नपि मृतो हि सः ॥ ५६ ॥ साहं भगवतो नूनं वंचिता मायया दृढम् ॥ यत्त्वां विमुक्तिदं प्राप्य न मुमुक्षेय बंधनात् ॥ ५७ ॥ इति श्रीमद्भागवते तृतीयस्कंधे कर्दमस्य नवकन्योत्पत्तिवर्णनं नाम त्रयोविंशतितमोऽध्यायः ॥ २३ ॥ मैत्रेय उवाच ॥ निर्वेदवादिनीमेवं मनोर्दुहितरं मुनिः ॥ दयालुः शालिनीमाह शुक्लाभिव्याहृतं स्मरन् ॥ १ ॥ ऋषिरुवाच ॥ मा खिदो राजपुत्रीत्थमात्मानं प्रत्यनिंदिते ॥ भगवांस्तेऽक्षरो गर्भमदूरात् संप्रपत्स्यते ॥ २ ॥ धृतव्रतासि भद्रं ते दमेन नियमेन च ॥ तपो द्रविणदानैश्च श्रद्धया चेश्वरं भज ॥ ३ ॥ स त्वयाराधितः शुक्लो वितन्वन्मामकं यशः ॥ छेत्ता ते हृदयग्रंथिमौदर्यो ब्रह्मभावनः ॥ ४ ॥ मैत्रेय उवाच ॥ देवहूत्यपि संदेशं गौरवेण प्रजापतेः ॥ सम्यक् श्रद्धाय पुरुषं कूटस्थमभजद्गुरुम् ॥ ५ ॥

स्तु तत्राह । संग इति अधियाऽज्ञानेन ॥ ५५ ॥ स्वभावतः प्रवृत्तं यस्य कर्म धर्मार्थं न कल्पते धर्माभिमुखं न भवेत् । तत्रापि निष्कामधर्मद्वारा विरागाय न कल्पते । तद्द्वारा च तीर्थपदस्य हरेः सेवार्थं न पर्यवस्येदित्यर्थः ॥ ५६ ॥ न मुमुक्षेय मोक्तुमिच्छां न कृतवत्यस्मि ॥ ५७ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे टीकायां कपिलोपाख्याने त्रयोविंशतितमोऽध्यायः ॥ २३ ॥ चतुर्विंशे ततो जन्म कपिलस्याह तत्पितुः ॥ प्रव्रज्यां तमनुज्ञाप्य ऋणत्रयविमोक्षतः ॥ १ ॥ शालिनीं श्लाघ्याम् । शुक्लेनाभिव्याहृतं "सहाहं स्वांशकलया" इत्यादि ॥ १ ॥ इत्थं मा खिदः खेदं मा कार्षीः आत्मानं प्रत्यहं भाग्यहीनेति । अदूराच्छीघ्रम् ॥ २ ॥ दमेनेंद्रियसंयमेन नियमेन स्वधर्मेण तपांसि द्रविणदानानि च तैः ॥ ३ ॥ हृदयग्रंथिं चिज्जडात्मकमहंकारलक्षणं बंधं छेत्ता छेत्स्यति औदर्यः पुत्रः सन् ब्रह्म भावयत्युपदिशतीति तथा ॥ ४ ॥ श्रद्धाय विश्वस्य ॥ ५ ॥

भवद्विधसाधुसंगो विफलो भवितुं सर्वथैव नार्हतीत्याह—संग इति । स एव योऽसाधुषु कृतोऽनर्थहेतुः । अज्ञानेन सत्संगान्मद्धन्यं भविष्यत्यत एषां संगो विधेय इति ज्ञानं विनापि घुणाक्षरन्यायेनाकस्माज्जातोपि सत्संगो मोक्षपर्यवसायी भवतीत्याशयः ॥ ५५ ॥ तत्रापि धर्माभिमुखत्वेपि । तद्द्वारा च वैराग्यद्वारा च । इत्यर्थ इति । यस्य स्वाभाविको देहेंद्रियादिव्यापारः परंपरया भगवत्सेवायां न पर्यवस्येत्स जीवन्मृतो व्यर्थायुरिति भावः । "आयुर्हरति वै पुंसामुद्यन्नस्तं च यन्नसौ । तस्यर्त्ते यत्क्षणो नीत उत्तमश्लोकवार्त्तया" इत्युक्तेः "क्षिणोति देवो निमिषस्तु येषामायुर्वृथा"इत्याद्युक्तेश्च । यद्वा । तीर्थपदाः साधवः "तीर्थी कुर्वंति तीर्थानि" इत्युक्तेः । अत एवोक्तं "जीवञ्छवो भागवतांघ्रिरेणुं न जातु मर्त्योभिलभेत यस्तु" इति ॥ ५६ ॥ अत्रोदाहरणमहमेवेत्याह—सेति । या यथाकथंचित्कृतभवत्संगापि साहमिति । मायया बंधकशक्त्या । यद्यतः बंधनात्संसारबंधात् ॥ ५७ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे त्रयोविंशोऽध्यायः ॥ २३ ॥ तत्पितुः कर्दमस्य । तं कपिलम् (१) 'शाडृ श्लाघायां' शाडनं शालः सोस्या अस्तीति शालिनी ताम् । निर्वेदं वैराग्यं वदितुं प्रतिपादयितुं शीलमस्या इति तथा ताम् । दुहितरं देवहूतिम् ॥१॥ निन्दितं स्त्रीणां पतिसेवात्यागादि तन्न विद्यते यस्यास्तत्संबुद्धौ तथा । अक्षरः पितृवीर्येण मातृयोनौ क्षरणहीनः प्राकृतदेहहीनः॥२॥ न त्वमन्या प्राकृतीवाकृतपुण्यासि किं तु जन्मांतरे कृतव्रतादिनियमास्यत इहापि जन्मनि ते भद्रं भविष्यति॥३॥४॥ प्रजापतेः कर्दमस्य । संदेशमुपदेशं, गौरवेण गुरुतया । कूटस्थं लयविक्षेपशून्यं, गुरुं वेदरूपेण सर्वेषां हितोपदेष्टारम् ॥५॥

तस्यां बहुतिथे काले भगवान्मधुसूदनः ॥ कार्दमं वीर्यमापन्नो जज्ञेऽग्निरिव दारुणि ॥ ६ ॥ अवादयंस्तदा व्योम्नि वादित्राणि घनाघनाः ॥ गायंति तं स्म गंधर्वा नृत्यंत्यप्सरसो मुदा ॥७॥ पेतुः सुमनसो दिव्याः खेचरैरपवर्जिताः ॥ प्रसेदुश्च दिशः सर्वा अंभांसि च मनांसि च ॥ ८॥ तत्कर्दमाश्रमपदं सरस्वत्या परिश्रितम् ॥ स्वयंभूः साकमृषिभिर्मरीच्यादिभिरभ्ययात् ॥ ९॥ भगवंतं परब्रह्मसत्त्वेनांशेन शत्रुहन् ॥ तत्त्वसंख्यानविज्ञप्त्यै जातं विद्वानजः स्वराट् ॥ १० ॥ सभाजयन् विशुद्धेन चेतसा तच्चिकीर्षितम् ॥ प्रहृष्यमाणैरसुभिः कर्दमं चेदमभ्यधात् ॥११॥ ब्रह्मोवाच ॥ त्वया मेऽपचितिस्तात कल्पिता निर्व्यलीकतः ॥ यन्मे संजगृहे वाक्यं भवान् मानद मानयन् ॥ १२ ॥ एतावत्येव शुश्रूषा कार्या पितरि पुत्रकैः ॥ बाढमित्यनुमन्येत गौरवेण गुरोर्वचः॥१३॥इमा दुहितरः सभ्य तव वत्स सुमध्यमाः ॥ सर्गमेतं प्रभावैः स्वैर्बृंहयिष्यंत्यनेकधा॥१४॥

बहुतिथे बहुतरे कालेऽतिक्रांते सति। कार्दमं कर्दमसंबंधि ॥ ६ ॥ घनाघना इत्येकं पदम्। वर्षंतो मेघाः गायंति स्म नृत्यंति स्म ॥ ७ ॥ अपवर्जिता मुक्ताः ॥८॥ परिश्रितं परिवेष्टितम् ॥ ९ ॥ आगत्य किं कृतवांस्तदाह। भगवंतमिति द्वाभ्याम्। तत्त्वानां संख्यानं यस्मिंस्तस्य सांख्यस्य विज्ञप्त्यै विशेषेण ज्ञापनाय भगवंतं जातं विद्वानजो ब्रह्मा स्वराट् स्वतःसिद्धज्ञानः ॥ ॥ १० ॥ तस्य चिकीर्षितं सभाजयन्पूजयन्प्रहृष्यमाणैरसुभिरिंद्रियैरुपलक्षितः कर्दमं चेदमभ्यधादिति द्वयोरन्वयः। चकाराद्देवहूतिं च ॥ ११ ॥ तत्र त्वयेति पंचभिः। कर्दमं प्रत्याह। अपचितिः पूजा कृता यद्यस्मात् निर्व्यलीकतो निष्कपटं सम्यग्गृहीतवान् ॥ १२ ॥ अनुमन्येतेति यदेतावत्येव ॥ १३ ॥ अनेकधा प्रभावैर्वैशैर्बृंहयिष्यंति वर्धयिष्यंति ॥ १४ ॥

तस्यां देवहूत्यां, बहूनां पूरणे बहुतिथे ''बहुपूगगणसंघस्य तिथुक्'' इति सूत्रम्। भगवच्छब्दस्य हरिशब्दवदनेकार्थत्वादाह—मधुसूदन इति। आपदं न।शं नयति प्रापयतीत्यापन्नः। कर्मणिडः। वीर्यमापन्नोऽपाकुर्वन्प्रादुर्भूतः। यथाग्निः काष्ठे स्थित एव मथनेन प्रादुर्भूतः काष्ठमपनयति तद्वत्। न हि वीर्येण तद्देहो जातस्तस्य चिद्घनत्वात्। तदुक्तं वैष्णवसिद्धांते—''नावत रेष्वपि हरेर्देहः शुक्रादिसंभवः। तथापि शुक्रसंस्थः सन्मातृदेहं प्रविश्य च॥ विलाप्य शुक्रं तत्रैव केवलज्ञानरूपतः। उदेति भगवान्विष्णुः काले लोकं बिडंबयन्'' इति। काले दशमे मासि। तथा च पूर्वमंतर्यामिरूपे ण स्थित एव पुत्ररूपेण दारुणि स्थित एवाग्निर्यथा प्रादुर्भवति तथा प्रादुर्बभूवेति भावः ॥६॥ तत्र साक्षान्नारायण एव रूपांतरेणाभिव्यक्तो लोकविलक्षणोत्सवदर्शनादिति। तं कालं विशिनष्टि—अवादयन्नित्यादिना। घनाघना जगर्ज्जुरिति शेषः। गर्जंतो मेघा इव देवा इत्यर्थः। ''वर्षुकाब्दा घनाघनाः'' इत्यमरः ॥ ७ ॥ खेचरैरमरैः। मनांसि सताम् ॥ ८ ॥ तत्पूर्वत्र वर्णितम् ॥ ९ ॥ सत्त्वेन शुद्धसत्त्वेनांशेन न तु पूर्णस्वरूपेणे त्यर्थः। शत्रुहन्निति। त्वद्वत्सोप्यज्ञानशत्रुहरणार्थमेवावतीर्ण इत्यभिप्रायः ॥१०॥ तस्य हरेश्चिकीर्षितं सम्यग्ज्ञानसाधनशास्त्रनिर्माणलक्षणम्। इदं वक्ष्यमाणम् ॥ ११ ॥ तत्र द्वयोर्मध्ये। ''भवेदपचितिः पूजाव्ययनिश्चयहानिषु'' इति मेदिनी। तात—मानदेति संबुद्धिद्वयं स्नेहद्योतनार्थम् ॥ १२ ॥ पुत्रकैः सत्पुत्रैः। बाढमिति मयांगीकृतं यथाज्ञापयासि तथा करोमीति भावः। गौरवेण परमादरेण। गुरोः पितुः॥ यदि तव पुत्रा अभविष्यंत तदाप्येवं सर्गो नावर्द्धयिष्यत॥१३॥ यथाभिर्दुहितृभिः सर्गो विस्तारयिष्यते इत्याह—इमा इति। प्रभवैः प्रभावद्भिः प्रकर्षेण भावो भवनं येषां तैरिति वा। वत्सेति स्नेहोक्तिः। सभ्येति। पुत्रीणां योग्येभ्योर्पणात्सभासु तव कीर्त्तिर्भविष्यतीत्यभिप्रायः। मध्ये देहमध्ये भवा मध्यमा संततिः सुष्ठु मध्यमा यासां

अतस्त्वमृषिमुख्येभ्यो यथाशीलं यथारुचि ॥ आत्मजाः परिदेह्यद्य विस्तृणीहि यशो भुवि ॥ १५ ॥ वेदाहमाद्यं पुरुषमवतीर्णं स्वमायया ॥ भूतानां शेवधिं देहं बिभ्राणं कपिलं मुने ॥ १६ ॥ ज्ञानविज्ञानयोगेन कर्मणामुद्धरञ्जटाः ॥ हिरण्यकेशः पद्माक्षः पद्ममुद्रापदांबुजः ॥ १७ ॥ एष मानवि ते गर्भं प्रविष्टः कैटभार्दनः ॥ अविद्यासंशयग्रंथिं छित्त्वा गां विचरिष्यति ॥ १८ ॥ अयं सिद्धगणाधीशः सांख्याचार्यैः सुसंमतः ॥ लोके कपिल इत्याख्यां गंता ते कीर्तिवर्धनः ॥ १९ ॥ मैत्रेय उवाच ॥ तावाश्वास्य जगत्स्रष्टा कुमारैः सहनारदः ॥ हंसो हंसेन यानेन त्रिधाम परमं ययौ ॥२०॥ गते शतधृतौ क्षत्तः कर्दमस्तेन चोदितः ॥ यथोदितं स्वदुहितॄः प्रादाद्विश्वसृजां ततः ॥ २१ ॥ मरीचये कलां प्रादादनसूयामथात्रये ॥ श्रद्धामंगिरसेऽयच्छत्पुलस्त्याय हविर्भुवम् ॥२२॥ पुलहाय गतिं युक्तां क्रतवे च क्रियां सतीम् ॥ ख्यातिं च भृगवेऽयच्छद्वसिष्ठायाप्यरुंधतीम् ॥२३॥

ऋषिमुख्येभ्यो मरीच्यादिभ्यः ॥१५॥ पुत्रस्तु साक्षादीश्वर इत्याह । वेदाहमिति । शेवधिं निधिं सर्वाभीष्टदम् ॥ १६ ॥ देवहूतिं प्रत्याह । त्रिभिः । ज्ञानं शास्त्रोक्तं विज्ञानमपरोक्षं च ते एव योग उपायस्तेन कर्मणां जटा मूलानि वासना उद्धरन्नुत्पाटयिष्यन् पद्ममुद्रायुक्तं पदांबुजं यस्य ॥१७॥ हे मानवि अविद्या स्वरूपाज्ञानं संशया मिथ्याज्ञानानि तन्मयं तव हृदयग्रंथिम्॥ १८ ॥सुसंमतः सुपूजितः सन् गंता प्राप्स्यति॥ १९ ॥कुमारैः सहेति शेषः । सहनारदो नारदसहितश्च मरीच्यादीन्विवाहार्थमवस्थाप्य नैष्ठिकैरेतैः पंचभिः सहितो हंसो ब्रह्मा ययौ । त्रिधाम तृतीयं धाम स्वर्गस्तस्य परां काष्ठां सत्यलोकम्॥ २० ॥शतधृतौ ब्रह्मणि॥ २१ ॥ २२ ॥युक्तां योग्याम् । अयच्छददात्॥ २३ ॥

तास्सुमध्यमाः । इयमुक्तिर्ब्रह्मणो भाविज्ञानवत्त्वात् ॥ १४ ॥ यत एताः सर्गवृद्धियोग्या अतो हेतोः । ऋषयश्च ते मुख्या इति कर्मधारयस्तत्पुरुषानवकाशात् । तदनवकाशस्तु मरीच्यादिभिन्नर्ष्यंतराभावादेव । कन्याशीलरुच्यनुसारेणैव योग्येभ्यो देहीत्याह—यथाशीलमिति । तेन तव लोके ख्यातिर्भविष्यतीत्याह– विस्तृणीहीति ॥ १५ ॥ स्वेषु भक्तेषु मायया कृपयेति वा । कं सुखं पाति रक्षतीति कपिर्ज्ञानं सर्वसम्पद्वत्त्वेप्यज्ञानिनस्सुखादर्शनात् । तल्लाति ददाति मात्रे मुनिभ्यश्चेति कपिलस्तं तन्नामानम् । कपिलवर्णत्वाद्वा कपिलम् । कपिं लाति स्वीकरोति वर्णेनेति कपिल इति निरुक्तेः । शब्दार्णवे तु–"सितपीतहरिद्रक्तः कडारस्तृणवह्निवत् ॥ अयं तूद्रिक्तपीतांगः कपिलो गोविभूषणः ॥" इति सितरक्तहरितात्पपीताधिक्ये वर्णः कपिलवर्णः । वानररोमवद्वर्णो वेति केचित् । "मुनिं प्रशान्तं कपिलम्" इति श्रुतेः । मुन इति । त्वमप्येतज्जानास्येव तपोबलेनेत्याह ॥ १६ ॥ "जटा लग्नकचे मूले" इति मेदिनी । अयञ्च हिरण्यकेशादिस्वलक्षणलक्षित एव । "हिरण्यकेशो हिरण्यश्मश्रुः" इत्यादिश्रुतेः ॥ १७ ॥ कपिल इत्याख्याश्रवणाद्धुताशावतारनिरीश्वरसांख्यकर्त्तायमिति मा संशयिष्ठा इत्याह–कैटभार्दनः कैटभाख्यदैत्यहंता विष्णुरेवायं न तु स इत्यर्थः । अविद्यादिकमन्येषां छित्त्वेति ज्ञेयम् । भगवत्प्रादुर्भावस्थानस्य शुद्धसत्त्वात्मकत्वात्तत्र न संभवति । उपदेशादिकं तूद्धवादिवल्लोकहितार्थमेवेति संदर्भः ॥ १८ ॥ अयमिति सुसंमतः । अन्यस्तु सिद्धविशेषः कपिलो दर्शनकर्त्ता न सुष्ठु संमतः वेदविरुद्धानीश्वरवादात् । तथैव भाष्यकृद्भिः पाद्मं वचनमुदाहृतम्–"कपिलो वासुदेवाख्यस्तत्त्वं सांख्यं जगाद ह । ब्रह्मादिभ्यश्च देवेभ्यो भृग्वादिभ्यस्तथैव च ॥ तथैवासुरये सर्ववेदार्थैरुपबृंहितम्" इति । "सर्ववेदविरुद्धं च कपिलोन्यो जगादह । सांख्यमासुरयेऽन्यस्मै कुतर्कपरिबृंहितम् ॥" इति च । स च वह्न्यवतारोहीत्यन्यत्रोक्तम् । ॥१९॥ तौ देवहूतिकर्दमौ । सहनारद इति 'वोपसर्जनस्य' इति वैकल्पिकत्वान्न सादेशः । "हंसः सर्वादिलोकेशशतधृतिकंजोद्भवाः । वेदास्यश्च शतानंदः" इत्यभिधानचिंतामणिः । हंसेन मानसौकसा पक्षिणा ॥२०॥ तेन शतधृतिना । यथोदितं वेदोक्तरीत्या । ततस्तेषां विश्वसृजाम् । चतुर्थ्यर्थे षष्ठी । तसिश्च षष्ठ्यर्थे । तेभ्यो विश्वसृग्भ्यः ॥ २१ ॥ वरान्नामतो निर्दिशति अथेति मंगले ॥ २२ ॥ पातिव्रत्यशक्तिर्ज्ञेयारुंधतीति तन्नाम

अथर्वणेऽददाच्छांतिं यया यज्ञो वितन्यते ॥ विप्रर्षभान् कृतोद्वाहान् सदारान् समलालयत् ॥ २४ ॥ ततस्त ऋषयः क्षत्तः कृतदारा निमंत्र्य तम्॥ प्रातिष्ठन् नंदिमापन्नाः स्वंस्वमाश्रममंडलम् ॥ २५ ॥ स चावतीर्णं त्रियुगमाज्ञाय विबुधर्षभम् ॥ विविक्त उपसंगम्य प्रणम्य समभाषत ॥ २६ ॥ अहो पापच्यमानानां निरये स्वैरमंगलैः ॥ कालेन भूयसा नूनं प्रसीदंतीह देवताः ॥ २७ ॥ बहुजन्मविपक्केन सम्यग्योगसमाधिना ॥ द्रष्टुं यतंते यतयः शून्यागारेषु यत्पदम् ॥ २८ ॥ स एव भगवानद्य हेलनं न गणय्य नः ॥ गृहेषु जातो ग्राम्याणां यः स्वानां पक्षपोषणः ॥ २९ ॥ स्वीयं वाक्यमृतं कर्तुमवतीर्णोऽसि मे गृहे ॥ चिकीर्षुर्भगवाञ्ज्ञानं भक्तानां मानवर्धनः ॥ ३० ॥ तान्येव तेऽभिरूपाणि रूपाणि भगवंस्तव ॥ यानि यानि च रोचंते स्वजनानामरूपिणः ॥ ३१ ॥ त्वां सूरिभिस्तत्त्वबुभुत्सयाऽद्धा सदाऽभिवादार्हणपादपीठम् ॥ ऐश्वर्यवैराग्ययशोऽवबोधवीर्यश्रिया पूर्णमहं प्रपद्ये ॥ ३२ ॥

वितन्यते समृद्धः क्रियते शांत्यधिष्ठात्रीं देवतामित्यर्थः । समलालयत्संतोषितवान् ॥ २४ ॥ निमंत्र्य पृष्ट्वा नंदिं हर्षं प्राप्ताः संतः ॥ २५ ॥ स च मुनिः त्रियुगं विष्णुम् । विविक्ते रहसि ॥ २६ ॥ पापच्यमानानां भृशं दह्यमानानाम् । निरये संसारे स्वीयैरमंगलैः पापैः ॥ २७ ॥ कुतः सर्वा देवताः प्रसन्ना इति ज्ञातम लभ्यलाभादित्याह । द्वाभ्याम् । बहुषु जन्मसु विपक्केन सुसिद्धेन सम्यग्योगो भक्तियोगस्तस्मिन्समाधिरैकाग्र्यं तेन शून्यागारेषु विविक्तस्थानेषु यस्य तव पदम् ॥ २८ ॥ हेलनमवज्ञां लाघवं न गणय्यागणयित्वा उचितमेव तवैतदित्याह । यस्त्वं स्वानां भक्तानां पक्षं पुष्णासीति तथा सः ॥ २९ ॥ एतत्प्रपंचयति द्वाभ्याम् । स्वयमेवा वतीर्णोऽसि स्ववाक्यं "तव पुत्रो भविष्यामि" इति यत्तत्सत्यं कर्तुं ज्ञानं ज्ञानसाधनं सांख्यं च चिकीर्षुः सन् ॥ ३० ॥ यानि तवालौकिकानि चतुर्भुजादिरूपाणि तान्येव तेऽभिरूपाणि योग्यानि यानि च स्वजनानां रोचंते मनुष्यसरूपाणि तान्यपि ते रोचंत इत्यर्थः । अरूपिणः प्राकृतरूपरहितस्य ॥ ३१ ॥ अभिवादार्हं पादपीठं यस्य

हि पतीच्छारोधनाकरणात् ॥ २३ ॥ इत्यर्थ इति । शांतिं विना न कोपि यज्ञः सिध्यतीति भावः ॥ २४ ॥ ततो विवाहोत्तरम् । तं कर्दमम् ॥ २५ ॥ २६ ॥ इह जगति ॥ २७ ॥ पदं स्वरूपम् ॥ २८ ॥ ग्राम्याणां विषयलोलुपानाम् ॥ २९ ॥ स्वीयं वाक्यं "सहाहं स्वांशकलया" । इत्यादि रूपम् ॥ ३० ॥ इत्यर्थ इति । भक्ताभीष्टप्रदत्वादिति भावः । यानि न रोचंते तानि वस्तुतस्त्वदीयानि रूपाणि न भवंति किं तु मायिकान्येव । यथा रंतिदेवाय दर्शितानि "तस्य त्रिभुवनाधीशाः फलदाः फलमिच्छताम् । आत्मानं दर्शयामासुर्माया विष्णुविनिर्मिताः" इति भगवद्रूपस्याप्राकृतत्वेन कुत्सितवृषलादिरूपत्वासंभवात् । स्वजनारोचकत्वात्तानि न भगवद्रूपाणि योग्यानीति भावः ॥ ३१ ॥ भक्तजनरोचकस्याभिरूपस्य लक्षणं वदन्नेव श्रीकपिलदेवं विशिनष्टि—त्वामिति । ऐश्वर्यादीनां षण्णां भगशब्दवाच्यानां चिन्मयगुणानां पूर्त्तै महातडागं तेन भक्तानाम

परं प्रधानं पुरुषं महांतं कालं कविं त्रिवृतं लोकपालम् ॥ आत्मानुभूत्यांऽनुगतप्रपंचं स्वच्छंदशक्तिं कपिलं प्रपद्ये॥३३॥आस्माभिपृच्छेऽद्य पातिं प्रजानां त्वयाऽवतीर्णार्ण उताप्तकामः ॥ परिव्रजत्पदवीमास्थितोऽहं चरिष्ये त्वां हृदि युंजन् विशोकः ॥ ३४ ॥ श्रीभगवानुवाच ॥ मया प्रोक्तं हि लोकस्य प्रमाणं सत्यलौकिके ॥ अथाजनि मया तुभ्यं यदवोचमृतं मुने ॥ ३५ ॥

ऐश्वर्यादिभिः पूर्तं पूर्णम् ॥ ३२ ॥ ऐश्वर्यादिकं विवृण्वन्नाह । परं परमेश्वरम् । तत्र हेतुः । स्वच्छंदाः स्वाधीनाः शक्तयो यस्य ता एवाह । प्रधानं प्रकृतिरूपं पुरुषं तदधिष्ठातारं महांतं महत्तत्त्वरूपं कालं तेषां क्षोभकं त्रिवृतमहंकाररूपं लोकात्मकं तत्पालात्मकं च तदेवं मायया प्रधानादिरूपतामुक्त्वा चिच्छक्त्या निष्प्रपंचतामाह । आत्मानुभूत्या चिच्छक्त्याऽनुगतः स्वस्मिन् लीनः प्रपंचो यस्य तम् । कविं सर्वज्ञम् । प्रधानाद्याविर्भावलयसाक्षिणमित्यर्थः ॥ ३३ ॥ संन्यासानुज्ञां प्रार्थयते । आस्माभिपृच्छे यत्किंचिदभिपृच्छामीत्यर्थः । त्वया पुत्ररूपेणावतीर्णानि निवृत्तानि ऋणानि दैवादिरूपाणि यस्य स आप्तकामश्चाहं परिव्रजतां संन्यासिनां पदवीं मार्गमाश्रितः संस्त्वां युंजन् स्मरन्विचरिष्यामि ॥ ३४ ॥ अहं तावज्ज्ञानोपदेशायैव त्वद्गृहेऽवतीर्णः अतस्तव गृहे वसतोऽपि मुक्तिः सुलभैव । यद्यवश्यं गंतव्यमेवेत्याग्रहस्तथापि मामेवानुस्मरन् गच्छेत्याशयेनाह । मयेति षड्भिः । सत्यलौकिके वैदिके लौकिके च कृत्ये स्वोक्तस्य प्रामाण्यमभिदर्शयति यद्यस्मात्तुभ्यं तव पुत्रो भविष्यामीत्यवोचम् । अथ

भिवादनार्चनपरिचर्यादिविषयीभूतं षडैश्वर्यपूर्णं स्वरूपमेवाप्राकृतं तव रूपमिति द्योतितम् ॥ ३२ ॥ तत्र परमेश्वरत्वे । ता एव शक्तीरेव । तदधिष्ठतारं प्रकृत्यधिष्ठातारम् । तेषां महदादीनाम् । इत्यर्थ इति । वस्तुतः सर्पाविर्भावतिरोभावाधिष्टानरज्जुवत्प्रपञ्चास्पृष्टमित्याशयः । किञ्च । प्रपञ्चहेतुत्वादपि प्रपंचरुपत्वमाह–स्वच्छंदास्स्वाधीनाः शक्तयो मायाद्या यस्य तम् । त्वदिच्छयैव मायादिभिः शक्तिभिः सर्वप्रपञ्चस्य निर्मितत्वात् । "यदनुग्रहतः संति न संति यदुपेक्षया" इत्युक्तेः । मायादीनां तच्छक्तित्वेनाभिन्नत्वात्तवैवेदं सर्वं मायिकं रूपमनभिरूपमित्यर्थः ॥३३॥ स्माभीति पादपूरणार्थम् । आपृच्छे अद्य संप्रति संन्यासार्थमाज्ञां प्रार्थये त्वया हेतुनाऽवतीर्णं निवृत्तं 'प्रजाः सृज' इति पितुराज्ञारूपम् ऋणं यस्य सः । आप्तकामः पूर्णमनोरथश्चाहं परिव्रजतां संन्यासिनां पदवीमास्थितस्त्वां हृदि युंजन्स्मरन् चरिष्ये । यतस्ततः पर्यटिष्यामि । अत्र श्रीकर्दमेन मनस्येवं परामृष्टं शुक्लाभिधाने श्रीनारायणे मत्प्रभौ ममाजन्मत एव दास्यनिष्ठा वरीवर्त्ति संप्रति पुत्रीभूते चास्मिन्दुर्वारवात्सल्यमप्युपदेक्ष्यत्येवेति दास्यवात्सल्ययोर्यौगपद्यं न रसावहम् । किञ्चायमीश्वरः स्वतंत्र एव मां शोकसमुद्रे निमज्याचिरादेव प्रव्रजिष्यत्यतः प्रथममहमेव किं न प्रव्रजामि । न च गृहेऽवतीर्णं प्रभुं विहाय गच्छतो ममात्रापराधो यतोऽस्माकं वैष्णवानां स च भजनीयः प्रभुः । खलु भजनाधीन इति भजनीयादपि भजने भूयानाग्रहः कर्तुमुचित इत्यस्य भजनमेवाष्टयामिकं विविक्तारण्ये निष्प्रत्यूहः चिकीर्षामीति ॥ ३४ ॥ विश्वनाथस्तु–भो मुने त्वं मदभिप्रेतमेव चिकीर्षसि सर्वं त्यक्त्वा मद्भजनस्य मयैव कर्त्तव्यत्वेन प्रोक्तत्वादित्याह । हि निश्चितम् मया यत्प्रोक्तं "सर्वधर्मान्परित्यज्य" इत्यादि श्रीगीतोपनिषदि तदेव लोकस्य प्रमाणं क सत्यलौकिके सति सर्वोत्तमे लौकिके । अयमर्थः–लोके भवो लौकिकस्त्रिवर्गप्राप्तिलक्षणो धर्मस्तत्र मन्वादिभिरपि प्रोक्तं लोकस्य प्रमाणम् अलौकिकस्तद्भिन्नो मत्प्राप्तिलक्षणो यो धर्मस्तत्र सति सर्वोत्तमे भागवतधर्मे मया प्रोक्तमेव लोकस्य प्रमाणम् । यदुक्तम्–"ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये" इति । अतस्त्वया साधु विचारितं यत्सर्वं त्यक्त्वा यासीति भावः । स्वोक्तस्य प्रामाण्यमभिदर्शयति । अथात एव मयाऽजनि यत्तुभ्यं तव पुत्रो भविष्यामीत्येवोक्तं तद्दत्तं सत्यमेवेति । संदर्भस्तु–यन्मया प्रोक्तं तत्कृतमिति । अन्यथा मत्प्रोक्तस्य प्रामाण्यं व्यभिचरेदिति

एतन्मे जन्म लोकेऽस्मिन्मुमुक्षूणां दुराशयात् ॥ प्रसंख्यानाय तत्त्वानां संमतायात्मदर्शने ॥ ३६ ॥ एष आत्मपथोऽव्यक्तो नष्टः कालेन भूयसा ॥ तं प्रवर्तयितुं देहमिमं विद्धि मया भृतम् ॥ ३७ ॥ गच्छ कामं मयाऽऽपृष्टो मयि संन्यस्तकर्मणा ॥ जित्वा सुदुर्जयं मृत्युममृतत्वाय मां भज ॥ ३८ ॥ मामात्मानं स्वयंज्योतिः सर्वभूतगुहाशयम् ॥ आत्मन्येवात्मना वीक्ष्य विशोकोऽभयमृच्छसि ॥ ३९ ॥ मात्र आध्यात्मिकीं विद्यां शमनीं सर्वकर्मणाम् ॥ वितरिष्ये यया चासौ भयं चातितरिष्यति ॥ ४० ॥ मैत्रेय उवाच ॥ एवं समुदितस्तेन कपिलेन प्रजापतिः ॥ दक्षिणीकृत्य तं प्रीतो वनमेव जगाम ह ॥ ४१ ॥ व्रतं स आस्थितो मौनमात्मैकशरणो मुनिः ॥ निःसंगो व्यचरत्क्षोणीमनग्निरनिकेतनः ॥ ४२ ॥ मनो ब्रह्मणि युंजानो यत्तत्सदसतः परम् ॥ गुणावभासे विगुण एक भक्त्याऽनुभाविते ॥ ४३ ॥

अत एव तद्वतं सत्यं यथा भवति तथा मयाऽजनि जन्म स्वीकृतम् ॥ ३५ ॥ दुराशयाल्लिंगान्मुमुक्षूणां मुनीनामात्मदर्शने संमताय तत्त्वानां प्रसंख्यानाय विद्धीत्युत्तरस्यानुषंगः ॥ ३६ ॥ नन्वयमात्मज्ञानमार्गः पूर्वसिद्ध एव नेदानीमपूर्ववत्प्रवर्तनीयस्तत्राह । एष इति अव्यक्तः सूक्ष्मः ॥ ३७ ॥ कामं यथेच्छम् । आपृष्टोऽनुज्ञातः यद्वा यथा त्वं गंतुं मां पृष्टवांस्तथाऽत्रावस्थातुं मयाऽपि त्वमापृष्ट इत्यर्थः । मयि संन्यस्तेन समर्पितेन कर्मणा । "अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इति श्रुतेः ॥ ३८ ॥ ततश्च मां परमं परमात्मानमात्मनि स्वस्मिन्नात्मना मनसा अन्वीक्षमाणोऽभयं मोक्षं प्राप्स्यसि ॥ ३९ ॥ मात्रे देवहूत्यै शमनीमुन्मूलनीम् । भयं संसारमतिशयेन तरिष्यति परमानंदं प्राप्स्यतीति चकारार्थः ॥ ४० ॥ समुदितः सम्यगुक्तः सन् तं प्रदक्षिणीकृत्य ॥ ४१ ॥ मुनीनामिदं मौनं व्रतमहिंसालक्षणम् ॥ ४२ ॥ सदसतः

भावः । सति च प्रामाण्ये ममोपदेशमेव गृहाणेति भात्र इत्याह ॥ ३९ ॥ एतत्त्वत्पुत्ररूपेण यत् । संमताय सम्यग्ज्ञातायाभिमताय ॥ ३६ ॥ अत्राशंकते नन्विति । ईश्वरे देहिदेहविभागाभावेपि बुद्धिर्हि भगवति अभेदेपि भेदं जनयतीति न्यायेन देहं मयाभृतमिति लोकरीत्यैवोक्तिः । "सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः । स्थितिसर्गनिरोधेषु गृहीता मायया विभोः" इतिवज्ज्ञेया ॥ ३७ ॥ आपृच्छतेरनुज्ञानार्थादर्शनादाह—यद्वेति । इत्यर्थ इति । कथं मया गच्छेति निष्ठुरं वक्तव्यमत्रावस्थितस्यापि तव वांछितं सेत्स्यत्येवेति भावः । यद्वाऽमृतत्वाय मरणराहित्याय भगवतो रामकृष्णादित्वेन जन्मवन्मत्पार्षदतां प्राप्तस्यापि तत्र मत्संगितया जन्म तु भविष्यत्येवेति भावः । अत्र प्रमाणम् । अविद्यया इति । अविद्याकार्यभूतेन ॥ ३८ ॥ ततश्चामृतार्थं मद्भजनात् । "केचित्स्वदेहांतर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम्" इत्याद्युक्तप्रकारं मां परमात्मानमन्तर्यामिणं त्वदिष्टदैवं शुक्लं वीक्ष्य बुद्ध्वा विशोको विगताज्ञानः ॥ ३९ ॥ पुत्रस्य परमेश्वरत्वात् कलत्रस्य देवहूतेश्च कृते चिंता न कार्येत्याह—मात्र इति । भयं द्वैतम् । "द्वितीयाद्वै भयं भवति" इति श्रुतेः ॥ ४० ॥ तं कपिलम् ॥ ४१ ॥ अग्नीनामात्मनि समारोपादनग्निस्त्यक्ताग्निहोत्रादिकर्मा । अनिकेतनो नियतनिकेतनरहितः ॥ ४२ ॥ यद्वा । यत्सदसतो भद्राभद्राद्वस्तुनः परं तस्मादतीतं तन्मनो ब्रह्मणि युंजानः । कीदृशे । गुणानां

निरहंकृतिर्निर्ममश्च निर्द्वंद्वः समदृक्स्वदृक् ॥ प्रत्यक्प्रशांतधीर्वीरः प्रशांतोर्मिरिवोदधिः ॥ ४४ ॥ वासुदेवे भगवति सर्वज्ञे प्रत्यगात्मनि ॥ परेण भक्तिभावेन लब्धात्मा मुक्तबंधनः ॥ ४५ ॥ आत्मानं सर्वभूतेषु भगवंतमवस्थितम् ॥ अपश्यत्सर्वभूतानि भगवत्यपि चात्मनि ॥ ४६ ॥ इच्छाद्वेषविहीनेन सर्वत्र समचेतसा ॥ भगवद्भक्तियुक्तेन प्राप्ता भागवती गतिः ॥ ४७ ॥ इति श्रीमद्भागवते तृतीयस्कंधे कापिलेये कपिलावतारवर्णनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

परं यत्तस्मिन् ब्रह्मणि गुणावभासके निर्गुणे एकभक्त्याऽव्यभिचारिण्या भक्त्याऽनुभाविते‌ऽपरोक्षीकृते ॥ ४३ ॥ अतो देहादिष्वहंकारादिरहितः अत एव निर्द्वंद्वः शीतोष्णाघनाकुलः समदृग्भेदाग्राहकः किन्तु स्वदृक् स्वमेव पश्यन् प्रत्यक् प्रवणा शांता विक्षेपरहिता धीर्यस्य ॥ ४४ ॥ तदेवंविधंकल्पितोपाधिनिवृत्तिमुक्त्वा परमेश्वरपदप्राप्तिमाह । वासुदेव इति त्रिभिः प्रतीचो जीवस्यात्मनि लब्ध आत्मा चित्तं येन यतो मुक्तं बंधनमज्ञानं यस्य ॥ ४५ ॥ लब्धात्मतामेवाह । आत्मानमिति ॥ ४६ ॥ तदेवं तेन भागवती गतिः प्राप्ता । पाठान्तरे स एव तां गतिं प्राप्त इति ॥ ४७ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे टीकायां चतुर्विंशोऽध्यायः ॥ २४ ॥

सौंदर्यमाधुर्यैश्वर्यादिरूपाणामवभासो यत्र तस्मिन् । निर्गुणे विगतप्राकृतगुणे । अनुभाविते नेत्रादिसर्वेंद्रियगोचरतां प्रापिते ॥ ४३ ॥ यतो मनो ब्रह्मणि युंजानोऽयमतो हेतोः । आदिनेंद्रियादिग्रहः । अत एव देहाद्यहंकाररहितत्वादेव । प्रवणा तत्परा ॥ ४४ ॥ आत्मन्यंतर्यामिणि । लब्धात्मत्वे हेतुरूपं विशेषणमाह—यतो हेतोर्मुक्तमित्यादि । अत्र जीवगोस्वामिनस्तु—तदेवं ब्रह्मज्ञानमिश्रभक्तिसाधनवशेन ब्रह्मानुभवे जातेऽपि भक्तिसंस्कारबलेन लब्धप्रेमादेस्तदूर्ध्वमपि श्रीभगवदनुभवमाह—वासुदेव इति । प्रत्यगात्मनि सर्वेषामाश्रयभूते । परेण प्रेमलक्षणेन भक्तिभावेन तच्छक्त्यैव लब्धात्मानस्तदीयतात्मका अहंकारादयो येनेति । ब्रह्मज्ञानेन प्राकृताहंकारादिलयानंतमाविर्भूतान् प्रेमानंदात्मकशुद्धसत्त्वमयांल्लब्धवानित्यर्थः । ननु त एव प्रत्यावर्त्ततां किं वा पूर्ववदमी अपि बंधहेतवो भवंतु नेत्याह—मुक्तबंधनः । 'अनावृत्तिः शब्दादि'ति न्यायात् ॥ ४५ ॥ ततश्च तस्य भगवत्साक्षात्कारोऽभूदित्याह—आत्मानं सर्वांतर्यामिणं तृतीयपुरुषं क्षीरोदशायिनमित्यर्थः । भगवंतं तमेव स्वेष्टदेवं शुक्लं चतुर्भुजमपश्यत् । तथात्मनि प्रकृत्यंतर्यामिणि प्रथमपुरुषे कारणार्णवशायीनि सर्वभूतानि तदीयरोमकूपगतशतकोटिब्रह्मांडस्थानि योगजनेत्रेणात्रैव स्थित्वाऽपश्यत् । तेन द्वितीयस्कंधोक्तात् क्रममुक्तायोगिनः सकाशादस्योत्कर्ष उक्तः । स हि ब्रह्मांडस्थसर्ववस्तु दिदृक्षुस्तत्रतत्र स्थूलदेहं त्यक्त्वा गच्छति । अयं त्वत्रैव स्थित्वा सर्वब्रह्मांडबहिःकारणार्णवशायिनं तद्रोमकूपेषु सर्वभूतान्यपि निष्काम एवापश्यत् । भगवत्यपि चेति । तमेवात्मानं स्वेष्टदेवं शुक्लं भगवंतमपश्यत् । तस्मिन्नपि सर्वभूतानि श्रीकृष्णे यशोदेवापश्यदित्यैश्वर्योपासके श्रीकर्दमे तादृगैश्वर्यदर्शनमुचितमेवेति ज्ञेयम् ॥ ४६ ॥ ततश्च साक्षादेव तत्प्राप्तिमाह—इच्छेति । तदेवं भागवती भगवत्प्राप्तिरूपा । चक्रवर्ती तु—भगवत्पार्षदत्वलक्षणेत्याह । हेयत्वादन्यत्रेच्छाद्वेषविहीनेन तस्मादेव हेतोः सर्वत्र समचेतसेति । तदुक्तम्—"नारायणपराः सर्वे न कुतश्चन बिभ्यति । स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः ॥" इत्युक्तेः । यद्वा । मया लक्ष्म्या सह वर्तते इति सम इति सहस्रनामभाष्यात् । भगवच्चेतसेति पाठांतरे प्राप्तो भागवतीं गतिमिति पाठे स कर्दम एव तां गतिं प्राप्तः । अत्र भगवद्भक्तियोगेनेत्येव विशेष्यमिति । एवमेवोक्तं श्रीभगवदुपनिषत्सु । "बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च । शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ विविक्तसेवी लघ्वाशी यतवाक्कायमानसः । ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् । विमुच्य निर्ममः शांतो ब्रह्मभूयाय कल्पते ॥ ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभतेतराम् ॥ भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनंतरम् ॥" इति । अत्र विशतिर्मिलनार्थे । यथा "दुर्योधनं परित्यज्य युधिष्ठिरं प्रविष्टवानयं राजा" इति । श्रीदशमे श्रीगोपैर्ब्रह्मसंपत्त्यनंतरमेव वैकुंठो दृष्ट इति स्वामिभिरेव व्याख्यातं च ॥ ४७ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥

शौनक उवाच ॥ कपिलस्तत्त्वसंख्याता भगवानात्ममायया ॥ जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम् ॥ १ ॥ न ह्यस्य वर्ष्मणः पुंसां वरिम्णः सर्वयोगिनाम् ॥ विश्रुतौ श्रुतदेवस्य भूरि तृप्यंति मेऽसवः ॥ २ ॥ यद्यद्विधत्ते भगवान् स्वच्छंदात्माऽऽत्ममायया ॥ तानि मे श्रद्दधानस्य कीर्तन्यान्यनुकीर्तय ॥ ३ ॥ सूत उवाच ॥ द्वैपायनसखस्त्वेवं मैत्रेयो भगवांस्तथा ॥ प्राहेदं विदुरं प्रीत आन्वीक्षिक्यां प्रचोदितः ॥ ४ ॥ मैत्रेय उवाच ॥ पितरि प्रस्थितेऽरण्यं मातुः प्रियचिकीर्षया ॥ तस्मिन्बिंदुसरेऽवात्सीद्भगवान्कपिलः किल ॥ ५ ॥ तमासीनमकर्माणं तत्त्वमार्गाग्रदर्शनम् ॥ स्वसुतं देवहूत्याऽऽह धातुः संस्मरती वचः ॥ ६ ॥

पंचविंशे जनन्या तु पृष्टो बंधविमोचनम् ॥ आदावाह परं भक्तिलक्षणं कपिलः सुतः ॥ १ ॥ कपिलेनार्पिता मात्रे गूढभावनियंत्रिता ॥ योगमाणिक्यमंजूषा स्फुटमुद्घाट्यतेऽधुना ॥ २ ॥ उक्तानुवादपूर्वकं कापिलं योगं पृच्छति कपिल इति त्रिभिः। तत्त्वानां संख्याता गणकः सांख्यप्रवर्तक इत्यर्थः। अत एव स्वयंजातः आत्मप्राप्तये आत्मतत्त्वज्ञापनाय ॥ १ ॥ पुंसां मध्ये वर्ष्मणोवृद्धस्योत्तमस्येत्यर्थः सर्वयोगिनां मध्ये वरिम्णः वरस्य भावो वरिमा भविनृप्रधानोऽयं निर्देशः वरिष्ठस्येत्यर्थः। यद्वा वरीयस्त्वादित्यर्थः। विश्रुतौ कीर्तौ असव इंद्रियाणि भूर्यलं न तृप्यंति श्रुतेन श्रवणेन दीव्यति द्योतत इति तथा तस्य। यद्वा। भूरि बहुशः श्रुतो देवो येन तस्यापि मेऽसव इति संबंधः ॥ २ ॥ स्वानां पुसां छंदेनेच्छया आत्मा देहो यस्य स यद्यत्कर्म विधत्ते तानि कर्माणि कीर्तनार्हाण्यनुकीर्तय ॥ ३ ॥ यथा त्वं मां प्रचोदयस्येवं प्रचोदितः सन् तथा तत्प्रश्नानुसारेण आन्वीक्षिक्यामात्मविद्यायाम् ॥ ४ ॥ बिंदुसरे बिंदुसरसि ॥ ५ ॥ तत्त्वमार्गस्याग्रं पारं दर्शयतीति तथा तम्। "एष मानवि ते गर्भं प्रविष्टः कैटभार्दनः"

(१)मंजूषा पेटी। योगो भक्तियोग एव माणिक्यं रत्नं तस्य मंजूषा। एकत्वं समासे जात्यपेक्षम्। उद्घाट्यते निर्यंत्रा क्रियते प्रकाश्यत इति यावत्(२)इत्यर्थ इति। तत्त्वगणनामात्रकर्त्ता न ग्राह्य इति भावः। यतो भगवानत एव हेतोः स्वयमजस्तदापि जात इति। "न जातोहं न जायेय न जनिष्ये कदाचन। क्षेत्रज्ञः सर्वभूतानां तस्मादहमजः स्मृतः" इति स्मृतेः। आत्ममाययाऽतर्क्ययोगमायाशक्त्या जातः प्रादुर्भावित इति। 'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः" इति भगवदुक्तेस्तज्जन्मनो मायिकत्वस्य व्याख्यातुमशक्यत्वात्। संदर्भस्तु—स्वयमजोपि आत्मनः स्वस्य भक्तविषया या माया कृपा तया साक्षाज्जातः प्रकटो बभूवेत्याह ॥१॥ इत्यर्थ इति। "वर्ष्म देहप्रमाणातिसुंदराकृतिषु स्मृतम्" इति मेदिन्युक्तेरतिसुंदराकारस्येति भावः। स्वामिचरणैर्वृद्धस्योत्तमस्येति यद्व्याख्यातं तदप्यतिसुंदराकारपुरुषस्योत्तमत्वमुत्तमस्य च वृद्धत्वं लोके प्रसिद्धमित्याशयेनैवेति ज्ञेयम्। पुंसां क्षीरोदशायिप्रभृतिपुरुषाणां योगिनां दत्तात्रेयादीनामिति विश्वनाथः। वर्ष्मवरिमशब्दयोर्वस्तुत एकार्थत्वेन पुनरुक्तिं मत्वाह। यद्वेति। इत्यर्थ इति। हेतौ पञ्चमीयमिति भावः। संभवत्वाद्योजनांतरमाह—यद्वेति। श्रोत्रमात्रावेशे वक्तव्येऽसवो न तृप्यंतीति बहुत्वं तु चक्षुरादीनामपि तद्वृत्त्यावेशत्वात्। यद्वा। श्रोत्रद्वारा तादृशभगवद्रूपादीनामपि स्फूर्तेः श्रोत्रस्यैव चक्षुरादिमयत्वं निर्दिष्टम् ॥ २ ॥ यद्वा। स्वच्छंदः स्वाधीनो न तु जीववत्कर्माधीन आत्मा देहो यस्य स तथा। "छंद आधीनयद्ययोः" इति कोशात्। आत्ममायया योगमायया न तु बहिरंगमायया। "जन्म कर्म च मे दिव्यम्" इत्याद्युक्तेः। यद्यदित्येकत्वेपि वीप्सया बाहुल्यात्तानीत्यनेन बहुवचनान्तेन सहान्वयः ॥ ३ ॥ प्रचोदयसि पृच्छसि मां यथा तथा विदुरेण पृष्टः ॥ ४ ॥ बिंदुसर इत्यदंतत्वं समासांतप्रत्ययेनार्षत्वेन वा। मातुः प्रियचिकीर्षयेत्यनेन कौमारोचितस्तनपानादिलीलापि ज्ञेया ॥ ५ ॥ तत्र देवहूतिरयमवसर इति मत्वा कपिलं वक्ति—तमिति आसीनमकर्माणमिति विशेषणद्वयं निश्चलबुद्धित्वमाह तदैव प्रश्नावसर इति। आसीनमित्यनेनैवाकर्मत्वे पुनस्तद्वचनं कंडूयादिनिषेधार्थम्। तेन च सच्चिदानंद

देवहूतिरुवाच ॥ निर्विण्णा नितरां भूमन्नसदिंद्रियतर्षणात् ॥ येन संभाव्यमानेन प्रपन्नांऽधं तमः प्रभो ॥७॥ तस्य त्वं तमसोंऽधस्य दुष्पारस्याद्य पारगम् ॥ सच्चक्षुर्जन्मनामते लब्धं मे त्वदनुग्रहात् ॥ ८ ॥ य आद्यो भगवान् पुंसामीश्वरो वै भवान्किल ॥ लोकस्य तमसांऽधस्य चक्षुः सूर्य इवोदितः ॥ ९ ॥ अथ मे देव संमोहमपाक्रष्टुं त्वमर्हसि ॥ योऽवग्रहोऽहंममेतीत्येतस्मिन्योजितस्त्वया ॥ १० ॥ तं त्वा गताऽहं शरणं शरण्यं स्वभृत्यसंसारतरोः कुठारम् ॥ जिज्ञासयाहं प्रकृतेः परस्य नमामि सद्धर्मविदां वरिष्ठम् ॥ ११ ॥ मैत्रेय उवाच ॥ इति स्वमातुर्निरवद्यमीप्सितं निशम्य पुंसामपवर्गवर्धनम् ॥ धियाऽभिनंद्यात्मवतां सतां गतिर्बभाष ईषत्स्मितशोभिताननः ॥ १२ ॥ श्रीभगवानुवाच ॥ योगं आध्यात्मिकः पुंसां मतो निःश्रेयसाय मे ॥ अत्यंतोपरतिर्यत्र दुःखस्य च सुखस्य च ॥ १३ ॥ तमिमं ते प्रवक्ष्यामि यमवोचं पुरानघे ॥ ऋषीणां श्रोतुकामानां योगं सर्वांगनैपुणम् ॥ १४ ॥

इत्यादि धातुर्वचः ॥ ६ ॥ असतामिंद्रियाणां तर्षणाद्विषयाभिलाषान्निर्विण्णा श्रांताऽस्मि येन संभाव्यमानेन पूर्यमाणेन ॥ ७ ॥ पारं गमयतीति पारगं त्वमेव श्रेष्ठं चक्षुर्मे मया लब्धम् । त्वदनुग्रहाज्जन्मनामंते भाव्ये सति ॥ ८ ॥ तत्प्रपंचयति । स भगवान् भवांश्चक्षुरूप उदितः सूर्यो यथा ॥ ९ ॥ अपाक्रष्टुमपनेतुम् । कोऽसौ संमोहस्तमाह । एतस्मिन्देहादौ त्वयैव योजितो योऽहंममेत्यवग्रह आग्रहः । द्वितीय इतिशब्दस्तत्कार्यरागादिग्रहणार्थः ॥ १० ॥ प्रकृतेः पुरुषस्य च जिज्ञासया त्वामहं शरणं गता सती नमामीत्यन्वयः । कुठारं छेत्तारम् ॥ ११ ॥ अपवर्गवर्धनं मोक्षे रतिजनकम् । ईषत्स्मितेन शोभितमाननं यस्य ॥ १२ ॥ आध्यात्मिक आत्मनिष्ठः

रूपत्वं ज्ञाप्यत इति । स्वसुतमिति । ऐश्वर्यदर्शनेपि स्नेहो व्यंजितः ॥ ६ ॥ अंधं तमस्तत्त्वाज्ञानं प्राप्ता । प्रभो इति । तस्य तमोऽपाकरणसामर्थ्यं द्योतयतीति ॥ ७ ॥ तस्य प्रकृतस्य ॥ ८ ॥ तत्सच्चक्षुष्ट्वं न केवलं ममैवापि तु सर्वस्येत्याह—लोकस्येति ॥ ९ ॥ अथात एव संमोहं मिथ्याज्ञानलक्षणं भ्रमम् ॥ १० ॥ त्वा त्वाम् । स्वेषां भक्तानां ये भृत्या वेतनेनापि भरणीयास्तेषामपि संसारतरोः कुठारं भक्तिकर्तृकच्छेदनानन्यसाधनम् । पुरुषः खलु को यः संसारी प्रकृतिश्च का यतोस्य संसार इति ज्ञातुमिच्छया न चात्र कश्चिदन्यः प्रष्टव्य इत्याह । सतां यो धर्मस्तादृशसंसारनिवर्त्तको भक्तिरूपस्तद्विदां मध्ये श्रेष्ठम् ॥ ११ ॥ श्लेषेण अपकृष्टवर्गस्य त्रिवर्गस्य वर्द्धनं छेदनं यत्तत् । आत्मा स एव सेव्यत्वेन विद्यते येषां तेषां सताम् । ईषत्स्मितेति । मम परमेश्वरस्य माता त्वं तत्र का संसारवार्ता तथापि त्वां लक्ष्यीकृत्य लोकानुद्धर्तुं किमप्युपदिशामीति भावः । संदर्भस्तु—पुंसां साधारणानामपवर्गवर्द्धनम् । अस्यै तु मद्भक्तत्वाख्यं परमं सुखमपि दास्यामीति स्मिततात्पर्यमित्याह ॥ १२ ॥ आत्मनिष्ठं जीवात्मनिष्ठः योगो निःश्रेयसार्थमुपायः । स च भक्तिर्ज्ञानं योगश्चेति त्रिविधो वक्तव्यः । तत्राभक्तिपक्षे निःश्रेयसमननुसंहितं फलं ज्ञेयम् । यत्र योगे सति दुःखस्य सांसारिकस्य उपरतिरुन्मूलनम् ॥१३॥ ऋषीणामृषीन्नारदादीन् । सर्वाण्यंगानि नैपुण्यानि तदनुष्ठानचातुर्याणि च यत्र तत् ॥१४॥

चेतः खल्वस्य बंधाय मुक्तये चात्मनो मतम् ॥ गुणेषु सक्तं बंधाय रतं वा पुंसि मुक्तये ॥ १५ ॥ अहंममाभिमानोत्थैः कामलोभादिभिर्मलैः ॥
वीतं यदा मनः शुद्धमदुःखमसुखं समम् ॥ १६ ॥ तदा पुरुष आत्मानं केवलं प्रकृतेः परम् ॥ निरंतरं स्वयंज्योतिरणिमानमखंडितम् ॥१७॥
ज्ञानवैराग्ययुक्तेन भक्तियुक्तेन चात्मना ॥ परिपश्यत्युदासीनं प्रकृतिं च हतौजसम् ॥ १८ ॥ न युज्यमानया भक्त्या भगवत्यखिलात्मनि ॥
सदृशोऽस्ति शिवः पंथा योगिनां ब्रह्मसिद्धये ॥ १९ ॥ प्रसंगमजरं पाशमात्मनः कवयो विदुः ॥ स एव साधुषु कृतो मोक्षद्वारमपावृतम् ॥२०॥
तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् ॥ अजातशत्रवः शांताः साधवः साधुभूषणाः ॥ २१ ॥ मय्यनन्येन भावेन भक्तिं कुर्वंति ये दृढाम् ॥
मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबांधवाः ॥२२॥ मदाश्रयाः कथा मृष्टाः शृण्वंति कथयंति च ॥ तपंति विविधास्तापा नैतान्मद्गतचेतसः ॥२३॥

यत्र यस्मिन् ॥१३॥ ॥१४॥ तत्र सर्वांगनैपुण्यं चित्तसंयमाधीनमिति दर्शयन्नाह । चेत इति । अस्यात्मनो जीवस्य गुणेषु विषयेषु पुंसि परमेश्वरे वाशब्दस्तुशब्दार्थे ॥ ॥१५॥ यथा च चित्तसंयमे पुरुषार्थसिद्धिस्तद्दर्शयति । अहमिति त्रिभिः । मलैर्वीतं विरहितं यदा शुद्धं मनो भवति । मनःशुद्धेर्ज्ञापकमाह । अदुःखमिति ॥१६॥ निरंतरं निर्भेदम् अणिमानं सूक्ष्मम् । अखंडितमपरिच्छिन्नम् ॥१७॥ हतौजसं क्षीणबलाम् ॥१८॥ मनःशुद्धौ च भक्तिरेवांतरंगसाधनमित्याह नेति ॥ १९ ॥ अस्य सर्वस्यापि सत्संगो मूलमित्याह । प्रसंगमिति । अपावृतं निरावरणम् ॥ २० ॥ साधूनां लक्षणमाह । तितिक्षव इति चतुर्भिः । साधवः शास्त्रानुवर्तिनः साधु सुशीलं तदेव भूषणं येषाम् ॥ २१ ॥ २२ ॥ एतानुक्तलक्षणान्भक्तान् तापा आध्यात्मिकादयो न तपंति न व्यथयंति कुतः मद्गतं चेतो येषां तान् ॥ २३ ॥

परमेश्वररतेः कारणं भक्तिरेव न ज्ञानं नापि योगो मोचकत्वेन केवला भक्तिरेव समुचितेति ज्ञेयम् ॥१५॥ ज्ञानवैराग्ययोश्च मोचकत्वं भक्तिसाहाय्येनैवेत्याह—अहमिति । कामादिमलराहित्यं च मनसः शमदमादिभिर्यमनियमादिभिश्च भवतीति ज्ञानयोगयोरंगानि सूचितानि अदुःखं स्यादिति शेषः॥१६॥ पुरुषो जीवः प्रकृतेरविद्यातः "सूक्ष्माणामप्यहं जीवः" इति भगवदुक्तेः । अखंडितं विषयवासनाभिरिति वा ॥१७॥ भक्तियुक्तेन चेति चकाराद्भक्तेस्तत्र साहाय्यमेव तद्विना ज्ञानस्य स्वीयफलसाधकत्वाशक्तेः । प्रकृतिं स्वाविद्यां क्ष णबलां स्वस्मिन्किंचिदपि कर्तुमशक्ताम् ॥ १८ ॥ त्रयाणां मध्ये केवला भक्तिरेव श्रेष्ठा सुखमयी परममंगला चेत्याह—नेति । भगवति भक्तिरेव युज्यते समुचिता भवतीत्यर्थः । योगिनामुपायवतां, ब्रह्मणि परमेश्वरे विषयीकृते, सिद्धिर्दास्यसख्यादिनिष्पत्तिस्तस्यै । यद्वा । ब्रह्मसिद्धये ब्रह्मावाप्तये स्वरूपानंदलाभायेति यावत् ॥१९॥ अस्य भक्तिज्ञानादेः प्रपंचस्य प्रसंगं प्रकृष्टसंगम् अत्यंतासक्तिमिति यावत् । स्त्रीपुत्रादिषु कृतमिति शेषः । आत्मनो जीवस्य अजरं विमोक्तुमशक्यम् । तदुक्तं गारुडे—"लोहदारुमयैः पाशैः पुमान् बद्धो विमुच्यते । पुत्रदारमयैः पाशैः पुमान् बद्धो न मुच्यते" इति । वक्ष्यति च सप्तमे प्रह्लादचरिते । "को गृहेषु पुमान्सक्तमात्मानमजितेंद्रियः ॥ स्नेहपाशैर्दृढैर्बद्धमुत्सहेत विमोचितुम्" इत्यारभ्य 'क्रीडामृगो यन्निगडो विसर्गः' इत्यंतेन प्रबंधेन यः प्रसंगोऽजरोऽनर्थहेतुः स एवेत्यर्थः । मोक्षस्य सालोक्यादेः स्वरूपावाप्तिलक्षणस्य वा द्वारं प्रवेशमार्ग इत्यर्थः ॥ २० ॥ तटस्थलक्षणमाह । शांता अनुग्राः । साधवः सरलाः । साधून्भूषयंति मानयंति । यद्वा । साधव एव भूषणानि प्रियाः परिच्छदा वा येषां ते । अजा प्रकृतिस्तया तत्कार्यं देहो लक्ष्यते । अजयाऽतंति सातत्येन गच्छंतीत्यजाताः, स्थिते तिष्ठंति गते गच्छंतीति कामलोभादयस्तेषां शत्रवो नाशका अजातशत्रवः । यद्वाऽजां तनोतीत्यजातो दुःसंगस्तस्य शत्रवो वारकाः 'संतः संगस्य भेषजम् इत्युक्तेः ॥ २१ ॥ स्वरूपलक्षणमाह—मयीति । अन्यादिपदानां सदृशार्थग्राहकत्वात् । न विद्यतेऽन्योऽहमित्राराध्यो ब्रह्मरुद्रादिविषयो यस्य तेन भावेन दास्यसख्यादिना अत एवैकमात्रविषयित्वाद्दृढाम् । मत्कृते मत्प्राप्त्यर्थम् । 'सर्वधर्मान्परित्यज्य' इत्यादिमदुक्तेस्त्यक्तकर्माणः 'ये दारागारपुत्रादि'त्याद्युक्तेश्च त्यक्तस्वजनाद्याः॥२२॥ मृष्टाः शुद्धाः अमायिकीः । एतान् । भक्तान् तापा इति । एते

त एते साधवः साध्वि सर्वसंगविवार्जिताः ॥ संगस्तेष्वथ ते प्रार्थ्यः संगदोषहरा हि ते ॥ २४ ॥ सतां प्रसंगान्मम वीर्यसंविदो भवंति हृत्कर्णरसायनाः कथाः ॥ तज्जोषणादाश्वऽपवर्गवर्त्मनि श्रद्धा रतिर्भक्तिरनुक्रमिष्यति ॥ २५ ॥ भक्त्या पुमाञ्जातविराग ऐंद्रियाद्दृष्टश्रुतान्मद्रच नाऽनुचिंतया ॥ चित्तस्य यत्तो ग्रहणे योगयुक्तो यतिष्यते ऋजुभिर्योगमार्गैः ॥ २६ ॥ असेवयाऽयं प्रकृतेर्गुणानां ज्ञानेन वैराग्यविजृंभितेन ॥ योगेन मय्यर्पितया च भक्त्या मां प्रत्यगात्मानमिहावरुंधे ॥ २७ ॥ देवहूतिरुवाच ॥ काचित्त्वय्युचिता भक्तिः कीदृशी मम गोचरा ॥ यया पदं ते निर्वाणमंजसाऽन्वाश्नवा अहम् ॥ २८ ॥ यो योगो भगवद्बाणो निर्वाणात्मंस्त्वयोदितः ॥ कीदृशः कति चांगानि यतस्तत्त्वावबोधनम् ॥ ॥ २९ ॥ तदेतन्मे विजानीहि यथाऽहं मंदधीर्हरे ॥ सुखं बुध्येय दुर्बोधं योषा भवदनुग्रहात् ॥ ३० ॥

ये तापैर्नाभिभूयंते तेसाधव इत्यर्थः ॥२४॥ सत्संगस्य भक्त्यंगतामुपपादयति । सतामिति । वीर्यस्य सम्यग्विद्वेदनं यासु ता वीर्यसंविदः हृत्कर्णयो रसायनाः सुखदाः तासां जोषणात्सेवनादपवर्गोऽविद्यानिवृत्तिर्वर्त्म यस्मिंस्तस्मिन्हरौ प्रथमं श्रद्धा ततो रतिस्ततो भक्तिरनुक्रमिष्यति क्रमेण भविष्यतीत्यर्थः ॥ २५ ॥ ततः किमत आह । भक्त्येति मम रचना या सृष्ट्यादिलीला तस्या अनुचिंतया या भक्तिस्तया ऐंद्रियात्सुखाज्जातविरागः सन् दृष्टश्रुतादैहिकामुष्मिकात् ततो यत्त उद्युक्तः संश्चित्तस्य ग्रहणे यतिष्यते ऋजुभिर्भक्तिप्रधानत्वादनायासैः ॥ २६ ॥ तदेवं प्रकृतेर्गुणानामसेवया ज्ञानादिभिश्चायं जीव इहैव देहे मामेवावरुंधे प्राप्नोति ॥ २७ ॥ काचिदिति का स्विदित्यर्थः । उचिता योग्या तत्रापि मम स्त्रियाः कीदृशी गोचरा योग्या । निर्वाणं मोक्षात्मकं तव पदं स्वरूपमन्वाश्नवै अनंतरमेव सर्वात्मना प्राप्स्यामि । अंजसात्विति पाठे अहं त्विति संबंधः ॥ २८ ॥ भगवद्बाणो यो भगवंतं लक्ष्यी करोतीत्यर्थः । यतो यस्माद्योगात् ॥ २९ ॥ विजानीहि विशेषेण ज्ञापय सुखमनायासेन ॥ ३० ॥

तापैर्नाभिभूयन्त इत्यर्थः । इति स्वयं संतापशून्यत्वे सति परसंतापापहारकाः साधव इति भावः ॥ २३ ॥ उपसंहरति त इति । 'त उक्तलक्षणाः सर्वसंगविवार्जिताः पुरुषार्थचतुष्टयासक्तिशून्याः ते तव संगेनासत्संगेन यो दोषो नरकावाप्तिहेतुस्तद्धरास्तन्नाशकाः । "सत्संगतिः कथय किं न करोति पुंसाम्" इत्याद्युक्तेः ॥ २४ ॥ साधुसंगत एव मनो भगवति रतिं वहतीत्यत्र क्रममाह । प्रकृष्टात्संगान्मम कथा भवंतीत्युक्तेरप्रकृष्टात्संगाद्धजनक्रियामात्रं न तु कथा इति । इत्यर्थ इति । रसायनत्वेन प्रथमं रुचिस्तत्रापि पतितोद्धरणादिचरितश्रवणेन श्रद्धा विश्वासः । ततो रतिभक्ती भक्तेः पूर्वापरावस्थे इति भावः ॥ २५ ॥ ततो भक्तेः ग्रहणे वशीकारे संप्रति मत्प्रवर्त्तयिष्यमाणैर्यतिष्यतेऽग्रे जनिष्यमाणः पुमानित्यर्थः । एतेन योग उक्तः ॥ २६ ॥ ज्ञानमाह । गुणानां विषयाणां हेयत्वविचारेण वैराग्येणैहिकामुष्मिकभोगजिहासया विजृंभितेन वर्द्धितेन योगेन मयि मनो निधानलक्षणेन मां प्रत्यगात्मानं तत्पदार्थमवरुन्धे त्वंपदार्थतादात्म्येन प्राप्नोति । इहैव प्रारब्धप्रतिबंधकाभावे सति । भक्त्येति भक्तिं विना भूतस्य ज्ञानस्य वैकल्यात् ॥ २७ ॥ तत्रापि उचितत्वेपि गोचरा ज्ञातुं कर्तुं च शक्या ॥ २८ ॥ यद्यपि त्वत्संमतायां भक्तावेव मम जिज्ञासा चिकीर्षा च तथापि । "जिज्ञासुना निजमतं ज्ञेयं परमतं बुधैः" इति नित्ययोगश्च ज्ञानं च मम जिज्ञास्यमित्याह—य इति । भगवति बाणस्तत्र क्षिप्तः शर इव यो भगवंतं लक्ष्यीकरोतीत्यर्थः । निर्वाणार्थ इति विश्वनाथसंमतः पाठः । तेन तथैव व्याख्यातं मोक्षप्रयोजनक इति । विजयध्वजेन तु-हे निर्वाणात्मन्परमानंदमूर्त्ते इत्थमेव व्याख्यातम् । तत्त्वानामवबोधनं यतस्तत् ज्ञानञ्च ॥ २९ ॥ तदेतद्योगलक्षणं भक्तिलक्षणं, योषेति हेतुगर्भितं विशेषणम् । योषात्वाच्छास्त्रधारणसमर्थबुद्धिरहिताहमित्याह—मंदधीरिति । यथा दुर्बोधं दुर्ज्ञेयमपि योगादिकं सुखं यथा स्यात्तथा बुद्ध्येय जानीयां तथा

मैत्रेय उवाच॥विदित्वाऽर्थं कपिलो मातुरित्थं जातस्नेहो यत्र तन्वाऽभिजातः॥तत्त्वाम्नायं यत्प्रवदंति सांख्यं प्रोवाच वै भक्तिवितानयोगम्॥ ३१॥ श्रीभगवानुवाच ॥ देवानां गुणलिंगानामानुश्रविककर्मणाम् ॥ सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ॥ ३२॥ अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी ॥ जरयत्याशु या कोशं निगीर्णमनलो यथा ॥ ३३ ॥

इत्थं मातुरर्थं प्रयोजनं विदित्वा । जातस्नेहत्वे हेतुः । यत्र यस्यां तन्वा देहेनाविर्भूतः तत्त्वान्याम्नायंतेऽनुक्रम्यंते यस्मिन् । किं तत्। यत्सांख्यं प्रवदंति तत्प्रोवाच भक्तिवितानं च योगं च ॥ ३१ ॥ काचित्त्वय्युचिता भक्तिरिति पृष्टामुत्तमां भक्तिं लक्षयति गुणा विषया लिंग्यंते ज्ञायंते यैस्तेषां देवानां द्योतनात्मकानामिंद्रियाणां तदधिष्ठातॄणां वा सत्त्वे सत्त्वमूर्तौ हरावेव या वृत्तिः सा भक्तिः सिद्धेर्मुक्तेरपि गरीयसीत्युत्तरेणान्वयः । कथंभूता । अनिमित्ता निष्कामा स्वाभाविक्ययत्नसिद्धा । तेषामेवंविधवृत्तौ हेतुमाह । गुरो रुच्चारणमनुश्रूयत इत्यनुश्रवो वेदस्तद्विहितमानुश्रविकं तदेव कर्म येषाम् । अत एवैकमेकरूपमविकृतं मनो यस्य पुंसः शुद्धसत्त्वस्येत्यर्थः ॥ ३२ ॥ मुक्तिश्च प्रासंगिकी

कथयेति भावः ॥ ३० ॥ भक्तेर्वितानो विस्तारो यत्र तं भक्तियोगं योगमष्टांगञ्च ॥ ३१ ॥ इत्यर्थ इति । विकृतिस्तु रजस्तमोभ्यामेव भवति तद्रहितत्वाच्छुद्धांतःकरणस्येत्यर्थः एवकारेण देवतांतरनिरासः । एकमेव स्वरूपमेव । सेवाबुद्धिमयत्वेन त्वद्रूपनामाद्युपादित्सु न तु योगिनामिवायत्यां तज्जिहासु मनो यस्य तस्य पुंसः । तथैकस्मिन्भजने एव मनो यस्य न तु ज्ञानकर्मादिषु तस्य पुंसः गुणाः सत्त्वाद्यो विषया लिंग्यंते ज्ञाप्यंते यैस्तेषां देवानामिंद्रियाधिष्ठातॄणां सद्विषयत्वाद्दीव्यतां क्रीडतामिंद्रियाणां सत्त्वे हरावेव या वृत्तिस्तदीयशब्दादिग्रहणरूपा व्यावृत्तिरनिमित्ता निष्कामा भागवती भक्तिरित्यन्वयः । अत्र सत्त्व एवैकमनसः सत्त्व एवेंद्रियाणां वृत्तिरिति काकाक्षिगोलकन्यायेनोभयत्रान्वितम् । अत्र सत्त्व इत्यनेन सत्त्वगुणवति ब्रह्मरुद्रादाविति न शंक्यं भागवतीत्यनेन तद्व्यावृत्तेः । यद्वा । सतां भावः सत्त्वं वैष्णवत्वं वैष्णवो भवेयमिति तत्र मनसः वैष्णवत्व एवेंद्रियाणां वृत्तिः सा भक्तिः । न च स्वच्छंदेनैव प्रवर्त्तमानानां तेषां वृत्तिर्भक्तिः । किं तु श्रीगुरूपदिष्टमंत्रोचिताचरणवतामित्याह । गुरोरुच्चारणमनुश्रूयते इत्यनुश्रवो मंत्रस्तद्विहितमानुश्रविकं तदेव कर्म नित्यकृत्यं येषां तेषाम् । किञ्च । "उत्सर्गान्मलमूत्रादेश्चित्तस्वास्थ्यं यतो भवेत् । अतः पायुरुपस्थश्च तदाराधनसाधनम् ॥" इति विष्णुरहस्योक्तेः । पायूपस्थयोरपि वृत्तिर्भक्तिसंबंधेन भक्तिरिति । या तु तेषामिंद्रियाणां तथाभूतानामेव स्वाभाविकी वृत्तिः । सा सिद्धेर्मुक्तेरपि गरीयसी श्रेष्ठतरेत्यस्वाभाविक्यपि वृत्तिर्मुक्तेर्गुरुः श्रेष्ठेत्यर्थो लभ्यते । स्वाभाविकी वृत्तिश्च द्विविधा । कदाचिच्छास्त्रशासनेनैव श्रीगुरूपदिष्टशुद्धभक्तौ प्रवृत्तिमतो भजनाभ्यासपौनःपुन्येन निष्ठा रुच्यासक्तिभूमिकाधिरूढस्येंद्रियाणां वृत्तिर्हरौ स्वाभाविकी भवति । यथा प्राकृतलोकानां पतिपुत्रादिषु कदाचिच्च प्राचीनार्वाचीनतादृशमहत्संगकृपाजनितविलक्षणसंस्कारवशेन गुरूपदेशात्पूर्वमनंतरमेव वा शास्त्रशासनं विनैव स्वभावत एवेंद्रियाणां भक्तिशास्त्रोक्ताचरणवत्येव या हरौ वृत्तिः सापि स्वाभाविकी ज्ञेया पूर्वस्या वैधभक्तेः प्रमाणेनैवोत्कर्ष उदाहरणञ्च नैकात्मतामित्यादिपद्यचतुष्टयं ज्ञेयम् ॥ ३२ ॥ परस्या वैराग्यानुगायास्तु जात्यैवोत्कर्ष उदाहरणञ्च "न कर्हिचित्" इत्यादिपद्यम् । अस्वाभाविक्यास्तु स्वाभाविकीभ्यां सकाशात्प्रमाणेन जात्या च निष्कर्षः उदाहरणं च "इमं लोकं तथैवामुम्" इत्यादिपद्यद्वयम् । अस्या द्विविधाया अपि भक्तेर्निष्कामत्वादननुसंहितं फलं सैव भक्तिरननुसंहितं फलं च मोक्षस्तमाह–जरयतीति या भक्तिः कोशं लिंगशरीरं जरयति क्षपयति । किञ्च । ज्ञानहेतुकान्मोक्षादस्य मोक्षस्य दृष्टान्तेन वैलक्षण्यमाह–निगीर्णं भुक्तमन्नादिकमनलो जाठरो यथा जरयतीति स हि जाठरानलो देहपुष्ट्यन्यथानुपपत्तेर्भुक्तस्यान्नादेरसारांशमेव जरयति न तु सारांशं प्राणेंद्रियादीनि सप्तधातूंश्च पुष्यति । येनैवौजःसहोबलवान्देहो भवति तथैव भक्तिर्मायिकानेव शब्दादींस्तत्करणकर्त्रीदींश्चासारांशानेव जरयति न तु सारांशान्भगवत्संबंधिनः शब्दादीनप्राकृतांस्तदिन्द्रियांदींश्च जरयति "चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम्" इत्यादिश्रुतेः । यैरेव

नैकात्मतां मे स्पृहयंति केचिन्मत्पादसेवाऽभिरता मदीहाः ॥ येऽन्योन्यतो भागवताः प्रसज्य सभाजयंते मम पौरुषाणि ॥ ३४ ॥ पश्यंति ते मे रुचिराण्यंब संतः प्रसन्नवक्त्रारुणलोचनानि ॥ रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदंति ॥ ३५ ॥

भवत्येवेत्याह । या भक्तिः कोशं लिंगशरीरं जरयति क्षपयति । स्वप्रयत्नं विनैव सिद्धौ दृष्टांतः । निगीर्णं भुक्तमन्नमनलो जाठरो यथा जरयतीति ॥ ३३ ॥ भक्तेर्गरिष्ठत्वमेवोपपादयति । नैकात्मतामिति पंचभिः । एकात्मतां सायुज्यमोक्षं मदर्थमीहा क्रिया येषाम् । प्रसज्ज्यासक्तिं कृत्वा पौरुषाणि वीर्याणि ॥ ३४ ॥ प्रसन्नानि वक्त्राण्य

भक्तानां देहः सिद्धो भवति अत एव मायिकोसारांश एव लिंगकोशदेहेंद्रियादिशब्दैः शास्त्रेषूच्यते यथा ''देहेंद्रियासुहीनानां वैकुंठपुरवासिनाम्'' इत्यादि । यथा च पुरुषप्रयत्नं विनैव जाठरोग्निर्भुक्तान्नादिकं जरयति येन प्रकारेण जरयति तं प्रकारं च पुरुषो न जानात्येवं मोक्षार्थं किमप्ययतमानं श्रवणकीर्त्तनादिकञ्च नित्यं कुर्वाणं तन्माधुर्य्यास्वादवन्तं भक्तजनं भक्तिः संसारान्मोचयति । भक्तस्तु केन प्रकारेण कदा मे मुक्तिर्भविष्यतीति नानुसंधत्ते तद्वक्ष्यति—''त्वत्पादपोतेन महत्कृतेन कुर्वंति गोवत्सपदं भवाब्धिम्'' इति । पथि गच्छतः पुंसो गोष्पदलंघनानुसंधानं यथा न भवति तथेति भक्तानां त्रिभूमिकब्रह्मज्ञानाभावेपि ''नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुधा श्रुतेन यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम् '' इति श्रुतेर्भगवत्कारुण्याद्भक्त्या तद्रूपगुणलीलैश्वर्यमाधुर्यानुभवरूपाज्ज्ञानादेव मोक्षः ''तमेव विदित्वा अतिमृत्युमेति'' इति श्रुतावप्येवकारेण मुक्तौ तस्यैव ज्ञानस्य कारणत्वेनोक्तेस्तज्ज्ञानञ्चोक्तप्रकारकमेव । सर्वथा तत्स्वरूपज्ञानं तु ''यतो वाचो निवर्त्ततेऽप्राप्य मनसा सह'' इति ''यस्यामतं तस्य मतं मतं यस्य न वेद सः'' इति, ''द्युपतय एव तेन ययुरंतमनंततया'' इत्यादिश्रुतिस्मृतिभ्यो न कस्यापि संभवत्येव जीवब्रह्मैक्यरूपा मुक्तिस्तु भक्तैस्त्याज्यैवेत्यग्रे वक्ष्यते । किञ्च । भुक्तमन्नादिकं जाठरानलो भोजनक्षणत एव जरयितुं प्रवृत्तोपि त्रिचतुर्यामानंतरमेव सम्यक्तया जरयति यथा तथा भजनक्षणत एव शोकमोहाद्यात्मकं संसारं नाशयितुं प्रवृत्तापि भक्तिः किंचित्कालविलंबेनैव सम्यक्तया नाशयतीत्यतो भजनदशायां शोकमोहाद्यनपगमेपि भक्तेषु संसारोयमिति न प्रत्येतव्यमिति ज्ञेयं, तदेवं गुरूपदिष्टमंत्रव्रती भक्तिशास्त्रोक्तविधानुसारिण्यन्याभिलषितशून्या ज्ञानकर्मादिरहिता भगवति श्रोत्रादींद्रियाणां वृत्तिर्भक्तिः, सा चाल्पप्रमाणा साधनभक्तिरस्वाभाविकी भवति, सैव पूर्णप्रमाणा साध्यभक्तिः स्वाभाविकी भावभक्तिर्भवति, सैव काचिदल्पप्रमाणापि जात्यैवाधिक्यात्स्वाभाविकी चेद्रागानुगानाम्नी साधनभक्तिः, सा च जातिप्रमाणाभ्यां पूर्णा रागानुगीयभावभक्तिर्भवतीति विवेको भक्तिरसामृतसिंद्धौ ज्ञेयः।''निष्पत्तौ योगमोक्षयोः । अणिमादिषु सिद्धिः स्यात्'' इति धरणिः ॥ ३३ ॥ लक्षणमुक्त्वोदाहरणमाह—सप्तभिस्तत्र प्रथमं स्वाभाविक्या भावभक्तेरुदाहरणं, चतुर्भिर्वदन्नेवानिमित्तेत्येतत्सहेतुकं स्पष्टयति । नेति—एकात्मतां ब्रह्मैक्यरूपां ये मुक्त्यै न स्पृहयंतीति सिद्धेः सकाशाद्गरीयस्त्वम्।ननु केन सुखेन पूर्णास्ते ब्रह्मसुखं न रोचयंति तत्राह—मत्पादयोः सर्वैंद्रियैर्या सेवा तस्यामेव न तु कर्मज्ञानादिषु अभि शास्त्राभिमुख्येन रता अत्यासक्तिमंतः । अनेन भक्तेर्भगवद्विषयत्वं सर्वैंद्रियवृत्तिरूपत्वं कर्मज्ञानादिराहित्यं शास्त्रानुसारित्वं स्वाभविकत्वं चोक्तम् । मय्येव मत्सौंदर्यमाधुर्यास्वादने एवेहा वांछा येषां ते इत्यन्याभिलाषशून्यत्वं प्रसह्यासह्यपौरुषाणि गोवर्द्धनोद्धारणादिलीलामृतानि सभाजयंते संततिकमास्वादयंति तेन चरणसेवानंदाभावात्सौंदर्य्यसौरभ्याद्यनुभवाभावात् लीलामृतास्वादनाभावाच ब्रह्मसुखं न रोचयंतीति मुक्तावस्पृहायां हेतुत्रयमुक्तम्॥३४॥ इति भाव इति । मुक्तौ पूर्वोक्तहेतूनामभावाद्भक्तौ तेषां संभवाद्भक्तिरेवादरणीयेत्याशयः । चक्रवर्त्ती—यतः सायुज्यपर्यंतेषु फलेषु स्पृहारहिता अतस्ते मत्त एतत्प्राप्नुवन्तीत्याह द्वाभ्यां—पश्यंतीत्युपलक्षणं गृणंति जिघ्रंति स्वादयंतीत्यादेरपि।रूपाणीत्युपलक्षणं शब्दस्पर्शरसगंधादीनां च।दिव्यान्यप्राकृतानि वरप्रदानि अभीष्टसेवाप्रदानि । यद्वा।हे भक्ता वरं वृणुतेत्याद्युक्तिमंति साकं मया सार्द्धं वदंति ''न कामयेन्यं तव पादसेवनादकिञ्चनप्रार्थ्यतमाद्वरं विभो'' ''न पारमेष्ठ्यं न महेंद्रधिष्ण्यम्''इत्याद्युच्चारयंति स्पृहणीयामिति तद्वचःशुश्रूषयैव मया वरं वृणुतेत्याद्युच्यते न त्वन्यत्वरदित्सा ममापि तेभ्य इति भावः । नित्यं परमेश्वरानुभवसुखं भक्तावविकमिति स्वामिचरणैर्व्याख्यातमेवात इति । अंबेति स्नेहद्योतिका संबुद्धिः॥३५॥

तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः ॥ हृतात्मनो हृतप्राणाश्च भक्तिरनिच्छतो मे गतिमण्वीं प्रयुंक्ते ॥ ३६ ॥ अथो विभूतिं मम मायाविनस्तामैश्वर्यमष्टांगमनुप्रवृत्तम् ॥ श्रियं भागवतीं वाऽस्पृहयंति भद्रां परस्य मे तेऽश्नुवते तु लोके ॥ ३७ ॥

रुणानि लोचनानि च येषु तैर्मद्रूपैः साकं सह नित्यं परमेश्वरानुभवसुखं भक्तावधिकमिति भावः ॥ ३५ ॥ आत्मानंदस्त्ववश्यं भावीत्याह । तैरिति । दर्शनीया मनोहरा अवयवा मुखनेत्रादयो येषु तैः हृत आत्मा चित्तं येषाम् । हृता आकृष्टाः प्राणाश्चेंद्रियाणि येषां तान्भजतोऽनिच्छत इच्छाहीनानप्यण्वीं गतिं मुक्तिं प्रयुंक्ते प्रापयति । कैः साधनैर्हृतात्मनः उदारैर्विलासादिभिः तत्र विलासो लीला वामं मनोहरं सूक्तं मधुरभाषणम् ॥ ३६ ॥ विभूत्यादिकं च तत्राधिकमित्याह । अथो अविद्यानिवृत्त्यनंतरं विभूतिं सत्यलोकादिगतां भोगसंपत्तिमणिमाद्यष्टांगमैश्वर्यमनुप्रवृत्तं भक्तिमनु स्वत एव प्राप्तमपि भागवतीं च श्रियं वैकुंठस्थां संपत्तिमस्पृहयंति । ते यद्यपि न

तैरिति । दर्शनीया अतिमनोहरा ये अवयवाः श्रीकृष्णरामाद्यंगानि तैः उदारा भक्ताभीष्टप्रदातारो विलासादयो येषु तैर्हृतमनःप्राणत्वादनिच्छतोपि भक्तान् भक्तिरण्वीं गतिं प्रयुंक्ते 'भो भक्ताः ब्रह्मैक्यरूपां मुक्तिं गृह्णीत' इति प्रयोगमात्रं करोति न तु दातुमवकाशं लभते भगवतो लीलाविलाससहासावलोकमधुरभाषणैस्तेषामात्मनां चोरितत्वेन संप्रदानाभावादिति भावः । नन्वेवं चेत्तर्हि परमविज्ञो भक्तिमनिच्छतस्तान् कथमेवं प्रयुंक्ते उच्यते—कश्चिच्चिंतामणिस्पर्शहीरकपद्मरागादिमहारत्नानां दाता खल्वल्पार्थिभ्यः कनकमपि दातुं दर्शयत्यन्यथा कनकमस्य दातुर्नास्तीति कनकमात्रार्थिभिर्मंदधीभिरप्रतिष्ठा क्रियते इतिवद्भक्तिरपि मुक्तिमात्रार्थिज्ञानिमानिलोकवस्त्वभाननिरासार्थं स्वीयांस्तानपि तथा प्रयुंक्ते न पुनर्मुक्तिमेव तेभ्यो दित्सतीत्यवधेयम् । यद्वा । भक्तिरेव तान् हृतात्मनो जनान् अण्वीं गतिमनिच्छतः प्रयुंक्ते अण्वीं गतिं न एषयति नाभिलाषयति अनिच्छायाः प्रयोजिका भवतीत्यर्थः । यथा कुर्वंतं प्रयुंक्ते इति कारयतीत्यनयोर्णिच्प्रत्ययवाक्यणिजंतयोस्तुल्य एवार्थः तथा हि न पाठयत्ययमिति वक्तव्ये न पठंतं प्रयुंक्त इति न पठनप्रयोजकोऽयमिति च यथोच्यते तथैव भक्तिर्भक्तजनान् अण्वीं गतिं नैषयति नाभिलाषयतीति वक्तव्येऽण्वीं गतिमनिच्छतः प्रयुंक्त इत्युक्तम् । यद्वा । "स्वकर्मफलनिर्दिष्टां यांयां योनिं व्रजाम्यहम्" इत्यादिरीत्या दैन्येन शुद्धभक्तिमात्रेच्छुत्वादनिच्छतोप्यण्वीं प्रकृत्यतीतत्वेन दुर्ज्ञेयां पार्षदत्वाख्यां गतिं प्रयुंक्ते प्रापयतीति संदर्भः । अण्वीं गतिमनिच्छतो जनान् विलासादिभिर्हृतमनःप्राणान् कुरुते इति श्रीरूपगोस्वामिचरणाः । अनिच्छत इच्छाहीनानप्यण्वीं गतिं प्रापयतीति स्वामिचरणाः । एतद्व्याख्यानमपि नात्यसंगतम् "यथेंद्रियैः पृथग्द्वारैः" इत्यत्र भक्तानां सर्वसुखानुभवस्य व्याख्यास्यमानत्वात् । ततश्च भक्तिरिच्छाहीनानपि तान्बलाद्ब्रह्मसुखमप्यनुभावयितुं भक्तिं प्रापय्य "ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृताः" इति रीत्या ततो निष्क्रमय्य भगवद्धाम्नि तांस्तत्पार्षदान्विधाय भजनानंदैः सदा निमज्जयतीति तात्पर्य्यमुत्तरश्लोकार्थावगाहनाज्ज्ञेयमिति केचिदाहुः । स्वामिव्याख्याने तत्रेत्यस्य विलासादिषु मध्य इत्यर्थः ॥ ३६ ॥ तत्र भक्तिदत्तमुक्तौ । इत्यर्थ इति । 'अमानोनाः प्रतिषेधे' इत्यव्ययचतुष्केऽकाररूपमप्यव्ययं निषेधेऽस्तीति भावः । यद्यपि न स्पृहयंति तथापीति । चक्रवर्त्ती तु-किञ्च कर्मज्ञानयोगादीनां भक्त्यविनाभावसिद्धत्वात्तत्तद्विनाभूताया अपि भक्तेस्तत्तत्फलदायित्वेन 'यत्कर्मभिर्यत्तपसा' इत्यादौ श्रुतत्वात्सर्गादीत्यपि । वस्तुतो भक्तेरेव फलानीति शुद्धभक्तिमंतो मल्लोकवासिन एव मद्भक्तजनानंतर्भूतान्येव सर्वसुखान्यनुभवंतीत्याह-अथो इति । अविद्यानिवृत्त्यनंतरमेव मायाचितां विभूतिं सर्वब्रह्मांडगतसुखानि । 'मायिनस्तान्' इति च पाठः । अणिमाद्यष्टयोगैश्वर्यसुखं चानुप्रवृत्तं भक्तिमनु स्वत एव प्राप्तं तथा भागवतीं श्रियं वैकुंठस्थां सार्ष्टिसंज्ञां सम्पत्तिं निश्चितं चकाराद्ब्रह्मानंदं चास्पृहयंति मदीयहासावलोकादिहृतात्ममनःप्राणत्वाद्यद्यपि तेभ्यो न स्पृहयंति तथापि परमेश्वरस्य मे लोके वैकुंठेऽश्नुवत इति स्ववात्सल्ये विशेषो दर्शितः ॥ ३७ ॥

न कर्हिचिन्मत्पराः शांतरूपे नंक्ष्यंति नो मेऽनिमिषो लेढि हेतिः ॥ येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टम् ॥ ३८॥ इमं लोकं तथैवामुमात्मानमुभयायिनम् ॥ आत्मानमनु ये चेह ये रायः पशवो गृहाः ॥ ३९ ॥ विसृज्य सर्वानन्यांश्च मामेवं विश्वतोमुखम् ॥ भजं त्यनन्यया भक्त्या तान्मृत्योरतिपारये ॥ ४० ॥ नान्यत्र मद्भगवतः प्रधानपुरुषेश्वरात् ॥ आत्मनः सर्वभूतानां भयं तीव्रं निवर्तते ॥ ४१ ॥

स्पृहयंतीत्यर्थः । तथापि लोके वैकुंठे अश्नुवते तु प्राप्नुवंत्येव ॥ ३७ ॥ नन्वेवं तर्हि लोकत्वाविशेषात्स्वर्गादिवद्भोक्तृभोग्यानां कदाचिद्विनाशः स्यात्तत्राह । हे शांत रूपे यद्वा शांतं शुद्धसत्त्वं तद्रूपे वैकुंठे मत्पराः कदाचिदपि न नंक्ष्यंति भोग्यहीना न भवंति अनिमिषो मे हेतिर्मदीयं कालचक्रं च नो लेढि तान्न ग्रसति । तत्र हेतुर्येषा मिति । सुत इव स्नेहविषयः सखेव विश्वासास्पदम् । गुरुरिवोपदेष्टा सुहृदिव हितकारी इष्टं दैवमिव पूज्यः एवं सर्वभावेन मां ये भजंति तान्मदीयं कालचक्रं न ग्रसतीत्यर्थः ॥ ॥ ३८ ॥ एवंभूतां तु मुक्तिमेकांतभक्तेभ्यो ददामीत्याह । इममिति द्वाभ्याम् । उभयायिनं लोकद्वयगामिनमात्मानं सोपाधिकमात्मानमनु ये पुत्रकलत्रादयो ये च पश्वा दयः । रायः धनानि ॥ ३९ ॥ अन्यांश्च परिग्रहान् मृत्योः संसारादतिपारयेऽतितारयामि ॥ ४० ॥ अभक्तानां तु कथंचिदपि न मोक्ष इत्याह । नेति । मद्भगव

अत्राक्षिपति—नन्विति । अप्राप्तज्ञानत्वात्तस्याः शांतरूपत्वामंत्रणं न संजाघटीति चेत्तत्राह-यद्वेति । मत्परा वैकुंठस्थाः तत्र कालचक्राग्रासे प्रियो लक्ष्म्यादीनामिव, आत्मा सनकादीनामिव, सुतो भवदादीनामिव, सखा श्रीदामादीनामिव, गुरुः प्रद्युम्नादीनामिव, सुहृद एक एव नानाप्रकारः पांडवानामिव, दैवमिष्टमुद्धवादीनामिवं अतस्तन्वाभिजाते मयि सुतस्नेहरूपैव भक्तिस्तवोचितेति च दर्शितम् । अंतिमनिष्ठा च तस्यास्तथा "ज्ञाततत्त्वाप्यभून्नष्टे वत्से गौरिव वत्सला" इति । येषां मां विना न कश्चिदपरः प्रेमभाजनमस्तीत्यर्थः । तथा चोक्तं नारायणव्यूहस्तवे "पतिपुत्रसुहृद्भ्रातृमित्रवत्पितृवद्धरिम् । ये ध्यायंति सदोद्युक्तास्तेभ्योपीह नमोनमः" इति "यमेवैष वृणुते तेन लभ्यः" इत्यादिश्रुतेः । यं प्रियत्वेन पितृत्वेन भ्रातृत्वेन सखित्वेन पितृपुत्रादित्वेन वा वृणुते इति श्रुतिपदार्थः । इत्यर्थ इति । "न स पुनरावर्त्तत" इति श्रुतेः । "मां प्राप्यैव तु कौंतेय पुनर्जन्म न विद्यते" इति गीतोक्तेश्चेति भावः । सुहृद इति । बहुत्वं सौहार्दस्य नानाभेदापेक्षम् । इदं रागानुगायाः स्वाभाविक्या भक्तेरुदाहरणम् ॥ ३८॥ एवंभूतामुक्तस्वरूपाम् । एकांतभक्तेभ्योऽनन्यभक्तेभ्यः । चक्रवर्त्ती तु— अस्वा भाविक्याः साधनभक्तेरुदाहरणमाह-द्वाभ्याम् इमं दृष्टभोगासक्तिममुमदृष्टभोगासक्तिम्, आत्मानमहंतास्पदे भोक्तारि चासक्तिमिति । आदिना भ्रात्रादिग्रहः । द्वितीयादिना गृहादिग्रहः । "राः पुंसि स्वर्णवित्तयोः" इति मेदिनी ॥ ३९ ॥ विसृज्येति । यथैव भोगाद्यासक्तिर्भोगादिप्रशंसागम्या तथैव तत्तदासक्तित्यागस्तत्तन्निंदागम्य इति "जुषमाणश्च तान्कामान्दुःखोदर्कांश्च गर्हयन्" इत्युक्तेः । एवं प्रियत्वादिप्रकारेण विश्वतोमुखं तत्तद्भा वानुसारेणानंताविर्भावम् । यद्वा । यस्यां दिशि ते यांति तत्रैवाहं तेषामभिमुख एव वर्त्ते इत्यर्थमाह विश्वनाथः । अनन्यया भावांतरामिश्रयेति संदर्भः । देवतांतरभक्तिज्ञानकर्मादिशून्ययेति चक्रवर्ती । मृत्योः संसार सिन्धोर्भक्तिमात्राभिलाषित्वेन संसारपारमनिच्छतोपि तानतिक्रम्य पारये पारं "यस्तस्य पारेऽभिविराजते विभुः" इत्युक्तेर्मां प्रापयामीत्यर्थः ॥ ४० ॥ भक्तिं विना तु नैव निस्तार इत्याह—नेति । मत्तो विना मद्भक्तिं विना भक्तिविषयीभूतस्यानंतस्वरूपत्वेपि विशेषणत्रयेण पूर्वपूर्वमुख्यानि सेव्यस्वरूपाणि कानिचित्सूचयति । भगवान्प्रथमतः पूर्णः श्रीकृष्ण एव ततः श्रीरामः प्रधानपुरुषेश्वरः परव्योमनाथः तत आत्मा प्रकृत्यंतर्यामी

मद्भयाद्वाति वातोऽयं सूर्यस्तपति मद्भयात् ॥ वर्षतींद्रो दहत्यग्निर्मृत्युश्चरति मद्भयात् ॥ ४२ ॥ ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः ॥ क्षेमाय पादमूलं मे प्रविशंत्यकुतोभयम् ॥४३॥ एतावानेन लोकेऽस्मिन् पुंसां निःश्रेयसोदयः ॥ तीव्रेण भक्तियोगेन मनो मय्यर्पितं स्थिरम् ॥४४॥ इति श्रीमद्भागवते तृतीयस्कंधे कापिलेयोपाख्याने भक्तिलक्षणवर्णनं नाम पंचविंशोध्यायः ॥२५॥ श्रीभगवानुवाच ॥ अथ ते संप्रवक्ष्यामि तत्त्वानां लक्षणं पृथक् ॥ यद्विदित्वा विमुच्येत पुरुषः प्राकृतैर्गुणैः॥१॥ज्ञानं निःश्रेयसार्थाय पुरुषस्यात्मदर्शनम् ॥ यदाहुर्वर्णये तत्ते हृदयग्रंथिभेदनम् ॥२॥

तोऽन्यत्र भगवतो मत्तो विना सर्वभूतानामात्मनः भगवदादिविशेषणत्रयेण सामर्थ्यं निरपेक्षत्वं हितकारित्वं चोक्तम् ॥ ४१ ॥ ऐश्वर्यं स्फुटयति । मद्भयादिति । श्रुतिश्च "भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेंद्रश्च । मृत्युर्धावति पंचमः" इति ॥ ४२ ॥ मद्भजनादेव मोक्ष इत्यत्र सदाचारं प्रमाणयति । ज्ञानेति ॥ ४३ ॥ उपसंहरति । एतावानिति । मय्यर्पितं सन्मनः स्थिरं भवतीति यदेतावानेव ॥ ४४ ॥ इति श्री० तृती० टीकायां पं० विं० ॥ २५ ॥ षड्विंशे पुंप्रकृत्योस्तु विवेकायोपवर्ण्यते ॥ सांख्येन सर्वभावानां जन्मलक्षणभेदतः ॥ १ ॥ धात्रा पुत्राय यत्प्रोक्तं क्षत्रे मित्रासुतेन यत् ॥ मात्रे सांख्यं तदध्यात्मप्राधान्येनाह तत्त्ववित् ॥ २ ॥ तत्त्वाम्नायं यत्प्रवदंति सांख्यमित्यत्र सांख्यं भक्तियोगश्चेति त्रयमुपक्षिप्तम् । तत्र भक्तिमुक्त्वेदानीं सांख्यमाह । अथेति ॥ १ ॥ ननु मुक्तिरात्मज्ञानादेव न तु तत्त्वलक्षणज्ञानात् । "तमेव विदित्वाऽतिमृत्युमेति" इति श्रुतेरत आह ज्ञानमिति । आत्मदर्शनरूपं ज्ञानमत एव हृदयग्रंथिभेदनमहंकारनिवर्तकं निःश्रेयसप्रयोजनाय

समष्ट्यंतर्यामी व्यष्ट्यंतर्यामी चेति पुरुषत्रयं पुरुषावतारा मत्स्यकूर्मादयोपि ज्ञेयाः ॥ ४१ ॥ नन्वनन्यया भक्त्येति त्वयोक्तमतोन्ये खल्वसेविता देवाः कुप्यंतस्तत्तद्भक्तं कदाचिद्दुःखयंति न वेति तत्र साटोपमाह—"भीषास्मात्" इत्यादिश्रुतेरहमेव सर्वेश्वरस्तेन यदि कमपि ते मद्भक्तं कदाचिदपि दुन्वंति तदा तांस्तत्तदधिकारादध्यधः पातयितुं न विलंब इति भावः ॥ ४२ ॥ शुद्धां भक्तिमुक्त्वा ज्ञानादिमिश्रां भक्तिमाह—ज्ञानेति योगिनो ज्ञानिभक्ताः क्षेमाय पुनर्दुःखाभावाय पादमूलप्राप्तिरूपं मोक्षम् "येनापवर्गाख्यमदभ्रबुद्धिर्ज्ञानेन वैयासकिशब्दितेन । भेजे खगेंद्रध्वजपादमूलम्" इत्यत्र खगेंद्रध्वजपादमूलस्यैवापवर्गत्वेनाभिधानात् । अकुतोभयं "मृत्युरस्मादपैति" इति देवक्युक्तेः ॥ ४३ ॥ शुद्धा भक्तिरेवं सर्वतः श्रेष्ठेत्याह—एतावानिवेति । इतोऽधिको निःश्रेयसस्योदयो नैव कोप्यधिकोस्ति किं त्वितो न्यून एव सर्व इति भावः । तीव्रेण दृढेन ज्ञानकर्मादिभिरभंगुरेण शुद्धेनेत्यर्थः । निःश्रेयसस्य परमपुरुषार्थस्योदय आविर्भावः ॥ ४४ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे पञ्चविंशोऽध्यायः ॥ २५ ॥ सांख्येन तन्नामकशास्त्रेण तदुक्तरीत्या सर्वेषां भावानां तत्त्वानां जन्मप्राकट्यं लक्षणस्य स्वरूपस्य भेदतः ( १ ) पुत्राय नारदाय । क्षत्रे विदुराय । अध्यात्मस्यात्मज्ञानस्य प्राधान्येन । क्वचित्तु 'तदध्यात्मम्' इति पाठस्तत्र सांख्यविशेषणं ज्ञेयम् ( २ ) उपक्षिप्तं कथितं तत्र त्रयाणां मध्ये । अथ भक्तिनिरूपणानंतरम् । ते तुभ्यम् । ननु यत्पुरुषार्थोपयोगि तदेव वक्तव्यं किं तत्त्वानां लक्षणज्ञानेनेति चेत्तत्राह—यदिति । पुरुषो जीवः । प्राकृतैः प्रकृतिकार्यभूतैर्गुणैः सत्त्वाद्यैः ॥ १ ॥ अत्राक्षिपति—नन्विति—तमात्मानमेवेत्येवकारेणान्ययोगव्यवच्छेदान्मृत्युं जन्ममरणलक्षणं संसारमत्येति अतिक्रामति छन्दसीत्यधिकारे "व्यवहिताश्च" इति व्यवहितेनातिपदेन संबंधः । अतो ज्ञानस्य मोक्षहेतुत्वादाह । अत एवात्मसाक्षा

अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः ॥ प्रत्यग्धामा स्वयंज्योतिर्विश्वं येन समन्वितम् ॥ ३ ॥ स एष प्रकृतिं सूक्ष्मां दैवीं गुणमयीं विभुः ॥
यदृच्छयैवोपगतामभ्यपद्यत लीलया ॥ ४ ॥ गुणैर्विचित्राः सृजतीं सरूपाः प्रकृतिं प्रजाः ॥ विलोक्य मुमुहे सद्यः स इह ज्ञानगूहया ॥ ५ ॥

यदाहुस्तत्ते वर्णयामि । तत्त्वलक्षणज्ञानादेव विविक्तात्मज्ञानं भवतीति भावः ॥ २ ॥ तत्र पुरुषं लक्षयति । अनादिरिति । आत्मैव पुरुषः कोऽसावात्मा प्रत्यक्प्रतिलोमं धाम स्फूर्तिर्यस्य । क्षणिकपक्षं व्यावर्तयति । अनादिरिति । संसारित्वपक्षं व्यावर्तयति । प्रकृतेः परः अन्यः संगः । ज्ञानादिगुणत्वं वारयति निर्गुणः । मीमांसकाद्यभिमतज्ञानविषयत्वं वारयति । स्वयंज्योतिः अनेनैव प्राभाकराभिमतं ज्ञानाधारत्वेन स्फुरणमपि निरस्तम् । स्वयंज्योतिष्ट्वे हेतुः । विश्वं येन समन्वितं प्रकाशत इति शेषः । एतैरेव हेतुभिः पुरुषस्य प्रकृतेः परत्वमपि सिद्धम् ॥ ३ ॥ अत्रावरणविक्षेपशक्तिभेदेन प्रकृतिर्द्विविधा तत्रावरणशक्त्या सैव जीवोपाधिरविद्या विक्षेपशक्त्या सैव माया पारमेश्वरी । पुरुषश्च जीवेश्वररूपेण द्विविधः तत्र यः प्रकृत्यविवेकेन संसरति स जीवः यस्तु प्रकृतिं वशीकृत्य विश्वसृष्ट्यादि करोति स ईश्वरः तत्र प्रकृत्यविवेकेन जीवस्य संसारप्रकारमाह । स एष इति पंचभिः । सूक्ष्मामव्यक्तां दैवीं देवस्य विष्णोः शक्तिं लीलयोपगतां यदृच्छयैवाभ्यपद्यतेत्यन्वयः ॥ ४ ॥ तस्या लीलामाह । गुणैरिति । ज्ञानं

त्कारस्वरूपत्वादेव । आहुराद्याचार्याः । इति भाव इति । विना तत्त्वानां स्वरूपज्ञानं तत्पार्थक्येनात्मज्ञानं कथं स्यादतस्तज्ज्ञानस्यात्मज्ञानोपयोगित्वमित्याशयः ॥ २ ॥ तत्र तत्त्वेषु प्रथमं पुरुषम् पुरुषः । परमात्मा अन्यपदार्थस्फूर्त्यपेक्षया प्रतिलोममंतर्मुखीकृतचित्ते इत्यर्थः । स्फूर्त्तिविषयान्पदार्थान् विज्ञानवादिनः क्षणिकान्मन्यंते सोपि किं तादृश इति चेदाह—अनादिः सदातनः एतादृशस्तु जीवोप्यस्ति तत्राह—प्रकृतेरिति । नैयायिकाद्यभिमत ईश्वरोस्त्येतादृशस्तत्राह—निर्गुण इति । ते तु ज्ञानादिगुणकं मन्यंते इति ज्ञानादिगुणवत्त्वाभावेपि ज्ञानविषयोस्त्विति 'ज्ञानगम्यं ज्ञानज्ञेयम्' इत्याद्युक्तेस्तत्राह—मीमांसकादीति । अनेन स्वयंज्योतिष्टकथनेन यस्मिन् ज्ञानमस्ति स चात्मेति तैर्मन्यते येनात्मना समन्वितं संबद्धं विश्वस्य जडत्वात्तत्प्रकाशकत्वेन स्वमपि सूर्यवत्प्रकाशयतीत्यर्थः । एतैरनादित्वादिभिः । अनादित्वान्निर्गुणत्वात्स्वयंज्योतिष्ट्वात्प्रत्यग्धामत्वात्पुरुषः प्रकृतेः परः योऽनादित्वादिर्न स प्रकृतेः परोपि न यथा महदादिरिति । सगुणक्षे अनादिर्नित्य आत्मा परमात्मैव पुरुषः निर्गुणः प्राकृतगुणरहितः यतः प्रकृतेः परः प्रत्यक्सर्वेंद्रियागम्यं धाम कारणार्णवो यस्य अत एव स्वयंज्योतिरिति ॥ ३ ॥ अत्र प्रकरणे तत्र द्विविधायां सैव प्रकृतिरेव । आवरणशक्तिर्हि रजःसत्त्वाभ्यामनभिभूतं तम एवेत्युक्तं तत्त्वानुसंधाने सा च नास्ति न प्रकाशत इति व्यवहारहेतुरसत्त्वापादनमभानापादनं च । तदुक्तं विद्यारण्यैः—"न भाति नास्ति कूटस्थ इत्यापादनमावृतिः" इति सैव मलिनसत्त्वप्रधाना सत्याविद्येत्युच्यते मलिनसत्त्वं च रजस्तमोभिभूतं सत्त्वं सैव प्रकृतिरेव विक्षेपशक्तिश्च तमःसत्त्वाभ्यामनभिभूतं रज एव "रजसो लोभ एव च" इत्यादिस्मृतेर्लोभादीनां विक्षेपकत्वं प्रसिद्धमेव सा चाकाशादिप्रपञ्चहेतुः तदुक्तं "विक्षेपशक्तिर्लिंगादिब्रह्मांडांतं जगत्सृजेत्" इति । पारमेश्वरी परमेश्वरशक्तिः । एवं च मायोपहितं चैतन्यमीश्वरो जगत्कारणमंतर्यामीत्युच्यते स एव तत्पदवाच्यार्थः । अविद्योपहितं चैतन्यं जीवः प्राज्ञ इति चोच्यते तदुक्तं "तमोरजःसत्त्वगुणा प्रकृतिर्द्विविधा च सा । सत्त्वशुद्ध्यविशुद्धिभ्यां माया विद्या च ते मते ॥ मायां बिम्बो वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः । अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा ॥" इत्यलम् । प्रकृतमनुसरामः—तत्र द्वयमध्ये प्रकृतिविवेकेन प्रकृतिर्जडाभिन्नाऽहं पुरुषश्चेतनो भिन्नोस्मीति विवेकाभावेन "देवात्मशक्तिं स्वगुणैर्निगूढाम्" इति श्रुतेर्यदृच्छया भगवत इच्छया लीलया हेतुनोपगतां प्राप्तामभ्यपद्यत स्वरूपत्वेनाभ्यजानादित्यर्थः । संदर्भस्तु—एष परमात्मा यदृच्छयैव स्वैरितयैव स्वशक्तित्वादुपगतां कर्मबद्धजगत्सिसृक्षासमय एव लीलयाऽभ्यपद्यत ऐक्षतेत्यर्थः । "स ऐक्षत" इत्यादिश्रुतेः ॥ ४ ॥ तस्याः प्रकृतेः सद्यः प्रकृतिसंसर्गावसर एव मुमुहे स्वरूपं विसस्मार । सदैवानाद्यविद्यया युक्तोपि जीवः सुषुप्तौ यथा स्वरूपं किञ्चिदुपलभते तथैव सृष्टेः

एवं पराभिध्यानेन कर्तृत्वं प्रकृतेः पुमान् ॥ कर्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ॥ ६ ॥ तदस्य संसृतिर्बंधः पारतंत्र्यं च तत्कृतम् ॥ भवत्यकर्तुरीशस्य साक्षिणो निर्वृतात्मनः ॥ ७ ॥ कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः ॥ भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम् ॥ ८ ॥



गूहयत्यावृणोतीति ज्ञानगूहा तया । तथाच श्रुतिः "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयंतीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगाम जोऽन्यः" इति मुमुहे आत्मानं विस्मृतवान् ॥ ५ ॥ पराभिध्यानं प्रकृत्यध्यासस्तेन प्रकृतेर्गुणैः कर्मसु क्रियमाणेषु कर्तृत्वमात्मनि मन्यते ॥ ६ ॥ तदिति कर्तृत्वमननमेव अस्य पुरुषस्य साक्षिमात्रत्वादकर्तुरेव सतः कर्मभिर्बंधः ईशस्यापरतंत्रस्यैव कर्मबंधकृतं भोगे पारतंत्र्यं निर्वृतात्मनः सुखात्मकस्यैव संसृतिर्जन्ममृत्युप्रवाहः प्रकृत्यविवेककृत मेतत्सर्वं भवतीत्यर्थः ॥ ७ ॥ ननु चैतन्यसामानाधिकरण्येनैव कर्तृत्वादिप्रतीतेः स्वस्यैव तदंगी क्रियतां नेत्याह । कार्यं शरीरं कारणमिंद्रियं कर्ता देवतावर्गः तद्भावापत्तौ पुरुषस्य प्रकृतिं कारणं विदुः । कूटस्थस्य स्वतो विकाराभावात्प्रकृतिपरिणामभूतदेहाद्यहंकारकृतमेव कर्तृत्वादिकमित्यर्थः । भोक्तृत्वे तु पुरुषं कारणं विदुरित्यस्यायं भावः । यद्यप्यहंकारगतमेव कर्तृत्वादिकं भोक्तृत्वं च तथाऽपि विकारस्य जडावसानत्वादुपाधिप्राधान्यं भोगस्य चिदवसानत्वादुपहितप्राधान्यमिति ॥ ८ ॥

पूर्वं प्रलयेपि स्वरूपमुपलभमान एवासीत् सृष्ट्यारंभे तु तद्विसस्मारेत्यर्थः । गुणैः सत्त्वादिभिः । श्रुत्यर्थः—अजामनाद्यां वृत्त्यविवक्षयैकाम् । लोहितशुक्लकृष्णां रजःसत्त्वतमोरूपाम् । सरूपां समानरूपाम् । एकोऽजो जीवः 'जुषमाण एनां सेवमानोऽनुशेते स्त्रीयां मन्यतेऽन्योज ईशः इति श्रुतिपदार्थः । विशेषतोऽस्या व्याख्यानं वेदस्तुतिटीकायां करिष्यामः ॥ ५ ॥ परायाः प्रकृतेरभिध्यानं स्वरूपत्वेन मननम् । एवं "नृत्यतो गायतः पश्यन्यथैवानुकरोति ताम्" इति रीत्या सा च प्रकृतिर्देह एव कार्यकारणयोरभेदोपचारात् देह एवाहमिति मननेन कर्मसु रूपादिग्रहणेषु एतदर्थः श्रीगीतास्वप्युक्तः "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहंक्रियाविमूढात्मा कर्त्ताहमिति मन्यत" इति ॥ ६ ॥ इत्यर्थ इति । प्रकृत्याविवेककृत एव संसारः "सत्त्वपुरुषान्यताख्यातिर्मोक्षः" इति पतंजलिना सूत्रितत्वात्तद्विवेके सति संसारो न भवतीति भावः ॥ ७ ॥ अत्र न हि जडेषु प्रकृतिगुणेषु कर्तृत्वादि संभवतीत्याक्षिपति नन्विति । चैतन्यसमानाधिकरण्येनाहं कर्त्तेत्येवंरूपेण तस्यैव चैतन्यस्यैव तत्कर्तृत्वादि । तत्तद्भावापत्तौ देहेंद्रियदेवताभावप्राप्तौ पुरुषस्य जीवस्य देहोहमित्यादिमनने । इत्यर्थ इति । संसर्गवशात्सत्यसती भवतीति न्यायेनेति भावः । अत्राशयमाह—अयं भाव इति । विकाराणामंततो जडायां प्रकृतावेव समावेशात्तस्या एव प्राधान्यं भोगस्य संवेदनेन चिदवसानत्वमेवाहं सुखीत्यादिप्रतीतेरुपहितस्य चित एव प्राधान्यमित्यर्थः । विश्वनाथस्तु श्लोकमेनमित्थं व्याचष्ट तथा हि-जीवस्य कर्मभिरेव बंधस्तेषां कर्मणां च साधने फलभोगे च प्रकृतिपुरुषावेव कारणे इत्याह कार्येति । भूतेंद्रियदेवताभिरेव कर्मसिद्धेस्तेषां भूतेंद्रियदेवतानां कार्यकारणकर्तृत्वे प्रकृतिमेव कारणं विदुः प्रकृत्यैव तेषां तद्भावस्य सृष्टत्वाज्जीवस्य कर्मकरणं मायाधीनमित्यर्थः । कर्मफलदाता च परमेश्वर एवेति जीवस्य कर्मफल

देवहूतिरुवाच ॥ प्रकृतेः पुरुषस्यापि लक्षणं पुरुषोत्तम ॥ ब्रूहि कारणयोरस्य सदसच्च यदात्मकम् ॥ ९ ॥ श्रीभगवानुवाच ॥ यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् ॥ प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् ॥ १० ॥ पंचभिःपंचभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ॥ एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ॥ ११ ॥ महाभूतानि पंचैव भूरापोऽग्निर्मरुन्नभः ॥ तन्मात्राणि च तावंति गंधादीनि मतानि मे ॥ १२ ॥ इंद्रियाणि दश श्रोत्रं त्वग्दृग्रसननासिकाः ॥ वाक्करौ चरणौ मेढ्रं पायुर्दशम उच्यते ॥ १३ ॥ मनो बुद्धिरहंकारश्चित्तमित्यंतरात्मकम् ॥ चतुर्धा लक्ष्यते भेदो वृत्त्या लक्षणरूपया ॥ १४ ॥ एतावानेव संख्यातो ब्रह्मणः सगुणस्य ह ॥ सन्निवेशो मया प्रोक्तो यः कालः पंचविंशकः ॥ १५ ॥

तदेवं संसारिणं पुरुषं तद्धेतुं प्रकृतिं च ज्ञात्वेदानीं जगत्कारणमीश्वरं तत्प्रकृतिं च पृच्छति । प्रकृतेरिति । अस्य विश्वस्य सदसच्च स्थूलं सूक्ष्मं च कार्यं यदात्मकं तयोः प्रकृतिपुरुषयोः॥९॥तत्र प्रकृतिं लक्षयति । यत्प्रधानं तदेव प्रकृतिं प्राहुः । किं तत् प्रधानं स्वतोऽविशेषम् । विशेषवद्विशेषाणामाश्रयः तर्हि किं ब्रह्म न त्रिगुणम् । किं महत्तत्त्वादिना अव्यक्तमकार्यम् । किं कालादि न सदसदात्मकं कार्यकारणरूपम् । किं जीवः प्रकृतिः न नित्यम् ॥ १० ॥ अन्येषां तत्त्वानां लक्षणं वक्तुं तानि गणयति । पंचभिरित्यादि । संख्याभेदेनैतच्चतुर्विंशतिकम् एतानि चतुर्विंशतिर्यस्मिन् गणे तं गणं प्राधानिकं प्रधानकार्यात्मकं ब्रह्म विदुः ॥ ११ ॥ एतद्विवृणोति । महाभूतानीति त्रिभिः । तावंति पंचैव ॥ १२ ॥ १३ ॥ अंतरात्मकमंतःकरणम् । लक्षणरूपया व्यवच्छेदिकया ॥ १४ ॥ यावान्मया प्रोक्त एतावानेव संख्यातो

भोक्तृत्वमीश्वराधीनमेवेत्याह भोक्तृत्वे जीवस्य कर्मफलानां भोगे पुरुषं कारणं विदुरित्यन्वयः ॥ ८ ॥ तद्धेतुं संसारहेतुं पुरुषोत्तमेति कथनसामर्थ्यमाह ॥ ९ ॥ तत्र तयोः प्रकृतिपुरुषयोर्मध्ये अविशेषं प्रकृत्यंतरासत्त्वात् । विशेषाणां महदादीनाम् । अत्रानेककिंशब्दैराशंक्य प्रकृतिस्वरूपं दर्शितम् । संदर्भस्तु-यत्खलु त्रिगुणं सत्त्वादिगुणत्रयसमाहारस्तदेवाव्यक्तं प्रधानं प्रकृतिं च प्राहुः । तत्राव्यक्तसंज्ञत्वे हेतुः । अविशेषं गुणत्रयसाम्यरूपत्वादनभिव्यक्तविशेषम् । अत एवाव्यक्तसंज्ञं चेति । प्रधानसंज्ञत्वे हेतुः । विशेषवत् स्वांशकार्यरूपाणां महदादिविशेषाणामाश्रयरूपतया तेभ्यः श्रेष्ठम् । प्रकृति संज्ञत्वे हेतुः— सदसदात्मकं सदसत्सु कार्यकारणरूपेषु महदादिषु कारणत्वादनुगतम् आत्मा स्वरूपं यस्य तत् तथापि नित्यं प्रलये कारणमात्रात्मनावस्थितसर्वांशत्वेन सृष्टिस्थित्योश्चापञ्चीकृतांशत्वे नाविष्कृतं स्वरूपं यस्य तादृशमिति ब्रह्मत्वं महदादिरूपत्वं च व्यावृत्तम् । ब्रह्मणो निर्गुणत्वान्महदादीनां चाव्यक्तापेक्षया कार्यरूपत्वात् । यद्वा । सर्वतोप्याश्चर्यरूपत्वेन निर्वक्तुमशक्यत्वाद्यत्तच्छब्देनोक्तमत एव सर्वश्रेष्ठत्वात्प्रधानशब्देन ख्यातं वस्तु प्रकृतिं प्राहुः । श्रौतास्स्मार्त्ताश्च आश्चर्यरूपत्वमेव दर्शयंति त्रिगुणमप्यव्यक्तं सगुणं खलु व्यक्तीभवत्येव तथा सत्कार्यमसत्कारणं तत्तदात्मकमपि नित्यं नैवं गृहादि तथा सत्त्वादिभिर्विशेषवदपि गुणसाम्यरूपत्वेनाविशेषं नैवमन्यदिति तदेवं सिद्धे पूर्ववाक्यार्थेऽतिव्याप्तयस्तु यथायोगमेकत्वादिधर्मैः परिहर्त्तव्याः ॥ १० ॥ अन्येषां प्रकृतिपुरुषेतराणाम् । तानि सत्त्वानि । ब्रह्म ब्रह्मत्वेनोपास्यम् । विदुर्ज्ञानिनः ॥ ११ ॥ एतत्प्राधानिकं ब्रह्म । एवकारेण सूक्ष्मभूतव्यावृत्तिः । मरुद्वायुः । नभः खम् । मे मम । वर्त्तमानाधारार्थक्तस्य योगे षष्ठी ॥ १२ ॥ दृक् चक्षुः । रसनं जिह्वा । मेढ्रमुपस्थम् ॥ ॥ १३ ॥ व्यवच्छेदिकया "बुद्धिरध्यवसानाय संशयं कुरुते मनः । अभिमानो ह्यहंकारश्चित्तं स्मरणकारणम्" इत्येवं व्यवच्छेदकर्त्र्या वृत्त्या ॥ १४ ॥ तत्त्वसंख्यामुपसंहरति—एतावानिति । संख्यातो गणितः । तत्त्वज्ञैः

प्रभावं पौरुषं प्राहुः कालमेके यतो भयम् ॥ अहंकारविमूढस्य कर्तुः प्रकृतिमीयुषः ॥ १६ ॥ प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानवि ॥ चेष्टा यतः स भगवान्काल इत्युपलक्षितः ॥ १७ ॥ अंतः पुरुषरूपेण कालरूपेण यो बहिः ॥ समन्वेत्येष सत्त्वानां भगवानात्ममायया ॥ १८ ॥ दैवात्क्षुभितधर्मिण्यां स्वस्यां योनौ परः पुमान् ॥ आधत्त वीर्यं साऽसूत महत्तत्त्वं हिरण्मयम् ॥ १९ ॥ विश्वमात्मगतं व्यंजन्कूटस्थो जगदंकुरः॥ स्वतेजसाऽपिबत्तीव्रमात्मप्रस्वापनं तमः ॥ २० ॥ यत्तत्सत्त्वगुणं स्वच्छं शांतं भगवतः पदम् ॥ यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकम्॥२१॥

गणितस्तत्त्वज्ञैः । काले तु मतद्वयमाह । यः कालः स पंचविंशकः अल्पार्थे कप्रत्ययः । प्रकृतेरेवावस्थाविशेष इत्यर्थः ॥ १५ ॥ एके तु पौरुषं पुरुषस्येश्वरस्य प्रभावं विक्रमं कालमाहुः । तमेव कालं द्वेधा लक्षयति । यतो भयं भवति । कस्य प्रकृतिमीयुषः प्राप्तस्य अत एव देहेऽहंकारेण विमूढस्य कर्तुर्जीवस्य अनेन संहारकत्वेन लक्षितः ॥ १६ ॥ सृष्टिहेतुत्वेन लक्षयति । प्रकृतेरिति ॥ १७ ॥ कोऽसौ भगवांस्तमाह । अंतरिति अंतः सर्वप्राणिनां यः पुरुषरूपेण नियंतृत्वेन समन्वेति सम्यक् तद्विकाररहित एवानुस्यूतो वर्तते बहिश्च कालरूपेण । एष भगवान् । यद्वा यः पुरुष इति प्रसिद्धः कालः स पंचविंशः एके तु पुरुषस्य प्रभावं कालमाहुः । प्रभावस्यैव लक्षणं यत इति पुरुषस्यैव कालत्वे हेतुः प्रकृतेरिति । उभयथा विवक्षायां हेतुः अंतरिति शेषं समानम् । तदेवं प्रकृतेश्चतुर्विंशतिभेदाः जीवेश्वरयोश्चैक्यविवक्षातः पंचविंशतिस्तत्त्वानि भवंति । तयोर्भेदविवक्षया च षड्विंशतिर्भवंति ॥ १८ ॥ इदानीं तत्त्वानामुत्पत्तिपूर्वकं लक्षणान्याह । दैवादित्यादिना । एतान्यसंहत्येत्यतः प्राक्तनेन ग्रंथेन । तत्र चित्तस्योत्पत्तिपूर्वकं लक्षणमाह । चतुर्भिः दैवाज्जीवादृष्टात्क्षुभिता धर्मा गुणा यस्याः योनावभिव्यक्तिस्थाने प्रकृतौ वीर्यं चिच्छक्तिम् । सा प्रकृतिर्महत्तत्त्वमसूत । महतः स्वरूपमाह । हिरण्मयं प्रकाशबहुलम् ॥ १९ ॥ विश्वमहंकारादिप्रपंचम् । आत्मगतं स्वस्मिन्सूक्ष्मरूपेण स्थितं व्यंजन्प्रकटयन्महांस्तीव्रं प्रलयकालीनं तमोऽपिबत् । कूटस्थो लयविक्षेपशून्यः कथंभूतं तमः आत्मानं प्रस्वापयति प्रच्छादयतीति तथा यत्पूर्वं प्रलयसमये महांतं प्रकृतौ विलापयामासेत्यर्थः ॥ २० ॥ प्रसंगाच्चतुर्व्यूहोपासनामाह । यत्तदिति । सर्वागमप्रसिद्धत्वमाह । स्वच्छं विशदम् । शांतं रागादिरहितम् । भगवतः

सांख्याचार्यैः । अवस्थाविशेषो गुणव्यतिकररूपत्वात् ॥ १५ ॥ तमेवोक्तमेव । अत एव प्रकृतिं प्राप्तत्वादेव । अनेन वाक्येन ॥ १६ ॥ गुणसाम्यस्य गुणानां साम्यावस्थारूपस्यात एव निर्विशेषस्य गुणानामपार्थक्यविवक्षया विशेषरहितस्य प्रकृतेः प्रधानस्य यतश्चेष्टा साम्यत्यागः ॥ १७ ॥ यद्वेति । पञ्चदशश्लोकांतर्गतस्यैव व्याख्या यच्छब्देन पुरुषग्रहणं तु 'अंतः पुरुषरूपेण' इत्यग्रिमोक्त्यैव संगच्छते । वस्तुतस्तु चतुर्विंशतिको गणः प्राधानिकः कालो जीवश्चेति द्वौ प्रकृतिपुरुषौ च द्वावेवं मिलित्वाऽष्टाविंशतितत्त्वानि संतीत्यमेव श्रीकृष्णोप्युद्धवायैकादशे वक्ष्यतीति ॥१८॥ ॥१९॥ इत्यर्थ इति । यत्तमो महत्त्वस्य प्रकृतौ लयं कारयामास तत्तमोपिबदिति भावः । पुंस्त्वं त्वत्र तत्त्वपदत्यागेन महानित्येतस्यैव विशेष्यीकृतत्वादिति ॥ २० ॥ प्रसंगादंतःकरणोत्पत्तिप्रसंगात् । महदात्मकं महत्तत्त्वमेव देहे चित्तरूपेण तिष्ठतीत्यर्थः । उपलब्धिस्थानमुपासनापीठम् । अत

स्वच्छत्वमविकारित्वं शांतत्वमिति चेतसः ॥ वृत्तिभिर्लक्षणं प्रोक्तं यथाऽपां प्रकृतिः परा ॥ २२ ॥ महत्तत्त्वाद्विकुर्वाणाद्भगवद्वीर्यसंभवात् ॥ क्रियाशक्तिरहंकारस्त्रिविधः समपद्यत ॥ २३ ॥ वैकारिकस्तैजसश्च तामसश्च यतो भवः ॥ मनसश्चेंद्रियाणां च भूतानां महतामपि ॥ २४ ॥ सहस्रशिरसं साक्षाद्यमनंतं प्रचक्षते ॥ संकर्षणाख्यं पुरुषं भूतेंद्रियमनोमयम् ॥ २५ ॥ कर्तृत्वं करणत्वं च कार्यत्वं चेति लक्षणम् ॥ शांतघोरवि मूढत्वमिति वा स्यादहंकृतेः ॥ २६ ॥ वैकारिकाद्विकुर्वाणान्मनस्तत्त्वमजायत ॥ यत्संकल्पविकल्पाभ्यां वर्तते कामसंभवः ॥ २७ ॥ यद्विदुर्ह्य निरुद्धाख्यं हृषीकाणामधीश्वरम् ॥ शारदेंदीवरश्यामं संराध्यं योगिभिः शनैः ॥ २८ ॥

पदमुपलब्धिस्थानम् । अत एव वासुदेवाख्यं यदाहुः । अयमर्थः । अधिभूतरूपेण तस्यैव महानिति संज्ञा अध्यात्मरूपेण चित्तमिति उपास्यरूपेण वासुदेव इति अधिष्ठाता तु तस्य क्षेत्रज्ञः एवमहंकारे संकर्षण उपास्यः रुद्रोऽधिष्ठाता मनस्यनिरुद्ध उपास्यः चंद्रोऽधिष्ठाता बुद्धौ प्रद्युम्न उपास्यः ब्रह्माऽधिष्ठातेति ज्ञातव्यम् ॥ २१ ॥ स्वच्छत्वं भगवद्बिंबग्राहित्वम् । अविकारित्वं लयविक्षेपराहित्यम् । अपां प्रकृतिः फेनतरंगादिरहिताऽवस्था परा भूसंसर्गात्प्राक्तनी सा यथा मधुरा स्वच्छा शांता च तद्वदित्यर्थः । ॥ २२ ॥ अहंकारस्योत्पत्तिपूर्वकं लक्षणमाह । महत्तत्वादिति चतुर्भिः क्रियासु शक्तिर्यस्य स क्रियाशक्तिः ॥ २३ ॥ त्रैविध्यमाह । वैकारिक इति तस्य कार्यमाह । यतो यस्मान्मनआदीनां भव उत्पत्तिः ॥ २४ ॥ तस्मिन्नुपास्यव्यूहमाह । सहस्रशिरसमिति ॥ २५ ॥ लक्षणमाह । कर्तृत्वमिति । कर्तृत्वं देवतादिरूपेण करणत्वमिंद्रियरूपेण कार्यत्वं भूतरूपेण शांतत्वादिकं तु तत्तत्कारणगुणत्रयरूपेण ॥ २६ ॥ मनस उत्पत्तिपूर्वकं लक्षणमाह । वैकारिकादिति द्वाभ्याम् । संकल्पश्चिंतनम् । विकल्पो विशेषचिंतनम् । यस्य मनसः संकल्पविकल्पाभ्यां कामसंभवो वर्तत इति कामरूपा वृत्तिर्लक्षणत्वेनोक्ता न तु प्रद्युम्नव्यूहोत्पत्तिः तस्य संकल्पादिकार्यत्वाभावात् उपास्यव्यूहस्य चानिरुद्धस्योक्तेः ॥ २७ ॥ शारदं शरत्कालीनमिंदीवरं नीलोत्पलं तदिव श्यामम् । यच्छनैः संराध्यं वशीकर्तुं योग्यं दुर्ग्रहत्वात् ॥ २८ ॥

एवाधिष्टानाधिष्ठेययोरुपचारेणाभेदविवक्षात एव । यद्यम् । उक्तमर्थं स्फुटयति–अयमर्थ इति ॥ २१ ॥ इत्यर्थ इति । यथा भूसंसर्गादिना जलानामस्वच्छत्वादिकं भवति तथा चित्तमपि दुर्विषयासक्तमस्वच्छादि भवतीति भावः ॥ २२ ॥ क्रियाशक्तिरित्युपलक्षणं ज्ञानशक्तिद्रव्यशक्त्योः ॥ २३ ॥ यस्माद्वैकारिकादिभेदत्रयवतोहंकारात्क्रमेण मनस इत्युपलक्षणं देवानामपि । अपिना सूक्ष्मभूतोत्पत्तिपूर्विकोत्पत्तिरुक्ता ॥ २४ ॥ तस्मिन्नहंकारे । यमिति यत्स्थमित्यर्थः । मञ्चाः क्रोशंतीतिवत् । संदर्भस्तु–उपास्यतदधिष्टानयोस्तादात्म्यापत्तिं दृष्ट्वा तत्तुल्यं वदंतीत्यर्थमाह-"साक्षात्प्रत्यक्षतुल्ययोः" इत्यमरः ॥ २५ ॥ तत्कारणं शांतत्वादिकारणं यत्सत्त्वादि गुणत्रयं तेन रूपेण अहंकृतेरहंकारणस्य ॥ २६ ॥ संकल्पः सामान्यतो विषयजिघृक्षा सामान्यविषयस्यैव विविधसंकल्पनेन विशेषतो जिघृक्षा विकल्पश्च ताभ्यां कामस्य मनोरथस्य संभवो भवतीति ॥ २७ ॥ यदिति

तैजसात्तु विकुर्वाणाद् बुद्धितत्त्वमभूत्सति ॥ द्रव्यस्फुरणविज्ञानमिंद्रियाणामनुग्रहः ॥ २९ ॥
संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च ॥ स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक् ॥ ३० ॥

बुद्धेरुत्पत्तिपूर्वकं लक्षणमाह । तैजसादिति द्वाभ्याम् । हे सति द्रव्यस्फुरणरूपं विज्ञानमिति चित्तव्यावृत्त्यर्थमुक्तम् । इंद्रियाणामनुग्रह इति सविकल्पज्ञाने हृषीकाणामधीश्वरमिति यदुक्तं तत्तु निर्विकल्पज्ञाने ॥ २९ ॥ द्रव्यस्फुरणस्यैव प्रपंचः संशयादिः विपर्यासो मिथ्याज्ञानम् । निश्चयः प्रमाणज्ञानम् । स्वापो निद्रा "प्रमाणविपर्ययविक

पूर्ववत् ॥ २८ ॥ विज्ञानं विचारः । चेतनारूपविज्ञानं चित्तधर्मो ज्ञेयः । ज्ञानं च सविकल्पकनिर्विकल्पकभेदाद्द्विधा तथाहि–अयं घटोयं दंडीत्यादिशब्दाभिलापयोग्यं विशेषणविशेष्यवैशिष्ट्यावगाहि वा सविकल्पकं तत्कारणत्वेन कल्प्यमतींद्रियं विशिष्टशब्दाभिलापायोग्यं विशेषणविशेष्यवैशिष्ट्यानवगाह्यंत्यम् । तद्यथा दंडी पुरुष इति ज्ञाने दंडो विशेषणं पुरुषो विशेष्यः संयोगः संबंध इति तदवगाहि तज्ज्ञानं सविकल्पकं तद्दंडज्ञानमंतरेण नोत्पद्यते तद्दंडज्ञानजन्यं यथा सुप्तोत्थितस्य जायमाने घट इति ज्ञाने घटत्वं विशेषणं घटो विशेष्यः समवायः संबंध इति तदवगाहितत्सविकल्पकं घटत्वज्ञानजन्यं वाच्यं तत्कारणीभूतं ज्ञानं चानुभवानास्यदत्वादतींद्रियं निर्विकल्पकमभिधीयत इति तदसत्त्वे सुप्तोत्थितस्यायं घट इति ज्ञानं न स्याद्विशेषणीभूतघटत्वाज्ञानात् । विशेषणज्ञानमंतरा विशिष्टज्ञानानुदयेन तस्य तद्धेतुत्वादित्यलं प्रसक्तानुप्रसक्त्येति । प्रकृतमनुसरामः–बुद्ध्या विनेंद्रियाणि न प्रवर्त्तितुं शक्नुवंतीत्यर्थः । यद्यपि चित्ताहंकारमनांस्यपींद्रियानुग्राहकाणि तथापि बुद्ध्या तदनुग्रहविशेषो ज्ञेयः तथा हि-शब्दं शृणोमीत्यत्र प्रथमं चित्तेन चेतनामात्रं निश्चीयते बुद्ध्या शब्दोयमिति स्फूर्त्तिः मनसा शब्दे जिघृक्षाऽहंकारेण तत्र स्वाभिमानार्पणमिति भेदः ॥ २९ ॥ संशयस्तु-एकस्मिन्धर्मिणि विरुद्धविषयकनानार्थावमर्शः यथा स्थाणौ स्थाणुर्वा पुरुषो वायमिति स च त्रिधा-साधारणधर्मजोऽसाधारणधर्मजो विप्रतिपत्तिजश्च स्थाणुपुरुषसाधारणोच्चत्वदर्शनज आद्यः उक्तः । नित्यानित्यव्यावृत्तशब्दत्वादिदर्शनजः शब्दो नित्योऽनित्यो वेति द्वितीयः । वादिविरुद्धार्थकवाक्याज्जायमानस्तमो द्रव्यं न वेति तृतीयः । विपर्यासो विपर्ययः स च प्रतियोगिव्यधिकरणतदभाववति तत्प्रकारको निर्णयः यथा शुक्ताविदं रजतमिति रजतत्वाभाववत्यां शुक्तौ तन्निर्णयोऽयं भवत्येव । अयं वृक्षः कपिसंयोगीति ज्ञाने मूलावच्छेदेन कपिसंयोगाभाववति वृक्षे कपिसंयोगप्रकारकनिश्चयस्य सत्त्वादयमपि विपर्ययः स्यात्तद्वारणाय प्रतियोग्यधिकरणेति । संयोगाभावो हि प्रतियोगिसमानाधिकरणो न प्रतियोगिव्यधिकरणः मूलावच्छेदेन कपिसंयोगाभावस्य सत्त्वेपि शाखावच्छेदेन कपिसंयोगस्य सत्त्वात् । यद्यपि संशयविपर्ययस्वप्नानध्यवसायभेदेन मिथ्याज्ञानस्य वैशेषिकैश्चतुर्विधस्योक्तत्वादत्रापि तथात्वमेवोचितं तथापि स्वप्नानध्यवसायावत्र विपर्ययेंतर्भावयित्वा द्वैविध्यमेवोक्तं श्रीबादरायणेन । प्रमाणज्ञानं यथार्थज्ञानं तद्वति तत्प्रकारकानुभवरूपमितियावत् । तच्च घटत्ववति घटे घटोयमित्येवंरूपमिति । अत्र बुद्धेरेव संशयादयो वृत्तय इत्यत्र पातंजलसूत्रं प्रमाणयति-प्रमाणेति । अस्यार्थं सूत्रैरेवाह-अविसंवादिज्ञानं प्रमाणं तच्च प्रत्यक्षानुमानादि । तथा हि "तत्र प्रत्यक्षाऽनुमानागमाः प्रमाणानि" ( ७ ) ॥ "विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्" ( ८ ) अतथाभूतेऽर्थे तथोत्पद्यमानं ज्ञानं विपर्ययः । यथा शुक्तिकादौ रजतादिज्ञानं तस्यार्थस्य यत्पारमार्थिकं रूपं तन्न भासयतीत्यतद्रूपप्रतिष्ठम् ( ८ ) ॥ "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" ( ९ ) ॥ वस्तुनस्तत्त्वमनपेक्षमाणो योध्यवसायः स विकल्पः यथा पुरुषस्य चैतन्यंरूपमिति शब्दजनितज्ञाने बुद्ध्या षष्ठ्या योऽध्यवसितो भेदस्स च नास्त्येव चैतन्यस्यैव पुरुषरूपत्वादिति ( ९ ) ॥ "अभावप्रत्ययावलंबना वृत्तिर्निद्रा" ( १० ) या सततमुद्रिक्तत्वात्तमसः समस्तविषयपरित्यागेन प्रवर्त्तते वृत्तिः सा निद्रा ( १० ) ॥ अनुभतविषयासंप्रमोषः स्मृतिः ( ११ ) । प्रमाणेनानुभूतस्य विषयस्य योयमसंप्रमोषः संस्कारद्वारेण बुद्धावुपारोहः सा स्मृतिरिति ( ११ ) ॥ संशयादयो बुद्धेर्वृत्तयो लक्षणरूपा एव

तैजसानींद्रियाण्येव क्रियाज्ञानविभागशः ॥ प्राणस्य हि क्रियाशक्तिर्बुद्धेर्विज्ञानशक्तिता ॥ ३१ ॥ तामसाच्च विकुर्वाणाद्भगवद्वीर्यचोदितात् ॥
शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं च शब्दगम् ॥ ३२ ॥ अर्थाश्रयत्वं शब्दस्य द्रष्टुर्लिंगत्वमेव च ॥ तन्मात्रत्वं च नभसो लक्षणं कवयो विदुः ॥३३॥
भूतानां छिद्रदातृत्वं बहिरंतरमेव च ॥ प्राणेंद्रियात्मधिष्ण्यत्वं नभसो वृत्तिलक्षणम् ॥ ३४ ॥ नभसः शब्दतन्मात्रात्कालगत्या विकुर्वतः ॥
स्पर्शोऽभवत्ततो वायुस्त्वक्स्पर्शस्य च संग्रहः ॥ ३५ ॥ मृदुत्वं कठिनत्वं च शैत्यमुष्णत्वमेव च ॥ एतत्स्पर्शस्य स्पर्शत्वं तन्मात्रत्वं नभस्वतः ॥
॥ ३६ ॥ चालनं व्यूहनं प्राप्तिर्नेतृत्वं द्रव्यशब्दयोः ॥ सर्वेंद्रियाणामात्मत्वं वायोः कर्माभिलक्षणम् ॥ ३७ ॥

ल्पनिद्रास्मृतयः" इति पातंजलोक्तेः ॥ ३० ॥ इंद्रियाणामुत्पत्तिमाह । तैजसानि तैजसाहंकाराज्जातानि ज्ञानेंद्रियाणां वैकारिकत्वशंकानिवृत्त्यर्थमेवकारः । द्विविधान्य
पींद्रियाणि तैजसान्येवेत्यन्वयः । तत्र हेतुः प्राणस्येति । हि यस्मात्प्राणस्य क्रियाशक्तिर्बुद्धेश्च विज्ञानशक्तिताऽतः प्राणस्य तैजसत्वात्तत्क्रियाशक्तिमतामिंद्रियाणां तैजसत्वं
तथा बुद्धेस्तैजसत्वात्तदीयज्ञानशक्तिमतामपींद्रियाणां तैजसत्वमित्यर्थः ॥ ३१ ॥ तन्मात्रोत्पत्तिपूर्वकमाकाशादिमहाभूतोत्पत्तिं तल्लक्षणं चाह । तामसादिति पंचदशभिः ।
श्रोत्रं तु शब्दगमित्यादिभिर्विषयोत्पत्त्यनंतरं तत्संबंधमात्रं कथ्यते न तूत्पत्तिः प्रागेवोत्पन्नत्वात् शब्दं गच्छति प्राप्नोतीति शब्दगम् ॥ ३२ ॥ शब्दस्य लक्षणमाह । अर्था
श्रयत्वमर्थवाचकत्वम् । द्रष्टुर्लिंगत्वं कुड्यांतरितस्य वक्तुर्ज्ञापकत्वम् । तदुक्तम् । "लिंगं यदृष्टदृश्ययोः" इति । नभसस्तन्मात्रत्वं सूक्ष्मत्वं शब्दस्य लक्षणमित्यन्वयः ।
॥ ३३ ॥ नभसो लक्षणमाह । भूतानामिति । छिद्रदातृत्वमवकाशदातृत्वम् । बहिरंतर्व्यवहारास्पदत्वम् । आत्मा मनः प्राणादीनां धिष्ण्यत्वमाश्रयत्वं नाड्यादिच्छि
द्ररूपेण वृत्तिः कार्यमेव लक्षणं वृत्तिलक्षणम् । एवमुत्तरत्राप्येकेन श्लोकेन तन्मात्रमहाभूतयोरुत्पत्तिः द्वितीयेन तन्मात्रलक्षणम् । तृतीयेन महाभूतलक्षणमित्यनुसंधेयम् ॥
॥ ३४ ॥ का सा त्वक् स्पर्शस्य संग्रहः सम्यग्ग्रहणं यया पुंस्त्वं नियतलिंगत्वात् । यद्वा स्पर्शस्य संग्रहस्ततो भवतीति शेषः । शब्दतन्मात्रादित्यादितन्मात्रणामुत्तरोत्त
रान्वयार्थमुक्तम् ॥ ३५ ॥ स्पर्शलक्षणमाह । मृदुत्वमिति । स्पर्शत्वं स्वरूपलक्षणमित्यर्थः । नभस्वतो वायोस्तन्मात्रत्वं च ॥ ३६ ॥ चालनं वृक्षशाखादेः व्यूहनं

वृत्तितो वृत्तिभिर्लक्षणमिदामित्यर्थः । पृथगिति चित्ताद्यपेक्षया भिन्नमित्यर्थः । यद्वा । पृथक्संशयादिभिन्ना वृत्तयो लक्षणरूपा नेत्यर्थः ॥ ३० ॥ तत्र तैजसत्वे । इत्यर्थ इति । "बुद्धिः प्राणश्च तैजसौ" इति ब्रह्मोक्तेरिति
भावः ॥३१॥ भगवद्वीर्यं कालरूपस्तत्प्रभावस्तेन प्रेरितात् । शब्दः केन गृह्यते इत्यपेक्षायामाह-श्रोत्रं त्विति ॥३२॥ तदुक्तमिति । द्वितीयस्कंधे स्वरूपलक्षणं तन्मात्रत्वं नभस इति लक्षणं चेदमभेदविवक्षयैव । वस्तुतस्तु—
शब्दादयो द्विविधा आकाशादिद्रव्याणां सूक्ष्मावस्था गुणावस्थाश्च तत्राद्यास्तन्मात्ररूपा अर्थाश्रयादिरूपास्त्वन्ये इति ॥३३॥ आकाशं विना बाह्यांतरव्यवहारानुपपत्तेर्मठाद्यंतर्गते ह्याकाशेंतरोयमिति तद्बहिर्भूते तस्मिन्बाह्योयमिति
च व्यवहारो भवतीत्यर्थः । उक्तमर्थमन्यत्राप्यतिदिशति—एवमित्यादिना ॥ ३४ ॥ संग्रहशब्दे नियतं पुंस्त्वमेवेति वक्तुं न शक्यते वृत्तावन्यलिंगस्यापि संभवात् 'बुद्धिर्निश्चयसंग्रहा' इत्यादिप्रयोगदर्शनेनेति चेत्तत्राह—
यद्वेति । ततस्तया मूले तत इत्यस्य तस्मात्स्पर्शात् ॥ ३५ ॥ इत्यर्थ इति । मृदुत्वाद्येव स्पर्शस्वरूपमिति भावः ॥ ३६ ॥ संयोगो वस्तुमात्रेण उपोद्बलकत्वं संजीवकत्वं तदविनाभूतत्वं वा स्वकार्यासमर्थत्वमिति

वायाश्च स्पर्शतन्मात्राद्रूपं दैवेरितादभूत् ॥ समुत्थितं ततस्तेजश्चक्षरूपोपलंभनम् ॥ ३८ ॥ द्रव्याकृतित्वं गुणता व्यक्तिसंस्थात्वमेव च ॥ तेजस्त्वं तेजसः साध्वि रूपमात्रस्य वृत्तयः ॥ ३९ ॥ द्योतनं पचनं पानमदनं हिममर्दनम् ॥ तेजसो वृत्तयस्त्वेताः शोषणं क्षुत्तृडेव च ॥ ४० ॥ रूपमात्राद्विकुर्वाणात्तेजसो दैवचोदितात् ॥ रसमात्रमभूत्तस्मादंभो जिह्वारसग्रहः ॥ ४१ ॥ कषायो मधुरस्तिक्तः कट्वम्ल इति नैकधा ॥ भौतिकानां विकारेण रस एको विभिद्यते ॥ ४२ ॥ क्लेदनं पिंडनं तृप्तिः प्राणनाप्यायनोंदनम् ॥ तापापनोदो भूयस्त्वमंभसो वृत्तयस्त्विमाः ॥ ॥ ४३ ॥ रसमात्राद्विकुर्वाणादंभसो दैवचोदितात ॥ गंधमात्रमभूत्तस्मात्पृथ्वी घ्राणस्तु गंधगः ॥४४॥ करंभपूतिसौरभ्यशांतोदग्रादिभिः पृथक् ॥ द्रव्यावयववैषम्याद्गंध एको विभिद्यते ॥ ४५ ॥

मेलनं तृणादेः प्राप्तिः संयोगो द्रव्यस्य गंधवतो घ्राणं प्रति तथा शैत्यादिमतः स्पर्शनं प्रति शब्दस्य श्रोत्रं प्रति नेतृत्वम् । सर्वेंद्रियाणामात्मत्वमुपोद्बलकत्वम् । कर्मणा कार्येणाभिलक्षणम् । भावे ल्युट् । कर्मैवाभिलक्षणमिति विग्रहे तु करणे ॥ ३७ ॥ ३८ ॥ द्रव्याकृतित्वं द्रव्यस्याकारसमर्पकत्वम् । गुणता द्रव्योपसर्जनतया प्रतीतिः शब्दस्य तु स्वातंत्र्येणैव प्रतीतिः अप्रत्यक्षद्रव्यस्य स्पर्शादेरपि स्वातंत्र्येणैव प्रतीतिः । रूपस्य तु नैवमिति तस्यायं विशेषः उक्तः व्यक्तिसंस्थात्वं द्रव्यस्य या संस्था सन्निवेशः सैव संस्था यस्य तत्परिणामतया प्रतीतिरित्यर्थः । तेजसस्तेजस्त्वमसाधारणत्वम् ॥ ३९ ॥ द्योतनं प्रकाशनम् । पचनं तंदुलादेः क्षुत्तृडशनाया पिपासा च तद्वारेण पानमदनं च ॥ ४० ॥ जिह्वा रसनेंद्रियम् । रसो गृह्यतेऽनयेति रसग्रहः । यद्वा रसग्रहस्ततो भवतीति शेषः ॥ ४१ ॥ कषायादिषु लवणोऽपि द्रष्टव्यः । भौतिकानां संसर्गिद्रव्याणाम् । य एको मधुर एव सन्नेवमनेकधा भिद्यते स रस इत्यर्थः ॥ ४२ ॥ क्लेदनमार्द्रीकरणम् । पिंडनं मृदादेः पिंडीकरणम् । तृप्तिस्तृप्तिदातृत्वम् । प्राणनं जीवनम् । " आपोमयः प्राणः " इति स्मृतेः ॥ आप्यायनं तृड्वैक्लव्यनिवर्तनम् । उंदनं मृदूकरणम् । ओंदनमिति पाठेऽपि स एवार्थः यस्त्वं कपादावुद्धृतस्यापि पुनःपुनरुद्रवः ॥ ४३ ॥ गंधगो गंधं प्राप्नोति ॥ ४४ ॥ करंभो विश्रगंधः यथा व्यंजनादीनां हिंग्वादिसंस्कारेण पूतिर्दुर्गंधः सौरभ्यं कर्पूरादेः शांतः शतपत्रादेः उग्रो

यावत्। अभि सर्वतोभावेन लक्षणं स्वरूपकथनम् ॥ ३७ ॥ रूपस्योपलंभनं ज्ञानं येन तत्तथा ॥ ३८ ॥ द्रव्ये उपसर्जनेन प्रतीतिः उपसर्जनप्रतीतिः अमुख्यत्वेन प्रतीतिः अप्रत्यक्षद्रव्यं वाय्वादिस्तस्य स्पर्शादिरादिना शब्दग्रहः । तस्य रूपस्य । इत्यर्थ इति । द्रव्यस्य परिमाणेनैव तत्प्रमाणप्रतीतिरिति भावः । असाधारणत्वं लक्षणम् । तथा च—रूपवद्द्रव्यं तेज इति रूपेणैव भास्वरशुक्लेन तेजजोऽसाधारणत्वं गम्यते इति संदर्भः । रूपं मात्रा तन्मात्रा यस्येति रूपमात्रं तस्य वृत्तयः स्वभावलक्षणानि ॥ ३९ ॥ हिममर्दनं शीतनिवारकत्वम् । शोषणं शुष्ककरणम् ॥ ४० ॥ ४१ ॥ रसानां षड्विधत्वं लवणं विना न पूर्यतेऽतस्सोप्यत्र ग्राह्य इत्याह—कट्वम्लादिष्विति "तुवरस्तु कषायोऽस्त्री मधुरो लवणः कटुः । तिक्तोऽम्लश्च रसाः पुंसि तद्वत्सु षडमी त्रिषु" इत्यमरः । इत्यर्थ इति । जलस्य केवलं मधुररसवत्त्वेपि संसर्गिद्रव्यस्वभावादन्येपि तत्र रसाः संभवंतीति भावः ॥४२॥ जलस्य जीवनत्वे श्रुतिमाह-आपोमयः जलविकारः । यद्वा। चंद्रादिदर्शनेन समुद्रादाविव भूयस्त्वम् ॥४३॥४४॥ आदिनाऽवलेहादिग्रहः । पुनरादिना कस्तूर्या

भावनं ब्रह्मणः स्थानं धारणं सद्विशेषणम् ॥ सर्वसत्त्वगुणोद्भेदः पृथिवीवृत्तिलक्षणम् ॥ ४६ ॥ नभोगुणविशेषोऽर्थो यस्य तच्छ्रोत्रमुच्यते ॥
वायोर्गुणविशेषोऽर्थो यस्य तत्स्पर्शनं विदुः ॥ ४७ ॥ तेजोगुणविशेषोऽर्थो यस्य तच्चक्षुरुच्यते ॥ अंभोगुणविशेषोऽर्थो यस्य तद्रसनं विदुः ॥
भूमेर्गुणविशेषोऽर्थो यस्य स घ्राण उच्यते ॥ ४८ ॥ परस्य दृश्यते धर्मो ह्यपरस्मिन्समन्वयात् ॥ अतो विशेषो भावानां भूमावेवोपलक्ष्यते ॥
॥ ४९ ॥ एतान्यसंहत्य यदा महदादीनि सप्त वै ॥ कालकर्मगुणोपेतो जगदादिरुपाविशत् ॥ ५० ॥

लशुनादेः अम्लस्तिंतिण्यादेः संसर्गिणां द्रव्यावयवानां वैषम्याच्च एवं विभिद्यते स गंध इत्यर्थः ॥ ४५ ॥ ब्रह्मणो भावनं प्रतिमादिरूपेण साकारतापादनम् । स्थानं जला दिविलक्षणाऽऽश्रयांतरनैरपेक्ष्येण स्थितिः धारणं जलाद्याधारत्वम् । सतामाकाशादीनां विशेषणमवच्छेदकत्वम् । सर्वेषां सत्त्वानां प्राणिनां तद्गुणानां च पुंस्त्वादीनामुद्भेदः परि णामविशेषैः प्रकटीकरणम् ॥ ४६ ॥ श्रोत्रादीनां शब्दादिग्राहकत्वमुक्तं तेषां च लक्षणं तदेवेत्याह । पंचभिः श्लोकार्धैः । नभसो गुणविशेषः शब्दो यस्यार्थो विषयः ॥ ॥ ४७ ॥ ४८ ॥ गुणविशेषशब्दव्यावर्त्यं दर्शयति । परस्येति । परस्य कारणस्य धर्मः शब्दादिरपरस्मिन्कार्ये वाय्वादौ कारणान्वयाद् दृश्यते । अतो भवानामाकाशादी नां विशेषो गुणः सर्वोऽपि शब्दादिर्भूमावेवोपलभ्यते चतुर्णां तत्रान्वयात् जलादिषु यथाऽन्वयमेव न सर्वः आकाशे त्वन्यान्वयाभावादेक एव ॥ ४९ ॥ एवं कारणोत्पत्ति मुक्त्वा कार्योत्पत्तिमाह । सार्धैस्त्रिभिः । एतान्यसंहत्यामिलित्वा यदा स्थितानि तदा जगदादिरीश्वरः प्राविशत् । सप्तेति च प्राधान्याभिप्रायेणोक्तम् । प्रवेशस्तु सर्वेष्वपि विव

दिग्रहः । पुनरादिनोत्पलादिग्रहः । पुनरादिना पलांड्वादिग्रहः । पुनरादिना मातुलुंगादिग्रहः । इत्यर्थ इति । वस्तुत एकोपि गंधः संसर्गिद्रव्यवशेन नानात्वं भजतीति भावः ॥ ४५ ॥ तन्नैरपेक्ष्येण जलाद्यपेक्षां विनैव । अत्रादिना वाय्वग्न्यादिग्रहः । अवकाशं विना स्थित्यसंभवादाकाशापेक्षा त्वस्त्येवेति ज्ञेयं, पुनरादिनाऽग्न्यादिग्रहः । अवच्छेदकत्वं व्यावर्त्तकत्वं गंधरूपस्वगुणेनेति बोध्यं तथा हि आकाशादिगुणानां शब्दादीनां पृथिव्यां सत्त्वेनाकाशा दिषु न व्यावर्त्तकत्वं पृथिवीगुणस्य गंधस्य तेष्वसत्त्वेन तस्याव्यावर्त्तकत्वम् । अन्यूनानतिरिक्तवृत्तिधर्मस्यैवावच्छेदकत्वादिति भावः । विश्वनाथस्तु-विशेषणं विशेषणहेतुः मलिनमाकाशं धूसरोऽनिल इत्यादिप्रतीतेरित्याह । पुंस्त्वादि हि—शिश्नवृषणाकारपरिणामेन पुंस्त्वं, योन्याकारपरिणामेन स्त्रीत्वमुभयविलक्षणसच्छिद्रभूभागाकारपरिणामेन च षंढत्वं पृथिव्या एव जायत इति विवेकः । संदर्भस्तु—ब्रह्मणः परमेश्वरस्य इंद्रनीलादिरूपायास्तस्या रूपादिदृष्टांतत्वेन भावनं स्मरणहेतुत्वमित्याह ॥ ४६ ॥ गुणविशेषो विशेषगुणः विशेषगुणस्तु "रूपं गंधो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः । बुद्ध्यादिभावनांताश्च शब्दो वैशेषिका गुणाः" इति तार्किकोक्तेः ॥ ॥ ४७ ॥ ४८ ॥ अतः कारणान्वयात् । चतुर्णामाकाशादीनां, तत्र भूमौ, यथान्वयं कारणभूतान्वयानुसारेणैव गुणसद्भावः आकाशस्य भूतांतरकारणगुणाभावादेकः शब्द एवेत्यर्थः ॥ ४९ ॥ कालः क्षोभकः । कर्म

ततस्तेनानुविद्धेभ्यो युक्तेभ्योंऽडमचेतनम् ॥ उत्थितं पुरुषो यस्मादुदतिष्ठदसौ विराट् ॥ ५१ ॥ एतदंडं विशेषाख्यं क्रमवृद्धैर्दशोत्तरैः ॥ तोयादिभिः परिवृतं प्रधानेनावृतैर्बहिः ॥ यत्र लोकवितानोऽयं रूपं भगवतो हरेः ॥ ५२ ॥ हिरण्मयादंडकोशादुत्थाय सलिलेशयात् ॥ तमाविश्य महादेवो बहुधा निर्बिभेद खम् ॥ ५३ ॥ निरभिद्यतास्य प्रथमं मुखं वाणी ततोऽभवत् ॥ वाण्या वह्निरथो नासे प्राणोऽतो घ्राण एतयोः ॥ ५४ ॥ घ्राणाद्वायुरभिद्येतामक्षिणी चक्षुरेतयोः ॥ तस्मात्सूर्यो न्यभिद्येतां कर्णौ श्रोत्रं ततो दिशः ॥ ५५ ॥ निर्बिभेद विराजस्त्वग्रोमश्मश्र्वादयस्ततः ॥ तत ओषधयश्चासञ्छिश्नं निर्बिभिदे ततः ॥५६॥ रेतस्तस्मादाप आसन्निरभिद्यत वै गुदम् ॥ गुदादपानोऽपानाच्च मृत्युर्लोकभयंकरः ॥५७॥ हस्तौ च निरभिद्येतां बलं ताभ्यां ततः स्वराट् ॥ पादौ च निरभिद्येतां गतिस्ताभ्यां ततो हरिः ॥५८॥ नाड्योऽस्य निरभिद्यंत ताभ्यो लोहितमाभृतम् ॥ नद्यस्ततः समभवन्नुदरं निरभिद्यत ॥ ५९ ॥ क्षुत्पिपासे ततः स्यातां समुद्रस्त्वेतयोरभूत् ॥ अथास्य हृदयं भिन्नं हृदयान्मन उत्थितम् ॥ ६० ॥

क्षित एव ॥ ५० ॥ अनुविद्धेभ्यः क्षुभितेभ्यः यस्मादंडादसौ विराट् पुरुष उदतिष्ठत् ॥ ५१ ॥ भगवतो रूपमिति पुरुषाभेदाभिप्रायेण ॥ ५२ ॥ तस्मिन्नध्यात्मादिविभागमाह । हिरण्मयादिति नवभिः । उत्थायौदासीन्यं विहाय तमाविश्याधिष्ठाय महांश्चासौ देवश्च खं छिद्रम् ॥ ५३ ॥ वाण्या सह वह्निरभवत् प्राविशत् । नासे निरभिद्येताम् । प्राणोतः प्राणेन ऊतः स्यूतः सन् घ्राण एतयोर्नासिकयोरभवदित्यनुषंगः ॥ ५४ ॥ घ्राणादनंतरं वायुश्च प्राणोत इति विशेषणं सर्वेंद्रियेष्वपि द्रष्टव्यम् । न्यभिद्येता मन्वभिद्येतामिति पाठद्वयेऽप्येक एवार्थः । ततो दिशः प्राविशन् ॥ ५५ ॥ आदिशब्देन केशाः ॥५६॥५७॥स्वराडिंद्रः हरिर्विष्णुः ॥५८॥आभृतं जातम् ॥५९॥६०॥

जीवादृष्टं गुणः प्रकृतिस्तैः सहितः प्राविशत्संहननकारिण्या शक्त्या सर्वतत्त्वमेलनार्थं प्रथमं प्राविशत् । ततो वर्षसहस्रांतेंतर्यामित्वेन प्राविशदिति ज्ञेयम् ॥ ५० ॥ ततोंतर्यामिप्रवेशानंतरम् । तेन तत्प्रवेशेन । उत्थितमुत्पन्नम् । पुरुषो हिरण्यगर्भात्मकः समष्टिजीवः उदतिष्ठत् निद्रामिवातिक्रम्य सचेतनो बभूव ॥ ५१ ॥ विशेष इत्याख्या यस्य तत्तथा । दशोत्तरैरुत्तरोत्तरं दशगुणाधिकैः तोयस्यादिः पृथ्वी तदाद्यैरत्रैकादिपदलोपस्त्वार्षो ज्ञेयोऽन्यथा "ततो विशेषं प्रतिपद्य निर्भयस्तेनात्मनापोनलमूर्त्तिः" इति ब्रह्मांडभेदनोक्तक्रमविरोधः स्यादिति यत्रांडेयं प्रत्यक्षदृश्यो लोकानां पातालादीनां वितानः समूहः किंभूतो भगवतो हरे रूपं मूर्त्तिवदधिष्ठानम् । अजहल्लिंगत्वाच्छंढत्वम् ॥ ५२॥ तस्मिन्नंडे । तमंडकोशम् । देवो हरिः । निर्बिभेद पृथक् चकार । इह जलेंद्रियतदधिष्ठातृदेवानां भगवदिच्छया तदानीमेवाविर्भावो जातस्ततः पूर्वं तेषामसत्त्वात् । तदुक्तं "सृजत्यमोघसंकल्पः कल्पादौ विविधास्तनूः । देहेंद्रियादिभेदेन सर्गवृद्धिकरा हरिः" इत्यादिपुराणे यमनु देवगणा उभय इति सूचितं वेदस्तुतौ ॥ ५३ ॥ धातूनामनेकार्थत्वाद्भवतेः प्रवेशार्थमभिप्रेत्याहाभवत्प्राविशदिति । तत इत्यादिपद्मम्यंतानामनंतरार्थो बोध्यः ॥ ५४ ॥ इत्यर्थ—इति व्याख्येयम् ॥ ५५ ॥ ५६ ॥ ५७ ॥ हरिस्तदाविष्टो देवविशेष इति संदर्भः ॥ ५८ ॥ अस्य विराजः लोहितं रक्तादि ॥ ५९ ॥ ६० ॥

मनसश्चंद्रमा जातो बुद्धिर्बुद्धेर्गिरां पतिः ॥ अहंकारस्ततो रुद्रश्चित्तं चैत्त्यस्ततोऽभवत् ॥ ६१ ॥ एते ह्यभ्युत्थिता देवा नैवास्योत्थापनेऽशकन् ॥ पुनराविविशुः खानि तमुत्थापयितुं क्रमात् ॥६२॥ वह्निर्वाचा मुखं भेजे नोदतिष्ठत्तदा विराट् ॥ घ्राणेन नासिके वायुर्नोदतिष्ठत्तदा विराट् ॥६३॥ अक्षिणी चक्षुषादित्यो नोदतिष्ठत्तदा विराट् ॥ श्रोत्रेण कर्णौ च दिशो नोदतिष्ठत्तदा विराट् ॥ ६४ ॥ त्वचं रोमभिरोषध्यो नोदतिष्ठत्तदा विराट् ॥ रेतसा शिश्नमापस्तु नोदतिष्ठत्तदा विराट् ॥ ६५ ॥ गुदं मृत्युरपानेन नोदतिष्ठत्तदा विराट् ॥ हस्ताविंद्रो बलेनैव नोदतिष्ठत्तदा विराट् ॥ ६६ ॥ विष्णुर्गत्यैव चरणौ नोदतिष्ठत्तदा विराट् ॥ नाडीर्नद्यो लोहितेन नोदतिष्ठत्तदा विराट् ॥ ६७ ॥ क्षुत्तृड्भ्यामुदरं सिंधुर्नोदतिष्ठत्तदा विराट् ॥ हृदयं मनसा चंद्रो नोदतिष्ठत्तदा विराट् ॥ ६८ ॥ बुद्ध्या ब्रह्मापि हृदयं नोदतिष्ठत्तदा विराट् ॥ रुद्रोऽभिमत्या हृदयं नोदतिष्ठत्तदा विराट् ॥ ६९ ॥ चित्तेन हृदयं चैत्त्यः क्षेत्रज्ञः प्राविशद्यदा ॥ विराट् तदैव पुरुषः सलिलादुदतिष्ठत ॥ ७० ॥ यथा प्रसुप्तं पुरुषं प्राणेंद्रियमनोधियः ॥ प्रभवंति विना येन नोत्थापयितुमोजसा ॥ ७१ ॥ तमस्मिन्प्रत्यगात्मानं धिया योगप्रवृत्तया ॥ भक्त्या विरक्त्या ज्ञानेन विविच्यात्मनि चिंतयेत् ॥ ७२ ॥ इति श्रीभा० तृतीय० कापिलेयोपाख्याने तत्त्वसमाम्नाये षड्विंशोऽध्यायः ॥ २६ ॥ श्रीभगवानुवाच ॥ प्रकृतिस्थोऽपि पुरुषो नाज्यते प्राकृतैर्गुणैः ॥ अविकारादकर्तृत्वान्निर्गुणत्वाज्जलार्कवत् ॥ १ ॥

बुद्ध्यादिषु हृदयमेवाधिष्ठानम् । गिरां पतिर्ब्रह्मा चैत्यः क्षेत्रज्ञः ॥ ६१ ॥ अन्वयव्यतिरेकाभ्यां क्षेत्रज्ञं विवेक्तुं सर्वेषां पुनः प्रवेशमाह । एत इति नवभिः ॥ ६२ ॥ ६३ ॥ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ विराड्देहस्य व्यष्टिदेहं दृष्टांतत्वेन दर्शयन्सांख्यानुकथनस्य प्रयोजनमाह । यथेति द्वाभ्याम् ॥ ७१ ॥ प्रथमं परमेश्वरे भक्तिस्ततोऽन्यत्र विरक्तिस्ततो योगप्रवृत्ता धीः एकाग्रं चित्तं ततो यज्ज्ञानं तेन प्रत्यगात्मानं क्षेत्रज्ञमस्मिन्नात्मनि कार्यकारणसंघाते विविच्य चिंतयेत् ॥ ७२ ॥ इति तृतीये टी० षड्विंशतितमोऽध्यायः ॥ २६ ॥ सप्तविंशे ततः सम्यग्बहुसाधनयोगतः ॥ पुंप्रकृत्योर्विवेकेन मोक्षरीतिर्निरूप्यते ॥ ॥ १ ॥ विवेकज्ञानेन मोक्षमुपपादयितुं शुद्धस्यैव पुरुषस्य प्रकृत्यविवेकतः पूर्वोक्तं संसारमनुस्मारयति । प्रकृतिस्थोऽपीति त्रिभिः । देहस्थोऽपि नाज्यते न लिप्यते गुणै

चैत्त्यश्चित्ताधिष्ठाता वासुदेवः स एव चित्त उपास्यदेवता च स एव समष्टिजिवस्य हिरण्यगर्भस्य प्रद्युम्नत्वेनांतर्यामी स एव व्यष्टिजीवानामनिरुद्धत्वेनांतर्यामीति भागवतामृते । न तु चित्ताधिष्ठाता क्षेत्रज्ञो जीव इति वाच्यं तस्य कर्तृत्वकरणत्वाद्यभावस्य सर्वत्र प्रतिपादितत्वात् । "आचार्यचैत्त्यवपुषा स्वगतिं व्यनक्ति" इत्यादावपि चैत्त्यशब्देनांतर्यामिण एवोक्तिः । क्वचिच्चैत्त्यशब्देन जीवाभिधानं तु चित्तोपाधिकत्वादेव न तु चित्ताधिष्ठातृत्वादिति ज्ञेयम् ॥ ६१ ॥ अभ्युत्थिताः स्वस्वाधिष्ठानसंयोगं प्राप्ता अप्यस्य विराज उत्थापने बहिश्चेष्टासंपादने आविविशुः प्रयत्नं चक्रुः ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ चैत्त्यो वासुदेवः स एव क्षेत्रज्ञोंतर्यामी "क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत" इति श्रीगीतोक्तेः ॥ ७० ॥ येन चित्ताधिष्ठात्रा परमेश्वरेण विना प्रसुप्तं व्यष्टि तथैव येन विना समष्टिविराडपि नोदतिष्ठदिति पूर्वेणान्वयः ॥ ७१ ॥ कार्यकारणसंघाते देहे जीवे वा ॥ ७२ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे षड्विंशोऽध्यायः ॥ २६ ॥ ततो विराडंतर्यामित्वेन परमात्मविवेचनानंतरम् ( १ ) शुद्धस्यैव वस्तुतः प्रकृतिसंगरहितस्यैव

स एष यर्हि प्रकृतेर्गुणेष्वभिविषज्जते ॥ अहं क्रियाविमूढात्मा कर्तास्मीत्यभिमन्यते ॥२॥ तेन संसारपदवीमवशोऽभ्येत्य निर्वृतः ॥ प्रासंगिकैः कर्मदोषैः सदसन्मिश्रयोनिषु ॥ ३ ॥ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ॥ ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥४॥ अत एव शनैश्चित्तं प्रसक्तमसतां पथि ॥ भक्तियोग न तीव्रेण विरक्त्या च नयेद्वशम् ॥ ५ ॥ यमादिभिर्योगपथैरभ्यसञ्छ्रद्धयाऽन्वितः ॥ मयि भावेन सत्येन मत्कथाश्रवणेन च ॥ ६ ॥ सर्वभूतसमत्वेन निर्वैरेणाप्रसंगतः ॥ ब्रह्मचर्येण मौनेन स्वधर्मेण बलीयसा ॥७॥ यदृच्छयोपलब्धेन संतुष्टो मितभुङ् मुनिः ॥ विविक्तशरणः शांतो मैत्रः करुण आत्मवान् ॥ ८ ॥

स्तत्कृतैः सुखदुःखादिभिः निर्गुणत्वादकर्तृत्वं ततोऽविकारित्वं तस्मात् ॥ १ ॥ २ ॥ अनिर्वृतः सन् प्रासंगिकैः प्रकृतिसंगकृतैः सदसन्मिश्रयोनिषु देवतिर्यङ्नरादिषु संसारपदवीं प्राप्नोति ॥ ३ ॥ ननु तर्ह्यवास्तवत्वात्संसृतेः किं तन्निवृत्तिप्रयासेन तत्राह । अर्थे हीति ॥ ४ ॥ यतो विषयध्यानमनर्थहेतुरतो मनो नियंतव्यमित्याह । अत एवेति । असतामिंद्रियाणां पथि विषयमार्गे तीव्रेण दृढेन विरक्त्या च तीव्रया ॥ ५ ॥ भक्तिविरक्त्योस्तीव्रत्वे कारणानि वर्णयन् ज्ञानेन मोक्षप्रकारमाह षड्भिः । यमादिभिर्योगमार्गैश्चित्तमभ्यसन्पुनः पुनरेकाग्रीं कुर्वन्नात्मानमुपलभ्य सर्वानुस्यूतमद्वयं परमात्मानं प्रतिपद्यत इति षष्ठेनान्वयः । सत्येन निष्कपटेन भावेन प्रेम्णा ॥ ६ ॥ अप्रसंगतः संगत्यागेन बलीयसा ईश्वरेऽर्पितेन ॥ ७ ॥ विविक्तशरण एकांतवासी ॥ ८ ॥

तत्कृतैर्गुणकार्यभूतैः ततो निर्गुणत्वात् ॥ १ ॥ इह जलार्कदृष्टांतेन दर्पणमुखदृष्टांतो लक्ष्यस्तस्मात्स्वमुखस्य दर्पणदोषलिप्तत्ववत्तल्लिप्तत्वेन मिथ्यैवाभिमानं कुरुते इत्याह्—स इति ॥ २ ॥ तेन कर्तृत्वमननेन ॥ ३ ॥ अत्राक्षिपति-नन्विति । अर्थे कर्मरूपेर्थे वस्तुतः आत्मनोऽकर्तृत्वादसत्यपि तत्र कर्तृत्वाभिमानेन तद्ध्यानात् संसृतिर्न निवर्तत इति । अनर्थागमः स्वशिरश्छेदादिः ॥ ४ ॥ अत एव विषयध्यानस्यानर्थहेतुत्वादेव ॥ ५ ॥ आदिना नियमादिग्रहः । विश्वनाथः—मयि भावेन सत्येन मद्रूपनामलीलादीनां सत्यत्वदृष्ट्या मयि यः सत्यो भावः सत्यत्वभावना तेन न तु मायाशबलितब्रह्मदृष्ट्या मय्यायत्यामसत्यत्वभावनयेत्यर्थः । तथात्वे "त्वय्यस्तभावादविशुद्धबुद्धयः । आरुह्य कृच्छ्रेण परं पदं ततः पतंत्यतो नादृतयुष्मदंघ्रयः" इति " नैष्कर्म्यमप्यच्युतभाववर्जितम् " इति "अवजानंति मां मूढा मानुषीं तनुमाश्रितम्" इति "न भजंत्यवजानंति स्थानाद्भ्रष्टाः पतंत्यधः" इत्यादिभ्यो भगवद्विग्रहादौ चिदानंदभिन्नत्वभावनालक्षणावज्ञयाज्ञानिनामपि मोक्षाभावावगतेः ॥ ६ ॥ ७ ॥ यदृच्छयोपलब्धेन दैवात्प्राप्तेन धनादिनालंबुद्धिः । मितं परिमितं भुनक्तीति तथा "द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत् । मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत्" इत्युक्तेः । श्रुतिरप्येतमर्थमुपबृंहयति तथाहि—"यदात्मसम्मतमन्नं तदवति न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति" इति श्रुतिः । एतदर्थस्तु आत्मसम्मतं स्वोदरपरिमाणमनुकूलञ्च यदन्नं भुज्यते तदन्नं भोक्तारमवति धर्मनिर्वाहाय च भवति न हिनस्ति धातुवैषम्यं संपाद्य पुरुषं न हन्ति न पीडयति च । यद्भूयः स्वोदरपरिमाणादतिरिक्तमन्नं भुज्यते तद्धिनस्ति शूलादिकमुत्पाद्य पुरुषं हंति धर्म्मञ्च नाशयति । यत्कनीयोऽत्यल्पमन्नं भुज्यते न तत्पुरुषमवति क्षुन्निवृत्त्यै धर्मनिर्वाहाय च क्षमं न भवति ततः परिमितमेव भोक्तव्यमिति सिद्धमत एव श्रीभगवताप्युक्तं गीतोपनिषदि "युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु । युक्तस्वप्नावबोधस्य योगो भवति दुःखहा" इति चिकित्साशास्त्रेप्ययमर्थो वर्णितः । 'ये गुणा लंघने प्रोक्तास्ते गुणा लघु भोजने' इति । मुनिर्मननशीलः । शांतो नियतचित्तः । मैत्रः सर्वत्र

सानुबंधे च देहेऽस्मिन्नकुर्वन्नसदाग्रहम् ॥ ज्ञानेन दृष्टतत्त्वेन प्रकृतेः पुरुषस्य च ॥९॥ निवृत्तबुद्ध्यवस्थानो दूरीभूतान्यदर्शनः ॥ उपलभ्यात्मना ऽऽत्मानं चक्षुषेवार्कमात्मदृक् ॥ १० ॥ मुक्तलिंगं सदाभासमसति प्रतिपद्यते ॥ सतो बंधुमसच्चक्षुः सर्वानुस्यूतमद्वयम् ॥ ११ ॥ यथा जलस्थ आभासः स्थलस्थेनावदृश्यते ॥ स्वाभासेन तथा सूर्यो जलस्थेन दिवि स्थितः ॥ १२ ॥ एवं त्रिवृदहंकारो भूतेंद्रियमनोमयैः ॥ स्वाभासैर्लक्षितो ऽनेन सदाभासेन सत्यदृक् ॥ १३ ॥ भूतसूक्ष्मेंद्रियमनोबुद्ध्यादिष्विह निद्रया ॥ लीनेष्वसति यस्तत्र विनिद्रो निरहंक्रियः ॥ १४ ॥

असदाग्रहमहंममताम् । प्रकृतेः पुरुषस्य च दृष्टं तत्त्वं येन तेन ज्ञानेन॥९॥निवृत्तानि बुद्ध्यवस्थानानि जाग्रदादीनि यस्य सः अत एव दूरीभूतमन्यदर्शनं यस्य आत्मना ऽहंकारावच्छिन्नेनात्मानं शुद्धमुपलभ्य एकस्यैवावच्छेदानवच्छेदाभ्यां करणकर्मत्वे दृष्टांतमाह । चक्षुषा चक्षुरवच्छिन्नेनार्केण गगनस्थमर्कमिव । एवमात्मदृक् शुद्धमात्मानं पश्यन् ॥१०॥मुक्तलिंगं निरुपाधिकमसति मिथ्याभूतेऽहंकारे सदाभासं सद्रूपेणावभासमानं ब्रह्म प्राप्नोति । शुद्धजीवस्वरूपाद्विशेषमाह । सतः कारणस्य प्रधानस्य बंधुम धिष्ठानम् । असतः कार्यस्य चक्षुरिव प्रकाशकम् । सर्वेषु कार्यकारणेष्वनुस्यूतम् । अद्वयं परिपूर्णम्॥११॥अहंकारोपहितेन शुद्धब्रह्मप्रतिपत्तिं सदृष्टांतमाह । यथेति । जले स्थित आभासः सूर्यप्रतिबिंबो यदा गृहांतर्वर्ति भित्तौ स्फुरति तदा गृहकोणस्थितैः पुरुषैर्भित्त्यादौ स्थले स्थितेन स्वाभासेन सूर्यप्रतिबिंबेन यथा प्रथमं जलस्थ आभासो ऽवदृश्यते लक्ष्यते गगनस्थस्य गृहमध्ये प्रतिबिंबायोगात् । चार्थे तथाशब्दः।यथा चेत्यर्थः।यथा च जलस्थेन आभासेन दिवि स्थितः सूर्यो लक्ष्यते॥१२॥एवं भूतेंद्रियमनोमयैर्देहेंद्रियमनोभिरवच्छिन्नैः स्वाभासैरात्मप्रतिबिंबैस्त्रिवृत्त्रिगुणोऽहंकारः सतो ब्रह्मण आभासो यस्मिंस्तेन रूपेण लक्षितः।अहंकारस्थाभासं विना विषयाभासानुत्पत्तेः अनेन चाहंकारेण सदाभासवता सत्यदृक् परमार्थज्ञप्तिरूप आत्मा लक्षित इत्यर्थः॥१३॥इदानीं सुषुप्तिसाक्षित्वेन शुद्धात्मप्रतिपत्तिमनुभवतो दर्शयति त्रिभिः।भूतादिष्वसत्यसत्तुल्येऽव्याकृते

प्रीतिमान्। करुणो दयालुः । आत्मवान् स्थिरबुद्धिः॥८॥सानुबंधे दारापत्यादिसहिते तत्त्वं स्वरूपम् ॥९॥ अत एव निवृत्तबुद्ध्यवस्थत्वादेव। अन्यदर्शनं भेददृष्टिः। अत्र चक्रवर्ती—ततश्च ज्ञानी शुद्धेन जीवात्मनैव परमात्मानं भक्त्यैवानुभूय तमेव प्राप्नोतीत्याह—उपलभ्येति । आत्मना शुद्धजीवेन चित्कणेन आत्मानं परमात्मानं पूर्णचैतन्यनिधिमुपलभ्य भक्त्यानुभूय चक्षुषा पटलादिदोषरहितेन ज्योतिःकणेनार्कं ज्योतिर्निधिमिव आत्मदृक् ज्ञानी प्रतिपद्यते प्राप्नोति अत्र पटलादिदोषरहितेनापि चक्षुषा यथोलूकादिरर्कं न पश्यति किन्तु तद्भिन्नो मनुष्यादिरेवार्कं पश्यति तथैव शुद्धेनापि जीवात्मना भक्तिरहितो ज्ञानी परमात्मानं नानुभवति किन्तु भक्तिमानेवानुभवति "भक्त्याहमेकया ग्राह्यः" इति "भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनंतरम्" इति भगवदुक्तेः॥१०॥कार्यस्य प्रपञ्चस्य। विश्वनाथः—तं कीदृशं मुक्तैर्जीवन्मुक्तैर्लिंग्यते ज्ञायते असति जगति सदैव भासतेंतर्यामित्वेनेति तं विशेषणपंचकेनानुभवज्ञानपूर्वदशायां तस्य शास्त्रोत्थज्ञानाविषयीभूतत्वं ज्ञापितम् ॥ ११ ॥ प्रथमं जीवात्मैव केन प्रकारेण ज्ञातव्यस्ततस्तेन परमात्मा चेत्यत्र दृष्टांतमाह—यथेति । जले स्थित आभासः प्रतिबिंबाकारो निष्कंपः सूर्यप्रकाशो यदा गृहान्तर्वर्त्ति स्वच्छभित्त्यादौ स्थले स्फुरति तदा गृहकोणस्थितैः पुंभिः प्रथमं स्थलस्थ आभासो दृश्यते कुतश्च कुतोयं प्रकाश इति परामृशद्भिस्तैस्तेन स्थलस्थेन स्वाभासेन शोभनसूर्यप्रकाशेन जलस्थो निष्कंप आभासोवदृश्यते लक्ष्यते पुनश्चायमवभासः कुत इति तथा तेनैव प्रकारेण तेन जलस्थेन स्वाभासेन शोभनप्रकाशेन दिवि स्थितः सूर्यो लक्ष्यते ॥ १२ ॥ एवं सूर्यवत् । इत्यर्थ इति । न हि चैतन्यप्रकाशं विना जडैः किंचित्कर्तुं शक्यते इति भावः ॥ १३ ॥ चक्रवर्ती—नन्वार्केण चक्षुषार्क इवात्मनैव भक्तिमता ज्ञानिना परमात्मा

मन्यमानस्तदात्मानमनष्टो नष्टवन्मृषा ॥ नष्टेऽहंकरणे द्रष्टा नष्टवित्त इवातुरः ॥ १५ ॥ एवं प्रत्यवमृश्यासावात्मानं प्रतिपद्यते ॥ साहंकारस्य द्रव्यस्य योऽवस्थानमनुग्रहः ॥ १६ ॥ देवहूतिरुवाच ॥ पुरुषं प्रकृतिर्ब्रह्मन्न विमुंचति कर्हिचित् ॥ अन्योन्यापाश्रयत्वाच्च नित्यत्वादनयोः प्रभो ॥ १७ ॥ यथा गंधस्य भूमेश्च न भावो व्यतिरेकतः ॥ अपां रसस्य च यथा तथा बुद्धेः परस्य च ॥ १८ ॥ अकर्त्तुः कर्मबंधोऽयं पुरुषस्य यदाश्रयः ॥ गुणेषु सत्सु प्रकृतेः कैवल्यं तेष्वतः कथम् ॥ १९ ॥

निद्रया लीनेषु सत्सु यस्तत्र तदा विनिद्रो निरहंक्रियस्तमात्मानं प्रतिपद्यत इति तृतीयेनान्वयः ॥ १४ ॥ ननु यदि तदा विनिद्रोऽसावस्ति तर्हि जाग्रत्स्वप्नयोरिव स्फुटः। किं नावभासते तत्राह । पूर्वं स द्रष्टातो द्रष्टृत्वेन सविकल्पतया स्फुटं प्रतीतः सुषुप्तौ तु भूतादेरहंकारविषयस्य लीनत्वात्तद्विषयेऽहंकारे नष्टे सति स्वयमनष्टोऽपि मृषैवात्मानं नष्टवन्मन्यमानो यः । अन्यस्य नाशेऽन्यस्य नष्टतुल्यत्वे दृष्टांतः । नष्टवित्तो यथा आतुरो विवशः नष्टवद्भवतीत्यर्थः॥ १५॥ ननु सुषुप्तौ न किंचिदनुभूयते मैवम् ॥ "सुखमहमस्वाप्सं न किंचिदवेदिषम्" इति विशेषज्ञानं विना केवलस्यात्मनः प्रतिसंधानादित्याह । एवमिति । ननु प्रतिसंधाने साहंकारस्य प्रतीतेः कथं निरहंक्रियत्वं तत्राह। साहंकारस्य द्रव्यस्य कार्यकारणसंघातस्यानुग्रहः प्रकाशकः अवस्थानं च द्रव्यविशेषणतयाऽहंकारस्यापि दृश्यत्वाच्च तद्द्रष्टाऽऽत्मा तद्व्यतिरिक्तः तमात्मानमित्यन्वयः ॥ १६ ॥ भक्तिविरक्तिभ्यां सत्यपि विवेके प्रकृतिपुरुषयोः परस्परत्यागाभावात्कथं मुक्तिरिति पृच्छति पुरुषमिति चतुर्भिः । पुरुषव्यतिरेकेण प्रकृतेः स्वरूपलाभाभावात्प्रकृतिव्यतिरेकेण पुरुषस्याभिव्यक्त्यभावादित्यन्योन्यापाश्रयत्वान्नित्यत्वाच्च पुरुषं प्रकृतिः कदाचिन्न मुंचतीत्यर्थः ॥ १७ ॥ व्यतिरेकाभावमात्रे दृष्टांतः । यथा व्यतिरेकतो भावः सत्ता नास्ति । गंधस्य कदाचिदपक्षयदर्शनादृष्टांतांतरम् । अपामिति । बुद्धेः प्रकृतेः परस्य पुरुषस्य च ॥ १८ ॥ ततः किमत आह । अकर्तुरिति । ये गुणा आश्रयो

नुभूयत इति सत्यं जानीमः किं तु चक्षुःश्रोत्रादिकमिव जीवात्मानं त्रिवृदहंकारात्पृथग्भूतं साक्षाद्दर्शयेत्यपेक्षायामाह—भूतेति । भूतादिषु असति अनभिव्यक्तत्वादसत्तुल्ये प्रधाने निद्रया लीनेषु सत्सु यस्तत्र तदा विनिद्रो निरहंक्रियस्तमात्मानं जीवं प्रतिपद्यते लोकोनुभवतीति ॥ १४ ॥ अत्राक्षिपति—नन्विति । पूर्वं जाग्रत्स्वप्नयोः । स जीवः । अतः अनयोरवस्थयोः सप्तम्यर्थे तसिल् स्वामिचरणैः कृतः । भूतादेरिहा दिनेंद्रियादिग्रहः । इत्यर्थ इति । न तु नष्टो भवतीति भावः । चक्रवर्त्ती—तु नन्वलं तर्हि योगाभ्यासेन मनोबुद्धीन्द्रियादिलये सति यः केवलात्मानुभवो योगाभ्यासफलरूपस्तं खलु निद्रैव कारयतीति तत्राह—मन्यमान इति । भूतादीनामहंकार्याणामहंकारस्य च लयादहंकरणे नष्टे सति द्रष्टा जीवो दृश्यानामभावादर्शने च नष्टे सति स्वयमनष्टोप्यात्मानं नष्टवन्मन्यमानो य इत्यविद्यावंतं जीवं सुषुप्तावुत्प्रेक्षते नष्टवित्त इव न तु नष्टवित्तासक्तिरित्यर्थः । अयमर्थः—योगाभ्यासेन जीवोपाधिभूतानां तत्त्वानामात्यंतिके लये सत्येव जीवः स्वरूपानंदमयो भवति न तु नैमित्तिकयोः सुषुप्तिप्रलययोः यथा वित्ते नष्टे सत्याकिंचन्यं सुखं न भवति किं तु वित्तासक्तावेव नष्टायां सत्यां तथैव जीवस्य नैष्कर्म्यं विना सुषुप्तिप्रलययोरुपाधिनाशेपि न स्वरूपप्राप्तिर्नैष्कर्म्यं च भक्तिज्ञानाभ्यां विना न भवेदिति । सुषुप्तावविद्यातत्संस्काराणां च विद्यमानत्वात् केवलात्मानुभवोप्यकिंचित्कर एवेति ॥ १९ ॥ पुनराक्षिपति—नन्विति । प्रतिसंधानात्स्फुरणात् । एवमहंकारावभासकत्वेन कार्यकारणसंघातो देहस्तस्य ॥ १६ ॥ पुनराक्षिपति भक्त्येत्यादिना । इत्यर्थ इति । पुरुषव्यतिरेकेण प्रकृतेः स्वरूपलाभाभावात्प्रकृति व्यतिरेकेण पुरुषस्याभिव्यक्त्यभावादित्यन्योन्याश्रयत्वान्नित्यत्वाच्च पुरुषं प्रकृतिः कदाचिन्न मुञ्चतीति भावः ॥ १७ ॥ अपक्षयोऽभिभवः ॥ १८ ॥ ततः प्रकृतिपुरुषयोरन्योन्याश्रयत्वान्नित्यत्वाच्च किमागतमतोत्राह

क्वचित्तत्त्वावमर्शेन निवृत्तं भयमुल्बणम् ॥ अनिवृत्तनिमित्तत्वात्पुनः प्रत्यवतिष्ठते ॥ २० ॥ श्रीभगवानुवाच ॥ अनिमित्तनिमित्तेन स्वधर्मेणामलात्मना ॥ तीव्रया मयि भक्त्या च श्रुतसंभृतया चिरम् ॥ २१ ॥ ज्ञानेन दृष्टतत्त्वेन वैराग्येण बलीयसा ॥ तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना ॥ २२ ॥ प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम् ॥ तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः ॥ २३ ॥ भुक्तभोगा परित्यक्ता दृष्टदोषा च नित्यशः ॥ नेश्वरस्याशुभं धत्ते स्वे महिम्नि स्थितस्य च ॥ २४ ॥ यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत् ॥ स एव प्रतिबुद्धस्य न वै मोहाय कल्पते ॥ २५ ॥ एवं विदिततत्त्वस्य प्रकृतिर्मयि मानसम् ॥ युंजतो नापकुरुत आत्मारामस्य कर्हिचित् ॥ २६ ॥

यस्य सः तेषु प्रकृतेर्गुणेषु सत्सु पुरुषस्य कैवल्यं कथम् ॥ १९ ॥ अत एव क्वचिन्निवृत्तप्रायस्यापि संसारभयस्य पुनरुद्भवो दृश्यत इत्याह । क्वचिदिति ॥ २० ॥ न हि प्रकृतिसंबंधमात्रं बंधहेतुः किं तु गुणबुद्ध्या तदासक्तिस्तन्निवृत्तौ सत्यां मोक्षो घटते क्वचिदुद्भवस्तु साधनवैकल्यादित्यभिप्रेत्य साधनातिशयं कथयन्परिहरति त्रिभिः। निमित्तं फलं तन्न निमित्तं प्रवर्तकं यस्मिंस्तेन निष्कामेन धर्मेण अमलात्मना निर्मलेम मनसा श्रुतेन कथाश्रवणेन संभृतया पुष्टया॥ २१ ॥ २२॥ दह्यमानाऽभिभूयमाना तिरोहिता भवति ॥ २३ ॥ एवं च सति पुनरुद्भवो नास्तीत्याह । भुक्तो भोगो यस्याः नित्यशः सदा दृष्टो दोषो यस्याः अत एव परित्यक्ता सतीश्वरस्यापरतंत्रस्य स्वे महिम्नि स्थितस्य स्वानंदं प्राप्तस्य ॥ २४ ॥ अविवेकावस्थायामनर्थहेतुरपि विवेकानंतरं न भवतीति सदृष्टांतमाह । यथेति द्वाभ्याम् । प्रस्वापः स्वप्नः बहूनर्थान्बिभर्ति पुष्णाति

अतः प्रकृतेः कैवल्यं मोक्षः ॥ १९ ॥ यतः प्रकृतिगुणसत्त्वे मोक्षाभावोऽस्त्यत एव हेतोः तत्त्वविचारेण निवृत्तं निवृत्तप्रायं, न निवृत्तं निमित्तं कारणं रागरूपं यस्य तस्य भावस्तत्त्वं तस्मात् समूलनिवृत्त्यभावादपथ्यसेवने नासम्यक्चिकित्सितगद इव विषयसंबंधादुत्तिष्ठत इत्यर्थः ॥२०॥ इदानीं तन्निवृत्त्युपायसाधनान्याह—न हीत्यादिना । गुणबुद्ध्या शोभनधिया तदासक्तिः प्रकृतिकार्ये देहगेहादौ रागः । तन्निवृत्तौ प्रकृत्यासक्तिनिवृत्तौ "निमित्तं हेतुलक्ष्मणोः फले प्रवर्त्तकेपि स्यात्" इति स्वामी । यद्वा । अः विष्णुः स निमित्तं फलं तेन हेतुना भगवदर्पणबुद्ध्या कृतेनेत्यर्थः । चिरं श्रुतसंभृतया ॥ २१ ॥ भगवति बलीयसा दृढेन आत्मनि दृष्टं तत्त्वं जीवेशपारमार्थ्यं येन तेन ज्ञानेन समाधिश्चेतःस्थापनं तेन तीव्रेणान्वहं क्रियमाणेन ॥ २२ ॥ इह लोके योनिरभिव्यक्तिस्थानम् । अरणिः काष्ठभेदः । यथाग्नेराविर्भावनिदानभूताप्यरणिः स्वत उत्पन्नेनाप्यग्निना दह्यमाना विनश्यति तथा साधनदशायामविद्याप्रयुक्तदेहाद्यभिमानाज्जातैर्ज्ञानादिसाधनैर्दह्यमाना प्रकृतिर्नश्यतीत्यर्थः ॥ २३ ॥ भोगः संसारानुभवः । दोष आनंदाद्यावरणलक्षणः । अत एव दृष्टदोषत्वादेव । यथाज्ञातव्यभिचारादिदोषस्य पत्युरग्रे नारी स्वचांचल्यादि न प्रकटयति तथा ज्ञानिनः प्रकृतिरपीति भावः । अत्राशुभं संसारभयम् एतदभिप्रेत्यैवोक्तं सप्तत्याम्—"प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति । मे मतिर्भवति । या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य" इति । सुकुमारतरं सलज्जम् ॥२४॥ एतद्दृष्टांतेन स्फुटयति—यथेति । दृष्टांतसिद्धमर्थं दार्ष्टांतिके योजयति एवमिति । विदितमपरोक्षितं तत्त्वं स्वस्य प्रकृतेश्च स्वरूपं येन तस्य अपकुरुतेऽशोभनं कुरुते ॥२५॥२६॥

यदैवमध्यात्मरतः कालेन बहुजन्मना ॥ सर्वत्र जातवैराग्य आब्रह्मभवनान्मुनिः ॥ २७ ॥ मद्भक्तः प्रतिबुद्धार्थो मत्प्रसादेन भूयसा ॥ निःश्रेयसं स्वसंस्थानं कैवल्याख्यं मदाश्रयम् ॥ २८ ॥ प्राप्नोतीहांजसा धीरः स्वदृशा छिन्नसंशयः ॥ यद्गत्वा न निवर्तेत योगी लिंगाद्विनिर्गमे ॥ २९ ॥ यदा न योगोपचितासु चेतो मायासु सिद्धस्य विषज्जतेंग ॥ अनन्यहेतुष्वथ मे गतिः स्यादात्यंतिकी यत्र न मृत्युहासः ॥ ३० ॥ इति श्रीभा० तृती० कापिलेयोपाख्याने मोक्षरीतिवर्णनं नाम सप्तविंशोऽध्यायः ॥ २७ ॥ श्रीभगवानुवाच ॥ योगस्य लक्षणं वक्ष्ये सबीजस्य नृपात्मजे ॥ मनो येनैव विधिना प्रसन्नं याति सत्पथम् ॥ १ ॥

प्रतिबुद्धस्य संस्कारवशेन स्फुरन्नपि ॥ २५ ॥ २६ ॥ उपसंहरति यदैवमिति त्रिभिः । बहूनि जन्मानि यस्मिन्काले ॥ २७ ॥ प्रतिबुद्धार्थो विदितात्मतत्त्वः कैवल्याख्यं स्वसंस्थानं देहादिव्यतिरिक्तं स्वरूपं मदाश्रयं निःश्रेयसं निरतिशयानंदम् ॥ २८ ॥ स्वदृशा आत्मज्ञानेन छिन्नाः संशया मिथ्याज्ञानानि यस्य । लिंगाद्विनिर्गमे लिंगशरीरनाशे सतीत्यर्थः ॥ २९ ॥ तदा त्वणिमादिसिद्धयोंतरायरूपा भवंति तासु योगेनोपचितासु समृद्धासु न योगादन्यो हेतुर्यासां तासु यदा सिद्धस्य चेतो न विषज्जते । अंग हे मातः अथ तदांतमतिक्रांतोऽत्यंतो योऽहं तत्संबंधिनी यत्र यस्यां गतौ मृत्योर्हासो न भवति विषक्तौ तु सिद्धोऽपि मया वशीकृत इति मृत्योर्हासो गर्वो भवतीत्यर्थः ॥ ३० ॥ इति श्रीमद्भागवते तृतीये टीकायां सप्तविंशतितमोऽध्यायः ॥ २७ ॥ अष्टाविंशे ततोऽष्टांगयोगेन ध्यानशोभिना ॥ सर्वोपाधिविनिर्मुक्तं स्वरूपज्ञानमीर्यते॥ १ ॥भक्तिं संक्षेपतः प्रोच्य सांख्यमाख्याय विस्तृतम्॥अथाह वैष्णवं योगमष्टांगं कपिलो हरिः॥ २ ॥ सबीजस्य

॥ २७ ॥ अहमेवाश्रयो यस्य तन्मदाश्रयं मदैकनिष्ठम् ॥ २८ ॥ यद्गत्वा इह संसारे न निवर्त्तते तद्धामेत्यध्याहार्य योज्यम् । "न स पुनरावर्त्तते" इति श्रुतेः । इत्यर्थ इति । "अलिंगत्वादसंभवः" इत्युक्तेरिति भावः। ॥ २९ ॥ तत्संबंधिनी अंतशून्या सार्वकालिकी मोक्षलक्षणेति यावत् । विषक्तावासक्तौ सत्याम् इत्यर्थ इति । 'ईश्वरो धाममानिनाम्' इत्युक्तन्यायेन 'अंतरायान्वदन्त्येतान् युंजतो योगमुत्तमम्' इति श्रीमुखोक्त्या च सिद्धिस्वीकारो भ्रंशहेतुस्तदस्वीकारश्च मोक्षहेतुरिति भावः ॥ ३० ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे सप्तविंशोऽध्यायः ॥ २७ ॥ ततः सिद्ध्यनंगीकरणोत्तरम् । ध्यानेन सगुणविग्रहचिंतनेन । शोभितुं शीलमस्येति तेन सर्वोपाधिभिरहंकारादिभिर्विनिर्मुक्तं रहितम् ( १ ) वैष्णवं विष्णुचिंतनात्मकं विष्णुप्रोक्तं वा "ऋषीणां श्रोतुकामानां यमवोचं पुरानघे । तमिमं ते प्रवक्ष्यामि योगं सर्वांगनैपुणम्" इत्युक्तेः ( २ ) आलंबनं ध्यानविषयः स च विष्णुरेव तस्यैव सर्वबीजत्वात् "बीजं विष्णुर्हि जगतः शाखास्सर्वा हि देवताः" इति तीर्थोक्तेः । नृपात्मजायास्तव सालम्बनयोग एवाधिकारो निरालंबनस्य स्त्रीबुद्ध्यवस्थितेरसंभवात् "स्त्रीत्वान्मातुस्तिरो दधे" इति प्रह्लादोक्तेः "योषाहं मंदधीर्हरे" इति देवहूत्युक्तेश्चेति संबुद्ध्यभिप्रायः । विधिना प्रकारेण तत्प्रकारकं लक्षणं सतो ब्रह्मणः पंथाः प्राप्तिमार्गस्तम् " ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति

स्वधर्माचरणं शक्त्या विधर्माच्च निवर्तनम् ॥ दैवाल्लब्धेन संतोष आत्मविच्चरणार्चनम् ॥ २ ॥ ग्राम्यधर्मनिवृत्तिश्च मोक्षधर्मरतिस्तथा ॥ मितमेध्यादनं शश्वद्विविक्तक्षेमसेवनम् ॥ ३ ॥ अहिंसा सत्यमस्तेयं यावदर्थपरिग्रहः ॥ ब्रह्मचर्यं तपः शौचं स्वाध्यायः पुरुषार्चनम् ॥ ४ ॥ मौनं सदासनजयः स्थैर्यं प्राणजयः शनैः ॥ प्रत्याहारश्चेंद्रियाणां विषयान्मनसा हृदि ॥ ५ ॥ स्वधिष्ण्यानामेकदेशे मनसा प्राणधारणम् ॥ वैकुण्ठलीलाऽभिध्यानं समाधानं तथात्मनः ॥ ६ ॥ एतैरन्यैश्च पथिभिर्मनो दुष्टमसत्पथम् ॥ बुद्ध्या युंजीत शनकैर्जितप्राणो ह्यतंद्रितः ॥ ७ ॥ शुचौ देशे प्रतिष्ठाप्य विजितासन आसनम् ॥ तस्मिन् स्वस्ति समासीन ऋजुकायः समभ्यसेत् ॥ ८ ॥ प्राणस्य शोधयेन्मार्गं पूरकुंभकरेचकैः ॥ प्रतिकूलेन वा चित्तं यथा स्थिरमचंचलम् ॥ ९ ॥

सालंबनस्य प्रसन्नं सत् सत्पथं ब्रह्ममार्गम् ॥ १ ॥ तत्र यमनियमानाह त्रिभिरक्षरद्वयाधिकैः । शक्त्या स्वधर्माचरणम् ॥ २ ॥ ग्राम्यस्त्रैवर्गिको धर्मस्तस्मान्निवृत्तिः मितं च तन्मेध्यं शुद्धं च तस्यादनम् । तत्र मितं नाम । "द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत ॥ मारुतस्य प्रचारार्थं चतुर्थमवशेषयेद्" इति स्मृतिप्रसिद्धम् । विविक्तं विजनं क्षेमं निर्बाधं तस्य स्थानस्य सेवनम् ॥ ३ ॥ यावताऽर्थः प्रयोजनं तावन्मात्रस्य परिग्रहः ॥ ४ ॥ आसनादीन्यंगान्याह त्रिभिः । सत् आसनस्य जयेन स्थैर्यम् ॥ ५ ॥ स्वधिष्ण्यानां प्राणस्थानानां मूलाधारादीनां मध्ये एकस्मिन्देशे मनसा सह प्राणस्य धारणं धारणा । आत्मनो मनसः समाधानमात्माकारता ॥ ६ ॥ अन्यैश्च व्रतदानादिभिः पथिभिरुपायैः ॥ ७ ॥ आसनादीनि प्रपंचयति । शुचाविति यावत्समाप्ति । आसनं कुशाजिनचैलोत्तरं प्रतिष्ठाप्य स्वस्तिकासनेन यथासुखमिति वा समभ्यसेत्प्राणमिति शेषः । "ऊरू जंघांतराधाय पादाग्रे जानुमध्यगे ॥ योगिनो यदवस्थानं स्वस्तिकं तद्विदुर्बुधाः" ॥ ८ ॥ बाह्यवायोरंतःप्रवेशनं पूरकः प्रवेशितस्य धारणं कुंभकः धृतस्य बहिर्निःसारणं रेचकः । प्रतिकूलेन वा रेचककुंभकपूरकैः । यद्वा इडयापूर्य पिंगलया रेचनं पिंगलयापूर्य

श्रगितोक्तेः ॥ १ ॥ शक्त्या-यथाशक्ति विधर्माद्धर्मबाधरूपात् "धर्मबाधो विधर्मः स्यात्" इति सप्तमे वक्ष्यमाणत्वात् । धर्मबुद्ध्या क्रियमाणेन येन धर्मस्य बाधो नाशो भवेत्स विधर्मो यथा चैत्यवंदनादिः चात्पर धर्मादयोपि ग्राह्यास्ते च " विधर्मः परधर्मश्च आभास उपमा छलः । अधर्मशाखाः पञ्चेमा धर्मज्ञोऽधर्मवत्त्यजेत्" इति । "धर्मबाधो विधर्मः स्यात्परधर्मोन्यनोदितः । यः स्वेच्छया कृतः पुंभिराभोसा ह्याश्रमात्पृथक् ॥ उपधर्मस्तु पाखण्डो दम्भो वा शब्दभिच्छलः ।" इत्येवं सप्तमे वक्ष्यते । आत्मविदां सगुणनिर्गुणब्रह्मविदां चरणयोरर्चनम् ॥ २ ॥ त्रैवर्गिको धर्मार्थकामप्रधानः ॥ ३ ॥ ब्रह्मचर्यं स्त्रीसंगादित्यागः । तपः कृच्छ्रादि । शौचं बाह्याभ्यंतरम् । मृज्जलादिसाध्यं बाह्यं, भावशुद्धिरूपमांतरम् । स्वाध्यायः स्वशाखोचितवेदजपः । पुरुषार्चनं वेदाद्युक्तविधिना भगवत्पूजनम् ॥ ४ ॥ आदिना प्रत्याहारादिग्रहः । मौनं यथार्थमितभाषणम् । सतः पद्मासनादिषु श्रेष्ठस्यासनस्याक्लिष्टस्येत्यर्थः ॥ ५ ॥ मूलाधारादीनामित्यत्रादिना स्वाधिष्ठानादिग्रहः । एकदेशे मूलाधाराद्यन्यतमे वैकुंठस्य हरेर्लीलायाः सृष्ट्यादिरूपाया अभिध्यानं सततं स्मरणम् ॥ ६ ॥ आदिना तीर्थसेवादिग्रहः । असत्पथं विषयमार्गगमत एवं दुष्टं युंजीत सन्मार्गे योग इति शेषः ॥ ७ ॥ पूर्वं कुशासनं तदुपरि मृगचर्मादि तदुपरि चैलमौर्णादिवस्त्रमिति प्रतिष्ठाप्य एकदेशन्यायाश्रयापेक्षयाऽनन्यलभ्यार्थमुचितं मत्वाह—यथासुखमिति, वेति । स्मृत्यर्थस्तु—जंघांतर्जंघयोरंतराले ऊरूजानुनोर्मध्यगे पादाग्रे चाधाय शेषं स्पष्टम् ॥ ८ ॥ ग्रन्थांतरसंमत्या प्रकारांतरमाह—यद्वेति । इडया

मनोऽचिरात्स्याद्विरजं जितश्वासस्य योगिनः॥ वाय्वग्निभ्यां यथा लोहं ध्मातं त्यजति वै मलम् ॥ १० ॥ प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्बिषान् ॥ प्रत्याहारेण संसर्गान्ध्यानेनानीश्वरान्गुणान् ॥ ११॥ यदा मनः स्वं विरजं योगेन सुसमाहितम्॥ काष्ठां भगवतो ध्यायेत्स्वनासाऽग्रावलोकनः॥१२॥ प्रसन्नवदनांभोजं पद्मगर्भारुणेक्षणम् ॥ नीलोत्पलदलश्यामं शंखचक्रगदाधरम् ॥१३॥ लसत्पंकजकिंजल्कपीतकौशेयवाससम् ॥ श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकंधरम्॥१४॥मत्तद्विरेफकलया परीतं वनमालया॥परार्ध्यहारवलयकिरीटांगदनूपुरम्॥१५॥काञ्चीगुणोल्लसच्छ्रोणिं हृदयांभोजविष्टरम् ॥ दर्शनीयतमं शांतं मनोनयनवर्धनम् ॥ १६॥ अपीच्यदर्शनं शश्वत्सर्वलोकनमस्कृतम् ॥ संतं वयसि कैशोरे भृत्यानुग्रहकातरम् ॥ १७ ॥ कीर्तन्यं तीर्थयशसं पुण्यश्लोकयशस्करम् ॥ ध्यायेद्देवं समग्रांगं यावन्न च्यवते मनः ॥ १८ ॥

इडया रेचनमित्येवं प्रतिकूलेन । वाशब्दश्चार्थे । स्थिरं सत्पुनरपि चंचलं यथा न भवति तथा शोधयेत् ॥ ९ ॥ ध्मातं संतप्तमित्यर्थः । लोहं सुवर्णं यथा मलं त्यजति तथा मनो विरजं स्यात् । ततश्चंचलं न स्यादिति भावः ॥ १० ॥ प्राणायामादीनां समाधौ द्वारकार्याण्याह । प्राणायामैरिति । दोषान्वातश्लेष्मादीन् संसर्गान्विषयसंसर्गान् । अनीश्वरान् रागादीन् । वायुना सह मनसः स्थिरीकरणं धारणा । स्थिरस्य वृत्तिसंततिर्ध्यानम् । वृत्तिनिरोधः समाधिरिति भेदः ॥ ११ ॥ सुसमाहितं स्थिरं जातम् । काष्ठां कलां मूर्तिमित्यर्थः । स्वनासाग्रेऽवलोकनं यस्य । एतच्च लयविक्षेपयोः परिहाराय ॥ १२ ॥ ध्येयं हरिमाह सप्तभिः । प्रसन्नं वदनांभोजं यस्य तं ध्यायेदिति षष्ठेनान्वयः । पद्मगर्भवदरुणे ईक्षणे नेत्रे यस्य नीलोत्पलदलवच्छ्यामम् ॥ १३ ॥ लसत्पंकजस्य किंजल्कवत्पीते कौशेये वाससी यस्य श्रीवत्सो लांछनं वक्षसि यस्य भ्राजत्कौस्तुभेनामुक्ता संश्लिष्टा कंधरा यस्य ॥ १४ ॥ मत्तद्विरेफाणां कलो मधुरो ध्वनिर्यस्यां तया परीतं व्याप्तम् । परार्ध्यान्यमूल्यानि हारादीनि यस्य ॥ १५ ॥ कांचीगुणेनोल्लसंती श्रोणी यस्य। भक्तानां हृदयांभोजमेव विष्टरमासनं यस्य । भक्तानां मनोनयनानि वर्द्धयति हर्षयतीति तथा ॥१६॥ अपीच्यमतिसुंदरं भक्तविषयं दर्शनं यस्य कैशोरे तारुण्ये वयसि संतं स्थितम् । भृत्यानामनुग्रहे कातरं व्यग्रम् ॥ १७ ॥ कीर्तन्यं कीर्तनार्हं तीर्थं यशो यस्य पुण्यश्लोका

वामनासया पिंगलया दक्षिणनासया । तदुक्तं तत्त्वानुसंधाने ''इडया पिब षोडशभिः पवनं चतुरुत्तरषष्टिकमौदरिकम् । त्यज पिंगलया शनकैःशनकैर्दशभिर्दशभिर्दशभिर्द्व्यधिकैः'' इति । षोडशादिसंख्या चात्र मात्राणां प्रणवोच्चारणस्य वा ज्ञेयेति । अत्राकारप्रश्लेषेप्यर्थभेदो नास्तीति ॥ ९ ॥ इत्यर्थ इति । धमतेरग्निसंयोगार्थत्वमपीति भावः । लोहं पीतलोहं तच्च हेमलोहस्याष्टविधत्वमेकादशेऽर्चनोपाख्याने व्याख्यास्याम इति । इति भाव इति । रजस एव चालकत्वं सांख्यैरुक्तमित्याशयः ॥ १० ॥ द्वारकार्यं प्रवेशनम्' । किल्बिषान् जन्मान्तरसंचितपापानि । तत्र धारणादीनां भेदमाह—वायुनेत्यादिना । वृत्तिसंततिः प्रत्ययैकतानता । तथा च पातंजलसूत्राणि । ''देशबंधश्चित्तस्य धारणा'' ( १ ) ''तत्र प्रत्ययैकतानता ध्यानम् ( २ ) ''तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः'' ( ३ ) ॥११॥ इत्यर्थ इति । '' काष्ठोत्कर्षे सीम्नि दिशि '' इत्यभिधानादुत्कृष्टं स्वरूपमिति भावः । संदर्भस्तु—काष्ठा दिक् अवधिः परमस्वरूपमिति यावदित्याह ॥ १२ ॥ चतुर्थं पद्ममपि ज्ञेयं योग्यत्वात् ॥ १३ ॥ श्रीवत्सो रोमावर्त्तो भृगुपादाचिह्नं वा तथैव श्रीदशमे व्याख्यास्यमानत्वात् । कं शिरो धरतीति कंधरा ग्रीवा ॥ १४ ॥ १५ ॥ १६ ॥ तारुण्ये तरुणसमीपे '' कैशोरमापंचदश'' इत्युक्तेः । '' व्यग्रे कृशे कातरं स्यात्'' । इति कोशात् ॥ १७ ॥ तीर्थं सर्वदोषहरम् ॥ १८ ॥

स्थितं व्रजंतमासीनं शयानं वा गुहाशयम् ॥ प्रेक्षणीयेहितं ध्यायेच्छुद्धभावेन चेतसा ॥ १९ ॥ तस्मिँल्लब्धपदं चित्तं सर्वावयवसंस्थितम् ॥ विलक्ष्यैकत्र संयुज्यादंगे भगवतो मुनिः ॥ २० ॥ संचिंतयेद्भगवतश्चरणारविंदं वज्रांकुशध्वजसरोरुहलांछनाढ्यम् ॥ उत्तुंगरक्तविलसन्नखचक्रवालज्योत्स्नाभिराहतमहद्धृदयांधकारम् ॥ २१ ॥ यच्छौचानिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवोऽभूत् ॥ ध्यातुर्मनःशमलशैलनिसृष्टवज्रं ध्यायेच्चिरं भगवतश्चरणारविंदम् ॥ २२ ॥ जानुद्वयं जलजलोचनया जनन्या लक्ष्म्याऽखिलस्य सुरवंदितया विधातुः ॥ ऊर्वोर्निधाय करपल्लवरोचिषा यत्संलालितं हृदि विभोरभवस्य कुर्यात् ॥ २३ ॥

बलिप्रमुखास्तेषां यशस्करम् । समग्राण्यंगानि यस्मिन् न च्यवते नापयाति न पर्येति वा ॥ १८ ॥ प्रेक्षणीयमीहितं लीला यस्य ॥ १९ ॥ तदेवं समग्रध्यानमुक्त्वैकैकावयवध्यानमाह । तस्मिँल्लब्धं पदं स्थितिर्येन तच्चित्तं विलक्ष्य विशेषेण लक्षीकृत्य । एकत्रैकैकस्मिन्नंग इत्यर्थः ॥ २० ॥ तदेव पादादिक्रमेणाह त्रयोदशभिः । सम्यक् चिंतयेत् पादतले रेखात्मकानि वज्रादीनि लांछनानि तैराढ्यं युक्तम् । उत्तुंगाश्च रक्ताश्च विलसंतो नखास्तेषां चक्रवालं मंडलं तस्य जोत्स्नाभिराहतो महतां ध्यातॄणां हृदयांधकारो येन । एतच्च सर्वमुपादेयविशेषणं ध्येयत्वेनैवोच्यते ॥ २१ ॥ किं च यस्य शौचेन क्षालनेन निःसृतायाः सरित्प्रवराया गंगाया उदकेन तीर्थेन संसारतारकेण मूर्ध्न्यधिकृतेन धृतेन शिवोऽपि शिवोऽभूत् अत्यधिकं सुखं प्रापेत्यर्थः । ध्यातुर्मनसि यः शमलशैलः पापपर्वतस्तस्मिन्निसृष्टं क्षिप्तं वज्रमिव यत् । यद्वा । शमलशैले निसृष्टं स्वलांछनरूपं वज्रं येन तत् ॥ २२ ॥ विभोर्जानुद्वयं तत्पर्यंतं जंघाद्वयमखिलस्य विधातुर्ब्रह्मणो जनन्या लक्ष्म्या संलालितं स्पर्शचातुर्येण संसेवितम् । संसारित्वमिव प्रतीतं वारयति । अभवस्येति । हृदि कुर्याद्ध्यायेत् ॥ २३ ॥

विश्वनाथस्तु–प्रसंगतो रागानुगीयभक्तानामपि ध्येयां लीलामाह–स्थितं वैकुंठे । वृंदावनीयकल्पतरुमूले च व्रजंतं वैकुंठाद्गोष्ठाच्च वनाय । आसीनं रक्तसिंहासने गोवर्द्धनश्रृंगे च । शयानं शेषपर्यंके गोवर्द्धनगुहायाञ्च । शुद्धभावं शुद्धाभिप्रायं चेतस्तदा तेन प्रेक्षणीयं जालरंध्राद्बहिः स्थित्वैव द्रष्टुमर्हमीहितं क्रीडा चेष्टितं यस्य तम् ॥ १९ ॥ लक्ष्यीकृत्य ज्ञात्वा । इत्यर्थ इति । झटिति बुद्ध्यारोहार्थमेकैकांगं ध्यायेदिति भावः ॥ २० ॥ तदेव ध्यानमेव वज्रेति । दक्षिणचरणतलध्यानं तस्यैव कल्पतरुमूले तिष्ठतस्त्रिभंगललितस्य कृष्णस्य भक्तैर्हृद्यत्वात् । दक्षिणचरणस्य कनिष्ठातलेंकुशं ध्यायेदंकुशतले वज्रमनामिकातले सरोरुहं सरोरुहतले ध्वजमेवमंगुष्ठतले यवचक्रादिकं ज्ञेयम् । अंधकारोत्र पापम् । एतच्च वज्रांकुशादि उपादेयस्य ध्येयत्वेन स्वीकृतस्य पादारविंदस्य विशेषणम् ॥ २१ ॥ अन्यदपि चरणोत्कृष्टमाह किञ्चेति । यस्यांघ्रेः । इत्यर्थ इति । अद्यैवाहमेतद्धृत्या शिवोऽभूवमित्यभिमन्यते स्मेति भावः । इवेत्युपमानोत्तरसमासे लुप्तोपमायां च । गौरवं मत्वाह–यद्वेति । एवमेव यच्चरणारविंदं ध्यातुर्भक्तस्य मनोहस्तिनः स्ववर्त्मन्यानेतुमंकुशं धत्ते मनःसरसीमलं कर्तुं कमलं मनसे सर्वोत्कर्षसाम्राज्यं दातुं ध्वजं सर्वोत्कृष्टयशो दातुं यवं त्रिविधतापोपशमनाय छत्रं सर्वतो रक्षणार्थं चक्रादिकमपिधत्त इत्यपि ज्ञेयम् ॥ २२ ॥ शयानं ध्यायेदित्युक्तमतः शेषपर्यंके शयानस्य विभोर्जानुद्वयं हृदि कुर्यादिति । जलजलोचन

ऊरू सुपर्णभुजयोरधि शोभमानावोजोनिधी अतसिकाकुसुमावभासौ ॥ व्यालंबिपीतवरवाससि वर्तमानकांचीकलापपरिरंभि नितंबबिंबम् ॥ ॥ २४ ॥ नाभिह्रदं भुवनकोशगुहोदरस्थं यत्रात्मयोनिधिषणाखिललोकपद्मम् ॥ व्यूढं हरिन्मणिवृषस्तनयोरमुष्य ध्यायेद्द्वयं विशदहारमयूखगौरम् ॥ २५ ॥ वक्षोऽधिवासमृषभस्य महाविभूतेः पुंसां मनोनयननिर्वृतिमादधानम् ॥ कंठं च कौस्तुभमणेरधिभूषणार्थं कुर्यान्मनस्यखिललोकनमस्कृतस्य ॥ २६ ॥ बाहूंश्च मंदरगिरेः परिवर्तनेन निर्णिक्तबाहुवलयानधिलोकपालान् ॥ संचिंतयेद्दशशतारमसह्यतेजः शंखं च तत्करसरोरुहराजहंसम् ॥ २७ ॥ कौमोदकीं भगवतो दयितां स्मरेत दिग्धामरातिभटशोणितकर्दमेन ॥ मालां मधुव्रतवरूथगिरोपघुष्टां चैत्यस्य तत्त्वममलं मणिमस्य कंठे ॥ २८ ॥

सुपर्णस्य भुजयोः स्कंधयोरधि उपरि ओजसो बलस्य निधी आधारौ अतसिकायाः कुसुमवत्कांत्यावभासमानौ व्यालंबि आगुल्फं लंबमानं यत्पीतांबरं वासस्तस्मिन्वर्तमानो यः कांचीकलापस्तेन परिरंभः संश्लेषो विद्यते यस्य तद्विभोर्नितंबबिंबं च। हृदि कुर्यादिति पूर्वेणैवान्वयः ॥ २४ ॥ अमुष्य हरेर्नाभिह्रदं ध्यायेत् । कथंभूतम् । भुवनानां कोशस्य समूहस्य गुहाधिष्ठानं यदुदरं तत्र स्थितम् । यत्र नाभिह्रदे आत्मयोनेर्ब्रह्मणो धिषणं धिष्ण्यमखिललोकात्मकं पद्मं व्यूढमुत्थितम् । तथा हरिन्मणिवृषौ मरकतमणिश्रेष्ठाविव यौ स्तनौ तयोर्द्वयं ध्यायेत्। विशदहाराणां मयूखैर्गौरं श्वेतम् ॥ २५ ॥ ऋषभस्य महाविभूतेर्महालक्ष्म्या अधिवासं स्थानं वक्षः कंठं च मनसि कुर्यात् । कथंभूतं कंठम् । कौस्तुभमणिर्यो भूषणार्थं धृतस्तस्याधिकं भूषणमर्थः प्रयोजनं यस्य कौस्तुभमणिमेव स्वयमलंकुर्वंतमित्यर्थः । पुंसां स्मर्तॄणां द्रष्टॄणां च मनोनयनानां निर्वृतिमादधानमित्युभयोर्विशेषणम् ॥ २६ ॥ निर्णिक्तान्युज्ज्वलीकृतानि बाहुवलयान्यंगदानि येषु अधिश्रिता लोकपाला येषु दशशतारं चक्रम् । न सह्यं तेजो यस्य करसरोरुहे राजहंस इव तम् ॥२७॥ अरातयो ये भटा योद्धारस्तेषां शोणितमेव कर्दमस्तेन दिग्धां लिप्ताम्। अस्य कंठे मालां मणिं च स्मरेत्। मधुव्रतानां वरूथस्य गिरा उपघुष्टां नादिताम् । चैत्यस्य जीवस्य तत्त्वम् । तदुक्तं वैष्णवे । "आत्मानमस्य जगतो निर्लेपमगुणामलम् ॥ बिभर्ति कौस्तुभमणिं स्वरूपं भगवान् हरिः"

येति । तल्लोचनाभ्यां निर्बाधमेवास्वादितलावण्यमित्यर्थः । इदमेव जानुनोर्जंघयोश्च माधुर्य्यमैश्वर्यमेवमग्रेपि ज्ञेयम् ॥ २३ ॥ व्रजंतं ध्यायेदित्युक्तमतः पृथुध्रुवादिभ्यो वरं दातुं गच्छतो गरुडारूढस्य हरेरूरुद्वयं हृदि कुर्यादिति । नितंबयोर्बिम्बं मंडलम् ॥ २४ ॥ यद्वा । हरिन्मणिवर्णो वृषो धर्मो यत्र तथाभूतयोस्तनयोरिति 'धर्मस्तनादक्षिणतः' इत्युक्तेस्तस्य दक्षिणस्तनस्य धर्मकारणत्वात् । श्वेतामिति दक्षिणस्तनोपरि दक्षिणावर्तश्वेतश्रीवत्सरेखामपि हारकांतिमिव ध्यायेदिति सूचितम् ॥ २५ ॥ इत्यर्थ इति । कंठेनैव मणिशोभा कृतेति भावः ॥ २६ ॥ समुद्रं मथतो हरेर्बाहूंश्चिंतयेत् ॥ २७ ॥ मणेर्जीवस्वरूपत्वे

भृत्यानुकंपितधियेह गृहीतमूर्तेः संचिंतयेद्भगवतो वदनारविंदम् ॥ यद्विस्फुरन्मकरकुंडलवल्गितेन विद्योतितामलकपोलमुदारनासम् ॥ २९ ॥ यच्छ्रीनिकेतमलिभिः परिसेव्यमानं भूत्या स्वया कुटिलकुंतलबृंदजुष्टम् ॥ मीनद्वयाश्रयमधिक्षिपदब्जनेत्रं ध्यायेन्मनोमयमतंद्रित उल्लसद्भ्रु ॥ ॥ ३० ॥ तस्यावलोकमधिकं कृपयाऽतिघोरतापत्रयोपशमनाय निसृष्टमक्ष्णोः ॥ स्निग्धस्मितानुगुणितं विपुलप्रसादं ध्यायेच्चिरं विपुलभावनया गुहायाम् ॥ ३१ ॥ हासं हरेरवनताखिललोकतीव्रशोकाश्रुसागरविशोषणमत्युदारम् ॥ संमोहनाय रचितं निजमाययाऽस्य भ्रूमडलं मुनिकृते मकरध्वजस्य ॥ ३२ ॥

इति ॥ २८ ॥ भृत्येष्वनुकंपिता कृतानुकंपा या धीस्तया गृहीता मूर्तिर्येन तस्य विस्फुरती ये मकरकुंडले तयोर्वल्गितेन प्रचलनेन विद्योतितावमलौ कपोलौ यस्मिंस्तत् । उदारा उन्नता नासा यस्मिंस्तत् ॥ २९ ॥ यच्च स्वया भूत्या शोभयाऽलिभिः परिसेव्यमानं मीनद्वयाश्रयं च श्रीनिकेतनं पद्ममधिक्षिपद्वर्तते तद्ध्यायेत् । तत्र कुंतलै रलीनामधिक्षेपः नेत्रद्वयेन मीनद्वयस्येति द्रष्टव्यम् । अब्जे इव नेत्रे यस्मिन्नित्युपमानांतरम् । उल्लसंत्यौ भ्रुवौ यस्मिन् मनोमयं मनस्याविर्भवत् ॥ ३० ॥ कृपयाऽधिकम त्यर्थम् । अक्षिभ्यां निसृष्टं प्रयुक्तम् । स्निग्धस्मितेनानुगुणितं संयुक्तम् । विपुलः प्रसादो यस्मिन् । गुहायां हृदि ॥ ३१ ॥ अवनता येऽखिललोकास्तेषां तीव्रशोकेन यान्यश्रूणि तेषां सागरं विशोषयतीति तथा तं हरेर्हासम् । अस्यात्युदारं भ्रूमंडलं च ध्यायेत् । कथंभूतम् । निजमायया मकरध्वजस्यापि संमोहनाय रचितं मुनिकृते

पुराणांतरसंमतिमाह—तदुक्तमिति । स्पष्टोर्थः ॥ २८ ॥ यद्वाऽनुकंपितमनुकंपा कृपा तदात्मिका तन्मयी वा या धीस्तया स्ववासार्थं गृहीता मूर्तिर्यस्य हे मत्स्वरूपशक्तिसारभूतानुकंपे इह मर्त्यलोके मन्मूर्तिषु मध्ये यामिच्छसि तां स्वनिर्भरानिवासार्थं गृहाणेत्युक्ते तया विविविच्य रामकृष्णमूर्ती एव विशेषतो गृहीते इत्यर्थः । यदिति मकरकुंडलयोर्वल्गनं खलु पार्श्वद्वयस्थ पार्षदसंचालितचामरहेतुकेन मारुतेन वा ययस्यगणनर्मोक्तिहेतुकेन शिरःकंपेन वा सहचरीगणनृत्यगीतवाद्यतालतानाद्यास्वादनसाधुत्वख्यापनहेतुकया ग्रीवाभंग्या ज्ञेयम् । अमलेति । कपोलयोर्मसृणमणिदर्पणायमानत्वं तयोश्चलन्मकरकुण्डलद्वयप्रतिबिंबेन नटन्तौ नयनखंजनौ नृत्योपाध्यायौ भूत्वा स्वतलस्थलमायातं मकरचतुष्टयं नर्त्तयत इवेत्युत्प्रेक्षा गम्या । 'उदारो दातृमहतोः' इत्यभिधानान्नासिकायास्तदास्वादनसभ्यत्वेन सर्वस्वदातृत्वम् ॥ २९ ॥ यच्च वदनारविंदं तत्र वदनांगेषु उल्लसंत्यौ भक्तेषु कृपाद्योतनायेति ॥ ३० ॥ तस्य हरेः । यद्वाऽन्वनुगुणितं पौनःपुन्येनस्फीतनीकृतं प्रथमं द्विगुणितं ततस्त्रिगुणितादिक्रमेण कोटिकोटिगुणितामित्यर्थः । अत एव विपुलः प्रसादो यत्रेति तत् । विपुलभावनया विततभक्त्या ॥ ३१ ॥ लोका भक्तास्तेषां दास्यसख्यादिभाववतां तद्विरहोत्थत्वात्तीव्रो यः शोकाश्रुसागरस्तं विशेषेण शोषयतीति । अत्युदारं शोकसागरादुद्धृत्यानंदसागरे निमज्जनं ददानमित्यर्थः । यद्वा । सांसारिकतीव्रदुःखशोकाश्रुसागरशोषणत्वेन हासस्य संसारातीतप्रेमानंदाश्रुसागरवर्द्धनत्वं ध्वन्यते तेन चंद्रत्वेप्यद्भुतत्वं प्रसिद्धं चंद्रो हि क्षीरोदं बर्द्धयतीति । इत्यर्थ इति । पत्रांबुभोजि

ध्यानायनं प्रहसितं बहुलाधरोष्ठभासाऽरुणायिततनुद्विजकुंदपंक्ति ॥ ध्यायेत्स्वदेहकुहरेऽवसितस्य विष्णोर्भक्त्यार्द्रयार्पितमना न पृथग् दिदृक्षेत् ॥ ॥ ३३ ॥ एवं हरो भगवति प्रतिलब्धभावो भक्त्या द्रवद्धृदय उत्पुलकः प्रमोदात् ॥ औत्कंठ्यबाष्पकलया मुहुरर्द्यमानस्तच्चापि चित्तबडिशं शनकैर्वियुंक्ते ॥ ३४ ॥

मुनीनामुपकाराय मुनीनां संमोहने प्रवृत्तं काममेव संमोहयितुमित्यर्थः ॥ ३२ ॥ मंदहासध्यानमुक्त्वा स्फुटहासध्यानमाह । विष्णोः प्रहसितमुच्चैर्हसितं ध्यायेत् । कीदृशम् । ध्यानायनमतिसुंदरतया प्रयत्नं विनैव ध्यानस्य विषयभूतम् । सौंदर्यमेवाह । बहुलयाऽधिकयाऽधरोष्ठस्य भासा कांत्याऽरुणीभूतास्तनवः सूक्ष्मा द्विजा एव कुंदमुकुलानि तेषां पंक्तिः स्फुरति यस्मिंस्तत् । देहकुहरे हृदयाकाशेऽवसितस्य ज्ञातस्य प्रेमरसेनार्द्रया भक्त्या तस्मिन्नेवार्पितमनाः सन्पृथक् तद्व्यतिरिक्तं द्रष्टुं नेच्छेत् न चित्तं विचालयेदित्यर्थः ॥ ३३ ॥ समाधिमाह । एवमिति द्वाभ्याम् । नीर्बीजः सबीजश्चेति द्विविधो योगः तत्र निर्बीजयोगो "यतो यतो निश्चरति मनश्चंचलमस्थिरम् ॥ ततस्ततो नियम्यैतदात्मन्येव वशं नयेत्" इति गीताद्युक्तमार्गेण क्रियमाणोऽपि दुष्करः समाधिः । सबीजे तु सुकरः तत्र हि परमानंदमूर्तौ हरौ ध्यायमानेऽयत्नत एव चित्तोपरमो भवति । तदुक्तम् । "हृतात्मो हृतप्राणांश्च भक्तिरनिच्छतो मे गतिमण्वीं प्रयुंक्ते" इति । अतः स एवोपक्षिप्तो योगस्य लक्षणं वक्ष्ये सबीजस्येति तदेवायत्नसिद्धत्वं दर्शयति । एवं ध्यानमार्गेण हरौ प्रतिलब्धो भावः प्रेम येन तथा भक्त्या द्रवद्धृदयं यस्य प्रमोदादुद्गतानि पुलकानि यस्य औत्कंठ्यप्रवृत्तयाश्रुकलया च मुहुरर्द्यमान आनंदसंप्लवे निमज्जमानो

नस्तपस्यतोपि मुनीनयं द्वेष्टीति कोपेनेवेति भावः ॥ ३२ ॥ प्रेक्षणीयेहितं ध्यायेत् इत्युक्तमतः क्वापि रहसि कुसुमतल्पमध्यासीनस्य स्वप्रेयसीमतिसौरभलोभेन श्रवणनयननासामुखादिसमीपमजहतः कदाचिद्भ्रमरस्य झंकारेण त्रस्तां शश्वद्भ्रूजोत्क्षेपरसनोन्नमनग्रीवानयनादिचापल्यवर्तीं रसिकशेखरपदयोस्ते पतामि दुष्टमिमं विद्रावयेति सकाकुव्याहरतीं पश्यतः शृणु भो भृंगाधिपेमामद्य मा जहीहि मुंचेति निगदतो भगवतः प्रहसितं ध्यायेत् । इत्यर्थ इति । पुरुषार्थसारादन्यस्याधिकवस्तुनोऽसंभवाद्भक्तानामेतदास्वादानंदमोह एव समाधिरिति भावः । एवं नवांगभक्तेस्तृतीयमंगमेतद्भगवदवताररूपगुणलीलामाधुरीधुरीणमपि ध्यानमष्टांगयोगप्रसंगे यदुक्तं तत्खलु योगमहागह्वराद्योगिनोपि भक्तिरससुधार्णवे मज्जयितुमेव दृश्यते च "परिनिष्ठितोपि नैर्गुण्ये उत्तमश्लोकलीलया । गृहीतचेता राजर्षे आख्यानं यदधीतवान्" इति । "अद्वैतवीथीपथिकैरुपास्याः स्वानंदसिंहासनलब्धदीक्षाः । हठेन केनापि वयं शठेन दासीकृता गोपवधूविटेन" इति तत्तदुक्तिभिर्महायोगिनोपि वैयासकिबिल्वमंगलादयो महदनुग्रहवशाद्भक्तिरस एव निमज्जंत एवेति ॥ ३३ ॥ निर्बीजः निरालंबनः । सबीजः सालंबनः तावेवासंप्रज्ञातसंप्रज्ञातौ स्तः । पतंजलिना सूत्रितावपि "ता एव सबीजः समाधिः" पा० १॥ सू० ४६॥ ताः पूर्वोक्ताः समापत्तयः सवितर्काद्याः । सह बीजेनालंबनेन वर्तते इति सबीजः संप्रज्ञातः ( १ ) "तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः" पा० १॥ सू० ५१ ॥ तस्य संप्रज्ञातस्य निरोधे प्रविलये सति सर्वासां चित्तवृत्तीनां स्वकारणे प्रविलयाद्या या संस्कारमात्रा वृत्तिरुदेति तस्यांतस्यां नेतिनेति पर्युदसनान्निर्बीजः समाधिराविर्भवति । यस्मिन्सति पुरुषः स्वरूपमात्रनिष्ठो भवतीत्यर्थः ( २ ) तत्र द्विविधयोर्मध्ये यतोयतो विषयात् एतन्मनः । तत्रहि–सबीजे हि । तत्–चित्तोपरमणम् । अतः अयत्नतश्चित्तोपरमात् । स एव–सबीज एव । उपक्षिप्त–उपन्यस्तः । इत्यर्थ इति । तद्रूप्यं प्राप्तत्वादिति भावः । अत्र विश्वनाथः–यस्त्वतिमंदो महदननुगृहीत एतामपि ध्यानमाधुरीमुपभुज्याप्यलब्धास्वादनिष्ठो जिहासति स तु योगी योग एव प्राप्तनिष्ठोपि योगिष्वपि निकृष्ट एव भक्तैव

मुक्ताश्रयं यर्हि निर्विषयं विरक्तं निर्वाणमृच्छति मनः सहसा यथाऽर्चिः॥आत्मानमत्र पुरुषोऽव्यवधानमेकमन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः॥३६॥

दुर्ग्रहस्य भगवतो ग्रहणे बडिशं मत्स्यवेधनमिवोपायभूतं चित्तमपि ध्येयाद्वियुंक्ते तद्धारणे शिथिलप्रयत्नो भवतीत्यर्थः ॥ ३४ ॥ यर्हि यदैवं निर्विषयं भवत्यत एव दीयमानमेकाविंशतिप्रकारदुःखनाशपूर्वकप्रत्यगात्मानुभवात्मकं मोक्षं प्राप्नोति न तु ब्रह्मानुभवात्मकं मोक्षमित्याह–एवमित्यादि यावदध्यायसमाप्ति । हरौ भगवतीति मनोहरत्वाद्भगषड्कवत्वाच्च माधुर्य्यैश्वर्यामृत परिपूर्णोपि प्रतिलब्धभावः । श्लेषेण प्रतिरूपतयैव न त्वनुरूपतया लब्धो भावो येन सः अत्र खल्वपिशब्दः सर्वत्रान्वेति प्रतिलब्धभावोपि, द्रवद्धृदयोपि, उत्पुलकोपि औत्कंठ्यहेतुकया बाष्पकलयाश्रुभागेन मुहुरर्द्यमानोपि, तच्चापि तस्मादपि स्वरूपाच्चित्तवडिशं वियुंक्ते वियोजयति 'ज्ञानं च मयि संन्यसेत्' इति विधिवद्भक्तिसंन्यासे विध्यभावात् । प्रत्युत ''भक्त्यार्द्रयार्पितमना न पृथग्दिदृक्षेत्'' इति निषेधविधेः सद्भावादयं मंदधीः स्वेच्छयैव वियोजयतीत्यर्थः वियुंज्यादिति विध्यप्रयोगात् । यतोऽस्य चित्तं बडिशमतस्तादृशोपि सन् तस्मादपि माधुर्य्यमयस्वरूपाद्वियोजयतीति विषयरसौत्कर्ष्यद्रवीकरणार्थं भगवन्माधुर्य्ये निक्षिप्तं यच्चित्तं तस्य तन्माधुर्य्यौत्कर्ष्यस्यापि निवृत्तये तच्चित्तं ततोपि निवर्तयतीत्यर्थः । शनकैरिति । चित्तस्य सम्यग्युक्तत्वे वियोजनं खलु दुर्घटमेवातोऽसम्यग्योग एव सत्यभ्यासेन शनैःशनैर्द्वित्रिनिवारेण चतुःपंचवारेण वा सप्ताष्टवारेण वाऽवश्यमेव वियोजयतीति । बडिशं ह्यश्मसारमयं भवति अतः स्वर्णरूप्यादिवन्न नवनीतादिवद्द्रवी भवति किं तु वह्नितापांधिक्यवशात्किञ्चिद्द्रवदेव तत्क्षण एव पुनः कठोरं च भवत्यतो द्रवद्धृदय इति न तु द्रुतहृदय इत्युक्तं यथा बडिशं खलु गंगादितीर्थजलनित्यस्नानपरमपि कुटिलमरसज्ञं यथा च मीनलोभनमिष्टपिष्टान्नखंडेनावृतमुखत्वाद्दांभिकं च तथैव विगीतयोगिनश्चेतोपि तीर्थपूतमपि कठोरं कुटिलं भगवदा-कर्षकध्यानभक्त्यावृतमुखत्वाद्दांभिकं च 'धर्मः प्रोज्झितकैतवः' इत्यत्र स्वामिचरणैः प्रशब्देन मोक्षाभिसंधेरपि कैतवत्वव्याख्यानात् कैवल्येच्छा कैतवदोषादेव येन सर्वश्रेष्ठापि ध्यानरूपा श्रीभक्तिदेवी योगांगत्वेनोपासितापि पश्चात्त्यक्ता तस्य योगिचित्तबडिशस्य स्पर्शो भगवतोपि कष्टकर एवातस्तद्वियोगे भगवानेव तस्मै हारिततादृशचित्तबाडिशाय योगिधीवराय मोक्षमेवैकाविंशतिप्रकारदुःखनिवृत्तिपूर्वकप्रत्यगात्मानुभवरूपं ददाति न तु परमात्मानुभवरूपं मोक्षं यस्तु भगवद्गीतोक्तोऽष्टांगयोगी भगवद्ध्यानमजहदेव दृष्टस्तस्मै तु परमात्मानुभवरूपमपि मोक्षं ददातीत्याहुर्भागवतरसिकाः । यतः स कदाचिदपि न ध्येयाद्भगवन्मधुररूपाद्वियोक्तुमीष्टे यथोक्तं राज्ञा ''धौतात्मा पुरुषः कृष्णपादमूलं न मुंचति । मुक्तसर्वपरिक्लेशः पांथः स्वशरणं यथा'' इति । उद्धवेन च ''तस्याखिलात्मदयितेश्वरमाश्रितानां सर्वार्थदं स्वकृतविद्विसृजेत को नु'' इति श्रीनारदेन च ''स्मरन्मुकुंदाध्युपगूहनं पुनर्विहातुमिच्छेन्न रसग्रहो यतः'' इति रसग्रह इत्यनेन योगिष्वापि मध्ये श्रीशुकप्रभृतय एवाभिनंदिताः । अत्रैव पूर्वश्लोके ''भक्त्यार्द्रयार्पितमना न पृथग्दिदृक्षेत्'' इति । अर्पितमना इति । भगवते मनः समर्प्य तस्मिन्मनसि स्वत्वाभावात्कथं तस्मात्ताद्वियोजयेत् । कथं वा दत्तापहारी भवेदिति तथात्वे निंदा दुर्निवारैव भगवानपि भक्तानामेव हृदि तिष्ठति न योगिनः तदुक्तं ब्रह्मणा ''भक्त्या गृहीतचरणः परया च तेषां नापैषि नाथ हृदयांबुरुहात्स्वपुंसाम्'' इति । आविर्होत्रेण च 'विसृजति हृदयं न यस्य' इत्यादि । संदर्भस्तु–बडिशर्जाविकसादृश्येन तस्य निकर्ष एव ज्ञापितः न तु 'स्वसुखनिभृतचेता' इत्यादौ रुचिरपदेन श्रीव्याससूनोर्लोभनीयां लीलां प्रशंसति वाक्ये तद्विधस्यैव तस्योत्कर्षः प्रतिपादितः ''आराधनं भगवत ईहमाना निराशिषः । ये तु नेच्छंत्यपि परं ते स्वार्थकुशला नराः'' द्वयोरनयोरधिकारिणावुत्तरत्र विलक्षणायां निष्ठायां परमनिदानत्वं महत्संगवैलक्षण्यमेव ज्ञेयं यदेव सर्वत्र मूलमिति । तैर्दर्शनीयावयवैरित्यादौ हृतात्मन इत्यादिकं तु नात्रोदाह्रियते 'तस्य नैकात्मताम्' इत्यादिशुद्धभक्तप्रकरणपाठाद्यथादर्शितमेव व्याख्यानं युक्तमिति । तदेतत्सोदाहरणं श्रीकपिलदेववाक्यं ''भक्त्या पुमाञ्जातविराग ऐन्द्रियात्'' इत्यादिकमपि ज्ञेयं तथाहि अस्य पूर्वत्र 'श्रद्धा रतिर्भक्तिरनुक्रमिष्यति' इति भक्तिमात्रं दार्शितमुत्तरत्र भक्तलक्षणे पृष्टे तल्लक्षणं वदता तेन ''भक्तिः सिद्धेर्गरीयसी'' इति ''नैकात्मतां मे स्पृहयन्ति केचित्'' इति च मोक्षनिरपेक्षतयैव तस्य मुख्याभिधेयत्वमुक्तं 'जरयत्याशु या कोशम्' इत्यनेन कोशध्वंसस्य तु तदानुषंगिकगुणत्वमुक्तम् । 'अत्र भक्त्या पुमानि'त्यादौ तु तादृश्या अपि तस्या भक्तेर्ज्ञानादिसाहाय्यादेव मोक्षमात्रसाधकत्त्वमुक्त्वा गौणाभिधेयत्वमुक्तं तस्मादत्रापि तस्या भक्तेराभास एव प्रथमतो दार्शितः । एवं ''दृष्ट्वा तमवनौ सर्वे ईक्षणाह्लादविक्लवाः । दंडवत्पतिता राजञ्शनैरुत्थाय तुष्टुवुः'' इत्यत्र वृत्राख्यनाशस्वराज्यप्राप्तितात्पर्यवतां देवानां भक्त्याभासत्वमुदाहार्य्यम्॥३४॥निर्विषयं निरालंबम् । अत एव निर्विषयत्वादेव । अत्राक्षिप्य समाधत्ते न चेति । पूर्ववत् । एतदवस्थातः प्राग्वत् । तत्र शब्दादौ ।

सोऽप्येतया चरमया मनसो निवृत्त्या तस्मिन्महिम्न्यवसितः सुखदुःखबाह्ये ॥ हेतुत्वमप्यसति कर्तरि दुःखयोर्यत्स्वात्मन्विधत्त उपलब्धपरा त्मकाष्ठः ॥ ३६ ॥ देहं च तं न चरमः स्थितमुत्थितं वा सिद्धो विपश्यति यतोऽध्यगमत्स्वरूपम् ॥ दैवादुपेतमथ दैववशादपेतं वासो यथा परिकृतं मदिरामदांधः ॥ ३७ ॥

मुक्ताश्रयं च ध्येयसंबंधं विना ध्यातर्यवस्थानासंभवात् । न च पूर्ववच्छब्दादिर्विषयः स्यात् यतस्तत्र विरक्तं परमानंदानुभवेन अतो निर्वाणं लयमृच्छति । वृत्तिरूपतां परित्य ज्य ब्रह्माकारेण परिणमत इत्यर्थः । यथाऽर्चिर्ज्वालाऽऽश्रयविषयापगमे महाभूतज्योतीरूपेण परिणमते अत्रास्यां दशायामव्यवधानं ध्यातृध्येयविभागशून्यमेकमखंडमा त्मानमनुगतमीक्षते । अत्र हेतुः प्रतिनिवृत्तोऽपगतो गुणप्रवाहो देहाद्युपाधिर्यस्य ॥ ३५ ॥ न च सुप्तोत्थित इव पुनः संसरतीत्याह । सोऽपि स एव पुरुषस्तस्मिन्म हिम्नि ब्रह्मरूपेऽवसितोऽवसानं निष्ठां प्राप्तः । कया । मनसो निवृत्त्या चरमयाऽविद्यारहितयेति सुषुप्ताद्विशेषः तत्र ह्यविद्याऽस्ति न त्विदानीम् । अत्र हेतुः । एतया योगाभ्यासकृतयेत्यर्थः । नन्वेवमपि सुखदुःखयोरात्मधर्मत्वे कुतो ब्रह्मैक्यं तत्राह । दुःखयोः सुखदुःखयोर्हेतुत्वं भोक्तृत्वं च यत्पूर्वमासीत्तदप्यसत्याविद्याकृते कर्तर्यहंकारे विधत्ते तन्निष्ठमेव पश्यतीत्यर्थः । यत उपलब्धपरात्मकाष्ठोऽपरोक्षीकृतात्मतत्त्वः ॥ ३६ ॥ तस्य जीवन्मुक्तिमाह । देहं चेति द्वाभ्याम् । चरम उक्तलक्षणः सिद्धो देहमपि न विपश्यति कुतः सुखदुःखे आसनादुत्थितमुत्थाय तत्रैव स्थितं तत्स्थानादपेतं ततो दैववशात्पुनरप्युपेतं वा न विपश्यति यतः स्वरूपं प्राप्तः यतो देहात्स्व रूपमध्यगमत्तं देहमिति वा । सतोऽप्यननुसंधाने दृष्टांतः । वासः परिकृतं कटितटे परिवेष्टितं स्थितं गतं वा मदिरामदेनांधो यथा न पश्यति ॥ ३७ ॥

इत्यर्थ इति 'गुणानुरक्तं व्यसनाय जंतोः' इत्यारभ्यान्यदास्वं''पदं तथा गुणकर्मानुबद्धं वृत्तीर्मनः श्रयतेन्यत्र तत्त्वम् । यथा प्रदीपो घृतवर्तिमश्नञ्छिखाः सधूमा भजति ह्यन्यदास्वम्'' इत्युक्तेरिति भावः । आश्रयविष यापगमे ज्वालादीपकलिकातैलवर्त्यादिराहित्ये स्वरूपं महाभूतत्वं प्राप्नोति । अत्रात्मैकत्वान्वीक्षणे ॥ ३५ ॥ अत्राक्षिप्य समाधत्ते न चेति । सुप्तोत्थितः सुषुप्त्युत्थितः । तत्र सुषुप्तौ इदानीं जीवन्मुक्तिदशायाम् । अत्रा विद्यानिवृत्तौ । इत्यर्थ इति । योगाभ्यासो ज्ञानयोगाभ्यासो ब्रह्माभ्यास इति यावत् । तच्चिंतनं तत्कथनमन्योन्यं तत्प्रबोधनम् । ''एतदेकपरत्वं हि ब्रह्माभ्यासं विदुर्बुधाः'' इत्युक्तेः । पुनराक्षिपति-नन्विति । एवमप्य विद्यानिवृत्तावपि । सुखदुःखयोर्हेतुत्वं सुखदुःखहेतुकर्मकर्तृत्वं पूर्वमज्ञानावस्थायामहंकारे स्वात्मत्वाभिमानादात्मनि यत्कर्तृत्वं भोक्तृत्वं चासीत्तदपीति तन्निष्ठमहंकारस्थम् । इत्यर्थ इति । स्वस्मिन्नहंकाराभावादिति भावः । दुःखयोरिति नैकशेषः । सरूपत्वाभावात् ''सरूपाणामेकशेष एकविभक्तौ'' इति पाणिन्युक्तेः । अत्र हि दुःखयोरिति द्विवचनेन सुखस्यापि दुःखत्वमेव तदवस्थायाम् । ''परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः'' पा० २॥ सू० १५॥ इति पतंजल्युक्तेः ॥ ३६ ॥ तस्यापरोक्षीकृतात्मतत्त्वस्य अपेतमन्यत्र गतं, ततः स्थानांतरात् । उपेतं प्राप्तं देहादर्शने हेतुः यत इत्यादि । ननु ज्ञाततत्त्वस्यापि देहानुसंधानं दृश्यत

देहोऽपि दैववशगः खलु कर्म यावत्स्वारंभकं प्रतिसमक्षित एव सासुः ॥ तं सप्रपंचमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ॥ ३८ ॥ यथा पुत्राच्च वित्ताच्च पृथङ् मर्त्यः प्रतीयते ॥ अप्यात्मत्वेनाभिमताद्देहादेः पुरुषस्तथा ॥ ३९ ॥ यथोल्मुकाद्विस्फुलिंगाद्धूमाद्वाऽपि स्वसंभवात् ॥ अप्यात्मत्वेनाभिमतात्तदाग्निः पृथगुल्मुकात् ॥ ४० ॥ भूतेंद्रियांतःकरणात् प्रधानाज्जीवसंज्ञितात् ॥ आत्मा तथा पृथग्द्रष्टा भगवान् ब्रह्मसंज्ञितः ॥ ४१ ॥ सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ॥ ईक्षेतानन्यभावेन भूतेष्विव तदात्मताम् ॥ ४२ ॥

ननु तर्हि देहस्य कथं प्रवृत्तिनिवृत्ती जीवनं वा तत्राह । देहोऽपीति । दैवं पूर्वसंस्कारस्तद्वशे गच्छन्यावत्स्वारंभकं कर्मास्ति तावत्प्रतिसमीक्षते जीवत्येव सासुः सेंद्रियः । ननु तर्हि तस्मिन्पुनः संगः स्यात्तत्राह । तं देहं स्वाप्नदेहादितुल्यं सप्रपंचं पुत्रादिसहितं पुनर्न भजतेऽहंममेति नाभिमन्यते अधिरूढः प्राप्तः समाधिपर्यंतो योगो येन अत एव प्रतिबुद्धं वस्त्वात्मतत्त्वं येन सः ॥ ३८ ॥ प्रतिबोधप्रकारमाह षड्भिः । यथेति । अतिस्नेहवशादात्मत्वेनाभिमतादपि पुत्रादेः मर्त्यः पित्रादिपुरुषो देहादेर्द्रष्टा ॥ ३९ ॥ पृथगवस्थानाभावेऽपि भेदं सदृष्टांतमाह । यथोल्मुकादिदानीं ज्वलतः काष्ठात् स्वसंभवादग्नेः संभूतात् आत्मत्वेनाग्नेः स्वरूपत्वेनाभिमतादपि अत्यंताविवेकिनो हि धूमेऽप्यग्न्यभिमानोऽस्ति उल्मुकात्पूर्वसिद्धादपि तद्दाहकः प्रकाशकश्चाग्निः पृथगेव ॥ ४० ॥ भूतादेर्द्रष्टा तेभ्यः पृथक् तस्मादपि जीवसंज्ञिताद्ब्रह्मसंज्ञितः पृथक् तथा प्रधानादपि तत्प्रवर्तको भगवान्पृथगित्यर्थः ॥४१॥ उपाधितो विवेकमुक्त्वा तस्यैक्यमाह । सर्वभूतेष्विति भूतेषु चतुर्विधेषु तदात्मतां महाभूतात्मताम् ॥४२॥

एवेति चेत्तत्राह यतो देहादित्यादि । अननुसंधानेऽनीक्षणे ॥ ३७ ॥ अत्राक्षिपति–नन्विति । पुनराक्षिपति-नन्विति । तस्मिन्देहे अत एवाधिरूढयोगत्वादेव ॥ ३८ ॥ देहादेरिहादिनेंद्रियादिग्रहः । द्रष्टा जीवः ॥ ३९ ॥ ननु यथा पुत्रवित्तादिभ्यो मर्त्यः पृथगवस्थितो दृश्यते न तथा देहेंद्रियादिभ्यो जीवात्मा ततोपि परमात्मा पृथक्कथमवगंतव्य इत्यत आह–पृथगवस्थानाभावेपीति । मायातत्कार्याभ्यां पृथग्भूतो जीवात्मनः सकाशात्परमात्मा पृथगेवेत्यत्रायं दृष्टांतः यथेति । अत्र यथाशब्दस्योल्मुकशब्दस्य च पौनरुक्त्यादेव स्वामिचरणैर्व्याख्यातमेवार्थं स्फुटयति यथा चोल्मुकात्पृथक्तथा विस्फुलिंगादपि यथा च विस्फुलिंगात्पृथक्तथा धूमादपि स्वकार्यात्पृथगिति । यद्वा । द्वितीययथाशब्दस्य यथावदित्यर्थः । द्वितीयोल्मुकादिति उल्मुकमत्ति ज्वलयतीत्युल्मुकादित्यग्निविशेषणम् ॥ ४० ॥ दार्ष्टांतिकं योजयति प्रधानादुल्मुकस्थानीयात् । जीवसंज्ञितात् जीवो यः संज्ञा चेतनां प्राप्तस्तस्माद्विस्फुलिंगस्थानीयाद्भूतेंद्रियांतःकरणाद्धूमस्थानीयात् । आत्मा परमात्माग्निस्थानीयः पृथग्यतो द्रष्टा स हि दृश्यात्पृथगेव सह स्थितोप्यसंगो यतो भगवानचिंत्यैश्वर्यः भगवानेव ब्रह्मसंज्ञां प्राप्तः कस्मिंश्चिदधिकारिणि निर्विशेषचिन्मात्रत्वेन भातश्च भवतीत्यर्थः । इत्यर्थ इति । चेतनाचेतनभेदस्याबालगोपालप्रसिद्धत्वादिति भावः ॥ ४१ ॥ तस्यात्मनः । विश्वनाथः–एवं सर्वस्मात्परमात्मनः पृथग्भूतत्वं विभाव्य तस्य

स्वयोनिषु यथा ज्योतिरेकं नाना प्रतीयते ॥ योगिनां गुणवैषम्यात्तथात्मा प्रकृतौ स्थितः ॥ ४३ ॥ तस्मादिमां स्वां प्रकृतिं दैवीं सदसदात्मिकाम् ॥ दुर्विभाव्यां पराभाव्य स्वरूपेणावतिष्ठते ॥ ४४ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे कापिलेयोपाख्याने अष्टांगयोगे साधनानुष्ठानं नामाष्टाविंशतितमोऽध्यायः ॥ २८ ॥ देवहूतिरुवाच ॥ लक्षणं महदादीनां प्रकृतेः पुरुषस्य च ॥ स्वरूपं लक्ष्यतेऽमीषां येन तत्पारमार्थिकम् ॥१॥ यथा सांख्येषु कथितं यन्मूलं तत्प्रचक्षते ॥ भक्तियोगस्य मे मार्गं ब्रूहि विस्तरशः प्रभो ॥२॥ विरागो येन पुरुषो भगवन्सर्वतो भवेत् ॥ आचक्ष्व जीवलोकस्य विविधा लोकसंसृतीः ॥ ३ ॥ कालस्येश्वररूपस्य परेषां च परस्य ते ॥ स्वरूपं बत कुर्वंति यद्धेतोः कुशलं जनाः ॥४॥ लोकस्य मिथ्याभिमतेरचक्षुषश्चिरं प्रसुप्तस्य तमस्यनाश्रये ॥ श्रांतस्य कर्मस्वऽनुविद्धया धिया त्वमाविरासीः किल योगभास्करः॥५॥

धर्मभेदस्याप्यौपाधिकतां सदृष्टांतमाह । स्वयोनिषु काष्ठेषु ज्योतिरग्निः गुणवैषम्याद्दीर्घह्रस्वादिभेदात् प्रकृतौ देहे ॥ ४३ ॥ स्वां स्वांशस्य जीवस्य बंधहेतुं दैवीं देवस्य विष्णोः शक्तिं पराभाव्य तत्प्रसादेनैव जित्वा स्वरूपेण ब्रह्मत्वेनावतिष्ठते ॥ ४४ ॥ इति श्रीमद्भागवते तृतीये टीकायामष्टाविंशतितमोऽध्यायः ॥ २८ ॥ एकोनत्रिंशके भक्तियोगस्तु बहुधोच्यते ॥ कालस्य च बलं घोरा संसृतिश्च विरक्तये ॥ १ ॥ उक्तानुवादपूर्वकं भक्तिमार्गभेदान्पृच्छति द्वाभ्याम् । लक्षणं महदादीनां यथा सांख्येषु तथा कथितम् । येन लक्षणेन तत् पारमार्थिकं परस्परविभक्तमित्यर्थः । यो भक्तियोगो मूलं प्रयोजनं यस्य तद्यन्मूलं तत्कथितम् । तस्य भक्तियोगस्य मार्गं प्रकारं विस्तरतो मे ब्रूहि ॥ १ ॥ २ ॥ येन संसृतीनामाख्यानेन विगतरागो भवेत् ॥ ३ ॥ ईश्वररूपस्य महाप्रभावस्य ते त्वदात्मकस्य यद्धेतोर्यद्भयात्कुशलं पुण्यं कुर्वंति ॥ ४ ॥ अचक्षुषोऽज्ञस्य अतो मिथ्याभूते देहादावभिमतिरहंकारो यस्य । अतः कर्मस्वनुविद्धया आसक्तया धिया श्रांतस्य अत एवानाश्रयेऽपारे तमसि संसारे

सर्ववस्तूनां कारणत्वं लयस्थानत्वं च पश्येदित्याह–सर्वभूतेष्विति । कारणस्यैव कार्यात्मत्वमित्यर्थः । कार्याणामपि लयस्थानत्वात्कारणरूपत्वमित्याह–सर्वेति ॥ ४२ ॥ परमात्मनः प्रतिदेहवर्त्तित्वेन नानात्वप्रतीतिर्भद्राभद्रादिप्रतीतिश्च न वास्तवीत्याह स्वयोनिष्विति ॥ ४३ ॥ यतः प्रकृतिरेव नानात्वदर्शायितृत्वादनर्थहेतुस्तस्मादित्यर्थः । स्वां स्वोपाधिम् । अत एव स्वामिचरणैस्स्वांशस्य बंधहेतुमिति व्याख्यातम् । देवस्येति । "देवात्मशक्तिं स्वगुणैर्निगूढाम्" इति श्रुतेः । दुर्विभाव्यां दुरत्ययां दुर्वितर्क्यां वा "दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यंते मायामेतां तरंति ते" इति श्रीगीतोक्तेर्भगवद्भक्त्यैव जित्वा स्वरूपेणानावृतचैतन्यरूपेण ॥ ४४ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धेऽष्टाविंशोऽध्यायः ॥ २८ ॥ घोराभयंकरा (१) उक्तस्य महदादिलक्षणस्यानुवादपूर्वकं तत्स्वरूपममीषां महदादीनाम् । इत्यर्थ इति । लक्षणं विना परस्परभेदज्ञानं न भवतीति भावः ॥ १ ॥ यन्मूलमिति । सांख्यविविक्तात्मरूपभगवज्ज्ञानं विना तद्भक्त्यनुपपत्तेरिति भावः । विश्वनाथस्तु–तत्स्वरूपज्ञानं यत्कारणकं प्रचक्षते यं विना तेषां स्वरूपं ज्ञातमप्यज्ञातमेवेत्यर्थमाह । प्रभो इति । कथनसामर्थ्यमाह ॥ २ ॥ भक्तौ प्रवेशाय किंचिद्वैराग्यमपेक्ष्यते तदर्थं पृच्छति विराग इति ॥ ३ ॥ ते त्वद्रूपस्य "कालोस्मि लोकक्षयकृत्प्रवृत्तः" इति गीतोक्तेः ॥ ४ ॥ अतो चक्षुष्ट्वात् । अतो मिथ्याभिमतित्वात् । अत एव श्रांतत्वादेव । तथा च मिथ्याभिमतेरभिमानजाड्यनिवर्त्तनायाचक्षुषश्चक्षुःप्रकाशनाय प्रसुप्तस्य स्वापतमोनाशायश्रांतस्य श्रमपल्वलशोषणाय योगयोर्भक्ति

मैत्रेय उवाच ॥ इति मातुर्वचः श्लक्ष्णं प्रतिनंद्य महामुनिः ॥ आबभाषे कुरुश्रेष्ठ प्रीतस्तां करुणाऽर्दितः ॥ ६ ॥ श्रीभगवानुवाच ॥ भक्तियोगो बहुविधो मार्गैर्भाविनि भाव्यते ॥ स्वभावगुणमार्गेण पुंसां भावो विभिद्यते ॥ ७ ॥ अभिसंधाय यो हिंसां दंभं मात्सर्यमेव वा ॥ संरंभी भिन्नदृग् भावं मयि कुर्यात्स तामसः ॥ ८ ॥ विषयानभिसंधाय यश ऐश्वर्यमेव वा ॥ अर्चादावर्चयेद्यो मां पृथग्भावः स राजसः ॥ ९ ॥ कर्मनिर्हारमुद्दिश्य परस्मिन्वा तदर्पणम् ॥ यजेद्यष्टव्यमिति वा पृथग्भावः स सात्त्विकः ॥ १० ॥ मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये ॥ मनोगतिरविच्छिन्ना यथा गंगांऽभसोंऽबुधौ ॥ ११ ॥

चिरं प्रसुप्तस्य लोकस्य प्रबोधाय त्वं योगप्रकाशको भास्करः किलाविर्भूतोऽसि ॥ ५ ॥ श्लक्ष्णं सुंदरम् ॥ ६ ॥ मार्गैः प्रकारविशेषैः तानेवाह । स्वभावभूता ये गुणास्तेषां मार्गेण वृत्तिभेदेन पुंसां भावोऽभिप्रायः फलसंकल्पभेदाद्भक्तिभेद इत्यर्थः ॥ ७ ॥ अभिसंधाय संकल्प्य संरंभी क्रोधी भिन्नदृक् भेददर्शी यो भावं भक्तिं कुर्यात्स त्रिविधोऽपि तामसः ॥ ८ ॥ पृथग्भावो भेददर्शी ॥ ९ ॥ कर्मनिर्हारं पापक्षयम् । परस्मिन्परमेश्वरे तदर्पणं कर्मार्पणम् । भगवत्प्रीतिमुद्दिश्येत्यर्थः । यष्टव्यमिति विधिसिद्धिमुद्दिश्येत्यर्थः । भेददर्शित्वमर्चादावर्चनं च त्रिष्वपि समानम् । तदेवं तामसादिभक्तिषु त्रयस्त्रयो भेदाः तासु यथोत्तरं श्रैष्ठ्यम् । एवं च श्रवणकीर्तनादयो नवापि प्रत्येकं नवनव भेदाः तदेवं सगुणा भक्तिरेकाशीतिभेदा भवति ॥ १० ॥ निर्गुणा तु भक्तिरेकविधैव तामाह । मद्गुणश्रुतिमात्रेणेति द्वाभ्याम् । मद्गुणश्रु

ज्ञानयोगयोः कमलयोर्भास्करः प्रकाशकोसीति भावः ॥ ५ ॥ इति भक्तिमहिमज्ञानजत्वात् । प्रीतः प्रश्नसौष्ठवेन । करुणा तु दैन्येन । महामुनिः श्रीकपिलः ॥ ६ ॥ देवानां गुणलिंगानामित्यनेन निर्गुणाया भक्तेरुक्तत्वादिह प्रथमं सगुणां भक्तिंलक्षयति भक्तियोग इति । भाविनि भावोऽभिप्रायस्तद्वति पुरुषे । भामिनीति पाठे तेजोवतीत्यर्थः संबुद्धिरियम् । भाव्यते ज्ञायते । तानेव मार्गानेव । इत्यर्थ इति । भक्तिः स्वरूपतो निर्गुणापि पुंसां स्वाभाविकतमआदिगुणोपरक्ता सती तामस्यादिनामभिः सगुणा भवतीति भावः ॥ ७ ॥ तत्र प्रथमं तामसीं भक्तिं लक्षयन्भक्तिस्तामसी स्यादिति वक्तुमनौचित्यं परामृशंस्तद्वान्पुरुष एव तामसादिशब्दैरुच्यते इत्याह—अभीति । भेददर्शी स्वस्मिन्निव परस्मिन्नपि सुखदुःखं समानं न पश्यतीति निरनुकंप इत्यर्थः । अस्यास्तामस्या भक्तेस्त्रैविध्यं बृहन्नारदीये स्पष्टमुक्तं यथा—"यश्चान्यस्य विनाशार्थं भजते श्रद्धया हरिम् । फलवत्पृथिवीपाल सा भक्तिस्तामसाधमा ॥ योर्चयेत्कैतवधिया स्वैरिणी स्वपतिं यथा । नारायणं जगन्नाथं सा वै तामसमध्यमा ॥ देवपूजापरान्दृष्ट्वा स्पर्द्धया योर्चयेद्धरिम् । शृणुष्व पृथिवीपाल सा भक्तिस्तामसोत्तमा " इति । एवं राजस्यास्सात्त्विक्याश्च भक्तेस्त्रैविध्यमुक्तं द्रष्टव्यम् ॥ ८ ॥ आदिना गुर्वादिग्रहः । पृथक् मत्तोन्यत्र विषयादिष्वेव भावः स्पृहा यस्य सः ॥ ९ ॥ कर्मनिर्हारमिति । यस्य भक्तेः कर्मनिर्हारमेव प्रयोजनमित्यर्थः । तदर्पणं कर्मार्पणं यथा स्यात्तथा यो यजेत् स्वधर्मार्पणप्रचुरां श्रवणादिभक्तिं यः कुर्यादित्यर्थः । इत्यर्थ इति । मत्कर्मणा भगवानेव प्रसीदतु नाहं किञ्चिदिच्छामीति भावः । इत्यर्थ इति । यष्टव्यं सर्वेषामिति नित्यविधिप्राप्तत्वेनावश्यमेव तत्पूजनं कर्त्तव्यं स्वाश्रमकर्मवदिति बुद्ध्यैव स्वाश्रमधर्माचरणपूर्वकं यो यजेत्पृथग्भावः भक्तेः पृथग्भूते मोक्षे भावोऽभिप्रायो यस्य सः यथोत्तरं तामसादिष्वधममध्यमोत्तमेषूत्तमभेदानां श्रैष्ठ्यम् प्रत्येकं न वेति अधममध्यमोत्तमभेदत्रयवत्सात्त्विकं श्रवणं तादृशे एव तामसराजसे श्रवणे एवं कीर्त्तनादीनामपि ज्ञेयम् । श्रवणादयो नव तु श्रवणं, कीर्त्तनं, स्मरणं, पादसेवनम्, अर्चनं वंदनं, दास्यं, सख्यम्, आत्मनिवेदनञ्चेति ॥ १० ॥ देवानां गुणलिङ्गानामित्यत्र लक्षितामेव निर्गुणां भक्तिं सुखबोधार्थं पुनर्लक्षयति मद्गुणश्रवणमात्रेणैव न तु तत्रोद्देशांतरसिद्धाभिप्रायेण मय्येव सर्वगुहाशये सर्वांतः

लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ॥ अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥ १२ ॥ सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ॥ दीयमानं न गृह्णंति विना मत्सेवनं जनाः ॥ १३ ॥ स एव भक्तियोगाख्य आत्यंतिक उदाहृतः ॥ येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते ॥ १४ ॥ निषेवितेनानिमित्तेन स्वधर्मेण महीयसा ॥ क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः ॥ १५ ॥

तिमात्रेण मयि पुरुषोत्तमे मनोगतिरिति या भक्तिः सा निर्गुणस्य भक्तियोगस्य लक्षणमित्यन्वयः अविच्छिन्ना संतता ॥ ११ ॥ लक्षणं स्वरूपम् अहैतुकी फलानुसंधान शून्या अव्यवहिता भेददर्शनरहिता च ॥ १२ ॥ भक्तानां निष्कामतां कैमुत्यन्यायेनाह । सालोक्यं मया सहैकस्मिंल्लोके वासम् । सार्ष्टिं समानैश्वर्यम् । सामीप्यं निकटवर्तित्वम् । सारूप्यं समानरूपताम् । एकत्वं सायुज्यम् । उत अपि दीयमानमपि न गृह्णंति कुतस्तत्कामनेत्यर्थः ॥ १३ ॥ किमिति तर्हि भजंते भक्तेरेव परमफल त्वादित्याह । स एवेति । ननु त्रैगुण्यं हित्वा ब्रह्मप्राप्तिः परमफलं प्रसिद्धम् । सत्यं तत्तु भक्तावानुषंगिकमित्याह । येन भक्तियोगेन मद्भावाय ब्रह्मत्वाय ॥ १४ ॥ एवं भूताया भक्तेः साधनान्याह । पंचभिः । निषेवितेन सम्यगनुष्ठितेन अनिमित्तेन स्वधर्मेण नित्यनैमित्तिकेन महीयसा श्रद्धादियुक्तेन क्रियायोगेन पंचरात्राद्युक्तपूजाप्रकारेण

करणवर्त्तिनि सुखध्येयमूर्त्तौ श्रीपुरुषोत्तमे मनसो गतिरविच्छिन्ना विषयांतरेणावच्छेत्तुं शक्या या नभवति तत्र दृष्टांतः यथांबुधौ गंगांभसो गतिरिति हेतोरेतदर्थमेव भक्तियोगस्य लक्षणमुदाहृतमित्यन्वयः । यतो निर्गुण श्रवणादिभक्तियोगेनैव मयि मनोगतिरविच्छिन्ना भवेदतो भक्तियोगं सलक्षणमुदाहृतमिति फलितोर्थः । अम्बुधिना स्वलहरीभिः परावर्त्तितस्याप्यंभसो यथांबुधावेवं गतिस्तथा मयापि पारमेष्ठ्यसार्ष्टिसालोक्यादिफलैः प्रलो भितस्यापि तस्य मय्येव गतिरिति । एवञ्च भक्तमनसो गंगाजलदृष्टांतेन द्रौत्यशैत्यपावित्र्यजगत्पूज्यत्वादीन्युक्तानि तदेवं लक्षणं किमित्यपेक्षायामाह—अहैतुकीति । हेतुः कारणं फलानुसंधानञ्च तद्रहिता । स्वप्रकाशत्वात्स्वतः फलरूपत्वाच्च नेयं ज्ञानयोगादिवदिति भावः । साधुसंगप्रेम्णोश्च प्रथमद्वादशभूतिकत्वादनयोर्हेतुत्वफलत्वे वस्तुत इति प्रथमस्कंधे एव व्याख्यातम् । अव्यवहिता ज्ञानकर्मादिव्यवधानशून्या या भक्तिः सैव निर्गुणेत्यर्थः । भक्ते रास्पदश्रद्धानिवाससुखादीनामपि निर्गुणत्वं "निर्गुणो मदपाश्रयः" इति । मत्सेवायां तु निर्गुणेति 'मन्निकेतं तु निर्गुणम्' इति "निर्गुणं मदपाश्रयम्" इत्येकादशस्कंधोक्तेः ॥११॥१२॥ इत्यर्थ इति । आत्यंतिकभक्तानां भक्ति रेवापेक्षिता "सत्याशिषो हि भगवंस्तवपादपद्ममाशीस्तथानुभजतःपुरुषार्थमूर्त्तेः" इति ध्रुवोक्तेरिति भावः॥१३॥ आक्षिप्य समाधत्ते किमितीति अत्यंते सर्वांते भव आत्यंतिकः । अत्राक्षिपति-नन्विति । तत्तु ब्रह्मप्राप्तिरूपमानुषं गिकम् । विश्वनाथस्तु—नन्वात्यंतिकशब्देन सायुज्यमुच्यते इत्याह भक्तियोगाख्यं भक्तियोगाख्यो भक्तिनामायं ततोप्यधिकफलमित्यर्थः । अत एवापवर्गशब्देन क्वचिद्ब्रह्मणि निर्वाणशब्देन चायमुच्यते यदुक्तं पञ्चमे "अपव र्गश्च भवति योसौ भगवत्यनन्यनिमित्तभक्तियोगलक्षणः" इति । सप्तमे च "अधोक्षजालंभमिह" इत्यादौ, "तद्ब्रह्मनिर्वाणसुखं विदुर्बुधाः" इति "हरावैकांतिकी भक्तिर्मोक्षमाहुर्मनीषिणः" इति पुराणान्तराच्च । भक्तिरस्य भजनं तदिहामुत्रोपाधिनैरास्येनामुष्मिन्मनःकल्पनमेतदेव नैष्कर्म्यमिति गोपालतापिनीश्रुतिश्च । ननु त्रिगुणमयाद्बंधान्मोक्ष एव परमं फलं प्रसिद्धं सत्यं तत्तु भक्तावानुषंगिकमिति स्वामिचरणैरुक्तमेव अतिव्रज्योल्लंघ्य मच्चरणा श्रयणमात्रेणैव संसारसिंधोर्गोष्पदायमानत्वे जाते तल्लंघनानुसंधानं भवतीति भावः । मद्भावाय मद्विषयकप्रेम्णे ॥ १४ ॥ निषेवितेन पूर्वपूर्वैः शुद्धभक्तैर्निषेवितेनांगीकृतेन स्वधर्मेणेति वा स च स्मृतिशास्त्रोक्तप्रमाणै मृज्जलादिभिर्देहवस्त्रपात्रादिद्रव्यशुद्धिविधिरूपो निर्मंत्रक एव ज्ञेयः । महीयसाऽर्चनादिभक्त्युपयोगित्वात्प्रशस्तेन । व्याख्यांतरे मत्कृते त्यक्तकर्माण इति मयादिष्टानपि स्वकान् धर्मान् संत्यज्येत्यादिभगवद्भक्तिस्तथात्र निषेवि

मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवंदनैः ॥ भूतेषु मद्भावनया सत्त्वेनासंगमेन च ॥ १६ ॥ महतां बहुमानेन दीनानामनुकंपया ॥ मैत्र्या चैवात्मतुल्येषु यमेन नियमेन च ॥ १७ ॥ आध्यात्मिकानुश्रवणान्नामसंकीर्तनाच्च मे ॥ आर्जवेनार्यसंगेन निरहंक्रियया तथा ॥ १८ ॥ मद्धर्मणो गुणैरेतैः परिसंशुद्ध आशयः ॥ पुरुषस्यांजसाऽभ्येति श्रुतमात्रगुणं हि माम् ॥ १९ ॥ यथा वातरथो घ्राणमावृंक्ते गंध आशयात् ॥ एवं योगरतं चेत आत्मानमविकारि यत् ॥ २० ॥ अहं सर्वेषु भूतेषु भूतात्माऽवस्थितः सदा ॥ तमवज्ञाय मां मर्त्यः कुरुतेऽर्चाविडंबनम् ॥ २१ ॥

शस्तेन निष्कामेन ॥ १५ ॥ मद्धिष्ण्यं मत्प्रतिमादि तस्य दर्शनादिभिः सत्त्वेन धैर्येण असंगमेन वैराग्येण ॥ १६ ॥ १७ ॥ आर्जवेनाकौटिल्येन ॥ १८ ॥ मद्धर्मणो भगवद्धर्मानुष्ठातुः पुरुषस्याशयश्चित्तम् ॥ १९ ॥ प्रयत्नं विनैव प्राप्तौ दृष्टांतः वातो रथः प्रापको यस्य गंधस्य आशयात्स्थानात् आवृंक्ते आत्मसात्करोति अविकारि समं यच्चेतः ॥ २० ॥ चित्तशुद्धिश्च सर्वभूतात्मदृष्ट्यैव भवतीति वक्तुं केवलप्रतिमादिनिष्ठां निंदन्नाह अहमिति सप्तभिः अर्चैव विडंबनमनुकरणम् । अर्चायां

तपदस्य वैयर्थ्यञ्च स्यात् ! नातिहिंस्रेण—इहातिपदेन भगवन्मंदिरमार्जनलेपनतदर्थान्नादिविविधनैवेद्यसाधनादिष्वतिदुर्वारदुर्लक्ष्यजीवहिंसनशाकपत्रमूलफलादित्रोटनादावपि न क्षतिरिति द्योतितम् ॥ १५ ॥ मद्भावनयांतर्यामित्वेन मच्चिंतनेन । सत्त्वेन धैर्येण ॥ १६ ॥ "अहिंसास्तेयब्रह्मचर्यापरिग्रहा यमाः" ॥ पा० २ ॥ सू० ३०॥ "शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः" ॥ पा० २॥ सू० ३२॥ इति पतंजलिः । ॥ १७ ॥ आध्यात्मिकमात्मानात्मप्रतिपादकं शास्त्रमिति संदर्भः । चक्रवर्त्ती तु—आध्यात्मिकस्यांतःकरणभवस्य दोषस्य गुणस्य चानुश्रवणादंतःकरणस्य भक्तौ प्रवर्त्तनार्थं तद्गुणदोषाववश्यं श्रोतव्यौ दंभाद्यंतःकरणदोषस्य स्वस्मिन्सति 'दंभं महदुपासनया जयेत्' इत्यादिविधौ भक्तप्रवृत्तिः स्यादित्याह । नामसंकीर्त्तनाच्च नामापराधत्यागेनैव कार्यम् । आर्याणां शास्त्रविदां संगेन निरहंक्रियया देहादिष्वहंतात्यागेन ॥ १८ ॥ मद्विषयकः श्रवणादिरेव धर्मो यस्य तस्य मद्गुणश्रुतिमात्रेणेत्युक्तलक्षणं साध्यं भक्तियोगं प्राप्नोति । अत्र शुद्धभक्तेः साध्यत्वेपि ज्ञानकर्ममिश्रभक्तिसाधनतया निर्देशः 'यन्मूलं तत्प्रचक्षते' इति देवहूतिप्रश्नानुसारात् । अनयापि मुमुक्षुमार्गश्रवणाय रुच्यति शयेनैव तथा पृष्टमिति ज्ञेयम् ॥ १९ ॥ यथा वातः पद्माकरस्थं गन्धं नासिकां प्रापयति तथैवायं भक्त्यंगसमुदायो भक्तियोगनिष्ठं चित्तं परमेश्वरं प्रापयतीत्यर्थः ॥ २० ॥ किं चैतादृशीमपि भक्तिमपराध एव संकोचयति । स चापराधः प्रायो महदवज्ञानमूलक एव ते च महांतो लोके दुर्लक्ष्या अपि बहवस्तिष्ठंत्यतस्तदपराधाभावार्थं सर्वभूतान्येव स्वेष्टदेवाधिष्ठानबुद्ध्या संमाननीयानि । तदभावे श्रीभगवद्विग्रहसेवापि न सम्यक्फलतीति वदन्नीश्वरत्वात्प्राणिसंमानमकुर्वते स्वभक्ताय हितकारित्वेन वात्सल्यात्कुप्यन्निव श्रीकपिलदेव आह—अहमित्यादिषड्भिः । तत्रावज्ञोपेक्षाद्वेषनिंदाः क्रमेण चतुर्भिर्निषिध्यंते । अर्चाकर्तृत्वं त्वर्चकेतराणामपि दृश्यतेऽतः कर्म

यो मां सर्वेषु भूतेषु संतमात्मानमीश्वरम् ॥ हित्वार्चां भजते मौढ्याद्भस्मन्येव जुहोति सः ॥ २२ ॥ द्विषतः परकाये मां मानिनो भिन्नदर्शिनः ॥ भूतेषु बद्धवैरस्य न मनः शांतिमृच्छति ॥ २३ ॥ अहमुच्चावचैर्द्रव्यैः क्रिययोत्पन्नयाऽनघे ॥ नैव तुष्येऽर्चितोऽर्चायां भूतग्रामावमानिनः ॥ २४ ॥ अर्चादावर्चयेत्तावदीश्वरं मां स्वकर्मकृत् ॥ यावन्न वेद स्वहृदि सर्वभूतेष्ववस्थितम् ॥ २५ ॥

पूजाविडंबनमिति वा अवज्ञोपेक्षाद्वेषनिंदाः क्रमेण चतुर्भिर्निषिध्यंते ॥ २१ ॥ हित्वा उपेक्ष्य ॥ २२ ॥ २३ ॥ द्रव्यैरुत्पन्नया क्रियया भूतग्रामावमानिनस्तन्निंदकस्य ॥ २४ ॥ तर्हि किमर्चादावर्चनमनर्थकमेव नेत्याह । अर्चादाविति । सर्वभूतेष्ववस्थितं मां स्वहृदि यावन्न वेद स्वकर्मकृत्कर्माविरोधेन यथावकाशम् । अनेन

धारयेऽस्वारस्यमालक्ष्याह–अर्चायामिति । 'अर्चा पूजाप्रतिमयोः' इति धराणः ॥ २१ ॥ स भूतांतर्याम्युपेक्षकार्चार्चकः । संदर्भस्तु–मौढ्यात् । शैली दारुमयी वा काचित्प्रतिमेयमिति मूढबुद्धित्वात् । यः सर्वेषु भूतेषु वर्तमानं परमात्मानमीश्वरं मां हित्वा मयैक्यमविभाव्यार्चां मदीयां प्रतिमां पूजते । केवलं लोकरीतिदृष्ट्या तस्यै जलादिकमर्पयति । यथाग्निपुराणे श्रीदशरथहतात्मजतपस्विविलापे । "शिलाबुद्धिः कृता किं वा प्रतिमायां हरेर्मया ॥ किं मया पथि दृष्टस्य विष्णुभक्तस्य कर्हिचित् ॥ तन्मुद्रांकितदेहस्य चेतसा नादरः कृतः । येन कर्मविपाकेन पुत्रशोको ममेदृशः" इति । विष्णुधर्मेपि–"अर्चे विष्णोः शिलाधीर्गुरुषु नरमतिर्वैष्णवे जातिबुद्धिर्विष्णोर्वा वैष्णवानां कलिमलहरणे पादतीर्थेंबुबुद्धिः । शुद्धे तन्नाम्नि मंत्रे सकलकलुषहे शब्दसामान्यबुद्धिर्विष्णोः सर्वेश्वरेशे तदितरसमधीर्यस्य वा नारकी सः" इति । तस्य मूढस्य मद्दृष्ट्यभावात्सर्वभूतावज्ञापि भवतीति तथा तद्दोषेण भस्मनि यथा जुहोति कश्चित्तथा तस्याश्रद्दधानस्य फलाभाव इत्यर्थः । "ये शास्त्रविधिमुत्सृज्य यजंते श्रद्धयान्विताः" इत्याद्युक्तरीत्या लोकपरंपरया जातकिंचिच्छ्रद्धासद्भावे तु कनिष्ठभागवतत्वमेव "अर्चायामेव हरये पूजां यः श्रद्धयेहते । न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः" इत्येकादशोक्तेः । यद्यपि यथाकथंचिद्भजनस्यैव फलावश्यंभावतास्त्येव तथापि न झटिति भवतीति तथोक्तम् । वक्ष्यते च 'अर्चादावर्चयेत्तावत्' इत्यादिना ॥२२॥अवज्ञामात्रस्य तादृशत्वे सुतरां तु द्विषत इति । भिन्नदर्शिनः सर्वत्रांतर्याम्येकत्वदृष्टिरहितस्य स्वस्य दुःखमिवान्यस्य दुःखं समानमित्यजानत इति भावः । मानिनो देहाहंकारिणः अत एव बद्धवैरस्य तथा च महाभारते "पितेव पुत्रं वरुणो नोद्वेजयति यो नरः । विशुद्धस्य हृषीकेशस्तूर्णं तस्य प्रसीदति" इति ॥२३॥ द्रव्यैर्गंधाद्यैरुत्पन्नया साधितया क्रिययाऽर्चया । अनघे इत्यामंत्रयंस्तस्यास्तत्राधिकारं द्योतयति । निंदकस्य "न तथा तप्यते विद्धः पुमान्बाणैर्हि मर्मगैः । यथा तप्यंति मर्मस्था ह्यसतां परुषेषवः " इत्युक्तेर्निन्दाद्वेषादप्यधिकेति नायं व्युत्क्रम इत्यभिप्रेत्य न द्वेषात्पूर्वमसौ पठितेति ॥ २४ ॥ अत्राक्षिपति तर्हीति । संदर्भस्तु–तदेवमीश्वरज्ञानाभावाद्भक्तावश्रद्दधानस्य दोष उक्तः । अथ तच्छ्रद्धाहेतुतज्ज्ञानस्य स्वधर्मसंयुक्तदर्चनमेव कारणमुपदिशंस्तादृशार्चनस्याप्यत्यर्थतां स्वीकरोति अर्चादाविति । तत्र स्वकर्मसहायत्वमजातश्रद्धस्य शुद्धभक्तावनधिकारात् । तत्प्रतिपादयिष्यते ' जातश्रद्धो मत्कथासु ' इत्यादिनाऽतो भगवज्ज्ञानादूर्ध्वं जातश्रद्धस्तु स्वकर्मकृन्नार्चयेत् किं तु शुद्धमर्चादिकमेव कुर्वीतेत्यायातं तच्च तावत्कर्माणि कुर्वीतेत्यादिना प्रतिपादयिष्यते न त्वर्चां परित्यजेदित्यर्थः । " प्रतिष्ठितार्चा न त्याज्या यावज्जीवं समर्चयेत् । वरं प्राणपरित्यागः शिरसो वापि कर्त्तनम् " इति हयशीर्षपंचरात्रोक्तेः । ये च पामराः " न तस्य प्रतिमास्ति " इति श्रुतिमाश्रित्य प्रतिमार्चनं नांगी कुर्वीते श्रुत्यर्थानभिज्ञतयोपेक्ष्या एव । तत्र प्रतिमापदं सादृश्यपरम् " मूर्तौ तुल्ये च प्रतिमा " इति निघंटूक्तेः । प्रतिमार्चनस्य श्रुतिप्रोक्तत्वादावश्यकत्वम् । तथा च श्रुतिः–"अरं दासो न मीढुषे कराण्यहं देवाय भूर्णयेऽनागाः । अचेतयदचितो देवोऽअर्यो गृत्सं राये कवितरो जुनाति" इति । अर्थश्च–न शब्द इवार्थः अहं मीढुषे–भूयसीं धनस्य वृष्टिं कृतवते स्वामिने । दासो न दास इव । देवाय चतुर्भुजमूर्त्तयेऽलंकराणि अलंकरवाणि 'प्रार्थनायां लोट् ' यथा दासाः स्वामिनं स्रक्चंदनमुकुटादिनालंकुर्वंत्येवमहं पार्थिवं नंदनंदनविग्रहं भूषयेयमित्यर्थः । अनागा निषिद्धाचरणवर्जितः । ननु चेतनो ह्यलंक्रियमाणः सद्यः फलं ददाति किमचेतनायालं

आत्मनश्च परस्यापि यः करोत्यंतरोदरम् ॥ तस्य भिन्नदृशो मृत्युर्विदधे भयमुल्बणम् ॥२६॥ अथ मां सर्वभूतेषु भूतात्मानं कृतालयम् ॥ अर्हयेद्दानमानाभ्यां मैत्र्याऽभिन्नेन चक्षुषा ॥ २७ ॥ जीवाः श्रेष्ठा ह्यजीवानां ततः प्राणभृतः शुभे ॥ ततः सचित्ताः प्रवरास्ततश्चेंद्रियवृत्तयः ॥ २८ ॥ तत्रापि स्पर्शवेदिभ्यः प्रवरा रसवेदिनः ॥ तेभ्यो गंधविदः श्रेष्ठास्ततः शब्दविदो वराः ॥ २९ ॥

कर्मनिष्ठाया अपि स एवावधिरित्युक्तं भवति ॥ २५ ॥ अंतरा अंतरं भेदम् । उत् अपि अरमल्पम् । अल्पमपि भेदं यः पश्यतीत्यर्थः । यद्वा अंतरा मध्ये उदरं शरीरम् । मृत्युरहं तस्य भयं विदधे करोमि ॥ २६ ॥ अथ अतः सर्वभूतेषु कृतावासम् । तत्र हेतुः । भूतानामात्मानमंतर्यामिणम् । अभिन्नेन चक्षुषा समदर्शनेन ॥ २७ ॥ तत्रापि यथोत्तरं मानायतिशयः कर्तव्य इति वक्तुं तारतम्यमाह । जीवा इति सार्द्धैः षड्भिः । अजीवानामचेतनेभ्यस्ततस्तेष्वपि प्राणभृतः प्राणवृत्तिमंतः सचित्ता ज्ञानवंतः इंद्रियाणां वृत्तयो येषु इंद्रियवृत्तयो वृक्षाणामपि सूक्ष्माः संत्येव । तथाहि महाभारते मोक्षधर्मेषु स्मर्यते । "तस्मात्पश्यंति पादपाः तस्माज्जिघ्रंति पादपाः" इत्यादि । प्रसिद्धा तु स्पर्शनेंद्रियवृत्तिरेव ॥ २८ ॥ अतस्तेभ्यः स्पर्शवेदिभ्यो रसबोदिनो मत्स्यादयः श्रेष्ठाः गंधविदो भ्रमरादयः शब्दविदः सर्पादयः ॥ २९ ॥

करणेनेत्यत आह । भूर्णये भूरि मनुष्यराजापेक्षयाधिकं द्रव्यं नयति भक्ताय प्रापयतीति भूर्णिस्तस्मै भूर्णये अचेतनोप्ययं सर्वान्कामान्दास्यतीति भावः । ननु दृष्टविरुद्धमेतत् । न हि प्रतिमाराधनेन धनं प्रतिमातः प्राप्यत इत्यत आह—अचेतयदिति । अर्यः भुक्तिमुक्तिकामैरभिगम्यः स्वामीदेवः प्रतिमादिरूपः । अचितश्चेतनारहितान्सर्वान्पिंडानचेतयच्चेतनायुक्तान्करोति अहल्यावत् भूतनिर्देशश्छांदसः । अयं भावः—देह इव प्रतिमायामपि तीव्रभावनावता चैतन्यं स्पष्टमुपलभ्यते प्रसिद्धं चैतत्प्रतिमोन्मेषणं मंत्रशास्त्रे उपाख्यायते च पुराणादौ तस्मात्प्रतिमायाश्चेतनाधिष्ठितत्वेन चेतनस्य च सर्वपुरुषार्थप्रवर्तकत्वेन ततः फलसंभावनास्तीति । एवं परमेश्वरे श्रीमाधवादिप्रतिमारूपे सर्वपुरुषार्थप्रदे सत्यपि कवितरो बुद्धिमत्तरो जनो गृत्सं प्राणं "प्राणो वै गृत्स" इति श्रुतेः । प्राणवंतं जीवंतं राजादिं राये धनार्थं जुनात्यनुसरति नानाविधैः काव्यैः क्षुद्रं प्रभुं प्रस्तौत्यहो दौर्भाग्यमस्येति श्रुतिरुरस्ताडं मंदानाक्रोशति कवितमस्तु परमेव नंदनंदनापरपर्यायं समस्तपुरुषार्थकामः शरणीकुर्यादिति भावः । स्थितं चैतद्वृत्तं महाभारतारंभे नीलकंठवर्णितम् ॥ २९ ॥ इत्यर्थ इति । "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति श्रुतेरिति भावः । अंतरेत्यस्य भेदार्थाप्रसिद्धेः प्रसिद्धार्थमाह यद्वेति । आत्मन उदरं परस्याप्युदरं यः भिन्नं करोति तस्य मृत्युस्वरूपोहमेव उदरं खलु जाठरानलज्वालायुक्तं यथात्मनस्तथा परस्यापीति ज्ञात्वा क्षुधार्त्तजीवमात्मानमिव भोजयेदेवान्यथा मृत्युभयं भवतीत्यर्थः ॥ २६ ॥ तत्र सर्वभूतकृतालयत्वे । विश्वनाथः—ननु पृथिव्यामनंता एव क्षुधार्त्ता जीवास्ते च दातारमायांत्येव तान्भोजयितुं कः प्रभू रंतिदेवनृप इव धैर्यं धत्त इत्यत आह—अथाथवा तेभ्यो यथेष्टदानासामर्थ्येपि मानादिभिरर्हयेत् "अथाथो संशये स्यातामधिकारे च मंगले । विकल्पानंतरप्रश्नेः कात्स्न्यारंभसमुच्चये" इति मेदिनी । किंच तेषु बुभुक्षुषु गालिप्रदानादिभिस्तिरस्कुर्वत्स्वपि प्रतितिरस्कारं न कुर्यात् । किन्तु तेष्वात्मनोप्याधिक्यान्मानेन स्तुत्यादिभिरादरेणार्हयेत् । यदुक्तं भगवता—"ये ब्राह्मणान्मयि धिया क्षिपतोर्चयंतस्तुष्यद्धृदः स्मितसुधोक्षितवक्त्रपद्माः" इत्यादि आत्मनस्तुल्यान् मैत्र्याभिन्नेनाविदीर्णेनाकुटिलेनेति यावत् । एवं निष्कैतवस्य व्यवहृत्यापि तेषु कुप्यत्स्वपि तदंतःस्थितः प्रभुस्तु न कुप्यादिति भावः ॥ २७ ॥ तत्रापि सर्वभूतेष्वपि । अजीवानामजीवद्भ्यो जीर्णसस्यादिभ्यः सकाशाज्जीवा अजीर्णसस्यादयः श्रेष्ठास्ततः प्राणभृतः भूमिष्ठजलाकर्षणवमनादिलिंगेन प्राणवृत्तिभृतो जीवत्पाषाणादयः ततः सचित्ताः पूर्वमुड्डयनादिचेष्टाः पश्चाद्द्रिवत्रेण शुष्का इति श्रवणादंतःसंज्ञानाः पर्वताः तेभ्योपि ॥२८॥ तत्रापि तेष्वपींद्रियवृत्तिभ्योपि दूरतोपि स्पर्शवृत्त्या दृष्ट्यादितुल्यया स्त्रोयमावकाशज्ञानिनो वृक्षादयः पूर्वपूर्वस्मादुत्तरोत्तरस्मिन्नेकैकगुणाधिक्येनाधिक्यम् । केचित्तु अजीवाः काष्ठाद्यास्सजीवाः पाषाणादयस्तेषां वृद्धिदर्श

रूपभेदविदस्तत्र ततश्चोभयतोदतः ॥ तेषां बहुपदः श्रेष्ठाश्चतुष्पादस्ततो द्विपात् ॥ ३० ॥ ततो वर्णाश्च चत्वारस्तेषां ब्राह्मण उत्तमः ॥ ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञोऽभ्यधिकस्ततः ॥ ३१ ॥ अर्थज्ञात्संशयच्छेत्ता ततः श्रेयान्स्वकर्मकृत् ॥ मुक्तसंगस्ततो भूयानदोग्धा धर्ममात्मनः ॥ ३२ ॥ तस्मान्मय्यर्पिताशेषक्रियाऽर्थात्मा निरंतरः ॥ मय्यर्पितात्मनः पुंसो मयि संन्यस्तकर्मणः ॥ न पश्यामि परं भूतमकर्तुः समदर्शनात् ॥ ३३ ॥ ( समदर्शिनरा नित्यं वैकुंठं तं व्रजंति ते ॥ ) मनसैतानि भूतानि प्रणमेद्बहु मानयन् ॥ ईश्वरो जीवकलया प्रविष्टो भगवानिति ॥ ३४ ॥

रूपभेदविदः काकादयः उभयतो दंता येषाम् । अपादेभ्यो बहुपादास्तेभ्यश्चतुष्पादा इत्यर्थः । ततो द्विपान्मनुष्यः ॥ ३० ॥ ततस्तेषु वर्णाः ॥ ३१ ॥ संशयच्छेत्ता मीमांसकः । ततोऽपि केवलात्स्वकर्मकृत् मुक्तसंगस्य लक्षणमात्मनो धर्ममदोग्धा निष्काम इत्यर्थः ॥ ३२ ॥ अर्पिता अशेषाः क्रिया अर्थास्तत्फलान्यात्मा देहश्च येन अत एव निरंतरोऽव्यवहितः अकर्तुः कर्तृत्वाभिमानशून्यात् ॥ ३३ ॥ जीवानां कलया परिकलनेन अंतर्यामितया प्रविष्ट इति दृष्ट्वेत्यर्थः ॥ ३४ ॥

नात् । प्राणभृतस्तृणादयो रसवृद्धिदर्शनात् । सचित्ता लताद्या वृक्षं प्रति चलनदर्शनात् । इंद्रियवृत्तयो वृक्षाः गृहीतपर्शुं दृष्ट्वा कंपनात् ।रसवेदिनः पिपीलिका मत्स्याद्याः स्वतंत्रव्यापारत्वात् । गंधविदो भ्रमराः । शब्दविदो हरिणसर्पादयः ॥ २९ ॥ रूपभेदविदो मर्कटादयः । उभयतोदतो अजादयः । बहुपदः शरभाद्याः । पक्षिणामपि गमनसाधनपक्षाभ्यां चतुष्पात्त्वमिति केचित् । एवमन्येषां चतुष्पात्त्वद्विपात्त्वादौ सत्यपि तादृशतत्तद्गुणाधिक्याभावाभावाभ्यां तारतम्यं ज्ञेयम् । विशेषस्तु शास्त्रादवसेयः। यथा गोवर्द्धनतुलस्यादिषु सर्वतोऽर्हणीयत्वम्॥३०॥ततस्तेषु।ततो वेदपाठमात्रज्ञेभ्यः॥३१॥ संशयच्छेत्ता ऊहापोहकुशलत्वेन प्रष्टृसंदेहवारकः । स्वकर्मकृद्विहितानुष्ठायी । इत्यर्थ इति । स्वकर्मफलेप्सूनां न मुक्तसंगत्वमिति भावः ॥३२॥ अत एव मदर्पिताशेषक्रियार्थत्वादेव।पुंस इत्यत्र सामान्यतः पुंमात्रग्रहे प्रकरणविरोधाद्ब्राह्मणस्यैव ग्रहणं पुंस्त्वमपि विशेषतो ब्राह्मण एव भयार्त्तानां क्षत्रादीनां पालकत्वात्तच्च प्रथितं भारतादिषु "पाल्या नार्यः समाख्याताः पालकः पुरुषो भवेत्" इत्यभियुक्तोक्तेः । "लोके पुरुषमेवेह ह्यनुयांति यथाबलाः ॥ प्रजाखिलास्तथा विप्रमतो विप्रः पुमान्स्मृतः" ॥ यद्वा । "धर्माधर्मोपदेशेन विप्रः पात्यखिलं जगत् । अतो विप्रः पुमान्प्रातेर्डुम्सुप्रत्यये बुधः" इति सहितोक्तेश्च । विश्वनाथस्तु–मयि मत्प्राप्त्यर्थं सन्यस्तकर्मणस्त्यक्तवर्णाश्रमधर्मात् 'मत्कृते त्यक्तधर्मणः' इति पूर्वोक्तेः । अकर्त्तुः मद्भक्तावपि भगवानेव मे भक्तिं कारयतीति बुद्ध्या स्वातंत्र्येण कर्तृत्त्वाभिमानशून्यात् । समदर्शिनः स्वस्य सममेव सुखदुःखादिकं पश्यतः यदुक्तं भगवता "आत्मौपम्येन सर्वत्र समं पश्यति योर्जुन । सुखं वा यदि वा दुःखं स योगी परमो मतः" इति । "विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि। शुनि चैव श्वपाके च पंडिताः समदर्शिनः" इत्युक्तलक्षणसमदर्शित्वग्रहे तु 'जीवाः श्रेष्ठा अजीवानाम्' इत्याद्युक्तविरोधः स्यात् ॥ ३३ ॥ इत्यर्थ इति । "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेरिति भावः । संदर्भस्तु–तदेवं प्रथमोपासकानां सर्वभूतादरो विहितः । सश्रद्धसाधकानां तु भगवद्वैभवसार्वत्रिकतास्फूर्त्या भगवत्येवासौ यथोक्तं स्कांदे "एते न ह्यद्भुता व्याध तवाहिंसादयो गुणाः । हरिभक्तौ प्रवृत्ता ये न ते स्युः परतापिनः" इतिं । वक्ष्यमाणरीत्या शुद्धवस्तुत्वादिभावसाधकानामपि वस्तुभावसिद्धश्रीगोकुलवास्यादिलीलानुसारेण तादृशभगवद्गुणानुसारेण चासौ जायते जातभावानां त्वहिंसा चोपरमश्चस्वीय एव स्वभावः।यथा"यत्रानुरक्ताः सहसैव धीरा व्यपोह्य देहादिषु संगमूढम्।व्रजंति तत्पारमहंस्यमंत्यं यस्मिन्न हिंसोपरमः स्वधर्म" इति । ततः परमसिद्धानां "सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः" इत्याद्यनुसारेण सिद्ध एव सः । तत्र साधकानां यत्तु 'यथा तरोर्मूलनिषेचनेन' इत्याद्युक्त्या तदन्योपासनानां पुनरुक्तत्वमुपलक्ष्यते।तत्पुनः केवलस्वतंत्रतत्तद्दृष्ट्योपासनानामेव । अत्र तु तत्तदधिष्ठानकभगवदुपासनमेव विधीयते । तदादरावश्यकत्वञ्च तत्संबंधेनैव संपाद्यते । तच्चान्यत्र झटिति रागद्वेषविश्लेषार्थमिति ज्ञेयम् । अत एव भूतानुकंपया श्रीभगवदर्चनं त्यक्तवतो भरतस्यांतरायः परमात्मदृष्ट्या रंतिदेवादीनां तु कृतार्थत्वम् । तस्माद्भूतदयैव भक्तिर्मुख्या नार्च

भक्तियोगश्च योगश्च मया मानव्युदीरितः ॥ ययोरेकतरेणैव पुरुषः पुरुषं व्रजेत् ॥ ३५ ॥ एतद्भगवतो रूपं ब्रह्मणः परमात्मनः ॥ परं प्रधानं पुरुषं दैवं कर्म विचेष्टितम् ॥ ३६ ॥ रूपभेदास्पदं दिव्यं काल इत्यभिधीयते ॥ भूतानां महदादीनां यतो भिन्नदृशां भयम् ॥ ३७ ॥ योऽन्तः प्रविश्य भूतानि भूतैरत्त्यखिलाश्रयः ॥ स विष्णवाख्योऽधियज्ञोऽसौ कालः कलयतां प्रभुः ॥ ३८ ॥ न चाऽस्य कश्चिद्दयितो न द्वेष्यो न च बांधवः ॥ आविशत्यप्रमत्तोऽसौ प्रमत्तं जनमंतकृत् ॥ ३९ ॥ यद्भयाद्वाति वातोऽयं सूर्यस्तपति यद्भयात् ॥ यद्भयाद्वर्षते देवो भगणो भाति यद्भयात्॥४०॥यद्वनस्पतयो भीता लताश्चौषधिभिः सह ॥ स्वेस्वे कालेऽभिगृह्णंति पुष्पाणि च फलानि च ॥४१॥ स्रवंति सरितो भीता नोत्सर्पत्युदधिर्यतः॥अग्निरिंधे सगिरिभिर्भूर्न मज्जति यद्भयात्॥४२॥नभो ददाति श्वसतां पदं यन्नियमाददः॥लोकं स्वदेहं तनुते महान् सप्तभिरावृतम्॥४३॥

उक्तं भक्तियोगं पूर्वोक्तेनाष्टांगयोगेन सहोपसंहरति । भक्तियोगश्चेति । हे मानवि पुरुषं परमेश्वरम् ॥ ३५॥ यदन्यत्पृष्टं जीवस्य संसृतीः कालस्य स्वरूपं चाचक्ष्वेति तदाह । एतदिति सार्धेन । एतत्सर्वनियंतृ यद्भगवतो रूपम् । कीदृशम् । प्रधानपुरुषात्मकं परं तद्व्यतिरिक्तं च एतदेव दैवमित्यभिधीयते कीदृशं कर्मणो विचेष्टितं नानासंसृतिलक्षणं यस्मात्तत् दैवप्रेरितकर्मकृताः संसृतयो विचित्रा इत्यर्थः ॥ ३६ ॥ एतदेव भगवतो रूपं काल इति चाभिधीयते । कीदृशम् । रूपभेदस्य वस्तूनामन्यथात्वस्यास्पदमाश्रयः कारणम् । उक्तं हि । " कालाद्गुणव्यतिकर " इति वक्ष्यते च "गुणव्यतिकरः काल " इति दिव्यमद्भुतप्रभावम् । तदेवाह । भूतानामिति यावत्समाप्ति । महदादीनां तत्तदभिमानिजीवानाम् ॥ ३७ ॥ भयहेतुत्वमाह । य इति भूतैरेव भूतान्यत्ति संहरति अधियज्ञो यज्ञफलदाता कलयतां वशीकुर्वताम् ॥ ३८ ॥ ३९ ॥ ॥४०॥ यद्यस्माद्भीताः ॥४१॥ यतो भीताः सरितः स्रवंति । इंधे दीप्यते । सह गिरिभिर्भूः ॥४२॥ अदो नभो यन्नियमाद्यस्याज्ञया महान्महत्तत्त्वमंकुरात्मकं स्वदेहं

नमिति निरस्तम् । तथैवाव्यवहितपूर्वं निर्गुणभक्त्युपायत्वेन "क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः" इत्यत्रातिशब्देन पञ्चरात्रिकार्चनलक्षणक्रियायोगार्था पत्रपुष्पावचयादिलक्षणा किञ्चिद्धिंसापि विहिता तस्मादन्येषामनादरो न कर्त्तव्यः भगवत्संबंधेनादरादिकं च कर्त्तव्यं स्वातंत्र्येणोपासनं तु धिकृतं साध्व्येवोक्तम् । "अविस्मितं तं परिपूर्णकामम्" इत्यादि एष एव प्रस्तावः पूर्वम् 'अभिसंधाय यद्धिंसाम्' इत्यादिकं यदुक्तं तत्पोषत्वेन निर्दिष्टम् ॥ ३४ ॥ भक्तियोगेन चिद्घनमदीयश्रीमूर्त्तिसाक्षात्कारः अष्टांगयोगेन च मन्निर्विशेषस्वरूपसाक्षात्कार इत्युभयोरेव मत्प्राप्तिसाधनत्वेन शास्त्रेषूक्तेः । तथाहि "यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते" इति गीतोक्तेः ॥ ३५ ॥ कर्मणः पुण्यपापलक्षणस्य । इत्यर्थ इति । सति कर्मणि संसार इति भावः । चक्रवर्त्ती तु—ननु 'पुरुषः पुरुषं व्रजेत्' इति प्रब्रवीषि न तु 'पुरुषो मां व्रजेत्' इति ब्रूषेऽतः कः स पुरुषस्तत्र स्ववक्षस्तर्जन्या स्पृशन्नाह एतदिति । यः खलु भक्तेषु भगवान्भवति ज्ञानिषु ब्रह्मयोगिषु परमात्मेति तस्यैव परं यदप्राकृतं रूपं तदेतदेव त्वत्पुत्रोहमेव परमेश्वर इत्यर्थः । न केवलमेतावदेव किन्तु प्रकृतिपुरुषजीवादृष्टकालाद्यपि मदीयमेतद्रूपमेवेत्याह—प्रधानञ्च तत्प्रवर्त्तकः पुरुषश्चेति द्वंद्वैक्यम् ॥ ३६ ॥ तदेव काललक्षणमेव । यतः कालात् भिन्नदृशामज्ञानाम् ॥ ३७ ॥ यः कालः ॥ ३८ ॥ अप्रमत्तः सावधानः ॥ ३९ ॥ देव इन्द्रः भगणस्तारासमूहः ॥ ४० ॥ स्वेस्वे यत्र यस्योत्पत्तिर्विहिता तदातदेत्यर्थः ॥ ४१ ॥ स्रवंति "क्वचिच्छिन्ना कलौ गंगा भविष्यति" इति न्यायात्कदाचिन्न स्रवंतीत्यपि । इन्धे कदाचिदव्यक्तमपि स्थास्यतीति वर्त्तमाननिर्देशाल्लक्ष्यते मज्जति किन्तु कष्टेनापि धैर्यमेव धत्तेऽतिकष्टे तु द्वापराद्यन्ते गोरूपिण्या तया ब्रह्मणे स्वभारज्ञापनमिति भावः॥४२॥सप्तभिः पृथिव्यादिभिः श्वसतां जीवितां प्राणिनां श्वासक्रियावतामवकाशं ददाति मृतानां

गुणाभिमानिनो देवाः सर्गादिष्वस्य यद्भयात् ॥ वर्ततेऽनुयुगं येषां वश एतच्चराचरम् ॥४४॥ सोऽनंतोंऽतकरः कालोऽनादिरादिकृदव्ययः ॥ जनं जनेन जनयन्मारयन्मृत्युनांतकम्॥४५॥इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे बहुविधभक्तियोगवर्णनं नाम एकोनत्रिंशत्तमोऽध्यायः ॥२९॥
कपिल उवाच ॥ तस्यैतस्य जनो नूनं नायं वेदोरुविक्रमम् ॥ काल्यमानोऽपि बलिनो वायोरिव घनावलिः ॥ १ ॥ यंयमर्थमुपादत्ते दुःखेन सुखहेतवे ॥ तंतं धुनोति भगवान्पुमाञ्शोचति यत्कृते ॥ २॥ यदध्रुवस्य देहस्य सानुबंधस्य दुर्मतिः॥ ध्रुवाणि मन्यते मोहाद्गृहक्षेत्रवसूनि च॥३॥ जंतुर्वै भव एतस्मिन्यांयां योनिमनुव्रजेत् ॥ तस्यांतस्यां स लभते निर्वृतिं न विरज्यते ॥ ४ ॥ नरकस्थोऽपि देहं वै न पुमांस्त्यक्तुमिच्छति ॥ नारक्यां निर्वृतौ सत्यां देवमायाविमोहितः ॥ ५ ॥ आत्मजायासुतागारपशुद्रविणबंधुषु ॥ निरूढमूलहृदय आत्मानं बहु मन्यते ॥६॥ संदह्यमानसर्वांग एषामुद्वहनाधिना ॥ करोत्यविरतं मूढो दुरितानि दुराशयः ॥७॥ आक्षिप्तात्मेंद्रियः स्त्रीणामसतीनां च मायया ॥ रहो रचितयाऽऽलापैः शिशूनां कलभाषिणाम् ॥ ८ ॥

लोकत्वेन तनुते विस्तारयति ॥ ४३ ॥ गुणाभिमानिनो गुणनियंतारो देवा ब्रह्मादयोऽस्य विश्वस्य सर्गादिषु प्रवर्तंते । अनुयुगं वारंवारमित्यर्थः ॥ ४४ ॥ जनेन पित्रादिना जनं पुत्रादिं जनयन्नादिकृत् मृत्युनांऽतकमपि मारयन्नंतकरः स्वयं त्वनादिरनंतोऽव्ययश्च ॥ ४५ ॥ इति श्रीभागवते महापुराणे तृतीयस्कंधे टीकायामेकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥ त्रिंशे तु कायकांतादिलालनाकुलचेतसाम् ॥ कामिनां तामसी पापादधोगतिरुदीर्यते ॥ १ ॥ कालप्रभाववर्णनपूर्वकं वैराग्याय विचित्रकर्मकृतां संसृतिमध्यायत्रयेण प्रपंचयति । तस्यैतस्य बलिनः कालस्य बलिनेति वा पाठः । काल्यमानो विचाल्यमानोऽपि वायोर्विक्रमं यथा मेघपंक्तिर्न वेद ॥ १ ॥ विक्रममेवाह । यंयमर्थं दुःखेन प्रयासेनोपादत्ते आपादयति तंतमर्थं भगवान्कालो धुनोति विनाशयति । यत्कृते यन्निमित्तम् ॥ २ ॥ शोके हेतुः । यद्यस्मात्सानुबंधस्य कलत्रादिसहितस्य देहस्य संबंधीनि गृहादीनि वसु द्रव्यम्।अनुक्तसमुच्चयार्थश्चकारः॥ ३॥ दुर्मतित्वं दर्शयन्दुःखं प्रपंचयति । जंतुरिति चतुर्दशभिः॥ ४॥नारक्यां नरकाहारादिभिर्जातायाम् ॥ ५ ॥ निरूढमूलं प्रसृतमनोरथं हृदयं यस्य बहु मन्यते कृतार्थोऽहमिति श्लाघते ॥ ६ ॥ उद्वहनाधिना पोषणचिंतया ॥ ७ ॥ दुराशयत्वमाह । आक्षिप्त आत्मा इंद्रियाणि च यस्य । कया । असतीनां पुंश्चलीनामपि रहसि रचितया संभोगादिरूपया मधुरभाषिणां शिशूनामालापैश्च सुखवन्मन्यत

तेषां तु न ददाति ॥ ४३ ॥ गुणानां सत्त्वादीनां नियंतारोऽधिष्ठातारः । आदिना विष्ण्वादिग्रहः । इत्यर्थ इति । प्रतिकल्पमिति भावः ॥ ४४ ॥ मृत्युना मृत्युहेतुना रुद्रादिना ब्रह्मादिकमप्यंतकं शरीरांतकरम् ॥४५॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे एकोनत्रिंशोऽध्यायः ॥ २९ ॥ आदिना पुत्रादिग्रहः (१) 'बलिना' इति बहुसंमतः पाठः।एतस्योक्तरूपजगतः ॥१॥ प्रयासेन परसेवादिना भगवान्समर्थः ॥ २ ॥ ध्रुवमनने हेतुः दुर्मतिरिति ॥ ३ ॥ निर्वृतिं सुखम् ॥ ४ ॥ आदिना नारकीयस्त्रीसंगादिग्रहः ॥ ५ ॥ ६ ॥ ७ ॥ आक्षिप्तो गृहीतः ॥ ८ ॥

गृहेषु कूटधर्मेषु दुःखतंत्रेष्वतंद्रितः ॥ कुर्वन् दुःखप्रतीकारं सुखवन्मन्यते गृही ॥ ९ ॥ अर्थैरापादितैर्गुर्व्या हिंसयेतस्ततश्च तान् ॥ पुष्णाति येषां पोषेण शेषभुग्यात्यधः स्वयम् ॥ १० ॥ वार्तायां लुप्यमानायामारब्धायां पुनःपुनः ॥ लोभाभिभूतो निःसत्त्वः परार्थे कुरुते स्पृहाम् ॥ ११ ॥ कुटुंबभरणाकल्पो मंदभाग्यो वृथोद्यमः ॥ श्रिया विहीनः कृपणो ध्यायञ्श्वसिति मूढधीः ॥ १२ ॥ एवं स्वभरणाकल्पं तत्कलत्रादयस्तथा ॥ नाद्रियंते यथापूर्वं कीनाशा इव गोजरम् ॥१३॥ तत्राप्यजातनिर्वेदो भ्रियमाणः स्वयंभृतैः ॥ जरयोपात्तवैरूप्यो मरणाभिमुखो गृहे॥१४॥आस्ते ऽवमत्योपन्यस्तं गृहपाल इवाहरन् ॥ आमयाव्यप्रदीप्ताग्निरल्पाहारोऽल्पचेष्टितः ॥१५॥ वायुनोत्क्रमतोत्तारः कफसंरुद्धनाडिकः ॥ कासश्वासकृतायासः कंठे घुरघुरायते ॥ १६ ॥ शयानः परिशोचद्भिः परिवीतः स्वबंधुभिः ॥ वाच्यमानोऽपि न ब्रूते कालपाशवशं गतः ॥ १७ ॥ एवं कुटुंबभरणे व्यापृतात्माऽजितेंद्रियः ॥ म्रियते रुदतां स्वानामुरुवेदनयाऽस्तधीः ॥ १८ ॥ यमदूतौ तदा प्राप्तौ भीमौ सरभसेक्षणौ ॥ स दृष्ट्वा त्रस्तहृदयः शकृन्मूत्रं विमुंचति ॥ १९ ॥

इत्युत्तरेणान्वयः ॥ ८ ॥ कूटाः वित्तशाठ्यादिबहुला धर्मा येषु दुःखप्रधानेषु ॥ ९ ॥ येषां पोषणेनाधो याति तान्पुष्णाति शेषभुगिति भोगोऽपि तस्य दुर्लभ इत्यर्थः ॥ १० ॥ वार्तायां जीविकायाम् । निःसत्त्वोऽशक्तः परार्थे परस्वे ॥ ११ ॥ अकल्पोऽसमर्थः ॥ १२ ॥ पूर्वं यथाऽऽद्रियंते तथाऽऽदरं न कुर्वंति कीनाशाः कृपणाः कृषीवलाः गोजरं वृद्धं बलीवर्दम् ॥ १३ ॥ भ्रियमाणः पुष्यमाणः ॥ १४ ॥ अवमत्याऽवज्ञयोपन्यस्तं समीपे प्रक्षिप्तम् । गृहपालः श्वा आहरन् भुंजानः आमयावी रोगी ॥ १५ ॥ उत्तारो बहिर्निर्गतनेत्रः कफेन संरुद्धा नाड्यो मार्गभूता यस्य कासश्वासाभ्यां कृत आयासो यस्य घुरघुर इति शब्दं करोति ॥ १६ ॥ परिवीतः परिवेष्टितः वाच्यमानो बंधो तातेत्याहूयमानः ॥ १७ ॥ अस्तधीर्नष्टमतिः ॥ १८ ॥ मृतस्य पुण्यपापाभ्यां द्वे गती तत्र पापगतिमाह । यमदूतावित्यादि यावत्समाप्ति ।

' तंत्रं प्रधाने ' इत्यादिकोशात् ॥ ९ ॥ इत्यर्थ इति । कदाचित्सर्वभुक्तौ शेषाभावान्निराहार एव तिष्ठतीति भावः । यद्यपि कुटुंबभरणं शास्त्रविहितं तथापि शास्त्रातिक्रमेण तद्भरणं नरकायैव " केवलेन ह्यधर्मेण कुटुंबभरणोत्सुकः " इत्याद्यग्रे वक्ष्यमाणत्वात् ॥ १० ॥ लोभाक्रांतः । स्पृहां छलादिना तद्धरणेच्छाम् ॥ ११ ॥ पुत्रादिजीविनोपायं ध्यायन् ॥ १२ ॥ " कीनाशः कर्षुकक्षुद्रापांशुघातिषु वाच्यवत् । यमे ना" इति मेदिनी । जरा विद्यतेऽस्येति जरः मत्वर्थीयोऽच् । गौश्चासौ जरश्चेति गोजरस्तम् । वहनोल्लेखनासमर्थं वृषभमित्यर्थः ॥ १३ ॥ स्वकलत्राद्यनादरं दृष्ट्वा मोक्षाय यतिष्यत इति चेत्तत्राह—तत्रापीति । तस्यामवस्थायामपि ये पूर्वं स्वयं भृताः पुत्राद्यास्तैः आसन्नमरणस्यापि गृहस्थारूढचेतसो वैराग्यं नोत्पद्यत इति भावः ॥ १४ ॥ अप्रदीप्ताग्निर्मन्दीभूतजाठरानलः । चेष्टितं गमनादि ॥ १५ ॥ उत्क्रमता कासाधिक्येनोर्ध्वमुत्तिष्ठता । आयासः क्लेशः ॥ १६ ॥ १७ ॥ १८ ॥ स पापी । शकृत्पुरीषम् ॥ १९ ॥

यातनादेह आवृत्य पाशैर्बद्ध्वा गले बलात् ॥ नयतो दीर्घमध्वानं दंड्यं राजभटा यथा ॥ २० ॥ तयोर्निर्भिन्नहृदयस्तर्जनैर्जातवेपथुः ॥ पथि श्वभिर्भक्ष्यमाण आर्तोऽघं स्वमनुस्मरन् ॥२१॥ क्षुत्तृट्परीतोऽर्कदवानलानिलैः संतप्यमानः पथि तप्तवालुके ॥ कृच्छ्रेण पृष्ठे कशया च ताडितश्चलत्यशक्तोऽपि निराश्रमोदके ॥२२॥ तत्रतत्र पतञ्छ्रांतो मूर्छितः पुनरुत्थितः ॥ पथा पापीयसा नीतस्तमसा यमसादनम् ॥ २३ ॥ योजनानां सहस्राणि नवतिं नव चाध्वनः ॥ त्रिभिर्मुहूर्तैर्द्वाभ्यां वा नीतः प्राप्नोति यातनाः ॥२४॥ आदीपनं स्वगात्राणां वेष्टयित्वोल्मुकादिभिः ॥ आत्ममांसादनं क्वापि स्वकृत्तं परतोऽपि वा ॥२५॥ जीवतश्चांत्राभ्युद्धारः श्वगृध्रैर्यमसादने ॥ सर्पवृश्चिकदंशाद्यैर्दशद्भिश्चात्मवैशसम् ॥२६॥ कृंतनं चावयवशो गजादिभ्योऽभिदापनम् ॥ पातनं गिरिशृंगेभ्यो रोधनं चांबुगर्तयोः ॥ २७ ॥ यास्तामिस्रांधतामिस्रा रौरवाद्याश्च यातनाः ॥ भुंक्ते नरो वा नारी वा मिथः संगेन निर्मिताः ॥ २८ ॥ अत्रैव नरकः स्वर्ग इति मातः प्रचक्षते ॥ या यातना वै नारक्यस्ता इहाप्युपलक्षिताः ॥ २९ ॥

सरभसं सक्रोधमीक्षणं ययोस्तौ दृष्ट्वा ॥ १९ ॥ आवृत्य निरुद्ध्य ॥ २० ॥ तयोस्तर्जनैर्निर्भिन्नं हृदयं यस्य आर्तः संश्चलतीति द्वितीयेनान्वयः ॥ २१ ॥ क्षुत्तृड्भ्यां परीतो व्याप्तः तप्ता वालुका यस्मिन् निर्गत आश्रमो विश्रामस्थानमुदकं च यस्मिन् ॥ २२ ॥ यमसादनं नीतो भवति ॥ २३ ॥ तत्रैव विशेषमाह । अध्वनः संबंधिनां योजनानां नवतिं नव च सहस्राणि पापाधिक्ये द्वाभ्यां वा नीतः सन् ॥ २४ ॥ यातनाः संक्षेपतो दर्शयति चतुर्भिः । आदीपनं प्रज्वलनं प्राप्नोति स्वेन कृत्तमन्येन वा कृत्तं छिन्नं यत्स्वस्य मांसं तस्य भक्षणमित्यर्थः ॥२५॥ आत्मनो वैशसं पीडाम् ॥२६॥ भिदापनं भेदप्रापणम् ॥२७॥२८॥ न चैतदसंभावितमत्रापि दृश्यमानत्वादित्याह ।

नरकदुःखभोगयोग्यो देहो यातनादेहः "पापानां दुःखभोगाय देहा यातनसंज्ञकाः । अनन्ताः संति धर्मस्य नगरे यैश्च पापिनः॥नीयन्ते यमदूतैश्च यमसद्मनि नित्यशः । छिन्ना दग्धाः पुनस्ते हि प्ररोहंति यथायथम्" इति पुराणांतरोक्तेः॥असुभिश्चारुह्यमाणा इति न म्रियमाणः पुनरारोपितो निपततीति वक्ष्यमाणत्वाच्च । दंड्यं दंडार्हम् । राजभटा नृपभृत्याः नयतः प्रापयतः ॥ २० ॥ तयोर्यमदूतयोः॥तर्जनैस्तर्जन्युत्थानपूर्वकभर्त्सनैः॥स्वमघं तस्यैव पापस्य फलमनुभवामीतिस्मरन्॥२१॥वालुकाः सिकताः॥कशयाऽश्वताडनार्थं बहुतंतुकदृढहस्तिशुंडाकारकाष्ठदंडबद्धहस्तामितरज्जुःकशा तया'कोडा'इति भाषायां प्रसिद्धया॥२२॥ तत्रतत्र मार्गे पापीयसाऽतिक्लिष्टेन पथा मार्गेण सदनमेव सादनं यमस्य सादनं गृहं नरकमित्यर्थः॥सायंतेऽवसा ययंतेऽत्रेति सादनं नरकं यमाज्ञप्तं सादनं यमसादनमिति वा॥२३॥तत्रैव मार्गे एव । यातना नरकपीडाः ॥२४॥ कृत्तमिति समासांतर्गतमप्यार्षत्वादन्वेति परतः परेण वा कृत्तमित्यर्थ इति।'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन'इति न्यायो नात्रानुसरणीयस्तथात्वे स्वकृत्तपदस्यात्ममांसादनपदेनान्वयोऽनौचित्योद्भावकः स्यादतः पदार्थैकदेशेनात्ममांसपदेनैवान्वयः कार्य इति भावः । "जातिव्यक्त्याकृतयः पदार्थः" इति गौतमसूत्राज्जात्यादित्रित्वं पदार्थे मन्यमानैस्तार्किकैर्गौरनित्येत्यत्र व्यक्तिरेवानित्यांगी क्रियते सा च पदार्थैकदेश एव । किं च । कुंडली भुंक्ते इत्यत्रापि विशेष्यस्य देवदत्तस्यैव भोजनेऽन्वयो न तु विशेषणीभूतकुंडलस्येहापि विशिष्टस्य पदार्थत्वेप्येकदेश एवान्वयात्पदार्थैकदेशन्यायस्यासार्वत्रिकत्वमेवेत्यलम् ॥ २५ ॥ वैशसं हिंसां पीडां वा "हिसायां पीडने वापि वैशसं नरकेऽपि च" इति निरुक्तिः। प्राप्नोतीत्यनेन द्वितीयांतानामन्वयः ॥ २६ ॥ २७ ॥ या यातनास्ताश्च भुंक्ते मिथःसंगेन पापिष्ठगृहस्थप्रसंगान्नरनार्योः पापिष्ठत्वे प्राप्ते परस्परसंगः पापातिशयहेतुरिति ॥ २८ ॥ अत्रापि राज

एवं कुटुंबं बिभ्राण उदरंभर एव वा ॥ विसृज्येहोभयं प्रेत्य भुंक्ते तत्फलमीदृशम् ॥ ३० ॥ एकः प्रपद्यते ध्वांतं हित्वेदं स्वकलेवरम् ॥ कुशले तरपाथेयो भूतद्रोहेण यद्भृतम् ॥ ३१ ॥ दैवेनासादितं तस्य शमलं निरये पुमान् ॥ भुंक्ते कुटुंबपोषस्य हृतवित्त इवातुरः ॥ ३२ ॥ केवलेन ह्यधर्मेण कुटुंबभरणोत्सुकः ॥ याति जीवोऽधतामिस्रं चरमं तमसः पदम् ॥ ३३ ॥ अधस्तान्नरलोकस्य यावतीर्यातनादयः ॥ क्रमशः समनुक्रम्य पुनरत्राव्रजेच्छुचिः ॥ ३४ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे कापिलेयोपाख्याने कामिनां नरकादिवर्णनं नाम त्रिंशत्तमोऽध्यायः ॥ ३० ॥ श्रीभगवानुवाच ॥ कर्मणा दैवनेत्रेण जंतुर्देहोपपत्तये ॥ स्त्रियाः प्रविष्ट उदरं पुंसो रेतःकणाश्रयः ॥ १ ॥

अत्रैवेति ॥ २९ ॥ उभयं कुटुंबं स्वं देहं च ॥ ३० ॥ पापार्जितं धनं भुंजते बहवः कर्तैव नरकं यातीत्याह एक इति भूतद्रोहेण यद्भृतं तत्स्थूलं स्वकलेवरमिहैव हित्वा । कुशलादितरत् पापं तदेव पाथेयं भोग्यं यस्य ॥ ३१ ॥ ननु पापमपि विहाय गच्छतु तत्राह । दैवेनेति । तस्य कुटुंबपोषणस्य शमलं पापं दैवेनेश्वरेण प्रापितं भुंक्ते ॥ ३२ ॥ ननु कुटुंबपोषणं विहितमेव तत्राह । केवलेनेति । तमसो नरकस्य चरमं पदं स्थानम् ॥ ३३ ॥ पुनर्मनुष्यशरीरप्राप्तिप्रकारमाह । नरलोकस्य मनुष्यदेहस्य प्राप्ते रधस्तादर्वाग्यावत्यो यातनाः आदिशब्देन श्वसूकरादियोनयश्च यास्ताः सर्वाः क्रमेण संप्राप्य भोगेन क्षीणपापः शुचिः सन्नत्र पुनर्नरत्वं प्राप्नोतीत्यर्थः ॥ ३४ ॥ इति श्रीम० तृती० टीकायां त्रिंशत्तमोऽध्यायः ॥ ३० ॥ एकत्रिंशे विमिश्रैस्तु पुण्यपापैरिहांतरा ॥ मनुष्ययोनिसंप्राप्तिर्वर्ण्यते राजसी गतिः ॥ १ ॥ पुनरत्राव्रजेदित्युक्तं

दंडे कासांचित्प्रत्यवयवकृत्तनादियातनानां तथा स्रक्चन्दनवनितादिसुखभोगानां च दर्शनादिति ॥ २९ ॥ ३० ॥ पाथेयं पथिभोज्यं शंबलमित्यर्थः ॥ ३१ ॥ अत्राशंकते नन्विति ॥ ३२ ॥ पुनराशंकते—नन्विति ॥ ३३ ॥ इत्यर्थ इति । "चतुरशीतिसाहस्रं भुक्त्वा मानुष्यमाप्नुयात्" इत्युक्तेरिति भावः । सहस्राणां समूहः साहस्रं लक्षमित्यर्थः ॥ ३४ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे त्रिंशत्तमोऽध्यायः ॥ ॥ ३० ॥ इहांतरा अत्रलोकमध्ये भारते वर्षे मनुष्ययोनेः प्राप्तिर्यस्यां राजसगतौ सा तथा ( १ ) अत्र गर्भोपनिषदर्थं दर्शयति—"भुक्तान्नादिषडिधरसाच्छोणितं शोणितान्मांसं मांसान्मेदो मेदसः स्नायवः स्नायुभ्योऽस्थीन्यस्थिभ्यो मज्जा मज्जातः शुक्रं शुक्रशोणितसंयोगादावर्त्तते गर्भो हृदि व्यवस्थां नयति।तदिदं शुक्रमृतुकाले प्रयोगादेकरात्रोषितं कललं भवति सप्तरात्रोषितं बुद्बुदमर्द्धमासाभ्यंतरे पिंडं रक्तं कठिनं, मासद्वयेन शिरो ग्रीवा, मासत्रयेण पादप्रदेशश्चतुर्थे गुल्फौ जठरं कटिप्रदेशः, पञ्चमे पृष्ठवंशः, षष्ठे मुखनासिकाक्षिश्रोत्राणि, सप्तमे जीवेन संयुक्तोऽष्टमे सर्वलक्षणसंपूर्णः पितूरेतोऽतिरेकात्पुरुषो, मातूरेतोऽतिरेकात्स्त्री, उभयबीजतुल्यत्वान्न पुंसको, व्याकुलितमनसोंधाः खंजाः कुब्जा वामनका भवंत्यन्योन्यवायुपरिपीडितशुक्रद्वैविध्याद्द्विधातनुः स्यात्ततो युग्माः प्रजायंते पञ्चात्मकः समर्थः पंचात्मिका चेतसा बुद्धिर्गंधरसादिज्ञानाक्षराक्षरमोङ्कारं चिंतयतीति तदेकाक्षरं ज्ञात्वाष्टौ प्रकृतयः षोडश विकाराः शरीरे तस्यैव देहिनः अथ मात्राशितपीतनाडीसूत्रगतेन प्राण आप्यायते नवमे मासि सर्वलक्षणज्ञानकरणसंपूर्णो भवति पूर्वजातीः स्मरति । शुभाशुभं च कर्म विंदति "पूर्वयोनिसहस्राणि दृष्ट्वा चैव ततो मया । आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः ॥ जातश्चाहं मृतश्चाहं जन्म चैव पुनःपुनः । मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः ॥ नानायोनिसहस्राणि मयोषितानि यानि वै । मातरो विविधा दृष्टाः पितरः सुहृदस्तथा ॥ अवाङ्मुखः पीडितोहं जंतुभिश्च समन्वितः । मया परिजनस्यार्थे कृतं कर्म शुभाशुभम् ॥ एकाकी तेन दह्येहं गतास्ते फलभोगिनः । अहो दुःखोदधौ मग्नो न पश्यामि

कललं त्वेकरात्रेण पंचरात्रेण बुद्बुदम् ॥ दशाहेन तु कर्कंधूः पेश्यंडं वा ततः परम् ॥ २ ॥ मासेन तु शिरो द्वाभ्यां बाह्वंघ्र्याद्यंगविग्रहः ॥ नखलोमास्थिचर्माणि लिंगच्छिद्रोद्भवस्त्रिभिः ॥३ ॥ चतुर्भिर्धातवः सप्त पंचभिः क्षुत्तृडुद्भवः ॥ षड्भिर्जरायुणा वीतः कुक्षौ भ्राम्यति दक्षिणे॥४॥ मातुर्जग्धान्नपानाद्यैरेधद्धातुरसंमते ॥ शेते विण्मूत्रयोर्गर्ते स जंतुर्जंतुसंभवे ॥ ५ ॥

तदेव विशेषतो दर्शयति । कर्मणा पूर्वकृतेन दैवमीश्वरस्तदेव नेत्रं नेतृ प्रवर्तकं यस्य प्रविष्टो भवति ॥ १ ॥ कललं शुक्रशोणितमिश्रितं भवति बुद्बुदं वर्तुलाकारम् । कर्कंधूर्बदरीफलं तदाकारं कठिनम् । पेशीमांसपिंडाकारम् अंडं वा योन्यंतरे ॥ २ ॥ बाह्वंघ्र्यादीनामंगानां विग्रहो विभागः लिंगं च छिद्राणि च तेषामुद्भवः ॥ ३ ॥ जरायुणा गर्भवेष्टनेन वीतः प्रावृतः ॥ ४ ॥ मातुर्जग्धेन भक्षितेनान्नेन पानाद्यैश्चैधमाना धातवो यस्य जंतूनां संभवो यस्मिंस्तस्मिन्नसंमते गर्ते शेते । तथाच मार्कंडेयपुराणे । "नाडी चाप्यायनी नाम नाभ्यां तस्य निबद्ध्यते ॥ स्त्रीणां तथांत्रसुषिरे सा निबद्धोपजायते ॥ क्रमंते भुक्तपीतानि स्त्रीणां गर्भोदरे तथा ॥ तैराप्यायितदेहोऽसौ

प्रतिक्रियाम् ॥ यदि योन्याः प्रमुच्येहं प्रपद्ये परमेश्वरम् । अशुभक्षयकर्त्तारं फलमुक्तिप्रदायकम् ॥ यदि योन्याः प्रमुच्येहं तत्प्रपद्ये नारायणम् । अशुभक्षयकर्त्तारं फलमुक्तिप्रदायकम् ॥ यदि योन्याः प्रमुच्येऽहं तत्सांख्यं योगमभ्यसे ।" अशुभक्षयकर्तारं फलमुक्तिप्रदायकम् ॥ यदि योन्याः प्रमुच्यामि ध्याये ब्रह्म सनातनम् ॥ अथ योनिद्वारं संप्राप्तो यंत्रेणापीडयमानो महता दुःखेन जातमात्रस्तु वैष्णवेन वायुना संस्पृष्टस्तदानुस्मरति जन्ममरणानि न च कर्म शुभाशुभं विंदति" इति गर्भोपनिषद्व्याख्यानरूपोऽध्यायोऽयमिति स्पष्टार्थत्वान्न व्याख्यातेति । "अन्याधिष्ठिते पूर्ववदभिलापात्" ( अन्यैर्जीवैराधिष्ठिते व्रीह्यादौ संसर्गमात्रमनुशायिनां पूर्ववदाकाशादिवदभिलापादित्यर्थः ) इति सूत्रात् जीवनां वर्षधाराद्वारा पृथिवीप्रवेशानंतरं पठ्यते "त इह व्रीहियवा ओषधिवनस्पतयस्तिला माषा इति जायंते" इति श्रुतेः । ते जीवाः । "रेतःसिग्योगोथ" इति सूत्राच्च । अथ व्रीह्यादिभावानंतरमनुशायिनां रेतः सिंचतीति रेतस्सिक् तद्योगस्तद्भावः श्रुतावाम्नायते " यो रेतः सिंचति तद्भूय एव भवति" इति श्रुतेः । अनुशयी व्रीह्याद्यन्नद्वारा पुरुषं प्रविष्टस्तद्भूयो भवति तद्भावं गच्छतीति न ह्यत्रानुशयिनो रेतःसिग्भावो मुख्योस्ति इदानीं पुरुषप्रविष्टत्वेनाप्राप्तयौवनत्वात् । अतस्तत्संसर्गो वक्तव्यः । तथा च व्रीह्यादावपि संसर्ग एवाकाशादावपि संसर्गमात्रावगंतेरित्यर्थः । 'केचिद्देवं वदंत्यन्ये' इति ध्रुवोपाख्यानोक्तेर्दैवमीश्वरः तदेव दैवमेव ॥ १ ॥ योन्यंतरे जरायुभिन्नपक्ष्यादियोनौ चांडमेव भवतीति ततो दशाहात्परमग्रे इत्यग्रिमेणान्वेति ॥ २ ॥ द्वाभ्यां मासाभ्याम् । लिंगं पुंस्त्वादि । छिद्राणींद्रियद्वाराणि ॥ ३ ॥ धातवस्त्वगादयः । दक्षिणे इति पुरुषमधिकृत्योक्तेः । "पुंगर्भो दक्षिणे कुक्षौ वामे स्त्रीगर्भ इष्यते । मध्यभागे षंढगर्भः" इति मार्कंडेयोक्तेः ॥ ४ ॥ असंमतेऽशुचौ । अत्र प्रमाणमाह-तथा चेति । तस्य गर्भस्य । स्त्रीणा

कृमिभिः क्षतसर्वांगः सौकुमार्यात्प्रतिक्षणम् ॥ मूर्छामाप्नोत्युरुक्लेशस्तत्रत्यैः क्षुधितैर्मुहुः ॥ ६ ॥ कटुतीक्ष्णोष्णलवणरूक्षाम्लादिभिरुल्बणैः ॥ मातृभुक्तैरुपस्पृष्टः सर्वांगोत्थितवेदनः ॥ ७ ॥ उल्बेन संवृतस्तस्मिन्नंत्रैश्च बहिरावृतः ॥ आस्ते कृत्वा शिरः कुक्षौ भुग्नपृष्ठशिरोधरः ॥८॥ अकल्पः स्वांगचेष्टायां शकुंत इव पंजरे ॥ तत्र लब्धस्मृतिर्दैवात्कर्मजन्मशतोद्भवम् ॥ स्मरन्दीर्घमनुच्छ्वासं शर्म किं नाम विंदते॥९॥ गर्भवाससमं दुःखं न भूतं न भविष्यति ॥ आरभ्य सप्तमान्मासाल्लँब्धबोधोऽपि वेपितः ॥ नैकत्रास्ते सूतिवातैर्विष्ठाभूरिव सोदरः ॥ १० ॥ नाथमान ऋषिर्भीतः सप्तव ध्रिः कृतांजलिः ॥ स्तुवीत तं विक्लवया वाचा येनोदरेऽर्पितः ॥ ११ ॥

जंतुर्वृद्धिमुपैति वै" इति ॥ ५ ॥ तत्रत्यैः कृमिभिः खादद्भिः सौकुमार्यात्कोमलत्वेन क्षतानि सर्वांगानि यस्य ॥ ६ ॥ उल्बणैर्दुःसहैः सर्वेष्वंगेषूत्थिता वेदना यस्य आस्त इत्युत्तरेणान्वयः ॥ ७ ॥ उल्बेन जरायुणा भुग्नं कुटिलीभूतं पृष्ठं शिरोधरा ग्रीवा च यस्य ॥ ८ ॥ दैवात्पूर्वकर्मवशात् लब्धा स्मृतिर्येन सः दीर्घं दुरंतमनुच्छ्वासं यथा भवति तथा तत्र स्थितः सन् ॥ ९ ॥ सूतिहेतुभिर्वातैर्वेपितः सोदरः समानोदरजन्मा विष्ठाभूः कृमिरिवेति ॥ १० ॥ नाथमानो याचमान उपतप्यमान इति वा

मांत्रसुषिरे आंत्रच्छिद्रे । तैर्मातृभुक्तपीतैरन्नादिभिः ॥ ९ ॥ तत्रत्यैर्गर्भस्थमलगैः ॥ ६ ॥ कटुर्मरीचादिस्तीक्ष्णं सर्षपादि ॥ ७ ॥ ८ ॥ तत्र गर्भे । नन्वतीवबीभत्सितस्थलस्थस्य साधनाभावात्कथं जन्मशतज्ञानं बहिर्निर्ग तस्य प्रवर्तमानस्याप्येकजन्मज्ञानमपि कथं नोदेतीत्याशंकायामाह—"गर्भे यदस्य विज्ञानं तन्माहात्म्यं स्थलस्य हि । गर्भाशये भवेज्ज्ञानं वाराणस्यां विमुक्तिवत् ॥ तस्माच्च्युतोऽज्ञतामेति मागधो दुर्गतिं यथा ॥" इति शिष्टगी तात् ॥ ९ ॥ १० ॥ याचमानः एवंविधगर्भवासः पुनर्मे मां भूदिति प्रार्थयमानः । भगवत्कृपा मयि भूयादिति स्वस्मिन्नाशिषं कुर्वन्वा । अहो मयात्रातीव दुःखं भुक्तमित्येवमुपतप्यमानः प्राप्तज्ञानैश्वर्यो वेति 'नाथृ—याच्ञोप तापैश्वर्याशीषु' इति धातोर्यद्यप्याशिष्येवात्मनेपदमस्ति तथाप्यार्षत्वादत्र सर्वार्थेष्वपि तदिति शानच् । अत एव स्वामिचरणैर्याचमानः प्रतप्यमान इति च व्याख्यातम् । अत्र विश्वनाथः—तं स्तुवीतेति गर्भे विष्ण्वादेः संभवाभावात् " हेतुहेतुमतोर्लिङ् " इति लिङ् । ततश्च यो भगवंतं भजेतेति हेतुरत्र गम्यः तेन च यो भगवंतं भजेत स गर्भेपि स्तुवीतेत्यन्यो जीवस्तु न स्तुवीतेत्यर्थो लभ्यते । तस्यैव स्तुवानस्य जीवस्याग्रे संसारो वर्णयिष्यते बर्णितश्च न तु भगवंतं स्तुवानस्यापि । " अकामादपि ये विष्णोः सकृत्पूजां प्रकुर्वते । न तेषां भवबंधस्तु कदाचिदपि जायते " इति बृहन्नारदीये "सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वदा तस्मै ददाम्येतद्व्रतं मम " इति गारुडे इत्येवं परसहस्रवचनविरोधात् । अत एव 'शेते विण्मूत्रयोर्गर्त्ते' इति 'मूर्च्छामाप्नोत्युरुक्लेश इति' ' आस्ते कृत्वा शिरः कुक्षौ ' इत्यादिवद्दशमास्यो जीवो हरिं स्तौतीति वर्त्तमानप्रयोगो न कृतः किन्तु जीव उवाचेति भूतकालप्रयोग एव तेन च पूर्वकालभवः कश्चिद्भक्तो जीव एवं गर्भे हरिं स्तुवान आसीन्न तु सर्व इत्यर्थो ज्ञापितः । अत एव नैरुक्ता अपि पठंति नवमे सर्वांगसंपूर्णो भवतीति पठित्वा "मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः " इत्याद्यनंतरम् "अवाङ्मुखः पीड्यमानो जंतुश्चैवं समन्वितः । सांख्यं योगं समभ्यस्येत्पुरुषं पञ्चविंशकम् ॥ ततश्च दशमे मासि प्रजायते " इत्यादिगर्भोपनिषद्वाक्यम् । अत्र वाशब्दबलात्कश्चित्सत्कर्मा जीवो ' मृतश्चाहं पुनर्जातः ' इत्यादि पूर्वपूर्वजन्ममात्रं स्मरति । कश्चिज्ज्ञानी सांख्यं कश्चिद्योगी योगं कश्चिद्भक्तश्चतुर्विंशात्प्रधानात्परं पंचविंशं पुरुषं परमेश्वरमभ्यस्येद्भजेदिति पूर्वाभ्यस्तमेव गर्भे स्फुरेदिति युक्तम् । अत्र भेदेप्येकत्वेन वर्णनं तु श्रीवराहावतारवज्ज्ञेयं तत्र प्रथममन्वंतरस्यादौ पृथिवीमज्जने ब्रह्मनासिकातोवतीर्णो वराहस्तामुद्धरन्हिरण्याक्षेण युद्धं कृतवानिति वर्ण्यते । हिरण्याक्षस्तु षष्ठमन्वंतरावसानजातप्राचेतसदक्षकन्याया दितेर्जातस्तस्मात्तथा वर्णनं तदवतारमात्रत्वपृथिवीमज्जनमात्रत्वैक्यविवक्षयैव घटेत तद्वदत्रापि कश्चिदेवान्यो जीवः स्तौति इत्यन्यः संसरती

जंतुरुवाच ॥ तस्योपसन्नमवितुं जगदिच्छयाऽऽत्तनानातनोर्भुवि चलच्चरणारविंदम् ॥ सोहं व्रजामि शरणं ह्यकुतोभयं मे येनेदृशी गतिरदर्श्यसतोऽनुरूपा ॥ १२ ॥ यस्त्वत्र बद्ध इव कर्मभिरावृतात्मा भूतेंद्रियाशयमयीमवलंब्य मायाम् ॥ आस्ते विशुद्धमविकारमखंडबोध मातप्यमानहृदयेऽवसितं नमामि ॥ १३ ॥ यः पंचभूतरचिते रहितः शरीरे छन्नो यथेंद्रियगुणार्थचिदात्मकोऽहम् ॥ तेनाऽविकुंठमहिमानमृषिं तमेनं वंदे परं प्रकृतिपूरुषयोः पुमांसम् ॥ १४ ॥

ऋषिर्देहात्मदर्शी भीतः पुनर्गर्भवासात् सप्त वध्रयो बंधनभूता धातवो यस्य सः विक्लवया व्याकुलया ॥ ११ ॥ उपसन्नं जगद्रक्षितुं स्वेच्छया गृहीतनानामूर्त्ते र्भगवतश्चरणारविंदमकुतोभयं सोऽहं शरणं व्रजामि । भुवि चलदिति श्रीकृष्णावताराभिप्रायेण असतो मेऽनुरूपा योग्या येनेदृशी गर्भवासलक्षणा गतिर्दर्शिता तस्य ॥ १२ ॥ ननु कोऽसौ यं शरणं व्रजसि को वा तव तस्य च विशेषो येन सेव्यसेवकत्वमित्यपेक्षायामाह । अत्र मातुर्देहे भूतेंद्रियाशयमयीं देहाकारपरिणतां मायामवलंब्या श्रित्य कर्मभिरावृतस्वरूप इव बद्ध इव च य आस्ते सोऽहम् । यस्त्वत्रैवास्ते तं नमामि । कथंभूतमित्यपेक्षायां तुशब्दोक्तं विशेषं दर्शयति । आतप्यमाने हृदयेऽवसितं प्रतीतमेवमप्यविकारम् । कुतः विशुद्धं निरुपाधिं तत्कुतः अखंडो बोधो यस्य तम् ॥ १३ ॥ ननु त्वमपि वस्तुतः शुद्ध एव । "असंगो ह्ययं पुरुषः" इत्यादिश्रुतेः । तत्क थं युवयोरयं विशेषस्तत्राह । यः पंचभिर्भूतै रचिते शरीरे अयथा मिथ्यैव छन्नो न वस्तुतः यतस्तेन शरीरेण रहितोऽसंगोऽतो यथैवेंद्रियगुणार्थचिदात्मकः इंद्रियाणि च गुणाश्च अर्थाश्च चिदाभासश्च तदात्मकः सोऽहं तं वंदे। कथंभूतम् । तेन शरीरेणाविकुंठो महिमा यस्य तम् अवगुंठेति पाठेऽवसन्नं गुंठनमावरणं यस्य स महिमा यस्येत्यर्थः ।

त्येवं मंतव्यम् ॥ ११ ॥ भुवि चलदिति कृष्णावताराभिप्रायेणेति नूनं तदानीं कृष्णावतारात् । अत्र लिंगं गृहीतनानातनोरिति वर्त्तमानार्थकशत्रंतप्रयोगश्च तस्यैव सर्वावतारित्वात् । श्रीकपिलोक्तिश्चेयं पूर्वकल्पगततदवतारा पेक्षयेति संदर्भः । यद्वा । सतः परमापद्भिर्नश्यतो मम येनानुरूपा तदुद्धरणक्षमेदृशी स्वस्फूर्त्तिलक्षणगतिश्चित्तवृत्तिरदर्शि प्रकाशितेति ॥ १२ ॥ अत्राशंकते—नन्विति । तन्निरुपाधित्वम् । अत्र विश्वनाथः—तस्य स्वप्रभोरद्भुतां लीलां कृपालुताञ्च स्मरन्साश्चर्यमाह—यः खल्वत्रास्मद्विधदुर्जीवानां नानादुःखमयप्रतिशरीर एवास्ते किमस्मान्पालयितुं किं वा स्वैरलीलत्वेनेति न विद्म इति भावः । तमहं नमामीत्वन्वयः । अहं स्वदुष्कृतफलं भुंजानो यदत्रास्मि तदुचितमेव स कथमत्र दुर्गंधे महानरके तर्यामित्वेनापि तिष्ठतीत्याह । कर्मभिर्बद्ध इव न तु बद्धो वृंदावनभुवि चलच्चरणारविंदत्वात् । आवृतात्माहं यथा तथैव देहेनावृतस्वरूप इव न त्वावृतः उक्तयुक्तेरेव मायां स्वशक्तिमवलंब्य प्रवर्त्य । नन्वेवं तर्हि तस्मिन्मायावलंबत्वान्मालिन्यं विकारश्च प्रसज्येतेत्यत आह—विशुद्धं निर्विकारञ्च तत्र हेतुः अखंडबोधं मदज्ञातमिव यस्य ज्ञानं मायया खंडयितुमशक्यमि त्यर्थः। ननु कथमिदमवगतं त्वयेत्यत आह—आसमंतात्तप्यमानेऽत्र हृदये मयाऽवासितं प्रतीतं संतप्यति हृदये स्थित्वा येन मह्यमपीदं ज्ञानं दत्तं तस्य ज्ञानं कथं खंडितं भवेदिति ॥ १३ ॥ पुनराशंकते—नन्विति । अतोऽ संगत्वात् । इत्यर्थ इति व्याख्येयम् । तत्राविकुंठमहिमत्वे नियंतृत्वे हेतुं पृच्छति कुत इति । इत्यर्थ इति । "विद्याशक्तया त्रिकालज्ञा ऋषयः परिकीर्त्तिताः" इत्युक्तेरिति भावः । इति भाव इति । "योऽविद्यया

यन्माययोरुगुणकर्मनिबंधनेऽस्मिन् सांसारिके पथि चरंस्तदभिश्रमेण ॥ नष्टस्मृतिः पुनरयं प्रवृणीत लोकं युक्त्या कया महदनुग्रहमंतरेण॥१५॥
ज्ञानं यदेतददधात्कतमः स देवस्त्रैकालिकं स्थिरचरेष्वनुवर्तितांशः ॥ तं जीवकर्मपदवीमनुवर्तमानास्तापत्रयोपशमनाय वयं भजेम ॥ १६॥ दे
ह्यन्यदेहविवरे जठराग्निनाऽसृग्विण्मूत्रकूपपतितो भृशतप्तदेहः॥इच्छन्नितो विवसितुं गणयन् स्वमासान् निर्वास्यते कृपणधीर्भगवन् कदा नु॥१७॥
येनेदृशीं गतिमसौ दशमास्य ईश संग्राहितः पुरुदयेन भवादृशेन॥ स्वेनैव तुष्यतु कृतेन स दीननाथः को नाम तत्प्रति विनांऽजलिमस्य कुर्यात्॥
॥१८॥पश्यत्ययं धिषणया ननु सप्तवध्रिः शारीरके दमशरीर्यपरः स्वदेहे॥यत्सृष्टया स तमहं पुरुषं पुराणं पश्ये बहिर्हृदि च चैत्यमिव प्रतीतम्॥१९॥

तत्र हेतुः। प्रकृतिपुरुषयोः परं नियंतारम् । कुतः ऋषिं सर्वज्ञं विद्याशक्तिमित्यर्थः।विद्याऽविद्याकृतो विशेष इति भावः॥ १४॥ननु ज्ञानेनायं बंधो निवर्तिष्यते किं परमेश्वरवंदनेन तत्राह । यस्य मायया नष्टस्मृतिः सन् संसारसंबंधिनि पथि तदभिश्रमेण तत्कृतेन क्लेशेन चरन्नयं जीवो महतस्तस्यैवेश्वरस्यानुग्रहं विना पुनः कया युक्त्या लोकं निजस्वरूपं प्रवृणीत संभजेत अभिश्रमहेतुत्वेन पंथानं विशिनष्टि । उरूणि गुणनिमित्तानि कर्माणि नितरां बंधनानि यस्मिन् ईश्वरस्य प्रसादं विना ज्ञानाभावात्स एव सेव्य इत्यर्थः ॥ १५ ॥ ईश्वर एव ज्ञानद इत्युपपादयन्नाह । यदेतत्त्रिकालविषयं ज्ञानं तत्तं विना कतमो मय्यदधान्न कोऽपि किं तु स देव ईश्वर एव । नन्वन्यः प्रकृष्टो जीवो दधातु। नेत्याह । जीवरूपां कर्मपदवीमनुवर्त्तमाना वयमिति तद्व्यतिरेकेण न कोपि समर्थ इत्यर्थः । अन्यस्यात्रासंभवमुक्त्वा तस्य संभवमाह । स्थिरेषु चरेषु चांतर्यामिरूपोऽनुवर्तितोंऽशो येन तं भजेम ॥ १६ ॥स्वदुःखं विज्ञापयन्नाह । देहीति। अन्यदेहविवरे मातुरुदरकुहरे योऽसृग्विण्मूत्रकूपस्तस्मिन्पतितस्तत्र जठराग्निना भृशं तप्तो देहो यस्यात एव कृपणधीरितो विवराद्विवसितुं निर्गंतुमिच्छन्स्वमासान्गणयन्नसौ कदा नु अहो बहिर्निर्वास्यते ॥ १७ ॥ तत्कृतमुपकारं स्मरन्नाह । येनेदृशीं गतिं ज्ञानम् । भवादृशेनेति निरुपमेनेत्यर्थः । स्वकृतेनैव स्वयं तुष्यतु अंजलिमात्रं विना तत्कृतोपकारे प्रत्युपकारं कः कुर्यादित्यर्थः ॥ १८ ॥ ईदृशीं गतिमित्यनेन जात्यंतरविलक्षणं ज्ञानं प्रापितवानित्युक्तं तदेव वैलक्षण्यमाह ।

युक्स तु नित्यबद्धो विद्यामयो यः स तु नित्यमुक्तः ॥" इत्याशयः ॥ १४ ॥ पुनराक्षिपति–इत्यर्थ इति । "वासुदेवे भगवति भक्तियोगः प्रयोजितः । जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम्" इत्युक्तेः । 'मत्तो ज्ञानं हि जीवानाम्' इति गीतोक्तेश्च ॥ १५ ॥ आक्षिपति अन्यो जीव इति । इत्यर्थ इति । "अहं ज्ञानप्रदो गुरुः" इत्युक्तेर्गुरावपि स्थित्वा ज्ञानदाताहमेवेति भावः । अन्यस्येश्वरेतरस्य । अत्र गर्भे ॥ १६ ॥ उदरकुहरे अत एव तप्तदेहत्वात्कृपणधीः स्वदुःखसुखदत्तदृष्टित्वात्कुबुद्धिः गणयन्नयमष्टमोऽयं नवमोऽयं दशमोयमिति मासगणनां कुर्वन् निर्वास्यते बहिर्निष्कास्यते अत्रत्यकष्टस्यासह्यत्वाद्बहिरागत्य त्वां भजेयमिति भावः । त्वयेति शेषः ॥ १७ ॥ तत्कृतमीशकृतम् । इत्यर्थ इति । अन्यस्येश्वरस्याभावादिति भावः । भवतेत्याक्षेपलब्धस्य विशेषणमिदं भवादृशेनेति । किञ्च । भवत्सदृशो दयालुर्भवानेव न त्वन्य इति मद्बुद्धिरस्तीति त्वयापि दुर्गततमोयं यदि मत्कृपानुगृहीतः स्यात्तर्हि कथं त्याज्य इति विचार्य स्वयमेव तुष्यतु । इत्यर्थ इति । न कस्यापि प्रत्युपकारसामर्थ्यमस्तीति भावः । अस्य तत्र ॥ १८ ॥ आसमिति पाठ एव प्रशस्तः प्रतिभाति स्वामिचरणैरभवमिति व्याख्यातत्वात् । छन्दोभंगस्त्वार्षः । आत्मनेपदमप्यार्षम् । इत्यर्थ इति । वस्तुतो न

सोऽहं वसन्नपि विभो बहुदुःखवासं गर्भान्न निर्जिगमिषे बहिरंधकूपे ॥ यत्रोपयातमुपसर्पति देवमाया मिथ्यामतिर्यदनु संसृतिचक्रमेतत् ॥ २० ॥ तस्मादहं विगतविक्लव उद्धरिष्य आत्मानमाशु तमसः सुहृदात्मनैव ॥ भूयो यथा व्यसनमेतदनेकरंध्रं मा मे भविष्यदुपसादितविष्णुपादः॥२१॥ कपिल उवाच ॥ एवं कृतमतिर्गर्भे दशमास्यः स्तुवन्नृषिः॥ सद्यः क्षिपत्यवाचीनं प्रसूत्यै सूतिमारुतः ॥ २२ ॥

पश्यतीति । अयमपरः पश्वादिः सत्त्वधिर्जीवः स्वदेहे शारीरके शरीरभवे सुखदुःखे केवलं ननु पश्यति अहं पुनर्यत्सृष्टया धिषणया यद्दत्तेन विवेकज्ञानेन दमशरीरी दम इत्युपलक्षणं शमदमादियुक्तशरीरवानासमभवं तमेव च पुराणमनादिं पुरुषं पूर्णं बहिश्च हृदि च पश्ये पश्यामीत्यन्वयः । कथं अपरोक्षतया प्रतीतं चैत्यमिव अहंकारास्पदं भोक्तारमिवेत्यर्थः ॥ १९ ॥ विवेकज्ञानकृतं संसारोद्वेगमनुवदन्मोक्षमार्गमेवाध्यवस्यति । सोऽहमिति द्वाभ्याम् । हे विभो बहुदुःखवासं तथा भवति यथा गर्भे वसन्नपि सोऽहं गर्भाद्बहिर्निर्गंतुमिच्छामि । तत्र हेतुः । अंधकूपप्राये यत्र बहिरुपयातं गतं प्राणिनं देवस्य तव मायोपसर्पति व्याप्नोति । यदनु यां मायामनु मिथ्यामतिर्देहेऽहंबुद्धिः । संसृतिचक्रं च कलत्रपुत्रादिसंबंधादुपसर्पति ॥ २० ॥ तस्मादत्रैव स्थितोऽपि विगतविक्लवोऽव्याकुलः सन्सुहृदा आत्मना सारथिरूपया बुद्ध्यैवात्मानं तमसः संसारादुद्धरिष्यामि अनेकरंध्रं नानागर्भवासरूपमेतद्व्यसनं दुःखं यथा मे मा भविष्यन्न भविष्यति तथा काऽत्र तव साधनसामग्री तत्राह । उपसादितौ हृदयं प्रापितौ विष्णोः पादौ येन मया सः ॥ २१ ॥ दश मासाः परिच्छेदका यस्येति प्रसूतिपूर्वक्षणोपलक्षणम् । ऋषिर्जीवः सद्यस्तत्क्षणमेव अवाचीनमवाङ्मुखम् ।

भोक्तारं भोक्तृत्वस्य मायिकत्वादिति भावः ॥ १९ ॥ तत्र बहिर्निर्गमे ॥ २० ॥ यतो बहिर्निर्यातस्य मायासंगो भवति तस्मादित्यर्थः । विष्णुरत्र श्रीकृष्णो नंदनंदन एव "तत्रांशेनावतीर्णस्य विष्णोर्वीर्यां शंस नः" इति प्रसिद्धेः । किञ्च । 'शूरो वैरिप्रशंसितः' इत्युक्तन्यायेन नास्तिकशिरोमणिनाऽमरसिंहेनापि विष्णुनामान्युक्त्वा वसुदेवोऽस्य जनकः' इति श्रीकृष्णजनकत्वेन प्रसिद्धवसुदेवस्य विष्णुपितृत्वोक्तेः । श्रीनंदनंदनस्यैव विष्णुत्वमुक्तमन्यथा 'कश्यपो ह्यस्य जनकः' इत्यादि ब्रूयात् 'धनं न गोभिः सदृशं पृथिव्याम्' इति पाराशरोक्तेर्वसुपदोपलक्षितगोरूपैर्धनैरित्यभिप्रेत्याह–वसुभिर्गोभिर्दीव्यतीति वसुदेवः । यद्वा । "द्रोणो वसूनां प्रवरो धरया सह भार्यया । जज्ञे नन्द इति ख्यातो यशोदा सा धराभवत्" इति श्रीदशमे वक्ष्यमाणत्वादवतारावतारिणोरभेदाद्वसुश्चासौ देवो वसुदेवस्स च श्री नंदराज एवेत्यलं प्रसक्तानुप्रसक्त्या । अत्रोपसादितौ विष्णुपादौ येन तस्य मे इत्यन्वयः "पादस्य लोपोऽहस्त्यादिभ्यः" इत्यनेनात्र पादशब्दस्याकारलोपे सत्यपि पदादेशाभाव आर्षः । अहमित्यस्य विशेषणे तु समासपुनरात्तत्वदोषप्रसक्तिः स्यात्सा यदि पुराणादौ नाद्रियेत तर्हि तथैवास्त्वित्यलम् ॥ २१ ॥ य ऋषिर्भगवद्द्रष्टा पूर्वोक्तरीत्या ब्रह्मवैवर्त्तवर्णितश्रीशुकदेव इव कश्चित्स दशमास्य एव स्तुवन्कृत मतिः पूर्णभगवज्ज्ञानो भवति अतः प्रसंगेनैवोक्तमहिम्नस्तस्य जन्मादिसांसारिकावस्थाभासो न वर्णनीय इति भावः । यस्तु प्रस्तुतो दुर्जीवस्तस्य तु पुनर्दुरवस्था श्रूयतामित्याह–सद्य इति । अवाचीनमधो गच्छंतं संसार पदवीमनुवर्त्तमानं तं दशमास्यत्वे सति सूतिहेतुर्मारुतः सद्यः क्षिपति । यस्तु शुकदेववद्भगवज्ज्ञानपूर्णः स तु तद्वत्स्वातंत्र्येणैवाविर्भवतीत्यर्थः । मध्यस्थानां जीवानां तु तारतम्यं ज्ञेयमिति भावः । अत्रैक एव जीवो यदि

तेनावसृष्टः सहसा कृत्वाऽवाक् शिर आतुरः ॥ विनिष्क्रामति कृच्छ्रेण निरुच्छ्वासो हतस्मृतिः ॥ २३ ॥ पतितो भुव्यसृङ्मूत्रे विष्ठाभूरिव चेष्टते ॥ रोरूयति गते ज्ञाने विपरीतां गतिं गतः ॥ २४ ॥ परच्छंदं न विदुषा पुष्यमाणो जनेन सः ॥ अनभिप्रेतमापन्नः प्रत्याख्यातुमनीश्वरः ॥ २५ ॥ शायितोऽशुचिपर्यंके जंतुस्वेदजदूषिते ॥ नेशः कंडूयनेंऽगानामासनोत्थानचेष्टने ॥ २६ ॥ तुदंत्यामत्वचं दंशा मशका मत्कुणादयः ॥ रुदंतं विगतज्ञानं कृमयः कृमिकं यथा ॥ २७ ॥ इत्येवं शैशवं भुक्त्वा दुःखं पौगंडमेव च ॥ अलब्धाभीप्सितोऽज्ञानादिद्धमन्युः शुचाऽर्पितः ॥ २८ ॥ सह देहेन मानेन वर्धमानेन मन्युना ॥ करोति विग्रहं कामी कामिष्वंताय चात्मनः ॥ २९ ॥ भूतैः पंचभिरारब्धे देहे देह्यबुधोऽसकृत् ॥ अहं ममेत्यसद्ग्राहः करोति कुमतिर्मतिम् ॥ ३० ॥ तदर्थं कुरुते कर्म यद्बद्धो याति संसृतिम् ॥ योऽनुयाति ददत् क्लेशमविद्याकर्मबंधनः ॥ ३१ ॥ यद्यसद्भिः पथि पुनः शिश्नोदरकृतोद्यमैः ॥ आस्थितो रमते जंतुस्तमो विशति पूर्ववत् ॥ ३२ ॥

सूतिहेतुर्मारुतः क्षिपति नुदति ॥ २२ ॥ अवसृष्टोऽधः क्षिप्तः सन् ॥ २३ ॥ रोरूयति रोरूयते ॥ २४ ॥ परस्य च्छंदमभिप्रायमविदुषा अनभिप्रेतं स्तन्यार्थं रोदने उदरव्यथां प्रकल्प्य निंबरसपानमुदरव्यथया रोदने स्तनपानमित्यादि ॥ २५ ॥ आसनोत्थानचेष्टने चानीशः सन् रोरूयतीत्यनुषंगः ॥ २६ ॥ आमा कोमला त्वग्यस्य तम् । विगतं गर्भे जातं ज्ञानं यस्य ॥२७॥ शैशवं पंचवर्षाणि ततः पौगंडं यौवनादर्वाक् तत्र चाध्ययनादिदुःखम् । यौवने दुःखमाह । सार्धैस्त्रिभिः । अलब्धाभीप्सितत्वेन शुचार्पितो व्याप्तः अज्ञानादिद्धो दीप्तो मन्युर्यस्य सः ॥ २८ ॥ देहेन सहैव वर्धमानेनाभिमानेन मन्युना च विग्रहं विरोधकं करोति । आत्मनोंऽताय नाशाय ॥ २९ ॥ अज्ञानं प्रपंचयति । भूतैरारब्धे देहे असदाग्रहोऽहंममेति मतिं करोति ॥ ३० ॥ तदर्थं देहार्थम् । यद्येन कर्मणा बद्धः यो देहः अनुयाति पुनःपुनरायात्यनुवर्तत इति वा । कुत अविद्याकर्मभ्यां बद्धयत इति तथा ॥ ३१ ॥ यद्यसद्भिरास्थितोऽधिष्ठितः संस्तेषां पथि रमते पथि सन्मार्गे आस्थितोऽपि यद्यसद्भिः सह रमत इति वा तर्हि

विवक्षितो भवेत्तर्हि पूर्वार्द्धेपि कृतमतिमित्येव द्वितीयांतान्येव पदानि प्रयुञ्ज्येरन्निति तत्त्वम् ॥ २२ ॥ तेन सूतिमारुतेन अवाक् अध आतुर इक्षुपीडनयंत्रनिक्षिप्तवत्पीडितः हता नष्टा स्मृतिः 'मृतश्चाहं पुनर्जातः' इत्यादिपूर्वपूर्वजन्मानुसंधानलक्षणा यस्य स तथा । तथा च पादप्राथम्येन जन्म तु कस्यचिदेव स्याच्छिरःप्राथम्येनैव जन्म प्रायो भवतीत्यप्युक्तं स्यात् ॥ २३ ॥ विण्मूत्रे विष्ठाभूः कृमिरिव ज्ञानेऽनेकजन्मगतसुखदुःखादिविषये पूर्वपूर्वमहादुःखे विस्मृते सति सांप्रतिकक्षुद्द्दुःखेनैव दुःखी भवतीति भावः । विपरीतामज्ञत्वलक्षणां भक्तजीवस्यापि वस्तुस्वाभाव्यादाबाल्यं प्रायो ज्ञानमावृतं तिष्ठति ततः किंचिन्मात्रं सत्संगोद्बुद्धपूर्वसंस्कारस्य भक्त्या भगवत्प्राप्तिरिति ज्ञेयम् ॥ २४ ॥ स बालतां गतः ॥ २५ ॥ अशुचिपर्यंके मलमूत्रलिप्तत्वादशुद्धे । दोलायमाने दारुविरचिततल्पविशेषे । जंतवश्च ये स्वेदजा जूकादयस्तैर्दूषिते शयनानर्हतां प्रापिते क्वचिज्जन्तुरिति पृथक्पदं तच्च शिशुपरम् ॥ २६ ॥ दंशाः सूचीमुखाः । मशकाः सूक्ष्ममक्षिकाः । मत्कुणाः शय्याजाता रक्तवर्णाश्चलद्रक्तपाः स्वेदजविशेषाः । आदिना लिक्षादिग्रहः । कृमिकं मणिकीटम् ॥ २७ ॥ पौगंडं दशमावधीति यद्यप्युक्तं तथाप्यत्र पठनादेस्ततः परत्रापि दर्शनाद्यौवनादर्वागिति व्याख्यातं स्वामिचरणैः । तत्र च पौगंडादौ ॥ २८ ॥ २९ ॥ अबुधोऽज्ञः देहस्य स्वतोऽन्यत्वं स्पष्टमपि तदपि तत्रैवाहं ममेति बुद्धिं करोति । यतोऽसद्ग्रहः असद्वस्त्वेव गृह्णाति न तु सदिति ॥ ३० ॥ क्लेशं नरकादिदुःखं ददत् तं पापकर्मणापि पुष्णातीति मौढ्यम् ॥ ३१ ॥ तेषामिति पदाध्याहारेणान्वये गौरवमालक्ष्याह—यद्यसद्भिरिति । यदि सद्भिः कृष्ण

सत्यं शौचं दया मौनं बुद्धिः श्रीर्ह्रीर्यशः क्षमा ॥ शमो दमो भगश्चेति यत्संगाद्याति संक्षयम् ॥ ३३ ॥ तेष्वऽशांतेषु मूढेषु खंडितात्मस्वसाधुषु ॥ संगं न कुर्याच्छोच्येषु योषित्क्रीडामृगेषु च ॥ ३४ ॥ न तथाऽस्य भवेन्मोहो बंधश्चान्यप्रसंगतः ॥ योषित्संगाद्यथा पुंसो यथा तत्संगिसंगतः ॥ ॥ ३५ ॥ प्रजापतिः स्वां दुहितरं दृष्ट्वा तद्रूपधर्षितः ॥ रोहिद्भूतां सोऽन्वधावदृक्षरूपी हतत्रपः ॥ ३६ ॥ तत्सृष्टसृष्टसृष्टेषु कोन्वखंडितधीः पुमान् ॥ ऋषिं नारायणमृते योषिन्मय्येह मायया ॥ ३७ ॥

यातनादेह आवृत्येत्यादिपूर्वोक्तप्रकारेण तमो नरकं प्रविशति ॥ ३२ ॥ ॥ असत्संगं निंदति । सत्यमिति त्रिभिः । बुद्धिः परमपुरुषार्थविषया श्रीर्धनधान्यलक्षणा ह्रीर्लज्जा यशः कीर्तिः क्षमा सहिष्णुत्वं शमो बाह्येंद्रियनिग्रहः दमो मनोनिग्रहः भग उन्नतिः यत्संगाद्येषामसतां संगात् ॥ ३३ ॥ खंडितात्मसु देहात्मबुद्धिषु योषितां क्रीडामृगवदधीनेषु ॥ ३४ ॥ यथा च योषित्संगिनां संगतो बंधस्तथाऽन्यप्रसंगतो न भवेत् ॥ ३५ ॥ योषित्संगस्यानर्थहेतुतां प्रपंचयति । प्रजापतिरिति सप्तभिः । रोहिद्भूतां मृगीरूपां सतीमृक्षरूपी मृगाकारः सन् हतत्रपो निर्लज्जः ॥ ३६ ॥ तेन ब्रह्मणा सृष्टा मरीच्यादयस्तैः सृष्टाः कश्यपादयस्तैरपि सृष्टा देवमनुष्यादयस्तेषु को नु

सेवाकृतोद्यमैरास्थितो रमते तदा जंतुः कृष्णं प्राप्नोतीत्यर्थाल्लभ्यते । पूर्ववत्पूर्वोक्तभक्तजीववदिति भावः ॥ ३२ ॥ सत्यं यथार्थोक्तिः । शौचं पावित्र्यम् । दया परदुःखासहनम् । बुद्धिः पुरुषार्थविषया । श्रीर्भक्तिसंपल्लक्षणा । ह्रीरकार्यलज्जा । क्षमा परापराधसहिष्णुता । शमो बाह्येंद्रियनिग्रहः । दमोंतरिंद्रियनिग्रहः । भगो देशाधिपत्याद्यैश्वर्यम् । येषामसतां संगात् ॥ ३३ ॥ ३४ ॥ तत्संगिसंगत इति । यथाग्न्याविष्टलोहो दहति तथाग्निरपि न दहतीति भावः । अन्येषां प्राकृतानां प्रसंगतः ॥ ३५ ॥ न च विवेकिनां महापुरुषाणां धियो भ्रंशयितुं योषिन्न शक्नोतीति वाच्यमित्याह—प्रजापतिरिति । सा लज्जिता रूपांतरं दधौ सोपि निर्लज्जः संस्तादृशमेव रूपं दधौ।इहापि दुहितृपदार्थौ द्वादशाध्यायोक्त एवानुसंधेयः । अत्र "प्रजापतिर्वै स्वां दुहितरमभ्यध्यायद्दिवमित्यन्य आहुरुषसमित्यन्ये तामृश्यो भूत्वा रोहितं भूतामभ्यैत्तस्य यद्रेतसः प्रथममुददीप्यत तदसावादित्योभवत्" इति श्रुतिरस्ति । अस्या व्याख्यानमाधुनिकं चेत्थम्—प्रजापतिः सवितेति 'शतपथ'दशमकांडद्वितीयाध्याये—तत्र "पिता दुहितुगर्भं दधाति पर्जन्यः पृथिव्याः" । 'निरुक्त'चतुर्थाध्याये—"द्यौर्मे पिता जनिता नाभिरत्र बंधुर्मे माता पृथिवी महीयम् । उत्तानयोश्चम्वोर्योनिरंतरत्रापिता दुहितुर्गर्भमाधात् ॥ शासद्वह्निर्दुहितुर्नप्त्यंकाद्विद्वां ऋतस्य दीधितिं सपर्यन् पिता यत्र दुहितुः सेकमृजन्संशग्म्ये नमसा दधन्वे" इति ऋग्मंत्रद्वयमिदम् । "योनिर्भग आदित्यः" इति निरुक्तात् । परं त्विदं व्याख्यानं विगीतमिव प्रतीयते शिष्टास्वीकृतत्वात् । इह सूर्यप्रजापतेः प्रकाशः प्रातःकालश्च पुत्रीद्वयमुक्तमिति तन्न शिष्टसंमतम् । वस्तुतस्तु सृष्ट्यारंभे पशुवद्व्यवहर्त्तव्यमन्यथा सृष्ट्यनुपपत्तेरिति ॥ ३६ ॥ नारायणमृते वर्त्तमानेषु नारायणमनुपासीनेष्वित्यर्थः । वर्त्तमानेष्विति शेषः । तेषु मध्ये नारायणं विनेति न व्याख्येयं नारायणस्य विधिसृज्यत्वापत्ते ।

बलं मे पश्यमायायाः स्त्रीमय्या जयिनो दिशाम् ॥ या करोति पदाक्रांतान् भ्रूविजृंभेण केवलम् ॥ ३८ ॥ संगं न कुर्यात्प्रमदासु जातु योगस्य पारं परमारुरुक्षुः ॥ मत्सेवया प्रतिलब्धात्मलाभो वदंति या निरयद्वारमस्य ॥ ३९ ॥ योपयाति शनैर्माया योषिद्देवविनिर्मिता ॥ तामीक्षेतात्मनो मृत्युं तृणैः कूपमिवावृतम् ॥ ४० ॥ या मन्यते पतिं मोहान्मन्मायामृषभायतीम् ॥ स्त्रीत्वं स्त्रीसंगतः प्राप्तो वित्तापत्यगृहप्रदम् ॥ ४१ ॥ तामात्मनो विजानीयात् पत्यपत्यगृहात्मकम् ॥ दैवोपसादितं मृत्युं मृगयोर्गायनं यथा ॥ ४२ ॥ देहेन जीवभूतेन लोकाल्लोकमनुव्रजन् ॥ भुंजान एव कर्माणि करोत्यविरतं पुमान् ॥ ४३ ॥

पुमानखंडितधीरनाक्रष्टमनाः ॥ ३७ ॥ दिशां जयिनः शूरानपि ॥ ३८ ॥ प्रतिलब्ध आत्मरूपो लाभो येन यस्य मुमुक्षोर्याः प्रमदा निरयद्वारं वदंति योगिनः ॥ ३९ ॥ शनैः शुश्रूषादिमिषेणोपयाति या योषिद्रूपा माया तां मृत्युं प्रतिकूलामीक्षेत ॥ ४० ॥ मुमुक्षुं स्त्रियं प्रत्येतदेवाह । या मन्यते इति द्वाभ्याम् । ऋषभायतीं पुरुषवदाचरंती या मम माया वित्तादिप्रदं पतिं मन्यते तदा तां पुरुषरूपां मायां मृत्युं विद्यादित्युत्तरेणान्वयः । यतः पूर्वजन्मनि स्वयं पुमान्स्त्रीसंगतोऽन्तकाले स्त्रीध्यानेन स्त्रीत्वं प्राप्तो जीवः ॥ ४१ ॥ तां पत्यादिरूपं मृत्युं विजानीयात् मृगयोर्लुब्धकस्य गायनमनुकूलत्वेन प्रतीयमानमपि यथा मृगस्य मृत्युः ॥ ४२ ॥ तदेवं जीवस्य संसृतिः

'सत्त्वेन नः सुरगणान्' इति ब्रह्माद्युक्तनारायणस्तुतौ ब्रह्मादीनामेव तत्सृज्यत्वोक्तेश्च । इह जगति ॥ ३७ ॥ शूरानपि सर्वा दिशो विजित्य स्वांतःपुरमागतांश्चक्रवर्त्तिनोऽपि या मां त्यक्त्वाऽन्यदेशीयाः स्त्रीः संभोक्तुं दिग्विजयं करोषि धिक् त्वामिति व्यंजकेन कोपकुटिलीकृतेन भ्रूविजृंभेण मानिनी स्त्रीजातिस्तान्प्रणमतः पदाक्रांतान्पदप्रहारपरिभूतान् करोतीति केवलं निर्णीतं नात्र युक्तिरन्वेष्टव्येतिभावः । 'निर्णीते केवलम्' इत्यमरः । अत एवोक्तं भर्तृहरिणापि-''नूनं हि ते कविवरा विपरीतबोधा ये नित्यमाहुरबला इति कामिनीस्ताः । याभिर्विलोलतरतारकदृष्टिपातैरिंद्रादयोपि विजिता अबलाः कथं ताः'' इति ॥३८॥ परं पारं मोक्षमारुरुक्षुर्ज्ञानी ''आत्मरूपोऽहमात्मा गुडाकेश'' इत्युक्तेर्भगवानेव लाभो येन तथा च भक्त इत्यायातं तेन 'न शयानः पतत्यधः' इति न्यायेन सकर्मा स्त्रीसंगकृदपि न दुष्यतीति भावः । 'द्वारं किमेकं नरकस्य नारी' इति शुकप्रश्नोत्तररत्नमालोक्तेरेकं मुख्यम् ॥ ३९ ॥ या च पुरुषं विरक्तं ज्ञात्वा स्वीयनिष्कामतां व्यंजयंती शुश्रूषादिमिषेणोपयाति साप्यनर्थकारिणीत्याह—येति अत्र तृणाच्छादितकूपस्य 'मयि जनः पततु' इति भावनाभावात् । कस्यचित्पार्श्वेऽप्यनागमनादप्यनर्थकारित्वात्सर्वत्रोदासीना वा, भक्तिज्ञानवैराग्यादिमती वा, उन्मादादपचेतना वा, निद्राणा वा, मृतापि वा, स्त्री सर्वथैव दूरे परित्याज्येति व्यंजितम् ॥ ४० ॥ यथा भक्तिज्ञानवतां पुंसां योषिदनर्थहेतुस्तथैव भक्तिज्ञानवतीनां योषितां पुमांश्चेत्याह—यामिति ॥ ४१ ॥ ४२ ॥ तत्र च संसृतौ च । तस्य जीवस्य । तत्र लोकांतरगमनादौ । शंकामाह—नन्विति । ननु जीवो येन देहेन कर्म कुरुते तं देहं त्यक्त्वा देहांतरे तत्फलं

जीवो ह्यस्यानुगो देहो भूतेंद्रियमनोमयः ॥ तन्निरोधोऽस्तु मरणमाविर्भावस्तु संभवः ॥ ४४ ॥ द्रव्योपलब्धिस्थानस्य द्रव्येक्षाऽयोग्यता यदा ॥ तत्पंचत्वमहंमानादुत्पत्तिर्द्रव्यदर्शनम् ॥ ४५ ॥ यथाऽक्ष्णोर्द्रव्यावयवदर्शनायोग्यता यदा ॥ तदैव चक्षुषो द्रष्टुर्द्रष्टृत्वायोग्यताऽनयोः ॥ ४६ ॥ तस्मान्न कार्यः संत्रासो न कार्पण्यं न संभ्रमः ॥ बुद्ध्वा जीवगतिं धीरो मुक्तसंगश्चरेदिह ॥ ४७ ॥

प्रपंचिता तत्र च तस्य कर्मवशेन लोकाल्लोकांतरगमनं जन्ममरणं चोक्तम् । तत्रैवं शंक्यते । ननु व्यापकस्य कथं लोकाल्लोकांतरगमनम् । नित्यस्य च कथं जन्ममरणे भोगेन कर्मक्षये च सति जन्म मरणं च नेष्यते । तत्कुतः पुनरपि तस्य कर्मसंभव इति तत्र लोकांतरगमनं कर्म च संभवतीत्याह । देहेनेति । जीवस्योपाधितया भूतेन जातेन लिंगदेहेन लोकांतरमनुव्रजन् अविरतं कर्माणि करोतीति कर्मणामसमाप्तिरुक्ता ॥ ४३ ॥ जन्ममरणसंभवमाह । जीवो जीवोपाधिर्लिंगदेहोऽस्यात्मनोऽनुगोऽनुवर्ती भूतेंद्रियमनोमयः स्थूलभूतादिविकारो देहो भोगायतनं तयोर्निरोधः कार्यायोग्यता तदस्य जीवस्य मरणमुच्यते । आविर्भावस्तु संभवो जन्मोच्यते ॥ ४४ ॥ एतदेव दृष्टांतेन स्पष्टयति । द्रव्योपलब्धिस्थानस्य नेत्रगोलकादेर्द्रव्येक्षायां रूपादिदर्शने काचकामलादिदोषेण यदाऽयोग्यता भवति तदैव चक्षुष इंद्रियस्याप्ययोग्यता अनयोः स्थानचक्षुषोर्यदाऽयोग्यता तदैव द्रष्टुर्जीवस्य द्रष्टृत्वायोग्यता एवं स्थूलदेहवैकल्ये लिंगस्य वैकल्यं तदेव जीवस्य मरणं न स्वत इत्यर्थः । क्वचिदेकः श्लोकोऽधिकः पठ्यते । तत्रायमर्थः द्रव्योपलब्धिस्थानस्य स्थूलशरीरस्य द्रव्येक्षायां यदाऽयोग्यता तत्पंचत्वं मरणम् । अहंमानादिदमेवाहमित्यभिमानेन द्रव्यस्य स्थूलशरीरस्य दर्शनमुत्पत्तिः अक्ष्णोर्गोलकयोर्द्रव्यावयवस्य रूपादेर्दर्शनेऽयोग्यता शेषं समानम् ॥ ४५ ॥ ४६ ॥ यस्मान्न वस्तुतो जीवस्य जन्ममरणादिस्तस्मान्मरणात्संत्रासो न

स्वर्गादि भुंक्ते इति को न्यायस्तत्राह–येनैव कुरुते तेनैव भुंक्ते देहेन लिंगदेहेनोपाधिगमनेनोपाधिस्थजीवस्यापि गमनं संभवति यथा व्यापकस्याप्याकाशस्य घटोपाधिगमनादिना गमनादि तथात्राप्यनुसंधेयमिति । तत्र भुंजान एव भोगमसमाप्नुवन्नेव पुनर्मर्त्यलोकमागत्य कर्माणि कुरुतेऽतः स्थूलदेहस्य पुत्रादिदेहवद्द्वारमात्रत्वाल्लिंगदेहेनैव कर्म कुरुते तेनैव च भुंक्ते वक्ष्यति च प्राचीनबर्ह्युपाख्याने ''येनैव कुरुते कर्म तेनैवामुत्र तत्पुमान्। भुंक्ते ह्यव्यवधानेन'' इति ॥ ४३ ॥ तयोर्लिंगस्थूलयोः । तच्च मरणं स्थूलदेहविगमे स्थूलांतरप्राप्तिप्राग्भवे सुषुप्त्यादौ कार्याक्षमत्वेपि कार्यप्रतियोग्यतास्त्यत्र सुषुप्त्यादिभंगे सद्य एव तद्योग्यतादर्शनात् । जन्म तु भोगायतनदेहविगमे स्थूलांतरप्राप्तौ गर्भान्निष्क्रमणकाले भवेदिति ॥ ४४ ॥ एतदेव मृतिजन्मैव । काचकामला नेत्ररोगविशेषः । आदिना तिमिरादिग्रहः । इत्यर्थ इति । जीवस्याजरामरत्वात् ''न म्रियते म्रियमाणे शरीरे' इत्यादि श्रुतेरिति भावः ॥ ४५ ॥ ४६ ॥ ४७ ॥

सम्यग्दर्शनया बुद्ध्या योगवैराग्ययुक्तया ॥ मायाविरचिते लोके चरेन्न्यस्य कलेवरम् ॥ ४८ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे कापिलेये पुण्यपापैर्जीवगतिवर्णनं नाम एकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥ कपिल उवाच ॥ अथ यो गृहमेधीयान् धर्मानेवावसन् गृहे ॥ काममर्थं च धर्मान् स्वान् दोग्धि भूयः पिपर्ति तान् ॥ १ ॥ स चापि भगवद्धर्मान् काममूढः पराङ्मुखः ॥ यजते क्रतुभिर्देवान् पितॄंश्च श्रद्धयाऽन्वितः ॥ २ ॥ तच्छ्रद्धयाऽऽक्रांतमतिः पितृदेवव्रतः पुमान् ॥ गत्वा चांद्रमसं लोकं सोमपाः पुनरेष्यति ॥ ३ ॥ यदा चाहींद्रशय्यायां शेतेऽनंतासनो हरिः ॥ तदा लोका लयं यांति त एते गृहमेधिनाम् ॥ ४ ॥ ये स्वधर्मान्न दुह्यंति धीराः कामार्थहेतवे ॥ निःसंगा न्यस्तकर्माणः प्रशांताः शुद्धचेतसः ॥ ५ ॥

कार्यो जीवने च न कार्पण्यं दैन्यं कार्यम् । संभ्रमश्च जीवनप्रयत्ने ॥ ४७ ॥ ननु सर्वथा मुक्तसंगत्वे कथं जीवितमत आह । सम्यक् पश्यति विचारयतीति सम्यग्दर्शना तया बुद्ध्या मायाविरचिते लोके कलेवरं न्यस्य निक्षिप्य तस्मिन्नासक्तिं त्यक्त्वा विचरेदित्यर्थः ॥ ४८ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे टीकायां एकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥ द्वात्रिंशे सात्त्विकैर्धर्मैरूर्ध्वं गतिरुदीर्यते ॥ तत्र ज्ञानविहीनस्य ततश्च पुनरागतिः ॥ १ ॥ तदेवं पापकर्मणो गतिरुक्ता इदानीं काम्यकर्मणो गतिमाह । अथेति चतुर्भिः । यो गृह एवावसन्स्वान्धर्मान्दोग्धि दोह्यमाह-काममर्थं च तान्दुग्धान्धर्मान्भूयः पिपर्ति पूरयत्यनुतिष्ठति ॥ १ ॥ सोऽपि भगवदाराधनरूपाद्धर्मात्पराङ्मुखः सन्प्राकृतानपि देवान्पितॄंश्च यजते ॥ २ ॥ ततः किं तत्राह । तेषां श्रद्धयाऽऽक्रांता व्याप्ता मतिर्यस्य पित्रर्थं देवार्थं च व्रतं नियमो यस्य सोमपाः तत्र सोमं पीत्वेत्यर्थः ॥ ३ ॥ लोके तिष्ठत्यपि पुण्यक्षयात्पातमुक्त्वा लोकानामपि लयमाह । यदा चाहरहः प्रलये ॥ ४ ॥ भगवद्धर्मनिष्ठानां तत्प्राप्तिमेव गति

अत्राक्षिपति—नन्विति । इत्यर्थ इति । शरीरासक्तित्यागेन जीवन्मुक्तिलाभात्तत्पाते च विदेहमोक्षः स्यादिति ॥ ४८ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे एकत्रिंशोध्यायः ॥ ॥ ३१ ॥ तत्रोर्द्ध्वगतावपि । तत ऊर्द्ध्वगतेः ( १ ) अथ कात्स्न्र्येव्ययम् । यः कात्स्न्र्येन गृहमेधयानाग्निहोत्रादीन् यथा गाश्चारयित्वा दुग्धानि दोग्धि पुनरपि दुग्धप्राप्त्याशया ताश्चारयतीत्येव मत्र बोध्यम् ॥ १ ॥ स च गृहमेधिधर्मानुष्ठाता । प्राकृतानपि क्षुद्रानपि ॥२॥ ततः देवाद्यर्चनात् । तत्र चंद्रलोके । इत्यर्थ इति । पुनरायातीति भावः । तथा चात्र श्रुतयः—"अथ ये यज्ञेन दानेन तपसा लोकान् जयंति ते धूममभिसंभवंति धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान्षण्मासान्दक्षिणादित्य एति मासेभ्यः । पितृलोकं पितृलोकाच्चंद्रलोकं प्राप्यान्नं भवंति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेतांस्तत्र भक्षयंति तेषां यदा तत्पर्यवैति अथेममाकाशमभिनिष्पद्यंते ॥ आकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं प्राप्यान्नं भवति एवमेवानुपरिवर्तंते" इति । अर्थस्तु—धूममभिसंभवंति प्रथमं धूमाभिमानिनीं देवतां प्राप्नुवंति एवमुत्तरोत्तरं ज्ञेयम् । अपक्षीयमाणपक्षं कृष्णपक्षं यान्कर्कादिचापांतान्षण्मासान्दक्षिणादित्य एति तानित्यर्थः । अन्नं देवान्नं तत्रस्था देवा यथा चंद्रं चंद्रादमृतं पिबंति तथा तान्भक्षयंति तेषां पुण्यफलमन्नं भक्षयंतीत्यर्थः । तेषां यत्पुण्यं यदा पर्यवैति। तदा सोमलोकादिममाकाशं निष्पद्यंते प्राप्यंते पृथिव्यां मनुष्याद्यन्नं भवति ततो वीर्यरूपेण परिणतात्पुनर्जायंत इति शेषार्थः॥३॥त एते भूरादयस्त्रयः।"अंतास्त्रिलोक्यास्त्वपरो गृहमेधो बृहद्व्रतः"इत्युक्तेः॥४॥न दुहंति कर्मफलं

निवृत्तिधर्मनिरता निर्ममा निरहंकृताः ॥ स्वधर्माख्येन सत्त्वेन परिशुद्धेन चेतसा ॥ ६ ॥ सूर्यद्वारेण ते यांति पुरुषं विश्वतोमुखम् ॥ परावरेशं प्रकृतिमस्योत्पत्त्यंतभावनम् ॥ ७ ॥ द्विपरार्धावसाने यः प्रलयो ब्रह्मणस्तु ते ॥ तावदध्यासते लोकं परस्य परचिंतकाः ॥ ८ ॥ क्ष्मांऽभोऽनलाऽनिलवियन्मनइंद्रियार्थभूतादिभिः परिवृतं प्रतिसंजिहीर्षुः ॥ अव्याकृतं विशति यर्हि गुणत्रयात्मा कालं पराख्यमनुभूय परः स्वयंभूः ॥ ९ ॥ एवं परेत्य भगवंतमनुप्रविष्टा ये योगिनो जितमरुन्मनसो विरागाः ॥ तेनैव साकममृतं पुरुषं पुराणं ब्रह्म प्रधानमुपयांत्यग ताभिमानाः ॥ १० ॥ अथ तं सर्वभूतानां हृत्पद्मेषु कृतालयम् ॥ श्रुतानुभावं शरणं व्रज भावेन भाविनि ॥ ११ ॥

माह त्रिभिः । ये तु कामार्थप्रयोजनाय स्वधर्मान्न दुह्यंति न दुहंति निःसंगा अनासक्ताः । न्यस्तानीश्वरे समर्पितानि कर्माणि यैः ॥ ५ ॥ ६ ॥ विश्वतोमुखं परिपूर्णं पुरुषं यांति । तथा च श्रुतिः । "सूर्यद्वारेण ते विरजाः प्रयांति यत्रामृतः पुरुषो ह्यव्ययात्मा" इति प्रकृतिमुपादानकारणम् । उत्पत्त्यंतभावनं निमित्तकारणम् ॥ ७ ॥ परमेश्वरदृष्ट्या हिरण्यगर्भोपासकानामपि क्रमेण तत्प्राप्तिमाह । द्विपरार्धावसान इति त्रिभिः । परस्य हिरण्यगर्भस्य परचिंतकाः परमेश्वरदृष्ट्या हिरण्यगर्भोपासकाः ॥ ८ ॥ क्ष्मादीनि पंचमहाभूतानि मनश्चेंद्रियाणि चार्थाश्च शब्दादयो भूतादिश्चाहंकार एवमादिभिः परिवृतं युक्तं ब्रह्मांडं प्रति संहर्तुमिच्छुः सन् अव्याकृतमीश्वरम् । पराख्यं द्विपरार्धलक्षणं कालम् ॥ ९ ॥ परेत्य दूरं गत्वा भगवंतं हिरण्यगर्भमनुप्रविष्टा ये योगिनोऽमृतं परमानंदरूपं प्रधानमुत्कृष्टं ब्रह्म तेनैव सहोपयांति न तु पूर्वम् । यतस्तदाऽगताभिमानाः ॥ तथा च स्मृतिः "ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यांते कृतात्मानः प्रविशंति परं पदम्" इति ॥ १० ॥ भगवदुपासकास्तु साक्षादेव तं प्राप्नुवंति

स्वर्गादि नेच्छंति प्रकर्षेण शांता भगवन्निष्ठबुद्धयः ॥ ५ ॥ स्वस्य पुरुषस्य धर्मः शुद्धसत्त्वगुणस्तेन । यद्वा । सत्त्वेनात्मभावेन परमात्मभक्त्या परिशुद्धेनोभयत्रान्वेति ॥ ६ ॥ पुरुषप्राप्तौ प्रमाणमाह—तथा चेति । स्पष्टार्थत्वान्न व्याख्याता । उत्पत्त्यंतौ भावयतीत्युत्पत्त्यंतभावनस्तम् ॥७॥ ब्रह्मा परमेश्वरस्य गुणावतार एवेति परमेश्वरदृष्ट्या क्रमेण भक्तिमिश्रज्ञानेन तत्प्राप्तिं मुक्तिम् । ये तु केवलं हिरण्यगर्भोपासकास्तेषां ब्रह्मणो मुक्तावपि न मुक्तिरिति । लोकं सत्यलोकम् । "अधिशीङ्स्थासां कर्म" इत्याधारस्य कर्मत्वम् ॥ ८ ॥ ततश्च महाप्रलये सति ब्रह्मा मुच्यते इत्याह—क्ष्मेति । परिवृतं स्वदेहं वैराजं प्रति संजिहीर्षुस्त्यक्तुमिच्छुरव्याकृतं परमेश्वरं प्रकृत्यंतर्यामिणं विशति गुणत्रयात्मा रजोगुणोपाधिकोपि त्रिगुणोंशेन सत्त्वतमसी अपि बिभर्तीत्यर्थः । प्रकृत्या तादात्म्यं प्राप्त इति संदर्भः ॥९॥ तेनैव ब्रह्मणैव । प्रमाणमाह—तथा चेति । ते हिरण्यगर्भोपासकाः । प्रतिसंचरे प्रलये । परस्य ब्रह्मणोंते शरीरे कृतात्मानः प्रविष्टदेहा इत्यर्थः । न तु पूर्वं ब्रह्मणः प्राक् न तदा तेषां साभिमानत्वाद्ब्रह्मलोकं गतास्तु स्वयं प्रभातवेदविचारेण गताभिमानाः संतः परं प्राप्नुवंतीत्यर्थः । विश्वनाथः—एवं ब्रह्मणो मुक्तावपि तदुपासका भक्त्यभावान्न मुच्यंत इत्याह—एवमिति । परेत्य ब्रह्मलोके देहं त्यक्त्वा भगवंतं ब्रह्माणमनुप्रविष्टा ये योगिनस्ते तेन ब्रह्मणा साकं पुरुषं परमेशं प्रधानमुत्कृष्टं ब्रह्मोपयांति प्रविशंति अगताभिमाना वयं हिरण्यगर्भोपासका इत्यभिमानवतस्तेन परमेश्वरे तेषामात्यंतिको न लयः । किं तु प्राकृतिक एवेति तेन पुनर्जगत्सर्गे तेषामपि सर्गो भवतीति भावः ॥ १० ॥ यतस्तत्र क्रमापेक्षा नास्ति अतो हेतोः तमेव भगवंतमेव

आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिः ॥ योगेश्वरैः कुमाराद्यैः सिद्धैर्योगप्रवर्तकैः ॥ १२ ॥ भेददृष्ट्याभिमानेन निःसंगेनापि कर्मणा ॥ कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभः ॥ १३ ॥ स संसृत्य पुनः काले कालेनेश्वरमूर्तिना ॥ जाते गुणव्यतिकरे यथापूर्वं प्रजायते ॥ १४ ॥ ऐश्वर्यं पारमेष्ठ्यं च तेऽपि धर्मविनिर्मितम् ॥ निषेव्य पुनरायांति गुणव्यतिकरे सति ॥ १५ ॥ ये त्विहासक्तमनसः कर्मसु श्रद्धयाऽन्विताः ॥ कुर्वं त्यप्रतिषिद्धानि नित्यान्यपि च कृत्स्नशः ॥१६॥ रजसा कुंठमनसः कामात्मानोऽजितेंद्रियाः ॥ पितॄन्यजंत्यनुदिनं गृहेष्वभिरताशयाः॥१७॥

न क्रमेणातस्त्वं साक्षात्तमेव भजेत्याह । अथ तस्मात् । भावेन प्रेम्णा ॥ ११ ॥ एवं तावद्भगवद्भक्तानां निरंतरमेव तत्प्राप्तिर्भगवद्भेदेन हिरण्यगर्भोपासकानां तु क्रमेणेत्युक्तम् । भेदेनोपासने तु ब्रह्मादयोऽप्यावर्तंते किमुतान्य इत्याह । आद्य इति चतुर्भिः । यो वेदगर्भः सोऽपि गुणव्यतिकरे जाते यथापूर्वं ब्रह्मपदाधिकृतः सन्प्रजायते इति तृतीयेनान्वयः । न केवलं स एवैकः किं तु ऋषिभिर्मरीच्यादिभिर्योगेश्वरादिभिश्च सह ॥ १२ ॥ जन्मनि हेतुद्वयम् । भेददृष्ट्याऽभिमानेन कर्तृत्वादिति च । यथापूर्वत्वे हेतुः । निःसंगेन निष्कामेन कर्मणेति ॥ १३ ॥ किं कृत्वाऽत्र प्रजायते प्रथमं पारमेष्ठ्यमैश्वर्यं निषेव्य पश्चात्प्रलये सगुणं गुणाधिष्ठातारं प्रथमावताररूपं पुरुषं संसृत्य प्राप्य तेऽपि ऋषिप्रमुखाः स्वकर्मनिर्मितमैश्वर्यं निषेव्य पुरुषं च संसृत्य यथापूर्वं स्वस्वाधिकारेण पुनरायांतीत्यन्वयः ॥ १४ ॥ १५ ॥ यदा ब्रह्मोपासकानामपि भेददर्शनाभिमानाभ्यामेवमावृत्तिस्तदा काम्यकर्मिणां किं वक्तव्यमिति तान्निंदन्नाह षड्भिः । ये त्विह कर्मस्वासक्तमनसः संतोऽप्रतिषिद्धानि काम्यानि नित्यानि च कर्माणि

भावेन 'येषामहं प्रिय आत्मा सुतश्च' इत्युक्तरीत्या प्रियत्वाद्यभिमानैकतमेन तत्रापि प्राप्ततया सुतभावेनेत्याह—भाविनीति संदर्भः ॥ ११ ॥ विश्वनाथः—ननु ब्रह्मा मुक्तो भवेदथ च स्वभक्तान्मोचयितुं नेष्ट इति कथं प्रतीमस्तत्र ''मामेव ये प्रपद्यंते मायामेतां तरंति ते'' इति भगवत्प्रतिज्ञाश्रुतेर्भक्तिं विना ब्रह्मापि संसरति के पुनरन्ये वराका इत्याह । आद्यः स्रष्टृत्वात्कारणरूपोपि सर्ववेदविदपि ऋषिभिर्मरीच्यादिभिरपि सह योगिभिः साधकैः सहेति किं वक्तव्यं योगेश्वरैः सिद्धेश्वरैरपि सह भेददृष्ट्या यथा रुद्रः संहरति विष्णुः पालयति तथाहमपि ब्रह्मा सृजामीति भगवतः सकाशाद्भेददृष्ट्या योऽभिमानस्तेन यत्कर्तृत्वं तस्मात्सगुणं कल्याणगुणमयं ब्रह्म महत्स्रष्टारं काले महाप्रलयकाले प्रविश्य पुनः कालेन गुणव्यतिकरे महत्तत्त्वादौ जाते सति यथापूर्वं प्रजायते ब्रह्मा भवतीत्यर्थः । तेपि तत्संगिनो महर्ष्यादयोपि कर्मज्ञानयोगादिविनिर्मिताणिमाद्यैश्वर्यादिकं पूर्वमहाकल्प एव निषेव्य पुनर्महाकल्पांतरे आयांत्यावर्त्तंते । ननु योगेश्वराणां सनत्कुमारादीनाञ्च सिद्धानामन्येषाञ्च योगप्रवर्त्तकत्वेन सर्वज्ञानिगुरूणां च कथं भेददृष्टिरभिमानो वा संभवेत्ताभ्यां स्थिताभ्याञ्च कथं योगेश्वरादित्वमुच्यते तेषां निरभिमानानां निर्भेदब्रह्मानुसंधानमस्त्येव । किं तु भेदव्युदासेन मायाशबलितब्रह्मत्वबुद्ध्या मायिकवस्त्वंतरवद्भेददृष्टिस्तथा वयं ब्रह्मानुभविनः साकारं रूपं निषिध्याम इत्यभिमानश्च ताभ्यामेव दोषाभ्यां यत्कर्तृत्वं कर्माधिकारस्तस्मादावृत्तिरित्येतच्च काचित्कब्रह्मांडवर्त्तिब्रह्मब्राह्मणयोगिज्ञानिकुमारादीनामभक्तत्वादुक्तं तदन्यसर्वब्रह्मांडवर्त्तिनां ब्रह्मादीनाम् । तेषां तु भक्तिमत्त्वान्मुक्तिप्रेमभक्तिभगवद्दास्यादिभावप्राप्तयो यथायथं भक्तितारतम्याज्ज्ञेयाः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ अर्यम्णः सूर्यस्य ''सूरसूर्यार्यमादित्य—''इत्यमरात् ॥ १६ ॥ ननु ''श्राद्धकृत्सत्यवादी च गृहस्थोपि विमुच्यते'' इति याज्ञवल्क्यादिभिः पितृयजनस्यापि मुक्तिहेतुत्वकथनात्कथमत्र त्रैवर्गिकेषु पितृयाजिनो गणनेति चेत्सत्यं तच्च हर्यर्पितान्नादिना पितृयजनपरं तदनर्पितान्नादिना पितृयाजिनस्तु निंद्या एव त्रैवर्गिकत्वमपि तेषामशोभनमेव

त्रैवर्गिकास्ते पुरुषा विमुखा हरिमेधसः ॥ कथायां कथनीयोरुविक्रमस्य मधुद्विषः ॥ १८ ॥ नूनं दैवेन विहता ये चाच्युतकथासुधाम् ॥ हित्वा शृण्वंत्यसद्गाथाः पुरीषमिव विड्भुजः ॥१९॥ दक्षिणेन पथाऽर्यम्णः पितृलोकं व्रजंति ते ॥ प्रजामनु प्रजायंते श्मशानांतक्रियाकृतः ॥ ॥ २० ॥ ततस्ते क्षीणसुकृताः पुनर्लोकमिमं सति ॥ पतंति विवशा दैवैः सद्यो विभ्रंशितोदयाः ॥ २१ ॥ तस्मात्त्वं सर्वभावेन भजस्व परमेष्ठिनम् ॥ तद्गुणाश्रयया भक्त्या भजनीयपदांबुजम् ॥ २२ ॥ वासुदेवे भगवति भक्तियोगः प्रयोजितः ॥ जनयत्याशु वैराग्यं ज्ञानं यद् ब्रह्मदर्शनम् ॥ २३ ॥ यदाऽस्य चित्तमर्थेषु समेष्विंद्रियवृत्तिभिः ॥ न विगृह्णाति वैषम्यं प्रियमप्रियमित्युत ॥ २४ ॥

कृत्यानि कुर्वंति तेऽर्यम्णो दक्षिणेन पथा धूममार्गेण पितृलोकं व्रजंतीति पंचमेनान्वयः । मध्ये तन्निंदा ॥ १६ ॥ १७ ॥ हरति संसारं मेधा यस्य कथनीया उरवो विक्रमा यस्य तस्य मधुद्विषः कथायां विमुखाः संतो ये त्रैवर्गिकाः ये चाच्युतस्य कथासुधां हित्वाऽसतां गाथाः शृण्वंति ते नूनं दैवेन विहता इत्यन्वयः ॥ १८ ॥ ॥१९॥ पितृलोकात्पुनः प्रजामनु स्वपुत्रादिषु प्रजायंते गर्भाधानादारभ्य श्मशानांताः क्रियाः कृतवंतः यथोक्तकारिण इत्यर्थः ॥ २० ॥ कथं प्रजायंते तदाह । ततस्ते पुनरिमं लोकं प्रति पतंति । विभ्रंशित उदयो भोगसाधनं येषाम् ॥ २१ ॥ परमेष्ठिनं परमेश्वरम् । सर्वभावेनातिप्रीत्या तस्य गुणानाश्रयते या भक्तिस्तया ॥ २२ ॥ भजने च ज्ञानवैराग्ये स्वत एव भवत इत्याह वासुदेव इति ॥ २३ ॥ तदेवोपपादयति । यदाऽस्य भक्तस्य चित्तं भगवद्गुणानुरागेण तस्मिन्नेव निश्चलं सदिं

तथा च श्रुतिः । "विष्णुनाशितमश्नंति पितरो देवताश्च" इति । किञ्च । "विष्णोर्निवेदितान्नेन यष्टव्यं देवतांतरम् । पितृभ्यश्चापि तद्देयं तदानंत्याय कल्पते" इति पुराणाच्च । विपक्षे "पितृशेषं तु योदद्याद्धरये परमात्मने । रेतोदाः पितरस्तस्य भवंति क्लेशभागिनः ॥" इति पुराणांतरे दोषश्रवणाच्च इत्यभिप्रेत्यैवोक्तं "विमुक्तिदा येनभिसंधितेषु" इति मार्कंडेये । रुचिनाऽनभिसंधितेष्वंतःकरणशुद्धिद्वारा ज्ञानोपयोगित्वात्पितृपूजनतत्परेषु पितरो मोक्षदा अन्यथा कामदा इत्यर्थः ॥ १७ ॥ विक्रमाः पुरुषार्था गोवर्द्धनोद्धरणादिलक्षणाः ॥ १८ ॥ संसारदोषहारिण्यामपि हरिकथायामपि दोषापादनं खलानां निसर्ग एव तदुक्तं "खलो मृगयते दोषं गुणपूर्णेषु वस्तुषु । वने पुष्पकलाकीर्णे पुरीषमिव विड्भुजः" इति शिष्टोक्तेः ॥१९॥ इत्यर्थ इति । एतावता प्रवृत्तिमार्गः पुनरावृत्तिहेतुरित्यापादितमिति भावः ॥ २० ॥ भोगसाधनं पुण्यं "क्षीणे पुण्ये मर्त्यलोकं विशंति" इति गीतोक्तेः ॥ २१ ॥ निवृत्तकर्मपराणामंते "अथ तं सर्वभूतानां हृत्पद्मेषु कृतालयम् । शरणं व्रज" इत्युक्तं तथा प्रवृत्तकर्मपराणामप्यंत आह-तस्मात्त्वमिति । तेन त्वं प्रवृत्तं निवृत्तं च कर्म मा कुर्वित्याह-तस्मादिति । यतो भक्तिरेव मुख्या तस्मादित्यर्थः । सर्वभावेन सर्वात्मना । ननु सा कथं स्यात्तत्राह-तद्गुण एवाश्रयः प्रवृत्तिहेतुर्यस्याः । 'अहो बकीयम्' इत्यादिरीत्या तदनुसंधाने कृते सा प्रवर्त्तत एवेति भावः । भजनीयपदांबुजमिति । तदा तस्य सौंदर्यादिकमभ्युल्लसितं तद्भजनं निरंतरमेव रोचयति । अंबुजं खलु कस्मै मधुपाय न रोचत इति भावः । तदेवं तत्र पुरुषार्थांतरमपि निरस्तम् ॥ २२ ॥ ज्ञानादीच्छुरपि भक्तिमेव कुर्यादित्याह-भजने चेति । ब्रह्म दर्शयतीति ब्रह्मदर्शनं ब्रह्मानुभवरूपम् ॥ २३ ॥ तदेव ज्ञानवैराग्ययोर्भक्तिजन्यत्वमेव । अर्थेषु समेषु प्राकृतेषु दृश्यश्रव्यस्पृश्यादिवस्तुषु इंद्रियग्राह्यत्वांशेन । वस्तुतस्त्वन्येष्वपीदं मे

स तदैवाऽऽत्मनात्मानं निःसंगं समदर्शनम् ॥ हेयोपादेयरहितमारूढं पदमीक्षते ॥२५॥ ज्ञानमात्रं परब्रह्म परमात्मेश्वरः पुमान् ॥ दृश्यादिभिः पृथग्भावैर्भगवानेक ईयते ॥ २६ ॥ एतावानेव योगेन समग्रेणेह योगिनः ॥ युज्यतेऽभिमतो ह्यर्थो यदसंगस्तु कृत्स्नशः ॥ २७ ॥

द्रियवृत्तिभिर्वैषम्यमर्थेषु न विगृह्णाति ॥ २४ ॥ तदैवात्मनात्मानं स्वप्रकाशमीक्षते । कथंभूतम् । समं च तद्दर्शनं च तत्कुतः निःसंगम् । संगाद्धि वैषम्यं भवति निःसंगत्वे हेतुः । हेयोपादेयरहितम् । तत्कुतः पदं व्यवसितमारूढं परमानंदोऽहमिति निश्चयं प्राप्तमित्यर्थः ॥ २५ ॥ समेष्वर्थेष्वित्युक्तं तदेव साम्यं दर्शयति । ज्ञानमात्रमेव परब्रह्मादिशब्दैः प्रसिद्धम् । दृश्यादिभिर्दृश्यद्रष्टृकरणरूपेण पृथक् प्रतीयते । ज्ञानमात्रत्वेन समेष्वित्यर्थः ॥ २६ ॥ ननु ज्ञानमात्रमात्मनः स्वरूपत्वान्नित्यप्राप्तमेवेति

प्रियं श्रव्यादीदमप्रियमित्येवं वैषम्यं न गृह्णाति निंदास्तुत्यादिषु लोष्टकांचनादिषु च समभावनं स्यादित्यर्थः ॥ २४ ॥ स समदर्शी । तदैव वैषम्यनिवृत्तौ सत्यामेव । समदर्शनमविषमज्ञानरूपमित्यर्थः । समदर्शने हेतुमाशंकते कुत इति । तद्धेयोपादेयरहितत्वं कुत इति । "पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु" इत्यमरः । इत्यर्थ इति । स्वस्वरूपमनुभवन्परमानंदरूपोहमस्मीतीक्षते जानातीति भावः ॥ २५ ॥ इत्यर्थ इति । ज्ञानगम्यत्वेन समेष्वर्थेषु । यद्वा । ज्ञानरूपत्वेन वा समेषु "बुद्धींद्रियार्थरूपेण ज्ञानं भाति तदाश्रयम् । रूपं चक्षुश्च दीपश्च ज्योतिषो न पृथग्भवेत् ॥" इत्याद्युक्तेरिति भावः । विश्वनाथः— एवञ्च भक्तियोगाध्यायोक्तं 'पश्यंति ते मे रुचिराण्यंब' इति भक्तिफलं भगवद्धाम्नि प्रेमवत्पार्षदत्वं तथा ज्ञानयोगाध्यायोक्तं "निःश्रेयसं स्वसंस्थानं कैवल्याख्यं मदाश्रयम्" इत्यादिना ज्ञानफलं ब्रह्मैक्यं तथाष्टांगयोगाध्यायोक्तं 'मुक्ताश्रयं यर्हि निर्विषयं विरक्तं निर्वाणमृच्छति' इत्यादिभिर्योगफलमपि ज्ञानवैराग्याभ्यां मोक्षमेव सांप्रतं तु 'तस्मात्त्वम्' इत्यादिना 'वासुदेव' इत्यादिना च तत्तत्सर्वं भक्तिज्ञानयोगफलं केवलयैव भक्त्या सिध्यतीत्युच्यते । "अकामः सर्वकामो वा मोक्षकाम उदारधीः । तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥" इति । उक्तं च 'यत्कर्मभिर्यत्तपसा' इत्यादौ । "सर्वं मद्भक्तियोगेन मद्भक्तो लभतेंजसा । स्वर्गापवर्गं मद्धाम कथंचिद्यदि वांछति ॥" इति वक्ष्यते च । तत्र का युक्तिरित्यपेक्षायामाह—ज्ञानमात्रमिति । एको भगवान्षडैश्वर्यपूर्णो वैकुंठनाथ एव दृश्यादिभिः दृशिर्ज्ञानं तदादिभिः साधनैः । पृथग्भावैः पृथग्भावनावद्भिरुपासकैः परब्रह्मादिरूप ईयते ईर्यते, इति च पाठः । यद्वा । दृश्यैःस्वरूपैरदृश्यैःस्वरूपैर्दृश्यादृश्यैश्च स्वरूपैः । तत्र परब्रह्मणो लक्षणं ज्ञानमात्रमिति परमात्मनो लक्षणमीश्वरः पुमानिति । तेन भगवत एव ब्रह्मत्वात्परमात्मत्वाच्च भगवत्साधनभूतया भक्त्यैव स्वसाध्यं प्रेमवत्पार्षदत्वं ज्ञानयोगसाध्यं सायुज्यं च सिद्ध्यति न च तथा ब्रह्मसाधनेन ज्ञानेन परमात्मसाधनेन योगेन वा प्रेमवत्पार्षदत्वं सिद्ध्यति प्रमाणाभावादेवेति । अत्र ब्रह्मणो निराकारत्वाददृश्यं स्वरूपं परमात्मनोपि निराकारत्वाददृश्यं "केचित्स्वदेहांतर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसंतम् । चतुर्भुजम्" इत्यादिना 'सहस्रशीर्षा पुरुषः' इत्यादिश्रुत्या केषांचिन्मते साकारत्वाद्दृश्यं भगवतश्च ब्रह्मत्वात्परमात्मत्वाच्चादृश्यं भगवदवतारकाले दृश्यमन्यदा दृश्यादृश्यञ्च । यदुक्तं विष्णुपुराणे प्रथमेंशे "प्राकृतब्रह्मरूपस्य विष्णोः स्थानमनुत्तमम् । तत्राव्यक्तस्वरूपोऽसौ व्यक्तरूपो जगत्पतिः ॥ विष्णुर्ब्रह्मस्वरूपेण स्वयमेव व्यवस्थितः ॥" इति । अस्यार्थः— अनुत्तमं निकृष्टं तत्र प्राकृतेऽव्यक्तस्वरूपस्तेनाप्राकृते उत्तमस्थाने व्यक्तरूप इति ॥ २६ ॥ अत्राक्षिपति—नन्विति । यद्वा । यद्योर्थः कृत्स्नशः साकल्येन सर्वत्रासंगोऽनासक्तिस्तद्रूप इति । इत्यर्थ इति । संगस्य योगभ्रंशकत्वादिति भावः । विश्वनाथः—त्रयाणामेवोपासकानां कमपि साधारणं धर्मफलसाधनमाह—एतावानिति । योगेन भक्त्युत्थेन ज्ञानोत्थेन योगोत्थेन च । योगिनो भक्तस्य ज्ञानिनोऽष्टांगयोगिनश्च । यत्कृत्स्नशोऽसंग इंद्रियार्थेष्वनासक्तिरेतावानेवाभिमतार्थसाधकत्वादभिमतोर्थः प्रयुज्यते युक्त उचितो भवती

ज्ञानमेकं पराचीनैरिंद्रियैर्ब्रह्म निर्गुणम् ॥ अवभात्यर्थरूपेण भ्रांत्या शब्दादिधर्मिणा ॥ २८ ॥ यथा महानहंरूपस्त्रिवृत्पंचविधः स्वराट् ॥ एकादशविधस्तस्य वपुरंडं जगद्यतः ॥ २९ ॥ एतद्वै श्रद्धया भक्त्या योगाभ्यासेन नित्यशः ॥ समाहितात्मा निःसंगो विरक्त्या परिपश्यति ॥ ॥ ३० ॥ इत्येतत् कथितं गुर्वि ज्ञानं तद् ब्रह्मदर्शनम् ॥ येनानुबुध्यते तत्त्वं प्रकृतेः पुरुषस्य च ॥ ३१ ॥ ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः । द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः ॥ ३२ ॥

किमनेकसाध्येन योगेन प्राप्यते तदाह । एतावानिति युज्यते प्राप्यते प्रपंचसंगव्युदास एव योगफलमित्यर्थः ॥ २७ ॥ ननु कथं प्रत्यक्षादिप्रतीतिः प्रपंचो व्युदसितुं शक्यते प्रतीतेर्भ्रांतित्वादित्याह । ज्ञानमिति । पराचीनैः पराङ्मुखैः शब्दादिर्धर्मो यस्य तेनार्थरूपेण ज्ञानरूपं निर्गुणं ब्रह्मैवावभाति न त्वर्थः पृथगस्तीत्यर्थः ॥ २८ ॥ अर्थरूपत्वमेवोदाहृत्य दर्शयति यथेति । महान् महत्तत्त्वम् । अहंरूपोऽहंकारः स च त्रिवृत् त्रिगुणात्मकः पुनश्च भूतरूपेण पंचविधः इंद्रियरूपेणैकादशविधश्च स्वराड् जीवरूपः तस्य जीवस्य वपुरंडं जगच्च यतो येभ्यो महदादिभ्यः तथाऽवभाति ॥ २९ ॥ ननु तर्हि जनः किमित्येवं न प्रत्येति तत्राह । एतद्ब्रह्म ॥ ३० ॥ उक्तमेवार्थं सुखप्रतिपत्त्यर्थं संक्षेपेणानुवदति इतीति । हे गुर्वि पूज्ये ॥ ३१ ॥ अनेन च ज्ञानयोगेन भगवानेव प्राप्यो यथा भक्तियोगेनेत्याह । नैर्गुण्यो ज्ञानयोगश्च मन्निष्ठो भक्ति

त्यर्थः । कृत्स्नशोऽनासक्त्यैव स्वाभिमतं वस्तु प्रेमा मोक्षो वा लभ्यत इत्यर्थः ॥ २७ ॥ पुनराक्षिपति—नन्विति । अर्थरूपेणाकाशादिरूपेण । इत्यर्थ इति । "सर्वं खल्विदं ब्रह्म" इति श्रुतेरिति भावः । विश्वनाथः—ननु भक्तिरस्मच्चिकीर्षिता श्रुत्यवगता च ज्ञानयोगावप्यस्मज्जिज्ञास्यौ श्रुत्यवगतौ च तत्र यदद्वैतज्ञानं तन्न सम्यगवगतमतः संक्षेपेण तद् ब्रूहीत्यतो विवर्त्तवादिनां संमतं ज्ञानमाह—ज्ञानमेकमद्वैतं ब्रह्म यत्तदेव पराचीनैः पराङ्मुखैर्मायाश क्त्युत्थैरिंद्रियैः श्रोत्रादिभिर्हेतुभिः । शब्दादिधर्मेणाऽर्थरूपेण शब्दवानयं मृदंगो रूपवतीयं स्त्री रसवदिदं क्षीरं स्वादितमित्यादिरूपेण जविस्य भ्रांत्याऽवभाति । इंद्रियाणां सर्वेषामभावे ज्ञानभेदाभावाद्यदेकं ज्ञानं तदद्वैतं ब्रह्मैवे त्यर्थः । ननु तर्हि भ्रमप्रतीतवस्तुनो मिथ्यात्वमिव विश्वस्यास्य मिथ्यात्वं प्रसज्यते । मैवम् ॥ रजतमिदमिति प्रतीतौ शुक्तित्वेन प्रतीत्यभावात् । शुक्तौ ब्रह्मतत्त्वस्य मिथ्यात्वमेव चक्षुषा रूपमयं पश्यतीत्यत्र तु चक्षुःकरणकमेतत्क र्तृकं रूपविषयकं ज्ञानमिति ज्ञानमात्रस्य ब्रह्मणे विशेष्यत्वेनानुभवो भवत्येव केवलं कर्तृकरणकर्मादिविशेषणानि ज्ञानपदार्थभेदकानि मायया बहिरंगशक्त्या सृज्यंत इति न तेषां मिथ्यात्वं ज्ञेयं सृष्ट्या चाविद्यया स्ववृत्त्या जीवः साहजिकं ज्ञानं भ्रमयित्वा स्वसृष्टकर्तृत्वादिविशेषणवैशिष्ट्यादनन्तविधे ज्ञाने पात्यते, एषैव जीवस्यार्थरूपे नानाविधे ज्ञाने भ्रांत्या प्रवृत्तिर्यथा गोगर्दभादीनां शुद्धे गंगोदके वर्त्तमानेपि प्रणालिकादिविविधखातजलेष्वेव पिपासया प्रवृत्तिर्भ्रांत्यैव न त्वभ्रांतधियां मनुष्याणामिति । अत्र पराङ्मुखैरितींद्रियाणां विशेषणादपराङ्मुखैरबहिर्मुखैर्भगवदुन्मुखैरिंद्रियैश्च मधुरशब्दवतीयं भगवन्मुरली श्यामसुंदरो यं भगवद्देहः इत्यादिचिद्वस्तुनिष्ठो ज्ञानभेदो न व्यवच्छिद्यते तस्य ब्रह्मत्वादेवेत्याहुर्भागवताः ॥ २८ ॥ तथावभाति अर्थरूपः प्रतीयत इत्यर्थः ॥ २९ ॥ अत्रा शंकते-नन्विति । अत्राधिकारिणमाह-समाहितः संयत आत्मा चित्तं यस्य स तथेति ॥ ३० ॥ इतीत्थमेतदधुनैवोपदिष्टं मातृत्वात्तुभ्यमतिगोप्यमपि कथितं यत्तदेव ज्ञानं किंभूतं ब्रह्म दर्शयति साक्षात्कारयतीति तथा । येन ज्ञानेन तत्त्वं स्वरूपम् ॥३१॥ योगस्यायत्यां ज्ञानत्वादेतत्प्रकरणोक्ते ज्ञानं भक्तियोगश्चेति द्वे एव साधने स्तस्तत्साध्ययोर्ब्रह्मप्राप्तिभगवत्प्राप्त्योर्द्वित्वेप्युक्तन्यायेन भगवत एव ब्रह्मत्वाद्भगवत्प्राप्तिरित्येकमेव फलं स्यादित्याह—

यथेंद्रियैः पृथग्द्वारैरर्थो बहुगुणाश्रयः । एको नानेयते तद्वद्भगवाञ्छास्त्रवर्त्मभिः ॥ ३३ ॥ क्रियया क्रतुभिर्दानैस्तपःस्वाध्यायदर्शनैः ॥ आत्मेंद्रियजयेनापि संन्यासेन च कर्मणाम् ॥ ३४ ॥ योगेन विविधांगेन भक्तियोगेन चैव हि ॥ धर्मेणोभयचिह्नेन यः प्रवृत्तिनिवृत्तिमान् ॥ ३५ ॥ आत्मतत्त्वावबोधेन वैराग्येण दृढेन च ॥ ईयते भगवानेभिः सगुणो निर्गुणः स्वदृक् ॥ ३६ ॥ प्रावोचं भक्तियोगस्य स्वरूपं ते चतुर्विधम् ॥ कालस्य चाव्यक्तगतेर्योऽतर्धावति जंतुषु ॥ ३७ ॥

लक्षणश्च यो योगस्तयोर्द्वयोरप्येक एवार्थः प्रयोजनम् । कोऽसौ । भगवच्छब्दोपलक्षणं ज्ञापको यस्य तदुक्तं गीतासु । "ते प्राप्नुवंति मामेव सर्वभूतहिते रताः" इति ॥ ३२ ॥ ननु ज्ञानयोगस्यात्मलाभः फलं शास्त्रेणावगम्यते भक्तियोगस्य तु भजनीयेश्वरप्राप्तिः कुतस्तयोरेकार्थत्वमित्याशंक्य दृष्टांतेनोपपादयति । तथा बहूनां रूपरसादीनां गुणानामाश्रयो गुडक्षीरादिरेक एवार्थो मार्गभेदप्रवृत्तैरिंद्रियैर्नाना प्रतीयते चक्षुषा शुक्ल इति रसनेन मधुर इति स्पर्शनेन शीत इत्यादि तथा भगवानेक एव तत्तद्रूपेणावगम्यते ॥ ३३ ॥ शास्त्रमार्गानेव प्रपंचयति । क्रिययेति त्रिभिः । क्रियया पूर्वरूपया क्रतुभिर्यागैः मर्शनं मीमांसा आत्मेंद्रियजयो निषिद्धवर्जनम् ॥ ३४ ॥ उभयचिह्नेन सकामनिष्कामलक्षणेन । तमेवाह य इति । सकामधर्मप्राप्यं स्वर्गाद्यपि भगवत एव सगुणं स्वरूपमिति भावः ॥ ३५ ॥ एभिर्वर्त्मभिः स्वदृक् स्वप्रकाशः ॥ ३६ ॥ तदेवं ज्ञानयोगमुपसंहृत्य तस्य च भक्तियोगेन समानार्थत्वमुक्त्वा भक्तियोगाद्युपसंहरति । प्रावोचमिति द्वाभ्याम् । चतुर्विधं त्रिगुणनिर्गुणभेदेन अंतर्धावति

ज्ञानेति । मन्निष्ठ इति । ममैव ब्रह्मत्वादिति भावः । अत्र प्रमाणमाह-तदुक्तमिति । 'ब्रह्मणो हि प्रतिष्ठाहम्' इत्यनुक्तमप्यत्रानुसंधेयम् ॥ ३२ ॥ अत्राक्षिपति—नन्विति । अयमर्थो भागवतामृते व्याख्यातस्तथा हि—यथा रूपरसादीनां गुणानामाश्रयः सदा क्षीरादिरेक एवार्थो ज्ञायते बहुधेंद्रियैः दृशा शुक्लो रसनया मधुरो भगवांस्तथा उपासनाभिर्बहुधा स एकोपि प्रतीयते । "जिह्वयैव यथा ग्राह्यं माधुर्यं तस्य नापरैः । तथैव चक्षुरादीनि गृह्णंत्यर्थं निजंनिजम् ॥ तथान्यबाह्यकरणस्थानीयोपासनादिना । भक्तिश्च चेतःस्थानीया तत्तत्सर्वार्थलाभतः ॥ इति प्रबलशास्त्रेषु तस्य ब्रह्मस्वरूपतः । माधुर्यादिगुणाधिक्यात्कृष्णस्य श्रेष्ठतोच्यते ॥" इति चक्रवर्त्ती । ॥ ३३ ॥ क्रियादित्रयं गृहस्थधर्मः । तपो वानप्रस्थस्य । स्वाध्यायमर्शने ब्रह्मचारिणः । आत्मेति द्वयं संन्यासिनः ॥ ३४ ॥ विविधानि यमादीन्यंगानि यस्य तेन । यद्वा । विविधांगेन श्रवणकीर्त्तनाद्यनेकांगेनेत्युभयत्रान्वेति । तमेवोभयचिह्नत्वमेव । यो धर्मः । विश्वनाथस्तु—भक्तियोगेन चैव हीति चकारेण क्रिययेत्यादीनां भक्तियोगमिश्रणं ज्ञापयति । क्रियया भक्तियोगेन च क्रतुभिर्भक्तियोगेन दानैर्भक्तियोगेन चेत्येवं सर्वत्र योजनाद्भक्तियोगमिश्रणं विना क्रियादीनां स्वफलसाधकत्वाशक्तिं बोधयति । एवंहिशब्दाभ्यामवधारणनिश्चयवाचकाभ्यां क्रियादिसाध्यं वस्तु भक्तियोगेनैव केवलेन लभ्यं निश्चितं स्यादिति भक्तियोगस्य सर्वमुख्यत्वं भगवत्स्वरूपवज्ज्ञेयमित्याह ॥ ३५ ॥ इति भाव इति । 'वासुदेवपरा गतिः' इत्याद्युक्तेरयमाशयः-सगुणपक्षे स्वानन्यभक्तानेव पश्यतीति स्वदृक् । यद्वा । स्वैर्दृश्यत इति स्वदृक् भक्तियोगप्राप्य इत्यर्थः । "भक्त्या मामभिजानाति यावान्य

जीवस्य संसृतीर्बह्वीरविद्याकर्मनिर्मिताः ॥ यास्वंग प्रविशन्नात्मा न वेद गतिमात्मनः ॥ ३८ ॥ नैतत् खलायोपदिशेन्नाविनीताय कर्हिचित् ॥ न स्तब्धाय न भिन्नाय नैव धर्मध्वजाय च ॥ ३९ ॥ न लोलुपायोपदिशेन्न गृहारूढचेतसे ॥ नाभक्ताय च मे जातु न मद्भक्तद्विषामपि ॥ ४० ॥ श्रद्दधानाय भक्ताय विनीतायानसूयवे ॥ भूतेषु कृतमैत्राय शुश्रूषाऽभिरताय च ॥ ४१ ॥ बहिर्जातविरागाय शांतचित्ताय दीयताम् ॥ निर्मत्सराय शुचये यस्याहं प्रेयसां प्रियः ॥ ४२ ॥ य इदं शृणुयादंब श्रद्धया पुरुषः सकृत् ॥ यो वाऽभिधत्ते मच्चित्तः स ह्येति पदवीं च मे ॥ ४३ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे कापिलेयोपाख्यानं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥ मैत्रेय उवाच ॥ एवं निशम्य कपिलस्य वचो जनित्री सा कर्दमस्य दयिता किल देवहूतिः ॥ विस्रस्तमोहपटला तमभिप्रणम्य तुष्टाव तत्त्वविषयांकितसिद्धिभूमिम् ॥ १ ॥

उत्पत्तिनिधनादि करोति ॥ अंग हे मातः ॥ ३७ ॥ ३८ ॥ उपदेशेऽनधिकारिणो दर्शयति । नैतदिति द्वाभ्याम् । खलाय परोद्वेजकाय भिन्नाय दुराचाराय धर्मध्वजाय दांभिकाय ॥ ३९ ॥ ४० ॥ अधिकारिण आह । श्रद्दधानायेति द्वाभ्याम् ॥ ४१ ॥ ४२ ॥ एतच्छ्रवणकीर्तनपरस्यापि मत्पदप्राप्तिरेव फलमित्याह । य इति । अप्यर्थे चकारः । सोऽपि मत्पदवीमेति हि निश्चितम् ॥ ४३ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे टीकायां द्वात्रिंशत्तमोऽध्यायः ॥ ३२ ॥ त्रयस्त्रिंशे तु तस्यैव कपिलस्योपदेशतः ॥ ज्ञानभावेन तन्मातुर्जीवन्मुक्तिरुदीर्यते ॥ १ ॥ विस्रस्तं मोहरूपं पटलमावरणं यस्याः सा तत्त्वान्येव विषयस्तेनांकिता सिद्धिः सांख्यज्ञानं तस्या

श्चास्मि तत्त्वतः ॥" इति श्रीगीतोक्तेः । ईयते ज्ञायते 'ई गत्यादौ' अतः कर्मणि लट् ॥ यः कालः ॥ ३६ ॥ ३७ ॥ संसृतीर्योनीः । यासु संसृतिषु प्रविशन्नयं जीव आत्मनः स्वस्य । गतिं शरणम् । मामात्मानं न वेद । अंगेत्यव्ययं संबुद्धौ ॥ ३८ ॥ खलो दूषणार्थमेव कृत्रिमभक्त्याऽधिजिगमिषुः । अविनीतः शिष्यमर्यादारहितः । स्तब्धो गर्वी । भिन्नो मतांतराभिनिवेशी । धर्मध्वजो लोभप्रतिष्ठाद्यर्थमेव धर्मनिष्ठः ॥ ३९ ॥ लोलुपस्तत्तद्दोषरहितोपि विषयभोगेतिलोभी । गृहारूढचेताः विषयेष्वनतिलोलुपोपि पुत्रदारधनादिष्वत्यासक्तः । अभक्त उक्तानुक्तसर्वदोषरहितोपि मद्भक्तिहीनः । किं च । भ्रमप्रमादतः कदाचिदेभ्योप्युपदिशतु नाम जातु कदाचिदपि मद्भक्तद्विषामिति षष्ठ्यंतनिर्देशेन तत्संबंधवतेपि नोपदिशेत्किमुत तेभ्य इति ॥ ४० ॥ तद्विपरीतानधिकारिणः । श्रद्दधानो मद्भक्तगुरुमदुपदिष्टशास्त्रयोर्विश्वासवान् । भक्तो भक्तिसंस्कारयुक्तः । विनीतः शिष्यमर्यादायुक्तः । अनसूयुः सतीर्थादिगुणाधिक्येन गुर्वादराधिक्ये दृष्टे प्रत्युत सुखवान् । कृतमैत्रो दयायुक्तः । शुश्रूषाभिरतो गुरुसेवायामनलसः ॥ ४१ ॥ बहिरिति द्वयस्य यथा बहिर्विरक्तस्तथान्तरपीत्यर्थः । निर्मत्सरः सर्वशुभाकांक्षी । शुचिर्बहिरंतःपवित्रः । एषां हेतुहेतुमद्भावो यथेष्टं विवेचनीयः । यस्याहमिति । तेन गुरुणा दीयते इत्यन्वयाद्गुरुलक्षणमप्युक्तम् । यद्वा । तादृशशिष्यस्य फलमाह-यस्येति । एवंभूतस्य यस्याहमतिप्रेयान्भविष्यामीत्यर्थः । अत्र यद्यपि पूर्वदोषा अपि त्यक्तास्स्युस्तथापि तेषामुद्देशो व्यतिरेकस्यापि पृथग्ज्ञानार्थ इति ज्ञेयम् । किं च । एते गुणास्तु समुदिता एव ज्ञेयाः । तत्तदंगवैकल्ये तु न्यूनाधिकारित्वमिति तानेव गुणान्समुद्दिश्याह-शुचय इति ॥ ४२ ॥ 'अंब–हिताहितवेदने' इति धातोरजंताद्वापि संबुद्धौ हे अंबेति । मातृत्वादेवोक्तमिदं तुभ्यं पूर्वोक्ताधिकारिविशेषणानादरेणेति संबुद्ध्यभिप्रायः ॥ ४३ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे द्वात्रिंशोऽध्यायः ॥ ३२ ॥ तन्मातुः कपिलमातुर्देवहूतेः ( १ ) मोहरूपं भक्तिज्ञानादिविषयकमज्ञानम् । संदर्भस्तु-यानि तत्त्वानि तत्त्वविचारस्य विषयास्तैरंकिता लक्षिता या सिद्धिः परमात्म

देवहूतिरुवाच ॥ अथाप्यजोंतःसलिले शयानं भूतेंद्रियार्थात्ममयं वपुस्ते ॥ गुणप्रवाहं यदशेषबीजं दध्यौ स्वयं यज्जठराब्जजातः ॥ २ ॥ स एव विश्वस्य भवान्विधत्ते गुणप्रवाहेण विभक्तवीर्यः ॥ सर्गाद्यनीहोऽवितथाभिसंधिरात्मेश्वरोऽतर्क्यसहस्रशक्तिः ॥ ३ ॥ स त्वं भृतो मे जठरेण नाथ कथं नु यस्योदर एतदासीत् ॥ विश्वं युगांते वटपत्र एकः शेते स्म मायाशिशुरंघ्रिपानः ॥ ४ ॥ त्वं देहतंत्रप्रशमाय पाप्मनां निदेशभाजां च विभो विभूतये ॥ यथावतारास्तव सूकरादयस्तथाऽयमप्यात्मपथोपलब्धये ॥ ५ ॥

भूमिं क्षेत्रं प्रवर्तकम् ॥ १ ॥ अथेति वाक्यांतरे । अजोऽपि तव वपुः केवलं दध्यौ न तु दृष्टवान् स च स्वयं साक्षाद्यस्य तव जठराब्जाज्जातः स भवानेव विश्वस्य सर्गादि विधत्ते न तु तव सर्गादिकर्ता कश्चिदस्ति स एवंभूतस्त्वं मे मया कथं जठरेण धृत इति त्रयाणामन्वयः ॥ कथंभूतं वपुः सत् व्यक्तम् । तत्र हेतुः । अंतःसलिले शयानम् । कीदृशम् । भूतानींद्रियाणि च अर्थाश्च शब्दादय आत्मा च मन एतन्मयमेतैर्व्याप्तमित्यर्थः । कुतः गुणानां प्रवाहो यस्मिंस्तत्कुतः अशेषस्य कार्यकारणस्य बीजं कारणम् ॥ २ ॥ कथंभूतो भगवान्सर्गादि विधत्ते गुणप्रवाहरूपेण विभक्तं वीर्यं शक्तिर्येन सः शक्तिद्वारेण विधत्ते न साक्षादित्यर्थः । यतोऽनीहो निष्क्रियः । तर्हि कथं शक्तिद्वारेणापि सर्गादि विधत्ते तत्राह । अवितथाभिसंधिः सत्यसंकल्पः किमर्थं विधत्ते । आत्मनां जीवानामीश्वरः जीवानां भोगार्थमित्यर्थः । ननु कथं विचित्रान्भोगानेक एव विदध्यात्तत्राह । अतर्क्याः सहस्रमपरिमिताः शक्तयो यस्य ॥ ३ ॥ किं च प्रलये यस्योदरे एतद्विश्वमासीत्स त्वं मया जठरेण कथं धृतः । ननु शिशौ मयि किमेतदुच्यते तत्राह । वटपत्र इति । अंघ्रिं पादांगुष्ठं पिबतीत्यंघ्रिपानः इदमपि शिशुत्वं तद्वदेव मायेति भावः ॥ ४ ॥ अथ वा न त्वं मयाऽपत्यांतरमि

स्फूर्त्तिस्तस्या भूमिमाश्रयमिति । विश्वनाथस्तु—तत्त्वविषयेषु भक्तितत्त्वसांख्यज्ञानतत्त्वयोगतत्त्वादिविषयेष्वांकितः परमनिपुणत्वेनांको गणनायां रेखा संजाता यस्य स चासौ सिद्धा भूमयो भूतलस्था जना यतः स चेति तम् । यद्वा । तत्त्वं विष्णुर्विषयो येषां ते तत्त्वविषया नंदसुनंदाद्यास्तैरंकिता सिद्धभूमिः स्वतःसिद्धवैकुंठभूमिर्यस्य तम् । यद्वा । तत्त्वे वस्तुयाथार्थ्यज्ञाने विषं तदज्ञानलक्षणं यापयति नाशयतीति तत्त्वविषया गुरूपसत्तिस्तयांकिता लक्षिता ये सिद्धास्तेषां भूमिं विषयम् । "आचार्यवान्पुरुषो वेद" इति श्रुतेः । सिद्ध इति संबंधोक्तिसंमतस्तीर्थसंमतश्च पाठः ॥ १ ॥ तत्त्वमुपदिश्य यस्त्वं मां संसारादुद्धरसि नैतच्चित्रं यन्मानुष्या निकृष्टाया मम गर्भो जठरीकृतानन्तब्रह्मांडकोटिर्जातोसि तच्चित्रमित्याह-अथेति । इत्यर्थ इति । न तु तद्विकारादीति भावः।अत्र व्याप्त्यर्थे मयट्सूत्रे चादिपदोपादानाद्बोध्यः । यद्वा । भूतानि चेंद्रियाणि चार्थाश्चात्ममयाः स्त्रमयाश्चिदानंदरूपा एव न तु प्रकृतिविकारा यत्र तथेति भूतादिव्याप्तत्वे हेतुं पृच्छति कुत इति । गुणानां तत्कार्याणामाकाशादीनाम् । तद्गुणकार्यत्वमेव कुत इत्याशंकापनोदार्थमाह—अशेषेति । यद्वा । गुणान् भक्तवात्सल्यादीन् प्रकर्षेण वहतीति तत्तथा । सत् सत्यम् ॥ २ ॥ गुणप्रवाहेण रजआदिपरंपरया । इत्यर्थ इति । ब्रह्मादिरूपस्वशक्त्या सृष्ट्यादि करोतीति भावः । स्वयं कुतो न करोतीति चेदाह-यतोऽनीह इति । तत्राप्याशंकते तर्हीति । इत्यर्थ इति । जीवादृष्टं विमृश्यैव सृष्ट्यादि करोतीति भावः । पुनराक्षिपति—नन्विति ॥ ३ ॥ अन्यदाह किं चेति । कथं धृत इति । इत्याश्चर्यहेतुं त्वमेव ब्रूहीति भावः । अत्राक्षिपति भगवान्—नन्विति । इति भाव इति । लालनाभ्यासिनः सांसारिका अपि मां ध्यातुं शक्नुवंत्विति कृपामयबालमूर्त्तिरित्याशयः । मद्भक्ताः सर्वमेव सुखं त्यक्त्वा मच्चरणमाधुर्य एव सदा निमज्जंति तदेतन्मयाप्यास्वाद्यानुभवनीयमिति बुद्ध्यैवांघ्रिपाने प्रवृत्तिरिति भावः ॥ ४ ॥ पक्षांतरमाह—अथ वेति । तंत्रं परिकरेपि वर्त्तते । यद्वा । देहे तंत्रमीश्वरत्वज्ञापकशंखचक्रादिपरिच्छदो यस्येति । दुष्टानां हिरण्याक्षादीनाम् । समृद्ध्ये भक्तिज्ञानादिसंपत्त्यै । तथायमप्यवतारः पाप्मशब्दो

**यन्नामधेयश्रवणानुकीर्तनाद्यत्प्रह्वणाद्यत्स्मरणादपि क्वचित् ॥ श्वादोऽपि सद्यः सवनाय कल्पते कुतः पुनस्ते भगवन्नु दर्शनात् ॥ ६ ॥ अहो बत श्वपचोऽतो गरीयान्यज्जिह्वाग्रे वर्तते नाम तुभ्यम् ॥ तेपुस्तपस्ते जुहुवुः सस्नुरार्या ब्रह्मानूचुर्नाम गृणंति ये ते ॥ ७ ॥**

व जठरे भृतः किं तु वराहाद्यवतारवदिच्छयैवाविर्भूतोऽसीत्याह । त्वं देहतंत्रो देहपरिकरः स्वीकृतमूर्तिरसि । पाप्मनां दुष्टानाम् । निदेशभाजामाज्ञानुवर्तिनां विभूतये समृद्ध ये आत्मपथोपलब्धये ज्ञानमार्गप्रदर्शनाय ॥ ५ ॥ अतस्त्वद्दर्शनादहं कृतार्थोऽस्मीति कैमुत्यन्यायेनाह । यन्नामधेयस्य श्रवणमनुकीर्तनं च तस्मात् क्वचित्कदाचिदपि श्वानमत्तीति श्वादः श्वपचः सोऽपि सवनाय सोमयागाय कल्पते योग्यो भवति । अनेन पूज्यत्वं लक्ष्यते ॥ ६ ॥ तदुपपादयति । अहो बतेत्याश्चर्ये यस्य जिह्वाग्रे तव

पलक्षिताज्ञाननाशायेत्यर्थः ॥ ५ ॥ यतस्त्वं ज्ञानिशिरोमणिरत इत्यर्थः । अत्र जीवगोस्वामिचरणाः—क्वचित्कदाचिदपि नामधेयश्रवणादिहेतोरित्यन्वयः । उत्तरानुरोधादपिशब्दासंगतेश्च । श्वादत्वमत्र श्वभक्षकजातिविशेषत्वमेव श्वानमत्तीति निरुक्तौ वर्त्तमानप्रयोगात्क्रव्यादवत्तच्छीलत्वप्राप्तेः कादाचित्कभक्षणे प्रायश्चित्तविवक्षया त्वतीतप्रयोगः क्रियते "श्वादो गंगांबु संसेव्य मासांते संस्कृतो भवेत्" इत्याद्युक्तेः । 'रूढिर्योगमपहरति' इति न्यायेन विरुध्यते च । अत एव श्वपच इति स्वामिचरणाः । सद्यः सवनाय कल्पत इति "सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् । बद्धः परिकरस्तेन मोक्षाय गमनं प्रति" इतिवद्योग्यतायां लब्धारंभो भवतीत्यर्थः । तदुत्तरजन्मन्येव द्विजत्वं प्राप्य तदधिकारी स्यादिति भावः । विश्वनाथस्तु—सौमयागकर्त्ता ब्राह्मण इव मान्यो भवतीति दुर्जात्यारंभकप्रारब्धपापनाशो व्यंजितस्तदुक्तं श्रीरूपगोस्वामिचरणैः—"दुर्जातिरेव सवनायोग्यत्वे कारणं मतम् । दुर्जात्यारंभकं पापं यस्मात्प्रारब्धमेव तत्" इत्याह ॥ अस्यार्थस्तु—ततश्चास्य भगवन्नामश्रवणाद्येकतरां सद्य एव सवनयोग्यताप्रतिकूलदुर्जातित्वप्रारंभकप्रारब्धपापनाशपूर्वकसवनयोग्यजातित्वजनकपुण्यलाभः प्रतिपाद्यते ब्राह्मणानां शौक्रे जन्मनि दुर्जातित्वाभावेपि सवनाय सुजातित्वजनकसावित्र्यजन्मापेक्षावत् । तस्मात् 'भक्तिः पुनाति मन्निष्ठा श्वपाकानपि संभवात्' इति कैमुत्यार्थमेव प्रोक्तमित्यायाति । तस्माद्दुर्जातिरेवेत्यत्र सवनायोग्यत्वे कारणमिति तद्योग्यताप्रतिकूलपापमपीत्यर्थः । न तु तदयोग्यताभावमात्रमपीति ब्राह्मणकुमाराणां शौक्रजन्मनि दुर्जातित्वाभावेपि सवनयोग्यत्वाय पुण्यविशेषमयसावित्रजन्मापेक्षमाणत्वात् । ततश्च सवनयोग्यत्वप्रतिकूलदुर्जात्यारंभकं प्रारब्धमपि गतमेव । किन्तु । शिष्टाचाराभावात्सावित्रं जन्म नास्तीति ब्राह्मणकुमाराणां सवनयोग्यत्वाभावावच्छेदकपुण्यविशेषमयसावित्रजन्मापेक्षावदस्याऽपि जन्मांतरापेक्षा वर्त्तत इति । अत एव सवनाय कल्पते संभावितो भवतीति । न तु तदैवाधिकारी भवतीत्यभिप्रेत्य व्याख्यातं तैः । सद्यः सवनाय कल्पतेऽनेन पूज्यत्वं लक्ष्यते । तदेवं दुर्जात्यारंभकपापस्य सद्यो नाशे वचनादवगते दुःखारंभकस्यापि नाशस्तु भक्त्यावृत्त्या संभावित इति सर्वप्रारब्धपापहारितायामुदाहरणं युक्तमेव "न वासुदेवभक्तानामशुभं विद्यते क्वचित्" इत्यादेः ॥ ६ ॥ तत्पूज्यत्वं यदित्यस्य प्रसिद्धार्थं श्रेष्ठं मत्वाह—यद्यस्मादिति । गरीयान् श्रेष्ठतमः न त्वतिशयेन गुरुरुपदेष्टेत्यर्थो विधेयः 'श्रोत्रियं ब्रह्मनिष्ठम्' इति श्रुतिव्याकोपात् । 'ब्राह्मणस्यैव विहितं मंत्राणामुपदेशनम्' इति नारदाद्युक्तेश्च विरोधाद्विश्वनाथव्याख्यानं गुरुर्भवति । अन्यामपि नामात्मकं मंत्रमुपदेष्टुं योग्यतां धत्त इत्येवंरूपं नादर्त्तव्यम् । केचित्तु जिह्वाया अग्र एव न तु संपूर्णायां तस्यामित्यसम्यक्तयोच्चारितमित्यर्थः । वर्त्तत एव न तु वृत्तमसंपूर्णमुच्चारितमित्यर्थः । नामैव न तु नामानि संपूर्णजिह्वायां संपूर्णोच्चारितानि बहूनि नामानि तु किमुतेति भाव इत्याहुः । गरीयस्त्वे हेतुं पृच्छति । कुत इति । ये साम गृणंति ते अत एव तपोहोमतीर्थस्नानादिमत्त्वादेव "अनूचानः प्रवचने सांगेधीती गुरोश्च यः" इत्यमरः । इत्यर्थ इति । सर्वसुकृतफलदायित्वान्नाम्नोऽधिकसुकृतस्याभावात्तस्मिन्नुच्चरिते सर्वं सुकृतं कृतं स्यादिति भावः । परोक्षार्थप्रयोगात्तेषां तपआदीनि सिद्धान्येव न तदर्थं साधनश्रमः कर्त्तव्य इति इह जन्मनि तदभाववतां नामप्रवृत्तिदर्शनात्कथं ज्ञायेतैतैरेतानि कृतानीति चेत्तत्राह—यद्वेति । इत्यर्थ इति । जन्मांतरपुण्यं विना नामोच्चारणे प्रवृत्तिर्न भवतीति भावः । गृणंतीति । वर्त्तमानप्रयोगेण नामोच्चारणाविच्छेद एव यदि स्यात्तदैवं स्यादित्यपि न व्याख्येयं "चित्रं विदूरविगतः सकृदाददीत

तं त्वामहं ब्रह्म परं पुमांसं प्रत्यक्स्रोतस्यात्मनि संविभाव्यम् ॥ स्वतेजसा ध्वस्तगुणप्रवाहं वंदे विष्णुं कपिलं वेदगर्भम् ॥ ८ ॥ मैत्रेय उवाच ॥ ईडितो भगवानेवं कपिलाख्यः परः पुमान् ॥ वाचा विक्लवयेत्याह मातरं मातृवत्सलः ॥ ९ ॥ कपिल उवाच ॥ मार्गेणानेन मातस्ते सुसेव्येनोदितेन मे ॥ आस्थितेन परां काष्ठामचिरादवरोत्स्यसि ॥ १० ॥ श्रद्धस्वैतन्मतं मह्यं जुष्टं यद् ब्रह्मवादिभिः ॥ येन मामभवं याया मृत्युमृच्छंत्यतद्विदः ॥ ११ ॥ मैत्रेय उवाच ॥ इति प्रदर्श्य भगवान् सतीं तामात्मनो गतिम् ॥ स्वमात्रा ब्रह्मवादिन्या कपिलोऽनुमतो ययौ ॥ १२ ॥ सा चापि तनयोक्तेन योगादेशेन योगयुक् ॥ तस्मिन्नाश्रम आपीडे सरस्वत्याः समाहिता ॥ १३ ॥ अभीक्ष्णा वगाहकपिशाञ्जटिलान्कुटिलालकान् ॥ आत्मानं चोग्रतपसा बिभ्रती चीरिणं कृशम् ॥१४॥ प्रजापतेः कर्दमस्य तपोयोगविजृंभितम् ॥ स्वगार्हस्थ्यमनौपम्यं प्रार्थ्यं वैमानिकैरपि ॥१५॥ पयःफेननिभाः शय्या दांता रुक्मपरिच्छदाः ॥ आसनानि च हैमानि सुस्पर्शास्तरणानि च ॥१६॥

नाम वर्तते स श्वपचोऽप्यतोऽस्मादेव हेतोर्गरीयान् । यद्यस्माद्वर्तते अत इति वा कुत इत्यत आह । त एव तपस्तेपुः कृतवंतः जुहुवुर्होमं कृतवंतः सस्नुस्तीर्थेषु स्नाताः आर्यास्त एव सदाचाराः ब्रह्म वेदमनूचुरधीतवंतः । त्वन्नामकीर्तने तप आद्यंतर्भूतमतस्ते पुण्यतमा इत्यर्थः । यद्वा जन्मांतरे तैस्तपोहोमादि सर्वं कृतमिति त्वन्नामकीर्तनमहाभाग्योदयादवगम्यत इत्यर्थः ॥ ७ ॥ प्रत्यक्स्रोतसि प्रत्याहृते आत्मनि मनसि संविभाव्यं संचिंत्यम् । वेदा गर्भे यस्य सः ॥ ८ ॥ अविक्लवया गंभीरया वाचा ॥ ९ ॥ ते तव सुसेव्येन सुखसेव्येन मे मयोदितेन आस्थितेनानुष्ठितेन परां काष्ठां जीवन्मुक्तिमवरोत्स्यसि प्राप्स्यसि ॥ १० ॥ यायाः यास्यसि अतद्विदो मन्मतमविद्वांसः ॥ ११ ॥ अनुमतोऽनुज्ञातः ॥ १२ ॥ सरस्वत्या आपीडे पुष्पमुकुटतुल्ये । सरस्वत्येति पाठे मुकुटेनेव संवेष्टिते बिंदुसरसि समाहिता बभूव ॥ १३ ॥ कथंभूता सती समाहिता तदाह । अभीक्ष्णं त्रिषवणमवगाहः स्नानं तेन कपिशान्पिशंगान् स्वत एव कुटिलानलकान्केशांस्तथाऽऽत्मानं देहं चीरधारिणं कृशं च बिभ्रती सती ॥ १४ ॥ प्रजापतेः कर्दमस्य तपोयोगाभ्यां विजृंभितमतिशयितं स्वगार्हस्थ्यं हित्वा पुत्रभूतेश्वरविरहातुरा सती वदनं किंचिदनिर्वाच्यं शोकव्याकुलं चकारेति षष्ठेनान्वयः ॥ १५ ॥ यत्र गार्हस्थ्ये क्षीरफेननिभा मृदुशुभ्राः शय्या आस्तरणान्याभांति दंतघटिता मंचकाश्च स्वर्णमया परिकराः आसनानि पीठादीनि सुस्पर्शान्यास्तरणा

यन्नामधेयमधुना स जहाति बंधम्'' इति 'यन्नामसकृच्छ्रवणात्पुष्कसो मुच्यते संसारात्' इत्यादिषु सकृत्पदव्याकोपात् ॥ ७ ॥ परं पुमांसं पुरुषोत्तमम् । ''अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः'' इति श्रीगीतोक्तेः । साक्षाद्विष्णुम् । अवतारावतारिणोरभेदात् ''ऋषिं प्रसूतं कपिलम्'' इति श्रुतेः । यद्वा । मां मातरं यदि तारयिष्यस्यत्र किमाश्चर्यं त्वं तु कपिलोसि कपिभ्योपि सुग्रीवहनुमदादिभ्यो लाति ज्ञानं ददातीति स्त्रीयत्वेनादत्ते वेति भावः । वेदगर्भत्वेनात्र हिरण्यगर्भभ्रमो मा भूदत आह–विष्णुमिति । अत एव त्वां वंदे न तु पुत्रबुद्धिं करोमीति भावः ॥८॥ इति वक्ष्यमाणम् ॥९॥१०॥ मृत्युं संसारम् । मह्यं मम ब्रह्मवादिभिर्वैदिकैर्जुष्टं सेवितम् ॥११॥ इतीत्थम् । ननु स्वस्याज्ञानोपदेष्टृत्वेन गुरुत्वात्पुत्रत्वेन सुहृत्त्वात्सा देवहूतिः पुत्रगमनं कथमनुजज्ञे निर्दयहृदयत्वेनेतिचेत्तत्राह–ब्रह्मवादिन्या ब्रह्मरूपत्वात्तस्य तद्वियोगं विचारेण जानंत्येति भावः ॥ १२ ॥ सा देवहूतिः । योगस्यादेशो भक्तिज्ञानयोगस्योपदेशस्तेन योगं भगवद्ध्यानं युनक्तीति योगयुक् सती । समाहितां समाधिस्थां ॥ १३ ॥ १४ ॥ १५ ॥ पीठादीन्यादिनासंद्यादिग्रहः ''वेत्रादिनिर्मितं पीठमासंदीत्यभिधीयते''

स्वच्छस्फाटिककुड्येषु महामारकतेषु च ॥ रत्नप्रदीपा आभांति ललनारत्नसंयुताः ॥ १७ ॥ गृहोद्यानं कुसुमितै रम्यं बह्वमरद्रुमैः ॥ कूजद्विहंगमिथुनं गायन्मत्तमधुव्रतम् ॥ १८ ॥ यत्र प्रविष्टमात्मानं विबुधानुचरा जगुः ॥ वाप्यामुत्पलगंधिन्यां कर्दमेनोपलालितम् ॥ १९ ॥ हित्वा तदीप्सिततममप्याखंडलयोषिताम् ॥ किंचिच्चकार वदनं पुत्रविश्लेषणातुरा ॥ २० ॥ वनं प्रव्रजिते पत्यावपत्यविरहातुरा ॥ ज्ञाततत्त्वाऽप्यभून्नष्टे वत्से गौरिव वत्सला ॥ २१ ॥ तमेव ध्यायती देवमपत्यं कपिलं हरिम् ॥ बभूवाचिरतो वत्स निःस्पृहा तादृशे गृहे ॥ २२ ॥ ध्यायंती भगवद्रूपं यदाह ध्यानगोचरम् ॥ सुतः प्रसन्नवदनं समस्तव्यस्तचिंतया ॥ २३ ॥ भक्तिप्रवाहयोगेन वैराग्येण बलीयसा ॥ युक्तानुष्ठानजातेन ज्ञानेन ब्रह्महेतुना ॥ २४ ॥ विशुद्धेन तदात्मानमात्मना विश्वतोमुखम् ॥ स्वानुभूत्या तिरोभूतमायागुणविशेषणम् ॥ २५ ॥ ब्रह्मण्यवस्थितमतिर्भगवत्यात्मसंश्रये ॥ निवृत्तजीवापत्तित्वात क्षीणक्लेशाऽऽप्तनिर्वृतिः ॥ २६ ॥

नि येषु ॥ १६ ॥ १७ ॥ बहुभिरमरद्रुमै रम्यम् ॥ १८ ॥ यत्रोद्याने प्रविष्टमात्मानं देवहूतिम् ॥ १९ ॥ आखंडल इंद्रस्तस्य या, योषितस्तासामपीप्सिततमं प्राप्तमिष्टतमं तद्धित्वा तत्राभिमानं त्यक्त्वा ॥ २० ॥ सुहृद्वियोगस्य दुःसहतामाह । वनमिति । नष्टे वत्से वत्सला गौरिवाभूत् ॥ २१ ॥ विरहकृतध्यानफलमाह । निःस्पृहा निर्वासना । वत्स विदुर ॥ २२ ॥ ततः स्वसुतः कपिलो यदाह तद्भगवतो रूपं ध्यायंती तदाऽऽत्मानं च विश्वतोमुखं सर्वगतं ध्यायंती ब्रह्मण्यवस्थितमतिर्बभूवेति पूर्वस्यैवानुषंगः । केन ध्यायंती विशुद्धेनात्मना मनसा ॥ २३ ॥ विशुद्धौ कारणान्याह । भक्तिप्रवाहरूपेण योगेन वैराग्येण च युक्तानुष्ठानेन जातं यज्ज्ञानं तेन च । युक्तानुष्ठानं च गीतासूक्तम् । "युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ॥ युक्तस्वप्नावबोधस्य योगो भवति दुःखहा" इति ब्रह्महेतुना ब्रह्मत्वापादकेन ॥ २४ ॥ विश्वतोमुखत्वे हेतुः । स्वानुभूत्या स्वरूपप्रकाशेन तिरोभूतम् । मायागुणैर्विशेषणं परिच्छेदो यस्य ॥ २५ ॥ कथंभूते ब्रह्मणि आत्मनां जीवानां संश्रये भगवति तस्या जीवन्मु

इति ॥ १६ ॥ स्वच्छानि यानि स्फटिकस्य कुड्यानि भित्तयस्तेषु । मरकतै रचितानि कुड्यानि मारकतानि महांति तानि तेषु च । रत्नमयाः प्रदीपाः ललनारत्नैः प्रतिबिंबितोत्तमस्त्रीभिस्संयुताः 'कुड्यं भित्तौ विलेपने' इति मेदिनी ॥ १७ ॥ अमरद्रुमैः संतानकल्पद्रुमहरिचंदनमंदारपारिजातैः । "संतानः कल्पवृक्षश्च पुंसि वा हरिचंदनम् । पंचैते देवतरवो मंदारः पारिजातकः ॥" इत्यमरः । कूजंति विहंगानां मयूरादीनां मिथुनानि यत्र तत् ॥ १८ ॥ यत्र वाप्यां प्रविष्टम् ॥ १९ ॥ किंचिच्चकार दीनं चक्रे पतिविरहादपि पुत्रविरहो दुःसह इत्याह–पुत्रविश्लेषेति ॥ २० ॥ भगवति वात्सल्याख्यायाः प्रीतेः सर्वोपमर्दित्वमाह–वनमिति । पत्यौ कर्दमे वनं गते यदपत्यं वीक्ष्यमाणा जीवंत्यासीत्तस्यापि विरहेणातुरेति हंत भोः के कुत्र वर्त्तते पश्यंतो मदपत्यं शीघ्रमेव परावर्त्तयंतां भवंतो नो चेदहं न जीविष्यामीति विलपंती गौरिवेति सर्वमेव तत्त्वज्ञानं सहसैव विस्मृतवती वेति भावः ॥ २१ ॥ तादृशे इंद्रस्यभिलषिते । वत्सेति हरियशःश्रवणानुरागित्वेन प्रियत्वद्योतिका संबुद्धिः ॥ २२ ॥ ततः निस्स्पृहत्वात् । ध्यानस्य गोचरं विषयम् ॥ २३ ॥ बलीयसा ब्रह्मलोकमपि काकविट्समं ज्ञात्वाऽनिच्छितेन ॥ २४ ॥ मायागुणैः सत्त्वादिभिर्विशेषणं 'शुद्धसत्त्वमयो हरिः' इत्यादिपरिच्छेदः । निर्गुणे गुणविशेषणासंभवात् । "न तत्र सत्त्वं न रजस्तमश्च" इत्यादिश्रुतेः ॥ २५ ॥ जीवभावो लिंगशरीराध्यासः । यद्वा । जीवस्यापत्तिर्यया

नित्यारूढसमाधित्वात्परावृत्तगुणभ्रमा ॥ न सस्मार तदात्मानं स्वप्ने दृष्टमिवोत्थितः ॥ २७ ॥ तद्देहः परतः पोष्योऽप्यकृशश्चाध्यसंभवात् ॥ बभौ मलैरवच्छन्नः सधूम इव पावकः ॥ २८ ॥ स्वांगं तपोयोगमयं मुक्तकेशं गतांबरम् ॥ दैवगुप्तं न बुबुधे वासुदेवप्रविष्टधीः ॥ २९ ॥ एवं सा कपिलोक्तेन मार्गेणाचिरतः परम् ॥ आत्मानं ब्रह्म निर्वाणं भगवंतमवाप ह ॥ ३० ॥ तद्वीराऽऽसीत् पुण्यतमं क्षेत्रं त्रैलोक्यविश्रुतम् ॥ नाम्ना सिद्धपदं यत्र सा संसिद्धिमुपेयुषी ॥ ३१ ॥ तस्यास्तद्योगविधुतमार्त्यं मर्त्यमभूत्सरित् ॥ स्रोतसां प्रवरा सौम्य सिद्धिदा सिद्धसेविता ॥ ३२ ॥ कपिलोऽपि महायोगी भगवान्पितुराश्रमात् ॥ मातरं समनुज्ञाप्य प्रागुदीचीं दिशं ययौ ॥ ३३ ॥ सिद्धचारणगंधर्वैर्मुनिभिश्चाप्सरोगणैः ॥ स्तूयमानः समुद्रेण दत्तार्हणनिकेतनः ॥ ३४ ॥ आस्ते योगं समास्थाय सांख्याचार्यैरभिष्टुतः ॥ त्रयाणामपि लोकानामुपशांत्यै समाहितः ॥ ३५ ॥ एतन्निगदितं तात यत्पृष्टोऽहं त्वयानघ ॥ कपिलस्य च संवादो देवहूत्याश्च पावनः ॥ ३६ ॥

किमाह । सार्धैस्त्रिभिः । तदा च निवृत्ता जीवापत्तिर्जीवभावो यस्यास्तस्या भावस्तत्त्वं तस्मात् विगतक्लेशा प्राप्तनिर्वृतिश्च सत्यात्मानं देहं न सस्मारेत्युत्तरेणान्वयः ॥ २६ ॥ ननु तथापि गुणानां विद्यमानत्वात्कथमस्मरणं तत्राह । नित्यारूढो लब्धप्रतिष्ठः समाधिर्यस्यास्तस्या भावस्तत्त्वं तस्मात् । परावृतः शांतो गुणनिमित्तो भ्रमो यस्याः सा ॥ २७ ॥ परतः पराभिरेव कर्दमसृष्टविद्याधरीभिः पोषः पोषणं यस्य आधिर्मनोग्लानिस्तदसंभवादकृशः मलैरवच्छन्नोऽपि बभौ ॥ २८ ॥ दैवगुप्तमारब्धकर्मपालितम् ॥ २९ ॥ निर्वाणं नित्यमुक्तम् ॥ ३० ॥ हे वीर विदुर ! उपेयुषी प्राप्ता ॥ ३१ ॥ हे सौम्य ! तस्यास्तन्मर्त्यं शरीरं सरिदभूत् । कथंभूतम् । योगेन विधूता विलीना मार्त्या दैहिका धातुमला यस्य ॥ ३२ ॥ कपिलोऽपि ययावित्युक्तं तदेव प्रपंचयति । कपिलोऽपीति त्रिभिः समनुज्ञाप्यानुज्ञां संप्रार्थ्य ॥ ३३ ॥ दत्तमर्हणमर्घ्यं निकेतनं च यस्मै ॥ ३४ ॥ उपशांत्यर्थं समाहित आस्ते ॥ ३५ ॥ प्रकरणार्थमुपसंहरति । एतदिति । तव त्वया ॥ ३६ ॥

सा जीवापत्तिरविद्या जीवस्येति भावप्रधानो निर्देशः ॥ २६ ॥ अत्राक्षिपति—नन्विति ॥ २७ ॥ तस्या देवहूतेर्देहः ॥ २८ ॥ दैवेन हरिणा गुप्तं "किमाजितोवति नोपसन्नान्" इतिन्यायेन ॥ २९ ॥ सा देवहूतिः ॥ ३० ॥ अज्ञानजये प्रवृत्तत्वाद्वीरेति संबुद्धिः । संसिद्धिं मुक्तिम् ॥ ३१ ॥ सोमवंशोद्भूतत्वात्प्रियदर्शनोसीति प्रियत्वं व्यंजयन्नाह-सौम्येति । सिद्धिदा तटवासिनां स्नातॄणाञ्च ॥ ३२ ॥ प्राक् प्रथमं सदाचारादुदीचीमुत्तराम् 'गतपूर्वां महात्मभिः" इत्युक्तेः । ततो गंगासागरसंगमे स्थिरतामवापेत्यर्थः ॥ ३३ ॥ ३४ ॥ सांख्याचार्यैरासुर्यादिभिः । मां दृष्ट्वाऽन्येपि मोक्षार्थे योगाचरणे प्रवृत्ताः स्युरित्यालोच्य समाहितोभूदित्याह-त्रयाणामित्यादि ॥ ३५ ॥ प्रियत्वात्तुभ्यमे

य इदमनुशृणोति योऽभिधत्ते कपिलमुनेर्मतमात्मयोगगुह्यम् ॥ भगवति कृतधीः सुपर्णकेतावुपलभते भगवत्पदारविंदम् ॥३७॥ इति श्रीभागवते महापुराणे अष्टादशसाहस्र्यां संहितायां तृतीयस्कंधे कपिलांतर्धानवर्णनं नाम त्रयस्त्रिंशोध्यायः ॥ ३३ ॥ समाप्तोऽयं तृतीयः स्कंधः ॥ ३ ॥



एतच्छ्रवणकीर्तनफलमाह । य इति । सुपर्णकेतौ गरुडध्वजे उपलभते प्राप्नोति ॥ ३७ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे टीकायां भावार्थदीपिकायां श्रीधरस्वामिविरचितायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ समाप्तोऽयं तृतीयः स्कंधः ॥ ३ ॥

तन्निगदितमित्याह-तातेति ॥ ३६ ॥ श्रीमत्कपिलदेवोक्तं तात्पर्य्यं फलेन दर्शयन्देवहूत्यास्तादृशीं गतिमेव द्रढयति-योऽभिधत्ते मात्रं यो वा शृणोति मात्रं किमुतानुतिष्ठति यः किमुततरां श्रीदेवहूतिः । उपाधिक्येन प्रेमवत्पार्षदतया भगवत्पदारविंदसेवार्थं प्राप्नोति ॥ ३७ ॥ यो मात्रे कापिलं रूपं धृत्वा ज्ञानमदात्प्रभुः । स सदा संसृतेः पातु यशोदानंदनो हरिः ॥ १ ॥ भावार्थदीपिकाटीकाप्रकाशोऽतिप्रयत्नतः । वंशीधरेण संदब्धो बहुटीकावलोकनैः ॥२॥ प्रीयतां यमुनातीरवल्लवीकेलितत्परः । श्रीराधारमणोनेन वृषार्कसुतया सह॥३॥इति श्रीगौडवंशोद्भूतकौशिकगोत्रवंशीधरशर्मकृतस्तृतीयस्कंधभावार्थदीपिकाप्रकाशः समाप्तः।

अयं श्रीभावार्थदीपिकाप्रकाशसमलंकृतभावार्थदीपिकासमेतश्रीमद्भागवततृतीयस्कन्धः मुम्बय्यां खेमराजश्रीकृष्णदासश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" मुद्रणालये मुद्रयित्वा प्रकाश्यमानीयत।

॥ इति श्रीधरीयटीकया वंशीधरशर्मकृततद्भावार्थदीपिकाप्रकाशटीकया चोपेते भागवते तृतीयस्कन्धः समाप्तः ॥ ३ ॥

॥ अथ श्रीधरीयटीकया बंशीधरशर्मकृततद्भावार्थदीपिकाप्रकाश-
टीकया चोपेते भागवते चतुर्थस्कन्धः प्रारभ्यते ॥

श्रीकृष्णाय नमः ॥ मैत्रेय उवाच ॥ मनोस्तु शतरूपायां तिस्रः कन्याश्च जज्ञिरे ॥ आकूतिर्देवहूतिश्च प्रसूतिरिति विश्रुताः ॥ १ ॥ आकूतिं रुचये प्रादादपि भ्रातृमतीं नृपः ॥ पुत्रिकाधर्ममाश्रित्य शतरूपानुमोदितः ॥ २ ॥ प्रजापतिः स भगवान्रुचिस्तस्यामजीजनत् ॥ मिथुनं ब्रह्मवर्चस्वी परमेण समाधिना ॥ ३ ॥ यस्तयोः पुरुषः साक्षाद्विष्णुर्यज्ञस्वरूपधृक् ॥ या स्त्री सा दक्षिणा भूतेरंशभूताऽनपायिनी ॥ ४ ॥ आनिन्ये स्वगृहं पुत्र्याः पुत्रं विततरोचिषम् ॥ स्वायंभुवो मुदा युक्तो रुचिर्जग्राह दक्षिणाम् ॥ ५ ॥ तां कामयानां भगवानुवाह यजुषां पतिः ॥ तुष्टायां तोषमापन्नोऽजनयद् द्वादशात्मजान् ॥ ६ ॥ तोषः प्रतोषः संतोषो भद्रः शांतिरिडस्पतिः ॥ इध्मः कविर्विभुः स्वह्नः सुदेवो रोचनो द्विषट् ॥ ७ ॥

॥ श्रीगणेशाय नमः ॥ ॥ नमः श्रीपरमहंसास्वादितचरणकमलचिन्मकरंदाय भक्तजनमानसनिवासाय श्रीरामचंद्राय ॥ ॥ अथैकत्रिंशताध्यायैर्विसर्गस्तुर्य ईर्यते ॥ विसर्गस्त्वीश्वराधीनैर्ब्रह्ममन्वादिभिः कृतः ॥ १ ॥ तत्र तु प्रथमेऽध्याये मनुकन्यान्वयाः पृथक् ॥ वर्ण्यंते यत्र यज्ञादिमूर्तिभिः प्रभवो हरेः ॥ २ ॥ मनुकन्यान्वयं विस्तरेण वक्तुमाह । मनोस्त्विति । चकाराद्द्वौ पुत्रौ च ॥ १ ॥ तुशब्दादन्यतोऽपि पुत्रलाभः सूचितस्तं दर्शयितुमाह । पुत्रिकाधर्ममाश्रित्येति । "अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् ॥ अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ॥" इति भाषाबंधेन कन्यादानं पुत्रिकाधर्मः । स चाभ्रातृकायां कन्यायां पुत्रार्थिन एव प्रसिद्धस्तथापि पुत्रबाहुल्यकामस्तथा कृतवानित्याह । भ्रातृमतीमपीति ॥ २ ॥ मिथुनं पुरुषं स्त्रियं च । समाधिना ईश्वरध्यानेन ॥ ३ ॥ भूतेर्लक्ष्म्या अंशभूता अतस्तयोर्विवाहो न विरुद्ध इति भावः ॥ ४ ॥ पुत्र्या आकूतेः पुत्रं यज्ञम् ॥ ५ ॥ यजुषां यज्ञानां मंत्राणां वा पतिर्विष्णुः ॥ ६ ॥ द्विषट् द्वादश ॥ ७ ॥

ॐ स्वस्ति श्रीगणेशाय नमः ॥ श्रीकृष्णं बल्लवीनाथं यशोदानन्ददायिनम् ॥ प्रणम्य कुर्वे तुर्य्यस्य स्कन्धस्य व्याकृतिं मुदा ॥ ( १ ) ॥ अथ सर्गकथनोत्तरम् । तुर्ये चतुर्थस्कंधे । ईश्वराधीनैरीश्वरप्रेरितैः कृतः सर्गो विसर्गः । एकवचनांतस्याप्येकत्रिंशच्छब्दस्य बह्वर्थबोधकत्वादध्यायैरित्यनेनान्वयो न विरुद्धः । 'विंशत्याद्यास्सदैकत्वे' इत्यमरात् ॥ (१) ॥ "एकेन मनुकन्यानामन्वयाः कथिता इह । ततो रसैर्दक्षयज्ञध्वंसो भूयः प्रवर्त्तना ॥ ततो ध्रुवस्य चारितं पंचभिः श्रीपृथोस्ततः ॥ एकादशभिरध्यायैरष्टभिश्च प्रचेतसाम् । इत्येवं क्रमशो ज्ञेयो विज्ञैः प्रकरणक्रमः " ॥ यत्र मनुकन्यान्वयेषु । आदिना कपिलादिग्रहः ॥ (२) ॥ पूर्वोक्तमनुवदति प्रस्तुतलाभाय मनोरिति विश्रुताः प्रसिद्धाः ॥ १ ॥ मनोस्त्विह तु पदप्रयोगफलं दर्शयति अभ्रातृकां भ्रातृरहिताम् । अस्यां मत्कन्यायाम् । यद्वाकूतेः पुत्रो भगवान्यज्ञो भविष्यतीति सर्वज्ञत्वेन दौहित्रः सन्नपि मे पुत्र एव यथा स्यात्तथा भावेन वा पुत्रिकाधर्ममाश्रितवानिति । नृपः स्वायंभुवः । अनुमोदितः सुष्ठु विमृष्टमित्युक्तः ॥ २ ॥ स रुचिः । भगवाननल्पज्ञानः । तस्यामाकूत्याम् । ब्रह्मवर्चस्वी वेदाध्ययनादिनातीवतेजस्वी । परमेण श्रीहरिध्यानाविष्टेन । समाधिना चित्तैकाग्र्येण । अनेन रुचेर्ब्राह्मणत्वं लक्ष्यते ॥ ३ ॥ तयोः कन्याकुमारयोर्मध्ये 'धृञ्–धारणे' जकारांतोपि धातुः । 'धातूनामप्यनंतत्वान्नानार्थत्त्वाच्च सर्वथा' इत्यनुभूतिस्वरूपोक्तेः । 'भूतिः श्रीभस्मजन्मासु' इति यादवः । अतो लक्ष्म्यंशत्वात् । तयोर्यज्ञदक्षिणयोः । इति भाव इति । " लक्ष्मीर्नान्यस्य भार्या स्याद्विना विष्णुं स्वयं प्रभुम् " इत्यादिपुराणादयमाशयः ॥ ४ ॥ स्वायंभुवेनोद्वाहकाले यदुक्तं तन्न विस्मृतमित्याह–आनिन्ये इति । विततं रोचिस्तेजो यस्य तम् ॥ ५ ॥ तां दक्षिणां कामयानामुद्वहनेच्छावतीं तुष्यत्यनयेति तुष्टा दक्षिणा । कारितेपि सुभोजने दक्षिणादानाभावे भोक्तुस्तोषो न भवतीत्यवश्यं सा देया । "ब्राह्मणमद्य विदेयं पितृमंतं पैतृमत्यमृषिमार्षेयं सुधातुदक्षिणम् । अस्मद्राता देवत्रा गच्छत दातारमाप्रीणयत " इति श्रुतेः ॥ ६ ॥ द्विरावृत्ताः षट् द्विषट् आर्षत्वाद्द्विशब्दस्येद्व्यादेशो मध्यमपदलोपश्च ॥ ७ ॥

तदिदं पश्यत महद्धर्मव्यतिकरं द्विजाः ॥ इंद्रेणानुष्ठितं राज्ञः कर्मैतद्विजिघांसता ॥ ३१ ॥ पृथुकीर्तेः पृथोर्भूयात्तर्ह्येकोनशतक्रतुः ॥ अलं ते क्रतुभिः स्विष्टैर्यद्भवान्मोक्षधर्मवित् ॥ ३२ ॥ नैवात्मने महेंद्राय रोषमाहर्तुमर्हसि ॥ उभावपि हि भद्रं त उत्तमश्लोकविग्रहौ ॥ ३३ ॥ माऽस्मिन्महाराज कृथाः स्म चिंतां निशामयाऽस्मद्वच आदृतात्मा ॥ यद्ध्यायतो दैवहतं नु कर्तुं मनोऽतिरुष्टं विशते तमोंधम् ॥ ३४ ॥ क्रतुर्विरमतामेष देवेषु दुरवग्रहः ॥ धर्मव्यतिकरो यत्र पाखंडैरिंद्रनिर्मितैः ॥ ३५ ॥

भगवतस्तनुरवतारः । "ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत ॥ स यामाद्यैः सुरगणैरपात्स्वायंभुवांतरम्" इत्युक्तत्वात् ॥ ३० ॥ अतो बलीयसाऽनेन सख्यमेव कर्तव्यमन्यथा भूयः पाखंडं स्रक्ष्यतीत्याशयेनाह । तदिदमिंद्रेणानुष्ठितं महदन्याय्यं पश्यत । किमित्यपेक्षायामाह । धर्मस्य व्यतिकरं विपर्ययं पाखंडपथम् ॥ ३१ ॥ तर्हि किमत्र युक्तमित्यत आह । पृथुकीर्तेरिति । एकेनोनं शतं यस्मिंस्तादृशः क्रतुः क्रतुप्रयोगः पृथोर्भूयात् । पृथुकीर्तिः पृथुरिति पाठे एकोनशतं क्रतवो यस्य तादृशोऽपि महेंद्रात्पृथुकीर्तिर्भूयादित्यर्थः । तदेवमृत्विजः प्रत्युक्त्वा पृथुं प्रत्येवाह । अलमिति ॥ ३२ ॥ आत्मनैवात्मने महेंद्राय रोषं कर्तुं नार्हसि । तत्र हेतुः । उभावपीति॥ ३३॥ तथापि क्रतुसमाप्तिमेव ध्यायंतं प्रत्याह । अस्मिन्यज्ञविघ्ने चिंतां मा स्म कृथाः । यद्यस्माद्दैवहतं कार्यं कर्तुं ध्यायतो मनो नु निश्चितमतिरुष्टं सदंधं तमो मोहं विशति न तु शांतिं लभते ॥ ३४ ॥ अत एव तव क्रतुर्विरमतु । नन्विंद्रः किं न निवार्यतेऽत आह । यतो देवेषु दुराग्रहो भवतीति । यत्र क्रतौ ॥ ३५ ॥

युक्ताः । किन्तु द्वयमपि रक्षितुं युक्तमिति भाव इत्याह । विश्वनाथस्तु—भगवत्तनुरिति । न हि भगवद्विग्रहो विप्रैर्हंतुमध्यवस्यते भवतां तर्हि विप्रत्वमेव कुतः यं यज्ञेन जिघांसथेति स खलु यज्ञः कथं यज्ञेन वध्यो भवेद्यथा क्षीराब्धिः क्षीरप्रस्थेनेति । किञ्च यस्य यज्ञस्येंद्रस्य च तनवः सुरास्ते च यज्ञेन युष्माभिरिष्टा इज्यंते स्मेति कथं स मरिष्यतीत्येतमपि विवेकं न कुरुथेति भाव इत्याह ॥ ३० ॥ यतस्तद्द्वेषेणाधर्म एव वर्धिष्यते तं चाधर्ममस्य राज्ञो मूर्त्तमेव प्रवृत्तं पश्यतेत्याह—अतो बलीयसेति । तदिदं प्रत्यक्षसिद्धं द्विजा इत्यदीर्घदर्शित्वमाह ॥ ३१ ॥ इत्यर्थ इति । क्रतुभिर्यश एव साध्यं तच्च मदाशीर्वादादेव भविष्यतीति भावः । षष्ठ्यंतपाठे एकत्वं जात्यपेक्षया एकोनशतं क्रतुरिति पाठे संख्या वाक्यापेक्षया शंढत्वमेकत्वं च "विंशत्याद्याः सदैकत्वे तासु चानवतेः स्त्रियः । क्लीबे शताद्याः प्रायः स्युः" इत्यभिधानात् । क्रतुशतस्य संकल्पोऽपूर्णोऽपि मदाशीर्वादात्पूर्णो भवत्वित्यर्थो व्यंजितः । यद्यतो मोक्षधर्मविदिति । न चेंद्रत्वलाभाय तव क्रतुशतकारंभः किं तु प्रजापालनवदिज्यादेरपि राजधर्मत्वेन निजधर्माचरणस्य 'स्वधर्ममाराधनमच्युतस्य' इत्युक्त्या मोक्षहेतु हर्याराधनार्थत्वमेव । मोक्षहेतुत्वं तु स्वधर्मस्य 'यदीहमानो विजहाति बंधम्' इत्युक्तेः । यज्ञस्य राजधर्मत्वं तु गयोपाख्याने "स्वधर्मेण प्रजापालनपोषणप्रीणनोपलालनानुशासनोपलक्षणेनेज्यादिना च" इत्युक्तेरेवावसीयत इति । अत उक्तमलं पूर्णो तिष्ठतु वा । "अलं तु भूषणे शक्तौ पर्याप्तौ विनिवारणे" इति यादवः । निवृत्तिमार्गप्रियस्य तव प्रवृत्तिमार्गेहा तु लोकसंग्रहार्थमेवेति भावः ॥ ३२ ॥ फलितमाह—नैवेति । तत्र रोषाकरणे आत्मन इति हेतुः आत्मने इत्यत्रापि हेतुः उभाविति । द्वयोरपि युवयोर्भगवदवतारत्वादित्यर्थः ॥ ३३ ॥ तथापीत्थं बोधितेपि ॥ ३४ ॥ अत एव मनःशांत्यभावादेव । अत्राक्षिपति-नन्विति । तीर्थस्तु—न केवलं क्रतोर्विरामेण पूर्यते

एभिरिंद्रोपसंसृष्टैः पाखंडैर्हारिभिर्जनम् ॥ ह्रियमाणं विचक्ष्वैनं यस्ते यज्ञध्रुगश्वमुट् ॥ ३६ ॥ भवान्परित्रातुमिहावतीर्णो धर्मं जनानां समया नुरूपम् ॥ वेनापचारादवलुप्तमद्य तद्देहतो विष्णुकलाऽसि वैन्य ॥ ३७ ॥ स त्वं विमृश्यास्य भवं प्रजापतेः संकल्पनं विश्वसृजां पिपीपृहि ॥ ऐंद्रीं च मायामुपधर्ममातरं प्रचंडपाखंडपथं जहि प्रभो ॥ ३८ ॥ मैत्रेय उवाच ॥ इत्थं स लोकगुरुणा समादिष्टो विशांपतिः ॥ तथा च कृत्वा वात्सल्यं मघोनाऽपि च संदधे ॥ ३९ ॥ कृतावभृथस्नानाय पृथवे भूरिकर्मणे ॥ वरान्ददुस्ते वरदा ये तद्बर्हिषि तर्पिताः ॥ ४० ॥ विप्राः सत्याशिषस्तुष्टाः श्रद्धया लब्धदक्षिणाः॥ आशिषो युयुजुः क्षत्तरादिराजाय सत्कृताः ॥ ४१ ॥

इंद्रदुराग्रहकृतमनर्थं पश्येत्याह । एभिरिंद्रेणोपसंसृष्टैरधिष्ठितैर्हारिभिश्चित्ताकर्षकैः । य इंद्रस्तेऽश्वं मुष्णातीति तथा यज्ञाय द्रुह्यतीति तथा । तेन सृष्टैः ॥ ३६ ॥ ततो मम किमिति चेत्तत्राह–भवानिति द्वाभ्याम् । सांख्ययोगादिनानासिद्धांतानुरूपं धर्मं वेनस्यान्यायाल्लुप्तं परित्रातुं तद्देहाद्विष्णोः कलैव त्वमवतीर्णोऽसि ॥ ३७ ॥ हे प्रजापते अस्य विश्वस्य भवमुद्भवं विचार्य यैरुत्पादितोऽसि तेषां विश्वसृजां संकल्पं पिपीपृहि आर्षः प्रयोगः पूरयेत्यर्थः । प्रचंडो यः पाखंडमार्गः सैवैंद्री मायोपधर्मजननी तां जहि विनाशय ॥ ३८ ॥ तथा च कृत्वा यज्ञाग्रहं हित्वा वात्सल्यं स्नेहं च कृत्वेंद्रेण सह संधानं च कृतवान् ॥ ३९ ॥ कृतमवभृथसंबंधि स्नानं येन स तस्मै ॥ ४० ॥ ४१ ॥

किन्तु देवेषु दुरवग्रहो विरमतां देवेषु कुपितेषु त्वद्राष्ट्रे वृष्टिविघातोऽपि स्यादतस्तद्दुरवग्रहविरमः कर्त्तव्य इत्यर्थः । क्रतौ विशेषणं वा कुपितदेवविषयो दुष्टोऽवग्रहो यस्मात्स तथा । देवप्रीत्या सुवृष्टयर्थं पुरुषैर्यज्ञोनुष्ठीयते "कारीर्या वृष्टिकामो यजेत" इति श्रुतेः । तत्र देवप्रतिहते क्रतौ क्रियमाणे तदप्रीत्यानावृष्ट्या व्रीह्याद्यौषध्यनुत्पत्त्याऽन्नाभावेन प्राणिनां प्राणधारणोपायाभावेन देहवियोगलक्षणो विनाशः स्यादिति "व्याङ्परिभ्यो रमः" इति विहितपरस्मैपदप्रयोगं विहाय स्वार्थहानिसूचनाय विरमतामित्यात्मनेपदप्रयोगः । इतोपि क्रतुर्विरमत्वित्याह–यत्र चरमाश्वमेधे क्रियामाणे सति धर्मव्यतिकरः धर्मेऽधर्मसंबंधेन धर्मस्य नाशो जात इति भावः । "ध्रुवं धर्मः प्रणश्येत तपोयज्ञव्रतादिषु । दर्शनस्पर्शभाषाभिर्म्लेच्छपाषंडिदंभिभिः" इति संहितोक्तेः । "वृष्टिर्वर्षं तद्विघातेवग्राहावग्रहौ समौ"इत्यमरः ॥ ३५ ॥ पाखंडैर्ह्रियमाणं स्वायत्तीकृतं जनं तत्र हेतुर्हारिभिर्मूढजनाकर्षिभिः ॥ ॥ ३६ ॥ ततः पाखंडहृतजनदर्शनान्मम किं का हानिरित्यत्राह । "समयः शपथाचारसिद्धांतेषु तथा धियि । क्रियाकारे च निर्देशे संकेते कालभाषयोः" इति मेदिनी । हे वैन्येति । वेनदेहोद्भूतत्वात्तन्मतिं मा गृहाणेति भावः । "विरोधे प्रणधित्यक्तेऽपचारोऽन्यायनिंदयोः" इति निरुक्तिः ॥ ३७ ॥ हे प्रजापते । प्रजापालनं हि धर्मरक्षयाऽधर्महत्या च भवतीत्यतः पाखंडस्य महाऽधर्मत्वात्तद्धननमेव युक्तमिति भावः । इत्यर्थ इति । 'पृपालनपूरणयोः' इत्यस्य लोटो मध्यमपुरुषैकवचने द्वित्वेत्वयोः पिपृहीति ततः पुनः पीत्यस्य द्वित्वमुत्तरस्य दीर्घश्च च्छांदसत्वात् । यद्वा–'वष्टिभागुरिः' इत्यप्युपसर्गाकारलोपे अभ्यासस्य च्छान्दसे दीर्घे पिपीपृहीति रूपमिति भावः । प्रचंडपाखंडपथमित्याविष्टलिंगत्वात्पुंस्त्वम् ॥ ३८ ॥ स पृथुर्लोकगुरुणा ब्रह्मणा ॥ ३९ ॥ अवभृथो यज्ञांतस्तस्येदमावभृथ्यं तच्च स्नानमावभृथ्यस्नानं कृतमावभृथ्यस्नानं येन तस्मै । तद्बर्हिषि तस्य यज्ञे ॥ ४० ॥ क्षत्तरिति । त्वं जानास्येवैतद्वृत्तं विप्राः पूजिताः सुखायापूजिता दुःखाय क्षत्तृपदमत्र विद्वत्परमनेन प्राग्भवमांडव्यवृत्तं स्मारितमिति भावः । "क्षत्ता शूद्राक्षत्रियजे प्रतीहारे च सारथौ । भुजिष्यातनयेपि स्यान्नियुक्तविदुषोरपि"

त्वयाऽहूता महाबाहो सर्वे एव समागताः ॥ पूजिता दानमानाभ्यां पितृदेवर्षिमानवाः ॥ ४२ ॥ इति श्रीभा० म० चतुर्थ० पृथुचरित्रे इंद्रकृतपाखंडागमवर्णनं नाम एकोनविंशोऽध्यायः ॥ १९ ॥ छ ॥ मैत्रेय उवाच भगवानपि वैकुंठः साकं मघवता विभुः ॥ यज्ञैर्यज्ञपतिस्तुष्टो यज्ञभुक्तमभाषत ॥ १ ॥ श्रीभगवानुवाच ॥ एष तेऽकारषीद्भंगं हयमेधशतस्य ह ॥ क्षमापयत आत्मानममुष्य क्षंतुमर्हसि ॥ २ ॥ सुधियः साधवो लोके नरदेव नरोत्तमाः ॥ नाभिद्रुह्यंति भूतेभ्यो यर्हि नात्मा कलेवरम् ॥ ३ ॥ पुरुषा यदि मुह्यंति त्वादृशा देवमायया ॥ श्रम एव परं जातो दीर्घया वृद्धसेवया ॥ ४ ॥ अतः कायमिमं विद्वानविद्याकामकर्मभिः ॥ आरब्ध इति नैवास्मिन्प्रतिबुद्धोऽनुषज्जते ॥ ५ ॥ असंसक्तः शरीरेऽस्मिन्नमुनोत्पादिते गृहे ॥ अपत्ये द्रविणे वाऽपि कः कुर्यान्ममतां बुधः ॥ ६ ॥ एकः शुद्धः स्वयंज्योतिर्निर्गुणोऽसौ गुणाश्रयः ॥ सर्वगोऽनावृतः साक्षी निरात्मात्मात्मनः परः ॥ ७ ॥

तुष्टानां वाक्यं त्वयेति ॥४२॥ इति श्रीमद्भागवते चतुर्थस्कंधे टीकायामेकोनविंशोऽध्यायः॥ १९ ॥छ॥ विंशे तु विष्णुना साक्षात्पृथोर्यज्ञेऽनुशासनम् ॥ वरदानप्रसंगेन प्रीतिश्चान्योन्यमीर्यते॥ १ ॥मघवता साकमिंद्रेण सह वर्तमानः॥ १ ॥आत्मानं त्वां क्षमां कारयताऽमुष्य इंद्रस्य त्वमपि क्षंतुमर्हसि ॥ २॥ यर्हि यस्मात्कलेवरमात्मा न भवत्यतस्तदभिमानेन भूतानि नाभिद्रुह्यंति॥ ३ ॥ ४ ॥अविद्या स्वरूपाज्ञानं ततः कामस्ततः कर्म तैरारब्ध इति विद्वानत एव प्रतिबुद्ध आत्मज्ञोऽस्मिन्नैवानुषज्जते ॥ ५ ॥ तथापि पुत्रादिममत्वेन भूतद्रोहेण च संगो भवेत्तत्राह । असंसक्त इति॥ ६ ॥प्रतिबोधक्रमं विवृण्वन्देहेऽनुषंगाभावमाह एक इति द्वाभ्याम् । असावात्मा आत्मनो देहात्परो भिन्नः तत्र नवधा

इति मेदिनी ॥ ४१ ॥ महाबाहो इति । इंद्रस्यापि भयंकरौ तव बाहू इति भावः ॥ ४२ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे एकोनविंशोऽध्यायः ॥ १९ ॥ अन्योन्यं पृथुविष्णोः परस्परं प्रीतिः ॥ ( १ ) अपिना ब्रह्मणः समुच्चयः । वैकुंठ इति । जगदुत्पत्तौ विश्लिष्टानां भूतानां संयोजकत्वात् । तदुक्तं शान्तिपर्वणि "मया संश्लेषिता भूमिरद्भिर्व्योम च वायुना । वायुश्च तेजसा सार्द्धं वैकुंठत्वं ततो मम ॥" इति । विभुरित्यनेन यज्ञस्येंद्रस्य तद्व्याप्यत्वमुक्तं यज्ञानां पतिर्भोक्ता च "अहं हि सर्वे यज्ञानां भोक्ता च प्रभुरेव च" इति श्रीगीतोक्तेः । तं पृथुम् ॥ १ ॥ हयमेधशतमस्येति हयमेधशतस्तस्य ते मत्वर्थीयोऽच् । भंगमश्वापहरणे नानादरमकार्षीत् । "भंगो मर्दनरीढयोः" इति निरुक्तिः । यद्वा—हयमेधशततमस्येति व्याख्येयं तमप्प्रत्ययलोपस्त्वार्षः । अन्यथा चरमाश्वमेधासिद्ध्या तदेकभंगाभावेन सर्वभंगापत्त्या त्वमेकोनशतक्रतुरित्यनुपन्नं स्यादिति भावः ! किमत्र कार्यं तदाज्ञापयेति तत्राह—अमुष्येन्द्रस्य ॥ २ ॥ अक्षमा साधुगुणो न स्यादित्याह—नरदेवेति । तव तु नरपालकस्य सर्वथा द्रोहोऽनुचित इत्यभिप्रायः । भूतेभ्य इति चतुर्थी त्वार्षी । "क्रुधद्रुहोरुपसृष्टयोः कर्म" इत्युपसर्गयोगे कर्मसंज्ञाविधानात् ॥ ३ ॥ भगवन्मायामोहनादेव भवेदिति चेत्तत्राह-पुरुषा इति । त्वादृशाः कुतस्त्वमित्यर्थः ! वृद्धानां शास्त्रवृद्धानां सेवया ॥ ४ ॥ अतो वृद्धसेवयैव मायानावरणात् । ततः स्वरूपाज्ञानात् पुनस्ततः कामात् । अत एव वैदुष्यादेवं । अस्मिन्काये । अनुषज्जति आसक्तो भवति ॥ ५ ॥ यद्यपि प्रतिबुद्धो न सज्जते तथापि इति । आदिना ह्यादिग्रहः । अमुना शरीरेण ॥ ६ ॥ तत्रात्मनि यत आत्मा देहवान्नातो

प्रस्थानाभिमुखोऽप्येनमनुग्रहविलंबितः ॥ पश्यन्पद्मपलाशाक्षो न प्रतस्थे सुहृत्सताम् ॥२०॥ स आदिराजो रचितांजलिर्हरिं विलोकितुं नाशकदश्रुलोचनः ॥ न किंचनोवाच स बाष्पविक्लवो हृदोपगुह्यामुमधादवस्थितः ॥ २१ ॥ अथावमृज्याश्रुकला विलोकयन्नतृप्तदृग्गोचरमाह पूरुषम् ॥ पदा स्पृशंतं क्षितिमंस उन्नते विन्यस्तहस्ताग्रमुरंगविद्विषः ॥२२ ॥ पृथुरुवाच ॥ वरान्विभो त्वद्वरदेश्वराद् बुधः कथं वृणीते गुणविक्रियात्मनाम् ॥ ये नारकाणामपि संति देहिनां तानीश कैवल्यपते वृणे न च ॥ २३ ॥ न कामये नाथ तदप्यहं क्वचिन्न यत्र युष्मच्चरणांबुजासवः ॥ महत्तमांतर्हृदयान्मुखच्युतो विधत्स्व कर्णायुतमेष मे वरः ॥ २४ ॥

द्वच्छंत्या वर्द्धमानया भक्त्या गृहीते चरणांबुजे यस्य ॥ १९ ॥ पद्मपलाशवदक्षिणी यस्य तथाभूतः सन् एनं पृथुं पश्यन् ॥ २० ॥ भगवतस्तत्कृपातिरेकमुक्त्वा तस्य भक्त्युद्रेकमाह स इति द्वाभ्याम् । बाष्पविक्लवत्वेन तूष्णीमवस्थितः सन्नमुं हरिं हृदोपगुह्याधाङ्गृतवान् ॥ २१ ॥ अतृप्तयोर्दृशोर्गोचरं विषयभूतम् । पदा क्षितिं स्पृशंतमिति अयं भावः । न खलु देवाः पदा भुवं स्पृशंत्यतः कृपापरवशो नूनं हरिरात्मानं विस्मृतवानिवेति । अत एव स्खलनपरिहारायैव गरुडस्योन्नते स्कंधे विन्यस्तं हस्ताग्रं येन तम् ॥ २२॥ वरं वृणीष्वेति यदुक्तं तदसहमान आह । हे विभो वरदानां ब्रह्मादीनामीश्वराद्वरप्रदात्त्वत्त्वत्तः ॥ सकाशद् बुधः सन्कथं वरान्वृणीते । कीदृशान् । गुणैर्विक्रियत इति गुणविक्रियोऽहंकारः स एवात्मा येषां तेषां ब्रह्मादीनां संबंधिनः देहाभिमानिनां भोग्यानिति वा । तथा चेत्स बुध एव न भवतीत्यर्थः । जुगुप्सितत्वादपीत्याह । ये इति । बुध एवाहमपि न वृणे इति समुच्चयाय चकारः ॥ २३ ॥ कैवल्यपत इति संबोधनात्कैवल्यं वरिष्यतीति मा शंकीरित्याह । नेति । महत्तमानामंतर्हृदयान्मुखद्वारेण निर्गतो भवत्पदांभोजमकरंदो यशःश्रवणादिसुखं यत्र नास्ति तादृशं चेत्कैवल्यं तर्हि तत्कचित्कदाचिदपि न कामये । तर्हि किं कामयसे तदाह । यशःश्र

"यात्रा प्रयाणं प्रस्थानं गमनं चलनं गतिः" इत्यभिधानात् ॥ २० ॥ स पृथुः वाक्यभेदात्स इत्यस्य पौनरुक्त्यन्न ॥ २१ ॥ अतोऽत्र । अत एव विस्मृतात्मत्वादेव । अथ हृदि धारणोत्तरम् ॥ २२ ॥ विभो इति । न हि विभोर्वरं वृणीष्वेति कथनं युक्तं विभुत्वहानिप्रसंगादिति भावः । आत्मात्मत्वेनाभिमतः । कैवल्यपते इति । कैवल्यकामोऽपि यान्न वृणीते तानहं कैवल्यस्याप्यसहिष्णुः कथं वृण इति भावः । ईशेति । स्वामिमतदाने सामर्थ्यं द्योतयति ॥ २३ ॥ कैवल्यमपि येभ्य एव रोचते तेभ्य एव तदीयतामित्यभिप्रायेणैव मया तच्छब्देनामंत्रितोऽसीत्याह-नेति । वरश्च मत्कंचनेति यदुक्तं तत्र सामान्यतो वरानहं नैव कामये विशेषतोऽपि कश्चन वरं कैवल्यं तदपि न कुतः यत्र कैवल्ये अंतर्हृदयेनास्वाद्यानंदोद्रेकात्कार्त्स्न्यमान इत्यर्थः । "शुकमुखादमृतद्रवसंयुतम्" इतिवन्महदास्वाद्यत्वे सति तस्यापि माधुर्य्यमुदयत इति भावः । मधुरमपि जलं क्षारभूमिप्रतिष्ठं यथा विरसी भवति तथैवावैष्णवमुखनिर्गतो भगवद्गुणोऽपि न रोचको भवतीति व्यतिरेकश्च गम्यः । महतां गुणकथानाञ्चानंत्यात् । यत्रयत्र यैर्यैर्याया गुणकथाः कीर्त्यमानास्तासामेकामपि गुणकथां त्यक्तुं न शक्नोमीत्य

स उत्तमश्लोकमहन्मुखच्युतो भवत्पदांभोजसुधाकणानिलः ॥ स्मृतिं पुनर्विस्मृततत्त्ववर्त्मनां कुयोगिनां नो वितरत्यलं वरैः ॥ २५ ॥ यशः शिवं सुश्रव आर्य संगमे यदृच्छया चोपशृणोति तेऽसकृत् ॥ कथं गुणज्ञो विरमेद्विना पशुं श्रीर्यत्प्रवव्रे गुणसंग्रहेच्छया ॥ २६ ॥ अथाभजे त्वाऽखिलपूरुषोत्तमं गुणालयं पद्मकरेव लालसः ॥ अप्यावयोरेकपतिस्पृधोः कलिर्न स्यात्कृतत्वच्चरणैकतानयोः ॥ २७ ॥

वणाय कर्णानामयुतं विधत्स्व । ननु कोऽप्येवं न वृतवान् किमन्यचिंतयेत्याह । मम तु एष एव वरः ॥ २४ ॥ ननु तर्हि कैवल्याभावे रागद्वेषाद्याकुलानां भक्तिसुखमपि न स्यादित्याशंक्याह । स इति । भवत्पदांभोजसुधायाः कणो लेशस्तत्संबंधी योऽनिलः स एव दूरादपि किंचिद्यशःश्रवणमात्रमित्यर्थः । विस्मृतं तत्त्ववर्त्म यैः कुयोगिभिस्तेषामपि पुनः स्मृतिमात्मज्ञानं वितरति अतो न खलु भक्तानां रागद्वेषादिसंभवोऽतो नोऽस्माकं सारग्राहिणामन्यैर्वरैरलम् । भक्तावेव मोक्षादिसर्वसुखांतर्भावादिति भावः ॥ ॥ २५ ॥ ननु भक्तिर्मुक्तिफलैवातः फलं विहाय साधने भवतः कोऽयमाग्रह इत्याशंक्याह । हे सुश्रवः मंगलकीर्ते ते शिवं यशः सतां संगमे यः सकृदपि यदृच्छयाप्युपशृणोति गुणज्ञश्चेत्स पशुं विनाऽन्यः कथं विरमेत । गुणातिशयं सूचयति । श्रीर्यद्यश एव प्रकर्षेण वृतवती गुणानां सर्वपुरुषार्थानां संग्रहः स्वस्मिन्समाहारस्तदिच्छया ॥ ॥ २६ ॥ अतो लक्ष्मीरिवान्यवरत्यागेन त्वामेवाहं भज इत्याह । अथेति । लालस उत्सुकः सन् कर्मणि क्रियमाणे यथेंद्रेण सह कलिरेवं भक्तावपि किं लक्ष्म्या सह

तिलोभात्कर्णानंत्यस्पृहा तेन कैवल्यकामा येभ्य इंद्रियेभ्यो द्रुह्यंति तानेवाहं कामय इति द्योतितम् ॥ २४ ॥ अत्राक्षिपति-नन्विति । इत्यर्थ इति । तत्संबंधी तावदनिलोऽपि कुतः कणः कुतस्तरां सा सुधा तद्गुणकथालेशप्रसंगानीति भावः । अतः प्राप्तज्ञानत्वात् । अतो रागाद्यभावात् । इत्यर्थ इति । "या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्भवज्जनकथाश्रवणे न वा स्यात् । सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्" इत्युक्तेरिति भावः ॥ ॥ २५ ॥ पुनराक्षिपति-नन्विति । यतो मुक्तिरेव भक्तिफलमतो हेतोः । अत्र विश्वनाथः—ननु मत्कथास्वादादपि विरम्य योगींद्रस्पृहणीयं कैवल्यमेव गृहाणेति तत्राह-यश इति । हे सुश्रवः मंगलकीर्त्ते यशःश्रवणेनैव "कैवल्यसंमतपथस्त्वथ भक्तियोगः । को निर्वृतो हरिकथासु रतिं न कुर्यात्" इति न्यायेन न मोक्षार्थं यत्नांतरं कार्यमिति भावः । तव यशः यदृच्छयाऽयत्नतोऽकस्मात्प्राप्तमपि सकृदपि यः शृणोति गुणज्ञश्चेत्स कथं तस्माद्विरमेत् पशुं विनेति यो विरमेत्स मनुष्येषु पशुर्यो न विरमेत्स पशुष्वपि मनुष्य इति ध्वनिः । "तच्चापि चित्तबडिशं शनकैर्वियुङ्क्ते" इत्याद्युक्तलक्षणलक्षिताद्युष्मद्यशःपीयूषाद्विरमते योगिने "त्रैवर्गिकास्ते पुरुषा विमुखा हरिमेधसः । कथायाम्" इत्याद्युक्तस्वभावाय सकर्मणे च पशवे पिण्याकतुषादिकमिव कैवल्यं देहि न तु मह्यं मनुष्यायेत्यनुध्वनिः । ननु मद्यशःस्वादादपि कैवल्यादिकमधिकं भवेदित्यत्र योगी सकर्मा च प्रमाणं कैवल्यादिभ्यो मद्यशःस्वादोऽधिक इति भवन्मते कः प्रमाणमिति तत्राह-श्रीर्महालक्ष्मीर्ब्रह्मादिसर्वजगत्पूज्या सर्वगुणपंडितापि तद्यशो वव्रे गुणानां तदीयरूपरसगंधशब्दस्पर्शलीलालावण्यकारुण्यानां सम्यग्ग्रहणमास्वादनसामर्थ्यं तदिच्छयेति सैवात्र प्रमाणं तदुपलक्षिता अन्येप्यास्वादितचरकैवल्यसुखमपि लघू कारिष्णवो यशस्येव रममाणाः शुकादयोऽपि प्रमाणं घासबुद्ध्यैवेक्षुपल्लवानि चरन्नप्यन्तस्तदीयकांडेष्वरुचिर्घासमेवास्वादयन्वृष इव योगी सहकारपल्लवानि त्यक्त्वा कंटकमेवास्वादयन्नुष्ट्र इव सकर्मा किं प्रमाणं भवेदिति भावः ॥२६॥ यतो लक्ष्मीस्त्वां भजतेऽतो हेतोः । अत्र विश्वनाथः—अतः केवलं भजनमेव वृणे न तु वरानित्याह । अथातः आ सम्यक् निष्काम एव केवलामेव भक्तिं कुर्वे न तु ज्ञानकर्मादिसिद्ध्यर्थं ज्ञानिसकर्मगुणीभूतामित्यर्थः । तत्रापि न नारदादिरिव किन्तु पद्मकरा लक्ष्मीरिव मार्जनलेपनपादसंवाहनव्यजनतांबूलार्पणादिभिरभीक्ष्णमेवेत्यर्थः । यतो लालसः लाल

जगज्जनन्यां जगदीश वैशसं स्यादेवयत्कर्मणि नः समीहितम् ॥ करोति फल्ग्वप्युरुदीनवत्सलः स्व एव धिष्ण्येऽभिरतस्य किं तया ॥ २८ ॥
भजंत्यथ त्वामत एव साधवो व्युदस्तमायागुणविभ्रमोदयम् ॥ भवत्पदानुस्मरणादृते सतां निमित्तमन्यद्भगवन्न विद्महे ॥ २९ ॥
मन्ये गिरं ते जगतां विमोहिनीं वरं वृणीष्वेति भजंतमात्थ यत् ॥ वाचा नु तंत्या यदि ते जनोऽसितः कथं पुनः कर्म करोति मोहितः ॥ ३० ॥

कलिः स्यादिति वितर्कयति । एकस्मिन्पत्यौ स्पर्धमानयोरावयोरपि किं कलिर्न स्यादिति काका वितर्कः । ननु पर्यायेण सेवायां न स्यात् । नैवम् । कुतस्त्वच्चरणयोरेवै कस्तानो मनोविस्तारो याभ्यां तयोः ॥ २७ ॥ भवतु वा कलिस्तथापि भजेयमेवेत्याह । जगज्जनन्यां वैशसं विरोधः स्यादेव तत्र हेतुर्यस्याः कर्मणि चरणसेवालक्षणे नः समीहितमिच्छा भवति तथापींद्रविरोधे मत्पक्षपातवदत्रापि मयि तव पक्षपात एव स्यादित्याह । फल्गु तुच्छमप्युरु बहु करोषि यतो दीनेषु वत्सलो दयावान् स्वे स्वरूप एव रतस्य तव तया लक्ष्म्या किं प्रयोजनम् । तां नाद्रियस इत्यर्थः ॥ २८ ॥ यतस्त्वं दीनवत्सलोऽत एव साधवो निष्कामा अथ ज्ञानानंतरमपि त्वां भजंति । कथंभूतम् । मायागुणानां विभ्रमो विलासस्तस्योदयः कार्यं स निरस्तो यस्मिंस्तम् । ते मां किमर्थं भजंति तत्राह । भवत्पदानुस्मरणाद्विनान्यत्तेषां निमित्तं फलं न विद्मः ॥२९॥ वैरः प्रलोभनं च कृपालोस्तवानुचितमित्याशयेनाह । मन्य इति । नु अहो ते वाचा तंत्या यदि जनोऽयमसितोऽबद्धः स्यात्तर्हि पुनःपुनः फलैर्मोहितः सन्कथं कर्म

सात्वान् "समर्हाल्लालसा द्वयोः"इत्यभिधानादत्यधिकं स्पृह इत्यर्थः । न चात्र पृथोरुज्ज्वलभाव आशंकनियः उत्तरश्लोके जगज्जनन्यामित्युक्तेः जगति च स्वस्यान्तःपाताल्लक्ष्म्यां जननीभावेन स्वस्य दास्यभावव्यक्तेः । अतः पद्म करेवेत्युपमेयम् । परिचरणांशेनैव भगवच्चरणपरिचर्य्यायां तस्या एवातिप्रसिद्धेः लक्ष्म्यां परमभक्तिमतोऽपि स्वस्य वीरभक्तत्वं वाचैव द्योतयन्नाह-अपीति । अपरं स्वामिचरणोक्तिवत् समाधये शंकते-नन्विति । परिहरति-नैषामिति ॥२७॥तत्र विरोधे। तथापि लक्ष्म्या विरोधेऽपि।इत्यर्थ इति। तयोपादेयाभावादिति भावः।चक्रवर्ती तु-"कृपां तस्य समाश्रित्य प्रौढं नान्यमपेक्षते॥ अतुलां यो वहेत्कृष्णे प्रीतिं वीरः स उच्यते"इति वीरभक्तोचितं स्वस्वभावं प्रकटयन्नाह-जगज्जनन्यां जगन्मध्यवर्त्तित्वेन ममापि जनन्यां लक्ष्म्यां वैशसं विरोधः स्यादेव कुतः यस्याः कर्मणि त्वत्पादसेवारूपे नोऽस्माकमिच्छा जाता सा खलु युष्मद्वक्षस्यासीना विराजतु अहं पुत्र एव सर्वं युष्मच्चरणपरिचरणं करवाणि तस्याः कोयमाग्रहो यत्परिचरणं विना न जीवतीति भावः । ननु त्वमर्वाचीनः सातिप्राचीना त्वं निकृष्टः सातिमहतीति तया सह किं विरुध्यसे । सत्यं । तथापीन्द्रविरोधे मत्पक्षपातवदत्रापि मयि तव पक्षपातः स्यादित्याह फल्गु तुच्छमपि त्वमुरु करोषि यतो दीनेषु वत्सलः । ननु त्वं तस्याः कोपान्न बिभेषि? किं तत्र सत्यं न बिभेमीत्याह—स्व एव धिष्ण्ये स्वसामर्थ्येभिरतस्य मम तया किं न किमपीत्यर्थः । तत्कृपोद्रेक एव सामर्थ्यं यदुक्तम् वीरभक्तोदाहरणेषु "प्रलंबरिपुरीश्वरो भवतु का क्षतिस्तेन मे कुमारमकरध्वजादपि न किंचिदास्ते फलम् । किमन्यदहमुद्धतः प्रभुकृपाकटाक्षश्रिया प्रियापरिषदग्रिमां न गणयामि तां मामपि" इति "धिष्ण्यं शक्तौ च पारदे" इति पुंकांडेऽमरदत्तः । जगदीशेति । पितुस्तव पुरुषविशेषस्य रक्षकत्वे मातुः स्त्रियाः कोपेपि न मे हानिरिति भावः ॥ २८ ॥ कार्यं वरस्पृहा त्वद्भजनस्यैवायं स्वभावो यद्वरस्पृहा निवर्त्तत इति । अनुस्मरणस्यैव सर्वसुखचूडामणेस्तदितरसुखतिरस्कारकत्वादिति भावः ॥ २९ ॥ ननु तर्ह्यहं स्वभक्तं प्रति वरं वृणीष्वेति कथं ब्रवीमि तत्राह—मन्य इति । यदि कश्चिदपक्वो भक्तस्त्वत्प्रलोभनाद्वरं वृणुते तदैव तस्य भक्तिरसवंचनात्सर्वनाश इति

त्वन्माययाऽद्धा जन ईश खंडितो यदन्यदाशास्त ऋतात्मनोऽबुधः ॥ यथा चरेद्बालहितं पिता स्वयं तथा त्वमेवार्हसि नः समीहितुम् ॥ ॥ ३१ ॥ मैत्रेय उवाच ॥ इत्यादिराजेन नुतः स विश्वदृक्तमाह राजन्मयि भक्तिरस्तु ते ॥ दिष्ट्येदृशी धीर्मयि ते कृता यया मायां मदीयां तरति स्म दुस्त्यजाम् ॥ ३२ ॥ तत्त्वं कुरु मयादिष्टमप्रमत्तः प्रजापते ॥ मदादेशकरो लोकः सर्वत्राप्नोति शोभनम् ॥ ३३ ॥ मैत्रेय उवाच ॥ इति वैन्यस्य राजर्षेः प्रतिनंद्यार्थवद्वचः ॥ पूजितोऽनुगृहीत्वैनं गंतुं चक्रेऽच्युतो मतिम् ॥ ३४ ॥ देवर्षिपितृगंधर्वसिद्धचारणपन्नगाः ॥ किन्नराप्सरसो मर्त्याः खगा भूतान्यनेकशः ॥ ३५ ॥ यज्ञेश्वरधिया राज्ञा वाग्वित्तांजलिभक्तितः ॥ सभाजिता ययुः सर्वे वैकुंठानुगतास्ततः ॥ ॥ ३६ ॥ भगवानपि राजर्षेः सोपाध्यायस्य चाच्युतः ॥ हरन्निव मनोऽमुष्य स्वधाम प्रत्यपद्यत ॥ ३७ ॥ अदृष्टाय नमस्कृत्य नृपः संदर्शितात्मने ॥ अव्यक्ताय च देवानां देवाय स्वपुरं ययौ ॥ ३८ ॥ इति श्रीभागवते महापुराणे चतुर्थस्कन्धे श्रीविष्णोः पृथोर्यज्ञेऽनुशासनवर्णनं नाम विंशोऽध्यायः ॥ २० ॥ छ ॥

करोति ॥ ३० ॥ त्वन्मायया खंडितस्य त्वया पुनः खंडनं न कर्तव्यं किं तु हितं चेष्टितव्यमित्याह। त्वन्मायया ऋतादात्मनस्त्वत्तः खंडितः पृथक्कृतो यद्यतोऽन्यत्पुत्रादिक माशास्ते अतः स्वयमविज्ञापित एव नः समीहितुं हितं चेष्टितुमर्हसि ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ वाग्वित्तांजलिभिर्भक्तितः पूजिताः संतः। वैकुंठानु गताः पार्षदाश्च ॥ ३६ ॥ अमुष्य राज्ञः। हरन्निवेति लोकोक्तिः। वस्तुतस्तस्य मनः सर्वदैव तदधीनमस्त्येव। स्वधाम राज्ञो हृदयम् ॥ ३७ ॥ अदृष्टाय लोचनपथमतिक्रांताय। संदर्शितोऽनुभावित आत्मा येन यस्मै। वासुदेवाय शुद्धचेतसि प्रतीयमानाय। वस्तुतोऽव्यक्ताय ॥ ३८ ॥ इति श्रीमद्भागवते चतुर्थस्कंधे टीकायां विंशोध्यायः ॥ २० ॥ छ ॥

भावः। ''कर्मणा पितृलोकः, स्वर्गकामो यजेत'' इत्यादिवेदलक्षणापि तव जगन्मोहिनीत्याह। नु अहो ते वाचा तंत्या यदि जनोयमसितोऽबद्ध इति समानम् ॥३०॥ ईशेति। नियंतुस्तव मम नियोज्यस्य का संमतिग्रहण चिंतेति भावः ॥ ३१ ॥ राजन्निति। राज्ञां दुर्लभापि मद्भक्तिर्मत्कृपयास्त्विति भावः ॥३२॥ प्रजापते इति। राज्ञः प्रजापालनमेव सर्वेष्टदमतस्तदेव कार्यमिति भावः। सर्वत्रेह परत्र च शोभनं सुखम् ॥३३॥ अर्थवत्सत्यं वचो 'वरान्विभो त्वद्वरदेश्वरात्' इत्यादिवाक्यजातम् एनं पृथुम् ॥ ३४ ॥ ३५॥ ततो यज्ञप्रदेशात् ॥ ३६ ॥ स्वधाम वैकुंठम् ॥ ३७॥ अदृष्टायान्यैः। पृथुस्तु वैकुंठगमनपर्यंतं तं ददर्शैवेत्यर्थः ॥३८॥ इति श्रीमद्भागवत भावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे विंशोऽध्यायः ॥ २० ॥ छ ॥

मैत्रेय उवाच ॥ मौक्तिकैः कुसुमस्रग्भिर्दूकूलैः स्वर्णतोरणैः ॥ महासुरभिभिर्धूपैर्मंडितं तत्रतत्र वै ॥ १ ॥ चन्दनागुरुतोयार्द्ररथ्याचत्वरमार्गवत् ॥ पुष्पाक्षतफलैस्तोक्मैर्लाजैरार्चिर्भिरर्चितम् ॥ २ ॥ सवृंदैः कदलीस्तंभैः पूगपोतैः परिष्कृतम् ॥ तरुपल्लवमालाभिः सर्वतः समलंकृतम् ॥ ३ ॥ प्रजास्तं दीपबलिभिः संभृताशेषमंगलैः ॥ अभीयुर्मृष्टकन्याश्च मृष्टकुंडलमंडिताः ॥४॥ शंखदुंदुभिघोषेण ब्रह्मघोषेण चर्त्विजाम् ॥ विवेश भवनं वीरः स्तूयमानो गतस्मयः ॥ ५ ॥ पूजितः पूजयामास तत्रतत्र महायशाः ॥ पौराञ्जानपदांस्तांस्तान्प्रीतः प्रियवरप्रदः ॥ ६ ॥ स एवमादीन्यनवद्यचेष्टितः कर्माणि भूयांसि महान्महत्तमः ॥ कुर्वञ्छशासावनिमण्डलं यशः स्फीतं निधायारुरुहे हरेः पदम् ॥ ७ ॥ सूत उवाच ॥ तदादिराजस्य यशो विजृंभितं गुणैरशेषैर्गुणवत्सभाजितम् ॥ क्षत्ता महाभागवतः सदस्पते कौषारविं प्राह गृणंतमर्चयन् ॥ ८ ॥ विदुर उवाच ॥ सोऽभिषिक्तः पृथुर्विप्रैर्लब्धाऽशेषसुरार्हणः ॥ बिभ्रच्च वैष्णवं तेजो बाह्वोर्याभ्यां दुदोह गाम् ॥ ९ ॥ को न्वस्य कीर्तिं न शृणोत्यभिज्ञो यद्विक्रमोच्छिष्टमशेषभूपाः ॥ लोकाः सपाला उपजीवंति काममद्यापि तन्मे वद कर्म शुद्धम् ॥ १० ॥ मैत्रेय उवाच ॥ गंगायमुनयोर्नद्योरंतरा क्षेत्रमावसन् ॥ आरब्धानेव बुभुजे भोगान्पुण्यजिहासया ॥ ११ ॥

एकविंशे तु पृथुना प्रजानामनुशासनम् ॥ महासत्रे सुरादीनां महासदसि वर्ण्यते ॥ १ ॥ स्वपुरं ययावित्युक्तं तत्पुरमनुवर्णयति मौक्तिकैरिति त्रिभिः ॥ १ ॥ चंदनागुरुयुक्तैस्तोयैरार्द्रा रथ्यादयस्तद्युक्तम् । तोक्मैर्हरितयवैरंकुरैरिति वा अर्चिभिर्दीपैः ॥ २ ॥ सवृंदैः पुष्पफलयुक्तैः कदलीस्तंभैः पूगैर्वृक्षैस्तथाविधैः सर्वतः समलंकृतं शोभितम् ॥ ३ ॥ संभृतानि संपादितान्यशेषाणि मंगलानि दध्यादीनि तैः सहाभिजग्मुः मृष्टा उज्ज्वलाः कन्याश्च ॥ ४ ॥ गतस्मयो निरहंकारः ॥ ५ ॥ प्रियान्वरान्प्रददातीति तथा ॥ ६ ॥ गुणैर्महानत एव महत्तमः पूज्यतमः ॥ ७ ॥ गुणैर्विजृंभितमूर्जितं गुणवद्भिः सभाजितं सत्कृतं यशो गृणंतम् । मैत्रेयमर्चयन्प्राह । हे सदसस्पते शौनक ॥ ८ ॥ लब्धान्यशेषसुराणामर्हणानि येन सः । किमकरोदिति शेषः ॥ ९ ॥ श्रवणौत्सुक्यमाविष्कुर्वन्प्रार्थयते । को न्विति । यस्य विक्रमः पृथ्वीदोहनं तस्योच्छिष्टतुल्यं कामं विषयम् । तत्तस्य कर्म वद ॥ १० ॥ प्राचीनकर्मभिः प्रारब्धानेव भोगान्बुभुजे न तु भोगांतरार्थं कर्माणि करोति तदपि भोगेन पुण्यक्षपणेच्छया न तु सुखा

महासत्रे दीर्घयज्ञे (१) ॥ १ ॥ २ ॥ ३ ॥ तं पृथुम् ॥ ४ ॥ निरहंकारस्तादृशमसाधारणमैश्वर्यं स्वस्य वीक्ष्यापि गतगर्वः ॥ ५ ॥ पूजितः स्वर्णमुद्रानर्घ्यनववस्त्राद्युपायनप्रदानेनेत्यर्थः । पूजयामास स उष्णीषकंचुकनेपालकंबलादिप्रतिदानेनेत्यर्थः ॥ ६ ॥ अत एव गुणैर्महत्त्वादेव ॥ ७ ॥ सदसः सभायाः पते सभापतित्वेन पूज्यत्वात्त्वामहमिदं वर्णये । किञ्चेदमेव सदस्पतेः शोभनमिति भावः ॥ ८ ॥ वैष्णवं तेजः सुदर्शनं "त्वं तेजः पौरुषं परम्" इत्यंबरीषोक्तेः । "विष्णुः सुदर्शनं चक्रं तत्पत्न्यव्याहतां श्रियम्" इत्यभिषेकोत्तरमुपायनाख्यानोक्तेः । कदाचिद्वामकरेपि तद्धारणाद्बाह्वोरिति द्विवचनम् । अन्यथा बाहावित्येवं कथं नावादीति मनीषिभिरेतेन कल्पनान्तरानिवृत्तिरप्यसूचि ॥ ९ ॥ सर्वकामानां पृथ्वीदुग्धत्वात्पृथ्वीदोहनस्य तद्विक्रमकृतत्वादित्यर्थः ॥ १० ॥ इत्यर्थ इति । वस्तुतस्तु प्रारब्धभोगादिकं लोक

सर्वत्रास्खलितादेशः सप्तद्वीपैकदण्डधृक् ॥ अन्यत्र ब्राह्मणकुलादन्यत्राच्युतगोत्रतः ॥ १२ ॥ एकदासीन्महासत्रदीक्षा तत्र दिवौकसाम् ॥ समाजो ब्रह्मर्षीणां च राजर्षीणां च सत्तम ॥ १३ ॥ तस्मिन्नर्हत्सु सर्वेषु स्वर्चितेषु यथार्हतः ॥ उत्थितः सदसो मध्ये ताराणामुडुराडिव ॥ १४ ॥ प्रांशुः पीनायतभुजो गौरः कंजारुणेक्षणः ॥ सुनासः सुमुखः सौम्यः पीनांसः सुद्विजस्मितः ॥ १५ ॥ व्यूढवक्षा बृहच्छ्रोणिर्वलिवल्गुदलोदरः ॥ आवर्तनाभिरोजस्वी कांचनोरुरुदग्रपात् ॥ १६ ॥ सूक्ष्मवक्रासितस्निग्धमूर्धजः कंबुकंधरः ॥ महाधने दुकूलाग्र्ये परिधायोपवीय च ॥ १७ ॥ व्यंजिताशेषगात्रश्रीर्नियमे न्यस्तभूषणः ॥ कृष्णाजिनधरः श्रीमान्कुशपाणिः कृतोचितः ॥ १८ ॥

सप्तद्वीपैत्यर्थः ॥ ११ ॥ अस्खलितोऽप्रतिहत आदेश आज्ञा यस्य सप्तसु द्वीपेष्वेक एव दंडं धारयतीति तथा । किं सर्वत्र नेत्याह । ब्राह्मणकुलव्यतिरेकेण अच्युतो गोत्रप्रवर्तकतुल्यो येषां वैष्णवानां तद्व्यतिरेकेण च ॥ १२ ॥ एकदा तस्य महासत्रदीक्षा आसीत्तत्र सत्रे देवादीनां समाज आसीदित्यर्थः ॥ १३ ॥ तस्मिन्सत्रे पूज्येषु स्वर्चितेषु सत्सु सदसो मध्ये उत्थितः स पृथुः समंततः समैक्षतेति षण्णश्लोकेनान्वयः ॥ १४ ॥ प्रांशुरुन्नतः पीनावायतौ भुजौ यस्य कंजवदरुणे ईक्षणे यस्य शोभना द्विजा दंताः स्मितं च यस्य ॥ १५ ॥ व्यूढं विस्तीर्णं वक्षो यस्य वलिभिस्तिसृभिर्वल्गु सुंदरं दलवदधोऽग्रमश्वत्थपत्रमिव उपरि विस्तृतमधस्तात्संकुचितमुदरं यस्य आवर्तवदम्भसां भ्रम इव निम्ना नाभिर्यस्य कांचनवदुज्ज्वलावूरू यस्य उदग्रावुन्नताग्रौ पादौ यस्य ॥ १६ ॥ सूक्ष्माश्च ते वक्राश्चासिताश्च स्निग्धाश्च मूर्धजा यस्य कंबुवत्त्रिरेखांकिता कंधरा यस्य परिधाय वसित्वा उपवीयोत्तरीयं कृत्वा ॥ १७ ॥ नियमे निमित्ते न्यस्तानि त्यक्तानि भूषणानि येन सः अत एव तैरनावृतत्वाद्व्यंजिताशेषगात्रेषु श्रीः

दृष्टैव, तस्य भगवदवतारत्वान्न प्रारब्धभोगादीति भावः । अंतरा क्षेत्रं मध्यवर्त्तिदेशम् ॥ ११ ॥ वैष्णवानां वर्णाश्रमाभावो ध्वनित इति चक्रवर्त्ती । ग्रंथांतरे तु "स्त्रीणां स्यात्पतिगोत्रत्वं पाणिग्रहणतो यथा । नृणामच्युतगोत्रत्वमच्युताश्रयणात्तथा ॥ संत्यज्य विधिवत्सर्वं पुत्रदारगृहादिकम् । आत्मानं यद्व्रजेद्विष्णुमच्युताश्रयणं हि तत्" इति वैष्णवात् । विधिवदित्युक्तेस्संन्यासो लक्ष्यते । यद्वा-विधिवच्छास्त्रविहिताचार्ययथाधिकारमंत्रग्रहणविधिनेत्यर्थः । न तु जात्यादिव्युत्क्रमणेन मंत्रग्रहणादि कार्यमिति भावः । अस्खलिताज्ञः । यत्तु चक्रवर्त्तिना वैष्णवानां वर्णाश्रमाभावो ध्वनितस्तन्नारदसनकादिषु विप्रद्विजोत्तमादिशब्दप्रयोगस्य "स्वागतं भो द्विजश्रेष्ठाः, यस्य विप्राः प्रसीदंति" इत्यादिपृथूक्तेः । किञ्चार्जुनादिमहाभागवतेषु क्षत्रियबाहुजादिप्रयोगदर्शनाच्च तथा "नैष्ठिकाः सनकादयः,तथा वव्रे,बृहद्व्रतं मां तु" इति नारदोक्तेः । 'कर्मभिर्गृहमेधीयैः' इत्यादियुधिष्ठिराद्युक्तेश्च वर्णाश्रमाभिमानश्रवणादवैष्णवत्वप्रसक्तेश्चिंत्यम् ॥ १२ ॥ सत्तमेति । यथा त्वं सत्समाजमीहसे तथा पृथुरप्यासीदिति भावः । "यज्ञे वेषे सदादाने सत्रमाच्छादने नवे" इति ॥ १३ ॥ तस्मिन्सत्रे, अर्हत्सु पूज्येषु "अर्हंतौ जिनसंमान्यौ" इति यादवः । उडुराट् चंद्रः ॥१४॥ सामुद्रिकोक्तमहाराजलक्षणवत्त्वेन पृथुं वर्णयति–प्रांशुरिति । पीनौ पीवरौ । आयतौ लंबौ । द्विजा दन्ताः ॥ १५॥ बृहंतौ श्रोणीनितंबौ यस्य स बृहच्छ्रोणिः अधोग्रमवस्तात्कृताग्रभागं पिप्पलपत्रं यथा तथोदरं यस्य ॥ १६ ॥ मूर्द्धजाः केशाः । कंबुः शंखः ॥ १७ ॥ अत एव न्यस्ताभरणत्वादेव । तैर्भूषणैः । उचितान्यावश्यकानि संध्यावंदनादीनि ॥ १८ ॥

शिशिरस्निग्धताराक्षः समैक्षत समंततः ॥ ऊचिवानिदमुर्वीशः सदः संहर्षयन्निव ॥ १९ ॥ चारुचित्रपदं श्लक्ष्णं मृष्टं गूढमविक्लवम् ॥ सर्वेषामुपकारार्थं तदा अनुवदन्निव ॥२०॥ राजोवाच ॥ सभ्याः शृणुत भद्रं वः साधवो य इहागताः ॥ सत्सु जिज्ञासुभिर्धर्ममावेद्यं स्वमनीषितम् ॥ २१॥ अहं दंडधरो राजा प्रजानामिह योजितः ॥ रक्षिता वृत्तिदः स्वेषु सेतुषु स्थापिता पृथक् ॥ २२ ॥ तस्य मे तदनुष्ठानाद्यानाहुर्ब्रह्मवादिनः ॥ लोकाः स्युः कामसंदोहा यस्य तुष्यति दिष्टदृक् ॥ २३ ॥ य उद्धरेत्करं राजा प्रजा धर्मेष्वशिक्षयन् ॥ प्रजानां शमलं भुंक्ते भगं च स्वं जहाति सः ॥ २४ ॥ तत्प्रजा भर्तृपिंडार्थं स्वार्थमेवानसूयवः ॥ कुरुताधोऽक्षजधियस्तर्हि मेऽनुग्रहः कृतः ॥ २५ ॥

स्वाभाविकी शोभा येन कृतान्युचितानि विहितानि कर्माणि येन ॥ १८ ॥ शिशिरे संतापहरे स्निग्धे च तारे ययोस्ते अक्षिणी यस्य इदं वक्ष्यमाणं वाक्यमुक्तवांश्च ॥ ॥ १९ ॥ चारु श्रोत्रप्रियम् । चित्राणि पदानि यस्मिन् श्लक्ष्णं प्रशस्तम् । मृष्टं शुद्धम् । गढं गंभीरार्थम् । अविक्लवमव्याकुलम् । उत्प्रेक्षते । स्वयमनुभूतमनुवदन्निव ॥ ॥२०॥ भाषणे हेतुः। धर्मं जिज्ञासुभिः पुंभिः सत्सु स्वमनीषितमावेद्यं वक्तव्यम् । अतः प्रजानुशासनमिषेण जिज्ञासैव क्रियते न युष्मान्प्रति धर्मप्रवचनमिति भावः ॥२१॥ इदानीं प्रजाः शिक्षयिष्यन्प्रजाशिक्षणादिकं ममावश्यकमित्याह अहमिति त्रिभिः । पृथक् सेतुषु स्वस्वहितवर्त्मसु स्थापिता स्थापयिता ॥ २२ ॥ दिष्टदृक् प्राक्कर्मसाक्षीश्वरो यस्य तुष्यति तस्य वेदवादिनो यॉंल्लोकानाहुः प्रजारक्षणाद्यनुष्ठानात्ते लोका मे स्युः । कथंभताः । कामानां सम्यक् दोहः प्रपूरणं येषु ॥ २३ ॥ अन्यथा त्वनिष्टं स्यादित्याह । य इति । शमलं पापम् । भगमैश्वर्यम् ॥ २४ ॥ तत्तस्माद्धे प्रजाः भर्तुर्मम पिण्डार्थं पिंडदानवत्परलोकहितार्थं स्वार्थं स्वकार्मयेव कुरुत स्वधर्ममेवानुतिष्ठत ।

तारे कनीनिके ॥ १९ ॥ चित्राणि सालंकाराणि, प्रशस्तं मधुराक्षरम् । अव्याकुलं झटित्यर्थबोधकम् ॥ २० ॥ साधवो य इति । अन्यैरत्रागतैरपि मे प्रयोजनं नास्तीति भावः । न च नृपत्वादहं युष्मान् किमप्यादिशामि शास्मि वा किं तु किमपि जिज्ञासुरहं युष्माभिरेव शासनीय आदेष्टव्यश्चेत्याह–सत्सु साधुषु भाग्यतः प्राप्तेषु सत्सु धर्मं जिज्ञासुभिः स्वमनीषितं स्वविचारितमावेद्यं ज्ञापयितुमर्हमेव स्वेषु प्रामाण्याभावादिति भावः । स्वामिव्याख्याने अतः स्वमनीषितस्यावेद्यत्वात् । इति भाव इति । मया जिज्ञासयैवोच्यते न तूपदिश्यत इति तात्पर्यम् ॥ २१ ॥ न च त्वं राजाऽस्माकमाराधनीय इति वाच्यं प्रत्युत युष्माकमेव वृत्त्यादिसाधनलक्षणे आराधने परमेश्वरेणाहं प्रवर्तित इत्याह–धात्रा परमेश्वरेण नियोजितः कुत्रकुत्र कर्मणीति तत्राह–दंडधर इति । विकर्मरोगोपशमनौषधरूपे दंडधर इत्यर्थः । रक्षितेति । दस्युचौरादिभ्यो रक्षणे । वृत्तिद इति । जीविकाप्रदाने स्वेषु सेतुषु पृथक्पृथक् स्थापयितेति । प्रतिस्ववर्णाश्रमादिधर्ममर्यादायाः स्थापने इति । युष्माकं बहुविधपरिचरणभावो मन्मूर्ध्नि न्यस्तो वर्तत इति भावः ॥ २२ ॥ तस्याहं प्रतिमासिकं प्रतिवार्षिकं वेतनमपि प्राप्नोमीत्याह--तस्य मम तत्तत्स्वकर्मानुष्ठानात् यान् लोकान् प्राप्यान्ब्रह्मवादिन आहुस्तेस्युरित्यन्वयः । लोकाः पारत्रिका मदिच्छानुरूपाः । मदभिलषितानां सम्यग्दोहः प्रपूरणं यत्र । यस्य ममेति दिष्टदृक् सर्वधर्मसाक्षी मत्प्रभुः यदुक्तं तेनैव श्रेयः प्रजापालनमेव राज्ञ इत्यादि ॥ २३ ॥ किं च मम सर्वकृत्येषु धर्मप्रवर्त्तनमेव मुख्यं नित्यं चेत्याह । अन्यथा तु–धर्मप्रवर्तनाद्यभावे ॥ २४ ॥ स्वेषा, मेवार्थं कार्यं कर्त्तव्यत्वेन विहितं कुरुत युष्माभिः स्वकृत्य एव कृते सति मम कृतार्थता भविष्यतीति नात्र मदर्थे पृथक् कोपि भावो भवतामिति भावः । स्वार्थमेव वदन्विशिनष्टि–हे अधो

यूयं तदनुमोदध्वं पितृदेवर्षयोऽमलाः ॥ कर्तुः शास्तुरनुज्ञातुस्तुल्यं यत्प्रेत्य तत्फलम् ॥ २६ ॥ अस्ति यज्ञपतिर्नाम केषांचिदर्हसत्तमाः ॥ इहा
मुत्र च लक्ष्यंते ज्योत्स्नावत्यः क्वचिद्भुवः ॥ २७ ॥ मनोरुत्तानपादस्य ध्रुवस्यापि महीपतेः ॥ प्रियव्रतस्य राजर्षेरंगस्यास्मत्पितुः पितुः ॥ २८ ॥
ईदृशानामथान्येषामजस्य च भवस्य च ॥ प्रह्लादस्य बलेश्चापि कृत्यमस्ति गदाभृता ॥ २९ ॥ दौहित्रादीनृते मृत्योः शोच्यान्धर्मविमो
हितान् ॥ वर्गस्वर्गापवर्गाणां प्रायेणैकात्म्यहेतुना ॥ ३० ॥

अधोक्षजे धीर्येषां तादृशाः संतः वासुदेवार्पणदृष्टयेत्यर्थः । अनुग्रहः कृतो भवेदिति शेषः ॥ २५ ॥ शास्तुः शिक्षयितुरनुज्ञातुरनुमोदितुश्च प्रेत्य परलोके यत्फलं तत्तुल्य
म् ॥ २६ ॥ कर्म कर्तव्यमित्यनुमोदामहे न तु वासुदेवेऽर्पणीयमिति वेनादिभिस्तदनंगीकारादित्येवंवादिनः शनैः संबोधयन्नाह । हे अर्हसत्तमाः मीमांसकश्रेष्ठाः यज्ञपतिर्नाम
परमेश्वरः केषांचिन्मते तावदस्ति तथापि विप्रतिपत्तेर्न तत्सिद्धिरित्याशंक्य जगद्वैचित्र्यान्यथानुपपत्तिं प्रमाणयति । इहामुत्र च ज्योत्स्नावत्यः कांतिमत्यो भुवो भोगभूमयः
शरीराणि च ॥ २७ ॥ नन्विदं कर्मवैचित्र्यादेव सेत्स्यति तथापि विद्वदनुभवेनेश्वरसिद्धिरित्याह मनोरिति त्रिभिः । अस्मत्पितामहस्यांगस्य ॥ २८ ॥ कृत्यमस्ति अवश्यं
कर्मफलदात्रा भाव्यमिति तेषां मतमित्यर्थः ॥ २९ ॥ मृत्योर्दौहित्रादीन्वेनादीन्विना धर्मे विमोहितान् अतः शोच्यान् । ननु कर्मैव फलं दास्यति विध्युद्देशगता वा देवताः
किं परमेश्वरेण तत्राह । वर्गेति । वर्गोऽत्र त्रिवर्गः स्वर्गो धर्मस्य फलमपवर्गो मोक्षस्तेषामैकात्म्येनैकरूप्येण सर्वानुगतेन हेतुना । तत्रापि प्रायेण हेतुना सर्वानुगतत्वं महत्त्वं
चेश्वरस्यैव दृष्टम् । अयं भावः । न तावज्जडस्य कर्मणः फलदातृत्वं घटते न चार्वाग्देवतानां स्वातंत्र्यम् । अंतर्यामिश्रुतेः । न च तदा कर्मसाम्ये फलतारतम्यं क्वचित्तद

क्षजधिय इति ''मय्येव मन आधत्स्व मयि बुद्धिं निवेशय'' इति श्रीगीतोक्तेर्भगवंतं भजतेत्यर्थः । स्वामिचरणैस्तु संबुद्धिर्नांगीकृता तत्रेत्यर्थ इति । 'धर्मोर्पितः कर्हिचिद्ध्रियते न यत्र' इति ब्रह्मोक्तेर्भवत्कृतधर्मस्य वासुदे
वेर्पणात्तद्वृद्ध्या ममाप्याधिकलाभो भवेदिति भावः ॥ २५ ॥ कार्यं खलु सर्वानुमोदनेन सिध्यतीत्यत आह—यूयमिति ॥ २६ ॥ तदनंगीकाराद्वासुदेवानंगीकारात् । हे अर्हसत्तमा इति । विपरीतलक्षणया यद्वाऽर्हान्सादयंति
पूज्यान्भगवदनंगीकारेण दुःसहोक्त्या पीडयंतीत्यर्हसदोऽतिशयेन तेऽर्हसत्तमा इति । केषांचिच्छ्रुत्यर्थतत्त्वविदास्तिकानां तार्किकादीनां, तथापि सत्यपीश्वरे, विप्रतिपत्तेर्विवादात्, तत्सिद्धिरीश्वरसिद्धिः । विप्रतिपत्तिश्चेश्वरसत्त्वे
मानं नास्तीत्येवंरूपा जगद्वैचित्र्यान्यथानुपपत्तिरीश्वरानंगीकारे एतज्जगति मनुष्याणां द्विपदत्वादिपशूनां चतुष्पदत्त्वादिपक्षिणां हंसशुकमयूरादीनां श्वेतहरितचित्रितगरुत्त्वादिवृक्षाणामनेकविधफलपुष्पपत्रादि पर्वत
सागरादि किञ्च नृषु मौढ्यपांडित्यसुखित्वदुःखित्वधनिकत्वदरिद्रत्वसुरूपकुरूपादि च न केनापि सुमेधसापीश्वरं विना कर्त्तुं शक्यतेऽत एतद्वैचित्र्यसंपादक ईश्वरोऽवश्यमंगीकर्त्तव्य एवेत्याह—इह प्रत्यक्षेणअमुत्र शास्त्रेण
च ॥ २७ ॥ अत्राक्षिपति—नन्विति । यद्यपीदं जगद्वैचित्र्यं तथापि कर्मवैचित्र्येण जगद्वैचित्र्ये सिद्धेपि विदुषां सर्वज्ञानामाप्तानां मन्वादीनामनुभवेनेत्यर्थः ॥ २८ ॥ ईदृशानामथाग्रे भविष्यतामंबरीषादीनां प्रह्लादबली
तु शास्त्राज्ज्ञात्वेव गणितौ गदाभृता गदाधारणान्मधुरमनोहररूपवतेत्यर्थः । कृत्यञ्च तेषां निरंतरं साक्षाच्चरणपरिचरणमेव ज्ञेयम् । इत्यर्थ इति । अन्यथा तेषां तद्भजनादौ प्रवृत्तिर्न संगच्छत इति । भावः ॥२९॥ तदन्यांस्तु

यत्पादसेवाऽभिरुचिस्तपस्विनामशेषजन्मोपचितं मलं धियः ॥ सद्यः क्षिणोत्यन्वहमेधती सती यथा पदांगुष्ठविनिःसृता सरित् ॥ ३१ ॥ विनिर्धुताशेषमनोमलः पुमानसंगविज्ञानविशेषवीर्यवान् ॥ यदंघ्रिमूले कृतकेतनः पुनर्न संसृतिं क्लेशवहां प्रपद्यते ॥ ३२ ॥ तमेव यूयं भजतात्मवृत्तिभिर्मनोवचःकायगुणैः स्वकर्मभिः ॥ अमायिनः कामदुघांघ्रिपंकजं यथाऽधिकारावसितार्थसिद्धयः ॥ ३३ ॥ असाविहानेकगुणोऽगुणोऽध्वरः पृथग्विधद्रव्यगुणक्रियोक्तिभिः ॥ संपद्यतेऽर्थाशयलिंगनामभिर्विशुद्धविज्ञानघनः स्वरूपतः ॥ ३४ ॥

सिद्धिश्च संभवति अतः स्वातंत्र्येण कर्तुमकर्तुमन्यथाकर्तुं समर्थेन परमेश्वरेण भाव्यमिति ॥ ३० ॥ किं च । जीवानां मोक्षदः परमेश्वर एव नार्वाग्देवतास्तासामपि जीवत्वाविशेषादित्याशयेनाह त्रिभिः । यस्य पादयोः सेवायामभिरुचिस्तपस्विनां संसारतप्तानामशेषैर्जन्मभिः समृद्धं धियो मलं सद्यः क्षपयति तमेव भजतेति तृतीयेनान्वयः । कथंभूताभिरुचिः । अहन्यहनि वर्धमाना सती सात्त्विकी तत्पादसंबंधस्यैवैष महिमेति दृष्टांतेनाह । यथेति ॥ ३१ ॥ न विनिर्धुता अशेषा मनोमला यस्य असंगो वैराग्यं तेन विज्ञानस्य विशेषः साक्षात्कारस्तदेव वीर्यं यस्य । यस्यांघ्रिमूले कृताश्रयः सन् ॥ ३२ ॥ आत्मवृत्तिभिरध्यापनादिभिः मनोवचःकायानां गुणैर्ध्यानस्तुतिसपर्याभिः अमायिनो निष्कपटाः संतः । ननु ब्रह्मादिभिः सेव्ये किमस्मद्भक्त्या भविष्यति तत्राह । यथाधिकारमेवावसिता निश्चिता समाप्ता वार्थसिद्धिर्येषाम् ॥ ३३ ॥ स्वकर्मभिर्यागादिनिंद्यत्वेनाह-धर्मे वेदविहिते नित्यनैमित्तिकादौ विमोहितान्विचित्तान् । मृत्योरित्यनेन तेऽद्य यद्यत्र मन्मते विप्रतिपत्स्यंते तर्हि मृत्योस्तन्मातामहस्य पुरीमेव प्रस्थापयिष्यामेति द्योतितम् । आदिनेंद्रगृहीतविसृष्टपाखंडानुग्रहः । अत्राक्षिप्य समाधत्ते—नन्विति । विधौ स्वर्गकाम इंद्रं यजेदित्येवंरूपे वाक्ये उद्दिष्टा देवता चेंद्रोस्तीत्यतः स एव फलं दास्यतीत्यभिप्रेत्याह-विष्युद्देशेति । यद्वा—एकोऽसहायश्चासावात्मा स्वरूपं चेत्येकात्मा स्वार्थेष्यञ् ऐकात्म्यं तेन वर्गादीनामैकात्म्येनान्यनिरपेक्षेण स्वस्वरूपेणैव हेतुनेत्यर्थः । तथा च वर्गस्वर्गापवर्गकामैरपि गदाभृदर्चनीय इति तेषां सकामानां निष्कामानां च गदाभृता कृत्यमस्तीत्यायातम् । अत्र प्रमाणम् "अकामः सर्वकामो वा मोक्षकाम उदारधीः । तीव्रेण भक्तियोगेन यजेत पुरुषं परम्" इति "यत्कर्मभिर्यत्तपसा" इत्यादौ "सर्वं मद्भक्तियोगेन मद्भक्तो लभतेंजसा" इत्यादिकञ्च । अत्र प्रायेणेत्यनेन क्वचित्कर्मज्ञानादिसापेक्षस्वस्वरूपेणेति । कर्मज्ञानादिमिश्रयापि भक्त्या भक्तिमिश्रैरपि कर्मज्ञानादिभिर्वर्गादिसिद्धिर्न तु भक्त्या विनेति निर्गलितार्थः । स्वामिचरणैरपि प्रायेणेत्यस्य मुख्येन हेतुनेत्यर्थोऽभिप्रेतः । अत्राशयमाह—अयं भाव इति । अर्वाग्देवतानामीश्वरेतरदेवानाम् । अंतर्यामिश्रुतेः—"यः पृथिवीमंतरायमयति पृथिवीयं न वेद" इत्यादिश्रुतारित्यर्थः । तदेश्वरस्वीकृतौ तु कर्मानुरूपमेव फलं कर्त्तुर्भविष्यति तथा क्वचिदपि कर्मणि फलाभावश्च न भविष्यति अन्यथा तदुभयं स्यादेव फलदातुरभावादित्यर्थः । यत इत्थमतो हेतोः ॥ ३० ॥ उक्तमेवार्थं क्रमेण विवृण्वन्भगवतः केवलयैव भक्त्या यथा कृतार्थी भवति न तु तथा तपोज्ञानादिभिः किमुत कर्मभिरित्याशयेनाह—किंचेति । यद्वा—तपस्विनां तपोभिरपि वृद्धेर्मालिन्यमपाकर्त्तुमशक्नुवतामित्यर्थः । सद्य इति । यदैव महत्सेवया पादसेवाहरुचिर्भवेत्तदैवेत्यर्थः । अपरं समानम् ॥ ३१ ॥ विनिर्धुता निरस्ताः ॥ ३२ ॥ ननु गार्हस्थ्यकर्मनिमग्ना वयं कथं केवलया भक्त्या भजामस्तत्र कर्ममिश्रां भक्तिमुपदिशन्नाह—तमिति । अध्यापनादिभिरादिना रक्षणकृष्यादिसेवादीनां ग्रहः । अत्राक्षिपति—नन्विति । यथाधिकारं ब्राह्मणादिवर्णधर्ममनतिक्रम्यैव । यद्वा येषांयेषां येषुयेषु शिल्पेष्वधिकारस्तैरेव भगवदर्थंकृतैस्तैस्तैः तैलिकतांबूलिकपर्यंता अपि कृतार्था भवंतीत्यर्थः । यद्वात्मनः स्वस्यैव वृत्तिः सत्ता येषु तैः स्वकर्मभिर्वर्णाश्रमधर्मैरपि सहिताः संतो भजतेति भक्तेः प्राधान्यमभिहितम् ॥ ३३ ॥ कर्मस्वरूपतोऽशुद्धं जडं राजसमपि भगवदर्पितं सत् तद्रूपगुणीभूतभक्त्यंशेन विशुद्धं सत्त्वं चैतन्यमेव भवति फलत इति भक्तिमिश्रं कर्मोपदिशति द्वाभ्याम्—असाविति । तर्जन्या प्रस्तुतमध्वरं दर्शयाति

